Prājña Pāṭhashālā Maṇḍala Grantha Mālā

# *MĪMĀṂSĀKOṢAḤ*

**Part II**

*Edited by*

**Kevalānandasaraswatī**

**1953 ]** **[ Rs. 30**

# प्रकाशकस्य निवेदनम्

इयं खलु कल्याणी वार्ता यत् गुरुचरणैः केवलानन्दसरस्वतीभिः संपादितस्य पूर्वमीमांसाकोषस्य द्वितीयो भागः प्रकाशगोचरो भवतीति । तदैव वयमात्मानं धन्यं मंस्यामहे यदा षण्णां भागानां प्रकाशनं निर्वर्तयितुं शक्ष्यामः । बहुवित्तव्ययाधीनमिदं कार्यं राज्यशक्तेः धनिनां चानुग्रहादेव समाप्तिमधिगच्छेदिति ।

अस्य भागस्य मुद्रणार्थं मुंबईविद्यापीठेन पञ्च शतानि रूप्यकाणि, पुण्यपत्तनविद्यापीठेन च सहस्रं रूप्यकाणि, विशेषतश्च भारतसंघराज्यस्य केन्द्रीयशिक्षाशाखया अस्य कोशस्य प्रकाशनव्ययभारं लघूकर्तुं दश सहस्राणि रूप्यकाणि च दत्त्वा वयमुपकृता इति तेषामनुग्रहं नितरामभिनन्दामः ।

विजया दशमी
शकः १८७५

**लक्ष्मणशास्त्री जोशी, तर्कतीर्थः**
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

# अनुक्रमणिका

ॐ नमो गुरुभ्यः ।

शबरकुमारिलगुरवो मण्डनभवदेवपार्थसारथयः ।
अन्ये च विश्वमान्या जयन्ति संत्रायमाणास्ते ॥

# प्रस्तावः

मीमांसाकोषस्यायं द्वितीयो भागः प्रकाश्यते । तस्यादौ 'अरुणान्यायः' क्रमप्राप्तः । अन्ते च 'उपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि हविष एव चतुरवत्तसंपत्तिः' इत्यधिकरणम् । भागकल्पना चेयं केवलं षट्शतीपृष्ठैः एकैको भागः इति अस्मदीयपरिभाषया, न तु विषयादिभेदेन । वर्णक्रमेण संपाद्यमाने कोषे विषयभेदासंभवात् । इत्यलम् ।

**अधिकरणादिसंख्या—** द्वितीयेऽस्मिन् भागे भाष्याधिकरणानि १२६, संकर्षाधिकरणानि ४८, केवलानन्दीवृत्त्यधिकरणानि ९०, तौतातिकाधिकरणानि ८, न्यायाः १६५, लघुसिद्धान्ताश्च ३२३३ भवन्ति । किञ्चिन्न्यूनाधिकता तु जाता स्यात् गणनाऽनवधानात् ।

विजया दशमी
शनिवासरः शकः १८७५.

स्वामी केवलानन्दसरस्वती

# ग्रन्थादिसंक्षेपः तद्विवरणं च ।

**अद्वै, अद्वैत**— अद्वैतसिद्धिः निर्णयसागरे १९१७ सने मुद्रिता । परिच्छेदः, प्रकरणम्, सूत्रं इति अङ्कत्रयम् । सूत्रं नाम अत्र अवान्तरवाक्यं भाषान्तरोपयोगितया अस्माभिः कल्पितम् ।

**अनन्तदेवः**— मीमांसान्यायप्रकाशस्य टीकाकारः ।

**अमरकोषः**— प्रसिद्ध एव कोषः ।

**अलङ्कारः**— भाट्टालङ्कारः नाम मीमांसान्यायप्रकाशस्य टीका । चौखम्बायां १९२१ सने मुद्रितः ।

**अष्टाध्यायी**— पाणिनिप्रणीता ।

**आनन्दगिरिः**— श्रीशंकराचार्यग्रन्थानां टीकाकारः आनन्दज्ञानापरपर्यायः ।

**आपस्तम्बसूत्रम्**— प्रश्नः, कण्डिका, सूत्रं इत्यङ्कत्रयम् ।

**आभरणम्**— शांकरशारीरकभाष्यस्य टीका ।

**आश्व. गृ.**— आश्वलायनीयं गृह्यसूत्रम् । अध्यायः, खण्डः, सूत्रं चेति अङ्कत्रयं अङ्कद्वयमेव वा ।

**उत्सर्गमयूखः**— श्री. ज. र. घारपुरे संपादितः ।

**उपदेशसाहस्री**— श्रीशंकराचार्यप्रणीता ।

**ऋजु.**— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपाया बृहत्याः टीका । चौखम्बायां १९२९ सने मुद्रिता ।

**ऋसं**— ऋक्संहिता पण्डितसातवळेकर( १९४० सने )संपादिता । मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम् ।

**ऐब्रा**— ऐतरेयब्राह्मणं पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः, सूत्रम् इत्यङ्कत्रयम् ।

**ऐब्रासा**— ऐतरेयब्राह्मणस्य सायणभाष्यम् । आनन्दाश्रमे १९३० सने मुद्रितम् ।

**कणिका**— न्यायकणिका वाचस्पतिमिश्रप्रणीता विधिविवेकस्य टीका । काशीमेडिकल्हॉल् । सन १९०७ ।

**कल्पतरुः**— शांकरशारीरकभाष्यस्य भामत्याख्यटीकायाः टीका । निर्णयसागरे १९१७ सने मुद्रितः । अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम् ।

**कस्तूरिरङ्गाचार्यवृत्तिः**— मीमांसासूत्राणां वृत्तिः । म्हैसूर १९०८ । भाट्टदीपिकापुस्तके एव मुद्रिता ।

**कु०, कुतूहलम्**— अध्वरमीमांसाकुतूहलवृत्तिः । श्रीरङ्गवाणीविलासे मुद्रिता, अडयारस्थ-ग्रन्थालये वर्तमाना च लिखिता ।

**के०**— केवलानन्दसरस्वती प्रकृतकोषसंपादकः । तत्कृता सूत्रवृत्तिश्च ।

**कैयटः**— व्याकरणमहाभाष्यस्य टीकाकारः ।

**कौ०, कौस्तुभः**— भाट्टकौस्तुभः । चौखम्बा १९३९ । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

**कौब्रा**— कौषीतकिब्राह्मणम् ।

**कौषीतकिब्राह्मणम्**— पुण्यपत्तनस्थानन्दाश्रमे मुद्रितं शाङ्खायनब्राह्मणनाम्ना ।

**गूढार्थविवरणम्**— शास्त्रदीपिकायाः या तर्कपादे टीका सिद्धान्तचन्द्रिका नाम, तस्याः टीका गूढार्थविवरणं नाम ।

**चन्द्रिका**— अद्वैतसिद्धेः टीका लघुचन्द्रिका नाम ब्रह्मानन्दी ।

**चूडामणिदीक्षितः**— मीमांसाऽऽचार्यः प्राचीनः ।

**टुप्**— टुप्टीका नाम कुमारिलभट्टपादप्रणीतं वार्तिकं चतुर्थाध्यायमारभ्य द्वादशाध्यायान्तं शाबरभाष्यव्याख्यानम् । प्रायः अस्मदीयालिखितस्थं क्वचिच्च आनन्दाश्रमीयम् । तन्त्ररत्नांशसंवलितम् ।

**तत्त्वप्रकाशिका**— परिभाषेन्दुशेखरस्य या टीका भूतिर्नाम, तस्याः टीका । काशी, संवत् २००१ ।

**तन्त्ररत्नम्, रत्न०, रत्नम्**— टुप्टीकायाः टीका पार्थसारथिप्रणीता ।

**तन्त्रसारः**— राणकापरपर्यायन्यायसुधाकारेण प्रणीतः स्वतन्त्रो मीमांसाग्रन्थः अनुपलब्ध एव ।

**ताब्रा**— ताण्ड्यब्राह्मणम् । पञ्चविंशं नाम ।

**तैसं**— तैत्तिरीयसंहिता । काण्डम्, प्रपाठकः, अनुवाकश्चेति अङ्कत्रयम् ।

**तौता**— तौतातिकमततिलकः नाम भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः ।

**दत्तकमीमांसाटीका**— प्रसिद्धा ।

**दमी**— दत्तकमीमांसा ।

**द्र.**— द्रष्टव्यम् ।

**धर्मादर्शः**— अर्वाचीनः प्राचीनमतसंस्थापकः श्रीकुरुकुण्डेकरमहाराजप्रेरितपण्डित-देवकृष्णशास्त्रिप्रणीतः ।

**निरुक्तम्**— यास्काचार्यप्रणीतम् । अध्यायः खण्डश्च ।

**नीतिमयूखः**— श्री. ज. र. घारपुरे संपादितः ।

**न्यायनि**— न्यायनिर्णयः नाम शांकरशारीरभाष्यस्य टीका आनन्दगिरिप्रणीता ।

**न्यायरत्नाकरः**— श्लोकवार्तिकस्य टीका, पार्थसारथिप्रणीतः ।

**न्यायामृताद्वैतसिद्धी**— महामहोपाध्यायैः अनन्तकृष्णशास्त्रिभिः संपादिता ।

**पं०**— पङ्क्तिः ।

**पञ्जिका**— श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी ।

**पराक्रमः**— उपक्रमपराक्रमः नाम अप्पय्यदीक्षितविरचितः । लिखितः । पत्रं पृष्ठं चेति अङ्कद्वयम् ।

**परि**— परिभाषा ।

**परिमलः**— शांकरशारीरकभाष्यस्य भामत्याख्यटीकायाः टीका कल्पतरुर्नाम, तस्याः टीका । निर्णयसागरे मुद्रितः । अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम् ।

**पा०**—पाणिनिः व्याकरणाचार्यः प्रसिद्धः । अध्यायः, पादः सूत्रं चेति अङ्कत्रयम् ।

**पार्थसारथिः**— शास्त्रदीपिकाऽऽदिग्रन्थकृत् ।

**पाशि**— पाणिनीया शिक्षा ।

**पृ**— पृष्ठम् ।

**प्रवि**— प्रभाकरविजयः । मीमांसाविषयप्रतिपादकः प्राभाकरमतानुसारी ।

**प्राभाकरः**— शाबरभाष्यस्य टीकाकारः प्राचीनः ।

**बाल**— बालमीमांसाप्रकाशः श्रीशंकरभट्टप्रणीतः ।

**बिन्दुः**— न्यायबिन्दुः नाम तत्सदुपाख्यवैद्यनाथप्रणीतः मीमांसाग्रन्थः संक्षेपेण मीमांसाऽधिकरण-प्रतिपादकः ।

**बृहती**— शाबरभाष्यस्य नव्यप्राभाकरमतानुसारिणी टीका ।

**ब्रसू**— ब्रह्मसूत्राणि ।

**ब्राह्मणसंमेलनविशिष्टाङ्कः**— काश्यां भूतपूर्वस्य ब्राह्मणमहासंमेलनस्य विस्तृतवृत्तान्त-प्रतिपादकोऽयं ग्रन्थः ।

**भट्टसोमेश्वरः**— राणकापरपर्यायन्यायसुधायाः कर्ता ।

**भरद्वाजसूत्रम्**— श्रौतगृह्यविषयकम् ।

**भवदेवः**— तौतातिकमततिलकस्य कर्ता । वलभीस्थः ।

**भा**— शाबरं भाष्यम् । आनन्दाश्रमे मुद्रितम् ।

**भाट्ट**— भाट्टदीपिका नव्यमीमांसकश्रीखण्डदेवप्रणीता ।

**भाट्टालंकारः**— मीमांसान्यायप्रकाशस्य अनन्तदेवविरचिता टीका ।

**भामती**— शांकरशारीरकभाष्यस्य वाचस्पतिमिश्रप्रणीता टीका ।

**भूतिः**— परिभाषेन्दुशेखरस्य टीका ।

**मणि**— भाट्टचिन्तामणिः गागाभट्टप्रणीतः ।

**मण्डन**— मण्डनाचार्यप्रणीता मीमांसाऽनुक्रमणिका, मण्डनाचार्यश्च ।

**मीन्या**— मीमांसान्यायप्रकाशः मीमांसाप्रकरणग्रन्थः आपदेवप्रणीतः ।

**मुरारिः**— मुरारिमिश्रः अर्वाचीनोऽयम् । अङ्गत्वनिरुक्तिकर्ता ।

**रघुः**— रघुवंशाख्यं काव्यं महाकविकालीदासप्रणीतम् ।

**रत्न**— तन्त्ररत्नं टुप्टीकायाः टीका ।

**रत्नप्रभा**— शांकरशारीरकभाष्यस्य टीका श्रीरामानन्दप्रणीता ।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका ।

**रसायन**— विधिरसायनं अप्पय्यदीक्षितविरचितम् ।

**रहस्य**— भाट्टरहस्यं नव्यमीमांसकखण्डदेवप्रणीतम् । शाब्दबोधोपयोगि ।

**वा**— तन्त्रवार्तिकं आचार्यकुमारिलविरचितम् ।

**वि**— जैमिनीयन्यायमालाविस्तरः । अध्यायः, पादः, अधिकरणमिति अङ्कत्रयम् ।

**विवि**— विधिविवेकः श्रीमण्डनाचार्यप्रणीतः ।

**वृ**— सुबोधिनी नाम मीमांसासूत्रवृत्तिः संपूर्णा ।

**वैज**— वैजयन्ती नाम सत्याषाढश्रौतसूत्रेषु आदिमस्य प्रश्नषट्कस्य वृत्तिः महादेवप्रणीता ।

**वैद्यनाथः**— शाबरभाष्यस्य ( तर्कपादमात्रस्य ) टीकाकारः ।

**वैद्यनाथी**— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

**वै. भू.**— वैयाकरणभूषणसारः ।

**वै. सू.**— वैशेषिकदर्शनसूत्रम् ।

**व्या. कौस्तुभः**— शब्दकौस्तुभः भट्टोजीदीक्षितप्रणीतः ।

**शंकर**— श्रीशंकरभट्टप्रणीतः मीमांसासारसंग्रहः ।

**शतपथ**— ब्राह्मणम् ।

**शांभा**— शांकरं भाष्यम् । श्रीशंकराचार्यप्रणीतम् ।

**शा**— शास्त्रदीपिका पार्थसारथिकृता ।

**शा. तर्क**— शास्त्रदीपिकायास्तर्कपादः ।

**शास्त्रप्रकाशिका**— बृहदारण्यकशांकरभाष्यस्य यत् सुरेश्वरकृतं वार्तिकम्, तस्य आनन्दगिरिकृता टीका ।

**शेखरः**— अत्र परिभाषेन्दुशेखरः ।

**श्राद्धमयूखः**— श्री. ज. र. घारपुरे संपादितः ।

**श्रीकरः**— ब्रह्मसूत्रभाष्यकर्ता शैवमताचार्यः ।

**श्लो. वा.**— श्लोकवार्तिकम् ।

**संकर्ष**— संकर्षकाण्डीया भाट्टचन्द्रिका नाम वृत्तिः ।

**संक्षेपशारीरके रामतीर्थः**— टीकाकारोऽयम् ।

**संग्रह**— लौकिकन्यायसंग्रहः ।

**न्यायामृताद्वैतसिद्धी**— महामहोपाध्यायैः अनन्तकृष्णशास्त्रिभिः संपादिता ।

**पं०**— पङ्क्तिः ।

**पञ्जिका**— श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी ।

**पराक्रमः**— उपक्रमपराक्रमः नाम अप्पय्यदीक्षितविरचितः । लिखितः । पत्रं पृष्ठं चेति अङ्कद्वयम् ।

**परि**— परिभाषा ।

**परिमलः**— शांकरशारीरकभाष्यस्य भामत्याख्यटीकायाः टीका कल्पतरुर्नाम, तस्याः टीका । निर्णयसागरे मुद्रितः । अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम् ।

**पा०**—पाणिनिः व्याकरणाचार्यः प्रसिद्धः । अध्यायः, पादः सूत्रं चेति अङ्कत्रयम् ।

**पार्थसारथिः**— शास्त्रदीपिकाऽऽदिग्रन्थकृत् ।

**पाशि**— पाणिनीया शिक्षा ।

**पृ**— पृष्ठम् ।

**प्रवि**— प्रभाकरविजयः । मीमांसाविषयप्रतिपादकः प्राभाकरमतानुसारी ।

**प्राभाकरः**— शाबरभाष्यस्य टीकाकारः प्राचीनः ।

**बाल**— बालमीमांसाप्रकाशः श्रीशंकरभट्टप्रणीतः ।

**बिन्दुः**— न्यायबिन्दुः नाम तत्सदुपाख्यवैद्यनाथप्रणीतः मीमांसाग्रन्थः संक्षेपेण मीमांसाऽधिकरण-प्रतिपादकः ।

**बृहती**— शाबरभाष्यस्य नव्यप्राभाकरमतानुसारिणी टीका ।

**ब्रसू**— ब्रह्मसूत्राणि ।

**ब्राह्मणसंमेलनविशिष्टाङ्कः**— काश्यां भूतपूर्वस्य ब्राह्मणमहासंमेलनस्य विस्तृतवृत्तान्त-प्रतिपादकोऽयं ग्रन्थः ।

**भट्टसोमेश्वरः**— राणकापरपर्यायन्यायसुधायाः कर्ता ।

**भरद्वाजसूत्रम्**— श्रौतगृह्यविषयकम् ।

**भवदेवः**— तौतातिकमततिलकस्य कर्ता । वलभीस्थः ।

**भा**— शाबरं भाष्यम् । आनन्दाश्रमे मुद्रितम् ।

**भाट्ट**— भाट्टदीपिका नव्यमीमांसकश्रीखण्डदेवप्रणीता ।

**भाट्टालंकारः**— मीमांसान्यायप्रकाशस्य अनन्तदेवविरचिता टीका ।

**भामती**— शांकरशारीरकभाष्यस्य वाचस्पतिमिश्रप्रणीता टीका ।

**भूतिः**— परिभाषेन्दुशेखरस्य टीका ।

**मणि**— भाट्टचिन्तामणिः गागाभट्टप्रणीतः ।

**मण्डन**— मण्डनाचार्यप्रणीता मीमांसाऽनुक्रमणिका, मण्डनाचार्यश्च ।

**मीन्या**— मीमांसान्यायप्रकाशः मीमांसाप्रकरणग्रन्थः आपदेवप्रणीतः ।

**मुरारिः**— मुरारिमिश्रः अर्वाचीनोऽयम् । अङ्गत्वनिरुक्तिकर्ता ।

**रघुः**— रघुवंशाख्यं काव्यं महाकविकालीदासप्रणीतम् ।

**रत्न**— तन्त्ररत्नं टुप्टीकायाः टीका ।

**रत्नप्रभा**— शांकरशारीरकभाष्यस्य टीका श्रीरामानन्दप्रणीता ।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका ।

**रसायन**— विधिरसायनं अप्पय्यदीक्षितविरचितम् ।

**रहस्य**— भाट्टरहस्यं नव्यमीमांसकखण्डदेवप्रणीतम् । शाब्दबोधोपयोगि ।

**वा**— तन्त्रवार्तिकं आचार्यकुमारिलविरचितम् ।

**वि**— जैमिनीयन्यायमालाविस्तरः । अध्यायः, पादः, अधिकरणमिति अङ्कत्रयम् ।

**विवि**— विधिविवेकः श्रीमण्डनाचार्यप्रणीतः ।

**वृ**— सुबोधिनी नाम मीमांसासूत्रवृत्तिः संपूर्णा ।

**वैज**— वैजयन्ती नाम सत्याषाढश्रौतसूत्रेषु आदिमस्य प्रश्नषट्कस्य वृत्तिः महादेवप्रणीता ।

**वैद्यनाथः**— शाबरभाष्यस्य ( तर्कपादमात्रस्य ) टीकाकारः ।

**वैद्यनाथी**— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

**वै. भू.**— वैयाकरणभूषणसारः ।

**वै. सू.**— वैशेषिकदर्शनसूत्रम् ।

**व्या. कौस्तुभः**— शब्दकौस्तुभः भट्टोजीदीक्षितप्रणीतः ।

**शंकर**— श्रीशंकरभट्टप्रणीतः मीमांसासारसंग्रहः ।

**शतपथ**— ब्राह्मणम् ।

**शांभा**— शांकरं भाष्यम् । श्रीशंकराचार्यप्रणीतम् ।

**शा**— शास्त्रदीपिका पार्थसारथिकृता ।

**शा. तर्क**— शास्त्रदीपिकायास्तर्कपादः ।

**शास्त्रप्रकाशिका**—बृहदारण्यकशांकरभाष्यस्य यत् सुरेश्वरकृतं वार्तिकम्, तस्य आनन्दगिरिकृता टीका ।

**शेखरः**— अत्र परिभाषेन्दुशेखरः ।

**श्राद्धमयूखः**— श्री. ज. र. घारपुरे संपादितः ।

**श्रीकरः**— ब्रह्मसूत्रभाष्यकर्ता शैवमताचार्यः ।

**श्लो. वा.**— श्लोकवार्तिकम् ।

**संकर्ष**— संकर्षकाण्डीया भाट्टचन्द्रिका नाम वृत्तिः ।

**संक्षेपशारीरके रामतीर्थः**— टीकाकारोऽयम् ।

**संग्रह**— लौकिकन्यायसंग्रहः ।

**सत्या**— सत्याषाढः श्रौतसूत्रकारः ।

**सत्याषाढश्रौतसूत्रम्**— प्रसिद्धम् ।

**सनातनधर्मप्रदीपे प्रमाणप्रकाशः**— कुकुरमुण्डेकरमहाराजप्रेरितैः म. म. अनन्तकृष्णाचार्यैः प्रणीतः ।

**समयमयूखः**— श्री. ज. र. घारपुरे संपादितः ।

**साहस्री**— भुवनेशलौकिकन्यायसाहस्री ।

**सि. कौमुदी**— सिद्धान्तकौमुदी ।

**सि. चन्द्रिका, सिद्धान्तचन्द्रिका**— तर्कपादीयशास्त्रदीपिकायाः टीका ।

**सिद्धान्तदर्शनम्**— निरञ्जनभाष्यसमेतम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

**सिद्धिव्याख्या**— अद्वैतसिद्धेः टीका ।

**सु०, सुधा**— न्यायसुधा राणकापरपर्याया भट्टसोमेश्वरप्रणीता तन्त्रवार्तिकस्य टीका । चौखम्बा ।

**सुबोधिनी**— मीमांसासूत्रवृत्तिः ।

**सू**— सूत्रम् ।

**सोम., सोमनाथी**— मयूखमालिका नाम शास्त्रदीपिकायाः टीका अर्थवादाधिकरणमारभ्य संपूर्णा ।

---

# शुद्धिपत्रकम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ६०९ | २ | ३१ | तृतीया | तृतीया , |
| ६११ | ,, | २२ | प्रत्यत | प्रत्येत |
| ६१२ | ,, | १८ | च्यते । तस्या | च्यते , तस्या |
| ६१६ | ,, | १५ | गणोऽपि | गुणोऽपि |
| ६२१ | १ | ,, | द्रव्य | * द्रव्य |
| ६२२ | ,, | ७ | गम्यते | गम्यते , |
| ६२३ | ,, | २६ | अर्थः | * अर्थः |
| ६२७ | २ | ३३ | वाक्या | वाक्या , |
| ६४३ | १ | १६ | इति | इति । |
| ,, | २ | २८ | कर्म | कर्म- |
| ६४४ | ,, | ६ | इत्यते | इत्यतो |
| ६४८ | ,, | ४ | साध्यते | साध्यते , |
| ,, | ,, | १४—१५ | रानुच्चारणेन हि | रानुच्चारणे नहि किंवा रोच्चारणेन हि |
| ,, | ,, | ३१ | ( नार्थापत्तिः ) | ० |
| ६५८ | १ | ३ | सिद्धे | सिद्धे , |
| ६६२ | ,, | ३२ | अश्रत | अश्रुत |
| ६६९ | ,, | १३ | योक्ष्य | योज्य |
| ६८४ | २ | १४ | संबन्धः | संबन्धः, |
| ६९० | ,, | २७ | यागार्थतां | यागार्थता |
| ७१० | ,, | २० | अवान्तर | * अवान्तर |
| ७११ | १ | ,, | नतौ | नैतौ |
| ,, | २ | ३ | अवि | * अवि |
| ७१२ | १ | १९ | त्वात् । उद्दे | त्वात् , उद्दे |
| ७१४ | २ | १४ | विचारः । | विचारः, |
| ७१९ | १ | २२ | दक्षिणा स | दक्षिणा । स |
| ,, | २ | १० | यां इति | याम् । इति |
| ,, | ,, | ३३ | गात् यदि | गात् । यदि |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ७१७ | १ | २० | अवेष्टौ | अवेष्टौ |
| ,, | २ | ७ | बहिर्भृता | बहिर्भूता |
| ,, | ,, | १७ | त्येवशब्दो | त्येव शब्दो |
| ७१९ | १ | १४ | सिद्धमूलम् | सिद्धमूलम् |
| ७२० | ,, | ३१ | कारण | करण |
| ७२३ | २ | १७ | सव | सर्वं |
| ७२५ | १ | २२ | नत्वं सा | नत्वसा |
| ७२६ | २ | २१ | द्रवेण | द्रव्येण |
| ७२८ | ,, | १८ | युज्यत | युज्यते |
| ७२९ | १ | ३२ | ऋक | ऋक् |
| ७३५ | ,, | २४ | कल्पाऽनौ | कल्पानौ |
| ७३७ | २ | २२–२३ | गृह्–णाति | गृह्णाति |
| ७३८ | १ | २२ | सिद्ध- | सिद्धे- |
| ७४५ | २ | ३२ | अश्व | अश्व |
| ७४६ | १ | ६ | अश्व | अथ पृथक् परिच्छेदो ज्ञेयः |
| ,, | २ | ,, | सिद्धव | सिद्धैव |
| ७४७ | ,, | ३५ | चरा | चरौ |
| ७६१ | १ | ११ | अहर्गणे | अहर्गणे |
| ७६६ | ,, | ४ | दिक्षि | दीक्षि |
| ७७० | २ | ३ | देवं | देव |
| ७७१ | ,, | ८ | कथं चि | कथञ्चि |
| ७७९ | ,, | ३२ | प्रयत्येना | प्रत्ययेना |
| ७९५ | १ | १३ | अन्तरंणा | अन्तरेणा |
| ८०४ | ,, | ,, | चिह्न व्यक्त्य | चिह्नव्यक्त्य |
| ८१० | २ | ३ | ( | [ |
| ८११ | १ | ३० | ) | ] |
| ,, | २ | ७ | ( | [ |
| ,, | ,, | २५ | ) | ] |
| ८१३ | ,, | २९ | इवच | इव |
| ८१५ | ,, | २६ | आख्यातेषु | आख्यातेषु |
| ८२३ | १ | ४ | आख्यात | आख्यात |
| ८३५ | ,, | २७ | पुनः श्रुति | पुनःश्रुति |
| ८५१ | २ | २८ | आमेय्य | आग्नेय्य |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ८५५ | १ | १८ | सूत्राय | सूत्रार्थ |
| ८६१ | ,, | ३४ | त्रयो | त्रयोः |
| ८६४ | २ | २८ | यः तं | यः, तं |
| ८९६ | ,, | ३ | आत्मने | * आत्मने |
| ९०७ | ,, | १५ | मेवतत् | मेवैतत् |
| ९०८ | ,, | ३ | प्राप्ता | प्राप्तौ |
| ,, | ,, | १४ | हारक | हारैक |
| ९१५ | १ | ,, | दिभि | दिभिः |
| ९१९ | २ | ३५ | मिष्टवा | मिष्ट्वा |
| ९२६ | ,, | ३१ | सुत्रा | सूत्रा |
| ९२७ | ,, | २६ | धेय | धेये |
| ९५२ | ,, | २० | निर्वत्य | निर्वर्त्य |
| ९५५ | ,, | २६ | पयो | पयो |
| ९७२ | ,, | १९ | ' पर्यग्नि | पर्यग्नि |
| ९८० | १ | २१ | कतव्यौ | कर्तव्यौ |
| ९८२ | ,, | १९ | न वा ऽस्य | न वा , ऽस्य |
| ,, | ,, | २१ | स्कृतिः । | स्कृतिः । , |
| ९८४ | ,, | १३ | लुट | लुट् |
| ९८६ | ,, | २९ | अवा | अवा- |
| १००० | ,, | ६ | मेदमपरि | मेदपरि |
| १०३७ | ,, | ७ | बन्धन्तुल्य | बन्धतुल्य |
| १०५८ | २ | ८ | श्रयते | श्रूयते |
| १०८८ | १ | १४ | वैरू( प्या )पत्तेः | वैरूप्यापत्तेः |
| १११५ | ,, | २७ | उत्तरं | ( उत्तरं |
| १११९ | २ | ३१ | अण् प्रत्ययं | अण्-प्रत्ययं |
| ११२२ | १ | २० | ससुत्र | सुत्र |
| ११२५ | २ | ३ | ⧗ उद्देश्यत्वं | * उद्देश्यत्वं |
| ११४८ | ,, | २० | ११ | ६।४।२।११ |
| ११५० | ,, | २७ | * उपपद | ⧗ उपपद |
| ,, | ,, | ,, | इति | इति न्यायः |
| ११५५ | १ | १९ | ' प्रकृति | प्रकृति |
| ११७७ | २ | २३ | विपरीतं , | विपरीतं |
| ११८४ | १ | १६ | मिवि । | मिति , |

अरुणान्यायः । आरुण्यगुणः क्रयहेतौ एकहायन्यामेव अन्वेति न द्रव्यान्तरे ॥

**अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् । ३।१।६।१२ ॥**

**भाष्यं**— ज्योतिष्टोमे क्रयं प्रकृत्य श्रूयते 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति । तत्र संदेहः किं अरुणिमा कृत्स्नप्रकरणे निविशेत, उत क्रये एव एकहायन्यामिति । कथं पुनः 'अरुणया क्रीणाति' इत्येवं विस्पष्टे क्रयसंबन्धे गम्यमाने संशय इति ? उच्यते । इह हि गुणं अरुणिमानं अमूर्तं सन्तं क्रियायाः करणं इति शब्द उपदिशति, यत् करणाभिधायिन्या तृतीयाविभक्त्या संयुज्य निर्दिशति 'अरुणया' इति । न च अमूर्तोऽर्थः क्रियायाः साधनं भवितुमर्हति । अतः असंबन्धं क्रीणातिना अरुणगुणस्य अवगच्छामः । न च अशक्यनीयमर्थं प्रमाणभूतः शब्दः अभिधास्यति इत्येवं प्रकल्पना कदा चित् उपपद्यतापि । 'केन चित् प्रकारेण संबन्धः' इति वचनप्रामाण्यप्रकारान्वेषणे बुद्धिर्भवति । तद्यदि परं विचारयन्तः क्रियासंबन्धसामर्थ्यं अवगमिष्यामः, एकवाक्यतया क्रये एव अरुणिमानं निवेशयिष्यामः । अथ तु अप्रमाद्यद्भिः अन्विष्यमाणः न कथं चन संबन्धः उपपत्स्यते, ततो वाक्यभेदमभ्युपगम्य प्रकरणधर्ममेनमध्यवस्यामः । तस्मात् अवश्यं विचारणीयमेतदिति । किं तावत् प्राप्तं ? कृत्स्ने प्रकरणे निवेशः । कस्मात् ? संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ( ३।१।८ ) । ननु प्रकरणात् वाक्यं बलीयो भवति, इति एकवाक्यत्वात् अरुणिमा क्रयेण संभन्त्स्यते इति । नैतदेवमवगम्यते । नहि वचनशतेनापि अनारभ्योऽर्थः शक्यो विधातुम् । यो हि ब्रूयात् 'उदकेन दग्धव्यं, अग्निना क्लेदयितव्यं' इति, किं स वचनप्रयोजनसामञ्जस्यमवनुवीत ? । न च अमूर्तोऽर्थः क्रियायाः साधनमुपपद्यते । तस्मात् अरुणया क्रीणाति इति संबन्धाभावात् एकवाक्यता न भवतीति ।

**वा**— अरुणाशब्दो गुणवचनः पिङ्गाक्ष्येकहायनीशब्दौ द्वावपि सामानाधिकरण्यात् एकद्रव्यवचनौ । तत्र गुणे संदेहः किं एकवाक्यगतेनैव द्रव्येण सह संबध्यते, उत प्रकृतेन द्रव्यमात्रेण इति ।

**( यौगिकशब्दद्रव्यवचनतावादार्थः— ) ननु च** पिङ्गाक्ष्येकहायनीशब्दयोरपि गुणवचनत्वात् नैवात्र वाक्ये द्रव्यमस्ति, कथं गुणवचनत्वमिति चेत् । **उच्यते । 'बहुव्रीहिसमासोऽयं मतुबर्थे विधीयते । सोऽस्यास्तीति च संबन्धे मत्वर्थीयः प्रवर्तते ॥' ( मत्वर्थवादार्थः )** गोमान् इत्येवमादिषु हि गोषु प्रातिपदिकेन अभिहितासु तद्वति अर्थे मतुपा अभिधातव्ये अवश्यं तावत् संबन्धः पूर्वतरं अभिधातव्यः । कुतः ? **'नहि गोभिरसंबद्धो गोमानित्यभिधीयते । तस्माद्विशेषणं तत्र संबन्धः पूर्वमिष्यते ॥'** विशेषणं तावत् सर्वत्र पूर्वतरमभिधीयते इति स्थितम् ( आकृत्यधिकरणे ) । इह च संबन्धो विशेषणमिष्यते न गोमात्रं असंबद्धेषु प्रत्ययानुत्पादात् । यदि गोमात्रं विशेषणं भवेत्, ततस्तासु प्रातिपदिकेन अभिहितासु विशेष्यं प्रत्ययः अभिदध्यात् । संबन्धे पुनर्विशेषणे नियोगतः सोऽभिधातव्यः केन चित् । न चास्य प्रातिपदिकमभिधायकं, आकृतिमात्राभिधायित्वात् । न च प्रातिपदिकार्थो गमकः ( लक्षकः ), विनाऽपि संबन्धेन उपपद्यमानत्वात्, केवलगोशब्दोच्चारणेऽपि चाप्रतीतेः । गोमत्पदोच्चारणेऽपि प्रत्ययवेलायामेव संबन्धबुद्धिः । अतश्च 'तदागमे हि तद् दृश्यते' ( ४।१।

५।१५ ) इत्यपि प्रत्ययार्थत्वम् । यच्च विशेष्ये वर्तते, तेन तत् प्रत्यासन्नं विशेषणमुपादातव्यम् । न च प्रातिपदिकं विशेष्ये वर्तते, यतः तद्विशेषणभूतं संबन्धमुपाददीत । प्रत्ययस्तु तत्र वर्तते, इत्युपादत्ते । स चेदुक्तः, तेनैव संबन्धिप्रत्ययसिद्धेः अभिधानशक्तिप्रतिबन्धात् विशेष्यानभिधानम् । न च विशेष्यप्रत्ययात् संबन्धप्रत्ययो भवति, प्राक् संबन्धात् विशेष्यत्वाभावात् । सिद्धे च विशेष्यत्वेन संबन्धे न पश्चात् किंचित् प्रयोजनमस्ति, इति अप्रतीतिरेवास्य प्राप्नोति । तस्मात् प्रथमतरप्रत्याय्यत्वात् प्रत्ययार्थः संबन्धः । इतश्च प्रत्ययार्थः संबन्धः । 'शब्दवृत्तिनिमित्ते हि भावप्रत्यय इष्यते । देवदत्तस्य गोमत्त्वं संबन्धश्च प्रतीयते ॥' यथैव शाबलेयस्य गोत्वं विशेषणं, यथा च विशेषणभूता जातिः भावप्रत्ययेन निष्कृष्टा अभिधीयते इति गोपदस्य सैव वाच्यत्वेन इष्टा, तथा देवदत्तस्य गोमत्त्वं इत्युक्ते गवि प्रतिपत्त्य-भावात् संबन्धनिष्कर्षप्रतीतेश्च स एव भावप्रत्ययार्थोऽ-ध्यवसीयते । यश्च भावप्रत्ययार्थः, स प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् । यच्च निमित्तं, तत् विशे-षणत्वात् मुख्यमभिधेयं, लाक्षणिकं विशेष्यम् । यदि च मतुपा संबन्धोऽभिहितः, ततः 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति गोमत्प्रातिपदिकात् उत्पन्नो भाव-प्रत्ययः संबन्धमभिधातुमर्हति नान्यथा । तस्मादपि संबन्धोऽर्थः । एतेन सर्वे यौगिकाः कृत्तद्धितसमासेषु व्याख्याताः । सर्वत्र हि भावप्रत्ययः संबन्धमभिधत्ते । राजपुरुषत्वं औपगवत्वं पाचकत्वं इति । अत एवैते यौगिकाः, यतः तेन निमित्तेन वर्तन्ते । ( इति मत्वर्थ-वादार्थः समाप्तः ) । तस्मात् मत्वर्थविषयत्वात् बहुव्रीहेः एकहायन्यादिशब्दैः संबन्धोऽभिधीयते । किंच 'यस्मि-न्नन्यपदार्थे च बहुव्रीहिर्विधीयते । तत्रापि प्रत्यया-र्थत्वात् संबन्धस्य प्रधानता ॥' एकं हायनं अस्याः इति षष्ठ्यन्तेन अन्यपदार्थः प्रदर्श्यते । षष्ठ्य-र्थस्य च प्रत्ययार्थत्वात् इह प्राधान्यम् । तद्रूपदर्शनार्थ-मेव सर्वनामप्रयोगः, केवलाया विभक्तेरप्रयोगात् सर्व-नामार्थप्रतीत्यभावाच्च । षष्ठ्याश्च स्वस्वामिसंबन्धविकारा-वयवत्वादिसंबन्धो वाच्यः इत्येतत् प्रसिद्धम् । अतोऽपि संबन्धाभिधानं बहुव्रीहिणा । 'न चाप्यन्यपदार्थत्वं जातेरध्यवसीयते । नहि पिङ्गाक्षिसंबन्धस्तस्या नाप्येकवर्षता ॥' अनिमिषमां देवं, पिङ्गे अक्षिणी अस्याः, एकं हायनं अस्याः, चित्रा गावः अस्य इत्येव-मादयः । तासां च व्यक्तीनां अनन्तत्वेन संबन्धानुप-लब्धेः व्यभिचाराच्च अनावश्यकः शब्द इत्युक्तम् । नहि अजातायां पिङ्गाक्ष्यां प्रथमः प्रयोगो भवेत् । अतः अवश्यं सामान्यं किंचित् वाच्यं आश्रयितव्यम् । न च तदिह संबन्धादन्यत् उपपद्यते । किंच 'यतोऽवश्यमा-भिधीयेत यद्यपि त्वेकहायनी । तथापि गुण एवासौ न द्रव्यमिति गम्यते ॥' ( इति यौगिक-शब्दद्रव्यवचनतावादार्थे पूर्वपक्षः )

( अनेनैव हेतुना अधिकरणाक्षेपः— ) तस्मात् न द्रव्यशब्दः कश्चित् अत्र विद्यते इति अनुदाहरणत्वम् । न च अन्यदुदाहरणं संभवति, साक्षात् द्रव्यवचनशब्दा-भावात् । सर्वत्र हि रूढिशब्दानां जातिवचनत्वं यौगि-कानां च संबन्धाभिधायित्वम् । यत्तु एकान्तेन द्रव्य-वचनः स्यात् डित्थडवित्थादिशब्दः, स नैव वेदे प्रयु-ज्यते । तस्मात् जातिगुणयोः गुणयोरेव वा नियमः स्यात् इति सिद्धान्तोक्तावपि योजयितव्यम् । अथवा अधिकरणमेव निर्विषयत्वात् नारब्धव्यमिति ।

( अथ यौगिकशब्दद्रव्यवचनतावादार्थे सिद्धान्तः— ) उच्यते । 'सर्वत्र यौगिकैः शब्दै-र्द्रव्यमेवाभिधीयते । नहि संबन्धवाच्यत्वं संभ-वत्यतिगौरवात् ॥' यदि एकहायन्यादिभिः शब्दैः संबन्धोऽभिधीयेत ततो नोदाह्रियेरन् । न तु एतैः संबन्धो-ऽभिधीयते । कथं ? अतिगौरवात् । इह हि संबन्ध-मात्रं वा अभिधेयं कल्प्येत तद्विशेषो वा ? यदि तावत् संबन्धमात्रं, ततः सर्वयौगिकानां एकविषयोपनिपातात् पर्यायत्वप्रसङ्गः । अथ संबन्धविशेषः, ततस्तस्य स्वतो विशेषाभावात् अवश्यं संबन्धिकृत एव भेदः अभ्यु-पगन्तव्यः । संबन्धी अपि च अनभिधीयमानः न शक्नोति अभिधीयमानं संबन्धं व्यवच्छेत्तुं, इत्यवश्यं सोऽप्यभिधातव्यः । न च एकस्मिन् संबन्धिनि

संबन्धः अव्यवस्थितः। न च तन्मात्रेण अन्यस्मात् व्यवच्छिन्नः प्रतीयते, इति उभावपि अभिधातव्यौ। तत्र गोमान् इति एकः संबन्धी गोशब्देन अभिधीयते। द्वितीयस्य न कश्चित् अभिधाता दृश्यते। तेन मतुपा विशिष्टं संबन्धं अभिदधता तद्वन्तं सन्तं संबन्धिनं एकं अनुक्त्वा अभिधातुमशक्नुवता नियोगतः सोऽपि अभिधातव्यः। ततश्च तमभिधाय संबन्धाभिधायां अतिगौरवं स्यात्। **अपि च 'संबन्धिनैव संबन्धः प्रत्येतुं यदि शक्यते। पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत्॥'** यदा च पूर्वतराभिहितसंबन्धिप्रतीत्यैव संबन्धोऽप्याक्षिप्तः, तदा नैव प्रत्ययेनापि सोऽभिधीयते इति शक्यं वक्तुम्। तस्मात् अर्थाक्षिप्तेनैव संबन्धेन भवितव्यम्। यत्तु अप्रतीते संबन्धे विशेष्यं न प्रतीयते इति, तत्र ब्रूमः। **'विशेषणाद् विना नेष्टो विशेष्यप्रत्ययोद्भवः। विशेषणं च गावोऽत्र न संबन्धः कथं चन॥'** देवदत्तो हि गोभिरवच्छिन्नो विवक्षितः। ताश्च प्रातिपदिकेन उपात्ताः सन्त्येव। यत्तु नासंबद्धाभिरवच्छिद्यते इति, सत्यं नावच्छिद्यते, तेनैव ताभिः संबन्धाक्षेपः अर्थात् लभ्यते। सर्वथा तावत् गोमच्छब्देन गोविशिष्टोऽयं इत्येतदभिहिते कथमनवस्थितास्ताः गावः तं विशिंषन्ति, इति तासामेव एष व्यापारः, न शब्दस्य। तथाहि **'न विशिंषन्ति गावोऽर्थं पृथिव्यामनवस्थिताः। तत्र किं शक्यते वक्तुं पृथिव्यप्यभिधीयते॥'** नहि येन विना अर्थात्मलाभो नास्ति तत्तदभिधातव्यं, किं तर्हि? यावता विना विशिष्टबुद्धिर्नोत्पद्यते। गोभिश्च अप्रतीताभिः तद्वति बुद्धिर्नोत्पद्यते, न संबन्धेनापि। **किंच 'वक्तृव्यापारमात्रं च संबन्धप्रत्यवेक्षणम्। स हि गोभिरसंबद्धं न गोमन्तं विवक्षति॥'** सर्वत्र हि वक्तृक्रमविपर्ययेण श्रोतुः क्रमो भवति। स हि प्रथमं तावत् किं चित् विशेष्यं विवक्षति, ततः तस्य केन चित् विशेषणेन विना अभिधातुमशक्तेः विशेषणविवक्षां करोति, ततः शब्दोच्चारणम्। श्रोता पुनः प्रथमं तावत् शब्दं शृणोति, ततो विशेषणं, ततो विशेष्यं, ततः तदुपपत्त्यर्थानि वस्त्वन्तराणि प्रपद्यते। तेन यद्यपि वक्त्रा पूर्वं संबन्धः आलोचितः, तथापि श्रोता पश्चादेव एनं ग्रहीष्यति। न तु अत्र वक्त्राऽपि असौ पूर्वतरं अवधारितः, संबन्धिनोः अगृहीतयोः ग्रहीतुमशक्यत्वात्। अतः तदीयेनापि क्रमेण उत्तरकालमेव प्रतीयमानः संबन्धः नार्थाक्षिप्तत्वं परित्यजति। वस्तुधर्मश्चैषः, यत् असंबद्धा गावो न विशिंषन्ति, स तासां व्यापारः, न शब्दस्य। तेन यं यथाऽवस्थितं शक्नुवन्ति विशेष्टुं, स तथा अवस्थास्यते। संबन्धश्चासौ (संबन्धी चासौ) विशेष्यत्वं प्रतिपद्यते इति अर्थात् संबध्यते। **'विशेष्यत्वेन संपन्नं तद् विशेषणसंगतम्। गोविशिष्टोऽयमित्येवं गोमच्छब्दोऽभिधास्यति॥'** तस्मादपि अनभिधेयः संबन्धः। **किंच 'विभक्तिवाच्यरूपेण संबन्धो नावगम्यते। रूपान्तरेण वक्तव्य इति नास्ति च लक्षणम्॥'** षष्ठीसप्तमीभ्यां हि यादृक् संबन्धः स्वप्रधानः असत्त्वभूतश्च प्रत्याय्यते, न तादृक् मत्वर्थीयेन। न च 'कृदभिहितो भावो द्रव्यवद्भवति' इति, एवमिव रूपान्तरोपादानं केचिदभिदधति। तत्र किं असत्त्वभूतसंबन्धाभिधानं आश्रीयतां, उत संबन्धी एव अर्थलभ्यतद्विशिष्टोऽभिधीयतामिति। तदुच्यते। **'प्राक्प्रतीतैकसंबन्धिविशिष्टेऽभिहिते परे। संबन्धिन्येव संबन्धः प्रतीत इति नोच्यते॥'**

यत्तु सिद्धे विशेष्ये न पश्चात् संबन्धप्रत्ययेन कार्यमिति, सत्यं नास्ति, विनाऽपि तु तेन नान्तरीयकत्वात् प्रतीयते इति किं क्रियताम्।

यच्च भावप्रत्ययेन अभिधानादस्य मत्वर्थत्वमिति, अत्रापि ब्रूमः। **'यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः। तदा गत्यन्तराभावात् संबन्धो वाच्य आश्रितः॥'** गोमतो भावो गोमत्त्वं इति हि **'यन्निमित्तमपेक्ष्यायं गोमच्छब्दः प्रवर्तते। स एव गोमतो भाव उच्यते त्वतलादिभिः॥'** तत्र यास्तावत् प्रातिपदिकार्थे विशेषणं गावः, तासां तद्वतः पुरुषात् अत्यन्तभेदात् भावप्रत्ययेनाग्रहणम्। समवेतगुणग्राही हि भावप्रत्ययः न चान्योऽभिधीयमानस्तत्र गुणः संभवति,

यो निमित्तभावात् भाव इत्युच्येत । न च पुरुष एव ' तस्य भावः ' इत्येवं व्यपदेशभेदं लभते । तेन भावप्रत्ययः ' आनर्थक्यात् तदङ्गेषु ' ( ३।१।९।१८ ) इति अर्थप्राप्तं संबन्धमवलम्बते । निमित्तत्वमपि च तस्य वस्तुलक्षणमस्ति, इति अभिधेयनिमित्तासंभवे तदपि तावत् गृह्यतां इत्येवमाश्रीयते । तस्मात् अकारणमेतत् यौगिकानां संबन्धाभिधानशक्तिकल्पनायाम् । ' अतश्च दण्डिशब्देन संबन्ध्येवोच्यते यथा । तथैव यौगिकैः शब्दैः पिङ्गाक्ष्यादिपदैरपि । संबन्धस्य च भावत्वं व्याख्येयं तेषु पूर्ववत् । बहुव्रीहेरतो द्रव्यमभिधेयं न तद्गुणः ॥ '

यदपि एकं हायनमस्य इत्यन्यपदार्थे षष्ठ्यर्थप्राधान्यात् संबन्धे बहुव्रीहिरिति, तत्राभिधीयते । ' अभिधेयो बहुव्रीहेर्यद्यप्यस्येति कथ्यते । तथापि प्रथमान्तेन तुल्योऽसौ संप्रतीयते ॥ ' यदि तु अन्यपदार्थः षष्ठ्यन्तः एव संबन्धी स्यात्, ततो यथैव ' राज्ञः पुरुषः ' इत्यत्र षष्ठ्यन्तत्वात् राजा पुरुषविशेषणं भवति, प्रथमान्तत्वाच्च पुरुषः प्रधानरूपेण समासार्थो भवति, एवमेव चित्रग्वादिशब्दैः देवदत्तादिविशिष्टा गाव एव प्रतीयेरन्, न चित्रगोविशिष्टो देवदत्तादिः । तस्मात् चित्राणां गवामयं इति ईदृशेऽर्थे बहुव्रीहिर्वर्तते । यद्यपि अन्यथा विग्रहः, तथापि उत्तरकालं ईदृगर्थदर्शनात् एवमेव विग्रहोऽपि कर्तव्यः । ततश्च संबन्धविशिष्टाभिर्गोभिः देवदत्तादिर्विशिष्टः इति समासार्थो विज्ञायते । यथैव च ' राज्ञः पुरुषः ' इत्यत्र षष्ठ्यां प्रयुज्यमानायां संबन्धः प्रधानभूतोऽभिधीयते, कृते च समासे, निवृत्तायां विभक्तौ, पूर्वोत्तरपदयोः प्रत्येकप्रयोगदृष्टार्थापरित्यागात् संबन्धाधिक्यस्य च सामीप्यावगतविशिष्टार्थप्रत्ययादेव सिद्धेः न संबन्धपरः समासो भवति, एवमेव षष्ठ्यप्रयोगादेव बहुव्रीहावपि न संबन्धप्राधान्यम् । तच्च न पूर्वोत्तरपदार्थयोः, नापि अन्यतरस्य, इति अन्यपदार्थभूतद्रव्यप्राधान्याध्यवसानम् । ( **बहुव्रीहिसमासार्थविचारः—**) स च अन्यपदार्थः संबन्धी योग्यतावशेन जातिद्रव्यगुणक्रियाणामन्यतमः परिगृह्यते । तद्यथा, ' चित्रव्यक्तिरियं जातिर्द्रव्यं नानागुणं स्थिरम् । गुणोऽनेकाश्रयः कश्चिदियं त्वेकाश्रया क्रिया ॥ ' सर्वत्र च योग्यत्वात् समानाधिकरणपदान्तरोपनीतः अन्यपदार्थविशेषो गम्यते । तदिह एकं हायनमस्याः इति जातेरनादित्वात् न विशेषणं संभवति इति व्यक्तिराश्रीयते । ननु व्यक्तीनां आनन्त्यव्यभिचाराभ्यां अनभिधानमुक्तम् । नैष दोषः । ' आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् । शब्दः सुकरसंबन्धो न च व्यभिचरिष्यति ॥ ' यत्र तावत् जातिः अन्यपदार्थः प्रतीयते तत्र तथैव एकया सकृद् गृहीतया अवच्छिन्ना अनन्ता देशादिभिन्ना अपि अभिधास्यन्ते इति सुज्ञानः संबन्धः । न च तदुपलक्षिताभ्यः अन्यत्र प्रयोगः, इति अव्यभिचारः । यत्र तु व्यक्तिभिरेव एकवचनानि [illegible], तत्रापि मूलोपलक्षणं जातिरेव अभ्युपगम्यते । [illegible] मपि विशेषणभूतायां अनुवर्तमानायां [illegible] अभेदात् संबन्धदर्शनं उपपद्यते । [illegible] शब्दार्थत्वम् । आन्तरालिकानां तु [illegible] अनभिधेयत्वम् । अतश्च पिङ्गाक्षिताभ्यां [illegible] गुणावयवाभिका [illegible], [illegible] उपलभ्यते, तच्च समासार्थो भवति ( **इति बहुव्रीहिसमासार्थविचारः । अथ बहुव्रीह्यभिधेयत्वलाक्षणिकत्वविचारः** ) । स पुनः किं अभिधेयो, लाक्षणिकः इति । प्राधान्येन प्रतीतेः सामानाधिकरण्यात् ' अनेकमन्यपदार्थे ' ( पा० २।२।२४ ) इति च स्मरणात् देवतातद्धितमत्वर्थीयादिभिरिव अभिधीयते इति केचित् । अपरे त्वाहुः, युक्तं देवतातद्धितादौ अनन्यप्रयोजनत्वात् शब्दाधिक्याच्च अन्यपदार्थाभिधानम् । न च तत्र प्रातिपदिकार्थेन सोऽर्थः शक्यो लक्षयितुं व्यभिचारात्, केवलाच्च प्रातिपदिकादप्रतीतेः । बहुव्रीहौ तु पूर्वोत्तरयोः पदयोर्विद्यमानस्वार्थत्वात् अन्यस्य च अभ्यधिकस्य शब्दावयवस्य अभावात् पिङ्गत्वाक्षित्वाभ्यामेव च द्रव्यप्रत्ययसिद्धेः न शक्यमभिधेयत्वं कल्पयितुं इति । न तु एतत् व्यापित्वेन शक्यमाश्रयितुम् । कर्मधारये हि एतत् व्यापित्वेन स्यात्, सर्वथा लक्षणानिमित्तोपपत्तेः । इह तु चित्रगुः इत्येवमादिषु चित्रगोशब्दयोः अत्यन्तव्यतिरिक्तार्थाभिधायित्वात् देवदत्तादिशब्दैश्च न तुल्या लक्षणा

वा सामानाधिकरण्यमवकल्पते । प्रागपि च देवदत्तादिशब्दात् अन्यपदार्थप्रतीतेः न वाक्यार्थत्वकल्पना । न च केवलं समासवेलायां यौ पदार्थौ अवधारितौ, तौ देवताद्यर्थसंबन्धिनौ, यतो वाक्यार्थो देवदत्तः स्यात् । तस्मादवश्यं प्रतीतेः, अन्यपदार्थोऽस्य वाच्यः इति अभ्युपगन्तव्यम् । एवं च प्राधान्यमविरुद्धं भविष्यति । अतश्च एवमादिषु बहुव्रीहेरन्यपदार्थाभिधानशक्तिर्दृष्टा, इति यत्रापि कथं चित् लक्षणा संभवति, तत्रापि पूर्वक्लृप्तशक्त्यनपायात् अभिधेयत्वमेव अध्यवसीयते **( इति बहुव्रीह्यर्थाभिधेयत्वलाक्षणिकत्वविचारः )।** तस्मादुपपन्नं पिङ्गाक्ष्यादीनां द्रव्यवचनत्वम् ।

**यत्तु** एकहायनी इति वयोवचन इति, तदनुपपन्नम् । वयसो लक्षणयाऽवगतेः । उक्षादिशब्दानां हि वयोवचनत्वम् । एकहायन्यादिशब्दाः पुनः कालविशेषयुक्तद्रव्यवचनाः सन्तो वयो लक्षयन्तः प्रवर्तन्ते । नहि एकं हायनं अस्याः इत्येवं वयो निर्दिश्यते, किं तर्हि द्रव्यम् । तस्य हि एकं हायनं जातस्य, न वयसः । **( इति यौगिकशब्दद्रव्यवचनतावादार्थः । )**

(इतः परं भाष्यविवरणम्) तस्मादुभाभ्यामपि एताभ्यां आत्मैकदेशोपात्तगुणविशिष्टद्रव्यप्रत्यायनात् उपपन्नोऽयं संशयः, किं अरुणिमा कृत्स्नप्रकरणगतक्रयाङ्गद्रव्यशेषत्वेन निविशते, अथवा समानवाक्यस्थाख्यातपदप्रत्यायितक्रये एव एकहायन्यां इति । अत्रापि उद्धननादिवत् आक्षेपः । संयुक्तश्रवणात् असार्वत्रिकत्वे प्राप्ते तं परिहरति । एष गुणः क्रयेण एकहायन्या वा समानवाक्योपादानात् संबध्येत । तत्र तावत् कारकविभक्तिनिर्देशात् अनाशङ्कनीयतरे सति द्रव्यसंबन्धे क्रयसंबन्धः श्रुतिबलीयस्त्वात् भवेत् । न चासौ अमूर्तत्वात् निष्क्रियस्य गुणस्य उपपद्यते । यदि तु अगत्या पुनर्द्रव्ये संबन्धः आश्रीयते, तत्रापि एकहायन्यां 'ऐकशब्द्ये परार्थवत्' (१।४।५।८) इत्येवं क्रयारुणिमानौ प्रति वैरूप्यं स्यात् । भिन्नविभक्त्यर्थयोगश्च असन् अभ्युपगन्तव्यः क्रियासंबन्धस्य कारकविभक्तिसाध्यत्वात्, गुणसंबन्धस्य च षष्ठ्यधीनत्वात् । अतश्च वाक्यगतेन संबन्धिना योग्यत्वाभावात् असंबध्यमानः प्रकरणिना गृहीतः सर्वार्थे स्यात् इत्याशङ्क्यते । तेन तर्हि अयमेवार्थो निश्चीयते इति क्रयसंबन्धो नाशङ्कितव्यः । तदर्थमाह—'न चाशकनीयमर्थं प्रमाणभूतः शब्दः अभिधास्यति' इति । यदेतत् समानवाक्योपादानं करणविभक्तिनिर्देशश्च एतेनापि क्रयैकहायनीविशेषणत्वबुद्धिर्दृढा जायते । तेन शब्दप्रामाण्यात् वस्तुविसंवादाच्च किं समञ्जसं किमसमञ्जसं इति जायते संदेहः । तत्र प्राथम्यात् शब्दानुरोधेन तावत् क्रियासंबन्धमुपन्यस्यति । वैदिकशब्दस्य अतिभाराभावात् । तत्र विनियोगबलेन अस्य वस्तुसामर्थ्यसद्भावान्वेषणे यतिष्यामहे । तद्यदि केन चित् प्रकारेण उपपत्स्यते ततः क्रये एव निवेशमङ्गीकरिष्यामः । 'अथ तु न कथं चन उपपत्स्यते, ततो वाक्यभेदमभ्युपगम्य प्रकरणधर्ममेनं अध्यवस्यामः' ( मूले तु 'अथ तु अप्रमाद्यद्भिः अन्विष्यमाणो' इति वाक्यारम्भः, 'न कथं चन' इत्यादि तु समानम् ) । न चात्र वाक्यभेदः प्रत्ययावान्यतमावृत्तिलक्षणः । कस्तर्हि ? विभागरूपः । क्रयवाक्यस्य भेदं विभागलक्षणं अभ्युपगम्य इत्यर्थः । **'यद्वा भिद्यत इत्येवं घञ्व्ययं कर्मकर्तरि । अरुणाशब्द एवं च भेदो वाक्यस्य गम्यते ॥'** पृथक् भवत् वाक्यं भेदयति इति वाक्यभेदः । तादृशं चाभ्युपगम्य प्रकरणधर्माध्यवसानम् । एतदुक्तं भवति, यावत् श्रुतिवाक्ये व्याप्रियेते, तावत् प्रकरणधर्मत्वं नास्ति । यदा तु वस्तुविसंवादात् विहतशक्तिनी ते निर्व्यापारे भविष्यतः, तदा प्रकरणविनियोग इति । **( अथ पूर्वपक्षः )** किं तावत् प्राप्तं ? अत आह— 'विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात् प्रकरणाविशेषाच्च' ( ३।१।४।८ ) इति ( मूले तु 'विहितस्तु सर्वधर्मः स्यात्' इति सूत्रांशः अत्र न पठितः ) श्रुतिवाक्ययोश्च तावत् असामर्थ्येन औदासीन्यात् । कथं पुनः गुणस्य अक्रियात्मकस्य सतः प्रकरणेन ग्रहणम् ? उच्यते । नैवात्र प्रकरणं ग्राहकत्वेन ( विनियोजकत्वेन ) इष्टम् । कथं तर्हि ? अरुणया इत्यत्र पदे या तृतीया तया करणानि प्रकरणलभ्यज्योतिष्टोमापूर्वसाधनानि सोमप्रभृतीनि अनूद्य अरुणप्रातिपदिकार्थो विधीयते । **'अतश्च पदमेवैतद् वाक्येनैवं विभज्यते । या व्यक्तिः करणत्वेन चोदिताऽपूर्वसाधनम् ॥ तया तत् साधये-**

न्नित्यमरुणत्वविशिष्टया । एवं चेदरुणं कार्यं करणं यद् ग्रहाद्यपि ॥ ' तस्मात् सर्वकरणानि अरुणीकर्तव्यानि । '**यत् पुनर्यजमानादि विहितं कारकान्तरम् । न तस्यायं गुणः शेषः सर्वार्थोऽप्यवधारितः ॥**'

**( अरुणाशब्दो गुणवचनो द्रव्यवचनो वेति विचारः )** ।

**भा**—( पृ. ६८१ ) **ननु** नैवायं गुणवचनः, किं तर्हि द्रव्यवचनः । कुतः ? स्त्रीलिङ्गसंबन्धात् । द्रव्यविशेषा ह्येते स्त्री पुमान् नपुंसकमिति । स्त्रियां यत् प्रातिपदिकं वर्तते, तस्मात् स्त्रीप्रत्ययो भवति इति । स्त्रीप्रत्ययं च अरुणया इत्युपलभामहे । तस्मात् द्रव्यवचनः अरुणाशब्दः इति । **तदेतदपेशलम्** । तदेव हि द्रव्यं अरुणिम्ना परिच्छिद्यमानं अरुणाशब्दाभिधानीयतां लभते । तदेव अन्यगुणकं नारुणाशब्दः शक्नोति अभिवदितुम् । अरुणिमानं एष शब्दो न व्यभिचरति, व्यभिचरति पुनर्द्रव्यम् । अव्यभिचारि च कारणं कारणवतामिष्टम् । अतोऽस्य गुणः स्वार्थः इति गम्यते । तदस्य प्रत्यक्षतो गुणवचनता गम्यते । स्त्रीप्रत्ययदर्शनात्तु नूनं अरुणाप्रातिपदिकं द्रव्यवचनं इत्यनुमानम् । प्रत्यक्षं चानुमानात् बलीयः । तस्मात् गुणवचनः । कथं तर्हि स्त्रीप्रत्ययसंबन्धः ? भवति हि गुणवचनस्यापि स्त्रीलिङ्गता यथा ' करुणा बुद्धिः ' एवं अरुणा इति । गुणवचनश्चेत्, क्रीणातिना न संबध्यते । तस्मात् वाक्यभेदं कृत्वा प्रकरणे सर्वस्मिन्नेव संनिवेश इति ।

**वा**—( पृ. ६८१ ) यदुच्यते गुणवचनत्वात् अरुणाशब्दः क्रीणातिना न संबध्यते इति, तदाक्षिपन्नाह—' ननु नैवायं गुणवचनः ' इति । रूपरसादिशब्दाः केवलगुणवचनाः । तथाहि, यदा तेषां द्रव्येषु प्रयोगः, तदा न मत्वर्थीयेन विना प्रवर्तन्ते । ये पुनः शुक्लारुणादिशब्दाः, ते कदा चिदेव षष्ठ्यन्तद्रव्यपदसंनिधानात् भावप्रत्ययरहिता गुणेषु वर्तन्ते । ' पटस्य शुक्लः ' इति नित्यं गुणोपसर्जनद्रव्यवचनाः । तथा च अन्तरेणापि मत्वर्थीयं द्रव्यसामानाधिकरण्यं प्रतिपद्यन्ते यथा ' शुक्लः पटः ' ' अरुणो घटः ' इति । **ननु** च मतुब्-लोपाम्नानात् एषां एवं वृत्तिर्भविष्यति । **नैतदेवम्** । '**शब्दानां नहि लोपेन वाच्योऽर्थः प्रतिपाद्यते । तस्मादुभयसामर्थ्यमेवं तत्रावगम्यते** ॥ ' यथैव क्विबन्ताधुनादिषु प्रकृतिप्रत्यययोः प्रत्येकं उभयार्थाभिधानसामर्थ्यं सदेव लोपद्वारेण अन्वाख्यायते, ( क्विबन्तश्च अधुना च, तौ आदिर्येषां ते क्विबन्ताधुनादयः, तेषु इति विग्रहः । तत्र इदम्-शब्दस्य सप्तम्यन्तस्य स्थाने कालवाची 'अधुना' इति प्रत्ययः । प्रकृतेः स्थाने 'इश्' इत्यादेशे इकारादेशस्य यणो लोपे अधुना इति शब्दः सिद्धः । स च प्रत्ययरूप एवावशिष्टः । क्विबन्ते तु प्रकृतिरेवावशिष्यते । **के.** ) तथैवात्र प्रातिपदिकमेव मत्वर्थमपि उपादातुं समर्थं, इति मतुब्लोपाम्नानम् । लक्षणयेति चेत्, न, क्विबन्तादिवदेव मुख्यरूपप्रतीतेः । न च लक्षणासु शास्त्रेण अन्वाख्यानं क्रियते । रूपादीनामपि च लक्षणोपपत्तेः मतुपा विना वृत्तिः स्यात् । ' चन्दनस्य गन्धः ' इतिवच्च अन्तरेण भावप्रत्ययं ' गोः अरुणः ' इत्यपि प्रयोगः स्यात् । यथा च गन्धत्वं इत्युक्ते चन्दनादिसंबन्धमपास्य तद्विशेषाणां गन्धत्वसंबन्धो भवति, एवं अरुणत्वं इत्यपि द्रव्यसंबन्धो न स्यात् । रूपादिशब्दवदेव च अरुणादेरपि द्रव्यसामानाधिकरण्यं न स्यात् । यो हि मन्यते लक्षणया अरुणादिषु सामानाधिकरण्यं इति, तस्य रूपादिष्वपि तथैव स्यात् अरुणत्वादिषु वा । नहि ते किंचिदपि अधिकं वदन्ति । एतेन अरुणत्वादिभ्यः मतुब्लोपप्रसक्तिर्व्याख्याता ।

किंच '**लिङ्गसंख्यादिसंबन्धो गुणानां न च विद्यते । तद्योगादपि शुक्लादेर्द्रव्यवाचित्वमिष्यते** ॥ ' ननु ' गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति ' इत्येवं सेत्स्यति । न । रूपादिशुक्लत्वादिष्वपि प्रसङ्गात् । अपि च गुणवचन इति न गुणाभिधानमात्रेण उच्यते । किं तर्हि ? गुणमुक्त्वा यो द्रव्ये वर्तते । नहि अन्यथा वचनशब्दः प्रयुज्यते । वचनमेव (अभिधानमेव) स्वरूपं शब्दस्य इत्येवं गुणशब्देनैव व्यवहारसिद्धेः । अत एव रूपादीनामग्रहणम् । एतेन मतब्लोपवाक्यं व्याख्यातम् । तस्मात् द्रव्यवचनः अरुणाशब्दः, तस्य च कारकत्वाभिधानोपपत्तेः एकवाक्यत्वसिद्धिः । अतो न सर्वधर्मत्वमिति । ' तदेतदपेशलं ' इति ( भाष्यं ) आकृत्यधिकरणोक्तन्यायविसंवादात् अशोभनं इत्यभि-

प्रायम्। तथाहि, '**अन्वयव्यतिरेकाभ्यां यं कदाचिन्न मुञ्चति। स एव तस्य वाच्योऽर्थो गुणं चैष न मुञ्चति॥**' एकान्तद्रव्यसंबन्धिनि तावत् गुणे विशेषणत्वात् पूर्वतरमभिहिते तत्संबन्धादेव प्रतीयमानस्य द्रव्यस्य न शक्यं वाच्यत्वं कल्पयितुं इत्युक्तम्। '**व्यभिचाराच्च न द्रव्यस्वरूपं वाच्यमिष्यते। तद्गुणेऽन्यत्र वृत्तेश्च निवृत्तेश्चागुणात् ततः॥**' **ननु** गुणान्तरोत्पत्तिकाले अन्यदेव द्रव्यं, इति न व्यभिचरेत्। ( उत्तरमाह- ) '**न तावदयमेकान्तः कार्यद्रव्यान्तरोद्भवः। स्थितेऽपि हि भवत्येव द्रव्ये किंचिद् गुणान्तरम्॥**' येषां तावत् कार्यद्रव्याण्येव घटादीनि पच्यन्ते यथा पैठराणां ( पिठरपाकवादिनां नैयायिकानां ), तन्मतेन अभेद एव। पैलुकानामपि तु ( पीलुपाकवादिनां वैशेषिकाणां ) परमाणुषु व्यभिचारः। यादृशं तु अस्माभिर्द्रव्यमभिहितं, तादृशस्य सर्वत्र गुणमात्रमेव भिद्यते न स्वरूपम्। यानि च घटादीनि द्रव्यान्तरेण गैरिकादिना रक्तानि संयुक्तसमवेतगुणद्वारेण अरुणादिशब्दैः अभिधीयन्ते, तत्र एकस्यैव द्रव्यस्य अनेकनीलपीतादिशब्दविषयत्वापत्तेः स्पष्टं व्यभिचारित्वम्। अतश्च आकृतिव्यवहारात् दूरेण स्थूलतरोऽयं इत्यपेशलता। मतुब्लोपश्च अत्यन्तनिरूढलक्षणावशात् अन्वाख्यायते।

**( अभिधालक्षणावादार्थः )** यत्तु मुख्यप्रत्ययात् नैवमिति, तत्रोच्यते। '**गौणत्वं यो वदेदत्र स एवमनुयुज्यते। संनिकृष्टाभिधेयार्थलक्षणायां न दुष्टता॥**' अग्निर्माणवकः इत्यत्र अग्निमाणवकयोः अत्यन्तभेदात् सादृश्येन शब्दः प्रवर्तमानः प्रत्ययवैलक्षण्यात् नाभिधाता इति सर्वेण ज्ञायते। ये तु जातिगुणवचना भूत्वा द्रव्यं प्रत्याययन्ति, तेषां अभिधेयलक्ष्यमाणवस्तुनोः विवेकाभावात् प्रतीतौ अपि अविवेकः स्थित एव। स कथं चित् अन्वयव्यतिरेकाभ्यां निपुणैः परीक्षकैरपनीयते इति। लोकस्य तु मुख्यबुद्धिरेव। न च परीक्षकाणां अनभिधेयत्वं वदतां लोकविरोधः। प्रतीतमात्रव्यवहारी हि लोकः अभिधानलक्षणाविवेकमकुर्वन् उदासीनावस्थः सामान्यविशेषबाधादि( व्यवस्था )सिद्ध्यर्थं परीक्षकैर्विवेकं क्रियमाणं न नानुमन्यते। तस्मादविरोधः। **कथं** न रूपादिशब्देष्वपि तल्लक्षणया मतुब्लोपः, कथं वा लक्षणावृत्तिः शास्त्रेण अन्वाख्यायते ? इति। **अत्राभिधीयते।** '**निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते, सांप्रतं काश्चित्, काश्चिन्नैव त्वशक्तितः॥**' इह केषु चिदर्थेषु अभिधानवदेव लक्षणाशक्तिरपि अनादिकालप्रवृत्तत्वेन निरूढा, यथा शुक्लादिषु। केषु चित्तु क्रियते, यथा 'रथाङ्गनामा चक्रवाकः' इति। केषु चित् पुनः कर्तुमपि न शक्यते, यथा शब्दस्पर्शरूपरसगन्धेषु। कथं पुनः इह अविशिष्टे संबन्धे सति न लक्षणेति ? तत्रोत्तरं 'अभिधानवत्' इति ( श्लोके ) यथा भवतः समाने गुणशब्दत्वे शुक्लादीनां गुणोपसर्जनद्रव्यवचनत्वं न रूपादीनां, एवं मम लक्षणेति। **तत्र** एतत् स्यात्; अभिधानशक्तिः स्वाभाविकी, लक्षणा तु न संबन्धादधिकं निमित्तमपेक्षते इति। **उच्यते।** यदृच्छाशब्दत्वे एतदेवं स्यात्। तव तु शुक्लादीनां समवेतगुणद्वारेण द्रव्ये वृत्तिः। तत्तु अविशिष्टं रूपादिष्वपि, इति द्रव्ये वृत्तिप्रसङ्गः। तत्र अवश्यं गुणगतः कश्चित् सामर्थ्यभेदः अङ्गीकर्तव्यः, येन ते शब्दाः के चिदेव गुणिपरा भवन्ति, अन्ये गुणप्रधानाः। एवं लक्षणायामपि भविष्यति। '**तस्माद् यथैव शब्दानां शक्तिभेदोऽभिधां प्रति। प्रत्यतव्यस्तथाऽर्थानां लक्ष्यार्थान्तरगोचरः॥**' सत्यपि च ( शब्दानां ) फलानुमेये दृश्यमानार्थप्रत्यायनसामर्थ्ये, सत्यपि च अस्माकमपि अदृष्टशक्तिगौरवतुल्यत्वे, अभिधेयमात्रप्रत्ययेन निवृत्तव्यापारे शब्दे, अर्थप्रत्यये च अकृतार्थे सति, कल्प्यमानत्वात् अर्थशक्तिः प्रमाणवती, न शब्दशक्तिः। तेन अदृष्टकल्पनातुल्यत्वेन पक्षयोस्तुल्यबलत्वम्। अतश्च रूपादीनां लक्षणाशक्त्यभावात् मतुपा विना न द्रव्ये वृत्तिः। तथा च '**रसादिभ्यश्च**' ( पा० ५।२।९५ ) इति प्रत्ययान्तरनिवृत्त्यर्थं मतुप्-नियमपुनश्रुतिः अमुमेवार्थं द्योतयति। न च रूपादिप्रत्ययेन न द्रव्यं प्रत्याय्यते। गम्यते हि, धूमादिना इव अग्निः, अविनाभावात् द्रव्यम्। शब्दस्य तु अतत्परत्वात् लक्षणाऽनध्यवसानम्। प्रधानत्वाप्रधानत्वप्रतीतिस्तु द्रव्यगुणयोः

स्वाभाविकी। नित्यं हि रूपादिषु स्वप्राधान्येन अभिधीयमानेषु द्रव्यं विशेषणत्वेन उच्यते, शुक्लादिषु विशेष्यत्वेन। अत एव च अनादिकालप्रसिद्धार्थत्वात् अस्या लक्षणायाः मतुब्लोपाम्नानेन अनुगमः। या तु आदिमती नान्यन्तप्रसिद्धा, नासौ शास्त्रेण अनुगम्यते। विनाऽपि च अनुगमात् संबन्ध्यन्तरवशेन सा कदा चित् उपलभ्यते। तद्यथा 'मधुरो रसः स्निग्धः शीतो गुरुः' इति स्निग्धशीतत्वादीनां गुणान्तरविशेषत्वात् न रसेन संबन्धोऽस्ति इति रसलक्षितेन द्रव्येण संबध्यते। तस्मात् शक्तिपर्यनुयोगाभावात् मतुब्लोपभावाभावौ। एतेन भावप्रत्ययसदसद्भाव–सामानाधिकरण्यवैयधिकरण्यव्यवस्था व्याख्याता। शुक्लत्वादिशब्दाश्च भावप्रत्ययनिष्कृष्टविशेष्यभूतगुणवचनत्वात् गन्धवदेव नित्यं वैयधिकरण्येन संबध्यन्ते। '**एतावांस्तु विशेषोऽत्र यदत्रापि विशेषणम्। विशेष्य एव शुक्लत्वे, शुक्लो द्रव्यविशेषणम्॥ द्रव्योपसर्जनीभूतः स्वप्रातिपदिके स्थितः। तादृङ् निष्कृष्यते द्रव्यात् पश्चात्तु त्वतलादिभिः॥ तेनैतस्य द्विरूपत्वं गन्धादेरेकरूपता। तथा च शुक्ल इत्यस्य पुनरन्या द्विरूपता॥ कदा चिद् गुणमेवाह गुणिनं लक्षयेत् क चित्। षष्ठ्यन्ततद्विभक्त्यन्तवाच्यद्रव्योपसर्जनः॥ पटस्य शुक्ल इत्यत्र निष्कृष्टो गुण आश्रितः। पटः शुक्ल इति त्वत्र द्रव्यलीनोऽभिधीयते॥**' लिङ्गसंख्यादिसंबन्धः स्वाश्रयद्वारेण पूर्ववदेव उपपत्स्यते। तथा गुणवचनशब्दश्च द्रव्यप्राधान्ये वर्तते वैयाकरणानां गुणमुक्त्वा गुणिनि वर्तमानत्वात्। न हि **वैयाकरणानां वैशेषिकवत्** गुणाः परिसंख्यायन्ते। किं तर्हि? अङ्गाङ्गिभावापेक्षया गुणगुणिव्यवहारः। शुक्लादिशब्दाश्च उपसर्जनीभूतमर्थं वदन्ति, न रूपादिशब्दाः इति लिङ्गसंख्यासंबन्धासंकरः। ( **इति अभिधालक्षणावादार्थः** )। भाष्यकारेण तु एतमेव परिहारं मनसि कृत्वा उक्तं 'भवति हि गुणवचनस्यापि स्त्रीलिङ्गता यथा करुणाबुद्धिशब्दयोः' ( मूले तु 'यथा करुणा बुद्धिः' इति पठितम् ) गन्धादिशब्दतुल्यावपि चैतौ प्रदर्शनमात्रविशेषात् उदाहृतौ। एतदुक्तं भवति, येऽपि तावत् स्वप्रधानगुणवचनाः, तेऽपि कथं चित् लिङ्गसंख्याभ्यां युज्यन्ते, किं पुनर्येषु द्रव्यप्राधान्यम्। एवं अनया युक्त्या अरुणा इति गुणवचनः।

**भा**— ( पृ. ६८५ ) **अथ** यदि क्रीणातिना न संबध्यते तस्मिन्नेव वाक्ये एकहायनीशब्देन संभन्त्स्यते, न भविष्यति वाक्यभेद इति। **तन्न**। केवलं हि गुणं अरुणाशब्दः अभिदधाति, न द्रव्यगुणौ। केवलं च द्रव्यं एकहायनीशब्दः, न गुणसहितं, इति तयोः संबन्धस्य वाचिकां षष्ठीमन्तरेण कथं संबन्धो गम्यते। **आह,** अन्तरेणापि षष्ठीं एकविभक्तिनिर्देशात् सामानाधिकरण्यं अवगमिष्यामः, यथा 'नीलमुत्पलं' इति। **तदनुपपन्नम्।** रूपात् ( सामर्थ्यात् ) अरुणाशब्दस्य गुणवचनता, कल्पनीयं तु एकविभक्तिसंयोगात् एकहायनीशब्दसंनिधानाच्च तदेकवाक्यतामभ्युपगम्य एकहायनीशब्दसामानाधिकरण्यम्। न च लिङ्गात् वाक्यं बलीयः। तस्मादसदेतत्। **तत्रोच्यते**। यदा केवलगुणवचनतायां शब्दः प्रवर्तमानः नान्येन संबन्धं लभते, तदा अनुपदेशकत्वात् आनर्थक्यं मा भूत् इति द्रव्यपरतामापद्यते। तस्यामवस्थायां एकविभक्तियुक्तेन एकहायनीशब्देन संनिहितेन एकवाक्यतामापद्यमानः समानाधिकरणो भवति। तथा च कृत्वा नीलमुत्पलं इत्युपपद्यते। स चायं अरुणाशब्दः तस्यामवस्थायां वर्तते। नहि अस्य स्वार्थमभिदधतः इतो विच्छिन्नस्य प्रकरणेऽपि अर्थवत्ता। कुतः? येनैव हेतुना क्रीणातिना न संबध्यते 'नामूर्तोऽर्थः क्रियायाः साधनं भवतीति, न च क्रियासाधनैर्द्रव्यैः, नहि केवलगुणवचनः शक्नोति द्रव्यमभिधातुं' इति, **स एव हेतुः** प्रकरणसंबन्धाभावेऽपि। तत्रापि संबध्यमानः क्रियाभिर्वा संबध्येत, तत्साधनैर्वा द्रव्यैः। तच्चोभयमपि अनुपपन्नम्। अतः अनर्थकत्वपरिजिहीर्षया संनिहितेन एकहायनीशब्देन अरुणाशब्दः संबध्यते, नास्ति वाक्यभेदः। **नैतदेवम्**। नहि अयं अरुणाशब्दः एकहायनीविशेषणं भवितुमर्हति। किं कारणं? करणविभक्त्या तृतीयया समुच्चारितोऽयम्। तेन एतेन **तृतीयाश्रुतिसामर्थ्यात् क्रियाविशेषणेन भवितव्यम्।** कारकाणां हि क्रियया संबन्धो न द्रव्येणेति। स एष

श्रुतिसामर्थ्यात् क्रियाविशेषणं, वाक्यात् एकहायनीविशेषणम् । श्रुतिश्च वाक्यात् बलीयसी । तस्मात् नास्य एकहायनीसंबन्ध इति ।

**वा—** ( पृ. ६८५ ) गुणवचनश्चेत् क्रीणातिना न संबध्यते इत्युपसंहृते परः पुनराह–' अथ यदि क्रीणातिना न संबध्यते ' ततः एकहायन्या संबध्यतां इति । शक्यते हि गुणवचनस्य द्रव्यसंबन्धः कर्तुम् । सिद्धान्तवादी तु श्रुत्या क्रियासंबन्धावगमात् द्रव्यसंबन्धो वाक्यलक्षणो दुर्बलत्वात् बाध्यते इत्येतत् प्रतिपादयितुमाह– ' तन्न केवलं हि गुणं ' इति । द्विप्रकारो हि नाम शब्दानां संबन्धः, सामानाधिकरण्येन वैयधिकरण्येन वा । तत्र यदा उभाभ्यां उभयार्थोपादानं तदा सामानाधिकरण्यं भवति । षष्ठ्यन्तद्रव्यपदोच्चारणे तु वैयधिकरण्येन संबन्धः । तदिह केवलगुणगुणिवचनत्वात् अरुणैकहायनीशब्दयोः श्रुतिसामानाधिकरण्यं तावन्न विद्यते । नापि षष्ठीश्रुतिरस्ति । तस्मात् तृतीयाश्रुतिबलीयस्त्वात् न द्रव्यगुणयोः संबन्ध इति । बलाबलकृतं संबन्धनिराकरणं अवगम्य अप्रमाणकृतत्वाभिप्रायेण अयं ब्रवीति इति मत्वा एकविभक्तियोगात् (एकविभक्तिनिर्देशात् इति मूले) इत्याह । ' तदनुपपन्नं ' इति बलाबलप्रदर्शनम् । प्रथमं तावत् स्वसामर्थ्येन अरुणप्रातिपदिकस्य गुणवचनत्वं गम्यते, पदान्तरसंनिधानाच्च सामानाधिकरण्यं इति बलाबलम् । तत्राह ' **केवलारुणवाचित्वं लिङ्गाद् यद्यपि गम्यते । तथाप्यगतितो वाक्याल्लक्षणावृत्तिराश्रिता ॥**' इदानीं तृतीयाश्रुतिबलीयस्त्वात् क्रियासंबन्धावबोधात् द्रव्यसंबन्धबाधं दर्शयति ।

**भा—** ( पृ. ६८६ ) ननु च गुणस्य क्रियासंबन्धाभावात् अविवक्षिता कारकविभक्तिः, इति एकहायनीसंबन्धोऽयमध्यवसितः । एवमपि नोपपद्यते । यदि कारकाभिधानं अविवक्षितं इति गुणशब्देन एतेन द्रव्यमभिधातुमिष्यते, तदा प्रातिपदिकार्थस्य अव्यतिरेकः इति प्रथमा विभक्तिः प्राप्नोति । नहि तृतीयान्तः तमभिसंबन्धं शक्नोति वक्तुम् । न च अन्यथाऽनुपपत्तिः, इति अन्योऽस्य अनुपपद्यमानोऽर्थः शक्यते कल्पयितुम् । यथा ' अग्नौ तिष्ठति माणवकः ' इत्युक्ते ज्वलने अनुपपद्यमानः नाश्वे गवि वा कल्प्यते, अग्निसमीपवचनः एवाध्यवसीयते, तद्वदिहापि अप्रथमान्तः शब्दः न कथंचिदपि अव्यतिरिक्ते प्रातिपदिकार्थे भवितुमर्हतीति । तस्मात् कामं अनर्थकोऽवगम्यतां, नास्य एकहायनीसंबन्धोऽध्यवसातव्यः ।

**वा—**( पृ. ६८६ ) तत्रापि अगत्यैव प्रत्यवस्थानं ' ननु गुणस्य क्रियासंबन्धाभावात् ' इति । तस्योत्तरं तृतीयानर्थक्यप्रसङ्गादिति । नहि अगत्या अनभिधेयोऽर्थः शक्यः प्रत्येतुम् । न चात्र लक्षणयाऽपि सक्तुद्वितीयावत् तृतीया अर्थवती कारकसामान्यस्यापि अनिष्टत्वात् ।

**भा—** ( पृ. ६८७ ) आह, न ब्रूमो न कारकं अरुणाशब्देन अभिधीयते इति । व्यक्तं अरुणगुणविशिष्टं एतेन कारकमभिधीयते । कदा चित्तु किं चित् विधित्सितं भवति, कदा चित् उपसर्जनीभूतोऽर्थो विधित्सितः, प्रधानीभूतोऽनुवादः । तद्यथा 'दण्डी ' इति उपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दोऽवगम्यते, कदा चित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थमुच्चार्यते ' दण्डी प्रैषानन्वाह ' इति । यथा ' लोहितोष्णीषा ऋत्विजः प्रचरन्ति ' इति । एवं इहापि यदि उपसर्जनीभूतः अरुणो गुणः, प्रधानभूतं कारकं, तथापि अनूदिते कारके अरुणगुणविधानार्थं वचनं युज्यते । तस्मात् एकहायनीसंबन्धः उपपद्यते नास्ति वाक्यभेद इति । **नैतत् सारम्** । अत्र हि एकहायनीक्रीणात्योः अनवबुद्धं संबन्धं बोधयितुं अयं एकहायनीशब्द उच्चारितः । स एष कथमिव अरुणाशब्देन संबध्यते । तदेतदभिहितमपि पुनःपुनः पर्यनुयुज्यते ।

**( एकहायनीशब्दस्य क्रीणातिना अन्वयः न अरुणाशब्देन । )** कथं पुनः एकहायनीशब्दस्य क्रीणातिना अरुणगुणेन च समाने समभिव्याहारे, क्रीणातिना संबन्धोऽभ्युपगमनीयः, न पुनः आरुण्येन इति । शब्दप्रामाण्यात् । भवति हि क्रियासंबन्धस्य वाचिका विभक्तिः एकहायनीशब्दमनु निविष्टा, न तु गुणसंबन्धस्य वाचिका । का पुनः क्रियासंबन्धस्य वाचिका, का वा गुणसंबन्धस्येति ? कारकलक्षणा क्रियासंबन्धे विवक्षिते भवति द्वितीयादिः । अविवक्षिते

पुनः कारके संबन्धमात्रविवक्षायां षष्ठी । न चात्र षष्ठीं पश्यामः । पश्यामस्तु खलु तृतीयाम् । अतः क्रीणातिना संबन्धमभ्युपगच्छामः एकहायनीशब्दस्य, न अरुणाशब्देन इति । कथं तर्हि भवति अत्र संबन्धो नीलमुत्पलमिति । उच्यते । भवति, न तु श्रुतिलक्षणः, किंतु वाक्यलक्षणः । उत्पलशब्दसंनिधाने तदपेक्षी नीलशब्दः तेन एकवाक्यतां अभ्युपगच्छन् न अजहत्स्वार्थवृत्तिः उत्पलविशेषाभिधानपरः उच्चार्यमाणः संबन्धमभ्युपैति । **ननु** इहापि वाक्यलक्षणः तद्वदेव अरुणिम्ना समं संबन्धः एकहायन्या युज्यते । **नेति** ब्रूमः । श्रुतिर्हि वाक्यात् बलीयसी । श्रुतिश्च अस्याः क्रियासंबन्धमाह, न गुणसंबन्धम् । यदि पुनः श्रुतिसामर्थ्यात् क्रियासंबन्धोऽभ्युपगम्येत, एकवाक्यत्वादपि गुणसंबन्धः । नैवं शक्यम् । यो हि अन्येन सह संबन्धुमुच्चार्यते, न तत्समीपगतोऽपि अन्यः तेन सह संबन्धुमर्हति । यथा 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति भार्याविशेषणार्थं उच्चार्यमाणो राजशब्दः न पुरुषेण संबध्यते । तद्वदिह क्रियाविशेषणार्थं उच्चार्यमाण एकहायनीशब्दः न अरुणाशब्देन संबन्धमर्हति ।

**वा--** ( पृ. ६८७ ) परस्तु आह, लिङ्गसंख्यावत् आश्रयद्वारप्राप्तं कारकमनूद्य प्रातिपदिकार्थो विधास्यते इति । अस्ति हि एतदपि दर्शनं, यत् गुणशब्देभ्यो विनाऽपि कारकत्वेन कारकविशेषणत्वात् द्वितीयादयो भवन्तीति । '**नैतत् सारं**' इति । यद्यपि कथं चित् अरुणया इत्यस्य एकहायनीसंबन्धयोग्यत्वं, तथापि क्रियाऽऽक्षितायामेकहायन्यां 'ऐकशब्द्ये परार्थवत्' ( १।४।५।८ ) इत्येवमुभयसंबन्धाभावे बलीयसा क्रयसंबन्धेन गुणसंबन्धनिराकरणम् । नहि अत्र क्रियासंबन्धविभक्तिवत् गुणसंबन्धविभक्तिः षष्ठी दृश्यते । नीलोत्पले तु श्रुतिविरोधाभावात् वाक्यलक्षणोऽपि संबन्धोऽवगम्यते इति वैषम्यम् । ये तु सामानाधिकरण्यविकल्पाः, तान् 'नियमो वैकार्थ्ये हि' ( ६।८।१०।३५ ) इत्यत्र षष्ठान्त्याधिकरणे सूत्रे सर्वानेव वक्ष्यामः । सर्वथा लाक्षणिकं सामानाधिकरण्यं इति दुर्बलम् । न च कारकविशेषणत्वात् गुणानां कारकविभक्तिः, किं तर्हि ? कारकत्वादेवेति । एतदपि पश्वेकत्वविवक्षाधिकरणे ( ६।८।१०।३५ ) वक्ष्यते ।

**भा--** ( पृ. ६८८ ) आह सत्यमेवमेतत् । असत्यामाकाङ्क्षायां आनन्तर्यमकारणम् । सर्वत्र तु बोधिते पदार्थे वाक्यार्थ उपपद्यते, नान्यथा । सामान्यवृत्ति हि पदं, विशेषवृत्ति वाक्यम् । सामान्येन अभिप्रवृत्तानां पदार्थानां यद्विशेषे अवस्थानं स वाक्यार्थः । तदेतदुक्तं 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' ( १।१।७।२५ ) इति । तत्र प्रत्यक्षतः पदार्थः, वाक्यार्थः पुनरानुमानिकः । तदेतदवगम्यतां, केवलस्वार्थवृत्ति पदं अनुपदेशकं, इति पदान्तरेण संनिहितेन एकवाक्यत्वमभ्युपैति, नान्यथेति । तदिह यद्यपि एकहायनीशब्दः क्रीणातिना संबध्यमानः कृतार्थो न पदान्तरेण संबन्धमाकाङ्क्षति, अरुणाशब्दस्तु पदान्तरेण संबन्धमलभमानोऽनर्थकः, इति एकहायनीशब्देन एकवाक्यतामभ्युपैति ।

ननूक्तं क्रियासंबन्धार्थो नारुणासंबन्धार्थः इति । **आह,** अरुणाशब्दस्य आनर्थक्यपरिहाराय उभयसंबन्धार्थ इति वदामः । अन्यार्थमपि कृतं अन्यार्थमपि शक्नोति कर्तुम् । तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च । एवमिहापि क्रयसंबन्धार्थं एकहायनीशब्द उच्चार्यमाणः अरुणाशब्देन सह संभन्त्स्यते, न किंचित् दुष्यति । तस्मान्न वाक्यभेद इति ।

**वा--** ( पृ. ६८८ ) 'आह सत्यमेवमेतदिति' पुनरपि श्रुतिविरोधपरिहारार्थमेव यतते । कथं ? '**तन्त्रेणोभयसंबन्धे विरोधित्वं प्रसज्यते । प्रासङ्गिके त्विहैकस्मिन्नविरोधो भविष्यति ॥**' 'सर्वत्र तु बोधिते पदार्थे' इति कोऽयमुपन्यासः ? उच्यते । '**सर्वथा बाधिता तावत् पदार्थानां स्वतन्त्रता । तेनानेकोऽपि संबन्धः कल्प्यमानो न दुष्यति ॥**' अरुणाशब्दस्तावत् अवश्यमेव केन चित् गुणिना संबन्धनीयः । एकहायनीशब्दस्यापि क्रियासंबन्धात् स्वातन्त्र्यमपनीतम् । तत्र पदान्तरसंबन्धेऽपि 'सकृत्प्रवृत्तायाः किमवगुण्ठनेन'

इतिवत् तस्य तावत्येव श्रुतिपीडा, इत्यतः गुणपदेनापि संबध्यतामिति ।

**( अथ मुख्यपूर्वपक्षोपन्यासः- ) भा— ( पृ. ६८९ ) नैतदस्ति** । यद्यपि अयमरुणाशब्दः अनर्थको मा भूत् इति एकहायन्या संबध्येत, तथापि सर्वस्मिन् प्रकरणे निवेष्टुमर्हति । न च एनं 'सोमं क्रीणाति' इत्येष शब्दः शक्नोति विशेष्टुम् । नहि अयं विशेषणत्वेन उच्चार्यते, किं तर्हि ? अपूर्वोऽयं विधीयते ।

**वा--( पृ. ६८९ )** 'नैतदस्ति' इति अभ्युपेत्य द्रव्यगुणसंबन्धम् । क्रयगतद्रव्यसंबन्धनिराकरणात् ( न ) क्रीणातेः विध्यनुवादयौगपद्याश्रयणविरोधः । यत्र तु क्रियाविशेषणानि सर्वाणि भवन्ति, तत्र विशिष्टविधानात् अक्लेशो भवति । यत्र तु क्रिया विधीयते द्रव्यस्य च किंचित्, तत्र प्रत्ययावृत्तिलक्षणं वाक्यभेदमभ्युपेत्य नियमाभावो भवति इत्युच्यते । विशेषणं हि प्रसिद्धं भवति । न च विधीयमानावस्थः क्रयः प्रसिद्धः इति प्रकरणगतैकहायनीमात्रसंबन्धप्रसङ्गः । कतमा पुनरन्या ज्योतिष्टोमप्रकरणे एकहायनी ? सर्वथा तावत् वाक्येन तस्यामपि गुणः प्राप्यते, यदि तु सा न विद्यते, किं क्रियताम् । दक्षिणा तु वा का चित् भविष्यति । अनूबन्ध्यायां वा । अथवा उद्दिश्यमानत्वात् अविवक्षितलिङ्गसंख्यैकहायनमात्रग्रहणात् सवनीयाग्नीषोमीययोरपि एकहायनयोर्ग्रहणादनियमः । सदृशन्यायेषु वा उदाहरणान्तरेषु एव तत् भविष्यति । तद्यथा 'दशमुष्टीर्मिमीते' इत्यत्र सोममानादन्येषामपि अङ्गेष्टिनिर्वापमुष्टीनां दशसंख्यत्वप्रसङ्गः ।

**भा—(पृ.६९०) ननु** अपूर्वोऽपि विधीयमानः एकहायनीशब्दवत् इतरेण संभन्त्स्यते । कथम् ? प्रयोजनाय हि उच्चार्यमाणः शब्दः येन अर्थः, तस्मै तावत् प्रयोजनाय अवकल्प्यते, संनिहितश्च बुद्धौ भवति । तेन बुद्धौ संनिहितेन शक्यते साकाङ्क्षः शब्दः संबन्धयितुमिति । **नैतदेवम्** । यो हि असंबध्यमानोऽनर्थको भवति स संबध्यते, नान्यः । कुत एतत् ? संबध्यमाने हि सामान्यं विशेषे अवस्थाप्येत । तत्र वाक्येन श्रुतिः पीडिता स्यात् । न चायमसंबध्यमानः क्रीणातिना, अनर्थको भवति, प्रकरणगतैः अभिसंभन्त्स्यते । ननु एतदुक्तं प्रकरणेऽपि अस्य संबन्धोऽनुपपन्न इति । नानुपपन्नः । एकस्मिन् वाक्ये अन्योऽर्थो विधीयमानो नान्येन संबध्यते वचनव्यक्तिभेदात् । अन्या हि वचनव्यक्तिः विधीयमानस्य, अन्या गुणेन संबध्यमानस्य । अज्ञातवत् ज्ञाप्यते विधीयमानोऽर्थः, ज्ञातवत् अनूद्यते गुणसंबन्धार्थम् । न च सकृदुच्चार्यमाणो ज्ञातवत् अज्ञातवच्च भवितुमर्हति । एकहायनीशब्दः क्रये विधीयमानः अज्ञातवत् स्यात्, अरुणाशब्देन संबध्यमानश्च ज्ञातवत् । वाक्यभेदे पुनर्न दोषो भवति । प्रकरणे तु वाक्यान्तरैः क्रिया द्रव्यान्तराणि च प्राप्तानि । तैरिदं वाक्यान्तरविहितं संबध्यते । तत्र अन्यस्मिन् विधीयते, अन्यस्मिन् वाक्ये अनूद्यते इत्युपपन्नं भवति । तस्मात् संयोगतोऽविशेषात् प्रकरणाविशेषाच्च सर्वस्मिन् प्रकरणे द्रव्येषु ( आरुण्यस्य ) निवेशः इति ।

**वा — ( पृ. ६९० )** परः पुनः एकहायनीवैरूप्याभ्युपगमवादलब्धप्रसरः शङ्कते 'ननु अपूर्वोऽपि विधीयमानः' मनसि विपरिवर्तमानः प्रसङ्गादेव विशेष्यते इति । 'नैतदेवं' इत्युत्तरम् । यावद्यावत् हि पदार्थो विशेष्यते तावत्तावत् श्रुतेः स्वरसभङ्गः । तेन 'सकृत् प्रवृत्तायाः किमवगुण्ठनेन' इत्येवं एकेन केन चित् विशेषितः परेणापि विशेष्यतां इत्यभ्युपगन्तव्यम् । न च आनर्थक्यं, प्रकरणे अर्थवत्त्वात् । तत्रापि एवमेव संबन्ध इति चेत् । न । वाक्यान्तरप्राप्तद्रव्यानुवादेन गुणविधौ वैरूप्यप्रसङ्गाभावात् । भवत्पक्षेऽपि स्वरूपतः, सोमं च प्रति क्रये विधीयमाने, द्रव्यं च प्रति विशेषणत्वेन अनूद्यमाने वैरूप्यं भवति । एवं एकहायन्यपि क्रयं गुणं च प्रति वैरूप्यात् नैव संबध्यते । पूर्वं तु अभ्युपेत्यवादमात्रेण अङ्गीकृतम् । तदिदानीं तत्रैव परस्य दुष्टाशा मा भूत् इति निराक्रियते । तेन अयमेव परमार्थः 'कारकं विभक्त्या अनूद्य प्रातिपदिकार्थो विधीयते' इति । **परे तु** अविवक्षितकारकं गुणमात्रं प्रकरणयुक्तं प्रयोगवचनेन अगृहीतं 'आनर्थक्यात् तदङ्गेषु' ( ३।१।९।१८ ) इत्येवं द्रव्येषु अवतीर्णं सर्वार्थं मन्यन्ते । **तत्तु** प्रकरणेन अनितिकर्तव्यतात्मकगुणग्रहणाभावात् आनर्थक्यतदङ्ग-

न्यायस्य च क्रयाङ्गैकहायन्यां उपपन्नतरत्वेन पूर्वपक्षमूलाभावप्रसङ्गात् उपेक्षणीयम्। तस्मात् पूर्वेणैव न्यायेन कृत्स्ने प्रकरणे (आरुण्यस्य) निवेश इति (पूर्वः पक्षः)।

भा-- (पृ. ६९१) **एवं प्राप्ते ब्रूमः**। अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् इति। यत्र अर्थैकत्वं श्रूयते द्रव्यगुणयोः, तत्र द्रव्यगुणौ एकस्मिन् पदार्थे नियम्येयाताम्। कुतः? ऐककर्म्यात् एककार्यत्वात्। एकं हि कार्यं द्रव्यगुणयोः श्रूयते क्रयसंबन्धः। कथमेतदवगम्यते? एकवाक्यत्वात्। कथमेकवाक्यत्वं? अरुणया पिङ्गाक्ष्या एकहायन्या इति अपर्यवसितोऽर्थः साकाङ्क्षत्वात् अभिधातृप्रतिपत्त्रोः। सोमं क्रीणाति इति तु पर्यवस्यति, तयोरेवं नैरुत्सुक्यात्।

वा— (पृ. ६९१) **एवं प्राप्तेऽभिधीयते। ' यत्र द्रव्यगुणैकार्थ्यं श्रवणादेव गम्यते। अन्योन्यनियमस्तत्र तयोः स्थाल्यादिवद् भवेत्॥ '** ' अर्थैकत्वं ' इति वाक्यविशेषोपलक्षणम्। ' ऐककर्म्यात् ' इति पुनस्तदेव हेतुत्वेन उपदिष्टम्। अथवा वाक्यार्थैकत्वे यत्र एकवाक्यता संभवतीत्यर्थः, तत्र सर्वविशेषणविशिष्टैकभावनाविधिः, तादृशीं कृत्वा कृतार्थो भवति इति परिग्रहात् सर्वनियमो भवति। यथा ' देवदत्तः काष्ठैः स्थाल्यां ओदनं पचति ' इत्युक्ते सर्वेषां एकपाकविषयत्वम्। एवमिहापि केवलयोस्तावत् द्रव्यगुणयोरनुष्ठानमेव नास्ति इति न विधीयते। क्रियान्तरसंबन्धमपि क्रीणातेः परः प्रत्ययो न शक्नोति कर्तुम्। द्रव्यसंबन्धे तु सर्वत्र विधीनामेव शक्त्यभावः। सर्वत्र हि भावनातद्विशेषणार्थातिरिक्तेऽर्थे विधिव्यापारो नास्ति इति उत्तराधिकरणे वक्ष्यामः। तृतीयानिर्देशाच्च द्वयोरपि, अरुणैकहायन्योः परस्परमनपेक्ष्य स्वसाध्यक्रियामात्रापेक्षिणोः वाक्येन तद्विशेषक्रयसंबन्धो विज्ञायते। कुतः? **' कारकं ह्युच्यते कुर्वन्नाक्रियां तत् करोति च। तस्मान्न द्रव्यसंबन्धः कारकस्यास्ति कस्य चित्॥ निष्पन्नत्वाविशेषाच्च नापेक्षैषां परस्परम्। गुणानां च परार्थत्वादसंबन्धः समत्वतः (३।१।३।३)॥ न चाप्यन्योन्यसंबन्धे विधिरेषां प्रवर्तते। तदधीना वयं चेति क्रियासंबन्धकल्पना॥ क्रियाऽपि न विना कैश्चित् साध्यते कारकैः क चित्। भूतभव्यवशत्वेन क्रियाकारकसंगतिः॥ यथा च द्रव्यमिच्छन्ति साधकत्वेन कर्मणाम्। तथा गुणमपीत्येवं नारुण्यस्यान्यसंगतिः॥ '** यथैव द्रव्येण विना क्रियाऽनुपपत्तेः एकहायनीं क्रयो गृह्णाति **' तथा गुणविशेषेण द्रव्यं यावदलक्षितम्। तावत्तेन क्रियासिद्धिर्नास्त्यतोऽपेक्ष्यते गुणः॥ '** तस्मात् सोऽपि क्रियाङ्गमिति। तथा च ' द्रव्यगुणसंस्कारेषु ' (३।१।३।३) इति गुणग्रहणं कृतम्। **ननु** नान्तरीयकत्वात् द्रव्यग्रहणे गुणानुष्ठानात् पृथक् प्रयत्नाभावात् न द्रव्यवत् गुणापेक्षा युक्ता। तथाहि **' न द्रव्यमनुपादाय प्रवृत्तिः कर्मणीष्यते। पूर्वं द्रव्ये गृहीते तु तद्गुणोऽप्यनुवर्तते॥ '** उच्यते। **' कर्मण्यपि कृते पूर्वं न द्रव्येण प्रयोजनम्। द्रव्याकाङ्क्षाऽथ पूर्वं स्यात् सा गुणेऽपि प्रतीयताम्॥ '** यथैव हि त्वयोक्तं द्रव्यग्रहणेनैव गुणोऽपि कश्चित् गृहीत एवेति न पृथगुपादानं प्रयोजयति, तथा क्रियोपादानेऽपि यत्किंचित् द्रव्यमुपात्तं इति नापेक्षितव्यं, (द्रव्यमपि)। अथ तु प्रागुपादानात् द्रव्यविशेषापेक्षा भवति, तत् इतरत्रापि प्राक् द्रव्योपादानात् भवत्येवापेक्षा ' किंगुणकं द्रव्यं गृह्णामि ' इति। सर्वथा तु एतावानत्र विशेषः, प्रज्ञानोत्तरकालमपि क्रियायां द्रव्यं व्यापार्यते, गुणस्तु प्रज्ञानात् न पृथक् द्रव्यव्यतिरेकेण व्याप्रियते, तावतैव चरितार्थत्वात्। न च तथा व्यापृतस्य अव्यापृतत्वं, अनेकप्रकारत्वात् व्यापाराणाम्। परिच्छेदकाले तु अस्य (गुणस्य) अधिकव्यापारत्वं विविच्यते। तथाहि **' द्रव्येण साधनीयेयमिति ज्ञाता यदा क्रिया। कीदृशेनेत्यपेक्षाऽस्या गुणेऽप्युत्पद्यते तदा॥ '** तेनात्र यदि तावत् वेद एव कं चिद्विशेषं दास्यति, ततः तेन इत्यवधारयिष्यते। यदि तु न दास्यति, ततः अर्थाक्षिप्त एव यः कश्चित् प्रमाणवान् भविष्यति इत्यवगमे सति विधीयमानस्य अरुणादेरङ्गत्वं भवति। सर्वत्र च शब्दात् अचोदितेऽर्थे ' अर्थाद्वा कल्पनैकदेशत्वात् ' (१।४।१४।२५) इत्येवं अज्ञानसंशयव्युदास इष्टः। तदिह ' अरुणत्वेन क्रियां साधयेत् ' इति विस्पष्टे चोदिते, शब्दान्तराणां अध्याहारादीनां अभावात् ' यथा शक्नुयात् ' इत्युपबन्धे

सति 'तत्साधनभूतं द्रव्यं परिच्छिन्दता' इत्येतावदवधार्यते। कुतः? '**गुणानामेवमात्मत्वं सर्वत्र ह्यवधारितम्। नान्यथा, निष्क्रियत्वाच्च विधेश्चैवमनुग्रहात्**॥' क्रयगतस्तावत् विधिः तृतीयोपनीतं कथं चिदरुणिमानं न मुञ्चति। स च नान्येन प्रकारेण तदङ्गतां भजते। न च एकस्वरूपैव सर्वेषां साधनता। न च स्वसमवायिन्येव केवला चलनात्मिका वा क्रिया सर्वत्रेष्यते। न च प्रधानक्रियायाः सर्वाण्येव साक्षात् साधनानि भवन्ति, अवान्तरव्यापाराधीनत्वात् संबन्धस्य। अरुणादीनां च योग्यत्वात् द्रव्यपरिच्छेद एव स्वव्यापारो विज्ञायते, तत्र एषां कर्तृत्वात्। इतरत्र करणत्वं भविष्यति। तेन अरुणपदात् एतावदवगतं 'किंचित् द्रव्यं परिच्छिन्दता अरुणगुणेन क्रयः साधयितव्यः' इति। तथा एकहायन्याऽपि अन्यथा साधनत्वासंभवात् 'केन चित् गुणेन मे परिच्छेदः कर्तव्यः' इत्येतावदपेक्ष्यते। तत्र गुणः यत्किंचित् द्रव्यं परिच्छेद्यं आश्रयत्वेन अपेक्षितुं आरभते, द्रव्यमपि यं कं चित् गुणम्। उभयापेक्षालक्षणश्च संबन्धः शीघ्रं निर्वर्त्यते। न च द्रव्यान्तरगुणान्तराणां अत्र वाक्ये सापेक्षत्वं प्रतीयते। तेन नष्टाश्वदग्धरथवत् विनाऽपि षष्ठ्या अनयोरेव संबन्धः। संनिहितातिक्रमकारणाभावादपि एवमेव विज्ञायते। किंच '**क्रयश्चावगतद्रव्यगुणः प्राधान्यसंमतः। अनिच्छन्नश्रुतं कं चिद् गुणं द्रव्ये नियच्छति**॥' यत् नाम गुणः अन्यथाऽनुपपत्तेरश्रुतं द्रव्यमानयति, तत् क्रयः श्रुतैकहायनीद्रव्यकत्वात् न प्रतीच्छति,। तथा एकहायनी यं गुणं अश्रुतमानयति, तमपि क्रय एव श्रुतारुणिमगुणत्वात् नेच्छति। यदि हि असौ अनियतद्रव्यगुणः स्यात्, ततो यत्किंचिदपि आनीयमानं सहेत। निरपेक्षद्रव्यगुणविशेषसंबन्धे नैव यथाचोदितः क्रय उभयविशिष्टः क्रियेत, अश्रुता च प्रधानस्य सतः आवृत्तिरापद्येत। विकल्पे वा पुनः विशिष्टविधिर्बाध्येत। प्रधानत्वादेव च गुणद्रव्याभ्यां द्रव्यान्तरगुणान्तराक्षेपं क्रयणं निरुणद्धि। कांस्यभोजिन्यायेन वा अमुख्योऽपि अनियमं वारयेत्, किमुत मुख्य एव सन्। न वा अश्रुतकल्पनया विना अनुपपत्तिः, श्रुतयोरेव परस्परसंबन्धेन परिपूर्णत्वात्। एवं च स्ववाक्यगतमपि सामानाधिकरण्यं समर्थितं भविष्यति। न चात्र श्रुतिविरोधः, यथा वक्ष्यति 'न श्रुतिर्ब्रूते वाक्यार्थो न' इति। तथाहि। '**क्रयापेक्षित एवायं संबन्धः क्रियते पुनः। न चात्रानुगुणा वृत्तिर्दुर्बलाऽपि विरुध्यते**॥' क्रय एव हि द्रव्यं गृह्णन् एवमपेक्षते 'को गुण एतत् परिच्छेत्स्यति' इति, गुणमपि गृह्णन् अपेक्षते, 'किं द्रव्यं एतस्य आश्रयो भविष्यति' इति। तेनैव तयोः क्रयवशेन अन्योन्यानुगुण्यं प्रतिपद्यमानयोरपि न परस्पराङ्गाङ्गित्वं भवति। **यस्तु** मन्यते परिच्छेदकत्वात् गुणस्य द्रव्याङ्गत्वं प्रतीयते इति, **स** वक्तव्यो गुणस्यापि क्रयमन्यथा साधयितुमशक्नुवतः द्रव्यं आश्रयत्वं प्रतिपद्यमानं अङ्गमिति। तस्मात् क्रयाङ्गभूतयोरेव नान्तरीयकः परस्परोपकारो भवन् अङ्गत्वमापादयति इति द्रष्टव्यम्। **यस्तु** प्रकरणे निवेशं मन्यते, **तस्य** केन गुणो विधीयते इति वक्तव्यम्। क्रयविधिना तावत् सह नैव संबन्ध इष्टः। प्रयोगवचनस्तु अक्रियात्मकं दूरादुपेक्षते। न च अरुणपदस्य एवंविधिशक्तिरस्ति। यद्यपि कारकत्वेन द्रव्याणि प्रतीयन्ते, तथापि तत्पदान्यविधायकान्येव। येऽपि तत्संबन्धिक्रियाविषया विधयः, तेऽपि पर्यवसिताः संप्रति प्रतीयमाना अपि न विधातुं समर्थाः। न चैषां द्रव्यविशेषणेषु व्यापारः। तस्मान्न कथं चित् प्रकरणे निविशते 'एकार्थास्तु विकल्पेरन्' (१२।३।४।१०) इत्यविशेषप्रतीतेः।

भा— (पृ. ६९४) **यदि** एककार्यता, किमिति विकल्पो न भवति, यदभिधीयते नियम्येयातामिति। **नैतदेवम्**। 'एकार्थास्तु विकल्पेरन्' (१२।३।४।१०) इति विकल्पधर्माणौ प्राप्नुतः इति अयुक्तोऽयं पर्यनुयोगः। कथं? पर्यनुयोगो नाम स भवति, यः स्वपक्षं साधयति, प्रतिपक्षस्य च प्रतीपमाचरति। न च विकल्पः अस्मत्पक्षस्य प्रतीपमाचरति। 'क्रयेण अरुणिमसंबन्धः' इत्येष नः पक्षः। न च विकल्पो नानाकार्यत्वात्। **ननु** इदानीमेवोक्तं एकं कार्यमिति। तच्चापि विरुद्धं, एवं हि पूर्वमभिहितं, अमूर्तत्वात् गुणो न क्रियया संबध्यते इति। इदानीं विपरीतमभिधीयते, उभावपि द्रव्यगुणौ एकार्थौ क्रयमभिनिर्वर्तयतः इति। **उच्यते**। नैतत्

विरुद्धम् । न च विकल्पः, एकं कार्यं, सामर्थ्यभेदस्तु । साक्षाद्धि द्रव्यं क्रियां प्रति उपकरोति, गुणस्तु विशिनष्टि साधनम् । **यदि** एवं, न तर्हि गुणः क्रियामभिनिर्वर्तयति, साधनस्यासौ विशेषक इति । **नैतदेवम्** । गुणस्य क्रियामभिनिर्वर्तयत एतदेव सामर्थ्यं, यत् साधनं विशिंष्यात्! आकाङ्क्षति च क्रिया साधनविशेषणम् । चिह्नभूतो हि गुणः साधनं लक्षयति । असति चिह्ने न लक्ष्येत कतमत् साधनं क्रियायाः इति । ततः क्रियां नाध्यवस्येम कर्तुं, इति भवति क्रियासाधनं गुणः । न चैवं सति विकल्पो भवति, यथा अधिकरणस्य कर्त्रादीनां च । अधिकरणं हि कर्त्रादीनि धारयति । तानि अधार्यमाणानि न शक्नुवन्ति क्रियामभिनिर्वर्तयितुम् । तथा कर्ता करणादीनि समादत्ते, तानि असमाहितानि न शक्नुवन्ति स्वंस्वमर्थमभिनिर्वर्तयितुम् । यस्मिंस्तु साधनोपकारे कार्ये तस्मिन्नेवोपकारे अन्यत् साधनं विधीयते, तत्र विकल्पः । यथा 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति । उभयेऽपि तण्डुलनिर्वृत्त्यर्थाः ।

**वा—** ( पृ. ६९४ ) अवान्तरव्यापारानेकार्थत्वमगृहीत्वा वदति 'यद्येककार्यता किमिति विकल्पो न भवतीति' । सिद्धान्तवादी तु आह, नैतेन अस्मत्प्रतिपक्षः कृत्स्नप्रकरणनिवेशः सिध्यति, क्रयसंबन्धो वा बाध्यते । तस्मात् सिद्धान्तान्तरदूषणत्वात् निग्रहस्थानमिति । 'न च विकल्पः नानाकार्यत्वात्' इति अवान्तरव्यापाराभिप्रायेण । परस्तु प्रधानकार्यनानात्वमेवोक्तं इति मत्वा आह 'ननु इदानीमेवोक्तं' इति । 'तच्चापि विरुद्धं' यत् पूर्वमुक्तं अमूर्तत्वात् निष्क्रियो गुण इति । **ननु** पूर्वपक्षवादिना तदुक्तं, इदानीं सिद्धान्तवादी न सक्रियत्वं ब्रवीति इति युक्तो विरोधोपन्यासः । **उच्यते** '**संदेहः क्रियते सर्वः साधारणपदे स्थितः । तत्र चामूर्ततोक्तेति सिद्धान्तेऽपि विरुध्यते ॥**' अथवा पूर्वपक्षवादिना तत् हेतुत्वेन उक्तम् । हेतुश्च उभयसिद्धो भवति । यदि चायं असिद्धो भवेत् ततः तदानीमेव उद्भाव्येत । यतस्तु नोद्भावितः, ततोऽभ्युपगतः । तथा सति चेदानीं सिद्धवत् अर्थैकत्वाभिधानात् सक्रियत्वं अभिदधतो विप्रतिषिद्धमापद्यते । 'नैतद्विरुद्धं, नच विकल्पः' इति शक्तिभेदनिमित्तावान्तरव्यापारान्यत्वात् । तद्दर्शयति, द्रव्यं साक्षात् साधनं, गुणस्तत्परिच्छेदार्थ इति । परस्तु एतावतैव 'इतरत् तदर्थं' इतिवत् गुणस्य द्रव्यार्थत्वं मन्यमान आह 'यद्येवं न तर्हि' ( गुणः क्रियामभिनिर्वर्तयति इति । ) 'नैतदेवं' इति द्वारमात्रत्वं तावत् द्रव्यस्य दर्शयति ।

**भा—** ( पृ. ६९६ ) **एवं** तर्हि तदेवेदं संजातं, भवति एकहायनीविधानं, तद्विशेषणं च अरुणो गुणः । तत्र स एव दोषो वाक्यभेदः प्रसज्येत इति । **न ब्रूमः** अरुणाशब्द एकहायनीशब्देन संबध्यते इति । किं तर्हि ? क्रीणातिनैव संबध्यते । एवं हि श्रूयते अरुणगुणेन क्रयं अभिनिर्वर्तयेत् इति । यथा च तेन निर्वर्त्यते तथा यतितव्यं भवति । न च अविशिंषन् साधनं गुणः क्रियां अभिनिर्वर्तयति, इति अर्थात् साधनविशेषणतां प्रतिपद्यते । यथा 'स्थाल्यां पचेत्' इति क्रियासाधनत्वे निर्दिष्टे अर्थात् संवपने धारणे च स्थालीं व्यापारयति, तद्वदिहापि द्रष्टव्यम् । तस्मान्नास्ति वाक्यभेदप्रसङ्ग इति ।

**वा—** ( पृ. ६९५ ) परिहृते दोषद्वये वस्तुकृतं एकहायनीद्वारत्वं अपश्यन् वाक्येनैव द्वारद्वारिसंबन्धकरणात् वैरूप्यापत्तिं चोदयति 'एवं तर्हि' इति । 'न ब्रूमः अरुणाशब्दः' इति सामर्थ्यकारितं एकहायनीसंबन्धं दर्शयति ।

**भा—** ( पृ. ६९६ ) **ननु** एवमपि वाक्यं भिद्येत । कथं ? प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा इति । यथा 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तां' इति प्रत्येकं भुजिः समाप्यते । यथा च 'यस्य पिता पितामहः सोमं न पिबेत्' इति । एवमिहापि 'अरुणया क्रीणाति, एकहायन्या क्रीणाति' इति । **नैतदस्मत्पक्षस्य** बाधकम् । एवमपि क्रये एव अरुणिमा निवेक्ष्यति, न सर्वस्मिन् प्रकरणे इति ।

**वा—** 'ननु एवमपि वाक्यं भिद्येत इति नियमनिराकरणार्थमाह । सत्यपि क्रयसंबन्धे प्रतिकारकं क्रियान्यत्वात् अर्थभेदनिमित्तो वाक्यभेदः अस्त्येवेति । तथा च लोकवेदयोर्दृष्टं इति उदाहरणद्वयम् । प्रत्येकं देवदत्तादिषु भोजनं, पितुः पितामहस्य वा असोमपत्वं ज्ञात्यपशो-

र्निमित्तत्वेन उच्यमानं साहित्यविवक्षया सिद्धम्। तत्र न पिबेत् इति संबन्धः। 'नैतदसत्पक्षस्य बाधकं' इति विकल्पपक्षवदेव असंबन्धोपन्यासः।

भा— (पृ. ६९६) **सत्यमेष** दोषो न भवति किंतु अनरुणयाऽपि एकहायन्या क्रयः प्राप्नोति, अरुणया च अनेकहायन्या। तत्र यदुक्तं द्रव्यगुणयोर्नियम इति सा प्रतिज्ञा हीयते। **न तर्हि** ब्रूमो वाक्यभेद इति। कथं? क्रयस्य हि द्रव्यारुणिमानौ उपदिश्येते न क्रयस्तयोः। न च प्रधानं प्रतिगुणं भिद्यते, प्रतिप्रधानं हि गुणो भिद्यते इति। अस्ति चायं दृष्टान्तः समुदाये वाक्यपरिसमाप्तिरिति, यथा 'गर्गाः शतं दण्ड्यन्तां' इति। तथा 'अभिषुत्य हुत्वा भक्षयन्ति' इति। तस्मात् उभयविशेषणविशिष्टः क्रयो विधीयते। **कथं** पुनस्तस्मिंश्च इतरस्मिंश्च दृष्टान्ते सति एकान्तेन अवधार्यते समुदाये एव वाक्यसमाप्तिः, न प्रत्यवयवमिति। **अत्र ब्रूमः।** इह द्रव्यारुणिमानौ उभावपि क्रियासंबद्धौ उपलभ्येते परस्परेण असंबद्धौ। क्रयोऽपि द्रव्यारुणिमभ्यां विशिष्ट उपलभ्यते, नान्यतरेण। तत्र यदि द्रव्यपरं अरुणिमपरं च भवति वचनमिदं, ततः प्रत्यवयवं असंशयं क्रयसंबन्धः। अथ क्रयविधित्सया अभिधीयते, ततो यथैवायं एकहायनीविशिष्टः, एवं अरुणिमविशिष्टः, इति नियमतः उभयसंबन्धोऽभ्युपगमनीयः। न चात्र द्रव्यारुणिमानौ ईप्सितौ। इप्सितस्तु क्रयः। तेन हि ज्योतिष्टोमद्रव्यं सोमः परिप्राप्यते। द्रव्यारुणिमानौ क्रयार्थौ सन्तौ ईप्सितौ स्यातां नान्यथा। तस्मात् क्रयो विधीयते। स च नान्यतरविशिष्टः प्रतीयते, इति समुदाये वाक्यपरिसमाप्तिः इह निश्चीयते। यदा च एवं, तदा नैकहायनीं मुक्त्वा अन्यत् द्रव्यं क्रयसाधनमस्ति, न च अरुणादन्यः साधनस्य विशेषको गुणः, इति नियमः सिद्धो भवति। (पूर्वपक्षी) **अत्र वदामः।** यदि क्रयस्य साधने गुणः अभिसंबन्धमुपैति, तदा वाक्ये भिन्नेऽपि क्रयसाधनत्वात् अरुणिमा अन्यस्मिन् द्रव्ये न निवेक्ष्यते। किमर्थं एकवाक्यता प्रयत्नेन साध्यते इति। **तदेतदभिधीयते।** भिन्ने हि वाक्ये एकहायनीसाधनकः क्रयः अवबुद्धो भवति, अरुणासाधनमपि क्रयान्तरं, न तस्मिन्नेव एकहायनीसाधने क्रये अरुणिमा विहितो भवति। तत्र यत् क्रयान्तरं अरुणगुणविशिष्टं, तत्र अर्थात् प्राप्तं अन्यदपि साधनं भवति। तदपि विशिंषन् अरुणो गुणस्तेन संबध्येत। एकवाक्यत्वे तु तत् परिहृतं भवति। तस्मात् साधु अभिधीयते 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' इति।

वा— (पृ. ६९६) परः पुनराह 'सत्यमेष न दोषः' इति। क्रियाप्राधान्ये तु तद्वशीकृतविशेषणसमुदाये वाक्यपरिसमाप्तिः। गर्गशतदण्डनहोमाभिषवभक्षवत् इति परिहारः। **ननु** दण्डस्य दण्ड्यसंस्कारत्वात् भोजनादिवत् प्रतिगर्गं आवृत्तिः प्राप्नोति। **नैष दोषः।** **'शारीरो निग्रहो यत्र, तत्र प्रत्येकभिन्नता। हिरण्यादानदण्डस्तु समुदाये समाप्यते॥ अपराधे निमित्ते हि शतसंख्याविशेषिता। तदनुष्ठात्रपादाना राज्ञां वृत्तिर्विधीयते॥'** यथैव अध्वर्य्वादीनां दक्षिणा परिक्रयार्था कर्मसंयोगात्, एवं राज्ञामपि अर्थदण्डः नैमित्तिकी परिपालनवृत्तिः। तां तां च प्रति तत्रतत्रापराधे निमित्ते शतादीनि उपादीयमानत्वात् विवक्षितैकसंख्यानि भवन्ति। यश्चासौ अपराधो गर्गकृतः, स एककर्तृकः अनेककर्तृको वा राज्ञः शतादाननिमित्तं भवति। तत्काले च अपराधिनां अपादानत्वेन अवस्थानात् समस्तगर्गापादानकं राज्ञा शतं ग्रहीतव्यं इत्यवगते सति, प्रत्येकं ग्रहणे सति एकेन शतेन अपराधनिष्क्रये कृते शेषं अश्रुतं ब्रह्मस्वहरणं स्यात्, संख्याऽन्तरं च वृद्धौ आपद्येत। तस्मात् समुदाये वाक्यपरिसमाप्तिः। **परः पुनः** अभिहितेऽपि हेतुविशेषे दृष्टान्तद्वयात् संदेहमुपन्यस्यति। क्रयस्य यागसाधनसोमप्राप्त्यर्थत्वेन भूतभव्यसमुच्चारणन्यायेन विधायकलाघवेन च प्राधान्यात् द्रव्यगुणयोश्च पूर्वहेतुविपर्ययेण विपरीतत्वात् इतरः एकवाक्यत्वप्रतिपादनफलं प्राप्नोति। तत्र **अपरः** आह; सर्वथा तावत् अश्रुतकल्पनाभयात् भिन्नवाक्यचोदितयोरपि नियमः सिध्यति इति नार्थं एकवाक्यत्वेनेति। **सिद्धान्तवादी** वदति, वाक्यभेदे सति उभयविशेषणविशिष्टक्रयप्रतीत्यभावात् यथाश्रुतप्रत्येकसंबद्धक्रयानुष्ठाने सति गुणेनापि यत्किंचित् द्रव्यं गृह्येत, द्रव्येणापि यः कश्चित्

गुणः। नहि तदानीं अन्योन्यासंनिधेः अर्थाक्षेपप्रतिबन्धशक्तिरस्ति, न च एका क्रिया गुणद्रव्यवशीकारसमर्था स्यात्। अरुणगुणक्रयो हि अनियतद्रव्यकत्वात् किमिति गुणोपस्थापितं यत्किंचित् द्रव्यं न गृह्णीयात्, एकहायनीक्रयो वा यं कं चित् गुणम्। अथापि वाक्यान्तरशिष्टानि क्रयद्रव्याण्येव गुण आस्कन्दति, तथापि तेषु वासःप्रभृतिषु दशस्वपि प्राप्नोति। तस्मात् विशिष्टैकक्रयसिद्ध्यर्थं वक्तव्यमेकवाक्यत्वम्। अतश्च नियम इति सिद्धम्।

शा— 'अमूर्तत्वाद् गुणो नैव क्रियां साधयितुं क्षमः। तस्मात् क्रीणातिना नास्य संभवत्येकवाक्यता ॥' इति प्राप्ते ब्रूमः 'तृतीयया गुणस्यैव करणत्वं क्रयं प्रति। विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यते ॥'

वि— 'क्रीणात्यरुणयेत्येतत् संकीर्णं वा क्रयैकभाक्। , क्रयेणानन्वयात् कीर्णः सर्वद्रव्येषु रक्तिमा ॥, द्रव्यद्वारा क्रये योगात् तद्वारे चान्वयः पुनः। साक्षात् क्रये गुणस्यार्थाद् द्रव्ये संनिहिते त्वसौ ॥'

भाट्ट— ज्योतिष्टोमे 'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति श्रुतम्। तत्र अरुणशब्दः अरुणगुणवचनः अरुणत्वजातिवचनो वा, न तु विशिष्टव्यक्तिवचनः। तृतीयया च शक्यस्यैव करणत्वमुच्यते, न तु तदर्थं द्रव्यलक्षणा। टाबाद्यर्थोऽपि तत्रैव सामानाधिकरण्येन अन्वीयते, न तु तदर्थमपि व्यक्तिलक्षणा, अव्युत्पत्त्यापत्तेः। यथा च एवं सति 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इत्याद्यनुशासनोपपत्तिः तथा कौस्तुभे द्रष्टव्यम्। एकहायन्यादिपदानां तु बहुव्रीहित्वात् अवयवार्थविशिष्टान्यपदार्थरूपे द्रव्ये एव शक्तिः इति प्राञ्चः। अन्यपदार्थे पदद्वयस्य लक्षणा इति तु बहवः। न च द्रव्यस्य एकेनैव पदेन विधिसंभवे इतरेण विधानानुपपत्तिः वैयर्थ्यं च इति वाच्यम्। उभयोर्युगपत्प्रवृत्तेर्विहितविधानाभावात् गुणान्तरपरत्वेन सार्थक्याच्च। शक्यते तु अत्रापि अरुणान्यायेन लक्षणाऽपि नेति वक्तुम्। समासानुशासनस्य मतुबाद्यनुशासनवत् उपपत्तेः। द्रव्ये पार्ष्ठिकगुणसंबन्धोपपादनं च प्रमाणान्तरप्रमितद्रव्यं आदाय उपपादनीयं इति न कश्चित् विरोधः। तदिह आरुण्यस्य योग्यत्वेऽपि कारकत्वेन अव्युत्पन्नस्य वाक्यीयद्रव्यान्वयायोगात्, व्युत्पन्नत्वेऽपि वा अमूर्तत्वेन अयोग्यस्य वाक्यीयक्रियाऽन्वयायोगात् ततो विच्छिन्नस्य प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेन वाक्येन 'अरुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेत्' इत्याकारकेण प्राकरणिकसर्वद्रव्याङ्गत्वम्। इति प्राप्ते, न योग्यताज्ञानं शाब्दबोधहेतुः, अपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम्। अतश्च प्रतिबन्धकाभावसत्त्वे आरुण्यस्यापि क्रियाऽन्वयबोधोपपत्तेः, पश्चाच्च योग्यतागवेषणायां आरुण्यस्य पार्ष्ठिकद्रव्यसंबन्धबोधोपपत्तेः, न ततो विच्छेदाशङ्का। अत एव प्रथमतः सोमक्रयारुण्यादिसकलकारकविशिष्टभावनाविधानोत्तरं क्रयस्य सोमसंबन्धवेलायां आरुण्यादित्रिकस्य मत्वर्थलक्षणया क्रयसंबन्धावगतौ, पश्चात् विशेषणविधित्रयकल्पनया तेषां क्रयाङ्गत्वावगमे जाते, पश्चात् परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्ठिकः अरुणैकहायन्योः परस्परं विशेषणविशेष्यभावमात्रेण संबन्धो द्रव्यविशेषसंबन्धश्च इति द्रष्टव्यम्। अतश्च युक्तः क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य, न तु वासःप्रभृतिषु क्रयद्रव्यान्तरेषु। न च यवेष्विव सोमप्राप्तिसाधनक्रयद्रव्यत्वाविशेषात् प्राप्त्याशङ्का, तेषां क्रयान्तरद्रव्यत्वात्। भिन्ना हि गुणादत्र क्रयाः। न च विक्रेत्रानतिवशात् उत्पत्तिशिष्टद्रव्यावरोधेऽपि द्रव्यान्तरनिवेशसंभवः। एकद्रव्यानतस्यैव विक्रेतुः संपादनीयत्वात् अन्यथा दक्षिणानामपि प्रसङ्गबाधाद्यनापत्तेः। न च 'दशभिः क्रीणाति' इति वचनमेव निवेशतात्पर्यग्राहकं, तस्य क्रयसमुच्चयपरत्वेनापि उपपत्तौ गुणन्यायसिद्ध- (२।२।६) भेदापवादकत्वायोगात्। न च क्रयभेदेऽपि एकसोमप्राप्त्यर्थत्वाविशेषात् क्रयान्तरद्रव्येऽपि आरुण्यस्य निवेशाशङ्का, आरुण्यविशिष्टविजातीयक्रयविध्यन्यथाऽनुपपत्तिकल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वा आनतिप्रसक्तस्यैव कल्पनीयतया विजातीयक्रयजन्यानतिविशेषस्य विजातीयक्रयत्वस्यैव वा विवक्षितत्वेन अतिप्रसङ्गशङ्काऽनुपपत्तेः। यथा च एवं सति त्रिवत्से सर्वक्रयद्रव्यस्थानापन्ने

( आरुण्यस्य ) निवेशः ( साद्यस्के ) तथा कौस्तुभे द्रष्टव्यम् ।

**मण्डन**— ' आरुण्यं क्रयणस्याङ्गम् । ' ५

**शंकर**— ' आरुण्यं च व्यवस्थितम् । '

* **अरुणान्यायोऽपि** नास्ति, स्तोभानां उच्चैस्त्वादीनां च परस्परनिराकाङ्क्षत्वात् । **टुप्.** ९।२।१५।४७. * शक्यते तु अत्रापि ( एकहायन्यादिपदेषु ) **अरुणान्यायेन** लक्षणा नेति वक्तुं समानानुशासनस्य मतुबाद्यनुशासनवत् उपपत्तेः । **भाट्ट.** ३।१।६ पृ. १९०. * करणेतिकर्तव्यताविशिष्टापूर्वभावनाविधानेऽपि अरुणान्यायेन करणानुग्राहकत्वसिद्धेः, उद्दिश्य विधानानपेक्षणात् यदितिकर्तव्यताविशिष्टा यद्भावना विहिता , तद्भावनाकरणे एव तदितिकर्तव्यतानिवेशात् यज्यन्तरे अतिदेशः । **सोम.** ९।१।१. * ' चतुरो मुष्टीन् निर्वपति ' नानयोः अरुणान्यायेन विशेष्यनिघ्नत्वमपि । **भाट्ट.** १०।२।२७, द्रव्यवत् देवतायाः सत्यपि प्राथमिके भावनाऽन्वये अरुणान्यायेन उत्तरकालिकान्वयस्य यागमात्रे एव अङ्गीकारात् । १०।४।१४. * ' लोहितवसना ऋत्विजः प्रचरन्ति ' इत्यत्र वसनशब्देन उक्तायाः परिधानक्रियायाः लौहित्यगुणस्य च प्रचरन्ति इत्येकक्रियावशीकारात् अरुणान्यायेनैव समुच्चयः । **बाल.** पृ. १६७. * भावनायाः करणानुग्राहकत्वेनैव इतिकर्तव्यताऽऽकाङ्क्षाप्रतिपादनेन **अरुणान्यायवैषम्यं** परिहृतं भवति । **सोम.** ७।१।१.

* अग्निर्माणवकः इत्यत्र सत्यपि माणवकसामानाधिकरण्ये **अरुणाशब्दन्यायेन** सति सादृश्ये अभिधानात् असति चानभिधानात् अन्यत्र असादृश्यवति वृत्तिदर्शनात् असति चादर्शनात् अवश्यंभावि प्रथमप्रत्यायने सादृश्यमेव प्रथमं प्रत्याययितव्यम् । न चानवगतेऽग्नौ तत् प्रतीयते इति प्रथमतरं अग्नेरभिधानम् । **वा.** ३।२।१।१ पृ. ७४८.

* एकभावनान्वितयोः करणेतिकर्तव्यतयोः पश्चात् **अरुणैकहायनीन्यायेन** अर्थतोऽन्वयः । **सोम.** ७।१।१ पृ.५२५. *'चतुर्भिरभ्रिमादत्ते' । यद्यपि मन्त्राः प्राप्ताः सामर्थ्येन , तथापि चतुःसंख्यां आदाने विधास्यति । तत्र अरुणैकहायनीन्यायेन परस्परनियमे सति मन्त्रगतचतुःसंख्याविशिष्टं आदानं चोदितं समुच्चयादृते कर्तुं न शक्यते इति अर्थात् समुच्चयः फलम् । **वा.** १।२।४।३३. * ' तां चतुर्भिरादत्ते ' इति प्रत्यक्षश्रुत्या मन्त्रसंख्योभयविशिष्टादानविधानोत्तरं अरुणैकहायनीन्यायेन मन्त्रसंख्ययोः पार्ष्ठिकान्वयोपपत्तौ अर्थात् समुच्चयसिद्धेः । **कौ.** १।२।४।४३ पृ. ७७. * तादर्थ्यसंबन्धे भावनां प्रति निर्वृत्ते अरुणैकहायनीन्यायेन पश्चात्तनो विशेषणविशेष्यभावः पदेन प्रत्याय्यते । **वा.** ३।१।७।१३ पृ. ७०४. * तृतीयासमभिव्याहृतस्य प्रोक्षणस्य न व्रीहिद्रव्येणान्वयः, किंतु क्रिययैव कारकत्वेनान्वयः । पश्चात्तु अरुणैकहायनीन्यायेन भवेत् व्रीहिद्रव्यान्वयः तत्क्रियासाधनरूप एव । **सोम.** ९।१।५. * न च अरुणैकहायनीन्यायेन मन्त्रसामानाधिकरण्योपपत्तिः । तत्र एकहायन्या अप्राप्तत्वेन विधेयत्वात्, तत्परिच्छेदकापेक्षायां युक्तः पार्ष्ठिकः आरुण्येन संबन्धः । मन्त्राणां तु लिङ्गादेव विकल्पेन एकसंख्यानां प्राप्तत्वेन परिच्छेदकानपेक्षत्वात् न ग्रहैकत्ववत् युक्तः चतुःसंख्यायाः संबन्धः । **कौ.** १।२।४।३३ पृ. ५९. * ननु अपूर्वभावनासंबद्धाया एव इतिकर्तव्यतायाः अरुणैकहायनीन्यायेन पश्चात् करणान्वये तादर्थ्यमुपपद्यते । **सोम.** ७।१।१. * ननु ग्रहवत् एकत्वमपि संमार्गक्रियायामेव साक्षादन्वेतु । न च अयोग्यत्वादसंभवः, अरुणैकहायनीन्यायेन परिच्छेदकतया तदुपपत्तेः इति चेन्न । आरुण्यैकहायन्योः प्रातिस्विकतृतीयाभ्यां क्रयकरणत्वावगमे सति तन्निर्वाहाय पार्ष्ठिकान्वयकल्पनात् । **कु.** ३।१।७।१४. * ' पशुना यजेत ' इत्यत्र तृतीयैकवचनार्थस्य एकत्वस्य समानप्रत्ययोपात्तेन करणकारकेणान्वयः ' एकत्वसंख्याकं करणकारकं ' इति । एवं शाब्दान्वये स्थिते संख्यायाः साक्षात् क्रियानिर्वर्तकत्वायोगात् द्वारान्वयापेक्षायां संख्यायाः अवच्छेदसामर्थ्यरूपात् लिङ्गात् पशुद्रव्यावच्छेदकतया अरुणैकहायनीन्यायेन पार्ष्ठिकान्वयः इति मीमांसका वदन्ति । **परिमलः** ३।३।५८ ब्र. सू. * प्रोक्षणविशिष्टस्य व्रीहित्वविशिष्टस्य च विधेयक्रियाविशेषणत्वेन विधौ कृते पश्चात् अरुणैकहायनीन्यायेन परस्परान्वयात् तत्स्थानापन्नद्रव्यान्तरे एव प्रोक्षणलाभात्

सिध्यति ऊहः । **भाट्ट.** ९।१।५, * 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' अत्र रथो दर्भनिवर्तकः, घोषश्च मन्त्रनिवर्तकः। एवं च घोषो नावश्यं रथस्यैवेति । **न च** द्वंद्वेन तयोः परस्परसाहित्यावगतेः अरुणैकहायनीन्यायेन परस्परनियमात् कथं न घोषो रथस्यैवेति **वाच्यम्**। यादृशोपपदद्वयसमभिव्याहारे आगोपालाङ्गनं तदर्थयोः यादृशोऽन्वयोऽवगम्यते तादृशस्यैव तदर्थयोः अन्यान्वयव्युत्पत्तौ पार्ष्ठिकबोधविषयत्वम्। अत एव अरुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभाव एव पार्ष्ठिकबोधविषयः । पूर्वपक्षे । १०।४।२, * वसानौ इत्यत्र अन्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं च अभिधेयं प्रतीयते। तत्र च अरुणैकहायनीन्यायेन परस्परनियमात् पुंद्वयसिद्धिः। (पूर्वपक्षे) **रत्न.** ६।१।५।२२ वर्णकं २. * समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि संनिहिततरेण प्रधानभूतेन कारकेण अवरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गं अवगम्यमानं वाक्यसमर्पितेन क्रियाविशेषेण च संबध्य पश्चात् अरुणैकहायनीन्यायेन पशुना विशेषणत्वेन अर्थात् संबध्यते । **शा.** ४।१।५. * ब्रह्मविशेषणानामपि गुणानां **अरुणैकहायनीन्यायात्** उपासनाभावनारूपकार्यान्वयोऽस्ति। **परिमलः.** ३।३।५८ ब्रसू. * विशिष्टादानविध्यभावात् **अरुणैकहायनीन्यायस्य** अनुपपत्तेः। **सु.** पृ. १०४. * यस्यां तु भावनायां धात्वर्थाः करणं भवन्ति, तस्यां ते वस्त्वन्तरनिरपेक्षाः पश्चात्तनं **अरुणैकहायनीन्यायलभ्यं** इतिकर्तव्यतासंबन्धं लभन्ते। **वा.** ३।६।१६।४३ पृ.१०६९.

* **अरुणाशब्दः** क्रीणातिनैव संबध्यते । 'न चाविशिंषन् साधनं गुणः क्रियामभिनिर्वर्तयति' इत्यर्थात् साधनविशेषणतां प्रतिपद्यते। **भा.** ३।१।६।१२ पृ. ६९६. * अरुणाशब्दः द्रव्यवचनः। तस्य च कारकत्वाभिधानोपपत्तेः एकवाक्यत्वसिद्धिः (क्रीणातिना), अतो न सर्वधर्मत्वमिति। **वा.** ३।१।६।१२ पृ. ६८२. * **अरुणाशब्दस्य** एकहायनीशब्देन नान्वयः इत्यस्य समर्थनम्। 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यम्। **के.** * अरुणाशब्दस्य क्रीणातिना नान्वयः इति समर्थनं पूर्वपक्षे 'अरुणान्यायः' इत्यत्र भाष्यादौ द्रष्टव्यम्। * अरुणाशब्दस्य गुणवचनत्वद्रव्यवचनत्वविचारः 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः। **के.** * अरुणाशब्दस्य शक्तितुल्यनिरूढलक्षणया गुणविशिष्टपरत्वं स्वीकृत्य क्रयानुवादेन विशिष्टकारकस्य विधानम् ('अरुणया क्रीणाति' इत्यत्र)। **कु.** ३।१।६।१२ पृ. २५८.

* **अरुणैकहायन्योर्द्वयोरपि** तृतीयानिर्देशात् परस्परमनपेक्ष्य स्वसाध्यक्रियामात्रापेक्षिणोः वाक्येन तद्विशेषक्रयसंबन्धो विज्ञायते। **वा.** ३।१।६।१२ पृ. ६९१. * अरुणैकहायन्योः यथा नियमः अरुणा नान्या, किंतु एकहायन्येव, एकहायनी च नान्या, किंतु अरुणैव इति इतरेतरनियमो यथा, तथा 'वसानौ' इत्यत्र द्वित्वपुंस्त्वयोरितरेतरनियमः इति पूर्वपक्षे। **रत्न.** ६।१।५.

* **अरुणैकहायनीवच्च** (पौष्णपेषणे) परस्परनियमात् असर्वविषयत्वम् (नेमपिष्टत्वस्य)। **वा.** ३।३।१५।४६. * अरुणैकहायनीवत्। ननु रेवतीवारवन्तीयान्वयविधानेऽपि उभयोः क्रत्वाशब्दोक्तैकभावनाविशेषणत्वेन अरुणैकहायनीवत् अन्योन्यनियमसिद्धेः समभिव्याहारलभ्यान्वयप्रतीतिरविरुद्धा इत्याशङ्का । **सु.** पृ. ८६४.

* **अरुणैकहायन्यादौ** सामानाधिकरण्यनिबन्धना विशेषणविशेष्यता। **सु.** पृ. ४०९.

* **अरुणिमा** क्रये एव निवेक्ष्यति न सर्वस्मिन् प्रकरणे। **भा.** ३।१।६।१२ पृ. ६९६.

* **अरुणिमसंबन्धः** क्रयेण इत्येष नः पक्षः। **भा.** ३।१।६।१२ पृ. ६९४.

* **अरुन्धती** वसिष्ठस्य पत्नी। **वा.** ३।४।१।९.

**अरुन्धतीक्षणन्यायः** । स्थूलदर्शनस्य अरुन्धतीक्षणन्यायेन सूक्ष्मदर्शनोपायत्वात्। **सिद्धान्तदर्शने** निरञ्जनभाष्यं २।२।८.

**अरुन्धतीनिदर्शनन्यायः**। अरुन्धतीनिदर्शने बह्वीष्वपि तारासु अमुख्यासु अरुन्धतीषु दर्शितासु या अन्त्या प्रदर्श्यते सा मुख्यैवारुन्धती भवति, एवमिहापि आनन्दमयस्य सर्वान्तरत्वात् मुख्यमात्मत्वम्। **शांभा.** १।१।१२ ब्रसू.

* 'अर्कं गृह्णाति' इति विषुवति अहनि अर्कः नाम ग्रहः श्रुतः। तस्य प्राकृतैर्ग्रहैः समुच्चयः, न तु प्राकृतानां बाधः । संज्ञया तु ग्रहणान्तरत्वम् । भाट्ट. १०।४।३.

'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥' इति न्यायः। अक्के अक्के अर्के अङ्क्ते इति पाठचतुष्टयम्। तत्र अक्क अक्क च गृहकोणः। अर्कः लघुवृक्षविशेषः (रुई) । अङ्क्तं समीपम् । न्यायोऽयं प्रसिद्धार्थकः । संग्रहः. (अधिकोऽर्थः मी. को. ६ पृष्ठे द्रष्टव्यः) । * केवलाच्चेत् ज्ञानात् पुरुषार्थसिद्धिः स्यात् किमर्थमनेकायाससमन्वितानि कर्माणि ते कुर्युः 'अर्के चेत्०' इति न्यायात्। शांभा. ३।४।३ व्रसू. * तद्यथा पथिजाते अर्के मधु उत्सृज्य तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुः तादृशं हि तत्। अपि चाहुः- 'अर्के चेत्० माचरेत्' इति । भा. १।२।१।४. * यदि हि अल्पान्महतश्च कर्मणः समं फलं जायेत, ततः अर्के चेन्मधु विन्देत इत्यनेनैव न्यायेन अल्पेन सिद्धे महति न कश्चित् प्रवर्तेत । तत्र विधिशक्तिबाधः स्यात् । वा. १।२।१।१७.

* अर्कग्रीवं नाम साम अनृक्कम्। बाल. पृ. ७२.

* अर्जुनस्य क्षत्रियत्वात् पैष्टीपानं विरुद्धमेव । मध्वासवपानं तु अविरुद्धम् । सु. पृ. ११५. * अर्जुनस्य। 'वासुदेवार्जुनयोः' इत्यत्र द्रष्टव्यम्। वा. पृ. २०४-२०९, सु. पृ. १८६-१९४.

अर्थः (प्रयोजनम्)— उपादेयस्यानेकस्यापि प्रधानेन संबन्धोऽवकल्प्यते व्यवहितेनापि। व्यवधानादर्थो बलीयानिति भा. ६।४।६।२३ पृ. १४४५, * अर्थः (सुखहेतुः) कोऽर्थः ? यो निःश्रेयसाय ज्योतिष्टोमादिः। १।१।२।२ पृ. १८. * अर्थः क्रमबोधकं प्रमाणम् । मणि. पृ. १३. अर्थः (विषयः) ज्ञानात् भिन्नः। बौद्ध आह- 'परिव्राट्कामुकशुनां कुणपादिमतिस्तथा ।' एकस्यामेव प्रमदातनौ परिव्राजकादीनां कुणपं, कामिनी, भक्षः इति व्यवस्थितोपजनं विकल्पत्रयं न स्यात् बाह्यार्थो यदि एकाकारः, तथैव सर्वैः प्रत्येतव्यः। अथ न्याकारः, तत्र त्रयाणामपि विकल्पत्रयं स्यात्। तदवश्यं आत्मीयवासनानिर्मिता एवैषा विकल्पव्यवस्था इति । श्लोवा. शून्यवादे ५९। अत्रोच्यते। 'कुणपादिमतौ चैत्रं सार्वरूप्ये व्यवस्थिते। वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥ २१५ ॥ स्वप्रत्ययानुकारो हि बह्वाकारेषु वस्तुषु। निर्धारणे भवेद्धेतुर्नापूर्वाकारकल्पने ॥ २१६ ॥' कुणपादिरूपाणि सर्वाण्येव प्रमदायां सन्ति, परिव्राजकादिस्तु स्ववासनानुसारेण किं चित् रूपं पश्यति, न सर्वे सर्वाणि। स्वहेतुप्रत्ययानुकारो हि वासना स्वकारणभूतं ज्ञानमनुकरोति । सा यथाविधेन ज्ञानेन जन्यते, तथाविधमेव ज्ञानं जनयतीत्यर्थः। तदसौ बाह्याकारे वस्तुनि पूर्वाभ्यस्ताकारनिर्धारणे कारणं भवति, न तु अपूर्वाकारं विकल्पयति । नहि अत्यन्तमन्मथाक्रान्तस्वान्तोऽपि घटं कामिनीं पश्यति, श्वा वा भक्ष्यमिति। श्लोवा. शून्यवादे. * अर्थः ज्ञानात् भिन्नः। यथा मिथ्यात्वं सति अर्थे न घटते, तथा अर्थाभावे ज्ञानोत्पत्तिरपि न घटते। तेन ज्ञानोत्पत्त्यर्थेन अर्थोऽपि अङ्गीकार्यः। ऋजु. पृ. ५५. * अर्थः (वाच्यः) यादृशः पदवेलायामवगतः, तादृश एवोत्तरेण पदेन संबध्यते। के. * अर्थः (मन्त्रार्थः) विद्यमानोऽपि प्रमादालस्यादिभिर्नोपलभ्यते। भा. १।२।४।४१ पृ. १५६. * अर्थः संव्यवहारप्रसिद्ध्यर्थमभिधीयते। सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते । वा. १।३।४।९ पृ. २१९. * अर्थः सामर्थ्यं पदान्तरसामानाधिकरण्यादियोग्यता। अस्य लोकवेदयोः अर्थज्ञानोपायत्वं प्रसिद्धम् । सु. पृ. १११. * 'अर्थः हि क्रमात् बलीयान् ।' 'यदस्य पूर्वं उपहूतः इति प्रतिवचनस्य समर्थं, तत् प्रतिवचनकार्ये भविष्यति'। भा. ३।५।१६।४२. * नहि अर्थो नाम किंचित् प्रमाणं, किं तर्हि शब्दशक्तिकल्पनाहेतुः। वा. ३।१।७।१४ पृ. ७२२. * यश्च अर्थात् अर्थो न स चोदनार्थः। भा. ११।३।६।१४. * स नाम अर्थोऽभिधीयते यत्र शब्दस्य वाचकशक्तिः कल्प्यते। वा. ३।४।४।१३ पृ. ९१३.

* **अर्थेन** च प्रतीतेन प्रयोजनं, न प्रत्यायकेन मन्त्रेण । **भा.** ३।२।१।१ पृ. ७५१.

**अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् । १०।२।३४।७५ ।।**

चातुर्मास्येषु महापितृयज्ञे 'पितृभ्यो बर्हिषद्भ्यो धानाः' इत्युक्तम् । तत्र धानासु अवहननं कर्तव्यं, परंतु आदौ सक्तुषु अवहननं पश्चात् भर्जनेन धानाकरणं इति विपर्यासः स्वीक्रियते इति सिद्धान्तः । तदुच्यते, अर्थेन प्रयोजनार्थेन धानाजननार्थमित्यर्थः । विपर्यासे आदौ अवहननं पश्चात् भर्जनं इति प्राकृतक्रमात् विपर्यासे स्वीकृतेऽपि विपर्ययस्य तादर्थ्यात् धानार्थत्वात् तत्त्वं एव धानात्वमेव स्यात् । मुख्यसिद्धिरेव स्यात् । तस्मात् विपर्यासः स्वीकर्तव्यः । **के.**

* **अर्थेन त्वपकृष्येत** ( २।१।५।१४ ) इति स्तुतशस्त्राधिकरणे लिङ्गक्रमयोर्विरोधो दर्शितः । इति । **वा.** ३।३।७।१४ पृ. ८३६. * अर्थेन पाठबाधः क्रमकोपाधिकरणे ( ५।४।१।१ ) एव 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्युदाहृत्य सिद्धान्तितः । **बाल.** पृ. १३७. * **अर्थैः** यत्र कार्यमासाद्यते तत्र शब्दः अर्थप्रत्यायनार्थो भवति । यत्र पुनः शब्द एव कार्यं, तत्र कार्यसंबन्धार्थं शब्द एव प्रत्याययितव्यः । **वि.** १०।४।१४. * **अर्थात्** कृतं चोदकेन न प्राप्यते । **भा.** १२।१।१।३.

**अर्थाच्च । ५।१।२।२ ॥**

यथा श्रुतेः क्रमः सिध्यति तथा अर्थात् प्रयोजनानुसारादपि क्रमः सिध्यति । 'अग्निहोत्रं जुहोति' इति पूर्वमाम्नातं, 'यवागूं पचति' इति पश्चात् । यवाग्वाः होमरूपप्रयोजनार्थत्वात् आदौ यवागूपाकः, पश्चात् तयैव यवाग्वा होमः इति अर्थात् क्रमः । चकारः श्रुतिप्रमाणेन अर्थप्रमाणस्य समुच्चयार्थः । **के.**

* **अर्थादाक्षिप्यमाणं** श्रौतेन निवर्त्यते, तथा परोक्षवृत्त्याऽपि । **वा.** २।२।१३।२९ पृ. ५६६. * अर्थाद् यः प्राप्तः, स यत्र प्रयोजनं तत्रैव क्रियते । **भा.** ३।१।४।८.

**अर्थाद्वा कल्पनैकदेशत्वात् । १।४।१४।२५ ॥**

'स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेनाऽवद्यति' इति श्रूयते । तत्र संदेहः किं सर्वस्य स्रुवेणाऽवदातव्यं द्रवस्य मांसस्य संहतस्य च, तथा स्वधितिना हस्तेन च सर्वेषां, अथ अर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेनेति । अत्र **प्रभाकरेण** संगतिलोभादित्थमधिकरणमुपवर्णितम् । अत्र स्रुवस्वधितिहस्तानामविशेषेण अवदानसाधनत्वं शास्त्रादवगम्यते । अवदेयानि च द्रवमांससंहतानि । न च तानि सर्वाण्यविशेषेण स्रुवादिभिरवदातुं शक्यन्ते, इति शब्दवस्तुविसंवादेन अनध्यवसायात् अप्रामाण्यमिति पूर्वः पक्षः । सिद्धान्तस्तु यथाभाष्यं सामर्थ्यानुसारेणैवेति । **तदनुपपन्नम्** । वक्ष्यमाणपूर्वपक्षन्यायेन अव्यवस्थयैव अध्यवसायोपपत्तेर्यत्किंचिदेतदिति यथावार्तिकमेवाधिकरणं प्रस्तुमहे । अर्थवादस्य संदेहनिर्णायकत्वं प्रतिपाद्येदानीं प्रसङ्गेन सामर्थ्यस्यापि संदिग्धनिर्णायकत्वं प्रतिपाद्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । अविशेषेण स्रुवादीनामवदानसाधनत्वं शब्दावगतम् । **न च** स्रुवादीनां मांसाद्यवदानसामर्थ्याभावात् तन्न संभवतीति **वाच्यम्** । शब्दबलेनैव अन्यार्थसहभावेनापि सामर्थ्यमापाद्य साधनत्वसंभवात् अव्यवस्थैव सर्वैः सर्वमवदातव्यमिति । एवं **प्राप्तेऽभिधीयते** । भवेदेवं यदि सामर्थ्यमत्र व्यवस्थाकारणं न भवेत् । सर्वत्र खलु विधिर्विधेयसामर्थ्यमपेक्ष्य प्रवर्तते । असमर्थस्य विधिशतेनापि विधातुमशक्यत्वात् । तद्यत्र प्राक्प्रसिद्धं सामर्थ्यं व्यवस्थाकारणं नास्ति, तत्र विधिबलेनैव प्रकारान्तरेणापि सामर्थ्यमापाद्य विनियोगः क्रियतैव ( सामर्थ्यं कल्पयित्वा साधनविनियोगः क्रियते—इति पाठान्तरं लिखिते दर्शितम् ) । यत्र पुनः पूर्वप्रसिद्धमेव सामर्थ्यमस्ति, तत्र तद्दर्शनैव व्यवस्थोपपत्तेः तदनुकूलयैव विध्येकदेशः कल्प्यते । तदुक्तं '**अथ यत्रेति संदिग्धे वाक्यशेषो न विद्यते । तत्र सामर्थ्यसिद्धेन विध्यंशेनैव निर्णयः**॥' इति । (वा. १।४।१४ पृ. ३५८) तस्मात् सामर्थ्यकल्पितैकदेशमेवंरूपमेव तद्वाक्यत्रयं स्रुवेणावद्यति द्रवाणां, स्वधितिनाऽवद्यति मांसानां, हस्तेनाऽवद्यति

संहतानाम् । तदुक्तम् '**यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः** ॥' ( वा. १।४।१४ पृ. ३६९ ) **प्रयोजनं**– पूर्वपक्षे सर्वैः सर्वमवदातव्यम् । सिद्धान्ते तु यथोक्तव्यवस्थयैवेति । **सूत्रं तु**– 'अर्थात्' सामर्थ्यात् व्यवस्थाकल्पना । सामर्थ्यस्यापि शब्दैकदेशकल्पनानिमित्तत्वेन श्रुतशब्दैकदेशत्वादिति । 'यो नाम कश्चिदिह संविदितं प्रमेयं ग्रन्थान्तरे लिखति वा वदति स्वयं वा । मत्कर्तृतामननुकीर्त्य स कीर्तिलोपान्निःसन्ततिर्जगति जन्मशतानि भूयात् ॥' इति विंशं सामर्थ्याधिकरणम् । इति बालवलभीभुजङ्गापरनाम्नो (०भुजङ्गोद्धरनाम्नो इति लिखिते पाठः) महोपाध्यायश्रीभवदेवस्य कृतौ तौतातितमततिलके नामधेयपादः समाप्तः ।

**अर्थाद्वा कल्पनैकदेशत्वात्** । १।४।१४।२५ ॥ 'स्वधितिना अवद्यति' 'हस्तेनावद्यति' 'स्रुवेणावद्यति' इति श्रूयते । तत्र अर्थात् सामर्थ्यात् कल्पना योजना कर्तव्या । शक्त्यनुसारेण कल्पना । द्रवद्रव्यावदाने स्रुवस्य शक्तिः, ओदनादेरवदाने हस्तस्य शक्तिः, मांसादेरवदाने स्वधितेः शक्तिः । तत्रतत्र शक्तिं दृष्ट्वा योजना कार्या । तस्य च सामर्थ्यस्य विधेरेकदेशत्वमेव ज्ञेयम् । 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति हि अत्र न्यायः । क्व चिद्वाक्यशेषात् निर्णयः, अर्थाद्वा क्व चिन्निर्णयः, इति वाशब्दसामर्थ्यम् । **के.**

* **अर्थात् वाक्यशेषाच्च** संदिग्धानामर्थानां अध्यवसानमुक्तम् । **के.**

**अर्थाद्वाऽधिकरणम्** । अर्थाधिकरणम् । व्यवस्थाऽधिकरणम् । सामर्थ्याधिकरणम् ॥

**अर्थाद्वा कल्पनैकदेशत्वात्** । १।४।१४।२५॥

**भाष्यं**— 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इति श्रूयते । तत्र संदेहः किं स्रुवेणावदातव्यं सर्वस्य द्रवस्य संहतस्य मांसस्य च तथा स्वधितिना, हस्तेन च, उत सर्वेषामर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेनेति । अविशेषाभिधानादव्यवस्थेति । **एवं प्राप्ते ब्रूमः** । अर्थाद्वा कल्पना, सामर्थ्यात् कल्पनेति । स्रुवेणावद्येत् यथा शक्नुयात् तथा, यस्य शक्नुयात् तस्य चेति । आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी । एवं चेत् यथाशक्ति व्यवस्था भवितुमर्हति । तथा, 'अञ्जलिना सक्तून् प्रदाव्ये जुहोति' इति । द्विहस्तसंयोगोऽञ्जलिः, स व्याकोशोऽर्थात् कर्तव्यः । तथा हि शक्यते होमो निर्वर्तयितुम् । तत् यथा, कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्ते इत्यर्थात् कल्प्यते कटे समासीनः कांस्यपात्र्यामोदनं निधाय भुङ्क्ते इति ।

**वा**— '**अथ यत्रेति संदिग्धे वाक्यशेषो न विद्यते । तत्र सामर्थ्यसिद्धेन विध्यंशेनैव निर्णयः** ॥' देवताप्रसादाभयप्रार्थनाऽऽदौ संहतहस्तसंयोगमात्रमञ्जलिः, 'नाञ्जलिना वारि पिबेत्' इत्यादौ व्याकोशः । सक्तुहोमचोदनायां शब्दात् संदेहे सत्यसति चाऽऽक्रोशस्य वाक्यशेषे अन्यथाऽनुपपत्तेरेव आकोशाश्रयणम् । **ननु** अनेनैव न्यायेन यथा शक्नुयादिति वाक्यशेषात् अन्धादीनामाज्यावेक्षणादिरहितः कर्माधिकारः स्यात् । **न** । असंदेहात्, संदिग्धनिर्णयार्थात् तु एवं कल्पना भवति । न चाधिकारे संदेहः, समस्तधर्मोपेतं यथा शक्नुयात्तथा कुर्यादिति वाक्यशेषात् । सन्ति च तादृशस्य कर्तारश्चक्षुष्मदादयः, इति न प्रयोगचोदनाऽन्यथाऽनुपपत्तिः । यत्र तु यावज्जीवचोदनाऽऽदौ एवं भविष्यति, तत्र शक्तिकृताङ्गत्यागेऽपि सति अवैगुण्यं प्रधानस्य चोदितमित्याश्रयिष्यामहे एव । तस्माद्यावदेव लब्धात्मको विधिः तावद्यत् कल्पते तद्वैदिकं, सिद्धे तु तत्कल्पनं पौरुषेयत्वादप्रमाणं सामर्थ्याधीनत्वाद्वाक्यशेषसिद्धेः । आह च 'यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् । तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः ॥'

'**इति कृतबहुमार्गं मन्त्रविध्यर्थवादैः स्मृतिपरिखमुदारं वेदशालोपगूढम् । अनभिभवसमर्थं धर्मदुर्गं प्रविश्य प्रविभजति समर्थामर्थचिन्तामिदानीम्** ॥'

**शा**—विधेरिदानीं प्रतिपादितप्रामाण्यस्य संदिग्धार्थनिर्णयेऽपि सामर्थ्यसनाथस्य प्रामाण्यं प्रतिपाद्यते । तस्मात् शक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति

'द्रवादिषु स्रुवादीनां व्याकोशस्य च सक्तुषु। अर्थापत्तिवशात् तस्माद् व्यवस्थैवेत्यवस्थितम् ॥' १९.

**सोम**—अर्थवादरूपवेदावयवस्य स्तावकत्वातिरेकेण प्रामाण्यप्रतिपादने तद्वदेव विधिरूपावयवस्यापि विधायकत्वातिरेकेण प्रकारान्तरेणापि प्रामाण्यमस्ति इति व्युत्पादनमत्र। **व्याकोश** इति—आ ईषदर्थे ईषत् कोशः ईषद्विकसितमुकुलसदृशः, न तु देवताप्रसादनाभयप्रार्थनाऽऽदाविव अत्यन्तं हस्तद्वयसंयोगः। पूर्ववैषम्येण प्रत्यवस्थानात् **संगतिः**। **सूत्रार्थस्तु**— सामर्थ्यात् विधेर्व्यवस्थितार्थत्वकल्पना स्यात् सामर्थ्यकल्पितशब्दस्य विधिवाक्यैकदेशत्वादिति। अत्र पूर्वसूत्रात् 'संदिग्धे' इतिपदमनुषञ्जनीयम्। तेन यत्र संदेहो नास्ति तत्र न सामर्थ्येन व्यवस्था कल्पनीया। तथा च दर्शपूर्णमासादिविधेः एकादशे वक्ष्यमाणन्यायेन सर्वाङ्गविशिष्टकर्मविषयतया निश्चितस्य सामर्थ्यानुसारेणान्धपङ्ग्वादिषु शक्यमात्राङ्गविषयतया संकोचकल्पना न प्रसज्यते इति न तिर्यगधिकरणविरोधः। १९

**वि**— 'स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी। आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवस्थिताः॥, व्यवस्थापकराहित्यात् स्रुवाद्या अव्यवस्थिताः।, व्यवस्थापकताशक्तेस्तद्वशेन व्यवस्थितिः॥' २०.

**भाट्ट**— 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' 'हस्तेनावद्यति' इत्यादौ विधेरवदेयद्रव्यविषये संदिग्धस्य सामर्थ्यान्निर्णयः। स्रुवेण द्रवद्रव्यमेव आज्यादि, स्वधितिना मांसादि, हस्तेन संहतं पुरोडाशादि। अतश्च सामर्थ्यसहकृतावद्यतिपदेनैव लक्षणया द्रवद्रव्याद्यवदानस्योद्देश्यत्वात् तदनुवादेन स्रुवादिविधौ न किंचिद्बाधकम्। एवं 'अञ्जलिना सक्तून् जुहोति' इत्यादावपि न संपुटाकारोऽञ्जलिः, अपि तु व्याकोचाकार एव।

तदेव विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि। अतः परं भेदादिना तत्स्वरूपं निरूप्यते।

**मण्डन**— 'अनुष्ठानावसायोऽर्थात्।' १९

**शंकर**— 'सामर्थ्याच्च स्रुवादौ सः।' २० सः संदिग्धनिर्णयः।

* 'अर्थाद्वा०' इत्यत्र सामर्थ्यं शब्दैकदेशः इत्युक्तम्। **भा.** ३।२।१।१ पृ. ७५०. * 'अर्थाद्वा०' इत्यत्र सामर्थ्यरूपलिङ्गस्य संदिग्धार्थनिर्णयमात्रे व्यापाराभिधानम्। **सु.** पृ. १११७. * 'अर्थाद्वा०' इत्यनेन सर्वत्र शब्दादचोदितेऽर्थे अज्ञानसंशयव्युदास इष्टः। **वा.** ३।१।६।१२ पृ. ६९३.

* **अर्थाद्वा कल्पनैकदेशत्वात्**। अत्र अर्थगतं द्रवद्रव्यावदानादि सामर्थ्यं स्रुवादिनिष्ठं इति निरूपितम्। **कु.**३।२।१।१. * अर्थाद्वा कल्पनैकदेशत्वात् इत्येतत्सूत्रस्थं कल्पना एकदेशत्वात् इति पदद्वयं 'संदिग्धे तु वाक्यशेषात्' इति पूर्वसूत्रे अपकृष्य व्याख्या कृता न्यायसुधायाम्। **पराक्रमः**. २४।१-२. * सत्यपि हि अविशेषश्रवणे '**अर्थाद्वा कल्पनैकदेशत्वात्**' इति (औषधाज्यसांनाय्यधर्माणां) अविरुद्धैव व्यवस्था। **वा.** ३।१।४।७ पृ. ६६७.

* **अर्थस्य** व्यवहारोपयोगिनः प्रतिपत्त्याख्यं संस्कारं कुर्वन् शब्दः उपकारको भवति, अर्थश्चोपकार्यः इति अस्ति अभिधानक्रियाद्वारकः शब्दार्थयोः उपकार्योपकारलक्षणः वाच्यवाचकभावः संबन्धः। **रत्नाकरः** संबन्धाक्षेपवादे श्लो. १५. * अर्थस्य शब्दस्य च नित्यः संबन्धः। 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः।' **भा.** १।१।५।५.

* **अर्थस्याविकृतत्वात्** (विकाराच्च न भेदः स्यात्०) १२।१।१।४. यश्च तादर्थ्यातादर्थ्यकृतो विशेषः, नासौ तन्त्रं इति वक्ष्यति 'अर्थस्याविकृतत्वात्' इति। **के.**

⌛ **अर्थस्योक्तत्वेन पुनः प्रयोगवैयर्थ्यादिति न्यायः**। अयं 'उक्तार्थानामप्रयोगः' (४८३) इति न्यायस्य स्वरूपान्तरम्। **साहस्री.** ५८४.

* संबद्धाना**मर्थानां** एकस्मिन् विहिते, अन्ये विनैवायासेन प्राप्नुवन्ति। **वा.** ३।६।७।२२ पृ. १०४७, * **अर्थे** अपर्यवसिते ऋक्षु वृत्तवशेन पादव्यवस्था। २।१।१०।३५. * **अर्थे त्वश्रूयमाणे शेषत्वात्** इत्यत्र (१०।४।८। १७ के.) कौत्सादीनां अनारभ्याधीतत्वेन सत्यपि वचनेन क्रत्वङ्गत्वावगमे तदाधारभूताया योनेः प्रकरणपाठा-

भावेन अङ्गत्वानवगमात् प्राकृतक्रगाधारत्वस्य दशमे वक्ष्यमाणत्वात् । कौ. १।२।४४ पृ. ८२. * अर्थे समवैषम्यं ( ४।१।८।२१ ) इति प्रयोजकाप्रयोजकत्वं पदसाधारणं चिन्त्यते । टुप्. ४।१।१।१.

**अर्थे समवैषम्यमतो द्रव्यकर्मणाम्** ।४।१।८।२१ ॥

चतुर्थाध्यायासाधारणविषयप्रतिपादनप्रतिज्ञासूत्रं उपोद्घातरूपमिदम् । सूत्राणां विंशत्या तृतीयशेष एव प्रायः प्रतिपादितः । अतः इतः परं द्रव्यकर्मणां दण्डादेर्द्रव्यस्य दध्यानयनादेश्च कर्मणः अर्थे प्रयोजने निमित्ते समवैषम्यं प्रतिपाद्यते । समं च विषमं च समविषमे, तयोर्भावः समवैषम्यं, समत्वं विषमत्वं चेत्यर्थः । तत्र साम्यं उभयप्रयोज्यत्वं, वैषम्यं एकेन प्रयोज्यत्वं, नेतरेणेति । यथा आमिक्षावाजिनयोर्द्रव्ययोर्वैषम्यम् । क्रयपांसूनां कर्मद्रव्ययोर्वैषम्यम् । दण्डस्य मैत्रावरुणधारणे यजमानधारणे च कर्मणि साम्यं इत्यादि । **के.**

* न च अतिक्रान्तप्रत्यक्षविषये **अर्थे** शब्दमन्तरेण परिच्छेदोऽवकल्पते । **भा.** ३।३।७।१४ पृ. ८४४. * **अर्थकर्म**— अर्थाय क्रतुसाकल्यप्रयोजनाय क्रियमाणं कर्म । **वि.** ४।२।४. * अर्थकर्म एव स्विष्टकृद्यागः । **भाट्ट.** ४।१।१३. * अर्थकर्म ज्योतिष्टोमे मैत्रावरुणसंस्काराय दण्डदानं, न प्रतिपत्तिकर्म । **वि.** ४।२।६. * **अर्थकर्मापरपर्यायं** गुणकर्म प्रधानकर्म च । तत्राद्यं आधानम् । द्वितीयं यथा अग्निहोत्रादि । **बाल.** पृ. ८१. * **अर्थकामविषयासु** स्मृतिषु प्रमाणान्तरमूलत्वेन प्रामाण्योपपत्तेः तत्प्रणेतॄणां आप्तत्वावधारणात् । **सु.** पृ. १२७.

* **अर्थकामाचाराणामपि** ( अर्थशास्त्रकामशास्त्रयोरपि) दृष्टप्रमाणमूलत्वेन प्रामाण्यसिद्धिः । **सु.** पृ. १८५.

* ' **अर्थकृते वाऽनुमानं स्यात्** क्रत्वेकत्वे परार्थत्वात् तेन संबन्धस्तस्मात् स्वशब्द उच्यते ' ( ५।१।४।६ ) इति सूत्रे ' परार्थो हि वेदो यदनेन शक्यते कर्तुं तस्मैतस्मै ( प्रयोजनाय ) एष समाम्नायते, शक्यते चानेन परार्थो ( पदार्थो ) विधातुं ( शक्यते च ) क्रियाकाले प्रतिपत्तुं तस्माद्वेदः पदार्थाश्च ज्ञातुमुपादेयः क्रियाकाले च प्रतिपत्तुं ' इत्यादिभाष्येण ब्राह्मणस्यापि स्मारकत्वस्य वक्ष्यमाणत्वात् । **सु.** पृ. ६६६.

* **अर्थकृतसंदिग्धनिर्णयः**— ' **पशुसप्तदशत्वस्य न यागेयत्तया विना । सिद्धिरस्तीति चार्थेन सिद्धः संदिग्धनिर्णयः** ॥' **वा.** ३।१।१।१ पृ. ६५०.

* **अर्थक्रमः** चोदकाश्रितत्वात् बलवान् मुख्यप्रवृत्तिक्रमौ तु प्रयोगवचनाश्रितत्वात् दुर्बलौ । **टुप्.** ५।१।१०।१८. * अर्थक्रमः पाठक्रमात् प्रबलः । यथा 'अग्निहोत्रं जुहोति ' ' यवागूं पचति ' इति पाठक्रमः । अर्थानुसारेण तु आदौ यवागूपाकः, तयैव च यवाग्वा अग्निहोत्रहोमः । **वि.** ५।४।१. * **अर्थक्रमतः** ' उपहूतः ' इत्यनेन प्रतिवचनं सोमभक्षे ज्योतिष्टोमे । **भा.** ३।५।१६।४२.

**अर्थक्रमाधिकरणम्** । अर्थोऽपि ( सामर्थ्यमपि ) क्रमे प्रमाणम् ॥

**अर्थाच्च** । ५।१।२।२ ॥

**भाष्यं**— किमेष एवोत्सर्गः, सर्वत्र श्रुतिवशेनैव भवितुमर्हतीति, उक्तं हि ' चोदनालक्षणोऽर्थो धर्मः ' ( १।१।२।२ ) इति । **एवं प्राप्ते ब्रूमः** । अर्थाच्च सामर्थ्याच्च क्रमो विधीयते इति । गुणभूतो हि पदार्थानां क्रमो भवति । यश्च यस्य निर्वर्त्यमानस्य उपकरोति स तस्य गुणभूतः । यस्मिंश्च आश्रीयमाणे पदार्थ एव न संपद्यते, न स गुणभूतः । विनाऽपि तेन न वैगुण्यम् । एवं प्रत्यक्षः क्रमस्य गुणभावो यत्र, तत्र अर्थेन स एवाश्रयितव्यः । यथा ' जाते वरं ददाति ' ' जातमञ्जलिना गृह्णाति ' ' जातमभिप्राणिति ' इति । अर्थात् पूर्वमभिप्राणितव्यं, ततोऽञ्जलिना ( अग्निः ) ग्रहीतव्यः । ततो वरो देय इति । तथा विमोकः पूर्वमाम्नातः पश्चात् तद्योगः, अर्थात् विपरीतः कार्यः । याज्यानुवाक्ये तु विपर्ययेणाम्नाते, विपर्ययेण कर्तव्ये । नात्र पाठक्रमोऽनुष्ठीयते । यतो देवतोपलक्षणार्था अनुवाक्या प्रदानार्था याज्या । ' अग्निहोत्रं जुहोति ' इति पूर्वमाम्नातं ' ओदनं पचति ' इति पश्चात् । असं-

भवात् पूर्वमोदनः पक्तव्यः । प्रैषप्रैषार्थौ तु विपर्ययेणाम्नातौ, तौ च विपर्ययेण कर्तव्यौ ।

**सोम**—पूर्वत्र विधेयान्तराभावात् कथंचिदुपस्थितार्थविधायकत्वं युक्तं, न तु इह विधेयान्तरसद्भावात् इत्युत्थितेः **संगतिः** । **सूत्रस्थ**चशब्देन पूर्वसूत्रस्थसाध्यापकर्षः ।

**वि**— 'अग्निहोत्रं जुहोतीति यवागूं पचतीति च । क्रमः पाठादर्थतो वा, पाठात् सर्वत्र दर्शनात् ॥, होमद्रव्यसमुत्पत्तौ पूर्वं पाकोऽवगम्यते । यवाग्वेति श्रुता होमद्रव्यताऽतोऽर्थतः क्रमः ॥'

**भाट्ट**— अर्थः प्रयोजनम् । तच्च व्युत्क्रमेण अनुपपद्यमानत्वात् क्रमे प्रमाणम् । यथा 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यत्र यवागूपाकस्य पाठक्रमात् पश्चात् करणे पाकसंस्कृतायाः यवाग्वाः होमरूपस्य 'यवाग्वाऽग्निहोत्रं जुहोति' इति वचनसिद्धस्य प्रयोजनस्यानिष्पत्तेः, पाकस्य च यवागूत्पादकत्वेऽपि अनुपयुक्तायास्तस्याः प्रयोजनत्वानुपपत्तेः, तदन्यथाऽनुपपत्त्या पूर्वं पाकः पश्चाद्धोमः । न च 'तृतीया च होश्छन्दसि' (पा० २।३।३) इति स्मरणात् होः कर्मणि तृतीया चकारात् द्वितीया च इत्यर्थकात् 'यवाग्वा जुहोति' इत्यत्र यवाग्वाः तृतीयया कर्मत्वावगमेन होमस्य प्रयोजनत्वासिद्धिः, तथात्वेऽपि यवाग्वाः उपयोगाभावेन होमवाक्ये एव सक्तुन्यायेन (२।१।५।१२) विनियोगभङ्गाङ्गीकारात् । पाकस्य तु दृष्टार्थत्वात् संस्कारकर्मत्वमेव । वस्तुतस्तु करणत्वे एव तृतीयायाः शक्तिः, कर्मत्वे तु आनुशासनिकी लक्षणा । न चात्र तद्बीजमस्ति । अत एव यत्र चतुरवत्तादौ उपयोगक्लृप्तिः, तत्रैव 'चतुरवत्तेन जुहोति' इत्येतादृशवाक्यसत्त्वेऽपि कर्मत्वप्रतीतिः इत्येतत्परं स्मरणम् । अत्र च अर्थोपस्थितः क्रमः प्रयोगविधिनैव विधीयते । एवं पाठादिष्वपि इति **प्राञ्चः** । अङ्गान्तरवत्तु अर्थकल्पितश्रुत्या विनियोगः, प्रयोगमात्रं प्रयोगविधिना इत्यपि शक्यं वक्तुम् । वस्तुतस्तु प्रयोजनवशेन पदार्थानुष्ठाने विहिते आनुषङ्गिकः क्रमः इति न तदंशे विधानं इति ध्येयम् । अर्थोऽपि क्रमनियामकः इति **प्राञ्चः** । **वस्तुतस्तु** अर्थाविरोधिपाठस्थले अन्यलभ्यत्वात् अनुवाद एव । विरोधिपाठस्थले च अपूर्वस्यैव तस्य ज्ञापकः इत्यपि अनुसंधेयम् ।

**मण्डन**— 'पाकाग्निहोत्रयोः सोऽर्थात् ।' सः क्रमः ।

**शंकर**— 'पाकाग्निहोत्रयोरर्थः ।' क्रमे प्रमाणम् ।

* **अर्थचतुष्टयं** — प्रत्ययोत्पादमात्रेण कृतार्थस्य लोकस्य अभिधेय–गम्यमान–द्योत्य–विषयरूपार्थचतुष्टयविवेकानादरात् । **वा.** ३।४।४।१३ पृ. ९३२. अभिधेयोऽर्थः गवादिशब्दानां जातिः । गम्यमानः व्यक्तिः । द्योत्यः प्रादीनामुपसर्गाणां गमनादिः तिष्ठत्यादिधात्वर्थः । विषयो योगरूढानां पङ्कजादिशब्दानां पद्मत्वाद्येकार्थसमवायिपङ्कजननकर्तृत्वादिवाचिनां पद्मत्वादिः । **सु.** पृ. १४३९.

* **अर्थचोदकः** शब्दचोदकात् बलवान् । अर्थाभिधानाय हि शब्दचोदकः प्रवर्तते, न पृथक् अदृष्टकल्पनाभयात् । **वा.** ९।३।१।१.

* **अर्थज्ञानं** ( वेदस्य ) अनुष्ठानौपयिकत्वात् प्रसिद्धफलकमेव । **शा.** १।१।१ पृ. ६. * **अर्थज्ञानं** कर्मानुष्ठानाङ्गं लिङ्गात् । **मीन्या.** * सर्वेषामेव शब्दानामर्थज्ञाने लौकिकः प्रयोगोऽभ्युपायः । **भा.** ६।१।१।१ पृ. १३४७.

## अर्थद्रव्यविरोधेऽर्थो, द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् । ६।३।१९।३९॥

कार्यासमर्थे मुख्यद्रव्ये लब्धेऽपि प्रतिनिधेरेव उपादानं इति प्रतिपादनार्थं सिद्धान्तसूत्रम् । अर्थः प्रयोजनम् । द्रव्यं तत्साधनम् । अनयोर्विरोधे प्रसक्ते अर्थः प्रबल इति ज्ञेयम् । द्रव्याभावे, मुख्यस्य कार्यसमर्थस्य द्रव्यस्य अभावे, तदुत्पत्तेः प्रतिनिधेरुत्पत्तेः । कार्यसमर्थमुख्यद्रव्यालाभो हि प्रतिनिधिग्रहणे हेतुः । द्रव्याणां अर्थशेषत्वात्, अर्थस्य प्रयोजनस्य हि शेषः साधकं द्रव्यम् । प्रयोजनासंभवे तु न प्राप्तस्यापि मुख्यद्रव्यस्योपयोजनं युक्तम् । तस्मात् तादृशस्थले प्रतिनिधिरेव ग्राह्यः । प्रयोजनादरे द्रव्यत्यागः प्रसक्तः । इति तयोर्विरोध इति ज्ञेयम् । यथा यूपार्थो मुख्यः खदिरो लब्धः, स च तक्षणादिसंस्कारासमर्थः पशुनियोजनेऽपि चायोग्यः, प्रतिनिधिः कदरश्च तक्षणादिसमर्थः पशुनियोजने च योग्यो

लब्धुं शक्यः । एवं सति प्रतिनिधिरेव ग्राह्यो न मुख्योऽपि खदिर इति।

* **अर्थद्वयविधानं** (एकेन वाक्येन) दोषः । **भा.** १०।८।१८।७०.

* **अर्थद्वारो** हि अध्यायादिसंबन्धो, न ग्रन्थस्वरूपाश्रयः । **वा.** ३।१।१।१ पृ. ६४९.

‘ **अर्थपृथक्त्वेऽभ्यावर्तते** ( सत्या. श्रौ. ३।१।३९ ) **इतिन्यायात्** प्रत्यायतनं मन्त्रावृत्तिः आधाने संभारनिवपने । **वैज.** ३।३।२३.

* **अर्थप्रत्यायकः** वेदः । **वि.** १।१।७.

* **अर्थप्रत्यायनसामर्थ्यं** लिङ्गं मन्त्राणाम् । तच्च मुख्ये गौणे च केन चित् प्रकारेण विद्यते । **वा.** ३।२।१।१ पृ. ७४५.

* **अर्थप्रत्यायनार्थमेव** यज्ञे मन्त्रोच्चारणम् । **भा.** १।२।४।३२.

* **अर्थप्रयुक्ताश्च** धर्माः (अर्थः फलम्) । **भा.** १२।२।१०।२६.

* (अर्थापत्तिप्राप्तम्) तन्नाम **अर्थप्राप्तं** न प्रकाश्यते, यदेवमेव विना प्रयत्नेन निष्पद्यते । **वा.** ३।२।९।२६. * **अर्थप्राप्ताः** हि कर्मादयो न भवन्ति शब्दस्याभिधेयभूताः । न तु एकत्वादयः अर्थात् प्राप्नुवन्ति, तेन ते शब्दार्थभूताः । **भा.** ३।४।४।१३ पृ. ९२७.

* **अर्थप्राप्तवत्**–तद्यथा लोके अर्थप्राप्ते यत्र प्रतिषेधो भवति, ‘न विषं भक्षयितव्यं, न सर्पायाङ्गुलिर्देया, न कण्टकः पादेनाधिष्ठेयः’ इति, अक्रियैव तस्यार्थस्य भवति न विकल्पः । तेन मन्यामहे, विधिप्रतिषेधयोः प्रतिषेधो बलीयान् इति । **भा.** १०।८।१।२. * ‘**अर्थप्राप्तवदिति चेत्**’ ( १०।८।१।२ ) इत्यत्र यत् अर्थप्राप्तं निषिध्यते तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधाः बलीयांसो भवन्ति इति वक्ष्यते । **वा.** १।२।१।२ पृ. १०७.

* **अर्थभावना** । ‘**अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः**’ । अर्थात्मत्वं अर्थविषयत्वं अर्थाश्रितत्वं वा । तथा च अर्थनिष्ठत्वादर्थभावना फलोत्पत्त्यनुकूलकृतिनोदनादिव्यापाररूपा आख्यातत्वावच्छिन्नशक्या चेतनाचेतनकर्तृसाधारणी कर्तृशक्तिः । **मणि.** पृ. ९०-९१.

* अर्थभावना । ‘अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते । ’ यदा हि सर्वाख्यातानुवर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावना अवगता भवति, तदा तद्विशेषाः सामान्याख्यातव्यतिरिक्तशब्दविशेषवाच्याः विधिप्रतिषेधभूतभविष्यद्वर्तमानादयः प्रतीयन्ते । पचति, अपाक्षीत्, पक्ष्यति, पचेत्, न पचेत् इति । **वा.** २।१।१।१ पृ. ३७८. इच्छाऽर्थात् अर्थयतेः णिजन्तात् कर्तृविवक्षायां ‘ एरच् ’ ( पा० ३।३।५६ इकारान्तात् धातोः अच् प्रत्ययः स्यात् ) इति अच्–प्रत्ययोत्पादनेन अर्थिनः पुरुषस्य अर्थशब्देनाभिधानात्, भावनायाश्च पुरुषधर्मत्वात्, धर्मधर्मिणोश्च अत्यन्तभेदाभावात् तादात्म्यं विवक्षित्वा अर्थात्मा चासौ भावना च इति विग्रहः कार्यः अर्थात्मभावना त्वन्या इति वार्तिके । **सु.** पृ. ५६०.

* **अर्थभावना** एव कारकविशिष्टरूपेण वाक्यार्थो मीमांसकमते । **बाल.** पृ. ७३. * अर्थभावना एव शब्दभावनाभाव्या । **मणि.** पृ. ९१. * अर्थभावना च पचति पाकं करोति इति करोतिसामानाधिकरण्यात् सर्वाख्यातपदवाच्या । **बाल.** पृ. ७४. * आख्यातोपस्थिता **अर्थभावना** किं केन कथं इत्यंशत्रयं क्रमेणापेक्षमाणा ‘ किमिष्टं कुर्यात् ’ इत्याकाङ्क्षायां यागस्य कष्टत्वेन करणत्वेन च असाध्यतया ‘ यागेन अन्यद् भावयेत् ’ इति ( उत्तरम् ) । ततः ‘ किमिदं तत् अन्यत् ? ’ इत्याकाङ्क्षायां स्वर्गकामपदसमर्पितं असिद्धतया साधनापेक्षं स्वर्गमेव अर्थभावना भाव्यत्वेन स्वीकरोति । श्रुतिवृत्त्या हि पदार्थभूतस्य स्वर्गकामस्य भाव्यत्वमुच्यमानं विशेष्यबोधे विशेषणे स्वर्गे पर्यवस्यति । तथा च ‘ यागेन स्वर्गं भावयेत् ’ इति फलितम् । ‘ यागकरणिका स्वर्गफलिका प्रवृत्तिः प्रवर्तनाविषयः ’ इति बोधः । यत्र च समभिव्याहृतानुपस्थितं फलं तत्र प्रकरणादिना, तेषामप्यभावे अर्थवादेन विधिसापेक्षेण ( रात्रिसत्रेषु ), तस्याप्यभावे विश्वजिन्न्यायेन फलविशेषः कल्प्यते । **यद्यपि** पुरुषप्रवृत्तिरूपभावनानिष्पाद्यो यागः तत्र न करणं, **तथापि** फलावच्छिन्नभावनायां विशेषणे करणत्वे ( करणे ) करणत्वोपचारः इति फलोद्देश्यकप्रवर्तककृतिविषयत्वमेव अत्र

करणत्वम् । ' दण्डेन घटं करोति ' इत्यादौ लोकेऽपि तथैव करणत्वम् । ' केन ' इत्यस्यापि ' किंविषयिणी कृतिः स्वर्गसाधनं ' इत्यर्थः इत्यन्ये । अत्र यागकरणत्वविशिष्टे लक्षणा इति **प्राञ्चः । वस्तुतः** करणत्वं यागस्य संबन्धो वाक्यार्थः । एवं ज्योतिष्टोमादेस्तत्र अभेदेनान्वयो निराबाधः । इत्थं च कथं विनष्टेन यागेन स्वर्गो भाव्यः इति प्रतीत्यनवसाने अन्तरा अपूर्वं कृत्वा इति संबध्यते । ततः ' कथमपूर्वं यागेन कर्तव्यं ' इति अपूर्वभावनायां इत्थंभावेन संयुज्यमानमितिकर्तव्यताजातं अपूर्वप्रयुक्तमित्युच्यते । ततः प्रकारापेक्षायां ' समिधो यजति ' इत्यादिवाक्यैः इष्टविशेषापेक्षैः स्वाधिकारवाक्यैकवाक्यतया ' दर्शपूर्णमासभावना प्रयाजादिभावनोपेता अपूर्वं साधयति ' इत्यवगते प्रयाजादीनां तादर्थ्येन समन्वये पश्चात् उपकारत्वं ( उपकारकत्वं ) कल्प्यते । तदयं **भाट्टमते** बोधक्रमः । ' स्वर्गकामनिष्ठा यागकरणिका स्वर्गफलिका प्रयाजादीतिकर्तव्यताका भावना ' इत्यर्थभावनाबोधः । ' विधिनिष्ठा शक्तिग्रहकरणिका स्तुत्यर्थवादोपकृता प्रवर्तना ' इति शब्दभावनाबोधः शक्तिकल्पनेन लक्षणया वा उपपद्यते । ततोऽवरुद्धा अर्थभावना निरुक्तप्रवर्तनाविषयः इत्येकवाक्यतया महावाक्यार्थबोधः । अत एव विध्युपरक्ता भावना लिङर्थः इति भाट्टसिद्धान्तः । विधिः प्रवर्तना, तदुपरक्ता तद्विशिष्टा अर्थभावना लिङ्प्रतिपाद्या इत्यर्थः । अर्थभावनाविशेषणत्वेनैव शब्दभावनाया अन्वयः, राजादिकृताज्ञादेः तथैवान्वयात् । तदन्वयेन योग्यत्वेन प्रवर्तनायामपि बलवदनिष्टाननुबन्धीष्टसाधनत्वं लभ्यते । 'न सुरां पिबेत्' इत्यादौ प्रतिषेधवाक्यार्थोऽपि इत्थमेवोन्नेयः । एवमन्येऽपि अन्वयबोधाः स्वयमूह्याः इति । **मणि.** ९२–९३. * **अर्थभावना** विधिप्रतिषेधौ साक्षात् विषयीकुरुतः । तद्द्वारा तु तद्विशेषणानि कारकाणि । तदुक्तं तद्भूताधिकरणे । ' **विशिष्टां भावनां प्राप्य वृत्तिर्विधिनिषेधयोः** ' इति । **बाल.** पृ. ७४. * **अर्थभावनायाः** चेतनमात्राश्रयत्वेऽपि शब्दभावनायाः चेतनाश्रयत्वायोगः । **सु.** पृ. ५७८. * अर्थभावनायाः सर्वाख्यातवाच्यत्वम् । **सोम.** १।२।१ पृ. ४.

* **अर्थभावनानिरूपणम्** । सैव हि सर्ववाक्येषु मीमांसकमते कारकविशिष्टरूपेण वाक्यार्थो, न नैयायिकवत् संसर्गः । तदुक्तं तद्भूताधिकरणे ( १।१।७ ) '**भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया । अनेकगुणजात्यादिकारकार्थानुरञ्जिता** ।।' ( श्लो. ३३०–३३१ ) इति । ' अर्थैकत्वादेकं वाक्यं ' ( २।१।१४।४६ ) इत्यत्राप्युक्तं ' **भावनैव च वाक्यार्थः स्वकारकविशेषिता**' इति ( वा. पृ. ४४५ ) । संसर्गो भेदश्च न वाक्यार्थं इत्युक्तं तत्रैव भाष्ये ' भेदः संसर्गो वा वाक्यार्थ इति यद्युच्यते । तथापि एकार्थता न स्यात् । बहुपदेषु भेदानां संसर्गाणां च बहुत्वात्' इति (पृ.४४६)। तद्विवरणं तु वार्तिके कृतं (वा. पृ.४४७) ' व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैव उपात्तत्वात् तद्विशेषशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं वक्तव्यं, तत्संसर्गः पदार्थान्तर्गतत्वात् न वाक्यार्थो भवति इति तदुपसर्जनस्तेषां भेदो गृह्यते । स च यथा शुक्लपदेन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वात् भवति, एवं शुक्लशब्दस्यापि गोशब्देन अश्वादिभ्यो व्यावर्तितस्य भवति । व्यवच्छेद्यनानात्वाच्च नास्त्येकवाक्यत्वे प्रमाणम् । भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः ' इति । तथा ' आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः संनिधानात् इतरेतरानुरञ्जनात् अर्थसिद्धो भेदो न वाक्यार्थः ( ०रञ्जनं अर्थसिद्धभेदं वाक्यार्थः इति मूलपाठः ) । स च गोत्वे शुक्लत्वसंसर्गः, शुक्लत्वे च गोत्वसंसर्गः सामस्त्येन एकव्यक्त्युपसंहारादुपलभ्यते इति नाना । यद्यपि च कथं चित् द्विपदे स एवोभयत्रापि संसर्गः इत्येकत्वं गम्येत, तथापि बहुपदे येन (येनयेन) प्रदेशेन पदद्वयं संसृज्यते तेनतेन तत्संसर्गरूपोपलब्धेरनेकत्वम् ' ( वा. पृ. ४४७ ) इति । सा च भावना सर्वैः पदैः कारकविशिष्टत्वेन लक्ष्यते । तत्र एकैककारकविशिष्टत्वेन तत्तत्कारकपदैः, क्रियापदेन तु सर्वकारकविशिष्टत्वेन । तदुक्तं भावार्थाधिकरणे ' यदि हि धर्मस्वरूपमभिधीयेत ततः किं पदेनपदेन उच्यते इति विचारो युज्येत, लाक्षणिकत्वे तु अयुक्तः ' इति ( वा. पृ.३७२–३७३ )। '**वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः**

स्थितिः ।' इति च । लक्षणा च पदार्थधर्मो न पदधर्मः । तदुक्तं ' **तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना ।** ' इति । तच्छब्देन आकृतिः परामृश्यते । तथा **न्यायसुधाकृताऽपि** अर्थवादाधिकरणे प्रवर्तनासामान्ये लिङः शक्तिमुपपाद्योक्तं ' प्रवर्तनासामान्यस्य वाच्यत्वेऽवगते तद्विशेषाकाङ्क्षायां प्रैषादीनां पुरुषधर्माणां वेदेऽनुपपत्तेः तद्विलक्षणं विशेषान्तरमभिधेयेन सामान्येन विधिप्रेरणानियोगाख्यं लक्ष्यते ' इति (सु.पृ. ३०)। अत्र वाच्यप्रवर्तनासामान्यधर्मे एव लक्षणा इत्युक्तं, न शब्दधर्मे इति । सेयं वाक्यार्थभूता भावना अर्थभावना इति गीयते । अर्थ्यते इति अर्थः फलकामः पुरुषः, तद्धर्मत्वात् । सा च प्रयत्नरूपैव, 'रथो गच्छति' इत्यादौ च लक्षणा इति **भट्टसोमेश्वरो** भावार्थाधिकरणे प्रत्यपादयत् । **मिश्रास्तु** प्रायेण पुरुषधर्मः प्रयोजकव्यापाररूपैव त्वसौ, ' रथो गच्छति ' इत्यादावपि गत्यनुकूलचक्रभ्रम्यादिरूपा अस्त्येव इति न लक्षणा इति भावार्थाधिकरणे एव प्रोचुः ।

सा च ' किं करोति ? पचति, पाकं करोति ' इति च करोतिसामानाधिकरण्यात् सर्वाख्यातवाच्या । करोतिश्च किंचिदुत्पाद्यवस्त्वन्तरविषयं प्रयोजकव्यापारमेव आह । तस्याश्च पूर्वापरीभूतं सर्वकारकान्वययोग्यं क्रियारूपं आख्यातेनैवोच्यते इति अनन्याख्येयो भावार्थ इत्युभयेऽप्याहुः, यथा कर्मत्वं द्वितीयावाच्यम् । अत एव ' घटः कर्मत्वं आनयनं कृतिः ' इत्ययोग्यं वाक्यमाहुः । सा च चेतनप्रवर्तनात्मकविध्यवरुद्धा पुरुषार्थरूपं भाव्यं विना विध्यनुपपत्तेः पुरुषार्थरूपं भाव्यमवलम्बमाना तस्यानिर्ज्ञातकरणत्वात् अनिर्ज्ञातेतिकर्तव्यताकत्वाच्च स्वयं शास्त्रीयं सत् शास्त्रीये एव करणेतिकर्तव्यते गृह्णाति । **इत्यर्थभावनानिरूपणम्** । बाल. पृ. ७३–७४.

* **अर्थभेदात्** वाक्यभेदः । भा. ३।२।१०।२७.

* **अर्थलक्षणं** कर्म लोके, शब्दलक्षणं पुनर्वेदे । भा. ३।१।८।१७.

* **अर्थलुप्तं न प्रवर्तते** । टुप्. १०।१।१।२.

* **अर्थलोपः** त्रिविधः स्वरूपेण प्रकृतपदार्थलोपः, फललोपः, द्वारलोपश्च । द्वारलोपोऽपि बहुविधः क्व चित् द्वारत्वाभिमतस्य स्वतःसिद्धतया यथा कृष्णलेषु अवघातस्य । क्व चित् पूर्वसिद्धतया यथा खलेवाल्यां छेदनतक्षणादेः । क्व चित् संपादनाशक्त्या यथा प्राशित्रेडाभक्षणार्थेषु कृष्णलेषु अभिघारणजन्योपकारस्य स्वादिम्नः संपादयितुमशक्यत्वात् । एवं सिद्धशेषिविरोधात् यथा आग्रयणे दक्षिणारूपे वत्से अन्वाहार्यधर्मस्य पाकस्य, पाके सति वत्सो नश्येत्, मांसमेव दक्षिणा स्यात् । क्व चित् साध्यशेषिविरोधात् यथा ' नैवारः सप्तदशशरावश्चरुर्भवति ' इत्यत्र सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधात् प्राकृतमुष्टिबाधः । **धर्मादर्शः** पृ. १३५. * अर्थलोपः बाधे प्रमाणम् । **मणि.** पृ. १३. * **अर्थलोपेन** प्राकृतं बाध्यते यथा कृष्णलचरौ अवघातः प्राकृतः चोदकप्राप्तः वैतुष्यरूपार्थलोपात् । यथा वा स्वयंदिते बर्हिषि लवनं प्राप्तिरूपार्थलोपात् । **बाल.** पृ. १३१. * **अर्थलोपात्** खलेवाल्यां यूपाहुत्यादयः संस्काराः निवर्तितुमर्हन्ति । भा. १०।१।५।९.

* **अर्थवद्धातुरप्रत्ययः प्रातिपदिकम्** । ( पा० १।२।४५ ) अभिधात्रीश्रुतिरियं प्रातिपदिकमिति । **बाल.** पृ. ४१.

**अर्थवशाद्विभक्तिविपरिणामः इति न्यायः** । तद्यथा– ' उच्चानि देवदत्तस्य गृहाणि आमन्त्रयस्वैनं ' देवदत्तमिति गम्यते । ' देवदत्तस्य गावोऽश्वा हिरण्यं, आढ्यो वैधवेयः ' देवदत्त इति गम्यते । पुरस्तात् षष्ठीनिर्दिष्टं सत् अर्थात् द्वितीयानिर्दिष्टं प्रथमानिर्दिष्टं च भवति इत्येवं प्रकृतेऽपि । अयं ' ठस्येकः ' ( पा ७।३।५० ) इति सूत्रे भाष्ये स्पष्टः । **साहस्री.** ८३७.

* **अर्थवादः** कश्चिद् वेदभागः यः प्ररोचयन् विधिं स्तौति यथा वायुर्वै क्षेपिष्ठा देवतेति । वाक्यशेषो हि स भवति विधातव्यस्य । **भा.** १।४।१।१ पृ. ३२१, * अर्थवादः गुणं विधास्यति । तदुक्तं ' गुणार्थेन पुनःश्रुतिः ' ( १।२।४।३३ ) ' परिसंख्या ' ( १।२।४।३४ ) ' अर्थवादो वा ' ( १।२।४।३५ ) इति । १२।३।१५।३४. ( अत्र ' तां चतुर्भिरादत्ते ' इति पुनःश्रुतिः गुणार्थेन चतुष्ट्वसंख्यारूपगुणलाभाय इति प्रथमसूत्रार्थः । ' इत्यश्वाभिधानीमादत्ते ' इति विधिना

आदाने विहिते गर्दभरशनायाः परिसंख्या व्यावृत्तिर्लभ्यते इति द्वितीयसूत्रार्थः । 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति प्रथनविधेः अर्थवादः उरु प्रथस्वेति मन्त्रोपादानम् । वाशब्दः एवार्थे । इति तृतीयसूत्रार्थः । **के.**) * अर्थवादः तात्पर्याभावेऽपि स्तुतिलक्षकवाक्यार्थप्रतिपादकत्वमात्रेण वाक्यात् (प्रमाणात्) पृथक् व्यपदिश्यते । न तु वस्तुतः पृथक् वाक्यरूपं प्रमाणम् । **बाल.** पृ. ९ . * अर्थवादः दिग्विभागः 'प्राचीं देवा अभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीमसुराः' इति अपरेषां 'उदीचीं रुद्राः' इति । 'प्राचीनवंशं करोति' इत्यस्य विधेः । **भा.** ३।४।२।१०. * अर्थवादः निवीतश्रवणं उपवीतस्य । **वि.** ३।४।१.

* **'अर्थवादो वाऽनुपपातात् तस्माद् यज्ञे प्रतीयेत'** (३।४।२९) इति सूत्रेण अश्वप्रतिग्रहेष्टिः वैदिकनिमित्ता इति सिद्धान्तितम् । **पराक्रमः.** २१।१. * 'यत् परुषि दितं तद्देवानां, यदन्तरा तन्मनुष्याणां, यत् समूलं तत् पितॄणां, समूलं बर्हिर्भवति व्यावृत्त्यै' इत्यत्र पिण्डपितृयज्ञे समूलबर्हिर्विधेः इतरत् सर्वं **अर्थवादः** । **वि.** ३।४।७. * येन विधीयते तस्य वाक्यशेषः अर्थवाद इत्युक्तम् । **भा.** १।२।४।३१-४ पृ. १४५, * 'वाक्यशेषो हि स (अर्थवादः) भवति विधातव्यस्य । १।४।१।१. * विधीयमानस्य च वाक्यशेषत्वेन स्तावकः अर्थवादो भवति । **टुप्.** १०।७।९।२७. * **अर्थवादाः** आनर्थक्यप्रतियोगिनः विधिप्रतियोगिनश्च विचारिताः । इदानीं हेतुप्रतियोगिनो विचार्यन्ते । **शा.** १।२।३. अत्र **सोमनाथी**–आनर्थक्यं प्रतियोगिसिद्धान्तन्यायनिवर्त्यं येषां ते तथोक्ताः । एवमग्रेऽपि । प्रथमाधिकरणे सर्वे अर्थवादाः आनर्थक्यप्रतियोगित्वेन विचारिताः । द्वितीये तेषां मध्ये के चित् विधिप्रतियोगित्वेन विचारिताः । इदानीं तेषामपि मध्ये के चन हेतुप्रतियोगित्वेन विचार्यन्ते इत्यर्थः । * अर्थवादाः धर्मे प्रमाणम् । **मणि.** पृ. १३. * यथा विध्यादीनां अध्ययनविध्युपात्तानां नानर्थक्यं एवमर्थवादानामपि तदुपात्तत्वेन आनर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावात् लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम् । ते **चार्थवादाः** द्विविधाः विधिशेषा निषेधशेषाश्च । तत्र 'वायव्यं श्वेतमालभेत' इत्यादिविधिशेषाणां विधेयार्थस्तावकतया अर्थवत्त्वम् । 'बर्हिषि रजतं न देयं' इत्यादिनिषेधशेषाणां 'सोऽरोदीत्' इत्यादीनामर्थवादानां च निषेध्यनिन्दकतयेति । अतश्च लक्षणया प्राशस्त्यमर्थवादैर्बोध्यते । तच्च प्राशस्त्यज्ञानं शब्दभावनायां इतिकर्तव्यतात्वेन संबध्यते । **मीन्या.** पृ. ४६९. * ये हि विध्युद्देशात् परस्तादर्थवादाः श्रूयन्ते तेषामस्ति दौर्बल्यम् । ये पुरस्ताच्छ्रूयन्ते, ते मुख्यत्वात् बलीयांसो भवन्ति । **वा.** ३।३।१।२ पृ. ८०६. * **अर्थवादेन** देवताविधिः यथा 'अन्नादं वा य एतमात्मनो जनयते यदग्निं' इति पूर्णाहुतेर्वाक्यशेषं अग्निदेवताप्रापकमाह वाजसनेयी देवयाज्ञिकः । **बाल.** पृ. ५३. * न वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेणार्थ**वादेन** किंचित् प्रयोजनमस्ति । **भा.** १०।७।९।२७, * विनाऽपि तेन (अर्थवादेन) सिध्येत् प्ररोचनं, अस्ति तु तत् । तस्मिन् विद्यमाने योऽर्थो वाक्यस्य सोऽवगम्यते, स्तुतिः प्रयोजनं तयोः । तस्मिन् अविद्यमाने विधिना प्ररोचनं इति । १।२।१।७ पृ. ११८. * **अर्थवादस्य** गुणत्वात् अनुवादत्वेन लक्षणासहिष्णुत्वाच्च तत्रैव लक्षणा युक्ता । **पराक्रमः.** ३।१. * अर्थवादस्य वाक्यशेषत्वम् । 'न तावदर्थवादत्वं वाक्यशेषत्वाभावात्' । **वा.** १।४।१।१ पृ. ३२१. * अर्थवादस्य विधिशक्त्यभावात् । **पराक्रमः.** ५।२. * 'जर्तिलयवाग्वा वा जुहुयात्' इत्यादेः मुख्यस्यापि **अर्थवादस्य** 'पयसाऽग्निहोत्रं जुहोति' इत्याद्युपसंहारस्थविध्यनुरोधात् पयोहोमस्तुत्यर्थवादत्वावधारणम् । **सु.** पृ. ११७१. * तुल्या च विषयावबोधने विध्यर्थवादयोः शक्तिः । **वा.** ३।४।११।३१ पृ. ९६७. * **अर्थवादानां** अङ्गप्रधानवाक्यैः सह वैषम्यम् । **सु.**पृ. ५२५. * अर्थवादानां अन्यपरत्वात् **गौण्या** अवगतिः । **बृहती.** पृ. १४७. * अर्थवादानां अविधायकत्वादनर्थकत्वम् । 'एवमविहितमर्थं विधास्यति इतरथा अर्थवादाः सन्तोऽनर्थकाः स्युः' । **भा.** १।४।११।१७, १।४।१२।२३-१. * अर्थवादानां इष्टसाधनयागविशेष्यकलक्षितप्राशस्त्यप्रकारक-

प्रमितिजनकत्वेन भावनाविशेष्यकप्राशस्त्यादिप्रमितिजनकत्वेन वा प्रकारांशे अनधिगतार्थगन्तृत्वं विशेष्यांशे धर्मप्रमाजनकत्वं च उपपादनीयम् । मणि. पृ. १०. * अर्थवादानां नित्यं प्रमाणान्तरावगतार्थविषयत्वम् । अतोऽपि तद्गतमेव लक्षणाऽऽश्रयणं युक्तं न विधिगतम् । विधीनां अन्येन अत्यन्ताप्राप्तविषयत्वेन श्रुतान्यथात्वकल्पनस्य अप्रमाणकत्वात् । वा. ३।४।११।३० पृ. ९६४. * अर्थवादानां प्राशस्त्यादिज्ञानं प्रयोजनम् । मणि. पृ.५. * अर्थवादानां भावनांशत्रयान्तःपातित्वम् । के. * अर्थवादानां भावनाऽन्वितस्तुतिनिन्दाविषयकप्रमाजनकत्वेन धर्माधर्मयोः प्रामाण्यम् । भाट्ट. १।२।१ पृ. २२. * अर्थवादानां यथाकथंचित् प्राशस्त्यप्रतिपादनमात्रेण विधिसाद्गुण्यार्थत्वसिद्धेः तद्यथाश्रुतत्वस्य प्रधानभूतविधिसाद्गुण्यार्थत्वाभावेन तादर्थ्यादिति बाधहेत्वभावात् न युक्तो बाधः । सु. पृ. १४९९. * अर्थवादानां लोकवेदविरोधाभावे स्वार्थेऽपि प्रामाण्यम् । तद्विरोधे तु स्तावकत्वमेव । '**विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥**' ततश्च अचिन्त्यशक्तिकपरमेश्वरतत्कर्तृकसृष्टिप्रलयादिकमपि अस्ति इति वार्तिककारैः वैदिकशिरोमणिभिः प्रपञ्चितम् । अनीश्वरवादिनस्तु **प्रभाकरादयः** वैदिकैरनादृत्याः । तत्र अर्थवादानां वाच्यविधया धर्मप्रमितिजननशक्त्यभावेऽपि कृत्स्नस्य वेदस्य प्रयोजनवदर्थावबोधपर्यवसानं बोधयता अध्ययनविधिनैव विध्यपेक्षितप्राशस्त्यतात्पर्योन्नयनमुखेन उत्थापितलक्ष्यविधया तत्प्रतिपादनद्वारा विध्युपयोगात् धर्मप्रामाण्यमुपपद्यते इति वार्तिकादिग्रन्थेषु स्थितम् । कु. १।२।१।१८. * अर्थवादानां विधिवत् अनुष्ठापकत्वेन न क्रियार्थत्वं क्रियाभिधायकत्वं वा, तथापि प्राशस्त्यज्ञानेनैव अनुष्ठापकत्वात् स्वरसतश्च प्राशस्त्यज्ञानात् अध्ययनविधिवत् लक्षणया तादर्थ्यं अङ्गीकार्यम् । न च प्राशस्त्यज्ञानस्य कर्तव्यत्वासिद्धौ अध्ययनफलत्वं युक्तं, रागतो विधितो वा कर्तव्यत्वेन अनवगतत्वेन कस्य चित् फलत्वायोगात् । कर्तव्यत्वं च भावनाऽन्तर्गत्या विना न सिध्यति इति अर्थवादाध्ययनफलत्वोपपत्त्यै प्राशस्त्यज्ञानस्य कर्तव्यत्वसिद्ध्यर्थं भावनाऽन्तर्गतिः । सु. पृ. २६. * अर्थवादानां विधिवाक्यानां च धर्मास्तुल्याः । अध्यायानध्यायते, गुरुमुखात् प्रतिपत्तिः, शिष्योपाध्यायता च सर्वस्मिन् एवंजातीयके अविघ्नार्थे तुल्यमाद्रियन्ते । स्मरणं च दृढम् । भा. १।२।१।८. * अर्थवादानां विध्यन्वयेन प्रामाण्यं, न साक्षात् । वि. १।४।१. * अर्थवादानां सर्वत्र स्तुतिपरत्वात् तदुपायेषु सत्यासत्यान्वेषणं व्यर्थम् । वा. १।२।२।२२ पृ. १३६. * अर्थवादानां स्तावकत्वातिरेकेण संदिग्धार्थनिर्णायकत्वेनोपयोगः इति प्रतिपादनार्थं 'संदिग्धेषु वाक्यशेषात्' (१।४।२४) इति सूत्रम् । सु. पृ. ५२३. * **अर्थवादेषु** च सर्वे प्रमाणविरोधाः गुणवादेन व्याख्याताः (गुणवादस्तु इति सूत्रेण) । बृहती. पृ. १००. * अर्थवादेषु— '**परस्तादर्थवादेषु स्वतन्त्रो जायते ह्यसौ(विध्युद्देशः)। पुरस्तादर्थवादेषु तत्पूर्वा विधिकल्पना ॥**' सत्यपि प्रधानगुणभावे विध्यर्थवादानां पूर्वापरोच्चारणकृतः अन्यो विशेषो भवति । सर्वत्रैव तावत् 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (१२।२।८।२३) इति च श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानं अनुपजातप्रतिद्वंद्वि द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वात् आञ्जस्येन आत्मानं लभते । पश्चात्तनं तु पूर्वविज्ञानावरुद्धज्ञानविषये उपजायमानं सत्यां विरोधावस्थायां तदानुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति इति अन्यथात्वमपि प्रतिपद्यते । वा. ३।४।११।३१ पृ. ९६६. * अर्थवादेषु स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ तात्पर्यग्राहकवशेन लक्षणासिद्धिः । लक्षणीयश्चार्थः संनिहितविधिनिषेधापेक्षितत्वात् स्तुतिनिन्दास्वरूपः । भाट्ट. १।२।१ पृ. २१. * **अर्थवादकल्प्यो निषेधो** द्विविधः । स्वतन्त्रार्थवादकल्प्यः विध्यन्तरशेषार्थवादकल्प्यश्च । आद्योऽपि द्विविधः दोषार्थवादकल्प्यः सिद्धवत्कीर्तनार्थवादकल्प्यश्च । **आद्यो** यथा स्मार्तः 'मिथ्याभिशंसने दोषो द्विः, समो भूतवादिनः । मिथ्याभिशस्तदोषं च समादत्ते मृषा वदन् ॥' इति । **द्वितीयो** यथा अग्निहोत्रप्रकरणे 'तस्माद्वत्सं जातं दशरात्रीर्न दुहन्ति' इति । जातं वत्सं अनु लक्ष्यीकृत्य तदनन्तरं दशरात्रं गौर्न दोग्धव्या इति सिद्धवत्कीर्तनान्यथाऽनुपपत्त्या निषेधः कल्प्यते । 'यदाग्नेयोऽष्टा-

कपालेऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधिवदिति । **विध्यन्तरशेषार्थवादकल्प्यो** यथा 'तस्मादारण्यमेवाश्नीयात्' इति विधिशेषेण 'न वा एते माषान् हविर्गृह्णन्ति' इत्यनेन माषनिषेधः कल्प्यते 'उपरि हि देवेभ्यो धारयति' इति विधिवदिति । **बाल.** पृ. ३०, * **अर्थवादकल्प्यो विधि-**र्द्विविधः स्वतन्त्रार्थवादकल्प्यः विध्यन्तरशेषार्थवादकल्प्यश्च । आद्योऽपि त्रिविधः फलार्थवादकल्प्यः सिद्धवत्कीर्तनार्थवादकल्प्यः उपाख्यानार्थवादकल्प्यश्च । अन्त्योऽपि द्विविधः एककर्तृकोपाख्यानरूपपरकृतिकल्प्यः अनेककर्तृकोपाख्यानरूपपुराकल्पकल्प्यश्च । तत्र फलार्थवादकल्प्यो यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति । सिद्धवत्कीर्तनार्थवादकल्प्यो यथा 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति । परकृतिकल्प्यो यथा 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति क्रियायां कर्तृत्वेन अनुषङ्गात् । पुराकल्पकल्प्यो यथा 'तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति । विध्यन्तरशेषार्थवादकल्प्यो यथा 'उपरि हि देवेभ्यो धारयति' इति । पृ. १२. * **अर्थवादगतस्य** नाम्नो नातिदेशकत्वम् । **भाट्ट.** ५।३।९ पृ. १९८. * **अर्थवादगतपदानां** न प्रत्येकं प्राशस्त्यलक्षकत्वं तथा सति पदान्तरवैयर्थ्यापत्तेः, किंतु कृत्स्नस्यार्थवादवाक्यस्य । **सोम.** १।२।१ पृ. ७. * **अर्थवादत्वं** अभिघारणानभिघारणादीनां त्र्यम्बकहोमादिषु । **भा.** १०।८। ५।८. * अर्थवादत्वं अष्टाकपालादीनां वैश्वानरेष्टौ । **वि.** १।४।१२, * अर्थवादत्वं उपवीतदर्भाग्रत्वयोः प्रेताग्निहोत्रे । ३।४।४. * अर्थवादत्वं मन्त्रस्यापि 'अर्थवादश्च तदर्थवत्' (४।४।९।२४) इति सूत्रेण, 'एवं च मन्त्रार्थवादः अर्थवान् भविष्यति युवा सुवासाः परिवीत आगात्० इति' इति तत्रत्यभाष्येण चोक्तम् । एवं वेदान्तग्रन्थेषु 'अग्निर्हिमस्य भेषजं' इति अनुवादोदाहरणं नाशुद्धम् । तेन बालमीमांसाप्रकाशकारकृतः नृसिंहाश्रमनिरास एव (बाल. पृ. ४८) निरस्तो वेदितव्यः । **के.** * **अर्थवादत्वेन** विधित्वं बाध्यते । 'उपरि हि देवेभ्यो धारयति' 'विष्णुरुपांशु यष्टव्यः' इत्यादौ तु अर्थवादत्वायोगात् विधिरुक्तः । **बाल.** पृ. १४४. * विधिवन्निगदानां हेतुवन्निगदानां चैवंजातीयकानां **अर्थवादत्वेन** उक्तत्वात् । **वा.** ३।६।७।२७. * **अर्थवादत्वे** चावर्तमाने लक्षणया वर्तमानः शब्दः प्रशंसार्थ उपपद्यते । **भा.** ४।३।१।२ पृ. १२४७.

* **अर्थवादत्वज्ञानात्**— '**तथाऽर्थवादविज्ञानाद् विष्णवादिगुणकाश्रयः । यागा न कल्पितास्तेषां विधिशक्तेरसंभवात्** ॥' जामित्वाजामित्वोपक्रमोपसंहारमध्यपातिनो हि 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्येवमादयः अन्तरालसंबन्धविध्येकवाक्यत्वेन अर्थवादत्वात् पृथक् विधित्वमलभमाना न देवताविशिष्टकर्मत्रयविधानार्था विज्ञायन्ते । **वा.** ३।१।१।१ **पृ.** ६४९.

* विध्येकवाक्यत्वं विना **अर्थवादत्वानवसायात्** विधिविरोधानवभासेऽपि स्तुतिनिन्दाज्ञानानुत्पत्तेः न विधिजन्येन ज्ञानेन अर्थवादजन्यस्य ज्ञानस्य बाध्यत्वलक्षणं विध्यर्थवादयोर्बलाबलं, किंतु विधायकरूपविध्येकवाक्यत्वात् स्तुत्यर्थवादः, निषेधरूपविध्येकवाक्यत्वात् निन्दाऽर्थवादः इति विध्येकवाक्यत्वानुसारेण अर्थवादस्वरूपावधारणलक्षणम् । तच्च विरोधकारणकत्वाभावात् न मुख्यपश्चाद्भावापेक्षम् । **सु.** पृ. ११७१.

* **अर्थवाददर्शनादेव** केवलात् यत्रापि विधित्वं, तत्रापि अन्यथाऽनुपपत्तिमात्रं शरणम् । **वा.** १।२।१।७ पृ. १२० पं. २५. 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इत्यादौ अर्थवादमात्रकल्प्यविधिदर्शनात् । **सु.** पृ. ४९.

* **अर्थवादन्यायेन** (अर्थवादाधिकरणेन १।२।१) शेषपदार्थानर्थक्यप्रसङ्गात् सत्यपि पूर्वत्र प्राधान्यपर्यवसानसंभवे स्तुत्यर्थेनैव एकवाक्यता युक्ता । **वा.** २।१। ५।२४ पृ. ४३९.

* **अर्थवादपदानि** च न प्रत्येकं प्राशस्त्यं लक्षयन्ति पदान्तरवैयर्थ्यापत्तेः, किंतु पदसमुदायः । **न च** समुदायस्य क्वचिदपि अशक्तत्वात् स्वशक्यसंबन्धरूपलक्षणा कथं तत्र स्यादिति **वाच्यम्** । अवयवद्वारा शक्यसंबन्धस्य

समुदायेऽपि सत्त्वात् । साक्षात् स्वावयवद्वारकत्व-साधारण्येन स्वनिष्ठशक्त्या स्वप्रतिपाद्यसंबन्धः एव हि लक्षणा, न तु साक्षादेव स्वनिष्ठशक्त्या स्वप्रतिपाद्य-संबन्धः, गौरवात् । अवयवशक्तिलभ्यैश्च वायुक्षेपिष्ठत्वा-दिभिरर्थैर्वायुदेवताकयागीयप्राशस्त्यस्य उत्कृष्टफलाधाय-कत्वलक्षणस्य अविनाभावलक्षणः ज्ञाप्यज्ञापकभावः संबन्धः । वायुक्षेपिष्ठादिपदशक्यैरर्थैः प्राशस्त्यं ज्ञाप्यते ' क्षिप्रतमो महात्मा वायुः अतिक्षिप्रमुत्कृष्टफलं दास्यति, अतः प्रशस्तं तद्देवताकं कर्म' इति । ततश्च वायुक्षेपिष्ठादि-पदेषु स्वशक्यार्थद्वारा प्राशस्त्यज्ञापकता तद्–द्वारा तत्समु-दायेषु इति सिद्धम् । स्पष्टीकृतं च **चूडामणिदीक्षितैः** ' सैषा अर्थवादविध्युद्देशयोः पदैकवाक्यता विज्ञेया, अन्यतरविनाभूतयोस्तयोः साकाङ्क्षत्वात् । **केचित्तु** अङ्गप्रधानविध्युद्देशानां विधायकलिङादिभेदात् स्वार्थ-निराकाङ्क्षतया प्रयोजनवशेन संबन्धात् वाक्यैकवाक्यता इत्याहुः । निरर्थवादविधिप्रदेशेषु तु विधीनामेव द्वे शक्ती कल्पयामः । **न च** सर्वत्र विधेरेव शक्तिद्वयकल्पनोपपत्तौ किमर्थवादैरिति **वाच्यम्** । आम्नातस्यैव हि वयमर्थं वक्तुं प्रभवामो नाम्नानं पर्यनुयोक्तुं इत्यास्तां तावत् । **कु.** १।२।१।७ पृ. २२.

* **अर्थवादपादे** नाम प्रथमाध्यायस्य द्वितीये पादे अर्थवादमन्त्रयोः विशिष्य प्रामाण्यं वर्ण्यते । **कु.** १।२। १।१.

* **अर्थवादप्रचोदित**–मन्त्रस्मारितद्रव्यदेवतादियुक्त–नामावच्छिन्नधात्वर्थभावनाख्यधर्मप्रमितौ अर्थवादानां प्ररोचकतया प्रामाण्यं सिध्यति । **सोम.** १।२।१ पृ. ८.

* **अर्थवादप्रभवा** लिङ्गादिप्रभवा च स्मृतिः श्रुति-प्रभवया स्मृत्या बाध्यते । अप्राप्तबाधः । **बा.** ३।३।७।१४ पृ. ८६०.

* **अर्थवादभेदा निरूप्यन्ते** । अर्थवादस्त्रिविधः गुणवादः अनुवादः भूतार्थवादश्चेति । तदुक्तं '**विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धा-नादर्थवादस्त्रिधा मतः** ॥ ' इति । प्रमाणान्तरेण विरोधे, प्रमाणान्तरेण अवधारिते निश्चिते, तद्धानात् तयोः विरोधावधारितत्वयोर्ज्ञानाभावे, इति श्लोकगतपदार्थः । **विरोधे गुणवादः स्यात्** इत्यस्योदाहरणं यथा ' धूम एवाग्नेर्दिवा ददृशे नार्चिः ' इत्यादि । धूममात्रदर्शनस्य अर्चिरदर्शनस्य च अर्चिषोऽपि दर्शनेन विरुद्धत्वात्, दूरात् भूयस्त्वेन च दर्शने विशेषे सामान्यवाचिनो दृशेः औप-चारिकत्वात् । **अनुवादोऽवधारिते** इत्यस्योदाहरणं **नृसिंहाश्रमै**रुक्तं ' अग्निर्हिमस्य भेषजं ' इति । तत् स्वाध्यायाध्ययनवैधुर्यात् वैचित्याद्वा । अत्र वैदिकानां मन्त्रत्वप्रसिद्धेः, तस्या एव च द्वैतीयकमन्त्राधिकरणे मन्त्र-व्यवस्थाप्रयोजकत्वोक्तेः, विध्यन्तरैकवाक्यत्वाभावाच्च । तस्मात् ' वायुर्वै क्षेपिष्ठा देवता ' इत्याद्येव । **भूतार्थ-वादस्तद्धानात्** इत्यत्र **औपनिषदा** उदाहरन्ति, देवता-विग्रहभोजनतृप्तिप्रसादफलदातृत्वप्रतिपादकान् अर्थवादान् ' प्रजापतिरात्मनो वपामुदखिदत् ' ' आहुतिभिरेव हुतादो देवान् प्रीणाति ' ' तृप्त एवैनमिन्द्रः प्रजया पशु-भिस्तर्पयति ' इत्यादीन् । **तद्युक्तम्** । नवमे विग्रहादि-पञ्चकनिरासात् । तदेतन्नवमार्थप्रपञ्चे वक्ष्यामः । तस्मा-दत्र विरोधाभावेऽपि गुणवादाङ्गीकारात् । (वस्तुतस्तु पूर्वो-त्तरमीमांसाख्ययोर्देवताधिकरणयोः परस्परं विरोधे उत्तर-मीमांसास्थमेव देवताधिकरणं बलीयः । देवतानिरासस्य पूर्वतन्त्रे सूत्रकारैरनुक्तत्वात्, देवतासद्भावस्य च उत्तर-तन्त्रसूत्रकारैरेव साधितत्वात् देवतासत्त्वस्य दृढप्रमाणक-त्वाच्च । प्रकृतग्रन्थकारोक्तिस्तु पूर्वतन्त्रभाष्यजनितबुद्धि-मात्रप्रभवा आहंकारिकी इति । श्रीकुमारिलभट्टैरेव स्थलान्तरे मन्त्रार्थवादेतिहासपुराणप्रामाण्यमङ्गीकृत्य सृष्टिप्रलयादेरिव देवतासद्भावस्यापि स्वीकृतत्वाच्चेति **केवलः**) । तस्मात् भूतार्थवादस्तद्धानात् इत्यत्र ' यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत् तत् सुखं स्वःपदास्पदम् ॥ ' इत्येवोदाहार्यम् । उप-निषदोऽप्युदाहरणम् । ता अपि हि विध्युपयोगिस्वर्ग-स्वरूपनिरूपणार्थार्थवत् श्रवणादिविध्युपयोग्यात्मस्वरूप-निरूपणार्थत्वेन वाक्यशेषा एव । अत एव भावार्थपादे ( १।२ ) विंशतिं अर्थवादभेदान् ' तच्चोदकेषु मन्त्राख्या ' ( २।१।३२ ) ' शेषे ब्राह्मणशब्दः ' ( २।१।३३ ) इत्येतत्सूत्रद्वयव्याख्याने भाष्ये प्रदर्श्य

'एतदपि प्रायिकं' इत्युक्तम् (पृ. ४३५)। तत् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादेरुपलक्षणार्थं इत्युक्तं भट्टसोमेश्वरेण (सुधायां उक्तसूत्रद्वयेऽपि नैषा पङ्क्तिरुपलभ्यतेऽस्माभिः)। एवं 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वान् अमावास्यां यजते' इति विद्वद्वाक्यं दर्शपूर्णमासाभ्यां इति द्विवचनोपपत्त्यर्थसमुदायद्वयसिद्ध्यर्थं 'वैश्वदेवेन यजते' इतिवत् 'प्राचीनप्रवणे वैश्वदेवेन' इत्यतिदेशविधिस्थैकवचनोपपत्त्यर्थैकसमुदायसिद्ध्यर्थं भूतार्थवादोदाहरणमेव। उदाहरणान्तरं यथा 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इति। अत्र तृतीये उपरिधारणस्यापि हिशब्दत्यागेन विधिरित्युक्तम्। एतावता अर्थवादानां त्रैविध्यमुक्तम्। पुनरपि अर्थवादः अष्टत्रिंशद्विधः। **आशीः**— 'सोऽकामयत प्रजाः सृजेयेति' इति। **प्रलापः**— 'न चैतद् विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वा' इति। **परिदेवनं** — 'ये मामधुक्षन्त ते मां प्रत्यमुञ्चन्त' इति। तथा **परिदेवनसरूपः**— यावज्जीवाधिकरणे वार्तिके 'आहिताग्निर्वा एष सन् अग्निहोत्रं जुहोति न दर्शपूर्णमासौ यजते या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति' इति परिदेवनसरूपः अर्थवादः इत्युक्तम्। (अत्र वार्तिकपङ्क्तिस्तु 'आहिताग्निर्वा एष सन् इति दीक्षितस्य दानादौ निषिद्धे विध्यन्तरशेषभूतः परिदेवनसरूपार्थवादो भवति' इति। पृ. ६२९)। **प्रैषः**—'असुतः सोममाहर' इति। **अन्वेषणं**— 'इह वा सः, इह सः' इति। **प्रश्नः**— 'वेद कर्णवर्ती सूर्मि' इति। **प्रतिवचनं**— 'विद्मो वै' इति। **अनुषङ्गः**— 'यद्धस्तेन कण्डूयेत पामनंभावुकाः प्रजाः स्युः, यत् स्मयते नग्नंभावुकाः, कृष्णविषाणया कण्डूयते' इति। इह नग्नंभावुकाः इत्यत्र प्रजाः स्युः इत्यनुषङ्गः। **इतिकरणबहुलः**— 'उत्सृज्यांऽऽऽ नोत्सृज्यां ऽऽऽ इति मीमांसन्ते ब्रह्मवादिनः तद्वाहुः (तत् उ आहुः) उत्सृज्यमेवेति, अमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति, ते त्वाव नोत्सृज्येदित्याहुः ये अवान्तरं यज्ञं भेजाते' इति। **इत्याहोपनिबद्धः**— 'देवस्य त्वा सवितुः प्रसवे इति स्फ्यमादत्ते प्रसूत्यै' इतिविधेर्वाक्यशेषः, 'अश्विनोर्बाहुभ्यामित्याह, अश्विनौ हि देवानामध्वर्यू आस्तां, पूष्णो हस्ताभ्यामित्याह यत्यै' इति। **आख्यायिकारूपः**— 'पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत् सोऽश्वं प्राविशत्, तस्मादश्वो मेध्योऽभवदथैनमुत्क्रान्तमेधमत्यार्जत स किंपुरुषोऽभवत् तेऽश्वमालभन्त सोऽश्वादालब्धादुदक्रामत् स गां प्राविशत्' इत्यादिः। **हेतुवन्निगदः**— 'शूर्पेण जुहोति' इत्यस्य विधेर्वाक्यशेषः 'तेन ह्यन्नं क्रियते' इति। **निर्वचनरूपः**— 'तदेनमधिनोत् तद्दध्नो दधित्वं' इति। **निन्दाऽर्थवादः**— 'न ब्रह्मा सामानि गायति' इति निषेधस्यार्थवादः 'उपवीता वा एतस्याग्नयः' इति। **प्रशंसा**— 'वायुर्वै क्षेपिष्ठा देवता' इति। यद्यपि निन्दाऽर्थवादव्यतिरिक्तेषु सर्वेष्वपि अर्थवादेषु प्रशंसाऽर्थत्वमविशिष्टं, तथापि इह वायुप्रशंसाद्वारा विधेयवायव्यपशुयागप्रशंसा इतरत्र तु न तथा इति भेदः। **संशयार्थवादः**— 'होतव्यं गार्हपत्ये न होतव्यं' इति। **विधिकल्पकः**— 'यजमानसंमितौदुम्बरी भवति' इति। **परकृतिः**— 'इति ह स्माह बर्कुर्वार्ष्णिर्माषानेव मह्यं पचत' इति 'तस्मादारण्यमेवाश्नीयात्' इत्यस्य विधेर्वाक्यशेषः। **पुराकल्पः**— 'उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तानसुरा रक्षांसि निर्जघ्नुः' इति 'तस्माद् गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्' इतिविधेर्वाक्यशेषः। परकृतिपुराकल्पयोश्च भेदः वार्तिककृता एवमुक्तः, एकपुरुषकर्तृकमुपाख्यानं परकृतिः, बहुकर्तृकं पुराकल्प इति। (वा. २।१।३३)। बहुकर्तृकपदं द्विकर्तृकस्यापि संग्रहार्थं अनेककर्तृकं इति व्याख्यातं भट्टसोमेश्वरेण अर्थवादाधिकरणे। द्विकर्तृकोदाहरणं तु 'तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति। **व्यवधारणकल्पना**— 'वेतसशाखया अवकाभिश्चाग्निं विकर्षति' इत्यस्य विधेर्वाक्यशेषः 'आपो वै शान्ताः शान्ताभिरेवास्य शुचं शमयति' इति। अत्र उपक्रमस्थवेतसावकविषयकविधिवशेन उपसंहारस्थार्थवादगतं शुक्-शामकत्वं नापां, किंतु वेतसावकविषयं इति कल्प्यते। **हेतुविधिः**— आतिथ्यायां 'इडान्ता आतिथ्या संतिष्ठते'

इति वचनात् अनूयाजाभावेऽपि 'अष्टावुपभृति गृह्णाति' इति प्रकृतौ विहितस्य उपभृति अष्टगृहीतस्य चोदकप्राप्तस्य निवृत्त्यर्थं 'चतुर्गृहीतान्याज्यानि भवन्ति नह्यत्रानुयाजान् यक्ष्यन् भवति' इति चतुर्गृहीते विधीयमाने अनुयाजाभावस्य हेतुत्वाभिधानात् यत्रयत्र अनुयाजाभावः तत्रतत्र अष्टगृहीताभावः इति ज्ञायते, प्रकृतौ च अष्टग्रहणस्य चतुष्टुवद्वयलक्षणार्थत्वद्योतनात् प्रयाजार्थं जुह्वां समानयने नियोगतः अर्धमेव समानेतव्यमिति ज्ञायते । **विधेययागविशेषणदेवताभूतवायुप्रशंसाद्वारा विधेययागप्रशंसा**—'वायुर्वै क्षेपिष्ठा देवता' इति । **विधेयप्रशंसार्थः साक्षात्**—'प्रजापतिरात्मनो वपामुदखिदत् तामग्नौ प्रागृह्णात् ततोऽजस्तूपरः समभवत् तेनायजत् ततो वै स प्रजाः पशूनसृजत, यः प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमालभेत' इति । **विधेयतद्विशेषणव्यतिरिक्तप्रशंसाद्वारा विधेयप्रशंसार्थः**—दशमे 'अभिघार्यास्त्रैयम्बका नाभिघार्या इति, यदभिघारयेत् तद्रुद्रायास्ये पशूनिदध्यात्, यन्नाभिघारयेत् न तद्रुद्रायास्ये पशूनिदध्यात्, तन्न सूक्ष्यं अभिघार्या एव, न ह्यनभिघृतं हविरस्ति' इत्युदाहृतम् । तत्र अर्थवादाधिकरणे वार्तिककारेणोक्तं 'यन्नाभिघारयेन्न तद्रुद्रायास्ये पशूनिदध्यात्' इति स्तुतमपि अनभिघारणं नाश्रयिष्यते इति । **विध्यन्तराविहितस्य प्रकृतविधेयव्यतिरिक्तस्य निन्दाद्वारा विधेयप्रशंसा**—नवमे 'यदृचा स्तुवते तदसुरा अन्ववायन्, यत् साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत' इत्युदाहृतम् । तत्रार्थवादाधिकरणे वार्तिककृता उक्तं तत्रान्ते सामविधानात् तत्प्रशंसार्थं ऋचां निन्दा इति गम्यते इति । **विध्यन्तरविहितस्य प्रकृतविधेयव्यतिरिक्तस्य निन्दाद्वारा विधेयप्रशंसा**—'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् ॥ तस्मादुदिते होतव्यं' इति । एवं 'यथा वाऽतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तत् यदुदिते जुह्वति, तस्मादनुदिते होतव्यम्' इति । अत्र पूर्वत्र उत्तरविधिविहितानुदितहोमनिन्दाद्वारा उदितहोमस्तुतिः । उत्तरत्र पूर्वविधिविहितोदितहोमनिन्दाद्वारा अनुदितहोमस्तुतिः इति । **फलविधिः**—'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति । अयं ४।३।१ अधिकरणे । **निषेधफलार्थवादः**—'तस्माद् ब्राह्मणाय नावगुरेत' इति निषेधे 'यो ब्राह्मणायावगुरेत्तं शतेन यातयात्' इति वर्षशतयातनारूपं फलं वाक्यशेषात् । अयं शंय्वधिकरणे निरूपितः । **फलविधिसरूपः**—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति । अयं ४।३।१ अधिकरणे निरूपितः । **देवताविधिः**—वाजसनेयी देवयाज्ञिकः 'अन्नादं वा य एतमात्मनो जनयते यदग्निं' इति पूर्णाहुतेर्वाक्यशेषं अग्निदेवताप्रापकमाह । **देवताविधिसरूपः**—'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति शाखाभेदेन उपांशुयाजक्रमे आम्नातैः वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलैः प्राप्ता विष्ण्वाद्या देवता उपांशुयाजस्तुत्यर्थं कीर्त्यन्ते इत्युक्तं उपांशुयाजाधिकरणे (२।२।४) । **द्रव्यविधिः**—'वासः परिधत्ते' इति विधौ 'एतद्वै सर्वदेवत्यं वासो यत् क्षौमं' इति क्षौमशब्दस्य यौगिकत्वात् आर्थवादिको द्रव्यविधिः । इदं च 'संदिग्धेषु वाक्यशेषात्' (१।४।१९।२९) इत्यधिकरणान्ते भाष्यकारेणोदाहृतम् । **द्रव्यविधिसरूपः**—महाव्रते 'प्रेङ्खमारुह्य होता शंसति' इति विधौ 'यदा वै प्रजा मह आविशन्ति प्रेङ्खांस्तर्हि आरोहन्ति' इति प्रेङ्खशब्दस्य यौगिकत्वात् द्रव्यविधिसरूपः अर्थवादः । तदेतत् 'अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' (१।३।३।७) इत्यत्र सदाचारप्रामाण्यप्रतिपादनपरे वर्णके वार्तिककृता उदाहृतम् । (तत्र नोपलभ्यते—के.) । 'एतानि वै दश यज्ञायुधानि' इति च । चतुर्थे (४।१।४ अधि०) हि एतच्छब्दस्य सर्वनाम्नो द्रव्यवचनत्वात् यागे स्फ्यादिद्रव्यविधिं आशङ्कितं निरस्य अर्थवादमात्रं इत्युक्तम् । **जातिविधिः**—आग्नेये 'यदष्टाकपालः' इति विधितः 'संस्कृतं भक्षाः' (पा० ४।२।१६) इत्यस्मिन्नर्थे तद्धितोत्पत्तेः भक्षद्रव्ये प्राप्ते मण्डकादिप्रसक्तौ 'ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यन्' इति वाक्यशेषः

पुरोडाशत्वजातिमात्रप्रापकः । इदमपि 'संदिग्धेषु वाक्यशेषात्' (१।४।१९।२९) इति न्यायादेव सिद्धम् । **जातिविधिसरूपः—** 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति । एतद्धि अप्राप्तपौर्णमासीकालविधिपरत्वात् न आज्यत्वजातिविधिः किंतु 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यं' इति प्राप्ताया उपांशुयाजद्रव्यपरिच्छेदकाज्यत्वजातेरनुवादः इत्युक्तं दशमे उपोपान्त्ये । **गुणविधिः—** 'सृष्टीरुपदधाति' इति वार्तिककृन्मते । भाष्यकृद्वत् नोपधानमात्रविधिः मन्त्रानुवादश्च, किंतु उपधानमात्रविधावपि दोषोक्तेः मन्त्रमात्रविधावपि दोषोक्तेः विशिष्टविधौ मुख्यानां सृष्टिलिङ्गकानामेव मन्त्राणां विधिप्रसक्तौ 'यत् सप्तदशेष्टका उपदधाति' इति वाक्यशेषात् गौण्या सप्तदशसंख्याविधिः । तदेतत् सृष्ट्यधिकरणे (भूमा १।४।१२।२३-५) भट्टसोमेश्वरेणोक्तम् । **गुणविधिसरूपः—** 'यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' इत्यष्टसंख्याविधिसरूपत्वात् । तदिदमुक्तं वैश्वानराधिकरणे (१।४।१२) । **क्रियाविधिः—** मृताग्निहोत्रे 'अधस्तात् समिधं धारयन्ननुद्रवेत्' इति विधेर्वाक्यशेषः 'उपरि हि देवेभ्यो धारयति' इति । तत्र तृतीये (३।४।५) उक्तं, देवेभ्यः इत्युक्तेः दैवाग्निहोत्रे जीवदग्निहोत्रे उपरिधारणस्य कथंचिदपि आचारादिना अप्राप्तेः हिशब्दपरित्यागेन विधिः कल्प्यते इति । **क्रियाविधिसरूपः—**'यो विदग्धः स नैर्ऋतो, योऽशृतः स रौद्रो, यः शृतः स सदेवः, तस्मादविदहता श्रपयितव्यः सदेवत्वाय' इति दर्शपूर्णप्रकरणाधीतं वाक्यं औदुम्बराधिकरणे 'प्रकरणे च संभवन्नपकर्षो न कल्प्यते विध्यानर्थक्यं हि तं प्रति' (१।२।२।२४) इति सूत्रे भाष्यकृता उदाहृत्य 'विधिपक्षे तु यत्र नैर्ऋतस्तत्र विदग्धता नीयेत' तथा सति प्रकरणं बाध्येत इति क्रियाविधिर्निरस्तः इति । **निमित्तविधिः—** अग्नौ श्रूयते 'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामि गर्भो विपद्यते तादृगेव तदार्तिमार्च्छेत् वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्' इति । अत्र चतुर्थे (४।४।६) 'वैश्वानरश्च नित्यः स्यात्' इत्यधिकरणे संवत्सराभरणं अर्थवादमात्रं इति नित्यता इति पूर्वपक्षयित्वा कर्तृसमानाधिकरणो यच्छब्दः निमित्ततां संवत्सराभरणस्य प्रतिपादयति इति नैमित्तिको वैश्वानरयागः इति सिद्धान्तितम् । **निमित्तविधिसरूपः—** ज्योतिष्टोमे श्रुतं 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्यते, यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनं' इति । 'दधिग्रहो नैमित्तिकः श्रुतिसंयोगात्' इत्यधिकरणे (४।४।५) देवतान्तरायो निमित्तं यच्छब्दात् इति पूर्वपक्षिते सिद्धान्तितं अकर्तृसमानाधिकरणस्य यच्छब्दस्य निमित्ततापतिपादकत्वाभावात् अर्थवादमात्रं अन्तरायश्रवणं इति नित्यो दधिग्रहः इति । **कर्तृविधिः—** षष्ठे (६।८।१) चतुर्होतृसंज्ञकमन्त्रैः पुरुषार्थतया विहिता जपा होमाश्च 'चतुर्होतारं प्रयुञ्जीत' 'चतुर्होत्रा प्रजाकामो जुहुयात्' इत्यत्र पूर्वपक्षितं, होमा आहवनीये कार्याः 'एषा वा अनाहिताग्नेः' इत्यर्थवादमात्रं जपस्तुत्यर्थं, इष्टिशब्देन जपोक्तेः यैषा अनाहिताग्नेः क्रिया जपात्मिका सेष्टिः इति । सिद्धान्तस्तु वचनानर्थक्येष्टिशब्दलक्षणापरिहाराय षष्ठीश्रुत्या अनाहिताग्न्यधिकारा होमास्तत्कर्तृकाः इति । **कर्तृविधिसरूपः—** षष्ठे (६।७।१२) 'इति ह स्माह बट्कुर्वार्ष्णिर्माषानेव मह्यं पचत' इति वृष्णिगोत्रैरेव माषपाकः कर्तव्यो नान्यैः इति पूर्वपक्षयित्वा निरस्तम् । तदिदं माषपाकविधिकल्पनां कृत्वा चिन्तितम् । **कालविधिः—** 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति । तदेतत् दशमे उपोपान्त्ये उक्तम् । **कालविधिसरूपः—** 'अपहतपाप्मानो वा ऋतव इति यदा क्व चन कदा चनोपनमेदथादधीताथ यजेत' इत्यस्य शतपथविधेः शेषः । तेन न वसन्तव्यतिरिक्तऋतुविधिर्ज्योतिष्टोमे, यदा क्व चन इति विधित एव तद्विधिसिद्धेः । इदं च पञ्चमे (५।४।५) 'स्वकाले स्यादविप्रतिषेधात्' इत्यधिकरणे तन्त्ररत्ने यदा क्व चनेत्यादेः शतपथवाक्यस्य ज्योतिष्टोमे ऋत्वन्तरविधित्वोक्तेः, तच्छेषस्य कालविधिसरूपत्वं अर्थादुक्तम् । **देशविधिः—** ताण्डके 'सरस्वत्या विनशने दीक्षन्ते, अध्वर्युः शम्यां परास्यति, सा यत्र निपतति तद्गार्हपत्यः, ततः षट्त्रिंशतं प्रक्रमान् प्रक्रामति तदाहवनीयः । प्रतीपं यन्ति, पूर्वेण पक्षस

यन्ति, दृषद्वत्या अप्यये अपोनप्त्रीयं चरुं निरुप्य यन्ति' इति विधाय वाक्यशेषः 'चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात् प्लाक्षः प्रस्रवणः' इति। स तावन्तं देशं याने विदधाति। अत एव तदनूद्य उपसंहृतं 'यदा प्लाक्षं प्रस्रवणमागच्छन्ति अथोत्थानं, प्लाक्षं प्रस्रवणमागम्य अग्नये कामायेष्टिं निर्वपन्ते, तस्यामश्वां च पुरुषीं च धेनुके दत्त्वा कारपचवं प्रति यमुनामवभृथमभ्यवयन्ति' इति। वार्तिके तु चतुस्त्रिंशदाश्वीनानि इति श्रुत्यन्तरं व्याकरणाधिकरणे (३।४।८) उक्तम्। **देशविधिसरूपः**— 'षट्त्रिंशत्प्रक्रमा प्राची, त्रिंशज्जघनेन, चतुर्विंशतिः पुरस्तात्' इति सौमिकमहावेदिमानविधेः वाक्यशेषः 'इयति शक्ष्यामहेऽस्यां कर्तुं' इति तदेतत् 'चिकीर्षया च संयोगात्' इत्यधिकरणे (३।७।३) तृतीये भट्टसोमेश्वरेणोक्तम्। **निषेधविधिः**— ऐतरेयब्राह्मणे हरिश्चन्द्रोपाख्याने 'हिरण्यकशिपावासीन आचष्टे' इति होतृकर्तृकस्य क्रत्वर्थस्य 'पुत्रकामा ह्याप्याख्यापयेरन्' इति च पुरुषार्थस्य शौनःशेपाख्यानविधेः वाक्यशेषे 'नियोक्तारं न विविदुः' 'विशसितारं न विविदुः' इति शामित्रकर्त्रलाभोक्त्या 'मह्यमपरं शतं दत्ताहमेनं विशसिष्यामि' इति च लोभात् प्रवृत्त्युक्त्या शामित्रनिन्दया तन्निषेधः कल्प्यते। **यद्यपि** चात्र 'न हिंस्यात्' इति सामान्यनिषेधः ऋत्विजां स्वाधिकारिकः पराधिकारिकेण सामाख्यानिकेन कर्तृत्वमात्रतया ऋत्विजः स्पृशताऽपि अबाधितः प्रवृत्तोऽस्ति, अत एव तृतीये 'शमिता च शब्दभेदात्' इत्यधिकरणे (३।७।१३) वार्तिककृता उक्तं 'अत एव आर्त्विज्यं निन्दन्ति' इति, **तथापि** विशेषनिषेधो दोषविशेषार्थत्वेन अर्थवानेवेति। **निषेधविधिसरूपः**—'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवेधुकाश्च' इति। दशमे हि अनाहुतिरिति निन्दया निषेधकल्पनां पूर्वपक्षयित्वा 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुं' इति शाखान्तराधिकरणे प्रसङ्गादुक्तेन न्यायेन 'यत् पयसाऽग्निहोत्रं जुहोति' इति पयोविधिशेषत्वात् न निषेधकल्पना इति सिद्धान्तितम्। **संदिग्धार्थोपादाननिर्णायकः**— 'सारस्वतौ भवतः' इति विधौ 'एतद्वै दैव्यं मिथुनं यत् सरस्वती सरस्वांश्च' इति। अत्र सरस्वान् देवता यस्य असौ सारस्वतः, अपरोऽपि तथा, ततः सारस्वतश्च सारस्वतश्च सारस्वतौ, उत सरस्वान् देवता यस्य इत्येकस्तद्धितः, अपरस्तु सरस्वती देवता यस्य इति तद्धितः, ततस्तयोरेकशेषः इति संदिग्धे स्त्रीपुंसदेवत्य एवायं न पुंद्वयदेवत्यः इति निर्णयः अस्मादर्थवादाद्भवति। तदेतत् पञ्चमे 'मुख्यक्रमेण वाऽङ्गानां' इत्यधिकरणे (५।१।७) शास्त्रदीपिकायामुक्तम्। **संदिग्धार्थशक्तिग्राहकः**— 'यवमतीभिरद्भिरौदुम्बरीं प्रोक्षति' इति विधेर्वाक्यशेषः 'यदा वा अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इति। तदुक्तं 'शास्त्रस्था वा तन्निमित्तत्वात्' इत्यधिकरणे (१।३।५)। **उपमानार्थवादः**— 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इति। तदुक्तं 'तद्व्यपदेशं च' इत्यधिकरणे नामधेयपादे (१।४।४।५)। **बाल. पृ. ४८–५८.**

**अर्थवादाधिकरणम्**। अर्थवादन्यायः। अर्थवादप्रामाण्याधिकरणम्॥

**(अर्थवादपादस्य विषयः कथ्यते) वा—'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः। विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते॥'** सामान्यतः प्रामाण्ये सिद्धे अधुना विभज्य विनियोगः प्रतिपाद्यते। अवधृतप्रामाण्यस्य वा वेदस्य इदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रति उपयोगः प्रतिपाद्यते।

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते। १।२।१।१॥**

**भाष्यं**— 'सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' 'प्रजापतिरात्मनो वपामुदक्खिदत्' 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि। तानि किं कंचिद्धर्मं प्रमिमते, उत न इति भवति विचारणा। तदभिधीयते। क्रिया कथमनुष्ठेया इति तां वदितुं समाम्नातारो वाक्यानि समामनन्ति। तत् यानि वाक्यानि क्रियां

नावगमयन्ति क्रियासंबद्धं वा किंचित्, एवमेव भूतमर्थं अन्वाचक्षते, रुदितवान् रुद्रः, वपामुच्चिखेद प्रजापतिः, देवा वै दिशो न प्रजज्ञिरे इत्येवंजातीयकानि, तानि कं धर्मं प्रमिमीरन्? अथोच्येत अध्याहारेण वा, विपरिणामेन वा, व्यवहितकल्पनया वा, व्यवधारणकल्पनया वा, गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यते इति, स कल्प्यमानः कः कल्प्येत? रुद्रः किल रुरोद, अतः अन्येनापि रोदितव्यम्। उच्चिखेद आत्मवपां प्रजापतिः, अतः अन्योऽपि उत्खिदेत् आत्मनो वपाम्। देवा वै देवयजनकाले दिशो न प्रज्ञातवन्तः, अतः अन्योऽपि दिशो न प्रजानीयात् इति। तच्चाशक्यम्। इष्टवियोगेन अभिघातेन वा यत् बाष्पनिर्मोचनं तत् रोदनं इत्युच्यते। न च तदिच्छातो भवति। न च कश्चित् आत्मनो वपां उत्खिद्य तामग्नौ प्रहृत्य तत उत्थितेन तूपरेण पशुना यष्टुं शक्नुयात्। न च देवयजनाध्यवसानकाले के चित् दिशो मुह्येयुः। अत एषां आनर्थक्यम्। तस्मात् एवंजातीयकानि वाक्यानि अनित्यानि इत्युच्यन्ते। यद्यपि च नित्यानि, तथापि न नित्यमर्थं कुर्वन्ति इति। स एष वाक्यैकदेशस्य आक्षेपः, न कृत्स्नस्य वाक्यस्य। **ननु** एकदेशाद्विना साकाङ्क्षः पदसमूहो न पर्याप्तः स्वस्मै प्रयोजनाय, अत आक्षिप्त एवेति। **नैवम्।** भवति हि कश्चित् पदसमूहः, यः अर्थवादेभ्यो विनाऽपि विदधाति कं चिदर्थम्। यानि पुनः तैः सह संयुज्य अर्थान्तरे वर्तन्ते, तानि एकदेशाक्षेपेण आक्षिप्यन्ते।

**वा—** तत्र पूर्वपक्षवाद्यभिप्रायः— 'चोदनालक्षणोऽर्थो धर्मः' (१।१।२) इत्युपक्रमात् 'तस्य ज्ञानमुपदेशः' (१।१।५) इति परामर्शात्, 'तद्भूतानां क्रियार्थेन समाम्नायः' (१।१।२५) इत्युपसंहारात् विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितम्। न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः। नाप्यनधिगतार्थबोधनं मुक्त्वा अन्यः शब्दस्य व्यापारोऽस्ति इत्युक्तमेव। अतश्च यान्त्येव साध्यसाधनेतिकर्तव्यतावाचित्वेन विधिप्रतिषेधान्तर्गतानि, तेषां भवतु प्रामाण्यम्। यानि तु अतिरिक्तार्थानि अर्थवादमन्त्रनामधेयानुपातीनि 'सोऽरोदीत्' 'इषे त्वोर्जे त्वा' 'उद्भिदा' इत्येवमादीनि, तानि सत्यपि अपौरुषेयत्वे अर्थाभिधानसामर्थ्ये च धर्माधर्मयोः अप्रमाणं अतदर्थत्वात्। यथाश्रुतगृहीतानां तावत् प्रतीत्यनुपलब्धेः प्रसिद्धमेव अतदर्थत्वम्। अथ कया चित् शब्दवृत्त्या तादर्थ्यं कल्प्येत, एवमपि व्यवस्थाहेत्वभावात् न धर्माधर्मयोः अवधारणं स्यात्। यदेव हि वाक्यं गृहीतं, तदेव अध्याहारविपरिणामादिभिः यथेष्टं कल्पयितुं शक्यते। तद्यथा, सोऽरोदीत् इत्येतदेव तावत् वाक्यं विशिष्टपुरुषाचरितोपन्यासद्वारा रोदनकर्तव्यतापरं, अथवा महतामपि एवंविधाः प्रमादाः संभवन्ति तस्मात् प्रयत्नेन वर्जयितव्यमिति। अतः विधिप्रतिषेधयोरस्फुटत्वात् धर्माधर्मत्वेन निर्णये शक्त्यभावः। शास्त्रदृष्टविरोधादयश्च स्थिता एव। **यत्तु** भूतान्वाख्यानमात्रं यथावस्थितैः प्रतिपाद्यते, **तत्र** यद्यपि सत्यत्वमस्त्येव, तथापि न तेन प्रयोजनं इत्यानर्थक्यम्। अपि च 'धूम एवाग्नेर्दिवा' इत्यादीनां स्वार्थेऽपि अप्रामाण्यं वक्ष्यते। विध्येकवाक्यत्ववशेनैव तेषां रूपभङ्गः क्रियते। न च तस्यापि किं चित् प्रमाणमस्ति। भिन्नैरपि हि तैः किं चित् प्रतिपादयितुं शक्यमेव। न च तत् प्रतिपादयतां निष्प्रयोजनता इति अविज्ञायमानप्रयोजनवदर्थान्तरकल्पना शक्या। नहि लोष्टं पश्यतः तद्दर्शनं निष्प्रयोजनं, इति सुवर्णदर्शनता कल्प्यते। सर्वाण्येव च प्रमाणानि उपयुज्यमानं अनुपयुज्यमानं वा अर्थं आत्मगोचरताऽऽपन्नं गमयन्ति। तेनैव च एषां हानोपादानोपेक्षाबुद्धयः फलत्वेन वर्ण्यन्ते। अन्यथा हि उपादानमेव एकं फलं स्यात्। **अपिच** प्रमाणोत्पत्त्युत्तरकालं प्रयोजनवत्त्वं अप्रयोजनवत्त्वं वा विज्ञायते, न तु तद्वशेन प्रमाणोद्भूतिः। तस्मात् यो यद्रूपोऽर्थः प्रतीयते, स तथैव प्रयोजनवत्त्वं अप्रयोजनवत्त्वं वा प्रतिपद्यते। नहि प्रयोजनवदेव प्रमातव्यं इति कश्चित् नियमहेतुरस्ति। यत्रापि तावत् स्वाधीनः प्रमाणविनियोगः तत्रापि एतत् दुर्लभं, किमुत अबुद्धिपूर्वनित्यावस्थितवेदोत्थापितज्ञानग्राह्ये। न च वेदस्य प्रयोजनवदर्थाभिधानशक्तिः प्रथमं अवधृता। अयमेव हि परीक्षाकालो वर्तते, कीदृशं पुनर्ब्रवीतीति। तच्च विदित्वा यथाऽनुरूपं अनुष्ठातुं क्षमा

वयं, न तु वेदं पर्यनुयोक्तुं, किमयं निष्प्रयोजनमभिदधाति, तद्वा अभिदधत् किमर्थं प्रयत्नेन धार्यते इति। सर्वपुरुषाणां केवलं प्रतिपत्तृत्वेन पारतन्त्र्यात् वेदग्रहणोत्तरकालं च परीक्षावसरात्। नहि अनधीतवेद एव आदौ परीक्षितुं क्षमः। पश्चात् परीक्षमाणस्य तु न अबुद्धिपूर्वनिर्वृत्तमध्ययनं प्रकरणगतन्यायेन निश्चयहेतुर्भवति। तस्मात् यथैव अग्निहोत्रादिवाक्यानां गम्यमानप्रयोजनवत्त्वात् आनर्थक्यं निष्प्रमाणकं इति नाश्रीयते, तथैव एषां प्रयोजनवत्त्वं नाश्रयितव्यम्। नहि यथाऽवगताभ्युपगमात् अन्यत् किं चित् साधीयः परीक्षकाणाम्। योऽपि च क्लेशेन स्तुतिनिन्दाऽऽत्मकोऽर्थः कल्प्येत, स भावनया अंशत्रयानन्तःपातित्वात् न गृह्यते, तथा च अगृहीतं न विधिप्रतिषेधौ आश्रयतः, तदाश्रितं च दूरे पुरुषार्थात् भवति। अपि च एवंविधेषु स्तुतिनिन्दाकल्पनायां इतरेतराश्रयप्रसङ्गः। स्तुतिनिन्दाऽऽत्मकत्वेनैव हि एकवाक्यता, तया च अनुन्मीलितस्तुतिनिन्दोत्प्रेक्षाऽऽश्रयणम्। न च अन्यतरमूलप्रसिद्धिरस्ति, यतो व्यवतिष्ठेत। तस्मात् पृथगवस्थितानां दृष्टत्वात् आनर्थक्यमेव उपपन्नतरं इति। 'स एष वाक्यैकदेशस्य' इति (भाष्यम्) विध्युद्देशातिरिक्तस्य सिद्धान्ताभिप्रायेण एकदेशत्वं, न तु पूर्वपक्षे, भिन्नवाक्यत्वाभ्युपगमात्। अथवा वाक्यानां मध्ये एकदेशाक्षेपः, कतिपयानां इत्यर्थः। तत्र यानि तावत् केवलविधियुक्तानि, तेषु नैवाशङ्का। यान्यपि लिङ्गादिमन्ति प्रागर्थवादेभ्यो विधिसमर्थानि तैः संयुज्य अर्थान्तरे स्तुतिस्तुत्यसंबन्धे वर्तन्ते, तेषां अर्थवादाभावे तन्मात्रमेव हीयते, न तु विधित्वेन पुरुषार्थताऽपि। यानि तु वर्तमानापदेशयुक्तानि स्तुतिनिरपेक्षविध्यसमर्थानि, यथा 'यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति' इत्येवमादीनि, तानि एकदेशद्वारेण समस्तानि आक्षिप्यन्ते।

**शास्त्रदृष्टविरोधाच्च। २॥**

**भाष्यं**—'स्तेनं मनः' 'अनृतवादिनी वाक्' इत्येवंजातीयकानां धर्मं प्रति अप्रामाण्यं भूतानुवादात्। विपरिणामादिभिरपि कल्प्यमाने स्तेयं मृषोद्यं च कर्तव्यं इत्यापतति। तच्च अशक्यं स्तेयानृतवादप्रतिषेधं अबाधमानेन अनुष्ठातुम्। न च विकल्पः, वैषम्यात्। एकः कल्प्यो विधिः, एकः प्रत्यक्षः। **अथ** दृष्टविरोधः। 'तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः' 'तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इति। अस्माल्लोकात् उत्क्रम्य अग्निः आदित्यं गतः, रात्रौ आदित्यः तं, इत्येतदुपपादयितुं इदम्। उभयमपि दृष्टविरुद्धमुच्यते। तस्मात् नैषाऽवधारणा सिध्यतीति। **अपरो** दृष्टविरोधः, 'न चैतद् विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा' इति अक्रियाऽर्थत्वादनर्थकम्। अथ अयमर्थः, नैवैतत् ज्ञायते किं वा ब्राह्मणा वयं, उत अब्राह्मणा वा इति, प्रत्यक्षविरुद्धमप्रमाणम्। **अपरः** शास्त्रदृष्टेन विरोधः 'को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वा' इति। यदि प्रश्नोऽयं, अक्रियाऽर्थत्वात् अनर्थकः। अथ अनवक्लृप्तिः, शास्त्रदृष्टेन विरोधः। अतः प्रत्यक्षविरुद्धमप्रमाणम्।

**वा**—वाङ्मनसयोर्विद्यमानं अविद्यमानं वा स्तेयानृतवदनं उच्यमानं धर्मे स्वार्थेऽपि वा न प्रामाण्यं प्रतिपद्यते। अथ तु अध्याहारादिभिः एवं कल्प्येत 'वाङ्मनसयोः सर्वशरीरेषु चेष्टाः प्रति प्राधान्यात् इतरभूतेन्द्रियैरपि तच्चरितं अनुवर्तितव्यं' इति, ततः शास्त्रविरोधः। तत्र एतत् स्यात्, विहितप्रतिषिद्धत्वात् षोडश्यादिवत् विकल्पः इति। इतरस्तु कल्पनीयक्लृप्तत्वेन वैषम्यमाह। **ननु** च अत्यन्तदुर्बलोऽपि विधिः तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति इति 'प्रतिषेधः प्रदेशेऽनारभ्यविधाने च' इत्यत्र (१०।८।१।१) वक्ष्यते। **सत्यम्**। यस्य शास्त्रमन्तरेण अप्राप्तिरस्ति, तत्र एतदेवम्। यत् पुनः अर्थप्राप्तं निषिध्यते, तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधाः बलीयांसो भवन्ति इति तत्रैव वक्ष्यते 'अर्थप्राप्तवदिति चेत्' इति (१०।८।१।२)। स्तेयानृतवादयोश्च विनैव शास्त्रेण प्रवृत्तयोः विधिनिरपेक्षः अवस्थितः प्रतिषेधः, इति कल्प्यं विधिं बाधते, तस्मादानर्थक्यम्।

अतः परं स्वार्थेनैव आनर्थक्यं प्रतिपादयति। रात्रिंदिवं धूमार्चिषोरपि दर्शनात् 'धूम एव' 'अर्चिरेव' एतद् द्वयमपि प्रत्यक्षविरोधात् अवधारणं न संभवति। **अथवा** यदनेन प्रतिपाद्यते 'दिवा अग्निः आदित्यमनुप्रविशति, रात्रौ आदित्यं' इति, तदवधारणं नोपपद्यते, पूर्वोक्तस्य

हेतोरसिद्धत्वात् । ततश्च अग्निसूर्ययोः नक्तंदिवं व्यवस्थितज्योतिष्ट्वप्रतिपादनाय स्तुतिरपि असत्यत्वात् नावकल्पते इत्येषा वा अनवधारणा । **अथवा** 'सूर्यो ज्योतिः' इति प्रातरयं मन्त्रः, 'अग्निर्ज्योतिः' इत्येष सायं, इत्येषा मन्त्रयोरवधारणा न सिध्यति। **अथवा** समस्तो वेदः प्रमाणं इत्येषा अवधारणा न सिध्यति इत्यभिप्रायः। शास्त्रविरोधः, दृष्टविरोधद्वयं, पुनः शास्त्रादृष्टविरोधः इति यत्, सदृशन्यायानि सन्ति क्रमभेदेन चोद्यते, तत् परिहारसूत्रक्रमभेदानुरोधेन । 'न चैतद् विद्मः' इति आर्षेयवरणशेषोऽभिमतः । स चायं क्रियातत्संबन्ध्यनभिधानात् तद्विषयत्वेन अप्रमाणम् । नहि ब्राह्मणत्वाज्ञानसंदेहविपर्ययाः केन चिदंशेन कर्मणि उपयुज्यन्ते । न च प्रत्यक्षविरुद्धा स्तुतिः संभवति । न च स्वतन्त्रब्राह्मणत्वाज्ञानप्रतिपादनेन प्रामाण्यम् । कथं पुनरयं दृष्टविरोधः ? यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयः, लोकप्रसिद्धत्वात् वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धं ? प्रत्यक्षेणेति ब्रूमः । कस्मात् पुनः मातापितृसंबन्धानभिज्ञाः चक्षुःसंनिकृष्टेषु मनुष्येषु अनाख्यातं न प्रतिपद्यन्ते ? शक्त्यभावात् । यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः, नैतत्तुल्यम् । वृक्षत्वं प्रागभिधायकव्यापारात् जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिषु अनुगतं शाखादिमद्रूपेण दृश्यते, न तु ब्राह्मणत्वम् । **अपिच** व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते। न च उपवीताध्ययनादि निमित्तं, वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात् संदिग्धम्। सर्वं च दुष्टशूद्रेषु संभाव्यमानत्वात् अनिश्चितम् । यस्तु अविचारितसिद्धमेव प्रतिपद्येत, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । **नैष दोषः**। क्व चिद्धि का चित् जातिग्रहणे इतिकर्तव्यता भवति इति वर्णितमेतत् । तेन यथैव आलोक–इन्द्रिय–अनेकपिण्डानुस्यूति–शब्दस्मरण–व्यक्ति– महत्त्व- संनिकर्ष–आकारविशेषादयः अन्यजातिग्रहणे कारणं, तथैव अत्र उत्पादकजातिस्मरणम् । अयं च उत्पाद्योत्पादकसंबन्धः मातुरेव प्रत्यक्षः, अन्येषां तु अनुमानातोपदेशाद्यवगतः कारणं भवति । न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति, चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसंबन्धानुसारि प्रत्यक्षं इत्येतत् साधितम् । न च यत् सहसा सर्वस्य प्रत्यक्षं न भवति, तत् निपुणतोऽपि पश्यतां न प्रत्यक्षं इत्येतदप्युक्तमेव । स्त्र्यपराधात्तु दुर्ज्ञानोऽयं संबन्धः इति स्वयमेव वक्ष्यति ( १।२।१।१३ ) । न च तावन्मात्रेण प्रत्यक्षता हीयते । नहि यत् गिरिशृङ्गमारुह्य गृह्यते, तदप्रत्यक्षम् । न च स्त्रीणां क्व चित् व्यभिचारदर्शनात् सर्वत्रैव कल्पना युक्ता, लोकविरुद्धानुमानासंभवात् । विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्ति आत्मानम् । अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारंपर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि। तथा च प्रतिकुलं गुणदोषस्मरणात् तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । न च भर्तृव्यतिरेककृतेन वर्णसंकरः अपराधेन जायते । दृश्यते हि अपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासां अशुभफलोपभोगः भवेत्, न तु अपत्यानां वर्णसंकरः । न च नियोगतः ( नियमेन ) वर्णान्तरैरेव सह प्रमादः। सवर्णेन च उत्पादितस्य नैव वर्णान्तरत्वापत्तिः । संकरजातानामपि च पुनः उत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यतरवर्णापत्तिः स्मर्यते ( यास्मृ. १।९६ ) । तत्र तु एतावन्मात्रं आगमिकं प्रत्येतव्यं, नहि अयं पुरुषेयत्तानियमः लौकिकप्रमाणगम्यः । तस्मात् सत्यपि सारूप्ये यथा केन चिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं, तथैव दर्शनस्मरणपारंपर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि इति भवति अज्ञानवचनस्य प्रत्यक्षविरोधः । येषामपि आचारनिमित्ता ब्राह्मणत्वादयः, तेषामपि दृष्टविरोधस्तावत् अस्त्येव । न तु आचारनिमित्तवर्णविभागे प्रमाणं किंचित् । सिद्धानां हि ब्राह्मणादीनां आचारा विधीयन्ते, तत्र इतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारः, तद्वशेन ब्राह्मणादय इति । स एव शुभाचारकाले ब्राह्मणः, पुनः अशुभाचारकाले शूद्र- इति अनवस्थितत्वम् । तथा एकेनैव प्रयत्नेन परपीडाऽनुग्रहादि कुर्वतां युगपत् ब्राह्मणत्वाब्राह्मणत्वविरोधः । एताभिरुपपत्तिभिस्तु अयं प्रतिपाद्यते । न तपआदीनां

समुदायो ब्राह्मण्यं, न तज्जनितः संस्कारः, न तदभिव्यङ्ग्या जातिः, किं तर्हि मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या। तस्मात् पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते 'मासेन शूद्री भवति' इत्येवमादीनि कर्मनिन्दावचनानि, अथवा वर्णत्रयकर्महानिप्रतिपादनार्थानि इति वक्तव्यम्। पूर्ववच्च अत्रापि क्लृप्तत्वात् प्रत्यक्षस्य, कल्प्येन अज्ञानविधिना सह विकल्पो न संभवति। अपि च तत्र अनुष्ठानात्मकत्वात् भवेदपि, न तु अत्र वस्तुरूपाणां ऐकात्म्येन अविकल्प्यत्वात्। 'को हि तद्वेद' इति पूर्ववदेव अज्ञानसंशयविपर्ययाणां अनौपयिकत्वात् आनर्थक्यम्। निश्चितवेदप्रामाण्यैश्च त्रैविद्यवृद्धैः विज्ञायमानत्वात् स्वार्थेऽपि आनर्थक्यम्। विकल्पाभावश्च अनन्तरोक्तवत्।

**तथा फलाभावात्। ३॥**

**भाष्यं**— गर्गत्रिरात्रब्राह्मणं प्रकृत्य उच्यते 'शोभतेऽस्य मुखं य एवं वेद' इति यदि भूतानुवादः, अनर्थकः। अथ अध्ययनफलानुवादः, ततः असदनुवादः। कालान्तरे फलं भविष्यतीति चेत्, नहि अत्र प्रमाणमस्ति। विधिः स्यादिति चेत्, नैष विधिपरः। 'द्रव्यसंस्कारकर्मसु' (४।३।१।१) इति चिन्तयिष्यति एतत् उपरिष्टात् किं फलविधिः, उतार्थवाद इति। इह तु किं भूतानुवादः क्रियार्थो वा इति। तेन न फलविधित्वात् निराकृतस्य इह अनर्थकोऽर्थवादविचार इति। 'आऽस्य प्रजायां वाजी जायते य एवं वेद' इति चोदाहरणम्।

**वा**—यदि तावत् गर्गत्रिरात्रब्राह्मण-वेदानुमन्त्रणज्ञानकाले विद्यमानयोरेव मुखशोभा-वाजिजन्मनोः संकीर्तनं, न धर्मं प्रति प्रमाणम्। अथ तु अविद्यमानयोः, ततः स्वार्थेऽपि। वर्तमानापदेशाच्च प्रत्यक्षानुपलब्धिविरोधः, कर्मानुष्ठानयोग्यपुरुषकरणात् विद्यासंस्कारस्य दीक्षिततीर्थस्नानादिवत् निराकाङ्क्षत्वात् फलविधित्वं निराकरिष्यते। पौनरुक्त्यात् तर्हि अत्र न विचारयितव्यं अत आह, तेन फलविधित्वात् निराकृतस्य इह आनर्थक्यार्थवादत्वविचार इति। स्तुत्यर्थताऽपि च असत्यस्य नास्ति इति व्यवस्थितमेव।

**अन्यानर्थक्यात्। ४॥**

**भाष्यं**— 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'पशुबन्धयाजी सर्वान् लोकानभिजयति' 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति। यदि भूतानुवादमात्रं, अनर्थकम्। अथ फलविधिः, इतरेषामानर्थक्यम्। नहि अकृत्वा पूर्णाहुतिं अग्निहोत्रादयः क्रियन्ते, न च अनिष्ट्वा अग्नीषोमीयेण, सोमेन यजन्ते, न च अनधीत्य अश्वमेधेन यजन्ते। तद्यथा पथिजातेऽर्के मधु उत्सृज्य तेनैव पथा मध्वार्थिनः पर्वतं न गच्छेयुः, तादृशं हि तत्। अपि च आहुः **'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥'** इति।

**वा**— अनन्तरेणैव पूर्णाहुत्यादिफलवचनानि व्याख्यातानि। विधित्वाभ्युपेत्यवादेन तु दोषान्तरमभिधीयते। पूर्णाहुतेः अग्निसंस्कारत्वात्, पशुबन्धस्य च ज्योतिष्टोमोपकारकत्वात्, अश्वमेधज्ञानस्य च संस्कारत्वात् न तावत् फलविधित्वावसरः। यदि पुनरिष्यते, ततः अन्यानर्थक्यम्। समानफलान्यपि कर्माणि यानि परस्परानपेक्षाणि क्रियन्ते, तेषां यथारुचि अनुष्ठानात् नान्यानर्थकत्वम्। पूर्णाहुतिपशुबन्धयोस्तु अकृतयोः इतरकर्मानधिकारात् 'प्रथमं वा नियम्येत' (११।१।८।४३) इत्यनेन न्यायेन अवाप्ते फले नोत्तरकर्मानुष्ठानप्रयोजनमस्ति इति तद्विध्यानर्थक्यम्। तथा च दृष्टान्तोऽपि। 'तेनैव पथा मध्वार्थिनः' इति यत्र अन्यः पन्थाः पर्वतस्य तत्र गच्छेयुरपि, न तु तेनैव गच्छन्ति। तस्मात् भूयसां क्लृप्तानां विधीनामनुग्रहाय वरं कल्प्यानामेव अनर्थकत्वम्। न च फलविशेषार्थिनः पराणि कर्माणि, अविशेषश्रवणात्। नहि समानायां श्रुतौ अप्रत्यक्षः सन् फलविशेषः कर्मविशेषेभ्यः शक्यः कल्पयितुम्। न च स्तुतिः असत्यत्वात् इति स्थितमेव।

**अभागिप्रतिषेधाच्च। ५॥**

**भाष्यं**— 'न पृथिव्यामग्निश्चेतव्यो, नान्तरिक्षे, न दिवि' इति अप्रतिषेधभागिनमर्थं प्रतिषेधन्ति। विज्ञायत एव एतत्, अन्तरिक्षे दिवि च अग्निर्न चीयते इति। पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं भवेत्, चयनप्रतिषेधा-

र्थमेव तत् । अथ अप्रमाणं, नैष विरोधो भवति । कथं तत् प्रमाणं, यत् विध्यन्तरमाकुलयेत् स्वयं चाकुलं स्यात् ? । न चेतव्यं, हिरण्यं निधाय चेतव्यमिति ।

**वा**— त्रीण्यपि पृथिव्यादिवचनानि अप्रतिषेधभागिनमर्थं प्रतिषेधन्ति । अन्तरिक्षे दिवि च तावत् अप्राप्तत्वात् प्रतिषेधाविषयत्वम् । अतश्च पर्युदसितव्याभावात् न पर्युदासः । अनन्तरिक्षे हि अदिवि च पृथिव्यां नित्यं चयनं प्राप्तं इति तद्विधिरनर्थकः । अथापि नित्यानुवादः, तथापि अक्रियार्थत्वमेव । पृथिवीचयनप्रतिषेधपर्युदासौ तु चयनविध्यबाधेन अशक्यौ । बाधे च विध्यानर्थक्यम् । विकल्पेऽपि पक्षे बाधः । कामसंयोगाच्च अग्नेरस्त्येव पाक्षिकत्वम् । दुर्बलश्च प्रतिषेधः पृथिवीपरत्वे सति चयने कल्प्यत्वात् । एतदेवास्य स्वयमाकुलत्वम् । विध्यन्तरमेव 'हिरण्यं निधाय चेतव्यं' 'इष्टकाभिरग्निं चिनुते' एतच्च आकुलयेत् । प्ररोचनाबुद्धिस्तु नैवोत्पद्यते ।

**अनित्यसंयोगात् । ६ ॥**

**भाष्यं**— अनित्यसंयोगश्च वेदप्रामाण्ये सति 'परं तु श्रुतिसामान्यमात्रं' (१।१।८।३१) इति परिहृतः । इदानीं वेदैकदेशानां आक्षिप्तानां पुनरुपोद्वलकः उत्तिष्ठति 'बबरः प्रावाहणिरकामयत' इति ।

**वा**— सर्वोपाख्यानेषु अन्यपरत्वासंभवात् स्वरूपप्रतिपादनात् अनित्यसंयोगः । स च समस्तवेदप्रामाण्ये सति कथंचित् अन्यथा नीयेत । **यदा** तु यथैव प्रमाणानां मध्ये शब्दः, तत्रापि च वेदः प्रमाणं, तथैव वेदेऽपि विधिमात्रं युक्त्या कल्प्यते, **तदा** इतरैकदेशवत् अनित्यार्थैकदेशाप्रामाण्यं यथाश्रुतार्थग्रहणात् आपन्नं किं निवार्यते । तस्मात् एवमादीनां अनपेक्ष्य अर्थं अध्ययनमात्रादेव फलं कल्प्यम् । **अथवा** यथा एतानि उपेक्षाफलानि तथा तद्विषयं प्रत्यक्षमपि प्रतिपत्तव्यम् । अथ कस्मात् मन्त्रवत् यथाप्रकरणं प्रयोगकाले न प्रयुज्यते, प्रयोगरूपसामर्थ्याभावात् । नहि मन्त्राणां पाठमात्रेण विनियोगः, किं तर्हि तत्सामर्थ्यात् । न चात्र तदस्ति । **अथवा** यथा तेषां पूर्वपक्षे कार्यान्तराभावात् रूपमात्रं ग्रहीष्यते तथा अत्राप्यस्तु । यत्तु सूत्रकारेण अनित्यत्वमुक्तं, तत् प्रामाण्यापेक्षया, न अप्रयोज्यतया ।

**विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः । ७ ॥**

**भाष्यं**—इदं समाम्नायते 'वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति' इति । वायुर्वै क्षेपिष्ठा देवता इत्यत्र यद्यपि क्रिया नावगम्यते क्रियासंबद्धं वा किंचित्, तथापि विध्युद्देशेन एकवाक्यत्वात् प्रमाणम् । 'भूतिकामः' इत्येवमन्तो विध्युद्देशः, तेन एकवाक्यभूतः 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमादिः । कथमेकवाक्यभावः ? पदानां साकाङ्क्षत्वात् विधेः स्तुतेश्च एकवाक्यत्वं भवति । भूतिकाम आलभेत । कस्मात् ? यतो वायुः क्षेपिष्ठेति । नायमभिसंबन्धो विवक्षितः 'भूतिकामेन आलब्धव्यं' इति । कथं तर्हि ? 'आलभेत, यतस्ततो भूतिः' इति । भिन्नौ इमावर्थौ, उभयाभिधाने वाक्यं भिद्येत । किमर्था स्तुतिरिति चेत्, कथं रोचेत, नानुष्ठीयेत इति । **ननु** प्राक् स्तुतिवचनात् अनुष्ठानं भूतिकामान्तात् सिद्धं, स्तुतिवचनमनर्थकम् । **नहि** । यदा स्तुतिपदासंनिधानं तदा पूर्वेणैव विधिः, यदा स्तुतिपदसंबन्धः, न तदा भूतिकामस्य आलम्भो विधीयते । यथा पटो भवति इति, पट उत्पद्यते इत्यर्थः, निराकाङ्क्षं च पदद्वयम् । यदा च तस्मिन्नेव रक्त इति अपरं श्रूयते, तदा रागसंबन्धो भवतीत्यर्थः, भवति च रक्तं प्रति आकाङ्क्षा । एवं यदा न स्तुतिपदानि विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन । **ननु** एवं सति किं स्तुतिवचनेन, यस्मिन् सति अविधायकं, मा भूत् तत्, तदभावेऽपि पूर्वविधिनैव प्ररोचयिष्यते इति । **सत्यं**, विनाऽपि तेन सिध्येत् प्ररोचनं, अस्ति तु तत् । तस्मिन् विद्यमाने योऽर्थो वाक्यस्य, सोऽवगम्यते । स्तुतिः प्रयोजनं तयोः । तस्मिन्नविद्यमाने विधिना प्ररोचनं इति । ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वात् विधिरभिप्रेतः स्यात्, न विवक्ष्येत स्तुतिपदसंबन्धः । आह, स्तुतिपदानि हि अनर्थकानि अभविष्यन् साकाङ्क्षाणि । भवन्तु अनर्थकानि इति चेत्, न गम्यमानेऽर्थे अविवक्षितार्थानि भवितुमर्हन्ति । योऽसौ विध्युद्देशः, स

शक्नोति निरपेक्षः अर्थं विधातुं, शक्नोति च स्तुतिपदानां वाक्यशेषी भवितुम्। प्रत्यक्षश्च वाक्यशेषभावः। अतः अस्मात् विधेः स्तुतिमवगच्छामः। ननु निरपेक्षादपि विधिमवगमिष्यामः। भवत्वेवं, नैवं सति कश्चित् विरोधः। किंतु अशक्यः स्तुतिपदसंबन्धे सति विध्यर्थो विवक्षितुम्। वाक्यं हि संबन्धस्य विधायकम्। द्वौ चेत् संबन्धौ विदध्यात् 'भूतिकाम आलभेत' 'आलम्भेन च एष गुणो भविष्यति' इति, भिद्येत तर्हि एवं सति वाक्यम्। अथ यदुक्तं न क्रिया गम्यते, न तत्संबद्धं वा किंचिदिति, 'स्तुत्यर्थेन विधीनां स्युः'। स्तुतिशब्दाः स्तुवन्तः क्रियां, प्ररोचयमानाः अनुष्ठातॄणां, उपकरिष्यन्ति क्रियायाः। एवमिमानि सर्वाण्येव पदानि कं चिदर्थं स्तुवन्ति (शत्रन्तं) विदधति। अतः प्रमाणमेवंजातीयकानि 'वायुर्वै क्षेपिष्ठा देवता' इति।

**वा**—पूर्वपक्षोदाहृतेष्वेव वाक्येषु सिद्धान्ते अभिधातव्ये किमर्थं वायव्यवाक्यमुपन्यस्यते? **के चिदाहुः**, समानन्यायत्वात् इदमपि तत्र, तान्यपि च इह उदाहृतानि द्रष्टव्यानि इति। यद्यप्येवं तथापि अपूर्वोदाहरणं अभिप्रायान्तरं आकाङ्क्षति। तदभिधीयते। पूर्वोदाहृतेषु सर्वत्र स्वार्थासत्यत्वमपि आशङ्क्यते। तत्र कः प्रथममेव तत्प्रतिपादनक्लेशं अङ्गीकुर्यात् इति प्रसिद्धस्वार्थसत्यत्वानां स्तुतिद्वारा एकवाक्यभावेन धर्मप्रमाणशेषत्वमात्रप्रतिपत्तिसौकर्यार्थं वायव्यवाक्योपन्यासः। तत्र भाष्यकाराः प्रसिद्धेनैव एकवाक्यत्वेन स्तुत्यर्थोपयोगं वदन्ति।

(**वेदवाक्यानां एकवाक्यत्वादिप्रतिपादनोपयोगः**) एतावत्तु अत्र प्रथमं वक्तव्यं, किमर्थं रूपभङ्गेन बलादेकवाक्यता पुरुषार्थत्वं वा वेदस्य उच्यते इति। लौकिकवाक्ये तु दृष्टत्वात् इति यदि उच्येत, **तत्राभिधीयते**। युक्तं लोके वाक्यार्थस्य प्रमाणान्तरगम्यत्वात् अन्यथाऽपि कल्पनम्। इह तु अत्यन्तातीन्द्रियत्वात् यथाश्रुतात् ईषदपि अन्यथात्वे पौरुषेयत्वमापद्येत। लोकेऽपि च यानि प्रमाणान्तरानवगतार्थानि आप्तप्रत्ययमात्रेण श्रोतॄणां प्रमाणानि भवन्ति, तेषां नैव अन्यथात्वकल्पनं लभ्यते। तत्र **के चिद्वदन्ति**, 'तुल्यं च सांप्रदायिकं' (१।२।१।८) इति यद्वक्ष्यति, तेन समस्तो वेदः पुरुषार्थः इति साध्यते। नहि आत्मानुपकारिणं सन्तं एनं बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः। यद्यपि च केषां चिदज्ञानं भवेत्, तथापि अस्मत्पूर्वातिक्रान्तानेकपरीक्षकप्रमादकल्पना निष्प्रमाणिका। तस्मात् यथायथा पुरुषार्थता भवति, तथातथा भङ्क्त्वाऽपि रूपं, व्याख्यायते इति। न तु एतद्युक्तमिव। कुतः? पुरुषाधीनप्रामाण्यप्रसङ्गात्। यदि हि अक्षरानुपात्तोऽपि अर्थः अस्मदादिभिरेवं कल्प्यते, यस्मात् वयं प्रयत्नेन धारयामः तस्मादस्य पुरुषार्थतेति। तथा सति आत्मचेष्टितवशेन प्रामाण्यं अभ्युपगतं स्यात्। अथ पुरुषान्तरधारणमुच्येत, एवमपि तद्वशेन, तैरपि एवमन्यवशेन इत्यनादित्वेऽपि सति अन्धपरंपरान्यायेन सर्वेषां परप्रत्ययात् न क चित् प्रामाण्यावस्थानम्। सर्वत्र हि 'एवमयं पुरुषो वेद' इति प्रत्ययः, न 'एवमयमर्थः' इति। तेन यद्यपि तेषुतेषु अध्येतृषु नूनं पुरुषार्थं वेदं मन्यन्ते इत्यभिप्रायोऽनुमीयते, तथापि निर्मूलत्वात् तन्मात्रेण असिद्धिः। अतो यावत् वेद एव पुरुषार्थतया सकलं आत्मानं न प्रतिपादयति तावदप्रमाणम्। तदुच्यते। सकलस्य तावत् वेदस्य 'स्वाध्यायोऽध्येतव्यः' इति अध्ययनभावना विधीयते। तत्र किं भावयेत् इत्यपेक्षायां अध्ययनं इत्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेन अपुरुषार्थसाध्यायां भावनायां प्रवर्तनाऽशक्तिप्रसक्तेः तदंशात् निराक्रियते। ततश्च अध्ययनेन इत्यविरोधात् संनिधेश्च करणांशे निविशते। तेन किं इत्यपेक्षिते 'यच्छक्यते' इत्युपबन्धात् अक्षरग्रहणं इत्यापतति। तस्यापि अपुरुषार्थत्वात् 'तेन किं' इति 'पदावधारणं' इत्युपतिष्ठते। तेनापि पदार्थज्ञानं, तेन वाक्यार्थज्ञानं, तेन च अनुष्ठानं, अनुष्ठानेन स्वर्गादिफलप्राप्तिः, इति एतावति प्राप्ते निराकाङ्क्षी भवति। एवं सर्वविधीनां प्राक् पुरुषार्थलाभात् अपर्यवसानम्। न च सहसैव विधिदर्शनात् स्वर्गाद्येव फलं कल्प्यते। योग्यतया हि यस्य यत्र अनन्तरभाविनि व्यापारो लक्ष्यते, तदेव तस्य कार्यं इत्यवधार्यते। तत्र यदि तावत् तदनुसारेणैव कियत्यपि अध्वनि फलमासाद्यते, ततो नान्तरा कल्पनमर्हति। पारंपर्यप्रयो-

जनेनापि श्रुतविध्युपपत्त्या अन्यथाऽनुपपत्तिलक्षणार्थापत्त्यनुत्पादात् । यत्र तु अनन्तरं दृष्टं कार्यं न स्वयं पुरुषार्थः, नापि पारंपर्येण तमाप्नोति, यथा होमस्य आहवनीयप्राप्तिः भस्मसाद्भावो वा, तत्र तदतिक्रमेण साक्षात् कर्मण एव अदृष्टकल्पना। सर्वत्र च एतत् लक्षयितव्यम्। यत्र तु विहिते फलाकाङ्क्षिणि तदनात्मककार्यपरंपरायां सत्यां आन्तरालिकं किं चित् क्रतवे पुरुषार्थाय वा चोद्यते, तत्र तदेव तत्साधनं, पूर्वस्य तु विधेः तदुपकारार्थतया पर्यवसानम् । यानि तु उत्तरविधेः कार्याणि, प्राक् तानि साध्यसाधनभावेन अचोदितत्वात् नान्तरीयकत्वेन काष्ठादीनामिव ज्वलनादीनि पूर्वविहितकर्मस्वव्यापारमात्रतया मन्तव्यानि । यत्र तु पारंपर्यजन्यं न किंचिदन्तरा विधीयते, तत्र सर्वाणि स्वव्यापारीकृत्य विधेयस्यैव स्वयं फलसाधनता । तत्र यानि तावत् क्लृप्तकल्पयिष्यमाणपुरुषार्थसाधनविधिवाक्यानि, तानि तत्प्रतिपादनं यावत् स्वाध्यायाध्ययनविधिना नीयन्ते, परतस्तु फलवत्त्वं ज्ञातमेव इति न तत् यावत् प्राप्यन्ते । यानि तु तत्प्रकरणे पठ्यन्ते, तान्यपि तथैव अक्षरग्रहणादिक्रमेण स्वार्थावबोधनं यावत् गतानि, न साक्षात् क्रत्वङ्गं भवन्ति । कुतः ? कथं इति अदृष्टोपायापेक्षेण क्रतुना दृष्टार्थत्वात् अक्षरादिषु अनवसजता तद्विहितं कर्ममात्रमेव हि प्रयोजनद्वारेण उपादीयते नान्यत् । अतः प्रधानवाक्यतुल्यानि अङ्गानि भवन्ति । तद्वाक्यानि तु बाह्यतराणि अध्ययनादिवत् । एवं प्रोक्षणादिवाक्यानां व्रीह्यादिसंस्कारमात्रफलावसितानां तण्डुलपिष्टपुरोडाशद्रव्यवदानादिभिः व्यवहिततरः प्रधानसंबन्धः । एवमेव अनारभ्याधीतारादुपकारकसामवायिकाङ्गवाक्यानि योजयितव्यानि । तत्र तु एतावान् विशेषः, यत् अप्रकरणस्थत्वात् अक्षराणि अस्पृशत् प्रधानं अर्थैरेव संबध्यते । यानि तु आधानादिवाक्यानि, तान्यपि फलवत्क्रत्वङ्गाहवनीयादिसंस्कारप्रतिपादनावसायीनि दूरस्थेनैव फलेन निराकाङ्क्षीक्रियन्ते ।

एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेण उपनिषदां नैराकाङ्क्ष्यं व्याख्यातम् ( सुधा—उपनिषदामपि आधानादिवाक्यन्यायेन दूरस्थेनैव क्रतुफलेन नैराकाङ्क्ष्यमित्यर्थः । कथमित्यपेक्षिते क्रत्वर्थकर्तृप्रतिपादनद्वारेण इत्युक्तम् । इति )। मन्त्रनामधेययोस्तु स्वाधिकारे योजना वक्ष्यते । तेन सर्वेषां भावनान्तर्गतिरुपपन्ना ।

( **अर्थवादानां भावनांशत्रयान्तःपातित्वं**— )

**यत्तु** अर्थवादानां भावनांशत्रयानन्तःपातित्वात् अग्रहणमिति, **तत्राभिधीयते** । सत्यं अतिरिक्तं न गृह्यते, अस्ति तु अन्तर्गतिः । कथं ? इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते **शब्दात्मिका** च **अर्थात्मिका** च । तत्र अर्थात्मिकया अर्थवादा नापेक्ष्यन्ते, शब्दात्मिकया तु ग्रहीष्यन्ते । सा हि एवं प्रवर्तते, स्वाध्यायाध्ययनविधिना इतरे सर्वे विधायकाः स्वाध्यायपदोपात्तश्च आत्मा नियुज्यते भावयेत् इति । तत्र लिङादीनां प्रयोजककर्तृत्वं, पुरुषः प्रयोज्यः । तेन **किं इत्यपेक्षायां** पुरुषप्रवर्तनं इति संबध्यते । अथ तु योग्यतयैव लिङादिविषया क्रिया उच्यते प्रवर्तयेत् इति, ततः किं इत्यपेक्षिते पुरुषं इत्येव संबध्यते । यद्यपि च अचेतनत्वात् लिङादिषु एवंविधं प्रयोजकत्वं न संभवति, तथापि पुरुषस्य प्रयोज्यस्य प्रयोजकत्वानुपपत्तेः तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता । यदि च एवं न कल्प्येत, नैव एषां विधायकत्वव्यपदेशो भवेत् । अथ **केन इत्यपेक्षिते** पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेन इति संबध्यते । **कथं इति** प्राशस्त्यज्ञानानुगृहीतेन इति । कुत एतत् ? बुद्धिपूर्वकारिणो हि पुरुषाः यावत् प्रशस्तोऽयं इति नावबुध्यन्ते, तावत् न प्रवर्तन्ते । तत्र विधिविभक्तिः अवसीदति, तां प्राशस्त्यज्ञानं उत्तम्नाति । तच्च पुरुषार्थात्मके फलांशे सर्वस्य स्वयमेव अनुष्ठानं भवति इति प्रसिद्धत्वात् न वेदात् उत्पद्यमानमपेक्ष्यते । साधनेतिकर्तव्यतयोस्तु अप्रवृत्तपुरुषनियोगात् शास्त्रमेव प्राशस्त्यप्रतिपादनाय आकाङ्क्ष्यते । तत्पुनः केन क्रियेत इति साधनापेक्षायां यदि वा फलपदेन निवर्त्येत, प्रशस्तोऽयं भूतिफलत्वात्, अथवा विधिनैव सर्वदोषाशङ्कानिर्मुक्तवेदविहितत्वात् इति, अथवा विशिष्टद्रव्यदेवतेतिकर्तव्यतायुक्तत्वात् इति, तत्र फलपदादीनां अर्थान्तरोपयोगात् पुनः अन्यत्रापि उपयोगो न युज्यते । विध्युत्तरकाला चेयं आकाङ्क्षा, पूर्वं च फलपदादिनिवेशः

तस्मादपि न तैर्निर्वर्त्यते । लक्षणा च एतेभ्यः कल्प्यते । न च श्रौतार्थसंभवे सा युक्ता । युगपच्च उभयवृत्तिविरोधात् प्राशस्त्यपरत्वे फलादीनि न स्युः । नहि अन्यशास्त्रे सति उपायमात्रत्वेन उपात्तानां एकान्तेन पारमार्थिकत्वं इति वक्ष्यते । अत एव च अर्थात् गम्यमानं अन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति । नहि यद्यत् प्रतीयते, तत्तत् शास्त्रफलमवसीयते । यथा 'पूर्वो धावति' इत्युक्ते यद्यपि अपरो गम्यते, तथापि न कार्येण युज्यते, तद्वत् प्ररोचना गम्यमानाऽपि न कार्यान्तरोपयुक्तशास्त्रार्थत्वेन अवतिष्ठते । अन्यथाऽनुपपत्त्या चेयं तेभ्यः कल्प्येत । सर्वप्रमाणप्रत्यस्तमये च अन्यथाऽनुपपत्तिर्भवति । प्रमाणाभावश्च यः सर्वप्रकारं प्रयतमानस्य, स प्रमाणम् । तद्यदि केन चिदुपदेशेन वा अतिदेशेन वा न लप्स्यामहे ततो दर्विहोमन्यायेन (८।४।१) विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः । अथ तु केन चित् दूरस्थेनापि सेत्स्यति, ततः तदनुसारस्तावत् कर्तव्यः इत्येवं साकाङ्क्षो विधिरास्ते ।

तथा 'वायुर्वै क्षेपिष्ठा देवता' इत्येवमाद्यपि स्वाध्यायाध्ययनविधिना पुरुषार्थतया उपनीतं 'यच्छक्यते तत् कुर्यात्' इत्युपबन्धाच्च सहसैव तेन असंबध्यमानं अपुरुषार्थत्वेन च पूर्ववत् (विधिवाक्यवत्) अक्षरादिषु अपर्यवस्यत् भूतान्वाख्यानवाक्यार्थे यावत् भूतम् । तत्रापि तु साकाङ्क्षमेव इति यः तेन लक्ष्यमाणः साधनानुरूपसाध्योत्पत्तिद्वारेण 'क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यति' इति प्राशस्त्यरूपोऽर्थः, सः अनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात् पुरुषार्थे द्वारतां शक्नोति प्रतिपत्तुं इति परिगृह्यते । सोऽयं नष्टाश्वदग्धरथवत् संप्रयोगः । एवं च न प्ररोचना अन्यकृता कर्माङ्गम् । न च अर्थवादपदैः प्रयोजनान्तरं साधनीयं इति आम्नानसामर्थ्यात् उभयोर्नियमः ।

एतेन प्रतिषेधापेक्षितद्वेषसिद्ध्यर्थं निन्दापदसंगतिर्व्याख्याता । तत्रापि हि न द्वेषादृते विद्वान् निवर्तते । द्वेषश्च अप्रशस्तप्रत्ययाधीनोत्पत्तिः । न च अप्रशस्तज्ञानं नकारादिभिः पदैः प्रशस्ताप्रशस्तानभिधानेन निषेधतत्फलेतिकर्तव्यतामात्रपर्यवसितैः शक्यं अवलम्बितुं, इति अनन्यप्रयोजननिन्दावाक्यगम्यमेव भवति । अतश्च एकवाक्यत्वसिद्धिः । नित्यं च विधिप्रतिषेधयोः क्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति । नहि स्तुतिनिन्दे नाम व्यवस्थिते, निन्दारूपासु स्तुतिषु स्तुतिरूपास्वपि च निन्दासु विपर्ययदर्शनात् । यथा वक्ष्यति 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुं' इति । तथा त्रैयम्बकवाक्येषु 'यदभिघारयेत् तद्रुद्रायास्ये पशून्निदध्यात्' इति स्तुतमपि अभिघारणं नाश्रयिष्यते, निन्दितमपि च अन्ते विधिदर्शनात् अभिघारणमेव प्रशस्तं भविष्यति ।

संदिग्धस्तुतिनिन्दानामपि च प्रक्रमादेव निर्णयः, यथा वक्ष्यति 'न वयं निन्दितान् अनिन्दितान् वा असुरान् विद्मः । कदा चिद्धि यस्मात् असुरानपि एषा वशीकृत्य आनयति क्रिया, तस्मात् नूनं प्रशस्ता इति स्तुतिः स्यात् । अथवा विध्वंसकासुरागमननिमित्तत्वात् अशोभना इति निन्दा । तत्र अन्ते सामविधानात् तत्प्रशंसार्थं ऋचां निन्दा इति गम्यते' । सर्वत्र च किं चित् पदं स्तौति निन्दति च, इतराणि तु एकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते । यत्रापि तादृशं पदं न स्यात्, तत्रापि लक्षणा लक्षितलक्षणा वा अन्यथाऽनुपपत्तेः आश्रयणीया । विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यां अविनाभावात् अन्यतरदर्शनेन इतरदनुमाय वाक्यं पूरयितव्यम् ।

एवं भारतादिवाक्यानि व्याख्येयानि । तेषामपि हि 'श्रावयेच्चतुरो वर्णान्' इत्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणात् अक्षरादि व्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थदुःखसंसारसाध्यसाधनप्रतिपत्तिः उपादानपरित्यागाङ्गभूता फलम् । तत्रापि तु दानराजमोक्षधर्मादिषु के चित् साक्षाद्विधयः, के चित् पुनः परकृतिपुराकल्परूपेण अर्थवादाः । सर्वोपाख्यानेषु च तात्पर्ये सति श्रावयेत् इति विधेरानर्थक्यात् कथं चित् गम्यमानस्तुतिनिन्दापरिग्रहः । तत्परत्वाच्च नातीव उपाख्यानेषु तत्त्वाभिनिवेशः कार्यः । वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिः तथैव स्ववाक्यानि प्रणीतानि । प्रतिपाद्यानां च विचित्रबुद्धित्वात् युक्तमेवैतत् । इह के चित् विधिमात्रेण प्रतिपद्यन्ते, अपरे सार्थवादेन, अपरे अल्पेन

अर्थवादेन, अपरे महता। सर्वेषां च चित्तं ग्रहीतव्यं इत्येवमारम्भः। तत्र तु के चित् विधिप्रतिषेधाः श्रुतिमूलाः, के चित् अर्थसुखादिषु लोकमूलाः। तथा अर्थवादाः के चिद्वैदिका एव, के चिल्लौकिका एव, के चित्तु स्वयमेव काव्यन्यायेन रचिताः। सर्वे च स्तुत्यर्थेन प्रमाणम्। ये तु वाक्यशेषत्वं न प्रतिपद्यन्ते, तेऽपि के चित् स्वयमेव श्रूयमाणगन्धमादनादिवर्णकप्रभृतयः प्रीतिं जनयन्ति। ये तु युद्धवर्णकाः, ते सर्वेषां शूराणां भीरूणां च उत्साहकराः पार्थिवानामुपयुज्यन्ते। यत्र तु न किंचित् दृष्टमुपलभ्यते, तत्र विशिष्टदेवतादिस्तुतिद्वारं अदृष्टं कल्पनीयं इत्येषा दिक्।

**( भाष्ययोजना केचिन्मतेन, पश्चात्तु स्वमतेन )**

'विध्युद्देशेन एकवाक्यत्वात्' (भा. पृ. ११६) इति। **केचिदाहुः** 'किमर्था स्तुतिरिति चेत् कथं रोचेत, (इति विधेये) नाऽनुष्ठीयेत' (इति निषेध्ये) इत्येवं स्तुतिनिन्दाभ्यां प्रवृत्तिनिवृत्तिप्रतिपादनं, लिङादिभिश्च अभिधानम्। अतस्तुल्यार्थत्वम्। न च तुल्यार्थानां समुच्चयः। तत्र ये तावत् अर्थवादरहिताः लिङादयः, तद्रहिताश्च अर्थवादाः, तेषां यथाविषयं व्यवस्थितं निवर्तकत्वं प्रवर्तकत्वं (च) अविरुद्धम्। यत्र तु द्वयसंनिपातः, तत्र अन्यतरेण कृतार्थत्वात् अवश्यावहेये अन्यतरस्मिन् भूयसामनुग्रहो युक्तः, (इति) 'त्यजेदेकं कुलस्यार्थे' इतिवत् विधिप्रत्ययः परित्यज्यते। केवलप्रकृतिप्रयोगाभावात् तदनुग्रहार्थप्ररोचनालब्धविधित्वानुवादेन प्रवर्तते। यथा 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति, क्त्वाप्रत्ययसिद्धप्रवृत्त्यनुवादकत्वं वक्ष्यते। तस्मात् वायव्यश्वेतालम्भः इत्येतावन्मात्रं विवक्षितम्। स एव च विध्युद्देशः फलादिसंबन्धोत्तरकालं स्तूयते इत्येतत् 'भूतिकामः इत्येवमन्तो विध्युद्देशः' इत्यनेन (भाष्येण) कथ्यते। अन्यथा पुनः उद्देशग्रहणं अनर्थकमेव स्यात्। सूत्रोक्तेन तु विधिना एकवाक्यत्वं न संभवति इति अतिक्रम्य तद्विषयः परिगृह्यते। तथा चाह 'नायमभिसंबन्धः' इति। विधिविधेयसंबन्धनिषेधेन स्तुतिस्तुत्यसंबन्धं विवक्षितं वदति 'यतस्ततो भूतिः' इति। सैव च भूतिनिमित्तस्य योजना। 'भिन्नौ इमौ' इति पूर्वोक्तौ संबन्धौ अभिधत्ते। 'किमर्था स्तुतिरिति चेत्' इति। प्रत्ययश्चेत् उत्खातः तेन अविधीयमानस्य किं स्तुत्या इति। अथवा यदनया साध्यते तत् प्रत्ययेनैव सेत्स्यति इति मनसि कृत्वा वदति। आचार्यस्तु उत्खातेऽपि प्रत्यये अर्थवादादेव तदर्थावाप्तिं उभयसंभवे च अर्थवादानुग्रहं मत्वा आह 'कथं रोचेत' इति। इतरः प्रश्नाभिप्रायं विवृणोति, प्रागेव सिद्धेः 'स्तुतिवचनमनर्थकं' इति। नहि इति ग्रन्थच्छेदः। सर्वत्र अवान्तरवाक्यानि महावाक्येषु अप्रमाणं, महासंख्यासु इव अवान्तरसंख्या, भवन्ति। तान्येव तु यदा केवलानि प्रयुज्यन्ते, तदा निरपेक्षत्वात् भवन्ति प्रमाणम्। यथा 'पटो भवति' इति। न च कदा चित् एतावन्मात्रेण समाप्तेः नैराकाङ्क्ष्यदर्शनात् सर्वत्र नैराकाङ्क्ष्यम्। योग्यपदान्तरानुच्चारणेन हि सर्ववाक्यानि पर्यवस्यन्ति। इतरथा पुनः श्रुतपदातिरेकेणापि निपुणदृशां भवत्येवापेक्षा। सा च अनुपलब्ध्या निवर्तते। तथा च यत्र उपलप्स्यन्ते, तत्र एकवाक्यतां गमयिष्यन्ते। अन्यथा हि असौ तदुच्चारणेऽपि न स्यात्। तदिह महावाक्येन विना अवान्तरवाक्यं प्रमाणम्। तत्सद्भावे तु न इत्येतदाह 'यदा न स्तुतिपदानि' इति। 'ननु एवं सति' इति। यत्र महावाक्यावान्तरवाक्ययोः फलं भिद्यते यथा पटभवनरागभवने, तत्रैवं युक्तं, इह तु अनतिरिक्तार्थस्य सतः किं अवान्तरवाक्यनिराकरणमेव महावाक्यस्य युक्तं फलं, तदेतदाह 'यस्मिन् सति अविधायकं' अवान्तरवाक्यं भवति, 'मा भूत् तत्' महावाक्यं इति। 'सत्यं विनाऽपि तेन' इति। यो नाम वेदस्य कर्ता स्यात्, स एवं पर्यनुयुज्येत 'लघुना उपायेन सिद्धे, किं महावाक्यमाश्रयसि' इति। तदभावान्न पर्यनुयोगः। परिहारपथग्रामगमनवच्च श्रमातिरेकमात्रं स्यात् नार्थानवाप्तिः (नार्थावाप्तिः)। दृष्टं च एवंजातीयकेषु गौरवाश्रयणम्। यथा तमेवार्थं 'खं' इत्येतावता सिध्यन्तं आकाशप्रभृतिभिः अभिलपन्ति, न च जाड्यं लभन्ते। तथाऽत्र लिङादिभिरपि सिध्यन्तं अर्थवादेभ्यो गृह्णते इति। शक्यते चेदं इह वक्तुं यथैव अनेकोपायप्रसङ्गे मन्त्रेण

स्मृतं क्रियमाणं अभ्युदयकारि भवति, तथा अन्येनापि विधिसिद्धौ अर्थवादप्रतिपादितविधिविहितं इति। 'ननु सत्स्वपि स्तुतिपदेषु' इति। यत्र लघुमुपायं अनुपादाय गुरूपायः आश्रीयते तत्र तथापि भवेत्। अत्र तु पूर्वमेव लघुतर आश्रितः समर्थतरश्च। तस्मात् यथैव प्रयुक्ते ख-शब्दे नाकाशादयः तदानीमेव प्रयुज्यन्ते, तथाऽत्र विधौ सति स्तुतिः नाश्रयितव्येति। तत्र उत्तरसाकाङ्क्षत्वात् स्तुतिपदानि अनर्थकानि स्युरिति। 'भवन्तु इति चेत्' नोक्तेन न्यायेन अर्थवत्त्वात् अविवक्षितार्थता युक्तेति। द्वयसंभवे हि प्रत्यक्षादेकवाक्यत्वात् अर्थवादानुग्रहो युक्त इति। '**ननु** सत्स्वपि' इत्यनेन गतार्थत्वात् 'ननु निरपेक्षात्' इति अवक्तव्यम्। **तदुच्यते**। तत्र अर्थवादपरित्यागाय उक्तं, इदानीं तु भवतु नाम स्तुतिसंबन्धः समस्तस्य, पूर्वस्यापि तु स्वरूपावगतो विधिसंबन्धो न बाधितव्यः। **अथास्य** क्वचिदपि शक्तिः अपह्रियते, ततः प्रतिप्रसवहेत्वभावात् सर्वत्र अशक्तत्वप्रसङ्गः इति। **तदभिधीयते**। भवतु पूर्वस्य विधिशक्तिः, न तु इयं क्व चिद्वाधिता इति अन्यत्रापि बाध्यते, कदा चिदाविर्भूता इति सर्वत्र आविर्भवति। यत्र तु अर्थान्तरस्तुत्यादि नोपादीयते तत्र, आविर्भूता शक्तिः कार्यमारभते। यत्र तु अपवादभूतशक्त्यन्तराभिव्यक्तिः तत्र वाक्यभेदप्रसङ्गात् पूर्वा तिरोधीयते। प्रश्नोत्तरत्वेन अयं पूर्वोक्त एव वाक्यभेदः परामृश्यते। तस्मादैकार्थ्यात् प्ररोचनयैवात्र विधिरिति। 'प्ररोचयमाना अनुष्ठातॄणां' इति। 'रुच्यर्थानां प्रीयमाणः' (पा०१।४।३३) इति संप्रदानत्वं कस्मान्न भवति? प्ररोचयतेः प्रकृत्यन्तरत्वात् इति चेत्, न, तत्रापि रुचिसंबन्धानपह्नवात्। अथ सामान्यविवक्षया षष्ठी इत्युच्यते, साऽपि उपात्ते विशेषे दुर्लभा। तस्मात् अनुष्ठातॄणां क्रियायाः इति संबन्धः। केभ्यः प्ररोचयमाना इति अपेक्षिते, अर्थात् तेभ्य एवेति गम्यते। अथ च 'अनुष्ठातॄणामुपकरिष्यन्ति' इति संबन्धः। क्रियायाः इति पञ्चमी। क्रियातोऽपि हि त एव प्ररोचकाः इति। अथवा क्रियार्थे इति षष्ठ्यर्थः कल्प्यः। 'कं चिदर्थं स्तुवन्ति' इति शत्रन्तम्। कं चिदिति विधेयं तत्संबन्धिनं वा कं चिद्वा विदधाति क्रियां तत्संबन्धिनं वा, तच्च स्तुतिद्वारेण। इति उपपन्नं प्रत्ययोद्धारेण अर्थवादप्रामाण्यम्।

(केचिन्मतेनोक्तां भाष्यव्याख्यां दूषयति-) **इदं तु व्याख्यानं नानुमन्यन्ते**। यदि हि प्रत्ययोत्खातिः स्यात् ततः केन स्तुतिराकाङ्क्ष्येत। न तावत् शब्दभावनाकथंभावोऽस्ति। याऽपि कस्मात् इत्यपेक्षा कल्प्येत, साऽपि विधीतिकर्तव्यताविषयैव तदनुग्रहार्थत्वात्। शब्दान्तरव्यपदेशमात्रं तु भिद्यते। साऽपि च नियुज्यमानस्यैव पुरुषस्य भवति, न क्रियामात्रश्रवणात्। नहि वायव्यश्वेतालम्भः इत्युक्ते कर्तव्यताऽकर्तव्यतोक्तेः प्राक् प्रशस्तः अप्रशस्तः इति वा अपेक्ष्यते। तदनपेक्षितं च श्रुतिमात्रेणैव वदन्तः नार्थवादाः प्रतिपादयन्ति। न च धात्वर्थेन सह कस्य चित् संबन्धः अपेक्षा वा विद्यते, सर्वस्य भावनागामित्वात्। भावना तु प्रत्ययोद्धारेण अपनीता किमपेक्षेत। तस्मात् तद्गतांशत्रयोच्छेदात् न भूतिः फलं, न यागः करणं, न वा इतिकर्तव्यता का चित् स्यात्। उक्तेऽपि च प्राशस्त्ये कस्मात् इति अनपेक्षितत्वात् प्रशस्तोऽयं इत्येतावन्मात्रे अवधृते प्रशस्तत्वात् इत्यनुच्यमाने कर्तव्यताबुद्धिः नैव स्यात्। भवन्ती वा तन्निष्ठा भवेत् 'प्रशस्तोऽयं कर्तव्यः', 'पटो रक्तः कर्तव्यः' इतिवत्। अकल्पिते विधौ आनर्थक्यमेव स्यात्। प्रत्यक्षं च विधिमुत्सृज्य पारंपर्यलक्षणया अर्थवादेभ्यः परिगृह्यते इति अपूर्वा वाचोयुक्तिः। न चैतत्कल्पनाऽवसरोऽस्ति अन्यतः सिद्धत्वात्। अनुक्तो हि सन् अर्थवादादेव विधिः कल्प्येत, यदि अन्यथा नोपपद्येत। प्रत्यक्षप्रत्ययोपपन्नत्वात् नान्यथाऽनुपपत्तिः। तथा अर्थवादोऽपि यदि उपाख्यानादिष्विव प्ररोचनायां निष्प्रयोजनः स्यात्, ततो दूरं नीयेत। यथोक्तेन तु न्यायेन प्ररोचनोपयोगात् नान्यत्र गच्छति इति। अवश्यकर्तव्या च प्ररोचना यदि अन्यतः सिध्येत्, ततः अर्थवादान्नापेक्षेत। साऽपि तु अनन्यगतिकत्वात् तमेव आश्रयति। सर्वत्र च वैदिकेऽर्थे अर्थापत्त्या शब्दः कल्प्येत, ततः अर्थसिद्धिः, तेन प्ररोचनया विधिशब्दः कल्प्येत, नार्थः। तत्कल्पनावेलायां च यथा ऐन्द्रवायवादिवाक्येषु 'सोमेन यजेत'

इत्यस्मिन् उपतिष्ठमाने नान्ययजिकल्पना, तथैव आलभेत इत्यनेन अन्यानुमानप्रतिबन्धः। तुल्यार्थयोश्च बाधविकल्पौ भवतः। प्रत्ययार्थवादयोः पुनः अत्यन्तभिन्नानुग्राह्यानुग्राहकार्थविषयत्वेन अर्थभेदात् समुच्चयः इत्येकवाक्यता। यदि च प्रत्ययोत्खातिः स्यात् ततः कर्तृसंख्योपग्रहविशेषावगतक्रियाफलस्वार्थपरार्थत्वाद्युच्छेदप्रसङ्गः। **स्यादेतत्**। विधित्वमात्रं अविवक्षयित्वा शेषविवक्षया कर्तृसंख्यादिलाभः इति। **एतच्चाशक्यं**, यतः तदर्थमपि उपात्तः प्रत्ययः सामर्थ्यात् विधित्वं वदत्येव। प्रतीतस्य च द्वयी एवाविवक्षा, विध्यसंस्पर्शो वा ग्रहैकत्ववत्, अनुवादकत्वं वा इन्द्रियकामहोमवत्। न तावत् विधेः अविधित्वं नाम किंचित्। नाप्यनुवादः, तस्यामवस्थायामप्राप्तेः। नहि एवं संभवति, 'योऽयं वायव्यश्वेतालम्भः कर्तव्यः स प्रशस्तः' इति, भवति तु एवं 'कर्तव्यः प्रशस्तत्वात्' इति। यत्तु उदवसानीयवत् इति, तत्रापि क्त्वावशेन विधिप्रतिषेधौ अनपेक्ष्य क्रियामात्राक्षेपात् विधित्वमाश्रितमेव इत्यदृष्टान्तता। यदि च विध्यविवक्षा स्यात्, ततः प्रत्यासत्तेः धात्वर्थ एव साध्यांशे निपतेत् इति निष्फलत्वं स्यात्।

(**स्वमतेन व्याख्यातुमुपक्रमते—**) तस्मात् सूत्राविनाशेनैव विधिना एकवाक्यत्वम्। तथा च भाष्यकारः सविधिकमेव 'भूतिकामः इत्येवमन्तः विध्युद्देशः' इत्याह। अन्यथा धात्वर्थः इत्येवावक्ष्यत्। न चात्र क्रियामात्रतया विध्युद्देशत्वं शक्यते वक्तुम्। तस्मात् प्रत्यय एव विध्यभिधायित्वात् विध्युद्देशः। विध्यर्थेन तु एकवाक्यत्वासंभवात् सूत्रातिरेकेण उद्देशग्रहणम्। 'भूतिकाम इत्येवमन्तः' इति च फलादिसंगत्युत्तरकालं स्तुत्यवसरप्रदर्शनार्थम्। **ननु** एवं सति वर्तमानापदेशेषु अनाकाङ्क्षणात् अर्थवादा न संबध्येरन्। **एवमेवैतत्**। तथापि तु प्रमाणान्तरप्राप्त्यभावात् क्व चित् प्रयोगवचनेन ('आग्नेयोऽष्टाकपालो भवति' इत्यादौ), क्व चित् पञ्चमलकारेण (उपांशुयाजमन्तरा यजति इत्यादौ), अथवा श्रुतवर्तमानान्यथाऽनुपपत्त्या कल्पिते विधित्वे अर्थवादसंगतिः। यत्रापि केवलार्थवाददर्शनादेव विधित्वं, तत्रापि अन्यथाऽनुपपत्तिमात्रं शरणम्। ('ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इत्यादौ अर्थवादमात्रकल्प्यविधिदर्शनात्। सु. पृ. ४९)। संभवन्त्यां तु गतौ नातिगौरवं युक्तमिति। यस्तु अस्मिन् पक्षे वाक्यभेदः संबन्धद्वयाश्रयणात् इति, स आलभेत प्रशस्तत्वात् इति एकप्रसरोपपत्तेः परिहृतः। विधीयमानस्यैव हि स्तुत्याकाङ्क्षा इति अवैरूप्यात् उपपन्नं तन्त्रत्वम्। यदि च एवंविधैः संबन्धभेदैः वाक्यं भिद्येत, ततः साध्यसाधनेतिकर्तव्यतासंबन्धैरपि भिद्येत। तस्मात् 'नायमभिसंबन्धो विवक्षितः' इत्यादिभाष्यं एवं नेतव्यं, न पूर्वत्रैव साङ्गविधिपर्यवसानं विवक्षितं, विधित्वादिद्वारप्ररोचनाकल्पनायां अतिगौरवनिमित्तात् वाक्यभेदात्। 'किमर्था स्तुतिः' इति पूर्वेणैव प्ररोचनाऽपि सिद्धा इत्यभिमानात्। 'कथं रोचेत' इति विध्यनुग्रहकथनम्। 'ननु प्राक्' इति पूर्वाभिप्रायविवरणम्। 'नहि' इति, स्तुत्यभावे तस्य शक्तिद्वयं अगत्या आश्रीयते, न संभवन्त्यामपि इत्येतन्न, तदा भूतिकामस्य विधिः समाप्यते इत्याह। 'यथा पटः' इति गतार्थम्। 'विधिशब्देन तदा प्ररोचना' इति विवृतं कार्यनानात्वं विधिस्तुत्योः। 'ननु एवं' इति अस्ति चेत् प्ररोचयितुमपि शक्तिः, कस्मादन्यत् अपेक्ष्यते इति। 'सत्यं' इति, तस्मात् विद्यमाने तस्मिन्, न अविद्यमाने योऽर्थः स गम्यते। कश्चासौ? 'स्तुतिः प्रयोजनं तयोः'. न तस्यैव पूर्वस्यापि इत्यर्थः। स्तुतिविषयोपकल्पनाच्च विधेरपि स्तुतिप्रयोजनव्यपदेशः। नहि निर्विषया स्तुतिरुपपद्यते। अर्थवादाभावे तु अगत्या केवलोऽपि गौरवमङ्गीकरिष्यति। 'ननु सत्स्वपि' इति पूर्ववदेव व्याख्येयम्। 'अतः अस्मात्' विधेः इति इदानीं षष्ठी, वाक्यशेषसंबन्धादित एव अस्य स्तुतिमवगच्छामः, न स्वत इत्यर्थः। 'ननु निरपेक्षादपि' इति, यदि क्व चित् अनितिकर्तव्यताकस्य विधेः प्रवर्तनशक्तिः, कस्मादन्यदपेक्षते, तेन सत्स्वपि अनादरः स्यात्। आचार्यस्तु सोपहासमाह, यत्रासौ केवलः प्रयुज्यमानो निरपेक्षः, तत्र भवतु, न कश्चिद्विरोधः। इह तु न तत्संभवः साकाङ्क्षैः पदान्तरैः आक्षिप्तत्वात्। वाक्यं हि एकं एकस्यैव संबन्धस्य विधायकम्। तत्र यदि द्वौ विध्युद्देश एव कुर्यात्

तथा सति भिद्येत। विध्युद्देशोऽत्थापितानामेव एष हि गुणो भवति इति प्ररोचनां दर्शयति। तस्मात् विधिना एकवाक्यत्वात् तदनुग्रहेण अर्थवन्तोऽर्थवादाः इति।

**तुल्यं च सांप्रदायिकम्। ८॥**

**भाष्यं**— अथोच्येत, प्राक् स्तुतिपदेभ्यो निराकाङ्क्षाणि विधायकानि, विधिस्वरूपत्वात्। स्तुतिपदानि तु प्रमादपाठ इति। तन्न। एवमर्थावगमात्। (किंच) तुल्यं च सांप्रदायिकम्। संप्रदायः प्रयोजनं येषां धर्माणां सर्वे ते विधिपदानां अर्थवादपदानां च तुल्याः। अध्यायानध्यायते, गुरुमुखात् प्रतिपत्तिः, शिष्योपाध्यायता च सर्वस्मिन्नेवंजातीयके अविघ्नार्थे तुल्यमाद्रियन्ते। स्मरणं च दृढम्। अतो न प्रमादपाठ इति।

**वा**— चशब्दव्याख्यानार्थं परिचोदना उपन्यस्ता आनर्थक्यमेवास्तु इति, तन्नैव। कुतः? पूर्वोक्तेन न्यायेन अर्थस्यावगम्यमानत्वात्। अथवा तन्न इत्यवच्छिद्य एवमर्थावगमात् इत्युक्तप्रकारपरामर्शः। किंच 'तुल्यं च' इति योजना। संप्रदायानुग्रहार्थं धर्मजातं तत्संबन्धस्मरणात् स्वर्गाद्यसंयोगाच्च। न चास्य प्रयोजनवत् संनिहिताध्ययनपरित्यागेन अन्यार्थत्वे प्रमाणमस्ति। संप्रदायाङ्गत्वेऽपि च अविघ्नस्य आकाङ्क्षितत्वात्। तादर्थ्यस्मरणाच्च अविघ्नार्थत्वम्। नहि अन्यत् कल्प्यमानं स्वाध्यायेतिकर्तव्यताऽनुगुणं भवति। यदि तावत् स्वर्गः कल्प्येत, ततः पुरुषार्थत्वमेव आपद्यते। अथ पुनः क्रतुफलसिद्धिरेव पठिते वेदे भवतीति, एवमपि दूरस्थोपकारितैव। तस्मात् संप्रदायस्य अक्षरग्रहणं साधयतः नियमजातं अनुग्राहकम्। न च निष्प्रयोजनस्य अविघ्नेन कार्यं, वरं तादृशस्य विघ्नमेव उत्पन्नं, येन क्लेशोऽपि तावन्न स्यात्। यतस्ते सप्रयोजनैर्विधिवाक्यैः तुल्यमेवाद्रियन्ते, तेन अवश्यं तद्वदेव प्रयोजनवन्त्यपीति। नियमस्मृतेश्च वेदमूलत्वात् वेदकृत एवायमादरः। स च प्रयोजनवत्त्वादृते नोपपद्यते, इति प्रयोजनवत्त्वमपि सामान्येन अनुमाय 'अर्थाद्वा कल्पनैकदेशत्वात्' (१।४।१४।२५) इति सामर्थ्यतः अर्थवादानां स्तुतिर्नाम प्रयोजनविशेषो लभ्यते। 'स्मरणं च दृढं' इत्येतदेवाह। अथवा यदेवेदं ग्रन्थस्मरणं परिपालनात्मकं, तेन अध्येतृपुरुषप्रयोजनवत्त्वाभिप्रायप्रतिपत्तिपूर्वकं प्रयोजनवत्त्वानुमानम्। संभाव्यते च कुतश्चित् वाक्यात् इयं प्रतिपत्तिः इति नाप्रमाणम्। अन्यथा हि निष्प्रयोजनान्येतानि इति केचित् परित्यज्यार्थवादान् विधिमात्रं प्रतिपद्येरन्। तत्र दृढस्मरणं एतेषु न स्यात्। अस्ति तु तत्। तस्मान्न प्रमादपाठः। ततश्च अर्थवन्त इति।

तुल्यं च सांप्रदायिकं इत्यस्य अपरा व्याख्या—संप्रदायः प्रयोजनं यस्य वाक्यस्य येन प्रवर्तितः संप्रदायः 'तस्मात् स्वाध्यायोऽध्येतव्यः' इत्येतत् स्वाध्यायत्वाविशेषात् विध्यर्थवादयोः तुल्यं, अतः प्रागुक्तेन न्यायेन प्राक् पुरुषार्थसिद्धेः अवस्थातुं न लभ्यते इति शक्त्यनुसारेण स्थितं अर्थवादानां स्तुत्यर्थत्वं इति।

**अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत। ९॥**

**भाष्यं**— अपि च या एषा अनुपपत्तिरुक्ता शास्त्रदृष्टविरोधात् इत्येवमाद्या, सा 'सोऽरोदीत्' इत्येवमादिषु न प्राप्नोति। कुतः? प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात्। शब्दार्थस्तु अप्रयोगभूतः। तस्मात् उपपद्यते 'स्तेनं मनः, अनृतवादिनी वाक्' इति।

**वा**—उक्तदोषपरिहारः अतः परम्। शास्त्रदृष्टविरोधिका या अत्रानुपपत्तिः विधिकल्पनायामुक्ता, तां असत्पक्षं अप्राप्तां मन्यामहे। अथवा इदं स्तुतिव्याख्यानं तां अनुपपत्तिं अप्राप्तं इति व्याख्येयं येषां ह्रस्वः पाठः। प्रयोगे हि अनुष्ठाने रोदनवपोत्खननदिङ्मोहस्तेयानृतवादादीनां कल्प्यमाने विरोधः स्यात्। अस्माकं तु पुनः य एषां शब्दानां श्रौतोऽर्थः स नैव विवक्षितः, न च अध्याहारादिभिः विधिः, किं तर्हि स्तुतिमात्रं विवक्षितं, न च तद्विरुध्यते। तस्मादुपपद्येत। अथवा 'शब्दार्थस्तु' इति, विधायकशब्दानुग्रहार्थः सन् अयमर्थवादः, न स्वार्थानुष्ठानेन संबध्यते। प्रयोगमप्राप्तः अप्रयोगभूतः। तस्मादुपपद्येत।

त्रयोऽत्र पाठाः अप्राप्तां चानुपपत्तिं इति, अत्र मन्यामहे इति वाक्यशेषः। अप्राप्तं चानुपपत्तिं इत्यपरः, तत्र

असद्व्याख्यानं इत्यध्याहारः । अप्राप्ता चानुपपत्तिः इत्यपरः, तत्र असत्पक्षे विज्ञेया इति ।

**गुणवादस्तु । १० ॥**

**भाष्यं—** यदुक्तं विधेयस्य प्ररोचनार्था स्तुतिः इति, तदिह कथमवकल्प्येत, यत्र अन्यत् विधेयं अन्यच्च स्तूयते । यथा 'वेतसशाखया अवकाभिश्चाग्निं विकर्षति' इति वेतसावके विधीयेते, आपश्च स्तूयन्ते 'आपो वै शान्ताः' इति । तदुच्यते । गुणवादस्तु । गौण एष वादो भवति, यत्संबन्धिनि स्तोतव्ये संबन्ध्यन्तरं स्तूयते । अभिजनो हि एष वेतसावकयोः । ततस्ते जाते । अभिजनसंस्तवेन च अभिजातः स्तुतो भवति । यथा अश्मकाभिजनो देवदत्तः अश्मकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते । एवमत्रापि द्रष्टव्यम् । (अश्मकाः नाम देशविशेषः ।) अथ 'सोऽरोदीत्' इति कस्य विधेः शेषः ? 'तस्माद् बर्हिषि रजतं न देयं' इत्यस्य । कुतः ? साकाङ्क्षत्वात् पदानाम् । 'सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वं' इत्यत्र स इति प्रकृतापेक्षः, तत्प्रत्ययात् । तस्य यत् अश्रु अशीर्यत इति, तस्येति पूर्वप्रकृतापेक्ष एव । उपपत्तिश्च उपरितनस्य 'यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सराद् गृहे रोदनं भवति' इत्यस्य हेतुत्वेन अयं प्रतिनिर्दिश्यते 'तस्माद् बर्हिषि रजतं न देयं' इति । एवं सर्वाणि साकाङ्क्षाणि । कथं विधेरुपकुर्वन्तीति ? गुणवादेन । रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते । तत्प्रतिषेधस्य गुणो यदरोदनमिति । **कथं पुनः** अरुदति अरोदीत् इति भवति, कथं वा अनश्रुप्रभवे रजते अश्रुप्रभवमिति वचनं, पुराऽस्य संवत्सरात् असति रोदने कथं रोदनं भवतीति ? **तदुच्यते** । गुणवादस्तु । गौणा एते शब्दाः । रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनात् 'यदरोदीत्' इत्युच्यते । वर्णसारूप्यात् निन्दन् अनश्रुप्रभवमपि अश्रुप्रभवमित्याह । निन्दन्नेव च धनत्यागे दुःखदर्शनात् 'पुराऽस्य संवत्सरात् गृहे रोदनं भवति' इत्याह । तथा 'यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत' इति आकाङ्क्षितत्वात् अस्य विधेः शेषोऽयं 'स आत्मनो वपामुदक्खिदत्' इति । कथं गुणवादः ? इत्थं नाम, नासन् पशवः, यत् आत्मनो वपामुदक्खिदत् इति । एतच्च कर्मणः सामर्थ्यं, यत् अग्नौ प्रहुतमात्रायां वपायां अजस्तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति । **कथं** पुनः अनुत्खिन्नायां वपायां प्रजापतिः आत्मनो वपां उदक्खिदत् इत्याह ? **उच्यते** । असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन, प्रशंसाया गम्यमानत्वात् । इह अन्वाख्याने वर्तमाने द्वयं निष्पद्यते यच्च वृत्तान्तज्ञानं, यच्च कस्मिंश्चित् प्ररोचना द्वेषो वा । तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकं, न निवर्तकं चेति प्रयोजनाभावात् अनर्थकं इत्यविवक्षितम् । प्ररोचनया तु प्रवर्तते, द्वेषान्निवर्तते इति तयोर्विवक्षा । वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत । **कथं** पुनः इदं निरालम्बनं अन्वाख्यायते इति, **उच्यते** । नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुः आकाशः आदित्यो वा । स आत्मनो वपां उदक्खिदत् इति वृष्टिं वायुं रश्मिं वा । तामग्नौ प्रागृह्णात् वैद्युते आर्चीसे (जाठरे) लौकिके वा । ततः अजः इति अन्नं बीजं वीरुद् वा । तमालभ्य तमुपयुज्य प्रजाः पशून् प्राप्नोति इति **गौणाः** शब्दाः । 'आदित्यः प्रायणीयश्चरुः, आदित्य उदयनीयश्चरुः' इत्यस्य विधेः शेषः 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इति, आकाङ्क्षितत्वात्, सर्वव्यामोहानां आदित्यश्चरुः नाशयिता, अपि दिङ्मोहस्य, इति स्तुतिः । **कथं** असति दिङ्मोहे दिङ्मोहशब्द इति ? **उच्यते** । अप्राकृतस्य बहोः कार्यसमूहस्य उपस्थितत्वात् गौणो मोहशब्दः । अवधारणावकाशदानादिभिः ज्ञापयति इति गौणता ।

**वा— यत्र** तावत् विधिस्तुत्योः एकविषयता तत्र उपपद्यतां नाम, संबन्धे विषयनानात्वे तु कथमिति । **गुणादित्याह** । यत् क्रियायाः संबन्धिनि स्तोतव्ये तत्संबन्ध्यन्तरं स्तूयेत, अथवा यद्विकारे प्रकृतिसंबन्धिनि विधानार्थे स्तोतव्ये, तत्संबन्ध्यन्तरं प्रकृतिः स्तूयते, तत्र तद्द्वारेणापि लोके वेदे च स्तुतिसिद्धेः प्रकारान्तरता, तस्माददोषः । एतस्मास्तु स्तुतेः अर्थमुप-

रिष्टात् वक्ष्यति। शान्ताभिरद्भिः संबद्धो विकारः शान्तिहेतुर्भवन् यजमानस्य कष्टं शमयति इति। गुणवादसूत्रेण शुद्धेनैव तावत् रोदनाद्युदाहरणत्रयपरिहारः। शेषसूत्राण्यपि एतदुक्तोपपादनार्थतया संभन्त्स्यन्ते। तत्र उदाहृतानां गौणतानिमित्तं किंचित् इहैव वक्ष्यते, परं तु तत्सिद्धिसूत्रे (१।४।१२।२३) सोऽरोदीत् इति साकाङ्क्षत्वेन एकवाक्यता विधिस्तुत्योः प्रत्यवयवं कथ्यते। स इति प्रकृतापेक्षः। कुतः? तत्प्रत्ययात्। तद्धि प्रकृतं प्रतीयते। अथवा तच्छब्दस्य प्रकृतग्राहित्वं प्रसिद्धम्। सः इत्युक्ते तच्छब्दप्रत्ययात् स एवार्थः। एवं तस्य यदश्रु, तत् रजतं इति संबन्धः। सर्वा चेयं उपरितनस्य निन्दाग्रन्थस्य उपपत्तिः इति तदनन्तरं तदभिधानमुपपद्यते। कोऽसौ ग्रन्थः? तं दर्शयति, यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सरात् गृहे रोदनं भवेदिति। केन हेतुना तदेवं भवति इति, तदुपपाद्यते। कारणानुरूपत्वात् कार्यस्य रोदनप्रभवरजतदानात् रोदनोत्पत्तिः, तस्मान्न देयं इति सकलं अदानस्य उपपत्तिरिति। निन्दया तच्छेषत्वं अर्थवत्। गुणवादस्तु शब्दालम्बनं रुदशब्दोत्थापितविज्ञानवशेन रोदनसामान्यतः अदृष्टकल्पना। अश्रुणश्च शौक्ल्यात् यदि नाम एतत् कठिनं भवेत् ततो रजतसदृशं भवेत् इत्युत्प्रेक्ष्य तत्प्रभवनिन्दा। धनत्यागेन अत्यन्तोदारस्यापि गृहजनः पीडयते इति तत्सामान्याद्वा रोदनोपन्यासः। एवं येन केन चिदालम्बनेन निन्दाविज्ञानोत्पत्तिः प्रतिषेधोपकारिणी इति मुख्यार्थाभावेऽपि अदोषः। एवं वपोत्खननादिवाक्ययोजना। स्वात्मवपोत्कर्तनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि क्रियन्ते, किमुत बाह्यधनत्यागेन इति स्तुतिः। यथा 'नेत्रमपि उद्धृत्य अयं ददाति' इति लोकेऽपि त्यागिनं स्तुवन्ति इति। वृत्तान्तपर्यवसायी च वेदः तत्र प्रामाण्यमप्रतिपद्यमानः स्तुतौ सत्यत्वात् नान्यत्रान्वेषणमर्हति इति निष्प्रयोजनोपाख्यानसत्यतया नार्थः। शाब्दभावनाऽङ्गं वा अर्थवादाः। सा च प्रवृत्तिः विज्ञानमात्रेणैव उपयुज्यते नार्थेन। अर्थात्मिकायां तु सर्वत्राविसंवादः सिद्ध एव। अथोच्येत, असदन्वाख्यानेन स्तुतिनिन्दात्वमिति सुतरां तत्र प्रतीयते। कामं परमार्थे वक्तारो भवन्ति, काऽत्र स्तुतिर्निन्दा वा, सत्यमेवैतदिति। असत्ये तु यस्मादन्यत्र दुष्टमपि अवधृतं इह गुणवन्तमिति ब्रवीति अतो नूनं मे प्ररोचयति, तथा गुणवन्तं सन्तं निन्दति निवर्तयितुं इति। ततश्च एवं विदित्वा यो यस्य अनतिक्रमणीयः, तदनुरोधेन स तथा प्रवर्तते। वेदश्च प्रमाणं इति स्थितम्। तेन प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्ये अर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः। इह ते वेदेन उत्पादिते। तस्मात् तदनुरूपं व्यवहर्तव्यं इति। लोकेऽपि यां क्रियां फलान्तरयुक्तां मेधादिहेतुत्वेन आप्तां मन्यन्ते, तस्यां कं चित् प्रवर्तयन्तः तदभिप्रेतं सौभाग्यादि फलं असत्यमपि उपन्यस्य नियुञ्जते। तत्प्रवृत्तश्च इतरोऽपि क्रियाऽऽश्रयं फलं प्राप्नोति। यद्यपि च प्रतिपत्ता जानाति, नैतदत्र पारमार्थिकं फलं, मदभिप्रायानुसारेण एतैरुपन्यस्तं, सर्वथा तु अपुरुषार्थे मां न प्रवर्तयन्ति तदसत्यं नाम एतत्, किमपि अन्यदवाप्स्यामि इति ज्ञात्वा अनुतिष्ठति। एवं वेदेऽपि विधिना तावत् फलमवगमितं अर्थवादास्तु असत्येन नाम प्ररोचयन्तु, न तद्गते सत्यत्वासत्यत्वे किंचित् दूषयतः, प्रवर्तमानमात्रोपकारित्वात्। यत्तु परस्तात् भविष्यति तत् विधेरुपरिगतं इति निश्चित्य नैव विद्वांसो न प्रवर्तन्ते। तस्मात् उपाख्यानासत्यत्वं अतन्त्रम्। नहि शुक्तिकादृष्टासत्यरजतः यदि रजतान्तरं तद्देशे लभते ततोऽभिसंधीयते शुक्तिकावत्तु किंचित् आलम्बनं (इति)।

श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम्। यथेह महाभूतानि प्रजाः पान्ति इति प्रजापतित्वेन उच्यन्ते। वाय्वादीनां यथासंख्येन मध्यवर्तिनः सारा वृष्ट्यादयः वपाः, तामग्नौ इति तेनैव क्रमेण वैद्युते वृष्टिं आर्बीसे शरीरान्तर्वर्तिनि वायुं अन्तश्चरत्वसामान्यात्, रश्मिं लौकिके तदाप्यायनात्तस्य। ततः अजः इति बीजादीनां सामान्येन अनादित्वात् अजत्वप्रसिद्धेः। तमालभ्य प्राप्य प्रजाः पशून् आप्नोति। सर्वप्रजानां व्रीह्यादिपरिणामप्रभवत्वात् इत्यालम्बनम्।

**सुधा**—वृष्ट्यादीनां वपात्वं मध्यवर्तिसारत्वलक्षणगुणयोगेन उपपादयति। वृष्ट्युत्पत्त्यवसानयोः वाय्वायत्तत्वात् तन्मध्यवर्तित्वं 'सनेम्यभ्वं मरुतो जुनन्ति' इत्यादौ च वृष्टिहेतुत्वेन वायुस्तुतौ तत्सारत्वं वृष्टेः। अवकाशा-

भावे वायोरवृत्तेः तन्मध्यवर्तित्वं, वायुरहितस्य च अपवरकाद्याकाशस्य ऊष्मदुःखोत्पादकत्वात् तत्सारत्वम् । रश्मेः आदित्यावयवत्वात् तन्मध्यवृत्तित्वं रश्म्यायत्तत्वाच्च प्रकाशकत्वस्य तत्सारत्वम् । वैद्युतस्य अबिन्धनत्वप्रसिद्धेः वृष्टेर्निक्षेपकल्पना । ऋबीसशब्दस्य शरीरवाचित्वात् तदन्तर्वर्त्यग्निः आर्बीसः । तस्मिन् वायोः निक्षेपकल्पनायां आलम्बनं अन्तश्चरत्वसामान्यम् । 'आदित्यो वा अस्तं यन् अग्निमनुप्रविशति' इत्यादिदर्शनात् स्वरूपेण स्वर्गस्थस्य आदित्यस्य भूमिष्ठाग्निप्रवेशायोगात् रश्मिप्रवेशकल्पना । व्रीह्यादेरन्नस्य ऊष्मणा विना प्ररोहादर्शनात् तस्य च तेजोगुणत्वात् 'आग्नेय्यो ह्योषधयः' इति च लिङ्गात् अग्न्युदकसंयोगजत्वावगतेः तत्सामान्यात् वृष्टिवैद्युतसंयोगस्य कारणत्वाभिधानम् । जाठराग्निपाचितस्य अन्नरसस्य व्यानाख्येन वायुविशेषेण अबीजभूतेभ्यो विण्मूत्रादिभ्यो विविक्तीकृतस्य चरमधातुरूपेण परिणामात् वायोः बीजकारणत्वाभिधानम् । वीरुदादेः व्रीह्यादिवदेव भौमाग्निजन्यत्वात् निदाघकाले च प्ररोहदर्शनेन आदित्यरश्मिजन्यत्वावगमात् रश्म्यग्निसंयोगजन्यत्वम् । ( पृ. ५९–६० )

( व्याख्यानत्रयं वैकल्पिकं युगपद्दर्शितं ) वा-- ( पृ. १२६ ) एतस्मिंस्तु प्रक्रमे सत्यं सालम्बनता, किंतु स्तुतित्वमेव हीयते । अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः । मन्त्रार्थवादेतिहासप्रामाण्यात् सृष्टिप्रलयौ इष्येते । ( सुधा तु 'वस्तुवृत्त्या सृष्टिप्रलयाभावेऽपि मन्त्रादिव्याख्याऽऽलम्बनत्वेन उपायमात्रतया तदङ्गीकरणं इति भावः ।' इत्याह ) । तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन् काले पुण्यकर्मोद्भवाभ्युपगमेन, पशूनामभावात् स्वमाहात्म्येन आत्मन एव पशुरूपं अभिनिर्माय वपोत्खननादि कृतवान् । ततः असमाप्ते एव कर्मणि तूपरः पशुरुत्थितः । इति ईदृशं इदं कर्म प्रत्यासन्नफलम् । एवं च महता यत्नेन प्रजापतिना चरितं इति सर्वं सत्यमेव । प्रतिसृष्टि च ऋतुलिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेः नानित्यताप्रसङ्गः इति । ( दिङ्मोहोदाहरणे देवशब्दार्थमाह– ) कर्मसु कौशलेन दीव्यन्तीति देवाः ऋत्विजः । ते देवयजनाध्यवसानानन्तरं दर्शपूर्णमासयोः अनभ्यस्तं सौमिकं कर्मराशिं आलोक्य कथं अविदितं करिष्यामः इत्याकुलीभावसामान्यात् दिङ्मोहाभिधानम् । तथा च लोके कर्तव्यतासु 'दिशो मे परिभ्रमन्ति' इति वक्तारो भवन्ति । तत्र तद्व्युदासेन अदितियागः प्रशस्यते । कथं तु तद्–व्युदसनं ? अवधारणावकाशदानात् । यावद्धि प्रायणीयायां प्राकृतानि समभ्यस्तानि कर्माणि क्रियन्ते, तावत् इतरेषु भविष्यत्सु प्रणिधानं भवति । अन्यथा सर्वस्मिन् अप्राकृते निरवकाशत्वात् अनवधारणं स्यात् । तेन आदित्यैनैव एतज्ज्ञापितं इति मोहापनयेन स्तुतिः ।

**रूपात् प्रायात् । ११ ॥**

**भाष्यं**— 'हिरण्यं हस्ते भवति अथ गृह्णाति' इति साकाङ्क्षत्वादस्य विधेः शेषः 'स्तेनं मनः' 'अनृतवादिनी वाक्' इति । निन्दावचनं हिरण्यस्तुत्यर्थेन । यथा किमृषिणा, देवदत्त एव भोजयितव्यः । कथं पुनः अस्तेनं मनः निन्दितुमपि स्तेनशब्देनोच्यते, वाचं च अननृतवादिनीमपि अनृतवादिनीति ब्रूयात् ? गुणवादस्तु रूपात् । यथा स्तेनाः प्रच्छन्नरूपाः एवं च मनः इति गौणः शब्दः । प्रायाच्च अनृतवादिनी वागिति ।

**वा**— इदं सर्वं क्रियमाणं मनसा संकल्प्य वाचा चाभिधाय क्रियते, तत् अत्यन्तान्तरङ्गभूतयोरपि अनयोः दूरेण हिरण्यादूनत्वं स्तेयानृतवादयोगादिति या निन्दा तन्मात्रपर्यवसायिनी, सा निषेधफला भवति । विधिपरा तु स्तुत्यर्था जायते तदुपपादनस्य इष्टार्थत्वात् यथा वक्ष्यति 'न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यात्' ( १०।८।४।७ ) इति ।

**दूरभूयस्त्वात् । १२ ॥**

**भाष्यं**— दृष्टविरोधे उदाहरणं 'तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः' 'तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' 'इति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति मिश्रलिङ्गमन्त्रयोर्विधानस्य आकाङ्क्षितत्वात् शेषः । उभयोर्देवतयोः संनिधाने होमः इति स्तुतेरुपपत्तिः । दूरभूयस्त्वात् धूमस्य अग्नेश्च अदर्शने गौणः शब्दः ।

**वा**— 'तस्माद् धूम एव' इति दिवा अग्निरादित्यं गच्छति इत्यस्य उपपत्तित्वेन । तदिदं किमर्थमुच्यते ? मिश्रलिङ्गाग्निहोत्रमन्त्रविधिस्तुत्यर्थम् । कथं पुनः 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इत्यनयोर्मिश्रलिङ्गत्वम् ? यदा विविक्तौ एव अग्निसूर्यौ देवतात्वेन उपलभ्येते । केचिदाहुः, अग्निर्ज्योतिः इत्यत्र ज्योतिःशब्दः सूर्यवाची, सूर्यो ज्योतिः इति पुनः अग्निवाची, तेन उभौ मिश्रलिङ्गौ इति । **तदयुक्तम्** । ज्योतिःश्रुतेः तेजःसामान्यवाचित्वेन उभयत्र सामानाधिकरण्येन उपपत्तेः । अन्यतरपर्यायश्च सन् इतरत्र न प्रयुज्येत । नहि यो यत्पर्यायः स तेनैव सह प्रयुज्यते । सूर्यवाची सन् प्रातर्मन्त्रे न प्राप्नोति, अग्निवाची सायंमन्त्रे । तस्मात् उदाहरणं भ्रान्तिलिखितं, इति इमौ उदाहर्तव्यौ, 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहा' इति । तद्विधेश्च स्तुतिः प्रथमविहितकेवलदेवत्यमन्त्रपर्युदासेन मिश्रलिङ्गविधानोपपत्तिः इयमुच्यते, यदनयोर्मिश्रत्वं दिवा अग्नेरनुप्रवेशात् नक्तं चादित्यस्य, इति केवलेज्या न युक्तेति । अस्मिन्नपि तु व्याख्याने पर्युदसनीयत्वेनैव पूर्वमन्त्रोदाहरणं, इतरौ तु स्तुतिभागिनौ मिश्रलिङ्गाभिधानादेव ज्ञास्येते इति नोच्चारितौ इति भाष्यं नेयम् । अथ वा उभयोः केवलमिश्रलिङ्गयोर्मध्ये पठितोऽयमर्थवादः । तत्र उभयदेवत्ययोः अन्या प्रशंसा, इतरयोः पुनरियं, यस्माद्दिवा अग्निरादित्यं गच्छति तस्मात् सूर्य एव तदा ज्योतिः । एवं नक्तमग्निः, अतस्तौ व्यवस्थितावेव यष्टव्यौ इति स्तुतिः । कथं तु धूम एवेत्यवधारणा ? दूरस्थैः भूम्ना दिवा धूम एव गृह्यते, रात्रौ अर्चिः इति केन चिदंशेन स्तुत्यालम्बनम् ।

**स्त्र्यपराधात् कर्तुश्च पुत्रदर्शनात् । १३ ॥**

**भाष्यं**— दृष्टविरोधे एव उदाहरणं 'न चैतद् विद्मः' इति । तत् 'प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयात्' इति आकाङ्क्षितत्वात् अस्य विधेः शेषः । अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यात् इति स्तुतिः । दुर्ज्ञानत्वात् अज्ञानवचनं गौणम् । स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन । 'अप्रमत्ता रक्षत तन्तुमेनं' इत्यादिना दुर्ज्ञानम् ।

**वा**— प्रवरे प्रव्रियमाणे यजमानो वदेत् 'देवाः पितरः' इत्यादि । तत्प्रशंसार्थं उक्तं अब्राह्मणोऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेन इति । तत्र प्रसिद्धब्राह्मणत्वानामेव ब्राह्मण्यलाभो निष्प्रयोजनः इति तदुपपत्त्यर्थमुक्तं 'न चैतद् विद्मः' इति । ज्ञायमाने तु अज्ञानवचनं दुर्ज्ञानत्वात् । यत् सुखेन अज्ञानं तदज्ञानमेव । तच्च स्त्र्यपराधनिमित्तम् । सत्यपि च स्त्र्यपराधे यदि मातुरेव क्षेत्रिणो वा पुत्रः स्यात्, ततस्तयोः प्रसिद्धजातित्वात् नैव दुर्ज्ञानता भवेत् । तयोरपि एवम् । एवं तत्पूर्वजयोः । इत्यनादिन्यायेन जातिरवधार्यैव । यतस्तु 'माता भस्त्रा पितुः पुत्रः' इति स्मर्तॄणां दर्शनं, जनयितुश्च नानाजातित्वोपपत्तिः, तेन वर्णसंकरः । वेदेऽपि च 'अप्रमत्ता रक्षत तन्तुमेनं' इति जातिविच्छेददर्शनं स्त्र्यपराधे कर्तृपुत्रनिमित्तमेव उपपद्यते । अन्यथा हि अपरिरक्ष्यमाणेऽपि नैव स्वजातितन्तुविच्छेदो भवेत्, तेन अस्ति प्रशंसाऽवकाशः इति । निरूढब्राह्मण्यप्रवरसंकीर्तनात् तत्प्रभवोऽयं इति ज्ञानात् ब्राह्मणः कृतो भवति इति स्तुतिः ।

**आकालिकेप्सा । १४ ॥**

**भाष्यं**— शास्त्रदृष्टविरोधे उदाहरणं 'को हि तद्वेद' इति 'दिक्ष्वतीकाशान् करोति' इति साकाङ्क्षत्वादस्य विधेः शेषः । प्रत्यक्षफलत्वेन स्तुतिः । अनवक्लृप्तिवचनं विप्रकृष्टकालफलत्वात् गौणम् ।

**वा**— यत् तदानीमेव उत्पद्यते तत् आकालिकम् । तच्च सर्वलोकस्य अभिमतं, न यत् चिरभावि । तस्मात् प्रवर्ग्यकाले दिक्षु अतीकाशकरणं प्राग्वंशस्य प्रशस्यते । तद्धि सद्यःफलं धूमक्लेशाननुभवात् । इतरस्तु कर्मजन्यं सत् कदा चित् भविष्यति । कः तद्वेद ? शास्त्रमात्रगम्यं हि तत्, इदं तु सर्वप्रत्यक्षम् । तदपेक्षया च ज्ञायमानेऽपि अज्ञायमानवचनं इतरप्रशंसार्थम् । पाठान्तरं 'आकालिकडाद्यन्तवचने' इति (पा० ५।१।११४, अत्र कैयटः, आदिः जन्म, अन्तो विनाशः । एककालौ आद्यन्तौ यस्य असौ आकालिकः । जन्मविनाशयोश्च

अव्यवहितकालत्वात् एककालत्वम् । इति । 'आकालिकः आशुविनाशी, पूर्वदिने मध्याह्नादौ उत्पद्य दिनान्तरे तत्रैव नश्वर इति वा ।' इति कौमुदी ) । अकालिकं इति वा पाठः । काल इति लोके विप्रकर्ष उच्यते । तत्र भवं, 'कालात् ठञ्' ( पा० ४।३।११ कालवाचिभ्यः ठञ् स्यात् । मासिकं सांवत्सरिकम् । ) इति ठञि कालिकम् । न कालिकं अकालिकम् ।

**विद्या प्रशंसा । १५ ॥**

**भाष्यं**— 'तथा फलाभावात्' इत्यनेन उदाहृतं 'शोभतेऽस्य मुखं' इति गर्गत्रिरात्रविधेः आकाङ्क्षितत्वात् शेषः । वेदानुमन्त्रणस्य च 'आऽस्य प्रजायां वाजी जायते' इति शेषः । मुखशोभा वाजिमत्त्वं च गुणवचनत्वात् गौणः शब्दः । शोभते इव शिष्यैः उद्वीक्ष्यमाणम् । कुले संतताध्ययनश्रवणात् मेधावी जायते इति स प्रतिग्रहात् अन्नं प्राप्नोति इति ।

**वा**— अध्ययनविधिशेषत्वात् अफलविधिः सन् यथाविज्ञातमुखशोभावाजिमत्त्वानुवादो विज्ञायते । न च एक एव प्रकारो मुखशोभायाः संस्थानं, रमणीयता लावण्यं चेति । स्त्रीविषयं ह्येतत् । विदुषां पुनः पदवाक्यन्यायोद्गारिमुखं शोभते । तेन आत्मना मुख्ययैव वृत्त्या शोभते । पुत्रश्च वाजवान् ब्रह्मवर्चसद्वारेण । अथापि गौणता, तथापि स्तुतिपरत्वात् अदोषः ।

**सर्वत्वमाधिकारिकम् । १६ ॥**

**भाष्यं**— अन्यानर्थक्यवाक्ये उदाहरणं 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' इति 'पूर्णाहुतिं जुहोति' इत्याकाङ्क्षितत्वात् अस्य विधेः शेषः । 'य उ चैनमेवं वेद' इति 'तरति मृत्युं' इत्यस्य आकाङ्क्षितत्वात् शेषः । फलवचनं स्तुतिः । सर्वकामफलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम् । असर्वेषु सर्ववचनं अधिकृतापेक्षम् ।

**वा**— संस्कारकर्मत्वात् न फलविधिः । स्तुतेस्तु आलम्बनं निमित्ते नैमित्तिकवदुपचारात् । सर्वकामनिमित्तानां कर्मणां सामान्यसाधनभूतान् अग्नीन् अवाप्नोति इत्यर्थः । सूत्रं च एवं योज्यते, सर्वकामनिमित्तैः कर्मभिः आहिताग्नित्वात् इदानीं अधिकृतः इति वक्तव्ये सति आधिकारिकं सर्वत्वं स्तोतुं अवाप्तौ उपचरितम् । ननु च आकाशगमनसुरकन्यालाभादयोऽत्यन्तासन्तः सर्वशब्देन वैदिकेषु कर्मसु निमित्तद्वारेणापि न शक्यन्ते अनुवदितुं अतः पुनः सूत्रमुच्यते । यथैव ओदनादिषु सर्वशब्दः अधिकृतापेक्षत्वात् न त्रैलोक्यं गृह्णाति, तथाऽत्र अग्निकर्माधिकृतफलग्राही भविष्यति इत्यदोषः ।

**फलस्य कर्मनिष्पत्तेस्तेषां लोकतः परिमाणतः फलविशेषः स्यात् । १७ ॥**

**भाष्यं**— अन्वारुह्य वचनमिदं, यद्यपि विधिः, तथापि अर्थवत्ता परिमाणतः सारतो वा फलविशेषात् ।

**वा**— तच्चैतत् समानस्वर्गादिफलेषु अग्निहोत्रादिषु उपयोक्ष्यते इत्युपन्यस्तं साधनानुरूपत्वात् साध्यानाम् । सर्वे हि कामाः पूर्णाहुत्या अवाप्यमानाः स्तोकस्तोकाः प्राप्यन्ते । तत्र फलभूमार्थिनः कर्मान्तरविधिः अर्थवान् भविष्यति, इति स्थिते चोद्यते । युक्तं लोके कृष्यादिफलानां प्रत्यक्षावगतत्वात् साधनानुरूपं जन्म । पूर्णाहुत्यादिषु तु अत्यन्तशास्त्राधीनत्वात् अविशेषश्रुते फले किंमूला विशेषकल्पना ? नहि अग्निहोत्रज्योतिष्टोमस्वर्गयोः कश्चित् विशेषः श्रूयते । न चानुमानं ईदृशे विषये समर्थम् । **तदभिधीयते** । विधिसामर्थ्यादेव इदं सिद्धम् । कथं ? यदि हि अल्पात् महतश्च कर्मणः समं फलं जायेत ततः 'अर्के चेन्मधु विन्देत' इत्यनेनैव न्यायेन अल्पेन सिद्धे, महति न कश्चित् प्रवर्तेत । तत्र विधिशक्तिबाधः स्यात् । अविहतशक्तिस्तु सन् 'अर्थाद्वा कल्पनैकदेशत्वात्' ( १।४।१४।२५ ) इति विधिरेव फलाधिक्यमङ्गीकरोति । अतो यथा विश्वजिदादौ फलसद्भावः प्रमाणवान् एवमिह तद्विशेष इति । किंच

**'कर्मणामल्पमहतां फलानां च स्वगोचरः ।
विभागः स्थानसामान्यादविशेषेऽपि चोदिते ॥'**

यथैव क्रमाम्नातानां अङ्गाङ्गिनां प्रथमस्य प्रथमं, द्वितीयस्य द्वितीयं इति विनियोगव्यवस्था, तथैव कर्मगोचरे अल्पस्य कर्मणः परिमाणसामान्येन फलगोचरे अल्पमेवोपतिष्ठते, मध्यमस्य मध्यमं, महतो महत् इति स्थानमेव विनियोजकम् । स्मरणमप्येवमेव । चातुर्मास्यसोमेषु च फलार्थवादः 'यदाऽग्निहोत्रं जुहोति अथ

दश गृहमेधिन आप्नोति एकया रात्रिया' इत्यारभ्य न्यूनाग्निहोत्रदशसंवत्सरप्रयोगादिभिः एकदर्शपूर्णमासादिप्रयोगावाप्तिवचनं कर्माल्पत्वमहत्त्वकृतं फलभेदं दर्शयति ।

**अन्त्ययोर्यथोक्तम्** । १८ ॥

**भाष्यं**— अभागिप्रतिषेधात् इत्यादौ उदाहृतं 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इति 'हिरण्यं निधाय चेतव्यं' इत्याकाङ्क्षितत्वात् अस्य विधेः शेषः । पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था । असति प्रसङ्गे प्रतिषेधो नित्यानुवादः । यच्च अनित्यदर्शनं 'बबरः प्रावाहणिरकामयत' इति, तत् परिहृतम् । अर्थवादाक्षेपेण पुनरुत्थितं इदानीं अर्थवादप्रामाण्ये तेनैव परिहारेण परिहरिष्यते इति ।

**वा**— यथैव वाङ्मनसयोर्निन्दा हिरण्यस्तुत्यर्था, तथा शुद्धपृथिवीनिषेधः 'प्रक्लृतावर्थवादः स्यात्' (१०।८।४।७) इत्येवं हिरण्यनिधानस्तुत्यर्थः, न प्रतिषेधमात्रफलः । 'नान्तरिक्षे न दिवि' इति औचित्येन शुद्धपृथिवीनिषेधसमर्थनायैव । यथा अन्तरिक्षे दिवि वा चयनं न प्रसिद्धं, तथा हिरण्यरहितायां पृथिव्यां इति स्तवनम् । अनित्यसंयोगो गतार्थः 'परं तु श्रुतिसामान्यं' (१।१।८।३१) इति । **प्रयोजनं** रात्रिसत्रे पूर्वपक्षे स्वर्गः फलं स्यात् इति, सिद्धान्ते तु अर्थवादस्थमेव फलम् ।

**शा**— अस्मिन्नेव सूत्रे विध्युद्देशातिरिक्तानां सर्वेषामेव (वेदवाक्यानां) आनर्थक्यं पूर्वपक्षीक्रियते । सिद्धान्तेऽपि स्वाध्यायविधिवशादेव अर्थवत्तया भवितव्यं इत्येतावत् साधारण्येनैवाभिधास्यते, पश्चात्तु क्रमेण स्तुत्याद्युपयोग इति दर्शयितव्यम् । तत्र प्रथममर्थवादेष्वेव सिद्धान्तकथनात् तानेवोदाहृत्य चिन्त्यते । तत्रैवं पूर्वपक्षः, '**अर्थवादा निराकाङ्क्षा भूतार्थप्रतिपादनात् । विध्युद्देशाः समाप्यन्ते विशिष्टार्थविधानतः ॥**' इति । सिद्धान्तस्तु '**स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते । समस्तेनार्थवादानां प्राशस्त्येन प्रमाणता ॥**' इति ।

**सोम**— अस्मिन् अधिकरणे मन्त्राणां अध्ययनविधिबलात् आनर्थक्यपरिहारेण अङ्गतया पदार्थविधया प्रामाण्यं सिद्धम् । मन्त्राधिकरणे तु अर्थप्रकाशनरूपद्वारव्युत्पादनेन अर्थवादप्रचोदितमन्त्रस्मारितद्रव्यदेवतादियुक्तनामावच्छिन्नधात्वर्थभावनाख्यधर्मप्रमितौ अर्थवादानां प्ररोचकतयेव मन्त्राणामपि स्मारकतया प्रामाण्यं सिध्यति इति व्युत्पाद्यमिति । **भवदेवस्तु** मन्त्राणामनुष्ठेयनिर्वापादिलक्षणधर्मबोधकत्वादेव प्रामाण्यम् । **न च** तर्हि निर्वापादेः शास्त्रान्तरावगतत्वेनानुवादत्वमात्रमेव, न तु प्रामाण्यं, अनधिगतार्थगन्तृत्वाभावादिति **वाच्यम्** । तथाप्यनुवादस्य प्रयोजनवत्त्वमात्रेण विद्वद्वाक्यवत् प्रामाण्योपपत्तिः इत्याह । **प्राभाकरास्तु**— भूतभव्यसमुच्चारणन्यायेन 'मलिनः स्नायात्' इत्यादौ स्नानादिकार्ये मालिन्यादेरिव अर्थवादानां चोदनार्थकार्ये हेतुत्वेनान्वयात् हेतुसापेक्षत्वलक्षणमप्रामाण्यं चोदनानां निराकर्तुमिदमधिकरणमित्याहुः । **तदयुक्तम्** । 'हेतुर्वा स्यात्' इति हेत्वधिकरणे 'तेन ह्यन्नं क्रियते' इत्यादेर्हेतुत्वेनान्वयस्य निराकरणेन अत्र हेतुत्वान्वयशङ्कानुदयात् । **प्रयोजनं** पूर्वपक्षे रात्रिसत्रादौ विश्वजिन्न्यायात् स्वर्गफलकत्वं, सिद्धान्ते त्वार्थवादिकफलसिद्धिः । एवमुच्चैस्त्वादीनां पूर्वपक्षे ऋग्धर्मत्वं, सिद्धान्ते वेदधर्मत्वमित्याद्यूह्यम् । **सूत्रार्थस्तु**— आम्नायस्य वेदस्य 'तद्भूतानां क्रियार्थेन समाम्नायः' इति क्रियार्थत्वावगमात् अक्रियार्थानामर्थवादादीनां आनर्थक्यं प्रयोजनवदर्थशून्यत्वं, तस्मादक्रियार्थकं सर्वमनित्यमुच्यते । अनित्यशब्दोऽयं अनित्यलौकिकवाक्यसादृश्यपरः सन् अप्रामाण्यमाह, तस्मादप्रामाण्यमुच्यते इति ।

**वि**— 'वायुर्वा इत्येवमादेरर्थवादस्य मानता । न विधेयेऽस्ति धर्मे किं किंवाऽसौ तत्र विद्यते ॥, विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात् । नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत् कुतः ॥, विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः । तेनैकवाक्यता तस्माद् वादानां धर्ममानता ॥' मा भूत् पदैकवाक्यता वाक्यैकवाक्यता तु विद्यते । तस्मादर्थवादा धर्मे प्रमाणम् ।

**गुरुमतेन**— 'वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत् । सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥'

**भाट्ट—** ' वायुर्वै... गमयति ' इत्याद्यर्थवादानां वेधिप्रतिषेधवदेव कर्तृस्मरणाभावात् अपौरुषेयत्वे पूर्वाधिकरणेन सिद्धे संप्रति तद्वदेव धर्माधर्मयोः प्रामाण्यमस्ति ा वेति विचार्यते । तत्र विधिप्रतिषेधवाक्याभ्यां स्वशक्त्या साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविषयकविधिप्रतिषेधयोः प्रतिपादनात् अर्थाच्च विधिप्रतिषेधविषययागादेः इष्टानिष्टसाधनत्वाक्षेपात् युक्तं तयोः इष्टानिष्टसाधनरूपधर्माधर्मप्रमाजनकत्वम् । अर्थवादानां तु शक्त्या सदसद्रूपसिद्धार्थबोधकत्वात् न धर्माधर्मयोः प्रामाण्यसंभवः । न च शक्त्या तदसंभवेऽपि लक्षणाऽध्याहारादिना तत्प्रतिपादनं, यथाश्रुतार्थप्रतिपादनेनैव उपपत्तौ अन्वयाऽनुपपत्त्यभावेन तदसंभवात् । न च तात्पर्यानुपपत्त्या तत्कल्पनं, तात्पर्यग्राहकाभावेन तस्या अप्यसंभवात् । नहि शब्दः प्रमाणमात्रं वा प्रयोजनवद्विषयमेव इत्येवंनियमे प्रमाणमस्ति, येन स एव तात्पर्यग्राहकः शङ्क्येत । निष्प्रयोजनानामपि बहुशो दर्शनेन व्यभिचारात् । **न च** ' स्वाध्यायोऽध्येतव्यः ' इति स्वाध्यायविधिरेव अर्थज्ञानोद्देशेन अध्ययनं विदधत् निष्प्रयोजनस्य अर्थज्ञानस्य भाव्यत्वानुपपत्तेः अर्थस्य प्रयोजनवत्त्वमाक्षिपति इति **वाच्यम्** । अर्थज्ञानजनकत्वेन अध्ययनस्य लोकसिद्धत्वेन अविधेयत्वात् । तन्नियमस्य अर्थज्ञाने अनुपयोगात् अव्यभिचरितक्रतुसंबन्धाभावेन क्रतुं यावत् उपयोगकल्पनाऽनुपपत्तेश्च न विधेयत्वम् । अतः स्वाध्यायविधिना स्वर्गाद्यर्थमेव अध्ययनं विधीयते, लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा अध्ययनमेव भावनायां भाव्यमस्तु, न चैवं इष्टभाव्यकत्वाभावात् प्रवृत्त्यनुपपत्तिः ' अनधीयाना व्रात्या भवन्ति ' इति वचनेन अकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः । अतस्तस्य वेदत्वावच्छेदेन प्रयोजनवद्विषयकत्वानाक्षेपकत्वात् नार्थवादेषु तद्बलेन लक्षणासिद्धिः इति अप्रमाणं अर्थवादा धर्माधर्मयोः । **इति प्राप्ते,** न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् । नापि यथाश्रुतार्थज्ञानार्थं, तथात्वे व्रात्यत्वबोधकवाक्येन अध्ययनस्य आवश्यकत्वात् गृहीतपदपदार्थसंगतिकस्य ' स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा ' इत्यादिवचनाच्च ( निरुक्त १।१८ ) ज्ञानस्य आवश्यकत्वेन यथाश्रुतार्थज्ञानस्य आनुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेन अध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं विधीयते प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वा अध्ययनमात्रं, तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च जिज्ञासाऽधिकरणोक्तरीत्या स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ तात्पर्यग्राहकवशेन लक्षणासिद्धिः अर्थवादेषु । लक्षणीयश्चार्थः संनिहितविधिनिषेधापेक्षितत्वात् स्तुतिनिन्दास्वरूपः । तथाहि । लिङाद्यर्थः लोके पुरुषाशयः, वेदे च तदभावात् लिङादिनिष्ठ एव कश्चिद्धर्मः । वाच्यताऽवच्छेदकं च उभयसाधारणं व्यापारत्वं , न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि , तस्य अन्यलभ्यत्वात् । तत्र नञः अभावे आख्यातार्थप्रवृत्तिप्रयोजकत्वं , तत्सत्त्वे तु तदर्थप्रवृत्त्यभावप्रयोजकत्वं संसर्गः इति विशेषः । प्रयोजकत्वं चात्र प्रवृत्तितदभावकारणीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । अभावकारणता च योगक्षेमसाधारणी । तत्त्वं च प्रवृत्तिसामग्रीविघटकत्वं इति अन्यत्र विस्तरः । स च लिङाद्यर्थः विधिवाक्ये प्रवर्तनाप्रेरणाविध्यपरपर्यायः । निषेधवाक्ये निवर्तनानिवारणानिषेधप्रतिषेधापरपर्यायः । इयं च द्विविधाऽपि शाब्दीभावना । तस्याश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती , शब्दभावनाज्ञानं करणम् । करणत्वं चात्र भावनाभाव्यनिष्पादकत्वम् । इतिकर्तव्यता च यथायोगं स्तुतिनिन्दे । स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकसहकारित्वं रुच्यरुच्युत्पादनद्वारा लोकसिद्धम् । स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्वरूपे । ते च यथायोगं विधिनिषेधापेक्षितत्वात् तत्तत्समभिव्याहृतार्थवादैः लक्षणया प्रतिपाद्येते । तत्र ' वायुर्वै क्षेपिष्ठा ' इत्यादौ स्वशक्यक्षेपिष्ठत्वादिगुणैरेव लक्षणा । ' यजमानः प्रस्तरः ' इत्यादौ गौणीगम्यस्वकार्यकरत्वादिगुणैः इति वक्ष्यते । अतः सिद्धं

भावनाऽन्वितस्तुतिनिन्दाविषयकप्रमाजनकत्वेन अर्थवादानां धर्माधर्मयोः प्रामाण्यमिति ।

**प्रयोजनं** पूर्वपक्षे अर्थवादानुपस्थितप्राशस्त्यज्ञानादपि प्रवृत्तौ फलसिद्धिः । सिद्धान्ते तु मन्त्रवत् अर्थवादानामेव प्ररोचकत्वनियमात् तदुपस्थितप्राशस्त्यज्ञानादेव प्रवृत्तौ सा इति द्रष्टव्यम् ।

**मण्डन**— ' स्तुतिः क्षेपिष्ठता वायोः । '

**शंकर**— ' अर्थवादादिमानता । ' १.

' अर्थवादोपयोगश्च । ' २.

* वाक्यशेषाणां सर्वेषां आनर्थक्यनिराकरणेन अर्थवादत्वं **अर्थवादाधिकरणेनैव** सिद्धम् । **सु.** पृ. ३९७. * **अर्थवादाधिकरणे** कल्पानां पौरुषेयत्वेऽपि प्रवाहनित्यतया नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिः प्रपञ्चिता । **कु.** १।३।७।१०. * अर्थवादाधिकरणे द्विपर्वा विचारः । (१) पूर्वं तावत् एषां अक्रियार्थत्वेन अनुपयोगमाशङ्क्य अध्ययनविधिबलात् ' विधिना त्वेकवाक्यत्वात् ' ( १।२।७ ) इति सूत्रावयवेन, तुल्यं च सांप्रदायिकं ( १।२।८ ) इत्यनेन च सूत्रेण निराकृतं ( २ ) द्वारासंभवात् पुनः उज्जीव्य अर्थवादानां तावत् द्वारविशेषः अस्मिन्नधिकरणे चिन्त्यते । तस्मादनेन सूत्रेण सामान्यविशेषरूपेण पूर्वपक्षद्वयं तन्त्रेणोच्यते, आम्नायस्य ' तद्भूतानां क्रियार्थेन समाम्नायः ' ( १।१।२५ ) इत्यनेन न्यायेन क्रियार्थत्वावधारणात् अर्थवादानां तदसंभवादानर्थक्यम् । अथापि अध्ययनविधिबलात् एषां कथं चित् क्रियाऽर्थत्वं कल्पयितुमारभ्यते, तथापि अर्थवादानां तावत् द्वारासंभवात् दुष्प्रतिहरमानर्थक्यं इति । **सु.** पृ. ३. अत एव शंकरभट्टैः ' अर्थवादादिमानता । ' ' अर्थवादोपयोगश्च ' इति अधिकरणद्वयं स्वीकृतम् । **के.** * अर्थवादाधिकरणे नामधेयानां सामान्योपयोगानभिधानेऽपि अर्थवादवदेव अध्ययनविधिवशादेव गुणविधित्वेन नामधेयत्वेन च उभयथाऽपि उपयोगसिद्धिः । **कौ.** १।४।१।१ पृ. १५३. * अर्थवादाधिकरणे व्यवस्थापितमिदं यत् रुद्रः अरोदीत् इति इतिहासानुसारेण नास्मदादिभिरपि रोदितव्यं इति विधिकल्पना संभवति इति । **सनातनधर्मप्रदीपे** प्रमाणप्रकाशे पृ. ९४. * अर्थवादाधिकरणे समाम्नायैदमर्थ्यं व्यवस्थापितम् । **कु.** १।४।१।१. * अर्थवादवाक्यानां अन्यपराणामपि मानान्तरप्राप्तिविरोधयोरसतोः स्वार्थे प्रामाण्यं **अर्थवादाधिकरणे** वक्ष्यते । १।१।८।३२. * वेदस्य प्रयोजनवदर्थाभिधायित्वनियमः अर्थवादाधिकरणे स्थितः । **सु.** पृ. ७१२. * संबन्धग्रन्थे ' कर्मप्रवृत्तिहेतुत्वं आत्मज्ञानस्य लक्ष्यते ' इत्यत्र, अर्थवादाधिकरणे च ' एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेण उपनिषदां नैराकाङ्क्ष्यं व्याख्यातं ' इत्यत्र ( वा. पृ. ११४ ) आत्मज्ञानस्य क्रत्वर्थत्वाभिधानम् । **सु.** पृ. ३२६. * **अर्थवादाधिकरणगुणसूत्रैः** गौण्या वृत्त्या ' स्तेनं मनः ' इत्यादिषु अवयवार्थपरत्वस्यापि प्रदर्शनात् । **कु.** १।२।१।१८.

* **अर्थवादाधिकरणप्रयोजनं**— रात्रिसत्रे अर्थवादस्थं फलं अर्थवादप्रामाण्याधीनम् । एवं अक्ताः शर्कराः इत्यत्र संदिग्धार्थनिर्णयः, अश्वप्रतिग्रहेष्टयां व्यवधारणकल्पनं, वमनेष्ट्यां वैदिकसोमवमननिमित्तकत्वं, ' अष्टावुपभृति गृह्णाति ' इत्यत्र चतुष्टूवद्वयकल्पनं, ज्योतिष्टोमशब्दस्य सोमयागपरत्वं, धाय्यानां समिध्यमानवतीसमिद्धवत्यन्तरालनिवेशः, सोमविद्याप्रजानां आवश्यकत्वं, ' द्वयोः प्रणयन्ति ' इत्यस्य मध्यमपर्वद्वयविषयत्वं च प्रयोजनं, तेषां अर्थवादप्रामाण्याधीनत्वात् । **सु.** पृ. ६६.

* अर्थवादाः स्तुतिपराः, न स्वार्थपराः इति **अर्थवादाधिकरणसिद्धान्तः** । **सना. प्रदीपे** प्रमाणप्रकाशे पृ. २६३.

* **अर्थवादाधिकरणस्थेन** ' गुणवादस्तु ' इति गुणवादसूत्रेण ' आपो वै शान्ताः ' इति अभिजनस्तुतिद्वारेण अवकानामेव स्तुतिः इति विधिस्तुत्योः वैयधिकरण्यपरिहारः । **पराक्रमः.** ४४।२. * **अर्थवादाधिकरणस्थेषु** ' गुणवादस्तु ' ' रूपात् प्रायात् ' इत्यादिगुणसूत्रेषु तत्सिद्ध्यधिकरणसिद्धामेव गौणीं वृत्तिमाश्रित्य ' आपो वै शान्ताः ' ' स्तेनं मनः ' इत्यादीनां स्तावकत्वं प्रतिपादितं इति न पौनरुक्त्यम् । **कु.** १।४।१९.

* **अर्थवादानपेक्षो विध्युद्देशः** 'वसन्ताय कपिञ्जलानालभते' इति । **सु. पृ. ७.**

* **अर्थवादार्थस्य** निष्प्रयोजनत्वात् न अर्थवादानां स्वार्थे पर्यवसानम् । **सु. पृ. ५२५.**

( 'अर्थवादभेदाः' इति लघुसिद्धान्तोत्तरं 'अर्थवादाधिकरणं' इत्यस्मात् प्राक् उत्तरे लघुसिद्धान्ताः पठनीयाः । अनवधानात् प्राक् न मुद्रिताः । )

[ * **अर्थवादमन्त्रौ** विध्यन्वयेन प्रमाणम् । **वि.** १।४।१.

* **अर्थवादवाक्यं** च फलवदर्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्थमपेक्षते । तत्र पुरुषार्थपर्यवसितविध्यपेक्षितं प्राशस्त्यं लक्षणावृत्त्या समर्पयदर्थवादवाक्यं विधिवाक्येन सह एकवाक्यतामापद्यते । 'यतः क्षिप्रगामिस्वभावतया शीघ्रफलप्रदो वायुः अस्य पशोर्देवता, ततः प्रशस्तमिमं वायव्यं पशुमालभेत' इति वाक्ययोरन्वयः । **वि.** १।२।१०

* **अर्थवादविधिवाक्ययोः** अन्यतरव्यतिरेकप्रयुक्तप्रवृत्त्यजनकत्वेन आकाङ्क्षा । **मणि. पृ. ६६.**

* **अर्थवादसहित**विधिकाण्डातिदेशः साकमेधीययोरैन्द्राग्नैककपालयोः । **भा.** ७।१।४।२२, * अर्थवादसहितवैश्वदेविकविधिकाण्डातिदेशः वारुणप्राघासिकपञ्चसंचरेषु । ७।१।३।१७–२१.

* **अर्थवादस्थं** नामधेयं न धर्मातिदेशकं इति अष्टमे वक्ष्यामः । **भा.**

* **अर्थवादातिदेशः**— आनुमानिकवचनातिदेशेऽपि अर्थवादातिदेशसिद्धिः । **भाट्ट.** ७।१।३. ]

* **अर्थविप्रकर्षः** तत्र आश्रीयते, यत्र तेन विना एकवाक्यत्वं नावकल्पते । **वा.** ३।३।१२।३३ **पृ.** ८७७. * अर्थविप्रकर्षः श्रुत्यादेः सकाशात् लिङ्गादेः श्रुतिलिङ्गाधिकरणादौ एव द्रष्टव्यः । **के.**

* **अर्थशब्दस्य** प्रयोजनवाचित्वम् । **सु. पृ.** ८६७, * **अर्थशब्दस्य व्युत्पत्तिः** ऋ गतौ इत्यस्य धातोः औणादिकः थन् प्रत्ययः । पृ. ६८४.

* **अर्थशास्त्रस्य** दृष्टप्रमाणमूलत्वेन प्रामाण्यसिद्धिः । **सु. पृ.** १८५ पं. २.

* '**अर्थसत्यं** यथा वाच्यं शब्दसत्यं तथैव हि । शब्दानृतं च हातव्यमर्थानृतवदेव नः ॥' **वा.** १।३।८।२५ पृ. २७६.

⌛ **अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि ।** ६।४।४।१० ॥

दर्शपूर्णमासयोः 'भिन्ने जुहोति' इति कपालस्रुगादिभेदे प्रायश्चित्तमुक्तं, आज्यादिहविषि 'स्कन्ने जुहोति' इति च । इदं प्रायश्चित्तं एकदेशेऽपि, कृत्स्ने एकदेशेऽपि वा भिन्ने स्कन्ने वा स्यात् । अर्थसमवायात् अर्थस्य कृत्स्नस्येव एकदेशस्यापि भिन्नत्वे 'भिन्ने जुहोति' इतिविधिगतभिन्नपदार्थे समवायात् संबन्धात् अन्तर्भूतत्वात् । तस्मात् एकदेशस्यापि भेदनादौ प्रायश्चित्तं कर्तव्यं इति सिद्धान्तः ।

**न त्वशेषे वैगुण्यात् तदर्थं हि । ११ ॥**

पूर्वपक्षी शङ्कते । तुशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । एकदेशभेदनादौ एव प्रायश्चित्तं न तु अशेषे कृत्स्ने भिन्ने प्रायश्चित्तं संभवति, वैगुण्यात् सर्वथैव कार्याक्षमत्वात् । हि यस्मात् होमलक्षणमिदं प्रायश्चित्तं तदर्थं भिन्नस्य कपालस्य संस्कारार्थम् । कृत्स्नभेदे तु कस्य संस्कारः ? तस्मात् एकदेशभेदे एव प्रायश्चित्तं, न कृत्स्नभेदे । अथवा, अशेषे सर्वस्मिन् कपाले भिन्ने तु न तत् प्रायश्चित्तम् । वैगुण्यात् प्रायश्चित्तस्य निरर्थकत्वात् । दोषनिर्घातो हि प्रायश्चित्तस्य गुणः फलम् । न च सर्वभेदः प्रायश्चित्तेन परिहर्तुं शक्यते । हि यस्मात् प्रायश्चित्तं तदर्थं भेदनदोषनिरासार्थं विहितम् । सर्वभेदे तु तन्न युज्यते । तस्मात् सर्वभेदे न प्रायश्चित्तम् । इति पूर्वः पक्षः । अशेषवैगुण्यात् इति कुतूहले पाठः । निमित्तस्य हेतुत्वविवक्षया सप्तम्यर्थे पञ्चमी । अशेषस्य कृत्स्नस्य भेदनादौ वैगुण्यात् इत्यादिरर्थस्तु पूर्ववत् ।

**स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्न हि तस्य गुणार्थेनानित्यत्वात् । १२ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्त्य पूर्वोक्तमेव सिद्धान्तं सोपपत्तिकमाह । एकदेशभेदने इव कृत्स्नभेदनेऽपि प्रायश्चित्तं स्यात् । प्राप्तनिमित्तत्वात् प्राप्तं भेदनरूपं निमित्तं यस्य प्रायश्चित्तस्य तादृशत्वात् । कृत्स्नभेदनेऽपि

प्रायश्चित्तस्य भेदनरूपं निमित्तं प्राप्तमेव भवति । प्राप्ते च निमित्ते नैमित्तिकं कर्तव्यम् । यत्तु अंशतो भिन्नस्य संस्कारार्थं प्रायश्चित्तमिति, तन्न । अतद्धर्मो नित्यसंयोगात् । तस्य भिन्नस्य कपालादेर्धर्मः तद्धर्मः, न तद्धर्मः अतद्धर्मः । होमः न भिन्नकपालधर्मः । कुतः ? नित्येन दर्शपूर्णमासकर्मणा होमस्य संयोगात् संबन्धात् । दर्शपूर्णमासाङ्गमेव हि अयं होमः, न भिन्नकपालाद्यङ्गम् । हि यस्मात् तस्य दर्शपूर्णमासकर्मणः नित्यस्य यो गुणः कपालं, तस्य अर्थेन होमस्य संयोगोऽस्ति । अथवा तस्य होमस्य कपालरूपगुणार्थेन कपालभेदनेन न संयोगः, अनित्यत्वात् भेदनस्य । अत्र अवान्तरवाक्यत्रयम् । तस्मात् सर्वभेदनेऽपि प्रायश्चित्तम् ।

**गुणानां च परार्थत्वाद् वचनाद् व्यपाश्रयः स्यात् । १३ ॥**

भेदनहोमः न भिन्नकपालाङ्गं इत्यत्र हेत्वन्तरमाह । चकारः समुच्चयार्थः । गुणानां परार्थत्वात् होमो न कपालाङ्गम् । दर्शपूर्णमासयोः कपालमपि गुणः होमोऽपि गुणः । अङ्गानि च परार्थानि प्रधानार्थानि । न च विना वचनात् गुणो गुणार्थः स्यात् । विद्यमानात्तु वचनात् गुणोऽपि कदा चित् गुणस्य व्यपाश्रयः आश्रयः स्यात् । न चात्र तथा वचनम् । तस्मात् भेदनादिहोमः न भिन्नकपालाद्यर्थः, किंतु दर्शपूर्णमासार्थ एव । व्यपाश्रयशब्दस्य ' मां हि पार्थ व्यपाश्रित्य ' ( भगी. ९।३२ ) इत्यादौ आश्रयः इत्येवार्थः । कुतूहले तु " भिन्ने जुहोति ' इति वचनात् भिन्नस्य संस्कार्यत्वेन व्यपाश्रयणं अनाश्रयणं स्यात् " इत्युक्तम् । सुबोधिन्यां च ' वचनात् व्यपाश्रयः अन्यत्र विनियोगः ' इत्युक्तम् ।

**भेदनार्थमिति चेत् । १४ ॥**

भिन्नकपालसंस्कारार्थं एव होमः इति पूर्वपक्षी शङ्कते । ' गायत्र्या त्वा शताक्षरया संदधामि इति भिन्नं कपालं संदध्यात् ' इति द्वितीयाश्रुत्या संधानस्य भिन्नकपालार्थत्वावगमात् होमकरणमपि भेदनार्थं भिन्नकपालसंस्कारार्थं स्यात् । वचनाच्च गुणोऽपि गुणार्थः स्यात् । इति चेत् पूर्वपक्षी ब्रूयात् ।

**नाशेषभूतत्वात् । १५ ॥**

आह सिद्धान्ती । न संधानं होमो वा भिन्नकपालार्थम् । संधानं न भेदमपहन्ति, येन भिन्नशेषः स्यात् । न भिन्नं कपालं होमेन मन्त्रेण वा संधातुं शक्यते । मृदा तु संधानं भवति । तथापि भिन्नबुद्धिर्नैवापैति । तथा च संधानस्य अशेषभूतत्वात् शेषभूतत्वाभावात् न होमः भिन्नकपालसंस्कारार्थः । होमरूपस्य प्रायश्चित्तस्य भेदनार्थत्वं ग्रहीतुं न शक्यम् । होमस्य भेदनशेषभूतत्वाभावात् । नहि होमो भेदनशेषः । नहि भूतं भेदनं होमेन निराकर्तुं शक्यते, नापि होमेन भेदनं कर्तुं शक्यते । भेदनशेषभूतत्वाभावात् होमरूपं प्रायश्चित्तं न भेदनार्थम् ।

**अनर्थकश्च सर्वनाशे स्यात् । १६ ॥**

सर्वनाशे च अनेकधा भेदनेन सर्वकपालनाशे च होमः अनर्थक एव स्यात् । ' भिन्नं कपालमप्सु प्रास्यति, अथान्यदुपदधाति ' इति वचनेन अन्यदेव कर्तव्यमुक्तम् । वस्तुतस्तु एकदेशभेदनं वा सर्वभेदनं वा होमेन न समाधातुं शक्यम् । भेदने तु निमित्ते दर्शपूर्णमासाङ्गत्वेनैव नैमित्तिको होमो विधीयते इति सिद्धान्तः । **के.**

* **' अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि '** इत्यत्र एकदेशभेदे एव ' भिन्ने जुहोति ' इति होमः इति पूर्वपक्षे ' होमोऽयं भिन्नसंस्कारो भेददोषनिबर्हणात् ' इति हेतुरुक्तः । कृत्स्नैकदेशभेदेऽपि होम इति सिद्धान्ते तु नित्यानित्यसंयोगविरोधः इति हेतुरुक्तः । **बाल.** पृ. १४.

* **अर्थसामर्थ्यं लिङ्गम्** । **बाल.** पृ. ९.

* **अर्थसिद्धात् श्रुतं बलवत्** । कृष्णविषाणाप्रासनोत्तरं हस्तेन कण्डूयनं अर्थसिद्धम् । तच्च श्रुतेन कृष्णविषाणया कण्डूयनेन द्विरात्रादौ बाध्यते । **के.** ११।३।६।१३–१४.

* **अर्थादिक्रमः** प्रातिस्विकविध्यभावात् केवलप्रयोगविधिविषेयः । **सोम.** ५।१।१ वर्णकं ३.

* **अर्थाधिकरणं**, अर्थाद्वाऽधिकरणमेवेदम् । **के.** १।४।१४।२५ ॥

* अर्थाध्याहारस्य निरस्तत्वात् । संकर्ष. २।३।२.

* **अर्थाध्याहारपक्षखण्डनम्** । ननु अर्थमेव अध्याहृत्य वाक्यं पूर्यतां, किं शब्दकल्पनया । नार्थमात्रेण पूरणं संभवति । एकवाक्यभूतपदद्वयप्रतिपादिता हि पदार्थाः वाक्यार्थं प्रतिपादयन्ति नान्यथा । नहि आनय इत्येतावति उक्ते, गां इत्यनुक्ते, प्रत्यक्षप्रतिपन्नेऽपि गवि गवा सह आनयनं अन्वीयते । एवं च विकृतिषु सौर्यादिषु असमवेतार्थाग्न्यादिपदनिवृत्तेः न्यूनसाकाङ्क्षमन्त्रवाक्यपूरणाय सूर्यादिपदप्रक्षेपात् ऊहसिद्धिः । अर्थाध्याहारवादिनां तु सूर्यार्थेन अध्याहृतेन विशिष्टं निर्वपामिपदमेव प्रकाशयति इति नोहः सिध्येत् । तथा यत्र अधिकारवाक्ये अर्थवादमात्रं श्रुतं 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति, तत्रापि भवन्मते विध्यर्थ एव अध्याहार्यः, न विधिशब्दः । ततश्च प्राकृतस्योपकारस्य पदार्थानां च नापूर्वैदमर्थ्यं सिध्येत् । सत्स्वपि हि अर्थानां आकाङ्क्षासंनिधियोग्यत्वेषु नाभिधानमन्तरेण अन्वयसिद्धिः । न चेह अपूर्वाभिधायी शब्दोऽस्ति, योऽपूर्वं प्राकृतैरन्वितं अभिदध्यात् । नापि प्राकृताः शब्दाः विकृतौ सन्ति, ये स्वार्थान् अपूर्वान्वितानभिदध्युः । न च अर्थवादपदार्थैः तेषामन्वयः, नापि उत्पत्त्यपूर्वेण इति अनन्वय एव स्यात् । एवं प्रकृतावपि 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यत्र विधिशब्दस्य अनाम्नानात् अनध्याहाराच्च विध्यर्थस्यैव स्वर्गकामाधिकारापूर्वात् आग्नेयाद्युत्पत्त्यपूर्वेभ्यश्च पृथग्भूतस्याध्याहारात् न समिदादीनां ऐदमर्थ्यं सिध्येत् । नहि समिदादियजतयः अवघातादिवत्, अधिकारापूर्वान्वितं स्वार्थमभिधातुमलं, स्वापूर्वविषयत्वव्याघातात् । तस्मात् ईदृशेषु अधिकारविधिषु विधिशब्द एव अध्याहार्यो नार्थः । कथं च विध्यर्थस्य अत्यन्तालौकिकतया प्रमाणेन तदाभासेन वा बुद्धौ आरोपयितुमशक्यत्वेन अभिमतस्य बुद्धिसंनिधानात्मकः अध्याहारः अश्रुतविधिशब्दकेषु अधिकारवाक्येषु वा, उत्पत्तिवाक्येषु 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां' इत्यादिषु वा शक्यते, इत्यकामेनापि शब्दाध्याहारः अङ्गीकर्तव्यः । **शा.** १।१।५ पृ. ८२-८३.

* **अर्थाध्याहारपक्षसमर्थनम्** । **अत्र केचित्**, 'पीनो देवदत्तः, दिवा न भुङ्क्ते' इति श्रुतार्थापत्तौ रात्रौ भुङ्क्ते इति शब्द एव कल्प्यते इति वदन्ति । तथाहि पीनत्वानुमितं भोजनं दिवा निषिद्धं रात्रिभोजनकल्पनया शब्दसंजल्पितया सविकल्पिकया शाम्यतीति शब्दः एव प्राथम्यलाघवाभ्यां कल्प्यते, कल्पितेन तेनोपस्थापितादर्थादनुपपत्तिशान्तेः । **नन्वे**वमैन्द्रियकसविकल्पकज्ञानेऽपि प्राथम्यलाघवाभ्यां शब्दस्यैव कल्पनया अनैन्द्रियकत्वप्रसङ्गः । **नैवं**, तिर्यगादिषु शब्दशून्येष्विन्द्रियस्यार्थे एव शक्त्यवधारणान्न शब्देऽपि सामर्थ्यकल्पनं युक्तम् । **अथ** दृष्टार्थापत्तौ अर्थे एव शक्तिः क्लृप्तेति नात्रापि शब्दः कल्पनीयः, **नैवं**, तत्राप्युपपादकेऽर्थे शक्तिकल्पनं नार्थमात्रे । अत्र शब्द एवोपपादक इति शब्द एव श्रुतार्थापत्तौ कल्प्यः । अत एव विश्वजिदादौ स्वर्गकामपदाध्याहारः, द्वारं इत्यादौ संव्रियतां इति पदाध्याहारः, ऊहेऽपि 'सूर्याय जुष्टं निर्वपामि' इति शब्द एव कल्प्यते, तथा अनुषङ्गेऽपि । अपि च पचति इति प्रयुक्ते ओदनादिपूरकपदाश्रवणे प्रत्यक्षौदनेन अनुपपत्तिशान्तिः स्यात्, न च तथा दृश्यते, तस्माद्वाक्यगतानुपपत्तेस्तत्पूरकः शब्दः एव कल्पनीय इति । एतदेवाभिप्रेत्य भाष्यकारेण 'दृष्टः श्रुतो वा' इति श्रुतपदं प्रयुक्तमिति । **तदिदमनुपपन्नं**, श्रुतार्थापत्तावपि अर्थ एव कल्पनीयः, न शब्दः । शब्दविशिष्टसविकल्पके तद्विशिष्टोऽर्थ एव वेद्यः, न शब्दस्यापि वेद्यत्वं, तस्य स्मृतिसमारूढत्वात्, अतोऽत्र शब्दविशिष्टकल्प्याभिनिवेशोऽप्यर्थस्यैव कल्प्यत्वं, न शब्दस्यापि । अतो न शब्देन कल्पितेन अनुपपत्तिशान्तिः । **अथ** बोधकावस्थशब्दस्य कल्प्यत्वादनुपपत्तिः शाम्यतीति चेत्, **नैवं**, तत्रापि प्राप्ताप्राप्तविवेकेनार्थस्यैवानुपपत्तिशामकत्वं, न शब्दस्य । किंच अर्थपरावस्थस्य कल्पने अर्थे शब्दे च शक्तिकल्पनमिति गौरवप्रसङ्गात् वरमर्थमात्रस्यैव कल्पनम् । अपि च दृष्टार्थापत्तेः उपपादकार्थमात्रे शक्तिर्दृष्टा, श्रुतार्थापत्तौ तूपपादकबोधकशब्दे शक्तिकल्पनमिति वैरूप्यमप्यसांप्रतम् । किंच अन्यत्र सविकल्पके स्मृत्यारूढशब्दो दृष्टः इति अत्रापि तथाविधस्यैव

कल्पनाप्रसङ्गः, न मितिस्थस्य, एवं च विश्वजिदादावपि अर्थसद्भावाद्वाक्यार्थापरिपूर्तिरिति अर्थ एव तत्रापि कल्प्यः। यत्तूक्तं ऊहादौ शब्दकल्पना दृष्टेति, सत्यं दृष्टा, तत्र साक्षाच्छब्द एवोपपादकः, न तु शब्दस्योपपादकत्वोधकत्वम्। तथाहि, आभिधानिकं प्रकाशकं प्रकृतौ मन्त्राणां कार्यतया क्लृप्तं, अतो विकृतावपि तत्कार्योपपत्तये सूर्यायेति शब्दप्रक्षेपो युक्तः। एवमनुषङ्गेऽपि। यत्पुनरेतदभिहितं पचतीत्युक्ते प्रत्यक्षसिद्धस्यौदनस्यान्वयेनानुपपत्तिशान्तिप्रसङ्ग इति, तच्च नैवं, तत्र विवक्षावधारणाभावादनन्वयः, न शब्दाभावात्। अतोऽवधारितायामन्वयोऽस्त्येवेति सर्वमुपपन्नम्। **प्रवि.** पृ. ५५–५६.

* **अर्थानुसारेण** सूक्तवाकविनियोगः। **भा.** ३।२।६।१६-१९.

**अर्थान्तरे विकारः स्यात् देवतापृथक्त्वादेकाभिसमवायात्।** ९।३।१४।४४॥

अग्नीषोमीयादर्थान्तरे ऐकादशिनेषु पशुषु एकाभिसमवायात् एकस्यामेकस्यां देवतायां देवतात्वस्य अव्यासक्तस्य समवायात् विद्यमानत्वात् देवतापृथक्त्वं स्यात्। भिन्ना एता देवताः, नात्र कश्चित् गणः। एकाभिसमवायेन देवतानां पृथक्त्वात् अध्रिगुप्रैषगतमेधपतिशब्दस्य एकवचनान्तस्य द्विवचनान्तस्यापि च विकारः बहुवचनान्तत्वेन ऊहः स्यात्। तस्मात् विकल्पेन ऊहेन द्वयोरपि प्रवृत्तिः इति सिद्धान्तः। **के.**

* **अर्थापत्तिः** अन्यथाऽनुपपत्तिरूपा। **सु.** पृ. १४०१. * अर्थापत्तिः ज्ञानकरणिका। **मणि.** पृ. १९. * अर्थापत्तिः दृष्टः श्रुतो वा अर्थः अन्यथा नोपपद्यते इत्यर्थकल्पना। यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य परिकल्पना। प्रमितस्यार्थस्य अर्थान्तरेण विना अनुपपत्तिमालोच्य तदुपपत्तये या अर्थान्तरकल्पना सा अर्थापत्तिः। अत्र यन्नोपपद्यते तदेव गम्यम्। गृहाभावेन हि विना बहिर्भावो नोपपद्यते। यस्य हि जीवनं गृहसंबन्धेन प्रत्यक्षतोऽवगतं, तस्य गृहाभावे दृष्टे जीवनं सांशयिकं भवत् बहिर्भावकल्पनया समाधीयते। ततश्च प्राग्बहिर्भावकल्पनायाः जीवनस्य संदिग्धत्वात् न लिङ्गत्वम्। नहि संदिग्धं लिङ्गं भवति। जीवनरहितं च गृहाभावमात्रं मृतेऽपि सद्भावात् अनैकान्तिकं न बहिर्भावमनुमापयितुमलम्। अतः अनुमानासंभवात् प्रमाणान्तरमेवेदम्। यथा च अनुमाने निश्चितं गमकं एवमर्थापत्तौ संदिग्धं गमकं इति दर्शनबलादभ्युपगम्यते। संशयश्चात्र पूर्वदृष्टरूपविसंवादात्। प्रमाणसिद्धयोरर्थयोः परस्परं प्रतिघातः अर्थान्तरकल्पनया समाधेयत्वेन आलोच्यमानः अर्थापत्तेः कारणम्। तत्समाधानाय च अर्थान्तरकल्पना अर्थापत्तिः प्रमाणान्तरम्। ('दृष्टः श्रुतो वाऽर्थः' इति आदिमवाक्ये–) दृष्टग्रहणेनैव प्रतीतिमात्रग्रहात् श्रौतस्यापि ग्रहणे सिद्धे श्रुतार्थापत्तेः प्रमाणग्राहिणीत्वेन दृष्टार्थापत्तितो वैलक्षण्यमुपपादयितुं श्रुतग्रहणम्।

(**श्रुतार्थापत्तिः**) लोके तावत् 'द्वारं द्वारं' इत्यादिषु संपूर्णार्थप्रतिपादनाय 'संव्रियतां' इत्यादि शब्दान्तरं श्रुतशब्दैकवाक्यत्वेन कल्प्यते। तथा वेदेऽपि 'विश्वजिता यजेत' इत्यत्र स्वर्गकामः इति वा, स्वर्गार्थे इति वा, येनैव शब्देन श्रुतशब्दैकवाक्यभूतेन परिपूर्णार्थाभिधानं संपद्यते वाक्यं, तदेव हृदयमानीय श्रुतेन सह मेलयित्वा परिपूर्णात् वाक्यात् वाक्यार्थः प्रतीयते। तथा 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यादिषु विधिषु इतिकर्तव्यताप्रतिपादकशब्दाश्रवणात् अपूर्णेषु तत्प्रतिपादकशब्दापेक्षया चोदनालिङ्गोपस्थापितस्य आग्नेयविधेः त्र्यंशस्य साध्यसाधनांशप्रतिपादकभागौ अनपेक्षितत्वात् अनादृत्य यस्तृतीयोंऽश इत्थंभावः अग्न्यन्वाधानादिः विध्यन्तत्वेन परिकल्पितः, तस्य वाचको यः शब्दः 'आग्नेयवत्' इति, स वाक्यशेषत्वेन कल्प्यते। अथवा य एवायं आग्नेयविध्यन्तः, तस्यैव व्यवहितस्यापि चोदनालिङ्गबलोपस्थापितस्य विकृतिविधिना सह एकवाक्यतामात्रं अर्थापत्त्या कल्प्यते। **शा.–संक्षेपः** १।१।५ पृ. ७६–८२. * अर्थापत्तिः (प्रमाणं) द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। तत्र श्रुतार्थापत्तिर्द्विविधा लौकिकी वैदिकी चेति। **बाल.** पृ. ८. * अर्थापत्तिः प्रत्यक्षेण शब्देन वा प्रमितस्यार्थस्य उपपादकार्थान्तरकल्पनम्। यथा देवदत्तनिष्ठं दिने भोजनाभावः पीनत्वं च प्रत्यक्षदृष्टं स्वोपपादकं रात्रिभोजनं

कल्पयति । तथा विश्वजिद्यागकरणकभावनाविषयकप्रवर्तना विधिप्रमितेष्टोद्देश्यकत्वं विना अनुपपद्यमाना स्वर्गाद्युद्देश्यकत्वं कल्पयति । अत्र दिनभोजनाभावविशिष्टपीनत्वज्ञानं न करणं, येन अनुमानान्तर्भावः शङ्क्येत । किंतु भोजनाभावपीनत्वयोः सामानाधिकरण्यरूपसंबन्धानुपपत्तिज्ञानम् । रात्रिभोजनज्ञानं प्रमा, उपपादकत्वज्ञानं अवान्तरव्यापारः । एवं जीवतो देवदत्तस्य गृहे अदर्शनेन अदृष्टबहिर्भावकल्पना । तेन नानुमानान्तर्गतिः इति **जीर्णाः** । वस्तुतस्तु नानुमिनोमि, नोपमिनोमि, न शब्दयामि, किंतु अर्थापयामि इत्यनुभवादेव मानान्तरत्वं युक्तम् । इदमेव सहजशक्तौ आधेयशक्तौ च मानम् । तथाहि, बीजत्वावच्छेदेन अङ्कुरजनकत्वे गृहीते मूषिकाऽऽघ्रातेषु तददर्शनेन कारणत्वसंदेहे मूषिकाऽऽघ्राणनाश्या व्रीहिनिष्ठा कारणशक्तिः कल्प्यते । एवं यागजन्यं स्वर्गजनकमपूर्वं कल्प्यते इति **जीर्णाः** । **मणि.** पृ. ६०–६१, * अर्थापत्तिः लौकिकं प्रमाणम् । पृ. १३. * अर्थापत्तिः सामर्थ्यम् । 'प्रत्यक्षवचने सति अन्यथाऽनुपपत्तिपक्षे सति अर्थापत्तिलभ्यश्रुत्यपरिग्रहात्' ॥ **वा.** २।२।३।४ पृ.५८९. * अर्थापत्तिः सिद्धाव्यभिचारोपजीविनी । **ऋजु.** पृ. ७४.

* अर्थापत्तिरपि दृष्टः श्रुतो वा अर्थः अन्यथा नोपपद्यते इत्यर्थकल्पना । यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्य अदृष्टस्य कल्पना । **भा.** १।१। ५।५ पृ. ३८.

**वैद्यनाथः**— प्रमाणषट्केन प्रमितस्यार्थस्य अर्थान्तरेण विना अनुपपत्तिमालोच्य तदुपपत्तये या अर्थान्तरकल्पना सा अर्थापत्तिः । तत्र प्रत्यक्षप्रमितान्यथाऽनुपपत्त्या अर्थकल्पना यथा— प्रत्यक्षतः अवगताद्दाहात् वह्नेः दाहशक्तिकल्पना । **अनुमानपूर्विका** अर्थापत्तिर्यथा— देशान्तरप्राप्तिलिङ्गकेनानुमानेन आदित्ये गतिमनुमाय तदन्यथाऽनुपपत्त्या आदित्ये गमनशक्तिकल्पना । **उपमानपूर्विका** अर्थापत्तिर्यथा— गवयदर्शनात् एतत्सदृशो **गौः** इति यद् गवि गवयसादृश्यं उपमितं, तदन्यथाऽनुपपत्त्या तादृशसादृश्यविशिष्टगवि तादृशप्रमाविषयत्वशक्तिरस्ति इति कल्पना । **शब्दपूर्विका** प्रमाणग्राहिणी अर्थापत्तिर्यथा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इति श्रुतेन वाक्येन दिवा अभुञ्जाने देवदत्ते पीनत्वरूपो योऽर्थः प्रमितः, तदन्यथाऽनुपपत्तिमालोच्य तदुपपत्तये 'रात्रौ भुङ्क्ते' इति रात्रिभोजनरूपार्थमात्रकल्पना युक्ता समाश्रयितुम् । श्रुतवाक्यप्रतीयमानार्थान्यथाऽनुपपत्तिप्रतिसंधानेन तदुपपत्तये आकाङ्क्षितस्य अर्थान्तरस्य तद्बोधकेन वाक्येनैव समर्पणस्य युक्तत्वात्, 'शाब्दः शाब्देनान्वेति' इति न्यायात् । **अर्थापत्तिपूर्विका** अर्थापत्तिर्यथा—अर्थबोधान्यथाऽनुपपत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनः तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना । **अभावपूर्विका** अर्थापत्तिः भाष्ये उदाहृता । जीवतो देवदत्तस्य गृहे अभावः योग्यानुपलब्ध्या प्रमितः । तदन्यथाऽनुपपत्त्या च बहिर्भावस्य प्रमाणान्तरागम्यस्य या कल्पना, सा अभावपूर्विका अर्थापत्तिः । पृ. ३८.

**श्लो. वा.** —'प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् । अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता । १ ॥ दृष्टः पञ्चभिरप्यस्माद् भेदेनोक्ता श्रुतोद्भवा । प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा । २ ॥ तत्र प्रत्यक्षतो ज्ञानाद् दाहाद् दहनशक्तता । वह्नेरनुमितात् सूर्ये यानात् तच्छक्तियोग्यता । ३ ॥, श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते ।, गवयोपमिता या गौस्तज्ज्ञानग्राह्यता मता । ४ ॥, अभिधानप्रसिद्ध्यर्थमर्थापत्त्याऽवबोधितात् । शब्दे बोधकसामर्थ्यात् तन्नित्यत्वप्रकल्पनम् । ५ ॥ अभिधा नान्यथा सिध्येदिति वाचकशक्तताम् । अर्थापत्त्याऽवगम्यैवं तदनन्यगतेः पुनः । ६ ॥ अर्थापत्त्यन्तरेणैव शब्दनित्यत्वनिश्चयः । दर्शनस्य परार्थत्वादित्यस्मिन्नभिधास्यते । (१।१।५।१८) ७ ॥, प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् । गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह (भाष्ये) दर्शिता । ८ ॥ तामभावोत्थितामन्यामर्थापत्तिमुदाहरेत् । ९ ॥ अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ । वध्यघातकभावेन यौ सर्पनकुलादिषु । ५० ॥ (वृत्त्यन्तरे सर्पनकुलयोः एकस्य जयं अन्यस्य पराजयं वा दृष्ट्वा इतरत्र जयपराजयकल्पनं

अर्थापत्त्युदाहरणं दत्तम्– रत्नाकरः ) 'पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ । रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते । ५१ ॥ तामर्थगोचरां के चिद्-परे शब्दगोचराम् । कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते । ५२ ॥ स्मृत्या श्रुतिर्या परिकल्प्यते-ऽस्मिंल्लिङ्गादिभिर्या विनियोजिका च । फलादिभि-र्येत् परिपूरणं च, संबन्धदृक् तत्र न का चिदस्ति । ८७ ॥ तत् सर्वमित्याद्यसमञ्जसं स्यान्न चेदियं स्यादनुमानतोऽन्या । एवंस्वभावाऽप्यनुमानशब्दं लभेत चेदस्ति यथेप्सितं नः । ८८ ॥

**बृहती**— केयमन्यथाऽनुपपत्तिरिति । यदि तावत् अस्य अनेन विना सद्भावो नोपपद्यते इति, तदेवेदं कार्यतः कारणानुमानमुपन्यस्तं न प्रमाणान्तरम् । अथेद-मुच्यते ' ज्ञातसंबन्धस्य ' इत्यनुमानलक्षणं, अज्ञातश्चात्र संबन्धः, तस्मात् प्रमाणान्तरमिति । तदयुक्तम् । कथम-ज्ञातः संबन्धः शक्यते वक्तुं ' अयमनेन विना नोप-पद्यते' इति । नहि अन्यथाऽनुपपत्तिः प्रत्यक्षसमधिगम्या, कार्याव्यभिचारसमधिगम्या हि सा । अव्यभिचारश्च असकृद्दर्शनपूर्वकः । तस्मात् दृष्टमदृष्टं वा ज्ञातसंबन्ध-मेव अवगम्यते अन्यथाऽनुपपत्त्या । अतः प्रमाणान्तरं मृगतृष्णिकैवेति । ( उत्तरं–) सत्यं, यदि तत् येन विना नोपपद्यते तदेवावगमकं स्यात् । इह तु यन्नोप-पद्यते तदेवावगम्यम् । किंचात्र नोपपद्यते ? जीवतो गृहाभावदर्शनात् अन्यत्राभावो नोपपद्यते । ततः किं ? नात्राभावस्य गम्यता, कस्य तर्हि ? भावस्य, न चासौ गृहाभावदर्शनेन उपपद्यते । बाढं नोपपद्यते । नहि गृहाभावदर्शनेन विना बहिः भावः उपपद्यते ।

**ऋजु**— नात्र गृहाभावदर्शनेन विना अनुपपत्ति-रुच्यते, किंतु गृहाभावदर्शनेन विना बहिर्भावो नोप-पद्यते इति । तेन गृहाभावदर्शनं बहिर्देशसंबन्धे अनवगते भावस्यानुपपत्तौ कारणम् । अनुपपत्तिश्च प्रमाणान्तर-विरोधः । गृहाभावदर्शने सति अनवगते बहिर्देशसंबन्धे प्रमाणप्रतीतमपि जीवनं, ' कथमिह नास्ति जीवति वा ' इति संशयानं बहिर्देशसंबन्धितया अवगम्यते । अतोऽत्र स एवानुपपन्नो भावः, स एवावगम्यते इति सिद्धम् ।

**बृहती**—ननु च दृष्टः श्रुतो वा अर्थः अन्यथा नोपपद्यते इति गमकस्य अन्यथाऽनुपपद्यमानतां दर्श-यति । ( उत्तरं– ) अग्रन्थज्ञो देवानांप्रियः । दृष्टः श्रुतो वा अर्थः अर्थकल्पना । किमिदमर्थकल्पनेति ? दृष्टः श्रुतो वा अर्थः अर्थान्तरस्य प्रमाणमित्यर्थः । ' अन्यथा नोपपद्यते ' इति ( भाष्यस्थं ) केन संब-ध्यते ? प्रमित्या इति वदामः ( कल्पनाशब्दितया अर्था-पत्तिसंज्ञिकया प्रमित्या ) । अन्यथाऽनुपपद्यमानत्वं आपा-दयन् अर्थान्तरं अवगमयति । किमत्र ज्ञातसंबन्धिता नैवापेक्ष्यते ? अपेक्ष्यते हि संबन्धमात्रज्ञानं, न तु संब-न्धिता । अनुमाने तु ज्ञातसंबन्धस्य इति षष्ठ्या संबन्धि-तैव अवगमिका इत्युक्तं, न संबन्धमात्रज्ञानम् । दृष्टः श्रुतो वा इति दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय ? नेति वदामः । उपलब्धोऽर्थः इत्यर्थः । श्रुतग्रहणमिदानीं किमर्थं, दृष्ट इत्येव वक्तव्यम् । उच्यते । अभिधाना-न्तरमेवेदं (दृष्टः श्रुतो वेति) उपलब्धेर्वाचकम् । **बृहती.** पृ. ८५–९१, ( यद्यपि श्रुतोऽपि उपलब्ध एव, तथापि श्रुतपूर्विकार्थापत्तेः प्रमाणग्राहिणीत्वेन विशेषं सूचयितुं श्रुतग्रहणं कृतमिति ) । पृ. ८९.

**ऋजु**—अत्र श्लोका भवन्ति । विना कल्पनयाऽर्थेन तया नानुपपन्नताम् । अर्थान्तरं कल्प्यते यत् तदर्था-पत्तिगोचरः ॥ अभावेन गृहेऽभावो बहिःकल्पनया विना । न तयाऽनुपपन्नत्वं कल्पनातो बहिर्यथा । गम्यस्या-नुपपन्नत्वमिह कल्पनया विना । मानान्तरविरोधेन संदेहापत्तिलक्षणम् । देशेन हि विना भावो न कदा चन दृश्यते । गृहाभावेन सिद्धोऽपि तेन संदेहमृच्छति । तत्संदेहव्युदासाय कल्पना या प्रवर्तते । संदेहापादकादर्था-दर्थापत्तिरसौ स्मृता । गमकस्यानुमाने तु विवक्षा सत्त्व-लक्षणम् । गम्यतेऽनुपपन्नत्वं विना गम्येन हेतुना ॥ तत्सामग्रीविभेदेन भिन्ने एते परस्परम् । अर्थापत्त्यनु-मानाख्ये प्रमाणे इति निश्चितम् ॥

**ननु** श्रुतार्थापत्तावपि श्रुतो दिवाभोजनाभावः रात्रि-भोजनं विना पीनत्वस्य अनुपपन्नत्वे सति अनुपपद्यमानः रात्रिभोजनमेव कल्पयति, न शब्दम् । नहि शब्देन विना अर्थस्यानुपपत्तिः, किंतु अर्थेनैव । सत्यमेवम् । अर्थमेव

कल्पयितुं प्रवृत्ता अर्थापत्तिः। तस्यार्थस्य सविकल्पकज्ञानग्राह्यत्वात् शब्दपुरःसरतया प्रतीतेः शब्द एव त्ववगतः अर्थमुत्थापयति। ननु एवं प्रत्यक्षादिष्वपि सविकल्पकज्ञानानि अर्थे न गृह्णीयुः, किंतु शब्दे एव पर्यवस्येयुः। (न) तिर्यगादिप्रतीतिषु शब्दशून्यासु इन्द्रियस्य अर्थे एव सामर्थ्यमवधृतम्। तेन सविकल्पकदशायामपि तत्रैव भवितुमर्हति नान्यत्र, शक्तिकल्पनापरिक्षयात्। श्रुतार्थापत्तिस्तु कदा चिदपि तिरश्चां नास्ति, शब्दव्युत्पत्तिनिबन्धनत्वात् तस्याः। नहि अव्युत्पन्नः शब्दपूर्वकं वाक्यार्थमवबुध्यते। ननु दृष्टार्थापत्तौ तावत् अर्थापत्तेः अर्थे एव सामर्थ्यमवधृतं, अत्रापि तथैव भवितुमर्हति। सत्यं, अर्थे एव सामर्थ्यं दृष्टं, किंतु उपपादकत्वेन। नहि अर्थोऽपि स्वरूपतः प्रतीयते, किंतु उपपादकतया। तच्च उपपादकं, यस्मिन्नवगते अनुपपत्तिः शाम्यति। शब्देऽपि साक्षादुच्चरिते अनुपपत्तिशान्तिर्भवति इति प्रथमोपनिपातिनि शब्दे एव श्रुतार्थापत्तेर्व्यापारः। तदाह भगवान् **वार्तिककारः**— (एते श्लोकाः श्लोकवार्तिके वा तन्त्रवार्तिके वा नोपलभ्यन्ते। तेन प्राभाकरीयोऽयं वार्तिककारः स्यात्। **के.**) 'न चार्थेनार्थ एवायं द्वितीयो गम्यते तु नः। सविकल्पकविज्ञानग्राह्यत्वात्तु तिरोहितः॥ अग्निरिन्द्रियलिङ्गाभ्यां नाग्निरित्येव गृह्यते। तथा चार्थात्मनैवायं तिर्यग्भिरपि दृश्यते॥ श्रुतार्थापत्तिबोधस्तु तिरश्चां न कदा चन। शब्दव्युत्पत्तिजा ह्येषा श्रुतार्थापत्तिधीर्मता॥ शब्दान्तराणां बुद्ध्याऽसौ नार्थमेवाधिगच्छति। तेनैषां नियतं तावत् प्रथमं वाक्यगोचरा। वाक्यमेव तु वाक्यार्थे गतत्वाद् गमयिष्यति॥' इति तदेतत् **टीकाकारो** भगवान् न मृष्यति। **यथागुरुदर्शनं** किंचिदुच्यते। सविकल्पकविज्ञानेषु शब्दः अर्थावच्छेदकरूपः प्रतीयते, वाचकतया च शब्दः अर्थमवच्छिनत्ति। तेन गौरिति ज्ञाने गोशब्दवाच्योऽयं इत्येवमर्थः परिगृह्यते। न च शब्दवाच्यतां शब्दो वक्ति। तेन अर्थस्य अप्रतिपादकोऽस्मिन् विषये शब्दः। किंतु वृद्धव्यवहारावगतया वाचकतया वाच्यं विशिष्टं न भवति। तेनासौ अर्थानुपस्थापकत्वात् प्रथमभाव्यपि नानुपपत्तिं शमयितुमलं इति नार्थापत्तिप्रमेयतामनुभवितुमर्हति इति। तेन अर्थविषयैवेयमपि इति विशेषप्रदर्शनार्थमपि श्रुतग्रहणं न भवति। **ये तु शब्द** एव विश्वजिदादिषु अपरिपूर्णत्वादनुपपन्न इति मन्यन्ते तेन तदुपपादकः परिपूरकः शब्द एव कल्प्यते इति वदन्ति, ते स्वमनीषिकाकल्पनया विक्लवं भाषमाणा उपेक्षामर्हन्तोऽपि बालैराहृता इति बालजनपरिबोधनाय किंचिदुच्यते। का तावदिह शब्दस्य अनुपपत्तिः अर्थापत्त्यतिरेकिणी? अपरिपूर्णता चेत्, का पुनः शब्दस्य अपरिपूर्णता? अर्थ एव हि केन चित् अर्थभागेन विना अपरिपूर्णो भवति। अर्थापरिपूर्तेः शब्दोऽपि अपरिपूर्ण इति चेत्, भवत्वेवम्। यन्निबन्धना हि तस्य अनुपपत्तिः, तस्यैव तर्हि उपपत्तिरङ्गीकरणीया। अन्यथा तदवस्थैव शब्दस्य अपरिपूर्णता स्यात्। तस्मात् अपरिपूर्णत्वेऽपि शब्दस्य अर्थः एव कल्पनीयः। न च अर्थानुपपत्तौ शब्दस्यानुपपत्तिः, भिन्नत्वात् शब्दार्थयोः। अथोच्यते, अर्थानुपपत्तौ प्रमेयाभावे शब्दस्य प्रमाणताऽपि अनुपपन्नेति। एवमपि प्रमाणता अनुपपन्ना स्यात्, न शब्दः। न च प्रमाणता पृथगनुपपन्ना, किंतु अर्थानुपपत्त्यैव। एवं चेत् मूलभूतार्थानुपपत्तिरेव अर्थापत्त्युपस्थापिका अस्तु। अपि च प्रमाणताऽपि केन चिदर्थेन विना प्रमेयाभावशङ्कया अनुपपन्ना, न शब्दाभावेन, येन शब्दं कल्पयेत्। इत्यलं अतिविचारेण। प्र. ८८–९०.

* अर्थापत्तिरपि नियोगतः तत्रैव भवेत्, यत्रैव शब्देन चोदना भवति, नान्यथा। **भा.** ३।१।४।१०, * ननु **अर्थापत्तिरस्ति**, यत् पदार्थव्यतिरिक्तमर्थमवगच्छामः। न च शक्तिमन्तरेण तदवकल्प्यते इति। तन्न अर्थस्य तन्निमित्तत्वात्। भवेदर्थापत्तिः यदि असत्यामपि शक्तौ नान्यत् निमित्तमवकल्प्येत। अवगम्यते तु निमित्तम्। किं? पदार्थाः। १।१।७।२५ पृ. ९६. * 'प्रमाणेन प्रमाणस्य विरोधेऽन्यार्थकल्पनाम्। **अर्थापत्तिमपि** स्वार्थे वदन्त्यव्यभिचारिणीम्॥' **मण्डन.** १।१ श्लो. ११. * **अर्थापत्त्या** अर्थापत्त्याभासो बाध्यते। **बाल.** पृ. १३१. * क्रमेण साक्षादन्वितयो-

द्रव्यगुणयोः एकहायनी–आरुण्ययोः पश्चात् **अर्थापत्त्या** परस्परावच्छेदकत्वेन अन्वयः। **वि.** ३।१।६. * यन्मात्रेण विना चोदितद्रव्यदेवतासंबन्धानुपपत्तिः, तन्मात्रमेव अदृष्टाश्रुतं अर्थापत्त्या कल्पयितुं शक्यते नान्यत्। तेन अभ्यधिकं न लभ्यते। **वा.** २।२।७।२१ पृ. ५२३. * व्रीहीणां विहिताः धर्माः नीवाराणां अर्थापत्त्या भवन्ति। **भा.** ३।६।१४।३७. * 'सामर्थ्यं सर्वभावानामर्थापत्त्याऽवगम्यते'। अत्यन्तादृष्टा हि वाच्यप्रत्ययान्यथाऽनुपपत्तिमात्रप्रमाणिका वाचकशक्तिः। **वा.** १।३।८।२६ पृ. २७७.

*** अर्थापत्तेः अनुमानात् भेदः** ॥ इदानीमर्थापत्तेरनुमानात् भेदः समर्थ्यते। एषा चार्थापत्तिः दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना। यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना इति। **केचिदियमनुमानान्न** भिद्यते इति वदन्ति। तथाहि, प्रमेयाधिक्यात् सामग्रीभेदाद्वा प्रमाणान्तरत्वमुपपद्यते प्रत्यक्षादीनामन्योन्यं, इह तु उभयमपि न दृश्यते। यत् बहिर्भावादिलक्षणं प्रमेयं, तदनुमानेनाप्यवगन्तुं शक्यते। तथाहि, देवदत्तो बहिर्देशसंयोगी, गृहाभावे सति विद्यमानत्वात्, योयो गृहाभावे सति विद्यमानः सस बहिर्देशसंयोगी, यथा अहम्। तथा जीवतो गृहाभाववान् कालः क चित् भाववान्, जीवद्गृहाभाववत्त्वात्, योयः कालो जीवद्गृहाभाववान् सस क चिद्भाववान् यथा ममैव कालः। अतोऽनुमानगम्यत्वादर्थापत्तेः प्रमेयान्तरं नावशिष्यते। पक्षधर्मताऽऽद्यङ्गप्रदर्शनेन सामग्रीभेदोऽपि न निरूपयितुं शक्यते। किंच अर्थापत्तेरनुमानत्वमप्यनुमानेन साध्यते, विवादाध्यासिताऽर्थापत्तिरनुमानं अविनाभावबलेनोपजायमानत्वात् धूमादग्निज्ञानवत् इति। **ननु** अन्यथा नोपपद्यते इति कल्पना अर्थापत्तिः। अतः अविनाभावेनोपजायमानत्वमसिद्धम्। **नैवं**, बहिर्भावं विना गृहाभावोऽन्यथा नोपपद्यते इति कथमवगम्यते? जीवतो गृहाभावस्य बहिर्भावेन नियमदर्शनादिति चेत्, तर्ह्यविनाभावः एव अन्यथाऽनुपपत्तिशब्देनाप्युक्तो भवतीति नासिद्धत्वम्। **अथ** यत्र सामान्यतो विशेषतो वा अन्वयग्रहणं तत्रानुमानं, यत्र तु तदुभयं नास्ति शक्त्यादौ, तत्रार्थापत्तिरिति। **तन्न**, तत्रापि केवलव्यतिरेकिरूपानुमानस्य सामग्रीत्वसंभवात्। अन्वयाभावेन तन्नानुमानमिति चेत्, तर्हि केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरत्वं स्यात्। भवत्विति चेन्न, स्पार्शनप्रत्यक्षस्य रूपवत्त्वाभावात् प्रत्यक्षात् प्रमाणान्तरत्वप्रसङ्गः इति। **अत्रोच्यते**। यदर्थान्तरेणापादितसंदेहं कल्पयति, सा अर्थापत्तिः। अनुमाने तु न संदिग्धं संदेहापादकं वा गमकं, अतः सामग्रीभेदादेव भेदः। अत्र चानुपपत्तिशब्देन संदेह एवोच्यते। अनुपपद्यमानमपि संदिग्धं संदिग्धविशेषणं वोच्यते। अत्र कः संदेहहेतुः? जीवनं च गणितागमादिसिद्धमपि प्रायशो गृहाधिकरणतया दृष्टमिति गृहे एव नियतमिति भ्रमो जातो यस्य, तस्य गृहाभावदर्शने पूर्वनिरूपितधर्मविरहात् संदिग्धं जीवनम्। किंच आगमसिद्धस्यैव जीवनस्य गृहाभावनिश्चये गृहवत् बहिर्देशोऽपि देशत्वाच्चैत्राभाववानिति व्याप्तिभ्रमात् बहिर्देशाभावस्तावदवगतः। एवं सकलदेशीयजीवनाभावभ्रमाद्भवति जीवनभावाभावविषयः संशयः। एवं संशयरूपानुपपत्तिव्युदासाय जीवनमेव बहिर्देशसंबन्धितया कल्प्यते। यच्चोक्तं, न संदिग्धं कल्पकं दृष्टमिति, व्याप्तं वा गमकं कुत्र दृष्टम्? धूमादौ दृष्टमिति चेत्, तर्ह्यत्रापि जीवनादौ दृष्टमेव। अनुपपद्यमानादन्यत्र न सर्वत्र दृष्टमिति चेत्, तर्हि तत्रापि लिङ्गादन्यत्र न दृष्टमेव। अथान्यत्रादृष्टमपि व्याप्यात् व्यापके प्रतीतिदर्शनबलेन व्याप्तं गमकमित्यङ्गीक्रियते इति चेत्, तर्हि अत्रानुपपद्यमानादुपपादके प्रतीतिदर्शनबलादभ्युपगम्यते इति समानचर्चम्। यत्पुनरेतदभिहितं, संदेहस्य कारणनिरासाद्वा, अन्यतरपक्षावधारणाद्वा निरास इति, तदत्राप्यस्त्येव। तथाहि, नात्र जीवनस्य भावाभावौ संदिह्येते, जीवनमेव बहिःस्थिततया निश्चीयते इत्यन्यतरपक्षावधारणमस्त्येव। यत्तु संशयहेतोरेव निश्चयहेतुत्वं नोपपद्यते इति, तदप्यत्र नास्ति, भिन्नहेतुकत्वादुभयोः। पूर्वनिरूपितधर्मवैधुर्यं ह्यत्र संदेहहेतुः, बहिर्भावकल्पनं निर्णयहेतुरिति। यत्पुनरेतदुक्तं, अनुमानेऽपि संदिग्धमेव गमकं, धूमस्याप्य-

न्यकल्पने, संदिग्धत्वादिति, नैष दोषः, धूमस्तु कल्प्याकल्पनात् संदिग्धः, जीवनं तु कल्प्याकल्पनमन्तरेणापि गृहाभावदर्शनात् संदिग्धमिति विशेषः। एवमेव संदेहोत्पादस्तन्निर्णयोत्पादश्च लोकप्रसिद्ध एव। अन्तर्भाववादी चैवंविधं ज्ञानं न नास्तीति वक्तुं शक्नोति, प्रामाण्यं च नापाकरोति, केवलमन्तर्भावस्यैव प्रतिपाद्यमानत्वात्। अतोऽनुमाने निश्चितं गमकं, अर्थापत्तौ तु संदिग्धमिति विशेषः। किंच यत् संदिग्धं गमकं जीवनं, तदेव गम्यं बहिःसंबन्धितयाऽर्थापत्तौ, अनुमाने त्वन्यदेव गमकं अन्यदेव गम्यं, अतोऽत्यन्तं भेदः। यदपीदमुद्भावितं 'बहिर्भावो गृहाभावेनानुमीयते' इति तदतिमन्दं, नहि गृहाभावमात्रं लिङ्गं, मृतेष्वपि दृष्टत्वात्। न च जीवनविशिष्टं, जीवनस्य प्रथममवगमप्रसङ्गात्, विशेषणभूतं च गृहेऽविद्यमानत्वाद् बहिःसंबन्ध्येव सत् गम्यं, अतो लिङ्गावगमसमये एव बहिर्भावस्यावगमान्न गम्यमवशिष्यते। यद्यर्थापत्तिगम्यस्यानुमानेनाप्यवगन्तुं शक्यत्वात् तदन्तर्भावः, तर्हि दृष्टस्वलक्षणस्यानुमानस्य प्रत्यक्षेणाप्यवगन्तुं शक्यत्वादतिप्रसङ्गः। अतः सामग्रीभेदात् भेदः इति सर्वं समञ्जसम्। **प्रवि.** पृ. ५३–५५.

* **अर्थापत्तेः—** न तावन्नित्यं अर्थस्य (अर्थापत्तेः) प्रापकत्वमस्ति उपायान्तरेण सुलभत्वात्। **वा.** २।३।३।४ पृ. ८९, * सर्वत्र च **अर्थापत्तेः** प्रामाण्यम्। सा च अन्यथाऽनुपपत्त्या भवति। ३।२।८।२२ पृ. ७७९.

**अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याऽभिसंयोगात्।** १०।३।७।३५ ॥

आग्रयणे 'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणा' इति श्रुतम्। तत् वासः स वत्सश्च तद्धर्मा अन्वाहार्यधर्मा स्यात्। सः अन्वाहार्यधर्मः धर्मो यस्य वासोवत्सस्य स तद्धर्मा इति बहुव्रीहौ अनिच् समासान्तः। अर्थापत्तेः अर्थस्य अन्वाहार्यकार्यस्य ऋत्विगानतिरूपस्य आपत्तेः वासोवत्सेन सिद्धेः। निमित्ताख्याऽभिसंयोगात्, निमित्तं दक्षिणाकार्यरूपः परिक्रयः, तेन या आख्या दक्षिणा इति, तया अभिसंयोगात् वासोवत्सयोः संबन्धात्। वासोवत्सयोः दक्षिणात्वेन निर्देशः परिक्रयेण निमित्तेन। तत एव तयोः दक्षिणारूपस्य अन्वाहार्यस्य धर्माः प्राप्नुवन्ति। इति सिद्धान्तः। **के.**

* **अर्थापत्तौ** संदिग्धं गमकम्। **भा.** १।१।५ पृ. ७७. * **अर्थापत्तिभङ्गन्यायेन** कर्तृकर्मणोः (लकारेण) अवाच्यत्वावगमात् ...। (पूर्वपक्षे) **सु.** पृ. १४५९.

* **अर्थापत्तिसमा जातिः** 'यदि शब्दभेदात् भेदो भवेत्, शब्दैक्यात्तर्हि कर्मैक्यं भवेत्, तत्र काठकशब्दाभिधानात् ऐक्यं भवेत् अग्निहोत्रस्य दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च तच्छब्दत्वात्' इति **भाष्यम्**। साध्याव्यभिचारित्वात् इयमर्थापत्तिसमा नाम जातिः पूर्वपक्षहेतोरसिद्धत्वोपालम्भप्रदर्शनार्थमेवाभिहिता। सर्वत्र च दुष्टे पूर्वपक्षे जातीनामुत्तरत्वं केषांचिदिष्टम्। इति। **वा.** २।४।२।११.

**अर्थाभावे संस्कारत्वं स्यात्।** १०।२।३३।७४ ॥

साद्यस्के सोमे 'खलेवाली यूपो भवति' इत्युक्तम्। तस्यां च खलेवाल्यां जोषणतक्षणखननोच्छ्रयणादयो धर्मा न कर्तव्या इत्युक्तम्। अन्ये तु भूमेः मैत्रावरुणदण्डेन समक्रिया, अद्भिरवसेचनं बलवन्निखननं अञ्जनं इत्येवमादयो ये धर्माः, ते कर्तव्याः। तत्र अर्थाभावे खलेवाल्यां कार्याभावेऽपि संस्कारत्वं स्यात्। खलेवाल्यां यूपसंस्काराः स्युः। ते च खलेवालीत्वं नोपघ्नन्ति। तस्मात्तादृशा धर्माः कर्तव्याः इति सिद्धान्तः। चोदकप्राप्ताः त्रयोऽपि पशवः सद्यः एकस्मिन् सवनीयकाले एव अस्मिन् क्रतौ क्रियन्ते इति असौ सोमयागः साद्यस्क्रः इत्युच्यते। खले मध्ये निखाता स्थूणा धान्यकाण्डेभ्यो धान्यकणान् स्वपादमर्दनेन पृथक् कुर्वतः समन्ततः परिवर्तमानान् बलीवर्दान् दूरगमनात् वारयति स्वस्याः समन्तत एव संचारयति इति खलेवारी, सैव खलेवाली इत्युच्यते। रलयोरभेदः। **के.**

* **अर्थाभिधानेन** मन्त्रः अङ्गीभवति। **भा.** १२।३।१४।३०.

**अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात् तदर्थो हि विधीयते।** ४।१।११।२६ ॥

सिद्धान्तसूत्रम् । दर्शपूर्णमासयोः 'कपालेषु पुरोडाशं श्रपयति' इति 'पुरोडाशकपालेन तुषानुपवपति' इति च श्रुतम् । कपालानां तुषोपवापश्च पुरोडाशश्रपणं चोभयं प्रयोजकं इति पूर्वः पक्षः । श्रपणमेव प्रयोजकं इति सिद्धान्तः । अर्थः प्रयोजनम् । अभिधानं 'कपाल-शब्दः । अर्थसंबद्धं श्रपणरूपफलसाधनत्वविशिष्टं अभिधानं यस्य तत् कर्म अर्थाभिधानं, तच्च तत् कर्म च अर्थाभिधानकर्म । पुरोडाशकपालेन उपवपति इत्यत्र तुषोपवापरूपं कर्म च कपालानां अप्रयोजकं, न प्रयोजकम् । चकारः पूर्वसूत्रस्थस्य अप्रयोजकं इति पदस्य अनुकर्षणार्थः । यद्यपि अवहतव्रीहितुषोपवापकाले कपालं पुरोडाशश्रपणे नोपयुक्तं, तेन 'पुरोडाशकपालेन' इति वक्तुं न शक्यते, तथापि पश्चात् श्रपणे उपयोक्ष्य तेन भविष्यता श्रपणेन कपालस्य यः संयोगः, तस्य भाविसंयोगस्य तन्निमित्तत्वात् पुरोडाशकपालशब्दप्रवृत्तेः निमित्तत्वात् न दोषः । हि यस्मात् तदर्थः सः अर्थः भाविपुरोडाशश्रपणसाधनकपालकरणकः तुषोपवापः विधीयते उक्तेन वाक्येन, तस्मात् कपालानां तुषोपवापो न प्रयोजकः, किंतु श्रपणमेव प्रयोजकम् । **के.**

* 'अर्थाभिधानकर्म च' इति **चतुर्थन्यायेन** अप्रयोजकत्वाभ्युपगमेऽपि । **सु.** पृ. ६३६. * 'अर्थाभिधानकर्म च०' **इत्यस्य** प्रकृतिवदनुप्रवेशात् प्राकृतस्य सामिधेनीकार्यस्य अग्निसमिन्धनप्रकाशनस्य एतेनैव प्रसङ्गतः प्राप्तेः अर्थात् प्रयोगमध्यपातिसमिन्धनाधीनत्वम् । **वा.** ३।१।११।२१ पृ. ७३६.

* **अर्थाभिधानशक्तिरूपं** लिङ्गं परस्परैकवाक्यतासामर्थ्यात्मकात् लिङ्गात् बलीयः । **वा.** ३।३।७।१४ पृ. ८४०.

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्, तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् । ३।२।१।१ ॥**

'बर्हिर्देवसदनं दामि' इत्येवमादीनां मन्त्राणां किं मुख्ये एवाभिधेये कुशलवनादौ विनियोगः, उत उलपादिरूपे गौणेऽपि इति विचारे सिद्धान्तमाह । अर्थाभिधानसंयोगात् मन्त्राणां कर्मसमवेतार्थाभिधानेन संयोगात् संबन्धात् कर्मसमवेतार्थाभिधायित्वात् मन्त्रेषु शेषभावः शेषत्वं कर्माङ्गत्वं स्यात् । तस्मात् उत्पत्तिसंबन्धः उत्पत्त्यैव मुख्येन अर्थेन संबन्धः स्यात् । अर्थेन अभिधेयेन शब्दस्य नित्यात् संयोगात् हेतोः । नित्येन अर्थेन नित्यस्य शब्दस्य नित्यः संबन्धः इति औत्पत्तिकसूत्रे उक्तत्वात् । तथा च शब्दस्य मुख्यार्थेन नित्यसंबन्धात् मन्त्राणां मुख्ये एवार्थे विनियोगः प्रत्येतव्यः ।

**संस्कारकत्वादचोदिते न स्यात् । २ ॥**

ननु मन्त्राणां मुख्यार्थमात्रविनियोगे पूषानुमन्त्रणादिमन्त्राणां प्रकरणादुत्कर्षः प्रसज्येतेति चेत् तत्राह । 'पूष्णोऽहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय' इति मन्त्रः पूष्णो देवतायाः संस्कारकः प्रकाशनलक्षणसंस्कारजनकः । दर्शपूर्णमासयोश्च न पूषा देवताऽस्ति । तथा च मन्त्राणां संस्कारकत्वात् दर्शपूर्णमासयोः अचोदिते अविहिते पूषणि न स्यात् । यत्र च स पूषा संस्कार्यः स्यात्, तत्र पूषमन्त्रः उत्कृष्येतेति युक्तम् । तस्मात् सति संभवे मुख्यार्थे एव मन्त्रलिङ्गं विनियोजकं इति सिद्धान्तः । **के.**

* अर्थाभिधानसंयोगात् ( ३।२।१।१ के. ) न च लक्षणायां गौणत्वे वा वाचकत्वमस्ति इति अर्थाभिधानसंयोगात् इत्यत्र साधितम् । **वा.** ३।४।४।१३ पृ. ९३५. * 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात्' । ( अत्र 'अर्थेन नित्यसंयोगात्' इत्यस्य पञ्चधा व्याख्यानं – ) मुख्येन अर्थेन गौणार्थप्रत्यायनवेलायामपि मन्त्राणां प्रत्याय्यप्रत्यायनलक्षणसंयोगात् (१), अर्थेन नित्यसंयोगात् इत्यनेन अजहत्स्वार्थता गौणवृत्तेरुक्ता (२), मुख्येनैवार्थेन उपायान्तरनिवृत्त्या मन्त्राणां स्मृत्युपायत्वेन नित्यसंयोगात् (३), मुख्येनार्थेन गौणप्रत्यायनस्य उपायोपेयत्वलक्षणः नित्यसंयोगो भवेत् ततो मुख्यद्वारा मन्त्रस्य गौणेऽपि विनियोगः स्यात्, न त्वेतदस्ति इति व्यवधारणकल्पनया अर्थः (४), मुख्येनार्थेन मन्त्रस्य स्वार्थस्मारकत्वसंयोगमात्रात् आम्नानार्थवत्त्वोपपत्तेः न गौणस्य मन्त्रस्मारितता आदरणीया इति अवधारणार्थनित्यशब्दाभ्युपगमेन पञ्चमी व्याख्या । **सु.** पृ. १०८४.

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्, तत्राचोदितमप्राप्तं चोदिताभिधानात् । ९।१।१२।३६ ॥

दर्शपूर्णमासयोः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति निर्वापमन्त्रः । अत्र सवितृ–अश्वि–पूष–शब्दाः कर्मसमवेतमर्थमभिदधति तेन तेषां विकृतौ यथायथं ऊहः, किंवा एते शब्दाः कर्मसमवेतमर्थं नाभिदधति इति विकृतौ तेषां न ऊहः इति विचारे 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्' इति सूत्रांशेन पूर्वपक्षमाह । मन्त्रेषु 'सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्यां' इति त्रिषु मन्त्रेषु विद्यमानानां सवित्रादिपदानां देवतावाचकानां शेषभावः शेषत्वं कर्माङ्गत्वं स्यात् । अर्थाभिधानसंयोगात् कर्माङ्गभूतस्य देवतारूपस्य अर्थस्य यदभिधानं प्रकाशनं, तेन संयोगात् वाचकतया संबन्धात् । तथा च कर्माङ्गवाचकत्वेन कर्मशेषत्वात् 'सवितुर्जुष्टं निर्वपामि, अश्विनोर्जुष्टं निर्वपामि, पूष्णो जुष्टं निर्वपामि' इति प्रकृतौ तेषामपि देवतानां हविर्दातव्यम् । अग्न्यादिना एषां विकल्पः स्यात् । तस्मादूहः । इति पूर्वपक्षः ।

अथ 'तत्राचोदितमप्राप्तं चोदिताभिधानात्' इति सूत्रांशेन सिद्धान्तमाह । चोदिताभिधानात् चोदितः विधिविहितः योऽर्थः अग्निः अग्नीषोमौ उपांशुयाजदेवता च प्रजापत्यादिः, तस्यैव चोदितस्य मन्त्रेण अभिधानात् । तत्र पूर्णमासकर्मणि एवं दर्शकर्मणि अचोदितं सवितृ–अश्वि–पूषदेवतारूपं, अतः ऊहं अप्राप्तं स्यात् । न तद्वाचकशब्दानामूहः कर्तव्यः । दर्शपूर्णमासकर्मणि अग्न्यादय एव देवता विहिताः न सवित्रादयः । तस्मात् सवित्रादिशब्दाः न कर्मसमवेतार्थाभिधायिनः, इति न सवित्रादिशब्दानामूहः प्रकृतौ विकृतौ वेति सिद्धान्तः ।

एकस्मिन्नेव सूत्रे तुशब्दवाशब्दादिपाठं विनैव पूर्वोत्तरपक्षयोः प्रतिपादनं 'विचित्रा सूत्राणां गतिः' इति न्यायेन ।

**ततश्चावचनं तेषामितरार्थं प्रयुज्यते । ३७ ॥**

दर्शपूर्णमासयोः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति सवित्रादिशब्दैः प्रत्यायकैरेव सवित्रादयः प्रकाश्यन्ते, इति कथं तेषां कर्मणि अविवक्षितत्वं उच्यते, इति शङ्कायां आह सिद्धान्ती । ततश्च तैः सवित्रादिशब्दैः तेषां कर्मसमवेतानां देवतानां अवचनं, न वचनं भवति । विधौ या उक्तास्ता एव कर्मसमवेताः । अग्न्यादिषु विधिविहितासु सतीषु केवलं मन्त्रलिङ्गात् सवित्रादीनां कर्मसमवायित्वं स्वीकर्तुं न शक्यते । **ननु** तर्हि किमर्थं निर्वापमन्त्रे सवित्रादीनां पाठः ? **उच्यते** । इतरार्थं निर्वापप्रशंसार्थं उत्साहजननार्थं निर्वापमन्त्रे सवित्रादिशब्दाः प्रयुज्यन्ते । अतो विकृतिषु सवित्रादिशब्दा नोहितव्याः । नापि सवित्रादीनामन्यत्रोत्कर्षः । **के.**

* **अर्थाभिधानसंयोगात्०** इत्यधिकरणे देवस्य त्वेत्यादिपदानामेव उच्चारणमात्रार्थत्वे भिन्नप्रयोजनकत्वेन निर्वपामिपदैकवाक्यताभङ्गापत्तेः तद्वशात् देवस्य त्वेत्यादिपदार्थविशिष्टनिर्वापप्रकाशनस्यैव अभ्युदयकारित्वकल्पनया तेषामपि स्वार्थाभिधायकत्वं वक्ष्यते । **कौ.** १।२।४२ पृ. ७२.

* **अर्थावगतौ न** श्रुतत्वमेव कारणं, किं तर्हि ? प्रकरणादिकमपि । **ऋजु.** पृ. ६.

* **अर्थावबोधः** अध्ययनोत्तरकालभावी इति न तन्मुखेन कर्मविधीनां प्रयोजकत्वम् । अत एव द्रव्यार्जननियमवत् दृष्टोऽपि अर्थावबोधः अधिकारिविशेषणतया न परिगृह्यते । अध्ययनपूर्वकत्वात् अर्थावबोधस्य प्रागध्ययनात् कामनाऽनुपपत्तेः । उत्तरकालभावितयैव च अर्थावबोधोऽपि प्रयोजनान्तरं न स्वीक्रियते । **ऋजु.** पृ. ९.

* **अर्थी** समर्थश्चाधिक्रियते इत्युक्तम् (**भा.** ६।१।२।५) । **भा.** १०।२।२२।५६.

**अर्थी समर्थो विद्वानधिक्रियते इति न्यायः ।** अयं सदसं. जैमिनीये । तथाहि– 'तस्मात्सामर्थ्यप्राप्तोऽवबोधो भाव्यत्वेनावतिष्ठते– 'अर्थी समर्थो विद्वानधिक्रियते' इति न्यायेन दर्शपौर्णमासादिविषयाऽवबोधमवेक्षमाणास्तत्त्वबोधे स्वाध्यायं विनियुञ्जते' इत्यादि । **साहस्री.** ७१९.

**अर्थैकत्वादेकं वाक्यं, साकाङ्क्षं चेद्विभागे स्यात्। २।१।१५।४६ ॥**

अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्यते इयदेकं यजुरिति। मन्त्रत्रैविध्ये निरूपिते कियानेको मन्त्र इत्याकाङ्क्षायां ऋक्सामयोः परिमाणस्याध्येतृपरंपरासिद्धत्वात् प्रश्लिष्टपठितेषु यजुःषु कियदेकं यजुरित्याकाङ्क्षायां तत्परिमाणलक्षणं क्रियते। अत्रायं पूर्वपक्षिणोऽभिसंधिः— न तावदर्थैकत्वादेकं वाक्यं, तथा सति प्रतिपदमर्थभेदेन वाक्यभेदप्रसङ्गात्। नापि विभज्यमानसाकाङ्क्षत्वं, एवं च सति 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि' इत्यस्य 'तस्मिन्सीद' इत्यनेन सहैकवाक्यत्वप्रसङ्गात्। नापि मिलितमेकवाक्यत्वलक्षणं, एकं हि पदमेकार्थं, न तद्विभज्यमानसाकाङ्क्षम्। तच्चानेकार्थं प्रतिपदमर्थभेदेनैकार्थ्याभावात्। तदुक्तं '**एकार्थत्वं पदस्य स्यात् साकाङ्क्षावयवं न तत्। साकाङ्क्षावयवः संघस्तस्यैकोऽर्थो न विद्यते॥**' इति। (वा. पृ. ४४६) अतो 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्येवमादियजुषामपि नियतोपायाधीनमेव परिमाणपरिज्ञानमिति। **एवं प्राप्ते अभिधीयते।** भवेदेवं यद्यभिधेयवचनोऽयमर्थशब्दो भवेत्, प्रयोजनवचनस्त्वयम्। तेन यावन्ति पदान्येकप्रयोजनानि विभागे च साकाङ्क्षाणि तावन्त्येकं वाक्यम्। तेनार्थैकत्वं विभज्यमानसाकाङ्क्षत्वं च मिलितमेवेदमेकवाक्यत्वलक्षणम्। अतो न प्रतिपदमेकं वाक्यम्। प्रतिपदमभिधेयभूतार्थनानात्वेऽपि 'देवस्य त्वा' इत्येवमादिषु प्रयोजनभूतस्यार्थस्य एकत्वादेकयजुष्ट्वमेव। 'स्योनं ते सदनं कृणोमि' इत्यस्य 'तस्मिन्सीद' इत्यनेन सहैकवाक्यत्वं, विभज्यमानसाकाङ्क्षत्वेऽपि सदनकरणपुरोडाशप्रतिष्ठापनरूपप्रयोजनभेदात्। तथा 'भगो वां विभजतु, अर्यमा वां विभजतु' इत्येवमादिषु पुरोडाशविभागरूपैककार्यत्वेऽपि विभज्यमानसाकाङ्क्षत्वाभावान्नैकवाक्यत्वम्। एतच्च न केवलं यजुर्मन्त्रमात्रविषयं लक्षणं, किंतु ब्राह्मणवाक्यलौकिकवाक्ययोरपीति। तदुक्तं '**तस्मात्पदेषु यावत्सु श्रूयमाणेषु दृश्यते। विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता॥**' इति। (वा. पृ. ४४५) **प्रयोजनम्**— पूर्ववत् प्रतिपत्तिलाघवमेव। सूत्रं तु सुबोधमेवेति।

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद् विभागे स्यात्। २।१।१४।४६ ॥**

प्रश्लिष्टपठितेषु यजुःषु इदमेकं यजुः इति कथमवगम्यते, अतः एकवाक्यलक्षणमाह। अर्थैकत्वात् अर्थस्य प्रतिपाद्यस्य एकत्वात्, एकार्थप्रतिपादकं एकं वाक्यम्। यावता पदसमूहेन एकोऽर्थो विशिष्टः प्रतिपादयितुं शक्यते तावान् पदसमूहः एकं वाक्यम्। यदि च विभागे क्रियमाणे साकाङ्क्षं पदं स्यात्। भवति किं चिदेकार्थं, न तु विभागे साकाङ्क्षं यथा 'भगो वां विभजतु, अर्यमा वां विभजतु' इति। भिन्नमिदं वाक्यं विभागे विकल्प्यते। अथ विभागे साकाङ्क्षं एकं यजुः इत्युक्ते 'ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा' इत्यादिराष्ट्रभृद्धोमेषु द्विःस्वाहाकारमेकैकं यजुः स्यात्। तत्र विभागे साकाङ्क्षतायामपि एकयजुष्ट्वं मा भूत् इति अर्थैकत्वात् इत्युक्तम्। **के.**

* अर्थैकत्वादेकं वाक्यं इत्यत्र अर्थशब्दस्य प्रयोजनवाचित्वाभ्युपगमः। **सु.** पृ. ८६७. * 'यजतिषु येयजामहं करोति, नानुयाजेषु।' **ननु अर्थैकत्वात् इत्ययं न्यायो**ऽत्र नास्ति, येन एकवाक्यता स्यात्। **उच्यते**। सत्यं अयं न्यायो नास्ति, किंतु येयजामहे विपरिवर्तमानमनूद्य पर्युदासार्थो विधीयते। **टुप्.** १०।८।१४ पृ. २०५९. * अर्थैकत्वादेकं वाक्यं (२।१।१४।४६) इत्यनेन **न्यायेन** प्रश्लिष्टपठितानां यजुषां परिमाणं ज्ञेयम्। इदमेव एकवाक्यताऽधिकरणम्। **सोम.** ९।१।१३. * **अर्थैकत्वाधिकरणे** (अर्थैकत्वादेकं वाक्यं २।१।१४।४६) भिन्नप्रमितिविषयानेकमुख्यविशेष्यराहित्यं अर्थैकत्वलक्षणं उक्तमस्माभिः। **कौ.** २।२।७।२० पृ. २३६.

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात्। ९।२।७।२९ ॥**

इदमेकं सूत्रम्। तत्रत्यं 'अर्थैकत्वाद्विकल्पः स्यात्' इत्यवयवः पृथक्कृत्य अधिकरणान्तरत्वेन भाष्यकारैर्व्याख्यातः। सिद्धान्तपरश्चायं सूत्रावयवोऽत्र। सामवेदे

सहस्त्रं गीत्युपायाः। आभ्यन्तरप्रयत्नजनितस्वरविशेषाणां अभिव्यञ्जिका क्रिया गीतिर्नाम। सैव साम इत्युक्तम्। तत्संपादनार्थाः ऋगक्षरविकारः, विश्लेषः, विकर्षणं, अभ्यासः, विरामः, स्तोभः इत्येवमादयः उपायाः। तेषां किं समुच्चयो विकल्पो वेति विचारे सिद्धान्तमाह। तेषामुपायानां अर्थैकत्वात् गीतिनिर्वर्तनरूपफलैक्यात् विकल्पः स्यात्, न समुच्चयः इति। **के.**

**⌛ अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात्। ९।२।८।२९॥**

अत्र वर्णकत्रयम्। तत्र प्रथमं 'ऋचा स्तुवते' 'साम्ना स्तुवते' इति श्रूयते। तत्र ऋचा साम्ना वा स्तोतव्यमिति विकल्पः, उत साम्नैवेति नियमः इति विचारे पूर्वपक्षमाह। अर्थैकत्वात् स्तुतिरूपैकार्थसाधकत्वात्, ऋक्सामयोः तदर्थत्वात् सः स्तुतिरूपः अर्थः प्रयोजनं ययोः ते तदर्थे, तदर्थत्वात् स्तुतिफलकत्वात् ऋक् च साम च तयोः विकल्पः स्यात्। न समुच्चयः। अचतुरविचतुरेत्यादिना ऋक्सामेति अजन्तस्य निपातनम्। इदं अर्थैकत्वाधिकरणम्।

**अथ द्वितीयं वर्णकम्**। द्वादशाहगते दशमेऽहनि पत्नीसंयाजोत्तरं मानसस्तोत्रात् प्राक् ( ताण्ड्ये ४।९।१ ) 'अयं सहस्रमानवः इत्येतया आहवनीयमुपतिष्ठते' इति सामवेदे श्रूयते। अनया ऋचा किं प्रगीतया उपस्थातव्यं अप्रगीतया वेति विचारे पूर्वपक्षमाह। ऋक्सामयोरितिऋक्पदेनात्र अप्रगीता ऋगुच्यते सामशब्देन च प्रगीता। तयोः उपस्थानरूपस्यार्थस्य एकत्वात् विकल्पः इति।

**अथ तृतीयं वर्णकम्**। के चित् त्रैस्वर्येण मन्त्रानधीयते के चित् चातुःस्वर्येण। त्रैस्वर्यं उदात्तानुदात्तस्वरिताः। चातुःस्वर्यं उदात्तानुदात्तस्वरिततानाः। तानो नाम एकश्रुतिः। तत्र त्रैस्वर्यचातुःस्वर्ययोः समुच्चयासंभवात् ऋक्सामयोः त्रैस्वर्यचातुःस्वर्ययोः विकल्पः स्यात् स्तुत्यर्थत्वेन अर्थैकत्वात्। अत्र ऋक्शब्देन त्रैस्वर्यं, सामशब्देन च चातुःस्वर्यं लक्षणया ग्राह्यम्। एवं वर्णकत्रयेऽपि विकल्प इति पूर्वः पक्षः।

**वचनाद्वा विनियोगः स्यात्। ३०॥**

स्तुतौ साम्नः विनियोगः स्यात् ऋङ्निन्दया साम्नो वचनात्। वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। 'यदृचा स्तुवते तदसुरा अन्ववायन्, यत् साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत' इत्यत्र ऋचं निन्दित्वा साम प्रशस्य लिङा साम विहितम्। तस्मात् साम्नैव स्तोतव्यं इति सिद्धान्तः।

**अथ द्वितीयं वर्णकम्**। आहवनीयोपस्थाने विहितायाः 'अयं सहस्रमानवः' इति ऋचः प्रगीताया एव विनियोगः स्यात्। 'अयं सहस्रमानवः इत्येतया' इति वचनात्। एतया इति प्रकृतवचनः शब्दः, प्रगीता च सामवेदे प्रकृता। यद्यपि सामवेदे अप्रगीताऽपि समस्ति तथापि सा प्रगाणार्थैव। तस्मात् प्रगीतया उपस्थातव्यं इति सिद्धान्तः।

**अथ तृतीयं वर्णकम्**। यज्ञकर्मणि मन्त्राणां विनियोगः प्रयोगः तानेनैव स्यात्। 'यज्ञकर्मण्यजपन्यूङ्खसामसु' ( पा० १।२।३४ ), इति व्याकरणस्मृत्यनुमितात् 'तानो यज्ञकर्मणि' इति वचनात्। त्रैस्वर्यादीनां समाम्नानं तु अर्थावबोधार्थम्। तस्मात् तानेन प्रयोग इति सिद्धान्तः। **के.**

* **अर्थैकत्वाधिकरणम्**। 'यदृचा स्तुवते' इत्यस्य अकर्तृविशेषणविधिः शक्तिप्रतिबन्धकयच्छब्दयुक्तस्यापि उपक्रमस्य 'य एवं विद्वान् साम्ना स्तुवीत' इति कर्तृविशेषणविधिशक्तिप्रतिबन्धकयच्छब्दयुक्तोपसंहारबलेन स्वतः प्राप्तं ऋग्विधानत्वं परित्यज्य सामविशेषणत्वस्वीकारात् उपसंहारप्राबल्यमाश्रितं, तन्निरस्तम्। तत्रापि वाक्यभेदादिदोषपरिहारार्थं औपसंहारिकसामविधिशेषत्वस्वीकारात्। **पराक्रमः. ५।१।१.**

**⌛ अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्। ३।१।६।१२॥**

'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति ज्योतिष्टोमे श्रुतम्। अत्र किं अरुणिमा गुणः कृत्स्नप्रकरणे निविशते प्राकरणिकं पदार्थजातं अरुणं कर्तव्यमिति, उत क्रये एव निविष्टः सन् अवच्छेदकतया एकहायन्यां निविशते इति विचारे सिद्धान्तमाह।

द्रव्यगुणयोः एकहायनीगोरूपद्रव्यस्य आरुण्यस्य च गुणस्य अर्थैकत्वं सोमक्रयरूपप्रयोजनैकत्वं, तत्र ऐककर्म्यात् क्रयरूपैककार्यत्वात् नियमः स्यात्, द्रव्यगुणयोरुभयोरपि नियमः स्यात् आरुण्यावच्छिन्नैकहायनीरूपद्रव्येण सोमक्रयः, न तु अनरुणया एकहायन्या, नापि अरुणया अनेकहायन्या इति । **के.**

* 'अर्थैकत्वे द्रव्यगुणयोः' इति हि फलचमसं प्रति उपादीयमानयोः क्षत्रियत्वदशत्वयोः परस्परनियमे सति यावति विषये दशत्वं तावति राजन्यत्वं इति अवगम्यते इति बलात् दश राजन्या विज्ञायन्ते पूर्वपक्षे । **वा.** ३।५।२०।५२ पृ. १०२१. * 'अर्थैकत्वे द्रव्यगुणयोः' । ऐककर्म्यात् क्रियापदस्यैकत्वात् अर्थैकत्वे एकवाक्यत्वे सति वाक्यभङ्गो न न्याय्यः । अतो द्रव्यगुणयोः द्रव्यप्रधानस्य एकहायनीशब्दस्य गुणोपसर्जनारुणाशब्दस्य च नियमः सामानाधिकरण्येन विशिष्टैकार्थप्रतिपादकयोः क्रये अन्वयः स्यात् इति । **कु.** पृ. २५९. * अर्थैकत्वेऽपि अव्यभिचारतुल्यत्वेऽपि च शुक्लादिशब्दोक्तस्यार्थस्य शब्दार्थान्तरान्वयार्हद्रव्यगमकत्वदर्शनात् शुक्लत्वरूपादिशब्दोक्तस्य तु अदर्शनात् अर्थस्यापि शब्दविशेषापादितशक्तिविशेषवशेनैव गमकता '**तस्माद्यथैव शब्दानां शक्तिभेदोऽभिधां प्रति । प्रत्येतव्यस्तथाऽर्थानां लक्ष्यार्थान्तरगोचरः** ॥' इत्यरुणटीकोक्ता ( गमकता टीकया उक्ता इत्यन्वयः ) ( वा. पृ. ६८४ ) । **सु.** पृ. १४५७.

* **अर्थो वा स्यात् प्रयोजनमितरेषामचोदना-( द )र्थस्य गुणभूतत्वात्** । ९।१।५।१३ ॥ इत्यनेन अर्थ्यमानमपूर्वं प्रयोजनम् । द्रव्यादीनामर्थ्यमानमपूर्वं प्रति गुणभूततया कर्तव्यत्वेन अचोदनात् इति सिद्धान्तितम् । **सु.** पृ. १४६९.

**अर्धं त्यजति पण्डितः इति न्यायः** । सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः इति स्पष्ट एव । **संग्रहः.**

* **अर्धादुत्तिष्ठतां** (संभूयसमुत्थाने) विभागो भवति धनस्य । **भा.** ६।५।७।२७.

**अर्धकुक्कुटीन्यायः** । 'श्रुतशब्दाभिधेयानां नार्थानां युगपत्तथा । ग्रहणाग्रहणं युक्तमर्धकुक्कुटिपाकवत् ॥' **वा.** ३।१।७।१४ पृ. ७२०. शब्दातिदिष्टं विरोधं द्रढयितुं अर्धं कुक्कुट्याः पच्यतां अर्धं प्रसवाय धार्यतां इति लोकप्रवादायातं पाशुपतं वाक्यं, नैकस्य वस्तुनोऽर्धजरतीयं, कथमनेन '**कुक्कुटयर्धस्य वा पाकः प्रसवायार्धधारणं**' इति वार्तिकालोचनया दृष्टान्तितं गम्यते । **सु.** पृ. १०३३–३४.

**अर्धजरतीन्यायः** । यत्र सर्वत्यागे ग्रहणे वा प्रसक्ते निर्युक्तिकमेकांशोपादानमंशान्तरत्यागश्च क्रियते, तत्रायं न्यायोऽवतरतीति । यथा जरती वृद्धा स्त्री, तस्याः पतिस्तदर्धं मुखमात्रं गृह्णाति अवयवान्तरं त्यजतीति युक्तिशून्यं, तथा ये ईशवचनत्वेनागमप्रामाण्यमुपगच्छन्ति तेषां बुद्धवचसामपि प्रामाण्यप्रसङ्गो वेदस्यापि वाऽप्रामाण्यापत्तिः । यदि वा ईशवचनत्वसाम्येऽपि वेदस्य प्रामाण्यमप्रामाण्यं च बुद्धवचसामङ्गीक्रियते, तदेतदपि युक्तिशून्यमिति भावः । **साहस्री.** २५५.

* **अर्धजरतीयं** उपन्यस्यते । **बृहती.** स्फोटवादे पृ. ११८. अर्धेन जरत्यर्धेन तरुणीवत् उपन्यस्यते । 'समासाच्च तद्विषयात्' इति इवार्थे छः । **ऋजु.** * चेतनांशे चेत् स्वप्नानामयथार्थता, अचेतनांशेऽपि तथास्तु, किमर्धजरतीयेन । **परिमलः.** ३।२।२।७ ब्रसू. * यदि तु बुधाभावेऽपि रोहिणीमात्रवशादेव उत्तरा उच्यते, तदा रोहिणीयोगाभावेऽपि बुधमात्रसद्भावात् उत्तरा स्यात्, अन्यतराभावेऽपि एतद्वचनप्रवृत्तेः स्वीकारात्, ऋक्षयोगवत् वारयोगस्यापि प्राशस्त्यहेतुत्वाच्च । अतः **अर्धजरतीयापत्तिः** । **समयमयूखः** पृ. २९. * 'सर्वत्राव्याहता वा ( स्मृतीनां प्रमाणता ) स्यान्न **त्वर्धजरतीयता**' । **वा.** १।३।२।३ पृ. १७०. केन चित् पाशुपतेन सर्वजरत्या योषितः अनुपभोग्यत्वात् सर्वतरुण्याश्च वृद्धे अरुचिप्रसङ्गात् अर्धजरत्यानयने दूतः प्रेषितः इति लोकप्रवादः उपमानत्वेनोक्तः । **सु.** पृ. १३५. * एकदेशनिर्वापेऽपि निमित्तस्य संजातत्वात् नैमित्तिकोऽपनयः कर्तव्य इति खलु सिद्धान्तिना अपनयः इष्यते । तर्हि संयोगोऽपि तथा इष्यतां **अर्धजरतीयत्वायोगात्** । **सोम.**

६।५।५. * यदपि **अर्धजरतीयन्यायापादनं**, तदपि अज्ञानविजृम्भितमेव। यथाहि अलाब्वर्धांशभक्षणेऽपि तद्भक्षणनिषेधशास्त्रोल्लङ्घनं सिद्धं, नैवं वयोनिर्णयांशबाधे अङ्गत्वांशबाधादिकं इति वैषम्यात्। अत्र जरतीशब्दः अलाबुवाचको गृहीतः। **सना. प्रदीपे** विवाहप्रकाशे पृ. २९१.

* **अर्धनिरुप्ते** (दर्शेष्टौ) चन्द्राभ्युदये अवशिष्टस्य तूष्णीं निर्वापः। **भा.** ६।५।५।१८–२०.

* **अर्धपिप्पलीपदयोः** सामानाधिकरण्यम्। **संकर्ष.** २।१।१३.

* '**अर्धमन्तर्वेदि** अर्धं बहिर्वेदि' इति देशलक्षणार्थमुच्यते। **भा.** ३।७।६।१३. * 'अर्धमन्तर्वेदि' इतिवत् लक्षणया पुंस्त्वादेरपि उद्देश्यान्तर्भावाङ्गीकारेण सत्यपि उभयोरेकापूर्वसाधनत्वे व्यवस्थैव 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं' इत्यत्र। **भाट्ट.** ६।१।६, * 'अर्धमन्तर्वेदि' इतिवत् 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्रं' इत्यत्र लक्षणया विहितकालस्यानादरविधानात् पौर्णमास्यादिपर्वणोऽपि अनादर इति के चित्। ५।४।५. * 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' अग्नीषोमीये पशौ यूपमानं प्रकृत्य श्रूयते। अत्र लौकिकदेश एव यूपाङ्गत्वेन विधीयते, न संस्कृतवेदिभागः। **वि.** ३।७।६. * 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदि' अत्र सौमिक्या वेदेः देशत्वेन अङ्गप्रधानार्थत्वस्य स्थापितत्वात् यूपार्धद्वयेऽपि वेदेः प्राप्तत्वात् अर्धोद्देशेन तद्विधाने परिसंख्याऽऽपत्तिः। अतो वरं लक्षितदेशविशिष्टमानस्यैव यूपोद्देशेन विधानम्। **भाट्ट.** ३।७।६.

**अर्धलौकिकन्यायः**। अयं न्यायः 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा'. इति श्रीमद्भागवतप्रथमस्कन्धचतुर्थाध्यायपञ्चविंशपद्यविवरणे श्रीमद्वल्लभाचार्यैरुक्तः। तथाहि, यद्यप्यलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकमिति न्यायेन तत्सिद्धिः, अथापि अर्धलौकिकन्यायेन वा भारतादिना कार्यं सेत्स्यतीति भावः। **साहस्री.** ५४१.

**अर्धवैशसन्यायः**। अयं न्यायः पूर्वोक्तार्धकुक्कुटीन्यायसमानविषये प्रवर्तते। अयं शारीरकसूत्रभाष्ये व्यवहृतः। तथाहि 'न चार्धवैशसं संभवति' इत्युक्तम्। वैशसं हिंसा प्रोच्यते। यथोक्तं 'वरं हुतवहज्वालापुञ्जस्यान्तर्व्यवस्थितिः। न शौरिचिन्ताविमुखजनसंवासवैशसम्॥' इति कात्यायनः। शौरिचिन्ताविमुखेषु तन्निन्दापरेषु जनेषु यः संवासः स एव वैशसं हिंसा, तन्न वरमित्यर्थ इति। **साहस्री.** ८७६.

* 'अतः क्व चित् प्रमाणत्वं क्व चिदप्यप्रमाणताम्। व्यवस्थापयता न्यायैर्न भवेद**र्धवैशसम्**॥' **वा.** १।३।२।३ पृ. १७४. * अपि च 'यदिदं किंच आ श्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यः तत्तेऽन्नं' इत्यत्र न तावत् सर्वान्नाभ्यवहारश्चोद्यते इति शक्यं वक्तुं, अशाब्दत्वादशक्यत्वाच्च। सर्वं तु प्राणस्यान्नं इति अन्नदृष्टिश्चोद्यते। तत्साहचर्याच्च 'आपो वासः' इत्यत्रापि नापामाचमनं चोद्यते, प्रसिद्धास्वेव तु आचमनीयास्वप्सु परिधानदृष्टिश्चोद्यते इति युक्तं, नहि अर्धवैशसं संभवति। **शांभा.** ३।३।१८ ब्रसू.। अन्यथा आचमनविधौ पूर्वत्र ध्यानविधिः, उत्तरत्र क्रियाविधिः इति अर्धवैशसं स्यात्। **रत्नप्रभा.** * 'अविरोधे श्रुतिर्मूलं, न मूलान्तरसंभवः। विरोधे त्वन्यमूलत्वमिति स्यादर्धवैशसम्॥' **वा.** १।३।२।३ पृ. १७०. एकस्यां धर्मसंहितायां अर्धस्य अर्धान्तरेण वैशसं विरोध इत्यर्थः। **सु.** पृ. १३४. * सामानि किं ऋचं प्रति प्रधानभूतानि, उत तत्संस्कारार्थानि गुणभूतानि इति विचारः।... अथ अकाले प्राधान्यं कर्मकाले तु संस्कारः, तदा अर्धवैशसम्। **शा.** ९।२।२. * 'ननु श्रुत्यविरुद्धायाः श्रुतिमूलत्वनिश्चयः अनुमानादपि प्राप्स्यन् केन चित् प्रतिबध्यते। तस्मात् कारणवैषम्यान्नोभयत्रैकरूपता। सिध्येन्मूलव्यवस्था हि प्रतिपक्षानुसारिणी॥' ततश्च **अर्धवैशसप्रसङ्गनिवृत्तिः**। **वा.** १।३।२।३ पृ. १८०. श्रुतिविरोधे अत्यन्तदुष्टविकल्पपरिहारार्थे भ्रान्त्यादिमूलत्वकल्पनया स्मृत्यप्रामाण्याङ्गीकरणस्य न्याय्यत्वेन अर्धवैशसानापादकत्वात् न तत्परिहारार्थं अविरोधेऽपि अप्रामाण्यमापादनीयं इत्याह—ननु इति। **सु.** पृ. १४७, * न्यायलभ्यव्यवस्थाप्रतिपादनस्य

**अर्धवैशसादिदोष**परिहारोपयोगितामाह । सु. पृ. १३८.

* **आर्धिनः ऋत्विजः** । दक्षिणाया अर्धोऽस्ति येषां, षड् गावः, ते आर्धिनः । ते च प्रतिप्रस्थाता, मैत्रावरुणः, ब्राह्मणाच्छंसी, प्रस्तोता चेति । **के.**

**अलमुन्मत्तपञ्चाशिकादूषणोद्भावनेन इति न्यायः** । उन्मत्तेन विरचिता या पञ्चाशिका पञ्चाशत् श्लोका वा तावन्ति वाक्यानि वा असंबद्धार्थानि, तेषु दूषणदानं व्यर्थं न क्रियते तद्वत् । **संग्रहः.**

**अलमुन्मत्तवचसि काव्यदूषणोद्भावनेन इति न्यायः** । यत्र विक्षेपबहुलं धावनमेव पुरुषार्थं मन्यमाना बालैरप्युपहसनीयास्तत्र स्पष्टाभिप्रायोऽयमिति । **साहस्री.** ७७६

**'अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता' इति न्यायः** । तारुण्यमदमत्ता योषित् मत्तकाशिनी नाम । सा पुरुषस्य अलाभे तिर्यञ्चमपि श्वानं कामयते उपभोगार्थम् । तद्वत् । निन्दार्थोऽयं न्यायः । **संग्रहः.**

* **अलिङ्गेऽपि** वृक्षपदार्थे पुंलिङ्गो वृक्षशब्दः प्रयुज्यते । तत्र न वयमर्थतः साधुतां ब्रूमः, किंतु अभियुक्तप्रयोगमात्रबलेन साधुत्वम् । **वि.** ४।१।६.

* **अलौकिकं** ( लोके अप्रयुक्तं ) — 'न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।' **वा.** १।३।८।२४ पृ. २६३.

**अलौकिकं लौकिके नाङ्गं इति न्यायात्** अलौकिकसामर्थ्यदृष्टान्तः लौकिके न संभवति । कर्मणा जातिपरिवृत्तौ विश्वामित्रदृष्टान्तो न युक्त इति भावः । **ब्राह्मणमहासंमेलनविशिष्टाङ्के** पृ.१६९.

* **अलौकिकानां** पदानां— 'न चालौकिकानां सतां वेदादेव पूर्वोत्तरपदसंबन्धमनपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम् ' । **भा.** १।४।७।१०. * **अलौकिकत्वं** वेदतदुपजीविप्रमाणातिरिक्तप्रमाणागम्यत्वे सति प्रमितिविषयत्वम् । **मणि.** पृ. ७.

**'अलौकिकप्रकारेण वेदसाध्यं फलमप्यलौकिकम्' इति न्यायः** श्रीमद्भागवते १।४।२८ पद्ये वल्लभाचार्यैरुदाहृतः । **साहस्री.** ५४१.

* **अलौकिकप्रमाणानि** । धर्मप्रमाणानि विधि–अर्थवाद–मन्त्र–नामधेय–स्मृति–शिष्टाचाररूपाणि षट् । कर्माङ्गताबोधकानि श्रुति–लिङ्ग–वाक्य–प्रकरण–स्थान–समाख्याः इति षट् । श्रुति–अर्थ–पठन–स्थान–मुख्य-प्रवृत्तिरूपाणि षट् क्रमबोधकानि । वचन–नाम–लिङ्गानि अतिदेशप्रमाणानि । स्थानापत्तिः ऊहप्रमाणम् । प्रत्याम्नान–प्रतिषेध–अर्थलोपरूपाणि बाधप्रमाणानि त्रीणि । एवमेकत्रिंशत् । एषां आलोकसंयोगादिवत् सहकारितामात्रं, विधिरेवात्र मानं इत्यपि केचित् । **मणि.** पृ. १३.

* **'अल्पं जुहोति'** इति वचनेन अल्पोद्देशेन प्रक्षेपरूपप्रतिपत्तिविधिः द्व्यवदानवत् । अतः शेषसत्त्वात् भक्षणं तत्प्रतिपत्तिः । **भाट्ट.** ३।५।५. * 'अल्पं जुहोति' इति विशेषवचनात् चमसेषु सोमस्य शेषः सिध्यति । तद्भक्षणं तु अपूर्वार्थप्रतिपादकवचनेभ्योऽवगम्यते । ततोऽस्ति सोमेषु भक्षः । **वि.** ३।५।६.

* **'अल्पं भक्षयति'** इति वचनेन कृत्स्नस्य शेषस्य एकभक्षणप्रतिपाद्यत्वासंभवात् एकेन भक्षणेन प्रतिपादितेऽपि शेषे अवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसंभवात् । प्राथम्यविधेश्च समुच्चयः । **भाट्ट.** ३।५।१०. * 'अल्पं भक्षयति' । ज्योतिष्टोमे हुतशेषसोमभक्षणं न आतृप्ति भवति, किंतु अल्पमेवेति अत्रोक्तम् । ३।२।१०.

* **अल्पं भूयसा बाध्यते** । प्राप्तबाधः । यथा पञ्चदशरात्रे एकं अग्निष्टुन्नाम आग्नेयीसुब्रह्मण्याप्रवर्तकं अनेकेन ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना । **बाल.** पृ. १३२.

**अल्पेन वैकल्येन छन्दस्त्वं नापैति इति न्यायः** । ' सप्तैता अनुष्टुभः, ताः त्रिः प्रथमया त्रिरुत्तमया एकादश भवन्ति विराट् याज्या द्वादशी ताः षोळश गायत्र्यो भवन्ति, न वा ऐकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम् । ' **ऐब्रा.** १०।५।१०.

**' अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् । ' ( रघु. २।४७ ) इति न्यायः** स्पष्टः । **संग्रहः.**

* **अल्पत्वं च** कस्य चित् बहुत्वमपेक्ष्य भवति । **भा.** ४।१।१७।४७.

* **अल्पबाधेन बहुबाधो बाध्यते** । अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०. यथा अश्वप्रतिग्रहेष्टेः प्रतिग्रहीतृविषयत्वे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वं, अनयत् इत्यस्य च प्रतिग्रहार्थत्वं, 'स स्वां देवतां' इति च तच्छब्दस्य प्राधान्यनिर्दिष्टवरुणपरामर्शित्वं, दातृत्वे च वरुणस्य अदेवतात्वात् देवताशब्दायोगः इति बहुबाधः । दातुरिष्टिपक्षे तु प्रतिगृह्णातिमात्रस्य स्वार्थत्यागः । **बाल.** पृ. १४०.

**अल्पभूयोविरोधन्यायः** । अल्पानां भूयोभिर्विरोधे बाधो भवति इति सा रीतिः । 'न चात्र अल्पभूयोविरोधन्यायोऽस्ति प्रत्ययत्यागे भूयसां तदर्थानां बाधापत्तेः ।' **सु.** पृ. ४७.

* **अल्पलक्षणया** बहुलक्षणा बाध्यते । प्राप्तबाधः । **बाल.** पृ. १४३.

* **अल्पार्थविधानेन** अनेकार्थविधानं बाध्यते । यथा 'दध्ना जुहोति' इत्यादौ विशिष्टविधिः गुणविधिना । प्राप्तबाधः । **बाल.** पृ. १४०.

* **अल्पार्थविधिसंभवाच्च** न विशिष्टविधानेन परिहारो घटते । **वा.** ३।३।१०।२१.

* **अवकाभिर्वेतसशाखया** च वेदिविकर्षणं सकृदेव, न प्रतीष्टकं अग्निचयने । अवकाः शैवालम् । **वि.** ९।१।७। २६-२८.

* **अवकाशब्दस्य** 'आपो वै शान्ताः' इति वाक्यशेषानुसारेण अप्सु लक्षणा नोपेयते, अर्थवादाधिकरणे गुणवादसूत्रेण अभिजनस्तुतिद्वारेण अवकानामेव स्तुतिः इति विधिस्तुत्योर्वैयधिकरण्यपरिहारात् । **पराक्रमः.**

* **अवकाशैः** ( ग्रहावकाशैः ) नाम 'द्वौ समुद्रौ' इत्यादिभिः 'कोऽसि को नाम' इत्यन्तैर्मन्त्रैः ग्रहाद्युपस्थानं प्रातःसवने माध्यंदिने सवने च अग्निष्टोमे । **के.**

* **अवकीर्णिपशुः** 'यो ब्रह्मचारी अवकिरेत् स गर्दभं पशुमालभेत ।' अयं पशुर्लौकिकेऽग्नौ कर्तव्यः । **वि.** ६।८।४. * **अवकीर्णिपशुयागः** लौकिकाग्नावेव । किंतु 'अथ पशुकल्पः' इति आश्वलायनोक्तायाः स्मार्तपरिवृतिकर्तव्यताया एव तदङ्गत्वं इति के चित् । आपस्तम्बवचनादप्सु वा । **भाट्ट.** ६।८।४. अवकीर्णी स्त्रीगमनात् क्षतव्रतः । **सोम.** ६।८।४.

**अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्** । ६।८।४।२२ ॥

'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इत्युक्तः अवकीर्णिपशुः अवकीर्णिनः स्त्रियां कृतरेतोविसर्गस्य ब्रह्मचारिणः पशुः तद्वत् पूर्वोक्ताधिकरणोक्तवत् स्थपतीष्टिवत् लौकिकेऽग्नौ एव स्यात्, न आधानसिद्धेऽग्नौ । आधानस्य अप्राप्तकालत्वात् ब्रह्मचर्यकाले आधानं न प्राप्तम् । विवाहोत्तरमाधानम् । न प्राप्तः कालो यस्य तदाधानं अप्राप्तकालम् । आधानस्य अप्राप्तकालत्वात् अवकीर्णिपशुर्लौकिकेऽग्नौ इति सिद्धान्तः । **के.**

**अवकीर्णिपश्वधिकरणम्** । अवकीर्णिपशुर्लौकिकेऽग्नौ ॥

**अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्** । ६।८।४।२२ ॥

**भाष्यं**— अस्ति अवकीर्णिपशुः 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति । तत्र संदेहः किं तदर्थं आधानं कर्तव्यं, उत लौकिकेषु अग्निषु तत् वर्तेतेति । अवकीर्णिपशुश्च तद्वत् इति अधिकरणातिदेशः । पूर्वस्य अधिकरणस्य यः पूर्वपक्षः सोऽत्र पूर्वः पक्षः, यः सिद्धान्तः स सिद्धान्तः । सर्वार्थमाधानं तस्मादाहिताग्निषु इति पूर्वः पक्षः । आधानस्य अप्राप्तकालत्वात् इति सिद्धान्तः । अप्राप्तोऽयं आधानस्य कालः इत्येतदुक्तम् । तस्मात् इदमपि कर्म लौकिकेषु इति ।

**सोम**— पूर्वातिदेशात् **संगतिः** ।

**वि**— 'अवकीर्णिपशुः कुत्र, विप्राद्याधानसंभवात् । वैदिके, लौकिके ब्रह्मचारिण्याधानवर्जनात् ॥'

**भाट्ट**— 'यो ब्रह्मचार्यवकिरेत् स नैर्ऋतं गर्दभं पशुमालभेत' इति श्रुतो यागोऽपि लौकिके एवाग्नौ, सत्यपि त्रैवर्णिकत्वे विद्वत्त्वे वा भार्याऽभावेन आधानासंभवात् । न च अवकीर्णिनोऽपि स्नात्वा विवाहे बाधकाभावः 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति वचनेन विप्लुतब्रह्मचर्यस्य अवकीर्णिनः अकृतप्राय-

श्चित्तस्य विवाहनिषेधात् । नहि अत्र अविप्लुतब्रह्मचर्यपदेन कृतब्रह्मचर्याश्रमोत्तराश्रमयोः पौर्वापर्यमात्रस्य अनेन विधानात् अवकीर्णिनोऽपि विवाहे बाधकाभावः, 'स्नात्वा भार्यामुपेयात्' इत्यनेनैव स्नानपूर्वभाविनो ब्रह्मचर्यस्य स्नानोत्तरभाविना विवाहेन अर्थात् पौर्वापर्यसिद्धेः अस्य वचनस्य साङ्गब्रह्मचर्यवत एव विवाहाधिकारः इत्येवमर्थतया अवकीर्णिनो विवाहानुपपत्तेः । अतः सोऽपि लौकिकाग्नावेव । आपस्तम्बवचनात् अप्सु वा । अयं च अवकीर्णियागो न दैक्षप्रकृतिकः । 'गर्दभं पशुं' इति पशुशब्दोपादानवैयर्थ्यात् । किंतु 'अथ पशुकल्पः' इत्याश्वलायनोक्तायाः ( आश्व. गृ. १।११।१-१५ ) पश्विवतिकर्तव्यतायाः एव तदङ्गत्वं इति के चित् ।

**मण्डन**— 'श्रौते वह्नौ नावकीर्णीष्टिरिष्टा ।' ५.

**शंकर**— 'अवकीर्णिपशुस्तथा ।' लौकिके । ५.

* **अवख्येषं** 'सुचक्षा अवख्येषं' इति सोमभक्षार्थं चमसग्रहणमन्त्रांशः । चक्षिङः ख्याञादेशस्मरणात् छन्दसि दृष्टानुविधित्वेन इह ख्याञ् इत्युपसंख्यानकरणात् 'सिब्बहुलं लेटि' ( पा० ३।१।३४ ) इति सिब्विकरणाश्रयणाच्च रूपसिद्धिः । **सु.** पृ. ११३५.

* **अवगतप्राधान्यस्य** अन्यार्थता न युक्ता । **सु.** पृ. ८५४.

* **अवगमितोऽर्थः** न विधीयते । **भा.** २।२।६।१७ पृ. ५१०.

**'अवगूर्य वषट् करोति । इत्यनयोर्याज्यया व्यवायेऽपि पौर्वापर्यम् ॥**

आगूःशब्दस्येव आगूर्येत्यस्यापि येयजामहवाचित्वात् 'अवगूर्य वषट् करोति' इति वचनेन तदानन्तर्यस्य वषट्कारे कण्ठरवेण विधानात् याज्यावषट्कारसमुच्चयपक्षस्य च ज्ञापकसिद्धत्वेन निरपेक्षप्रदानार्थत्वबोध्यविकल्पात् दुर्बलतया चासार्वत्रिकताया एव वक्तव्यतया यदा समुच्चयस्तदा याज्योर्ध्वं वषट्कारः, यदा केवलो वषट्कारस्तदा येयजामहाव्यवहितोत्तरमेव प्रयोक्तव्यः । **इति प्राप्ते**, किंचिद्व्यवधानेऽपि 'भुक्त्वा गतः' इत्यादौ लोके 'पुरोऽनुवाक्यामनूच्य याज्यया जुहोति' इति वेदेऽपि क्त्वाप्रत्ययप्रयोगात् समुच्चयविकल्पयोर्विकल्पकल्पनस्य अत्यन्तजघन्यत्वात् उत्तरकालतायामेवावगूर्येति ल्यप् । वस्तुतस्तु आधानावधानयोरानयनावनयनयोः आहारावहारयोरुपसर्गभेदेनार्थभेदस्य बहुशो दर्शनात् अवगोरणस्य वधाध्यवसायपरत्वेन अन्यत्र प्रयोगादिह तदसंभवेऽपि लक्षणयोच्चैरुच्चारणाध्यवसानमेवार्थः । **संकर्ष.** ४।३।४.

* **अवगोरणे** ब्राह्मणस्य, शतसंवत्सरं यातनाः कर्तुर्भवन्ति, 'यो ब्राह्मणायावगुरेत्, तं शतेन यातयात्, तस्माद् ब्राह्मणाय नावगुरेत्' इति वचनात् । अवगोरणं ताडनाय दण्डोद्यमनम् । **वि.** ३।४।१०. * **अवगोरणनिषेधः** केवलं पुरुषार्थः, न क्रत्वर्थः क्रतुयुक्तपुरुषार्थो वा । **भा.** ३।४।१०।२३. * **अवगोरणनिषेधस्य** पुरुषार्थस्य दर्शपूर्णमासप्रकरणादुत्कर्षः । **वि.** ३।४।१०, * **अवगोरणनिषेधफलं** यातनापरिहारः । ३।४।१०.

**अवगोरणन्यायः** । शंय्वधिकरणम् । सर्वपरिदानाधिकरणम् ॥

**शंयौ च सर्वपरिदानात्** । ३।४।६।१७ ॥

**भाष्यं**— दर्शपूर्णमासयोः श्रूयते 'देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वह' इति प्रकृत्य वचनमिदं भवति 'किं मे प्रजाया इति । तेऽब्रुवन् यो ब्राह्मणायावगुरेत् । तं शतेन यातयात्, यो निहनत् तं सहस्रेण यातयात्, यो लोहितं करवत् यावतः प्रस्कन्द्य पांसून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात् इति । तस्मान्न ब्राह्मणायावगुरेत् न हन्यात् न लोहितं कुर्यात्' इति । तत्र संदेहः किं दर्शपूर्णमासयोः अवगोरणप्रतिषेधः, उत पुरुषस्योपदिश्यते इति । किं प्राप्तम् ? प्रकरणात् दर्शपूर्णमासयोरवगोरणादिप्रतिषेधः । न दर्शपूर्णमासयोर्ब्राह्मणस्यावगोरितव्यं वधो वा कार्यो लोहितं वा प्रस्कन्दनीयम् । अन्य उपाय आस्थातव्य आनतये । ते नान्वाहार्येण आनमन्तीति प्रकरणात् प्राप्नोति । **एवं प्राप्ते ब्रूमः** । शंयौ च प्रकरणादुत्कर्षः । कस्मात् ? सर्वपरिदानात् । सर्वावस्थस्य ब्राह्मणस्यायं प्रतिषेधः उक्तः । न दर्शपूर्णमासगतेनैव नावगोरणादि कर्तव्यमिति । **ननु** प्रकरणाद्दर्शपूर्णमासधर्मोऽयम् । सत्यं प्रकरणादेवम् । वाक्येनावगुरमाणस्य धर्मः । वाक्यं च प्रकरणाद्बलीयः ।

ननु जङ्घम्यमानस्येव प्रकरणे निवेशो भवेत्। नेत्युच्यते। तत्र फलं कल्पनीयं, इह क्लृप्तम्। अस्ति ह्यत्र विधायकविभक्तिः 'शतेन यातयात्, सहस्रेण यातयात्, स्वर्गं लोकं न प्रजानीयात्' इति। तस्मादुत्कर्ष एवंजातीयकस्येति।

**वा**— (सूत्रे) शंयौ इति ब्राह्मणावगोरणादिप्रतिषेधवाक्योपलक्षणम्। तत्र पूर्ववदेव पक्षाः। तेषामपि प्राकरणिकं संबन्धद्वयमपि अङ्गीकृत्य निर्दिष्टौ क्रतुधर्मः शुद्धपुरुषधर्मश्चेति द्वावेव पक्षौ। समस्तेन च अनृतवदनप्रतिषेधन्यायेन (३।४।४) क्रत्वर्थस्यावगोरणस्य प्रसज्यमानस्य प्रतिषेधः। का च तत्र प्रसक्तिः? (ब्रह्माग्नीध्राध्वर्युहोतृरूप—) चतुर्ब्राह्मणसाध्यत्वात् दर्शपूर्णमासयोः तदानत्यर्थं सामदानभेददण्डेषु प्रसज्यमानेषु अन्वाहार्य— (चरु—) दानेन आनमयेत् इति गम्यते। यदा तन्मात्रेण नानमन्ति, तदा पुनर्यथा दानात् आनतिर्भवति तथा प्रयत्यमाने लौकिकोपायप्रसक्तौ सत्यां अयं दण्डप्रकारोऽवगोरणादिः पक्षे प्राप्नोति, स प्रतिषिध्यते। न कर्तव्यं तेन, तद्व्यतिरेकोपायान्तराश्रयणं कार्यमित्युक्तं भवति। **तथा प्राप्तेऽभिधीयते। 'वाक्येन सर्वसंयोगात् सर्वेभ्यो वरदानतः। फलस्याकल्पितत्वाच्च नेष्टः प्रकरणग्रहः॥'** यच्छब्दस्तावत् श्रुत्यैव पुरुषमुपादत्ते। न च प्रकरणयुक्तपुरुषधर्मः। नह्येष कश्चित् संस्कारः। किं तर्हि? नरकपरिहारार्थोऽयं प्रतिषेधः। स च पुरुषगत एव नरकपातः संकीर्तितः, न तु क्रतुगतः। यस्य च प्रत्यवायः, तस्य तत्परिहारार्थः प्रतिषेधः। 'शतेन यातयात्, सहस्रेण यातयात्' इति शतगुणं सहस्रगुणमनुभवेदित्यर्थः। अथवा संख्येयान्तरानुपादानादुपरि संवत्सरग्रहणादिहापि संवत्सरशतेन यातनां निस्तरेत् सहस्रेण, इत्येवं संबध्यते। निषेधफलं च प्रदर्शनमात्रेणैव संबध्यते, न विधिफलवत् कामपदोपबन्धमपेक्षते। नहि कश्चित् संत्यक्तव्यमर्थं कामयते। न चान्यः कश्चित् तस्योपादानप्रकारोऽस्ति। तेन अनुभवेत् इत्येतावतैव उपादानं विज्ञायते, तच्चेह अविकलमस्ति। **यत्तु** भाष्यकारेण लिङ्गप्रदर्शनं कृतं, **तत्** फलस्याविधेयत्वात् असंबद्धम्। यदपि तावदिष्टं, तदपि न विधीयते। यत्तु अनिष्टं, तत्र पुरुषप्रवृत्त्यसंभवात् अत्यन्तविपरीत एव विध्युपन्यासः। तस्मात् अनिष्टफलोपादानमात्रेणैव तद्विषयनिषेधसिद्धेः, अनिष्टफलस्य च पुरुषगामित्वात् पुरुषधर्मता। तथा च 'सोऽब्रवीत् किं मे प्रजायै' इति प्रजामात्रानुग्रहः एव शंयुना प्रार्थितः, देवैश्च 'यत् (किं) कामयसे' इत्युक्ते शंयुना ब्राह्मणमात्रमेव तेभ्यः परिदत्तं (ददातेः क्तः अच उपसर्गात् तः [पा० ७।४।४७ परिदत्तमित्यर्थः) परिपालनाय उपक्षिप्तम्। तैश्च (देवैः) ब्राह्मणमात्रमेवोद्दिश्य अनुग्रहः प्रत्तः, इति वाक्यशेषः समर्थितो भविष्यतीति।

**सुधा**— शुद्धक्रतुधर्मः क्रतुयुक्तपुरुषधर्मः शुद्धपुरुषधर्मश्चेति त्रयः पक्षाः। पूर्वसूत्रस्थापकृष्येतेतिशब्दानुषङ्गेण मण्डूकप्लुत्या च व्यवहितस्यापि कर्त्रधिकरणपूर्वपक्षसूत्रस्थाकर्मशब्दस्य अनुषङ्गेण (शंयौ) शंयूपक्रमे वाक्ये यत् अकर्म निषेधनं, तत् प्रकरणात् अपकृष्येत (सर्व-) सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थाऽनपेक्षस्य पुंसः (परि-) नरकपरिहारार्थं (दानात्—) ब्राह्मणावगोरणादीनां दानात् खण्डनात् निषेधात् इति सूत्रव्याख्या (— भाष्यपक्षे। वार्तिकमतेन तु—) सर्वेभ्यः ऋत्विग्भ्यः अनृत्विग्भ्यो वा ब्राह्मणेभ्यः (परि—दानात्—) परिपालनाख्यवरदानात् इति (पञ्चम्यन्तपदव्याख्या। 'दो अवखण्डने' इत्येतद्धातुरूपाश्रयणेन दानशब्दस्य खण्डनार्थतया निषेधवाचित्वम्)। पृ. १४०२.

**शा**— **'फलाभावात् क्रतोश्चापि प्रकृतत्वात् तदर्थता। क्लृप्तत्वात्तु फलस्यायं पुरुषार्थो न तु क्रतोः॥'** तस्मात् फलवत्त्वात् पुरुषार्थमवगोरणं, न क्रत्वर्थम्। ३।४।१०.

**सोम**— पूर्ववत् इहापि क्रत्वर्थत्वं इति प्रत्यवस्थानात् (दृष्टान्त—) **संगतिः**। हेतुहेतुमतोर्लिङोऽनुशासनात् अवगुरेत् इति लिङा अवगोरणस्य प्रतीतेः 'लिङर्थे लेट्' इति यातयात् इति लेट्। यातनाया हेतुमत्त्वप्रतीतेश्चावगोरणसाध्यतया अत्र यातना गम्यते। **सूत्रार्थस्तु**— शंयौ 'ते शंयुं बार्हस्पत्यमब्रुवन्' इति शंयूपक्रमे वाक्ये अवगोरणादेर्यदकर्म,

तदपि पुरुषार्थं स्यात्, सर्वस्य क्रतुगतत्वौदासीन्येन सर्वस्य पुरुषस्य परिदानात् खण्डनात् निषेधात् इति ।

**वि**— ' विप्रायावगुरेन्नेति क्रत्वर्थो वा पुमर्थता ।, फलवत्क्रतुसांनिध्यात् क्रत्वर्थः पूर्वमन्त्रवत् ॥, यातनापरिहारस्य निषेधफलतोचिता । निषेधोऽयं पुमर्थत्वात् प्रक्रियातोऽपकृष्यताम् ॥ ' निषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षो युक्तः ।

**भाट्ट**— अत एव दर्शपूर्णमासयोः ' देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति, तेऽब्रुवन् यो ब्राह्मणायावगुरेत् तं शतेन यातयात् तस्मान्न ब्राह्मणायावगुरेत् ' इति श्रुतौ दण्डोद्यमनादिरूपावगोरणप्रतिषेधोऽपि शुद्धपुरुषार्थ एव, यातनारूपस्य फलस्य क्लृप्तत्वेन प्रकरणेन वाक्यसंकोचायोगात् । अत्र हि आशिषि लिङ्, प्रवर्तनायाः बाधात् । आख्यातार्थोऽपि लक्षणया भोगरूपानुभवो, निस्तारो वा । तमिति द्वितीयार्थो विषयत्वम् । तथा च अवगोरणकर्तृविषये शतगुणं यातनाऽनुभवः शतसंवत्सरेण वा तन्निस्तारो भवत्वित्यर्थः । वस्तुतस्तु, आख्यातार्थोऽनुभावनादिः, लिङर्थोऽनुकूलव्यापार एव । तथा च तं प्रति भवान् शंयुरनुभावयेदित्यर्थः । अत्र च लिङुपादानेन पूर्ववद्वर्तमानत्वाप्रतीतेर्यातनायाः साध्यत्वावगमान्निषेध्यफलं कामपदाद्यभावेऽपि क्लृप्तम् । अतः शुद्धपुरुषधर्म इति प्रत्युदाहरणमात्रम् । अत एव सामान्येन शंयोर्वरदानमपि संगच्छते । पुरुषधर्मत्वं च पुरुषनिष्ठफलजनकक्रियाविषयत्वमात्रं, न तु पुरुषस्य संस्कार्यतया शेषित्वं प्रमाणाभावादिति ध्येयम् । **न च** क्रतौ अवगोरणप्राप्त्यभावादेव अस्योत्कर्षसिद्धेर्न प्रत्युदाहरणत्वमिति **वाच्यं**, अन्वाहार्येणानत्यसंभवे तस्यापि तदर्थं प्राप्तेः । क्रतूपकारकतया प्राप्त्यभावेऽपि ' न स्त्रियमुपेयात् ' इतिवत् क्रतुमध्यप्रसक्तप्रतिषेधस्यापि क्रत्वङ्गत्वोपपत्तेश्च । अतश्च फलस्य क्लृप्तत्वादेव पुरुषधर्मत्वम् । अत्र च अर्थवादोन्नीतस्य पदान्तरस्य फलपरत्वं अस्यैव स्वर्गादिवद्वा तत्परत्वमित्यादि तु स्वयमूह्यम् । ३।४।१०.

**मण्डन**— ' पुंसो निषेधः शतयातनोक्त्या । '

**शंकर**— ' नावगोरणवर्जनम् । ' १२ न क्रत्वर्थम् ।

* **अवघातः** । कृष्णाजिनास्तरणं, तदुपरि उलूखलस्थापनं, तत्र बीजावापः, मुसलेन कुट्टनं, शूर्पेण परावपणं, कणेभ्यः तण्डुलानां विवेचनं इतिकर्मसमुदायात्मकोऽवघातः एकः पदार्थः । **के.** * अवघातः चरुपुरोडाशयोर्धर्मः । **के.** * अवघातः तण्डुलनिष्पत्तिपर्यन्तमभ्यसनीयः । **वि.** ११।१।५, * अवघातः द्रव्ये एवातिशयं कुर्यात्, न तु अपूर्वं जनयति । न च विधिवैयर्थ्यं नखनिर्भेदनादिना तुषविमोकसंभवेऽपि ' अवघातेनैवासौ कर्तव्यः ' इति यो नियमः, तस्य नियमस्य अपूर्वहेतुत्वेन विधेयत्वात् । २।१।३, * **अवघातेन** व्रीहीणां तुषविमोको दृष्टः संस्कारः । २।१।६. * **अवघातस्य**— अग्निचयने सर्वौषधावघातस्य नाभ्यासः । ' तत्र सकृत् क्रियया कृतः शब्दार्थः इति न स्यादभ्यासः' । **भा.** ११।१।६।२८.

**अवघातस्य कृष्णलचरौ बाधः ॥**

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् । १०।१।१।१ वर्णकं २.**

**भाष्यं**— एवं वा । अस्ति प्राजापत्यश्चरुः ' प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्कामः ' इति । तत्रैतत् विशिष्टमुदाहरणमङ्गीकृत्य एतदेव सर्वं चिन्त्यते । किं कृष्णलेष्ववहन्तिः कर्तव्यो, नेति । विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् इति पूर्वः पक्षः । कर्तव्यः, यथा तेषामेव पाकः इति ।

**अपिवाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत, तादर्थ्यात् । २ ॥**

**भाष्यं**— इति सिद्धान्तः, न कर्तव्यः इति ।

**तेषामप्रत्यक्षशिष्टत्वात् । ३ ॥**

**भाष्यं**— इत्युपवर्णनापरिहारः ।

**शा**— ' प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः ' इति श्रूयते । तत्रावघातः कर्तव्यो न वेति संशये, चरुशब्दः अचरौ चरुधर्मविधानार्थः । तेन लुप्तार्थोऽप्यवघातो वचनात् श्रपणवत् कर्तव्य इति **विशेषाशङ्का** । विनाऽप्यवघातेन अलुप्तार्थैरेव धर्मैर्वैशद्येन च उपपन्नश्चरुशब्दो नावघातं प्रापयितुमलं, श्रपणं तु

'घृते श्रपयति' इत्याहत्य विधानात् क्रियते इति वैषम्यम् ।

**सोम**— शतं स्वर्णानि कृष्णलानि कृष्णल– ( कृष्ण-मुखगुञ्जा- ) तुलितानि यस्य तं इत्यर्थः इति भट्ट-भास्करः । **न च** अवघातस्य हविष्प्रकृतिद्रव्यं संस्कार्यं, इत्युक्तं नवमे । कृष्णलानां च हविष्ट्वमेव, न प्रकृतित्वं, इत्यवघातप्रसक्तेरेव अभावात् अयं विचारोऽनुपपन्न इति **वाच्यम्** । सप्रकृतिकहविष्कार्ये कृष्णलविधानेन हविष-स्तत्प्रकृतेश्च निवृत्त्या कृष्णलानां हविःस्थानापन्नत्ववत् हविःप्रकृतिस्थानापन्नत्वमपि अस्ति, इत्यवघातप्राप्त्य-विरोधात् ।

**वि**— 'अवघातः कृष्णलानामस्ति नो वा, ऽस्ति पाकवत् ।, प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा ( प्रत्यक्षोक्तिः ) ॥'

**भाट्ट**— **यत्तु** मूले वर्णकान्तरेण 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इत्युदाहृत्य कृष्ण-लेषु वितुषीभावरूपप्रयोजनाभावादवघातस्य बाध इत्युक्तं, **तत्** कृष्णलानां प्रदेयचरुप्रकृतित्वं कृत्वाचिन्तया । वस्तु-तस्तु कृष्णलानां सत्यपि घृताधिकरणवाचनिकाग्निसंयोग-मात्ररूपे श्रपणे वैशद्याभावेन कृष्णलप्रकृतिकचरुरूपार्था-न्तरोत्पत्तौ प्रमाणाभावात् तेषामेव प्रदेयत्वावगतेः आग्नेयप्रकृतित्वेन प्रदेयपुरोडाशधर्माणां पर्यग्निकरणादीनां प्राप्तावपि प्रदेयप्रकृतिभूतव्रीहिधर्माणां तेषु प्रमाणाभावात् न वैतुष्याभावप्रयुक्तोऽयं बाधः । न च व्रीहिधर्माभावे निर्वापस्याप्यभावात् 'निर्वपेत्' इत्यनुवादानुपपत्तिः, प्राकृतवैधनिर्वापाप्राप्तावपि अर्थप्राप्तलौकिकपृथक्करणरूप-निर्वापस्यैव तेन यागलक्षणार्थमनुवादात् । **न च** चोदनालिङ्गातिदेशेन अवघातप्राप्त्यभावेऽपि चरुशब्दस्य नामातिदेशविधया चरुधर्मातिदेशकत्वमङ्गीकृत्य अवघातप्राप्तिराशङ्कितुं **शक्या** । चरोः प्रकृतावविहित-त्वेन तद्धर्माणामप्रसिद्धेः, सौर्यादावतिदेशप्राप्तानां धर्माणामत्र विधानाङ्गीकारेऽपि अवघातस्य तद्धर्मत्वाभावाच्च । **न च** चरुशब्दोऽयं कृष्णलानां चरुप्रकृतित्वावगमार्थः इत्यपि **शक्यं वक्तुं**, कृष्णलजन्यद्रव्यान्तरानुत्पत्तौ तेषु तत्प्रकृतित्वस्य बाधित-त्वात् । अतश्चरुशब्दोऽयं अचरावेव अग्निसंयोगरूपश्रपण-वत्त्वसादृश्यात् गौणः सन् आग्नेयप्रकृतित्वसाधककठिन-त्वापरपर्यायविशदत्वसादृश्योपोद्बलकोऽनुवाद इत्युक्तम-ष्टमे ( ८।१।८ ) । 'घृते श्रपयति' इत्यनेन हि न श्रपणं विधीयते, विक्लृत्त्यभावेन श्रपणासंभवात् । अपि तु लक्षणया घृताधिकरणकाग्निसंयोगमात्रम् । तेन कृष्णलानां प्रदेयत्वात् प्रदेयधर्माः पर्यग्निकरणादयः प्राप्ये-रन्, न त्ववघातादयः, इति न तत्र वैतुष्याभावप्रयुक्तो बाधः । स तु परं सवनीयहविरन्तर्गतलाजाख्यपरिवापे । तत्र हि धानाप्रकृतित्वेन यवानामिव लाजप्रकृतित्वेन व्रीहिषु प्राप्तौ अवघातस्य वैतुष्यासंभवादेव प्रयोजनं, न तु स्वरूपेण । प्रकृते च तस्य प्रदेयपाके विरोधित्वादसंभवः, सतुषद्रव्यस्यैव भर्जने लाजनिष्पत्तेः । अत एव धानावत् भर्जनोत्तरमपि नावघातः, लाजत्वव्याघातापत्तेः । अत एव तदा नखादिनैव लौकिकं वितुषीकरणम् । अतस्तत्र युक्तो वैतुष्याभावप्रयुक्त एव तदसंभवः । अत एवार्थ-लोपस्थले नार्थस्य स्वरूपेणैव लोपः उपयोगी, अपि तु कथंचिदपि विशेषणाभावप्रयुक्तो विशेष्याभावप्रयुक्तोऽ-न्यप्रयुक्तश्चेत्यादि द्रष्टव्यम् । वस्तुतस्तु तत्रापि न द्वार-लोपाद्बाधः, श्रपणविध्याक्षिप्तोपादानकतण्डुलरूपद्वारा-भावेन व्रीहिधर्माणामतिदेशेनाप्रवृत्तेः । अपि तु लाजत्वा-न्यथाऽनुपपत्त्यैव तत्र व्रीहिमात्रग्रहणमित्युक्तं कौस्तुभे ।

**मण्डन**— 'न कृष्णले स्यादवघातकर्म ।'

**शंकर**— 'कृष्णलेष्ववघातगः ।' बाधः । २.

* अवघातस्य न बाधः महापितृयज्ञे धानासु । पूर्वं हन्तिं कृत्वा पाकः कार्यः । तत्र हन्तिः पाकार्थो भवि-ष्यति, न धानात्वं विहनिष्यते । **भा.** १०।२।३३।७४. * **अवघाते** नानाबीजेष्टिगते समुदायानुसमयः कर्तव्यः । अजिनास्तरणादिर्विवेचनान्तः एकः पदार्थः । प्रतिबीजं चासौ समुदायः कर्तव्यः । **वि.** ५।२।७, * अवघाते व्रीहीणां अपूर्वसाधनत्वाकारो विवक्ष्यते, न व्रीहिस्वरू-पम् । ९।१।१ वर्णकं २. * **अवघातकालीनः** तुषोपवापः परप्रयुक्तकपालोपजीवितया न कपालोपादानासादनयोः प्रयोजकः । **भाट्ट.** ४।१।११. * **अवघातक्रियाजन्यत्वं** नियमादृष्टस्य नास्ति । पुरोडाशनिष्पत्त्यर्थस्य तण्डुली-

भावस्य अनेकानि स्वनिष्पत्तिसमर्थानि साधनानि आलोचयतः यः अवघातविधिना साधनविशेषसमर्पणेन तत्रोपसंहारः क्रियते, स एव नियमनिबन्धादिशब्देन उच्यते। अर्थाक्षेपेण हि प्राप्स्यन्नपि अवघातः तण्डुलीभावजनकत्वेन नियम्यमानो जन्यजनकनियमस्य अदृष्टं प्रयोजनमपेक्षते। ततश्च अवघातेन तण्डुलीभावे कृते तज्जन्यत्वात् तण्डुलेषु अतिशयो निष्पाद्यमानो नावघातक्रियाजन्यो वक्तुं शक्यते। तण्डुलोत्पादननिरपेक्षावघातस्वरूपजन्यत्वाभ्युपगमे कृष्णलेष्वपि अतिदेशप्राप्तोऽवघातो न निवारयितुं शक्यते। तस्मात् नियमादृष्टस्य चतुर्थाधिकरणे (२।१) क्रियाजन्यत्वं नाभ्युपगम्यते। **अन्ये तु** अर्थाक्षेपस्य विधिकल्पनानिरपेक्षस्य अप्रापकत्वेन मन्थरत्वात् अप्राप्तावस्थस्य क्रियास्वरूपस्यैव विधेयत्वात् प्रयोजनकल्पना उचिता, न फलमात्रत्वेनावस्थितस्य नियमस्य इति मन्वानाः नियमादृष्टस्यापि क्रियाजन्यत्वमिच्छन्ति। **सु.** पृ. ५३९. * अवघातनिष्पन्नैरेव तण्डुलैः अवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतो नान्यथा। अतो दर्शपूर्णमासापूर्वे अवघातस्य नियमहेतुः। **वि.** १।१।१.

⌛ **अवघातन्यायः**। व्रीह्यवघातन्यायः। अवघातमन्त्रन्यायः। दर्शपूर्णमासयोः अवघातमन्त्रस्य सकृदनुष्ठानम्॥

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं, तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात्। ११।४।१२।४२॥**

**भाष्यं**— दर्शपूर्णमासयोः श्रूयते 'व्रीहीनवहन्ति' इति। तत्र मन्त्रः, 'अव रक्षो दिवः सपत्नं वध्यासं' इति। तस्मिन् विचार्यते किं प्रतिप्रहारं मन्त्रः, उत सकृदेव आदाविति। किं प्राप्तम्? प्रतिप्रहारमिति। कुतः? प्रहारात् प्रहारः कर्मान्तरं, यतेः पर्यवसानात्। कर्मभेदे च सति गृह्यते विशेषः, येन कर्मणा संनिपतितो मन्त्रस्तदर्थ इति। गृह्यमाणे च विशेषे भेदो दृष्टः। तस्मात् प्रतिप्रहारं मन्त्र इति। **एवं प्राप्ते, उच्यते**। एकस्मिन् द्रव्ये व्रीह्यादौ संस्काराणां अवहन्त्यादीनां व्याख्यातमेककर्मत्वं आ तण्डुलनिर्वृत्तेः एकमिदं कर्मेति (५।२।७। १५) 'सर्वेषां त्वैककर्म्यादेतेषां च तद्गुणत्वात्' इति (एतादृशं सूत्रं नोपलभ्यते)। **ननु** प्रतिप्रहारं कर्मभेदः इत्युक्तं, **उच्यते**। एकस्यैव कर्मणोऽयमभ्यासः, फलस्याभ्याससाध्यत्वात् सोमयजिवत्। तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः। यत्र मन्त्रार्थस्य नानात्वं, तत्रास्यावृत्तिर्भवति यथा अग्नौ लोकंपृणायाः। यत्र पुनरेक एव मन्त्रार्थस्तत्रावृत्तिरनर्थिका। इह चैको मन्त्रार्थः। कथं ज्ञायते? करणोऽयं मन्त्रः, करणश्च कर्तव्यस्य वस्तुनोऽभिसंधानार्थः समधिगतः। समस्ताश्चैते प्रहाराः कर्तव्याः। समस्ता हि कार्यं साधयन्ति, न व्यस्ताः। उत्तानां व्रीहीणां तण्डुलविवेचनं यत्तच्चिकीर्षितं, तदभिसंधातव्यम्। तस्मात् सर्वप्रहाराणां क्रिया मन्त्रेणाभिसंहिता। तत्रावृत्तिरनर्थिका। तस्मान्मन्त्रस्य सकृत् प्रयोगः स्यात्।

**सोम**— यथा कपालशब्दशक्तिपर्यालोचनया कपालानां न तन्त्रत्वं, एवं अवहन्तिशब्दशक्तिपर्यालोचनया मन्त्रस्यापि न तन्त्रत्वं इत्युत्थिते: **संगतिः**। मन्त्रविधौ अवहननकर्मकभावनाया उद्देश्यत्वप्रतीतावपि '**प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम्। अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम्॥**' (शा. ७।१।१ पृ. ५२५) इति सप्तमाद्यन्यायेन परमार्थतः प्रधानभूतावहननविधिविधेयत्वात् मन्त्रस्यावघातकरणकभावनाऽन्वय उपपद्यते। **सूत्रार्थस्तु**— यत्र मन्त्रकार्यस्य नानात्वं, तत्रावृत्तावपि इह सकृदेव प्रयोगः स्यात् अवहननस्य व्रीहिद्रव्यसंस्कारस्यैकत्वेन भेदाभावात्। व्याख्यातं चैवंजातीयकानामेकत्वं इति।

**वि**— 'अवघातार्थमन्त्रः, किमसकृत् सकृदेव वा।, प्रहारभेदादावृत्तिः, कर्मैक्येन सकृद्भवेत्॥' तण्डुलनिष्पत्तिपर्यन्तत्वेन आक्षिप्तप्रहाराभ्यासयुक्तस्य अवघातस्य एककर्मत्वात् तत्र विनियुक्तस्य मन्त्रस्य अवघातोपक्रमे सकृदेव पाठः।

**भाट्ट**— दर्शपूर्णमासयोरवघातमन्त्रः 'अव रक्षो दिवः सपत्नं वध्यासम्' इत्ययं किं प्रतिप्रहारमावर्तते, न वेति चिन्तायां सोमादिवत् प्रथमतो भावनाऽन्वितस्यापि मन्त्रस्य अवघाताङ्गत्वानपायात् प्रतिप्रधानं गुणावृत्तिन्यायेन

तदावृत्तावावृत्तिः । **न च** अवघातस्वरूपे आनर्थक्यादपूर्वसाधनीभूततण्डुलीभावफलोपधायकत्वेनैव तस्योद्देश्यत्वात् तण्डुलीभावं प्रति चावृत्तावघातत्वेनैव फलोपधायकत्वात् तादृशरूपावच्छिन्नस्यावृत्त्यभावेन मन्त्रावृत्तिरि**रिति वाच्यं,** तण्डुलीभावं प्रति तेन रूपेण फलोपधायकत्वेऽपि अवघातत्वस्यैव साधनताऽवच्छेदकत्वेन लाघवात् तण्डुलीभावजनकत्वेनैवोद्देश्यत्वात् तदवच्छिन्नस्यावृत्त्या आवृत्त्युपपत्तेः । नियमादृष्टं प्रति अवघातत्वेनैव कारणत्वात्, नियमादृष्टजनकत्वेनैव वा लाघवादुद्देश्यत्वाङ्गीकारात् तस्य च प्रतिप्रहारं भेदादावृत्त्युपपत्तिः । नहि नियमादृष्टं प्रहारभेदेऽप्येकमिति शक्यं वक्तुं, तस्य नियमजन्यत्वपक्षे नियमस्यापि प्रतिप्रहारं भेदाच्च । **इति प्राप्ते**, नियमादृष्टस्य नियमजन्यत्वेन अवघाताजन्यत्वात्, अवघातजन्यत्वेऽपि वा तस्यावघातप्रयोजकत्वस्यैवाभावे सुतरां तद्धर्मप्रयोजकत्वानुपपत्तेः अवश्यमाग्नेयाद्यपूर्वसाधनीभूततण्डुलीभावफलोपधायकत्वेनैवोद्देश्यत्वावसायात् तदावृत्त्यभावेन अनावृत्तिर्मन्त्रस्य । न च तण्डुलीभावसाधनताऽवच्छेदकरूपवत्त्वेनोद्देश्यता, तथात्वे सर्वौषधावघातादावपि तद्रूपसत्त्वेन मन्त्रादिप्राप्त्यापत्तेः । अस्तु वा तत्, तथापि इतराङ्गवत् तन्त्रेणैव सकृत्पठितमन्त्रजन्यस्मृतेः सर्वप्रहारोपकारकत्वोपपत्तेः न मन्त्रावृत्तिप्रसक्तिः ।

**मण्डन**— ' अवघाते सकृन्मन्त्रः । ' १३.

**शंकर**— ( मण्डनवत् । ) १३.

**अवघातन्यायेन** संमार्गस्यापि परमापूर्वप्रयुक्तत्वायोगेन अवान्तरापूर्वप्रयुक्तत्वसिद्धेः इत्याशङ्कते । **सु.** पृ. १०४५. * न च सकृत्पठितमन्त्रजन्यस्मृतेः अविच्छेदात् **अवघातमन्त्रन्यायेन** आवृत्त्यनापत्तिः । ' मन्त्रान्तेन कर्मादिः संनिपात्यः ' इति वचनेन विहितकर्मादेः मन्त्रान्तकालविधानात् । **भाट्ट.** ११।४।१५. * **अवघातप्रोक्षणादयो** व्रीहिधर्माः । **वि.** ३।१।४. * अवघातप्रोक्षणादिविधयो यथा व्रीहिषु प्रवर्तन्ते, तथा व्रीहिप्रतिनिधिभूतेषु नीवारेष्वपि प्रवर्तन्ते । **के.** ३।६।१४।३७. * **अवघातमन्त्रः** ' अव रक्षो दिवः सपत्नं वध्यासं ' इति उपक्रमे सकृदेव पठनीयः, न तु प्रतिप्रहारम् । **वि.** ११।४।१३, * अवघातमन्त्रः राजसूये नानाबीजेष्टौ प्रतिबीजावघातादौ सकृत्सकृत् पठनीयः, अवघातानां तत्र भिन्नत्वात् । ११।४।१४. * **अवघातादयः** तदेवैकमपूर्वं प्राप्य अर्थवन्तो जाताः, न परमापूर्वं कर्मान्तरापूर्वं वा अपेक्षन्ते । **वा.** ३।१।४।१० पृ. ६७०, * अवघातादयः नवमाद्याधिकरणन्यायेन श्रौतं व्रीहित्वमुल्लङ्घ्य अपूर्वसाधनत्वेन संबध्यन्ते । ३।१।४।७ पृ. ६६६. * अवघातादयः प्रधानेन प्रयुज्यन्ते । **वि.** ४।२।११, * **अवघातादेः** अदृष्टार्थस्य सकृदनुष्ठानं, नावृत्तिः । ११।१।६, * **अवघातादीनां** धर्माणां यज्ञ्यन्वयं सप्तमस्याद्याधिकरणे निराकृत्य अपूर्वान्वयो निर्णीतः । ९।१।१, * अवघातादीनां सत्यपि दृष्टार्थत्वे वेदमूलत्वं संभाव्यते, नियमादृष्टसिद्धेः अनन्यप्रमाणकत्वात् । **वा.** १।३।१।२ पृ. १६६.

**⌛ अवघातादिक्रियाणामदृष्टार्थानां प्रयोजननिष्पत्तिपर्यन्तमभ्यासः ॥**

**क्रियाणामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निर्वृत्त्याऽपवर्गः स्यात् । ११।१।५।२७ ॥**

**भाष्यं**— ' व्रीहीनवहन्ति ' ' तण्डुलान् पिनष्टि ' इत्येवमादीनां दृष्टप्रयोजनानां क्रियाणां आ तण्डुलनिर्वृत्तेः प्रयोगः स्यात् । कुतः ? एतासां प्रयोगे प्रत्यक्षोऽर्थो निर्वर्त्यते तण्डुलाः पिष्टानि च । तैश्चेह प्रयोजनं पुरोडाशस्य कार्यत्वात् । तस्मादेतासां तदर्थ एव प्रयोगो विज्ञायते । यदि सकृदेव मुसलस्य उद्यमननिपातने कृत्वा उत्सृज्येत, उपलाया वा प्रकर्षणापकर्षणे, यदेषां कार्यं, तन्नैव निर्वर्त्येत । अतः आसां तन्निर्वृत्त्या अपवर्गः स्यात् । आ तण्डुलनिर्वृत्तेः आ च पिष्टनिर्वृत्तेः अभ्यास इति ।

**सोम**— नहि प्रयोजनवशेन अभ्यासस्य शब्दार्थत्वं कल्प्यते, येन शब्दार्थानुसारित्वात् प्रयोजनकल्पनायाः अदृष्टमेव प्रयोजनं स्यात् । किंतु शब्दार्थस्य अभ्यासानभ्याससाधारण्येन अभ्यासेऽपि अविरोधात् अशब्दार्थोऽपि अभ्यासः प्रयोजनलिप्सया कल्प्यते । अत्र ' धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ' इति सूत्रं सर्वौषधावहन्तेरदृष्टार्थत्वसिद्ध्यर्थं अधिकरणान्तरत्वेन परैः

व्याख्यातं, न तत्तथा पूर्वपक्षाभावात्। किंतु प्रत्युदाहरणमात्रम्। ततश्चैकाधिकरण्यमेव । **सूत्रार्थस्तु**— अवहननपेषणादिक्रियाणां प्रत्यक्षे दृष्टे प्रयोजने सति तन्निर्वृत्त्याऽपवर्गः समाप्तिः स्यात् दृष्टप्रयोजनशेषत्वात् इति। ( मिश्रमतेन क्रियाणां० धर्ममात्रे० इति सूत्राभ्यामेकं चतुर्थमधिकरणम्। एवं भाट्टबिन्दू अपि। सोमनाथमतेन च 'क्रियाणामर्थशेषत्वात् प्रत्यक्षे तन्निर्वृत्त्याऽपवर्गः स्यात्' इति सूत्राक्षराणि )।

**वि**— 'अवघातः सकृन्नो वा, सकृत् स्याद् विधिसिद्धितः।, दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यस्यतामयम्॥'

**भाट्ट**— अवघातादिक्रियाणां दृष्टार्थत्वस्य द्वितीये स्थापितत्वात् तदनुरोधेन यावद्वैतुष्यमवघातस्यावृत्तिः, इति तदधिकरणप्रयोजनमेवेदं तन्त्रप्रसङ्गादिहोच्यते । न च उद्यमननिपातनरूपस्य अवघातपदार्थस्य आवृत्तौ कश्चित् बाधः, आवृत्तिवदनावृत्तेरपि शास्त्रेण अनुक्ततया प्रयोजनानुरोधेन आवृत्तौ बाधकाभावात्। यत्र तु दृष्टासंभवात् अदृष्टार्थोऽवघातः, तत्र अनावृत्तिरेव। यथा चयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति अत्र तदुपदधाति' इति। अत्र वितुषस्य सर्वौषधस्य अग्रे विनियोगाभावात्, प्रत्युत अवघातसंस्कृतसर्वौषधपूरणस्य उपधानोपयोग्युलूखलसंस्कारार्थत्वप्रतीतेः अवघातस्य अदृष्टविधया सर्वौषधसंस्कारत्वेऽपि वैतुष्यप्रयोजनकत्वाभावेन आवृत्त्यनापत्तिः। अवघातस्य आरादुपकारकत्वे तु सुतराम्। ११।१।४.

**मण्डन**— 'अभ्यास आ तण्डुलतोऽवहन्तेः।'

**शंकर**— 'अवघातः सकृन्न च।'

**अवघातादिधर्मा अपूर्वप्रयुक्ताः ॥**

**यज्ञकर्म प्रधानं, तद्धि चोदनाभूतं, तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात्। ९।१।१।१ ॥**

( अत्र भाष्ये प्रथमं वर्णकमुक्तं, तत् वार्तिकेऽपि व्याख्यातम्। ततो भाष्ये द्वितीयं वर्णकं, तत् वार्तिके त्रेधा व्याख्यातम्। ततो भाष्ये तृतीयवर्णकस्य संशयमात्रमुपन्यस्य सद्यश्चतुर्थं वर्णकमारचितम्। वार्तिके च व्याख्यातम्। ततो भाष्ये तृतीयं वर्णकं प्रागुपन्यस्तं विचारितम्। वार्तिके च तन्न व्याख्यातम्। ततो वार्तिके संनिपत्योपकारकविषयं वर्णकान्तरमत्र उपन्यस्तम्। तदेवं अस्मिन्नधिकरणे सप्त वर्णकानि । शास्त्रदीपिकायां तत्र त्रिचतुराणि उपन्यस्तान्येव । विस्तरे तु त्रीण्येवोपन्यस्तानि। भाट्टदीपिकायां तु वर्णकजङ्गलं सर्वं छित्वा एकमेव स्वीकृतम्। श्रीशंकरभट्टैस्तु षडपि वर्णकानि दर्शितान्येव। इति )

**भाष्यं**— अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तम्। इदानीमूहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः मन्त्रसामसंस्कारविषयः। स इह प्राधान्येन वक्ष्यते। अन्यदपि किं चित् उपोद्घातेन प्रसङ्गेन च। आदितस्तु अयमर्थश्चिन्त्यते लक्षणसिद्धयर्थं, अग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमश्चोदाहरणम्। तत्र पृथग् धर्माः समाम्नाताः। तेषु संशयः किं ते अपूर्वप्रयुक्ताः, उत यजिप्रयुक्ता इति। अपूर्वप्रयुक्तेषु सत्सु ऊहः सिध्यति, यजिप्रयुक्तेषु तु संकरो धर्माणाम्। कथमिव ? सर्वे हि ते यजतयः। यजतिसामान्ये यजतिशब्दवाच्ये धर्मा विधीयमानाः सर्वत्र भवितुमर्हन्ति। अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति। तस्मात्तत्रोहः सिद्धो भवति।

**वा**— ननु दशमानन्तरमूहश्चिन्तयितुं युक्तः। कुतः ? उपकारातिदेशे सति ऊहोऽवकल्पते, शास्त्रातिदेशे सति ऊहाभावः। यथा प्रकृतौ अग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि गृहीत्वा कथमेतान्युपकरिष्यन्ति इति ( अपेक्षायां ) तत्र कानि चिदारादुपकारकाणि, कानि चित् संनिपत्योपकारकाणि । एवं शास्त्रातिदेशे सौर्ये पेषणं प्राप्तम्। तद् यद्यपि प्रकृतौ दृष्टार्थं, तथापि ( 'तण्डुलान् पिनष्टि' इति ) शास्त्रस्यातिदिष्टत्वात् अदृष्ट उपकारः कल्पनीयः पेषणस्य प्रयाजादीनामिव। एवमेव 'अग्नये जुष्टं निर्वपामि' इति ( मन्त्रस्य सौर्येऽपि प्राप्तेः अदृष्टोपकारकल्पनान्नोहः सिध्येत् )। तस्मादष्टमानन्तरं दशमश्चिन्तनीयः। ( तत्र ) बाधे कार्यापत्त्यर्थलोपादिभिः स्थिते ततः (पश्चात्) नवमव्यापारो युक्तः। (तत्रोच्यते) सत्यं ( उपकारातिदेशाधीन ऊहः ), किंतु सप्तमे अतिदेशसद्भाव उक्तः आग्नेयात् सौर्ये इतिकर्तव्यता भवतीति। अष्टमे विशेषातिदेशः ( कथितः )। नवमे

सौर्ये इतिकर्तव्यतायां प्राप्तायां किं ( अग्नये जुष्टं इति मन्त्रः ) अविकृतः प्रयोक्तव्यः, उत विकारोऽपि ( कश्चिदस्ति ) इत्यनेन प्रसङ्गेन नवमो दशमव्यापारमनुमन्यमान एवोत्तिष्ठति ( नवमः । ततश्चिन्तिते ऊहे ) ' विधेः प्रकरणान्तरं ' ( १०।१।१।१ ) इति सूत्रं नवमाक्षेपेणैवारभ्यते । तस्मान्नवमदशमयोः ' अपिवाऽभिधानसंस्कारद्रव्यं ' ( १०।१।१।२ ) इत्यनेन सद्भावः ( प्रतिपाद्यते न केवलस्य दशमस्य ) तेनाष्टमानन्तरं नवम आरभ्यते ।

' त्रिविधश्चोहः ' इत्ययुक्तं ( भाष्यम् ) । कथं ? ऊहो नाम वितर्कणा ( विशिष्टा तर्कणा ) । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणा सैव सा, न तस्याः कश्चिद्विशेषः । सामग्रहणानर्थक्यं च, मन्त्रग्रहणेन संस्कारग्रहणेन चोपात्तत्वात् । अत्र वर्णयन्ति, नैव वयं ऊहभेदं ( ऊहस्वरूपस्य भेदं ) प्रतिजानीमः । किंतु विषयमस्य निरूपयामः । एषु भवतीति त्रिषु ( मन्त्रसामसंस्कारेषु ) वक्ष्यमाणेषु सः ( भविष्यतीति ) । तस्माद्विषयभेदः प्रदर्श्यते, न तूहभेदः ।

' यजिसामान्ये यजतिशब्दवाच्ये विधीयमानाः सर्वत्र भवितुमर्हन्ति ' इति ( भाष्यं ) कोऽभिप्रायः ? करणानुग्राहिणी इतिकर्तव्यता, तेन ( करणेन ) चापेक्षिता, तस्मात् करणमुद्दिश्य ( समिदादिवाक्यैः ) तत्रेतिकर्तव्यता विधीयते । उद्दिश्यमानस्य च विशेषणमविवक्षितम् । तस्माद्यागमात्रे विधानं वाक्येन ( अतः सांकर्यमिति ) ।

अत्र परिचोद्यते– ( दर्शपूर्णमासवाक्ये ) यागः फले विधीयमानत्वात् उपादेयः, इतिकर्तव्यतां प्रति चोद्दिश्यमानः । सकृदुच्चारिते चोपादीयमानोद्दिश्यमानत्वे न संभवतः, विवक्षाभेदात् । तस्माद्वाक्येनेतिकर्तव्यतासंबन्धो न घटते ( तेन सांकर्यं स्यात् ) । उच्यते । ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इतीदं यागोत्पत्तिं न विदधाति, ' यदाग्नेयोऽष्टाकपालो भवति ' इत्येवमादिभिः ( वाक्यैः ) यागोत्पत्तेर्विहितत्वात् । ( तथा– ) फलसंबन्धमपि न करोति, उत्पत्तिवाक्येन कृतत्वात् विश्वजिन्न्यायेन ( ४।३।७।१५ ) । परिशेषादितिकर्तव्यतासंबन्धार्थं ( एवेदं वाक्यम् ) । यथा ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इति न दीक्षा विधीयते । नासौ यजमानस्य, न वाऽध्वर्युः कर्ता, सर्वस्य चोदकेन प्राप्तत्वात्, किं तर्हि दीक्षाक्रमः अनियमेन प्राप्तः सन् नियम्यते, एवमत्रापि ( दर्शपूर्णमासवाक्येन ) यागमनूद्य ( केवलं ) धर्मविधिः [ धर्मा विधीयन्ते ] ( अतोऽस्य नास्ति वैरूप्यम् ) । उद्दिश्यमानस्य च विशेषणमविवक्षितम् । तस्माद्यागमात्रे धर्मप्राप्तिः इत्यभिप्रायः ।

' अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमानाः ( धर्माः ) अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति । तस्मात्तत्रोहः सिद्धो भवति ' इति ( भाष्यम् ) कोऽभिप्रायः ? भाव्यमानेन करणेतिकर्तव्यते आकाङ्क्षिते । ' तस्मात् द्वयोरपि भाव्यमानेन संबन्धः आकाङ्क्षितत्वात् । भाव्यं चापूर्वम् ' । न च यागः इतिकर्तव्यतया विना न सिध्यति निर्ज्ञातत्वात् ( इति रत्नपाठः । निर्ज्ञातोपायत्वात् इति तु मुद्रितलिखितयोः दुष्पाठः । रत्नपाठ एव तु युक्तो भाति । इतिकर्तव्यतया विनाऽपि यागः सिध्यतीत्युक्तत्वात् ) यागस्य लोके । तेन विशिष्टः ( अपूर्वाख्यः ) भाव्यः ( यथा ) विशिष्टेन करणेन भाव्यते ( तथा ) न धर्माणां करणेन संबन्धः । अरुणाऽधिकरणन्यायेन तु ( ३।१।६ ) करणेतिकर्तव्यतयोः संबन्धः । तस्मात् ये दर्शपूर्णमासप्रकरणे तदपूर्वेण परिगृहीता धर्माः, न ते अन्यत्र सन्ति प्रमाणाभावात् । तत्र विकृतौ ( सौर्ये ) प्रत्यक्षं भाव्यं ब्रह्मवर्चसम् । तस्य ( च ) प्रत्यक्षं वाक्यविहितमेव करणम् । भाव्यमानं च धर्मानाकाङ्क्षति करणानुग्रहद्वारेण । तत् तावत् प्रथममपेक्षते, तत्सिद्धये ( च ) धर्माः ( इति ) । न च संनिधाने धर्माः सन्ति । तस्माच्चोदनासामान्यात् आग्नेयस्य धर्माः सौर्येऽतिदिश्यन्ते साकाङ्क्षत्वाद्वाक्यस्य । तत्र चैषा वचनव्यक्तिः ( अतिदेशशास्त्रस्य ) यथा आग्नेये उपकृतं तथा सौर्येऽप्युपकर्तव्यम् । इह पुनः ईदृशोऽतिदेशः, यथा आग्नेयेन ( व्यापृतं ) तथा सौर्येणापीति । आग्नेये च ' अग्नये जुष्टं ' इति मन्त्रेण भाव्यमानस्यापूर्वसंबन्धिनी देवता प्रकाशिता, तेनेहापि तथैव प्रकाशयितव्या (सूर्यः) ।

न चोहादृते शक्यते प्रकाशयितुम् । तस्मादूहः कर्तव्यः ( उपसंहरति– ) इत्ययं ( भाष्यस्य ) अभिप्रायः ।

**भाष्यं**—– ननु एतत् सर्वं सप्तमे विचारितं निर्णीतं च । उच्यते । पुनस्तदेव स्मार्यते उत्तरविवक्षया ।

**वा**—– नन्वेतत् सप्तमे गतम् । उच्यते ।

**वि** — 'इष्ट्यग्निहोत्रसोमानां धर्माः किं यजयेऽथवा । अपूर्वायात्र निर्णीतिः स्मार्यते सप्तमोदिता ॥ '

**( अथ द्वितीयं वर्णकम् )**

**भाष्यं**—– अथवा तत्र योऽर्थो नोक्तः तद्विवक्षया इदमुच्यते । कश्चासौ ( अनुक्तोऽर्थः ? ) ' तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ' इत्येतेन चेह प्रयोजनमूहो विवक्षितः । एवं हि स सिध्यति । तत्र ( सप्तमे ) एतन्नोक्तं, नैतेन तत्र प्रयोजनमिति । तत्र हि एतावती चिन्ता, किं प्रतिप्रकरणं नियता धर्माः, उत सर्वे सर्वत्रेति । तत् ( यथासंख्येन ) अपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति, न द्रव्य– ( द्रव्यादि– ) संस्कारस्यापूर्वार्थत्वे । तत्तु इह सिद्धम् ( न तत्र ) । तत्रापूर्वप्रयुक्तत्वसिद्धौ व्यवहारार्थं असूत्रितमुपादीयते तस्मादपुनरुक्तम् ।

**वा**—– ( भाष्यकारेण तदेवोत्तरविवक्षया स्मार्यते इत्युक्त्वा ' **अथवा ' इति वर्णकान्तरमुक्तं तद् व्याचष्टे**– ) ' यज्ञकर्म प्रधानं तद्धि चोदनाभूतं ' इत्यनेनावयवेन अपूर्वार्था धर्मा इति ( सप्तमसिद्धं ) अनूद्य द्रव्यसंस्कारं ( व्रीह्यादि द्रव्यं, अवघातादिश्च संस्कारः ) तदीयकार्यापन्नं, धर्मान् ( अवघातादीन् उलूखलमुसलप्रोक्षणादींश्च ) लभते, न स्वरूपेण इत्यर्थं उपदिश्यते ' तस्य द्रव्येषु संस्कारः ' इत्यनेन ( सूत्रावयवेन ) ।

( **व्याख्यानान्तरमाह [ २ ] भाष्यस्य** ) अथवा सप्तमे अपूर्वं प्रयोजकमित्युक्तम् । इह तु एतच्चिन्त्यते तत् ( अपूर्वं ) किं स्वार्थमेव ( प्रयुङ्क्ते धर्मान् ) उत परार्थं ' भिन्ने जुहोति ' इतिवत् । यथा निमित्तस्य भेदनस्य प्रयोजकत्वे सत्यपि न भेदनार्थो होमः, किंतु क्रत्वर्थः, एवमिहापि अपूर्वं तु प्रयोजकं, यागार्थाश्च धर्माः । अनेनापि प्रकारेण सप्तमे प्रतिप्रकरणं नियता धर्मा इति सिद्धम् । ऊहस्तु अपूर्वार्थतामन्तरेण न सिध्यति । अत्र चोद्यते, ये दर्शपूर्णमासार्था धर्माः, ते सौर्ये न सन्ति, तत्राप्रवृत्तिरेव धर्माणां प्राप्नोति । **उच्यते** । वैकृतस्य वाक्यस्य साकाङ्क्षत्वात् अतिदेशेन वा अनुषङ्गेण वा यागार्थत्वपक्षेऽपि प्राकृतैरङ्गैः सिध्यति संबन्धः इति । तस्मात् ( इहैव ) अपूर्वार्थता प्रतिपाद्या ऊहसिद्धये ( न तु सप्तमे ) ।

( **व्याख्यानान्तरमाह ३** ) अथवा सप्तमे अपूर्वार्था धर्मा इति स्थितम् । इह तु संनिपातिनामतादर्थ्यमाशङ्क्य तादर्थ्यं ( प्रतिपाद्यते ) । तेषां धर्माणामपूर्वार्थता प्रकरणात् । तच्च प्रकरणमसंयुक्तानां ग्राहकम् । ये तु श्रुतिलिङ्गवाक्यैः संयुक्ताः ( संनिपातिनः ) तान् ( प्रकरणं ) न गृह्णाति संयुक्तत्वादेव । तस्मात्ते अपूर्वार्था न भवन्ति । दर्शपूर्णमासाधिकारे च पाठात् संयुक्तानामपि प्रकरणे एव निवेशः । ( असंयुक्तानामपि इति क चित् पाठः । तत्र अपूर्वासंयुक्तानामपि इति व्याख्या । तस्मात् ) अनेनापि प्रकारेण सप्तमाष्टमयोर्न किंचिदनुपपन्नम् ( इति न तत्रैतन्निराकार्यम् ) । ऊहे तु यदि अपूर्वार्थं न भवति ( किंतु व्रीहिस्वरूपार्थं ) तथा सति नीवारेषु तन्न प्राप्नोति । तस्मात् संनिपत्योपकारका ये धर्मास्तेऽपि अपूर्वार्था इति नवमे प्रतिपाद्यते ऊहसिद्ध्यर्थम् । ( तदेवं त्रेधा भाष्यं व्याख्यातं द्वितीयवर्णके । एवं द्वितीयवर्णके त्रयः पक्षा उपन्यस्ताः । अवघातमन्त्रादयः अविवक्षिततत्स्वरूपसाधनविशेषमात्रद्वारा अपूर्वस्योपकुर्वन्ति इत्याद्यः पक्षः । धर्माणामपूर्वार्थत्वमेव इति द्वितीयः पक्षः । आरादुपकारकाणामिव संनिपातिनामपि धर्माणां अपूर्वार्थत्वमेव इति तृतीयः पक्षः । एते पक्षाः मध्यमे भाष्ये उक्ताः । )

**वि**—– ' अवघाते व्रीहिरूपं विवक्ष्येत न वा, श्रुतेः । आद्यः, साधनतामात्रमवर्ज्यत्वाद्विवक्ष्यते ॥ '

**भाष्यं**—अथवा अन्यामेव चिन्तामिह वक्ष्यामः, किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः, उतापूर्वनिमित्ता अपूर्वप्रयुक्ताश्चेति । ( इदं वर्णकान्तरं वर्णकान्तरव्यवधानेन भाष्यकार एव व्याकरिष्यति । अव्यवधानेन तु अपरमेव वर्णकमाह– ) इदानीं तु यजिप्रयुक्ता अपूर्वप्रयुक्ता वेति चिन्त्यते । किं तावत् प्राप्तं ? यजिप्रयुक्ता इति ।

कुतः ? यजिशब्देन इतिकर्तव्यताया अभिसंबन्धात् 'एवं यागं कुर्यात्' इति, एवं यागेन कुर्यात् इति। एवं प्राप्ते ब्रूमः। यजत्यर्थस्य यत् कार्यं, तत् प्रधानम्। तद्धि कर्तव्यतया चोद्यते। यत्र कर्तव्यता, तत्रैव इतिकर्तव्यता। अथ यदुक्तं यजतिशब्देनाभिसंयोगो धर्माणामिति, तदुच्यते, तस्य द्रव्येषु यजतौ च यः संस्कारः, स तत्प्रयुक्तः अपूर्वप्रयुक्तः तदर्थत्वात्। यजतेर्द्रव्याणां च तदीयत्वेन धर्मैरभिसंबन्धो, न स्वेनात्मना। नहि धात्वर्थस्य च धर्माणां च परस्परेणाकाङ्क्षा विद्यते। प्रत्ययार्थेन हि इतिकर्तव्यता आकाङ्क्ष्यते कर्तव्यं कथमिति, न यजिः कीदृश इति। तस्मात् यत् कर्तव्यं तस्यैव इतिकर्तव्यतया संबन्धः, अपूर्वं च तत्। तस्मात् अपूर्वप्रयुक्ता इति।

**वा**—अथवा अन्यामेव चिन्तां वर्तयिष्यामः। अपूर्वार्था धर्मा इति स्थिते सप्तमे, नवमे निमित्तं परीक्ष्यते किमपूर्वं निमित्तं, उत याग इति। न चानिमित्ता प्रवृत्तिः, येन विचार एव न स्यात्। तत्र भाव्यमानत्वात् दर्शपूर्णमासापूर्वं निमित्तं न भवति। अनेनैव कारणेन फलमपि न निमित्तम्। परिशेषात् यागो निमित्तं, निष्पन्नरूपत्वात्। **ननु** यागस्य फले उपादीयमानत्वात् निमित्तवेलायां चोद्दिश्यमानत्वात् विवक्षाभेदः स्यात्। **उच्यते**। दर्शपूर्णमासपदं निमित्तं (प्रतिपादयति) अकिंचित्करत्वात् (प्रयोजनान्तराभावात्)। प्रकृतयागात् दर्शपूर्णमासपदाभावेऽपि विधीयन्ते एव तेन (यजिना)। यदि एतत् निमित्ततां न प्रतिपद्येत, अनर्थकमेव स्यात् (दर्शपूर्णमासपदम्)। **ननु** सप्तम्यन्तं निमित्तं भवति 'भिन्ने जुहोति' इति, तृतीयान्तं चेदम्। **उच्यते**। 'निमित्तफलहेतुषु सर्वासां (विभक्तीनां) प्रायदर्शनं' इति द्रष्टव्यम्। अपि च उद्दिश्यमानत्वात् करणविभक्तेरविवक्षैव। तस्मात् (दर्शपूर्णमासयजेर्निमित्तत्वात्) विकृतौ अपूर्वमस्ति, दर्शपूर्णमासयोगो नास्ति, तदभावे धर्माणामप्यभावः, यथा भेदनाभावे होमाभावः। सौर्ये च साकाङ्क्षत्वादपूर्वस्य अतिदेशेनानुषङ्गेण वा प्राकृतैरङ्गैरङ्गवान् सौर्ययागः सिध्यति। ऊहाभावस्तु (ऊहस्तु न सिध्यति)। **अत्रोच्यते**। अयं दोषोऽस्मिन् व्याख्याने। (दोषमेवाह—) आज्यभागादीनामपि फलसंबन्धः स्यात् प्रकृतत्वात् अविशेषणात् (दर्शपूर्णमासपदस्य निमित्तपरत्वेन यजिविशेषकत्वाभावात्)। अपि च दर्शपूर्णमासशब्दो लोके कालवाचकः प्रसिद्धः, न यागस्य वाचकः। सामानाधिकरण्यात् यागवचनो भवेत्। न च निमित्तमिच्छतः सामानाधिकरण्यमुपपद्यते। यदि प्रकृतान् यागान् विशेषयेत्, एवं सामानाधिकरण्यात् यागवचनो भवेत्। न चैकस्मिन्नुच्चारणे निमित्तं (च) भविष्यति, सामानाधिकरण्यं च प्रतिपत्स्यते। तस्मात् निमित्तमिच्छतः कालवचनः संपद्यते इत्ययं दोषः। अथोच्येत यागपदं निमित्तं (प्रतिपादयति), तत्र उद्दिश्यमानत्वात् यागमात्रस्यैवोद्देशः प्राप्नोति। तत्र प्रकृतौ विकृतौ च निमित्तमेकं यागसामान्यम्। अपूर्वं च सौर्ये विद्यते। तस्मादनेन व्याख्यानेन प्रकृतिविकृत्योः साधारणा धर्माः प्राप्नुवन्ति, तत्रातिदेशाभावः। तस्मादयमपि पक्षो दुःश्लिष्टः।

**भाष्यं**— एवं वा। एतेष्वेवोदाहरणेषु इति चिन्त्यते किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः, उतापूर्वं प्रयोजकं निमित्तं चेति। (इदमेव पूर्वं 'अथवा अन्यामेव चिन्तामिह वक्ष्यामः' इत्याद्यया पङ्क्त्या यः पक्षः उक्तः, स एवेह भाष्येण विव्रियते)। किं प्राप्तं ? यजिर्निमित्तं, अपूर्वं प्रयोजकमिति। कुतः ? नैकस्य प्रयोजकत्वं निमित्तभावश्चोपपद्यते। यदर्थं हि क्रियन्ते धर्माः, तत् प्रयोजकम्। यस्मिन् सति क्रियन्ते, तन्निमित्तम्। न चैकस्मिन् शब्दे अपूर्वार्था एते, अपूर्वे च सति भवन्ति इति शक्यं वदितुम्। अन्या हि वचनव्यक्तिरपूर्वार्थेषु, अन्या चापूर्वे सतीति। यजिनिमित्तत्वे तु शब्दोऽवकल्पते, एवं यागेन कुर्यात् इति। यागे सति अपूर्वस्योपकारकाणि, असति अनुपकारकाणि अङ्गानीति। तस्मात् यजिर्निमित्तं, अपूर्वं तु प्रयोजकमिति। **एवं प्राप्ते ब्रूमः**। यज्ञकर्म प्रधानं यजतेः कार्यम्। तद्धि फलवच्चोद्यते। तदीयेषु द्रव्येषु यजतौ च यः संस्कारः, सोऽपूर्वप्रयुक्तः। तदर्थास्ते इति कृत्वा क्रियन्ते, न यज्यर्थेन तेषामभिसंबन्धः। प्रयोगवचनेनैते प्रत्ययार्थेन संबध्यन्ते। स हि साकाङ्क्षो, न धात्वर्थः। तस्मादपूर्वप्रयुक्ता अपूर्वनिमित्ताश्च। **यदुक्तं** अपूर्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते

वचनव्यक्तिभेदादिति, **तत्रोच्यते**। प्रयोजकत्वं वाचनिकं, निमित्तभावश्च नैव वचनाद्भविष्यतीति। यद्धि येन प्रयुज्यते, भवति तत्तस्य निमित्तम्। यथा आरामपोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च। आरामे सति तस्मै वेतनं दीयते, वेतनेन समर्थो भवति आरामं रक्षितुम्। तस्माद्धर्माणां अपूर्वमेव प्रयोजकं निमित्तं चेति।

**वा**—(स्वयमिदानीं वार्तिककारः पक्षान्तरमाह) अथवा अपूर्वार्था धर्मा इति स्थितं संनिपत्योपकारका आरादुपकारकाश्च प्रकरणेन प्रमाणेन। तत्र प्रकरणे 'अग्नये जुष्टं निर्वपामि' इति मन्त्र आम्नायते। आम्नानसामर्थ्याच्च तेनोपकर्तव्यं प्रकरणिनः। तत्र कथं खलु उपकरिष्यतीति विशेषाकाङ्क्षा जायते, किमुच्चारणमात्रेण, उत प्रकाशनद्वारेणेति। अपूर्वेण देवताप्रकाशनमपेक्षितम्। शक्नोति चायं (मन्त्रः) तत् कर्तुम्। तस्मात् प्रकाशनद्वारेणैवोपकरोति तेनाग्निं प्रकाशयन् उपकरोति इति (निश्चीयते)। निमित्तेन चास्य (मन्त्रस्य) भवितव्यम्। तत्राग्निर्निमित्तमस्य। सौर्ये चाग्निर्नास्ति। तत्र निमित्ताभावात् मन्त्रस्य निवृत्तिः यथा भेदनाभावात् होमस्य निवृत्तिर्दर्शपूर्णमासयोः (इति **पूर्वः पक्षः**। **सिद्धान्तस्तु** अपूर्वमेव निमित्तं नाग्न्यादिस्वरूपम्। देवताप्रकाशनद्वारेणानेन मन्त्रेणापूर्वं कुर्यात् इत्येतावता शब्दस्य पर्यवसानात् अपूर्वमस्य प्रयोजनं, तदनुष्ठाने अर्थान्निमित्तं भवति, इति अपूर्वीयदेवताप्रकाशनमेवास्य निमित्तं इति अप्रतिहता मन्त्रस्य सौर्ये प्रवृत्तिः इति)।

**सोम**—इह यच्छब्दाद्यभावात् यजेः अपूर्वस्य वा निमित्तत्वं न केनापि शब्देनोच्यते, किंतु धर्मप्रवृत्तेः कादाचित्कतया आर्थिकं निमित्तत्वं, तदपि अपूर्वस्यैव, तस्य साध्यतया साधनानुष्ठाने निमित्तत्वौचित्यात्। यजेस्तु सिद्धतयाऽवगम्यमानस्य तदयोगात्, अपूर्वस्य चानिष्पन्नस्यापि बुद्धौ विपरिवृत्तिमात्रेण 'चर्मणि द्वीपिनं हन्ति' इतिवन्निमित्तत्वं संभवति। **सूत्रार्थस्तु**—यज्ञकर्म यजतिकार्यमपूर्वमित्यर्थः। हि यस्मात् तदेव चोद्यते, तस्यापूर्वस्य द्रव्येषु संस्कारः अवघातादिः तत्प्रयुक्तः अपूर्वप्रयुक्तः अपूर्वार्थत्वात्। इति अपूर्वप्रयुक्तत्वं स्मार्यते इति पक्षे। द्रव्यसंस्कारग्रहणं सर्वधर्मोपलक्षणार्थम्। एवं द्वितीयवर्णकद्वितीयव्याख्यानेऽपि। प्रथमव्याख्याने तत्प्रयुक्तः अपूर्वसाधनत्वप्रयुक्तः तदर्थत्वात् इत्यर्थः। तृतीयव्याख्याने तु यथाश्रुतमेव। 'अथवा अन्यां' इत्याद्यन्तिमपक्षे तत्प्रयुक्तः तन्निमित्तः इत्यर्थः।

**वि**—(तृतीयं वर्णकम्–) 'नापूर्वस्य निमित्तत्वमस्ति वा, न प्रयोक्तृतः।, अस्ति शाब्दप्रयोक्तृत्वमार्थिकी तु निमित्तता॥'

**भाट्ट**— तदेवं सिद्धेऽतिदेशे तत्प्रापितपदार्थविषय ऊहश्चिन्त्यते। त्रिविधश्चोहो निरूप्यते मन्त्रोहः सामोहः संस्कारोहश्च। तत्र ऊहो नाम प्रकृतौ अन्यथादृष्टस्य विकृतौ अन्यथाभावः। तत्त्वं च येन संबन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं, तस्य तेन संबन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम्। अस्ति चेदं 'देवस्य त्वा' इत्यादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च। मन्त्राणां हि स्मारकत्वसंबन्धेन अग्नित्वाद्यवच्छिन्नवृत्तित्वं श्रुतं प्रकृतौ, विकृतौ च तेनैव संबन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात्। एवं प्रोक्षणावघातादीनामपि संस्कार्यतासंबन्धेन व्रीहित्वाद्यवच्छिन्नवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ च तेनैव संबन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकादिवृत्तित्वात्। एवं साम्नामपि आयीभावादिरूपाणां येन संबन्धेन यत्स्थानगतै(ते)कारवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ तेषां तेनैव संबन्धेन तत्स्थानभिन्नस्थानगतै(ते)कारवृत्तित्वादूहः। अत्र श्रुतत्वं तात्पर्यमनपेक्ष्य प्रतीयमानत्वं, तेन उक्तै(क्ते)कारवृत्तित्वस्य शब्दादप्रतीतावपि न क्षतिः। अत्र च संबन्धैक्याविवक्षायां श्रुतपशुपुरोडाशयागोद्देशांशस्य प्रकृतौ स्मारकत्वसंबन्धेन अग्नीषोमदेवतावृत्तेः विकृतौ अनुपयुक्तान्यदेवताविधानेन आरादुपकारकस्य संबन्धान्तरेण क्रतूपकारवृत्तित्वात् अतिप्रसङ्गवारणाय संबन्धैक्यविवक्षणम्। प्रकृतावेव श्रुतव्रीहित्वावच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्भिन्नयवादिवृत्तित्वात् तद्वारणाय प्रकृतिविकृतिपदोपादानम्। प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदात् आतिदेशिकव्रीहिमत्सौर्यादौ एव अवघातादीना-

मूहवारणार्थं यद्धर्मावच्छिन्नेतिविशेषणम् । सौर्यस्थव्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकव्रीहिभेदसत्त्वेऽपि व्रीहित्वावच्छिन्नप्रतियोगिताकतद्भेदाभावात् । यवसाध्यविकृतौ तु ऊहाङ्गीकारेऽप्यदोषः । प्रकृतौ प्रोक्षणादीनां तात्पर्यगत्या अपूर्वसाधनत्वावच्छिन्नवृत्तित्वस्यैव विवक्षितत्वेन विकृतावपि तेनैव रूपेण श्यामाकवृत्तित्वादसंभवः । अपूर्वयोः दर्शपूर्णमासीयत्वादिना भेदविवक्षायां तु सौर्यस्थव्रीहिषु अतिव्याप्तिमाशङ्क्य श्रुतपदं निरुक्तप्रतीयमानत्वार्थकम् । अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरुक्तश्रुतत्वाभावात् । अत्र च अग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽपि अवशिष्टमन्त्रस्य प्राकृतत्वानपायात् न लक्षणे तस्येतिशब्दानुपपत्तिः । एवं च यत्र प्राकृतऋक्स्थाने ऋगन्तरस्योहः, तत्रोहशब्दो भाक्त इति ध्येयम् । अथवा अस्तु तदनुरोधेन तस्येति पदं प्राकृततत्कार्यापन्नान्यतरपरं इति संक्षेपः ।

स चोहः प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसंबन्धित्वेन विधानं, तद्रूपावच्छिन्नसंबन्धित्वेनैवातिदेशे सिध्येत्, न तु स्वरूपेणैवातिदेशे । तथात्वे अग्निपदस्यैवातिदेशेन सौर्ये तस्यैवादृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तौ ऊहानापत्तेः । अत एव उपकारपृष्ठभावेन पदार्थानां विकृतावतिदेशः, प्रकृतौ निरूपितरूपाणामेव वा विकृतावतिदेशः इति दशमे वक्ष्यते ।

तदिह उपोद्घाततया किं प्रोक्षणावघातादीनां 'अग्नये जुष्टं निर्वपामि' इत्यादावग्न्यादिपदानां च प्रकृतौ व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन विधानं ततश्च व्रीह्यग्न्यादिप्रयुक्तास्ते, अथवा अपूर्वसाधनत्वावच्छिन्नोद्देशेन ततश्चापूर्वप्रयुक्ता इति चिन्त्यते । व्रीह्यादिप्रयुक्तत्वे श्यामाके चरौ सौर्ये वा व्रीह्यादीनामभावात् प्रोक्षणादीनां लोप एव, न तूहः । अपूर्वप्रयुक्तत्वे तु श्यामाकादीनामपि तद्रूपावच्छिन्नत्वात् सिध्यत्यूहः । तत्र यत्रापि आरादुपकारकस्थले न श्रुतमुद्देश्यताऽवच्छेदकं, तत्रापि करणानुग्राहकाकाङ्क्षारूपेतिकर्तव्यताऽऽकाङ्क्षात्मकप्रकरणेन यागाङ्गतयैव प्रयाजादिविधानात् यागत्वमेवोद्देश्यताऽवच्छेदकं, न तु अपूर्वसाधनत्वं समप्राधान्यापत्तेः । न चैतावता पारिप्लवत्वापत्तिः, अनुवादस्य सति संभवे संनिहितगामित्वेन आग्नेयादित्वस्यैव उद्देश्यताऽवच्छेदकत्वात् । न वाऽतिदेशोच्छेदः, अपूर्वविशेषार्थत्वे इव आग्नेयाद्यर्थत्वेऽपि 'तद्वत् कुर्यात्' इत्यतिदेशेन आग्नेयस्थानापन्ने सौर्ये धर्मातिदेशोपपत्तेः । अतस्ते यागप्रयुक्ता एव, तदा किमु वक्तव्यं यत्, व्रीह्यादिसंयोगेनैव प्रोक्षणादिश्रवणात् व्रीहित्वादिकमेव उद्देश्यताऽवच्छेदकमिति । न च व्रीहियागादिस्वरूपार्थत्वे धर्माणामानर्थक्यं, तेषामपि अग्निवत् फलवत्त्वेन तदभावात् । **न च** अग्नीनामाधानव्यतिरेकेण उत्पत्तौ प्रमाणाभावेन तदभावेऽपि व्रीह्यादीनां प्रोक्षणादिव्यतिरेकेणापि जायमानतया आनर्थक्यापत्तिस्तदवस्थैवेति **वाच्यम्** । तादृशानर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्य अपूर्वार्थत्वस्यैव वा बोधोपपत्तौ, निषादस्थपतिन्यायेन (६।१।१३।५१) व्रीहिपदे यवादिसाधारण्येन अपूर्वसाधनत्वलक्षणायां प्रमाणाभावात् । अस्तु वा व्रीहिपदे लक्षणा, तथापि लाघवादुपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यते, न तु अपूर्वसाधनत्वम् । न च यागस्यापि निर्ज्ञातोपायत्वेन प्रोक्षणादिव्यतिरेकेणापि जायमानत्वात् आनर्थक्यापत्तिः, यागत्वावच्छिन्नस्य अपूर्वत्वावच्छिन्नस्य वा जायमानत्वेऽपि विजातीययागत्वावच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात् । नहि आग्नेयत्वावच्छिन्नं प्रति प्रोक्षणाघटिता का चित् सामग्री क्लृप्ताऽस्ति, येन तज्जन्यव्यक्तौ आग्नेयत्वाभिव्यक्तिर्भवेत् । प्रोक्षणादेरेव तु विधानबलेन तत्सामग्रीत्वात् तद्व्यतिरेकेण तदुपपत्तौ प्रमाणाभावेन न यागस्वरूपार्थत्वे आनर्थक्यं प्रोक्षणादीनाम् । अत एव आरादुपकारकाणामपि यागस्वरूपार्थत्वे नानर्थक्यम् । **इति प्राप्ते,** यद्यपि तावत् विजातीययागसाधनत्वमेव प्रोक्षणादीनामुद्देश्यताऽवच्छेदकं, तथापि अपूर्वसाधनत्वे इव वक्ष्यमाणरीत्या न तत्र व्रीहित्वादिकं प्रविष्टं, इति श्यामाकेष्वपि तत्सत्त्वात् ऊहसिद्धिरनिवार्यैव । वस्तुतस्तु, न विजातीययागसाधनत्वं उद्देश्यताऽवच्छेदकं, विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात् तदवच्छिन्नं प्रति द्रव्यत्वाद्यवच्छिन्नस्य लोकत एव कारणत्वावगतेः सामग्रीवशेन व्रीह्यादि द्रव्यं विनाऽपि, द्रव्यान्तरेण कदा चित्

विजातीययागव्यक्तीनामुत्पत्तौ बाधकाभावेन आनर्थक्यस्य तदवस्थत्वात् । न च सामान्यसामग्र्याः विशेषकारणसमवहिताया एव कार्यजनकत्वनियमः, अन्यत्र तथात्वेऽपि प्रकृते तथा कल्पनायां प्रमाणाभावात्, 'तदेव यादृक् तादृक् च होतव्यं' इति लिङ्गानुपपत्तेश्च । अत एव अनयैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वं व्रीह्यादिविधीनामुपपाद्यते प्रतिनिधिश्च । अतो द्रव्यतत्संस्कारविषयः सर्वे अपूर्वसाधनीभूतविषया एव व्यापकीभूतापूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकतोऽक्लृप्तत्वेन निरुक्तप्रतिबन्द्यनापत्तेः । आरादुपकारकाणामपि अनयैव रीत्या अपूर्वजननानुकूलयोग्यतासंपादकत्वं द्रष्टव्यं, न तु यागार्थत्वं, आनर्थक्यापत्तेः । यागादिनिष्ठयोग्यतासंपादकत्वाच्च न प्राधान्यापत्तिः अङ्गत्वविघातो वा इत्यादि क्षुण्णं कौस्तुभे ।

**यत्तु** व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः, शाब्दबोधे लक्षणाया अनङ्गीकारात्, पश्चात्तु निषादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थत्वकल्पनं इत्युक्तं, **तत्** प्रोक्षणादेः तज्जन्यादृष्टस्य वा व्रीहित्वावच्छिन्नभाव्यकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् शाब्दबोधस्यैवानुपपत्तेः लक्षणाऽङ्गीकरणात् प्रत्युक्तम् । अतो व्रीह्यादिपदेन अपूर्वसाधनत्वावच्छिन्नलक्षणात् तदुद्देशेनैव प्रोक्षणादिविधिः, इति ते अपूर्वप्रयुक्ता एवेति सिद्धः श्यामाकादौ ऊहः । न चैवमपि धर्मानुष्ठाने व्रीहित्वादीनामपि अनुष्ठापकतया निमित्तत्वात् विकृतौ तदभावे भेदनाभावे इव धर्मलोपापत्तिः, यच्छब्दाद्यभावेन व्रीहित्वादीनां निमित्तत्वे प्रमाणाभावात् । वक्ष्यमाणरीत्या उद्देश्यताऽवच्छेदककोटौ अप्रवेशेन अनुष्ठापकत्वस्याप्यभावाच्च । अत एव अपूर्वस्यैव तत्त्वात् निमित्तत्वम् । वस्तुतस्तु फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धस्यानुष्ठापकत्वे प्रमाणाभावात् फलीभूतापूर्वमपि न निमित्तम् । अनयैव च दिशा यागत्वस्यापि आरादुपकारकस्थले निमित्तत्वं प्रत्युक्तम् । अतो बाधकाभावात् सिध्यत्येवोहः ।

यानि चात्र मूले ( भाष्ये वार्तिके च ) अनेकानि वर्णकानि कृतानि, तानि पुनरुक्तत्वात् अनुपयुक्तत्वाच्चोपेक्षितानि । मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानि इति ध्येयम् ।

**मण्डन**— 'अतिदेशोऽष्टमेऽध्याये समाप्तो, नवमे पुनः । अतिदिष्टपदार्थानामूहानूहविचारणा ॥'

**शंकर**— 'सप्तमाद्यर्थस्मरणम् ।' १ । व्रीहित्वाद्यविवक्षितम् ।' २ । 'यज्यर्थत्वनिरासो वा ।' ३ । 'सन्निपातिषु चात्र सः ।' ४ । निमित्ततोक्ताऽपूर्वस्य ।' ५ । 'संनिपातिषु वा तथा ।' ६

* **अवघातादिनिर्वर्त्यः** तुषकणप्रमोचनादिरर्थः पुरोडाशसिद्धिं प्रति षड्भिरपि व्रीहि–पुरोडाश–क्रतु–अपूर्व–अध्वर्यु–यजमानैः अपेक्षितः । नहि तस्मादृते व्रीहिभिर्यष्टुं पुरोडाशो वा निर्वर्तयितुं शक्येतेति । **वा.** ३।१।४।१० पृ. ६६९.

**अवघातादिसंस्कारविधिः नियमविधिः ॥**

**संस्कारे च तत्प्रधानत्वात् । ४।२।११।२६ ॥**

**भाष्यं**— अयमपि अधिकरणातिदेशः । दर्शपूर्णमासयोः श्रूयते 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' इति । तत् किमिमौ विधी, उतानुवादौ इति संशये, अर्थप्राप्तत्वात् अनुवादौ । **इति प्राप्ते**, नियमार्थत्वात् विधी इति ।

**शा**— 'व्रीहीनवहन्ति' इति नावघातस्य यागार्थतया श्रवणं देशादिवत् । न च चरुवत् विशिष्टद्रव्यं क्रियासंबन्धि श्रूयते, इति तण्डुलाक्षितक्रियानुवादमात्रं इत्यधिका **शङ्का । उत्तरं**, यद्यपि न श्रवणमस्ति, तथापि प्रकरणवशादेव प्रधानसाधनं लक्षयित्वा तत्र विनियुक्तस्यावघातादेः प्रधानाङ्गत्वमस्त्येव इत्यव्याहतैव प्रयुक्तिः ।

**सोम**— "नात्र नियमविधिः संभवति । स हि न द्रव्यस्य स्वरूपे, तत्र नियमस्यानर्थक्यात् । नापि यागे, अवघातस्य 'व्रीहीनवहन्ति' इति द्रव्यनिष्ठतयैव श्रवणेन देशादिवत् यागसंबन्धित्वानवगमात् । न च यथा शुक्लादेः साक्षात् यागसंबन्धानवगमेऽपि तद्विशिष्टचरुद्रव्यस्य यागान्वयात् अर्थात् विशेषणस्यापि यागान्वयः, तथा अवहननस्य यागान्वयः संभवति, तत्र गुणविशिष्टद्रव्यस्येव प्रकृते संस्कारविशिष्टद्रव्यस्य यागसंबन्धा-

श्रवणात् 'व्रीहिभिर्यजेत' इति द्रव्यस्वरूपमात्रस्यैव तच्छ्रवणात्" इत्यधिका शङ्का। 'व्रीहीनवहन्ति' इत्यत्र यागवाचकशब्दाभावेऽपि प्रकरणबलात् यागार्थत्वमुपपद्यते इति परिहारस्तु स्पष्टः। **सूत्रार्थस्तु—** संस्कारेऽपि श्रुतिर्नानुवादो नियमप्रधानविधिसंभवात् इति।

**वि—** 'अवघातेऽपि नियमो देशादाविव तेन सः। प्रधानेन प्रयुक्तः स्यात्, संबन्धः प्रक्रियोक्तितः॥' यथा देशकालकर्तृद्रव्याणां पक्षे प्राप्तौ नियमो विहितः, एवमवघातोऽपि तण्डुलनिष्पत्त्यर्थे लोकतः प्राप्तोऽपि पाक्षिकनखविदलनादिव्यावृत्तये नियम्यते।

**भाट्टे** तु इदं सूत्रं नवमेऽधिकरणे अन्तर्भावितम्।

**मण्डन—** 'तथाऽवघातादिविधिर्नियन्ता।' तथा द्रव्यगुणविधानवत्।

**शंकर—** 'संस्कारे च तथैव नः।' तथैव नियमः।

* **'अवघ्नन्'** इति (शब्दः हविष्कृदाह्वान-) काललक्षणार्थः ('हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इत्यत्र)। **भा.** ३।२।३।९. * अवघ्नन् इत्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते 'लक्षणहेत्वोः क्रियायाः' (पा० ३।२।१२६) इति शतृप्रत्ययात्। **वा.** ३।२।३।६.

* **अवच्छेदकावच्छेदेन** तद्वत्ताबुद्धिं प्रति सामानाधिकरण्येन तदभाववत्तानिश्चयस्य विरोधित्वम्। **रहस्य.** पृ. २३.

* **अवज्वलनं** दर्भपिञ्जूलैः प्रज्वालनम्। चरौ नेदं कर्तव्यं, पुरोडाशे तु कर्तव्यम्। **भा.** १०।१।१९।५७.

* **अवटस्य** समूहनं यूपधर्मः। अवटः गर्तः। **वि.** ५।२।५. * **अवटबर्हिषि** पशुगतयूपीये दर्शपूर्णमासगतबर्हिर्धर्माणां बर्हिर्नाम्ना नातिदेशः। **भा.** ७।३।७।१८.

* **अवत्तत्वात्तु जुह्वां॰** (३।५।१।७) इत्येतदेव तुशब्दस्थाने चशब्दं कृत्वा पूर्वपक्षवादिप्रत्यवस्थानं व्याचक्षाणैः चमसो दृष्टान्तो दातव्यः। परं च अनुभाषणसूत्रं वक्तव्यम्। एतदुक्तं भवति, अवत्तत्वात्तु जुह्वां चमसवत् शेषोऽस्तु। तस्योत्तरं 'तस्य च होमसंयोगात्' इति गतार्थम्। **वा.** ३।५।१।९. * **अवत्तद्रव्यस्य** शेषकार्यार्थस्य नाशे शेषकार्यलोपः। **भा.** ६।४।२।३.

⌛ **अवत्तहविर्नाशे प्रतिनिधिमाज्यमवदाय यष्टव्यम्॥**

**शेषाद् द्व्यवदाननाशे स्यात्, तदर्थत्वात्। ६।४।१।१॥**

**भाष्यं—** दर्शपूर्णमासयोः श्रूयते 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। तत्र यदि द्व्यवदानमात्रमुद्धृतं व्यापद्यते, किं शेषात् पुनरवदेयं, नेति भवति संशयः। किं प्राप्तम्? द्व्यवदाननाशे शेषात् पुनरवदेयम्। कुतः? तदर्थत्वात्। अग्न्यर्थं हि तद्धविः। अग्नये यागो निर्वर्तयितव्य इति। तदवदाने विनष्टे यागः कर्तव्य एवावतिष्ठते। प्रयोजनं च यागेन। स च आग्नेयेन क्रियमाणः श्रुत एवाभिनिर्वर्तितो भवतीति किमिति न क्रियेत। तस्माच्छेषादवदातव्यमिति।

**टुप्—** यदि आग्नेयचोदना द्व्यवदाननिष्ठा (द्व्यवदानस्यैव यदि यागार्थतां प्रतिपादयति) ततः तद्विनाशे शिष्टस्य अनाग्नेयत्वात् द्रव्यान्तरं (आग्नेयं) उत्पाद्यम्। अथ सकल- (पुरोडाश-) निष्ठा, ततः शिष्टस्यापि आग्नेयत्वात् तत एव ग्रहीष्यते इति। **केचिदेवं** संशयमाहुः (आग्नेयचोदना किं सकलनिष्ठा, उत द्व्यवदानमात्रनिष्ठैव इति)। **अन्ये** पुनः (सर्वप्रदानाधिकरणन्यायेनैव ३।४।१४ द्व्यवदानोपसंहारस्य सिद्धत्वात्) एवं (वक्ष्यमाणां) चिन्तामाहुः। (तमेव न्यायं दर्शयति-) 'आग्नेयोऽष्टाकपालो भवति' इति यदि अग्निमुद्दिश्य त्यज्यते एवमस्याग्नेयता उपपद्यते (नान्यथा)। एवमन्यथाऽनुपपत्त्या कृत्स्नस्य (पुरोडाशस्य) यागार्थतां (कल्प्येत), मध्यपूर्वार्धयोः (तु 'चतुरवत्तं जुहोति' इति) वचनेन यागार्थत्वात् (तन्मात्रेणैव अकृत्स्नसंयोगेऽपि तद्धितसंयोगोपपत्तेः ततो ग्रहीतव्यं इत्यनेन न्यायेन कृत्स्नस्य आग्नेयत्वोपपत्तेः) अन्यथाऽनुपपत्तिः क्षीयते। अतो मध्यपूर्वार्धयोः वचनेन यागार्थतायां स्थितायां इह चिन्ता (किं शिष्टादवदेयं, न वेति) मध्यपूर्वार्धावयवोपलक्षितं (अवदानद्वयं) होमसाधनं, नष्टेऽपि मध्यपूर्वार्धावयविनि (अवदानद्वयस्य) उपलक्षणत्वेन विद्यमानत्वात्। तत एव पुनः

अवदेयम् । कृत्स्नस्य मध्यपूर्वार्धे ( कृत्स्नस्य मध्यपूर्वार्धात् इति तन्त्ररत्ने पाठः ) इति चेत्, तन्न अशास्त्रार्थत्वात् । ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुः ' इति कृत्स्नस्य ( हविषः ) नाशे दोषे वा आज्यस्य प्रतिनिधित्वं, न चेह कृत्स्ननाशः ।

**निर्देशाद्वाऽन्यदागमयेत् । २ ॥**

**भाष्यं—** अथवा अन्यत् हविः आगमयेत्, न शेषादवदातव्यम् । कुतः ? निर्देशात् । निर्देशो हि भवति मध्यात् पूर्वार्धात् अवदेयमिति । द्व्यवदानं च होमसंबद्धं ' द्व्यवदानं जुहोति ' इति । तत्र अन्यत् शिष्टं मध्यस्य पूर्वार्धस्य विशेषणार्थम् । यच्च तत् होमसंयुक्तं, तत् विनष्टम् । तत् शेषेण क्रियमाणं अमध्येन अपूर्वार्धेन च कृतं स्यात् । **ननु** अवत्ते यत् शिष्टं, ततो मध्यात् पूर्वार्धाच्च ग्रहीष्यते । **उच्यते** । कृत्स्नस्य यन्मध्यं पूर्वार्धं च तच्चोदितं, नेतरस्य । अथवा निर्देशादिति । विनष्टे ह्यन्यत् द्रव्यं निर्दिश्यते । ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वाऽऽज्येन ता देवताः परिसंख्याय यजेरन् ' इति, हविषो नाशे आज्यं प्राप्तम् । तेन न शेषादवदातव्यमिति ।

अपर आह । शेषनिर्देशादिति । निर्दिश्यते हि तच्छिष्टमपरेभ्यः शेषकार्येभ्य इति । तन्नोपपद्यते । नहि तानि शेषकार्याणि हवींषि प्रयोजयन्ति । न चानिर्वृत्तप्रयोजनं हविरन्यत्र प्रतिपाद्यम् । तस्मान्नायमर्थः ।

**टुप्—** विशिष्टस्य ( अविकलस्य पुरोडाशस्य ) मध्यपूर्वार्धे निर्दिश्येते ( न तु मध्यपूर्वार्धमात्रम् । कथं ? ) प्रमाणवेलायां ( शास्त्रप्रवृत्तिवेलायां ) यावद्भिः अङ्गुष्ठपर्वमात्रैः उपलक्षितः ( मध्यावयवः पूर्वार्धावयवश्च ) स यागसाधनम् । एवं चेत् कृत्स्नस्य ( अविकलस्य पुरोडाशस्य ) मध्यपूर्वार्धे ( एव अवदानोपलक्षणं ) इति शास्त्रार्थ एवायम् । इतरथा ( कृत्स्नपुरोडाशमध्यपूर्वार्धलक्षितावदानद्वयस्य शास्त्रार्थत्वाभावे द्व्यवदानस्य ) अनाशे इतरत् ( सर्वं तस्य ) उपलक्षणम् । नाशे तु ( अवशिष्टं पुनरवदीयमानं ) उपलक्ष्यं ( प्रसज्येत ), इति वैरूप्यम् । एकरूपेण च शास्त्रेण भवितव्यम् । तस्मादुपलक्षणत्वेन इतरत् निर्दिश्यते । ( न तु स्वयं यागाङ्गतया । तस्मात् न शेषादवदेयम् । तस्मात् अवदाननाशे हविरन्तरेणैवाधिकारः ) ।

**शा—'कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः । मध्यादवद्यतीत्येतद् विकलान्नावगम्यते ॥'** यदाऽपि समस्तपुरोडाशसाध्यो यागः (वार्तिकमते) तदाऽपि द्व्यवदाननाशे तस्य विकलत्वात् अविकलं हविरन्तरमुत्पाद्यम् । तत्तु न्यायतः पुरोडाशान्तरं, वचनात्तु आज्यं भवति ।

**सोम—सूत्रार्थस्तु** अवदाननाशे शेषादवदेयं स्यात्, तस्य यागार्थत्वात् इति ।

**वि—** ' अवत्तनाशे तच्छेषात् पुरोडाशादवद्यति । यजेदाज्येन वा, ऽऽद्योऽत्र मध्यपूर्वार्धसंभवात् ॥, कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्थे न ते ततः । हविर्नाशादाज्यविधिः सुतरां सर्वनाशने ॥ '

**भाट्ट—** दर्शादौ यदा सकलस्य पुरोडाशस्य दधिपयसोरन्यतरस्य वा हविषः संपूर्णस्य नाशः, तदा प्रधानानुरोधेन हविरन्तरोत्पत्तौ प्रसक्तायां ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेत ' इति श्रुतेनाज्येनैव यागः इत्यविवादम् । अत्र हि नाशादीनां प्रत्येकं निमित्तत्वे वाक्यभेदापत्तेः उत्पन्नहविरयोग्यत्वमेव ' अर्धमन्तर्वेदि ' इतिवत् लक्षणया निमित्तं, न तु हविरलाभः, नाशाद्युल्लेखवैयर्थ्यापत्तेः । अत एव अनुत्पन्नपुरोडाशाद्यसंभवे नाज्यनियमः, किंतु यत्किञ्चिदनियतप्रतिनिध्युपादानमेव । एकदेशनाशादौ तु यदि द्व्यवदानग्रहणोत्तरं पात्रीस्थस्य कुम्भीस्थस्य वा नाशः, तदा **भाष्यकारमते** तावत् द्व्यवदानस्यैव हविष्ट्वात् शेषकार्याभावेऽपि तेनैव यागः । **वार्तिककारमते** तु यावन्निरुप्तव्रीहिपरिमितपुरोडाशस्य, यावद्दुग्धं सांनाय्यस्य च हविष्ट्वात् हविर्नाशसत्त्वेन पात्रीस्थनाशेऽपि आज्येनैव यागः । एवं तन्मते द्व्यवदाननाशेऽपि हविर्नाशाविशेषाद्धविरन्तरोत्पत्तिप्रसक्तौ वचनादाज्येन यागः । **भाष्यकारमतेऽपि** तादृशविषये आज्येनैव यागः, न पुनः पात्रीकुम्भीस्थादवदानं, ' मध्यात् पूर्वार्धाच्चावद्यति ' इत्यनेन कृत्स्नस्य यावदुपात्तस्य प्रकृतस्य पुरोडाशादेः यो मध्यादिदेशस्तदपादानतया उपरितनभागस्यैवावदेयत्वात्, तस्य च नष्टत्वेन पुनरवदाने मध्यादेरेवावदेयत्वप्रसङ्गात्,

अतस्तत्रापि हविरन्तरोत्पत्तिप्रसक्तौ आज्येन यागः । न च सर्वमते हविष्ट्वावच्छिन्ननाशादिना हविरयोग्यत्वस्य निमित्तत्वे द्रव्यवयवनाशेऽपि आज्येन यागापत्तिः, निमित्तज्ञानस्यैव नैमित्तिकानुष्ठापकतया तादृशनाशस्य नित्यतया वा निमित्तत्वानुपपत्तेः। अङ्गुष्ठपर्वन्यूनावर्जनीयातिरिक्तावयवनाशे तु भवत्येव आज्येन यागः । तदेव मीमांसकमर्यादा । **याज्ञिकास्तु** तां न मन्यन्ते । तेषामयमाशयः— एकदेशदाहवदेव एकदेशनाशस्य न निमित्तत्वं, एकदेशनाशेऽपि पुरोडाशाज्यपयोदधित्वादेः प्रत्यभिज्ञायमानत्वात्, तस्यैव हविष्ट्वावच्छेदकत्वेन यावन्निरुप्तव्रीहिपरिमितत्वादेस्तदनवच्छेदकत्वात्, तन्नाशस्यावर्जनीयत्वाच्च। अतः एकदेशनाशेऽपि अवशिष्टस्यैव यागः। होमः परं मध्यापादानकत्वाभावे द्व्यवदानासंभवाल्लुप्यताम् । वस्तुतस्तु— यावदवशिष्टं तस्यापि हविष्ट्वात्तन्मध्यापादानकत्वं संभवत्येवेति होमोऽपि कार्य एव । अत एव **आश्वलायनः** ‘ द्व्यवदाननाशे पुनरायतनादवदानम् ’ इति । अतश्च यद्यपि मीमांसकमतं न्यायसिद्धं भवेत्, तथापि स्मृत्यनुमितवचनेन तद्बाधोऽग्निष्टुति सुब्रण्योहवत् । ‘ आग्नेयी सुब्रह्मण्या कार्या ’ इत्यनेन ऐन्द्याः बाधः । कृत्स्नहविर्नाशे तु अनेकहविष्कायामिष्टौ कतिपयहविर्नाशे हविरन्तरोत्पत्तिरेव । सर्वहविर्नाशे एवाज्येन पुनरुत्पादितेन यागः । अत एव **आपस्तम्बः** ‘यद्यप्रत्तदेवतं हविर्व्यापद्येत अन्यद्धविस्तद्दैवत्यं निर्वपेत् । यस्य सर्वाणि हवींषि, आज्येनैता देवताः परिसंख्याय यजेत ’ इति । यद्यपि चोत्तरवाक्ये श्रुतौ च सर्वत्वमविवक्षितं, तथापि पूर्ववाक्यवैयर्थ्याद्यापत्तेः हविरुभयत्ववद्विरुद्धा सर्वनाशस्य निमित्तता ।

**मण्डन**— ‘ नष्टेऽवदाने हविरन्तरं स्यात् । ’

**शंकर**— ‘ नाशेऽवत्तस्य चाज्यतः । ’

* **अवदानं** उपांशुयाजाज्यस्य चतुर्वारम् । **भा.** १०।८।१३।३३-३४, * **अवदानं** एककपालस्य । अवभृथे चावधारणं भवति ‘ इदमेव एककपालस्य द्विरवद्यति ’ इति । तेन ज्ञायते नूनमन्यत्र न द्विरवदानमिति । ७।१।५।२३.

**अवदानं चतुरवत्तं, विना वचनं दर्विहोमेष्वेव ॥**

‘ चतुरवत्तं जुहोति ’ इति विधौ जुहोतेर्विशेषणान्तरासहत्वात् तदभावाच्च होमत्वमेवोद्देश्यतावच्छेदकं, तस्य च दर्विहोमेष्वप्यविशेषात् प्रवृत्तिः । **इति प्राप्ते,** होमचतुरवत्तयोरन्यतोलब्धयोरिह संबन्धमात्रविधानेन ‘पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय चतुरवत्तं जुहोति’ इति श्रुत्यन्तरे पुरोऽनुवाक्यादिसंबन्धिहोमस्यैवोपस्थितेः दर्विहोमानामतथात्वात् गृहीततात्पर्यकजुहोतिना होमविशेषस्यैवोपस्थापने बाधकाभावाद्दर्विहोमेष्वेव चतुरवत्तम्। **संकर्ष.** २।२।५.

**अवदानं त्रैधातवीयायां सहैव ॥**

‘ इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराजे ’ इति प्रकृत्य ‘ एकं पुरोडाशमधिश्रपयति ’ इति श्रुते वाचनिके पुरोडाशैकत्वेऽपि हविर्भेदादवदानमपि त्रिर्भवेत् । **इति प्राप्ते,** ‘ सर्वेषामभिगमयन्नवद्यत्यछंबट्कारम् ’ इति वचनादधिश्रपणवत् सहैवावदानं, तैत्तिरीयशाखायां तु त्रयः पुरोडाशा उत्तरोत्तरे स्थूला आम्नाताः । तत्पक्षेऽपि त्रैधातवीयायामिव सहैवावदानम् । **संकर्ष.** २।२।१४.

* अवदानं द्रवद्रव्यस्य स्रुवेण, पुरोडाशस्य हस्तेन, मांसस्य स्वधितिना सामर्थ्यानुसारात् । **वि.** १।४।२०, * अवदानं द्विरेव पुरोडाशसांनाय्ययोः । चतुरवत्तत्वं तु उपस्तरणाभिघारणोपेते हविषि श्रूयते । १०।८।१३.

**अवदानं पञ्चावत्तं जामदग्न्यादीनाम् ॥**

जामदग्न्यानां पञ्चावत्तविधौ जामदग्न्यकर्तृकहोममात्रोपस्थितेर्दर्विहोमेषु स्यादेव पञ्चावत्तम् । **इति प्राप्ते,** प्राप्तचतुरवत्तोद्देशेन निमित्ते पञ्चमावदानमात्रविधानेन दर्विहोमेषु चतुर्थस्यैवाभावात् पञ्चमाप्रवृत्तिः । ‘ जमदग्निर्वै ’ इत्युपक्रम्य ‘ स एतं पञ्चममवदानमपश्यत्तं निरवपत् ’ इति वाक्यशेषात् । **संकर्ष.** २।२।६.

* अवदानं प्रदानचिकीर्षयैव क्रियते । **भा.** ५।४।२।३. * अवदानं प्रदानाङ्गं, प्रदानं तु फलप्रत्यासत्त्या मुख्यम् । **वि.** ५।४।२.

**अवदानं प्राकृतं एककपाले, वैश्वानर्यां वपायां च नातिदिश्यते ॥**

द्यावापृथिव्याद्येककपालेषु वैश्वानर्यां च वपायां प्रकृतितः प्राप्तत्वादवदानसंपद् भवेदेव। **इति प्राप्ते**, 'यजमानो वा एककपालेषु वैश्वानर्यां च वपायाम्' इत्यादिना अवदानेन यजमानस्य मरणमुक्त्वा 'सकृदेव होतव्यम्' इति विधानेन अवदानप्रतिषेधः कल्प्यते। इतरयोरपि लिङ्गं भाष्ये द्रष्टव्यम्। **संकर्ष.** २।२।१६.

* अवदानं मध्यात् पूर्वार्धाच्चावदेयम्। तत्र कृत्स्नस्य यन्मध्यं तत् चोदितम्। पञ्चावत्तिनस्तु मध्यात् पूर्वार्धात् पश्चार्धाच्चेति त्रिः। **भा.** ६।४।१।२. * अवदानं वेद्यामासादितस्य हविषः मध्यात् पूर्वार्धाच्च इति द्विः अङ्गुष्ठपर्वमात्रं भागमवखण्डय जुह्वां ग्रहणम्। **के.**

**अवदानं समकालं पशौ दैवतस्विष्टकृतयोः ॥**

प्रकृतितः प्राप्तत्वात् पशावपि दैवतावदानोत्तरमेव प्रदानम्। **इति प्राप्ते**, 'दैवतान्यवदायाथोपभृत्यथ समवत्तधान्याम्' इत्यनेन दैवतावदानसमनन्तरकाले एव सौविष्टकृताद्यवदानविधानात्। तस्य प्रदानेन व्यवधानायोगात् 'न तावत्येव होतव्यम्' इत्यनुवाददर्शनाच्च समानकालान्यवदानानि कृत्वा प्रदानम्। **संकर्ष.** २।२।१८.

* अवदानं सहैव त्रैधातवीयायां पुरोडाशभेदेऽपि। **संकर्ष.** २।२।१४. * अवदानं सांनाय्ये दध्नो द्व्यवदानं गृहीत्वा पयसो ग्राह्यम्। कल्पसूत्रेषु तु पयसो द्व्यवदानं गृहीत्वा पश्चाद्दध्न इत्युक्तं, तैत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात्। **भाट्ट.** ५।२।३, * अवदानं स्विष्टकृति प्रथममाग्नेयस्य पश्चात् सांनाय्यस्य, प्रवृत्तिक्रमात् मुख्यक्रमस्य बलीयस्त्वात्। ५।४।२. * अवदानं हविष्ट्वप्रयोजकः संस्कारः, होतुमवदीयमानत्वात्। **वि.** १०।७।१, * अवदानं हृदयादीनां अग्नीषोमीये पशौ आलम्भस्य प्रयोजकम्। ४।१।१२. * अवदानं होमपर्यन्तमेकः पदार्थः। ततः आग्नेयमवदाय हुत्वा पश्चात् अग्नीषोमीयावदानं इत्यनुसमयः पौर्णमास्याम्। ५।२।४, * **अवदानानि** त्रिविधानि अग्नीषोमीयपशौ प्रधानदेवतार्थानि, सौविष्टकृतानि, इडाभक्षणार्थानि चेति। तानि च तेनैव क्रमेणानुष्ठीयन्ते काण्डानुसमयेन। प्राजापत्येषु तु पदार्थानुसमयः। ५।२।६. * अवदानानि सर्वाणि पशौ समानकालानि, ततः प्रदानम्। **संकर्ष.** २।२।१८. * **अवदानेन** यागः प्रक्रान्तो भवति। **वा.** ५।१।१८।३५. * **अवदानस्य** अनुसमयः मध्यपूर्वार्धसमुदायेन। **भा.** ५।२।३।४-५, * अवदानस्य मुख्यस्य परिमाणमुक्तं 'अङ्गुष्ठपर्वमात्रं देवतानामवद्यति' इति। कृष्णलेषु तु 'चत्वारि कृष्णलान्यवद्यति' इति। १०।२।२।६. * **अवदाने** 'द्विर्हविषोऽवद्यति' इति विधिना पुरोडाशावदाने द्वित्वस्यैव प्राप्तत्वात्। 'चतुरवत्तं जुहोति' इति चतुष्ट्वं तु उपस्तरणाभिघारणार्थाभ्यां आज्यावदानाभ्यां सह संपद्यते। **वि.** १०।८।१२.

**अवदाने पञ्चावत्ते तृतीयं पश्चार्धादुत्तरार्धाद्वा ॥**

औषधात् यत् तृतीयमवदानं, तदुक्तलिङ्गदर्शनवाक्ये 'एवं तत्पश्चार्धाद्यथा गुदस्य' इति गुदत्वेन पश्चार्धसंस्तवात् पुरोडाशस्य पश्चिमभागादेव भवेत्। तच्च पाठक्रमात्तृतीयम्। **इति प्राप्ते**, 'मध्यादवद्यति' इति विधाय 'यदुभयतोऽवद्येत्' इत्यादिना पूर्वपश्चार्धयोरवदानं विनिन्द्य 'उत्तरार्धादेवोभे अवद्येत्' इति स्पष्टं विधानात् सौविष्टकृतावदानस्थलादेव द्विरवदानेन हविषस्त्रिरवदानसिद्धिरिति **भाष्याभिप्रायः**। वस्तुतस्तु 'आवापस्विष्टकृतोर्द्वितीयं पञ्चावत्तिनः' इति सूत्रे वाशब्दादेरभावेन पूर्वपक्षनिरासे मानाभावादेकेषामित्यस्याभावेऽपि द्वावपि शाखाभेदेन सिद्धान्तावेव। पञ्चमप्रयाजे 'अग्न आज्यस्य व्यन्त्विति हैक आहुर्न तथा कुर्याद्' इत्यादिना शाखान्तरसिद्धमेव मन्त्रपाठं विनिन्द्य 'आज्यस्य हविषो व्यन्त्वित्येव ब्रूयाद्' इति **कौषीतकिब्राह्मणे**(३।४) विधानेऽपि 'नहिनिन्दान्यायेन' विधेयस्तुतिमात्रार्थत्वेन द्वयोरपि सूपावसानाधिकरणसिद्धान्तसिद्धत्वात् (संकर्ष. ४।३।१९)। पशुयूपक्रमाधिकरणे न्यायोपोद्बलितवचनस्य न्यायविरुद्धवचनतः प्राबल्यस्य भाष्यकारैरेव वर्णनेन 'पश्चार्धात्तृतीयं पञ्चावत्तिनः

क्रमसंयोगात् ' इति सूत्रे न्यायोपन्यासेन तस्य प्रकृतावन्यस्य विकृतिषु निवेश इत्यपि सुवचम् । **संकर्ष.** २।२।९.

**अवदाने पञ्चावत्ते पञ्चममवदानं अभिघारणात् प्रागेव ॥**

पूरणप्रत्ययेन लोकव्यवहारस्यैच्छिकत्वेऽपि अपौरुषेये तदयोगात् उक्तलिङ्गदर्शनस्य क्रमानभिधायकत्वात् ' आगन्तूनामन्ते निवेशः ' इति न्यायेन ( ५।२।९ ) अभिघारणोत्तरं हविषः पश्चार्धादवदेयम् । **इति प्राप्ते,** अभिघारणस्य संस्कारकत्वादेव संस्कार्योत्तरं प्रवृत्तेरौषधस्य त्रीण्यवदानानि क्रमिकाण्येव । **संकर्ष.** २।२।८.

**अवदाने पञ्चावत्ते पञ्चममौषधस्यैव ॥**

तेषां यत्पञ्चममवदानं तस्य पदसामर्थ्यादेव चतुर्थोत्तरत्वोपस्थितेरभिघारणमेकमभिवर्धते । **इति प्राप्ते,** चतुर्थोत्तरत्वमात्रोपस्थितेर्यथाकथंचित् अङ्गीकारेऽपि चतुर्थावदानकर्मीभूतमेवेह द्रव्यं विवक्षितमित्यंशे मानाभावात् प्रधानभूतादौषधद्रव्यादेवावदेयम् । वस्तुतः ' षष्ठो भ्राता न दृश्यते ' इत्यादौ मध्यमेऽपि षट्पूरकत्वव्यवहारात् औषधतृतीयस्यापि पञ्चमत्वोपपत्तिः । ' पशुर्वा एष यत्पुरोडाशः ' इत्यादिना पुरोडाशे एव पशुत्वमुपचर्य मध्यपूर्वपश्चार्धावदानानां हृदयजिह्वागुदावदानत्वेन संस्तुत्य एवं तत् पञ्चावत्तं ' पशोर्व्याप्त्यै ' इत्युपसंहारदर्शनाच्च । **संकर्ष.** २।२।७.

**अवदाने ' पूर्वपूर्वाण्यवद्येत् ' इति न देशकालपरत्वम् ॥**

' पूर्वपूर्वाण्यवद्येत् ज्येष्ठस्य ज्यैष्ठिनेयस्य, अपरपूर्वाणि कनिष्ठस्य कानिष्ठिनेयस्य ' इति ' यदपरमवदानं तत्पूर्वमवदाय स्रुचौ निदध्यात् ' इत्यादिषु पूर्वापरशब्दाभ्यां देशः कालो वोच्यते । उभयत्रापि तयोर्निरूढत्वात् । अन्यतरस्य नियमने प्रमाणाभावात् । **इति प्राप्ते,** अवदानपदेन भावे घञन्तेन कर्मण एव कथनात् तत्समानाधिकरणे पूर्वापरपदे अपि कर्मपरे एवेति न विकल्पः । प्रथमद्वितीययोरवदानयोः समन्त्रकामन्त्रकत्वाभ्यामिह फलभेदः । **संकर्ष.** २।२।११.

* **अवदानधर्माः** मध्यपूर्वार्धपादानकावदानद्वयवत्त्वं, अङ्गुष्ठपर्वमात्रता, प्रत्येकं तिरश्चीनता, उपस्तरणाभिघारणवत्त्वं, ध्रुवाऽऽप्यायनं, प्रत्यभिघारणं चेति । **के.**

* **अवदानपादो नाम** संकर्षे द्वितीयाध्यायस्य द्वितीयः पादः । **के.**

* **अवदानवाक्यैः** पशुप्रकरणस्थैः पशुसंस्कारो विधीयते । **वि.** २।२।६.

* **अवदानवाक्येषु** पाशुकेषु क्रमविधानं ' हृदयस्याग्रेऽवद्यति० ' इत्यादिवाक्येन । **भा.** ५।१।१।१ वर्णकं ३.

**अवदानादिप्रदानान्तानुसमयन्यायः ॥**

**संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् ।** ५।२।४।६ ॥

**भाष्यं**— दर्शपूर्णमासयोः श्रूयते, ' द्विर्हविषोऽवद्यति ' इति । तत्र संशयः किमवदानेनानुसमयः, उतावदानेन प्रदानान्तेनेति । किं प्राप्तम्? अवदानेनेति ब्रूमः । कुतः? पृथक्पदार्थत्वात् । पृथक्पदार्थो ह्यवदानम् । यतीभावस्य पर्यवसानात्, अवद्यतिवचनात् । **एवं प्राप्ते ब्रूमः ।** संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् । नावदानं पृथक् पदार्थः । प्रदानस्य स उपक्रमः । इतरथा अवद्यतेरदृष्टार्थता स्यात् । संख्याविशेषविधानार्थं च पुनर्वचनम् । तस्मात् पदार्थावयवोऽवदानम् । न चावयवसहत्वं प्रयोगवचनेनोच्यते । तस्मात् प्रदानान्तेनानुसमय इति ।

**टुप्**— ' चतुरवत्तं जुहोति ' इत्येतद्विधीयते । कतरत्तदिति, अभिघारणद्वयं द्विरवदानं च । अयमेवंविधः पदार्थो होमान्तः । न तावदवदानं विधीयते, येन पदार्थभेदः स्यात् । विधीयमानेऽपि अदृष्टार्थता स्यात् । एवमभिघारणेऽपि पदार्थभेदविवक्षया विधीयमाने अदृष्टार्थतैव । चतुरवत्तसंपादनाय विधीयमाने तु दृष्टार्थता ।

**शा— ' वचनेन द्विसंख्याकमवदानं विधीयते । तावानेकः पदार्थोऽतस्तावताऽनुसमीयते ॥ नैवं होमविधेरर्थात् खण्डने प्रापिते सति । विशेषमात्रं हविषो द्विरित्यत्र विधीयते ॥ '** अतः अवदानादिप्रदानान्तेनानुसमयः ।

**सोम**— यथा चतुर्मुष्टिनिर्वापस्य विधानात् तावदनुसमयः, एवमिहापि द्व्यवदानेनानुसमय इति प्रत्यवस्थानात् **संगतिः** । चतुरवत्तवाक्ये यत् चतुरवत्तमित्यनूद्य तत्संस्कारतया होमविधिपक्षं अवत्तहोमविधिपक्षं च दशमे वक्ष्यति ( १०।८।१२ ) । तत्रावत्तविशिष्टविधिपक्षाश्रयणेन प्रदानान्तत्वं प्रस्तुताधिकरणप्रतिपाद्यमुक्त्वा, चतुरवत्तानुवादेन होमविधिः इतिपक्षेऽपि द्व्यवदानवाक्ये द्व्यवदानविध्यवश्यंभावेऽपि चतुरवत्तहोमावयवतया विधानान्न पृथक्पदार्थत्वं इति नानाबीजेष्ट्यधिकरणन्यायेन ( ११।४।१३ ) लभ्यः प्रदानान्तानुसमयः । एवं चोपस्तरणाभिघारणयोः पृथक्त्वसद्भावेऽपि न पृथक्पदार्थत्वं 'चतुरवत्तं जुहोति' इत्येतदवयवत्वेनैव विधानात् इति ध्येयम् । **सूत्रार्थस्तु** अवदानसंयुक्ते होमे विधीयमाने अवदानस्य होमार्थत्वात् अवदानेनैव होमप्रक्रमात् होमान्तमवदानं स्यादिति ।

**वि**— 'अवदानेऽनुसमयो होमान्ते वाऽवदानके । पदार्थत्वं, विधेयत्वात्तेनानुसमयस्ततः ॥, अवद्यतिः प्रदानान्तोऽवदानस्य तदर्थता । अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात् ॥'

**भाट्ट**— सांनाय्यवदाग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि द्व्यवदानेनानुसमयः । **इति प्राप्ते,** 'चतुरवत्तं जुहोति' इत्यनेन अवत्तोद्देशेन होमाख्यसंस्कारविधानादर्थादेवावदानप्राप्तेः 'द्विर्हविषोऽवद्यति' इत्यनेन द्वित्वमात्रविधानात् उक्तविधचतुरवत्तहोमस्यैव एकपदार्थत्वेनावदानादिप्रदानान्तेनानुसमयः । वस्तुतस्तु—अवत्तस्योद्देश्यत्वेन ततः पूर्वमवदानादिप्राप्तेर्दुरुपपादत्वात्, द्व्यवदानवाक्ये चावदानमात्रे द्वित्वविधाने अलंकरणार्थाज्यावदानेऽपि द्वित्वप्राप्त्यापत्तेः, हविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेः, हविर्विशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेः, अवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽपि उपस्तरणादिविधिन्यायेन ( १०।८।१२ ) दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्याप्यङ्गीकारात् अवदानादिप्रदानान्तस्यैव एकपदार्थत्वावगमेन तेनैवानुसमयः ।

**मण्डन**— 'क्रमोऽवदानेऽधिगतः प्रदाने ।'

**शंकर**— 'चतुःखण्डितहोमेऽसौ ।' असौ काण्डानुसमयः ।

**⌛ अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात्** । ५।४।२।२ ॥

दर्शे दध्नो धर्माः पूर्वं समाम्नाताः, पश्चादाग्नेयस्य । प्रदानं तु पूर्वमाग्नेयस्य, पश्चात् दध्नः । तत्र किं प्रवृत्तिक्रमेण आग्नेयात् पूर्वं दध्नः आसादनादि कर्तव्यं, उत मुख्यक्रमेण पूर्वं आग्नेयस्य आसादनादि कर्तव्यं इति विचारे पूर्वपक्षमाह । अवदानाभिघारणासादनेषु अवदाने अभिघारणे वेद्यां आसादने च प्रवृत्त्या उत्पादनप्रवृत्तिक्रमेण आनुपूर्व्यं क्रमः स्यात् । पूर्वं हि दधि उत्पाद्यते, पश्चादाग्नेयः पुरोडाशः । तस्मात् प्रवृत्तिक्रमो मुख्यक्रमात् प्रबलः ।

**यथाप्रदानं वा, तदर्थत्वात्** । ३ ॥

सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह । दर्शे दध्याग्नेययोः अवदानाभिघारणासादनेषु यथाप्रदानं प्रदानमनतिक्रम्य आनुपूर्व्यं अनुपूर्वता अनुक्रमः स्यात्, अवदानादीनां तदर्थत्वात् प्रदानार्थत्वात् । प्रदानं मुख्यम् । तदर्थानि आसादनादीनि । प्रदानं च आदौ आग्नेयस्य पुरोडाशस्य, ततः शृतदध्नोः सहैव । तस्मात् मुख्यक्रमः प्रवृत्तिक्रमात् बलीयान् ।

**लिङ्गदर्शनाच्च** । ४ ॥

सिद्धान्ते हेत्वन्तरमाह । चकारः समुच्चयार्थः । 'स वै ध्रुवामेव अग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति लिङ्गस्य दर्शनात् । अत्र हि ध्रुवाऽभिघारणोत्तरं आज्यभागानुष्ठानं भवतीत्युक्तं, तच्च 'यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं' इति न्यायेन सिद्धं भवति, तेन मुख्यक्रमः सूचितः । तस्मात् मुख्यक्रमेणैव अभिघारणादीनि कर्तव्यानि । के.

* **अवद्यति** । एकस्मात् हविषः अवदाने वक्तव्ये अवद्यति इति प्रयोगः । बृ. ३।५।१।३.

* **अवद्यतेः** यागानभिधायकत्वम् । सु. पृ. ७८९,

* अवद्यतेः यागीयद्रव्यसंस्कारार्थावदानवाचित्वम् । पृ. ७८९.

* **अवद्यन्नपि** प्रतिप्रस्थाता नाध्वर्युकर्मणि वर्तते इति नास्याङ्गेषु भक्षः स्यात् पशौ । **भा.** १०।७।८।२३.

* **अवधारणं** च अर्थान्तरात् व्यवच्छेदः । **ऋजु.** पृ. ९४. * **अवधारणश्रुतिः** उपात्तसजातीयं व्यवच्छिनत्ति । अत एव गृहमेधीये परिसंख्यापक्षे 'आज्यभागौ यजति' इत्यस्य अवधारणार्थलक्षकस्य आज्यभागसजातीयभागान्तरव्यवच्छेदकत्वं स्विष्टकृद्विधानस्य वा अवधारणार्थं लक्षकस्य शेषकार्यान्तरव्यवच्छेदकत्वं च पूर्वतन्त्रे 'स्विष्टकृति भक्षप्रतिषेधः स्यात्' इत्यधिकरणे ( १०।७।११।३५ ) दर्शितम् । **सु.**

* **अवभृथः** अप्सु, ज्योतिष्टोमस्तु आहवनीये इति अङ्गप्रधानयोर्देशभेदः 'अप्सु अवभृथेन चरन्ति' इति वचनात् । **के.** ११।३।१।१. * अवभृथः दर्शपूर्णमासयोः, 'एष दर्शपूर्णमासयोरवभृथः' इत्युक्तः अपां व्युत्सेकरूपः औपचारिकः । **वि.** ७।३।४. * अवभृथः दीक्षोन्मोचनार्थः । **भा.** ९।१।८।३१, * अवभृथः वरुणप्रघासगतः तुषनिष्कासद्रव्यक एव न पुरोडाशद्रव्यकः । ७।३।५।१६.

**अवभृथः साङ्गः अप्सु अनुष्ठेयः ॥**

**अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगो द्रव्यदेवतवत् । ११।२।८।३१ ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमेऽवभृथः । तस्मिंश्च श्रूयते 'अप्स्ववभृथेन चरन्ति' इति । तत्र विचार्यते किं प्रधानमात्रमप्सु कर्तव्यं अथवा अङ्गान्यपीति । किं प्राप्तम् ? अवभृथे प्रधानेऽग्निविकारः । प्रधानमात्रमप्सु कर्तव्यम् । कुतः ? नहि तद्धेतुरग्निसंयोगः । नह्यङ्गानां प्रधानहेतुकोऽग्निना संयोगः । 'यदाहवनीये जुहोति' इति होममात्रेऽग्निर्विहितः । स यथा प्रधाने, तथाऽङ्गेषु । आपस्तु प्रधाने केवले विहिताः 'अप्स्ववभृथेन चरन्ति' इति । अवभृथशब्दो हि वरुणदेवतस्यैककपालद्रव्यस्य यागस्य वाचकः, तदुत्पत्तिवाक्ये श्रुतत्वात्, 'वारुणेनैककपालेनावभृथं यन्ति' इति । न चात्र गमनं विधीयते । अर्थगृहीतं तत्, अप्सु प्रचारवचनात् । न चावभृथो नाम कश्चिद्देशोऽस्ति, यं वारुणेनैककपालेन गच्छेयुः । न च वारुण एककपालोऽस्ति, येन गमनमुच्येत । तस्मादेककपालस्य देवतासंबन्धकरणमेवात्रोच्यते । स च यागः । तद्वचनोऽवभृथशब्दः । तस्मिन्नापो विहिताः । तासामङ्गेषु कः प्रसङ्गः । द्रव्यदेवतवत् यथा द्रव्यमेककपालो वरुणश्च देवता प्रधाने विहितत्वान्नाङ्गेषु भवतः । एवमापोऽपि ।

**साङ्गो वा, प्रयोगवचनैकत्वात् । ३२ ॥**

**भाष्यं**— साङ्गो वा अवभृथोऽप्सु प्रवर्तेत । कुतः ? प्रयोगवचनैकत्वात् । नात्र आपोऽवभृथे श्रूयन्ते । किं तर्हि ? प्रयोगे । नह्येतत् वचनं 'अप्स्ववभृथः' इति । कथं तर्हि ? 'अप्स्ववभृथेन' इति । द्वे अपि पदे कारकवचने । न च विशेषणविशेष्यता । उभयोश्चरन्तीति क्रियया संबन्धो, न मिथः । चरन्तीति च प्रयोगः उच्यते । तस्मात्प्रयोगाङ्गमापः । अविभक्तश्चाङ्गप्रधानानां प्रयोग इत्युक्तं 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' ( ११।२।२।८ ) इत्यत्र । तस्मात् साङ्गः अवभृथः अप्सु उपदिष्टो, न केवलः । अतः अङ्गान्यपि तत्रैव कर्तव्यानि ।

**लिङ्गदर्शनाच्च । ३३ ॥**

**भाष्यं**— लिङ्गं चैतमर्थं दर्शयति 'अप्सु तृणं प्रास्य आघारमाघारयति' इति । यदि अङ्गानामग्नौ वृत्तिः स्यात्, उभयं विधीयेत अप्सु आघारयति ( इति ) तृणं प्रास्यति इति च, तथा वाक्यभेददोषः स्यात् । अथ यथोक्तो न्यायः, तथा अप्सु इत्यनूद्य तृणप्रासनं केवलं विधीयते, इति नास्ति दोषः ।

**शब्दविभागाच्च द्रव्यदेवताऽपनयः । ३४ ॥**

**भाष्यं**— अथ यदुपवर्णितं द्रव्यदेवतवत् इति, तत्र ब्रूमः । विभक्तः शब्दः प्रधानस्य 'अवभृथः' इति वाचकः, अङ्गानां आघारादयः शब्दाः । अवभृथशब्दसंयुक्तं च द्रव्यदेवतं 'वारुणेनैककपालेन अवभृथं यन्ति' इति । तस्मात् न तत् अङ्गेषु भवति । आपस्तु प्रयोगाङ्गं इत्येवमपदिष्टो हेतुः । अतः अनुपवर्णनमेतत् ।

**सोम**— यूपाहुतेस्तन्त्रत्वेऽपि अपामवभृथे तदङ्गेषु च न तन्त्रता इत्युत्थानात् **संगतिः** । एककपालस्य श्रपणमासादनं चाप्सु अशक्यत्वात् अग्नौ स्थले च क्रियते इति बोध्यम् । **सूत्रार्थस्तु**— अवभृथे प्रधाने एव

अपामग्निविकारत्वं स्यात्, अङ्गानि तु आहवनीये एव कर्तव्यानि। नह्यङ्गानामाहवनीयसंयोगः प्रधानदेशत्वकृतो भवतीति यावत्, येन प्रधानस्याहवनीयसंयोगाभावे अङ्गान्यपि न तत्र भवेयुरिति।

वि— 'किमप्स्ववभृथे मुख्यमात्रे साङ्गमुता, ऽग्रिमः। मुख्यत्वेनान्वया, न्मैवं प्रयोगेण तदन्वयात्॥'

भाट्ट— 'अप्सु अवभृथेन चरन्ति' इत्यनेन विहितः अब्देशः अवभृथशब्दवाच्यप्रधानमात्रोद्देशेन विहितत्वात् तत्रैव, न तु साङ्गे। न च समादिवत् अस्य प्रयोगविधित्वात् सर्वविषयत्वं, प्राकृतानां प्रयाजादीनां क्लृप्तदेशत्वेन अङ्गविषये कल्प्येनानेन देशान्तरविध्यनुपपत्तेः। अत एव प्रयोगविध्याश्रितस्य दौर्बल्यं तत्रतत्र निरूपितम्। श्रपण–बर्हिःस्तरण–हविरासादनादौ अब्–विधानानुपपत्तेश्च। अतो 'यज्ञाथर्वणं वै काम्या इष्टयः' इत्यत्र प्रधानमात्रे एव उपांशुत्वविधिवत् प्रधानमात्रे एव अब्–विधिः। न चेह करणत्वनिर्देशात् साङ्गविषयत्वं, तन्निर्देशेऽपि अङ्गवाचकपदाश्रवणस्य तुल्यत्वात्। इतरथा उत्पत्तिवाक्येऽपि करणत्वसत्त्वेन द्रव्यदेवतयोरपि वरुणैककपाल्योः साङ्गविषयत्वापत्तेः। इति प्राप्ते, देशकालस्वरकर्त्रादिकं प्रयोगान्वयि, प्रयोगश्च अङ्गप्रधानसाधारणः इत्युक्तम्। तदिह देशविधिरयं प्रयोगविधिरेव। तस्य च अङ्गप्रधानविषयत्वात् आर्थिके विशेषणविधौ अङ्गप्रधानोद्देशेनैव अब्–देशो विधीयते इत्यौपदेशिकेन तेन आतिदेशिकाग्न्यादेर्बाधात् युक्तमेव अतन्त्रत्वम्। नहि अत्र श्येनीयप्राकृताङ्गानां उद्गातृकर्तृकत्वस्येव अपां कल्प्यत्वम्। तत्र हि श्येनमात्रनिष्ठाया औद्गात्रं इति समाख्यायाः प्राकृताङ्गानां उद्गातृवेदे समाम्नानाभावेन तद्विषये अङ्गप्रधानयोः एकदेशकालकर्तृकत्वं औत्सर्गिकं इति न्यायमात्रेण कल्प्यत्वात् प्राकृतक्लृप्तनानाकर्तृकत्वेन युक्तः उद्गातृकर्तृकत्वस्य बाधः। विस्तरेण च एतदुपपादितं कौस्तुभे स्वरचर्चायाम्। प्रकृते तु साङ्गप्रधानभावनोद्देशेनैव अब्–देशविधानात् सर्वार्थत्वम्। एवं सत्यपि यदि द्वितीया सप्तमी वा श्रूयेत, ततः 'ता उपांशु कर्तव्याः' 'मन्द्रं प्रायणीयायां' इत्यादिवत् प्रधानमात्रकर्मकभावनाया उपादानात्, तस्यां च प्रयाजादीनां फलोपकार्यङ्गानां अनन्वयात्, न तेषु उपांशुत्वादिप्रसक्तिर्भवेत्। तृतीयाश्रवणात्तु अवभृथकरणकफलकर्मकभावनोपादानात् तस्यां च प्रयाजादीनां प्रयोगविधानार्थं अन्वयावश्यंभावात् युक्तमेव साङ्गप्रधानोद्देशेन अपां विधानम्। द्रव्यदेवताऽऽदीनां तु उत्पत्त्यन्वयित्वात् प्रधानमात्रगामित्वं इति विशेषः। अत एव यत्र प्रधानकर्मकभावनाऽन्वयित्वं देशादेः प्रामाणिकं, तत्र प्रधाने एवान्वयः। अन्यत्र तु तृतीयासत्त्वे असत्त्वे वा सर्वत्र प्रधानकरणकसाङ्गभावनाप्रयोगे एव देशाद्यन्वयात् साङ्गे एव तन्निवेश इति ध्येयम्।

मण्डन— 'साङ्गोऽप्स्ववभृथो भवेत्।'

शंकर— 'साङ्गोऽप्स्ववभृथो मतः।'

**अवभृथः सौमिकः अपूर्वः॥**

**अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात्। १०।७।१५।४७॥**

भाष्यं— अस्ति ज्योतिष्टोमे अवभृथः। 'वारुणेनैककपालेन अवभृथमभ्यवयन्ति' इति। तत्र एतदाम्नायते 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति। तत्र एषोऽर्थः सांशयिकः किं बर्हिर्मात्रं वर्जयित्वा अन्यत् सर्वं कर्तव्यं, उत आज्यभागाभ्यामन्यत् परिसंख्यायते, अथवा अपूर्वोऽवभृथ इति। किं प्राप्तं? बर्हिर्मात्रं वर्जयित्वा शेषकर्म स्यात्। सर्वं कर्तव्यम्। कुतः? 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति बर्हिर्मात्रं प्रतिषिध्य कृतार्थः शब्दः अन्यत् चोदकप्राप्तं न शक्नोति वारयितुम्। तस्मात् अन्यत् स्यादिति। ननु 'आज्यभागौ यजति' इति परिसंख्यार्थं ग्रहणं, 'अप्सुमन्तावाज्यभागौ यजति' इति गुणार्थं तन्मन्यते स्म।

**आज्यभागयोर्वाऽगुणत्वाच्छेषप्रतिषेधः स्यात्। ४८॥**

भाष्यं— न चैतदस्ति शेषकर्म कर्तव्यमिति। किं तर्हि, शेषप्रतिषेधः स्यात्। कुतः? आज्यभागयोः श्रवणात् 'अप्सुमन्तावाज्यभागौ यजति' इति। ननु अप्सुमत्तागुणविधानार्थं तत् इत्युक्तम्। नेत्याह। लिङ्गक्रमाभ्यां प्राप्तौ एव अप्सुमन्तौ मन्त्रौ, 'अप्स्वग्ने

सधिष्टव, अप्सु मे सोमो अब्रवीत्' इति। ताभ्यामेतौ आज्यभागौ अप्सुमन्तावेव इति, निर्गुणमेवेदं वचनं इतरेषामङ्गानां परिसंख्यापकं भवितुमर्हति। यत्तु 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति (तत्) परिसंख्यातानां प्रयाजानां अनुयाजयोश्च विधानार्थं भवतीति। तस्मात् शेषाणामेवाङ्गानां परिसंख्येति।

**प्रयाजानां त्वेकदेशप्रतिषेधादवाक्यशेषत्वं, तस्मान्नित्यानुवादः स्यात्।** ४९॥

**भाष्यं**— तुशब्दः पक्षं व्यावर्तयति। न चैतदस्ति परिसंख्येति। त्रिदोषा परिसंख्येत्युक्तम्। किंच 'अपबर्हिषः प्रयाजान् यजति' इति वाक्यशेषो नावकल्पते। यदि 'प्रयाजान् यजति' इत्येष विधिः, तदा बर्हिःप्रयाजोऽपि प्राप्नोति। तत्र 'अपबर्हिषः' इत्येतन्नोपपद्यते। अथ बर्हिषः प्रतिषेधः, प्रयाजानां विधिर्नावकल्पते। तत्र अप्राप्तस्य बर्हिषः प्रतिषेधोऽनुपपन्नः। उभयविधाने वाक्यं भिद्येत, वाक्यशेषो नोपपद्यते। एकं चेदं वाक्यम्। तस्मात् न शेषपरिसंख्या, आज्यभागयोर्ग्रहणं नित्यानुवादः (अप्सुमन्तौ आज्यभागौ यजति इति)।

**गृहमेधीयवद्वा स्यात्।** ५०॥

**भाष्यं**— अथवा अपूर्वोऽवभृथः यद्वत् गृहमेधीयः, तद्वत् स्यात्। आज्यभागाभ्यां प्रत्यक्षश्रुताभ्यां एकवाक्यतां इत्वा (गत्वा प्राप्य इत्यर्थः) निराकाङ्क्षो नान्यैः प्राकृतैः एकवाक्यतामेति। तस्मात् अपूर्वोऽवभृथ इति।

**सोम**— पूर्ववत् प्राकृतस्य निर्गुणस्य श्रवणाभावात् नेह अपूर्वत्वं इति उत्थानात् **संगतिः**। लिङ्गक्रमयोः उपदेशप्रमाणत्वात् आनर्थक्यप्रसङ्गाच्च चोदकात् प्राबल्यम्।

**वि**— 'किं स्यादवभृथे बर्हिर्वर्जे सर्वमुताचरेत्।, यावदुक्तं प्रयाजानुयाजबर्हिर्निषेधतः॥ आद्यो, ऽप्सुमन्तावित्याज्यभागोक्त्या परिसंख्यया। अन्येनात्र गुणाप्राप्तेरपूर्वत्वेन चाऽन्तिमः॥'

**भाट्ट**— ज्योतिष्टोमे एव 'वारुणेनैककपालेनावभृथं यन्ति' इत्यनेन अवभृथसंज्ञकामिष्टिं विधाय 'अप्सुमन्तावाज्यभागौ यजति' इति श्रुतम्। तत्र अतिदेशप्राप्ताज्यभागानुवादेन अप्सुपदोपेतमन्त्रमात्रविधानात् मन्त्रयोर्लिङ्गक्रमाभ्यां प्राप्तत्वेऽपि च अप्सुमद्देवतायाः तद्विशेषणस्य वा द्वितीयया विधानोपपत्तेः आज्यभागविध्यभावेन अतिदेशपरिलोपकत्वानुपपत्तेः अपूर्वत्वाभावात् सर्वं प्राकृतमङ्गजातं कार्यम्। यत्तु 'अपबर्हिषश्चतुरः प्रयाजान् यजति, अपबर्हिषौ द्वावनुयाजौ' इति वचनं, तत् बर्हिःप्रयाजानुयाजपर्युदासमात्रार्थम्। **इति प्राप्ते,** अप्सुमत्त्वस्य आज्यभागविशेषणत्वेन प्रतीयमानस्य स्वातन्त्र्येण देवताविधायकत्वं तद्विशेषणत्वं वा तावत् नैवोपपत्तिमत्। अप्सुपदोपेतमन्त्रविधिस्तु संभाव्यमानो मन्त्रयोः 'अप्स्वग्ने सधिष्टव, अप्सु मे सोमो अब्रवीत्' इत्यनयोः अनुवाक्यात्वेन आज्यभागक्रमाम्नातयोः लिङ्गादेव आज्यभागाङ्गत्वावगतेः प्राप्तत्वेन असंभवी। अत्र उपपदार्थस्य प्राप्तत्वात् धात्वर्थमात्रविधिप्रतीतेः युक्तं अवभृथस्य अपूर्वत्वम्। अपबर्हिषः इति तु प्रयाजचतुष्टयस्य अनुयाजद्वयस्य च वस्तुतो बर्हिःप्रयाजानूयाजव्यतिरिक्तस्य विधानम्। विशिष्टविधिन्यायेन वा पर्युदासविशिष्टप्रयाजानूयाजविधिः। १३.

**मण्डन**— 'भवेदपूर्वोऽवभृथाख्ययागः।'

**शंकर**—'अवभृथश्च तथैव नः।' तथैव अपूर्वः।

* **अवभृथेन** दीक्षोन्मोचनं, तेन अवभृथोत्कर्षे दीक्षितधर्माणां निषेधानामपि उत्कर्षः। वि. ६।५।११.

**⌛ अवभृथेन प्रत्यञ्चश्चरन्ति इति कर्तृगर्भविहारविधानम्॥**

'प्रत्यञ्चोऽवभृथेन चरन्ति' इत्यत्र विहारस्यैव प्रत्यङ्मुखत्वविधानम्। कर्तॄणां तु सामान्यविधिप्राप्तं प्राङ्मुखत्वमेव। तेषामपि प्रत्यङ्मुखत्वविधाने वाक्यभेदात्। **इति प्राप्ते,** कर्तृगर्भकविहारस्यैव प्रत्यङ्मुखत्वविधानेन गजविपरिवृत्त्या तत्सादिनामपि परिवृत्तेरिव कर्तॄणां प्रत्यङ्मुखताया अर्थसिद्धत्वेनाविधानान्न वाक्यभेदः। **संकर्ष.** २।४।१६.

* '**अवभृथादुदेत्य** वत्सत्वचं परिधत्ते' इति विश्वजिति श्रुतम्। तत्रैकस्या वत्सत्वचः कौपीनाच्छादने अयोग्यत्वात् तत्राहतस्यातिदेशप्राप्तस्य अनिवृत्तावपि उपरिधारणे तन्निवृत्तिरिष्टैव। **भाट्ट.** १०।४।८, * 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति विहिता वत्सत्वक्

एकाहकाण्डपठितविश्वजितः अष्टरात्रस्य प्रथमाह्ने विश्वजिति नामातिदेशेन प्राप्ता, सा च प्रावरणार्था । १२।३।१. * **अवभृथादूर्ध्वं** अनुबन्ध्यः पशुः आलभ्यते ज्योतिष्टोमे । **वि.** ५।१।६. * **अवभृथे** 'अग्निमाप आवहत' इति ऊहः । **संकर्ष.** ४।२।८. * अवभृथे ' अपबर्हिषः प्रयाजान् यजति ' ' अपबर्हिषावनुयाजौ ' इति बर्हिर्याग-प्रतिषेधः । **वि.** १०।७।१५, * अवभृथे 'अप्सु तृणं प्रास्य आघारमाघारयति ' इति अप्सु इत्यनूद्य तृण-प्रासनं केवलं विधीयते । **भा.** ११।२।८।३३, * अवभृथे 'अप्सु तृणं प्रास्य आघारमाघारयति' इति गुणविधिः, न कर्मान्तरम् । १०।३।१।१, * अवभृथे अप्सु तृणप्रासनेन विहितेन प्राकृताङ्गान्तराणां न बाधः । १०।३।१।१, * अवभृथे आर्षेयवरणस्य होतृवरणस्य च प्रतिषेधः ' न होतारं वृणीते , नार्षेयम्' इति । ११।३।९।१९.

**अवभृथे ऋजीषादिनयनं प्रतिपत्तिकर्म ॥ सौमिके च कृतार्थत्वात् । ४।२।८।२० ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमे अवभृथः ' वारुणेनैककपालेनावभृथमभ्यवयन्ति ' इति । तत्राम्नायते ' वरुणगृहीतं वा एतद्यज्ञस्य यदृजीषं , यद् ग्रावाणः, यदौदुम्बरी , यदधिषवणफलके, तस्माद् यत्किंचित् सोमलिप्तं द्रव्यं तेनावभृथं यन्ति ' इति । तत्र संशयः किं सोमलिप्तानां द्रव्याणां अवभृथगमनं प्रतिपत्तिः, अथवा अर्थकर्मेति । किं तावत् प्राप्तं ? प्रतिपत्तिरिति । कृतार्थत्वात्। कृतार्थान्येतानि द्रव्याणि तत्रतत्र, तेषामवभृथगमनं प्रतिपत्तिर्न्याय्या ।

**अर्थकर्म वाऽभिधानसंयोगात् । २१ ॥**

**भाष्यं** — अर्थकर्म वा अभिधानेन संयोगात् 'तेनावभृथं यन्ति' इति । तेन अवभृथसंज्ञकं निष्पादयन्तीति । तृतीया तेनेति, द्वितीया अवभृथं इति, तस्मात् सोमलिप्तं गुणभूतं , अवभृथः प्रधानभूत इति ।

**प्रतिपत्तिर्वा तन्न्यायत्वाद् , देशार्थाऽवभृथश्रुतिः । २२ ॥**

**भाष्यं**— प्रतिपत्तिर्वा । कुतः ? तन्न्यायत्वादेव । एष हि न्यायः यदन्यत्र कृतार्थं अन्यत्र प्रतिपाद्यते । तदिह यदि सोमलिप्तं द्रव्यं अवभृथे करणं विधीयते, ततोऽर्थकर्म । अथ सोमलिप्तेन यानं विधीयते, ततः प्रतिपत्तिः । नहि अत्र सोमलिप्तं विधीयते अवभृथे । तथा सति अवभृथसोमलिप्तसंबन्धः अभ्यवयन्तीत्यनेन आख्यातेन विधीयेत, तत्र वाक्येन विधानं स्यात्, न तु श्रुत्या । याने पुनर्विधीयमाने श्रुत्या विधानम् । तत् परिगृहीतं भवति । श्रुतिश्च वाक्यात् बलीयसी । तस्मात् प्रतिपत्तिः । अथ यदुक्तं अर्थकर्म अभिधानेन संयोगादिति, तत्र ब्रूमः । एवं सति देशार्था अवभृथश्रुतिः । अवभृथं यन्ति इति अवभृथेन देशं लक्षयति । यस्मिन् देशे अवभृथः, तं देशं यन्तीति । तस्मात् प्रतिपत्तिरिति ।

टुप्—'तेनावभृथं यन्ति' इत्यनेन सोमलिप्तावभृथयोः संबन्धो विधीयते । तत्र सोमलिप्तं वा अवभृथार्थं, अवभृथो वा सोमलिप्तार्थः द्वयमप्येतन्न घटते । यदि तत्साधनत्वेन सोमलिप्तं, तत्र उत्पत्तिवाक्यशिष्टेन एककपालेन बाध्यते । अथ सोमलिप्तं संस्कर्तव्यं अवभृथः संस्कारकः, तथापि यागं निर्वर्तयत् द्रव्यं संस्कार्यतां प्रतिपद्यते । निर्वर्तनवेलायां चैककपालः श्रुतिप्राप्तो विद्यते एव । किंच पुरोडाशेन क्रियमाणो निर्वर्त्यः प्रधानभूतः । सोमलिप्तं तु संस्कुर्वाणो गुणभूतः । न च एकस्य कर्मणो गुणत्वप्राधान्ये युक्ते । सोमलिप्तावभृथसंबन्धे च अत्यन्तं वाक्यम् । तस्मात् इयं वचनव्यक्तिर्न घटते । याने सोमलिप्तविधानं इति चेत्, न शक्यं सोमलिप्तेन गन्तुं अश्वादिनेव । ( तेन सह इति सहयोगविधाने) अदृष्टकल्पना च । अतः सोमलिप्तगमनं विधीयते । शक्नोति गमनं देशान्तरप्राप्त्या सोमलिप्तं संस्कर्तुम् । कियन्तं देशं नेयमिति ? तत्र अवभृथशब्देन देशः परिच्छिद्यते । अतो गमनेन प्रतिपाद्यमानत्वात् दृष्टार्थता । श्रुत्यर्थानुग्रहश्च धात्वर्थविधानादन्यत्रेति ।

शा— **' तत्रावभृथशब्देन श्रुत्या कर्माभिधीयते । तत्साधनतया सोमलिप्तमुक्तं तृतीयया ॥ देशेऽवभृथशब्दस्य प्रवृत्तौ लक्षणा भवेत् । सोमलिप्तं हविष्ट्वेन चोद्यतेऽवभृथं प्रति ॥ ' उच्यते । 'उत्पत्तिवाक्यविहितपुरोडाशावरोधतः । हविष्ट्वेन तु संबन्धुं सोमलिप्तं न शक्नुयात् ॥ उद्दिश्य**

**सोमलिप्तं तु यानमात्रं विधीयते । धात्वर्थोऽवभृथपदं तद्देशं लक्षयिष्यति ॥** ' अवभृथदेशं गच्छन्तः सोमलिप्तानि आदाय गच्छेयुः । तानि तद्देशे प्रक्षेप्तव्यानीत्यर्थः ।

**सोम**-- पूर्वोक्तप्रतिपत्तिलक्षणस्य अतिव्याप्तिमाशङ्क्य निराकरणात् **संगतिः** इत्याहुः । **के चित्तु** तृतीयायाः व्यत्ययेन द्वितीयार्थत्वं, यन्ति इत्यस्य णिजर्थपरत्वं च कल्पयन्ति । **सूत्रार्थस्तु**– सौमिकेऽवभृथे सोमलिप्तेन सह यानं प्रतिपत्तिः स्यात् तस्य कृतार्थत्वादिति ।

**वि**— ' पात्रस्यावभृथे सोमलिप्तस्य नयनं तु किम् । साधनं प्रतिपत्तिर्वा, यन्ति तेनेत्यतः श्रुतेः ॥ प्राप्ता साधनता, मैवं पुरोडाशहविष्ट्वतः । पात्रस्य तदसंबन्धात् प्रक्षेपः प्रतिपत्तये ॥ '

**भाट्ट**— सोमे एव ' वारुणेनैककपालेन अवभृथं यन्ति ' इत्यनेन अवभृथसंज्ञकं कर्म विधाय ' यत् किंचित् सोमलिप्तं तेनावभृथं यन्ति ' इति श्रुतम् । तत्र तृतीयया सोमलिप्तस्य करणत्वावगमात् तस्य च यागे अन्वयासंभवेऽपि अवभृथं प्रति उपपत्तेः न द्वितीयार्थलक्षणया प्रतिपत्तिकर्मत्वम् । न च प्रतिपत्त्यपेक्षत्वात् दृष्टार्थत्वलाभाय तल्लक्षणायामपि न दोषः, निषादस्थपतिन्यायेन ( ६।१।१२ ) लक्षणाऽनुपपत्तेः । अतः अवभृथे एव सोमलिप्तस्य करणत्वम् । न च उत्पत्तिशिष्टैककपालावरोधात् अनिवेशः, अवभृथसंज्ञककर्मान्तरे एव गुणप्रमाणके निवेशोपपत्तेः । यत्तु कैश्चित् भावनाभेदमात्राङ्गीकारेण तस्मिन्नेवावभृथे समुच्चयेन निवेशः पूर्वपक्षितः, तत् वाजिनेऽपि तथाऽऽपत्तेरुपेक्षितम् । अतः अवभृथद्वयस्यापि दीक्षोन्मोचनरूपैकार्थत्वेन विकल्पापत्तेः द्रव्याणामपि विकल्पः । अदृष्टार्थत्वे तु तन्त्रेणानुष्ठानात् समुच्चयः । **इति प्राप्ते**, कर्मान्तरत्वे अवभृथशब्दस्य नामातिदेशकत्वे गौणत्वापत्तेः वाचकत्वे अनेकशक्तिकल्पनाप्रसङ्गात्, देवताऽभावेन च अरूपत्वापत्तेः, वारुणेन इत्यनुषङ्गस्य देशलक्षणयाऽपि उपपत्तौ अन्याय्यत्वात्, यागरूपधात्वर्थः एव सोमलिप्तप्रतिपत्तित्वेन विधीयते । एवं च न धात्वर्थाविवक्षा, परपदार्थसंबन्धविधानकर्मान्तरत्वादिकल्पना चाश्रिता भवति । न च तेन इत्यनेन करणत्वं, त्यागे कर्मत्वलक्षकानुशासनिकसहयोगतृतीयाऽङ्गीकारेण साहित्यमात्रेण उक्तौ कर्मत्वेनैव तदाश्रयणात् लक्षणाया अप्रसक्तेः । अवभृथपदं परं देशलक्षणाऽर्थं इति न कश्चिद्दोषः ।

**मण्डन**— ' न सोमलिप्तैरुदकेष्टिरिष्टा । '

**शंकर**— ' प्रतिपाद्यं सोमलिप्तम् । '

* अवभृथे एव एककपालस्य द्विरवदानं नान्यत्र । **भा.** ७।१।५।२३. * अवभृथे ज्योतिष्टोमगते आज्यभागौ स्त एव, तौ चाप्सुमन्तौ, ' अप्सुमन्तावाज्यभागौ यजति ' ' अप्स्वग्ने सधिष्टव० अप्सु मे सोमो अब्रवीत्० ' इति । **वि.** १०।७।१५. * अवभृथे ज्योतिष्टोमगते य एककपालः, स वैश्वदेविकैककपालस्य विकारः इति तद्धर्मातिदेशः । **भा.** ७।३।१०।२७, * अवभृथे पूर्वपक्षे उत्पादयितव्योऽग्निः संमार्गाय, सिद्धान्ते च आपः संमार्जनीयाः । २।१।४।१२.

**अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगो द्रव्यदेवतवत् । ११।२।८।३१ ॥**

अवभृथे प्रधाने प्रधानमात्रे अग्निविकारः अग्नेः विकारः स्यात् । अग्निस्थाने आपो ग्राह्या इत्यर्थः । प्रधानं अप्सु कर्तव्यं इति यावत् । नाङ्गानि अप्सु कर्तव्यानि । नहि तद्धेतुः प्रधानहेतुकः अग्निसंयोगः । अङ्गानां अग्नौ कर्तव्यतायां प्रधानस्य अग्निसंयोगो न हेतुः । द्रव्यदेवतवत् यथा एककपालो द्रव्यं, वरुणश्च देवता प्रधाने विहितत्वात् नाङ्गेषु भवति, एवं आपोऽपि प्रधाने स्युर्नाङ्गेषु इति पूर्वः पक्षः ।

**साङ्गो वा, प्रयोगवचनैकत्वात् । ३२ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न प्रधानमात्रे अग्नेर्विकार आपः । किंतु साङ्गः अङ्गैः सहित एवावभृथः अप्सु कर्तव्यः, न प्रधानमात्रम् । प्रयोगवचनैकत्वात् ' अप्सु अवभृथेन चरन्ति ' इति प्रयोगवचनं अङ्गानां प्रधानस्य चैकमेव । तस्मात् अवभृथे प्रधानवत् अङ्गान्यपि अप्स्वेव कर्तव्यानि इति सिद्धान्तः ।

**लिङ्गदर्शनाच्च । ३३ ॥**

सिद्धान्ते हेत्वन्तरमाह । चकारो हेतुसमुच्चयार्थः । ' अप्सु तृणं प्रास्याघारमाघारयति ' इति आघाररूपस्या-

ङ्गस्य अप्सु विधानं सर्वेषामेवाङ्गानामप्सु करणे लिङ्गम् । अवभृथाङ्गानि अप्सु कर्तव्यानि अङ्गत्वात् आघारवत् इति । अस्य लिङ्गस्य दर्शनात् अवभृथाङ्गानि अप्सु कर्तव्यानि, नाग्नौ ।

**शब्दविभागाच्च द्रव्यदेवताऽपनयः । ३४ ॥**

पूर्वपक्षिणा यदुक्तं द्रव्यदेवतवत् इति तत्राह । चकारः प्रधानस्याङ्गानां च वैषम्यार्थः । अवभृथः इति प्रधानशब्दस्य आघारः इत्यादेश्च अङ्गशब्दस्य विभागात् प्रधानात् द्रव्यदेवतस्य अनपनयेऽपि अङ्गेभ्यः द्रव्यदेवतस्य अपनयो भवति । अपां तु अङ्गप्रधानोभयसंबद्धत्वात् अङ्गेभ्यो नापनयः । 'अप्सु अवभृथेन' इत्यत्र यथा अवभृथशब्दोक्तस्य प्रधानस्य अद्भिः संबन्धः श्रूयते, तथा 'अप्सु तृणं प्रास्य आघारयति' इति अङ्गस्य आघारस्यापि अद्भिः संबन्धः श्रूयते । 'अप्सुमन्तावाज्यभागौ' इति लिङ्गाच्च आज्यभागयोरपि अङ्गभूतयोः अद्भिः संबन्धो ज्ञायते । एवं च द्रव्यदेवतस्य अङ्गेभ्यः अपनयो यद्यपि भवति, तथापि अपां अङ्गप्रधानोभयसंबन्धात् नाङ्गेभ्यः अपनयः इति । द्रव्यं च एककपालः, देवता च वरुणः, तयोः समाहारः द्रव्यदेवतम् । तस्य अपनयः इति विग्रहः । द्रव्यदेवतानपनयः इति यपाठे प्रधानात् द्रव्यदेवतस्य यद्यपि न अपनयः, तथापि अङ्गेभ्योऽपनयः इति योज्यम् । **के.**

**अवभृथे बर्हिःप्रतिषेधाच्छेषकर्म स्यात् । १०।७।१५।४७ ॥**

सौमिके अवभृथे 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति बर्हिषः चतुर्थस्य प्रयाजस्य द्वितीयस्य चानुयाजस्य प्रतिषेधात् तद्वर्जं शेषकर्म अवशिष्टं सर्वं कर्म कर्तव्यं स्यात् । 'अप्सुमन्तावाज्यभागौ यजति' इति वचनं तु अप्सुमतोः अनुवाक्यामन्त्रयोर्विधानार्थं नाज्यभागविधानार्थम् ।

**आज्यभागयोर्वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् । ४८ ॥**

वाशब्दः शेषकर्मकर्तव्यतापक्षनिरासार्थः । नैतत् युक्तं शेषं कर्म कर्तव्यमिति । तथाहि, 'अप्सुमन्तौ आज्यभागौ यजति' इति वाक्यं तावत् न अप्सुपदघटितमन्त्ररूपगुणविधानार्थं, अब्-लिङ्गेन मन्त्रकाण्डस्थक्रमेण च 'अप्स्वग्ने सधिष्टव' 'अप्सु मे सोमो अब्रवीत्' इति अप्सुमतोर्मन्त्रयोः प्राप्तत्वात् । एवं एतद्वाक्यविहितयोः आज्यभागयोः अगुणत्वात् निर्गुणयोरेव विधानात् चोदकेन तथैव प्रकृतितः प्राप्तत्वेऽपि पुनर्विधानात् इतरप्रतिषेधः इतरेषामङ्गानां चोदकप्राप्तानां प्रतिषेधः स्यात् । तथा च अप्सुमन्तावाज्यभागौ इति वचनं परिसंख्यापकम् । 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति वचनं तु परिसंख्यातानां बर्हिर्भिन्नानां प्रयाजानूयाजानां विधानार्थं भवेत् । एवं च आघारप्रयाजानूयाजरूपं शेषं कर्म कर्तव्यमेव इति अन्यः पूर्वपक्षः ।

**प्रयाजानां त्वेकदेशप्रतिषेधादवाक्यशेषत्वं, तस्मान्नित्यानुवादः स्यात् । ४९ ॥**

तुशब्दः परिसंख्यापक्षं व्यावर्तयति । यदि आज्यभागवाक्यं इतराङ्गानि परिसंचक्षीत, तदा प्रयाजानुयाजैकदेशस्य बर्हिषः प्रतिषेधो न स्यात् परिसंख्यातत्वेन अप्राप्तत्वादेव । एकदेशप्रतिषेधस्तु कृतः 'अपबर्हिषः' 'अपबर्हिषौ' इति । एकदेशप्रतिषेधात्तु आज्यभागवाक्यस्य परिसंख्यापकत्वाभावो ज्ञायते । ततश्च आज्यभागवाक्यं अवभृथवाक्यशेषः सत् परिसंचक्षीत । परंतु तस्य परिसंख्यापकत्वाभावात् तेन वेषेण न वाक्यशेषत्वं अवाक्यशेषत्वम् । एकदेशप्रतिषेधात् हेतोः अवाक्यशेषत्वं वाक्यशेषत्वाभावः । तस्मात् प्रयाजानां चतुर्णां उपलक्षणेन द्वयोरनुयाजयोश्च नित्यानुवादः स्यात् । प्रयाजानुयाजाननूद्य बर्हिर्यागो निषिद्धः । एवं आज्यभागवाक्येऽपि आज्यभागौ अनूद्य अप्सुमन्तौ मन्त्रौ विहितौ । सर्वथाऽपि न परिसंख्या ।

**गृहमेधीयवद्वा स्यात् । ५० ॥**

अथवा गृहमेधीयवत् यथा गृहमेधीयः अपूर्वः, तद्वत् अवभृथः अपूर्वः स्यात् यावदुक्तं कर्तव्यम् । इति सिद्धान्तः । **के.**

* अवभृथे बर्हिरनूयाजाभावेन 'देवौ यजयज' इति प्रैषः । **संकर्ष.** २।३।३. * अवभृथे वरुणप्रघासगते सौमिकात् अवभृथात् धर्मातिदेशः । परंतु

' नायुर्दा जुहोति, न साम गायति, न गमनमन्त्रं जपति ' इति विशेषः। भा. ७।३।४।१५. * अवभृथे वारुणप्राघासिके चोदिताभ्यां तुषनिष्कासाभ्यां अतिदिष्टः पुरोडाशो बाध्यते । चोदकस्य अतिदेशात् प्रबलत्वात् । वि. ७।३।५. * अवभृथे विहारः प्रत्यङ्मुखः कर्तारस्तु प्राङ्मुखा इति चेन्न कर्तृगर्भकविहारस्य प्रत्यङ्मुखत्वविधानेन कर्तृणामपि प्रत्यङ्मुखताया अभिसिद्धत्वात् । संकर्ष. २।४।१६.

**अवभृथे स्विष्टकृद्यागीयनिगमेषु सर्वेष्वेव अग्नीवरुणयोर्वचनं सस्विष्टकृच्छब्दकमेव कर्तव्यं ज्योतिष्टोमे ॥**

**स्विष्टकृद्देवताऽन्यत्वे तच्छब्दत्वान्निवर्त्येत ।** १०।४।१७।३४ ॥

**भाष्यं**— अस्ति अवभृथः ' वारुणेनैककपालेनावभृथं यन्ति' इति । तत्रेदमाम्नायते 'अग्नीवरुणौ स्विष्टकृतौ यजति ' इति । तत्रायमर्थः सांशयिकः किं निगमे अस्विष्टकृच्छब्दकं वचनं कर्तव्यं, उत सस्विष्टकृच्छब्दकमिति । तत्र एवं तावत् परीक्ष्यते किं सांविज्ञायिकः ( रूढः ) स्विष्टकृच्छब्दः, उत स्विष्टं करोति इत्यनेन गुणेन प्रवृत्तः इति गौणो, न रूढ इति । यदि रूढः, अस्विष्टकृच्छब्दकं वचनं कर्तव्यम् । अथ व्युत्पाद्यते, ततः सस्विष्टकृच्छब्दकम् । किं प्राप्तं ? सांविज्ञायिकः, न व्युत्पाद्यते इति । कुतः ? न तावत् स्विष्टं कृतवान् । अथ च तस्मिन्नेव काले स्विष्टकृत् इत्युच्यते ' स्विष्टकृतं यजति ' इति । नहि अत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेन अन्वितौ ( निरुक्त. १।१४ ) भवतः । अग्निरेव स्विष्टकृच्छब्देनोच्यते, न योऽर्थः स्विष्टं कृतवान् । यदा सांविज्ञायिकः, तदा अस्विष्टकृच्छब्दकं वचनं कर्तव्यम् । कुतः ? अग्नेर्हि देवताया असौ वाचकः, नाग्नीवरुणयोः । विकृतौ अग्नेर्देवताया अभावात् अग्नीवरुणाभ्यां निवर्त्येत । तस्मात् अस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति ।

**संयोगो वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ।** ३५ ॥

**भाष्यं**— न चैतदस्ति अस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । किं तर्हि ? सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । तत एतद्वर्ण्यते, गौणमिदमभिधानमिति । स्विष्टकरणात् स्विष्टकृत् इति गम्यते । गम्यमाने न न्याय्यमविवक्षितं कल्पयितुम् । क्रियानिमित्तत्वमवयवशब्देभ्यो गम्यते । समुदायस्य च अग्नौ अप्रयोगात् लोके अग्न्यभिधानत्वं नाध्यवसीयते । तस्मान्न सांविज्ञायिकः। एवं चेत् सस्विष्टकृच्छब्दकं वचनं कर्तव्यम् । अर्थापत्तेः। अग्नेरर्थे अग्नीवरुणौ श्रूयेते ' अग्नीवरुणौ स्विष्टकृतौ यजति ' इति । क्रियासंयोगित्वाच्च शक्नोति स्विष्टकृच्छब्दः अग्नीवरुणौ वक्तुम् । तस्मात् सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । अथ यदुक्तं, स्विष्टं कृतवति चैष शब्दः, न चाग्निः स्विष्टं कृतवान् इति, अत्र ब्रूमः । मत्पक्षे भूतकालता हीयेत । त्वत्पक्षे सा च सोपपदश्च धात्वर्थः । अपिच ततः पूर्वान् यागानपेक्ष्य स्विष्टं कृतवानग्निः ।

**शा**— किं निगमेषु अस्विष्टकृच्छब्दकं वचनं ' अग्नीवरुणावावह ' इति, उत स्विष्टकृच्छब्दकं ' अग्नीवरुणौ स्विष्टकृतावावह ' इति ।

**सोम**— वनस्पतौ विधिशब्दत्वात् वनस्पतिशब्देनाभिधानेऽपि इह स्विष्टकृच्छब्दस्य विधिशब्दत्वाभावात् न तेनाभिधानं इत्युत्थितेः **संगतिः** । भूताधिकारे ' सु-कर्म-पाप-मन्त्र-पुण्येषु कृञः' इत्यत्र कालोपपदप्रत्ययानामेव नियमाभ्युपगमेन स्वादिष्वेव कृञः क्विप् इति धातुनियमानङ्गीकारात् उपपदान्तरे शास्त्रकृत् भाष्यकृत् इत्यादिवत् भूते क्विबन्तस्विष्टकृच्छब्दः । तत्र ' स्विष्टं वै न इदं भविष्यति यदिमं राधयिष्यामः ' इत्यादिष्वर्थवादेषु अनेन स्विष्टकृद्यागेनाराधितस्याग्नेः स्विष्टकरणहेतुत्वावगमेन स्विष्टकृद्यागसमये भूतस्य तस्याभावात् सुष्ठु इष्टं यजनप्रधानं यागं कृतवान् इत्येवंरूपस्य योगस्यासंभवेन प्रयोगनिर्वाहार्थं रूढिरवश्यमङ्गीकर्तव्या । वस्तुतस्तु स्विष्टकृच्छब्दः ' क्विप् च ' इति क्विपैव व्युत्पाद्यः। स च कालत्रयसाधारणः इति भूतार्थासंभवेऽपि वर्तमानार्थमादाय योगसंभवात् पूर्वपक्षोऽयं मन्दः । सिद्धान्तश्चाभ्युप-

गमवादेनेति ध्येयम् । **सूत्रार्थस्तु**– देवताऽन्यत्वे स्विष्टकृच्छब्दो निवर्तेत तच्छब्दत्वात् अग्निवाचकत्वादिति ।

**वि**— 'किमग्नीवरुणौ स्विष्टकृच्छब्देन विवर्जितौ । वक्तव्यौ सहितौ वा, ऽऽद्यो रूढत्वादगुणोक्तितः ॥, कदा चित् कृतवान् स्विष्टमिति योगाद् गुणे सति । पावकाग्निनयेनात्र वक्तव्यौ सगुणाविमौ ॥'

**भाट्ट**— 'अग्नीवरुणौ स्विष्टकृतौ यजति' इति अवभृथे श्रुतम् । तत्र किं त्यागे शुद्धयोरेव अग्नीवरुणयोर्देवतात्वं, किंवा स्विष्टकृद्गुणकयोः इति चिन्तायां, न तावदत्र यजिपदोपात्तस्विष्टकृद्यागानुवादेन देवताविधिः संभवी विधेयानेकत्वनिमित्तकवाक्यभेदापत्तेः, यजिपदेन अवभृथाङ्गभूतयागमात्रोद्देशेन विधानापत्तेश्च, अवभृथस्यापूर्वत्वेन तत्र स्विष्टकृद्यागस्य अप्राप्तेश्च । अतः स्विष्टकृत्पदेन स्विष्टकृत्कार्यकारिणौ अग्नीवरुणौ इत्येवं स्विष्टकृद्देवताकार्यकारित्वं लक्षयित्वा तत्कार्योद्देशेन अग्नीवरुणयोर्विधिः, अग्नीवरुणविशिष्टस्विष्टकृत्कार्यविधिर्वा । स्विष्टकृद्देवताकार्ये च स्विष्टकृद्याग एव, इति तत्र वैशेषिकदेवताविधानात् तदीयप्राकृतदेवताबाधः । अतश्च यद्यपि प्रकृतौ स्विष्टकृच्छब्दः अग्नौ यौगिकः, तथापि शब्दस्यैव प्रकृतौ विध्यन्वयात् शब्दकार्ये यागे देवताऽन्तरविधानेन प्राकृतदेवताद्वयस्यापि निवृत्तिः। **वस्तुतस्तु** सुष्ठु इदं साङ्गं कृतवान् इति भूतार्थकक्विप्प्रत्ययान्तस्विष्टकृच्छब्दार्थप्रतीतेः तस्य च भूतत्वाभावेन बाधात् स्विष्टकृच्छब्दस्य अग्निपदसामानाधिकरण्येन अग्नौ रूढत्वप्रतीतेः पर्यायद्वयस्यापि समुच्चितस्य एकयागार्थत्वात् स्विष्टकृच्छब्दकार्ये विहितदेवताऽन्तरेणापि शब्दद्वयबाधो नानुपपन्नः । अनयैव च रीत्या यत्रयत्र प्रकृतौ गुणविशिष्टदेवताविधिः, विकृतौ च वनस्पतियागादौ विशेष्यान्तरस्यैव देवतात्वविधिः, तत्र वैकृतदेवतया प्राकृतदेवताद्वयस्यापि बाधः। अर्थस्य देवतात्वपक्षे हि स दुरुपपादः स्यात्, विशेष्यान्तरस्य प्राकृतविशेष्यस्थाने एव विहितत्वात्, न शब्दस्य देवतात्वपक्षे । अतोऽत्र अस्विष्टकृच्छब्दस्यैव त्यागवेलायामभिधानम् । निगमेष्वपि आध्वर्यवेषु 'अनुब्रूहि' 'यज' इत्यादिषु अस्विष्टकृच्छब्दस्याभिधानम् । हौत्रेष्वपि याज्याया आदौ । याज्यानुवाक्ययोस्तु प्रकृतितोऽपि शुद्धाभिधानस्यैव अतिदेशात् उपदिष्टकृत्स्वपि शुद्धयोरेव अग्नीवरुणयोरभिधानात् अस्विष्टकृच्छब्दस्याभिधानं सिद्धान्तेऽप्यविशिष्टमेव । आवाहनसूक्तवाकयोस्तु खण्डेष्टित्वादेव अभावः । उत्तमप्रयाजे तु प्रकृतावेव स्विष्टकृद्यागदेवतायाः अप्रकाशनात् इहापि अप्रकाशनं निर्विवादमेव । **इति प्राप्ते**, स्विष्टकृत्पदे स्विष्टकृत्कार्यकारित्वलक्षणायां प्रमाणाभावात् देवताद्वयविशिष्टयागविधिरेवायम् । स्विष्टकृत्पदं च रूढत्वेऽपि प्रकृताविव देवताविशेषणम् । वस्तुतस्तु भूतकालत्वासंभवेऽपि वर्तमानक्रिये देवदत्ते यागकृत् इति प्रयोगदर्शनात् यौगिकमेव । यागश्चायं अतिदेशाभावेऽपि आज्यभागन्यायेन ( १०।८।२।५ ) प्राकृतः एव, स्विष्टकृद्यागान्तरं वा स्विष्टकृद्देवताकत्वात्, तत्कार्यापन्नं अप्राकृतकार्यमेव वा प्राकृतस्विष्टकृद्विकाररूपं वनस्पतिवत् । सर्वथा सगुणयोः अग्नीवरुणयोः तत्र देवतात्वात् त्यागकाले तदुक्तनिगमेषु च स्विष्टकृच्छब्दकयोरेव अग्नीवरुणयोः अभिधानम् । १८.

**मण्डन**— 'यौगिकं स्विष्टकृत्पदम् ।' २०.

**शंकर**— 'अवभृथे स्विष्टकृद्गुणः ।' २०.

## ⌛ अवभृथधर्मककर्मान्तरस्य वरुणप्रघासेषु विधानम् ॥

**निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात्** । ११।२।१५।६३ ॥

**भाष्यं**— वरुणप्रघासेषु श्रूयते, 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति । तत्र विचार्यते किं प्रदानप्रकर्षोऽयं, उत कर्मान्तरचोदनेति । किं प्राप्तम् ? प्रदानविप्रकर्षोऽयम् । कुतः ? तदेकदेशत्वात् । वरुणं प्रति आमिक्षोत्पन्ना, मारुती आमिक्षा, वारुणी आमिक्षेति । सा द्विधा प्रदीयमाना दृश्यते । एकदेशोऽस्या आवापस्थाने, एकदेशः समिष्टयजुरूर्ध्वम् । उभयत्रापि वरुणदेवता । तेन प्रदानविप्रकर्षो विज्ञायते । पशुवत् । यथा सवनीयस्य पशोः, 'वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यंदिने, अङ्गैस्तृतीयसवने' इति । अवभृथशब्द इदानीं किमर्थः ? भक्त्या अनुवादमात्रं देशसामान्याद्देवतासामान्याच्च । अथ धर्मातिदेशकः अग्नि-

होत्रपदवदेव कस्मान्न भवति ? अशक्यत्वात्। अनेनैव प्रदानविप्रकर्षः अनेनैव धर्मातिदेशः, इत्यशक्यमेकस्य वाक्यस्य। प्रदानविप्रकर्षं कृत्वा कृतार्थस्य धर्मानतिदेष्टुं न शक्तिरिति। ( श्रुतौ वारुण्याः आमिक्षायाः स्थालीलग्नेन शेषेण, पिष्टमयमेषप्रकृतिभूतयवानां तुषैश्च इत्यर्थः इति **केचित्**। पिष्टमयमेषस्य आमिक्षासंस्कारार्थतया प्रधानहविष्ट्वाभावात् पुरोडाशादिलक्षणप्रधानहविरर्थानां तुषैः **इत्यन्ये**। अविशेषात् उभयेषामि**त्यपरे**। सोम. ११।२।१४ )

**टुप्**— वारुणी आमिक्षा उत्पन्ना। तस्याः एकदेशः पूर्वं ( आवापस्थाने ) हूयते, एकदेशश्च उत्तरत्र ( समिष्टयजुरनन्तरकाले )। तयैव ( स्वीयया ) संबध्यते वरुणदेवतया। यथा पशोः ( एकदेशः प्रातःसवने हूयते, तृतीयसवने चैकदेशः तद्वत्। यदि स एवायं यागः, कथं तर्हि अवभृथशब्दः, अत आह– ) अवभृथशब्दः देवतासामान्येन गौणः ( अवभृथोऽपि वरुणदेवत्यः इति )। देशसामान्येन वा ( निष्कासप्रचारः अवभृथवत् इति )। धर्मातिदेशः कस्मान्न भवति ( तद्धर्मककर्मान्तरविधिः इत्यर्थः )। उच्यते। यत्र आख्यातेन कर्म प्रतिपाद्यते, तत्र तत् नाम तद्धर्मातिदेशकं भवति यथा 'मासमग्निहोत्रं जुहोति' इति। ( अत्र जुहोतिना कर्म प्रतिपाद्यते, अग्निहोत्रशब्दस्तु धर्मप्रतिपादकः इति ) इह तु नामशब्द एव केवलः श्रूयते, स एव कर्म विधास्यति, स एव धर्मातिदेशको भविष्यति इति ( गौरवं ) अनुपपन्नम्।

**अपनयो वा, प्रसिद्धेनाभिसंयोगात्। ६४॥**

**भाष्यं**— न वाऽयं प्रदानविप्रकर्षः। किं तर्हि ? अपनयो निष्कासस्य, पूर्वकर्मणः कर्मान्तरोपदेशः। किं कारणम् ? प्रसिद्धेनाभिसंयोगात्। प्रसिद्धेन नामधेयेनावभृथशब्देन संयोगात्, निष्कासेनावभृथमभ्यवयन्तीति। ननु भाक्तोऽयमनुवादमात्रमित्युक्तम्। अनुवादः सन् अप्रवृत्तिविशेषकरोऽनर्थकः स्यात्। अतिदेशस्त्वर्थवान्। ननु तत्रापि लक्षणा भवति। अस्तु। लक्षणाऽपि हि प्रवृत्तिविशेषकरत्वादर्थवती। यथा 'अग्नौ तिष्ठति, अवटे तिष्ठति'। अनेकार्थता तर्हि दोषो भवति, नापूर्वकर्मचोदनायामसौ दोषः। यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। कथं पुनरनेन शक्यते अपूर्वं कर्म चोदयितुम् ? उच्यते। 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति श्रूयते। न चावभृथः शक्यतेऽभ्यवेतुम्। तत्रैवं विज्ञायते, निष्कासेन तुषैश्चावभृथं कर्तुमपोऽभ्यवयन्तीति। यथा शाटकं कर्तुं सूत्राणि वयन्तीति। लक्षणया वा, यथा 'य एवं विद्वांसः सत्रमुपयन्ति' इति।

**टुप्**— नायं प्रदानविप्रकर्षः। कुतः ? अवभृथशब्दकेन कर्मणा निष्कासस्य संयोगात्। नन्वनुवाद इत्युक्तम्। असत्यां गतौ अनुवाद आश्रीयते। अस्ति तु गतिः। लक्षणया धर्मातिदेशको भविष्यति। लक्षणया च यागं प्रतिपादयिष्यति।

**प्रतिपत्तिरिति चेत्। ६५॥**

**भाष्यं**— अथान्यशेषत्वान्निष्कासस्यावभृथगमनं प्रतिपत्तिर्भवत्विति।

**न, कर्मसंयोगात्। ६६॥**

**भाष्यं**— तन्न। कुतः ? कर्मसंयोगात्। अर्थकर्मणा ह्यस्य गुणभूतस्य संयोगो विज्ञायते तृतीयासामर्थ्यात्। प्रतिपत्तौ हि द्रव्यप्राधान्यात् द्वितीयया निरदेक्ष्यत यथा 'चात्वाले कृष्णविषाणां प्रास्यति' इति। अथवा अवभृथशब्दकेनास्य कर्मणा संयोगात्। यदि च प्रतिपत्तिः स्यात्, ततोऽवभृथशब्दोऽनर्थक एव भवेत्। अयमवभृथशब्दो धर्मानतिदिशेत्। न च प्रतिपत्तौ प्रधानकर्मणां धर्माः शक्या अतिदेष्टुं, वैषम्यात्। तदा ह्यवभृथेन प्रतिपादयन्तीत्युक्तं स्यात्। न चावभृथेन किंचित् प्रतिपादितं, यदतिदिश्येत।

**टुप्**— न चेयं तुषनिष्कासस्य प्रतिपत्तिः। कथम् ? यथा तेन कृतं तथा अनेनापि कर्मणा। तत्र च द्रव्यं गुणतो, यागः प्रधानतः। इह तु विपरीतं कथं तद्भावमाप्नुयात् ( अतो यस्यैव नामधेयस्य प्रसादात् कर्मान्तरं इति सिद्धं, तत एव एतदर्थकर्म इत्यपि सिध्यति इत्यभिप्रायः )।

**सोम**— दशपेयाङ्गानां आवृत्तावपि इह नावृत्तिः इत्युत्थानात् **अवान्तरसंगतिः। यद्यपि** सप्तमे

दार्शपौर्णमासिकापां व्युत्सेके चोदकप्राप्ते निष्कासविधिः इति पूर्वपक्षं कृत्वा कर्मान्तरविधित्वं व्यवस्थापितं, **तथापि** इह तदेव कर्मान्तरत्वं प्रचारविप्रकर्षनिराकरणेन स्थिरीक्रियते इत्यपुनरुक्तिः। **ननु** यदि निष्कासोऽवश्यं देवतायै देयः स्यात्, तदा प्रकृतयागशेषस्य देवताऽन्तरसंबन्धानुपपत्त्या वरुणायैव दानं, इति कर्मान्तरत्वासंभवात् प्रचारविप्रकर्षः स्यात्। न चायं निष्कासः अवश्यं देवतायै देयः इत्यत्र प्रमाणमस्ति। 'यत्किंचित् सोमलिप्तं तेनावभृथं यन्ति' इति सोमलिप्तनयनवत् देवताशून्यमेव कर्म निष्कासप्रतिपत्तितया विधीयते इत्येव वर्णनीयत्वात् 'प्रचारविप्रकर्षविधिः' इति पूर्वपक्षवर्णनमयुक्तमिति चेत्। **सत्यम्**। वरुणप्रघासेषु वाक्यान्तरेण अवभृथस्याविहितत्वेन अवभृथदेशनयनस्य सोमलिप्तवत् विधातुमशक्यतया देवताशून्यस्य प्रतिपत्तिकर्मणो विध्यनर्हत्वे बुद्धौ विपरिवर्तमानतामात्रेण प्रत्येकं देवतासंबन्धं परिकल्प्य प्रकृतकर्मण एव निष्कासविशिष्टप्रचारविधिरगत्या स्वीकार्यः इत्याशयः। वस्तुतस्तु— अवभृथशब्देन देवतासामान्यात् प्रकृतयागं परामृश्य वरुणयागं निष्कासेनापि कुर्यात् इत्येवं प्रचारविप्रकर्षविधिः सुखेनोपपादयितुं शक्यते। तथापि अयं प्रकारो ग्रन्थकारस्य (शा.) नाभिमतः। तथात्वे अवभृथशब्दानर्थक्याभावेन वक्ष्यमाणतदानर्थक्यानुपपत्तेः इति ध्येयम्।

**वि**— 'निष्कासावभृथे विप्रकर्षोऽथ प्रतिपादनम्। उतार्थकर्म पशुव, दाद्योऽवभृथशब्दतः॥ कर्मान्तरं तदाऽपि स्यात् प्रतिपत्तिः प्रयाजवत्।, प्राधान्यादर्थकर्म स्यात् तच्चावभृथधर्मकम्॥' तस्मादर्थकर्म।

**भाट्ट**— वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्च अवभृथं यन्ति' इति श्रुतम्। तत्र वरुणदेवत्यस्य आमिक्षायागस्य प्रधानान्तरसमये पूर्वमेकवारं कृतस्यापि पुनः प्रचारविप्रकर्षमात्रं समिष्टयजुरूर्ध्वं विधीयते 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इत्यनेनेव सवनीयपशोः। अवभृथशब्दस्तु वरुणदेवताकत्वसादृश्यात् गौणोऽनुवादः। यन्ति इति च यागकल्पकं, तेन नावभृथयागे पुनः प्रयाजादिकरणं इति **प्रथमः पक्षः**। **द्वितीयस्तु**, नात्र प्रचारविप्रकर्षः। तथात्वे अवभृथशब्दवैयर्थ्यापत्तेः, समिष्टयजुरूर्ध्वकालवाचकपदश्रवणाभावाच्च प्राप्तकर्मानुवादेन कालनिष्कासतुषाद्यनेकगुणविधाने वाक्यभेदापत्तेश्च। अतः अवभृथपदेन अब्-रूपं तद्देशं लक्षयित्वा अवभृथगमनं तुषविशिष्टं वारुणीनिष्कासप्रतिपत्त्यर्थं विधीयते प्रयाजशेषाभिघारणवत् इति। **सिद्धान्तस्तु** अवभृथशब्दस्य लक्षणाऽवश्यंभावे शास्त्रस्य महाविषयत्वसिद्ध्यर्थं तद्धर्मककर्मान्तरस्यैव लक्षणा। अत एव 'नायुर्दां जुहोति, न साम गायति, न गमनमन्त्रं जपति' इत्यादिसौमिकप्रसिद्धावभृथधर्मपर्युदासोऽपि संगच्छते। अतश्च कर्मान्तरमेवेदं तुषांशे अर्थकर्म, निष्कासांशे च प्रतिपत्तिः इत्युक्तं कौस्तुभे प्रकरणान्तराधिकरणे (२।३।११।२४)। एतदधिकरणसूत्रे तु तुषांशे अब्-देशगमनस्यैव वा प्रतिपत्तित्वमाशङ्क्य निरस्तं इति वेदितव्यम्।

**मण्डन**— 'निष्कासोऽवभृथाद्भिन्नः।'

**शंकर**— 'तुषयागोऽर्थकर्मेत्थम्।'

* **अवभृथशब्दः** सौमिके कर्मणि मुख्यः, तस्य विधेयक्रियासामानाधिकरण्येन नामधेयत्वात्। दार्शपौर्णमासिके अपां व्युत्सेके तु अप्संबन्धादुपचर्यते। तस्मात् सौमिकधर्मवाचिनमवभृथशब्दं वरुणप्रघासप्रकरणे प्रयुञ्जान आम्नायः सौमिकधर्मानतिदिशन् कर्मान्तरं तद्धर्मसंयुक्तं विधत्ते। **वि.** ७।३।४. * **अवभृथशब्दः हि** वरुणदेवतस्य एककपालद्रव्यस्य यागस्य वाचकः। 'वारुणेनैककपालेनावभृथं यन्ति' इति तदुत्पत्तिवाक्ये श्रुतत्वात्। **भा.** ११।२।८।३०. * **अवभृथसाम** ऐन्द्र्यां गायति। **के.** * **अवभृथाङ्गभूतानां** साम्नां परिसामाख्यानां परितः सामानि इति व्युत्पत्त्या अवभृथादिप्रयोगात् बाह्यत्वावगतेः अवभृथादिप्रयोगविधिविधेयत्वाभावेन अवभृथादिद्वारस्वरप्राप्त्यभावात् साक्षात् ज्योतिष्टोमाङ्गत्वाभावेन च अग्नीषोमीयादिवत् सवनविभागस्वरेण विषयतया ग्रहणाभावात् बाधकाभावेन स्वरूपतः प्राप्तौ यथावेदमेव स्वरो युक्तः इति उच्चैस्त्वसिद्धिः। **सु.** पृ. ११८३.

* **अवभृथादीनि** कर्माणि द्वादशाहे तन्त्रेण कर्तव्यानि। **टुप्.** ८।१।८।३२. * **अवभृथोत्तरमुदवसानीयेष्टिः**, तदुत्तरमेव चाग्निहोत्रहोमारम्भः। **के.**

* **अवमर्शः**। नहि अगृहितविषयः अवमर्शोऽस्ति। **ऋजु.** पृ. २२७.

**अवयवा अर्थवन्तो, न समुदायः इति न्यायः।** तद्यथा– यस्य हि यत् द्रव्यं भवति, स तेन कार्यं करोति। यस्य च या गावो भवन्ति, स तासां क्षीरं घृतमुपभुङ्क्ते, अन्यैरेतत् द्रष्टुमशक्यम्। इत्यपि अर्थवत्सूत्रभाष्ये। **साहस्री.** ६५१.

* **अवयवाः** ( परार्थानुमाने ) प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चेति अक्षपादीयाः। आद्याः अन्तिमा वा त्रय एवावयवाः इति मीमांसकाः। **मणि.** पृ. ४०. * परार्थानुमानवाक्यस्य च तार्किकाणामिव न पञ्च **अवयवाः**, किंतु त्रय एव। तदुक्तं 'तत्तु पञ्चतयं केचित् द्वयमन्ये ( बौद्धाः ) वयं ( मीमांसकाः ) त्रयम्। उदाहरणपर्यन्तं, यद्वोदाहरणादिकम्॥' इति। **बाल.** पृ. ८. * **अवयवैः** समुदायस्य अव्यतिरेकात्। **भा.** ११।२।३।१४.

**अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति इति न्यायः।** तद्यथा गोः सक्थनि कर्णे वा कृतं लिङ्गं समुदायस्य विशेषकं भवति, एवं प्रकृतेऽपि। अयं 'पूर्ववत्सनः' ( पा० १।३।६२ ) इति सूत्रभाष्ये उक्तः। **साहस्री.** ६२२.

**अवयवे शास्त्रार्थसंप्रत्ययः इति न्यायः।** 'वसन्ते ब्राह्मणोऽग्नीनादधीत'। इति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवतीति। 'गर्भाष्टमे ब्राह्मण उपनेयः' इति सकृदुपनीय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवतीति। तथा 'त्रिर्हृदयंगमाभिरद्भिरशब्दाभिरुपस्पृशेत्'। इति सकृदुपस्पृश्य कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवतीति। तथा प्रकृतेऽपि। 'एकः पूर्वपरयोः' ( पा० ६।१।८४ ) इतिसूत्रस्थमहाभाष्ये विवृतोऽयं न्यायः। **साहस्री.** ४४८.

* **अवयवप्रसिद्धिः**। ननु समुदायप्रसिद्धेः श्रुतिस्थानीयत्वात् वाक्यस्थानीयावयवप्रसिद्धिर्दुर्बला स्यात्। तथाहि, '**अक्षरैरेव बुध्यन्ते समुदायप्रसिद्धिषु। अर्थभागोपसंहारादितरा विप्रकृष्यते**॥' सत्यमेवमेतत्। अवश्यं तु अवयवानामपि ( शब्दावयवानामपि ) स्वार्थे शक्तिराश्रयणीया, तदनाश्रयणे अवयवप्रसिद्धित्वाभावात्। तत्र च '**असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते। तत्रानन्यगतित्वेन समुदायः प्रसिध्यति**॥' लब्धात्मिका हि समुदायप्रसिद्धिः अवयवप्रसिद्धिं बाधते। तस्मात् स्वात्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थरहिते अर्थे शब्दप्रयोगो दृश्यते, यथा अश्वत्वकर्णत्वरहिते वृक्षे अश्वकर्णशब्दस्य। नहि अत्र पूर्वशक्त्यनुसारेण प्रतीतिरुपपद्यते, इत्यर्थापत्त्या शक्त्यन्तरं कल्प्यते। ततश्च उभयसंभवे अवयवार्थानुसंधानात् विक्षिताया अवयवप्रसिद्धेः अक्षरश्रवणमात्रलभ्यत्वात् इयं ( समुदायशक्तिः ) बलीयसी भवति। **वा.** १।४।८।११, * न तावत् समुदायप्रसिद्धौ संभवन्त्यां **अवयवप्रसिद्धिः** प्रातिपदिकस्य युक्ता। उद्गातृणां इत्यादौ। ३।५।८।२६ **पृ.** १००२. * समुदायप्रसिद्ध्या अपरिमितशब्दे अवयवप्रसिद्धिर्बाध्यते अश्वकर्णशब्दवत्। **भा.** ६।७।१०।२२, * **अवयवप्रसिद्ध्या** समुदायप्रसिद्धिर्न बाध्यते इत्युक्तमेव। ६।८।१०।४२,४३. * 'वाजिनः' इति हि **अवयवप्रसिद्ध्या** ( वाजः आमिक्षारूपं अन्नमस्ति एषां इति ) विश्वे देवाः प्रत्याय्यन्ते। वाक्यार्थवच्च अवयवार्थौ समुच्चित्य संबन्धं कल्पयित्वा सा ( अवयवप्रसिद्धिः ) भवन्ती श्रुतिमात्रोपनिपातलभ्यायाः समुदायप्रसिद्धेः दुर्बला भवति इति दुर्बलतरः संयोगो वाजिनस्य। **वा.** २।१।९।२३ **पृ.** ५३७.

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति न्यायः।** यथा— 'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः॥' इति। अत्र पठितशुद्धरूढस्य जननीवाचकस्यैव मातृशब्दस्य 'न षट्स्वस्रादिभ्यः' ( पा० ४।१।१० ) इति स्वस्रादित्वप्रयुक्तङीब्निषेधः, न तु परिच्छेत्तृवाचकमातृशब्दस्य। योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेतद्बीजमिति। रथकाराधिकरणन्यायसिद्धोऽयं न्याय इति। **साहस्री.** २३५.

* **अवयवप्रसिद्धेः** समुदायप्रसिद्ध्या निराकरणात् अहीनशब्दः अहर्गणवाचकः, न तु न हीनः अहीनः इति व्युत्पत्त्या ज्योतिष्टोमार्थकः । रूढिर्योगमपहरति । योगाद् रूढिर्बलीयसी । **वा.** ३।६।८।१६ पृ. ८६४. * **अवयवप्रसिद्धितः** समुदायप्रसिद्धेः बलीयस्त्वं रथकाराधिकरणे ( ६।१।१२ ) वक्ष्यते । **सु.** पृ. ४६६.

* **अवयवव्युत्पत्तिः** रूढ्या बाध्यते ' टुक्षु शब्दे ' इत्यवयवव्युत्पत्तौ आश्रीयमाणायां शङ्खादीनामपि क्षौमशब्दवाच्यता स्यात् । ( रूढ्या तु क्षुमातन्तुजन्यं वस्त्रं क्षौमशब्दवाच्यम् । अतसी स्यादुमा क्षुमा इत्यमरः । जवस आळशी इति भाषा ) । **वा.** ६।१।६।२३ पृ. १३७४. * **अवयवव्युत्पत्त्यैव** प्रयोगसंभवे रूढिर्न कल्पनीया । **सोम.** ३।२।६.

* **अवयवसमुदायमेव** अवयविनं के चिदाहुः । तन्न । ' उत्पन्नः पटः, विनष्टः पटः ' इत्यादिप्रतीतेः । **मणि.** पृ. २२.

* **अवयवातिरिक्ता**वयव्यभावः वैयाकरणपक्षे । **सु.** पृ. १४२१.

♖ **अवयवार्थवत्त्वात्समुदायार्थवत्त्वं इति न्यायः** । अवयवैरर्थवद्भिः समुदाया अर्थवन्त इत्यर्थः । तद्यथा–लोके आढ्यमिदं नगरं गोमदिदं नगरमित्युच्यते । न च सर्वे तत्राढ्या भवन्ति, न सर्वे वा गोमन्तः एवं प्रकृतेऽपि । अयं न्यायः ' अर्थवत्–'पा० १।२।४५ इति सूत्रभाष्ये उक्तः । **साहस्री.** ६२०.

* **अवयवावयविनोः** अत्यन्तभेदाभावेन अत्यन्तभेदः इति के चित् । **सु.** पृ. ८७९. * अवयवावयविनोः अभेदः । **संकर्ष.** २।१।१३. * अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोरपि भेदाभेदोऽनुसंधेयः । **मणि.** पृ. २३. * अवयवावयविनोः सामान्यविशेषव्यवहाराभावः । **वा.** ३।४।१४।४१ पृ. ९७८.

* **अवयवी**– द्रव्यान्तरम् । तत्र हि द्रव्यान्तरमस्तीति गम्यते, यत्रैकस्मिन्नवयवे गृहीत्वा कृष्यमाणे कृत्स्नः कृष्यते । न ह्यबद्धे काष्ठपूलके काष्ठे एकस्मिन् आकृष्यमाणे काष्ठान्तराणि कृष्यन्ते । यत्र हि परस्परव्यतिषङ्गजनिता एका बुद्धिर्भवति, नावयवबुद्धिर्दृश्यते, नापि केन चिदनुमानेन अनुमीयते, तत्र द्रव्यान्तरं जातमित्युच्यते । **भा.** ९।१।७।२६. यत्र व्यतिरिक्तोऽवयवी अस्ति तत्रैकावयवाकर्षणेन कृत्स्नोऽवयवी आकृष्यते । **वा.** * अवयवी वनादिवत् परमाण्वादिपुञ्जात्मक एव, नार्थान्तरं इत्याशङ्का तस्य अप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात् संगतिग्रहाद्यसंभवेन तन्मूलकवेदाप्रामाण्यावहा, इति तत्प्रामाण्यसिद्ध्यर्थमेव वनादिदृष्टान्तवैषम्योपपादनेन निरस्ता औत्पत्तिकसूत्रे वनवादे वार्तिककारैः । **बाल.** पृ. ७. * अवयवी सर्वेषु अवयवेषु व्यासक्तः । **भाट्ट.** १०।७।२. * **अवयविनां** अवयवैः सह समवायलक्षणः संबन्धः अपौरुषेयः । **ऋजु.** पृ. १८८.

* **अवयविविशेषगुणानां** अवयवगुणपूर्वकत्वनियमः । **मणि.** पृ. ५४.

* **अवयविसंयोगे च** अवर्जनीयः अवयवसंयोगः । **सोम.** ६।५।५.

* **अवयुत्यवादः** । अवयुत्य पृथक् कृत्वा वादः वदनं वचनं कथनम् । ' यु मिश्रणे अमिश्रणे च ' । अवान्तरसंख्यया महासंख्याया एव स्तुत्यादिकरणम् । यथा भाष्ये ' यत्र परा ( अधिका ) संख्या कीर्त्यते, तत्र अवयुत्यवादो भवति ( क्व चित् ) यथा द्वादशकपाले ' यदष्टाकपालो भवति ' इत्यादि ( जातेष्टौ ) । **के.** ३।७।१६।३५.

* **अवरोधनाम्नायः** वाजपेये ' ब्रह्मवादिनो वदन्ति । नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्रः । अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्ते इति । पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभते । अग्निष्टोममेतेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनः स्तोत्रम् । सारस्वत्याऽतिरात्रम् । मारुत्या बृहतः स्तोत्रम् । एतावन्तो वै यज्ञक्रतवः । तान् पशुभिरेवावरुन्धे ' इति । **वि.** १०।४।४.

♖ **अवशिष्टानामन्ते निवेशः इति** ( आगन्तूनामन्ते निवेशः ) **न्यायेन** वरुणलोकादनन्तरं इन्द्रलोकः, तदनन्तरं प्रजापतिलोकद्वारा परशिवलोकं प्राप्नोति । **श्रीकरः** ४।३।३ ब्रसू. । न्यायार्थस्तु आमन्त्रिताः शिष्टजनाः प्रथमासनेषु निवेश्यन्ते, अनामन्त्रितास्तु आगन्तवः अवशिष्टाः अन्ते निवेश्यन्ते इति । **के.**

अवश्यापेक्षिताऽनपेक्षितयोरपेक्षितं स्मरणीयमिति न्यायः। स्पष्टः। साहस्री. ६१.

* **अवसरसंगतिः**— यत्प्रसक्त्या यो विचारः, तत्समाप्तौ स एव बुद्धिस्थो भवति। सु. पृ. ३९२.

* **अवस्था हि विकारः**। अवस्था च अवस्थाऽन्तरोत्पत्तौ हेतुः। न च अवस्था अवस्थावतोऽन्या। बृहती. पृ. १६१.

* **अवहननं** अग्निचयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति, अथैतदुपदधाति' अत्र अदृष्टमात्रस्य प्रयोजनत्वात् सकृदेव। वि. ११।१।६. * अवहननं कृष्णलेषु न कर्तव्यं तुषविमोकासंभवात्। भा. १०।१।१।१ वर्णकं २, * अवहननं प्रोक्षणं निर्वपणं इत्येवमादयः औषधधर्माः। (औषधं व्रीह्यादि)। ३।१।४।७, * अवहननं महापितृयज्ञे धानासु भर्जनात् प्राक् कर्तव्यम्। ततो भर्जनम्। १०।२।३३, * **अवहनने** मन्त्रः 'अपहतं रक्षः इत्यवहन्ति' (इति एकत्र) 'अपहता यातुधाना इत्यवहन्ति' (इत्यन्यत्र)। ३।२।३।९, * **अवहननपेषणयोः** नियमविधिः 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' इति नानुवादः दर्शपूर्णमासयोः। ४।२।११।२६, * **अवहननमन्त्रस्य** प्रहारसमुदायार्थे सकृत् प्रयोगः दर्शपूर्णमासयोः। ११।४।१२।४२, * **अवहननमन्त्रावृत्तिः** नानाबीजेष्टौ प्रतिबीजं राजसूये। ११।४।१३।४३.

* **अवहन्ति**, पिनष्टि इत्यादीनां दृष्टप्रयोजनानां क्रियाणां आ तण्डुलादिनिर्वृत्तेः प्रयोगः स्यात्। भा. ११।१।५।२७.

* **अवहन्तिः** एको हि अधःस्तरणादिः तण्डुलपर्यन्तः पदार्थः। स्तरणादिः हन्तेरुपक्रमः, फलीकरणान्तश्च तस्यैव शेषः। यतो हन्तिः तण्डुलनिष्पत्त्यर्थः। भा. ५।२।७।१५, * अवहन्तिस्तु न स्त्री, न पुमान्, न नपुंसकमिति। ननु अवहन्तेरपि स्त्रीलिङ्गः शब्दोऽस्ति 'क्रिया' इति। अत्र ब्रूमः। न नियोगतः अवहन्तेः स्त्रीलिङ्गः शब्दः, पुंलिङ्गोऽपि तस्यास्ति 'अवघातः' इति। नपुंसकलिङ्गोऽपि 'कर्म' इति। ३।२।३।८, * संनिपत्योपकारी सः (**अवहन्तिः**)। ११।४।१३।४३.

* येषां तु तण्डुलफले एव मुसलस्य उद्यमननिपातनकर्मणि **अवहन्तिशब्दः** प्रवर्तते इत्युपगमः, तेषामा तण्डुलनिर्वृत्तेरेव अभ्यासः प्राप्नोति। स तु मन्द एवाभ्युपगमः। यत् कारणं विनाऽपि तण्डुलैः प्रयोगो दृश्यते 'कषायमवहन्ति' 'किण्वमवहन्ति' इति। न चासौ गौणः प्रयोगो विशेषाभावात्। अवयवप्रसिद्ध्या च अवघातमात्रवचन एव प्रतीयते। न च समुदायः अर्थान्तरे प्रसिद्धः। तण्डुलव्यापारस्य तु प्रायोवृत्तेः तत्र प्रयोगप्राचुर्यम्। भा. ११।१।६।२८.

* **अवान्तरप्रकरणं** अभिषेचनीयस्य विदेवनादिषु निराक्रियते विदेवनाधिकरणे (४।४।२।३-४)। के. * अवान्तरप्रकरणं, **ननु** एवं सति सर्वावान्तरप्रकरणोच्छेदः एव प्राप्नोति (प्रधानकथंभावस्य अभितो गमने अङ्गगुणस्य कस्य चित् असंभवात् संदंशानुपपत्तेः, न क्व चित् अवान्तरप्रकरणं स्यात् इत्याशङ्कते ननु इति। बलवता प्रमाणेन प्रधानकथंभावं बाधित्वा अङ्गगुणत्वावगमे संदंशसंभवेन परिहरति) उच्यते। '**परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः। ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते**॥' (पुनःशब्दस्य पश्चाद्भावार्थत्वात् चकारेण च प्राग्भावसूचनात् श्रुत्यादिभिः प्राक् पश्चाच्च अन्यप्रकरणस्थानां अङ्गानां अङ्गत्वे ज्ञाते संदंशसंभवात् अवान्तरप्रकरणमिष्यते इत्यर्थः। सर्वेषां च अवान्तरप्रकरणित्वेनाभिमतानां श्रुत्यादिभिः प्राक् तदङ्गत्वमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावात् न क्व चित् संदंशाभावः शङ्कनीय इत्याह—सर्वेषां हीति) सर्वेषां हि प्रयाजादीनामङ्गं किं चिदुक्त्वा पुनः परामर्शोऽस्ति इति तत्पर्यन्तावान्तरप्रकरणकल्पना भवति। अन्यथा हि अव्यवस्थैव स्यात् सर्वशेषाणां परस्परशेषत्वप्रसङ्गात्। वा. ३।१।१४।२४ पृ. ७४१, सु. पृ. १०७०, * अवान्तरप्रकरणं, ननु महाप्रकरणात् अवान्तरप्रकरणबलीयस्त्वस्य अभिक्रमणाधिकरणे (३।१।१०) वक्ष्यमाणत्वात् अन्नाद्यकामवाक्यस्थस्य यजेः अवान्तराधिकारलक्षणेन अवान्तरप्रकरणेन प्रकृतग्राहित्वात् बलीयस्त्वं भविष्यति इत्याशङ्क्ते—नन्विति (ननु अवान्तराधिकारस्य अस्ति विशेषः)। कथंभावात्मकस्य प्रकरणस्य

वाक्यैकवाक्यत्वकल्पनेन तादर्थ्यावबोधकत्वात् अवान्तरप्रकरणे च संदंशेन शीघ्रं एकवाक्यत्वावगमात् महाप्रकरणे तु संदंशाभावात् शीघ्रमेकवाक्यत्वानवगमात् संनिकर्षविप्रकर्षाभ्यां बलाबलविशेषो युक्तः। अधिकारात्मकस्य तु प्रकरणस्य प्रकृतत्वमात्रापेक्षित्वात् बहूनामल्पानां च प्रकृतत्वाविशेषात् तुल्यकालं ग्रहणावगतेः नावान्तरमहाधिकारयोः बलाबलविशेषोऽस्ति इत्याशयेन परिहरति--उच्यते इति ( उच्यते। अयमेव विशेषो यदेकत्र बहूनां ग्रहणं अपरत्र चाल्पानाम्। ग्रहणवेला तु तुल्यैव )। **सु.** पृ. ९११ ( **वा.** पृ. ५८७ ). * अवान्तरप्रकरणं प्रधानस्य अङ्गस्य वा। **बाल.** पृ. ९.

* **अवान्तरप्रकरणम्**। फलभावनाया अन्तराले यत् अङ्गभावनायाः प्रकरणं तदवान्तरं प्रकरणम्। तच्च अभिक्रमणादीनां प्रयाजादिषु विनियोजकम्। तच्च संदंशेन ज्ञायते, तदभावे अविशेषात् सर्वेषां फलभावनाकथंभावेन ग्रहणात्। संदंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोः अन्तराले विहितत्वं यथा अभिक्रमणम्। तद्धि ‘ समानयते जुह्वामुपभृतः ’ इत्यादिना किं चिदङ्गं विधाय विधीयते, पश्चादपि प्रयाजानुवादेन ‘ यो वै प्रयाजानां मिथुनं वेद ’ इत्यादिना किं चिदङ्गं विधीयते। अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति, तत्कथंभावाकाङ्क्षाया अशान्तेः। यथा आहुः ( वा. पृ. ७४१ ) ‘ **परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः। ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते॥** ’ ( दर्शपूर्णमासादिप्रकरणस्थानां प्रयाजादीनां श्रुत्यादिभिस्त्रिभिस्त्रिभिः कस्मिंश्चिदङ्गे ज्ञाते पुनश्च तैरेव प्रमाणैः अपरस्मिन् अङ्गे ज्ञाते संदंशेन संदंशसंभवेन तत् इष्यते अवान्तरप्रकरणं इष्यते , न सर्वत्र इति कारिकार्थः )। गृह्यते तेनैव इत्यनन्तरं ‘ अङ्गे ज्ञाप्ये ’ इति योज्यम्। तत् अवान्तरप्रकरणम्। एवकारो भिन्नक्रमः अङ्गे एव इति। ततश्च सत्यपि सामिधेन्यङ्गसंदंशमध्यपाते अनङ्गनिविन्मन्त्रैः व्यवहितस्योपवीतस्य न सामिधेन्यङ्गत्वं इति सूचितम्। **अलंकारः** )

**न** च अङ्गभावनायाः कथंभावाकाङ्क्षाऽभावात् कथं प्रयाजभावनाकथंभावेन अभिक्रमणं गृह्यते इति **वाच्यम्**। भावनासाम्येन सर्वत्र कथंभावाकाङ्क्षायाः सत्त्वात्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेत् इत्युक्ते, यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं, तस्य अस्त्येव कथंभावाकाङ्क्षा ‘ कथमेभिः अपूर्वं कर्तव्यं ’ इति , सा च संदंशपतितैर्वाचनिकैः स्मार्तैश्च आचमनादिभिः शाम्यति , तदभावे च स्वरूपनिष्पादनेन दर्विहोमन्यायेन ( ८।४।१ ) निवर्तते। एवं येष्वङ्गेषु संदंशाद्यभावः, तत्र उत्पन्नाऽपि आकाङ्क्षा तेनैव ( स्वरूपनिष्पादनेनैव ) निवर्तते, न तु सर्वथा तदभावः। तस्माद्युक्तमुक्तं अभिक्रमणं प्रयाजाङ्गं इति। तच्चेदं अवान्तरप्रकरणं महाप्रकरणात् बलीयः, संदंशपतितानां धर्माणां कैमर्थ्याकाङ्क्षायां प्रधानापूर्वात् प्रयाजाद्यपूर्वस्य झटिति उपस्थितेरिति। **मीन्या.** पृ. १९०--९३. * अवान्तरप्रकरणं महाप्रकरणात् बलीयः। तथा च **कौस्तुभः**— ‘ प्रकरणयोर्विरोधे अभिक्रमणादेः महाप्रकरणात् दर्शपूर्णमासाङ्गत्वप्रसक्तौ, प्रयाजाद्यङ्गत्वं अवान्तरप्रकरणात्। शेषानेकत्वे तु यत्र अनेकसमुदाये महाप्रकरणात् एकधर्मप्राप्तिः अवान्तरप्रकरणाच्च तद्विरुद्धधर्माणां तादृशस्थलमूह्यम् ’ इति। ३।३।७।१४ पृ. ३६३. * अवान्तरप्रकरणं, योग्यत्वं, एकवाक्यत्वं च महाप्रकरणात् बलीयांसि विनियोजकानि। **वा.** ३।१।१४।२४ पृ. ७४०. * अवान्तरप्रकरणं संदंशोद्भूतिकमेव। तच्च प्रकृतेर्नास्त्येव प्रकृत्यङ्गस्य तु प्रयाजानां अभिक्रमणाधिकरणे उक्तम् ( ३।१।१० )। विकृतेस्तु अवान्तरप्रकरणं संदंशोद्भूतिकं सप्तमे प्रणयनाधिकरणे ( ७।३।८ ) वरुणप्रघासानामुक्तम्। **बाल.** पृ. ११. * ‘ समिधो यजति ’ इत्यारभ्य आम्नातं **अवान्तरं प्रयाजप्रकरणम्**। तन्मध्ये अभिक्रमणमाम्नातम्। तस्य च अभिक्रमणविधेः उभयतः प्रयाजविषयैर्वाक्यैः संदष्टत्वात् अभिक्रमणं प्रयाजमात्रे निविशते इति ( वार्तिककार-- ) राद्धान्तः। अस्मिन्नपि पक्षे महाप्रकरणं न विरुध्यते , प्रयाजद्वारा दर्शपूर्णमासयोर्निवेशात्। **वि.** ३।१।१० वर्णकं २. * **अवान्तरप्रकरणात्** प्रणयनस्य गोदोहनाश्रयत्वम्। **सु.** पृ. ८५५, * **अवान्तरप्रकरणमहाप्रकरणयोः** कतरत् विनियोजकं इति उपवीतमुदाहृतम्। ( तथा च एतदर्थमेव व्यवायाधिकरणं

सर्वे इति ज्ञेयम् )। **वा.** ३।१।११।२१ पृ. ७३२.
* **अवान्तरप्रकरणाभिव्यञ्जकः** संदंशः । **सु.** पृ. ८९१.

* **अवान्तरप्रयोगविधिः** पुरुषार्थो यथा 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायां अमावास्यया यजेत' इत्यादिः। अत्र च फलवाक्ये ( 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र ) करणत्वेनेव प्रयोगावच्छेदेन कर्मणो विधेयत्वात् तस्य करणत्वाक्षिप्तं अङ्गसाहित्यं अन्योन्यमपि विवक्षितम्। कालस्यापि च विधेयत्वात् तदेकत्वमपि विवक्षितम्। विधेयत्वमेव च विवक्षाबीजं, नोपादेयत्वं, तद्विशेषणत्वं वेति नञ्टीकायामुक्तं '**नोपादेयत्वमेवैकं विवक्षाकारणं मतम्। विशेषणविवक्षायां कारणं हि महद्विधिः॥**' ( वा. पृ. २१२ ) इति। ( ननु अनुवाद्यत्वेऽपि उपादेयत्वात् विशेषणविवक्षा भविष्यति इत्याशङ्क्याह— नोपादेयत्वमिति। उद्देश्यविशेषणविवक्षायां वाक्यभेदापत्तेः तत्परिहारार्थत्वात् नोपादेयत्वस्य विवक्षाकारणत्वेऽपि अविधेयविशेषणस्य विधिना स्प्रष्टुमशक्यत्वात् विधेयत्वमेव प्रधानं कारणमित्यर्थः। शुक्रान्वारम्भणादौ प्रकरणप्राप्तस्यापि यजमानस्य कर्तृत्वेन विधानात् विशेषणविवक्षा युक्ता इति भावः। **सु.** पृ. २०२ ) एकं मुख्यम्। अतः त्रिकस्यत्रिकस्य एकप्रयोगतासिद्धिः ( पौर्णमासी अमावास्या इति ) एकादशोक्ता पौर्णमास्यधिकरण- ( २।२।३ ) वार्तिकोपपादिता उपपन्ना। **बाल.** पृ. १३.

* **अवान्तरवाक्यं** 'अभिषुत्य हुत्वा भक्षयन्ति' इति। तत्रैतत् अवान्तरं वाक्यं 'हुत्वा भक्षयन्ति' इति। न च महावाक्ये सति अवान्तरवाक्यं प्रमाणं भवति, पदान्तरस्य बाधनात्। यथा 'नोद्यन्तमादित्यमीक्षेत' इति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यात् ईक्षाविधानं ( 'उद्यन्तमादित्यमीक्षेत' इति )। **भा.** ६।४।७।२५. * अवान्तरवाक्यं 'समिधो यजति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादि। अवान्तरवाक्यं द्विविधं विधिर्मन्त्रश्च। अर्थवादस्तु तात्पर्याभावेऽपि स्तुतिलक्षकवाक्यार्थप्रतिपादकत्वमात्रेण पृथक् व्यपदिश्यते। **बाल.** पृ. ९. * **अवान्तरवाक्यानि** सर्वत्र महावाक्येषु अप्रमाणं, महासंख्यास्विव अवान्तरसंख्या भवन्ति। न च कदा चित् एतावन्मात्रेण समाप्तेर्नैराकाङ्क्ष्यदर्शनात् सर्वत्र नैराकाङ्क्ष्यम्। योग्यपदान्तरानुच्चारणेन हि सर्ववाक्यानि पर्यवस्यन्ति। इतरथा पुनः श्रुतपदातिरेकेणापि निपुणदृशां भवत्येवापेक्षा। सा च अनुपलब्ध्या निवर्तते। तथा च यत्रोपलप्स्यन्ते तत्र एकवाक्यतां गमयिष्यन्ते। अन्यथा हि असौ तदुच्चारणेऽपि न स्यात्। तदिह महावाक्येन विना, अवान्तरवाक्यं प्रमाणं, तत्सद्भावे तु न। **वा.** १।२।१।७ पृ. ११७.

* **अवान्तरवाक्यार्थ**प्रतिपादनमात्रेण आकाङ्क्षापर्यवसाने वाक्यान्तरान्वयायोगः। **सु.** पृ. ५२५.

* **अवान्तरविधिशक्तिप्रतिबन्धः।** '**प्रतिषेधोपसंहारिमहावाक्यतिरस्कृता। नावान्तरविधेः शक्तिः प्रादुरस्ति कथं चन॥**' ( न सुरां पिबेत् इति महावाक्ये 'सुरां पिबेत्' इति अवान्तरविधेः शक्तिः न प्रादुर्भवति। अनेन 'वाक्यस्वरसात् अवान्तरवाक्यस्य विधिपरत्वं प्रतीयते' इति शङ्का निरस्ता)। **वा.** १।३।३।७ पृ. २१३.

**अवान्तरव्यापारः।** न च प्रधानक्रियायाः सर्वाण्येव साक्षात् साधनानि भवन्ति, अवान्तरव्यापाराधीनत्वात् संबन्धस्य। अरुणादीनां च योग्यत्वात् द्रव्यपरिच्छेद एव स्वव्यापारो विज्ञायते। तत्रैषां कर्तृत्वात् इतरत्र करणत्वं भविष्यति। **वा.** ३।१।६।१२ पृ. ६९३.

* **अवान्तरापूर्वाणि।** आग्नेयादयः षड् यागाः भिन्नक्षणवर्तिनो विनश्वराः संभूय फलापूर्वं जनयितुं न शक्नुवन्ति, ततः तज्जननसमर्थानि आग्नेयादिजन्यानि षडवान्तरापूर्वाणि कल्प्यानि। तेषु पुरोडाशद्रव्यकयागजन्यापूर्वं तु तेन व्यवहितम्। **वि.** ३।१।४. * आग्नेयाद्यवान्तरापूर्वाणि परमापूर्वसिद्ध्यङ्गत्वात् पारंपर्येण फलवन्ति। **वा.** ३।१।४।१० पृ. ६६९.

* **अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत्** ( १०।४।१४।२७ ) इत्यनेन अर्थस्य अग्नेः चोदकप्राप्तस्य च अग्निशब्दस्य केवलाभिधानेऽपि अनपायात्, यथा 'सा वा एषा सर्वदेवत्या यदजा वशा

वायव्यामालभेत भूतिकामः ' इति अजाशब्देनापि विहिते द्रव्ये वशाशब्दवाच्यवन्ध्यात्वगुणयुक्ते अतिदेशप्राप्तौ न छागशब्देन निर्गुणेन चाभिधानं, तथा इहापि ( अग्नये पावकाय इत्यादौ ) अविकारः स्यात् इति पूर्वपक्षः । सु. पृ. ४६८.

* **अविगीतस्मृत्या ।** आप्ताविगीतस्मृत्या अनाप्तविगीतस्मृतिर्बाध्यते । **वा.** ३।३।७।१४ पृ. ८६०.

**' अविच्छिन्ने कथंभावे यत् प्रधानस्य, पठ्यते । अनिर्ज्ञातफलं कर्म, तस्य प्रकरणाङ्गता ॥ '** ( वा. ३।३।४।११ पृ. ८१७ ) **इति न्यायः** । राजसूये कथंभावापेक्षा हि पवित्रादारभ्य क्षत्रस्यधृतिं यावत् अनुवर्तते । तथाच ' अविछिन्ने...प्रकरणाङ्गता ' इति न्यायात् राजसूयाद्यङ्गता शौनःशेपोपाख्यानादीनाम् । **भामती.** ३।३।२५ ब्रसू. । अत्र **कल्पतरुः**—पवित्रः सोमयागविशेषः । क्षत्रस्य धृतिः इष्टिः । अत्र **परिमलः**– क्षत्रस्य धृतिः सोमयागविशेष एव । इष्टिः इति तु आचार्यैः शाखाऽन्तरं कल्पसूत्रान्तरं वा दृष्ट्वा उक्तम् । इति ।

* **'अविदहता शृतंकृत्यः'** इति विधेः 'यो विदग्धः स नैर्ऋतः ' इति शेषः । **भाट्ट.** ३।४।७.

* **अविदितस्य**— आलभेत निर्वपेत् इति च नैतौ विधातारौ, अविदितस्यार्थस्य वक्ता विधायको भवति, न चैतयोरविदितोऽर्थः । **भा.** २।३।५।१२.

* **अविदितबोधनं** विधिः । **सु.** पृ. ४७२.

* **अविद्यातः** कथमभ्युदयः शक्यते वक्तुं, अविद्या हि प्रत्यवायस्य निमित्तम् । सत्यं यथा भवानाह । प्रत्यवायस्तु आपेक्षिकः । सर्वे हि क्षयि प्रत्यवायायैव । किंतु प्रत्यवाय एव एकत्र, स चोपायश्च अन्यत्रेति विशेषः । **बृहती.** पृ. ११८.

* **अविद्यानिवृत्तिः ।** उपनिषज्जन्यात्मज्ञानस्य अविद्यानिवृत्तिद्वारा मोक्षजनकस्य प्रमाणान्तरप्राप्तत्वात् नालौकिकत्वं इति न तत्र धर्मत्वम् । **मणि.** पृ. ९.

* **अविधित्वविधित्वयोरुपसंहाराभावेन** होमान्तरेषु ( ' पृथिव्यै स्वाहा ' इत्यादिभिन्नेषु ) अनारभ्यविहितयोः वषट्कारस्वाहाकारयोः विकल्पः सुस्थितो भवति । **वि.** १०।८।१०.

* **अविनाभावो हि** अनेककार्यकारणस्वस्वामिसहचरभावादिप्रभेदभिन्नः । **वा.** १।२।३।२६ पृ. १३९.

**' अविप्लुतब्रह्मचर्यो** लक्षण्यां स्त्रियमुद्वहेत् ' इति वचनेन विप्लुतब्रह्मचर्यस्य अवकीर्णिनः अकृतप्रायश्चित्तस्य विवाहनिषेधात् । **भाट्ट.** ६।८।४.

* **अविभक्तश्च** अङ्गप्रधानानां प्रयोगः इत्युक्तं ' अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् ' इत्यत्र ( ११।२।२।८ ) । **भा.** ११।२।८।३२.

* **अविमांसानां** अजमांसानां च विषमा पक्तिः । यावता कालेन आजानि पच्यन्ते, तावता आविकानि विलीयन्ते । **भा.** ११।४।१०।३७.

**अविरविकन्यायः ।** अयमेव अव्याविकन्यायः । भाष्येऽपि ( महाभाष्येऽपि ) अविरविकन्यायेन इति द्वंद्वगर्भे तत्पुरुषे पूर्वसमासपूर्वपदस्थायाः सुपः 'सुपो धातुप्रातिपदिकयोः ' ( पा० २।४।७१ ) इति प्रत्यक्षोपदिष्टोऽपि लुक् न कृतः । **वा.** १।३।८।२४ पृ. २६०. (भाष्यकृता पतञ्जलिना) 'कर्मण्यण्' इति सूत्रे (पा०३।२।१) 'हिमवन्तं शृणोति, आदित्यं पश्यति' इति दृशिशृणोतिभ्यां अण्प्रत्ययः कस्मान्न भवति इत्याशङ्क्य अनभिधानात् इति परिहार उक्तः । यथा अविकशब्दस्य स्वार्थिककप्रत्ययान्तस्य अविशब्दसमानार्थत्वेऽपि ' तस्य विकारः ' इति विकारतद्धिते लक्षणानुगतेऽपि ' आविकं मांसं ' इति प्रयोगदर्शनात् अविकशब्दादेव उत्पद्यते नाविशब्दात्, तथा अत्रापि प्रयोगाभावेन अभिधानसामर्थ्याभावात् न अण्प्रत्ययोत्पत्तिः इत्युपपादनाय अविरविकन्यायेन इति दृष्टान्ते अभिहिते अपशब्दः प्रयुक्त इत्याह–भाष्येऽपीति । अविश्च अविकश्च अव्यविकौ, तयोर्न्यायः इति द्वंद्वगर्भः तत्पुरुषः । **सु.** पृ. २७५.

* **अविरोधसंभवे** विरोधो नाश्रीयते । **वा.** २।२।७।२१ पृ. ५२५.

* **अविवाक्यं** नाम चतुर्विंशस्तोमकं दशममहः अग्निष्टोमः सोमो रथंतरसामा द्वादशाहे । नात्र कश्चन कस्मै चन विस्पष्टं ब्रूते । प्रसङ्गे सति ये ब्राह्मा दशीकवः ते विब्रूयुः । यदि तत्र न विन्देयुः अन्तःसदसात्

व्युच्यम् ( वक्तव्यं ) । यदि तत्र न विन्देयुः गृहपतिना व्युच्यम् । 'अग्ने नय' इत्यनुष्टुभमुक्त्वा तत् ब्रूयात् । **सत्याषाढः** १६।४।३–७.

* **अविवृद्धस्तोमकाः** क्रतवः । प्रकृतौ यत्र स्तोत्रे यावन्तः स्तोमा भवन्ति ततो न्यूनाः स्तोमाः, तत्र स्तोत्रे यत्र क्रतौ भवन्ति, ते अविवृद्धस्तोमकाः क्रतवः । येषु तु अधिकाः ते विवृद्धस्तोमकाः । **के.** * अविवृद्धस्तोमकाः विवृद्धस्तोमकाश्च विकृतिरूपाः के चित् क्रतवः । **वि.** १०।४।१२. * **अविवृद्धस्तोमकेषु** क्रतुषु प्राकृतं साम निवर्त्येत, यावता निवृत्तेन सा संख्या पूर्यते तावत् प्राकृतं बाधितव्यं, अन्यत् प्राकृतमेव स्यात् । **भा.** १०।४।१०।२०, * **अविवृद्धस्तोमकक्रतुषूपदिष्टैः** सामभिः प्राकृतसाम्नां बाधः । १०।४।१०।२०.

⌛ **'अविशिष्टं हि लक्षणं' इति न्यायेन** उपलक्षणानां विशेषणविशेष्यत्वायोगः । **सु.** पृ. ११२२ । 'सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्' ( ३।१।७।१४ ) इति सूत्रस्यायमक्षरार्थः— सर्वेषां ग्रहाणां संमार्जनं कर्तव्यं, नैकस्यैव, ग्रहत्वस्य लक्षणत्वात् कृत्स्नव्यक्त्युपस्थापकत्वात् । उद्देश्यताऽवच्छेदकत्वादिति वा । अविशिष्टं समानं हि यस्मात् लक्षणं ग्रहत्वरूपं सर्वग्रहेषु इति । **के.**

⌛ **अविशिष्टस्तु वाक्यार्थः** ( १।२।४।३२ ) **इति न्यायः** । प्रकरणवतोऽर्थस्य संनिधाने यमर्थमामनन्ति ( मन्त्राः ), स तस्य साधनभूतः इत्येव गम्यते । **भा.** ३।३।७।१४ पृ. ८४३ । तदेतत् अविशिष्टस्तु वाक्यार्थे इत्यत्र वर्णितम् । **वा.** पृ. ८४३. ( लोके वेदे च क्रियाकारकसंबन्धरूपो वाक्यार्थः समानः इति सूत्राक्षरार्थः ) । * अविशिष्टस्तु वाक्यार्थः **इति न्यायात्** मन्त्राणामिव वेदान्तानां अर्थपरत्वं औत्सर्गिकम् । **भामती.** १।१।१ पृ. ४६ ब्रसू. * **अर्थपरता न दृष्टार्थत्वात् स्वाध्यायाध्ययनविधेः कर्मवत् अविशिष्टस्तु वाक्यार्थ इति न्यायात्** । **विवि.** पृ. २७०–७१.

* **अविशिष्टफलानां** प्रायश्चित्तानां विकल्पः । **भाट्ट.** १२।३।५.

⌛ **अविशेषेण यच्छास्त्रमन्याय्यत्वाद् विकल्पस्य तत् संदिग्धमाराद् विशेषशिष्टं स्यात्** । १०।८।८।१६ ॥

अविशेषेण विशेषमनुल्लिख्य यत् शास्त्रं, सामान्यशास्त्रं, तत् यावद्विशेषविषयं कतिपयविशेषविषयं वेति संदिग्धं भवति, अतः तत् आरात् विशेषशास्त्रात् दूरात् भवति, विशेषशास्त्रं दृष्ट्वा दूरं भवति, विशेषशास्त्रविषये न प्रवर्तते इत्यर्थः । तस्मात् तादृशे स्थले विशेषशिष्टं विशेषशास्त्रेण यत् शिष्टं विहितं तदेव स्यात् । सामान्यविशेषोभयशास्त्रबलात् विकल्पस्तु न भवति । विकल्पस्य अष्टदोषदुष्टत्वेन अन्याय्यत्वात् । यथा ज्योतिष्टोमे 'वर्त्मनि जुहोति' हविर्धानशकटचक्रस्य वर्त्मनि चक्रगमनेन उत्पन्नायां रेखायां जुहोति इति विशेषशास्त्रम् । 'यदाहवनीये जुहोति' इति सामान्यशास्त्रम् । तेन वर्त्मशास्त्रस्य विषये आहवनीयशास्त्रं न प्रवर्तते । एवं राजसूये 'वल्मीकवपामुपगृह्य जुहुयात्' इत्याद्यपि बोध्यम् । तस्मात् वर्त्मादिहोमं वर्जयित्वा अन्येषु होमेषु आहवनीयः स्यात् । इति सिद्धान्तः । **के.**

* अविशेषेण यच्छास्त्रं० इति **दशमाधिकरणन्यायेनापि** काम्यं नित्यस्य बाधकम् । **सु.** पृ. ४८८.

* **अविशेषादनर्थकं हि स्यात्** ( २।२।२।२ ) इति अभ्यासाधिकरणे स्थितवेदप्रमाणलक्षणबलेन उक्तम् । विधेयान्तररहितश्च अनन्यपरो विधिः कर्मस्वरूपमेव विदधत् पूर्वविहितात् अवश्यमेव कर्मान्तरं करोति इति विधित्वनिर्णयफलोपजीवनम् । **वा.** ३।१।१।१ पृ. ६४९. ( 'एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्' । 'समिधो यजति' इत्यादौ एकस्य यजतेः पुनःश्रुतिः एवं शब्दान्तरवत् भेदिका स्यात् अविशेषात् अर्थभेदाभावात् इत्यक्षरार्थः सूत्रस्य ) ।

* **अविशेषप्रवृत्तस्यापि** वाक्यस्य विशेषपरता दशमे ( १०।३।२ ) उक्ता । **बाल.** पृ. १०१.

⌛ **अविहितमप्रतिषिद्धमनुमतं भवति इति न्यायेन** बौधायनसिद्धान्तः ( समुद्रयानानिषेधसिद्धान्तः )

गौतमादीनामपि संमत एव । **सना० प्रदीपे** प्रमाणप्रकाशः पृ. २९५.

* **अविहितस्वाहाकारेषु** प्रदानेषु स्वाहाकारविधानं इत्यधिकरणार्थः । **वि.** १०।८।१०.

* **अविहितेतिकर्तव्यताकं** कर्म विहितेतिकर्तव्यताकात् धर्मान् गृह्णाति इत्युक्तम् ( ७।४।१ ) । **भा.** ८।४।४।९, * **अविहितेतिकर्तव्यताकेषु** सौर्यादिषु इतिकर्तव्यताया अतिदेशः इत्यधिकरणार्थः । ७।४।१।१.

* **'अवी द्वे धेनू ददाति अजमृषभम्'** । पदान्तरसमभिव्याहाराभावे धेनुपदमात्रश्रवणे सर्वत्र गोवृत्तिधानादिगुणस्यैव प्रतीतेः धेन्वादिशब्दानां गोमात्रवृत्तिविजातीयधानादिगुणे एव शक्तिः । वैजात्यं च गोमात्रवृत्ति धानादिनिष्ठमनुभवसिद्धम् । अव्यादिपदसमभिव्याहारे च धेन्वादिपदस्य लक्षणा । **भाट्ट.** १०।२।२८.

* **अवेः अङ्गानि** सहसा पच्यन्ते अजाऽङ्गानि तु विलम्बेन । वि. ११।४।११.

* **अवेक्षणं** आज्यधर्मः । **वि.** ३।१।४, भक्षव्यापारविशेषश्च । तत्र सोमे 'नृचक्षसं त्वा' इत्यादिर्मन्त्रः । ३।२।९. * **अवेक्षणग्रहणसम्यग्जरणेषु** भक्षानुवाकः यथालिङ्गं विनियोक्तव्यः इति सिद्धान्तपक्षः । **वा.** ३।२।९।२५. * प्रकृतौ आज्योत्पवनावेक्षणयोः प्रयोजनमेतत्, यत् आज्यस्य अपरेण द्रव्येण असंसर्गः । **भा.** ५।२।८।१६.

* **अवेष्टयो** द्विविधा राजसूये भूतानामवेष्टयः, दिशामवेष्टयश्चेति । भूतानामवेष्टयोऽपि द्विविधाः 'पृथिव्यै स्वाहा' इत्यादयः षट् पूर्वा अवेष्टयः, 'अद्भ्यः स्वाहा' इत्यादयश्च उत्तराः । दिशामवेष्टयस्तु एकादश यथा 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालं ऋषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा, आदित्यां मल्हां गर्भिणीमालभते, मारुतीं पृश्निं, पष्ठौहीमश्विभ्यां, पूष्णे पुरोडाशं द्वादशकपालं निर्वपति, सरस्वते सत्यवाचे चरुं, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वं शुष्कदृतिर्दक्षिणा' ( तैसं. १।८।१९ ) । **वि.** २।३।२. * **अवेष्टिः** । अन्नाद्यकामवाक्यैकवाक्यत्वलभ्यस्य 'राजन्योऽन्नाद्यकामो यजेत' इति फलपदानुषङ्गस्य 'ब्राह्मणोऽन्नाद्यकामः' 'वैश्योऽन्नाद्यकामः' इतिवत् राजन्यस्यापि अविशेषात् तत्प्रयोगस्यापि फलभेदात् भेदावगतिः । **सु.** पृ. ९१२. * अवेष्टिः द्वेधा राजसूये अन्तःप्रयुज्यमाना बहिःप्रयुज्यमाना चेति । तत्र बहिरवेष्टौ 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं' इति विधीयते । तथा चानेन वाक्येन ब्राह्मणादिकर्तृकं गुणविशिष्टं कर्मान्तरं विधीयते । **वि.** २।३।२. * अवेष्टिः । 'यदि राजन्य ऐन्द्रं मध्ये निधाय आहुतिं हुत्वा अभिघारयेत्' इत्यनुषङ्गलभ्यस्य राजन्यकर्तृकप्रयोगविषयैन्द्रमध्यनिधानपूर्वकाभिघारणविधिवाक्यस्य तन्त्रप्रयोगं विना अनुपपत्तेरपि प्रयोगभेदोऽवसीयते । **सु.** पृ. ९१२. * अवेष्टिः राजसूयात् बहिरपि । न च तत्र दक्षिणाभेदः । नहि राजसूयिक्यो दक्षिणास्तत्र प्राप्यन्ते 'एतयैव अन्नाद्यकामं याजयेत्' इत्येकवचनान्तेन शब्देन फलं प्रति निर्देशात् सहप्रयोग एव । **भा.** ११।४।३।९.

**अवेष्टेः ब्राह्मणादिकर्तृकायाः राजसूयात् भिन्नतन्त्रता ॥**

**अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्** । ११।४।३।९ ॥

**भाष्यं**— तस्मिन्नेव राजसूये अवेष्टिः, आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा,... बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणा इत्याम्नाता । तस्यां चिन्त्यते किमङ्गानां भेदः, अथ तन्त्रभाव इति । किं प्राप्तम् ? अवेष्टौ चैकतन्त्र्यं स्यात् । तन्त्रतालिङ्गदर्शनात् । लिङ्गं हि तन्त्रभावस्य सूचकं दृश्यते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं' इति । सामस्त्ये च हविषां मध्ये निधानमुपपद्यते । एकतन्त्रे च सामस्त्यम् । तस्मादैकतन्त्र्यम् । ननु लिङ्गमुपदिश्यते, कुतः प्राप्तिः ? सह चोदनया प्राप्तिः । 'अथैता दिशामवेष्टयः । इमं वा अथ तं लोकं पुनरुपावरोहन्ति' इति । अवेष्टिरिति

चैकवच्छ्रुतेः । ' एतयैवान्नाद्यकामं याजयेत् ' इति च ।

**टुप्**— ' बार्हस्पत्यं मध्ये विधाय ' इति मध्यशब्दोऽयम् । यदि अन्यान्यपि हवींषि तन्त्रेण क्रियन्ते, एवं मध्यशब्दो भवति । ' आहुतिमाहुतिं हुत्वा ' इति तन्त्रे एवोपपद्यते । ' एतया यजेत ' इत्येकवचनप्रयोगः श्रूयते । यदि भेदेन प्रयोगो भवेत्, तथा सति प्रयोगे बहुवचनं श्रूयेत । तस्मात् प्रयोगे एकवचनश्रवणात् तन्त्रम् ।

**वचनात् कामसंयोगेन । ९ ॥**

**भाष्यं**— न वा तन्त्रभावः । कुतः ? उक्तो न्यायः, ' प्रतिदक्षिणं वा कर्तृसंबन्धः स्यात्० ' इति ( ११।४।१।२ ) । लिङ्गदर्शनादिति यदुक्तं, तत्र ब्रूमः । वचनादियं कामसंयोगेनापि श्रूयते, ' एतयैवान्नाद्यकामं याजयेत् ' इति । तत्रैतद्दर्शनम् । न च तत्र दक्षिणाभेदः । नहि राजसूयिक्यो दक्षिणास्तत्र प्राप्यन्ते । ' एतयैवान्नाद्यकामं याजयेत् ' इत्येकवचनान्तेन शब्देन फलं प्रति निर्देशात् सहप्रयोग एव, तत्रैतद्दर्शनमुपपद्यते । तस्मात् तदपेक्षमेतत् ।

**टुप्**— ' प्रतिदक्षिणं वा कर्तृसंयोगात् ' इत्यनेन न्यायेन तन्त्रभेदः प्राप्नोति । ' मध्ये निधाय ' इत्यनेन लिङ्गेन च तन्त्रं प्राप्नोति । तत्र को निर्णयः, भेदेन वा, तन्त्रम् ? उच्यते । ' एतयाऽन्नाद्यकामो यजेत ' इति कामसंयोगेन श्रूयते । तत्र योऽन्नाद्यं कामयमानः करिष्यति, तस्य तन्त्रेण प्रयोगो भविष्यति । भेदेन क्रियमाणायां यत् प्रयोगे एकवचनं, तद्बाध्येत । तस्मादेकवचनादनन्यथासिद्धलिङ्गाच्च कामे तन्त्रेण प्रयोगः । क्रत्वर्थायां तु अवेष्टौ उभयाभावाद्दक्षिणाभेदाच्च भेदेनैव प्रयोगः ।

**क्रत्वर्थायामिति चेन्न, वर्णसंयोगात् । १० ॥**

**भाष्यं**— अथ पश्यसि क्रत्वर्थायामेवैतद्दर्शनं भवतु । एवं प्रकृतशेषत्वं भविष्यतीति । तन्न । कुतः ? वर्णसंयोगात् ' यदि ब्राह्मणो यजेत ' ' यदि वैश्यः ' इति । न च क्रतौ ब्राह्मणवैश्यौ स्तः । राजन्यस्यैव राजसूयः, ' राजा राजसूयेन ' इति वचनात् । तस्मादक्रत्वर्थायामेतद्दर्शनम् ।

**शा**— राजसूये अवेष्टिर्नामेष्टिः ' आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा ' इत्यादिपञ्चहविष्का । सा चेयं ' ईश्वरो वा एष दिशोऽनून्मदितोर्यद् दिशोऽनुव्यवस्थापयन्ति, दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय ' इत्येवं दिग्व्यवस्थापननिमित्तोन्मादपरिहारार्थतया श्रूयमाणा राजसूयान्तर्गता इति तावदविवादम् । ( दिशोऽनु तांतां दिशमनु । उन्मदितोरीश्वरः उन्मत्तो भवितुं समर्थः स्यात् । यजमानस्यानुन्मादाय एता दिशामवेष्टयो भवन्ति, तथा सति दिक्षु प्रतिष्ठितो भवतीत्यर्थः । दिशां संबन्धिनां उन्मादयितॄणां अवयजनहेतुत्वात् दिशामवेष्टय इति भट्टभास्करः । **सोम.** )

**सोम**— पूर्वत्र वरणवत् इहापि अङ्गानुष्ठानं तन्त्रं इत्युत्थानात् **संगतिः** । बहिःप्रयोगायां मध्येनिधानादिना समानतन्त्रत्वस्य आवश्यकत्वात् न तत्रायं विचारः । किंतु क्रतुमध्यस्थायाम् । अवेष्टिः इति चैकत्वं याज्ञिकप्रयोगगतं न तु श्रुतिगतं, तत्र 'दिशामवेष्टयो भवन्ति' इति बहुत्वस्यैव अवगमात् । यद्यपि यथोत्पन्नाया एव कामे विधानं, तथापि मध्येनिधानविधिबलात् अन्तःप्रयोगे सावकाशत्वाच्च बहिःप्रयोगे दक्षिणाभेदः परित्याज्यः । **अप्पयदीक्षितैस्तु** परिमले दक्षिणाशब्दो बहिःप्रयोगे अवयवपरः, अन्तःप्रयोगे मुख्यः । न च तत्रापि सोऽवयवलक्षकः इत्यत्र मानमस्ति मुख्यत्वोपपत्तेः इत्युक्तम् । **तच्चिन्त्यम्** । **सूत्रे** लिङ्गदर्शनं मध्येनिधानदर्शनमभिमतम् ।

**वि**—' अवेष्टावङ्गतन्त्रत्वं भेदो वा, लिङ्गतोऽग्रिमः ।, नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगम् ॥ ' बहिःप्रयोगे तन्त्रं, अन्तःप्रयोगे भेदः इति निर्णयः ।

**भाट्ट**—राजसूये अवेष्टिसंज्ञकानि पञ्च कर्माणि 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा ' इत्येतैर्वचनैर्विहितानि । तत्रापि उत्पत्तिवाक्ये दक्षिणाभेदश्रवणात् कर्तृत्वभेदेन पूर्ववत् प्रयोगभेदः । **न च** ' यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा अभिघारयेत् ' इत्यादिवचनैर्मध्येनिधानादिरूपगुणसामर्थ्येन पञ्चहविष्कैकेष्टिप्रयोगावगतेः

उत्पत्तिवाक्ये दक्षिणाशब्दो दक्षिणावयवपर इति **वाच्यम्**। तस्य ब्राह्मणादिकर्तृकत्वेन अन्नाद्यार्थं बहिःक्रतुप्रयोगत्वेन स्थापितत्वात् राजसूयमध्ये क्रियमाणानां तेषां पृथक्प्रयोगत्वोपपत्तेः। न च राजसूयप्रकरणपठितानामपि एषां निरवकाशेन विशेषवचनेन ब्राह्मणादिकर्तृकत्वेन अन्नाद्यर्थत्वावगमात् सामान्यविहितसावकाशस्वाराज्यसंबन्धानुपपत्तेः, अन्तःक्रतुप्रयोगे एव प्रमाणाभावः, स्वाराज्यार्थे अन्तःक्रतुप्रयोगस्यापि द्वितीये ( २।३।२ ) कौस्तुभे व्यवस्थापितत्वात्। **न च** एवमपि बहिःप्रयोगानुरोधेन दक्षिणाशब्दस्य अवयवपरत्वावश्यंभावे अन्तःक्रतुप्रयोगेऽपि मिलिताया एव दक्षिणात्वात् कथं प्रयोगभेद इति **वाच्यम्**। दक्षिणाशब्दस्य अवयवपरत्वे लक्षणापत्तेः प्रत्येकं दक्षिणात्वावगमेन प्रयोगभेदावश्यंभावात्। तस्य च मध्येनिधानादिरूपगुणानुरोधेन ब्राह्मणाकर्तृकप्रयोगे निवेशासंभवेऽपि अन्तःक्रतुप्रयोगनिवेशे बाधकाभावः। **न च** एवं बहिःक्रतुप्रयोगे उपदिष्टदक्षिणाऽनापत्तिः, दक्षिणायाः स्वस्वमेयप्रयोगद्वारकत्वेन पञ्चहविष्कैकेष्टिप्रयोगे • अङ्गत्वानुपपत्तेरिति **वाच्यम्**। तत्प्रयोगस्य दक्षिणापेक्षायां सति संभवे तत्तत्प्रधानाङ्गत्वेन अवगतायास्तस्या एव उपस्थितत्वात् आग्नेयीन्यायेन ( ३।२।८ ) ग्रहणोपपत्तेः। अस्तु वा तत्र आतिदेशिकी एव दक्षिणा सर्वथा अन्तःक्रतुप्रयोगभेदः।

**मण्डन**—'अवेष्टौ न क्रतौ तन्त्रम्।' क्रतौ प्रयोगे।

**शंकर**—'नावेष्टावेकतन्त्रत्वम्।'

* अवेष्टेः राजसूयात् बहिष्प्रयोगे अङ्गानां तन्त्रम्। **वि.** ११।४।३. * अवेष्टेः राजसूयान्तःप्रयोगे अङ्गानां न तन्त्रम्। **भा.** ११।४।३।८-१०.

**अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्। ११। ४।३।९॥**

राजसूये दिशामवेष्टयः नाम पञ्च इष्टयः 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्यादयः। अस्यां अवेष्टौ अङ्गानां ऐकतन्त्र्यं एकतन्त्रता स्यात्। लिङ्गदर्शनात्। 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायं आहुतिमाहुतिं हुत्वाऽभिघारयेत्' इति तन्त्रभावस्य लिङ्गं दृश्यते। तन्त्रभावे सत्येव बार्हस्पत्यस्य मध्ये निधानमुपपद्यते, न तन्त्रभेदे। तस्मात् तन्त्रम्। इति पूर्वः पक्षः।

**वचनात् कामसंयोगेन। १०॥**

न तन्त्रभावः, वचनात् इयं अवेष्टिः कामसंयोगेन फलसंयुक्ताऽपि श्रूयते 'एतयैवान्नाद्यकामं याजयेत्' इति। तस्मात् राजसूयात् भिन्नतन्त्रेयं इति सिद्धान्तः।

**क्रत्वर्थायामिति चेत्। ११॥**

पूर्वपक्षी आह। उक्तं लिङ्गदर्शनं क्रत्वर्थायां राजसूयाङ्गभूतायामेव अवेष्टौ स्यात् न स्वतन्त्रायां इति चेत्।

**न, वर्णसंयोगात्। १२॥**

सिद्धान्ती आह। न क्रत्वर्थायां लिङ्गदर्शनमुपपद्यते वर्णसंयोगात् 'यदि ब्राह्मणः' 'यदि वैश्यः' इति वर्णेन संयोगः श्रुतः। न च ब्राह्मणवैश्ययोः राजसूयाधिकारः। तस्मात् राजसूयात् भिन्नतन्त्रेयं अवेष्टिः। तत्र अङ्गानां तन्त्रेणानुष्ठानात् बार्हस्पत्यादीनां मध्यनिधानं लिङ्गं उपपद्यते इति न विरोधः। तस्मात् स्वतन्त्रेयम्। **के.**

**अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते। २।३।२।३॥**

अस्ति राजसूयः 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति। तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिं, 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्येवमादिकां प्रकृत्याभिधीयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्' इति। तत्र संदिह्यते किं ब्राह्मणादीनां प्राप्तानां निमित्तत्वेन श्रवणं, उत ब्राह्मणादीनामयं प्रयोगो विधीयते इति। इदानीं गुणनिमित्तकर्मभेदाभेदप्रतिपादनप्रसङ्गेन प्रयोगभेदः प्रतिपाद्यते। अत्रायं पूर्वपक्षिणोऽभिसन्धिः—यौगिकः खल्वयं राजशब्दः, राज्ययुक्तो हि राजेति महाजनप्रसिद्धेः। राज्यं च जनपदपुरपरिपालनबलिषड्भागग्रहणम्। तच्च सर्ववर्णसाधारणमेव। तेन 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र विद्याग्निरहितत्वेन शूद्रस्यानधिकारात् त्रयाणामेव ब्राह्मणादीनामधिकारः। तथा च

सति 'यदि ब्राह्मणो यजेत' इत्यादिवाक्येषु पूर्वाधिकरणन्यायेन निमित्तार्थमेव ब्राह्मणादीनां श्रवणमिति । **ननु** राज्ञः कर्म राज्यमिति हि स्मरन्ति। अत्र हि प्राक्प्रसिद्धराजशब्दार्थस्य कर्म राज्यमिति प्रतीयते, न तु राज्यस्य कर्ता राजेति । अस्ति च प्राक् प्रसिद्धिः । द्रमिडा हि क्षत्रियजातावेव राजशब्दं प्रयुञ्जते । तेन बर्हिराज्याधिकरणन्यायेन एकदेशप्रसिद्धेरेवात्र निर्णयहेतुत्वमिति । तदुक्तं तत्रैव '**एकदेशोऽपि यो दृष्टः शब्दो जातिनिबन्धनः । तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥**' इति । ( वा. पृ. ३४३ ) किंच राज्ञोऽपत्यं राजन्य इति, तदपि स्मरन्ति । राजन्यशब्दश्च क्षत्रियजातावेव रूढः । तद्यदि राज्ययोगादेव राजा, तदा वर्णान्तरस्याप्यपत्यं राजन्यः स्यात्, न त्वेवम् । ततोऽपि क्षत्रिय एव राजेति । **उच्यते**—म्लेच्छा हि द्रमिडाः । म्लेच्छप्रसिद्धेश्च आर्यप्रसिद्धिर्बलीयसीति यववराहाधिकरणे एव दर्शितम् । आर्यप्रसिद्धिश्चात्र राजशब्दस्य राज्यकर्तृत्वविषया प्रतीयते । एवं स्मरन्ति– 'न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः' इति । तथा 'न शूद्रराज्ये निवसेत्' इति च । बर्हिराज्यादिषु विपरीतप्रसिद्धिरस्ति। तेन बलवदार्यप्रसिद्धेश्चात्र राजशब्दस्य न जातिवचनत्वम्। यत्तु राज्ञः कर्म राज्यमिति स्मरणं, तत् राज्यशब्दस्य जनपरिपालने रूढस्यैव साधुत्वमात्रप्रतिपादनार्थम् । यथा आकृतिविशेषे रूढस्यैव गोशब्दस्य प्रतिपादनार्थं गच्छतीति गौरिति व्युत्पत्तिदर्शनं, तथा राज्ञोऽपत्यं राजन्य इत्येतदपि राजन्यशब्दस्य क्षत्रियजातिवचनत्वेन रूढस्यैव साधुत्वमात्रप्रतिपादनार्थमेव स्मरणम् । अतो राज्ययोगनिमित्त एवायं राजशब्दः । तेन राजसूये त्रैवर्णिकस्यैवाधिकारात्, तदन्तर्गतायामवेष्टौ ब्राह्मणादीनां प्राप्तत्वात् 'यदि ब्राह्मणो यजेत' इत्यादिश्रवणं निमित्तार्थमेवेति । **एवं प्राप्ते अभिधीयते** । भवेदेवं यदि यौगिकोऽयं राजशब्दो भवेत् । किं तर्हि ? क्षत्रियजातिवचन एवायं, द्रविडानां क्षत्रियजातिमात्रे प्रयोगात् । ननु आर्यप्रसिद्धिविरोधादप्रमाणं म्लेच्छप्रसिद्धिरित्युक्तम् । नैवं, अनन्यथासिद्धत्वेनात्र म्लेच्छप्रसिद्धेरबाध्यत्वात् । नहि द्रविडानां क्षत्रियजातौ राजशब्दप्रयोगोऽभिधानशक्तिं विना प्रकारान्तरेणापि संभवति । आर्याणां तु जात्यन्तरे प्रयोगः क्षत्रियधर्मकारितया गौणत्वेनैवोपपद्यते । क्षत्रियस्य मन्वादिभिः जनपदपुरपरिपालनबलिषड्भागोद्धरणमभिषेचनं च विहितम् । अतस्तत्कारिणि वर्णान्तरेऽपि प्रयुज्यमानो गौण एवायं राजशब्दः । एवं सति राज्ञः कर्म राज्यं, राज्ञोऽपत्यं राजन्य इति स्मृतिद्वयं निष्पन्नावगतावयवार्थपरित्यागेन साधुत्वमात्रप्रतिपादनार्थं भविष्यति । यत्तु 'न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः' इति 'न शूद्रराज्ये निवसेत्' इति च, तत् गौणराजशब्दार्थमभिप्रेत्येति मन्तव्यम्। अतो राजशब्दस्य क्षत्रियवचनत्वात् राजसूयान्तर्गतायामवेष्टौ ब्राह्मणादीनामप्राप्तेः न निमित्तार्थत्वम् । अतः पूर्वाधिकरणोक्तयदिशब्दपरित्यागादिना ब्राह्मणादिकर्तृकं प्रयोगान्तरमेव अवेष्टेर्विधीयते । **ननु** राजसूयप्रयोगवाक्यातिरिक्तमपरमपि अवेष्टेर्वर्णविशेषासंबन्धवचनं श्रूयते— 'एतयाऽन्नाद्यकामं याजयेत्' इति । अत्र च वर्णत्रयस्यैव प्राप्तत्वात् राजसूयप्रयोगे निमित्तार्थत्वासंभवेऽपि अन्नाद्यप्रयोगे ब्राह्मणादीनां निमित्तार्थं श्रवणं भविष्यति । **उच्यते**—स्यादेवं यदि अन्नाद्यकामवाक्यं प्रयोगपरं भवति, किंतु फलोपादानात् कर्मणः फले विनियोजकं सत् अनेकपरतागौरवभयात् अन्येन प्रयोगमपेक्षमाणं राजसूयप्रयोगमध्यस्थमेतच्छब्देनोपादाय 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' ( ४।३।३।५ ) इति न्यायेन अन्नाद्यफले विनियुङ्क्ते । तेनास्याः साधारणं स्वाराज्यं फलं, असाधारणं अन्नाद्यमिति । सा च निर्ज्ञातक्षत्रियकर्तृकेति निमित्तार्थं ब्राह्मणादिश्रवणमिति । **ननु** राजसूयवाक्ये स्वाराज्यफलविशेषितायामवेष्टौ राजा कर्तृत्वेनावगतः, न त्ववेष्टिमात्रे । अतः कथमन्नाद्यफलायां राजकर्तृत्वम् । **नैवं**, नहि कर्ता फलेन संबध्यते, फलविशेषितेन वा कर्मणा, कारकाणां क्रियामात्राकाङ्क्षत्वात् । तेन राजेति कर्तृपदस्य क्रियामात्राकाङ्क्षायां राजकर्तृकावेष्टिक्रियेत्येतावदवगतम् । अतो न स्वाराज्यप्रयोगे फलान्तरसंबन्धविरोधः । भवतु वा अन्नाद्यवाक्यस्य प्रयोगपरत्वमपि, तथापि एतयेति करणविभक्त्या यथाविज्ञानं संनिहिताया एवावेष्टेरुपादानात् इरापदवत् शाखाऽन्तरीयप्रयोगवचनोपसंहृताङ्गवच्च राज्ञोऽपि कर्तृत्वेनो-

पादानान्न त्रैवर्णिकावकाशः। अतो न कथं चिदपि ब्राह्मणादियुक्तवाक्यान्निमित्तार्थत्वमिति पूर्वाधिकरणपूर्वपक्षन्यायेन यदिशब्दपरित्यागादिना अवेष्टेरेव ब्राह्मणादिकर्तृकं प्रयोगान्तरं विधीयते इति सिद्धम्। **न च** प्राप्ते कर्मणि कथं ब्राह्मणादिबार्हस्पत्याद्यनेकार्थविधानमिति **वाच्यम्**। विशिष्टकर्मविधिवत् विशिष्टप्रयोगविधाने चानेकविधानोपपत्तेः। तथा च सति राजसूयान्तर्गतापेक्षितप्रयोगस्य स्वाराज्यफलेनैव निराकाङ्क्षत्वात् ब्राह्मणादियुक्तप्रयोगत्रयस्य फलासाकाङ्क्षत्वात् 'एतयाऽन्नाद्यकामं याजयेत्' इत्यन्नाद्यफलं ब्राह्मणादियुक्तप्रयोगत्रयेणैव संबध्यते। तदुक्तं '**क्रतुमध्यप्रयोगो हि स्वाराज्येनैव पूरितः। साकाङ्क्षस्त्वितरस्तस्मात्तस्यैव फलसंगतिः॥**' इति (वा. पृ. ५८७) **प्रयोजनम्**--पूर्वपक्षे राजसूयान्तर्गतावेष्टौ ब्राह्मणादिनिमित्तं बार्हस्पत्यादिमध्यनिधानम्। सिद्धान्ते तु राजसूयप्रयोगाद्बहिरेव ब्राह्मणादिकर्तृकावेष्टिप्रयोगे बार्हस्पत्यादिमध्यनिधानमिति। **सूत्रं तु**--अवेष्टौ ब्राह्मणादियुक्तावेष्टिवाक्ये यजेतेति यज्ञसंयोगात्, क्रतुप्रधानं ब्राह्मणादीनामभिधानं क्रियेत प्रयोगान्तरं विधातुमित्यर्थः। **तौता.**

**अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते। २।३।२।३॥**

'राजा राजसूयेन स्वाराज्यकामो यजेत' इति प्रकृत्य 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा, ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिषङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति पञ्च दिशामवेष्ट्यो नाम इष्टीर्विधाय 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं' इत्याम्नातम्। अत्र राजन्यशब्देन यौगिकेन ब्राह्मणादीनामपि राजसूयाधिकारित्वेन प्राप्तानां निमित्तार्थं श्रवणं इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह। अवेष्टौ अवेष्टिपञ्चके 'यदि ब्राह्मणो यजेत' इत्यादि क्रतुप्रधानमुच्यते, न निमित्तार्थेन। राजसूयात् बहिरेव ब्राह्मणादीनां अयं प्रधानभूतः अवेष्टिसंज्ञकः क्रतुः विधीयते इत्यर्थः। क्रतुः प्रधानं यस्मिन् कर्मणि तत् वचनरूपं कर्म क्रतुप्रधानमिति विग्रहः। राजसूये तु न ब्राह्मणवैश्ययोरधिकारः। क्षत्रियेणैव राज्ञा यज्ञस्य राजसूयस्य संयोगात् न ब्राह्मणादिवाक्यस्य निमित्तार्थता। किंतु ब्राह्मणादीनां अयं अवेष्टियागः राजसूयात् बहिरेव विधीयते। राजसूयस्तु क्षत्रियस्यैव राज्ञः इति सिद्धान्तः। **के.**

**अवेष्टौ राजसूयात् बहिर्भूतायामन्नाद्यफलस्य विधिः॥**

**संनिधौ त्वविभागात् फलार्थेन पुनःश्रुतिः। २।३।१३।२३॥**

**भाष्यं**— अस्त्यवेष्टिः 'आग्नेयोऽष्टाकपालः पुरोडाशो भवति' इत्येवमादिः। तां प्रकृत्योच्यते 'एतयाऽन्नाद्यकामं याजयेत्' इति। तत्र संदेहः किं कर्मान्तरमवेष्टेः, उतावेष्टिरेवेति। किं प्राप्तं? कर्मान्तरमिति उक्तेन न्यायेन (२।३।१२)। **एवं प्राप्ते ब्रूमः।** संनिधौ फलार्थेन पुनःश्रुतिः अवेष्टेरेव, न कर्मान्तरमिति। कुतः? अविभागात्। एतया इत्येषशब्दो न शक्नोति अवेष्ट्या विभक्तं यागमन्यं वक्तुम्। संनिहितस्य प्रतिनिर्देशक एष शब्दः। तस्मात् अवेष्टिरेव अन्नाद्यकामस्य विधीयते इति। **किं प्रयोजनम्?** यदि अवेष्टिः आग्नेयादीनि हवींषि, **अथ कर्मान्तरमन्यहविष्को** यागः इति।

**वा**— प्रयोजने तु चोदयन्ति, कर्मान्तरेऽपि किल एतच्छब्दकृतात् सादृश्यप्रत्ययात् आग्नेयादीन्येव हवींषि, इति कथं अन्यहविष्को यागः इति। तत्तु अचोद्यम्। ज्योतिरादिवत् एतच्छब्दस्य प्रस्तूयमानमुख्यार्थोपपत्तौ सत्यां सादृश्यलक्षणाऽनुपपत्तेः। तस्मात् सुष्ठूक्तं कर्मान्तरे अन्यहविष्को यागः इति।

**सोम**— एतयेति वाक्यस्य कर्मान्तरविधायकत्वे तस्मिन् कर्मणि 'अव्यक्तासु तु सोमस्य' इति सौमिकधर्मप्राप्तेः अन्नाद्यकामेन सोमहविष्को यागः कर्तव्यः। सिद्धान्ते आग्नेयादिहविष्का अवेष्टिः। **सूत्रे** विभागात् विपरिवृत्तेः इत्यर्थः। (एतावदेव भाष्यानुसारेणाधिकरणम्। वार्तिकाद्यनुसारेण तु 'अनुपादेयानां देशादीनां

संनिधौ कर्मभेदकत्वं नास्ति ' इति बिन्दौ अधिकरणं द्रष्टव्यम् । )

* अवेष्टौ सत्यपि बलाबलविशेषे प्रयोगभेदेन स्वाराज्यान्नाद्यकामयोः समुच्चयसंभवे बाधो न युक्तः । स्वाराज्यान्नाद्ययोस्तु भिन्नप्रयोगविषयत्वात् व्यवस्थोपपत्तेः विरोधाभावात् बलाबलत्वविशेषे सत्यपि, बाधो नास्ति । **सु.** पृ. ९१०, * **अवेष्टिषु** अतिदेशेन इतिकर्तव्यतालाभात्, मध्यनिधानान्यथाऽनुपपत्त्या च कल्पितेषु द्रव्यान्तरेषु यागीयत्वप्रतीतेस्तुल्यत्वात्, कल्प्यानां च यागान्तराणां इतिकर्तव्यताऽपेक्षायां श्रुतयागप्रकृतित्वेन अवगताया अवेष्टेरेव बुद्धिस्थत्वात् तेषामपि तत्प्रकृतित्वावगतेः तदीयेतिकर्तव्यतालाभात्, अभितोविधेयद्रव्यविशेषप्रतीतेः निर्धारितशास्त्रार्थानुष्ठानसिद्धिः । पृ. ९११, * ब्राह्मणादिवाक्यैः प्रयोगान्तरविधौ अन्नाद्यकामवाक्योक्तस्य फलस्य **अवेष्टिबहिःप्रयोग**विषयतैव युक्ता । पृ. ९१०.

**अवेष्ट्यधिकरणम्** । ब्राह्मणादीनां राजसूयात् बहिः अवेष्टेः कर्मान्तरता ॥

**अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते । २।३।२।३॥**

**भाष्यं--** अस्ति राजसूयः ' राजा राजसूयेन स्वाराज्यकामो यजेत ' इति । तं प्रकृत्य आमनन्ति अवेष्टिं नाम इष्टिम् । ' आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा ' इत्येवमादि । तां प्रकृत्य विधीयते ' यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं ' इति । तत्र संदिह्यते किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणं, उत ब्राह्मणादीनां अयं यागो विधीयते इति । कथं निमित्तार्थता भवेत्, कथं वा यागविधानमिति । यदि राजशब्दो ब्राह्मणादिष्वपि केन चित् प्रकारेण, ततो निमित्तार्थता । अथ क्षत्रिये एव, ततः प्रापकाणि एवंजातीयकानि श्रवणानि । किं तावत् प्राप्तं ? निमित्तार्थतेति । तत एवं तावदुपवर्ण्यते यौगिको राजशब्द इति । राज्यं यस्य कर्म स राजा । किं पुनः राजकर्म ? जनपदपुरपरिरक्षणे ततश्चोद्धरणे राजशब्दमार्यावर्तनिवासिनः प्रयुञ्जते । राज्ञः कर्म राज्यं इति चाभियुक्ता उपदिशन्ति । तेन मन्यामहे यस्य एतत् कर्म स राजेति । यथा ये उदमेघं नाम कं चित् पुरुषं नावेदिषुः, तस्य तु पुत्रं औदमेघिः इत्येवं विदुः, शक्नुयुस्ते, यस्तस्य पिता स उदमेघः इति कल्पयितुम् । उदमेघपुत्रस्य एवं समभिव्याहारो भवतीति । एवं राज्ययोगात् राजशब्द इति विज्ञायते । ननु जनपदपुररक्षणवृत्तिं अनुपजीवत्यपि क्षत्रिये राजशब्दं आन्ध्राः प्रयुञ्जते प्रयोक्तारः । न ब्रूमो न प्रयुञ्जते इति, किं तर्हि, कर्मविशेषनिमित्तत्वात् राजशब्दस्य, तद्योगादपि राजशब्दो भवति इत्येतदुपपादयामः । प्रयुञ्जते च तद्युक्ते राजशब्दं अक्षत्रियेऽपि । तदस्मिन् उपपन्ने प्रकरणवशात् यदिशब्दसमभिव्याहाराच्च राजसूयस्यैव गुणविधानं भविष्यति, न ब्राह्मणस्य वैश्यस्य च कर्मान्तरं विधायिष्यतीति । अथवा असार्वलौकिकस्य प्रयोगस्य सार्वलौकिकेन प्रयोगेण विरुद्ध्यमानस्य अप्रामाण्यं स्यात् । अभ्युपगच्छन्ति हि ते जनपदिनः सार्वभौमं प्रयोगम् । अपि च अविप्रगीता लौकिका अर्था विप्रगीतेभ्यः प्रत्ययिततरा भवन्ति । तथा आर्यावर्तनिवासिनां शब्दार्थोपायेषु अभियुक्तानां अभिव्याहरतां कर्माणि च अनुतिष्ठतां अन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति । तस्मात् यौगिको राजशब्दः । निमित्तार्थानि श्रवणानि । राजसूयस्य गुणविधिः न कर्मान्तरमिति । **एवं प्राप्ते ब्रूमः** । अवेष्टौ तु खलु क्रतुप्रधानं ब्राह्मणादिश्रवणं ब्राह्मणादीनां अवेष्टियागं विधातुं, न निमित्तार्थम् । कुतः ? अप्राप्तत्वात् ब्राह्मणवैश्ययोः । कथमप्राप्तिः । क्षत्रियस्य राजसूयविधानात् ' राजा राजसूयेन यजेत ' इति । **ननु** उक्तं यौगिको राजशब्द इति । **एतदप्ययुक्तं** यतो जातिवचन इति । ननु उभयाभिधाने यदिशब्दसंबन्धात् प्रकरणाच्च न कर्मान्तरविधानं न्याय्यं इत्युक्तम् । **अत्रोच्यते** । नोभयाभिधानं अवकल्पते । कुतः ? यदि तावत् जातिशब्दो राजेति, ततः तत्कर्मत्वात् जनपदपरिपालने राज्यशब्दो भविष्यति । तेन आर्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ यदि राज्यशब्दः परिपालने नित्यसंबद्धो भविष्यति, ततस्तस्य कर्तेति राज-

शब्दः क्षत्रियजातौ तन्निमित्तो भविष्यति तत्र आन्ध्राणां प्रयोगो न विरोत्स्यते ; तस्मान्न प्रयोगदर्शनात् उभावपि राजराज्यशब्दौ जातिपरिपालनाभ्यां नित्यसंबद्धौ इत्यभ्युपगन्तव्यम् ।

को नु खलु निर्णयः ? राजजातीयस्य कर्म इत्यतः परिपालनं राज्यशब्देनोच्यते । एवं हि स्मरन्तः अभियुक्ताः तस्य कर्म इति ष्यञ्-प्रत्ययं विदधति , न तु तस्य कर्ता इति प्रत्ययलोपं वा प्रातिपदिकप्रत्यापत्तिं वा समामनन्ति । तस्मात् राज्ञः कर्म राज्यं, न राज्यस्य कर्ता राजा । ननु योयो जनपदपुररक्षणं करोति , तं तु लोको राजशब्देनाभिवदति । उच्यते । योगात् लोकः प्रयुङ्क्ते । परिपालने राज्यशब्दः प्रसिद्धः इति । स तु परिपालने राज्यशब्दो राजयोगात् इत्यस्माभिरुक्तम् । तस्मात् राजशब्दः प्रसिद्धमूलम् । तद्योगात् राज्यशब्दः । तद्योगादपि ब्राह्मणवैश्ययोः राजशब्दः प्रयुज्यते । न तु एवं स्मरन्ति राज्ययोगात् राजेति । यत्तूक्तं, अनुमानात् राज्यस्य कर्ता यः स राजा, यथा औदमेघिः पिता उदमेघ इति । उच्यते । अनुमानात् प्रयोगो बलवान् । राज्यस्य कर्तारं राजा इत्यनुमिमीमहे । क्षत्रिये तु प्रत्यक्षं प्रयुञ्जानान् उपलभामहे । तथा योगमपि अनुमिमीमहे राज्यस्य कर्ता राजेति । राज्ञः कर्म राज्यं इति तु स्मरन्ति । अनुमिमानाश्च स्मृतिमनुमिमते स्म । स्मरन्तस्तु प्रत्यक्षमुपलभन्ते । तेन तत्र स्मृतिर्बलीयसीति ।

आह , योयो राज्यं करोति तत्र राजशब्दं प्रयुञ्जते , न यत् राज्ञः कर्म तद्राज्यमिति । तेन मन्यामहे राज्ययोगो राजशब्दप्रवृत्तौ निमित्तं , न तु राजयोगो राज्यशब्दप्रवृत्तौ इति । न ब्रूमः, प्रयोगात् वयं राजयोगं राज्यशब्दप्रवृत्तौ निमित्तमवगच्छाम इति । कथं तर्हि , स्मरणात् । प्रयोगाच्च स्मृतिर्बलीयसी । प्रयोगाद्धि स्मृतिरनुमीयेत । अपि च राज्ययोगस्य निमित्तता व्यभिचरति । जनपदपरिपालनं अकुर्वत्यपि राजा इति आन्ध्रा वदन्तीत्युक्तम् । ननु राजयोगात् राज्यं इत्येतदपि व्यभिचरति । नहि राज्ञः स्पन्दितं निमिषितं च सर्वं राज्यमित्युच्यते । यदि वयं प्रयोगात् निमित्तभावं ब्रूयाम, तत एवमुपालभ्येमहि । स्मृत्या तु वयं निमित्तभावं ब्रूमः । तेन यद्यत् राजजातीयस्य कर्म जात्या विशेष्यते, तद्राज्यं इत्यभ्युपगच्छामः । यत्तूक्तं, आन्ध्रा अपि राज्ययोगात् राजानमभ्युपगच्छन्तीति । परिहृतमेतत् प्रयोगो दुर्बलः स्मृतेरिति । यदुक्तं आर्यावर्तनिवासिनः प्रमाणं इतरेभ्य आचारेभ्य इति, तुल्यः शब्दप्रयोग आचारेषु इत्युक्तम् । तस्मात् जातिनिमित्तो राजशब्दः । एवं चेत् यज्ञसंयोगात् क्षत्रियस्य राजसूयेन, यागविधिः अवेष्टिः इति ।

**वा**— ' राजा राजसूयेन स्वाराज्यकामो यजेत ' इत्यस्य प्रकरणे ' आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा ' इत्यादिभिः द्रव्यदेवतासंयोगैः अवेष्टिसंज्ञकामिष्टिं विधाय श्रूयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वाऽभिघारयेत् यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवं ' इति । तत्र पूर्ववदेव संदेहः किं राजसूयमध्यस्थाया एव अवेष्टेः वर्णविशेषसंबन्धं प्राप्तमेव निमित्तत्वेन उद्दिश्य तत्र नैमित्तिकं विधीयते , उत अप्राप्तमेव ब्राह्मणादिसंबद्धं प्रयोगान्तरमुद्दिश्यते इति । तत्सिद्ध्यर्थं च एतद्विचारयितव्यं किं राजसूये अधिकारः त्रयाणामपि वर्णानां , उत क्षत्रियस्यैवेति । तत्सिद्ध्यर्थं अधिकारिविशेषणभूतो राजशब्दः तथैव विचारणीयः । ततोऽपि एतद्विचारयितव्यं किं क्षत्रियत्वनिमित्तो राजशब्दः, उत राज्यकरणनिमित्त इति ।

ननु च ' एतयाऽन्नाद्यकामं याजयेत् ' इति वर्णविशेषेण असंबद्धं पृथक् राजसूयप्रयोगवचनादेव अवेष्टेर्वचनमस्ति इति वर्णत्रयस्यापि प्राप्तस्य निमित्तार्थमेव श्रवणं भवेत् । नैतदेवम् । तदा हि निर्ज्ञातक्षत्रियकर्तृकायाः कर्त्रन्तरे वचनान्तरेण अविधीयमानायाः पृथक् प्रयोगकारणाभावाच्च राजसूयमध्यस्थाया एव ' एकस्य तूभयत्वे संयोगपृथक्त्वं ' इत्यनेन न्यायेन ( ४।३।३।५ ) साधारणं च स्वाराज्यं फलं, प्रात्यात्मिकं च अन्नाद्यं विज्ञायते । पृथग् वा राजन्येनैव फलार्थिना प्रयुज्यते, न वर्णान्तरसंबन्धः । तद्यथा अध्ययनाधानयोः निर्ज्ञातत्रैवर्णिककर्तृकत्वात् तदधीनसिद्धीनां कर्मणां अर्थिमात्रसंबन्धावगमेऽपि सति अपशूद्रविषयत्वमेव अवतिष्ठते । तथा च अत्रैव स्वाराज्यकामाविशेषेऽपि राजकर्तृकत्ववशेन भोक्तृविशेषो भविष्यति । तस्मात् राजसूयाधि-

कारेणैव, एभिर्वा वचनैः प्राप्तिः इति द्वावेव पक्षौ। किं तावत् प्राप्तं? पूर्वाधिकरणेनैव निमित्तार्थानि श्रवणानीति। राजसूयाधिकारश्च सह राजशब्देन त्रयाणामपि वर्णानां, राज्यकरणं च शब्दप्रवृत्तिनिमित्तमिति। तथाहि **'कर्ता राज्यस्य राजेति सर्वलोकेषु गीयते। महाविषयतैवं च शास्त्रस्यापि भविष्यति॥'** उभयसंभवे तावत् त्रैवर्णिकविषयता युक्ता कल्पयितुम्। एवं हि निमित्तप्रतीतिः तत्प्रकरणादीनि च न बाध्यन्ते। राजसूयाधिकारश्रुतिश्च अनल्पविषयत्वेन स्वरसात् प्रवर्तमाना न निवर्तिता भविष्यति। तस्मात् राज्यं कुर्वन्तः सर्वैस्त्रैवर्णिकाः राजानः। तच्च राज्यं जनपदपरिपालनं नाम सर्वलोकप्रसिद्धम्। ततश्च उद्धरणं राज्येऽपि कण्टकोद्धरणं अभिप्रेतम्।

'आर्यावर्तनिवासिनः' इति (भाष्यं) 'शास्त्रस्था वा तन्निमित्तत्वात्' (१।३।४।९) इत्यस्य प्रदर्शनार्थम्। 'राज्ञः कर्म राज्यं इत्येतत् अभियुक्ता उपदिशन्ति' इत्येतत् ब्रुवता (भाष्येण) ननु राजशब्दस्यैव प्रकृतिभूतस्य स्वातन्त्र्यं अभ्युपगतं भवति। तथाहि, **'नैवौदमेधिसंबन्धादुदमेधः प्रसिद्ध्यति। स्वतन्त्रेणोदमेधेन स एव त्वनुगम्यते॥'** उच्यते। **'राजा निर्ज्ञात एवेह स्वातन्त्र्येण चिरंतनैः। तद्योगात् कल्पितं राज्यमस्माकं तु विपर्ययः॥'** यथैव गामानय इत्यभिहिते, यद्यपि व्यवहर्तृभिः यो गौः स आनेतव्यः इति वचनं कल्पितं, तथापि पार्श्वावस्थितस्य यस्य गोत्वमप्रसिद्धं आनयनं च प्रसिद्धं, स छेदनादिभ्य इव यूपं, एवं प्रतिपद्यते, य आनेष्यते स नूनं गौरिति। तथैव अत्र यद्यपि मन्वादिभिः पाणिनिप्रभृतिभिश्च एवं स्मृतं यो राजा तेन जनपदादिरक्षणं कर्तव्यं, यश्च राजा तस्य कर्म राज्यं इति, तथापि वयं संदिग्धराजकाः प्रसिद्धराज्याश्च सन्तः एवं प्रतिपद्यामहे, येन एवं स्मर्तृभिरुक्तं, तेन नूनं, बन्धनसमर्थे द्रव्ये यूपवत्, राज्यकारणसमर्थद्रव्यालम्बन एव राजा तैर्निरूपितः इति। तच्च राज्यं अविशेषेण चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते। तस्मात् सर्वे राजानः। तत्र तु न्यायान्तरेण ब्राह्मणादिषु चरितार्थायां राजश्रुतौ अध्ययनादीनामभावे सति कामं शूद्रः पर्युदस्येत, न तु इतरपर्युदासे हेतुरस्ति, इति त्रयाणामपि अधिकारः।

**ननु** च क्षत्रियसंबन्धेन राज्यं विहितं, अन्यायेन इतरौ कुर्वाणौ न राजानौ स्याताम्। **नैष दोषः।** सर्वथा तावत् राज्यकरणात् ताभ्यामपि राजत्वं लब्धं, तावता च राजसूयचोदनायाः प्रयोजनम्। यौ तु न्यायान्यायौ, तयोः पुरुषधर्मत्वात् नैकोऽपि क्रतुना गृह्यते इत्यविशेषः।

'ननु जनपदपुरपरिरक्षणवृत्तिं अनुपजीवत्यपि' इति (भाष्येण) सिद्धान्तबीजोपन्यासः। उक्तं ह्येतत् बर्हिराज्यादिशब्देषु यथा एकदेशेऽपि जातिनिमित्तत्वे लभ्यमाने निमित्तान्तरं न कल्पनीयमिति। परः पुनः यौगिकग्रहणं अत्रोपकारकं इति प्रदर्शयति 'प्रकरणवशात् यदिशब्दसमभिव्याहाराच्च' इति (भाष्येण)। 'न कर्मान्तरं विधायिष्यते' इति (भाष्यं) प्रयोगान्तराभिप्रायेण। अथवा यदा 'यदि शालिं भुञ्जीत' इत्यादयो वचनप्रकारा गृह्यन्ते। तदैकेनैव वाक्येन ब्राह्मणसंबन्धो बार्हस्पत्याभिघारणं च न शक्यते कर्तुं इति मुख्यमेव कर्मान्तरत्वम्। एवं तावत् उभयप्रसिद्धिं प्रमाणीकृत्य उक्तम्। इदानीं तु राज्यरहिते प्रयोगः प्रमाणमेव न भवति इति प्रस्तूयते सार्वलौकिकेन प्रयोगेण असार्वलौकिकस्य बाधात्। 'अपि चाविप्रगीताः' इति (भाष्येण) तदेव (यौगिकप्रयोगस्य सार्वलौकिकत्वाभिधानेन सिद्धं अविप्रगीतत्वमेव) प्रत्ययिताप्रत्ययितत्वेन पुनरुपन्यस्तम्। नहि सर्वलोकासर्वलोकविदितत्वव्यतिरेकेण विप्रगीताविप्रगीतत्वे विद्येते। यद्वा पूर्वेण प्रसिद्धेः सदसद्भावमात्रं, उत्तरेण तु विप्रतिपत्त्यविप्रतिपत्ती। भवति च अज्ञानविपर्ययज्ञानयोर्भेद इत्यपौनरुक्त्यम्। 'तथा आर्यावर्तनिवासिनां' इति शास्त्रस्थबलीयस्त्वं पूर्वोपक्षितं दर्शयति। 'समीचीनतर आचारः' इति शब्दप्रयोगोऽभिधीयते। तस्मात् प्राप्तानामेव ब्राह्मणादीनां निमित्तार्थं श्रवणम्। अपि च 'यदि राजन्य ऐन्द्रं' इति असंदिग्धं निमित्तार्थं, अतश्च तत्सामान्यात् इतरयोरपि तथात्वम्। **इत्येवं प्राप्ते ब्रूमः। 'क्रतुसंबन्ध एवायं ब्राह्मणादेर्विधीयते। अप्राप्तत्वान्न**

**राजा हि राज्ययोगात् प्रतीयते ॥** ' क्षत्रियवचन एवायं राजशब्दो न यौगिकः । स हि राज्ययोगाद्वा भवेत् धात्वर्थानुसारेण दीप्तियोगाद्वा, उभयथाऽपि चानुपपन्नः, तद्रहितरूढिशब्ददर्शनात् । एकदेशस्यापि रूढिः अवयवप्रसिद्धिं बाधते । न च अवयवप्रसिद्धिरपि अत्र ऐकान्तिकी विद्यते, नहि दीप्यमानेषु अग्न्यादिषु राजशब्दो विद्यते, न च अनभिषिक्ते जनपदपरिपालनव्यापृतेऽपि आयुक्तके । ननु च आयुक्तकस्य परप्रयुक्तकारित्वात् ऋत्विज इव यजमानत्वं, न राजत्वं भविष्यति । नैवं शक्यम् । पराधीनेष्वपि केषु चित् पृथिवीश्वराभिषिक्तेषु माण्डलिकेष्वपि प्रयोगदर्शनात् । तेन तर्हि अव्यभिचारात् स एवाभिषेको निमित्तं प्राप्नोति । नैवं भविष्यति । कुतः ? '**अभिषेकोऽपि धर्मज्ञैः क्षत्रियस्यैव पठ्यते । सहासौ राजशब्देन तेन नाक्षत्रिये मतः ॥**' ततोऽभिषेकस्य निमित्तत्वं ज्ञायते, यदि अस्य स्वातन्त्र्यं भवेत् । अयं तु क्षत्रियजातावेव स्मर्तृभिर्नियतो विधानवेलायामेव लवनादिवत् बर्हिःशब्देन राजशब्देन संयुज्यते । तेनैव च उभयनिमित्तत्वं समुदायशब्दन्यायेन एतस्यानिष्टम् । यदि हि जात्यभिषेकयोः अत्यन्तसमुदितयोरेव प्रयुज्यते, न तु केवलायां जातौ जात्यन्तरे वा अभिषेको विधीयते, तत उभयं निमित्तं इति कल्प्येत । स तु अभिषेकात् प्रागेव तत्संस्कार्ये प्रयुक्तः ' राजानमभिषेचयेत् ' इति । तस्मात् राजजातावेव प्रज्ञायते । न च भाविसंज्ञाविज्ञानं, भूतत्वेनैव उपपद्यमानत्वात् । अगत्या हि सा अन्यत्र आश्रीयते । न च एकस्मिन् निमित्ते सिद्धे निमित्तान्तरं कल्पयितुं शक्यं, विनाऽपि तत्कल्पनेन प्रयोगोपपत्तेः । अभिषेकनिमित्तत्वेऽपि च न्यायानुसारिणां नैव अक्षत्रियविषयत्वं सिध्यति । यत्तु धर्मशास्त्रातिक्रमेण क्रियते, न तस्य निमित्तत्वं स्यात् । यथा शूद्रकृतस्य आधानस्य नाहवनीयादिप्रयोगनिमित्तत्वम् । अपिच, '**नित्याः शब्दार्थसंबन्धा यथावस्थितगामिनः । नाश्रयन्त्यध्रुवं हेतुं स्वच्छन्दपरिकल्पितम् ॥**' नित्यस्य हि राजशब्दस्य नित्येनैव निमित्तेन भवितव्यं, नित्यानित्ययोः संयोगाभावात् । सा च नित्यता वस्त्वपेक्षया वा विध्यपेक्षया वा निरूप्यते । तत्र न तावत् अभिषेको वस्तुरूपेणैव जातिवत् केषु चित् समवेतो दृश्यते । तेन अवश्यं विधानापेक्षमेव निरूपणमाश्रयणीयम् । न च विधानं अक्षत्रिये राजशब्दस्यास्ति इति जात्यव्यभिचार एवापद्यते । ततश्च सैव निमित्तम् ।

एतेन राज्यनिमित्तत्वं प्रत्युक्तम् । तदपि हि, विधानात् प्रभृति अभिषेकवदेव क्षत्रियत्वसंबद्धम् । दृष्टश्च अनभिषिक्तेऽपि अपालयति च जनपदं, क्षत्रिये राजशब्दप्रयोगः । तद्वत्यपि वा अन्यजातीये अनभिधानं द्रविडानाम् । तस्मादपि न त्रैवर्णिको राजा । तथा च राज्ञोऽपत्यं राजन्यः इति ऐकान्तिकक्षत्रियजातिवचनस्य राजन्यशब्दस्य राजशब्दप्रकृतित्वमेव अन्वाचक्षते । अन्यथा त्रैवर्णिकानां राजत्वात् सर्वेषां त्रैवर्णिकानां अपत्येषु राजन्यशब्दप्रयोगः स्यात् । कुतः ? '**राजन्यः क्षत्रिये रूढो राजानः सर्व एव चेत् । अपत्यापत्यवद्योगे वैषम्यं वद कीदृशम् ॥**' ननु एवमपि अनुपपन्नः एवायं अपत्यप्रत्ययः । तथाहि, '**प्रकृतौ तदपत्ये च जातिशब्दस्य तुल्यता । तेन राजैव सर्वत्र राजन्योऽप्यभिधीयताम् ॥**' यथैव काकस्यापत्यं काकः, एवं राज्ञोऽपत्यं राजा इत्येव स्यात् । नैष दोषः । पर्याय एव हि राजशब्दस्य राजन्यशब्दः अनेन प्रकारेण अन्वाख्यायते । स तु एकजातिविषयत्वे सति तथा अन्वाख्यातुं युज्यते, नान्यथा । ननु ' राज्ञोऽपत्ये जातिग्रहणं ' ( ' राजश्वशुराद्यत् ' पा० ४।१।१३७ सूत्रे वार्तिकं ) इति वचनात् क्षत्रियजातिवचनो भविष्यति । नैतदेवम् । इह अन्यतमजात्यनुपादानात् राजवत् मनुष्यजातिमात्राधिकारात् तद्वचनत्वं स्यात् । ननु च राजराजन्यशब्दयोः तत्रतत्र कर्मभेदोपदेशेन स्मृतिविदां याज्ञिकानां च भेदेन प्रसिद्धिर्दृष्टा । सत्यं दृष्टा, सा तु ब्राह्मणपरिव्राजकन्यायेन राजन्यशब्दस्य अभिषिक्तविशेषगामित्वेन सामर्थ्यलभ्यत्वात् । यत्तु प्रसिद्धिद्वयसंभवे राज्यनिमित्तत्वं प्रकरणादिभ्यो विज्ञास्यते इति, तन्निराक्रियते । तथाहि, '**नैव तावदुभौ शब्दौ स्वातन्त्र्येण प्रसिध्यतः । क्लृप्तायामेकशक्तौ हि द्वितीयो यौगिको वरम् ॥**' तदेतत् दर्शयति ' यदि तावत् जातिशब्दो राजेति ततः '

( भाष्यं ) तस्य कर्म राज्यं इति अवयवप्रसिद्धिसंभवात् न तन्निरपेक्षं शक्त्यन्तरकल्पनमुपपद्यते । विनैव तेन आर्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ तु प्रथममेव राज्यमिति प्रतिपालनं रूढिरूपेण अभिधीयते, ततः तच्छक्त्यनुसारेणैव तत्कर्तरि राजशब्दप्रयोगसिद्धेः शक्त्यन्तरकल्पनमन्तरेणैव द्रविडानां राज्याधिकारयोग्येषु क्षत्रियेषु प्रयोगो न विरोत्स्यते । दाक्षिणात्यत्वसामान्येन आन्ध्राणां इति भाष्यकारेणोक्तम् । तस्मात् न तावुभावपि रूढिशब्दौ, नापि यौगिकौ, अन्यतररूढित्वे तु राजशब्दस्य तत्कल्पना युक्ता । कुतः ? '**आचारयोरसंबन्धे संदेहे सति निर्णयः । संनिबन्धनया स्मृत्या बलीयस्त्वादवाप्यते** ॥' राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्रियस्य इति मन्वादयः स्मरन्ति । पाणिनिप्रभृतयोऽपि राज्ञः कर्म इदं राज्यं इत्येवं व्युत्पादयन्ति । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा० ५।१।१२४) इत्यधिकृत्य स्वतन्त्ररूढात् राजप्रातिपदिकात् प्रत्ययविधिः तत्र ष्यञ्प्रत्ययं विदधाति इति । अत्र वदन्ति, पत्यन्तपुरोहितादिपाठात् राजशब्दस्य विशेषविहितेन यका भवितव्यम् । तथा च यक्प्रत्ययस्वरः इहोपलभ्यते नाद्युदात्तत्वम् । तस्मात् राजशब्दात् राज्यशब्दव्युत्पत्तिः न तु विपरीता, इत्येतावन्मात्रपरमेव भाष्यं द्रष्टव्यम् । राज्यशब्दाद्धि राजनि व्युत्पाद्यमाने यलोपाम्नानं वा राजशब्दादेशात्मकं वा स्मरणं स्यात् । तस्मात् इयमेव वचनव्यक्तिः 'राज्ञः कर्म राज्यं' इति, न तु अर्थापत्त्या 'राज्यस्य कर्ता राजा' इति कल्पनीयं, देशान्तरे विज्ञातत्वात् राज्ञः । कल्पितायामपि चार्थापत्तौ मन्वादिस्मृतिवशेन क्षत्रियस्य एतत्कर्म इत्यवधारणात् स एव राजा विज्ञायते । सकलश्च राजा इति शब्दः राज्ये अनुप्रविष्टः इति स यौगिको युक्तो, न तु राज्यशब्दः राजनि अनुस्यूतः सकलः इति अयौगिकत्वम् । सत्यमेवं राज्यशब्दस्य यौगिकत्वमुपपद्यते । यस्तु तत्कारिणि जात्यन्तरे राजशब्दप्रयोगः, स क्षत्रियत्वाभावात् न प्राप्नोति । तेन न आर्यावर्तनिवासिनां प्रयोगः सकलो न विरुध्यते । यथा 'न शूद्रराज्ये निवसेत्' इत्यादीनां अप्राप्तप्रयोगाणां बाधः स्यात् । इत्यत आह— 'योगात् लोकः प्रयुङ्क्ते' इति ( भाष्यं ) । प्रथमं तावत् राजयोगात् राज्यं, पुनः तद्योगात् ब्राह्मणादिषु राजशब्दोपचार इति । **ननु** एवं सति राज्ययोगादपि राजा इत्येतत् अभ्युपगतमेव । **नैष दोषः**, गौणत्वाभ्युपगमात् । मुख्यत्वाभ्युपगमे हि अधिकरणं परावर्तेत । गौणत्वं तु मुख्येन बाधितत्वात् अभ्युपगतमपि सिद्धान्तं न विरुणद्धि । तेन तत्कार्यापन्ने प्रतिनिधिन्यायेन ब्राह्मणादौ राजशब्द इति द्रष्टव्यम् । तथा च दर्शयति 'न तु एवं स्मरन्ति राज्ययोगात् राजेति' ( इति भाष्यं ) । तच्च एतत् आचारस्य दौर्बल्यात् गौणकल्पनाऽऽश्रयणं इत्येवमेव भाष्यं नेयम् । यत्तु औदमेधिशब्दादिवत् प्रकृत्यर्थानुमानं, तत् द्रविडप्रयोगेण प्रत्यक्षेण बाध्यते । अथ राज्यस्य कर्ता एवमभिधीयते इति, निमित्तभूतोऽपि कर्मकर्तृसंबन्धः तस्य च स्मरणं अनुमातव्यम् । राज्ञः कर्म राज्यं इति प्रत्यक्षं स्मरणं तस्मात् बलवत्तरम् । **पर आह**— 'योयो राज्यं करोति' इति ( भाष्यं ) । सर्वथा अन्वयव्यतिरेकाभ्यां वाच्यवाचकसंबन्धो विज्ञायते । स च राजशब्दस्य अव्यभिचारेण राज्यनिमित्ततया च गम्यते, न तु राजकर्मनिमित्तत्वेन । स्मृतेः पुनः शब्दापशब्दविभागमात्रविषयत्वात् अविषय एवायम् । उभौ हि राजराज्यशब्दौ साधू, तस्मादयुक्तः स्मरणोपन्यासः इति । **तत्रोच्यते** । सत्यं प्रयोग एव, न च स्मृतेः कस्य किंयोगनिमित्तत्वं इत्येष व्यापारः, तथापि तु साध्वसाधुत्वपरतयैव अन्वाख्यानात् निमित्तत्वमवगम्यते । राज्ञः कर्म राज्यं इति हि व्युत्पादने तद्योगनिमित्ते राज्यं इत्यर्थादुक्तं भवति । तेन स्मृतिबलीयस्त्वात् राजशब्द एव स्वतन्त्र इति । प्रयोगोऽपि च द्रविडेषु व्यभिचारी इत्युक्तमेव । मत्पक्षे तु प्रयोगस्य अतन्त्रत्वात् व्यभिचारित्वमदूषणम् । यत्र तावत् प्रयोगः, तत्रास्ति राजकर्मत्वम् । तेन प्रयुक्तस्य अन्वाख्यानकरणात् अप्रयुक्तनिमित्तान्वाख्यानाभावाच्च अदोषः । किंच '**असाधारणभावेन सर्वत्रेष्टं विशेषणम् । तेन तस्यैव कर्मेति चिन्तितादि न गृह्यते** ॥' जनपदरक्षणं हि असाधारणं राजकर्म, तेन राज्यमित्युच्यते । चिन्तितनिमिषितादि तु राज्ञश्च अन्येषां च इति अव्यवच्छेदात्

न राज्यशब्दाभिधेयं भवतीति । तेन सार्वलौकिकादपि प्रयोगात् 'शास्त्रस्था वा तन्निमित्तत्वात्' (१।३।५।९) इत्यनेनैव राजशब्दस्य क्षत्रियवचनत्वम् । तुल्यस्य अन्त्यजनपदवासिनामपि दृष्टार्थत्वात् शाब्दव्यवहारे प्रमाणाभाव इत्युक्तं 'चोदितं तु प्रतीयेत' (१।३।५।१०) इति।

तस्मात् क्षत्रियस्यैव राजसूयोऽस्ति इति ब्राह्मणादीनां प्रापकाणि श्रवणानि । ततश्च 'एतयाऽन्नाद्यकामं' इत्येतदपि फलं बहिरेव प्रयोगात् भविष्यतीति । '**क्रतुमध्यप्रयोगो हि स्वाराज्येनैव पूरितः । साकाङ्क्षस्त्वितरस्तस्मात् तस्यैव फलसंगतिः ॥**' **ननु** च एतया इति प्रत्यक्षविशेषवचनात् परोक्षसामान्यप्रवृत्तां राजसूयचोदनां बाधित्वा अन्नाद्यफलतयैव भवितव्यम् । **नैतदेवं**, विरोधाभावात् । तथाहि, '**विरोधित्वात् प्रसज्येते विकल्पावृत्तिकल्पने । बाधस्तेनाभ्युपेतव्यो व्यवस्थायां तु नैव ते ॥**' नहि अनेकफलं एकस्य विरुद्धं, प्रयोगान्तरस्य वचनान्तरेणैव कल्पितत्वात् । समुच्चयेन हि आवृत्तिदोषः अन्यत्र अभिधीयते । सा तु अत्रावृत्तिः ब्राह्मणादिसंबन्धात् राजसूयग्रहणाच्च अवश्यंभाविनी । यदि च 'एतयाऽन्नाद्यकामं' इत्युत्पत्तिवाक्यं भवेत्, ततः पश्चात् प्रवर्तमाना राजसूयचोदना बाध्येत । न । द्वयोरपि हि आग्नेयादिचोदनोत्पादितेषु कर्मसु प्रवृत्तेषु युगपत्कालत्वेन अगृह्यमाणविशेषत्वात् तुल्यबलत्वम् । यथैव हि राजसूयचोदना संनिहितानालोच्य प्रवर्तते, तथैव अन्नाद्यकामचोदनाऽपि । नहि तत्र अवेष्टिः केनचिदपि शब्देनोपात्ता । न च 'राजसूयेन' इति सामान्यशब्दः, पौर्णमासीशब्दवत् प्रकृतसमुदायविशिष्टसमुदायिवचनत्वात् । अत एव तत्कृतमपि न दौर्बल्यं लभते । इयांस्तु विशेषः, एकेन बहवो गृह्यन्ते, अन्येनाल्पे । न च तावता कश्चिदतिशयोऽस्ति । ननु च एतया इति श्रुत्यैव प्रत्यक्षवचनात् अस्ति विशेषः । स्याद्विशेषो, यदि एतच्छब्दः फलेन संबध्यते । यदि वा 'अथैष ज्योतिः' इत्यादिवत् प्रस्तूयमानं ब्रूयात् प्रत्ययसंनिकर्षात्, तत्रापि यजिशब्दगृहीतैव अवेष्टिः अन्नाद्येन संबध्येत । एतावच्च राजसूययजावपि अस्ति इत्यविशेषः । प्रकृतमपि च ब्रुवन् एतच्छब्दः आग्नेयादिवाक्यालोचनाहते नैव ब्रवीतीति । ततश्च राजसूययजिरपि तावता यत्नेन शक्नोति ग्रहीतुं इति तुल्यबलत्वम् । ननु अवान्तराधिकारस्य अस्ति विशेषः । उच्यते । अयमेव विशेषो यदेकत्र बहूनां ग्रहणं, अपरत्र चाल्पानाम् । ग्रहणवेला तु तुल्यैव । यदि च ऐकान्तिकमत्र अकर्मान्तरत्वं स्यात्, तत एवमुच्येत । कर्मान्तरमपि च एतदिति दर्शितम् । ततश्च विषयान्तरत्वादेव स्वाराज्यान्नाद्ययोरविरोधः । कर्मान्तरत्वेऽपि च बार्हस्पत्यादिलिङ्गदर्शनात् प्रकृतावेष्टिप्रकृतित्वमेव प्रतिपत्तव्यम् । राजन्यस्यापि तुल्यप्रवृत्तेः फलपदानुषङ्गाच्च ब्राह्मणवैश्यवदेव कर्मान्तरेण प्रयोगान्तरेण वा संबन्धः । एवं च तस्यापि मध्येनिधानवाक्यं तन्त्रप्रयोगे सति उपपत्स्यते । राजसूयमध्यस्थायां तु दक्षिणाभेदात् प्रतीष्टि प्रयोगान्यत्वे मध्येनिधानविधिः अवरुध्येत (विरुध्येत) । तस्मात् प्रापकाण्येतानि श्रवणानि इति सिद्धम् ।

शा— '**राज्ययोगनिमित्तोऽयमार्यावर्तप्रसिद्धितः । सवलोकप्रसिद्धत्वादविगानाच्च गम्यते ॥ क्षत्रियत्वनिमित्तत्वमनार्येष्ववगम्यते । द्रविडेषु विगीतं च तदन्येष्वप्रसिद्धितः ॥**' तेन राज्ययोगात् राजानस्त्रयोऽपि भवन्ति इति पूर्वः पक्षः । सिद्धान्तस्तु राजयोगादेव राज्यशब्दः । स्वतन्त्रस्तु राजशब्दः क्षत्रियवचनः इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात् प्रापकाणि वचनानि इति ।

**सोम**— पूर्ववत् यदिशब्दबलात् निमित्तार्थत्वं इति प्रत्यवस्थानात् **संगतिः** । अन्तरवेष्टौ पूर्वपक्षे त्रयाणां वर्णानां कर्तृत्वं, सिद्धान्ते तु क्षत्रियस्यैवेति फलभेदो बोध्यः । राजसूयमेव विषयीकृत्य राजशब्दार्थनिरूपणे कर्तुं शक्येऽपि अध्यायसंगतये प्रयोगभेदव्युत्पादनाय अवेष्टिवाक्योदाहरणं इति द्रष्टव्यम् । अत्र 'यदि ब्राह्मणः' इत्यादिवाक्यैर्न कर्मान्तरविधिः प्रकृतावेष्टिप्रत्यभिज्ञाविरोधात्, किंतु ब्राह्मणादिविशिष्टप्रयोगान्तरविधिरिति द्रष्टव्यम् । **यद्यपि** 'यदि ब्राह्मणः' इत्यादेः प्रापकत्वे निमित्तार्थत्वे च बहिरवेष्टौ त्रयाणामपि वर्णानां कर्तृत्वान्न फलभेदः, **तथापि** अन्तरवेष्टौ पूर्वपक्षे त्रयाणां वर्णानां कर्तृत्वं, सिद्धान्ते तु क्षत्रियस्यैवेति **फलभेदो** बोध्यः ।

**सूत्रार्थस्तु**— अवेष्टिविषयं ' यदि ब्राह्मणः ' इत्यादिकं ब्राह्मणादिकर्तृकप्रयोगान्तरप्रधानं स्यात्, एकस्यैव क्षत्रियस्य राजसूययज्ञसंयोगादिति ।

**वि—** ' राजसूयं प्रकृत्येष्टिरवेष्टयाख्या श्रुताऽत्र तु । विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ।। विप्रादेरनुवादः स्यात् प्रापणं वा,ऽनुवादगीः । व्यत्ययाय त्रयाणां च राजत्वप्राप्तिरस्ति हि ।। , न राज्ययोगाद्राजत्वं क्षत्रियत्वं तु तत्त्वतः । अप्राप्तप्रापणं तस्मान्न रथंतरतुल्यता ।। '

**भाट्ट**—राजसूये राजकर्तृके प्रत्येकदक्षिणाऽऽम्नानात् अवेष्टिसंज्ञकाः पञ्च इष्टयः पृथक्प्रयोगाः समाम्नाताः । तदवान्तरप्रकरणे ' यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा अभिघारयेत्, यदि राजन्य ऐन्द्रं , यदि वैश्यो वैश्वदेवं ' इति श्रुतम् । तत्रापि पूर्ववत् ब्राह्मणकर्तृकत्वादि निमित्तमेव, यदिशब्दश्रुतेः । राजसूयस्य त्रैवर्णिककर्तृकत्वेन ब्राह्मणादेः प्राप्तत्वाच्च । राजशब्दस्य प्रजापालनकर्तरि सर्वलोकप्रसिद्धेः, क्षत्रियमात्रे द्रविडप्रसिद्धेस्तु म्लेच्छप्रसिद्धत्वेन असाधकत्वात् , व्याकरणप्रसिद्धेः तन्मूलकत्वेन अनियामकत्वाच्च , सर्वलोकप्रसिद्धेः श्रौतयदिशब्दमूलकत्वाच्च । अतो ब्राह्मणादिकर्तृकत्वे निमित्ते मध्येनिधानपूर्वकप्रत्याहुत्यभिघारणविशिष्टपञ्चहविष्कैकेष्टिप्रयोगो राजसूयान्तर्गतो विधीयते । प्रत्येकप्रयोगाश्च पञ्च अनुलोमविषया इति बोध्यम् । ' एतयाऽन्नाद्यकामं याजयेत् ' इत्यनेन च उभयोरपि नित्यनैमित्तिकप्रयोगयोः फलार्थं बहिःक्रत्वनुष्ठानं, इति न ब्राह्मणादिगुणस्य भेदकत्वम् । **इति प्राप्ते** , ' राजानमभिषिञ्चेत् ' इति श्रुतौ राजोद्देशेन अभिषेकविधानात् अभिषिक्ताधिकारिकराज्ययोगात् पूर्वमेव राजशब्दस्य क्षत्रियत्ववाचित्वप्रतीतेः, तस्य ' कर्मणि ' इत्यधिकृत्य ( '५।१।१२४ ) 'पत्यन्तपुरोहितादिभ्यो यक्' (पा०५।१।१२८) इति स्मृत्या पुरोहितादिगणपठितात् राजशब्दात् यगादिविधानेन च राजशब्दस्य राजशब्दप्रसिद्धिपूर्वकत्वावगतेः द्रविडप्रयोगानुसारेण राजशब्दः क्षत्रियवचन एव । अतश्च अवेष्टौ ब्राह्मणादीनां प्राप्त्यभावात् विधेयत्वावगतेः कर्तृरूपात् गुणात् अवेष्टिप्रयोगान्तरमेव पञ्चहविष्कैकेष्टिरूपं समस्तगुणविशिष्टं बहिःक्रतु विधीयते । तस्य च उक्तवचनेन अन्नाद्यं फलम् । अन्तःक्रतौ तु प्रत्येकं पञ्च प्रयोगा एव । **यद्यपि** च पूर्वपक्षसिद्धान्तयोः पञ्चहविष्कैकेष्टिप्रयोगस्तुल्यः, **तथापि** ब्राह्मणादिगुणस्य पूर्वपक्षे न भेदकत्वं , सिद्धान्ते तु तत् इति विशेषः । तत्प्रयोजनं पक्षद्वयोपपादनेनैवोक्तम् । न चैवं राजन्यवाक्ये तस्य प्राप्तत्वात् विधेयत्वाभावेन भेदकत्वानापत्तिः, राजन्यपदस्य अभिषिक्तानभिषिक्तक्षत्रियमात्रवाचित्वेन राजसूये अप्राप्तस्यैव तस्य विधेयतया भेदकत्वोपपत्तेः । राजसूये हि राजपदस्य क्षत्रियमात्रशक्तस्यापि ' राजेत्येतानभिषिक्तानाचक्षते ' इति निरूढलक्षणातात्पर्यग्राहकात् लिङ्गात् अभिषिक्तक्षत्रियस्यैवाधिकारः । अतः सिद्धं त्रिष्वपि वाक्येषु कर्तृरूपस्य गुणस्य प्रयोगभेदकत्वम् । यदिशब्दश्च ' अभिघारयेत् ' इति लिङः प्रयोज्यत्वापरपर्यायहेतुमदर्थकत्वे आख्यातद्वयैकवाक्यत्वे च तात्पर्यग्राहकः । तेन मध्येनिधानपूर्वकप्रत्याहुत्यभिघारणप्रयोजकीभूतैः ब्राह्मणादिकर्तृकैः यागैः इष्टं भावयेत् इति वाक्यार्थो बोध्यः ।

**मण्डन**—' राजा क्षत्रिय उच्यते । '

**शंकर**— ' अवेष्टिर्हि भिदा मता । ' भिदा भेदेन ।

* अवेष्टयधिकरणं ( २।३।२।३ ) रथंतराधिकरणस्यापवादः, कौस्तुभे ' अनन्तरा तु संगतिः आपवादिकी' इत्युक्तत्वात् ( २।३।२।३ पृ. १५. ) **के.** * **अवेष्टयधिकरणे** औदमेघिन्यायः निराकृतः । **वा.** ३।५।८।२६ पृ. १००३, * अवेष्टयधिकरणे न च फलान्तरसंबन्धः कर्मान्तरत्वेन विना न घटते इत्युक्तम् । २।३।११।२४ पृ. ६१३. * अवेष्टयधिकरणे प्रयोगाङ्गभूतस्य गुणस्य पूर्वप्रयोगसंयोगासंभवे प्रयोगविधित्वज्ञापनेन प्रयोगभेदकत्वं व्युत्पादितम् । **सु.** पृ. ९६५. * अवेष्टयधिकरणे राजशब्दः क्षत्रियमात्रे शक्तः न राज्ययोगिनि , अभिषेकोत्तरभाविराज्ययोगात् प्रागपि ' राजानमभिषिञ्चेत् ' इत्यादेः शास्त्रीयप्रयोगस्य क्षत्रियमात्रेऽपि सद्भावात् इति निरणायि । **नीतिमयूखे** पृ. १.

* **अवैदिकं** वैदिकत्वसामान्योपस्थितेन बाध्यते । यथा अश्वप्रतिग्रहेष्टेर्निमित्तं वैदिकं दानं , न लौकिकं इति । **बाल.** पृ. १४४.

⌛ **अव्यक्तासु तु सोमस्य** । ८।१।९।१६ ॥

'अभिजिता यजेत' 'विश्वजिता यजेत' इत्यादिषु अव्यक्तासु यजतिषु सोमस्य अग्निष्टोमस्य विध्यन्तः स्यात्, न दर्शपूर्णमासयोर्विध्यन्तः इति सिद्धान्तः। व्यक्तत्वं विधिवाक्ये द्रव्यदेवतावत्त्वम् । तच्छून्यत्वं अव्यक्तत्वम् । **के.**

* **अव्यक्तासु तु सोमस्य इत्यनेन न्यायेन** ये ज्योतिष्टोमविकारा विज्ञायन्ते, तेषु सर्वाः संस्थाः विकल्पेन प्रवर्तन्ते पूर्वपक्षे । सिद्धान्ते तु अग्निष्टोमसंस्थैवैका प्रवर्तते । **वा.** ३।६।१६।४७. * अव्यक्तासु तु सोमस्य इत्यधिकरणे उद्भिदादियागप्रकृतित्वं सोमस्य वक्ष्यते । **सु.** पृ. ४०१. * ऐन्द्रवायवादिवाक्यानां यागविधायकत्वे तेषां यागानां स्वार्थतया विनियुक्तदेवताकत्वाभावलक्षणाव्यक्तत्वाभावेन '**अव्यक्तासु तु** सोमस्य' इतिन्यायाप्रवृत्तिः पूर्वपक्षे प्रयोजनम् । सिद्धान्ते तु तत्प्रवृत्तिः । **कु.** २।२।६।२०, * धात्वर्थस्य करणत्वेन करणतृतीयान्तानां उद्भिद्–श्येनादिपदानां तन्नामधेयत्वात् 'अव्यक्तासु तु सोमस्य' इतिन्यायात् सोमेन यष्टव्यम् । २।१।२।२ पृ. १२६.

* **अव्यक्तचोदनः सोमः** । अव्यक्तत्वं च उत्पत्तिवाक्ये द्रव्यदेवताशून्यत्वं अन्यतरशून्यत्वं वा । **भा.** ८।१।५।१२, ८।१।९।१६. * **अव्यक्तचोदनत्वं** सामान्यात् अभिजिद्विश्वजिदादिषु श्येने च सौमिको विध्यन्तः । ८।१।९।१६.

* **अव्यक्तचोदितत्वं** सोमप्रकृतित्वलिङ्गम् । **बाल.** पृ. ११९.

* **अव्यक्तत्वं** यागस्य– केयमव्यक्तता ? स्वार्थतया विनियुक्तदेवताविरहः । यत्र तद्धित– चतुर्थी– मन्त्रवर्णैः यागार्थतयैव देवता विनियुक्ता, तत् व्यक्तम् । इतरत्तु अव्यक्तम् । तथा च विश्वजिदादयः सोमश्च । **शा.** ८।१।९.

* **अव्यभिचारश्च** असकृद्दर्शनपूर्वकः । **बृहती.** पृ. ८५ । असकृद्दर्शनेन हि कार्यस्य स्वाभाविकः कारणसंबन्धो निश्चीयते । स्वाभाविककारणसंबन्धनिश्चयश्च अव्यभिचारनिश्चयः । **ऋजु.**

* **अव्यभिचारि** च कारणं कारणवतामिष्टम् । **भा.** ३।१।६।१२ पृ. ६८२.

* **अव्ययानां** अनेकार्थत्वात् हिशब्दः निमित्तत्वपरो वा । **भाट्ट.** ९।१।९ पृ. ६५.

* **अव्ययसंज्ञकेषु कृत्सु** कृत्संज्ञकेभ्योऽपि ईषन्न्यूनभावनाज्ञानमित्याह– ( **सु.** पृ. ५६२ ) "तथा अव्ययकृतो भावे भवन्ति' इतिस्मरणाविशेषेऽपि स्वसंवेद्यं ईषन्न्यूनभावनाविज्ञानम् । 'अग्निक्रामं जुहोति' 'दर्भतरुणकेनोपघातं जुहोति' 'अभिषुत्य हुत्वा भक्षयन्ति' 'पुरा वाचः प्रवदितोः' इति सर्वत्र श्रुत्यैव भावनाऽन्तरसापेक्षा भावना अवगम्यते ।" इति । **वा.** २।१।१।१ पृ. ३८०.

* **अव्ययीभावलक्षणं** अव्ययीभावार्थविचारश्च 'समासवादः' इति बिन्दौ मणिग्रन्थे द्रष्टव्यः ।

* '**अव्यवस्था न युक्ता** हि व्यवस्था यत्र लभ्यते ।' **वा.** १।३।२।३ पृ. १७६.

* **अव्यवस्थितविकल्पो** यथा अग्निहोत्रे दशद्रव्यविकल्पः । **बाल** पृ. १५८.

* **अव्यवहितोत्तरत्वं–** स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणत्वम् । तेन अपेक्षाबुद्ध्यात्मकपरामर्शसंग्रहः । एवं तत्तत्परामर्शानां कारणतेति । **मणि.** पृ. ३७.

* **अव्यापारस्य** व्यापारं विना भावनाऽवच्छेदकत्वायोगात् । **सु.** पृ. ७४४, * अव्यापारस्य व्यापारावच्छेदं विना विधेयत्वायोगः । पृ. ४०१.

⌛ **अव्याविकन्यायः** । अयमेव अविरविकन्यायः । तद्यथा– अवेर्मांसमिति विगृह्याविशब्दादुत्पन्नं भवत्याविकमिति । एवमथर्वाणमधीते इति विगृह्य आथर्वणिकमिति, भावे इति भाष्ये स्पष्टम् । ( भावे इति सूत्रभाष्ये नास्तीदं किमपि । **के.** ) **साहस्री.** ४८८.

* **अव्यावृत्तविषयः अभ्यनुज्ञाविधिः** यथा 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका । याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥' इति । **बाल.** पृ. १६.

* **अशक्तस्य** अन्धः पङ्गुः बधिरः मूकः गवाश्वादयस्तिर्यञ्चश्च इत्यादेः कर्मसु नाधिकारः। आज्यावेक्षणादीनामङ्गानां क्रत्वर्थतया, तदभावे क्रतोरभावात् फलासिद्धेः। **वि.** ६।१।२. * **अशक्तानां सर्वभावानां** कार्यारम्भाभावः। **वा.** २।१।२।५ पृ. ३९४.

**अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते इति न्यायः।** महतां पदं गन्तुं असमर्थाः प्राकृताः जनाः महतां निन्दां कर्तुमारभन्ते। महत्सु अपकर्षितेषु स्वस्य तत्तुल्यताऽपि लब्धुं शक्येत इति तेषां दुराशा। **साहस्री.** ३५५.

**अशक्तिकृताङ्गत्यागन्यायः।** यथाशक्त्यधिकरणमिदम् (६।३।१)। एकस्य यजमानस्य ज्योतिष्टोमानुष्ठानाशक्तौ 'अशक्ति०' न्यायात् ज्योतिष्टोमेऽपि विहितयजमानैकत्वत्यागेन अर्थात् तद्द्वित्वबहुत्वप्राप्तिर्भविष्यति इत्याशङ्क्य आख्यातादेकत्वविशिष्टस्यैव कर्तृत्वावगतेः, एकत्वाभावेन अधिकाराभावादेव तु अस्य अशक्तिकृताङ्गत्यागन्यायविषयत्वानुपपत्तेः नार्थात् द्वित्वप्राप्तिः इति परिहारमाह। **सु.** पृ. १२९१. *'द्वित्वबहुत्वयुक्तं वाऽचोदनात्तस्य' इत्यधिकरणे (३।३।९) यजमानस्य आत्मीयमेकत्वमपि अनुपादेयमित्युक्तं तत्र **अशक्तिकृताङ्गत्यागन्यायाप्रवृत्त्यै।** **बाल.** पृ. ९७.

**अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने इति न्यायः।** अयं 'सूचीमुखि दुराचारे रण्डे पण्डितमानिनि। असमर्थो गृहारम्भे समर्थो गृहभञ्जने॥' इति पद्यमूलकः प्रतीयते। चटकां प्रति वानरवाक्यमिदम्। अस्याख्यायिका तु पञ्चतन्त्रादिग्रन्थेभ्योऽवसेया, नेह विस्तरः। **साहस्री.** ६५८.

* **अशक्यं** न करिष्यते। **भा.** १०।८।८।१६ पृ. २०७३.

* **अशक्याङ्गत्यागस्य** विधिना अनुज्ञातत्वात् न वैगुण्यापादकता (नित्याधिकारे)। **सु.** पृ. ५३२.

* **अशब्दमनपेक्षं स्यात्** (धर्मस्य शब्दमूलत्वात्०) १।३।१।१। कथं पुनः एषां लिङ्गवाक्यादीनां स्वातन्त्र्येण प्रामाण्यं न भवति? उच्यते। तथा चोक्तं 'अशब्दमनपेक्षं स्यादिति'। **वा.** ३।३।७।१४ पृ. ८३०.

* **अशब्दस्य** प्रापकस्य शाब्दे व्यवहारे अन्वयायोगः। **सु.** पृ. १३८०.

* **अशास्त्रलक्षणानि** उक्थ्यस्तोत्राणि शताग्निष्टोमे, तानि शास्त्रलक्षणया अग्निष्टोमान्ततया बाध्यन्ते। **भा.** ८।३।६।२१.

**अशीलं कस्य नाम स्यान्न खलीकारकारणं इति न्यायः।** अशीलं दुष्टस्वभावः। नाम–प्रसिद्धे। कस्य खलीकारकारणमपमानहेतुर्न भवति? अपि तु सर्वस्यैव भवतीति भावः। 'खलीकारोऽपकारे स्यात्' इति कोशः। **साहस्री.** ७३४.

* **'अशुद्धमिति चेन्न, शब्दात्'** इति व्याससूत्रे (३।१।२६) विहितहिंसायां निषेधो न प्रवर्तते इत्याह। **भाट्ट.** १०।८।८. (अग्निष्टोमादिकर्म पशुहिंसायुक्तत्वात् अशुद्धं इति चेन्न, 'अग्नीषोमीयं पशुमालभेत' इत्यादेर्विधिरूपात् शब्दात् ज्ञायमानत्वेन अशुद्धत्वाभावात् इति सूत्राक्षरार्थः)।

**अशेषत्वात् तदन्तः स्यात्, कर्मणो द्रव्यसिद्धित्वात्।** ६।७।७८॥

विश्वजिति अध्वरे दक्षिणाकाले विद्यमानं सर्वस्वं देयमित्युक्तम्। दक्षिणादानोत्तरं च अशेषत्वात् स्वीयद्रव्यस्य शेषाभावात्, शेषस्य कर्मणश्च द्रव्यसिद्धित्वात् द्रवेण सिद्धिर्यस्य तादृशत्वात् द्रव्याधीनत्वात् दक्षिणादानोत्तरकालीनं अवशिष्टं कर्म कर्तुं न शक्येत। तस्मात् विश्वजित् तदन्तः स्यात्। तत् सर्वस्वदक्षिणादानं अन्तः समाप्तिर्यस्य तादृशः स्यात्। तस्मात् विश्वजित् सर्वस्वदक्षिणादानान्तः कर्तव्यः, अवशिष्टं कर्म उत्स्रष्टव्यं इति पूर्वः पक्षः।

**अपिवा शेषकर्म स्यात्, क्रतोः प्रत्यक्षशिष्टत्वात्।** ९॥

पूर्वपक्षनिरासार्थः अपिवा इति शब्दः। न दक्षिणाकाले सर्वस्वं दत्त्वा यज्ञ उत्स्रष्टव्यः, किंतु शेषकर्मोपयोगि द्रव्यं शेषयित्वा इतरत् सर्वस्वं देयं, शेषितेन च द्रव्येण शेषकर्म स्यात्। शेषकर्म च कर्तव्यमेव, क्रतोः साङ्गस्य प्रत्यक्षशिष्टत्वात् प्रत्यक्षेण वचनेनैव शिष्टत्वात् विहितत्वात्। इति द्वितीयः पूर्वपक्षः।

**तथा चान्यार्थदर्शनम् । १० ॥**

विश्वजिति यज्ञे देयात् सर्वस्वात् किंचित् शेषयित्वा तेन दक्षिणादानोत्तरकालीनं कर्म कर्तव्यं इति द्वितीयपूर्वपक्षे अन्यार्थस्य दर्शनं विद्यमानं उपपद्यते 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' ( आच्छादयति ) इति । अवशिष्टकर्मोत्सर्गे तु अवभृथः एव न स्यात् । तत्र कुतो वत्सत्वचः परिधानम् । तस्मादवशिष्टं कर्म कर्तव्यं इति द्वितीयः पूर्वपक्ष एव साधुः ।

**अशेषं तु समञ्जसाऽऽदानेन शेषकर्म स्यात् । ११ ॥**

द्वितीये पूर्वपक्षे यदुक्तं तन्निरासार्थः तुशब्दः । सर्वस्वदानात् न किं चिदवशेषयितव्यम् । सशेषं दानं असमञ्जसा । अशेषं निःशेषं तु सर्वस्वस्य दानं समञ्जसा समञ्जसम् । अथ शेषकर्म कथं स्यादिति चेत्, आदानेन नवीनेन संपादनेन शेषकर्म स्यात् । अन्यत् द्रव्यमर्जयितव्यं, तेन च शेषकर्म कर्तव्यं इति तृतीयः पन्थाः पूर्वपक्षस्य ।

**नादानस्यानित्यत्वात् । १२ ॥**

विश्वजिति यज्ञे माध्यंदिने सवने सर्वस्वदक्षिणादानोत्तरं अपूर्वेण अर्जितेन द्रव्येण शेषकर्म कर्तव्यं इति यः तृतीयः पन्था उक्तः, तं द्वितीयः पूर्वपक्षी निषेधति । न तदानीमर्जितेन शेषकर्म कर्तुं शक्यम् । आदानस्य अनित्यत्वात् अनियतत्वात् । अर्जितुं प्रवृत्तोऽपि कदा चिन्न लभेत, तदा च शेषकर्मणो लोपः स्यात् । तच्चानिष्टम् । तस्मात् शेषकर्मार्थं सर्वस्वादेव शेषकर्मपर्याप्तं अवशेषयितव्यं इत्येव द्वितीयः पक्षो युक्तः ।

**दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधः स्यात् । १३ ॥**

सिद्धान्तसूत्रम् । विश्वजिति यज्ञे सर्वस्वदानोत्तरं न शेषकर्मलोपः, न शेषकर्मार्थं सर्वस्वादवशेषयितव्यं, नापि तदर्थं अपूर्वमर्जयितव्यं इति तुशब्दार्थः । प्रकृतौ एव ज्योतिष्टोमे दीक्षासु विनिर्देशः विशेषतो निर्देशो भवति 'इदं क्रत्वर्थं, इदं भक्षार्थं, इदमानमनाय' इति । एतस्मात् दीक्षासु विनिर्देशात् सर्वस्वं त्रेधा विभक्तम् । तच्च सर्वं विश्वजिति अतिदिष्टम् । तत्र यत् अक्रत्वर्थं क्रत्वर्थभिन्नं भक्षार्थभिन्नं च, तेन भक्षार्थभिन्नेन क्रत्वर्थभिन्नेन च केवलमानमनार्थेन द्रव्येण 'सर्वस्वं ददाति' इति विहितेन दानेन संयोगोऽवगन्तव्यः । तथा च सर्वस्वस्य दानं नाम आनमनार्थस्य सर्वस्य विश्वजिति दानम् । यच्च क्रत्वर्थं तेन शेषकर्मानुष्ठानं भविष्यति । 'सर्वस्वं ददाति' इत्यत्र च स्वं ददाति इत्यनूद्य सर्वता विधीयते । तेन न अदातव्यस्य क्रत्वर्थस्य भक्षार्थस्य च दानं विधीयते । तथा च आनमनार्थस्य सर्वस्यैव दानं, क्रत्वर्थेन च पूर्वकर्मणः शेषकर्मणश्च अनुष्ठानं, भक्षार्थस्य तु भक्षार्थत्वमेव । तस्मात् अविरोधः स्यात् न कश्चित् विरोधः । सर्वं समञ्जसम् । **के.**

**अशोकवनिकान्यायः ।** अयमेकस्मिन् साध्ये अनेकेषु साधनेषु सत्स्वपि आदौ एकस्मिन् प्रयुक्ते सति साध्यसिद्धौ अन्यप्रयोगेऽर्थाभावात् तत् स्वयमेव निवर्तते, पूर्वं कस्य चित् प्रयोगे चेच्छैव नियामिकेति विवक्षायां प्रवर्तते । यथा– रावणो लङ्कायां सीतां नीत्वा राक्षसीभ्य आज्ञप्तवान्– अशोकवनिकायामियं स्थाप्येति । ताश्च तत्र बह्वयः सन्ति । तत्रैकस्यां स्थाप्यते चेत्तावतैव तदाज्ञायाः परिपालितत्वात् सर्वत्र स्थापयितुमशक्यत्वाच्चान्यत्र स्थापनं स्वयमेव निवर्तते । केचित्तु– यथा रावणेन सीता नीता चेदशोकवनिकायामेवेति कुतः स्थापिता, नान्यत्रेत्यत्र रावणेच्छैव नियामिकेति, तावतैव तदवस्थानसिद्धेः सर्वत्र स्थापनासंभवाच्चान्यत्र स्थापनं स्वयमेव निवर्तते इति न्यायार्थमाहुः । **साहस्री.** २९६.

* **अश्मनां तेजो हिरण्यम् । भा.** ८।१।१८।३५.

**अश्मलोष्टन्यायः ।** यथा तूलाद्यपेक्षयाऽतिकठिनस्यापि लोष्टस्य अश्मापेक्षया मृदुत्वं, तथा प्रकृतेऽपि । ( वैषम्याधिक्यविवक्षायां अयं न्यायः इति न्यायसंग्रहः ) । **साहस्री.** १११.

**अश्रुतदेवताकेषु मन्त्रवर्णादिना देवतासिद्धिः ॥**

श्रुतदेवताकेषु यागेषु देवतोद्देशमात्रसंभवेऽपि अश्रुतदेवताकेषु तत्कल्पने मानाभावः । परस्वत्वोत्पादनांशस्येव – उद्देशांशस्यापि विरहे स्वत्वत्यागमात्रेणापि यागत्वसंभवात् । पूजादानशरीरकोटौ संप्रदानकारकस्यापि

निवेशात् तदाक्षेपे तु अग्नित्वादिना तदनुपस्थितेः आक्षेप्यताऽवच्छेदकदेवतात्वपुरस्कारेण वा 'देवताया इदं, न मम' इत्यादिरूपस्त्यागोऽस्तु । **इति प्राप्ते**, सामान्यस्य प्रवृत्तौ अनुपयोगात् तत्तद्विशेषधर्मैरेव संप्रदानस्य यागशरीरघटकत्वात् विप्रसामान्याय दानस्याभावात् अग्न्यादिदेवतायाः शब्दद्वारैव यागोपकारकत्वेन तद्वाचकपदेष्वग्निपदस्य नियमने इव देवतापदस्यापि शब्दविशेषरूपत्वेन तदुच्चारणनियमनेऽपि प्रमाणान्तरावश्यंभावात् 'प्रजापते न त्वदेतान्यन्यः इति जुहुयात्' इत्यादावपि मन्त्रप्रतिपाद्यस्य प्रजापत्यादेरेव देवतात्वम् । विशेषपर्यवसायकप्रमाणविधुरो देवतासामान्यघटितयागविधिस्तु नास्त्येव । **संकर्ष.** २।४।२.

* **अश्रुतफलासु** अपि चोदनासु फलमस्ति । ( अर्थवादगतं अनुमेयं वा ) । **शा.** ४।३।५.

⌛ **अश्रेष्ठः श्रेष्ठानुसारी इति न्यायः** । यथा चोक्तं गीतायां भगवता श्रीकृष्णेन— 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥' इति ( ३।२१ ) । 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥' इति च ( ३।२३ ) । **साहस्री.** ५२०.

* '**अश्व** ऋषभो वृष्णिर्बस्तः पुरुषः इति ते प्राजापत्याः' इत्यत्र लिङ्गं पुंस्त्वं विवक्षितं 'मुष्करा भवन्ति सेन्द्रियत्वाय' इति विधानात् ( मुष्कराः वृषणवन्तः ) । **भा.** ४।१।६।१७. * '**अश्वः** श्यावो रुक्मललाटो दक्षिणा ।स ब्रह्मणे देयः ।' कृत्स्नदक्षिणाविकारः ( अयं ) अश्वः । ( उक्थ्यसंस्थे उपहव्ये यागे इदम् । अग्निष्टोमसंस्थे उपहव्ये तु 'अश्वः श्वेतो दक्षिणा' इति ) । **भा.** १०।३।१८।६५,६७.

* **अश्वाश्च उपकारकतरा भवेयुः** । यद्येषां दान–प्रतिग्रह–विक्रयाः न प्रतिषिध्येरन् । 'न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णाति' इति श्रुतिः । स्मर्यते च 'नाश्वं विक्रीणीते' इति । **भा.** १०।३।११।४७.

* '**अश्वां पुरुषीं धेनुके दत्त्वा**' इति सारस्वते सत्रे कामेष्टौ तुरगमनुष्यजातीयानां स्त्रीणां दक्षिणात्वेन दानं श्रुतम् । तच्च अदृष्टार्थम् । ( आश्वलायनश्रौतसूत्रे ( १२।६।३२ ) नारायणवृत्तिः 'स्त्री अश्वा स्त्री पुरुषी च ते धेन्ववस्थे' इति । प्रथमप्रसूते अश्वा पुरुषी च तयोर्दानं इति तदर्थः । धेन्ववस्थत्वं दुग्धप्रदत्वम् ) । **वि.** १०।२।१५.

⌛ '**अश्वैरपहृतं को हि गर्दभैः प्राप्तुमिच्छति' इति न्यायः** । 'न च शीघ्रहृतेऽर्थेऽस्ति चिरादागच्छतो गतिः' इति पूर्वार्धः । **वा.** १।३।२।३ पृ. १७७.

⌛ **अश्वस्य चतुस्त्रिंशत्, तस्य वचनाद् वैशेषिकम्** । ९।४।२।१७ ॥

अश्वमेधे त्रयः सवनीयाः पशवः अश्वः, तूपरः ( शृङ्गरहितः पशुः ), गोमृगः (गोः मृग्यामुत्पन्नः पशुः) इति । तत्र अध्रिगुप्रैषे अश्वार्थे 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति' इत्याद्या ऋक् समाम्नाता पठनीया इति पाक्षिकः सिद्धान्तपक्षः उच्यते । अश्वस्य चतुस्त्रिंशद्वङ्क्रयः । तस्मात् तस्य अश्वस्य मन्त्ररूपात् वचनात् वैशेषिकं विशेषरूपं इदं मन्त्रानुवचनं कर्तव्यं, तूपरगोमृगयोस्तु द्विपञ्चाशदनयोर्वङ्क्रयः इति वचनं कर्तव्यम् । इति ।

**तत् प्रतिषिध्य प्रकृतिर्नियुज्यत, सा चतुस्त्रिंशद्वाच्यत्वात्** । १८ ॥

अश्वमेधे अश्वार्थे 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य०' इति ऋक् वक्तव्या इति प्रागुक्तम् । तत् पाक्षिकत्वेन सिद्धान्तभूतमपि पूर्वपक्षत्वेनात्र अभिप्रेत्य सिद्धान्तमाह । तत् इति द्वितीयान्तं पदं, चतुस्त्रिंशद्वाजिनः इत्यृग्रूपं वचनं, 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इत्यनेन षट्त्रिंशद्वाच्यत्वात् सकाशात् प्रतिषिध्य सा प्रकृतिः यथाप्राप्तं समस्य वचनं चोदकप्राप्तं नियुज्यते । तस्मात् वैशेषिकं वचनं न कर्तव्यं, सामासिकं तु वचनं कर्तव्यम् । तत्र तूपरस्य षड्विंशतिः, गोमृगस्य षड्विंशतिः, अश्वस्य चतुस्त्रिंशत्, इति संकलनया षडशीतिरेषां वङ्क्रयः इति अध्रिगौ वक्तव्यं इति सिद्धान्तः ।

**ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः** । १९॥

तूपरगोमृगयोरश्वस्य च वङ्क्रीणां समस्य वचनं षडशीतिरेषां वङ्क्रयः इति कर्तव्यं इत्युक्तम् । तत् वाशब्देन व्यावर्तयति । अश्वस्य तूपरगोमृगाभ्यां समस्य वचनं न

ां, किंतु अश्वार्थे ऋक् स्यात् ‘ चतुस्त्रिंशद्वाजिनो
धोर्वङ्क्रीरश्वस्य स्वधितिः समेति ’ इत्याद्या ऋगेव
ग स्यात्। आम्नातत्वात्। सा हि अश्वार्थमा-
, न च प्रतिषिद्धा। अविकल्पश्च न्याय्यः। ऋग्वा
। वचनं वा इति विकल्पस्तु न न्याय्यः। तस्मात्
कं वचनं अश्वार्थे कर्तव्यम्। तूपरगोमृगार्थे तु
ञ्चाशदनयोर्वङ्क्रयः इति समस्य वचनं स्यात्।

**:स्यां तु वचनादैरवत् पदविकारः स्यात्। २०॥**
क्तं पक्षं तुशब्देन व्यावर्तयन् पूर्वपक्षी ब्रूते। ऋक्
ऽऽम्नाता न वक्तव्या किंतु तस्यां ऋचि ‘ न चतु-
दिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात् ’ इति वच-
पदविकारः स्यात् चतुस्त्रिंशत् इति पदस्य स्थाने
ंशतिः इति पदं आदेशं कृत्वा ‘ षड्विंशतिर्वा-
देवबन्धोः’ इति पठनीयम्। ऐरवत्। यथा ‘ यज्ञा-
वो अध्वरे गिरागिरा च दक्षसे ’ इत्याद्यायां ऋचि
पदस्थाने इरापदं आदेशं कृत्वा अवशिष्टा ऋक् सैव
ते तद्वत्।

**र्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात्। २१॥**
अश्वार्थे ‘ चतुस्त्रिंशद्वाजिनो देवबन्धोः ’ इत्याद्या
चतुस्त्रिंशत्पदस्थाने षड्विंशतिः इति पदमादिश्य
ोया इति पूर्वपक्षिणा उक्तम्। तन्निषेधार्थो वाशब्दो-
। न केवलं पदविकारः कर्तव्यः किंतु सर्वप्रतिषेधः
यैव मन्त्रस्य प्रतिषेधोऽयं ‘ न चतुस्त्रिंशदिति
त् ’ इति प्रतीकग्रहणेन स्यात्। ‘ चतुस्त्रिंशदिति ’
ेन मन्त्रस्य प्रतीकं गृहीत्वा तस्य सर्वस्यैव ‘ न
त् ’ इति प्रतिषेधः कृतः, न पदमात्रस्य प्रति-
। पदमात्रनिषेधे तु चतुस्त्रिंशत् इति पदेन तस्या
ः असंयोगात् निरर्थकत्वमेव स्यात्। संभूय वाक्या-
तेपादनं कर्तुं अवशिष्टा ऋक् न शक्नुयात्। तस्मात्
कं गृहीत्वा सर्वस्या एव निषेधोऽयं ‘ न चतुस्त्रिं-
ति ब्रूयात् ’ इति। तस्मात् अध्रिगुप्रैषे तूपरगोमृग-
ङ्क्रीणां समस्य वचनं, अश्वार्थे ऋक सर्वा पृथक्
व्या इत्येकः पक्षः, ऋचं प्रतिषिध्य त्रयाणामर्थे
डशीतिरेषां वङ्क्रयः ’ इति त्रयाणामपि समस्य
नं इति द्वितीयः पक्षः इति, विकल्पः सिद्धान्तः।

अश्वार्थे ‘ षड्विंशतिरस्य वङ्क्रयः ’ इति पृथक् पठ-
नीयं, ‘ षड्विंशतिर्वाजिनो देवबन्धोः ’ इति विकृता
ऋक् पठनीया, ततः परं तूपरगोमृगार्थे द्विपञ्चाशदनयोर्वङ्-
क्रयः इति समासवचनं इति तु पक्षद्वयं पूर्वपक्षः। **के.**

* अश्वस्य दानं प्रतिग्रहो विक्रयश्च अनाचारः उदी-
च्यानाम्। **वा.** १।१।३।७ पृ. २०४, * अश्वस्य बालः
किशोरः नाम। ३।४।४।१३ पृ. ९२०, **सु.** पृ. १४११.

* **अश्वादीनां केसरिणां** अदेयत्वं, विश्वजिति
सर्वस्वदानेऽपि प्रतिषिद्धत्वात्। **भा.** ६।७।३।४। विश्व-
जित्यपि सर्वस्वदाने प्रतिषिद्धत्वात् अश्वादीनामदानं इति
वक्ष्यति। **वा.** ३।४।१०।२९ पृ. ९६१.

⌛ **अश्वकर्णन्यायः**। अथ राजसूयशब्दः अव्युत्पन्नः
अश्वकर्णन्यायेन नतरां विशेषे वर्तेत। **वा.** ४।४।१।१.
अश्वकर्णः नाम शालवृक्षः। ‘ शालाख्ये वृक्षविशेषे
अश्वत्वकर्णत्वयोः शक्तिरूपेणापि अभावात् समुदायस्य
शालजातिवाचित्वं कल्पितम्’। **सु.** पृ. ४६८.

* **अश्वघासः**। अश्वार्थो घासः ( तृणं ) इति
प्रमाणान्तरसिद्धतादर्थ्यविवक्षायामपि प्रकृतिविकारभावा-
भावेन तदर्थसमासायोगात् तादर्थ्यलक्षणार्थः षष्ठीतत्पुरुषः
कथ्यते। **सु.** ४३८.

* **अश्वतरस्य दानं** प्रतिग्रहो विक्रयश्च अनाचारः
उदीच्यानाम्। **वा.** १।३।३।७ पृ. २०४.

⌛ **अश्वतरीगर्भन्यायः**। यथा वडवातो गर्दभा-
दुत्पन्ना अश्वतरी, तस्या गर्भो यथा तन्नाशाय भवति,
तथा प्रकृतेऽपि। उक्तं च। ‘ सकृद्दुष्टमपीष्टं यः पुनः
संधातुमिच्छति। स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥’
इति। किंच नन्वज्ञानकार्यान्तःकरणवृत्त्यात्मकं ज्ञानं
कथं स्वकारणीभूताज्ञाननाशाय स्यादुपजीव्यविरोधादिति
चेत् प्रकृतन्यायादवेहि। **साहस्री.** ३१६.

* **अश्वदानं** विश्वजिति सर्वस्वदाने निषिद्धं अश्व-
व्यतिरिक्तं सर्वं देयम्। ‘ न केसरिणो ददाति ’। **वि.**
६।७।३.

* **अश्वप्रतिग्रहः**। कः पुनर्लौकिकोऽश्वप्रतिग्रहः,
को वा वैदिक इति। लोके भिक्षमाणो वा अभिक्षमाणो
वा यश्चाश्वं लभते, तत्र लौकिकाश्वप्रतिग्रहः। वैदिकोऽपि

पौण्डरीके अश्वसहस्रं दक्षिणा, ज्योतिष्टोमे गौश्चाश्वश्चेति। ( उपहव्ये अश्वः श्वेतो दक्षिणा इ. )। भा. ३।४।१०।२८. । अकर्माङ्गभूतदानाश्रयपुरुषार्थत्वाभिमतो लौकिकः, कर्माङ्गभूतदानाश्रयस्तु वैदिक इति। वा. * न च तस्य ( जलोदरस्य ) अश्वप्रतिग्रहः लौकिको निदानं इति प्रतिज्ञायते। भा. ३।४।१०।२९. न च कस्यां चित् वैद्यकसंहितायां लौकिकोऽश्वप्रतिग्रहो निदानं श्रूयते, नापि प्रत्यक्षानुमानादिभिर्गम्यते । वा. * अश्वप्रतिग्रहस्य भूयस्त्वे वारुणेष्टयो भूयस्यः कर्तव्याः। अत्र टुपूटीका–तस्मात् भिन्ना एवैषां प्रयोगाः क्रतूपकारस्तु एकः। वारुणान् इत्यनेन साहित्यमिति चेत्, तन्न देवता ह्यनेनोच्यते। बहुत्वं श्रूयमाणं यागभेदं कुर्यात्। तत्र एकस्मिन् अश्वप्रतिग्रहे बहवो वारुणाः प्राप्नुवन्ति। पुनरपि नैवास्ति साहित्यम्। तस्मात् वचनान्तरं एषां साहित्यप्रतिपादकं द्रष्टव्यमिति । ५।२।२।३. * अनेकसहस्राश्वप्रतिग्रहे काण्डानुसमयोऽभ्युपेतव्यः प्रायश्चित्तेष्टौ पुरोडाशधर्मेषु। भा. ५।२।२।३. द्वित्राद्यश्वप्रतिग्रहे द्वित्रादिपुरोडाशेषु विरोधाभावात् पदार्थानुसमय एव। सोम. यत्र तु प्रधानविरोधो भवति पदार्थानुसमये, तत्र काण्डानुसमय एव। शा.

* **अश्वप्रतिग्रहेष्टिः**। अश्वदाने जलोदरव्याधिरूपो दृष्टदोषः 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति' इति वरुणग्रहवाक्येनोच्यते । इदं वैदिकस्याश्वदानस्य जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकाश्वदाने वारुणेष्टिः प्रायश्चित्तम्। वि. ३।४।१४. * अश्वप्रतिग्रहेष्टिः दातुः। भा. ३।४।११।३०–३१. * अश्वप्रतिग्रहेष्टिः, नैमित्तिकः सन् अदोषनिर्घातार्थः क्रत्वर्थः अधिकारविधिः। बाल. पृ. १४.

**अश्वप्रतिग्रहेष्टिः वैदिकेऽश्वदाने**। वारुणाधिकरणम्॥

**दोषात् त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात्**। ३।४।१०।२८॥

**भाष्यं**— अस्त्यश्वप्रतिग्रहेष्टिः 'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान् निर्वपेत्' इति। तत्र संदेहः किं लौकिके अश्वप्रतिग्रहे इष्टिः, अथ वैदिके इति। कः पुनः लौकिकोऽश्वप्रतिग्रहः को वा वैदिक इति। लोके भिक्षमाणो वा अभिक्षमाणो वा यत्राश्वं लभते तत्र लौकिकः अश्वप्रतिग्रहः। वैदिकोऽपि, पौण्डरीके अश्वसहस्रं दक्षिणा, ज्योतिष्टोमे गौश्चाश्वश्च इति। तत्रोच्यते। वैदिकत्वसामान्यात् वैदिके । **इति प्राप्ते उच्यते**। दोषात्तु इष्टिः लौकिके स्यात्। दोषो हि श्रूयते 'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति' इति। स चायमनुवादः, यत्र दोषस्तत्रेति। स च लौकिके अश्वप्रतिग्रहे शूद्रादन्यस्माद्वा पापकर्मणः कृतो भवति इत्युपपद्यते। दोषसंयोगात् लौकिके इति गम्यते। आह, न दोषसंकीर्तनं प्रायश्चित्तविषयविशेषणं, किंतु प्रायश्चित्तस्तुत्यर्थेन। उच्यते। दोषनिर्घातार्थे सति एवं स्यात्। वरुणप्रमोचनमिदं कर्म, तत् लौकिके भवितुमर्हति, लोके वरुणग्रहणस्य विद्यमानत्वात्। वैदिके तु अश्वप्रतिग्रहे तन्न स्यात्। शास्त्राद्धि वचनेन तस्य कर्तव्यता अवगम्यते। यदि च ततः पापं स्यात्, न तस्य कर्तव्यता अवगम्येत। अकर्तव्यं हि पापफलम् । ननु वैदिकेऽपि प्रतिग्रहे अप्रतिग्राह्यात् प्रतिगृह्णतः पापमस्ति। उच्यते। भवेदेवं, यदि प्रतिग्रहस्य कर्तुः इष्टिर्भवेत्। सा तु खलु यथा हेतुकर्तुः तथा उत्तराधिकरणे वक्ष्यामः । तस्मान्न वेदचोदिते अश्वप्रतिग्रहे इष्टिः, इत्येतावत् इहाधिकरणे सिद्धम्।

**वा**— वैदिकलौकिकप्रधानसंबन्धविचारप्रसङ्गात् यत्र निमित्तानां लौकिकवैदिकत्वाशङ्का, तानि विचार्यन्ते। तत्र 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति यावच्छब्दोपबन्धात् अश्वप्रतिग्रहाणां निमित्तत्वम्। तत्र संदिह्यते किं अश्वप्रतिग्रहमात्रस्य, अथ लौकिकस्यैव, अथ वैदिकस्यैव इति। 'कः पुनर्लौकिकोऽश्वप्रतिग्रहः को वा वैदिकः' इति ( भाष्ये ) लोके प्रतिषेधात्, वेदे च प्रतिग्रहीतव्यं इत्येवं अविधानात् उभयत्रापि अश्वप्रतिग्रहो नास्ति इति मन्यमानस्य प्रश्नः। इतरः विधिप्रतिषेधनिरपेक्षस्वरूपमात्रं दर्शयति, अकर्माङ्गभूतदानाश्रयपुरुषार्थत्वाभिमतो लौकिकः, कर्माङ्गभूतदानाश्रयस्तु वैदिकः इति। किं प्राप्तं ? अविशेषाभिधानात् उद्दिश्यमान-

विशेषणासंभवाच्च अश्वप्रतिग्रहमात्रं निमित्तमिति । **तथा प्राप्ते**, लौकिकपक्षपरिग्रहः । **भाष्यकारेण** तु अविशेषपक्षमनाभाष्य ( सौत्र– ) तुशब्दार्थवत्त्वाय सिद्धान्तोपक्रमः कृतः, ' वैदिकत्वसामान्यात् ' फलकल्पनाभयाच्च ' वैदिके ' इति । नैमित्तिकं हि विधीयमानं निमित्तमपि वैदिकमेव बुद्धौ संनिधापयति । तेनैव निराकाङ्क्षीभूतत्वात् न लौकिकेन संबध्यते । फलं च तत्र कल्पनीयम् । इतरत्र तु संबद्धस्य क्रतोरुपकारः सुखेनैव कल्पिष्यते । **इति प्राप्ते अभिधीयते** । लौकिके स्यात् इति । कुतः ?
**' श्रूयते दोषसंयुक्तः स च दोषोऽस्ति लौकिके । वैदिके विधिगम्यत्वान्नहि दोषः प्रतीयते ॥'**
'वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति ' इति पापेन ग्रहणं यस्मिन् अश्वप्रतिग्रहे, स निमित्तं प्रतीयते । तदपि च पापग्रहणं प्राप्तमनूद्यते । यदि हि विधीयेत, ततः कदा चित् एतद्वाक्यसामर्थ्यादेव वैदिकेऽपि स्यात् । न तु विधीयते, सर्वफलानामविधेयत्वात् । न च तत्र कर्मविधानं, विधेयस्य कर्मणः पापफलत्वासंभवात् । न चेह अश्वप्रतिग्रहः प्रतिषिध्यते, तदश्रवणात्, निमित्तसंबन्धमात्रोपयोगाच्च । तस्मादत्यन्तसंबन्धात् ( अविनाभावात् ) यत्र प्रतिषेधः, तत्र दोषः । स च लौकिकस्य प्रतिषेधः, ' न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णाति ' इति । ननु अयमपि प्रतिषेधः सामान्येनैव श्रूयते, सत्यं, तेनैव तु लौकिकस्य इति ब्रूमः, इतरस्य विशेषविधिसंस्पृष्टस्य प्रतिषेधविषयत्वासंभवात् । अतश्च दोषसमभिव्याहृतत्वात् इष्टिरपि लौकिकविषया स्यात् । **ननु** च निमित्तभावात् उद्दिश्यमानः अश्वप्रतिग्रहः न दोषेण विशेष्टुं शक्यते, इति विधीयमानेष्टिस्तुतिमात्रपरे दोषसंकीर्तने वैदिकोऽपि निमित्तं भवेत् । **उच्यते** । **' विशेषणतया नैव दोषोऽयं कल्प्यते मया । दोषनिर्घातकार्येष्टिसामर्थ्याल्लौकिकाङ्गता ॥ '** नहि एवं क्रियते दोषवान् योऽश्वप्रतिग्रहः ( इति ), किं तर्हि ? निमित्तवेलायां तावत् सामान्यमात्रमेव गृह्यते । यदा तु इष्टिभावनायाः प्रयोजनाकाङ्क्षा भवति, तदा अन्यस्य स्वर्गादेः कर्मोपकारकस्य वा संनिध्यपेक्षयोः अभावात्, अस्य च दोषस्य समानवाक्योपात्तत्वेन प्रत्यासत्तेः, स्वरूपेण कर्मानपेक्षितत्वेन फलत्वप्रतिपत्त्यसंभवात् पुरुषौपयिकं विधिसंबन्धार्हं निर्घातं अपेक्षमाणस्य अपनीयमानतया कर्मणा संबन्धः । एकेन च नैराकाङ्क्ष्ये संभवति, न प्रयोजनान्तरं कल्पयितुं शक्यम् । अतश्च यत्र दोषनिर्घातात्मकं फलं, तत्रेयमिष्टिः । यत्र च दोषः, तत्र निर्घातोऽपि प्रतिषेधानुसारी । स च प्रतिषेधः लौकिकस्य, इति अन्तरेणापि विशेषणं अर्थवशात् तस्यैव निमित्तत्वम् । एतद्दर्शयति ( भाष्यकारः ) 'वरुणप्रमोचनं तु इदं कर्म, तत् लौकिके भवितुमर्हति ' ( इति ) ।

यत्तु **भाष्यकारेण** दोषं प्रदर्शयता उक्तं ' स च लौकिके अश्वप्रतिग्रहे शूद्रादन्यस्माद्वा पापकर्मणः क्रियमाणे भवति ' इति, पुनश्च वैदिकेऽपि एतत् समानं इति मन्यमानेन ' ननु वैदिकेऽपि अप्रतिग्राह्यात् प्रतिगृह्णतः पापग्रहणमस्ति ' इति चोदयित्वा परिहार उक्तः, **( तत्रोच्यते )** भवेदेतदेवं, यदि प्रतिग्रहीतुरिष्टिः स्यात्, सा खलु दातुरिति । स लौकिकेऽपि अविशिष्टः । तथाहि **' लौकिकेऽपि तु यो दाता शूद्रादिर्न स दोषवान् । प्रतिग्रहीतृदोषस्तु पुनरप्युभयोः समः ॥ '** यदि वैदिके दातुरिष्टिः इति कृत्वा सत्यपि अप्रतिग्राह्यायाज्ययाजननिमित्ते प्रतिग्रहीतृणां पापे, दोषरहितनिमित्तं उच्यते, ततः लौकिकेऽपि शूद्रादिभ्य उपादाने, दुष्यत्यपि प्रतिग्रहीतरि, दातुः तद्–द्वारेण अदुष्टत्वात् दोषरहितमेव निमित्तम् । अथेह प्रतिग्रहीतृव्यापारो निमित्तं, स च दुष्टः इति गृह्यते, तत् तुल्यं वैदिकेऽपि । अथ वैदिके दातुः, लौकिके प्रतिग्रहीतुः इष्टिः इति कल्प्यते, तत्रापि उपपत्तिविशेषो वक्तव्यः । किंच **'योऽश्वप्रतिग्रहादेव दोषः सोऽत्र प्रतीयते । दातृदोषस्तु सर्वत्र तुल्योऽश्वैर्न विशेष्यते ॥ '** नहि अप्रतिग्राह्यात् प्रतिगृह्णन् एवं विशेष्टुं शक्यते 'योऽश्वं प्रतिगृह्णाति ' इति । सर्वद्रव्यप्रतिग्रहाणां दातृदोषेण दुष्टत्वात् । **तेन** एष ( भाष्य– ) ग्रन्थः पूर्वं प्रतिग्रहीतृव्यापारोपन्यासात् पश्चाच्च दातृव्यापाराश्रयणात् असंबद्धः ।

**तत्र केचिदाहुः** । अनपेक्ष्य उत्तराधिकरणसिद्धान्तं प्रतिग्रहीतुरेव इष्टिः इति अत्र विचारितम् । लोके अश्वानां प्रतिग्रह एव तावत् ' नोभयतोदतः प्रतिगृह्णाति '

इति प्रतिषिद्धः, किमुत शूद्रादिभ्य उपादानम् । यज्ञे तु असौ ऋत्विजां पुनः प्रसूतः। तत्रैतत् स्यात्, दानमात्रं यज्ञे विहितं, न प्रतिग्रहः इति । **तदयुक्तम्** । दानविधानेनैव प्राक् परस्वत्वापादनात् अपर्यवस्यता तस्य ( प्रतिग्रहस्य ) आक्षिप्तत्वात् । अपि च सर्वत्र समाप्तिविधानं सिद्धान्तः। तेन 'दद्यात्' इति सामर्थ्यगृहीतः स्वत्वपरित्यागं परस्वत्वापादनमेव विधत्ते इति प्रतिग्रहविधानम् । अपि च

**' मन्त्रवान् नियमैर्युक्तः कर्ममध्येऽङ्गसंगतः ।**
**क्रियमाणः कथं नाम विधिना नावगम्यते ॥ '**

( ' क इदं कस्मा अदात् ०' इति मन्त्रः, प्राङ्मुखत्वादिर्नियमः ) । यदि प्रतिग्रहो न विधीयेत, कथं तस्य इतिकर्तव्यता विधीयेत, किमिति वा तस्मिन्नकृते कर्मवैगुण्यं स्यात् । **अत्र वदामः ' ऋत्विग्भ्यो दक्षिणां दद्यादिति दानं विधीयते । लोभादेवार्जनाङ्गत्वात् प्राप्तस्तेषां प्रतिग्रहः ॥ '** नहि दद्यात् इत्यस्य प्रतिगृह्णीयात् इत्ययमर्थो भवति । भवेदपि सामर्थ्यात्, यदि तदाक्षेपमन्तरेण दानविधिर्नोपपद्येत । स तु लोभप्राप्तप्रतिग्रहबलेन उपपद्यमानः, न शक्नोति आक्षेप्तुम् । नहि विधिशतेनापि तथा पुरुषः प्रवर्तते, यथा लोभेन । यद्यपि च समाप्तिश्चोद्यते, तथापि दातृव्यापार एवासौ परस्वत्वापादनं नाम । द्वौ हि तत्रापि व्यापारौ, एकः प्रतिग्रहीतुः स्वीकरणं, अपरो दातुः तत्समर्थाचरणं समर्पणादिरूपम् । तन्मात्रमेव विधास्यते, नापरम् । तेन यथा सोमक्रये विधीयमाने अर्थात् लोभेन प्राप्तो विक्रयो न विधीयते , न च कर्माङ्गं भवति , एवमिह प्रतिग्रहो न विधास्यते, नाप्यङ्गं भविष्यति । यदपि इतिकर्तव्यताविधानं, तत् अर्थप्राप्तानुवादेनैव भविष्यति, यदा वृत्त्यर्थं दक्षिणां प्रतिगृह्णीयात् तत् इत्थमित्थं चेति। ननु एवं सति प्रतिग्रहस्य पुरुषार्थत्वात् मन्त्रादीनामपि पुरुषार्थत्वमेव प्राप्नोति । नैष दोषः । प्रकरणसामर्थ्यात् एवमितिकर्तव्यताकप्रतिग्रहावसानं दानं क्रतोरुपकरोति इत्यध्यवसानात् । तेन प्रतिग्रहसंबन्धेऽपि दानस्यैव इतिकर्तव्यता । तच्च विधिलक्षणं इति नेतव्यम् । तत्र चोदितेऽपि प्रतिग्रहे गवादीनां प्रतिषेधोऽपि नास्ति इति न कश्चिद्दोषः । अश्वप्रतिग्रहस्य तु प्रतिषिद्धत्वात् यो नाम प्रतिषेधमतिक्रम्य ग्रहीष्यति, तं परिक्रीय यजमान आर्त्विज्यं कारयिष्यति । यथा 'ब्रह्महा अश्वमेधेन यजेत' इति, यो लोभात् पतितयाजनमङ्गीकृत्य याजयिष्यति तदपेक्षं विधानं, न तु तद्विधानान्यथाऽनुपपत्त्या याजनं इतरेषामपि विहितं इति कल्प्यते , तथा इह अश्वप्रतिग्रहस्य अविधानं इति द्रष्टव्यम् । अतश्च यथैव लोके दोषः, तथा वेदेऽपि, इति न तद्द्वारेण विशेषविषयत्वं गम्यते ।

के चित् पुनराहुः । लौकिकपक्षे प्रतिग्रहीतुरिष्टिः, वैदिकत्वे तु कर्माङ्गत्वात् दातुः । प्रतिग्रहश्च उभयत्रापि दोषवान् अविहितत्वात् प्रतिषिद्धत्वाच्च । दानं पुनः वैदिकं विहितं, अतो यथाभाष्यमेव परिहारः । अथवा उभयत्रापि दातुरिष्टिः । तत्र दानं लौकिकं प्रतिषिद्धम् । तथा च **दक्षिणाऽधिकरणे** वक्ष्यति ' अश्वा उपकारकतरा भवेयुः यदि तेषां दानप्रतिग्रहौ न प्रतिषिद्धौ स्यातां ' इति ( भाष्यमूलपाठस्तु ' अश्वा उपकारकतरा भवेयुः यदि एषां दानप्रतिग्रहविक्रया न प्रतिषिध्येरन् ' १०।३।११।४७) । विश्वजित्यपि सर्वस्वदाने प्रतिषिद्धत्वात् अश्वादीनामदानं इति वक्ष्यति (६।७।३।४) । पौण्डरीके अश्वसहस्रं इति तु प्रत्यक्षोपदेशात्, ज्योतिष्टोमे च एकस्याश्वस्य अवश्यं विधेयत्वात् सामान्यप्राप्तनिषेधबाधात् न दोषो विज्ञायते । तस्मात् य एव लोके भ्रान्त्या मित्रदायादादिना वा ददाति तस्यैवेष्टिः, यो वा विक्रीणीते । विक्रयेऽपि हि स्वत्वपरित्यागपरस्वत्वापादनसद्भावात् सकलो ददात्यर्थो विद्यते । नहि अदृष्टार्थमेव केवलं दानं विज्ञायते, दानत्वे दृष्टादृष्टफलकल्पनाऽवसरात् । यद्यपि च तस्य विक्रयशब्दाभिधेयत्वं, तथापि सामान्यविशेषसंज्ञयोः समावेशादविरोधः । तथा च लोके विक्रीय वक्तारो भवन्ति ' अस्माभिर्धान्यं दत्तं ' इति, क्रीत्वा वदन्ति ' अस्माभिर्धान्यं गृहीतं ' इति । तस्मात् सोऽपि ददातिः, इति निमित्तम् । ननु च ' वासोऽश्वा भूमिः ' इति देयद्रव्यमध्याम्नानात् नाश्वदानं दुष्येत्, यत्र तद्विहितं तत्र नैव दोक्ष्यति । देयद्रव्याणि हि एतानि स्मर्यन्ते, न तु दानमेव विधीयते । तत्र दानविधायिवाक्यापेक्षत्वात् यत्राश्वो विहितः तद्गतमेवेदं देयस्मरणम् । यानि तु गवादीनि सामान्यतोऽपि न प्रतिषिद्धानि , तानि

दानमात्रचोदनायामपि भविष्यन्ति । तस्मात् न लौकिकः अश्वप्रतिग्रहो निमित्तम् ।

**अर्थवादो वाऽनुपपातात्, तस्माद्यज्ञे प्रतीयेत । २९ ॥**

**भाष्यं—** न चैतदस्ति, यदुक्तं 'यः शूद्रादन्यस्माद्वा पापकृतो लोके अश्वं प्रतिगृह्णीयात् स एतामिष्टिं निर्वपेत्' (इति) । स हि वरुणगृहीत इत्युच्यते, जलोदरेण यो गृहीतः । यस्योदरं जलवृद्धया श्वयति, जलोदरमित्येव लोके तत् प्रसिद्धम् । न च तस्य अश्वप्रतिग्रहो लौकिको निदानं इति प्रतिज्ञायते, न चानेन विधीयते । तस्मात् नाश्वप्रतिग्रहात् जलोदरोपपातः । अथ पापं वरुणशब्देन उच्यते, वृणीते इति ( वरुणः ) एषोऽभिप्रायः इति, तदा प्रसिद्धौ त्यक्तायां क्लेशमात्रं वृण्वत् वरुणशब्देनोच्यते । तत्र याज्ञेऽपि प्रतिग्रहे वरुणगृहीतः स्यात् रक्षणपोषणचिकित्सादिना क्लेशेन । नैष पक्षो व्यवतिष्ठेत लौकिके अश्वप्रतिग्रहे इति । प्रसिद्धिश्च बाध्येत। तस्मादर्थवाद एषः । यावत् वरुणगृहीतस्य वरुणोन्मोचने श्रेयः, तावदेतेन इत्युपमानेन एषा स्तुतिः । योऽस्य प्रतिग्रहः तत् वरुणग्रहणमिव , या इष्टिः सा तदुन्मोचनीव । यथा वरुणगृहीतेन उन्मोचनमवश्यकर्तव्यं तादृगेवैतत् इति । तस्मात् यज्ञे प्रतीयेत । लौकिके हि फलं कल्पनीयम् । वैदिके यस्मिन् अश्वप्रतिग्रहः, तस्य अङ्गभूता भविष्यति । तत्र प्रयोगवचनेन सह एकवाक्यता संबन्धादवकल्प्यमाना, परोक्षायाः फलवचनेन सह एकवाक्यतायाः लघीयसी इति युक्तं इष्टिः वैदिके दाने इति ।

**वा—** यदि एषा दोषनिर्घातार्था भवेत् ततो लौकिके कल्प्येत, न तु तदर्था । कुतः ' **अन्यतोऽवगते दोषे तन्निर्घातार्थतेष्यते । यश्चात्र कीर्त्यते दोषो नासावस्तीति गम्यते ॥** ' कर्मविधानवाक्ये यो दोषः श्रूयते, स निर्घात्यत्वेन अवधार्यते । यश्चात्र दोष उपात्तः, नासौ लौकिकस्य सत्यपि प्रतिषिद्धत्वे कुतश्चित् प्रमाणात् गम्यते । जलोदरं हि अत्र वरुणग्रहणरूपेण उपात्तम् । न च कस्यां चित् वैद्यकसंहितायां लौकिकोऽश्वप्रतिग्रहो निदानं श्रूयते । नापि प्रत्यक्षानुमानादिभिर्गम्यते । न च वाक्ये 'न केसरिणो ददाति' ' नोभयतोदतः प्रतिगृह्णाति ' इति श्रूयते । नापि एतस्य वाक्यस्य तत्प्रतिपत्तौ व्यापारः, विद्यमानानुवादेन तत्र निर्घातार्थकर्मविधिमात्रपरत्वात् । यस्तु दोषः प्रतिषेधवाक्यात् नरकपातात्मकः कल्पितः, स इह नोपात्तः, ' वरुणो वा एतं गृह्णाति ' इत्यनेन अभिधातुमशक्यत्वात् । अथ पापमात्रं ' वृणोतीति वरुणः, तद् गृह्णाति ' इत्येवमभिधीयते, ततो या तावत् वरुणगृहीतशब्दस्य जलोदरविषया समुदायप्रसिद्धिः, सा परित्यक्ता । या तु अवयवप्रसिद्धिः, सा वैदिकेऽपि त्यागे दुःखदर्शनात् प्रतिग्रहे च रक्षणपोषणादिना क्लेशात् किंचित् वरुणात्मकं विद्यते इत्येवं संभवति, इति न शक्यं तद्-द्वारेण इष्टेः लौकिकविषयत्वं अवधारयितुम् । 'रक्षणपोषणादिना क्लेशेन ' इति प्रतिग्रहीतृव्यापारस्य निमित्तत्वेन अनिवारितत्वात् एवं ब्रवीति ( भाष्यकारः ) । अथवा दातुरपि प्राक् परस्वत्वापादनात् एष क्लेशोऽस्ति इति गमयितव्यम् ।

**' धर्मोऽपि च वृणोत्येव नरं संसारवर्तिनम् । नहि केवलपापेन देहेनाच्छाद्यते नरः ॥ '** तस्मादुभयथाऽपि लौकिकाश्वप्रतिग्रहणगतोऽयं दोषः न प्रसिध्यति इति मुख्योपपाताभावात् अर्थवादोऽयं विज्ञायते । तत्र पुरस्तादुपाख्यानोपात्तं ' प्रजापतिर्वरुणायाश्वमनयत् ' इत्यर्थं इदानींतनेऽपि काले रूपकधर्मेण अध्यारोप्य प्रशंसति । यथैव प्रजापतिः वरुणेन गृहीत आसीत्, तथा अद्यत्वेऽपि अश्वप्रतिग्रहश्चेज्जातः, स एव वरुणग्रहणदोषो भवति । यथा च प्रजापतेः वारुणी इष्टिः ततः उन्मोचनी आसीत्, तथा अद्यत्वेऽपि असौ उन्मोचनी विज्ञायते । तस्मात् वरुणग्रहव्याधिगृहीतेनेव तेन तद्विमोचनाय अवश्यकर्तव्या इष्टिः, इत्येतावानर्थो विवक्षितः । ततश्च वाक्योपात्तफलाभावात् अध्याहारेण वा स्वर्गः कल्पयितव्यः कर्माङ्गभावो वा । तत्र स्वर्गसंनिधिकारणाभावात् वैदिकक्रियात्वसामान्येन अश्वप्रतिग्रहेण च संनिधापनात् क्रतुसंबन्धः सुकल्पः । वैदिको हि अश्वप्रतिग्रहः कर्मान्तःपाती इति निमित्तत्वेन प्रतीयमानः तद्देशवर्तिकर्थंभावापन्नं अङ्गिनं उपनयन् उभयोः साकाङ्क्षत्वात् अङ्गाङ्गिसंबन्धं कल्पयति । तस्मात् यज्ञे प्रतीयेत इति सिद्धम् ।

**शा**— किं लौकिके अश्वदाने मित्रदायादेभ्यः स्नेहादिना विधिमनपेक्ष्य क्रियमाणे निमित्ते पुरुषार्थतया विधीयते, उत वैदिके कर्माङ्गभूते ज्योतिष्टोमपौण्डरीकादिविषये क्रत्वर्थतया, उत उभयत्रेति संशयः। तदर्थं च किं दोषनिर्घातार्था इयं, उत नेति। तत्र अविशेषात् उभयत्रेति प्राप्तेऽभिधीयते '**दोषनिर्घातकार्येयं यत्रासौ तत्र गम्यते। लौकिके स च दोषोऽस्ति, वैदिके न विधानतः॥ तस्मात् कार्यवशादिष्टिर्लौकिके स्यात्, तदुच्यते। दोषनिर्घातकार्यत्वे स्यादेवं न तु तत्तथा॥ वरुणग्रहनिर्मोकः फलमत्रावगम्यते। लौकिकेनाश्वदानेन नासावस्तीति गम्यते॥ लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषता। न चैकस्योभयार्थत्वं वैरूप्यादुपपद्यते॥**' तस्मात् वैदिके एव स्यात्।

**सोम**— उत्तराधिकरणोपजीवनेन एतदधिकरणप्रवृत्तिः। **प्राभाकराः** वैदिक्या अपि क्षामवतीष्ट्याः लौकिकगृहदाहनिमित्तकत्वदर्शनेन प्रकरणाध्ययनं विना वैदिकनिमित्तकत्वासिद्धेः 'यावतोऽश्वान्' इत्यश्वबहुत्वस्य पौण्डरीके एव संभवाच्च 'पौण्डरीके श्रूयते' इति कृत्वा चिन्तामाहुः। **तन्न** क्षामवत्यादौ वैदिकस्य गृहदाहस्याभावात् लौकिकनिमित्तकता इति न तावता सिद्धान्तासिद्धिः। 'यावतोऽश्वान्' इति अश्वसमसंख्याकत्वमात्रोक्तेः निमित्तबाहुल्यस्याविवक्षितत्वाच्च बहुत्ववत् संख्याऽन्तरमपि ग्राह्यमेव इति वृथा पौण्डरीकप्रकरणगतत्वाश्रयणमिति।

**वि**—'अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते। दानद्वये लौकिके वा वैदिके वा भवेदियम्॥ अविशेषाद् द्वयोर्यद्वा, न देयः केसरीत्यतः। निषेधाल्लौकिकात् तत्र प्रायश्चित्तिरियं भवेत्॥, न जलोदरहेतुत्वं प्रमितं लौकिके क्व चित्। वैदिके तु श्रुतं तस्मात् तत्प्रायश्चित्तयेऽत्र सा॥' वैदिकस्य तु अश्वदानस्य जन्मान्तरविषयं दोषश्रवणम्। अतो वैदिकदाने सा इष्टिः प्रायश्चित्तम्।

**भाट्ट**— अनारभ्य 'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्, स पर्यदीर्यत, स एतं वारुणं चतुष्कपालमपश्यत्, तं निरवपत्, ततो वै स वरुणपाशादमुच्यत। वरुणो वा एतं गृह्णाति, योऽश्वं प्रतिगृह्णाति, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति श्रुतम्। प्रतिग्रहशब्दोऽत्र दानपरः इति उत्तराधिकरणे वक्ष्यते। ततश्च यत् मित्रदायादादिभ्यः लौकिकं दानं तत्संबन्धिनी इयमिष्टिः, किंवा अश्वदानमात्रसंबन्धिनी, किंवा अग्निमत्कर्माङ्गभूताश्वदानसंबन्धिनी इति **चिन्तायां**, अर्थवादानुरोधेन दानविषयत्ववत् अस्या इष्टेः दोषनिर्घातार्थत्वस्यापि अवगमात्, दोषस्य च 'न केसरिणो ददाति' इत्यनेन अविहितलौकिकविषयत्वात् तदनुरोधेन अस्या अपि लौकिकदानविषयत्वम्। इदं हि वचनं यत्र अनियमेन सामान्यतो विहिते अश्वविषये (अश्वदाने) इच्छया प्रवृत्तिः, यत्र वा नैव विहितं यथा मित्रदायादादिभ्यः, तद्विषयम्। अत एव यत्र विश्वजिदादौ सर्वस्वदाने अश्वदानं नियतं, तत्र तत्प्रकरणस्थेन वाक्यान्तरेणैव तस्य पर्युदासेऽपि अस्य शाखाऽन्तरीयवचनस्य उक्तविषये निषेधकत्वमेव। अतस्तत्र निषेधबलेन दोषावगतेः तन्निर्घातार्थाया इष्टेरपि तद्विषयत्वं भेदनहोमस्येव भेदनवत् दर्शपूर्णमासविषयत्वम्। अत एव दोषनिर्घातः फलं, अश्वदानं च निमित्तं, न तु शेषि। तथात्वे उक्तफलत्वानुपपत्तेः, अव्यभिचरितक्रतुसंबन्धाभावाच्च। यदि तु अस्याः दोषनिर्घातार्थत्वं नाभ्युपगम्यते, ततो यावच्छब्दसमभिव्याहारेण अश्वदानस्य उद्देश्यत्वावगतेः तावच्छब्दसमभिव्याहृताप्राप्तेष्टेः तदङ्गत्वापातात् निमित्तत्वानुपपत्तिः। नहि यावच्छब्दो निमित्तत्ववाची, अपि तु साकल्यवाची। **न च** यावत्तावच्छब्दाभ्यां क्रियाद्वयस्य संबन्धमात्रावगतौ शेषित्वपक्षे आरादुपकारकत्वेन तन्त्रत्वापत्तेः तावच्छब्दार्थप्राप्त्यभावेन विधेयत्वप्रसङ्गात्, निमित्तत्वपक्षे च प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायेन तावच्छब्दार्थस्य प्राप्तत्वेन अविधेयत्वात् विधिलाघवानुरोधेन निमित्तत्वावगतिः सिद्धान्तेऽपि सुलभा इति **वाच्यम्**। पक्षद्वयेऽपि निमित्तानुरोधेन प्रधानानुरोधेन वा आवृत्तिप्रसक्तौ कालैक्येन तन्त्रत्वप्राप्तेः तावच्छब्दस्य प्रतिप्रसवविधित्वावश्यंभावात्। अत एव 'गृह्णीयात्' इति लिङः प्रयोजक-

त्वापरपर्यायहेतुत्वार्थकत्वेऽपि तदुपपत्तेः निमित्तत्वनिश्चयो दुर्लभः। प्रत्युत अपेक्षितत्वात् शेषित्वमेव सिद्धान्ते स्यात्। मम तु दोषनिर्घातार्थत्वात् तन्निश्चयः इति वैषम्यम्। अतश्च तद्बलेन लौकिके एवाश्वदाने आहिताग्नेः स्यात्, इति **प्रथमः पक्षः। द्वितीयस्तु**, यस्तावत् अर्थवादे जलोदरापरपर्यायो वरुणग्रहाख्यो दोषः, स नैव प्रत्यक्षादिना वैद्यकसंहिताभिर्वा अश्वदानजन्यतया अवगम्यते। अथ मुख्यार्थबाधेऽपि पापमेव वृणोतीति व्युत्पत्त्या अवयवयोगेन वरुणग्रहशब्देन उच्येत, ततो वैदिकदानेऽपि कथं चित् त्यागाद्दुःखदर्शनात् तदेव वरुणग्रहशब्देन उच्यताम्। इष्ट्याडम्बरविनोदेन च तद्दुःखशमनात्, 'स एवैनं' इत्यस्याप्युपपत्तेः अस्या दोषनिर्घातार्थत्वे प्रमाणाभावात् लौकिकमात्रविषयत्वानुपपत्तेः वाक्यसंकोचायोगेन सर्वविषयत्वम्। न च 'गृह्णीयात्' इति लिङा विहितत्वेन उक्तत्वात् विहितस्य उपस्थितिः, उद्देश्यस्य विहितत्वेन विशेषणायोगात्। अतः सर्वविषयत्वम्। **इति प्राप्ते**, जयादिन्यायेनैव (३।४।१३) लौकिके फलकल्पना वैदिके न इत्येवं, विहितेऽपि अग्निरहिते तत्प्रणयनादिप्रयोजकत्वं इतरत्र न, इत्येवं च वैरूप्यापत्तेः विधिलाघवानुरोधेनैव स्वसंकोचं कामश्रुतिवदेव अनुमन्यते। अतश्च अग्निमत्कर्मसंबन्धि अश्वदानमेव उद्देश्यम्। तदपि च न शेषितया प्रवर्ग्यन्यायेन (३।३।१२) अश्वदानगतप्रयोजनवत्त्वजिज्ञासायां अवश्योपस्थितक्रतोरेव शेषित्वकल्पाऽनौचित्यात्। अतश्च उपसद्वदेव नाश्वदानस्य हेतुत्वं शेषितया, अपि तु निमित्ततयैव। अस्तु वा तत्, तथापि अग्निमत्कर्मसंबन्ध्यश्वदाने एव इयमिष्टिः।

**मण्डन**— 'अश्वग्रहे वैदिकजेऽङ्गमिष्टिः।'

**शंकर**— 'अश्वदानेष्टिरेव च।' नेतावत् कर्माङ्गम्। १६.

**अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालचतुष्कभेदः॥**

**कपालानि च कुम्भीवत् तुल्यसंख्यानाम्। ११। ४।११।४२॥**

**भाष्यं**— अश्वप्रतिग्रहेष्ट्यां वारुणाश्चतुष्कपालाः पुरोडाशा अश्वसंख्याः श्रूयन्ते 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेत्' इति। तत्र विचार्यते किं दीर्घेषु कपालेषु सर्वेषां श्रपणं कर्तव्यं, अथवा प्रतिपुरोडाशं कपालचतुष्कभेद इति। किं प्राप्तं? कपालानि कुम्भीवत्। यथा प्राजापत्येषु कुम्भी तन्त्रं, एवं तुल्यसंख्यानां पुरोडाशानां कपालानि तन्त्रमित्यर्थः। किं कारणं? एवं सहत्वं चानुग्रहीष्यते, सर्वे चतुर्षु कपालेषु संस्कृता भविष्यन्ति।

**प्रतिप्रधानं वा, प्रकृतिवत्। ४३॥**

**भाष्यं**— प्रतिपुरोडाशं कपालचतुष्कभेदः। एवं यथाप्रकृति कृतं भवति। प्रकृतौ दर्शपूर्णमासयोः प्रतिपुरोडाशं कपालानि भिन्नानि, इहापि तद्वदेव भेत्तव्यानि चोदकानुग्रहाय। अपि च यदि कपालानि तन्त्रं भवेयुः, नैकोऽपि पुरोडाशः चतुष्कपालेषु संस्कृतः स्यात्। सर्वे कपालावयवेषु पक्वा भवेयुः। तत्र कपालशब्दो बाध्येत। तस्माद्भेदः।

**सर्वेषां चाभिप्रथनं स्यात्। ४४॥**

**भाष्यं**—इदं च श्रूयते, 'यावत्कपालं पुरोडाशं प्रथयति' इति। तच्च अशक्यं तन्त्रभावे संपादयितुम्। तस्मादपि भेदः।

**सोम**— इह तर्हि पक्तिवैषम्याभावात् न भेदः इत्युत्थितेः **संगतिः**। करद्वारेण अध्वर्योरिव अवयवद्वारेण कपालानामेव श्रपणसाधनत्वसंभवात् लाघवेन दैर्घ्यमात्रं संपाद्यं, न तु कपालान्तराणि। यावत्कपालं प्रथनं च आयामतो दैर्घ्येऽपि परिणाहतो ह्रस्वत्वस्य अवश्यवक्तव्यत्वात् परिणाहापेक्षया उपपद्यते इति **पूर्वः पक्षः**। प्रकृतौ साक्षादेव कपालानां साधनत्वात् इहापि तथैव स्वीकार्यं नावयवद्वारा, 'यावत्कपालं प्रथयति' इति वचनस्य परिणाहमात्रविषयतया संकोचे न किंचित् प्रमाणं। इति **सिद्धान्तः**।

**वि**—'तन्त्रं चतुष्कपालानां भेदो वा, तन्महत्त्वतः। कुम्भीवत् तन्त्रता, मैवं भेदः स्यात् प्रकृताविव॥' १२.

**भाट्ट**— 'यावतोऽश्वान् प्रतिगृह्णीयात्' इत्यत्र द्वित्राद्यश्वदाने तन्त्रेण क्रियमाणप्रतिग्रहेष्टौ न तावत्

पुरोडाशस्य एकत्वं, तावच्छब्दबलेन तद्भेदस्यापि विधेयत्वात्। चतुःसंख्याककपालानां तु प्रकृतौ कपालपरिमाणस्य अश्रुतत्वेन दीर्घत्वादेरपि संभवात् हस्तद्वारा अध्वर्य्वादेरिव अवयवद्वारा अवयविनोऽपि कपालस्य साधनत्वोपपत्तेः न भेदः। **इति प्राप्ते,** साक्षात् साधनत्वसंभवेऽपि परंपराऽऽश्रयणस्य अन्याय्यत्वात् प्रकृतौ च साक्षात्साधनत्वस्यैव विवक्षितत्वेन इह परंपराऽऽश्रयणानुपपत्तेः, यावत्कपालं च प्रथनस्य प्रकृतितः प्राप्तत्वात् 'तावतो वारुणान्' इत्यनेन च विशेषणीभूतकपालेष्वपि उत्सर्गेण तावत्त्वस्य प्रतीतस्य बाधे प्रमाणाभावात् भेद एव कपालानाम्। अतश्च तावत्संख्याकचतुष्कपालपुरोडाशानां तन्त्रेण यागः।

**मण्डन**— 'कपालेषु न तन्त्रता।' १२.

**शंकर**— 'अश्वेष्टिषु कपालभित्।' १२. भित् भेदः।

* अश्वप्रतिग्रहेष्टौ व्यवधारणकल्पनं अर्थवादप्रामाण्याधीनम्। **सु.** पृ. ६६. * अश्वप्रतिग्रहेष्टौ शते वा सहस्रे वा अश्वदाने तावत्सु पुरोडाशेषु श्रप्यमाणेषु कतिपयाङ्गानां काण्डानुसमय एव। एकैव चेष्टिः तन्त्रेण, न तु भिन्नाः प्रयोगाः, निमित्तसमसंख्याकत्वस्यैव तावच्छब्दार्थस्य नैमित्तिकविशेषणतया अप्राप्तस्य विधेयत्वात् युक्तमेव अनेकनिमित्तसंनिपाते नैमित्तिकसाहित्यम्। **भाट्ट.** ५।२।२।३. * **अश्वप्रतिग्रहेष्टिवाक्ये** अल्पबाधेन बहुबाधो बाध्यते। **बाल.** पृ. १४०.

**अश्वप्रतिग्रहेष्ट्यधिकरणम्।** अश्वदानन्यायः। वारुणाधिकरणम्॥

**अचोदितं च कर्म, भेदात्।** ३।४।११।३०॥

**भाष्यं**— 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति। तत्र एतत् समधिगतं वैदिके अश्वप्रतिग्रहे इष्टिरिति। अथेदानीं संदिह्यते किं प्रतिग्रहकर्त्रा कर्तव्या यस्मै दीयते, उत हेतुकर्त्रा यो ददातीति। किं प्राप्तं? अचोदितं च कर्म, भेदात्। न दानस्य कर्तुः इष्टिः चोद्यते, प्रतिग्रहकर्तुस्तामवगच्छामः। यावतोऽश्वान् प्रतिगृह्णीयात् तावतः चतुष्कपालान् वारुणान् निर्वपेत् इति। तस्मात् प्रतिग्रहीत्रा ऋत्विजा कर्तव्येति।

**वा**— तत्रैव इदानीं इदं विचार्यते, किं प्रतिग्रहीतुरिष्टिः, उत दातुरिति। कथं पुनः 'योऽश्वं प्रतिगृह्णाति' इति विस्पष्टे प्रतिग्रहीतृसंबन्धे सति संदेहः? उपक्रमे दातृप्रसिद्धेः। 'प्रजापतिर्वरुणायाश्वमनयत्' इति दर्शयिष्यामः। **यदि तर्हि** वाक्यशेषात् दातुः प्रतीयते, 'संदिग्धेषु वाक्यशेषात्' (१।४।१३।२४) इत्यनेनैव गतार्थत्वात् अधिकरणं नारब्धव्यम्। **उच्यते।** **'संदिग्धं वाक्यशेषेण निर्णयमवधारितम्। विध्युद्देशेन निर्णीते, किं नु शेषः करिष्यति॥'** यत्र विध्युद्देशः संदिग्धः, तत्र वाक्यशेषात् निर्णयो न विरुध्यते। यत्र तु असंदिग्धः, तत्र तद्बलीयस्त्वात् वाक्यशेषबाधेनैव भवितव्यम्। अत इह **यद्यपि** 'प्रजापतिर्वरुणायाश्वमनयत्' इति प्रजापतिर्दाता संकीर्तितः वरुणः प्रतिग्रहीता, पुनश्च 'स स्वां देवतां' इति प्रजापतिरेव समानविभक्त्यन्तः सामानाधिकरण्येन उपात्तः। स्वा च तस्य देवता वरुणः, पूर्वं संप्रदानत्वेन उपात्तत्वात्। नात्मा, कर्तृत्वसंप्रदानत्वयोः विरोधिनोः एकत्र कल्पने अन्यतरस्य गौणत्वापत्तेः। नापि प्रजापतेर्वरुणो दाता, विभक्तिव्यत्ययप्रसङ्गात्। तेन प्रजापतिः अश्वं दत्त्वा वरुणं प्राप्त इत्यर्थः। स तथाभूतः परिदीर्णः उदरमस्य श्वयथुना विदीर्णम्। 'स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत्' इति प्रजापतेरेव तच्छब्देन परामर्शात् 'तं निरवपत्' इति च कर्तृत्वनिर्देशः तस्यैवावकल्पते न वरुणस्य, संप्रदानत्वेन स्थितत्वात्। न वरुणस्य आत्मोद्देशेन यागः संभवति, नहि आत्मने संकल्प्यमानं त्यक्तं स्यात्। तेन प्रजापतिना अश्वं दत्त्वा वरुणाय, वरुणगृहीतेन वारुणेष्ट्या तदुन्मोचनमात्मनः कृतम्। अतः अन्योऽपि दत्त्वा एवं कुर्यात् इति दातुरिति विज्ञायते। किंच '**यज्ञाङ्गत्वाच्च तच्छेषाः प्रधानेनैककर्तृकाः। प्रधानस्य च यः कर्ता स्वामी दाता स वाजिनाम्॥**' **तथापि** विध्युद्देशार्थवादयोः विप्रतिपन्नार्थत्वात् संदेहाभावेन 'संदिग्धेषु वाक्यशेषात्' इत्यनेन अगच्छत्

अन्यतरबाधेन व्यवधारणकल्पनया अन्यतरविषयं वाक्यं उपक्रमोपसंहारचिन्तया कथमपि क्लेशेन गमयितव्यम्। इत्यारम्भे ( अधिकरणस्य सिद्धे ) सति, किं तावत् प्राप्तं ? अर्थवादस्य विध्युद्देशाधीनप्रवृत्तेः तच्छेषत्वाच्च विना आनर्थक्यप्रसङ्गात्, विध्युद्देशस्य च तेन विनाऽपि स्वार्थसिद्धेः। यच्च विधीयते तस्य स्तुतिः, यस्य स्तुतिः न तस्य विधानं, विधिनैव स्तुत्यपेक्षायाः कृतत्वात्। तस्मात् 'अङ्गगुणविरोधे च तादर्थ्यात्' (१२।२।९। २५ ) इत्यनेनैव न्यायेन अर्थवादस्य असमञ्जसत्वं न्याय्यम्। नित्यं चार्थवादानां प्रमाणान्तरावगतार्थविषयत्वं, अतोऽपि तद्गतमेव लक्षणाऽऽश्रयणं युक्तं, न विधिगतं, विधीनां अन्येन अत्यन्ताप्राप्तविषयत्वेन श्रुतान्यथात्वकल्पनस्य अप्रमाणकत्वात्। यथा च 'ऊर्गुदुम्बरः' 'आदित्यो यूपः' इत्यादयोऽर्थवादा नीयन्ते, तथाऽयं न यास्यति इति को हेतुः? । तस्मात् विस्पष्टाऽपि पुरस्तादर्थवादे दातृव्यापारस्तुतिः 'आपो वै शान्ताः' इतिवत् संबन्धिद्वारेण प्रतिग्रहीतृविषया अवधारयितव्या। ( अथ सूत्रार्थः ) तेन दानप्रतिग्रहकर्मणोर्भेदात् प्रतिग्रहसंबन्धित्वेन श्रुतमेतत् कर्म दातुरचोदितं इति मन्यामहे। तुशब्दस्य स्थाने चशब्दः, 'किंचेह भवतः' इतिवत् गमयितव्यः। यजमानं वा अस्याः कर्तृत्वेन अचोदितं विजानीमः। तत् कर्म च इष्टेर्निमित्तत्वेन अचोदितं इति सूत्रार्थः।

**सा लिङ्गादार्त्विजे स्यात्। ३१ ॥**

**भाष्यं**— नैषा प्रतिग्रहकर्तुः, किं तर्हि हेतुकर्तुः स्यात्। कुतः ? लिङ्गात्। किं लिङ्गं ? पूर्वपदानां उत्तरैः पदैः यथार्थमभिसंबन्धः। इदं श्रूयते, 'प्रजापतिर्वरुणायाश्वमनयत्' इति प्रजापतिः अश्वस्य दाता कीर्तितः, वरुणः प्रतिग्रहीता। 'स स्वां देवतामार्च्छत्' इति, स इति सापेक्षं पूर्वप्रकृतं वाक्यशेषमपेक्षते। स इति प्रजापतिं प्रति निर्दिशति, इति तेन सह एकवाक्यतां याति। सामानाधिकरण्याच्च प्रजापतेरेव प्रतिनिर्देशः अवकल्पते, न तु वरुणस्य, वैयधिकरण्यात्। 'स पर्यदीर्यत' इत्येषोऽपि प्रजापतिमेव प्रतिनिर्दिशति पूर्वप्रकृतं, तेन च सह एकवाक्यतां याति। 'स एवैतं वारुणं चतुष्कपालमपश्यत्' इति प्रजापतिरेवेति। 'तं निरवपत्' प्रजापतिरेवेति। 'ततो वै स वरुणपाशादमुच्यत' प्रजापतिः। 'वरुणो वा एतं गृह्णाति' इति हेत्वपदेशोऽयम्। यस्मादेव प्रजापतिः वरुणायाश्वं दत्त्वा परिदीर्णः, तस्मात् योऽश्वं प्रतिगृह्णाति प्रयच्छति, तं वरुणो गृह्णाति, स परिदीर्यते इति। यतस्तु वारुणेन प्रतिमुक्तः, तस्मादन्येनापि अश्वं प्रयच्छता वारुणो निर्वप्तव्यः इति अश्वस्य दातुः वारुणीष्टिः प्रशस्यते कर्तव्या अनेन आख्यातेन। तस्मात् अश्वं दत्त्वा वारुणीमिष्टिं निर्वपेत् इति। **आह**, ननु 'योऽश्वं प्रतिगृह्णाति स निर्वपेत्' इति। **उच्यते**। एवं सति अन्यथा उपक्रान्ते वाक्ये अन्यथा उपसंहृते उपक्रमोऽपि अनर्थकः स्यात्, उपसंहारोऽपि। तस्मात् उपक्रमे वा शब्दार्थः उपसंहारवशेन कल्पनीयः, उपसंहारे वा उपक्रमवशेन। तत्र प्रजापतिर्वरुणायाश्वमनयत् इति वरुणादश्वं प्रत्यगृह्णात्। उपसंहारानुरोधेन ( उपक्रमः ) कल्प्येत, यद्वा उपक्रमवशेन उपसंहारं योऽश्वं प्रतिगृह्णाति इति योऽश्वं प्रतिग्राहयति इति। तत्र 'मुख्यं वा पूर्वचोदनाल्लोकवत्' ( १२।२।८।२३ ) इति प्रथममनुग्रहीतव्यं विरोधाभावात्। पश्चात्तनं तु विरोधात् लक्षणया कल्पनीयम्। अपिच, प्रजापतिर्वरुणायाश्वमनयत् इति वरुणादश्वं प्रत्यगृह्णात् इति बहु असमञ्जसं कल्पयितव्यम्। प्रतिगृह्णाति इत्येष शब्दः प्रतिग्राहयति इत्येतमर्थं शक्नोति यया कया चिच्छक्त्या वक्तुम्। यो हि तदाचरति, येन च क्रिया प्रणाड्याऽपि सिध्यति, स तस्याः क्रियायाः कर्ता इति शक्यते वदितुम्। यथा 'षड्भिर्हलैः कर्षति' इति संविधानं कुर्वन् विलेखनमकुर्वन्नपि उच्यते, तत्समर्थमाचरतीति। एवमिहापि स प्रतिग्रहसमर्थमाचरति यो ददाति। तस्मात् ददत् प्रतिगृह्णाति इति शक्यते वदितुम्। तस्मात् अध्यवधार्य इदमवक्लृप्तम्। ददत् प्रतिगृह्णातीत्युच्यते, तस्य च वारुणीष्टिः इति।

**वा**— सा खलु इष्टिः आर्त्विजे स्यात् यजमाने स्यादित्यर्थः। स हि ऋत्विजामयं इत्येवमार्त्विजोऽभिधीयते। **अथवा** 'स्वामिसप्तदशाः कर्मसामान्यात्' ( ३।७।१८।३८ ) इति यजमानस्यापि ब्रह्मादिवत्

ऋत्विक्त्वं वक्ष्यति। तेन शक्यं याजमानमपि प्रदानं आर्त्विजमित्यभिधातुम्। अथवा स्वामिकर्मार्त्विजयोः कतरस्मिन् स्यादिति संदिग्धे यत्र लिङ्गं सामर्थ्यात्मकमवकल्पते, तत्र इति सूत्रार्थः। (अत्र **सुधा. पृ.१४९८**– पूर्वाधिकरणसिद्धान्तसूत्रस्थयोः वाशब्दयाज्ञशब्दयोः व्यवहितयोरपि अपेक्षिततया अनुषङ्गेण यज्ञाङ्गे दाने अनङ्गे वा ऋत्विक्कर्मणि इति संदिग्धे इत्येवं स्वयमेव अन्यथा व्याचष्टे– अथवा स्वामीति [ अथवा स्वामिकर्मार्त्विजयोः इति ] )।

**कथं** पुनर्यजमानव्यापारो निमित्तं इति लिङ्गेन गम्यते? **तदुच्यते, ‘ सामर्थ्यं कर्मणस्तावदेकं लिङ्गं विवक्षितम्। अपरं वाक्यसामर्थ्यं पौर्वापर्यनिरीक्षणात्॥’** पूर्वाधिकरणेनैव एतत् प्रतिपादितप्रायं यदत्र दातुरिष्टिरिति। यदा हि अश्वप्रतिग्रहवतः कर्मणोऽङ्गमेव इत्यवधारितं, तदा अङ्गप्रधानानां एकदेशकालकर्तृकन्यायात् ( ११।२।२ ) य एव क्रतोः कर्ता, तेनैव इयमपि कर्तव्या। यश्च क्रतोः कर्ता, स ‘स्वामिकर्म परिक्रयः’ ( ३।८।१।१ ) इत्येवमश्वस्य दाता। तस्मात् असंदिग्धमेव दातुरिष्ट्या भवितव्यम्। एतद्धि अङ्गस्य सामर्थ्यं, यत् प्रधानेन एककर्तृकं सत् उपकारं शक्नोति कर्तुं, न भिन्नकर्तृकम्। तेन प्रधानवदेव इतरैस्तस्यामपि आर्त्विज्यं कर्तव्यं, न याजमानमिति। एवं सिद्धेऽपि वाक्योपक्रमोपसंहारविरोधकृतभ्रान्तिसंशयव्युदासमात्रार्थं उत्तरमधिकरणमारब्धव्यम्। तस्यापि च वाक्यसंबन्धोपक्रमोपसंहारस्य ईदृशमेव सामर्थ्यं, यत् दातुर्विधत्ते। नहि एतावदेव वाक्यं ‘यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेत्’ इति, किं तर्हि अन्योऽपि उपक्रमः ‘प्रजापतिर्वरुणायाश्वमनयत्’ इत्यादिरस्य विद्यते। स च दातुरिष्टिं प्रतिपादयति इत्युक्तम्। **ननु** एतदप्युक्तं विध्युद्देशबलीयस्त्वात् बाध्यतेऽसौ इति। **नैतदस्ति**। कुतः? **‘ स्तुतिर्लब्धात्मकत्वेन विध्युद्देशेन बाध्यते। प्रतिग्रहीतरि त्वत्र विध्युद्देशो न कल्पितः॥’** यदि लब्धात्मकोऽत्र प्रतिग्रहीतृविषयः विध्युद्देशो भवेत्, ततो विचार एव न क्रियेत, न तु असौ लब्धात्मकः। कुतः? **‘परस्तादर्थवादेषु स्वतन्त्रो जायते ह्यसौ। पुरस्तादर्थवादेषु तत्पूर्वो विधिकल्पना॥’** सत्यपि प्रधानगुणभावे विध्यर्थवादानां पूर्वापरोच्चारणकृतः अन्यो विशेषो भवति। सर्वत्रैव तावत् ‘ मुख्यं वा पूर्वचोदनाल्लोकवत्’ ( १२।२।८।२३ ) इति च, श्रुतिलिङ्गाधिकरणन्यायेन च पूर्वं विज्ञानं अनुपजातप्रतिद्वंद्वि द्वितीयविज्ञानान्तरानुत्पत्त्यवस्थत्वात् आञ्जस्येन आत्मानं लभते। पश्चात्तनं तु पूर्वविज्ञानावरुद्धज्ञानविषये उपजायमानं, सत्यां विरोधावस्थायां, तदानुगुण्यातिरिक्तेन रूपेण उत्पत्तुमेव न शक्नोति, इति अन्यथात्वमपि प्रतिपद्यते। तदिह विध्यर्थवादत्वकृतं विशेषं पूर्वपश्चाद्भावितया अनाश्रित्य उपक्रमोपसंहारयोः दातृप्रतिग्रहीतृविषयत्वेन विप्रतिपद्यमानार्थत्वात्, तथा सति च एकवाक्यत्वासंभवात्, पृथक्त्वे च उभयोरपि परस्परसंनिधिवशेन अकल्पितविध्यन्तरप्ररोचनाऽन्तरशक्त्योः साकाङ्क्षत्वेन अपरिपूर्णार्थयोः आनर्थक्यप्रसङ्गात् अवश्यंभाव्येकवाक्यत्ववशेन समानविषयत्वे कल्प्यमाने अनुपजातविरोधावस्था पूर्वावधारितदातृगामित्वपरित्यागासंभवात्, उत्तरं अलब्धावस्थमेव प्रतिग्रहीतृज्ञानं गौणग्रहातिकल्पनया दातृविषयत्वेन अध्यवसीयते। किंच **‘भूयसां च सधर्मत्वमस्मिन् पक्षे भविष्यति** (१२।२।७।२२)। **अन्यथा हि भवेत् पूर्वं सर्वमेवासमञ्जसम्॥’** प्रजापतिः वरुणादश्वं प्रत्यगृह्णात् स्वां देवतामपादानभूतां वरुणमेव इति बहु असमञ्जसं स्यात्। मम तु गृह्णातिरेव कथंचित् प्रयोजकव्यापारे वर्तयितव्यः। यत्तु विधिः अर्थवादात् बलवत्तर इति, सत्यम्। यो विधिः स बलीयान् भवति। न तु प्रतिग्रहीतुरिष्टिः इति विधिः। सर्वत्र हि वाक्ये यत् पूर्वपदैरनवगतं अपेक्षितं च, तत् उत्तरपदेभ्यः परिगृह्यते, नेतरत् प्रतीयमानमपि। तद्यथा ‘ सत्रादुदवसाय’ इति क्त्वाप्रत्ययेनैव उत्तरस्यां क्रियायां उदवसानवत् अन्योन्यनिरपेक्षा बहवः कर्तारः अवधारिताः उद्दिश्यमानत्वाच्च अविवक्षितसाहित्याः, इति ‘ पृष्ठशमनीयेन यजेरन्’ इत्यत्र सत्यपि उपादीयमानत्वे संहतबहुकर्तृप्रत्ययः पूर्वेण अनपेक्षितत्वात् अविवक्षितो भविष्यति (१०।२।१३।४१)। एवमिह यावदेव ‘प्रजापतिर्वरुणायाश्वमनयत्’ इत्यर्थवादेन दातुः वरुणनिर्मो-

चने हेतुत्वेन इष्टिः प्रशस्यमाना अवगता, तावदेव तस्य किमपि वक्तव्यं इति इयमेव इष्टिः विधास्यते इत्यवधार्यते । ततश्च पूर्वावधारितविधिविषयः पुरुषो विध्यनुमानाभिमुखः तन्मात्रमेव उच्यमानं प्रार्थयते, नाधिकम् । तुल्या च विषयावबोधने विध्यर्थवादयोः शक्तिः । यत्तु अर्थवादस्य विधिशक्तिर्नास्ति, तावन्मात्रं विधायकात् गृह्यते एव । न तु तावता सर्वमेव तद्गतं विवक्ष्यते, अनपेक्षितत्वात् । अतो निमित्तार्थे लिङुच्चारणं धातुमन्तरेण न संभवति, इति यत्र क्व चन धातौ प्रयोक्तव्ये दातृव्यापारार्थगृहीतो गृह्णातिः प्रयुक्त इति द्रष्टव्यम्। अन्यथा हि यस्मात् पुराकल्पे दातुरेवं वृत्तं, तस्माद्द्यत्वेऽपि प्रतिग्रहीतृभिः एवं कर्तव्यं इत्यसंबद्धमेव वाक्यं स्यात् । तस्मात् विध्युद्देशेनैव इत्थं प्रवृत्तेन दाता अश्रित इत्यविरोधः ।

तदेतत् ‘ श्रुतेर्जाताधिकारः स्यात् ’ ( ३।३।१।१ ) इत्यत्र प्रपञ्चितम् । ननु च तेनैव गतत्वात् इह नारब्धव्यमेतत् । सत्यं, गतप्रायमेतत् । भाष्यान्तरजनितभ्रान्त्यपनयार्थं ( भाष्यान्तरे सौत्रार्त्विजशब्दात् प्रतिग्रहीतुरिति सिद्धान्तितम् ) तु पुनरारम्भः । इतरथा हि शक्यमिदं सूत्रद्वयं पूर्वाधिकरणेऽपि व्याख्यातुम् । यो नाम आलम्भनिर्वापवत् लोकवेदयोः अश्वप्रतिग्रहाविशेषात् अनेकान्ते सति न नियोगतः कर्माङ्गत्वं गम्यते इति मन्यमानो वदेत् ‘ याज्ञेऽपि अचोदितमेतत् कर्म भेदे सति निर्णयकारणाभावात् ’ इति, तस्योत्तरं ‘ सा लिङ्गादार्त्विजे स्यात् ’ इति । यत् ऋत्विग्भ्योऽश्वदानं, तत्र स्यात्, वैदिकत्वयज्ञियत्वलिङ्गविशेषात्, निमित्तत्वोपयुक्तस्यापि लिङः एव लिङ्गत्वात् । वैदिको हि ( प्रतिग्रहः ) लिङ्संबद्धो दृष्टः, न लौकिकः । अथवा एतदेव चोद्यं विना सूत्रेण कृतत्वात् सूत्रद्वयमपि एकीकृत्य परिहारो वर्णनीयः । यस्मात् अचोदितं लौकिकं, न तत्र निमित्तत्वेन बुद्धिः इति पूर्ववदेव योज्यम् । तत्र एतत् स्यात् एकमिदं कर्म यथा वैदिकं सत् निमित्तं भवति इति, तथा लौकिकमपि संभवति इति अत आह, नैतत् । कुतः ? कर्मभेदात् । अस्ति हि चोदिताचोदितत्वकृतः देशादिभेदकृतकर्मव्यक्तिकृतोऽपि कर्मभेदः, येन निमित्तव्यवस्था भविष्यति । प्रतिषिद्धत्वाच्च लौकिकस्याभाव एव वेदसिद्धान्तेन । अतो यस्य असंदिग्धः सद्भावः, तस्यैव निमित्तत्वम् । न चावश्यं अस्य निमित्तार्थे श्रवणं, संबन्धमात्रपर्यवसानात् । अतश्च अश्वदानस्यैव इयमितिकर्तव्यता इति प्रयोजनवत्त्वेन वैदिकं गमिष्यति । तस्मात् न अचोदितेन संबन्धः । इत्येवं संभवत्यपि व्याख्याने अर्थवशेन अधिकरणान्तरकरणम् । गृह्णातिशब्दश्च प्रयोजकक्रियायां अदृष्टपूर्वः दृढां भ्रान्तिं कुर्वन् लक्षणावृत्त्या नेतव्यः, प्रयोजकव्यापारे प्रयोज्यवदुपचारात् । अथवा हेतुकर्तरि अपि कर्तृत्वमस्ति । तत्र यदा हेतुत्वं विवक्ष्यते, तदा हेतुमद्-व्यापारे विवक्षितेऽपि णिजुत्पद्यते । कर्तृत्वमात्रविवक्षायां विनैव णिचा योऽश्वप्रतिग्रहं यथाकथंचित् निर्वर्तयति स प्रतिगृह्णाति इति शक्यते वक्तुम् । यथा ‘ षड्भिर्हलैः कृषति ’ इति विलेखनवचनः सन् कृषिः षड्-हलोपादानसामर्थ्यात् विलेखितृविषयासंभवात् तत्प्रयोजकव्यापारे वर्तते । नहि हलषट्केन एकः कर्ता विलेखितुं शक्नोति । तेन षण्णामेव विलेखितॄणां यः संविधानेन प्रयोजकः स तद्-व्यापारेण कृषेरपि कर्ता भवति इत्येवमभिधीयते, तद्वत् अर्थवादवशेन वर्तमानो गृह्णातिः तत्प्रयोजकव्यापारे वर्तिष्यते । विचित्रशक्तयो हि धातवः प्रयोज्यप्रयोजकोभयव्यापारवचनेन भावार्थाधिकरणे दर्शिताः । तेषां सहकारिकारणसंनिधानात् कदा चित् का चित् प्रसिद्धिव्यतिरेकेणापि शक्तिरभिव्यज्यते । तस्मात् ददात्यर्थे प्रतिगृह्णातिशब्दः प्रयुक्तः इति दातुरिष्टिः । एवं स्थिते **के चित्** चोदयन्ति । यथा किल **मैत्रायणीयानां** ‘ स एषोऽश्वः प्रतिगृह्यते ’ इति एकरूपोपक्रमोपसंहारविधिना विस्पष्टमेव प्रतिग्रहीतुरिष्टिः इति गम्यते । तत्र च वदन्ति, न्यायेन तावत् वयं बलीयांसः, यदि तु वचनान्तरेण जीयामहे किं क्रियतां इति । **स तु** निष्कारणस्त्रासः इति पश्यामः । कथं ? ‘ **प्रतिग्रहीतरि स्पष्टं यदि वाक्यान्तरं, ततः । भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यते ॥** ’ यथोदाहृतेन तावत् **तैत्तिरीयशाखावाक्येन** दातुरिष्टिः सिद्धा । **सा न** न्यायान्तरेण अपनीयते, न वचनान्तरेण । यद्यपि प्रतिषेधवचनं स्यात्, तथापि विहितप्रतिषिद्धत्वात् विकल्पो

भवेत्, न स्वीकृतन्यायव्युदासः। यत्तु प्रतिग्रहीतुर्विधायकं, तद्यदि तावत् कर्माङ्गत्वशेन विनाऽपि उपक्रमविशेषात् पूर्ववाक्यार्थानुसारि एव भवति, ततः तेनापि दातुरेव। अथ तु स्वातन्त्र्यात् प्रतिगृह्णातिवशात् प्रतिग्रहीतुः, ततः पूर्ववाक्याच्च दातुः इत्युभौ करिष्यतः। तत्प्रतिग्रहीतृगता च कर्माङ्गत्वाभावात् पुरुषार्था सती लौकिकेऽपि स्यात्। **यस्तु** 'आर्त्विजे स्यात्' इत्येतत्सूत्रपरः सन् पूर्ववाक्येनापि प्रतिग्रहीतुरेव वदति, **तेन** तत्कर्तृकायाः कर्माङ्गत्वाभावात् ऋत्विजामितरेषां च पुरुषार्थफलकल्पनातुल्यत्वेन लौकिकेऽपि प्राप्तौ सत्यां केन प्रमाणेन 'तस्माद्यज्ञे प्रतीयते' इत्येतदभिधीयते इति वक्तव्यम्। तस्मादनेन तावत् दातुरिति सिद्धम्।

**शा—** किमियं इष्टिः प्रतिग्रहस्य स्वतन्त्रकर्तुः उत हेतुकर्तुर्दातुरिति, तदर्थं च प्रक्रमस्थस्य अर्थवादस्य उपसंहारस्थविध्युद्देशस्य च विरोधे कस्य बलीयस्त्वं इति चिन्त्यते। तत्र प्रतिग्रहीतुरिति प्राप्तेऽभिधीयते '**असंजातविरोधित्वादर्थवादो यथाश्रुतः। व्याख्येयस्तद्विरुद्धत्वाद् विध्युद्देशस्य लक्षणा॥**'

ऋगादिशब्दाः वेदेऽपि बहुलं दृष्टप्रयोगाः, गृह्णातिस्तु दातृव्यापारे न क्व चित् दृष्टः, तेन नासौ तत्परत्वेन व्याख्यातुं शक्यते इति विशेषाशङ्कानिवृत्त्यर्थमधिकरणम्। अथवा **भाष्यकारान्तरैः** 'सा लिङ्गादार्त्विजे स्यात्' इति सूत्रानुसारात् प्रतिग्रहीतुरिष्टिराश्रिता, तन्निवृत्त्यर्थं अनेनैव सूत्रेण दातुरिष्टिं प्रतिपादयितुं भाष्यकारोऽधिकरणान्तरं चकार। (सूत्रद्वयार्थस्तु) यज्ञेऽपि अचोदितमिदं कर्म, भेदे सति निर्णयाशक्तेः। अत उभयत्र स्यात्, इति चोद्यम् (**सोम—** इदं वारुणेष्टिरूपं कर्म यज्ञेऽपि अचोदितं, यज्ञाङ्गभूतवैदिकदाननिमित्तकमपि न भवतीति यावत्। भेदे सति लौकिकवैदिकदानभेदे, दानद्वये सतीति यावत्। वैदिकस्यैवाङ्गमिति निर्णेतुमशक्यत्वात् उभयत्र स्यादित्यर्थः)। तस्योत्तरम्—सा लिङ्गात् वैदिकत्वसामान्यात् आर्त्विजे ऋत्विक्संबन्धिनि वैदिके दाने स्यादित्यर्थः। (**सोम**—अधिकरणान्तरत्वे च अचोदितमितिसूत्रस्यायमर्थः—वारुणीष्टिरूपं कर्म दातुरचोदितं दानप्रतिग्रहयोर्भेदात् अस्य च प्रतिग्रहसंयोगात् इति)। १५.

**सोम**—प्रसक्तानुप्रसक्तोऽयं विचारः। (जयादीनां वैदिककर्माङ्गत्वमुक्तम्। तेन वारुणीष्टिरपि वैदिकाश्वदाने एवेति प्रसक्तम्। तदनु च सा इष्टिर्दातुरेवेति प्रसक्त इति प्रसक्तानुप्रसक्तता ज्ञेया) मैत्रायणीयशाखायां दातुरुपक्रमाभावेऽपि तैत्तिरीयशाखायां उपक्रमबलात् दातुरिष्टिरिति निर्णयः। १५.

**वि**— 'यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः। प्रतिग्रहीतुर्दातुर्वा स्या', दाद्योऽस्तु यथाविधि॥, असंजातविरोध्यर्थवादाद् दातुः प्रजापतेः। इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत्॥' १५.

**भाट्ट**—सेयमिष्टिः न प्रतिग्रहीतुः, अपि तु दातुरेव। उपक्रमस्थार्थवादे प्रजापतेर्दातुरेव प्रधानभूतस्य 'सः' इत्यनेन परामर्शात् प्रजापतिरेव वरुणायाश्वं दत्त्वा स्वां देवतां संप्रदानरूपां वरुणं जलोदररूपेण प्राप्तः इत्यर्थावगमात् तस्यैव तन्निर्मोकार्थं इष्टिकर्तृत्वावगतेः, उच्चैस्त्वादिवदेव उपसंहारस्थप्रतिग्रहीतृपदस्य दातृलक्षणार्थत्वात्। अथवा आख्यातेन साक्षात् प्रयोजकसाधारण्येन कर्तृमात्राक्षेपात् साक्षात् संभवे प्रयोजककर्त्रनाक्षेपेऽपि इह उपक्रमानुरोधेन तदाक्षेपात् प्रतिग्रहं यः कारयेत् इत्यर्थावगतेः विनैव लक्षणां दातुरिष्टिः। न चैवं तेन गतार्थत्वं, **मैत्रायणीयशाखायां** 'स एषोऽश्वः प्रतिगृह्यते' इत्येवं प्रतिग्रहोपक्रमाया एवास्याः आम्नानात् तद्वशेन उपक्रमस्थेऽपि अर्थवादे एव लक्षणा इत्यधिकाशङ्कायाः सत्त्वात्। तन्निवृत्तिस्तु शाखाऽन्तरे प्रतिग्रहीतुः इष्ट्यवगमेऽपि अस्यां शाखायां (तैत्तिरीये) प्रबलोपक्रमे प्रमाणाभावेन लक्षणाऽनुपपत्तेः एतद्वचनेन दातुरिष्टौ बाधकाभावात्। दूरस्थकर्मानुवादेन उद्देश्यसंबन्धानुपपत्तेः अस्य कर्मान्तरविधायकत्वाच्च। नामादीनामुपस्थापकानामभावेन शाखाऽन्तरन्यायाभावाच्च (२।४।२)। दातुरुपक्रमानुरोधेन वा मैत्रायणीयशाखास्थोपक्रमस्यापि प्रयोजककर्तृत्वाभिप्रायेण व्याख्यातुं शक्यत्वाच्च। १५.

**कु**—प्रतिग्रहीतुरेव एषा इष्टिः इति प्राचीनभाष्यानुसारी पक्षोऽपि वार्तिके ध्वनितः याज्ञिकसंमतश्च। **तथा**

च भरद्वाजसूत्रं 'प्रतिग्रहे इष्टिः इत्याश्मरथ्यः, अश्वप्रतिग्रहे इत्यालेखनः, आर्त्विज्ये प्रतिग्रहे यजमानस्यैव स्यात्' इति ।

सत्याषाढः—ऋत्विजोऽश्वप्रतिग्रहे वारुणी, यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्, एकमतिरिक्तं, इमं मे वरुण, तत्त्वा यामीति याज्यानुवाक्ये । २२।५।११.

मण्डन— 'उपक्रमात् सा तुरगस्य दातुः ।'

शंकर— 'दातुः सैवेष्टिरुदिता ।' १७.

* यद्यपि पृष्ठशमनीये सत्रोदवसानं निमित्तं, तथापि अश्वप्रतिग्रहेष्टिन्यायेन सत्राङ्गं पूर्वपक्षे । भाट्ट. १०।२। ११,* यूपस्पर्शे प्रायश्चित्तं स्पर्शः विहितः अविहितो वेति-चिन्तायां, प्रकरणादिना अश्वप्रतिग्रहेष्टिन्यायेन च विहित-स्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिकमिदं प्रायश्चित्तं कर्माङ्गतया विधीयते ( इति पूर्वपक्षः ) यदि तु अत्र स्पर्शनिषेधाधिक्यात् यदिशब्दोपादानाच्च अश्वप्रतिग्रहेष्टि-वैलक्षण्यमाशङ्क्येत । ९।३।३.

* **अश्वप्रतिग्रहेष्ट्यधिकरणे** उपक्रमानुसारेण उपसंहारो नीतः । पराक्रमः १, * अश्वप्रतिग्रहेष्ट्यधिकरणेऽपि न पूर्वाधिकरणसिद्धकर्माङ्गत्ववशेन दातुरिष्टिरिति निर्णयः, अन्योन्याश्रयापत्तेः । पूर्वाधिकरणे हि एतदधिकरणसिद्धं दातुरिष्टिः इत्यमुमर्थं अवेक्ष्य कर्माङ्गत्वनिर्णयः । यदि हि ऋत्विजः प्रतिग्रहीतुरिष्टिः स्यात् तदा तस्य अधिकारसिद्धये तद्गाम्येव फलं कल्पनीयं, इति कथं यजमानगामिफलककर्माङ्गत्वं भवेत् । अतः दातुरिष्टिः इति स्थिते इदमधिकरणमारभ्यं इति भाष्यादिषु दर्शितम् । १९।२. * **अश्वप्रतिग्रहेष्ट्यधिकरणन्यायेन** वैदिकस्यैव वैदिकाकाङ्क्षापरिपूरणार्थत्वं न्याय्यम् । सोम. २।१।१६, * अश्वप्रतिग्रहेष्ट्यधिकरणोक्तरीत्या वैदिक्या एव इतिकर्तव्यतायाः शीघ्रोपस्थितिकत्वात् ग्रहणं युक्तं, न लौकिक्याः । ७।४।१.

⌛ **अश्वभृत्यन्यायः** । कस्यायमश्वो यस्यायं भृत्यः, कस्यायं भृत्यो यस्यायमश्वः, इत्यत्र यथा न वस्तुनिर्णयः, तथा प्रकृतेऽपि । साहस्री. २१५.

* 'अश्वमालभेत' इत्यत्र अकारवकारयोर्मध्यवर्तिनो वर्णस्य दन्त्यत्वे, 'स्वं धनं तद्रहितं दरिद्रमालभेत' इत्यर्थो भवति । तालव्यत्वे तु तुरंगमवाचित्वम् । ततः संशयात् अप्रामाण्यं तस्य वाक्यस्येति चेन्न । व्याकरणानुसारेण अशू व्याप्तौ इत्यस्मात् औणादिके वप्रत्यये सति तालव्यत्वनिर्णयात् । तस्मात् अश्वालम्भनशास्त्रं प्रमाणम् । वि. १।३।९ गुरुमते.

* **अश्वमेधः** बहुदक्षिणत्वेन प्रसिद्धः । 'तस्य सप्तदशोऽग्निष्टोमः, तस्य दीक्षणीयायामिष्टौ द्वादशमानं हिरण्यं ददाति, चतुर्विंशतिमानं प्रायणीयायां, द्वे चतुर्विंशतिमाने आतिथ्यायां' इत्यादि 'अष्टाविंशतिशतमानानि वशाया वपायां' इत्यन्तेन बहुदक्षिणतया उक्तः । तत्र हि दीक्षणीया, प्रायणीया, आतिथ्या, षडुपसदः, अग्नीषोमीयपशुः, सवनीयपशु–सवनत्रय–उदयनीय–अनुबन्ध्यपशुषु द्वादशमानमारभ्य उत्तरोत्तरद्विगुणा दक्षिणा उक्ता । परिमलः. ३।४।१।१६. ब्रसू. * **अश्वमेधं** अधीयानाः के चित् अश्वस्य घासमाहरन्ति, अपरे न, परे अन्यं धर्ममाचरन्ति । अश्वघासादेः एकेषां उपकारमाकाङ्क्षति अश्वमेधादिः, एकेषां नाकाङ्क्षति । भा. २।४।२।८ पृ. ६३२.

⌛ **अश्वमेधे अध्रिगुप्रैषे अश्ववङ्क्रीयत्ताप्रकाशनार्थं वैशेषिकमन्त्राकरणपक्षे त्रयाणां पशूनामर्थे षडशीतिरेषां वङ्क्रयः इति समासवचनम् ।** चतुस्त्रिंशन्मन्त्रतत्प्रतिषेधन्यायः ॥

**अश्वस्य चतुस्त्रिंशत् तस्य वचनाद् वैशेषिकम् ।** ९।४।२।१७ ॥

**भाष्यं**— अस्ति अश्वमेधः । तत्र सवनीयः पशुः अश्वः तूपरगोमृगौ च । अस्ति तु प्रकृतौ अग्नीषोमीये 'षड्विंशतिरस्य वङ्क्रयः' इति वचनम् । तदिह चोदकेन प्राप्तम् । तत्र अश्वस्य चतुस्त्रिंशत् वङ्क्रयः । तूपरगोमृगयोः षड्विंशतिः । अस्ति तु ऋक् समाम्नाता 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त ॥' इति । तदिदं संदिह्यते किं अश्वस्य वैशेषिकमिदं वचनं कर्तव्यं तूपरगोमृगयोः समासेन, उत सर्वेषा-

मेव समासवचनम् । किं प्राप्तं ? अश्वस्य चतुस्त्रिंशत् वङ्क्रयः, तस्य वैशेषिकमिदं वचनं कर्तव्यम् । कस्मात् ? वचनात् । एवं 'चतुस्त्रिंशद् वाजिनो देवबन्धोः' इत्येतद् वचनं अर्थवदिति । इतरथा एतत् वचनमनर्थकं स्यात् । तस्मात् वैशेषिकमश्वस्येति ।

**टुप्**— अयं तावत् सिद्धान्त एव । 'चतुस्त्रिंशद्वाजिनः' इत्यनया अवश्यं वङ्क्रीयत्ता प्रकाशयितव्या । आनर्थक्यभयात् (मन्त्रस्य प्रकरणाम्नानानर्थक्यभयात्) प्रकरणानुमितेन वाक्येन प्रापितत्वात् । ननु प्रतिषिद्धेयं ( ऋक् ) 'न चतुस्त्रिंशत्' इति । उच्यते । विधिपूर्विकेयं प्राप्तिः, इति विधिप्रतिषेधयोः विकल्पः षोडशिवत् इति पक्षे तावत् अनया प्रकाशनम् । यत्तु अर्थात् प्राप्नोति, तत् प्रतिषेधेन बाध्यते । यथा व्रत्येऽहनि मधुमांसाशने । ननु इह आनुमानिको विधिः प्रत्यक्षेण प्रतिषेधेन बाध्यते । उच्यते । न विधिर्यदि बाध्यते । अपिच अन्यदेतदानुमानिकं, इदं तु प्रत्यक्षमिति । विधिश्चेत् न बाधितुं शक्यते । एवमुभयप्राप्तौ स्थितायां उत्तरा चिन्ता । न चैतत् पूर्वपक्षसूत्रं समाम्नायस्य बलवत्त्वात् । तथा पक्षव्यावर्तकस्य तुशब्दस्य च उत्तरत्राभावात् ।

**तत् प्रतिषिध्य प्रकृतिर्नियुज्यते, सा चतुस्त्रिंशद्वाच्यत्वात् । १८ ॥**

**भाष्यं**— तत् प्रतिषिध्य प्रकृतिर्नियुज्यते, प्रकृतौ यत् कृतं वचनं तत् कर्तव्यमिति । कथं ? 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति । सा नियुज्यमाना चतुस्त्रिंशद्वाच्यत्वात् वारयति शब्दम् । तस्मात् प्रतिषिद्धत्वात् वैशेषिकं वचनं न कर्तव्यं, सामासिकं वचनं कर्तव्यम् । ननु 'षड्विंशतिरित्येव ब्रूयात्' इति वचनात् प्रतिषिद्धेऽपि वैशेषिकमेव वचनं कर्तव्यमिति । नेत्युच्यते । नहि अयं षड्विंशतिशब्दो विधीयते, किं तर्हि ? यथाप्राप्तं वचनमनूद्यते । कथमवगम्यते ? एवकारकरणात् । यथाप्राप्ते एवकारकरणम् । न च षड्विंशतिशब्दः प्राप्तः । षड्विंशतिसंख्याऽभिधानं प्रकृतौ कृतम् । इहापि तदेव प्राप्तम् । षड्विंशतिशब्देन तत् प्रकृतौ लक्षितं इहापि षड्विंशतिशब्दः तल्लक्षणार्थमेव उच्चारितः । षड्विंशतिसंख्यापरे अनेकोऽर्थो विधीयेत । चतुस्त्रिंशत्प्रतिषेधः षड्विंशतिसंख्यावचनं च, तत्र वाक्यं भिद्येत । भिद्यमाने एकवाक्यरूपं बाध्येत । किं तत् ? साकाङ्क्षत्वम् । 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति । एतद्धि वचनं चतुस्त्रिंशद्वचनाभावे प्राप्तमेव सत् कर्तव्यतया प्रतिषेधं प्रशंसितुं उच्चार्यते । तदेवमेकवाक्यतामापद्यते । सा एकवाक्यता संख्यापरे बाधिता स्यात् । अनेकार्थविधानं च अन्याय्यं एकार्थविधाने संभवति । भूयसी हि तत्र अदृष्टकल्पना स्यात् । तस्मात् यथाप्राप्तवचनं कर्तव्यमिति । ( वार्तिककारमतेन अष्टादशादिसूत्रैः अधिकरणान्तरम् । तद्यथा– )

**टुप्**—'तत् प्रतिषिध्य०' इदं श्रूयते 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति । तत्र संशयः किं समस्ता ऋक् प्रतिषिध्यते अश्वस्यापि समस्यवचनं, उत चतुस्त्रिंशत्पदप्रतिषेधः अश्वस्य वैशेषिकवचनं षड्विंशतिः इति । तत्र सिद्धान्तेनोपक्रमः तत्प्रतिषिध्य इति । ननु षड्विंशतिरिति ब्रुवन् निगदे षड्विंशतिरिति शब्दस्य विधिं बोधयति पूर्वपक्षवादी । तस्य कर्मानुष्ठानं, तूपरगोमृगयोः सामासिकवचनमन्यत् 'द्विपञ्चाशदनयोर्वङ्क्रयः' इति, अश्वस्य तु वैशेषिकं वचनमन्यत् 'षड्विंशतिरस्य वङ्क्रयः' इति । तदितरः प्रत्याह 'न ह्ययं विधीयते' इति ( भाष्येण ) । शक्यश्चात्र अन्यतरानुवादः । यदि तावत् प्रतिषेधो विधीयते, ऋचि प्राकरणिकायां प्रतिषिद्धायां यदन्यत् चोदकप्राप्तं इयत्तावचनं तत् स्वयमेव भवति । षड्विंशतिवचनं अनुवादः सह एवकारेण, षड्विंशतिः इति इयत्ता विधीयते । न सा शक्या चोदकप्राप्तत्वात् एवकारोपबद्धत्वाच्च । एवकारस्तु अप्राप्तः स विधीयते । तस्य परिसंख्यारूपोऽर्थः । यदन्यत् प्राकरणिकं प्रतियोगि (चतुस्त्रिंशद्वाजिन इति मन्त्रः), तन्न भवति । एवं अन्यतरस्यानुवादत्वे अवश्यंभाविनि ऋचः प्रतिषेधविधानं, मुख्यत्वात् । इतरस्य चानुवादः, जघन्यत्वात् प्रतिषेधस्तुत्यर्थः इति ।

**ऋग् वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः। १९॥**

**भाष्यं**— आम्नाता हि ऋक् अप्रतिषिद्धा च। तस्मादश्वस्य वैशेषिकं वचनं स्यात्। तथा च अविकल्पो भविष्यति। अविकल्पश्च न्याय्यः। विकल्पे विरुद्धं वचनं अन्योन्येन भवति। भवतीति चेत् न प्रतिषेधः, नेति चेन्न विधिः। तस्मात् वैशेषिकं वचनं कर्तव्यम्।

**टुप्**— वाशब्दात् पक्षान्तरम्। '**आम्नाता हि ऋक् अप्रतिषिद्धा च**' इति (भाष्यं)। ननु प्रतिषिद्धा वाक्येन, उच्यते। पदविकारं वक्ष्यामः 'तस्यां तु वचनादैरवत्' (२० सू.) इति। **ननु** श्रुत्या षड्विंशतिविधाने अनेकार्थविधानादिदोषः स्यात्। **उच्यते**। ऐरवत् प्रतिषेधः कार्यापत्तिप्रदर्शनाय भविष्यति अस्य 'षड्विंशतिर्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य' इति।

**तस्यां तु वचनादैरवत् पदविकारः स्यात्। २०॥**

**भाष्यं**—अथ यदुक्तं ऋक् तत्र प्रतिषिध्यते इति, नैतदेवम्। तस्यां वचनात् पदविकारः स्यात्। वचनं हि भवति, 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात्' इति। तत्र चतुस्त्रिंशत्पदं श्रुत्या प्रतिषिध्यते, ऋक् लक्षणया प्रतिषिध्यते, श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या। तस्मात् वैशेषिकं वचनं कर्तव्यमिति।

(ऐरवत्० इत्यादि टुप्टीका यद्यपि एकविंशतितमसूत्रीयत्वेन मुद्रिता आनन्दाश्रमीये, तथापि सा विंशसूत्रीयैव इति वयं प्रतीम इति तथैव लिख्यतेऽस्माभिरिति ध्येयम्। विंशैकविंशयोर्वा मिलित्वा सा स्यात्)।

**टुप्**— ऐरवत् इति विषम उपन्यासः। यत्र आद्यपदं गृह्यते तत्र ऋचं लक्षयति सर्वां, संबन्धेन आद्यत्वादेव 'अयं सहस्रमानवः' इतिवत्। यत्र तु अनाद्यं गृह्यते तन्न शक्नोति पराणि लक्षयितुं, अर्थेनासंबन्धात्। तथा पूर्वाण्यपि पर्यावृत्तिभयात् स्वयमेव तत् पदं कार्येण प्रयुज्यते। अतश्च 'अश्वस्य चतुस्त्रिंशत्' इति पूर्वपक्षसूत्रं नियमेन ऋगेव वक्तव्या इति, 'तत्प्रतिषिध्य' इति सिद्धान्तो नियममेव वारयति।

**सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात्। २१॥**

**भाष्यं**— सर्वस्या एव वा ऋचः प्रतिषेधोऽयं, न चतुस्त्रिंशत्पदस्य। कस्मात्? पदेनासंयोगात्। चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्यात्। विना तस्मात् पदात् नैव ऋक्-शेषो वङ्क्रिगणनं कुर्यात्। अथ षड्विंशतिपदेन संबध्येत, तथापि न अश्ववङ्क्रिसंख्यां ब्रूयात्। तत्र दृष्टोऽर्थो नावकल्पेत। ऊनं च वाक्यं अर्थं न साधयेत्। ऊने च वाक्ये दोषश्रवणात्, 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥' (पा. शि. ५२) इति। चतुस्त्रिंशत्पदं चेह अनर्थकं स्यात्। तस्मात् समस्य वचनं कर्तव्यम्। ऋचश्च विध्यन्तरेण विहितत्वात् वैशेषिकं वचनं इति।

**शा**— अत्र **भाष्यकारः** चतुस्त्रिंशत् इत्येवमादिसूत्रपञ्चकं एकाधिकरणत्वेन व्याख्यातवान्। **वार्तिककारस्तु** इदं सूत्रं पृथक्कृत्य प्रातिसूत्रत्वेन अधिकरणान्तरत्वेन व्याख्यातवान्। तत्र सिद्धान्तः '**एवकारोपबद्धत्वान्न षड्विंशतिचोदना। चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य संभवी॥ ऋच एव निषेधोऽतस्तथा सति च चोदकात्। प्राप्तं षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते॥**'

**सोम**— षड्विंशतिः इत्यस्य पशुगणान्तरे समस्यवचनेऽपि अश्वमेधे न समासः इति अग्रिमाधिकरणद्वितीयपूर्वपक्षस्य पूर्वाधिकरणसंगत्या उत्थानात् तस्य पाक्षिकप्राकृताध्रिगुवचनविषयत्वात् तत्पाक्षिकत्वविचाररूपस्य अस्य वार्तिककारीयाधिकरणान्तरस्य तदुपोद्घाततया **संगतिर्द्रष्टव्या। सूत्रार्थस्तु**—अश्वस्य चतुस्त्रिंशत् वङ्क्रयः सन्ति, तस्मात्तत्प्रकाशनसमर्थं वैशेषिकमेव कर्तव्यं, वचनात् प्रकरणे वैशेषिकाम्नानात् इति।

**वि**— 'न चतुस्त्रिंशदित्येष निषेधो नियतो न वा।, गिरापदवदाद्यः स्या, न्नैवकारहतत्वतः॥ निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते। निषेधकप्रापकाभ्यां चतुस्त्रिंशद्विकल्प्यते॥' चतुस्त्रिंशत्० इत्ययं मन्त्रः अश्वस्य अध्रिगुप्रैषे विकल्प्यते। ९।४।२।१७.

'पृथग्वचनमश्वस्य स्यादन्याभ्यां समस्य वा।, आद्यः पदे निषिद्धेऽत्र विशेषो नियतो यतः॥, वङ्क्री-

यत्ताऽनुक्तिदोषादृगेवात्र निषिध्यते । पक्षे प्राप्तः प्राकृतोऽस्मिन् समस्योक्तः पुरा यथा ॥ ' पूर्वोक्तविकल्पस्य तदवस्थत्वात् ऋग्विशेषविधिपक्षे पृथग्वचनं कर्तव्यम् । तन्निषेधपक्षे चोदकप्राप्ते प्राकृते अध्रिगुप्रैषे प्रथमाधिकरणन्यायेन समस्य वक्तव्यम् । तत्र तूपरगोमृगयोः प्रत्येकं षड्विंशतित्वात् अश्वस्य चतुस्त्रिंशत्त्वात् समासेन षडशीतिरेषां वङ्क्रयः इत्येवमूहनीयम् । ९।४।३। १८–२१.

**भाट्ट**— अश्वमेधे सवनीयपशुः अश्वः तूपरगोमृगौ च इतरौ विहितौ । तेषां एकप्रयोगत्वात् तन्त्रेण अध्रिगुप्रैषे पठनीये अश्वस्य चतुस्त्रिंशद्वङ्क्रिकत्वात् इतरयोः प्रत्येकं षड्विंशतिवङ्क्रिकत्वात् पूर्ववत् समस्यवचने षडशीतिरेषां वङ्क्रयः इति प्राप्तम् । तत्रायं मन्त्रः समाम्नातः ' चतुस्त्रिंशद्वाजिनो देवबन्धोः० ' इति अयं लिङ्गप्रकरणाभ्यां वङ्क्रिविशसनप्रैषे एव विनियुज्यते, न तु याज्यादौ । अतश्च औपदेशिकेन अनेन अतिदेशप्राप्तस्य अध्रिगोः अश्वविषये वङ्क्रिप्रकाशनमात्रांशे बाधात् अश्वस्यायं मन्त्रः, अन्ययोस्तु द्विपञ्चाशदनयोर्वङ्क्रयः इति समासः इत्यपि प्राप्तम् । तत्रेदमपरं वचनं ' न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयात् ' इति । तदनेन किं विधीयते इति **चिन्तायां**, न तावदत्र प्रतिषेधविधिः । स हि चतुस्त्रिंशत्पदमात्रप्रतिषेधो वा स्यात् तदृक्प्रतिषेधो वा, उभयथाऽपि विहितप्रतिषेधे विकल्पापत्तेः असंभवः, अन्त्ये ऋग्लक्षणापत्तिश्च । ऋक्प्रतिषेधे च षडशीतिः इत्येवं समासस्यैव प्राप्तेः, षड्विंशतिपदयुक्ताध्रिगुप्रैषस्य अप्राप्तत्वेन तस्यापि विधाने वाक्यभेदापत्तेश्च । षड्विंशतिपदेन षडशीतिपदोपेताध्रिगुप्रैषलक्षणया तस्यानुवादत्वे च लक्षणैव दोषः । अतो न गिरागिरेतिवत् ' न चतुस्त्रिंशत् ' इति निषेधानुवादः । षड्विंशतिः इति च षड्विंशतिपदमात्रस्य पाठप्राप्ते मन्त्रे इरापदवत् विधानम् । तद्वदेव च निषेधानुवादबलाच्च चतुस्त्रिंशत्पदस्थानापन्नत्वम् । विधानबलाच्च मन्त्रान्तर्गतषड्विंशतिपदेन अश्ववङ्क्रिसंख्यालक्षणायामपि न दोषः । **न च** एवकारेण विधिशक्तिप्रतिबन्धात् न ' षड्विंशतिः ' इत्यस्य विधित्वं इति **वाच्यम्** । एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावात् । ' अत्र ह्येवावपन्ति ' इत्यादौ तद्युक्तेऽपि विधिदर्शनाच्च । **न च** एवकारेण स्वार्थे एव विधेयत्वापादनेन षड्विंशतिपदे विधेयत्वप्रतिबन्ध इति **वाच्यम्** । षड्विंशतिपदस्यैव विधित्वमङ्गीकृत्य एवकारस्यैव अयोगव्यावृत्तिरूपं फलमादाय चतुस्त्रिंशत्पदव्यावृत्त्या अन्ययोगव्यावृत्तिरूपं फलमादायैव वा अनुवादत्वोपपत्तिः । अतश्च अश्वे ' षड्विंशतिर्वाजिनो देवबन्धोः ' इति मन्त्रः, इतरयोस्तु प्राकृत एव समासेन । **इति प्राप्ते**, न तावदत्र एवकारः अयोगव्यावृत्त्यर्थकतया अन्ययोगव्यावृत्त्यर्थकतया वा अनुवादः वैयर्थ्यापत्तेः, पदमात्रेण स्तुत्यनुपपत्तेश्च । अन्ययोगव्यावृत्त्यनुवादस्य निषेधेनैव सिद्धौ पुनरनेन करणे सुतरां वैयर्थ्याच्च । निरुक्तद्विविधैवकारार्थविधौ च अयोगव्यावृत्तेः तावत् षड्विंशतिपदस्य पक्षेऽपि अप्राप्तत्वात् अयोगस्य अप्रसक्तत्वेन विधानासंभवः । षड्विंशतिपदविधानावश्यकत्वे तत एव तस्याः प्राप्तत्वाच्च । अत एव नान्यनिवृत्तिः । तद्विधाने विकल्पस्य आवश्यकत्वाच्च । अत एव ' अत्र ह्येवावपन्ति ' इत्यादौ एवकारार्थविधौ ' न तौ पशौ करोति ' इतिवत् विकल्पापत्तिः इत्युक्तं **कौस्तुभे** । **वस्तुतस्तु** निषेधसमभिव्याहृतैवकारस्थले प्रतिप्रसवरूपता स्वविषयस्य अनुवाद्यतैव वा अनुभवसिद्धा । शब्दशक्तिवैचित्र्यस्य अनुभवसिद्धस्य अपह्नोतुमशक्यत्वात् । न च वैशेषिकमन्त्रे षड्विंशतिपदस्य प्रतिप्रसवः संभवति । न च प्राकृते एवाध्रिगौ षडशीतिपदप्राप्तौ तस्य प्रतिप्रसवः, तथात्वे ' न चतुस्त्रिंशत् ' इति निषेधानुवादानुपपत्तेः । वैशेषिकमन्त्रेण अश्वांशे प्राकृताध्रिगुबाधेन तत्र षड्विंशतिपदप्रतिप्रसवानुपपत्तेश्च । तूपरगोमृगयोः द्विपञ्चाशत्पदप्राप्तौ तत्र षड्विंशतिपदप्रतिप्रसवेऽपि निषेधानुवादानुपपत्तिः तदवस्थैव । **आश्वलायनमताङ्गीकारे** तु तत्र षड्विंशतिपदस्यैव सत्त्वात् प्रतिप्रसवानुपपत्तिः । अतः एवकाररूपतात्पर्यग्राहकानुरोधेन षड्विंशतिपदे स्वपदोपलक्षितषडशीतिपदोपेताध्रिगुप्रैषलक्षणया तस्यैव प्रतिप्रसवः । सोऽपि न विधेयः । एवकारेण अनुवाद्यत्वावगमात् । तत्प्राप्तिश्च इत्थं, ' न चतुस्त्रिंशत् ' इत्ययं वैशेषिकमन्त्रप्रतिषेधविधिः चतुस्त्रिंश-

त्पदेन लक्षणया तदादिसर्वमन्त्राभिधानात् पदमात्रप्रतिषेधे तत्र षड्विंशतिपदप्राप्त्यभावेन 'षड्विंशतिरित्येव ब्रूयात्' इत्यस्य अनुवादत्वानुपपत्तेः । अतो वैशेषिकमन्त्रप्रतिषेध एवायम् । अतश्च 'न तौ पशौ करोति' इतिवत् विहित-प्रतिषिद्धत्वात् विकल्पः । अभावपक्षे च अतिदेशप्राप्तस्य षडशीतिपदोपेतस्य अध्रिगोरेव न्यायेन प्राप्तत्वात् 'षड्विंशतिरित्येव' इत्यनुवादः । आश्वलायनमते तु 'षड्विंशतिः षड्विंशतिश्चतुस्त्रिंशदेषां वङ्क्रयः' इत्येवमाकारकाध्रिगुप्रैषस्य षड्विंशतिपदेन लक्षणात् तस्यैवायमनुवादः । **एतेन** "एवकारयुक्तवाक्येन उक्तविधाध्रिगुप्रैषस्यैव प्रतिप्रसवविधिः, वाचनिकेन वा अध्रिगुप्रैषेण पाठप्राप्तस्य वैशेषिकमन्त्रस्य बाधात् 'न चतुस्त्रिंशत्' इति निषेधो नित्यानुवादः । वैशेषिकमन्त्रस्य वाचः–स्तोमादौ विनियोगाच्च न वैयर्थ्यमपि । एवं च विकल्पोऽपि नाष्टदोषदुष्टो भविष्यति । एवकारश्च अयोगव्यावृत्तेः अन्ययोगव्यावृत्तेर्वा अनुवादो भविष्यति" **इत्यपास्तम्** । निषेधपूर्वकैवकारस्थले एवकारसंबन्धस्य अनुवाद्यत्वप्रतीतेः, तादृशस्थले यच्छब्दादिवत् एवकारस्यापि स्वसंबन्धिविधिप्रतिबन्धकत्वात् । अत एव 'उपवासाः पतन्ति, इत्युक्ते उपवासानेव कुरु, न तु प्रवासं गच्छ' इत्यत्र प्रवासनिवृत्तिरेव विधेया न तु उपवासः, इत्यनुभवसिद्धम् । यत्र तु न निषेधपूर्वकता, तत्र अनुभवबलात् एवकारसंबद्धस्यापि विधाने न का चित् क्षतिः, यथा 'अत्र ह्येवावपन्ति' इत्यादौ । प्रकृते तु एवकारसंबन्धिनः अध्रिगुप्रैषस्य अविधेयत्वात् 'न चतुस्त्रिंशत्' इत्येव निषेधविधिः । शास्त्रप्राप्तस्य निषेधाच्च 'न तौ पशौ करोति' इतिवत् विकल्पः । 'षड्विंशतिरित्येव' इत्ययं अकरणपक्षे न्यायप्राप्तानुवादः सन् अकरणप्रशंसया करणस्यैव निन्दाऽर्थवादः । एवं च वैशेषिकमन्त्रस्य प्रकरणमपि न बाधितं भवति । विकल्पस्तु बहुवचनान्तपाशमन्त्रवत् न विरुध्यते । **न चैवं** अध्रिगुप्रैषस्य अविधेयत्वेऽपि एवकारार्थस्यैव वैशेषिकमन्त्राख्यान्यनिवृत्तिरूपस्य विधेयत्वोपपत्तेः 'न चतुस्त्रिंशत्' इत्यस्यैव अनुवादत्वं किं न स्यादिति **वाच्यम्** । एवमपि शास्त्रप्राप्तनिवृत्तेः अविशेषेण विकल्पस्य अपरिहार्यत्वात् । अत एव 'अत्र ह्येवावपन्ति' इत्यादौ अप्राप्तपरिसंख्यैव अङ्गीकृता **कौस्तुभे** । **तन्त्ररत्नकारस्य** तु तत्र एवकारार्थविधिं अङ्गीकुर्वतः तत्र विकल्पापत्तिः तद्वदेव इह तदनापत्तिः इत्ययं पर्यनुयोगो दुरुद्धरः, न तु मम । न च तथापि विनिगमनाविरहात् तादवस्थ्यं, एवकारस्य अयोगव्यावृत्त्यन्ययोगव्यावृत्तिरूपनानाऽर्थकतया संदिग्धार्थकत्वेन निःसंदिग्धार्थकनिषेधस्यैव विधित्वाङ्गीकारात् । अतः सिद्धः अश्वमेधेऽपि अध्रिगौ ऊहः । अत्र च सूत्रव्याख्यानुरोधेन किंचित् वैलक्षण्येन भाष्यकारेण ऐकाधिकरण्यं, वार्तिककारेण च अधिकरणद्वयं आश्रितम् । तत् प्रमेयमात्रलेखनप्रवृत्तेन मया उपेक्षितम् ।

**मण्डन** — 'समासोऽश्वे विकल्पितः ।'

**शंकर** — 'चतुस्त्रिंशदृगप्यश्वे ।' २ 'समासोऽपि विकल्पतः ।' ३.

* अश्वमेधे अश्वतूपरगोमृगाणां अध्रिगुप्रैषे 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्य स्थाने 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' इति ऋचं पठित्वा तूपरगोमृगार्थे द्विपञ्चाशदनयोर्वङ्क्रयः इति पठितव्यम् । किंवा ऋचमपठित्वा षडशीतिरेषां वङ्क्रयः इति त्रयाणामर्थे समस्यवचनं पठितव्यम् । **भा.** ९।४।२।१७–२१. * अश्वमेधे 'ईशानाय परस्वत आलभते पर्यग्निकृतानारण्यानुत्सृजति' अत्र ईशानो देवता, परस्वन्तः पशवो द्रव्यं, आलम्भो यागः । पर्यग्निकृतोत्सर्गवाक्येन क्लृप्तोपकारप्राकृतपर्यग्निकरणान्ताङ्गरीतिर्विधीयते । तथा च यागविधिरयम् । **वि.** ९।४।१४, * अश्वमेधे ऐकादशिनाः पशवः एवमाम्नायन्ते 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नः संहितः, अधोरामः सावित्रः, वारुणः कृष्णः, एकशितिपात् पेत्वः' इति । ८।१।७. * अश्वमेधे न सर्वे (पशुत्रयस्य कमपि शेषं) भक्षयिष्यन्ति । **के.** अश्वमेधे परस्वद्यागे पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेधः । **भा.** ९।४।१३।५१–५५. * अश्वमेधे यूपैकविंशिन्यां अञ्जनादिपरिव्याणान्तानुसमयः कर्तव्यः । **वि.** ५।२।५. * अश्वमेधे 'वसन्ताय कपिञ्जलानालभते'

इति बहुत्वं विवक्षितमेव । भा. ४।१।५।११-१६. * अश्वमेधे 'वसन्ताय कपिञ्जलानालभते' इति विहितम्। तत्र त्रित्वमेव उपादेयं अवश्यंभावित्वात् प्रथमभावित्वात् लाघवाच्च । वि. ११।१।८. * अश्वमेधे शतं राजताः हरितत्सरवः असयः भवन्ति । भा. ९।४।४।२४. * (अश्वमेधीयत्रैधातवीयाविषयकं सर्वमिदं दीक्षणीयावाङ्नियमन्यायप्रयोजनत्वेन सर्वत्रोपन्यस्तं, तथापि अवान्तरभेदात् तत उद्धृत्य अश्वमेधप्रवह्नके निवेशितमस्माभिः इति ज्ञेयम् । अत एव 'किं भवति प्रयोजनं इतरस्मिन् इतरस्मिन् वा पक्षे इति । उच्यते' इत्युपक्रम्य 'अश्वमेधे समाम्नायते' इत्यादि भाष्यम् । ) अश्वमेधे समाम्नायते 'त्रैधातवीया (दीक्षणीया) भवति' इति । यदि परमापूर्वप्रयुक्तः एवंजातीयको धर्मः, ततः तस्योपकारविशेषे निबद्धः इति तत्कार्यापन्नायां त्रैधातवीयायां भविष्यति । अथ आग्नावैष्णवापूर्वप्रयुक्तः, ततो नेदमाग्नावैष्णवापूर्वं, इति तत्र त्रैधातवीयाऽपूर्वे न तेन धर्मेण संभन्त्स्यते इति । भा. ९।१।२।३ वर्णकं २.

टुप्— पूर्वपक्षे 'त्रैधातव्या दीक्षणीया भवति' इति आग्नावैष्णवकार्यापन्ना तद्धर्मैर्युज्यते यथा नीवाराः प्रोक्षणेन । सिद्धान्ते तु आग्नावैष्णवापूर्वप्रयुक्ता धर्माः, त्रैधातवीयायां च अपूर्वान्तरम् । न च अपूर्वान्तरं अपूर्वान्तरधर्मान् गृह्णाति । **अनुपपन्नमिदं प्रयोजनम् ।** ( कथं ) 'त्रैधातवीया दीक्षणीया भवति' इति सामानाधिकरण्यं ( अनयोः ) । तत्र यदि मुख्यवृत्ते द्वे अपि पदे गृह्येयातां, ( ततः ) सामानाधिकरण्यं नोपपद्येत । तस्मादेकमत्र गौणं पदम् । तत्र प्राथम्यादविरोधाच्च त्रैधातव्यापदं मुख्यं, दीक्षणीयापदं ( तु जघन्यत्वात् संजातविरोधं ) आत्मीयं क्रतूपकारं लक्षयति । तस्मिन् लक्षिते त्रैधातव्या विधीयते ( त्रैधातव्या दीक्षणीयाकार्यकारिणी भवति इति । ) सा च विधीयमाना तत्कार्यापन्नत्वात् तद्धर्मान् लभते । सिद्धान्तेऽपि यथा खलेवाली यूपकार्ये विधीयमाना तद्धर्मान् ( अञ्जनादीन् ) लभते । तस्मात् उभयोः ( पक्षयोः ) तुल्या धर्मप्राप्तिरिति । अथोच्येत 'त्रैधातव्या दीक्षणीया भवति' इत्यनेन ( वचनेन प्रसिद्धायाः ) त्रैधातव्यायाः यत् कार्यं, तत् निवार्य दीक्षणीयाकार्यं ( तस्याः ) विधीयते ( नात्रापूर्वा त्रैधातव्या विधीयते ) । तच्च ( दीक्षणीयाकार्यं ) आत्मीयैः ( यथासिद्धैरेव ) धर्मैः, अपूर्वं च ( आत्मीयेन उत्पत्त्यपूर्वेण त्रैधातव्या ) साधयिष्यति, न ( च ) दीक्षणीयाधर्मान् ग्रहीष्यति सिद्धान्तवादिनः । पूर्वपक्षेऽपि यदि दीक्षणीयाकार्ये यथासिद्धव त्रैधातव्या वर्तेत, तथा सति आत्मीयैरेव धर्मैः तत्कार्यं साधयिष्यति प्रसिद्धधर्मकत्वात् । अथ न प्रवर्तते, सुतरां आत्मीया एव धर्मास्तस्याः । अपिच परमापूर्वप्रयुक्तायामपि वाङ्नियमस्य प्रकृतौ आग्नावैष्णवो विशिष्टं द्वारमभूत्, तच्च ( द्वारं ) इह नास्ति । तस्मान्नास्ति पूर्वपक्षेऽपि वाङ्नियमः । ननु अनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति । उच्यते । सत्यं विशिष्टं द्वारं प्रोक्षणस्येति । इयांस्तु विशेषः, व्रीहयो दृष्टे नोपकुर्वन्ति, नीवाराश्च तत् ( कार्यं ) साधयन्तो दृश्यन्ते, तत्र तत्कार्यापत्त्या तद्धर्मप्राप्तिर्युक्ता । इह तु अदृष्टं द्वारं, तस्मिन् कार्ये त्रैधातव्या वर्तते इति नास्ति प्रमाणम् । अथवा दूरादेवेदं भ्रष्टं प्रयोजनम् ( इति पूर्वोक्तमेव स्पष्टीक्रियते । कथं ? ) त्रैधातव्या यादृशी उत्पन्ना, तादृश्येव ( अत्र ) चोद्यते, शब्देन ( हि ) सैव विपरिवर्तते । आख्याताभावात् कर्मान्तरमपि न ( भवति ) । तस्मात् यादृश्येव विज्ञाता, तादृश्यत्र ( कर्तव्या ) । यद्यपि च कर्मान्तरं ( स्यात् ), तथापि नाम्ना ( त्रैधातवीया- ) धर्मान् गृह्णीयात्, न चोदकेन ( दीक्षणीयाधर्मान् । तस्मात् पक्षद्वयेऽपि धर्मप्राप्त्यभावात् प्रयोजनान्तरं मृग्यमिति ) ।

**सोम—** अत्र भाष्यकारेण पूर्वपक्षे 'त्रैधातवीया दीक्षणीया' इत्यश्वमेधे आग्नावैष्णवलक्षणप्राकृतदीक्षणीयास्थानापन्नायां अयं वाङ्नियमः प्रवर्तते । सिद्धान्ते तु त्रैधातवीयायाः आग्नावैष्णवापूर्वसाधनत्वाभावात् तत्प्रयुक्तोऽयं न प्रवर्तते इति प्रयोजनमुक्तम् । तत्तु आश्वमेधिकत्रैधातवीयायां नामधेयेन काम्यत्रैधातवीयाधर्मस्य उपांशुत्वस्यैव प्राप्त्या दुर्बलेन चोदकेन स्वरविशेषप्राप्त्यसंभवात् अयुक्तम् । **न च** दुर्बलप्रमाणकस्यापि स्वरविशेषस्य प्रधानाङ्गतया प्रबलत्वात् नामधेयप्राप्तं उपांशुत्वं बाधित्वा स एव पूर्वपक्षे प्रवर्तते, **सिद्धान्ते तु**

उभयोरपि दीक्षणीयाऽर्थतया तुल्यत्वे नामधेयप्राबल्यमादाय उपांशुत्वमेव प्रवर्तते इति युक्तमेव प्रयोजनं इति **वाच्यम्** । वस्तुतः आश्वमेधिकत्रैधातवीयायाः काम्यत्रैधातवीयाऽपेक्षया प्रकरणान्तराम्नाने सत्यपि '**भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुते:**' इति न्यायेन (वा. पृ. ६१७– नामविलक्षणधातुश्रवणे हि तदर्थभेदो भवति । सत्रे तु यज्यश्रवणात् नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानात् तद्भावनामात्रभेदः । **सुधा.** पृ. ९५५ – विधिपदानपेक्षस्यापि नाम्नः विधिविषयभूतधात्वर्थोपस्थापनोपपत्तिसूचनार्थः मात्रशब्दः । इति ) कर्मान्तरत्वाभावेन यथासिद्धकाम्यत्रैधातवीयाया एव दीक्षणीयायाः कार्ये यजमानसंस्कारे विधानेन पूर्वपक्षेऽपि त्रैधातवीयायां उपांशुत्वस्यैव प्राप्तेः स्वरविशेषप्राप्त्यसंभवात् इति वार्तिककारेण दूषितम् ।

**भाट्ट**— यत्तु भाष्यकारेण अश्वमेधे 'त्रैधातवीया दीक्षणीया भवति' इति वचनेन दीक्षणीयाकार्ये यजमानसंस्कारे विहितायां त्रैधातवीयायां पूर्वपक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धत्रैधातवीयाया धर्मा एव इति प्रयोजनमुक्तम् । तन्न । पूर्वपक्षवत् सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात् । यदि तु स्थानापत्त्यतिदेशापेक्षया त्रिविधस्यातिदेशस्यापि बलवत्त्वस्य अष्टमे साधितत्वात् नामातिदेशेन प्रसिद्धत्रैधातवीयाधर्मा एव इत्याशङ्क्येत, तत् पूर्वपक्षेऽपि तुल्यम् । वस्तुतस्तु नेयं त्रैधातवीया प्रसिद्धत्रैधातवीयातः कर्मान्तरं , सत्यपि अनुपादेयगुणयोगे आख्यातसामानाधिकरण्याभावात् । अतः प्रसिद्धायाः सधर्मकायाः एव त्रैधातवीयायाः यजमानसंस्कारार्थत्वेन विधानात् धर्माकाङ्क्षाविरहेण क्व स्थानापत्त्यतिदेशप्रसक्तिः ।

* अश्वमेधे सवनीयाः पशवः त्रयः 'अश्वस्तूपरो गोमृग इति ते प्राजापत्याः' इति । तत्र अश्वस्य चतुस्त्रिंशत् वङ्क्रयः । इतरयोस्तु षड्विंशतिः षड्विंशतिः । **वि.** ९।४।२. * अश्वमेधे सौवर्णराजतौ महिमानौ नाम ग्रहौ । तयोः प्राकृतग्रहैः समुच्चयः । **भा.** १०।४।२।३–५. * **अश्वमेधज्ञानस्य** च संस्कारत्वात् न तावत् फलविधित्वावसरः । **वा.** १।२।१।४.

* **अश्ववालत्वादयो धर्माः** आतिथ्याबर्हिषः । **वि.** ४।२।१३.

* **अश्वसहस्रं** दक्षिणा पौण्डरीके ( एकादशरात्रे ) । **भा.** ३।४।१०।२८ पृ. ९५७. * '**अश्वसहस्रेण** अमुको राजा जितः' अत्र गौण्या लक्षणया वा अश्वसहचरितपुरुषैः इत्यर्थः । **वा.** १।४।१२।२३ पृ. ३५४. * अश्वसहस्रेण गवामयुतेन च एक एव ऋत्विक्परिक्रयः सर्वपौण्डरीकार्थः । **भा.** १०।६।१७।६२-६८. * 'अश्वसहस्रेण नगरं मुषितं' इति गम्यमानानामेव सादिनां मोषक्रियासंबन्धः । **वा.** ३।४।४।१३ पृ. ९४०.

⧗ **अश्वाभिधानीन्यायः** । यद्यपि गायत्र्यादिषु सामावापे विहितेऽपि न स्तोभान्तरे तदाकाङ्क्षाशान्तिः इति नात्र अश्वाभिधानीन्यायेन फलतः परिसंख्यात्वं तथापि । **भाट्ट.** १०।४।१२. * **अश्वाभिधानीमादत्ते** इति गर्दभाभिधानीं परिसंचष्टे । तत्र मन्त्रस्य अभिधान्याश्च यः संबन्धः, तदभिधानपरं वचनं 'इमामगृभ्णन् इति अश्वाभिधानीं' इति । न अनेन मन्त्रेण आदत्ते इति । लिङ्गेनैवावदाने प्राप्तत्वात् मन्त्रस्य परिसंख्या युक्ता । **भा.** ३।१।७।१४ पृ. ७०९-७१०, ७१३. * **अश्वाभिधानीवाक्यगत**परिसंख्याविचारः 'ग्रहन्यायः' इत्यत्र वार्तिके द्रष्टव्यः । अयमेव अश्वाभिधानीन्यायः स्यात् ? । **के.**

* '**अश्विनोस्त्वा** बाहुभ्यां सघ्यासं, नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषं,...मा मेऽवाङ् नाभिमति गाः ॥' अयं मन्त्रः क्रियाविधिः । एते हि ग्रहणावेक्षणसम्यग्जरणप्रकाशका मन्त्राः प्रकरणेन विनियुक्ताः, ग्रहणादीनां अनुष्ठानयोग्यानां स्वाङ्गत्वसिद्ध्यै विधिं कल्पयन्ति इति तृतीये 'लिङ्गसमाख्याभ्यां भक्षार्थताऽनुवाकस्य' इत्यधिकरणे ( ३।२।९ ) उक्तम् । **बाल.** पृ. ६४.

* '**अष्टकाः** कर्तव्याः' इति स्मृतिर्धर्मे प्रमाणम् । **भा.** १।३।१।१--२. * अष्टकाः दर्विहोमो लौकिकः । **वि.** ८।४।१. * **अष्टकायां** मन्त्रः 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥ अष्टकायै सुराधसे स्वाहा ॥' इति । **भा.** ६।५।९।३५, * **अष्टकाचरा** लौकिकी इति-

कर्तव्यता । ७।४।२।२-१२, * **अष्टकादीनि** स्मार्तानि कर्माणि लौकिकानि । ८।४।२।२-३, * **अष्टकालिङ्गाश्च** मन्त्रा वेदे दृश्यन्ते 'यां जनाः प्रतिनन्दन्ति' इत्येवमादयः । १।३।१।२ पृ. १६५, * अष्टमीषु अन्यासु **अष्टकाशब्दः** भाक्तः । एषा हि मुख्या, या माघ्यां वृत्ता । गौणमुख्ययोश्च मुख्ये संप्रत्ययः । ६।५।९।३४.

* **अष्टकाश्राद्धानि** स्मार्तानि । सप्तसु पाकसंस्थासु इदमेकं कर्म । तत्रापि पूर्वेद्युश्चत्वारि, अष्टकाः चतस्रः, अन्वष्टकाः चतस्रः इति द्वादश भवन्ति । मार्गशीर्षपौषमाघफाल्गुनमासानां कृष्णपक्षेषु सप्तम्यष्टमीनवमीषु एतानि क्रमेण भवन्ति । तत्र अष्टकासु गौरालभ्या भवति । के.

* **अष्टत्वादयः अर्थवादाः**, न तु गुणविधयः जातेष्टिवाक्ये 'यदष्टाकपालो भवति' इत्यादौ । भा. १।४।११।१७-२२.

* ( अष्टमशब्दः स्थूलवर्णक्रममाश्रित्य अत्रैव निवेश्यते । ) **अष्टमेऽध्याये** 'यस्य लिङ्गमर्थसंयोगात्' ( ८।१।२ ) इत्येतत्सूत्रप्रपञ्चार्थेषु अधिकरणेषु नानाविधानि प्रकृतिलिङ्गानि उक्तानि । **इष्टिषु** तद्धितेन देवतानिर्देशः, एकद्विदेवतत्वं औषधद्रव्यकत्वं, आज्यद्रव्यकत्वं, पयोद्रव्यकत्वं, दधिद्रव्यकत्वं, उज्ज्वलविशदद्रव्यकत्वं द्रवसमानवर्णद्रव्यकत्वं, पशुप्रभवगतिमद्-द्रव्यकत्वं, निर्वपतिवत्त्वं इत्यादीनि । **पशुषु** आलभतिवत्त्वं, प्राणिद्रव्यकत्वं, सुत्याकालत्वं, पशुगणत्वं इत्यादीनि । **सोमेषु** अव्यक्तचोदितत्वं, अहर्गणत्वं, अहीनत्वं, सत्रत्वं, संवत्सरसत्रत्वं, निकायित्वं इत्यादीनि । तत्र 'यस्य लिङ्गमर्थसंयोगात्' इति सामान्यसूत्रेणैव विशेषविवरणार्थैः सूत्रान्तरैः अनिबद्धान्यपि कानि चित् अन्यान्यपि चोदनालिङ्गानि सामान्यतः संगृहीतानि इत्यन्यथाऽनुपपत्त्या अवश्यं कल्पनीयम् । यथा 'तेषामृग् यत्रार्थवशेन पादव्यवस्था' ( २।१।३५ ) इत्यत्र अर्थवशेन पादव्यवस्था हेत्वन्तरस्यापि वृत्तादिवशस्य उपलक्षणार्थमित्युक्तम् ।

कानि तानि अन्यानि चोदनालिङ्गानि इति चेत् उच्यते । एकं तावत् चोदनालिङ्गं द्रव्यदेवतासंबन्धप्रतिपादकतद्धितान्तपदाक्षरसाम्यम् । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुः' इति । अत्र एकादशकपालत्वं 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इति प्राकृते ऐन्द्राग्ने, 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति विहिते प्राकृते अग्नीषोमीये च अविशिष्टं, एवं द्विदेवतत्वं निर्वपतिवत्त्वं च । यद्यपि द्वितीयं प्राकृताग्नीषोमीयप्रधानचोदनायां नास्ति, तथापि अङ्गविधिना निर्वापवत्त्वमस्त्येव, अतस्तत्र द्रव्यदेवतासंबन्धप्रतिपादकतद्धितान्तपदे अग्निमुखत्वसाम्यमेव चोदनालिङ्गं मीमांसकानामपि अभिप्रेतं लभ्यते । अन्यथा अष्टमे एव तृतीयपादाद्ये 'हविर्गणे परमुत्तरस्य' ( ८।३।१ ) इत्यधिकरणे आग्नावैष्णवे अग्नीषोमीयस्य विध्यन्तः इति साध्ये देवतासामान्यात् इति हेतुरसंगतः स्यात्, द्विदेवत्यत्वस्य ऐन्द्राग्नेऽपि तुल्यत्वात् । एवमग्निसमवायमात्रस्यापि । तद्धितमात्रं तु आग्नेयेऽपि तुल्यम् । तदवश्यं पञ्चाक्षरतद्धितान्तपदवत्त्वं अग्निमुखतद्धितान्तपदवत्त्वं वा अवश्यं किंचित् चोदनालिङ्गान्तरं इह सिद्धान्तहेतुतया विवक्षितं गम्यते । एवं आरम्भणीयायां 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति, 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इति च । 'द्यावापृथिव्यमेककपालं' इत्यत्र तु पञ्चाक्षरतद्धितादेव चोदनालिङ्गात् अग्नीषोमीयविकृतित्वम् । आश्विनद्विकपाले तु द्विदेवतात्वे सति त्र्यक्षरतद्धितवत्त्वात् ऐन्द्राग्नविकृतित्वम् । एवं 'मारुतं सप्तकपालं, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं' इत्यत्रापि सान्तपनरूपविशेषणाधिक्येऽपि प्रधानभूतदेवताविधिः त्र्यक्षर एव इति त्र्यक्षरदेवताविधिसादृश्यात् अनेकदेवतत्वाच्च ऐन्द्राग्नविकृतित्वमेव । 'सौमेन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इत्यत्र तु त्र्यक्षरत्वे सत्यपि अर्थवाचिशब्दगतसंख्यायाः प्रथमोपस्थिताया अपि बहिरङ्गत्वात् अन्तरङ्गसोमरूपार्थसमवायेन इन्द्रसमवायसाम्येऽपि च सोमप्राथम्यात् तदुपस्थितः अग्नीषोमीयविध्यन्त एव । एवं इन्द्रासोमीये इन्द्रमुख्यत्वात् ऐन्द्राग्नविकृतित्वम् । सोमापौष्ण-सोमारौद्रादौ तु सोमसमवायमात्रेण अग्नीषोमीयविकृतित्वम् । शुनासीरीये ऐन्द्रा-

वैष्णवं इत्यत्र सत्यपि अग्नीषोमीयचोदनालिङ्गे पञ्चाक्षरत्वे अक्षरसंख्याया बहिरङ्गत्वात् अन्तरङ्गेन्द्रसमवायेन ऐन्द्राग्न-विकृतित्वम् । एवं ऐन्द्रापौष्ण-ऐन्द्राबार्हस्पत्यादौ । एवं ऐन्द्रः पुरोडाशः, सौम्यश्चरुः इत्यत्र इन्द्रसमवायेन ऐन्द्राग्न-विकृतिः पूर्वः, उत्तरस्तु सोमसमवायेन अग्नीषोमीय-विकृतिः । 'वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान्' इत्यादौ तु चतुरक्षरे न किंचित् त्र्यक्षरपञ्चाक्षरत्वादि नियामकमस्ति इति अनियम एव ऐन्द्राग्नाग्नी-षोमीयविकृतित्वे ।

तदिदमुक्तम**आपस्तम्बसूत्रे** 'एकदेवता आग्नेयविकाराः, द्विदेवता अग्नीषोमीयविकाराः, बहुदेवताश्चैन्द्राग्न-विकारा वा' इति । (आप. ३०।३) । अत्र ऐन्द्राग्नविकारा वा इति द्विदेवतेष्वपि संबन्धनीयम् । तेन उभयत्र विकल्पः । स च व्यवस्थितः । अस्मदुक्तोदाहर-णेषु पूर्वोक्तरीत्या क्व चित् अव्यवस्थितविकल्पोऽपि इति । **कपर्दी** तु 'यासां विकृतीनां द्विबहुदेवतापदेषु चत्वार्य-क्षराणि अधिकानि वा, ता अग्नीषोमीयविकाराः । यासां तु त्रीणि ऊनानि वा, ता ऐन्द्राग्नविकाराः अन्यत्र प्रकृति-देवताभ्यः' इत्याह । तत्र त्र्यक्षरेण सामीप्यात् अक्षरोप-स्थितावपि षडक्षरादिभिश्च सामीप्यात् पञ्चाक्षरोपस्थितावपि चतुरक्षरे उभयसाम्यात् कथं पञ्चाक्षरस्यैवोपस्थितिः इति चिन्त्यम् । यस्य तु कर्मणः क्व चित् उत्पत्तिचोदनायां केन चित् प्रकृतिलिङ्गेन किंचिद्विकृतित्वमवधारितं, तस्य कर्मणः अन्यत्रातिदिष्टस्य ऊहेन अन्यदेवतत्वेऽपि न तद्धेतुकं कर्मान्तरविकृतित्वं भवति, पूर्वावधारितकर्मवि-कृतित्वं वा अपैति, अवधारिताङ्गविशिष्टस्यैव अति-देशात् । यथा अग्नीषोमीयपशुपुरोडाशस्य 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनु निर्वपति' इति अग्नीषोमीयपशुप्रकरणे उत्पन्नस्य अग्नीषोमीयं इति प्रकृतिलिङ्गसंयोगेन दार्शपौर्णमासिकाग्नीषोमीयपुरोडाश-विकृतित्वेन अवधारितस्य आग्नेये सवनीये, ऐन्द्राग्ने च निरूढपशौ अतिदिष्टस्य ऊहेन आग्नेयत्वे ऐन्द्राग्नत्वे च सत्यपि तत्र प्रत्यक्षचोदनाऽभावेन चोदनालिङ्गासंभवात् प्राकृतस्यैव पशुपुरोडाशयागस्य प्रकृतौ अग्नीषोमीयमिति चोदनालिङ्गेन अवधारितं दार्शपौर्णमासिकाग्नीषोमीय-पुरोडाशविकृतित्वं न बाध्यते, इति तदीयमेव अनुमन्त्र-णादि भवति इति, **धूर्तस्वाम्यादेः** 'सवनीये आग्नेयस्य पशुपुरोडाशस्य आग्नेयविकृतित्वं, निरूढे च ऐन्द्राग्नस्य पशुपुरोडाशस्य ऐन्द्राग्नविकृतित्वं' इत्यभिधानं उपेक्ष्यमेव । यत्तु तद्गमक**मापस्तम्बसूत्रं**, तदपि 'अङ्गं वा समभि-हारात्' इतिवत् श्रुतितदनुसारिन्यायविरोधात् बाध्यम् । अत एव **कातीया** नैतदनुमन्यन्ते इति । **बाल.** ११९-१२१.

* **अष्टमे वत्सरे** उपनीतो द्वादश वर्षाणि वेदम-धीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रः अग्निमाद-धीत । **वि.** ६।७।१३. * **अष्टमादीनां** पञ्चानामध्यायानां **विषयसंगती** । (सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति प्रतिपाद्यते) अष्टमेन विशेषः । नवमेन विशेषातिदेशः प्रसङ्गेनारभ्यते किं मन्त्रोऽग्निस्वरूपप्रकाश-नार्थमुच्चार्यते, उताग्निस्वरूपमविवक्षितं, तस्मादित्थं प्रयो-क्तव्यः इत्यतिदेशप्रकार एव चिन्त्यते । स दशमव्यापार-मनुमन्यमान एव आत्मानं लभते । दशमे बाधाभ्युच्च-यानुनिष्पादिनी शेषेयत्ताचिन्ता । इयत्ताप्रसङ्गेन चैका-दशः प्रयोगेयत्ताविचारार्थमारभ्यते । तन्त्रावापेन ईदृश्या-मियत्तायां प्राप्तायां तदपवादत्वेन द्वादश आरभ्यते । अन्यादृशी इयत्ता प्रसङ्गेन भवति । ... तद्बलेन (सामान्यातिदेशबलेन) विशेषातिदेश-ऊह-बाधाना-मारम्भः । पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावाप-प्रसङ्गाः प्रस्तूयन्ते । **टुप्.** ७।१।१।१ पृ. १५२३-२४.

* **अष्टौ हवींषि** चातुर्मास्येषु वैश्वदेवपर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादश-कपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालं' इति । **वि.** १।४।११.

* '**अष्टावध्वर्युरुत्तरे विहारे** हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इदं वचनं वरुण-प्रघासेषु । तत्र विहारद्वये भेदेनाङ्गानुष्ठानम् । **वि.** ११।२।९. विहारद्वये आहवनीयद्वयं श्रुतम् । तत्र नव हवींषि विहितानि । **भाट्ट.** ११।२।८.

* 'अष्टावुपभृति' आज्यानि गृह्णाति । तत्र एकं चतुष्टयं प्रयाजार्थं, द्वितीयं तु अनुयाजार्थम् । **वि.** ४।१। १५, * 'अष्टावुपभृति' इति अष्टसंख्याकमेकं ग्रहणं न विधीयते, किंतु चतुःसंख्याकग्रहणयोर्द्वयम् । ४।१।१७. * 'अष्टावुपभृति' इत्येतद्वाक्यावगम्यचतुष्कद्वयसाहित्यबलकल्प्यैककालत्वस्यापि बाधः पूर्वपक्षे । **भाट्ट.** ५।२। ८, * 'अष्टावुपभृति गृह्णाति' इति असंयुक्तानि आज्यानि प्राकरणिकद्रव्यापेक्षकार्यार्थत्वेन विनियुज्यन्ते 'अष्टावुपभृति गृह्णाति अनूयाजेभ्यस्तत्' इति वचनेन तत्कार्यार्थत्वेन विनियोगात् औपभृतस्य अनूयाजमात्रार्थत्वम् । यत्तु 'अष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तत्' इति वचनं, तत्र प्रयाजत्वानूयाजत्वयोः उद्देश्यताऽवच्छेदकत्वे वाक्यभेदापत्तेः अनूयाजानां प्रयाजोत्तरत्वानुवादमात्रम् । **इति प्राप्ते,** उभयथाऽप्यनुवादत्वावश्यकत्वे समानयनादिविध्यदृष्टार्थत्वाद्यनुरोधेन शुद्धानूयाजवचनस्यैवानुवादत्वम् । अतश्च औपभृतं प्रयाजानूयाजार्थमिति सिद्धम् । ४।१।१६. * 'अष्टावुपभृति गृह्णाति' इत्यत्र चतुष्टुवद्वयकल्पनं अर्थवादप्रामाण्याधीनम् । **सु.** पृ. ६६. * 'अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' इतिदर्शपूर्णमासयोः औपभृतं विहितम् । **भाट्ट.** ४।१।१५.

* **अष्टरात्रः** अहीनः । 'अथैतस्याष्टरात्रस्य विश्वजिदभिजितौ एकाहौ अभितः, उभयतोज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत' । अत्र स्वतन्त्रस्य एकाहस्य विश्वजितो धर्माः प्रथमेऽहनि विश्वजिति अतिदिश्यन्ते । तस्मात् सर्वस्वं देयं इति **भाष्यकारस्य** मतम् । **वार्तिककारस्तु** द्वादशशतं इत्येव सिद्धान्तितवान् । विश्वजिद्व्यतिरिक्तेषु सप्तसु अहःसु चोदकप्राप्ता सर्वस्वदक्षिणा बाधनीया, अहर्गणस्य एकैव दक्षिणा इति दशमे वक्ष्यमाणत्वात् । **सूत्रकारस्तु** नामातिदेशस्य प्राबल्यप्राप्तिमात्रं व्युत्पादितवान् इति द्रष्टव्यम् । **वि.** ६।७।८.

* **अष्टरात्रस्य** अहीनस्य विश्वजित् प्रथममहः ततोऽभिप्लवः षडहः, ( ज्योतिर्गौरायुः आयुर्गौर्ज्योतिः इति । सोम. ) ततोऽभिजित् । **शा.** ६।७।८. * **अष्टरात्रे** अग्निचयनं कर्तुं शक्यते । **भा.** १०।५।२३।७८, १०।८। ११।२३. * अष्टरात्रे 'पृष्ठ्यः षडहः द्वौ स्वरसामानौ' इति विहिते स्वरसामानौ अनन्यगतिकलिङ्गवशात् गवामयनगतस्वरसाम्नोः विकारौ भवतः । **वि.** ७।३।१०, * अष्टरात्रे विश्वजित् प्रथममहः । तस्मिन् प्रकृतिभूतात् एकाहात् विश्वजितः वस्त्रत्वक् प्राप्ता । ततः अभिप्लवः षडहः । तत्र प्रकृतेर्ज्योतिष्टोमात् अहतं वासः प्राप्तम् । ततः अभिजित् अष्टममहः । तत्रापि चोदकात् वासः प्राप्नोति । तत्र कौपीनार्थं वासो योग्यं, प्रावरणे च त्वक् योग्या इति उभयोः समुच्चयः, न प्रसङ्गः । १२।३।१.

**अष्टरात्रगतेऽपि विश्वजिति सर्वस्वदानम् ॥**
**अहर्गणे च तद्धर्मा स्यात्, सर्वेषामविशेषात् ।** ६।७।८।१४ ॥

**भाष्यं**— अस्ति अहर्गणोऽष्टरात्रः 'अथैतस्याष्टरात्रस्य विश्वजिदभिजितावेकाहावभितः, उभयतोज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत' इति । तत्र संदेहः किं अहर्गणस्थस्यापि सर्वस्वमेव दक्षिणा स्यात्, आहोस्वित् द्वादशशतमिति । किं प्राप्तं ? सर्वस्वम् । कुतः ? सर्वेषां विश्वजितां अविशेषात् । य एव प्रकृतौ विश्वजितो धर्मः, स एव चास्य चोदकेन भविष्यति । तस्मात् सर्वस्वं देयमिति ।

**टुप्**— अस्मिन्नधिकरणे ( भाष्योक्त- ) सिद्धान्तदूषणम् ( उच्यते ) । नहि अहर्गणगतः ( विश्वजित्, एकाहकाण्डपठितात्- ) विश्वजितः चोदकेन नामधेयेन वा धर्मान् गृह्णाति । यत् कारणं, प्रयोगाङ्गं दक्षिणा कर्त्रानतिद्वारेण । चिकीर्षितार्थे च कर्तार उपादीयन्ते । यच्च फलवत्, तच्चिकीर्षितम् । अहर्गणः फलवान्, न केवलो विश्वजित् । तस्मान्न पृथक्त्वेन समुदायिभिः दक्षिणा अपेक्ष्यन्ते । प्रत्यक्षवचनविहिता द्वादशाहे बहवः कल्पाः सहस्रं प्राक् चतूरात्रेभ्यः इत्येवमादयः । द्वादशाहप्रकृतित्वात् तद्दक्षिणा प्राप्नोति ।

**रत्न**—गणार्थत्वात् दक्षिणायाः, गणस्य च द्वादशाहप्रकृतित्वेन तद्दक्षिणा प्राप्नोति । तदन्तःपातिनो विश्वजितोऽपि सैव युक्ता इति पूर्वः पक्षः । प्रतिकर्मावसायित्वात् चोदकानां, विश्वजिति च नाम्ना सर्वस्वदाने

प्राप्ते मुख्यबलीयस्त्वे सति सर्वस्वदक्षिणैव देया इति सिद्धान्तः ।

**द्वादशशतं वा, प्रकृतिवत् । १५ ॥**

**भाष्यं**——द्वादशशतं वा देयमिति । प्रकृतिवत् कर्तव्यम् । ज्योतिष्टोमश्च प्रकृतिः । तत्र धर्मा विहिताः विश्वजिति कृत्स्नाः प्रतीयन्ते । तस्मात् द्वादशशतमत्र देयमिति ।

**अतद्गुणत्वात्तु नैवं स्यात् । १६ ॥**

**भाष्यं**—— तुशब्दः पक्षं व्यावर्तयति । नैवं भवितुमर्हति । कुतः ? नैष यतो विश्वजितो गुणो द्वादशशतम् । नामधेयेन हि अत्र धर्मग्रहणम् । तस्मात् विश्वजितो ग्रहीष्यति , न ज्योतिष्टोमात् इति ।

**लिङ्गदर्शनाच्च । १७ ॥**

**भाष्यं**— लिङ्गं खल्वपि दर्शयति । किं लिङ्गं भवतीति ? एवमाह , ' हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददाति ' इति नियतं सर्वस्वदानं दर्शयति अहर्गणे ।

**शा**— **' गणेषु द्वादशाहस्य विध्यन्तः स्थापयिष्यते । द्वादशं च शतं ज्योतिष्टोमात् तत्रातिदिश्यते ॥ विश्वजित्यपि सैव स्याद्दक्षिणा गणवर्तिनी । नामातिदेशप्राबल्यात् सर्वस्वं त्वेव दक्षिणा ॥'**
इदं च प्राप्तिमात्रपरमधिकरणम् । प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सप्तानामह्नां द्वादशशतदक्षिणानां भूयसां साधर्म्यात् द्वादशशतमेव देयं, एकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा न पृथक्पृथक् प्रदातव्या । तस्मात् भूयोऽनुग्रहाय द्वादशशतमेव देयम् ।

**सोम**—— एकाहविश्वजिति सर्वस्वदाने अहर्गणान्तर्गतेऽपि तथा इति प्रत्यवस्थानात् **संगतिः** । वस्तुतो नामप्राबल्यात् सर्वस्वप्राप्तिरस्ति इत्येवं प्रतिपादनमात्रे तात्पर्यम् । **सूत्रार्थस्तु** अहर्गणे विद्यमानोऽपि विश्वजित् सर्ववेदसधर्मयुक्तः सर्वेषां विश्वजितामविशेषात् इति ।

**वि**— ' विश्वजित्यष्टसत्रादौ किं शतं द्वादशाधिकम् । सर्वं वा , ऽऽद्यश्चोदकोक्तेः , रन्त्यो नामातिदेशतः ॥ '
' एतद्भाष्ये वार्तिके तु सप्ताहानुजिघृक्षया । आद्यः सिद्धान्तितः प्राप्तिमात्रत्वेनेदमीरितम् ॥ '

**भाट्ट**— अस्ति अष्टरात्रः अहीनः । तस्य विश्वजित् प्रथममहः, ततोऽभिप्लवः षडहः, ततोऽभिजित् । ' पशुकामो ह्येतेन यजेत ' इति श्रुतेः । तत्र विश्वजिति प्रकरणान्तराधिकरणोक्तन्यायेन ( २।३।११ ) कर्मान्तरे नामातिदेशेन एकाहकाण्डपठितविश्वजितो धर्मः सर्वस्वं , अन्येषु तु गणत्वात् द्वादशाहतो ज्यौतिष्टोमिकी दक्षिणा । द्वादशाहेऽपि च प्रतिसुत्यं भेदेनातिदेशेऽपि प्रयोगैकत्वेन कर्त्रैकत्वस्य दशमे वक्ष्यमाणत्वात् । तदानत्यर्थायाः दक्षिणाया अपि तन्त्रेण आदावन्ते वा देयत्वप्रसक्तौ ' अन्वहं द्वादशशतं ददाति ' इत्यनेन आवृत्तिफलकः अन्वहकालो विधीयते । द्वादशशतस्यापि विधाने वाक्यभेदापत्तेः । प्राकृतदक्षिणामात्रोपलक्षणं तत् । तेन या दक्षिणा तन्त्रेण देयत्वेन प्रसक्ता, तां प्रत्यहं ददाति इति तद्वाक्यार्थः । तदिह अष्टरात्रे नामातिदेशप्राथम्याभ्यां विश्वजिद्धर्मानुग्रहप्राप्तावपि भूयोऽनुग्रहस्य न्याय्यत्वात् द्वादशशतस्यैव तन्त्रेण उपकारकत्वप्रसक्तेः तस्यैव अन्वहं इत्यनेन आवृत्तिकरणात् द्वादशशतमेव प्रत्यहं देयं इति **वार्तिककाराशयः** । **भाष्यकाराशयस्तु** अष्टरात्रप्रकरणस्थेनैव ' हीयते वा एष पशुभिर्यो विश्वजिति न सर्वस्वं ददाति ' इति अनन्यथासिद्धलिङ्गोपष्टब्धप्राथम्यादिना तत्कल्प्यविधिनैव वा सर्वस्वविधानात् आद्ये एव सर्वेषु वा अहःसु सर्वस्वं देयमिति ।

**मण्डन**— ' देयं सर्वगणेऽपि तत् । ' सर्वगणे अहर्गणे । तत् सर्वस्वम् ।

**शंकर**— ' तच्च विश्वजिदन्तरे ( भाष्यमतेन ) ।' ९. ' भूयस्त्वात् तच्च बाध्येत ( वार्तिकमतेन ) ।' १०.

**अष्टरात्रगते विश्वजिति वत्सत्वगहतवाससोः समुच्चयः ॥**

**विश्वजिति वत्सत्वङ् नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् । १२।३।१।१ ॥**

**भाष्यं**— अस्ति अष्टरात्रोऽहीनः ' तस्य विश्वजिदभिजितौ अग्निष्टोमावभितः, उभयतोज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेत ' इति । विश्वजिति एकाहे वत्सत्वक् परिधानार्थमाम्नाता ' अवभृथादुदेत्य वत्सत्वचं परिधत्ते ' इति । ज्योतिष्टोमे अहतं वासः ।

अष्टरात्रे उभयं प्राप्यते । तयोः परिधानयोरेकार्थत्वात् **विकल्पे प्राप्ते, उच्यते** । वत्सत्वक् स्यात् न विकल्पः । नामधेयेन वत्सत्वक् प्राप्यते, चोदकेन अहतं, चोदकाच्च नामधेयशब्दो बलवत्तर इत्युक्तं 'न वा क्रत्वभिधाना-दधिकानामशब्दत्वं' इति (७।४।२।१५) । यदि नामधेयतः प्राप्तिर्न स्यात्, ततो भूयस्त्वेन ज्योतिष्टोम-प्रकृतीनां अह्नां अहतं स्यात्, अस्ति तु असौ । तस्मात् नाहतं भवति । ननु 'अभितोज्योतिः' इति ज्यौतिष्टोमिकधर्मग्राहीणि एतानि नामधेयानि सन्ति । तथापि मुख्यत्वात् विश्वजित एव बलवत्त्वम् ।

**अविरोधो वोपरिवासो हि वत्सत्वक् । २ ॥**

**भाष्यं**— न वा नियमो वत्सत्वगेवेति । किं तर्हि समुच्चयः । समुच्चये सर्वाङ्गोपसंहारी प्रयोगवचनोऽनु-गृह्यते । ननु नामधेयस्य बलवत्त्वात् अहतं बाध्यते । विरोधे सति बाध्येत । अविरोधश्चानयोः । कथं ? उपरि-वाससः कार्ये वत्सत्वक् भविष्यति । वासोद्वयं पुरुषस्य आचारतः प्राप्यते । ननु उपरिवाससि परिधत्ते इति न भवति । नैतदेवम् । उपरिवासस्यपि भवति । यथा कम्बलं परिधत्ते, रौरवं परिधत्ते इति । तस्मात् समुच्चयः ।

**वि**— 'त्वग्वाससोरष्टरात्रे विकल्पो नियमोऽथवा । समुच्चयो वा, नामातिदेशसाम्याद् विकल्प्यते ॥ मुख्य-त्वेन त्वगेव स्याद् वास एव बहुत्वतः ।, योग्यत्वेन व्यवस्थायामुभयोः स्यात् समुच्चयः ॥' तत्र द्वयोर्नामाति-देशयोः समबलत्वात् अष्टसु अहःसु त्वक् वासो वा इच्छया विकल्प्यते इति **आद्यः पक्षः** । विकल्पस्य अष्टदोषत्वान्नियमः इति **द्वितीयः पक्षः** । तत्रापि विश्व-जितः प्राथम्येन प्रबलतया त्वगेव **इत्यपरः पक्षः** । इतरेषामह्नां बहुत्वेन प्रबलतया वास एव **इत्यपरः पक्षः** । कौपीनत्वे वासो योग्यं, त्वक् धारणे योग्या । तस्मात् सर्वानुग्राहकेण समुच्चयेन अत्र प्रसङ्गः अपोद्यते इति **सिद्धान्तः** ।

**भाट्ट**— अष्टरात्ररूपे अहीने विश्वजित् प्रथममहः ततोऽभिप्लवः षडहः, ततोऽभिजित् । तत्र विश्वजिति एकाहकाण्डपठितविश्वजितः नामातिदेशः । ततश्च 'अव-भृथादुदेत्य वत्सत्वचं परिधत्ते' इति विहिता वत्सत्वक् विश्वजिति प्राप्यते । इतरेषु तु चोदनालिङ्गातिदेशात् अहतं वासः । तत्र यद्यपि नामातिदेशप्रापितवत्सत्वचः एव प्राबल्यात् तदेव च अन्याहःसु प्रसज्ज्येत, तथापि इत-रेषामह्नां भूयस्त्वात् प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य ज्यायस्त्वन्यायेन अहतस्यैव प्राबल्यावगतेः तेनैव विश्व-जिति एकस्मिन् प्रसङ्गसिद्धिः । नहि अत्र तार्प्यादौ 'वासांसि विस्रंसयति' इतिवत् समुच्चयज्ञापकमस्ति, येन दशमाधिकरणपौनरुक्त्यं शङ्क्येत । **न च** कौपी-नाच्छादने तार्प्यादिवदेव वत्सत्वचः अयोग्यत्वात् उपरिधारणे एव वत्सत्वचः विधेयत्वप्रतीतेः अत्रापि अह-तेन समुच्चयः **शङ्क्यः**, एकस्या वत्सत्वचः अयोग्यत्वे-ऽपि अनेकासां संधानेन कौपीनाच्छादनेऽपि कच्छादि-दानसंभवेन योग्यत्वोपपत्तेः । एकवचनस्य पाशाधि-करणन्यायेन (९।३।४ ऊहः, ९।३।५ विकल्पः) बहुत्वलक्षणयाऽपि उपपत्तौ प्रातिपदिकोपदेशस्य उपरि-धारणमात्रविषयत्वसंकोचे प्रमाणाभावात् । तार्प्यादौ तु ज्ञापकबलेन संकोचाङ्गीकारात् नैकवचने लक्षणा इति विशेषः । **इति प्राप्ते**, उपरिधारणे सहस्रशः 'परिदधाति' इति प्रयोगात्, तत्र एकस्या एव वत्सत्वचः विधानसंभवे मेष्यधिकरणन्यायेन (९।२।१६) एकवचनलक्षणाया अन्याय्यत्वात्, संधानेऽपि च कौपीनाच्छादनस्य तथा कर्तुमशक्यत्वात्, उपरिधारणे एव वत्सत्वचो विधानम् । तत्रैव च तेन स्मृतिप्राप्ताहतनिवृत्तिः । अतश्च एकाह-काण्डपठितविश्वजित्येव कौपीनाच्छादने अहतस्य सत्त्वात् अष्टरात्रविश्वजित्यपि अहतनिवृत्त्यभावेन वत्सत्वचः समु-च्चयप्रतीतेः, न वत्सत्वचा इतरेषु प्रसङ्गः, न वा अहतेन विश्वजिति वत्सत्वचः प्रसङ्गः । **न च** एवमपि भूयोऽनु-ग्रहानुरोधेन उपरिधारणे एव अहतेन वत्सत्वचो निवृत्तेः, कथं समुच्चय इति **वाच्यम्** । उपरिधारणे साधनानेकत्वेऽपि बाधकाभावेन तत्तत्क्रत्वनुरोधेन अहत-वत्सत्वचोः समुच्चयसंभवात् ।

**मण्डन**— 'धार्या वत्सत्वक् पुरोक्ताहतं च ।'

**शंकर**— 'वत्सत्वचाऽहताबाधः ।'

* अष्टरात्रगतप्रथमाहस्य विश्वजितः एकाहकाण्ड-पठितो विश्वजित् प्रकृतिः । **वि. १२।३।१.**

* ‘**अष्टवर्षं ब्राह्मणमुपनयीत**’ इत्यादौ अष्टवर्षत्वादेर्विवक्षा इति कौस्तुभे उपपादितम् । **भाट्ट. ३।१।७.**

* **अष्टाकपालः** । तत्रेत्यनुवर्तमाने ‘संस्कृतं भक्षाः’ ( पा० ४।२।१६ ) इत्यनेन अष्टसु कपालेषु संस्कृतं इत्यस्मिन्नर्थे संख्यापूर्वसमासत्वेन द्विगुसंज्ञा दृष्टा । कपालप्रातिपदिकात् विहितस्य अण्प्रत्ययस्य ‘द्विगोर्लुगनपत्ये’ ( पा० ४।१।८८ ) इति द्विगुपरतद्धितलुक्स्मरणेन लोपात् अष्टाकपालशब्दसिद्धिः । ... ‘तद्धितार्थोत्तरपदसमाहारे च’ ( पा० २।१।५१ ) इति तद्धितार्थे विषयभूते दिक्संख्ययोः सामानाधिकरण्यसमासस्मृतेः संस्कारकत्वस्य उपाधित्वावसायः । **सु. पृ. ४८२.** * अष्टाकपालः प्रातःसवने सवनीयपुरोडाशः । **भा. १०।५।२६।८८.** * ‘अष्टाकपालः प्रातःसवनीयः, एकादशकपालो माध्यंदिनीयः, द्वादशकपालस्तार्तीयसवनिकः’ इत्यत्र अष्टत्वादिभिस्तिसृभिः संख्याभिः गायत्र्यादिच्छन्दांसि तत्तदक्षरस्मृतिद्वारेण उपस्थाप्यन्ते छन्दोमेषु । **वि. १०।५।२६.** * ‘अष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति’ इत्याद्यर्थवादेन सवनीययागाङ्गभूतः प्रातःसवनिकोऽष्टाकपालः अष्टत्वसंख्यावत्त्वात् संस्तुतः । **भाट्ट. १०।५।२६.** * ‘अष्टनः कपाले हविष्युपसंख्यानं’ ( पा० ६।३।४६ सूत्रे वार्तिकम् ) इति हविषि वाच्ये अष्टन आत्वविधानेन **अष्टाकपालस्य** हविष्ट्वे ‘द्विर्हविषोऽवद्यति’ इति द्व्यवदाने गृहीते तत्संस्कारकोपस्तरणाभिघारणाभ्यां चतुरवत्तत्वे सति ‘चतुरवत्तं जुहोति’ इति वाक्यावगतहोमरूपो यागो बोध्यः । **सोम. १।४।७.** * **अष्टाकपालादयः** वैश्वानरेष्टौ द्वादशकपालविधेरर्थवादः । **वि. १।४।१२.** * **अष्टाकपालादिशब्दानां** संस्कृततद्धितान्तत्वात् ‘ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्’ इति आग्नेयवाक्यशेषाच्च अष्टाकपालशब्दस्य पुरोडाशविषयत्वावगमात् विकारद्रव्यप्रतीतेः प्रकृत्यपेक्षायां युक्तः प्रकृतित्वेन व्रीहिविधिः । **सु. पृ. ७१४.**

* ‘**अष्टाक्षरेण** प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोः’ इति वाक्येन तिसृषु ऋक्षु प्रस्तोत्रा गातव्यो भागो निरूप्यते । तदिदं ‘साम तृचे गेयं’ इत्यत्र लिङ्गम् । **वि. १०।६।१.**

* ‘**अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं**’ इति स्मृतिः धर्मे प्रमाणं न वेति संदेहे ‘जातपुत्रः कृष्णकेशोऽग्नीनादधीत’ इति श्रुत्या विरुद्धत्वात् न प्रमाणं इति सिद्धान्तः । **भा. १।३।२।३–४.**

* **अष्टादशमन्त्रगतः अग्निः** अग्निचयने नित्यः । साहस्रं द्विषाहस्रं इत्यादि तु नैमित्तिकमेव । **भा. ४।३।२।४.**

* **अष्टाध्यायी** पाणिनेः । ‘एकैकस्मिन् पदे प्रायेण अष्टाध्यायी व्याप्रियते’ । **वा. १।४।४।१३ पृ. ९२३.**

* **अष्टाहे** ‘पृष्ठ्यः षडहः द्वौ स्वरसामानौ’ इति विहिते षट्सु अहःसु क्रमेण त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः इत्येवं स्तोमषट्कं चोदकेन प्राप्तम् । एवं स्थिते तृतीयषष्ठदिवसगतयोः सप्तदशत्रयस्त्रिंशयोः व्यत्यासं विधाय सप्तमाष्टमयोरह्नोः सप्तदशस्तोमं सिद्धवत् कृत्वा त्रिषु चरमेषु अहःसु सप्तदशस्तोमनैरन्तर्यं अर्थवादेन अनूदितम् । **वि. ७।३।१०.**

* **अष्टिः** । पादेषु अक्षराणि १६।१६।१६।८।८ उदा० ‘त्रिकद्रुकेषु महिषो यवाशिरम्०’ ( ऋसं. २।२२।१ ) । **के.**

⌛ **असंजातविरोधित्वन्यायः** । न संजातः विरोधी यस्य, सः असंजातविरोधी, तस्य भावः प्राक्तनविरोधशून्यत्वं, तस्य न्यायः रीतिः प्रबलत्वम् । यः किल आदौ पठ्यते, तस्य नाद्यापि कश्चित् विरोधी पदार्थोऽस्ति । पश्चात् पठितस्य तु पूर्वपठितो विरोधी स्यान्नाम । अतः पूर्वं पठितः पश्चात् पठितात् प्रबलो भवति । **साहस्री. ८४९.**

* अथ ‘वेदो वा प्रायदर्शनात्’ ( ३।३।१।२ ) इत्यधिकरणोक्ता**संजातविरोधित्वन्यायेन** प्रत्यये एव लक्षणा इति चेत् । **मीन्या. पृ. ६२–६३.** । यथा हि ‘त्रयो वेदा असृज्यन्त’ इत्युपक्रमानुरोधेन ‘उच्चैर्ऋचा क्रियते’ इति विधौ जघन्ये प्रधानभूतेऽपि ऋगादिपदे वेदलक्षणा अङ्गीक्रियते ऋग्वेदविहितं उच्चैरिति,

तथा प्रधानभूतार्थबोधके प्रत्ययेऽपि जघन्यत्वात् लक्षणा उचिता इति भावः। **अलंकारः.** पृ. ६३. * **असंजातविरोधिनि** लाक्षणिकत्वकल्पनात् वरं उत्तरपदे तत्कल्पनम्। यथा 'प्रथमो यज्ञः' इत्यत्र यज्ञशब्दस्य यज्ञप्रयोगे लक्षणा। **वि.** ३।३।१७, * **असंजातविरोधितया** प्रबलस्य प्रथमस्याह्नः आनुगुण्येन आग्नेयी सुब्रह्मण्या कार्या पञ्चदशरात्रस्य प्रथमेऽहनि अग्निष्टुति इति पूर्वः पक्षः। १२।२।७, * **असंजातविरोध्युपक्रमानुसारेण** चरमं 'प्रतिगृह्णीयात्' इति विधायकं पदमपि 'प्रतिग्राहयेत्' इत्येवं अन्तर्भावितणिजर्थपरतया व्याख्येयम्। ३।४।१५.

* **असंदंशेन** विकृतेर्महाप्रकरणं यथा– यत्र विकृतौ प्राकृतक्रियाऽनुवादेन किं चिद् विहितं, तत् तत्प्रकरणेन गृह्यते यथा 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति। अहीनात्मकद्वादशाहे च द्वादश दीक्षाः द्वादशोपसदः इति द्वादशत्वम्। **बाल.** पृ. ९, * **असंदंशोद्भूतिकं** प्रकृतेर्महाप्रकरणं, यथा दर्शपूर्णमासादेः। पृ. ९.

* **असंदिग्धेन** संदिग्धं निर्णीयते। **वा.** ३।४।१३। ३५ पृ. ९७१. * असंदिग्धेन संदिग्धं बाध्यते। यथा शर्कराऽञ्जनं केनापि इति घृतस्तुत्या। अप्राप्तबाधः। **बाल.** पृ. १४०, * **असंदिग्धश्रुत्या** संदिग्धश्रुतिबाधो यथा आमिक्षायागे वैश्वदेवी इत्यसंदिग्धतद्धितश्रुत्या वाजिभ्यः इति चतुर्थीपञ्चमीत्वेन संदिग्धायाः श्रुतेर्बाधः गुणाधिकरणे उक्तः। **अप्राप्तबाधः**। पृ. १३५.

* **असंनयतोऽपि** चन्द्राभ्युदये प्रायश्चित्तम्। **भा.** ६।५।६।२१–२४.

* **असंनिधेः** अनुपादेयान्वयसहकृतस्य भेदहेतुत्वं (अभ्युपेत्यवादेन)। **सु.** पृ. ९५५.

* '**असंनिपातिकर्मणां** विशेषाग्रहणे कालैकत्वात् सकृद्वचनम्।' (११।४।१९।५६ सूत्रस्यांशः)। ये तु असंनिपातिकर्मणां मन्त्राः, यथा सुब्रह्मण्याऽऽह्वाने 'देवा ब्रह्माणः' इति औपवसथ्येऽहनि, तेषामेककालत्वात् अगृह्यमाणविशेषाणां सकृत् वचनं स्यात्। **भा.** ११।४।२०।५३.

⌛ **असंबद्धपदव्यवायन्यायः** (व्यवायान्नानुषज्जते २।१।१७।४९)। 'अथैष गौः' इति गोशब्दे असंबद्धपदव्यवायन्यायेन पूर्वत्रानिविशमाने तद्बुद्धौ अननुषज्जमानायां प्रकरणविच्छेदे ज्ञाते अर्थान्तरकलुषितायां च बुद्धौ निपतत्संज्ञाऽन्तराविरुद्धं च ज्योतिष्टोमं गन्तुमशक्नुवन् विच्छिन्नानुसंधानात् अर्थान्तरे वर्तते। तथाहि 'संज्ञानदीव्यवच्छिन्नो यजिः पूर्वं न गच्छति। न च पूर्वस्तमित्येवं बलादर्थान्तरं गतः॥' (अस्यार्थः— 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेत' इति ताण्ड्यश्रुतौ ज्योतिरादयः तिस्रः संज्ञाः बहुत्वात् नदीत्वेन रूपिताः, तथा च संज्ञानां नद्या प्रवाहेण व्यवच्छिन्नः व्यवहितः 'यजेत' इति यजिः पूर्वं ज्योतिष्टोमं न गच्छति, न च पूर्वः ज्योतिष्टोमः तं यजिं गच्छति अन्वेति। इत्यतः बलात् यजिः अर्थान्तरं गतः इति। के.)। **वा.** २।२।८।२२ पृ. ५२९.

⌛ **असंबन्धः समत्वात् स्यात्** (गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्। ३।१।१२।२२) **इति न्यायेन** शक्तिमात्रपरत्वेऽपि कारकान्तरयोगः कस्मान्न भवति इत्याशङ्क्य असंबन्धः समत्वात् स्यात् इत्यनेन न्यायेन शक्तेः शक्त्यन्तरायोगात् द्रव्यस्य च एकशक्तिवशीकृतस्य शक्त्यन्तरायोगात्। **सु.** पृ. १४४२, * धात्वर्थस्य विधिसामर्थ्यात् करणत्वावगतेः साध्यापेक्षायामपि असिद्धत्वेन तस्यापि साध्यत्वात् 'असंबन्धः०'– **इति न्यायात्** न साध्यत्वान्वयोऽस्ति। पृ. ५४९, * विभक्तिवाच्यविशेषणस्य विशेषणं न युक्तं 'असंबन्धः समत्वात्' इति न्यायात्। पृ. १४५४.

* **असंबन्धिपदार्थान्तरव्यवधाने** एकपदार्थता न संपद्यते। अतः एकदैवत्यपञ्चगणे दैवतावदानादिना प्रत्येकमनुसमयः, अन्ते च मन्त्रेण देवताहोमः। स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव। **भाट्ट.** ५।२।६, * असंबन्धिपदार्थान्तरव्यवधानेऽपि पञ्चावत्तहोमसंपादकत्वेन दैवतावदानस्यापि प्रदानावयवत्वोपपत्तेः विभिन्नदेवताकस्थलेऽपि दैवतावदानादिप्रदानान्तेन अनुसमयः। ५।२।६.

**असंभवद्विकल्पसमुच्चयन्यायः** । तत्र केचित् पौर्णमास्याममावास्यायां च आग्नेयो भिद्यते असंभवद्विकल्पसमुच्चयन्यायात् । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इति आग्नेयोत्पत्तिवाक्ये अमावास्यापौर्णमासीरूपकालद्वयस्य न समुच्चयः असंभवात्, नापि विकल्पः चशब्दविरोधात् । तस्मात् विकल्पसमुच्चयायोग्यगुणद्वयश्रवणात् कर्मभेदः । **सोम.** ८।१।१५.

**असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात्** । ३।३।४।११ ॥

तृतीयाध्यायमारभ्य श्रुतिलिङ्गवाक्यानि विनियोजकानि प्रमाणानि व्याख्यातानि । अस्मिन् सूत्रे तु प्रकरणमुच्यते । असंयुक्तं यदङ्गं श्रुत्या लिङ्गेन वाक्येन वा न संयुक्तं, न विनियुक्तं, तत् प्रकरणात् विनियुज्येत । संनिहितस्य प्रधानस्य इतिकर्तव्यताऽर्थित्वात् । इतिकर्तव्यतां अर्थयते इति इतिकर्तव्यताऽर्थि, तस्य भावः । यत् इतिकर्तव्यताऽऽकाङ्क्षिणः संनिधौ पूरणसमर्थं उपनिपतति यद्वचनं, तत् तेन प्रकृतेन सह एकवाक्यतां याति । यथा दर्शपूर्णमासाभ्यां प्रयाजादयः । तस्मात् श्रुत्यादिवत् प्रकरणमपि विनियोजकं अपरं प्रमाणम् । **के.**

* असंयुक्तं प्रकरणात् इति चानेन क्रत्वर्थलक्षणमुक्तम् । श्रुत्यादिभिः यदसंयुक्तं फलवता च क्रतुना प्रकरणेन गृह्यते, तत् क्रत्वर्थम् । **वा.** ५।१।१।१ **पृ.** १२८७, * न चैवं वाक्यात् पुरुषसंयुक्तस्य प्रकरणमीश्वरं **'असंयुक्तं प्रकरणात्'** इति स्थितत्वात् । ३।४।५।१४ **पृ.**९४५, * नैव प्रकरणस्य एवंजातीयकेषु विनियोजकत्वं स्थितं 'असंयुक्तं प्रकरणात्' इति ह्युक्तम् । ३।७।१।२. * प्रकरणस्य 'असंयुक्तं प्रकरणात्' इति तृतीयाधिकरणसूत्रे श्रुत्यादित्रयसंयुक्ताङ्गविषयत्वनिषेधात् वाक्यबाधितेन प्रकरणेन अङ्गता न शक्या अवगन्तुम् । **सु. पृ.** ८७१. * यत्तु प्रयोगवचनो विधास्यतीति, न पुरुषार्थेषु तस्य शक्तिः । 'असंयुक्तं प्रकरणात्' इति वक्ष्यति । यदि तु तेन विधीयते, सिद्धं कर्मार्थत्वम् । **वा.** १।२।२।२२. **अत्र सुधा–** संयोगपृथक्त्वाभावात् पुरुषार्थत्वे सति क्रत्वर्थत्वायोगात् । इति ।

* मुण्डकत्रयात्मिकायाः उपनिषदः ऐक्यपरत्वे स्थिते 'असंयुक्तं०' **इति न्यायेन** अभिक्रमणादिवत् मध्यस्थितवाक्यस्यापि 'द्वा सुपर्णा' इत्यादेः ऐक्यानुकूलत्वे संभवति महाप्रकरणविरोधेन विपरीततात्पर्यकल्पनया भेदोपक्रमत्वाभावात् । **अद्वैत.** २।२६।२३–२५. * यागविशेषाणां फलवत्त्वात्, फलवत्त्वस्यैव च प्राधान्यापरपर्यायमुख्यलक्षणत्वात् संनिहितस्य फलासंयुक्तस्य 'असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात्' इति तृतीयाधिकरणन्यायेन अङ्गत्वकारणभागित्वात् अङ्गतैव युक्ता । **सु. पृ.** ७२३. * तेषां ( शौनःशेपाख्यानादीनां ) महाप्रकरणेन राजसूयसंयोगात् अभिषेचनीयमध्ये अनुष्ठानमात्रेण न तेषु अभिषेचनीयाङ्गत्वापादकं तदवान्तरप्रकरणमुन्मिषति 'असंयुक्तं प्रकरणात्०' **इति न्यायात्** । एवमेव च चतुर्थे ( ४।३।१३ ) पञ्चमयोः ( ५।२।९ ) निर्णीतम् । **परिमलः.** ३।३।२५ ब्रसू.

**असंयोगात् तदर्थेषु, तद्विशिष्टं प्रतीयेत** । ९।१।१६।४२ ॥

अग्निष्टोमे 'इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष' इत्येवमादिः सुब्रह्मण्यानिगदः समाम्नातः । अग्निष्टुति नाम यागे च 'आग्नेयी सुब्रह्मण्या भवति' इत्युक्तम् । तत्र इन्द्रशब्दस्य स्थाने अग्निशब्दस्य 'अग्न आगच्छ' इति ऊहः कर्तव्यः इत्यत्र नास्ति विवादः । 'हरिव आगच्छ मेधातिथेर्मेष' इत्यादौ ऊहः कर्तव्यो न वा इति संशयः । तत्र सिद्धान्तमाह । तद्विशिष्टं तेन ऊहितेन अग्निपदेन विशिष्टं प्रतीयेत, परिशिष्टं तु अविकारेण प्रतीयेत । किंवा तद्विशिष्टं हरिवदादिशब्दविशिष्टमेव प्रतीयेत आग्नेय्यां सुब्रह्मण्यायामपि । ननु अग्नौ हरिवदादिपदार्थानामसंबन्धात् हरिवदादिपदवैशिष्ट्यं अयुक्तं इति चेत्, तत्राह । तदर्थेषु ते च ते अर्थाश्च तदर्थाः हरिवदादयः, तेषु । किंवा तस्य इन्द्रस्य ये अर्थाः विशेषणानि, तेषु अग्नेरिव इन्द्रस्यापि असंयोगात् संबन्धाभावात् संबन्धाभावस्य समानत्वात् । अग्नौ इव इन्द्रेऽपि हरिवत्त्वादिगुणसद्भावे प्रमाणाभावात् । यदि तु असद्भिरेव गुणैः इन्द्रस्य स्तुतिर्भवति, अग्नेरपि किं न स्यात् । तस्मात् आग्नेय्यामपि सुब्रह्मण्यायां 'हरिव आगच्छ

मेधातिथेर्मेष' इत्यादेः पदजातस्य अविकारेण प्रयोग इति सिद्धान्तः । **इति प्रथमं वर्णकम् ।**

अथवा उदाहरणान्तरम् । साद्यस्क्रे 'साण्डस्त्रिवत्सः सोमक्रयणः' इति समामनन्ति । प्रकृतौ तु एकहायनी गौः सोमक्रयणी । तत्र एकहायन्यामिदमाम्नायते 'इयं गौस्तया ते क्रीणामि, तस्यै शृतं, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनं' इति । तच्चेदं साण्डे सोमक्रयणेऽपि चोदकेन प्राप्तम् । तत्र 'इयं गौस्तया ते क्रीणामि' इत्यस्य स्थाने 'अयं साण्डस्तेन ते क्रीणामि' इत्यूहे न विवादः । अवशिष्टानां तु 'तस्यै शृतं' इत्यादीनां पदानां ऊहो न वा इति संशयः । तत्र सिद्धान्तमाह, ऊहवचनं तद्विशिष्टं गोपदार्थविशिष्टं प्रतीयेत तदर्थेषु गोजन्यशृतादिपदार्थेषु एकहायन्याः साण्डस्य च साक्षात् असंयोगात् संबन्धाभावस्य समानत्वात् । भविष्यद्वृत्त्या यदि एकहायन्याः शृतादिभिः संबन्ध उच्येत, तदा संततिजननद्वारा साण्डस्यापि शृतादिभिः संबन्धो वक्तुं शक्यः । तस्मात् 'अयं साण्डस्तेन ते क्रीणामि तस्मै शृतं, तस्मै शरः' इत्यादिरीत्या गोपदस्थाने गोवाचकतत्पदस्थाने च ऊहः, शृतादिपदे तु नोहः इति सिद्धान्तः । **इदं द्वितीयं वर्णकम् ।**

**कर्माभावादेवमिति चेत् । ४३ ॥**

अग्निष्टुति आग्नेय्यां सुब्रह्मण्यायां ऐन्द्री सुब्रह्मण्या इन्द्रपदवर्जे ऊहं विनैव प्रयोक्तव्या इति **सिद्धान्त** उक्तः । तत्र **पूर्वपक्षी** शङ्कते । यदि इन्द्रे हरिवत्त्वादिगुणकर्मणां अभावो वस्तुतः स्यात्, तदा कर्माभावात् गुणकर्मणामभावात् हरिवत्त्वादीनां इन्द्रे अभावात् आग्नेय्यामपि सुब्रह्मण्यायां एवं हरिवदादीनां अविकारेण वचनं स्यात् । न तु कर्माभावोऽस्ति । कर्मजास्तु एते गुणा इन्द्रे विद्यन्ते । तथाहि व्याख्यातं छन्दोगब्राह्मणे 'हरिव आगच्छेति, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी (अश्वौ) ताभ्यां ह्येष सर्वं हरतीति । मेधातिथेर्मेषेति, मेधातिथिं ह काण्वायनं मेषो भूत्वा जहार । वृषणश्वस्य मेने इति वृषणश्वस्य मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे । गौरावस्कन्दिन् इति गौरमृगो भूत्वा अरण्याद्राजानं सोमं पिबति' इति वचनैरिमे गुणा इन्द्रस्य आख्यायन्ते । अग्नौ च ते गुणा न सन्ति इति विकारेणैव ते शब्दा आग्नेय्यां प्रयोक्तव्याः । तस्मादूहः स्यादिति पूर्वपक्षः ।

अथवा उदाहरणान्तरे । साद्यस्क्रे साण्डः त्रिवत्सः सोमक्रयणः । तत्र एकहायन्याः सोमक्रयण्याः क्रयमन्त्रे 'अयं साण्डस्त्रिवत्सस्तेन ते क्रीणामि तस्मै शृतं तस्मै शरः' इत्यादिरीत्या गोपदस्थाने तस्यैपदस्थाने च ऊहं कृत्वा शृतादीनां नोहः कर्तव्यः इति सिद्धान्ते उक्ते पूर्वपक्षी आह । कर्माभावात् एकहायन्यां शृतशरादिजननकर्माभावात् एकहायन्यां शृतादिशब्दार्थसमवायाभावात् एवं गोः स्तुत्यर्था एव शृतादिशब्दाः । कालान्तरे तु तस्यां शृतादिसमवायो भविष्यति । साण्डे तु न कालान्तरेऽपि । तस्मात् साण्डे ऊहः कर्तव्यः शृतादिशब्दे इति चेत् ।

**न, परार्थत्वात् । ४४ ॥**

हरिवदादिपदानां इन्द्रे समवेतार्थत्वात् आग्नेय्यां सुब्रह्मण्यायां ऊहेन तानि पदानि प्रयोक्तव्यानि इति पूर्वपक्षिणा उक्तं निषेधति । न ऊहेन प्रयोगो हरिवदादिपदानाम् । नहि तानि इन्द्रे समवेतार्थानि । इन्द्रस्तुत्यर्थानि हि तानि । अग्नावपि इन्द्रवत् सर्वम् । तस्मात् अविकारेणैव आग्नेय्यां सुब्रह्मण्यायां प्रयोग इति सिद्धान्तः । **याज्ञिकास्तु** इमं मीमांसासिद्धान्तं न रोचयन्ते । ऊहं कुर्वन्ति 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे' इति ।

अथवा उदाहरणान्तरम् । न ऊहः साण्डेऽपि, एकहायन्यां तदानीं शृतादेरभावेऽपि यथा भविष्यद्वृत्त्या शृतादीनां तस्यां संभवः एवं साण्डेऽपि परंपरया संभवः । साण्डादपि या धेनुर्जनिष्यते तस्याः शृतादि भविष्यत्येव । परार्थत्वात् गोस्तुत्यर्थत्वात् एकहायन्याम् । साण्डेऽपि स्तुत्यर्थता समाना । तस्मात् साण्डेऽपि शृतादिपदानां अविकारेणैव प्रयोगः इत्येव सिद्धान्तः । **के.**

**असंयोगात्तु वैकृतं, तदेव प्रतिकृष्येत । ५।१।१४।२७ ॥**

पशौ यूपस्वरुचषालकर्माणि भवन्ति । तानि च प्रारम्भे एव । ज्योतिष्टोमे तु दीक्षासु यूपं छिनत्ति क्रीते वा

राजनि । तत्र पश्वारम्भे क्रियमाणं यूपकर्म प्रकृतिभूतं प्राकृतम् । दीक्षासु क्रियमाणं तु विकृतिरूपं वैकृतम् । अग्नीषोमीयादिपश्वर्थं कर्तव्यं यूपकर्म दीक्षासु अपकृष्टम् । तदेतत् दीक्षाकाले अपकृष्टं यूपकर्म यत् वैकृतं, तत् प्राकृतयूपकर्मणः सकाशात् प्राचीनानि अग्नीषोमप्रणयनादीन्यपि कर्माणि अपकर्षति न वा इति विचारे अपकर्षति इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तमाह सूत्रम् । अत्र प्रतिकर्षशब्देन अपकर्ष एवोच्यते । वैकृतं दीक्षाकाले प्रतिकर्षेण क्रियमाणं यत् यूपकर्म, तेन तदेव यूपकर्मैव केवलं प्रतिकृष्येत, न तु अग्नीषोमप्रणयनादि प्रतिकृष्येत अपकृष्येत । कुतः ? यूपकर्मणः अग्नीषोमप्रणयनादिना सौमिकेन असंयोगात् । सति सोमसंबन्धे अग्नीषोमप्रणयनादेरपि अपकर्षः संभाव्येत, न तु तदस्ति । तस्मात् यूपमात्रस्य दीक्षाकाले अपकर्षः । **के.**

* **असंशयं** पुनःपुनर्दृश्यमानं दृश्यते एव इति लौकिका व्यपदिशन्ति, न स्मर्यते इति । **बृहती. पृ. ८०.**

* **असंसर्गाग्रहरूपा** अख्यातिः शुक्तिरजतज्ञानादौ । **मणि. पृ. २६.**

* **असकृद्वचनं** शब्देनानुबध्यमानं अन्यमिव व्यपदिशति । 'यथा ब्राह्मण आगतो वृषल आगतो ब्राह्मण आगतः' इति द्वयोरिव ब्राह्मणयोर्भवति गणनावादः । **भा. १०।१।८।१७.**

* **असत्** चेत् कर्मणा भाव्यते, पुनःपुनरपि भावयिष्यते कृषिवत् । यच्च भाव्यते, तत् व्यक्तं असत् । सतो हि भावः ( उत्पादः ) नोपपद्यते । **भा. ११।१।४।२४.** * **असतः** कार्यकारणत्वायोगः । **सु. पृ. ८९३.** * असतः फलस्य कर्म उत्पादकम् । तस्य प्रतिप्रयोगं अन्यस्यान्यस्य उत्पत्तिरविरुद्धा । **भा. ११।१।४।२५,** * असतो वचनमर्थवादार्थं भवति । यथा 'प्रजापतिर्वा एक आसीत् । स आत्मनो वपामुदक्खिदत्' इति । **१०।८।६।९.** * असतश्च कर्मवेलायां देवैरपि अप्राप्तेः अनिमित्तकार्योत्पादप्रसङ्गात् इत्युक्तं संबन्धनित्यत्वे ( यथा 'विद्यमानस्य चार्थस्य दृष्टमग्रहणं क्व चित् । न त्वत्यन्तासतोऽस्तित्वं कं चित् प्रत्युपपद्यते ॥' इति । **श्लो. वा.** संबन्धाक्षेपपरिहारे **३३** ) । **वा. ३।४।४।१३ पृ. ९२९.** * **असति** न्याये लिङ्गमकारणम् । **भा. ७।४।२।७,** * असति प्रसङ्गे प्रतिषेधो नित्यानुवादः । 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि' इति पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था । **१।२।१।१८.**

⌛ **'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायः । साहस्री. ४३१.** * दत्तकस्य यन्मरणे यावदशौचं, तन्मरणे तावदशौचं दत्तकस्यापि **'असति बाधके' इति न्यायात् । दत्तकमीमांसाटीका. पृ. १२७.**

* **असति श्रुत्यर्थे** लक्षणार्थो ग्राह्यः । **भा. ७।३।२।५.**

* **असत्कार्यवादनिरासेन** सत्कार्यवादः समर्थितो भाष्यकारैः । **संकर्ष. ३।३।१३.**

* **असत्त्वभूतत्वम्** । नहि संख्यादिसंबन्धायोग्यत्वादन्यत् असत्त्वभूतत्वम् । **वा. ३।४।४।१३ पृ. ९१५.**

* **असत्यादपि सत्यज्ञानम्** । क्विबादेरसत्यत्वेऽपि तद्द्वारस्य शब्दान्वाख्यानस्य सत्यत्वदर्शनात् । **सु. पृ. ५७.**

⌛ **असत्यां भित्तौ चित्रकर्म इति न्यायः ।** मीमांसकास्तु ईश्वरस्य शास्त्रप्रतिपाद्यत्वादि असत्यां भित्तौ चित्रकर्मवत् वर्णयन्ति । **शास्त्रप्रकाशिका** संबन्धे **१.**

* **'असत्रं वा एतत् यदच्छोमं'** छन्दोमशब्देन चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंशः इत्येते त्रयः स्तोमा उच्यन्ते । अक्षरसंख्यासामान्येन गायत्रीत्रिष्टुब्जगती छन्दोभिर्मीयमानत्वात् । सत्रमपि चतुर्दशरात्रादिकं छन्दोमरहितत्वात् असत्रं भवति । ईदृशश्छन्दोमानां महिमा । इत्येवं स्तावकत्वादर्थवादः । **वि. १।४।१६.** * छन्दोमवन्ति प्रशंसितुं अच्छन्दोमकानि निन्द्यन्ते । यथा यत् अघृतभोजनं अभोजनं तत्, यन्मलिनं अवासस्तत् इति । **भा. १।४।१२।२३-४ पृ. ३६३.**

* **असद्वादी** हि विद्यमानमपि अनुपलभ्य ब्रूयात् । **भा. १०।८।१।४.**

* **असमवायिकारणम्** । समवायिकारणप्रत्यासन्नं हि असमवायिकारणं भवति । यथा तन्तुषु समवायिकारण-

भूतेषु समवेतास्तन्तुसंयोगाः पटस्य तन्तुसमवेतस्य । यथा च तन्तुरूपाणि तन्तुसमवेतपटरूपोत्पत्तौ । **ऋजु.** पृ. २१६.

* **असमासात्मक**प्रातिपदिकावृत्तिरूपः वाक्यभेदः । ( उदाहरणं मृग्यम् ) । **बाल.** पृ. १८१.

* **असर्वगतेष्वेव** पर्यायेण सर्वत्र कार्योपलम्भस्य दर्शनात् । **सु.** पृ. ६१६.

**असाधकं तु तादर्थ्यात् इति न्यायः ।** ( ६।१।१।२ ) । ननु अफलस्य काम्यत्वायोगात् कामशब्दोपबन्धे 'असाधकं तु तादर्थ्यात्' इति स्वर्गकामाधिकरणसिद्धान्त**न्यायेन** फलपरोऽयं पशुकामशब्दः इत्याशङ्क्य । **सु.** पृ. ४१५. * 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र असाधकं० **इति न्यायात्** स्वाराज्यकामः प्रधानभूतः । **रत्न.** ६।२।१।४. * असाधकं तु तादर्थ्यात् ( ६।१।१।२ ) इति सिद्धान्तसूत्रेण विध्यन्यथाऽनुपपत्त्या कामनोपबन्धाच्च स्वर्गादेः साध्यत्वप्रतीतेः तादर्थ्येन कर्मविधौ उक्ते 'प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसंबन्धस्तस्मात् कर्मोपदेशः स्यात्' ( ३ ) इत्यनेन अर्थ्यमानं स्वर्गादि प्रतीत्य लक्षणीकृत्य उद्दिश्य तदाभिमुख्येन तत्तन्त्रतया कर्मणः समीहितस्वर्गाद्यन्वयावगतेः इति वदता फलस्य उद्देश्यत्वादपि तादर्थ्येन कर्मविधिः इति वक्ष्यते । **सु.** पृ. ९५८. * 'असाधकं तु तादर्थ्यात्' प्रीत्यर्थत्वात् पुरुषप्रयत्नानां, प्रीतिहेतुता तु विध्यर्थासमवाये साधकं नाधिगच्छेत् इति । **विवि.** पृ. ४५८, * असाधकं तु तादर्थ्यात् । भवेत् असाधकं कर्म साधयितारं नाधिगच्छेत् अनधिकारि स्यात् इत्यर्थः । तादर्थ्यात् प्रवर्तनामात्रार्थत्वात् शब्दस्य प्रीतिसाधनत्वानवगमात् प्रीत्यर्थत्वाच्च पुरुषप्रयत्नानाम् । अविशेषे तु प्रीतिसाधनत्वे सिद्धोऽधिकारः । सर्वविशेषप्रत्यस्तमये च असाधकं वाक्यं स्यात् अबोधकं अविशेषार्थत्वात् सामान्यचोदनायाः । पृ. ४४८-४४९.

* **असाधारणं** च भवति विशेषणम् । **भा.** ३।३।१।१ पृ. ५७२. * **असाधारणेन** हि व्यपदेशो भवेत् । **ऋजु.** पृ. ७२.

**असाधारण्येन व्यपदेशा भवन्तीति न्यायः ।** असाधारण्यं च तदितरावृत्तित्वे सति सकलतद्वृत्तित्वमिति । व्यपदेशत्वं च– 'व्याजेनात्माभिलाषोक्तिर्व्यपदेश इतीर्यते' इति । तथा—प्रमाणादिपदार्थषोडशके प्रतिपाद्यमाने कथमिदं न्यायशास्त्रमिति व्यपदिश्यते इत्याशङ्कायां प्रकृतन्यायेन न्यायस्य परार्थानुमानापरपर्यायशब्दस्य सकलविद्याऽनुग्राहकतया सर्वकर्मानुष्ठानसाधनतया प्रधानत्वेन तथा व्यपदेशो युज्यते इति समाधानमिति । तथाऽभाणि **सर्वज्ञेन** — 'सोयं परमो न्यायः विप्रतिपन्नपुरुषप्रतिपाद्यकत्वात्तथाप्रवृत्तिहेतुत्वाच्च' इति । **पक्षिलस्वामिना** च सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाना 'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षिता ॥' इति उक्तम् । **साहस्री.** ४६७.

* **असाधुत्वं** ( शब्दस्य ) वृत्तिभ्रमेण अर्थप्रत्यायकत्वम् । तद्यथा भाषाशब्दानां प्रयोगप्रमयोः करणापाटवशक्तिभ्रमाभ्यां उपपत्तेः शक्त्यभावादेव वृत्त्यन्तरस्य चासंभवात् न वृत्तिप्रमा, इति न साधुत्वम् । **मणि.** पृ. ७२, * **असाधुपदेन** अर्थप्रत्ययाभावः । पृ. ७१.

* **असामञ्जस्यं**– प्रमाणान्तरानुसारित्वात् लक्षणावृत्त्याख्यं असामञ्जस्यं अर्थवादे एव युक्तं, न विधौ । **सु.** पृ. १४९७.

* **असामा** । 'अयज्ञो वा एष योऽसामा ।' अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वात् अयज्ञो भवति, ईदृशः साम्नो महिमा इति साम्नः स्तुतिः । **वि.** १।४।१६.

* '**असिं वै शासमाचक्षते**' इत्यादिलिङ्गात् शासशब्दः असिवचनः । वस्तुतस्तु बोधायनादिसकलकल्पपर्यालोचनया शासपदस्य स्वधितावपि शक्त्यवगमः । लिङ्गं तु स्वधितेरेव असितुल्यत्वेन स्तुत्यर्थम् । **भाट्ट.** ९।४।३.

**असिद्धं बहिरङ्गमन्तरङ्गे इति न्यायः ।** अयं शास्त्रे लोके च प्रवर्तते । तथा च– 'अचः परस्मिन् पूर्वविधौ' पा० १।१।५७ इति सूत्रमहाभाष्ये– 'प्रत्यङ्गवर्ती लोको लक्ष्यते । तद्यथा– मनुष्योऽयं प्रात-

त्थाय शरीरकार्याणि करोति, ततः सुहृदां ततः संबन्धिनाम्' इति। शास्त्रीयोदाहरणानि ततोऽवसेयानि। विस्तरभिया नेह प्रपञ्चितानि। अस्यार्थस्तु– अन्तर्मध्ये, बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये अन्तर्भूतानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गमिति। शास्त्रेति लोकोपलक्षकमिति ज्ञेयम्। **साहस्री.** २२४.

* न च **असिद्धं** सिद्धौ पर्याप्तम्। **बृहती.** पृ. २१२.

* **असिद्धिः** नाम हेत्वाभासः पञ्चधा स्वरूपासिद्धिः, संबन्धासिद्धिः, व्यतिरेकासिद्धिः, आश्रयासिद्धिः, व्याप्यत्वासिद्धिश्चेति। ( विवरणं 'हेत्वाभासाः' इति बिन्दौ द्रष्टव्यम् )। **मणि.** पृ. ४१.

* **असिमध्यः** मन्त्रः 'ईड्यश्चासि वन्द्यश्चासि' इति। **बाल.** पृ. ६०.

'**असीत्यस्य च सामर्थ्यं संनिधावुपसंहृतम्**' 'दृंहिर्नामाऽसि' इत्यस्पष्टलिङ्गोऽयम्। न चेदृशं सन्तं ( मन्त्रं ) प्रकरणं विनियोक्तुं क्षमम्। अयं तु असिशब्दः युष्मदर्थविषयत्वात् संनिहितमभिमुखं वा अभिधत्ते, नान्यम्। उपांशुयाजश्च संनिहितः अभिमुखश्च इत्यभिधानसामर्थ्यं क्रमात् उपांशुयाजविषयं विज्ञायते। ततश्च लिङ्गेन प्रकरणं बाध्यते एव। **वा.** ३।३।६।१२ पृ. ८२० **इत्यनेन न्यायेन** अत्रापि 'इषे त्वा' इति युष्मदर्थविषयत्वात् संनिहिताभिधायित्वाऽन्तशब्दायोगात् प्रथमपदार्थे अग्निप्रणयनेन आम्नातमन्त्रकत्वात् मन्त्राकाङ्क्षे क्रमेण विनियोगावगतेः श्रुतिक्रमविरोधापत्तेः इत्याशङ्क्य। **सु.** पृ. १२३०.

* **असोमयाजिनः** आग्नेयश्च ऐन्द्राग्नश्चेति पुरोडाशावेतौ। सोमयाजिनः सांनाय्यमपरमपि। **भा.** १०।८।१४।४५, * असोमयाजिनः दर्शपूर्णमासयोः पुरोडाशद्वयश्रवणं अनुवादः। १०।८।१४।३५–४६. * असोमयाजिनः पौर्णमास्यां अग्नीषोमीयाभावः अमावास्यायां च सांनाय्याभावः। **सु.** पृ. ७४५. * असोमयाजिनोऽपि अस्ति उपांशुयाजः। **सोम.** ५।४।५.

* **अस्ति**, भवति। अस्त्यादावपि कर्त्रंशे भाव्ये अस्त्येव हि भावना। ( यद्यपि ) अस्त्यादिषु प्रयोजकव्यापारो नातीव लक्ष्यते, तथापि प्रत्ययसामर्थ्यात् भावयति इत्यवगम्यते। त्रयोऽपि भावनांऽशाः भवनेनैव पूर्यन्ते व्यापारान्तरासंभवात्। अस्तिः पुनः जनिसामर्थ्यात् भवतेरुपरितनामवस्थां अभिसत्तया आत्मभवनं भवत् भावयति इत्येवं आख्यातप्रत्ययं लभते। **वा.**

* अस्ति भवति विद्यते इत्यादेः फलमात्रप्रतीतिः ( न व्यापारस्य प्रतीतिः ) इति केचित्। **मणि.** पृ. १०२.

* अस्ति हि कामस्याधिकारे प्रयोज्यत्वं, न चाङ्गता। तस्मादन्यत् प्रयोज्यत्वं अन्या चाङ्गता। **बृहती.** पृ. ४.

* **अस्तिर्भवन्तीपरः** प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति। ( महाभाष्यं २।३।४६ )। **भा.** ११।२।१।२.

* 'अस्तिर्भवन्तीपरः प्रथमपुरुषे अप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मरणम्। भवन्तीपरः लडन्त इत्यर्थः। न च क्रियापदान्तराध्याहारस्यापि योग्यताऽनुसारेण आवश्यकत्वात् एतदनुशासनवैयर्थ्यम्। योग्यतासाधारण्ये वेदादौ तात्पर्यग्रहाभावे च सति अस्त्यध्याहारनियमार्थत्वात्। प्रथमाऽन्तमुख्यविशेष्यकत्वभ्रमनिरासार्थत्वेनैव सार्थक्याच्च। **रहस्य.** पृ. ४१.

* **अस्तिशब्दोऽपि** न वस्तुत्वापरपर्यायमहासामान्यवाची द्वितीयभावविकारवाचिनः अस्तेः धातोः शत्रन्तात् तलि कृते सत्ताशब्दव्युत्पत्तेः। **सु.**

* **अस्त्यर्थे** मतुप् स्मृतः। 'अस्त्यर्थस्मृतमत्वर्थबहुव्रीह्युक्तत्वात्'। **सु.** पृ. ८९३.

**अस्त्रमस्त्रेण शाम्यतीतिन्यायः**। अयं मण्डनमिश्रापरपर्यायसुरेश्वराचार्यकृतनैष्कर्म्यसिद्धिटीकायामुक्तः। तथाहि– 'नन्वस्त्रमस्त्रेण शाम्यतीति न्यायेन काम्यैः काम्यानां, निषिद्धैर्निषिद्धानां निवृत्तिरस्तु इत्यत आह– न च काम्यैः' इति। **साहस्री.** ६६०.

* **अस्थियज्ञः**। 'यदि सत्राय संदीक्षितानां (कश्चित्) यजमानः प्रमीयेत ( म्रियेत ) अथ तं दग्ध्वा तस्य कृष्णाजिने अस्थीन्युपनह्य, योऽस्य ( मृतस्य ) नेदिष्ठः ( भ्रात्रादिः ) स्यात् तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्। ततः संवत्सरे अतीते अस्थीनि याजयेयुः'

इति अस्थियज्ञ उक्तः। सोऽयं जीवद्भिः सत्रिभिः संवत्सरे अतीते कर्तव्यः। सत्राङ्गं चायम्। कर्मान्तरं चेदं न सत्ररूपमेव। अत्र पक्षद्वयं जीवदधिकारपक्षः मृताधिकारपक्षश्चेति। अस्थ्नामेवाधिकारः इति कृत्वा-चिन्तया द्वितीयः पक्षः। के.

**अस्थियज्ञस्य जीवतामधिकारः॥**

**अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्वि-प्रतिषेधादस्थ्नाम्।** १०।२।१७।४८॥

**भाष्यम्**— इदमाम्नायते 'यदि सत्राय संदीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य योऽस्य नेदिष्ठः तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन्, ततः संवत्सरे (अतीते–) अस्थीनि याजयेयुः' इति योऽयं संवत्सरे यज्ञः, स संदिह्यते किं अस्थ्नाम्, उत जीवतां इति। किं तावत् प्राप्तम्? सामानाधिकरण्यात् अस्थ्नां इति। किं सामानाधिकरण्यम्? याजयतेः अस्थीनि कर्मभूतानि। **ननु** अस्थीनि अचेतनानि न शक्नुवन्ति स्वयं तन्त्रयितुम्, कथं तानि क्रियायां कर्तॄणि भवेयुरिति। **उच्यते**। प्रयोज्यता तेषां श्रूयते। ततः अन्ये प्रयोजयितारः, ते एतानि क्रियां कारयिष्यन्तीति। **आह**, नहि अकुर्वति कारयतीति भवति। कर्तुर्हि प्रयोजको हेतुः। न चैतानि कार्त्स्न्येन क्रियामुपसंहर्तुं शक्नुवन्तीति। **उच्यते**। वचनप्रामाण्यात्। यावत् याजमानं कारयितुं शक्यन्ते तावत् कारयिष्यन्ते, औदुम्बरीसंमानं शुक्रान्वारम्भणं इत्येवमादीनि। **आह**, प्रधानमेव न शक्नुवन्ति, नाङ्गानि कुर्वन्ति याजमानानि भवन्तीति। **अत्रोच्यते**। वचनसामर्थ्यात् तत् शवद्रव्यं ऋत्विजः प्रतिग्रहीष्यन्ति, तद्दक्षिणापरिक्रीताः तत् त्यक्ष्यन्ति। ईदृशो द्रव्यत्यागो वाचनिको भविष्यतीति। **आह**, एवं वर्ण्यमाने याजयितॄणामेव कर्तृत्वमुपदिष्टं भवति नास्थ्नामिति। **उच्यते** यष्टॄणामेव एतेन प्रकारेण कर्तृत्वमुपदिश्यते। नहि अकर्तरि कारयति इति भवति। हेतुकर्तृत्वं चास्थ्नां यागे सति प्राप्तमेवानूद्यते। यथा 'ग्रामकामं याजयेत्' इति ग्रामकामो यजेत इति विधीयते। हेतुत्वं च प्राप्तानुवादमात्रम्। तच्च दर्शयति, 'स्तोत्रेऽस्थिकुम्भमुपदधाति' इति अस्थ्नामेव यजमानत्वं दृश्यते। तस्मात् अस्थ्नां यज्ञो, न जीवताम्। इति **प्राप्ते, ब्रूमः**। अस्थियज्ञः इतरेषां जीवतां स्यात्। तेषां अविप्रतिषिद्धो यज्ञः। अस्थ्नां विप्रतिषिध्यते। त्यागो नाम मनसा क्रियते। न च अस्थ्नामस्ति मनः।

**यदुक्तं** 'ऋत्विजः शवद्रव्यं दक्षिणां प्रतिगृह्य तत्परिक्रीताः त्यागं कुर्वन्तीति, ईदृशो वाचनिकस्त्यागो भवति' इति। **नैतदेवम्**। नहि यजेत इत्युक्ते अशक्नुवत्सु वचनप्रामाण्यात् अन्यो यज्यर्थो भवति। यागं कुर्वीत इति हि तद्वचनं नान्यो यज्यर्थ इति। न च वचनप्रामाण्यादेतत् भवति, यत् शवद्रव्यं तत् गृह्यते। नहि तत् अस्थिभिर्दत्तं भवति। न च असति दाने परिक्रयः। न च गौणोऽर्थो विधिशब्दात् अवगम्यते। अन्येन हि प्रमाणेन परिच्छिन्नेऽर्थे गौणः शब्दः संबध्यते यथा 'गौरनुबन्ध्यः' इति गोजातिविशिष्टः पशुरनुबध्यते, न वाहीकः। 'गौरयं वाहीकः' इति तु संवादे वाहीके गौणः शब्दः प्रवर्तते। तस्मात् न त्यागविधाने अन्यो यज्यर्थः स्यात्। न च अस्थ्नां द्रव्यं स्वं भवति, यत् ऋत्विजो गृहीत्वा 'वयमनेन परिक्रीताः' इति मन्येरन्। तस्मात् न कथं चन अस्थीनि यष्टॄणि भवन्ति। अतो न विवक्षितं सामानाधिकरण्यमिति।

आह, असंबद्धवचनात् अनर्थकं तर्हीदं वाक्यम्। नेति ब्रूमः। नहि गम्यमानेऽर्थे अनर्थकं भवति। 'ततः संवत्सरे याजयेयुः' इत्येतावतो वाक्यात् कश्चिदर्थोऽवगम्यते, स इह विवक्षितः। 'अस्थीनि याजयेयुः' इत्येष संबन्धो न विधीयते। आह, किं अस्थीनि इति प्रमादपाठः? न च प्रमादपाठ इति ब्रूमः। नहि स एव अप्रमादपाठो यो विधानार्थो मुख्यार्थश्च। अनुवदन्नपि अर्थं लक्षणयाऽपि ब्रुवन् वाक्ये समवायं गच्छति, न च प्रमादपाठो भवति। तत्र अस्थीनि इत्येष शब्दो विदधत् स्वमर्थं मुख्यया वृत्त्या ब्रुवन् वाक्ये न समवैति। अनुवदंस्तु लक्षणया समवेष्यति 'ततः संवत्सरे याजयेयुः' इति जीवतः प्रकृतान् वक्ष्यति, तत्र अस्थिशब्दो वर्तिष्यते लक्षणया, ततः संवत्सरे अस्थिमतो याजयेयुः इति। के ते अस्थिमन्तः? ये तेन सह यष्टुं

प्रक्रान्ताः । तस्मात् यस्य तानि अस्थीनि, तैरस्थिभिः स शक्यते लक्षयितुम्। तस्मात् जीवतां यज्ञ इति।

**टुप्**-- यदि ण्यर्थो विधीयेत, अदृष्टं कल्प्येत यजन्तं याजयितुः किमपि भवतीति। न च कश्चित् यष्टुमिच्छेत्। अतो ण्यर्थोऽनुवादः।

**यावदुक्तमुपयोगः स्यात्। ४९॥**

**भाष्यम्**-- अथ यदुक्तं अस्थ्नां याजमानं दर्शयति 'स्तोत्रे अस्थिकुम्भमुपदधाति' इति। नैतद्याजमानम्। नहि अस्थीनि यजन्ते इत्युक्तम्। अतो वचनप्रामाण्यात् एतत् कर्म याजमानसरूपं भवति। यावति वचनं तावत्येव तत् भवितुमर्हति, न तत् सर्वं याजमानं शक्नोति लक्षयितुम्। तस्मात् जीवतामेव यज्ञ इति।

**सोम**-- पूर्वत्र द्वेष्यशब्दबलात् अदृष्टार्थवत् इह अस्थिशब्दबलात् मृतस्याधिकारः इत्युत्थितेः **संगतिः**। तस्मिन् यागे मृतस्याधिकारः, उत मृतव्यतिरिक्तानां जीवतां सत्रिणामेव अधिकारः इति संशयनिष्कर्षः। सत्राङ्गत्वात् फलं सिद्धान्ते न कल्पनीयं इत्युक्तं तन्त्ररत्ने। **सूत्रार्थस्तु**- अस्थीनि याजयेयुः इत्ययं यज्ञो जीवतामितरेषां स्यात् अविरोधात्। अस्थ्नां अस्थिमतो, मृतस्य विप्रतिषेधात् अधिकारासंभवात् इति। भाष्यकारपक्षे तु अस्थिशब्दो यथाश्रुतः।

**वि**-- 'अस्थियागः किमस्थ्नां स्याज्जीवतां वा, ऽस्थिशब्दतः। अस्थ्नां, मैवमनर्हत्वाल्लक्ष्यन्ते जीविनोऽस्थितः॥' अस्थितः अस्थिपदात्।

**भाट्ट**-- 'यदि सत्राय याजयेयुः' (भावत्) इति श्रुतम्। तत्र योऽयं अस्थियागः संवत्सरे, स किं मृताधिकारिकः, उत जीवदधिकारिक इति चिन्तायां, 'एतया निषादस्थपतिं याजयेत्' इतिवत् अस्थ्नामेवाधिकारप्रतीतेः तेषां च स्वरूपेण तदसंभवेऽपि तदुपलक्षितस्य मृतस्यैवाधिकारः। न च तस्य कर्तृत्वासंभवः, शुक्रन्वारम्भणादौ अस्थ्नामेव प्रयोज्यकर्तृत्वोपपत्तेः। द्रव्यत्यागादौ च जीवद्दशायामेव सर्वैर्मरणसंभावनया स्वेतरेषां अनुमतिदानात् अनुमतिद्वारा कर्तृत्वोपपत्तेः। अन्यथा मृतस्थाने आनीतेन सह सत्रप्रयोगसमाप्तावपि अनुमत्यभावात् तदीयसंसृष्टद्रव्यत्यागानुपपत्तेः। अतो मृतस्यैवाधिकारः। याजनं तु सत्रप्रयोगसमाप्तिकर्तृभिरेव कार्यं 'ततः संवत्सरे' इत्यादिना प्रयोगसमाप्तियाजनयोः समानकर्तृकत्वप्रतीतेः। यदि तु ततःशब्दात् आनन्तर्यस्यैव प्रतीतिः, न तु समानकर्तृकत्वस्यापि इति विभाव्यते, ततः अस्तु अनियमः। अयं च नैमित्तिकोऽपि न सत्राङ्गं विभिन्नाधिकारिकत्वात्, अपि तु मृतस्यैव स्वतन्त्रफलार्थः। अत एव षष्ठोक्तरीत्या मृते सत्रफलासंभवेऽपि एतत्फलोत्पत्तौ बाधकाभाव इत्यवधेयम्। **इति प्राप्ते**, न तावत् अस्थ्नामेव कर्तृत्वं यागानुकूलकृत्याश्रयत्वरूपस्य तस्य तेषु असंभवात्। अतश्च त्वयाऽपि तत्संबन्धिजीवलक्षणतया तस्याधिकारो वाच्यः। ततश्च अश्रुता जीवदवस्थायां निमित्ताभावे एव अनुमतिकल्पना फलकल्पना च इत्याद्यनेकदोषभिया वरं अस्थिपदेन स्वसंबन्धिनो जीवत एव पुरुषान् लक्षयित्वा तेषामधिकारः। **किंच** जीवदवस्थायां अनुमत्याऽपि किं तदनन्तरमेव स्वत्वमुत्पद्यते, उत मरणोत्तरं, नाद्यः जीवदवस्थायां त्यागानापत्तेः। नान्त्यः, अनुमतेः क्षणिकत्वेन मरणोत्तरस्वत्वोत्पादकत्वानुपपत्तेः। अत एव मरणोत्तरकालीनसत्रप्रयोगसमाप्तावपि षष्ठोक्तरीत्या मृतस्य अनधिकारात् तदीयं द्रव्यं पृथक्कृत्यैव स्वीयद्रव्यैरेव जीवद्भिः प्रयोगसमाप्तिः कार्या इति ध्येयम्। अतश्च अनुमतिकल्पनाया अपि अनुपपत्तेः मृतस्य कथमपि अधिकारासंभवेन अस्थिपदेन लक्षणया जीवतामेवाधिकारः अस्थ्युपनहनकर्तृत्वादिकं च शक्यसंबन्धः।

अयं च क्रियमाणसत्राङ्गम्। अयं च अस्थियागो न सत्ररूप एव, सत्यपि प्रत्यभिज्ञाने याजयेयुः इति णिजन्तप्रयोगबलेनैव कर्मभेदावगतेः। सत्ररूपत्वे हि तत्र यजमानाभेदस्यैव सिद्धेः ण्यन्तप्रयोगानुपपत्तिः, विधाने वाक्यभेदात् यजतिचोदनाचोदितत्वात्। अतश्च तद्वशात् कर्मान्तरमेवेदम्। तत्र च अव्यक्तसादृश्यात् अतिदेशेनैव ऋत्विक्प्राप्तेः ण्यन्तार्थः अनुवाद एव। एतद्विचारस्य च अग्रिमाधिकरणोपोद्घातत्वात् **अध्यायसंगतिः**।

**मण्डन**— ' जीवतामस्थियज्ञः स्यात् । '

**शंकर**— ' सत्रे मृतो नाधिकारी । '

**अस्थियज्ञस्य मृताधिकारित्वपक्षे क्रत्वर्थानामनुष्ठानम् ॥**

**क्रत्वर्थं तु क्रियेत, गुणभूतत्वात्। १०।२।१९।५१॥**

**भाष्यम्**— अस्थियज्ञे एव इदं संदिह्यते, ' यजमानेन संमिता औदुम्बरी भवति ' तथा ' शुक्रं यजमानोऽन्वारभते ' इति । अस्थ्नां यागे सति किं एवंजातीयकं कर्तव्यं, नेति । किं प्राप्तम् ? अचेतनानां अस्थ्नां सर्वक्रियासु स्वातन्त्र्यं नास्ति । तस्मात् औदुम्बरीसंमाने शुक्रान्वारम्भणे च नास्थीनि कर्तॄणि भवेयुरिति । **एवं प्राप्ते, ब्रूमः** । क्रत्वर्थे तु क्रियेत गुणभूतत्वात् । यत् क्रत्वर्थं एवंजातीयकं तत् क्रियेत, गुणभूतत्वात् । गुणभूतस्तत्र यजमानः । यजमानपरिमाणसम्मितया औदुम्बर्या प्रयोजनं, यजमानान्वारब्धेन च शुक्रेण । अचेतनेनैव च परिमीयते, शुक्रश्चान्वारभ्यते । तस्मात् एवंजातीयकं कर्तव्यमिति ।

**सोम**— यथा पूर्वत्र अचेतनत्वादिना यागनियमाद्यसंभवः, तथा अत्रापि अचेतनत्वादेव कर्तृत्वासंभवः इत्युत्थितेः **संगतिः** । शुक्राख्यं ग्रहं होमकाले यजमानोऽन्वारभते । **सूत्रार्थस्तु**— क्रत्वर्थं शुक्रान्वारम्भणादिकं क्रियेत, तत्र कर्तृगुणत्वेन संस्कार्यत्वाभावादिति ।

**वि**— ' औदुम्बरीमानशुक्रस्पर्शौ नोतास्ति तद्द्वयम् ।, पूर्ववन्नेति चे, न्मैवमचैतन्येऽपि संभवात् ॥ '

**भाट्ट**— ये तु याजमानाः क्रत्वर्थाः पदार्थाः ते सर्वे अनुमतिद्वारा मृतस्यापि कर्तृत्वसंभवात् अध्वर्युणा कार्या एव प्रधानवत् । **यत्तु मूले** ' शुक्रं यजमानोऽन्वारभते ' ' यजमानसंमितौदुम्बरी भवति ' इत्यादौ यत्र यजमानस्य गुणत्वं तत्र अस्थ्नामेव शुक्रान्वारम्भणादौ अचेतनानामपि ' स्थाली पचति ' इतिवत् अन्वारम्भानुकूलास्थिनिष्ठव्यापाराश्रयतया कर्तृत्वोपपत्तेः अस्थिभिरेव अन्वारम्भादि कार्यं इत्युक्तं, **तत्रेदं वाच्यम्** । प्रकृतौ हि ' शुक्रं यजमानोऽन्वारभते ' इत्यादौ यजमानपदवाच्यो यागकर्ता जीवात्मैव कर्तृत्वेन उच्यते । शरीरस्य तु अवच्छेदकतामात्रं, न कर्तृत्वम् । आत्मनश्च कर्तृत्वं अन्वारम्भानुकूलकृत्याश्रयत्वेनैव । न च मृतस्य तादृशकर्तृत्वसंभवः । जीवच्छरीरावच्छेदेनैव आत्मनि कृत्युत्पत्तिनियमात् । अन्वारम्भानुकूलास्थिनिष्ठव्यापाराश्रयत्वरूपस्य कर्तृत्वस्य प्रकृतौ अनुक्तेः । अतो वरं प्रधाने इव अनुमतिद्वारकं मृतात्मकर्तृत्वं उपपाद्य अध्वर्युणैव ते कार्याः । १८.

**मण्डन**— ' क्रत्वर्थे त्वस्थिकर्तृकम् । '

**शंकर**— ' शुक्रान्वारम्भणादि न ( बाध्यम् ) । ' २०.

**अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानां नानुष्ठानम् ॥**

**काम्यानि तु न विद्यन्ते कामाज्ञानाद्, यथेतरस्यानुच्यमानानि । १०।२।२०।५२ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः । तत्र श्रूयते ' यदि कामयेत वर्षेत् पर्जन्य इति, नीचैः सदो मिनुयात् ' इत्येवमादि । तदिह चोदकेन प्राप्तं काम्यं कर्तव्यं, नेति संदिह्यते । चोदकानुग्रहाय कर्तव्यमिति । **ननु** अस्थीनि न किञ्चित् कामयन्ते, यजमानकामनिमित्तकाश्च एवंजातीयकाः पदार्थाः । **अत्रोच्यते** । नात्र यजमानेन कामयमानेन प्रयोजनम् । एषोऽत्रार्थः नीचैः सदसि मीयमाने वृष्टिर्भवति । तद्यदि वृष्ट्या प्रयोजनं, नीचैः सदो मातव्यं, वृष्टिः प्रयोजनवती भविष्यति इति । **एवं प्राप्ते, ब्रूमः** । काम्यानि एवंजातीयकानि न कर्तव्यानि । कुतः ? यदि यजमानो वृष्टिं कामयेत, नीचैः सदसि मीयमाने वृष्टिर्भवति । यजमानफलदं हि उपग्रहविशेषात् साङ्गं कर्म, नान्येषां कामयितॄणां दातुमर्हतीति । न च वृष्टिर्यजमानस्य फलं इति विज्ञायते । यथा इतरस्य जीवतो यजमानस्य विद्यमानोऽपि कामः अनुच्यमानो न भवति, किमङ्ग पुनः अस्थ्नां, येषां काम एव नास्ति । तस्मात् काम्यानि न कर्तव्यानीति ।

**टुप्**— ननु काम्यानां अतिदेश एव नास्ति ( इत्युक्तं अष्टमे ८।१।१४ ) । सत्यम् । ( किंतु इह ) अस्थीनि यजेरन् इति श्रूयते । तत्र कः पुनर्यागः ( इत्यपेक्षायाम् ), ' स्तोत्रे ' ( आर्भवे स्तूयमाने ) इति लिङ्गात् सोमयागः, न ऐष्टिकः ( लिङ्गविरोधात् ) । स च सोमयागः ( ज्योतिष्टोमः ) उपदेशेन धर्मवान् ।

तस्मात् ( गुणकामानां प्रवृत्तेः ) चिन्ता घटते । अथवा ( अस्थ्नां यज्ञः इति , काम्यानां अतिदेशः इति ) द्वे कृत्वाचिन्ते ।

**सोम**—— वस्तुतस्तु येषु गुणकामेषु प्रकृतिविकृति-साधारण्यप्रापकमस्ति प्रमाणं ' तमुक्थ्येन तमतिरात्रेण ' इति अन्याश्रितगुणकामेष्विव , तदभिप्रायेणायं विचारः संभवति इति ध्येयम् । **सूत्रार्थस्तु**— काम्यानि गुणकामा न विद्यन्ते कामाज्ञानात् यथेतरस्य जीवतोऽनुक्तानि काम्यानि न ज्ञायन्ते तद्वदिति ।

**वि**—— ' वृष्टिकामः सदो नीचैरिति कामोऽस्ति वा न वा ।, विद्यते स्पर्शवत् , कामश्चेतनस्थस्ततो नहि ।।'

**भाट्ट**—— जीवदधिकारपक्षे ये सत्रप्रकरणे एव साङ्ग-सत्रोपरमपर्यन्तव्रताद्याश्रिता गुणकामा विहिताः, ते अङ्गत्वात् अस्थियागस्य तत्करणवेलायामपि कार्याः । मृताधिकारपक्षे तु तस्य अनङ्गत्वात् कथंचिदङ्गत्वेऽपि वा मृतनिष्ठकामनायाः अज्ञानात् नैव गुणकामाः कार्याः । **यत्तु** मूले प्राकृतगुणकामानां 'यदि कामयेत वर्षुकः पर्जन्यः स्यात् ' इत्यादीनां मृताधिकारपक्षे अप्रवृत्तिः इत्युक्तं , **तत्** अष्टमे एव तेषां विकृतौ अप्रवृत्तेरुक्तत्वात् कृत्वाचिन्तया कथने प्रयोजनाभावात् उपेक्षितम् । १९.

**मण्डन**—— ' अस्थियज्ञे न काम्यानि । '

**शंकर**—— ' गुणकामास्तु बाध्याः स्युः । ' २१.

**अस्थियज्ञस्य मृताधिकारित्वपक्षे जप–संस्कार–इष्टीनां लोपः ।।**

**यदि तु वचनात् तेषां जपसंस्कारमर्थलुप्तं, सेष्टि तदर्थत्वात् । १०।२।१८।५० ।।**

**भाष्यम्**—— इह जपसंस्कारं इष्टिश्च चिन्त्यते । तत्र सूत्रेतरार्धेन जपसंस्कारं चिन्त्यते शेषेणापि इष्टिः । जपाः यत्र ' जपति ' इति चोदनाः । संस्काराः ' केश-श्मश्रु वपति ' इत्येवमादयः । किं अस्थ्नां जपसंस्कारं कर्तव्यं , नेति संशयः । ननु नैवास्थ्नां यज्ञः, जीवतामसौ इत्युक्तम् । अत्रोच्यते । कृत्वा चिन्तैषा । अस्थ्नां इति कृत्वा चिन्त्यते । अनेन प्रकारेण पूर्वाधि-करणस्य प्रयोजनं विचार्यते । यदि अस्थ्नां यज्ञः स्यात् किं जपसंस्कारं क्रियते नेति । किं तावत् प्राप्तम् ? ' विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ' ( १०।१।१।१ ) इत्यनेन न्यायेन कर्तव्यमिति । **एवं प्राप्ते , ब्रूमः** । यदि तु वचनात् तेषामस्थ्नां यज्ञः स्यात्, तेषां जपसंस्कारं लुप्तार्थं निवर्तेत । न तैः शक्यं जपितुं नापि केशश्मश्रु वप्तुम् । अशक्यं च चोदको न प्रापयति ।

अथ सूत्रोत्तरार्धं ' सेष्टि तदर्थत्वात् ' इति । दीक्षणी-येष्टिः कर्तव्या , नेति विचारः । किं प्राप्तं ? चोदकानु-ग्रहाय कर्तव्या । **एवं प्राप्ते, 'ब्रूमः** । सह इष्ट्या जपसंस्कारं न कर्तव्यम् । इष्टिः लुप्येत इति । कुतः ? तदर्था हि सा । यजमानो दीक्षां ग्रहीष्यतीति । दीक्षा च व्रतानि नियमाश्च मानसं कर्म । न चैषां मनोऽस्ति । दीक्षाग्रह-णार्था चेष्टिः संयोगात् ज्ञायते ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः ' इति । तस्मात् इष्टिरपि निवर्तेतेति ।

**सोम**—— प्रयोजनचिन्तारूपत्वात् **संगतिः** । इदमधि-करणं पूर्वाधिकरणपूर्वपक्षप्रयोजनविशेषविचारात्मकम् । **सूत्रार्थस्तु**— यदि वचनात् तेषां मृतानामस्थ्नां वा यागः, तदा जपसंस्कारं इष्टिसहितं लुप्तार्थं दीक्षाऽर्थत्वादिति ।

**वि**—— ' अस्थिकर्तृमते चिन्तापञ्चकं स्याज्जपादिकम् । न वा, तच्चोदकात् कुर्युर् , न कुर्वीरन्नसंभवात् ॥ '

**भाट्ट**—— जीवदधिकारपक्षे न किंचित् बाधनीयम् । मृताधिकारे तु भवति केषां चित् बाधः इति पूर्वाधि-करण– ( पूर्वपक्ष– ) प्रयोजनतया अध्यायसंगतिरुच्यते । तत्र ये कर्तृसंस्काराः ये वा फलिसंस्काराः, ते मृतस्य अनु-मतिद्वारा कर्तृत्वेन फलित्वेन च अवश्यं भवन्त्येव । तत्रापि ये स्वयंकर्तृका मन्त्रप्रोक्षणादयः, तेषां शरीर-शुद्ध्यर्थत्वेन अस्थिष्वपि करणम् । कर्तृत्वं परं अनु-मतिसत्त्वात् अध्वर्योरेव । ये तु अध्वर्युकर्तृकाः तदीय-शरीरसंस्कारकाः अभ्यञ्जनादयः ते सुतरां भवन्त्येव । ये तु वपनादयः शरीरावयवविशेषसाध्याः तत्संस्कारका वा , तेषां केशादितदवयवाभावे लोप एव । **यत्तु** अत्र सूत्रादौ जपलोपकथनं , तत् न आरादुपकारकजपविषयं , तत्र अनुमतिद्वारा प्रधाने इव अध्वर्युकर्तृकत्वेऽपि मृत-

कर्तृकत्वोपपत्तेः। अपि तु वाक्-संस्कारकजपविषयम्। एवं दीक्षणीयाया अपि दीक्षोत्पत्त्यर्थत्वात्, दीक्षायाश्च यमनियमपरिग्रहानुकूलदृष्टरूपत्वात् यमनियमयोश्च मन-आदिसाध्ययोः तत्प्रणिधानार्थयोश्च तदभावे लोपात् दीक्षणीयादेरपि लोपः। १७.

**मण्डन**— 'न दीक्षणीयाऽप्यस्थ्नां चेत्।'

**शंकर**— 'तथात्वेऽपि न दीक्षितः।' १८. 'जपश्च वपनं बाध्यम्।' १९.

**अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागस्य नानुष्ठानम्॥**

**ईहाऽर्थाश्चाभावात् सूक्तवाकवत्। १०।२।२१। ५३॥**

**भाष्यम्**— सन्ति अस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि प्रायणीयाऽऽदीनि, तेषु चोदकप्राप्तः सूक्तवाकः। तत्रेमानि 'अयं यजमान आयुराशास्ते, सुप्रजास्त्वमाशास्ते, विश्वं प्रियमाशास्ते, यदनेन हविषाऽऽशास्ते, तदश्यात्, तदृध्यात्, तदस्मै देवा रासन्ताम्' इति। किमिमानि कर्तव्यानि, न कर्तव्यानि इत्येषोऽर्थः संदिह्यते। किं तावत् प्राप्तम्? ईहाऽर्था ये कामाः सूक्तवाके श्रूयन्ते, तेऽपि न स्युः। किं कारणम्? अभावात् कामयितुः। नहि अस्थीनि कामयन्ते इत्येतदुक्तम्। तस्मान्न कर्तव्यानि। सूक्तवाके इति सूत्रयितव्ये सूक्तवाकवत् इति सूत्रितम्। कथमेवं वर्ण्यते इति। उच्यते। ईहाऽर्थाः सूक्तवाकार्हाः। अर्हे वतिर्द्रष्टव्यः यथा 'छन्दोव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात्' (१०।५।२६।८८) इति। तस्मात् न सूत्रोपालम्भः।

**स्युर्वाऽर्थवादत्वात्। ५४॥**

**भाष्यम्**— न चैतदस्ति, यदुक्तं भवता अस्थ्नां ईहाऽर्थाः कामा न कर्तव्या इति। स्युर्वा अर्थवादत्वात्। स्युर्वा एते कामाः। कस्मात्? अर्थवादत्वात्। अर्थवादा एते 'आयुराशास्ते सुप्रजास्त्वमाशास्ते' इति। नैते विधयः, अर्थवादा एते। अर्थवादाच्च तेषां क्रियां चोदकः प्रापयति। एवं चोदकानुग्रहो भवति। तस्मात् पश्यामः ईहाऽर्थाः कामाः कर्तव्या इति।

**नेच्छाऽभिधानात् तदभावादितरस्मिन्। ५५॥**

**भाष्यम्**— न चैतदस्ति, यदुक्तं भवता, ईहाऽर्थाः कामाः कर्तव्या इति। कस्मात्? इच्छाऽभिधानात्। इच्छाऽभिधाना एते कामाः 'आयुराशास्ते सुप्रजास्त्वमाशास्ते दिव्यं धामाशास्ते' इति। इच्छायामुत्पन्नायां प्रयुज्यन्ते। यः एतान् कामानिच्छेत्, स चेह यजमानो नास्ति। अचेतनावन्ति एतान्यस्थीनि। अस्थ्नामिच्छा न विद्यते। तदभावात् अस्थ्नामिच्छाया अभावात् इतरस्मिन् जीवति एते कामा भविष्यन्ति, नास्थिषु। तस्मात् पश्यामः अस्थ्नां ईहाऽर्थाः कामा न कर्तव्या इति। ननु एते अर्थवादा इत्युक्तम्। अत्रोच्यते। नैते अर्थवादाः, विधय एते। एवं चेत् परिहृतमेतद्भवति। तस्मात् यदुक्तं भवता, अस्थ्नां ईहाऽर्थाः कामाः कर्तव्या इति, नैतदेवम्। न कर्तव्याः। नेच्छाऽभिधानात् तदभावादितरस्मिन्।

**सोम**—काम्यत्वात् गुणकामानां अप्रवृत्तावपि नित्यत्वात् सूक्तवाकप्रवृत्तौ तदेकवाक्यताऽऽपन्नानि आयुरादीनि पदान्यपि प्रवर्तेरन् इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**— सूक्तवाकवत् इति 'तदर्हम्' इत्यर्हार्थे वतिः। तथा च सूक्तवाकार्था ईहाऽर्था ये शब्दाः 'आयुराशास्ते' इत्यादयः, ते लुप्तार्थत्वान्निवर्तेरन् इति।

**वि**—'सूक्तवाकाशासनं स्यान्न वा, नित्यप्रवृत्तितः। स्या, न्मैवं फलनिर्देशात्, फलेच्छाऽस्थ्नां न युज्यते॥'

**भाट्ट**— सूक्तवाकगतानां आयुरादिफलानां अकाम्यमानानामपि क्रतुप्रयुक्तप्रहरणजन्यत्वेन आनुषङ्गिकत्वात्। इतरथा प्रकृतावेव कामनाऽभावे तत्पदपाठानापत्तेः मृताधिकारपक्षेऽपि आनुषङ्गिकतया जननोपपत्तेः प्रयोक्तव्यान्येव तत्पदानि। **इति प्राप्ते**, असत्यपि तत्कामनाया अनुष्ठापकत्वे स्वरूपेण तस्याः आशास्ते इत्यनेन प्रकाशिततया अपेक्षितत्वात्, मृतस्य च एतत्प्रस्तरप्रहरणजन्यफलेच्छाया बाधितत्वात्, न तत्पदपाठः। न चैवं प्रकृतावपि यस्य न तत्फलेच्छा तत्र तत्पदपाठानापत्तिः,

अवश्यकर्तव्ये प्रहरणे आनुषङ्गिकफलेच्छाऽभावस्य चेतने असंभवात् । अतश्च मृतस्येच्छायाः असंभवात् इच्छाविषयीभूतफलाभावेन न तत्पदपाठः ।

**मण्डन**—'सूक्तवागाशिषोऽत्र न ।'

**शंकर**—'सूक्तवाकफलानि च ( बाध्यानि ) ।'

**⌛ अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया अनुष्ठीयमानानां गुणकामानां नानुष्ठानम् ॥**

**स्युर्वा होतृकामाः । १०।२।२२।५६ ॥**

**भाष्यम्**— द्वादशाहप्रभृतीनि सत्राण्युदाहरणम् । तानि प्रकृत्य श्रूयते 'ततः संवत्सरेऽस्थीनि याजयेयुः' इति । चोदकप्राप्तानि दीक्षाप्रभृतीनि कर्माणि श्रूयन्ते । सन्ति च प्रकृतौ होतृकामाः 'यं कामयेत अपशुमान् स्यादिति, पराचीं तस्येडामुपह्वयेत अपशुमानेव भवति' 'यं कामयेत प्रमायुकः स्यादिति, तस्योचैस्तरां वषट् कुर्यात्' 'यं कामयेत पापीयान् स्यादिति, नीचैस्तरां तस्य याज्याया वषट् कुर्यात्' 'यं कामयेत वर्षीयान् स्यादिति, उच्चैस्तरां तस्य याज्याया वषट् कुर्यात्' इत्येवम् । तत्र संशयः क्रियते किं अस्थ्नां होतृकामाः कर्तव्याः, अथवा न कर्तव्या इति । ननु जीवतां यज्ञ इत्युक्तम् । अत्रोच्यते, अस्थ्नां यज्ञ इत्येवं कृत्वा चिन्ता प्रवर्तते । तत्र सूत्रेणैवोपक्रमः क्रियते । स्युर्होतृकामाः । एते अस्थ्नां कर्तव्याः स्युः । कस्मात् ? चोदकः प्रापयति । एवं चोदकानुग्रहो भविष्यति । तस्मात् पश्यामः होतृकामाः कर्तव्या इति ।

**न, तदाशीष्ट्वात् । ५७ ॥**

**भाष्यम्**— न चैतदस्ति यदुक्तं भवता होतृकामाः कर्तव्या इति । न कर्तव्याः । कस्मात् ? तदाशीष्ट्वात् । तदाशीरेषा भवति, यजमानाशीरेषा । 'यां वै कां चन यज्ञे ऋत्विज आशिषमाशासते, सा सर्वा यजमानस्य' इति यजमानविषयतां आशिषो दर्शयति । स चेह यजमानो नास्ति । अचेतनान्यस्थीनि । अस्थ्नां कामयितुं सामर्थ्यं नास्ति । अर्थी समर्थश्च अधिक्रियते इत्युक्तं 'कर्तुर्वा श्रुतिसंयोगाद् विधिः कार्त्स्न्येन गम्यते' इति ( ६।१।२।५ ) । तस्मात् पश्यामः अस्थ्नां होतृकामाः न कर्तव्या इति ।

क्षीणा क्त्वाचिन्ता । प्रयोजनं नोच्यते । ( क्त्वाचिन्तायां तस्यावक्तव्यत्वात् ) ।

**सोम**— मृतस्य फलसाधके कर्मणि होतुः कामनासंभवात् होतृकामनाया एव श्रुतत्वेन तामादायैव यजमानस्य फलसंभवात् इति पूर्ववैषम्यात् **संगतिः** ।

**वि**—'होतृकामो भवेन्नो वा, होतुर्जीवनतो भवेत्।, यजमानेष्टमेवासौ कामयेत्तेन नास्त्यसौ ॥'

तदेतदधिकरणपञ्चकं ( १०।२।१८–२२ ) जीवतामयं यागः इत्यस्मिन् सिद्धान्तिपक्षे विरुद्धं, अचेतनमुपजीव्य प्रवृत्तत्वात् । तस्मात् सिद्धान्ते चोदकप्राप्तानां यथोक्तधर्माणां नास्ति बाधः ।

**भाट्ट**—'यं कामयेत पापीयान् स्यादिति नीचैस्तरां तस्य याज्यया ( याज्यया इत्येव सर्वत्र पाठः । परंतु 'याज्यायाः' इति पञ्चम्यन्तपाठः एव युक्तः स्यात् ) वषट् कुर्यात्' 'यं कामयेत वसीयान् स्यादिति उच्चैस्तस्य याज्यया ( याज्यायाः ) वषट् कुर्यात्' इत्यादि वषट्काराश्रितानां गुणकामानां होतृकामनयैव अनुष्ठानात् यजमाननिष्ठकामनाऽभावेऽपि तन्निष्ठफलोत्पत्त्यर्थं गुणे प्रवृत्त्युपपत्तेः मृताधिकारपक्षेऽपि तेषां करणम् । न च विकृतौ गुणकामानां अप्रवृत्तिः, वषट्कारस्य 'एष वै सप्तदशः प्रजापतिर्यज्ञे अन्वायत्तः' इत्यनारभ्याधीतवचने साक्षात् यज्ञोद्देशेन विधानात् पर्णतान्यायाभावेन ( ३।६।१ ) प्रकृतिविकृतिसाधारण्येन उपदिष्टतया विकृतावपि ईदृशगुणकामप्राप्त्युपपत्तेः । **इति प्राप्ते**, न तावदिदं फलं ऋत्विग्गतं, 'यां वै कां चन ऋत्विज आशिषमाशासते यजमानस्यैव तदाशासते' इत्यनेन यजमाननिष्ठत्वस्यैव तृतीये स्थापितत्वात् । न च एतदाशासनमात्रेण यजमाने फलोत्पत्तिः, प्रकृतौ ऋत्विगिच्छायां सत्यामपि स्वेच्छायामसत्यां यजमानेन गुणविषये होतुरप्रवर्तनात् यजमानेच्छाया एव एतादृशगुणविषये अनुष्ठापकत्वावगतेः न मृताधिकारपक्षे तेषां करणम् । तदेतानि सर्वाण्यधिकरणानि मृतस्य वा अधिकारो जीवतां वा इत्येतदधिकरणप्रयोजनकथनार्थानि ।

**मण्डन**— ' न होतृकामो यज्ञेऽस्थ्नाम् । '
**शंकर**— ' बाध्याः स्युर्होतृकामाश्च । ' २३.

**अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् । १०।२।१७।४८ ॥**

' यदि सत्राय संदीक्षितानां ( कश्चित् ) प्रमीयेत , तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य , योऽस्य नेदिष्ठः, तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् । ततः संवत्सरे ( पूर्णे सति ) अस्थीनि याजयेयुः ' इति अस्थियज्ञः अस्थियजमानको यज्ञ उक्तः । सः अस्थियज्ञः इतरेषां मृतभिन्नानां जीवतामेव स्यात्, न अस्थ्नाम् । जीवतामविप्रतिषेधात् त्यागविरोधाभावात् , अस्थ्नां च विप्रतिषेधात् त्यागविरोधात् । त्यागो नाम मनसा क्रियते , न च अस्थ्नामस्ति मनः । न च अस्थ्नां द्रव्यं स्वं संभवति । तस्मात् जीवतां यज्ञः इति सिद्धान्तः ।

**यावदुक्तमुपयोगः स्यात् । ४९ ॥**

ननु स्तोत्रे ' अस्थिकुम्भमुपदधाति ' इति अस्थ्नां याजमानं दर्शयति । तस्मात् अस्थ्नामपि कर्तृत्वं स्यात् । अत्रोच्यते । नैतत् याजमानम् । नहि अस्थीनि यजन्ते इत्युक्तम् । एवं सति यावदुक्तं यावति कर्मणि वचनेन यावत् अस्थ्नामुक्तं, तावानेव वचनबलात् उपयोगः विनियोगः स्यात् । न सर्वत्र तथा कल्पना साध्वी । तस्माज्जीवतामेव संवत्सरोत्तरं यज्ञः इति सिद्धान्तः । **के.**

**अस्थूलारुन्धतीन्यायः** । यत्रातिसूक्ष्मार्थज्ञापनाय तत्क्रमेण तत्समीपः समीपतरः समीपतमश्चार्थ उच्यते तत्रायं न्यायोऽवतरति । यथा अस्तमिते ध्रुवमरुन्धतीं च दर्शयतीति विधिद्वारा वध्वास्तद्दर्शने प्राप्ते, अतिसूक्ष्माया अरुन्धत्याः झटिति प्रदर्शयितुमशक्यतया सप्तर्षिसंज्ञिताः समीपतराः तत्समीपतमं वसिष्ठं तत्त्वेनोपदिश्य तामेव तत्तया बोधयन्तीति । तथा गृहादीन् आत्मानमिव मन्यमानाः प्राकृताः गृहे नष्टे नष्टा वयमिति क्रोशन्तो दृश्यन्ते, तान् वारयन्ती ' आत्मा वै जायते पुत्रः' ' स एष पुरुषोऽन्नरसमयः ' ' अन्योऽन्तर आत्मा प्राणमयः' 'अन्योऽन्तर आत्मा मनोमयः' ' अन्योऽन्तर आत्मा विज्ञानमयः ' ' अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यादिका श्रुतिः पुत्राद्यानन्दमयान्तानां अनात्मत्वं दर्शयन्ती निर्विशेषात्मतत्त्वमेव आत्मत्वेन दर्शयतीति भावः क्व चिच्च स्थूलाऽरुन्धतीति विना अकारं न्यायस्वरूपमुक्तम् । केन चित् अरुन्धतीप्रदर्शनन्यायत्वेनोदाह्रियते अयमिति । **साहस्री. १४.**

* **' अस्नाताशी मलं भुङ्क्ते '** इति यदपि स्मरणं भोजनादिपूर्वभाविनियमरूपेण, तदपि तदर्थस्यैव नियमादृष्टं पुरुषगाम्येव करोति । **वा.** ३।४।५।१४.

**अस्नेहदीपन्यायः** । स्नेहः तैलम् । दीपपात्रस्थे तैले समाप्ते दीपज्योतिरपि विनष्टा भवति । एवं यत्र कारणनाशे कार्यनाशो भवति इति प्रदर्श्यते तत्रायं न्याय उदाह्रियते । **संग्रहः.**

* **अस्मत्पदस्य शक्तिः** । ' युष्मद्–अस्मद् ' इति बिन्दौ द्रष्टव्यम् । **के.**

* **अस्मरणमपि** प्रयोजनं भवतीत्युक्तम् । **भा.** ५।१।१।१ पृ. १२८९.

* **अस्मे इन्द्राबृहस्पती** ( तैसं ३।३।११।३ ) इत्यादिकं इन्द्रबृहस्पतिदेवताकं याज्यानुवाक्यायुगलं आम्नातं द्वितीयम् । तच्च लिङ्गेनैव विनियोक्तव्यम् । **वि.** ३।२।७

* **अस्यन्तः** मन्त्रः ' मेधोऽसि ' इति । **बाल.** पृ. ५९.

* **अहंकारममकारौ** अनात्मनि आत्माभिमानौ इति यदुक्तं , तत् मृदितकषायाणामेवैतत् कथनीयं , न कर्मसङ्गिनां इत्युपरम्यते । आह च भगवान् द्वैपायनः ' न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ' ( भगी. ३।२६ ) इति रहस्याधिकारे । तस्मान्न विवृतमत्र भाष्यकारेण भगवता वचनान्तरानुरोधात्, नाज्ञानात् । **बृहती.** पृ. १८७.

* **अहंप्रत्ययस्य** स्वभावोऽयं यत् ज्ञातृविषयत्वं, सर्वदैव तत्र ज्ञातुरवभासात् । न च देहस्य ज्ञातृत्वं संभवति । **रत्नाकरः** आत्मवादे १२६. * **अहंप्रत्ययवेद्यः** शरीरातिरिक्त आत्मा । **मणि.** पृ. ५४.

* **अहःशब्दः** अहोरात्रवचनः, रात्रिशब्दोऽपि । यथा द्वादशाहः द्विरात्रः इति । **भा.** ८।१।१०।१७.
* अहःशब्दः उपांशुग्रहाभ्यासादारभ्य हारियोजनयागा-

भ्यासपर्यन्ते प्रयोगे लक्षणया याज्ञिकानां प्रसिद्धः । **भाट्ट.** ९।१।९. * अहःशब्दः द्वादशाहपदान्तर्गतः षष्टिघटिकाऽऽत्मकदिनपरः। **वि.** ८।१।१०. * अहःशब्दः प्रकृतात् उपांश्वादेर्हारियोजनपर्यन्तस्य यागस्य परिच्छेदको दृष्टः, तेन तत्परिच्छेदद्वारेण कर्मणि वर्तते । इहापि द्वादशाहे प्रथममहः, द्वितीयमहः इत्येवं श्रूयते । सोऽयमहःशब्दः श्रूयमाणः कर्म लक्षयति । **टुप्.** ११।४।५।१५.

* **अहतं वासः** नाम ईषद्धौतं नवं श्वेतं सदशं अपाटितं वस्त्रम् । **के.** * 'अहतं वासः परिधत्ते' इति अग्निष्टोमे दीक्षायाम् । महाव्रते च अहतेन वाससा परिधानार्थेन तार्प्यदर्भमययोः उपरिधारणार्थयोः समुच्चयः कार्यभेदात् । **भा.** १०।४।८।१३-१५. * 'अहतं वासः परिधत्ते' इति कौपीनाच्छादने इव आचारप्राप्तोपरिभागाच्छादनेऽपि संभवति । **भाट्ट.** १०।४।८. * **अहतेन वाससा** यजमानं पत्नीं पुत्रान् भ्रातृंश्च आच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनिबध्य अग्नीषोमीये तन्त्रे प्रक्रान्ते वैसर्जनहोमं जुहोति । **वि.** १।३।३, * अहतेन वाससा वेष्टनं ज्योतिष्टोमे सदोमण्डपे ओदुम्बर्याः शाखायाः क्रियते। १।३।२. * **अहतवाससः** वस्तत्वचश्च समुच्चयः अष्टरात्रे । वस्तत्वचः उपरिधारणार्थत्वात्, अहतवाससश्च कौपीनाच्छादनार्थत्वात् । **भा.** १२।३।१।१-२.

* '**अहरहर्नयमानो** गामश्वं पुरुषं च' इत्यादौ समुच्चयः चकारार्थः ( चिन्त्यमिदं 'गामश्वं पुरुषं जगत्' इत्येव पाठोऽत्र, चकारो नास्त्येवेति ) । **भाट्ट.** ६।१।५.

* '**अहरहर्युनक्ति**' 'अहरहर्विमुञ्चति' इति द्वादशाहे प्रात्यहिकयोग- ( विमोक - ) दर्शनं प्रधानमात्रार्थत्वे तद्भेदेन भेदोपपत्तेरुपपन्नं इति भाष्यमतम् । साङ्गप्रधानार्थत्वं इति वार्तिककारः । **भाट्ट.** ११।३।९.

* **अहर्गणस्य** द्वादशाहस्य समूढस्य व्यूढो द्वादशाहो विकारः । **भा.** १०।५।२४।७९-८२. * **अहर्गणे** अग्निरशने पक्षयूपरशनाश्च तन्त्रेणोपकुर्वन्ति । **संकर्ष.** १।४।२१.

**अहर्गणे अन्त्यदिने एव कृष्णविषाणायाः चात्वाले प्रासनम् ॥**

**अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाऽहनि विकल्पः स्यात् । ११।३।६।१५ ॥**

**भाष्यम्**— ज्योतिष्टोमे दीक्षितव्रतमाम्नातं, 'कृष्णविषाणया कण्डूयति' इति । तत्रैव च पुनः श्रुतं, 'नीतासु चात्वाले कृष्णविषाणां प्रास्यति' इति । तदुभयं द्वादशाहे चोदकेन प्राप्तम् । तत्र विचार्यते किमन्त्ये प्रथमे वाऽहनि कृष्णविषाणायाः प्रासनं कर्तव्यं, अथवा अन्त्ये एवेति । किं प्राप्तम् ? विकल्पः कर्तव्यः । अन्त्ये प्रथमे वाऽहनि प्रासनम् । कुतः । धर्मविप्रतिषेधात् । यदि प्रथमेऽहनि करिष्यते, उत्तरेष्वहःसु प्राक् दक्षिणानयनात् ये पदार्थास्तेषां विषाणाकण्डूयनं धर्मः बाध्येत । अथान्त्ये, ततः पूर्वेषामह्नां दक्षिणानयनादूर्ध्वं ये पदार्थास्तेषां हस्तकण्डूयनं धर्मः, स बाध्येत । स एष धर्मविप्रतिषेधः । तस्माद्विकल्पः ।

**पाणेस्त्वश्रुतिभूतत्वाद् विषाणानियमः स्यात्, प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् । १६ ॥**

**भाष्यम्**—नैतदेवं, स्याद्विकल्पः इति । किं तर्हि ? विषाणानियमः स्यात् । विषाणाकण्डूयनं सर्वस्मिन्नहर्गणे नियम्येत । अन्त्येऽहनि प्रासनं स्यात् । कस्मात् ? प्रातःसवनमध्यत्वात् । बहूनि प्रातःसवनानि अस्याहर्गणस्य मध्ये । तेषां विषाणाकण्डूयनं धर्मोऽनुगृहीतो भविष्यति । नन्वितरयोः सवनयोर्हस्तकण्डूयनं धर्मः, स बाधिष्यते । नैष दोषः । नैवं श्रूयते, पाणिना कण्डूयितव्यमिति । अर्थात् प्रत्यासत्त्या क्रियते । यश्चार्थादर्थो न स चोदनाऽर्थः । एवमप्युत्तरयोः प्रत्यासत्त्या हस्तः एव प्राप्नोतीति । अत्र ब्रूमः । शिष्टे चाभिप्रवृत्तत्वात् । प्रातःसवनशेषे कण्डूयनस्य शिष्टत्वात् उत्तरयोरपि विषाणाकण्डूयनमेव नियम्येत, अभिप्रवृत्तत्वात् । अभिप्रवृत्तस्य नियमस्योत्सर्गे आचारविरोधः स्यात् । अथ प्रकृतौ कथमुत्सर्गः ? विषाणाया अभावात् । अन्या विषाणा कस्मात् कडूयनार्थेन नोत्पाद्यते ? पूर्वविषाणायाः प्रासनं धारणयत्नविमोकार्थम् । तद्यदि अन्या विषाणा आनीयेत, तस्या धारणमदृष्टार्थम् । तस्या अदृष्टोऽर्थः कल्पयितव्यः

स्यात् । इह तूत्तरप्रातःसवने धारयितव्या विषाणा । तस्यां सत्यां नास्ति नियमोत्सर्गे कारणम् । तस्मादाद्यस्याह्नो दक्षिणानयनकालादूर्ध्वं विषाणाकण्डूयनमेव स्यात् ।

**सोम—** स्वरोरुपादानस्य अर्थात् शास्त्रार्थत्ववत् पाणिकण्डूयनस्यापि तथात्वम् । ततश्च तदनुग्रहाय विकल्पः इत्युत्थितेः ( दृष्टान्त- ) **संगतिः** ।

**वि—** ' अहर्गणे विषाणायास्त्यागोऽह्नोः किं विकल्प्यते । किंवा नियम्यतेऽन्त्येऽह्नि, स्यादाद्यो बाधसाम्यतः ( हस्तेन कण्डूयनस्य विषाणया कण्डूयनस्य च बाधस्य साम्यात् ) ॥ , कण्डूयनं न हस्तेन श्रुतमर्थात्तु तद् भवेत् । श्रुताद् बाधाद् वरं तस्य बाधोऽतोऽन्त्ये नियम्यताम् ॥ '

**भाट्ट—** ज्योतिष्टोमे कण्डूयने विनियुक्तायाः कृष्णविषाणायाः नीतासु दक्षिणासु चात्वालप्रासनरूपा प्रतिपत्तिः श्रुता । सा अहर्गणे प्राप्ता , अहीने दक्षिणादानस्य प्रात्यहिकत्वात्, सत्रेऽपि तदुपलक्षितकालस्य तथात्वात् । प्रत्यहं प्राप्ताऽपि कृष्णविषाणा एकत्वात् यस्मिन्कस्मिंश्चिद्दिने कार्या । **इति प्राप्ते**, अन्त्येऽहन्येव स्यात्, अन्यथा तदुत्तराहर्वर्तिदक्षिणादानकालप्राग्वर्तिपदार्थानां कृष्णविषाणाकण्डूयनरूपधर्मबाधापत्तेः । **न च** तत्रापि पूर्वाहर्वर्तिदक्षिणादानोत्तरभाविपदार्थेषु पाणिकण्डूयनरूपधर्मबाधापत्तिः, कृष्णविषाणासत्त्वे पाणिकण्डूयने तस्याः अदृष्टार्थत्वापत्तेरिति **वाच्यम्** । कण्डूयनस्य तत्र पाणेर्वा रागतः प्राप्तत्वेन तत्र विध्यभावात् । वस्तुतस्तु अवयवशः प्रत्यहं दानेऽपि क्रतुदक्षिणाया अन्ते एव समाप्तेस्तदुत्तरकालीनस्य प्रासनस्य प्राप्तेर्नानियमप्रसक्तिः । द्वितीयादिदिनेषु कृष्णविषाणाकण्डूयनस्यावृत्तेरध्यायोपयोगिता ।

**मण्डन—** ' प्रास्येदन्त्याहे विषाणां गणस्य । '

**शंकर—** ' विषाणाया अहर्गणे ।' तन्त्रत्वं इत्यनुवर्तते ।

* अहर्गणे अष्टरात्रे वर्तमाने विश्वजिति सर्वस्वदानम् । **भा.** ६।७।८।१४–१७. * अहर्गणे उद्गात्रपच्छेदवत एवाहः आवृत्तिः, न सर्वस्याहर्गणस्य । ६।५।२१।५६.

## ⌛ अहर्गणे उपसत्कालीनं सुब्रह्मण्याऽऽह्वानं तन्त्रम् ॥

**सुब्रह्मण्या तु तन्त्रं स्यात् , दीक्षावदन्यकालत्वात् । ११।३।१०।२३ ॥**

**भाष्यम्—** द्वादशाहे उपसत्काले सुब्रह्मण्याऽऽह्वानं प्रति चिन्त्यते किं भेदेन कर्तव्यमथवा तन्त्रेणेति । कर्मभेदाद्भेदेन । **इति प्राप्ते , उच्यते** । सुब्रह्मण्या तु तन्त्रं स्यात् । कुतः ? अन्यकालत्वात् । कर्मप्रयोगात् पृथक्कालेयम् । तत्र न गृह्यते विशेषः । अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । दीक्षावत् । तद्यथा दीक्षा पृथक्कालत्वात् तन्त्रं भवति , तथेयमपि ।

**शा—** ज्योतिष्टोमे अस्ति उपसत्कालीनं सुब्रह्मण्याऽऽह्वानम् । तदहर्गणेषु भिद्यते तन्त्रं वेति संशये प्रधानभेदात् भेदः ( इति पूर्वः पक्षः ) । अकर्मकालत्वात्तु तन्त्रम् । नहि इदं प्रधानकालं , उपसत्कालं तु सकृदनुष्ठितमेव सर्वेषामुपकरोति इति तन्त्रम् । ( इति सिद्धान्तः ) ।

**सोम—** अहर्भेदात् योगविमोकभेदवत् सुब्रह्मण्याऽऽह्वानस्यापि भेदः इत्युत्थितेः **संगतिः** । अकर्मकालत्वेन अगृह्यमाणविशेषत्वात् दीक्षाकालकर्तव्ययूपच्छेदनवत् तन्त्रत्वं सिद्धमपि उत्तरविवक्षया प्राप्यते इति **तन्त्ररत्ने** । **ननु** ' त्र्यहे सुत्यामागच्छ ' ' द्व्यहे सुत्यामागच्छ ' ' श्वः सुत्यामागच्छ ' इति प्रकृतौ दर्शनेन इहापि ' द्वादशाहे सुत्यामागच्छ ' इत्यादिप्रकारेण कर्तव्यत्वात् ' द्वादशाहे ' इत्युक्ते च प्रथमस्यैवाह्नो निर्देशेन तदर्थमिदं इति विशेषग्रहणात् तत्तदहरर्थं आवृत्तिः कर्तव्या, इति विशेषाशङ्कायां प्रकृतौ त्र्यहे द्व्यहे इत्यादेः सुत्याकालोपलक्षणमात्रे तात्पर्यं न तु त्र्यहत्वादौ , इति ' द्वादशाहे ' इत्यस्यापि सुत्याकालमात्रोपलक्षकतया विवक्षितार्थत्वाभावात् सर्वेषां चाह्नां सुत्याकालत्वाविशेषात् तन्त्रं इति व्युत्पादनार्थमिदमस्तु , न तु प्राप्तिमात्रार्थं **इति चेत्**, त्र्यहे द्व्यहे इत्यादेः सुत्याकालोपलक्षणत्वस्य अग्रिमपादे ( ११।४।५ ) वक्ष्यमाणत्वेन तेनैव गतत्वात् ।

**वि—** ' उपसत्कालसुब्रह्मण्यागणो भिद्यते न वा । , प्रधानभेदाद्भेदः स्यात् , कालभेदान्न भिद्यते ॥ '

**भाट्ट**— ज्योतिष्टोमे उपसत्काले सुब्रह्मण्याऽऽह्वानं, तदहर्गणेऽतिदिष्टं सुत्याभिन्नकालीनदैक्षाद्यङ्गवत् तन्त्रेणैव सर्वोपकारकं अगृह्यमाणविशेषत्वात्। न च 'चतुरहे सुत्यामागच्छ' इत्यतिदिष्टपदवशेनावृत्तिः। तस्य तन्त्रतयाऽप्युपपत्तेर्वक्ष्यमाणत्वात्। इदं च संप्रतिपन्नदेवताकसुब्रह्मण्यास्थले द्वादशाहादौ। यत्र तु केषु चिदहःसु आग्नेयी सुब्रह्मण्या, केषु चिदैन्द्री इति विभिन्नदेवताकत्वं, तत्र भेद एवेति वक्ष्यते।

**मण्डन**— 'सुब्रह्मण्याऽहर्गणे तन्त्रमादौ।'

**शंकर**— 'गणेष्वेकोपसत्सु या।'

**अहर्गणे च तद्धर्मः स्यात्, सर्वेषामविशेषात्।** ६।७।८।१४॥

अत्र तद्धर्मः इति बृ. ल. बिबलकरीयभाष्यलिखितेषु पाठः, अन्यत्र तु य-पुस्तकादौ तद्धर्मा इत्येव पाठः। 'य एव प्रकृतौ विश्वजितो धर्मः, स एव चास्य चोदकेन भविष्यति' इति भाष्यं तु न बहुव्रीहिमेव निश्चाययति। प्रत्युत 'प्रकृतौ विश्वजितो धर्मः' इति पदानि तत्पुरुषपक्षे एव स्वारसिकानि। बहुव्रीहेश्च तत्पुरुषो लघीयान्। इति 'तद्धर्मः स्यात्' इति पाठ एव स्वीक्रियते। अथ सूत्रव्याख्या। अहर्गणे अष्टरात्रे वर्तमाने विश्वजिति, तद्धर्मः तस्य एकाहकाण्डपठितस्य विश्वजितो धर्मः सर्वस्वदानादिरेव स्यात्। सर्वेषां विश्वजितां अविशेषात् समानत्वात् तुल्यधर्मत्वात्। तस्मात् अष्टरात्रगते विश्वजित्यपि सर्वस्वं देयम्। 'सर्वेषां दक्षिणाऽऽदीनां धर्माणामविशेषात्' इति **कुतूहलम्**। सर्वेषां विश्वजितां इति तु **भाष्यम्**। तद्धर्मा इति अनेकत्र पाठः। तत्पक्षे अहर्गणे वर्तमानो विश्वजित् तद्धर्मा स्यात्। एकाहकाण्डपठितस्य विश्वजितो धर्म एव धर्मो यस्य स तद्धर्मा इति बहुव्रीहिः कर्तव्यः। तत्र अनिच् समासान्तः। अन्यपक्षे तु तत्पुरुषत्वात् न अनिच्-प्रत्ययः। चकारस्तु एकाहकाण्डपठितस्य दृष्टान्तत्वार्थः।

**द्वादशशतं वा, प्रकृतिवत्।१५॥**

अष्टरात्रगते विश्वजित्यपि सर्वस्वमेव देयं इति सिद्धान्तं सूत्रेणोक्तं वाशब्देन निरस्यन् पूर्वपक्षी आह। अष्टरात्रगते विश्वजिति द्वादशशतं देयम्। प्रकृतिवत् यथा प्रकृतौ ज्योतिष्टोमे तद्वत्।

**अतद्गुणत्वात्तु नैवं स्यात्।१६॥**

अहर्गणगते विश्वजिति प्रकृतिवत् द्वादशशतदक्षिणा स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं निरस्यति। पूर्वपक्षोक्तवैलक्षण्यार्थं तुशब्दः। एवं न स्यात्, प्रकृतिवत् द्वादशशतं दक्षिणा न स्यात्। द्वादशशतस्य अतद्गुणत्वात्। तस्य विश्वजितः गुणः तद्गुणः, न तद्गुणः अतद्गुणः। द्वादशशतदक्षिणा तद्गुणो विश्वजिद्गुणो न भवति। अतद्गुणत्वात् एवं न स्यात्। किंतु सर्वस्वदानमेव विश्वजिद्गुणः। एकाहे विश्वजिति सर्वस्वमेव दक्षिणा विहिता, सा विश्वजितो धर्मः। अष्टरात्रगतो विश्वजिच्च एकाहस्यैव विकृतिः, इति तस्यापि सर्वस्वदानमेव धर्मो न द्वादशशतम्।

**लिङ्गदर्शनाच्च।१७॥**

अहर्गणगते विश्वजिति सर्वस्वमेव दक्षिणा इति सिद्धान्ते लिङ्गं दर्शयति। 'हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददाति' इति अहर्गणे वाक्यशेषस्थस्य लिङ्गस्य दर्शनात् विश्वजिति सर्वस्वमेव दक्षिणा। चकारः पूर्वोक्तहेतुभिः समुच्चयार्थः। **के.**

* अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाले एव पृथक्पृथक् वास उत्पादनीयम्। **भा.**१०।६।२२।७९-८०.

**अहर्गणे द्वादशाहे उत्तमाहवर्जं पत्नीसंयाजान्तत्वम्॥**

**पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्।**९।१।९।२९॥

**भाष्यं**— अस्त्यहर्गणः 'द्वादशाहेन प्रजाकामं याजयेत्' इति। तत्र श्रूयते 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इति। तत्रायमर्थः सांशयिकः किं सर्वेषामह्नां पत्नीसंयाजान्तत्वं, उत प्रागुत्तमादिति। दशमं वर्जयित्वा संदेहः क्रियते। तस्य हि मानसान्तता वचनेनोक्ता। किं तावत् प्राप्तम्? सर्वेषामह्नामिति। कुतः? अविशेषात्। अविशेषेणोच्यते 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इति। न च कश्चिद्विशेष आश्रीयते। तस्मात् सर्वेषामिति।

**टुप्**— ‘ पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते ’ इत्यविशेषश्रवणात् सर्वेषां पत्नीसंयाजान्तता । **ननु** गम्यते विशेषः ‘ असंस्थितो हि तर्हि यज्ञः ’ इति, यत्रासंस्था तत्र पत्नीसंयाजान्तता, अन्त्ये च ( अहनि ) संतिष्ठते । तत्र न भवति, हेतुसामर्थ्यात् । **न**, वचनात् सर्वेषां ( पत्नीसंयाजान्तता ) प्राप्यमाणा, वचनान्तरेण विना कथं शक्या विशेषे अवस्थापयितुम् । **यदुक्तं** हेतुसामर्थ्यात् यत्र असंस्था, तत्र पत्नीसंयाजान्ततेति । **उच्यते।** हेतुवचनं पत्नीसंयाजान्ततास्तुत्यर्थं भविष्यति चिरेण संस्थामालोच्य इति । (यो हि चिरेण संतिष्ठते, सः असंस्थित इव भवति इति । तदयमर्थः, चिरेणासौ यज्ञः संतिष्ठते दीर्घत्वात् । तस्मात् लाघवार्थं पत्नीसंयाजान्तं कृत्वा शिष्टं लुप्यताम् । तेन उत्तममहः पत्नीसंयाजान्तं कृत्वा अवभृथादीन्येव कर्तव्यानि, न तु हारियोजनपर्यन्तं अहःशेषं कर्तव्यमिति । **रत्न.** )

**लिङ्गाद्वा प्रागुत्तमात् । ३० ॥**

**भाष्यं**—वाशब्दः पक्षव्यावृत्तौ । प्रागुत्तमादह्नः पत्नीसंयाजान्तता स्यात् । कुतः ? लिङ्गात् । लिङ्गं भवति, ‘ पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते, न बर्हिरनुप्रहरति, असंस्थितो हि तर्हि यज्ञः ’ इति यस्मिन्नहनि असंस्थितो यज्ञः, तस्मिन् पत्नीसंयाजान्ततां दर्शयति । कथम् ? हेत्वर्थेन असंस्था निर्दिश्यते । यस्मादिमानि असंस्थितान्यहानि, तस्मादेषु पत्नीसंयाजान्ततेति । संस्थितिश्चान्त्येऽहनि । अपि च येष्वहःसु पत्नीसंयाजान्तता, तेष्वसंस्था दृश्यते कीर्त्यमाना । तस्मादसंस्थायाः पत्नीसंयाजान्ततायाश्च सामानाधिकरण्यम् । असंस्थां च प्रागुत्तमात् दृष्ट्वा प्रागुत्तमादेव पत्नीसंयाजान्ततामध्यवस्यामः ।

**अनुवादो वा दीक्षा, यथा नक्तंसंस्थापनस्य । ३१ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति । प्रागुत्तमात् पत्नीसंयाजान्तता स्यादिति । किं तर्हि ? सर्वेषामविशेषात् । **यदुक्तं**, ‘ येषु पत्नीसंयाजान्तता, तेष्वसंस्था दृश्यते, तस्मादसंस्थायाः प्रागुत्तमादह्नां पत्नीसंयाजान्ततां नियच्छामः ’ इति , **नैतदेवम्** । नहीदं विधिमूलं दर्शनं , नान्यप्रमाणमूलम् । अतो मृगतृष्णारूपमेतत् दर्शनम् । यदप्यसंस्था हेतुरिति , तदपि न स्यात् । उक्तं हि–स्तुतिस्तु शब्दपूर्वत्वादिति ( १।२।३। २७ ) । न च सामानाधिकरण्यं असंस्थापत्नीसंयाजान्ततयोः । पत्नीसंयाजान्तता सर्वेषामह्नां शब्देन गम्यते । असंस्था पुनर्न्यायेन प्रागुत्तमादह्नः । यदेतत् ‘असंस्थितो हि तर्हि यज्ञः ’ इति, अर्थवाद एष पत्नीसंयाजान्ततास्तुत्यर्थः । तथाहि, असंस्थितो यज्ञश्चिरेण संस्थास्यते इत्यालोच्यते । यस्माच्चिरेण संस्थास्यते तस्मादवलुप्यतां, पत्नीसंयाजान्तान्यहानि भवन्त्विति । संतिष्ठमानेष्वेवाहःसु, असंस्थावचनं पत्नीसंयाजान्तताप्रशंसाऽर्थम् । संस्थावन्ति हि तान्यहानि । अवभृथादय एषां शेषाः पदार्थाः करिष्यन्ते । यथा, दीक्षोन्मोचनवचनं नक्तंसंस्थापनस्यार्थवादः, एवमेतत् द्रष्टव्यम् । ‘ वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितः । अहोरात्रे वै वरुणपाशौ । यद्दिवा संस्थापयेदनुन्मुक्तो वरुणपाशाभ्यां स्यात् । नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यते, आत्मनोऽहिंसायै ’ इति । अनुन्मुक्तः स वरुणपाशाभ्यां, न तावद्दीक्षया मुच्यते । अवभृथो हि दीक्षोन्मोचनार्थः । अथवोच्यते वरुणपाशाभ्यामिव निर्मुच्यते इति । बहवो नियमास्तदानीं विसृज्यन्ते, यानालोच्य एष वादो भवति । एवमिहापि चिरेण संस्थामालोच्य असंस्थितवचनं भवतीति ।

**स्याद्वाऽनारभ्यविधानादन्ते लिङ्गविरोधात् । ३२ ॥**

**भाष्यं**— वाशब्दात् पक्षो विपरिवर्तते । भवेद्वा प्रागुत्तमात् पत्नीसंयाजान्तता । नह्यारभ्योत्तममहः, एष विधीयते । कथं तर्हि ? सामान्येन , पत्नीसंयाजान्तान्यहानि भवन्तीति । तत्रान्ते लिङ्गविरोधो भवति । क्व पुनर्न्यायेन प्राप्तिरिति ? ‘ पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते ’ इति । नैतदुक्तं भवति, शिष्टमवलुप्यते इति । संतिष्ठन्ते नानुष्ठीयन्ते इति , कर्तृव्यापार एषूपरमतीति । तेषु सह क्रियमाणेष्वहःसु , अवश्यं कस्मिंश्चित् पदार्थे अवस्थाय अवश्यमपरस्याह्नः पदार्था अनुष्ठातव्याः । तत्रानियमे प्राप्ते, पत्नीसंयाजान्ते संस्थाप्यमिति नियम्यते। तस्यावस्थानस्य एतत् प्रयोजनं , कथमहरन्तरस्य पदार्थानुष्ठानेन यौगपद्यमनुगृह्येतेति । एतद्धि दृष्टमवस्थानकार्यम् ।

यस्मिन् नैतत् दृष्टं, न शक्यं कल्पयितुं तत्रादृष्टम्। तत्र न पत्नीसंयाजान्तता। तच्चान्त्यस्य प्रयोजनं न विद्यते। तस्मात् प्रागन्त्यात् पत्नीसंयाजान्ततेति न्यायेन प्राप्ते लिङ्गदर्शनं 'असंस्थितो हि तर्हि यज्ञः' इति।

**टुप्—** भावयेत् प्रजाः। केन ? द्वादशाहसंज्ञकेन (यागेन)। तत्र 'संख्यया कर्मभेदः' (२।२।७।२१) इति न्यायेन द्वादश यागा एते। अहःशब्दः (याजयेत् इति) यागसामानाधिकरण्यात् यागं (एव अहःसंबन्धात्) अहः (इत्यनेन) ब्रवीति। प्रकृतौ च (ज्योतिष्टोमे) अहःशब्देन उपांश्वादिहारियोजनपर्यन्तो यागः परिच्छिन्नः। इहापि (द्वादशाहादौ) एवं द्रष्टव्यम्। (तत्र) द्वादश यागाः (सह) फले चोदितत्वात् सहैव कर्तव्याः। तेषां आ अग्नीषोमीयात् या इतिकर्तव्यता (अभिविधौ आकारः। अग्नीषोमीयपर्यन्ता या पुरस्तादितिकर्तव्यता), सा अगृह्यमाणविशेषत्वात् तन्त्रेण कर्तव्या। अवभृथादीन्यपि (उपरितनानि अङ्गानि) तन्त्रेणैव (कर्तव्यानि)। ये (तु मध्यस्थाः) संनिपत्योपकारकाः (पदार्थाः ग्रहयज्यभ्यासादयः, ये च तन्मध्यपातिनः आरादुपकारकाः सवनीयादयः) ते आवर्तन्ते। (तत्र) सहप्रयोगात् (प्रयोगवचनात्) कस्मिंश्चित् स्थित्वा द्वितीयादिषु अहःसु प्रवर्तितव्यम्। तत्र यस्मिन्कस्मिंश्चिदवस्थाने प्राप्ते पत्नीसंयाजान्तता नियम्यते। तत्र अन्त्ये उत्तरस्य यागस्य (कर्तव्यस्य) अभावात् अवस्थानं नास्त्येव अनियमेन। अनियमस्याभावात् (तदपेक्षः पत्नीसंयाजान्तत्वस्य) नियमोऽपि (नास्ति)। न च एतदेव वाक्यं (पत्नीसंयाजान्तानि इत्यादि) क्व चिन्नियमपरं, क्व चिदपूर्वविधिपरं (भवितुमर्हति) विवक्षाभेदात्। अपि च यस्य नियमार्थं (वचनं), तस्य दृष्टोऽर्थः। तस्मात् प्रागुत्तमात् पत्नीसंयाजान्तता (नियम्यते)।

**शा—** '**तत्राविशेषात् सर्वेषां पत्नीसंयाजसंस्थितिः। असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः॥**' इति प्राप्ते ब्रूमः '**अपेक्षितविधानाय प्रागुत्तममयं विधिः। मुख्यत्वसंभवाद् वाक्यशेषस्य न च गौणता॥**' पत्नीसंयाजान्तानि सर्वाणि अहानि कृत्वा हारियोजनाद्यहःशेषं तन्त्रेण सर्वेषामुपरिष्टात् अनुष्ठेयम्। **प्रयोजनं** पूर्वपक्षे विकृतिषु नोहः। सिद्धान्ते द्विरात्रादिषु द्वादशाहविकारेषु यदन्त्यमहः द्वितीयं तृतीयं वा, तत् प्रकृतौ पत्नीसंयाजान्तमपि अनुष्ठितं ऊहित्वा सकलमनुष्ठीयते।

**सोम—** समुदायप्रसङ्गात् अहःसमुदायात्मकद्वादशाहगतपत्नीसंयाजान्तत्वं चिन्त्यते इति **संगतिः**। पूर्वपक्षे उत्तमेऽहनि हारियोजनादिकं अहःशेषं वर्जयित्वा अवभृथादिकमेव कर्तव्यं, सिद्धान्ते तु अहःशेषोऽपि कर्तव्यः इति भेदः। साङ्गानां प्रधानानां सहानुष्ठानं चोदितम्। तत्र अग्नीषोमीयान्तानि पूर्वाण्यङ्गानि अवभृथादीनि उत्तराङ्गानि च तन्त्रेणानुष्ठेयानि।

**वि—** 'पत्नीसंयाजसंस्था किं सर्वेष्वन्त्येतरेषु वा।, अविशेषादादिमो, ऽन्त्योऽसंस्थितत्वोक्तिलिङ्गतः॥'

**भाट्ट—** द्वादशाहे 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते असंस्थितो हि तर्हि यज्ञः' इति श्रुतम्। तत्र किं पत्नीसंयाजान्तत्वं द्वादशस्वपि अहःसु विधीयते, उत उत्तमवर्जं इति चिन्तायां, अहस्त्वाविशेषात् सर्वेषु। न च असंस्थायाः पत्नीसंयाजान्तत्वे हेतुत्वावगमात् तस्य उत्तमवर्जमेव सत्त्वेन तत्रैव पत्नीसंयाजान्तत्वावगतिः। एतस्य 'तेन ह्यन्नं क्रियते' इतिवत् हेत्वर्थवादत्वेन अहेतुत्वात्। न च तर्हि तेनैव 'अक्ताः शर्कराः' इतिवत् निर्णयः, तद्वत् इह संदिग्धत्वाभावेन तस्य अनिर्णायकत्वात्, प्रत्युद्देश्यं गुणस्य आवश्यकत्वेन अविशेषप्रवृत्तविधेः अर्थवादेन संकोचानुपपत्तेश्च। अतश्च अर्थवादोऽपि बहुदिनसाध्यत्वात् चिरसंस्थाभिप्रायेण गौण्या वृत्त्या व्याख्येयः।

**ननु—** विधिरेव स्वस्य नियमविधिलाघवानुरोधेन उत्तमभिन्नविषयत्वेन प्रतीयते। तथाहि, द्वादशानामपि अह्नां एकफलसाधनत्वात् प्रयोगैक्यं अवगम्यते, अत एव अग्नीषोमीयान्तपदार्थानां तन्त्रेण करणं, अवभृथाद्यानां च ब्राह्मणतर्पणान्तानाम्। अहःशब्दवाच्यसुत्यानां तु द्वादशत्वसंख्यानुरोधात् आवृत्तिः। अहःशब्दो हि उपांशुग्रहाभ्यासादारभ्य हारियोजनयागाभ्यासपर्यन्ते प्रयोगे

लक्षणया याज्ञिकानां प्रसिद्धः। अत एव तन्मध्यवर्तीनि संनिपत्योपकारकाणि आरादुपकारकाणि च अङ्गानि प्रतिसुत्यमावर्तन्ते इति वक्ष्यते। एवं च एकैकं अहः यस्मिन् कस्मिन्नङ्गे नियमेन समाप्य अपरं अहरारम्भणीयम्। इति प्राप्ते, पत्नीसंयाजान्तत्वविधेः एकादशसु नियमविधिः संपद्यते, अन्तिमे तु सर्वस्यैव समापनीयत्वात् पत्नीसंयाजान्तत्वविधिः अपूर्वविधिः आपद्येत। अतश्च सर्वार्थत्वे अपूर्वविधिनियमविधिकृतवैरूप्यापत्तेः नियमविधिलाघवानुरोधेन उत्तमवर्जे अयं विधिः इति चेत्, द्वादशत्वसंख्याऽनुरोधेन अहःशब्दवाच्यहारियोजनान्तप्रयोगस्यैव आवर्तनीयत्वेन तद्भिन्नाङ्गे यस्मिन्कस्मिंश्चित् समापनस्यैव प्रसक्तौ सर्वत्रैव, अपूर्वविधित्वात्। पत्नीसंयाजानां हारियोजनोत्तरमेव सर्वाध्वर्युशाखाम्नानेन पत्नीसंयाजानामपि अवभृथादिवत् तन्त्रेण अनुष्ठेयत्वात्, तेषु पक्षेऽपि समापनस्य अप्रसक्तेश्च। अत एव **शास्त्रदीपिकायां तन्त्ररत्ने** च पत्नीसंयाजोत्तरत्वकथनं हारियोजनस्य निर्मूलमेव। अत एव अत्रत्याहःशब्दस्य हारियोजनान्तप्रयोगवाचकस्य पत्नीसंयाजान्ते प्रयोगैकदेशे लक्षणा इति केषांचिदुक्तं अपास्तम्। स्वयमेव पत्नीसंयाजानां हारियोजनोत्तरत्वस्य उक्तत्वेन एकदेशलक्षणाया अनुक्तिसहत्वात्। अतः सर्वाण्येव अहानि पत्नीसंयाजान्तानि कार्याणि, न तु अवभृथादीनि अन्ते तन्त्रेण कार्याणि। पत्नीसंयाजान्तत्वविधिना तेषां पर्युदासात्। पत्नीसंयाजानां च तन्त्रेण प्रसक्तानां आवृत्तिरूपफलप्रतिपादनात्। **इति प्राप्ते**, 'असंस्थितो हि तर्हि यज्ञः' इति 'तेन ह्यन्नं क्रियते' इतिवत् न हेत्वर्थवादः तद्वदिह हेतुविधित्वे लक्षणाऽभावात्। तत्र तु होमकालीनवर्तमानान्नकरणत्वस्य बाधितत्वात् लटो भूतार्थकत्वे विधौ लक्षणाऽऽपत्तेः अगत्या हेत्वर्थवादत्वाङ्गीकरणम्। अतो 'न ह्यत्रानूयाजान् यक्ष्यन् भवति' इतिवत् अस्य हेतुपरत्वात् असंस्थाहेतुकपत्नीसंयाजान्तत्वविशिष्टसमापनभावनाया एव अहरुद्देशेन विधानात् विधेयसामर्थ्यानुरोधेन उद्देश्यानामह्नां संकोचोपपत्तेः। उत्तमे च असंस्थारूपहेत्वभावात् पत्नीसंयाजान्तत्वस्यापि अभावोपपत्तेः उत्तमवर्जं पत्नीसंयाजान्तता। न च हेत्वभावेऽपि व्यापकव्यभिचारस्य अदोषत्वात् उत्तमे पत्नीसंयाजान्तत्वेऽपि अदोषः, विशेषणाभावप्रयुक्तविशिष्टाभावात् साधकप्रमाणाभावेनैव तत्र तस्यासिद्धेः। अस्तु वा हिशब्दोऽत्र अव्ययानामनेकार्थत्वात् निमित्तत्वपरः। तथाच अन्तिमे निमित्ताभावात् नैमित्तिकस्याभावः सुलभ एव। एवंच निमित्तोपादानबलात् यथैव द्वादशाहे अन्तिमेऽहनि न पत्नीसंयाजान्तत्वं, तथैव पञ्चदशरात्रादौ द्वादशेऽहनि (न) पत्नीसंयाजान्तत्वम्। द्विरात्रादौ च द्वितीयादिरूपे एवान्तिमे न तत्, इति ऊहोपयोगितावत् बाधोपयोगिताऽपि। अत एव प्रकृतौ तत्तद्विजातीयापूर्वसाधनत्वस्यैव अहःपदेन लक्षणायामपि विकृतौ निमित्ताभावादेव न पत्नीसंयाजान्तत्वम्। निमित्तोपादानबलेन वा प्रकृतौ असंस्थावत् क्रत्वपूर्वसाधनत्वस्यैव लक्षणात् न कोऽपि दोषः।

**मण्डन**— 'नान्त्ये हि पत्नीयजनान्तसंस्था'। ९.

**शंकर**— 'पत्नीयज्यन्तताऽन्त्ये न।' १५.

* अहर्गणे द्वादशाहे दशमस्याह्नः मानसान्तत्वम्। उत्तमाहात् प्राक् तु पत्नीसंयाजान्तत्वम्। उत्तमे च हारियोजनादि सर्वं तन्त्रेण। **भा.** ९।१।८।२९-३२, * अहर्गणे द्वादशाहे प्रत्यहं योगविमोकौ दर्शयति 'स वा अहरहर्युनक्ति अहरहर्विमुञ्चति' इति। ११।३।९।२०, * अहर्गणे द्वादशाहादौ सोमस्य उपावहरणार्थं प्रत्यहं अन्यत् वासः उत्पाद्यम्। १०।६।२१।७८.

**अहर्गणे प्रत्यहं सोमोपावहरणार्थं पृथक् वासः उत्पादनीयम्॥**

**तत्राहर्गणेऽर्थाद् वासःप्रक्लृप्तिः स्यात्। १०।६।२१।७८॥**

**भाष्यं**—अस्ति द्वादशाहः। तत्र चोदकप्राप्तं उपावहरणं 'वाससा उपावहरति' इति। तत्र संशयः किं उपावहरणार्थं अन्यद्वासः उत्पाद्यं, उत नेति। किं प्राप्तं? नोत्पाद्यम्। कुतः? न वचनमस्ति अन्यत् भेदेन उत्पाद्यमिति। वचनादृते न प्रतीमो भेदेनोत्पत्तिम्। तस्मात् नोत्पाद्यमिति। **एवं प्राप्ते ब्रूमः**। अहर्गणे अर्थात् वासः उत्पाद्यम्। कथं? अहर्बहुत्वात्। बहून्यहानि। तत्र चोदकेन एतत् प्राप्यते 'वाससोपावहरति' इति। भेदेन च अनुत्पाद्यमाने उपावहरणार्थः एव न सिध्येत्। तस्मात् उत्पादयितव्यं इति।

**शा**—स्थितं वाससि मानं, वाससा चोपावहरणमिति। द्वादशाहादौ अहर्गणे किमुपावहरणार्थं प्रत्यहं वासोभेदः स्यात्, उत नेति। भेदे प्रमाणाभावान्न। **इति प्राप्ते ब्रूमः**। अर्थात् वाससो भेदः स्यात्। हविर्धाने (नाम) शकटे अवस्थितः सोमः प्रत्यहं भेदेनाभिषवार्थं यावानेकस्याह्नः पर्याप्तः, तावान् सोमो वाससा उपावहर्तव्यः (समुदायान्निष्कृष्य ग्राह्यः) अवशिष्टश्च शकटे एव वाससोपनद्धोऽवस्थापनीयः। तस्मात् अर्थात् अहर्भेदे वासोऽन्तरमुपावहरणार्थमुत्पादयितव्यम्।

**सोम**— यथा पूर्वत्र (१०।६।१९।७२-७५) सर्वासां मानवीनामुपादाने प्रमाणाभावात् यथाप्रकृति पञ्चदशानामेवोपादानं, एवमिहापि भेदे प्रमाणाभावात् यथाप्रकृति एकमेव वासः इत्युत्थानात् **संगतिः**। उपावहरणार्थं वासोऽन्तरे सिद्धे तस्य ग्रावस्तुते दानविधानात् द्वितीयादिषु अहःसु पुनरुपावहरणार्थं वासोऽन्तराण्युपादेयानि। **न च** ग्रावस्तुते दानं प्रतिपत्तिः इति सर्वान्ते स्यादिति **वाच्यम्**। मैत्रावरुणाय दण्डदानवत् चतुर्थीश्रवणात् ग्रावस्तुदर्थत्वेन वाससः प्रतिपत्त्यर्थत्वाभावात्।

**वि**— 'नान्यद्वासोऽहर्गणे स्यात् स्याद्वा, न स्यादनुक्तितः।, चोदकात् प्रत्यहं प्राप्तं कार्यं वासोऽन्तरं भवेत्॥'

**भाट्ट**— ज्योतिष्टोमे 'वाससि मिनोति' 'वाससोपावहरति' इति वचनात् सोममानोपावहरणे वासःसाधनके। अहर्गणे च प्रत्यहं सोमोपावहरणार्थं वासोभेदः स्यात्। हविर्धानशकटे हि स्थापितः सोमो यावान् एकस्याह्नः पर्याप्तः, तावान् प्रत्यहं वाससा उपावहर्तव्यः। अवशिष्टश्च शकटे एव वाससा उपनद्धः स्थाप्यः। तस्मात् इह अर्थात् वासोऽन्तरं प्रागुत्तमात् उत्पादितव्यं, उत्तमे तु प्रकृतिवत् मानवस्त्रेणैव। **न च** प्रागुत्तममपि एकमेव मानवस्त्रात् भिन्नं वस्त्रमुपादाय तेनैव प्रत्यहं उपावहरणं कर्तव्यं इति **वाच्यम्**। उपावहरणवस्त्रस्य ग्रावस्तुते दानविधानात्। तस्य च मैत्रावरुणदण्डदानन्यायेन (४।२।६) ग्रावस्तोत्रीयानुब्रुवाणग्रावस्तुदुत्साहजनकत्वेन प्रात्यहिकत्वावश्यंभावात्। वस्त्रान्तराण्यपि च न मानकाले एव उपादेयानि। प्रकृतौ हि सौकर्यात् क्रयकालीनमानवाससैव उपनद्धस्य अभिषववेलायां तेनैव वाससा उपावहरणं कृतं, न तु स एव शास्त्रार्थः। अतश्च इह मानकाले तावत् वस्त्रग्रहणे प्रमाणाभावात् उपावहरणकाले एव तदुपादानम्। आर्थिकस्यापि वस्त्रैकत्वस्य बाधात् अध्यायोपयोगिता।

**मण्डन**— 'पृथग्वस्त्रमहर्गणे।' २२.

**शंकर**— 'अहर्गणे वाससो भिदा।' २२.

**⌛ अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत, कर्मपृथक्त्वात्। ६।५।२१।५६॥**

यदा अहर्गणे बहिष्पवमानार्थं अन्वारभ्य बहिःसंसर्पतां मध्ये उद्गातुरपच्छेदः स्यात् कस्मिंश्चिदहनि, तत्र यस्मिन् अहनि उद्गातुः अपच्छेदः, तत् एव अहः आवर्तेत आवर्तनीयम्। न तु सर्वोऽहर्गण एव आवर्तनीयः, कर्मपृथक्त्वात् कर्मणां पृथक्त्वात्। अहर्गणे यावन्ति सुत्याऽहानि तावन्ति पृथक् कर्माणि। नहि अन्यदहः अन्यस्याह्नोऽङ्गम्। तस्मात् अहर्गणे अपच्छेदविशिष्टं एकमेव अहः आवर्तनीयम्। **के.**

*** अहर्गणे यस्मिन्नपच्छेदः इति न्यायः।**

ननु यथैव सप्तदशसु यागेषु (प्राजापत्यपशुयागेषु) सह क्रियमाणेषु एकविनाशे सति 'अहर्गणे०' इत्यनेन न्यायेन इतरेषु प्रतीक्ष्यमाणेषु स एवावर्तते तथैव द्रव्यसाहित्येऽपि स्यात्। नैतदेवम्। **वा.** २।२।७।२१ पृ. ५२७.

* प्रस्तोतोद्गातृप्रतिहर्तॄणां अन्योन्यहस्तधारणेन समन्वारब्धानां सदो (सदसो बहिः) गच्छतां उद्गात्रा हस्तमोचनेन विभागाख्ये विच्छेदे कृते यज्ञावृत्तिर्विहिता अतिदेशेनाहर्गणं प्राप्ता किं यस्मिन्नहनि अपच्छेदः तस्यैवावृत्तिः, कृत्स्नस्य वाऽहर्गणस्येति संदिग्धे साहित्यसंपत्त्यर्थं कृत्स्नावृत्तौ प्राप्तायां, **अहर्गणे० इति षष्ठाधिकरणसूत्रेण** प्रत्येकं इतिकर्तव्यताऽन्वयात् एकस्यैवावृत्तिर्वक्ष्यते। पृथगुत्पन्नत्वेनाह्नां प्रत्येकं साधनशक्त्यवगमात् सहप्रयोगेऽपि आग्नेयादिवत् प्रत्येकमितिकर्तव्यताऽन्वयोपपत्तेः एकावृत्त्युपपत्तिः। **सु.** पृ. ८१६-१७.

⌛ **अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाऽहनि विकल्पः स्यात् । ११।३। ६।१५ ॥**

अग्निष्टोमे 'कृष्णविषाणया कण्डूयति' इति दिक्षितस्य व्रतम् । तस्याश्च कृष्णविषाणायाः कृष्णमृगशृङ्गस्य 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति वचनात् प्रासनं प्रक्षेपः क्रियते । अहर्गणे तु द्वादशाहे विषाणायाः प्रासनं त्यागः अन्त्ये अहनि प्रथमे वा अहनि कर्तव्यं इति विकल्पः स्यात् । धर्मविप्रतिषेधात् धर्मविप्रतिषेधप्रसङ्गात् । यदि नियमेन प्रथमे एवाहनि त्यज्येत, तदा द्वितीयादिषु अहःसु दक्षिणानयनात् प्राचीना ये पदार्थाः, तेषां विषाणया कण्डूयनं नाम धर्मो बाध्येत । अथ अन्त्ये अहनि एव नियमेन त्यज्येत, तदा पूर्वेषामह्नां दक्षिणादानोत्तरं ये पदार्थाः, तेषां हस्तेन कण्डूयनं नाम धर्मो बाध्येत । एवं उभयथाऽपि विप्रतिषेधः । तस्मात् विकल्पः इति पूर्वः पक्षः ।

**पाणेस्त्वश्रुतिभूतत्वाद् विषाणानियमः स्यात्, प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् । १६ ॥**

सिद्धान्तमाह । पाणेः हस्तस्य अश्रुतिभूतत्वात् । पाणिः श्रुतिभूतः श्रुतिविहितः न भवति । पाणिना कण्डूयितव्यं दक्षिणानयनोत्तरं इति नास्ति विधिः । तस्मान्नास्ति विप्रतिषेधप्रसङ्गः । तस्मात् विषाणानियमः स्यात् सर्वस्मिन्नहर्गणे विषाणया कण्डूयनं नियम्येत । तस्मात् अन्त्येऽहनि प्रासनं स्यात् । प्रातःसवनमध्यत्वात् प्रातःसवनानि बहूनि मध्ये यस्य सः प्रातःसवनमध्यः अहर्गणः । प्रातःसवनधर्मानुग्रहार्थं विषाणानियमः स्यात् । शिष्टे अवशिष्टे च दक्षिणादानोत्तरकालेऽपि उत्तरयोः सवनयोः विषाणयैव कण्डूयनं स्यात् । अभिप्रवृत्तत्वात् विषाणाकण्डूयनस्य शास्त्रेण चरममाध्यंदिनपर्यन्तं अभिप्रवृत्तत्वात् । तथा शास्त्रतात्पर्यस्य गम्यमानत्वादिति भावः । तस्मात् अहर्गणे अन्त्यदिने एव विषाणायाः प्रासनं इति सिद्धान्तः । **के.**

* अहर्गणे सर्वेषामह्नां ऋजीषः अवभृथे प्रतिपादनार्थं धार्यते । **भा.** ११।३।१३।३४, * अहर्गणे सर्वेषामह्नां यदृजीषं तत् सर्वं अविशेषात् अवभृथे अप्सु प्रास्यते 'ऋजीषमप्सु प्रास्यति' इति उक्तत्वात् । १०।६।१९।७३.

⌛ **अहर्गणे सुत्याकालीनसुब्रह्मण्याऽऽह्वानस्य प्रत्यहमावृत्तिः ॥**

**तत्काला त्वावर्तेत, प्रयोगतो विशेषसंयोगात् । ११।३।११।२४ ॥**

**भाष्यं**—तस्मिन्नेव द्वादशाहे तत्काला या सुब्रह्मण्या, सा त्वावर्तेत, भेदेन स्यात् । कुतः ? प्रयोगं प्रति तस्याः विशेषसंयोगो भवति, 'अद्य सुत्यामागच्छ' इति । अद्येत्युक्ते श्वः परश्वो वेति नोक्तो भवति । तत्रापि च प्रकृत्यतिदेशाद्वक्तव्यम् । तस्मादावर्तेत ।

**अप्रयोगाङ्गमिति चेत् । २५ ॥**

**भाष्यं**—इति चेत् पश्यसि 'अद्य' इति विशेषसंयोगात् आवृत्तिरिति । नैतत् युक्तम् । कुतः ? यतः अप्रयोगाङ्गमेतत्, यत् 'अद्य' इति वचनम् । इदं हि प्रकृतौ एकत्वादह्नः अविवक्षितं, अर्थादेव सिद्धत्वात् । अनङ्गीकृतत्वाच्च चोदकेन न प्राप्येत । यावदुक्तं स्यात् 'सुत्यामागच्छ' इति, तावदेव 'अद्य' इति । सुत्यात्वं सर्वेषामह्नामविशिष्टम् । तस्मात् तन्त्रम् ।

**स्यात् प्रयोगनिर्देशात्, कर्तृभेदवत् । २६ ॥**

**भाष्यं**— स्याद्भेदः । कुतः ? प्रयोगनिर्देशात् । यद्यपि अद्यशब्दस्यार्थो न विवक्षितः तथापि यस्मिन्नहनि प्रयुज्यते, तत्कालस्य प्रधानस्योपकरोति, नान्यकालस्य । कर्तृभेदवत् । तद्यथा, 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इत्यौत्तरवैहारिकाण्यङ्गानि देशभेदात् मारुत्या नोपकुर्वन्ति । यथा तानि देशभेदान्नोपकुर्वन्ति, एवमिदमपि कालभेदादन्यकालस्य नोपकरिष्यति । तस्मादावर्तेत ।

**तद्भूतस्थानादग्निवदिति चेत्, तदपवर्गस्तदर्थत्वात् । २७ ॥**

**भाष्यं**— अथोच्येत । एकस्मिन् अहनि आहूता देवता आह्वानसंस्कृता भवति । एका चासौ । तस्याः पुनराह्वानमनर्थकम् । अग्निवत् । यथाऽग्नेः सकृदाधानेन संस्कृतस्य न पुनः कर्मणि संस्कारः एकस्य क्रियते इति । तच्चायुक्तम् । यत्कारणं, प्रतिकर्मापवर्गः । यस्मिन्

कर्मण्याह्वानं क्रियते तदर्थं तद्भवति। तस्य कर्मान्तेऽपवर्गः। यथा, अन्येषां सुत्याकालानां संस्काराणामग्निसंमार्गादीनाम्। तस्मादावृत्तिः।

**अग्निवदिति चेत्। २८॥**

**भाष्यं**— इति यदुक्तं, यथा अग्नेराधानं सर्वकर्मणि तन्त्रं भवति, एवमिदमपीति। एतस्य कः परिहारः। आभाषाऽन्तं सूत्रम्।

**न, प्रयोगसाधारण्यात्। २९॥**

**भाष्यं**— नैतदाधानेन तुल्यम्। आधानस्य स्वकालत्वात्। स्वकाले हि तत् क्रियते, तत्र न गृह्यते विशेषः। इदं पुनः कर्मकालमाह्वानम्। तद्यस्य कर्मणः काले क्रियते तदर्थमिति गृह्यमाणविशेषम्। तस्मान्नैतदाधानेन तुल्यम्।

**लिङ्गदर्शनाच्च। ३०॥**

**भाष्यं**— लिङ्गं चैतमर्थं दर्शयति प्रत्यहं सुब्रह्मण्याऽऽह्वानमिति। एवं ह्याह, 'संस्थितेसंस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति' इति। प्रेषणमाह्वानक्रियाऽर्थम्। तस्मादपि प्रत्यहमाह्वानम्।

**तद्धि तथेति चेत्। ३१॥**

**भाष्यं**— तदित्यनेन यूपाहुतिं प्रतिनिर्दिशति। तद्धि यूपाहुतिकर्म यथा यूपैकादशिन्यां तन्त्रं भवति, तथेदमपि भविष्यति। किं तस्य चास्य च सादृश्यम्? तत् क्रियमाणमवश्यं कस्य चिद्यूपस्यान्तिके भवति, सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात्। यथा तदेकस्य कस्य चिद्यूपस्यान्तिके क्रियमाणं सर्वयूपार्थं भवति, एवमिदमप्येकस्य कस्य चित् सौत्यस्य कर्मणोऽन्तिके क्रियमाणं सर्वार्थं भविष्यतीति।

**नाशिष्टत्वादितरन्यायत्वात्। ३२॥**

**भाष्यं**— नैतत्तेन तुल्यम्। कुतः? अशिष्टत्वात्। नात्र यूपान्तिके होमः शिष्यते। अविवक्षितमन्तिकम्। आहवनीयप्रतिषेधार्थमेतदित्युक्तम् 'इतरप्रतिषेधो वा, (११।२।७।२७) अशास्त्रत्वाच्च देशानाम्।' (११।२।७।२९) इति। इतरन्यायत्वाच्च। इह त्वितरो न्यायः। कालभेदात् गृह्यमाणविशेषस्य आवृत्त्या भवितव्यमिति। तस्माद्विषम उपन्यासः।

**विध्येकत्वादिति चेत्। ३३॥**

**भाष्यं**— अथ कश्चित् ब्रूयात्, इह द्वादशाहिको विधिस्तन्त्रदृष्टो वसतीवरीपर्यन्तोऽवभृथादिश्च। अयमपि च द्वादशाहिको विधिः। तस्मादृश्यादनेनापि तथा भवितव्यमिति।

**न, कृत्स्नस्य पुनःप्रयोगात् प्रधानवत्। ३४॥**

**भाष्यं**— तन्न। कुतः? कृत्स्नस्य पुनःप्रयोगात्। कृत्स्नोऽन्यो विधिः पुनः प्रयुज्यते अभिषवपवमानग्रहचमसस्तोत्रशस्त्रादिः। प्रधानवत्। तद्यथा प्रधानानि प्रत्यहं क्रियन्ते तथा। तत्र वसतीवरीवद्वा सकृत्त्वं स्यात्, स्तोत्रादिवद्वा बहुकृत्वः कृतं स्यात्, तत्र बहुकृत्वः कृतमिति न्याय्यम्। तथा सर्वेषामुपकरोति। सकृत्कृतं तु यत्र क्रियते, तत्रैव कालभेदादुपकुर्यात्। तस्मादावृत्तिः।

**सोम**—पूर्ववत् सुत्याकालाह्वानस्यापि तन्त्रता इत्युत्थितेः **संगतिः। नच** अग्नीषोमीयकाले अनुष्ठितस्य अञ्जनादिसंस्कारस्यापि तदपवर्गे अपवर्गः स्यात् इति **वाच्यम्।** अञ्जनादेर्हि न यूपगतातिशयो द्वारं, किंतु यूपस्वरूपमेव। तच्च यूपापकर्षविधानात् पशुत्रयस्याप्येकः, इति पशुत्रयापवर्गे अञ्जनाद्यपवर्गः। इह तु आह्वानस्य द्वारं देवतागतातिशयः, स सर्वेषामह्नामेकः इत्यत्र प्रमाणाभावात् यस्मिन्नहनि असौ अनुष्ठीयते, तदपवर्गे प्रत्यहं अग्निसंमार्जनादिवत् अपवर्गस्य युक्तत्वात्।

**वि**— 'सुत्याकालीनमाह्वानं तन्त्रं स्याद् भिद्यतेऽथवा।, यूपाहुतिनयात् तन्त्रं, सुत्याकालतया भिदा॥'

**भाट्ट**—सुत्याकालीनसुब्रह्मण्याऽऽह्वानं तु अहर्गणे गृह्यमाणविशेषत्वात् प्रतिसुत्यमावर्तते। सवनीयादिसुत्याकालीनाङ्गान्तरवत्। विशिष्य च अद्येत्यादिपदप्रयोगादपि अयमर्थो निर्णीयते। न च प्रकृतौ सुत्याया एकत्वात् अद्येत्यस्य अविवक्षितार्थत्वं, 'सुत्यामागच्छ' इत्यनेनैव सुत्याकाले आगमनप्रकाशनोपपत्तेः अद्येति पदस्य वैयर्थ्यभियैव सुत्यादिनीयत्वप्रकाशनस्यैव अभ्युदयशिरस्कत्वकल्पनात्। अतश्च सुत्याभेदेन तद्दिनभेदात् अवश्यपठनीयाद्यपदेन सुत्याऽन्तरदिनानां प्रकाशनानुपपत्त्या आवृत्तिरावश्यक्येव। एतद्युक्तिकथनायैव च सूत्रान्तराणि। इतरथा वक्ष्यमाणसवनीयादिन्यायेनैव

( १२।२।१२ ) सुब्रह्मण्याऽऽवृत्तिसिद्धेः पृथगधिकरणवैयर्थ्यम् । **न च** सवनीयाद्यपूर्वाणां तत्तत्सुत्याऽपूर्वोपयोगितया तदुत्पत्तौ अपवर्गेण प्रसङ्गासिद्ध्यनुपपत्तेः आवृत्त्युपपत्तावपि प्रकृते देवताया एकत्वात् सकृदाह्वानसंस्कृताया एव प्रसङ्गेन सर्वोपकारकत्वोपपत्तेः कथमावृत्तिरिति **वाच्यम्** । आह्वानस्य स्वरूपेणाविद्यमानतया देवतास्मरणमात्ररूपस्य दृष्टोपकारस्य तत्कालमेव नाशात् तदाहितसंस्कारस्यापि प्रधानकालीनदेवतास्मरणेन नाशात् प्रसङ्गानुपपत्तेः । अत एव यत्र पाशुकदेवताऽऽवाहनप्रकाशजन्यसंस्कारस्य अनाशः हृदयादियागीयदेवतास्मरणस्य भावित्वात् , तत्र भवत्येव पशुपुरोडाशे प्रसङ्गः । **न च** उत्तरस्मरणस्यैव पूर्वज्ञानजनितसंस्कारनाशकत्वस्य लोकक्लृप्ततया वपायागीयदेवतास्मरणेनैव तस्य नाशात् , कथं प्रसङ्ग इति **वाच्यम्** । तथात्वे उत्तमप्रयाजीयदेवतास्मरणेनैव तस्य नाशे आवाहनस्य प्रधानोपकारकत्वानुपपत्तेः । अतोऽवश्यं तज्जन्यसंस्कारत्वावच्छिन्नं प्रति प्रधानत्वावच्छिन्नीयदेवतास्मरणस्यैव नाशकत्वम् । अवच्छिन्नत्वं च पर्याप्तिसंबन्धेनेति न वपायागीयदेवतास्मरणमात्रेण तन्नाश इति युक्तः प्रसङ्गः । प्रकृते तु प्रकृतिक्लृप्तनाशकसामग्रीसत्त्वान्न तथात्वम् । अत एव 'संस्थितेसंस्थितेऽहनि आग्नीध्रीयागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति' इति लिङ्गमप्युपपद्यते ।

**मण्डन**— 'आवर्तेताह्वानमह्नां समूहे ।'

**शंकर**— 'सुब्रह्मण्या न चान्यैवम् ।' अन्या सुत्याकालीना सुब्रह्मण्या नैवं एका नेत्यर्थः ।

* अहर्गणे सोमोपावहरणकाले एव प्रत्यहं वासोऽन्तरं उत्पाद्यम् । **भा.** १०।६।२२।७९–८०, * **अहर्गणेषु** द्विरात्रादिषु द्वादशाहिकदशाहस्य धर्माणां क्रमेणातिदेशः । १०।५।४।१२–१३.

* **अहर्गणत्वं** सोमप्रकृतिलिङ्गम् । **बाल.** पृ. ११९.

**अहिकुण्डलन्यायः** । यथा एकस्य अहेः अहित्वेनाभेदः, तस्यैव कुण्डलावस्थस्य प्रांशुत्वावस्थाद्भेदश्च तात्त्विकः, एवं ब्रह्मणोऽपि चैतन्यरूपेणाभेदो जीवेश्वरत्वादिरूपेण भेदश्च तात्त्विक इति । **साहस्री.** १५७.

* ब्रह्मतच्छरीरयोः भेदाभावेऽपि **अहिकुण्डलन्यायेन** विशेषबलात् विग्रहवत्त्वोपपत्तिः ( ब्रह्मणः ) इति न च वाच्यम् । **अद्वैत.** २।६।५०. * यदि पुनः परमार्थत एव बद्धः कश्चिदात्मा अहिकुण्डलन्यायेन परमात्मनः संस्थानभूतः अभ्युपगम्येत , ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रवैयर्थ्यं प्रसज्येत । ( अहिः इत्यभेदो भासते , कुण्डलाभोगप्रांशुत्वादीनि इति तु भेदो भासते । यथा वा समुद्र इति अभेदो भासते फेनः बुद्बुदः तरङ्गः कल्लोलः इति तु भेदो भासते तद्वत् । ) **शांभा.** ३।२।२९ ब्रसू.

* **अहिच्छत्रवासिब्राह्मणीनां** सुरापानं अनाचारः । **वा.** १।३।३।७ पृ. २०४.

* **अहिदंशं** विनाऽपि शङ्काविषेणापि मरणदर्शनात् । **विवि.** पृ. ९. न जातु बीजविज्ञानं अङ्कुरं असति बीजे जनयति । बालानामपि प्राग्भवीयभावनाप्रबोधात् अहिदंशविज्ञाने सति भयसंभवात् मरणं इति मन्तव्यम् । **कणिका.**

**अहिनकुलन्यायः** । शाश्वतिके विरोधे प्रदर्शनीये अयमुदाह्रियते । **साहस्री.** ३९९. ( शाश्वतिकः जन्मसिद्धः स्वाभाविकः । शाश्वतिकविरोधोदाहरणानि च मुहूर्तमार्तण्डे विवाहप्रकरणे द्रष्टव्यानि यथा— 'सिंहेभं महिषाश्वमोतुखनकं श्वैणं च कीशावि गोव्याघ्रं बभ्रुफणीति भीरुवरयोः प्रेष्येशयोश्च त्यजेत् ॥' इति । ओतुर्मार्जारः, खनकः मूषकः । श्वा च एणश्च । कीशः मर्कटश्च अविश्च । बभ्रुः नकुलः । **के.** )

**अहिनिर्ल्वयनीन्यायः** । अहिर्निर्ल्वीयतेऽस्यां सा अहिनिर्ल्वयनी । सर्पत्वक् इत्यर्थः । यथा सर्पः सत्वचं प्रागात्मतयोपगतमपि त्यागानन्तरं स्वसमीपे वर्तमानामपि न कदाचिदात्मत्वेन जानाति, तथा देहं बोधात् प्रागात्मत्वेनाभिमतमपि, सति बोधे न कदाऽप्यात्मतया पश्यतीति भावः । **साहस्री.** २८२.

**अहिभुकैवर्तन्यायः** । अयं तादात्म्याध्यासे एव ज्ञेयः । अहिर्नामोन्मादकरः ओषधिविशेषः, अहिफेनस्यादिकारणं 'पोस्त' इति पाश्चात्यभाषायां प्रसिद्धः । तं भुङ्क्ते इत्यहिभुक् 'पोस्ती' अफीम इति भाषायां

प्रसिद्धः । 'कैवर्ते दाशधीवरौ' इत्यमरः । यथा श्रूयते हि लोके– कश्चिदहिभुक् नावमारुह्य तत्र बहुजनसमुदायं दृष्ट्वा केन चिन्मे विनिमयो न स्यादिति धिया स्वपादे रज्जुं बद्ध्वा तन्द्रां प्राप । कैवर्तश्चोपहासार्थं तत्पादात्तां रज्जुं मोचयित्वा स्वपादे बबन्ध । नावि च पारं गताया-मवरोहणसमये प्रबुद्धोऽहिभुक् स्वपादे रज्जुमदृष्ट्वा कैवर्तपादे च रज्जुं दृष्ट्वा अहमयमयमहमिति स्वहृदि निश्चित्य 'रे कैवर्त त्वमहमहं च त्वं' इति तेन विवादं कृतवानिति । तथा प्रकृतेऽपि । **साहस्री.** ३७५.

* **अहीनः** आवृत्तसोमयागरूपः द्विरात्रत्रिरात्रादिः अहर्गणः । तस्मिन् अहीनशब्दो रूढः । यौगिकत्वे तु 'न हीनः' इति विगृह्य समासे कृते सति अयज्ञादि-शब्दवत् आद्युदात्तः स्यात्, मध्योदात्तस्तु आम्नायते । **वि.** ३।३।१३. * अहीनः । न च नञ्समासेन अवयवव्यु-त्पत्तिः, समुदायशक्त्या तन्निराकरणात् । न च नञ्समासस्य लक्षणमस्ति । नञ्समासे हि सति अव्ययपूर्वपदप्रकृतिस्वर-सत्त्वात् आद्युदात्तत्वं स्यात् । मध्योदात्तस्तु अयं पठ्यते । तेन खप्रत्ययान्तताऽध्यवसानम् । तथाहि सति 'आयन्नादि-ष्वुपदेशिवद्वचनं स्वरसिद्ध्यर्थं' ( पा० ७।१।२ सूत्रे वार्तिकमिदम् । स्वरसिद्ध्यर्थमिति–उपदेशावस्थायां आय-न्नादिषु दृष्टः स्वरः यथा स्यात् इत्यर्थः ) इत्येवं ईनादेशे आश्रीयमाणे प्रत्ययाद्युदात्तत्वेन ईकारे स्वरः सिध्यति । तस्मात् अहर्गणनामधेयमेतत् । ( अह्नां समूहः अहीनः क्रतुः इति विग्रहः ) । **वा.** ३।३।८।१६ पृ. ८६४. * अहीनः पञ्चशारदीयः मारुतीयः 'यः कामयेत बहुः स्यामिति स एतेन यजेत' इति विहितः । **भा.** ११।२। १३।५४, * अहीनः सर्व एव अन्यतरतोऽतिरात्रः । ८।२।६।३१. न च ईदृग्वचनमस्ति 'योऽन्यतरतोऽ-तिरात्रः सोऽहीनः' इति, किंतु यत् अध्येतारः अहीन इति स्मरन्ति सोऽहीनः । **वा.** * एको द्वौ बहवो वा **अही-नेन** यजेरन् । तान् दीक्षिता याजयेयुः । **भा.** ८।२।५।२४, * **अहीनैः** अदीक्षिताः (अपि) यजन्ति ( ऋत्विजः ) । १०।६।१५।५८. * **अहीनेऽपि** शुक्रग्रहस्पर्शः औदु-म्बरीसंमानं च एकेनैव यजमानेन इति पूर्वन्यायेन स्थिते, स एकः यः कोऽपि, विशेषस्य अवधारयितुमशक्यत्वात् । **वि.** १२।४।१२. * अहीने पृष्ठ्यषडहान्ते मधुनः घृतस्य वा प्राशनं ऋत्विजाम् । **भा.** १०।६।१३।३२. * **अहीनेषु** ऐकादशिनपशुक्रमः आग्नेय–ऐन्द्र–ऐन्द्राग्न–सारस्वत–सावित्र–सौम्य–वैश्वदेव–पौष्ण– मारुत– बार्ह-स्पत्य–वारुणाः इति । **संकर्ष.** १।४।२७. * अहीनेषु प्रत्यहीनं चतुर्थेऽहनि षोडशी गृह्यते । **भा.** १०।५। १४।५५–५७. * अहीनेषु षड्रात्रादिषु एकस्तोमकाः आम्नाताः 'त्रिवृदग्निष्टोमो भवति' 'पञ्चदश उक्थ्यो भवति' इत्यादयः । **वि.** ५।३।१५. * 'द्वादशोपसदः' इति द्वादशाहप्रकरणे विहितत्वात् तत्प्रकृतित्वेन सर्वा**हीनेषु** तत्प्राप्तिः । **वा.** ३।३।८।१६ पृ. ८६४. * द्विबहु-यजमानककुलाया**हीनादिषु** 'त्रिराङ्क्ते, त्रिरभ्यङ्क्ते, क्षुरेण त्रिर्वपति, एकविंशत्या पावयति' इति तत्तत्संख्याकानामेव अञ्जनादीनां यजमानसंस्कारत्वात् तावत्संख्याकाञ्जनाद्यनुसमयः, न प्रत्येकम् । **सोम.** ५।२।२.

* **अहीनत्वं** सोमप्रकृतिलिङ्गम् । **बाल.** पृ. ११९. * 'अग्निष्टोमो वै प्रजापतिः, स उत्तरानेकाहानसृजत, तमेतं द्विरात्रादयोऽहर्गणा ऊचुः, त्वमस्मान् मा हासी-रिति तदेषामहीनत्वं' इति द्विरात्रादीना**महीनत्वं** दर्श-यति । ( तच्च न हीनत्वं इति व्युत्पत्तौ मानं स्यात् ) । **भा.** ८।२।५।२८, * 'द्विरात्रादीनां आ एकादशरात्रात् अहीनत्वं यजतिचोदनात्' । ८।२।६।२६.

* **अहीनधर्मः** द्वादशोपसत्ता ज्योतिष्टोमप्रकरणे पठिताऽपि न व्यवदधाति । **भा.** ३।१।११।२१ पृ. ७३३.

* **अहीनभूतश्च** द्वादशाहः यजतिचोदनः 'द्वाद-शाहेन प्रजाकामो यजेत' इति । **भा.** ८।२।५।२५, * **अहीनभूतस्य** द्वादशाहस्य प्रवृत्तिः यत्र यजतिः श्रूयते । ८।२।५।२५.

* **अहीनलक्षणं** यजतिचोदना यजमानबहुत्व-नियमाभावश्च । **वि.** १०।६।१६.

**अहीनाधिकरणन्यायः** । द्वादशोपसत्ताऽधिकर-णम् । ज्योतिष्टोमे श्रुता द्वादशोपसत्ता अहीनस्यैव, न ज्योतिष्टोमस्य साह्नस्य ॥

**अहीनो वा प्रकरणाद् गौणः । ३।३।८।१५ ॥**

**भाष्यं**— ज्योतिष्टोमं प्रकृत्य समामनन्ति 'तिस्र एव साह्नस्योपसदः, द्वादशाहीनस्य' इति। तत्र संदेहः किं द्वादशोपसत्ता ज्योतिष्टोमे, उत अहीने इति। किं तावत् प्राप्तं? ज्योतिष्टोमे इति। कुतः? प्रकरणात्। एवं प्रकरणमनुगृहीतं भवति। ननु वाक्येन बाध्यते। न बाध्यते। अहीनशब्देन ज्योतिष्टोमं वक्ष्यामः। कुतः? न हीयते इति अहीनः। दक्षिणया क्रतुकरणैर्वा फलेन वा न हीयते। तेन ज्योतिष्टोमः अहीनः। वाशब्देन संशयो निवर्त्यते।

**वा**— ननु अध्यायादौ यावानर्थः प्रतिज्ञातः स सर्वः पर्यवसितः। किं इदानीमवशिष्यते, येन चतुर्थलक्षणं नारभ्यते। तदुच्यते '**बलाबलविविक्तानां श्रुत्यादीनामतः परम्। विरोधः क्वास्ति नास्तीति विषयः परिशोध्यते॥**' तत्र प्रकरणस्य तावत् श्रुतिलिङ्गवाक्यैः सह विरोधाविरोधौ संप्रधार्येते (३।६।६ इत्यधिकरणान्तेन ग्रन्थेन)।

ज्योतिष्टोमे श्रूयते 'तिस्र एव साह्नस्योपसदः कार्याः द्वादशाहीनस्य' इति। तत्र साह्नशब्देन तावत् अह्ना समाप्यमानत्वात् सहैव अह्ना संस्थापयन्ति इत्येवं ज्योतिष्टोमो गृह्यते इति त्र्युपसत्त्वं तस्य। 'द्वादशाहीनस्य' इति तु द्वादशोपसत्त्वं किं ज्योतिष्टोमस्य, अथ अहीनस्य द्वादशाहादेः इति संदिह्यते। यदि अहीनशब्दः कथं चित् ज्योतिष्टोमेऽपि उपपद्यते, ततः प्रकरणस्य अविरोधात् तस्मिन्नेव निवेशः। अथ अहीन इति अहर्गणनामधेयं, ततः श्रुत्या संयुक्तत्वात् असंयुक्तग्रहणस्वभावेन प्रकरणेन अग्रहणम्। अस्ति हि तदानीं श्रुतिप्रकरणयोर्विरोधः। किं प्राप्तं? सिद्धान्तेन उपक्रमं वाशब्देन व्यावर्त्य प्रकरणात् ज्योतिष्टोमार्थत्वं इति प्रतिजानीमहे। न च श्रुतिविरोधः, प्रकरणादेव अहीनशब्दस्यापि ज्योतिष्टोमगामित्वात्। अस्ति च नञ्समासान्वाख्यानेन तदभिधानसामर्थ्यम्। अतो यद्यपि 'अह्नः खः क्रतुसमूहे' (ग्रामजनबन्धुभ्यस्तल् पा० ४।२।४३ सूत्रे 'अह्नः खः' इत्येतावदेव वार्तिकमुपन्यस्तम्। सि. कौमुद्यां तु 'अह्नः खः क्रतौ' इति वार्तिकमुपन्यस्तम्। 'तस्य समूहः' इति तु समूहाधिकारः अनुवृत्त एव) इत्येवं व्युत्पाद्यमानः अहर्गणवाची अहीनशब्दो भवति, तथापि विरोधपरिहारार्थं अहीनगुणयोगादेवं ज्योतिष्टोमार्थः समर्थनीयः। स हि कृत्स्नविधानात् सर्वप्रकृतित्वाच्च न कुतश्चित् हीयते। न चैनं के चिदपि क्रतवः प्रकृतित्वेन जहति। यत्तु भाष्यकारेणोक्तं 'दक्षिणया क्रतुकरणैर्वा न हीयते' इति, तदसंबद्धम्। दक्षिणाक्रतुकरणप्रतिपत्तिनिमित्तानुपादानात्। यथारुचि विकल्पनायां वा अनवस्थितसमासार्थप्रसङ्गात्। सहस्रदक्षिणादिक्रतुभ्यश्च दक्षिणाभिर्हीनत्वात् क्रतुकरणैरपि विकारभूतोक्थ्यादिसंस्थाभ्यः अग्निष्टोमसंस्थस्य न्यूनत्वात्। तस्मात् विध्यन्तदानेन अयं न कं चिज्जहाति, केन चिद्वा न हीयते इति अहीनः। प्रकरणसामर्थ्यात् अनेन गुणयोगेन उच्यते इति गौणः, न गौणवृत्त्याश्रयणात्।

**असंयोगात्तु मुख्यस्य, तस्मादपकृष्येत। १६॥**

**भाष्यं**— अपकृष्येत द्वादशोपसत्ता। कुतः? असंयोगात् ज्योतिष्टोमेन। कथमसंयोगः? अहीनेन एकवाक्यत्वस्य प्रत्यक्षत्वात्। ननु ज्योतिष्टोमः एव गौणः अहीनः। नेत्युच्यते। नहि मुख्यसंभवे गौणग्रहणमर्हति। ननु नञ्समासो भविष्यति। नेति ब्रूमः। तथा सति आद्युदात्तः अहीनशब्दोऽभविष्यत् (अ॑हीनस्य)। मध्योदात्तस्त्वयम् (अही॑नस्य)। तस्मात् प्रकरणं बाधित्वा अहीनस्य धर्मः। अपिच व्यपदेशो भवति 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति। यदि अन्यः साह्नः अन्यश्च अहीनः, तत एवं व्यपदेशोऽवकल्पते। विद्यते च व्यपदेशवचनम्। तस्मात् अहीनस्येति।

**वा**— '**मुख्यः प्रथमकार्यत्वाज्ज्योतिष्टोमोऽभिधीयते। अहीनशब्दसंयोगो न तु तस्य कथं चन॥ असंयोगाच्च तेनास्य या संख्या तेन संगता। न सा प्रकरणात् तस्य तेनास्मादपकृष्यते॥ द्वादशत्वमहीनेन षष्ठीश्रुत्यैव संगतम्। अहीनोऽहःसमूहश्च ज्योतिष्टोमे हि साह्नता॥**' यत्तु गुणात्तत्र प्रवर्त्स्यतीति, तद्विकल्प्य निराकरोति।

यदि तावत् गौण इति उपचारात् प्रवृत्तोऽभिधीयते, ततो न प्रकरणानुरोधेन श्रुत्यर्थपरित्यागो युक्तः। न चेदं अर्थवादार्थं, येन एकाहोऽपि प्रशंसितुं अहर्गणवदुपचर्यते। न चास्य शब्दान्तरं नास्ति, येन सिंहगुणसमूह इव इत्थं क्लेशेन प्रतिपाद्यते। तस्मादौपचारिकत्वं तावदयुक्तम्। न च नञ्समासेन अवयवव्युत्पत्तिः, समुदायप्रसिद्धया तन्निराकरणात्। न च नञ्समासस्य लक्षणमस्ति। नञ्समासे हि सति अव्ययपूर्वपदप्रकृतिस्वरसत्त्वात् ( तत्पुरुषे तुल्यार्थ० पा० ६।२।२ इति सूत्रेण ) आद्युदात्तत्वं स्यात्। मध्योदात्तस्तु अयं पठ्यते। तेन खप्रत्ययान्तताऽध्यवसानम्। तथाहि सति 'आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थं' इत्येवं ईनादेशे आश्रीयमाणे प्रत्ययाद्युदात्तत्वेन ईकारे स्वरः सिध्यति। तस्मात् अहर्गणनामधेयमेतत्। **अपिच** साह्नशब्देनैव द्वादशत्वसंबन्धेऽपि अवकल्प्यमाने अहीनपदोपादानात् अस्य शास्त्रस्य अर्थान्तरवाचित्वं विज्ञायते। प्रकरणाद्वा त्रित्वद्वादशत्वयोः संबन्धे लब्धे द्वावपि साह्नाहीनशब्दौ अनर्थकौ स्याताम्। अर्थान्तरत्वे तु अहीनस्य स तावदवश्योपादातव्यः। ततश्च आनन्तर्यात् त्रित्वस्यापि तत्संबन्धः प्रसज्यते एव, इति व्यवस्थाऽर्थं साह्नग्रहणमपि अर्थवत्। तस्मादपकर्ष इति।

( एवं यथाभाष्यं अधिकरणं व्याख्याय स्वाभिप्रायमाह– ) न तु किल एतद्युक्तम्। परप्रकरणे अन्यधर्मविधेः अन्याय्यत्वात्, तेन वा असंबद्धपदव्यवायविच्छिन्नस्य प्रकरणस्य पुनरनुसंधानक्लेशात्, द्वादशोपसदः इति च द्वादशाहप्रकरणे विहितत्वात्, तत्प्रकृतित्वेन सर्वाहीनेषु तत्प्राप्तेः। अतः त्रित्वमेव अस्मिन् वाक्ये सर्वदोषरहितत्वात् विधीयते, द्वादशत्वं तु अहीनसंबन्धिवाक्यान्तरादेव प्राप्तं औचित्यरूपेण अस्य स्तुत्यर्थं निवीतादिवत् अनूद्यते इति।

कथं तर्हि अधिकरणं नेतव्यम्? तदुच्यते। '**ज्योतिषो यद्यहीनत्वं ततो विधिरयं भवेत्। अहर्गणे तु तस्येदं प्राप्तं स्तुत्यर्थमुच्यते**॥' एतदुक्तं भवति, किं ज्योतिष्टोमः अहीनः, तस्य चेदं प्रकरणादङ्गं विधीयते, अथ अहर्गणः तस्य च प्राप्तमेव अन्यार्थमनूद्यते इति। ननु एवं सति अहर्गणसंबद्धमपि एतत् ज्योतिष्टोमस्य स्तुत्यर्थमुपयुक्तं, इति प्रकरणविरोधविचाराभावः प्राप्नोति। नैष दोषः। पूर्वपक्षे हि द्वादशत्वस्य विधीयमानस्य प्रकरणं ग्राहकं भवति इत्यनुगृह्यते। सिद्धान्ते तु अहर्गणसंयुक्तस्य प्रकरणं नेष्टं इति बाध्येत। अन्यत्तु तत्, यत् तथा सत्यपि प्रकारान्तरेण प्रकरणे एवोपयुक्तमिति। यदा तु द्वित्वबहुत्वन्यायेन ( ३।३।९ ) उत्कर्षोऽपि कथं चिदाश्रीयेत, शाखाऽन्तरविधौ च सत्यपि शाखाऽन्तरीयस्य प्रयोजनान्तररहितस्य विधित्वमुपपद्यते, तदा यथाभाष्यमेव शक्यं समर्थयितुम्। सर्वथा 'द्वादशाहीनस्य' इत्येतत् तावत् अहर्गणविषयत्वात् प्रकरणात् उत्कृष्यते इति सिद्धम्।

शा— '**तत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्वं प्रतीयते। तत्रैवाहीनशब्दोऽपि 'न हीन' इति वर्तते॥**' इति प्राप्ते ब्रूमः। '**साह्नादर्थान्तरं तावदहीन इति गम्यते। रूढिश्चेयं द्विरात्रादौ सा च योगाद् बलीयसी॥ तत्रापि यौगिकत्वं चेन्न सत्रेष्वप्रयोगतः। मध्योदात्तं पदं चेदमतः खप्रत्ययान्तता॥**'

**सोम**— अध्यायाद्यसूत्रप्रतिज्ञातार्थमध्ये अन्त्यस्य निरूपणं इदानीं प्राप्तावसरं इति **अवसरसंगतिः**। 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इत्यनेन सूत्रेण ( पा० ६।२।२ ) तत्पुरुषे समासे अव्ययादीनां पूर्वपदभूतानां प्रकृतिस्वरत्वं विधीयते। प्रकृतिस्वरत्वं नाम तेषां समासाभावदशायां यः स्वरः, समासेऽपि तत्स्वरवत्त्वम्। ततश्चात्र अव्ययस्य नञः पूर्वपदस्य प्रकृतिस्वरत्वे तस्य 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जं' इत्युदात्तत्वात् समासेऽपि नञ एवोदात्तत्वं इतरस्य तु सर्वस्य 'अनुदात्तं पदमेकवर्जम्' ( पा० ६।१।१५८ ) इत्यनुदात्तत्वं इति अहीनपदं आद्युदात्तं स्यात्। ननु 'आद्युदात्तश्च' इत्यनेन सूत्रेण प्रत्ययसंज्ञासंनियोगेन विधीयमानमाद्युदात्तत्वं अन्तरङ्गत्वात् ईनादेशात् पूर्वमेव भवति, ततश्च खप्रत्ययान्तत्वे अन्तोदात्तत्वमेव स्यात्, न मध्योदात्तत्वं ( इति चेन्न ) 'आयनेयीनीयियः' इत्यादिसूत्रचतुष्कविहिता आदेशा ये आयन्नादयः तेषु ( आयन्नादिषूपदेशिवद्वचनं

स्वरसिद्ध्यर्थे इत्यनेन ) उपदेशिवद्भावः, उपदेशः प्रत्ययोपदेशः, सोऽस्यास्तीति उपदेशी, उपदेशिना तुल्यं वर्तते इत्युपदेशिवत् । ततश्च उपदेशिवत् इति वचनं कर्तव्यं स्वरसिद्ध्यर्थे इत्येवं ईनादेशस्यापि उपदेशिवद्भावानुशासनेन प्रत्ययोपदेशकाले एवोपदिष्टप्रायत्वात् प्रत्ययसंज्ञाप्रवृत्तिदशायामेव ईनादेशस्य सद्भावात् तत्संज्ञासंनियोगेन विधीयमानमपि उदात्तत्वं ईकारस्यैव भवति इति युक्तं ( अहीनशब्दस्य ) मध्योदात्तत्वमिति । द्वादशोपसत्त्वं विधीयते इति **पूर्वपक्षे** प्रकरणेन विनियोगात् प्रकरणानुग्रहः । **सिद्धान्ते** तु प्रकरणविनियोज्यत्वाभावात् तद्बाधः इत्येवं प्रकरणविरोधाविरोधचिन्तारूपत्वसंभवात् स्तुत्यर्थत्वं ( द्वादशत्वस्य त्रित्वस्तुत्यर्थत्वं ) वार्तिकोक्तं युज्यते ।

**वि**— ' तिस्र एव हि साह्ने स्युरहीने द्वादशेत्यतः । ज्योतिष्टोमे द्वादशत्वमथवाऽहर्गणे भवेत् ॥ , अस्तु प्रकरणाद्यो नाहीनत्वं विरुध्यते । प्रकृतित्वान्न केनापि हीनोऽतोऽत्र विकल्प्यताम् ॥ , साह्नाद्भिन्नाऽहीनसंज्ञा रूढ्यैवाहर्गणे भवेत् । षष्ठीश्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यताम् ॥ ' प्रकरणात् द्वादशत्वं अपनेतव्यम् ।

**भाट्ट**— एवं विरोधे बलाबलं निरूप्य अधुना विरोध एव क्वास्ति क्व नास्तीति चिन्ताऽर्थमुत्तरः प्रपञ्चो यावदध्यायसमाप्ति । ज्योतिष्टोमे उपसदो विधाय ' तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य ' इति श्रुतम् । तत्र द्वादशत्वं किं द्वादशाहे निविशते, प्रकरणे एव वा इति चिन्तायां, त्रित्वस्य तावत् उपसदनुवादेन विहितस्य वाङ्नियमन्यायेन ( ९।१।२ वर्णकं २ ) स्वापूर्वसाधनीभूतोपसदर्थत्वात्, उपसदां च प्रकरणात् ज्योतिष्टोममात्राङ्गत्वावगतेः साह्नपदं अह्ना समाप्यमानत्वात् तदनुवादमात्रं, न तु उद्देश्यविशेषणं वाक्यभेदात् वैयर्थ्याच्च । अतश्च तद्वदेव द्वादशत्वमपि तदनुवादेन विधीयमानं उपसदर्थमेव । न च तस्य अहीनोद्देशेन विधिः, उपसदुपसर्जनत्वेन श्रुतस्य तस्य अहीनसंबन्धानुपपत्तेः, तस्य आवृत्त्या द्वादशत्वापत्तेश्च, द्वादशाहप्रकरणपठितवाक्यान्तरेण तत्र तस्य प्राप्तत्वाच्च । अतः अस्यापि त्रित्वेन विकल्पः । अहीनपदं च न हीयते इति व्युत्पत्त्या नञ्समासमङ्गीकृत्य ज्योतिष्टोमानुवादकम् । सर्वे हि अन्ये क्रतवः विकृतित्वात् एनमपेक्षमाणा न जहति । **अथ** नायं नञ्समासः, तथात्वे तस्य तत्पुरुषत्वात् ' तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ' इति स्मृत्या ' प्रकृत्या पूर्वपदं ' इत्यनुवृत्तिसहितया अव्ययाख्यनञ्पूर्वपदस्य उदात्ताख्यप्रकृतिस्वरत्वविधानात् आद्युदात्तत्वापत्तेः । अपितु मध्योदात्तत्वात् ' अह्नः खः क्रतौ ' इति स्मृत्या ' तस्य समूहः ' इत्यनुवृत्तिसहितया अहन्शब्दस्य क्रतुसमूहवाचिखप्रत्ययान्तत्वविधानात् तस्य च ' आयनेयीनीयियः फढखछघां प्रत्ययादीनां ' इति स्मृत्या ईनादेशविधानात् अयं शब्दः ( अहीनः ) खप्रत्ययान्तः । तथात्वे हि ' आद्युदात्तश्च ' इति सूत्रात् प्रत्ययादेः ईकारस्य उदात्तस्वरसिद्धिः । **न च** ईकारस्य ईनादेशावयवत्वात् कथं प्रत्ययावयवत्वं इति **वाच्यम्** । 'आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थं' इति स्मृत्या प्रत्ययस्वरसिद्ध्यर्थं ईनादेशस्यापि प्रत्ययोपदेशकालकत्वरूपोपदेशिवद्भावस्य विहितत्वात् । अतो नायं नञ्समासः **इति चेत्**, तथापि प्रकरणानुरोधात् अहीनशब्दस्य बहुदिवसकत्वसादृश्येन गौणतयैव उपपत्तेः । वस्तुतस्तु अहःसाध्यक्रतुसमूहत्वस्य शक्यताऽवच्छेदकस्य ज्योतिष्टोमेऽपि अभ्याससमूहात्मके सत्त्वात् अहीनशब्दस्य मुख्यवृत्त्यैव अनुवादत्वोपपत्तिः । **इति प्राप्ते**, आस्तां तावदहीनपदम् । एवकार एव तावत् त्रित्वातिरिक्तसंख्यायाः साधनत्वाभावमनुवदन् न द्वादशत्वेन विकल्पं सहते । **किंच** एवं प्रकरणादेव त्रित्वद्वादशत्वयोः ज्योतिष्टोमसंबन्धोपपत्तेः साह्नाहीनशब्दयोर्द्वयोरपि वैयर्थ्यप्रसङ्गः । अस्मन्मते तु एकेनाह्ना समाप्यमानत्वेन स्वल्पस्य कर्मणः स्वल्पैव संख्या उचिता, इति औचित्येन स्तुतिपरतया साह्नशब्दस्य न वैयर्थ्यम् । संख्ययोः एकार्थत्वेन विधौ शब्दभेदो न युज्यते । अतः अहीनपदं साह्नात् अर्थान्तरपरं इत्यपि अविवादम् । युक्तं चैतत् । ' तस्य समूहः ' इत्यनुवृत्तिसहितया ' अह्नः खः क्रतौ ' इति स्मृत्या वैदिकप्रयोगाच्च अहःसमूहसाध्यक्रतुविशेषत्वस्यैव सत्रादिव्यावृत्तस्य यजतिचोदनाचोदितसुत्यासमुदायात्मकत्वस्यैव योगरूढ्या अहीनपदशक्यताऽवच्छेदकत्वप्रतीतेः न

द्वादशत्वस्य ज्योतिष्टोमे निवेशसंभवः। अतश्च अहीन-संबन्ध्युपसदुद्देशेन द्वादशत्वविधिः। षष्ठीस्थले च परस्परसंबन्धस्य प्राचीनमते व्युत्पन्नत्वात् न विशिष्टोद्देशे वाक्यभेदः। वस्तुतस्तु अहीनोद्देशेन अतिदेशप्राप्तेः पूर्वप्रवृत्त्या द्वादशोपसत्त्वमेव अनेन वाक्येन द्वादशत्वप्राप्तिफलकं 'तां चतुर्भिः' इतिवत् विधीयते। द्वादशाहप्रकरणस्थवाक्यान्तरं तु शाखाऽन्तरपरतया वा सत्रमात्रपरतया वा न विरुध्यते इति भाष्यकाराभिप्रायः। वस्तुतस्तु द्वादशाहप्रकरणस्थवाक्यस्य सत्राहीनोभयसाधारणत्वादेव अहीनेऽपि द्वादशत्वप्राप्त्युपपत्तेः एकवाक्यतालाभाय प्रकरणपाठार्थवत्त्वाय च औचित्येन त्रित्वविधिरेव अयमर्थवादः। महतः कर्मणो महती संख्या उचिता न तु प्रकृते, इति च स्तुतिः। अतो वाक्येन प्रकरणं बाधित्वा द्वादशत्वस्य अहीनसंबन्धावगतेः न तेन ज्योतिष्टोमे द्वादशत्वम्। मूले तु ( वार्तिके ) षष्ठ्या भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधोपन्यासः इति द्रष्टव्यम्।

**मण्डन**—' अहीनोपसदां संख्या।' १३.

**शंकर**—' अहीनता च प्रकृतेः।' १३.

* **अहीनाधिकरणन्यायेन** ( निवीतं मनुष्याणां इति) षष्ठीश्रुत्या मनुष्यधर्मः (पूर्वपक्षे)। **वा. ३।४।१।१.** **अत्र सुधा**-प्रकरणानुरोधात् श्रुतेरन्यथाव्याख्यानौचित्यसूचनाय अहीनाद्यधिकरणन्यायोक्तिः। अहीनादेः प्रकृतकर्मानन्वयात् द्वादशोपसत्त्वादेः तद्युक्ताहीनधर्मत्वायोगेऽपि मनुष्याणां प्रकृतकर्मान्वयसंभवात् अबाधकस्यापि बाधायोगात् प्रकरणानुगृहीतया श्रुत्या प्रकृतकर्मयुक्तमनुष्यधर्मत्वम्। इति। पृ. १३४६.

**अहीनवत् पुरुषस्तदर्थत्वात्। ३।४।५।१४॥**

ज्योतिष्टोमे 'तीर्थे स्नाति' इति श्रुतम्। दर्शपूर्णमासयोः 'जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू' 'प्राणो दक्षः, अपानः क्रतुः, प्राणापानावेवात्मन् धत्ते' इति श्रुतम्। इमौ स्नानमन्त्रपाठरूपौ धर्मौ पुरुषः वशीकरोति। एतौ पुरुषधर्मौ, न क्रतुधर्मौ न वा क्रतुयुक्तपुरुषधर्मौ। तदर्थत्वात् पुरुषार्थत्वात् पुरुषधर्मत्वात्. तयोर्धर्मयोः। स्नानं तावत् मलापकर्षणार्थं पुरुषार्थमिति स्पष्टम्। मन्त्रपठनमपि पुरुषार्थमेवेति वाक्यादवगम्यते जञ्जभ्यमानपदस्य शानजन्तत्वेन, शानचश्च कृत्वात् कर्तृवाचकत्वेन पुरुषप्राधान्यावगमात्। अहीनवत् यथा 'द्वादश अहीनस्य' इति विधीयमानं द्वादशोपसत्त्वं प्रकरणमपि बाधित्वा अहीनपदश्रवणात् अहीनार्थमित्यवगतं तद्वत्। तस्मात् स्नानं मन्त्रश्च पुरुषधर्मौ इति पूर्वः पक्षः।

**प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्। १५॥**

स्नानं मन्त्रपाठश्च पुरुषधर्मौ इति पूर्वपक्षं सूत्रप्राप्तं वाशब्देन व्यावर्तयन् सिद्धातमाह। तद्युक्तस्य तेन प्रकृतदर्शपूर्णमासरूपक्रतुना युक्तस्य पुरुषस्य संस्कारः स्यात्। प्रकरणविशेषात् इत्थंभावाऽऽकाङ्क्षालक्षणेन प्रकरणेन विशेषात् अक्रतुयुक्तस्य पुरुषस्य व्यावर्तनात्। प्रकरणवशेन क्रतुयुक्तपुरुषस्यैव ग्रहणात्। द्रव्यवत्, यथा व्रीह्यादि द्रव्यं दर्शपूर्णमासापूर्वसाधनरूपापन्नमेव प्रोक्षणादि प्रतिपद्यते तद्वत्। तस्मात् क्रतुयुक्तपुरुषधर्मौ स्नानमन्त्रपाठौ इति सिद्धान्तः।

**व्यपदेशादपकृष्येत। १६॥**

सिद्धान्ती पूर्वपक्ष्युक्तदृष्टान्तवैलक्षण्यमाह। व्यपदेशात् वि इत्यतिशये, अपेति विप्रकर्षे, दिशिरुच्चारणक्रियः। अहीनस्य ज्योतिष्टोमप्रकरणात् अत्यन्तविप्रकृष्टाम्नानात् अहीनसंयुक्तं द्वादशोपसत्कत्वं ज्योतिष्टोमप्रकरणेन अगृह्यमाणत्वात् अपकृष्येत उत्कृष्येतेति युक्तम्। प्रकृते तु जञ्जभ्यमानपुरुषस्य क्रतौ लाभात् तद्विषयत्वेन मन्त्रपठनमुपपन्नं, इति नास्य क्रतुत उत्कर्षः। तस्मात् क्रतुयुक्तपुरुषसंस्कार एवेदं स्नानं मन्त्राभिधानं च इति सिद्धान्तः। 'जभी जृभि गात्रविनामे' इति धातोः यङन्तात् शानचि अभ्यासकार्ये जञ्जभ्यमानः इति रूपम्। **के.**

**अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं, कर्मभेदः स्यात्। १०।६।१७।६२॥**

एकादशरात्रे पौण्डरीके नाम अहीने 'अयुतं पौण्डरीके दद्यात् अश्वसहस्रमेकादशं' इति दक्षिणायाः शास्त्रं प्रत्यहं स्यात्। प्रत्यहं एतावती सर्वा दक्षिणा देया। गुणत्वात् दक्षिणायाः, प्रधानत्वाच्च अह्नां, प्रतिप्रधानं च गुणावृत्तेः। ततश्च दक्षिणाभेदात् कर्मभेदः स्यात्। तानि एकादश

**अहीने शुक्रान्वारम्भादि केन चिद्यजमानेन कर्तव्यम् ॥**

**अनियमोऽविशेषात् । १२।४।१२।३३ ॥**

**भाष्य**— ( पूर्वसूत्रादेकपदमनुवर्तते ) तस्य एकस्य ( यजमानस्य ) अनियमः यः कश्चिदेकः कुर्यात् । कुतः ? अविशेषात् । नात्र शब्दकृतोऽर्थकृतो वा विशेषो गृह्यते । तस्मादनियमः । अहीने मुख्यस्याभावात् एवमवस्थितम् ।

**सोम**—पूर्वोक्तोपजीवनात् **संगतिः** ।

**वि**— ' अहीने सत्रवच्छुक्रस्पृगैक्ये स नियम्यते । न वा, ऽऽद्यः संभवा, न्मैवं विशेषानवधारणात् ॥ ' विशेषस्य अवधारयितुमशक्यत्वात् यः कोऽपि इति राद्धान्तः । ( **भाट्ट** इदं सूत्रं पूर्वसूत्रेणैकीकृत्य एकमेव एकादशमधिकरणं स्वीकृतम् । तेन नात्र पृथक् तस्योपवेशनं शक्यम् । )

**मण्डन**— ' कुर्यात् कश्चिदहीनके । ' अन्वारम्भम् ।

**शंकर**— ' सत्रादौ स च कश्चन । ' यजमानः ।

**अहीनो वा प्रकरणाद् गौणः । ३।३।८।१५ ॥**

ज्योतिष्टोमप्रकरणे ' तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य ' इत्यत्र प्रकरणात् ज्योतिष्टोमे एव न हीनः अहीनः इति व्युत्पत्त्या गौणः गुणवृत्त्या प्रवृत्तः ' अहीनः ' इति शब्दः स्यात् । ज्योतिष्टोमः एव ' द्वादशाहीनस्य ' इति अहीनपदवाच्यः स्यात् । वाशब्देन संशयो निरस्यते । तस्मात् द्वादशोपसत्ता ज्योतिष्टोमस्यैव, इति न प्रकरणात् द्वादशोपसत्ताया उत्कर्षः । इति पूर्वः पक्षः ।

**असंयोगात्तु मुख्यस्य, तस्मादपकृष्येत । १६ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन व्यावर्तयन् सिद्धान्तमाह । नाहीनशब्दो ज्योतिष्टोमे गौणः । मुख्यस्य अहःसमूहसाध्यक्रतुत्वरूपस्य अहीनत्वस्य ज्योतिष्टोमे असंयोगात् असंभवात् । न च मुख्यसंभवे गौणग्रहणमर्हति । ननु नञ्समासो भविष्यति । नेति ब्रूमः । तथा सति आद्युदात्तः अहीनस्य इति शब्दो भविष्यति । मध्योदात्तस्तु अयं अहीनस्य इति । तथा च अहःशब्दात् समूहार्थे खप्रत्यये सिद्धोऽयं मुख्योऽहीनशब्दः । तस्मात् ज्योतिष्टोमप्रकरणात् द्वादशोपसत्ता अहीनप्रकरणे अपकृष्येत नीयेत । तस्मात् द्वादशोपसत्ता अहीनस्यैव अहर्गणस्य, न ज्योतिष्टोमस्य साह्नस्य इति सिद्धान्तः । **के.**

* **अहीनैकाहसत्ररूपाः** सोमविकृतिरूपाः सर्वे यागाः अग्निष्टोमात् प्राक् नानुष्ठेयाः । **वि.** ५।३।१४.

**अहृदयवाचां अहृदयमेवोत्तरं इति न्यायेन** स्वमतसिद्धस्यापि परसिद्धिमात्रेण निषेधप्रतियोगितया प्रयोगः । **चन्द्रिका.** १।२४ पृ. ४०२.

---

## आ

* **आईभावादिरूपा** एकाराद्यक्षरसंस्कारिका गीतिः योनौ यत्र स्थाने श्रुता, तत्र स्थानान्तरे यत्रैव एकारपाठः उत्तरादौ, तत्रैव आईभावरूपा गीतिरूहितव्या । **भाट्ट.** ९।२।८.

* **' आईरा आईरा चा दाक्षासा । '** इति ऊहग्रन्थे गानाम्नानम् । **भाट्ट.** ९।१।१८.

* आकाङ्क्षा पूर्वप्रतीतस्य स्वविरुद्धार्थे न भवति । **पराक्रम.** पृ. १. * ' **आकाङ्क्षा संनिधानं च योग्यता चेति च त्रयम् । संबन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥** ' यो हि बहूनां संबन्धित्वेन सकृदाम्नायते तस्य अवश्यंभावि एकेनानन्तर्यं, इति न तदेव तदा संबन्धकारणत्वेन आश्रीयते, तत्रापि अस्मादेव कारणत्रयात् संबन्धसिद्धेः । संनिधिविशेषात्तु तदाश्रयप्रतिपत्त्या भवति भ्रान्तिः । सा तु साकाङ्क्षयोग्यसंनिहितसंबन्ध्यन्तरदर्शनात् निवर्तते । यथा धात्वर्थादिषु विधिबुद्धिः गुणाद्युपादानसामर्थ्यात् । एवं हि तत्र ज्ञायते सर्वार्थोऽयं आम्नायमानः सर्वसाधारणानन्तर्यासंभवात्, वाक्यैकत्वाच्च कस्य चिदेकस्य समीपे पठ्यते । तस्मादकारणमानन्तर्यम् इति । **वा.** २।१।६।४८ पृ. ४५५, * **आकाङ्क्षाः** सर्वाः संनिहितावलम्बिन्यो भवन्ति । नहि असंनिहितं अपेक्षितुं बाधितुं वा शक्यम् । ३।३।१४ पृ. ८२९. * **आकाङ्क्षायाः** शब्दवैचित्र्यकृतत्वात् । एकस्य धातोः अर्थभेदेन सकर्मकत्वाकर्मकत्ववत् पर्यायाणामपि तदभ्याहतम् । **मणि.** पृ. १०९,

* **आकाङ्क्षायां** असत्यां आनन्तर्यमकारणम्। 'सर्वत्र तु बोधिते पदार्थे वाक्यार्थः उपपद्यते नान्यथा। सामान्यवृत्ति पदं, विशेषवृत्ति वाक्यम्। सामान्येन अभिप्रवृत्तानां पदार्थानां यत् विशेषे अवस्थानं, स वाक्यार्थः। तदेतदुक्तं ' तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ' इति (१।१।७।२५)। तत्र प्रत्यक्षतः पदार्थः, वाक्यार्थः पुनरानुमानिकः। तदेतदवगम्यतां, केवलस्वार्थवृत्ति पदं अनुपदेशकं, इति पदान्तरेण संनिहितेन एकवाक्यत्वमभ्युपैति, नान्यथेति। **भा.** ३।१।१२ पृ. ६८८–८९. * आकाङ्क्षायां असत्यां संनिधानमकारणं भवति। यथा ' भार्या राज्ञः पुरुषो देवदत्तस्य ' इति। एकस्मिन्नपि वाक्ये तदवयवभूतस्यानपेक्षितस्य नैव भवति संबन्धः। यथा ' अश्वेन व्रजति श्वेतेन पटेनावृतः' इति। नानपेक्षितस्य अश्वस्य श्वैत्यं विशेषणं भवति। **भा.** ६।४।६।२३ पृ. १४४३. * आकाङ्क्षायां सत्यां आकाङ्क्षापूरणसमर्थं ज्ञातसंबन्धपदं एकदेशविशेषणं भवति। **ऋजु.** पृ. ७१. * आकाङ्क्षायां सत्यां (ग्रहं संमार्ष्टि इत्यत्र एकत्वं) विवक्ष्येत। सा च उपादीयमानेषु आकाङ्क्षा उपजायते नोद्दिश्यमानेषु। उद्दिश्यमाने हि प्रातिपदिकार्थसंबन्धिमात्रापेक्षित्वात् न संख्याऽऽकाङ्क्षा प्रमाणान्तरादेव विज्ञातसंख्यत्वात्। **वा.** ३।१।७।१४ पृ. ७२३, * **आकाङ्क्षाऽऽत्मकं** प्रकरणम्। ३।३।७।१४ पृ. ८२९. * **आकाङ्क्षानिबन्धन**त्वात् संबन्धस्य। **सु.** पृ. ५२५. * **आकाङ्क्षापूर्वकः** संबन्धो भवति सर्वत्रैव। **वा.** २।२।३।२ पृ. ४७९. * **आकाङ्क्षाऽभावे** पदार्थस्य मन्त्रानुसारेण संकोचः अयुक्तः। मन्त्रो हि अनुष्ठानकाले पदार्थं प्रकाशयन् पदार्थशेषः। **पराक्रम.** पृ. ४३. * **आकाङ्क्षामूलं** एकवाक्यत्वम्। **वा.** ३।३।७।१४ पृ. ८२९.

* **आकाङ्क्षा–योग्यता–संनिधानानि** ग्राहकग्रहणाख्ये अन्विताभिधाने प्रयोजकानि, न शब्दोपात्तत्वमपि। तथात्वे शब्दानभिहितस्य प्राकृतोपकारकस्य वैकृतविधिना अन्विताभिधानाभावप्रसङ्गात् (प्राभाकररीत्येदम्)। **सोम.** ५।१।१ वर्णकं ३, * **आकाङ्क्षायोग्यतासंनिधिवशात्** वाक्यं स्वार्थं प्रतिपादयति इत्यविवादम्। **वि.** १।१।७. * **आकाङ्क्षायोग्यताऽऽसत्तिज्ञानं** वाक्येन अन्वयानुभवजनने सहकारि। ' घटः कर्मत्वं ' इत्यादेः निराकाङ्क्षतया स्वरूपायोग्यत्वात्, ' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतां ' इत्यादेः जनितान्वयबोधेन निराकाङ्क्षत्वात्, ' वह्निना सिञ्चति ' इत्यादेः अयोग्यत्वात्, ' गिरिर्भुक्तमग्निमान् देवदत्तेन ' इत्यादेः अनासन्नत्वाच्च शाब्दबोधानुदयात्। आकाङ्क्षा च पदनिष्ठा तत्पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वरूपा। ' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतां ' इत्यत्र राजपदस्य पुत्रेण सह जनितान्वयबोधस्य न पुरुषसाकाङ्क्षत्वम्। ' घटः कर्मत्वं ' इत्यादेः अभेदान्वयबोधे साकाङ्क्षत्वेऽपि भेदान्वयबोधे न साकाङ्क्षत्वं, लाक्षणिकगङ्गादिपदस्यापि अनुभावकत्वस्वीकारात् तत्रापि साकाङ्क्षत्वम्। यदि च लाक्षणिकस्य नानुभावकत्वं, तदा तीरोपस्थापकपदव्यतिरेकप्रयुक्तान्यथाऽननुभावकत्वरूपा आकाङ्क्षाऽपि बोध्या। **अन्ये** तु यत्पदोपस्थाप्यस्य येन विना नान्वयबोधविषयत्वं, तस्य तेन आकाङ्क्षा। सा चार्थनिष्ठा। तेन लाक्षणिके अध्याहारस्थले च नानुपपत्तिः **इत्याहुः**। वाक्यैकवाक्यतास्थले तु तद्व्यतिरेकप्रयुक्तकार्याजनकत्वं आकाङ्क्षा। एवं च अर्थवादविधिवाक्ययोः अन्यतरव्यतिरेकप्रयुक्तप्रवृत्त्यजनकत्वेन आकाङ्क्षा। एवं प्रधानविध्यर्थप्रधानस्य अङ्गविध्यर्थाङ्गं विना फलाजनकत्वरूपा आकाङ्क्षा। **अन्ये तु** पदव्यतिरेकप्रयुक्तो वक्तुः तात्पर्यविषयसंसर्गावगमप्रागभावः आकाङ्क्षा। ' घटः कर्मत्वं आनयनं कृतिः' इत्यादौ, ' अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतां ' इत्यादिजनितान्वयबोधे च संसर्गावगमाप्रसिद्ध्या तत्प्रागभावाभावात् निराकाङ्क्षत्वं **इत्याहुः**। **न च** एवं सर्वत्र आकाङ्क्षाया अभावरूपतया स्वरूपसत्या एव जनकत्वात् ' आकाङ्क्षाभ्रमेण शाब्दबोधः' इति व्यवहारोच्छेदापत्तिः इति **वाच्यम्**। अन्वयानुभवाभावे तत्पदव्यतिरेकप्रयुक्तत्वभ्रमसंभवात्। ' घटः कर्मत्वं ' इत्यादौ तत्पदव्यतिरेकाभावभ्रमेण शाब्दबोधसंभवः। जनितान्वयबोधे तु अजनितबोधत्वभ्रमः। इति दिक्। **मणि.** पृ. ६५–६६. * **आकाङ्क्षावशेन**

एकवाक्यता भवति । पूर्वप्रतीते च उत्तरमात्मानुगुणं अधिकं वा आकाङ्क्षति । वा. ३।३।१।२ पृ. ८०६. * अर्थसंबन्धे हि यस्मात् अर्थाकाङ्क्षा हेतुः नोपसर्जनता अनुपसर्जनता वा, 'कस्य गुरुकुलं' इत्येवमादिषु दर्शनात् । बृहती. पृ. ७१ । कस्य गुरुकुलं इत्याकाङ्क्षायां गुरुकुलविशेषणैः देवदत्तादिभिः संबन्धदर्शनात् देवदत्तस्य इति । ऋजु. * एकेन हि निराकाङ्क्षीकृतः नेतरौ आकाङ्क्षिष्यति । अनर्थकत्वादाकाङ्क्षति । एकेन च संबद्धो नानर्थको भवति, तस्मात् नेतरौ आकाङ्क्षति । भा. २।१।१६।४८ पृ. ४५७, * कर्तव्यस्य इतिकर्तव्यताऽऽकाङ्क्षस्य वचनं प्रकरणम् । ३।३।७।१४ पृ. ८५१ । कथं इत्यनुग्रहोपायाकाङ्क्षणं आकाङ्क्षा इति घञन्तं व्याख्यायते । यद्वा इतिकर्तव्यतामाकाङ्क्षति इति इतिकर्तव्यताऽऽकाङ्क्षं भावापूर्वयोरेव एकम् । तस्य यद्वचनं इति समानाधिकरणे षष्ठ्यन्ते । वचनमिति शब्देन प्रत्यायनम् । एतदुक्तं भवति, वस्तुरूपेण विद्यमानाऽपि आकाङ्क्षा न प्रकरणं इत्यभिधीयते, किं तर्हि प्रतीयमाना । साऽपि च कर्तव्यताऽर्थोपसर्जनत्वेन गृह्यमाणा, न स्वातन्त्र्येण । तेन आकाङ्क्षा अभिधीयमाना प्रकरणं आकाङ्क्षावती वा भावना इति द्रष्टव्यम् । वा. ३।३।७।१४ पृ. ८५२. * संबन्धश्च आकाङ्क्षापूर्वकः । सा च भावशब्देभ्यः प्रसर्पन्ती दृश्यते, न द्रव्यगुणशब्देभ्यः । २।१।१।१ पृ. ३७६. * साकाङ्क्षस्य संनिधौ परस्तात् पुरस्ताद्वा परिपूरणसमर्थः श्रूयमाणो वाक्यशेषो भवति । भा. २।१।१६।४८ पृ. ४५४.

* **आकाङ्क्षितपूरणसमर्थ** च संबन्धितामापद्यते । बृहती. पृ. ७१

**आकाङ्क्षितविधानं ज्यायः इति न्यायः।** आकाङ्क्षितमेव विधातव्यं, न अनाकाङ्क्षितं इति न्यायार्थः । 'यत्तु मीमांसकैः उक्तं "शानजंशे 'कर्तरि कृत्' इति व्याकरणं शक्तिग्राहकमस्ति" इति तदपि आपाततः । कृद्वाक्यशेषोऽयं अनिर्दिष्टार्थेषु ण्वुलादिषु उपतिष्ठते, न तु शत्रादिषु, स्वान्यर्थेन निराकाङ्क्षत्वात् इति वक्ष्यमाणत्वात् । आकाङ्क्षितविधानं ज्यायः इति न्यायात्' । व्या. कौस्तुभे. स्फोटप्रकरणे ।

**आकाङ्क्षितविधिन्यायः** । 'दीक्षितो भृतिं वन्वीत' न चास्याः द्रव्यप्राप्तिद्वारा द्रव्यसंस्कारकत्वात् द्रव्यसत्त्वे च तत्प्रापणोपायवैयर्थ्यात् असत्यपि निमित्तत्वश्रवणे प्रयोजनवशादेव आकाङ्क्षितविधिन्यायेन नियमविधित्वोपपत्तिः इति वाच्यम् । अनाकाङ्क्षितविधानस्य फलकल्पकत्वेन दोषत्वात् । भाट्ट. ६।८।६.

* **आकारस्यापि** संस्थानावयवसंनिवेशापरपर्यायस्य परिमाणविशेषात्मकतया गुणत्वेनामूर्तत्वात् जातितुल्यत्वम् । सु. पृ. १०२९.

* **'आकाशमपि नित्यं सद्यदा भूमिजलावृतम् । १।१।६।३० ॥ व्यज्यते तदपोहेन खननोत्सेचनादिभिः । प्रयत्नानन्तरं ज्ञानं तदा तत्रापि दृश्यते । ३१ ॥ अथ स्थगितमप्येतद्स्त्येवेत्यनुमीयते । ३२ ॥ श्लोवा.**

* अभिन्नं चाकाशम् । बृहती. पृ. २०२. * 'एकं च पुनराकाशम्' । भा. १।१।६।१५ पृ. ८२. * कर्णशष्कुल्यवच्छिन्नं एकमाकाशमेव श्रोत्रम् । वैद्यनाथ. १।१।६।१३ पृ. ७८. * आकाशस्तल्लिङ्गात् इत्याकाशाधिकरणे (१।१।८।२२ ब्रसू.) लिङ्गबलात् आकाशश्रुतेः अन्यथानयनं बलवदाश्रयात् । पराक्रम. पृ. ६२. * आकाशो हि कदा चित् कूपपूरणयत्नेन प्रत्यक्षो भवति, न तु नश्यति । प्रपञ्चितं चैतत् आकाशस्य प्रत्यक्षत्वं वार्तिके । वैद्यनाथ. १।१।६।१३ पृ. ७६. * नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुः आकाशः आदित्यो वा । भा. १।२।१।१० पृ. १२६. * 'नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं (करोतिकर्मत्वं) खपुष्पाकाशयोरिव ॥' य एव हि प्रवृत्तभवनः संभावितभवनो वा अन्येन प्रयुज्यते, स एव क्रियमाणत्वेनावधार्यते, नान्यः । तथा च न कश्चित् खपुष्पं आकाशं वा कुर्वन्नुपलभ्यते । वा. २।१।१।१ पृ. ३७७. * आकाशस्य अतीन्द्रियत्वात् तेन सह संयोगस्य वायुवनस्पतिसंयोगवत् अप्रत्यक्षत्वात् लिङ्गाभावात् । पतत्सु पतत्रिषु 'पतति' इति बुद्धिर्न

स्यात् । **ऋजु.** पृ. ७६. * आकाशस्य एकत्वात् य एवात्र श्रोत्राकाशः, स एव देशान्तरेष्वपि । **भा.** १।२। ६।१३. * **'आकाशेऽवस्थितः शब्दः'** ( इति केचन ) । **वा.** १।३।८।२४ पृ. २७२.

* **आकाशकालदिशां** षडिन्द्रियजन्यप्रत्यक्षविषयत्वेन, ...विशेषगुणसंबन्धित्वेन आत्मन इव बाह्यविषयसंबन्धित्वेन प्रत्यक्षत्वं 'इदानीं ज्ञातो घटः' 'घटाकाशे ध्वनिरुत्पन्नः' इत्याद्यनुभवात् । अतो नानित्यत्वम् । **मणि.** पृ. १७०.

* **आकाशदिक्कालात्मनां** परमाणुदृष्टान्तेन नित्यत्वात् । **वा.** १।३।८।२७ पृ. २८५.

* **आकाशपदस्य व्यक्तौ** एव शक्तिः । आकाशमेकं नित्यं इन्द्रियग्राह्यं च । अतीन्द्रियमिति **प्राभाकराः** । कर्णावच्छिन्नमाकाशमेव श्रोत्रं तद्विषयश्च शब्दः । **के.**

⌛ **आकाशपरिच्छिन्नत्वन्यायः** । यथा घटाद्यवच्छेदकृतस्याकाशे परिच्छिन्नत्वस्य घटाद्यभावेऽभावः एवमन्यत्र । **साहस्री.** ३५२.

⌛ **आकाशमुष्टिहननन्यायः** । अयमसंभवद्वस्तुनि प्रयत्नकरणेऽवतरतीति सर्वदर्शनसंग्रहीयजैमिनीये ध्वनितः । मुष्टिना आकाशस्य हननं न संभवति यथा, तथा केन चित् असंभवतो वस्तुनः प्रतिपादने कृते तत्प्रहासार्थं अयमुदाह्रियते । **साहस्री.** ६६३.

* **आकाशविषयत्वात्** शब्दस्य । **भा.** १।१।६।१३ पृ. ७८ । आकाशात्मकश्रोत्रग्राह्यत्वादित्यर्थः । **वैद्यनाथ.** * **आकाशादीनि** नित्यावस्थितानि । **वा.** २।१।२।५ पृ. ३९१. * **आकाशादिपदे** अनन्तशक्तिकल्पनाऽभावेन न धर्मे शक्तिः ( किंतु व्यक्तावेव ) । **मणि.** पृ. १२०.

* **आकाशाधिकरणेऽपि** ( १।१।८।२२ ब्रसू. ) नोपसंहारप्राबल्योपजीवनशङ्काऽवकाशः । **पराक्रम.** ६७. * **आकाशोपलम्भ**प्रतिबन्धकः मूर्तद्रव्यावष्टम्भः अन्वयव्यतिरेकाभ्यामवगम्यते । **सु.** पृ. ३४७.

* **आकृतिः** क्रियायाः प्राक् अनभिव्यक्ता, सा क्रियया अभिव्यज्यते, यतः क्रियोत्तरकालं शब्दप्रयोगः । **भा.** ७।३।११।२९, * आकृतिः द्रव्यगुणकर्मणां सामान्यमात्रम् । १।३।९।३० पृ. २९४, * आकृतिः शब्दार्थः इति जैमिनिवचनं उपपन्नम् । यथा चाकृतिः शब्दार्थः, तथा उपरिष्टात् निपुणतरमुपपादयिष्यामः । १।१।५।५ पृ. ५२, * आकृतिः शब्दार्थो यदि भवेत्, न तत्र द्रव्याश्रयवचनः शब्दो भवेत् 'षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः' इति । नहि आकृतिः षडादिभिः संख्याभिर्युज्यते । तस्मान्नाकृतिवचनः (शब्दः । इति व्यक्तिवादी)। १।३।९।३१, * आकृतिर्हि व्यक्त्या नित्यसंबद्धा । १।३।९।३३ पृ. ३०४. * आकृतिश्च मीमांसकानां जातिः । **बाल.** पृ. ७.

⌛ **आकृतिस्तु क्रियाऽर्थत्वात्** । १।३।११।३३॥

यदा च लौकिका एव शब्दास्तदर्थाश्च, तदा संदेहः किमाकृतिः शब्दार्थः, अथ व्यक्तिः इति । का पुनराकृतिः ? का व्यक्तिः ? द्रव्यगुणकर्मणां सामान्यमाकृतिः, असाधारणविशेषो व्यक्तिरिति ।

**अत्र प्रभाकरेण** संगतिलोभात् इत्थमधिकरणमुपवर्णितं, उच्चरिते हि गोशब्दादौ उभयं प्रतीयते जातिश्च व्यक्तिश्च । कार्यान्वयित्वं च द्वयोरप्यविशिष्टम् । यथा हि 'गवा यजेत' इत्यत्र व्यक्तेः कार्यान्वयः, तथा 'श्येनचितं चिन्वीत' इत्यत्र आकृतेरपि, व्यक्तिसादृश्यस्य अशक्यसंपादनत्वात् । न चोभयोरपि शब्दवाच्यत्वं अन्यतरस्यापि शब्दवाच्यत्वे नान्तरीयकतया अन्यतरावगमोपपत्तेः । अथ च कस्य शब्दवाच्यत्वं, कस्य नान्तरीयकत्वमित्यवधारयितुं न शक्यते, इति गवादिपदवती चोदना अनध्यवसितार्थत्वादप्रमाणमेव । इति पूर्वः पक्षः । सिद्धान्तस्तु—आनन्त्यव्यभिचाराभ्यां संबन्धग्रहणाशक्तेः व्यक्त्यभिधानासंभवादाकृतेरेव वाच्यत्वं, नान्तरीयकत्वेनैकसंविद्वेद्यतया अवगमो व्यक्तेरिति । **तदेतत्** पूर्वापरप्रतिसंधानशून्यस्यैवाभिधानम् । जातिव्यक्त्योः अन्यतरवाच्यत्वानवधारणेऽपि अवगत्यविशेषादनुष्ठानाविशेषाच्च कुतोऽनध्यवसायादप्रामाण्यम् ? तथा सति किं नित्यत्वेन श्रोत्रदेशस्थस्यैव ध्वन्यभिव्यक्तस्य शब्दस्य अर्थप्रतिपादकत्वं, अनित्यत्वेन वा वीचीतरङ्गवृत्त्या श्रोत्रदेशसमागतस्य इत्यनध्यवसायादप्रामाण्यप्रसङ्गः । तथा जातिव्यक्त्योः एकसंविद्वेद्यत्वे जातिरेवाभिधेयेति सिद्धान्तोऽ-

प्यनुपपन्नः । यतोऽभिधानक्रियाजनितज्ञानविषयत्वं खलु वाच्यत्वम् । तच्च आकृतेरभ्युपगम्य, तस्मिन्नेव ज्ञाने व्यक्तिः प्रतिभासमाना नाऽभिधीयते इति चित्रम् । **अथोच्येत** द्वयी हि शब्दशक्तिरसाधारणी साधारणी च । तत्र असाधारणी शक्तिरभिधानरूपा जातिगोचरैव । साधारणी तु प्रत्यक्षानुमानार्थापत्तीनामिव व्यक्तिगोचराऽनभिधानरूपा, तदुभयशक्तिजनितैकज्ञानविषयत्वेऽपि जातिव्यक्त्योरसाधारणशक्तिविषयत्वात् जातिरेव वाच्या न व्यक्तिरिति । **तदेत**द्वादमात्रम् । नहि प्रमाणानां प्रात्यात्मिकीं असाधारणशक्तिं विना प्रतिपाद्यविषयिणी का चिच्छक्तिरस्ति । तथाहि, प्रत्यक्षस्य संबद्धवर्तमानविषयिणी, अनुमानस्य ज्ञातसंबन्धव्यापकविषयिणी, शब्दस्य वाच्यविषयिणी, अर्थापत्तेस्तु अनुपपद्यमानोपपादकविषयिणी । प्रतिपादकसाधारण्येऽपि यदि व्यक्तेः साधारणशक्तिविषयत्वादवाच्यत्वं, तदा जातेरप्यवाच्यत्वप्रसङ्गः । **अथ** मतं, वृद्धव्यवहारे वाच्यवाचकसंबन्धावधारणकाले जातिव्यक्त्योः एकशब्दसाहचर्यावगमात् अभिधानकाले व्यक्तिसंस्कारस्यापि उद्बुद्धत्वात् संस्कारशब्दाभ्यां समाहारजमुभयविषयमेकं ज्ञानं जन्यते प्रत्यभिज्ञानमिवेति । **तदेत**च्छङ्खशुक्तिगतशुचित्वदर्शनात् नरशिरःकपालादावपि प्राण्यङ्गत्वेन शुचित्वानुमानमिव आभाति । यतः प्रत्यक्षज्ञानस्यैवायं महिमा, यदुद्बुद्धसंस्कारेन्द्रियाभ्यां जन्यमानमिन्द्रियासंबद्धमपि प्रत्यभिज्ञाऽऽदौ विषयीकरोति, न त्वनुमानादिज्ञानानामपि । तानि खलु न्यायसंपादनाधीनप्रवृत्तीनि । तत्रानुमानज्ञानं तावत् व्याप्तिपक्षधर्मतापरामर्शवशाल्लिङ्गवशेनोपजायमानं हंसक्षीरोदकन्यायेन व्यापकविशेषविषयमेवोपजायते । अर्थापत्तिज्ञानमपि अनुपपत्तिपरामर्शादुपजायमानं उपपादकैकविषयमेवोत्पद्यते । एवं शब्दोऽपि अभिधानसमये पूर्वावगतसामर्थ्यपरामर्शवशेन अर्थमभिदधानो यद्गोचरैव अस्य वाचकशक्तिरवधारिता, तद्विषयमेव ज्ञानं जनयति । प्रत्यक्षज्ञानं तु न न्यायसंपादनापरिशोधितविषयं, किंतु अर्थेन्द्रियसंनिकर्षवशादुपजायमानं समसमयभाविस्मृतिहेतुसंस्कारोद्बोधवशादिन्द्रियासंबद्धमपि विषयीकुरुते । यथा तत्तेदन्ताऽर्थविषयं प्रत्यभिज्ञानं, संज्ञिविषयं च सविकल्पकज्ञानम् । इतरथा त्वत्पक्षे संबन्धस्मरणहेतुसंस्कारोपस्थितत्वात् व्यक्तेरिव संबन्धस्यापि शब्दोपजनितज्ञानविषयत्वापत्तिः । न केवलं संबन्धस्य, किंतु व्युत्पत्तिस्थानवृद्धव्यवहारक्रियायाः क्रियावाचकशब्दस्यापि । अथ व्युत्पत्तिकाले तयोर्व्यभिचारात् संस्कारादनुपस्थितिरित्युच्यते, एवं तर्हि व्यक्तीनामपि व्यभिचारादनुपस्थितिः स्यात् । अथ व्यक्तिविशेषाणां व्यभिचारेऽपि व्यञ्जकत्वसामान्यरूपेण व्यक्तिमात्रस्याव्यभिचारादुपस्थितिः, एवं तर्हि क्रियाविशेषाणां तद्वाचकविशेषाणां च व्यभिचारेऽपि क्रियामात्रस्य तद्वाचकमात्रस्य च अव्यभिचारादुपस्थितेः एकसंविद्वेद्यत्वमविशिष्टमेव प्रसज्यते इति यत्किंचिदेतदिति यथावार्तिकमेव अधिकरणं प्रस्तूयते ।

**संगति**स्तावदस्य प्रसङ्गेनोक्तैव । उपोद्घातायातं च लोके वेदे च शब्दार्थयोरैक्यं निरूप्य किमाकृतिः शब्दार्थो व्यक्तिर्वेति प्रस्तुतं निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । व्यवहारार्थं हि शब्दोच्चारणम् । न च आकृत्या वेदलोकयोः कश्चित् व्यवहारो दृश्यते । नहि वेदे ‘ व्रीहीनवहन्ति ’ इत्यत्र आकृतिरवहन्यते । न च ‘ पशुमालभेत ’ इत्यत्र आकृतिरालभ्यते । न च लोके ‘ गां दोग्धि’ इत्यत्र आकृतिर्दुह्यते । न च ‘ ब्राह्मणाय सुवर्णं दीयते ’ इत्यत्र आकृतिर्दीयते । एवं व्यवहारानुसारात् प्रतीतिरपि व्यक्तिगोचरैव । तथा व्युत्पत्तिरपि वृद्धव्यवहारे व्यक्तिविषयैवेति । तेन सर्वथा व्यक्तिरेव शब्दाभिधेयेति ।

**ननु** च संबन्धग्रहणाधीनं शब्दस्यार्थाभिधानम् । न चोत्पन्नोत्पद्यमानोत्पत्स्यमानव्यक्तिषु आनन्त्यव्यभिचाराभ्यां संबन्धग्रहणं संभवति । अतः कथं व्यक्तिर्वाच्येति । **न च** पाचकादिशब्दवदानन्त्येऽपि व्यक्तीनां, आकृतिमेवोपलक्षणीकृत्य संबन्धग्रहः सुकरो भविष्यतीति **वाच्यम्** । यतः सभागे पाचकादौ प्रकृतिभागोपनीतपचिक्रियायाः कर्ता प्रत्ययेनाभिधीयते इति युक्तम् । **गौरि**त्यत्र तु गोशब्दस्य निर्भागस्य नैवं संभवति, विभक्तेरपि प्रातिपदिकार्थानतिरिक्तार्थत्वात् । **उच्यते** । भवेदेवं यदि सर्वत्र शब्दाभिहितस्यैव उपाधित्वं भवेत्, न

चैवं, वत्सादिशब्देष्वदर्शनात्। यथा हि वत्सशब्दो गोत्वमनभिधायैव गोत्वोपलक्षितं वयोविशेषमभिदधाति, यथा वा किशोरशब्दः अश्वत्वमनभिधायैव अश्वत्वोपलक्षितमेव वयोविशेषमभिधत्ते, यथा वा आचार्यशब्दः उपनयनाध्यापनादिकमनभिधायैव तदुपलक्षितं ब्राह्मणव्यक्तिमभिधत्ते, तथा गवादिशब्दा अपि अनभिधेयामेव आकृतिमुपलक्षणीकृत्य व्यक्तिमभिधास्यन्तीति सर्वत्र व्यक्तिवाचित्वमेवेति। **एवं प्राप्ते अभिधीयते।** आकृतिस्तु क्रियार्थत्वात्। अयमभिप्रायः। भवेदेवं यदि अनवगतायामाकृतौ गवादिशब्देभ्यो व्यक्त्यवगमः प्रकारान्तरेणोत्पद्येत। नहि अनन्तासु व्यक्तिषु एकस्योपलक्षणस्यानवगमे व्यक्त्यवगमः संभवति। तदत्रोभयावगमस्यावश्यं स्वीकारे किमाकृतिमात्रं शब्देनाभिधीयते तद्द्वारेण अनन्ता व्यक्तयः प्रतीयन्तां, आकृतिमेव वा प्रकारान्तरोपस्थितामुपलक्षणीकृत्य अनन्ता व्यक्तयः शब्देनाभिधीयन्तां इति चिन्तायां, अनन्तव्यक्त्यभिधाने शब्दस्य अनन्तशक्तिस्वीकारप्रसङ्गदोषादाकृतिरेवाभिधीयते इति न्याय्यम्। **किंच** आकृतेः शब्दानभिधाने प्रकारान्तरेणोपस्थितिरपि तस्या दुर्लभैव। यतो व्युत्पत्तिकालावगतसाहचर्यवशेन सहचरितशब्ददर्शनात् सहचरितस्मृतिर्वक्तव्या। न चाऽसौ नियतरूपा। सहचरितोपाध्यायदर्शनेऽपि शिष्यस्मरणादर्शनात्। व्युत्पन्नस्य तु शब्दश्रवणात् आकृतिव्यक्त्यवगमस्य नियतत्वात्। **न च** शब्दार्थावगमकाले संबन्धस्मृतेरवश्यंभावित्वात् आकृत्यवच्छिन्नायां च व्यक्तौ संबन्धग्रहात् आकृतिस्मृतिरवश्यंभाविनीति **वक्तव्यम्**। यतोऽनभ्यासदशायां संबन्धस्मृत्यपेक्षा, अभ्यासदशायां तु स्वशक्त्यैव शब्दस्य अर्थाभिधानमिति स्थितम्। तदुक्तं कारिकायां **'अनभ्यस्ते त्वपेक्षन्ते शब्दे संबन्धिनः स्मृतिम्। अत्र प्रयुक्त इत्येवं बुध्यन्ते हि चिरात् क चित्॥'** (श्लो. वा. १।१।५ शब्दपरिच्छेदे ३४) वत्सकिशोराचार्यशब्दादौ तु संस्कारादिद्वारेणापि उपलक्षणोपस्थितौ अनेकव्यक्त्यभिधानमपि अगत्या स्वीकरणीयम्। नहि तत्र गवाद्याकृतौ अभिहितायामपि तथाभूतव्यक्त्यवगमः आक्षेपतः सिध्यति। अथ वोभयमपि तत्राभिधेयमेव स्वीकर्तव्यम्। यदि वा शोणन्यायेन वत्सत्वादिगोत्वाद्यन्यतरसामान्यमेवाभ्युपेतव्यम्। यत्र तु गवादिशब्देषु आकृत्यभिधानमेव गत्यन्तरमस्ति, तत्र न किंचिदनुपपन्नमिति।

नन्वेवं भवतु आकृत्यभिधानं, व्यक्त्यवगतिस्तु कुतः? लक्षणयेति के चित्। तदयुक्तम्। संबन्धानुपपत्त्या हि लक्षणा भवति। अनुपपत्तिश्च क्रियाकारकसंबन्धयोग्यपदार्थावगमनिबन्धना। न चाकृतिः क्रियाकारकसंबन्धयोग्या। किं तर्हि? व्यक्तिरेव। सर्वपदानां च आकृतिमात्राभिधाने क्रियाकारकसंबन्धयोग्यपदार्थानवगतेः कस्य कुत्र संबन्धानुपपत्त्या लक्षणेति। तेन क्रियापदस्य लक्षणया व्यक्तिपरत्वे कारकपदे व्यक्तिलक्षणा। कारकपदस्य च लक्षणया व्यक्तिपरत्वे क्रियापदे व्यक्तिलक्षणा इत्यन्योन्याश्रयप्रसङ्गः।

तेनैतदेवात्र वक्तव्यं– पूर्वपक्षन्यायेनैव सर्वेषां गवादिपदानां वृद्धव्यवहारतो व्युत्पत्तेः, व्यवहारस्य च सर्वत्र व्यक्तिनिष्ठत्वात्, व्यक्त्यर्थतयैव व्युत्पत्तिः, किंतु तद्व्यक्त्यर्थत्वमानन्त्यव्यभिचारभिया साक्षात् व्यक्त्यभिधाने न संभवतीति यथा तत् संभवति तदङ्गीकरणीयम्। अत्र च गत्यन्तरासंभवात् तत्प्रतीत्यर्थमेव तदात्मभूताकृत्यभिधानमङ्गीकृतम्। तेन आकृत्यभिधानस्यैव व्यक्तिपर्यन्तत्वात् एक एवायमुभयार्थाभिधानलक्षणः शब्दव्यापारः। यथा हि पाचकस्य उद्दिष्टौदनस्य कारकयोजनाकर्तृत्वमेव ओदनकर्तृत्वं, यथा चोद्दिष्टस्वर्गस्य यागकर्तृत्वमेव स्वर्गकर्तृत्वम्। नह्योदने स्वर्गे वा पुरुषस्य कृतिरन्याऽस्ति, येन तत्रापि अस्यान्यकर्तृत्वं भवेत्। तथा व्यक्तिप्रतिपादनोद्देशेन प्रयुक्तस्य शब्दस्य आकृत्यभिधानमेव व्यक्त्यभिधानम्। इयांस्तु विशेषः, आकृतेः साक्षादेवाभिधानविषयत्वं, व्यक्तेस्तु अभिधानोद्देशात् अभिधानविषयत्वं, ओदनस्वर्गयोरिव कृतिविषयत्वम्। अतो व्यक्तिरपि शब्दस्य अभिधाव्यापारप्रतिपाद्यैव, न तु व्यापारान्तरप्रतिपाद्येति तत्त्वम्। तदुक्तं **भाष्यकारेण–** 'पदानि हि स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि' इति। अभिधाव्यापारेण प्रतिपाद्येत्यर्थः। अनेनैवाभिप्रायेण **वार्तिककारपादैरप्युक्तं 'अभिधेयाविनाभूते प्रवृत्ति-**

**ठ्क्षणोच्यते** ।' इति । ( वा. १।४।१२।२३ पृ. ३५४) अत एव अभिहितान्वयप्रयासोऽपि वाक्यार्थे विहितो यत्त्वन्वयाभिप्रायेणैव, न त्वाकृत्यभिप्रायेण, वाक्यार्थे तस्या अनन्वयात् । एवंभूतमेव व्यवहितमभिधानमाक्षेप इत्युच्यते । यस्तु तत्रतत्र लक्षणेत्युक्तं, तत् किंचिद्व्यवधानाभिप्रायेणेति मन्तव्यम् । **न चैवं** गोत्वशब्देऽपि आकृत्यभिधानस्य व्यक्तिपरत्वात् प्रतीतिवैलक्षण्याभावप्रसङ्ग इति **वाच्यम्** । यतः 'तस्य भावस्त्वतलौ' ( पा० ५।१।११९ ) इत्यनुशिष्टेन त्वतल्प्रत्ययेन व्यक्तिव्यतिरिक्तनिष्कृष्टाकृतिमात्राभिधानात् व्युत्पत्तिकाले च व्यक्त्यर्थत्वानवगमात् व्यक्तितात्पर्याभावेन प्रतीतिवैलक्षण्योपपत्तिरिति न किंचिदनुपपन्नम् । **प्रयोजनं** पूर्वपक्षे सामान्योपलक्षितव्यक्तीनां शब्दार्थत्वे सामान्यस्य च शब्दानभिधेयत्वेन संस्कारोपस्थितेरनियतत्वात् यदा संस्कारादनुपस्थितिः तदा अननुष्ठानम् । सिद्धान्ते तु सामान्यस्य अभिधेयत्वान्नियमेन तदवगतौ अनुष्ठानमिति ।

सूत्रं तु— 'आकृतिरेव' गवादिशब्दाभिधेया 'क्रियाऽर्थत्वात्' 'कङ्कचितं चिन्वीत' इत्यादिषु सामान्यद्वारेण तस्या एव क्रियाऽन्वयित्वादित्यर्थः । व्यक्तिसादृश्यस्य आशङ्कासंपादनत्वेनोपदेशानर्हत्वादिति । 'यो नाम कश्चिदिह संविदितं प्रमेयं ग्रन्थान्तरे लिखति वा वदति स्वयं वा । मत्कर्तृतामननुकीर्त्य स कीर्तिलोपात् निःसंततिर्जगति जन्मशतानि भूयात् ॥' **तौता.**

* द्रव्यगुणकर्मणां यावत् किं चित् प्राक् व्यक्तिभ्यः सामान्यं, तत् सर्व**माकृतिरेव** । **वा.** १।३।९।३० पृ. २९६. * **आकृतेः** अन्वयव्यतिरेकाभ्यां शक्तिग्रहणानिमित्तत्वात् शब्दार्थत्वं तस्या एवोचितम् । यदि आकृतौ अवहननादिक्रिया न पर्यवस्येत्, तर्हि व्यक्तिस्तत्र उपलक्षणीया । किंच 'श्येनचितं चिन्वीत' इत्यादौ आकृतेरेव सादृश्यप्रतियोगितया कार्यान्वयो दृश्यते । तस्मादाकृतिः शब्दार्थः । **वि.** १।३।१० वर्णकं २. * आकृतेः पदार्थत्वात् असौ आकृतिः सहचारिपिण्डलक्षणाऽर्था विज्ञायते, यथा 'गङ्गायां घोषः' इति । तच्च साहचर्यं सर्वपिण्डानामविशिष्टं, इति सर्वपिण्डेषु विहितं भवति । तस्मात् तत् सार्वत्रिकं प्रतीयते । **भा.** ७।१।१४, * गौः अश्वः इत्येवमादयः शब्दाः आकृतेरभिधायकाः । १।३।९।३५. * '**आकृतीनामभिव्यक्तिर्या कथंचिन्निरूपिता । नासाववयवाधिक्यविनाशेषु विनश्यति** ॥' नहि गोर्गडुनि जाते, विषाणे वा भग्ने गोत्वं तिरोधीयते । तदभिव्यक्तिसमर्थावयवान्तरसद्भावात् । कियत्यपि संस्थाने ध्रियमाणे सर्वा विज्ञायते । **वा.** २।१।९।३४ पृ. ४३८. * **आकृतिनिमित्तकौ** अनोवासःशब्दौ । **भा.** ७।३।११।२९.

**आकृतिन्यायः** । 'नागृहीतविशेषणा विशेष्ये बुद्धिः' इति तस्य स्वरूपम् । एतच्च आकृत्यधिकरणस्य बीजम् । आकृत्यधिकरणं तु परस्ताद्भविष्यति । **के.**

*अलौकिकयोः, संबन्धग्रहणासंभवेन वाच्यत्वायोगात्, सूक्ष्माणि वासांसि स्वर्गः, चन्दनं स्वर्गः, इति च सुखहेतौ द्रव्ये स्वर्गशब्दस्य प्रयोगेण आकृतिन्यायात् विशेषणभूतस्य **लौकिकस्य सुखस्य स्वर्गशब्दवाच्यत्वावगतेः, दुःखहेतौ** च दारिद्र्ये नरकापरपर्यायदुर्गतिशब्दप्रयोगात् विष्ठायां च दुःखहेतौ नरकशब्दप्रयोगदर्शनात् **आकृतिन्यायेनैव** लौकिकदुःखवाचित्वावगतेः आनन्तर्योपपत्तिः । ( दृष्टत्वस्य, ऐहिकत्वस्य उपपत्तिः ) । **सु.** पृ. ५९५. * व्यक्तिशक्तिवादिनो मते किं शक्यताऽवच्छेदकं ? गोत्वादि इति चेत्, तस्य बहुव्रीहिमात्रात् ( पिङ्गाक्ष्या इत्यत्र ) अनुपस्थितेः, उपस्थितौ वा तस्यैव आकृतिन्यायेन शक्यताऽऽपत्तेः व्यक्तिशक्तिभङ्गापत्तिः । **कौ.** ३।१।६।१२ पृ. १५८. * **आकृतिपदार्थकस्य** नहि व्यक्तिर्न पदार्थः, व्यक्तिपदार्थकस्य वा नहि नाकृतिः, किंतु उभयं उभयस्य पदार्थः । कस्य चित् किं चित् प्राधान्येन विवक्षितं भवति । **भा.** १।३।९।३३ पृ. ३०४. * **आकृतिपदार्थता** व्यवहारसमधिगम्यैव, न निर्देशसमधिगम्या । **बृहती.** पृ. २४१. वृद्धव्यवहारादेव आकृतिवचनता गम्यते । **ऋजु.** * **आकृतिप्रत्ययस्य** शब्दो निमित्तं, आकृतिप्रत्ययः व्यक्तिप्रत्ययस्येति । **भा.** १।३।९।३३ पृ. ३१७. * अग्नितोयवाय्वाकाशानां तु पार्थिवद्रव्यपरिग्रहवशात् आकारानुवृत्तिः कल्प्येत न स्वातन्त्र्येण, दिक्कालात्ममनसां तु गुणकर्मणां च न कथं चिदपि

संस्थानं संभवति। सामान्यमात्रं तु सर्वस्वविशेषानुवृत्तिरूपं संभाव्यते। तस्मादेतदेव अभिधेयाकृतिलक्षणं नावयवरचनासंस्थानाकृतित्वमवकल्पते। वा. १।३।९।३० पृ. २९५, * **आकृतिवचनः** शब्दः तत्सहचरितां व्यक्तिं लक्षयति। १।४।१२।२३ पृ. ३५४. * **आकृतिवचनाः** सर्वे शब्दाः। आकृतिश्च यद्यपि अङ्गभावेन श्रूयते, तथापि न साक्षात् तस्याः क्रियां प्रति अङ्गभावः। यत्तु क्रियासाधनं द्रव्यं अर्थादङ्गभूतं प्राप्तं, तत् परिच्छिन्दती क्रियायामङ्गभावं याति, व्यक्तेश्च आकृत्या विशेषाः परिच्छिद्यन्ते, ते विशेषाः अङ्गभूताः। भा. ६।३।११।२७, * गोशब्दः बहुकृत्वः उच्चरितः श्रुतपूर्वश्च गोव्यक्तिषु अन्वयव्यतिरेकाभ्यां **आकृतिवचन**मवगमयिष्यति। १।१।६।१९.

* **आकृतिवादः**। भा— अथ गौरित्यस्य शब्दस्य कोऽर्थः ? सास्नादिविशिष्टा आकृतिः इति ब्रूमः। ननु आकृतिः साध्या अस्ति वा न वेति। न प्रत्यक्षा सती साध्या भवितुमर्हति। रुचकः स्वस्तिको वर्धमानकः स्वर्णालंकारा एते इति हि प्रत्यक्षं दृश्यते। व्यामोह इति चेन्न। नासति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम्। असत्यपि अर्थान्तरे एवंजातीयको भवति प्रत्ययः पङ्क्तिः यूथं वनं इति यथा इति चेन्न। असंबद्धमिदं वचनमुपन्यस्तम्। किमसति वने वनप्रत्ययो भवतीति। प्रत्यक्षमेव आक्षिप्यते वृक्षा अपि न सन्तीति। यदि एवं, प्रत्युक्तः स माहायानिकः पक्षः। अथ किं आकृतिसद्भाववादी उपालभ्यते, सिद्धान्तान्तरं ते दुष्यति इति, वनेऽपि असति वनप्रत्ययः प्राप्नोतीति। एवमपि प्रकृतं दूषयितुं अशक्नुवतः तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते, असाधकत्वात्। स हि वक्ष्यति, दुष्यतु, यदि दुष्यति, किं तेन दुष्टेन अदुष्टेन वा। प्रकृतं त्वया साधितं भवति ( किं ) मदीयो वा पक्षो दूषितो भवतीति ( किं ? नोभयमपि इति )। न च वृक्षव्यतिरिक्तं वनं यस्मान्नोपलभ्यते, अतो वनं नास्ति इत्यवगम्यते। यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्ययः उत्पद्यते मिथ्यैव वनप्रत्यय इति, ततो वनं नास्तीत्यवगच्छामः। न च गवादिषु प्रत्ययो विपर्येति। अतो वैषम्यम्। अथ वनादिषु नैव विपर्येति, न ते न सन्तीति। तस्मादसंबद्धः पङ्क्तिवनोपन्यासः। अत उपपन्नं जैमिनिवचनं आकृतिः शब्दार्थ इति। यथा च आकृतिः शब्दार्थः, तथा उपरिष्टात् (१।३।९।३३) निपुणतरं उपपादयिष्यामः इति। १।१।५।५ पृ. ४९—५२.

**बृहती**— 'अथ गौरित्यस्य शब्दस्य कोऽर्थः' ( भाष्यं ) इति नायं प्रश्न उपपद्यते। 'अथ गौरित्यत्र कः शब्दः' इति युक्तम्। वर्णपक्षेऽपि हि वाचकता नोपपद्यते इत्याशङ्कानिराकरणाय। अभिधेये तु न कश्चित् विशेषः आकृतिर्व्यक्तिर्गुणो वा भवतु, नहि औत्पत्तिकत्वे कश्चित् विरोधः। अस्थायी चायं पक्षः ( आकृतिगुणव्यक्तीनां अभिधेयता इत्येवंरूपः )। नायं ( मीमांसकानां– ) राद्धान्तः, यदुत आकृतिवचनता एव सर्वशब्दानामिति। गुणवचनताऽपि अरुणादिषु दृष्टा। (**ऋजु—ननु** प्रतिगुणि अरुणादीनां भेदात् एकं सामान्यं अङ्गीकर्तुमुचितम्। अन्यथा शब्दानां प्रवृत्त्यनुपपत्तेः। **अत्राभिधीयते**। भिन्नत्वमभिन्नत्वं वा वस्तुनः भिन्नाभिन्नावभासिबुद्धिनिबन्धनम्। तत्र तावत् अरुणिमादिषु न भेदबुद्धिरस्ति। याऽपि च पटुमन्दतादिभिर्विशेषैः विशिष्टबुद्धिः, साऽपि न स्वरूपभेदमावहति विशेषमात्रत्वात्। **ननु** अरुणिमादयः परमाणुषु पार्थिवेषु पाकजाः, सर्वकार्यद्रव्येषु च कारणगुणपूर्वकाः, इति उत्पत्तिपरतैव अवसीयते। **नैवम्**। कस्यायमभ्युपगमः, आकृतिवत् द्रव्येषु गुणः समवैतीति। वयं प्रतिपद्यामहे स गुणसमवायः कस्य चित् कथं चित् उदेति अपैति च। न च समवायमपि नित्यमेकमभ्युपैति। तेन सकलद्रव्येषु एकः अरुणिमा अरुणिमपदाभिधानीय इति ) व्यक्तिवचनता उद्भिदादिषु। तस्मात् प्रश्नस्तावत् निष्प्रयोजनः। उत्तरमपि राद्धान्तविरुद्धं ( सास्नादिविशिष्टा आकृतिरिति। किंतु आकृत्यादयः इति वाच्यम् )। अथायमभिप्रायः, उदाहरणाभिप्रायमिति। अत्रापि प्रश्नस्तावत् निष्प्रयोजन एव, उत्तरमपि। यदि शब्दस्य व्यक्तिरर्थः, अथापि सामान्यं, संबन्धे को विशेषः ? विशेषविवक्षायां च प्रयोजनं वक्तव्यम्। **अथेदमुच्यते** व्यक्तिपक्षे हि संबन्धस्य सापेक्षता प्राप्नोतीति, का कथा

पाचकादिषु । तत्र क्रिया उपलक्षणमिति चेत्, इहापि आकृतिर्भविष्यति । तत्र हि अभिहिता क्रिया धातुभागेन, इह तु ( गवादिषु ) अनभिहिता जातिः नालमुपलक्षणाय **इति चेत्**, कल्प्यतामभिधानं, न पुनः सापेक्षताऽभिधाने उपयोगमस्य पश्यामः, निरपेक्षताऽभिधाने वा । तस्मात् मन्दप्रयोजनता प्रश्नोत्तरयोः । **अत्रोच्यते** । वाचकरूपैव सर्ववाक्येषु अवगतिः इति मन्वानः शब्दार्थयोर्भेदो नोपपद्यते इति पृष्टवान् पूर्वपक्षवादी । ( **ऋजु**-- पूर्वं गकारादिविसर्जनीयान्तं वर्णा एव पदं इत्युपसंहृतम् । तदाचिक्षिप्सुः पृच्छति पूर्वपक्षवादी अथ गौरित्यस्य शब्दस्य कोऽर्थ इति । वनमिति बहुषु वृक्षेषु एकवचनान्तं पदं नोपपद्यते । शब्दरूपे ह्यभिधेये युज्यते । तेन वाचकरूपैव सर्ववाक्येषु अवगतिः । तत्र यदि वर्णात्मकं पदं, तदा स्पष्टभेदावभासप्रसङ्गः स्यात् । तस्मात् अन्यदेवेदं शब्दतत्त्वम् । तेनायं भाष्यस्यार्थः— गौरित्यस्य शब्दस्य कोऽर्थो भवतोऽभिमतः, किं शब्दात् व्यतिरिक्तं, येन वर्णा एव पदं ब्रवीषीति । अत्र च न बहिरर्थापह्नवः क्रियते, स्थापितत्वात् । किंतु शब्दाभिधेयं शब्दात् व्यतिरिक्तं न भवति इति पूर्वपक्षः क्रियते ) । इतरस्तु अविवेकोऽस्य प्रयोगे अभिधाने च, प्रायौगिकीं बुद्धिं अभिधेये अध्यवस्यति इति तदपनुत्तये सास्नादिविशिष्टा आकृतिः इत्युक्तवान् । प्रदर्शनार्थं चैतदभिधानवत् । ( अस्य वैयाकरणस्य पूर्वपक्षिणः प्रयोगसाधौ अभिधाने अर्थसाधौ अविवेकः । नैवं विविनक्ति ' अभिधानसाधुः अर्थसद्भावे एव प्रयुज्यते । प्रयोगसाधुस्तु विनाऽपि अर्थेन प्रयुज्यते' इति । तेन प्रायौगिकीं प्रयोगे साधुभावात्मिकां बुद्धिं अभिधेये अध्यवस्यति । वस्तु भवतु बाह्यं शब्दव्यतिरिक्तमेव अव्यपदेश्यम् । अभिधेये तु शब्दात्मकमेव इत्येवं विवेकं अपश्यन् शब्दात्मकमभिधेयं दर्शयितुं इतरः सिद्धान्ती सास्नादिविशिष्टा आकृतिः इत्युक्तवान् । प्रदर्शनार्थं चैतत् आकृतिरिति अभिधानवत् । यथा अभिधानमुपलक्षणं गौरित्यस्य शब्दस्य इत्यत्र अन्येऽपि शब्दा द्रष्टव्याः, तथा आकृतिः इति उपलक्षणं व्यक्त्यादयोऽपि द्रष्टव्याः ) ।

' ननु आकृतिः साध्याऽस्ति वा न वा ' इत्यभिधेयतया शब्दरूपतां न जहातीत्युक्तवान् ( न स्वरूपेण आकृतिर्नास्तीत्युच्यते किंतु अभिधेयतया शब्दरूपा नास्तीत्युच्यते ) । ननु च तद्रूपापत्तौ अभावाभिधाने किं प्रयोजनं ? ( भाष्ये किल ' अस्ति वा न वा ' इति ग्रन्थेन आकृतेरभावः प्रतिपाद्यते, तच्च न युक्तम् । एवं वक्तव्यं शब्दस्वरूपैव आकृतिः इति । परिहरति–) अभिधेयाभिप्राय एवायमभावः उक्तः, न स्वरूपाभिप्रायः । ( अभिधेयरूपा जातिः शब्दव्यतिरिक्ता अस्ति वा न वा इति भाष्येणोक्तं, न पुनः स्वरूपेण अस्ति वा न वेति ) । ' न प्रत्यक्षा सती साध्या भवितुमर्हति ' इति । यदि परं स्वरूपस्यैव अभावः साध्यते, तदैव अनभिधेयता ( बाह्याया आकृतेः स्यात् । यदा तु अस्ति, तदा सैवाभिधेया स्यात् ) । न चाभावः शक्यते वक्तुं प्रत्यक्षगम्यत्वात् । ' व्यामोह इति चेत् ' इति । **केन चोक्तं स्वरूपेण अस्या अभाव इति ( पूर्वपक्षी ब्रूते, न मया स्वरूपेणैव आकृतेरभाव** उच्यते, किंतु स्वरूपेणास्त्येव । सैव तु अभिधीयते इति व्यामोह एव ) । इतरस्तु ( सिद्धान्ती ) तमेवाभिप्रायं ( स्वरूपापह्नवमन्तरेण अभिधेयापह्नवो न युक्त इति पूर्वोक्तं ) बुद्धौ कृत्वा ' नासति प्रत्ययविपर्यासे व्यामोहः' इत्युक्तवान् । 'असत्यपि अर्थान्तरे एवंजातीयके, भवति प्रत्ययः पङ्क्तिर्यूथं वनमिति यथेति चेत् ' इति अभिधेयतया अभावं प्रकटयति । नैवायं प्रत्यक्षविरुद्धोऽर्थः अभिधीयते आकृतेरभावः । किं तर्हि अभिधेयरूपतया अभिधानरूपं अवगम्यते इत्युक्तम् । न चेदं अविवर्तवादिनः उपपद्यते । तस्मात् विवर्तपक्षः श्रेयान् इत्यभिप्रायः ।

' असंबद्धमिदं वचनमुपन्यस्तं ' इति, पङ्क्त्यादावपि नैव शब्दरूपावगतिरस्ति इत्यभिप्रायः । कथं तर्हि एकप्रत्ययः । न च शब्दादृते पङ्क्त्यादिषु एकमुपलभ्यते किंचिदन्यत् । अस्ति चायं प्रत्ययः । तस्मात् ( शब्दा– ) अध्यासनिबन्धन एवायम् । ( शब्द एव अर्थे अध्यस्तोऽभिधीयते । तस्यैकत्वात् एकवचनमुपपद्यते ) ' किमसति वने वनप्रत्ययः ' इति, असति वृक्षव्यतिरिक्ते एक-

स्मिन् वनाभिधेये अर्थे एकप्रत्ययो नोपपद्यते इति किं प्रत्यक्षगम्या वृक्षा अपि न सन्तीति शक्यते वक्तुम्। कोऽभिप्रायः ? ( उच्यते– ) वृक्षा एवात्र एकतया प्रतीयन्ते न पुनः वनशब्दरूपता गम्यते ( वनशब्दे समुच्चरिते वृक्षा एव प्रतीयन्ते। तत्र भवानेवं वदति, शब्दव्यतिरिक्तोऽर्थो नास्तीति, तथा सति प्रत्यक्षा एव न सन्तीति प्राप्तम्। न चेदमुचितम्। शब्दातिरेकिणां तेषां प्रत्यक्षसिद्धत्वात् ) अथायमभिप्रायः 'वृक्षा अपि नैव सन्ति इति' तदपि हि शब्दाध्यस्तमेव रूपमिति प्रत्युक्तः स माहायानिकः पक्षः। अर्थविषया हि प्रत्यक्षा संवित्, न बुद्धिविषया इत्युक्तम्। बुद्धिविषयत्वे वा संविदः, किं सिध्यति शब्दाध्यासः ? ( येन शब्दाध्यासे निराचिकीर्षिते बुद्धिविषयता संविदो निराक्रियते )। अन्यैव वृक्षसंवित्, अन्या वनसंवित् ( यदि वृक्षसंवित् वनसंविच्च एका स्यात्, न तदा बुद्धिविषयत्वे संविदोऽस्याः, सिध्यति शब्दाध्यासः। न चैतदस्ति ) तस्मात् बुद्धिविषया वा भवतु अर्थविषया वा, सर्वथा वनशब्दरूपता नास्ति इत्येतावत् वक्तव्यम्। अतः प्रत्यक्षमेवाक्षिप्यते ( इत्यादिग्रन्थस्य असंबद्धतैव प्रतिभाति। तस्मात् आकृतिसद्भाव एव आक्षिप्यते ) इति लक्ष्यते। ( एकदेशिमतं समर्थयते– ) मैवं, वनशब्दाकारवादिनो हि भिन्नरूपा अवगतिरेव उत्तरम्। ( यो हि वनशब्दाकार एव वनशब्देनोच्यते इति वदति, तस्य शब्दाकारव्यतिरिक्ताकारावगतिरेव निराकरणीयतया उपन्यसनीया ) सा च वृक्षरूपात् भिन्नैवात्र प्रतीयते। यदि परं तद्भावादप्रतीतिः, स चाभावः प्रत्यक्षे प्रत्यर्थिनि नोपपद्यते। **ननु** विज्ञप्तिप्रत्यक्षपक्षेऽपि एतदुपपद्यते इत्युक्तम्। **न,** भेदावगतेः परिकल्पनापक्षपातित्वात्। तस्मात् सुष्ठु उच्यते 'प्रत्युक्तः स माहायानिकः पक्ष इति। ( यदि वैयाकरणः वृक्षविषयं प्रत्यक्षं बुद्धिविषयं ब्रूयात्, तदा बाह्यवृक्षाभावे शब्दमात्रमभिधेयं इति स्यादप्येतत्, न चेदं शक्यम्। भेदप्रतीतेः अर्थज्ञानयोरिति )।

ननु इदानीं एकबुद्धिः (पिण्डेषु) अनालम्बनैव प्राप्ता। अथ किं आकृतिसद्भाववादी उपालभ्यते, सिद्धान्तान्तरं ते दुष्यति, वनेऽपि ते असति वनप्रत्ययः प्राप्नोति इति। कः पुनरत्र सिद्धान्तो, यो दुष्यति ? एकस्मिन् वर्तमानात् प्रातिपदिकात् एकवचनमिति। बहवश्च वृक्षाः। तत्रेदं प्रातिपदिकं इत्युक्तं आयुष्मता। यथैव आकृतिरस्तीति भवतां सिद्धान्तः, तथा अयमपि। तदिदं राद्धान्तान्तरदूषणं भवति ( न पुनः आकृतिसद्भावस्य दूषणम्। नहि स्मृतिदूषणात् प्रत्यक्षमपि दूषितं भवति। तेन प्रत्यक्षसिद्धा आकृतिः नापह्नोतुं शक्यते ) प्रमाणान्तरमूलत्वात् स्मृतेः। यदि दूषणं भवति भवतु नाम, नहि अभ्युपगममात्रात् हेतोरदुष्टस्यापि दुष्टता शक्यते वक्तुम्। अदुष्टश्चायं हेतुः प्रत्यक्षावगतिर्नाम। तस्मात् यदि एकत्वमन्तरेणापि एकवचनं, किं कुर्मः कमुपालभेमहि। न चायमुपालम्भस्य विषयः, एकस्मिन् एकवचनं ( द्वयोर्द्विवचनं बहुषु बहुवचनं ) इति प्रायिकमेतत्। दारादिषु ( असत्यपि बहुत्वे बहुवचनदर्शनात् ) व्यभिचारात्। तस्मात् प्रायोगिकमिदं एकवचनं नान्वयिकम्। अतः सिद्धान्तान्तरापरिज्ञानमेवात्र गर्हणीयम्। तस्मान्न क्वचित् शब्दाध्यस्ता वाच्ये बुद्धिरस्ति इत्युपपन्नं जैमिनेर्वचः 'आकृतिः शब्दार्थः' इति। आकृतिप्रतिपत्तिमुखेन गोशब्दादीनां निमित्ततेति। एतच्च आकृत्यधिकरणे निपुणतरमुपपादयिष्यामः।

* ( श्लोकवार्तिकोपदिष्टाः सर्वेऽर्थाः स्पष्टतया शास्त्रदीपिकायां वर्णिता इति सैवेह उपन्यस्यते। )

शा— 'अथ गौरित्यस्य शब्दस्य कोऽर्थः' इति वाच्यनिरूपणोपक्रमव्याजेन आकृतिसद्भावं प्रतिपादयति संबन्धनित्यत्वसिद्धये। नहि असत्यामाकृतौ व्यक्तिभिः शब्दस्य अपौरुषेयः संबन्धः सिध्यति तासामनित्यत्वात्। उपलक्षणस्यापि नित्यस्य अभावात् आकृत्यभावे। तस्मात् आकृतिरस्ति नास्तीति विचार्यते। साधिते तु तत्सद्भावे सैव शब्दाभिधेया इति आकृत्यधिकरणे वक्ष्यते।

( सौगता जातिं न मन्यन्ते ) तत्र सौगताः स्वलक्षणमेव परमार्थं मन्यमाना नाकृतिसद्भावं मन्यन्ते। तथाहि, '**पृथक्त्वे व्यक्तितो जातिर्दृश्येत पृथगेव सा। अभेदे व्यक्तिमात्रं स्याद् द्वेधा चेन्न विरोधतः ॥**' नहि सैव ततोऽन्या च अनन्या च संभवति

विरुद्धत्वात् भेदाभेदयोः। यदि च भिन्ना जातिः, सा सर्वगता व्यक्तिष्वेव वा? न तावत् सर्वगतत्वं, अन्तरालेऽनुपलब्धेः। व्यक्तिस्था चेत्, व्यक्तौ उत्पन्नायां तस्मिन् देशे प्रागसती कथं तस्यामुपलभ्यते? न तावत् तत्रोत्पद्यते नित्याया उत्पत्त्ययोगात्। न च व्यक्त्यन्तरादागच्छति अमूर्तत्वात्, तस्मिंश्च व्यक्त्यन्तरे अनुपलब्धिप्रसङ्गात्। न च अंशेनागता अंशेन च तत्रैव स्थिता इति शक्यं वक्तुं, निरंशत्वात्। एवं व्यक्तिनाशे न च तत्रैव पश्चादवस्थिता, अनुपलब्धेः। न विनष्टा, नित्यत्वात्। न चान्यत्र याति, अमूर्तत्वात्। व्यक्त्यन्तरे च पूर्वमेवावस्थिता जातिः इति पुनःप्रवेशे द्विगुणा उपलभ्येत। यथाहुः 'नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्। जहाति पूर्वं नाधारमहो व्यसनसंततिः॥' इति। व्यक्तौ च वर्तमाना यदि एकस्यां व्यक्तौ कार्त्स्न्येन वर्तेत, व्यक्त्यन्तरेषु न स्यात्। नहि एका सती युगपदनेकत्र कार्त्स्न्येन वर्तितुं शक्नोति। न चावयवशो वर्तते, निरवयवत्वात्। कथं च नानाविधासु अतीतानागतवर्तमानासु व्यक्तिषु अवयवशो वृत्तिः संभाव्येत। व्यक्तौ च वर्तमाना इहप्रत्ययमनुभवेत्। न च 'इह गोत्वं' इति कस्य चित् प्रतीतिरस्ति, किंतु 'इयं गौः' इति। **अथ** व्यक्तेरात्मैव जातिः, न तदाधारं वस्त्वन्तरं इति **चेत्**, नैवं युक्तम्। कथं हि नानाभूतानामनित्यानां व्यावृत्तस्वभावानां एकरूपा नित्यानुवृत्तस्वभावा च जातिः आत्मा स्यात्, त्रैलोक्यसंकरप्रसङ्गात्। न च प्रमाणमपि किं चित् आकृतिसद्भावे संभवति। न तावत् प्रत्यक्षं, नहि जातिः स्वविषयं ज्ञानं जनयति, नित्यत्वाभ्युपगमात्। नित्यानां च सर्वार्थक्रियासु असामर्थ्यात्। न च अजनकस्य विषयत्वं संभवति, तल्लक्षणत्वात् विषयत्वस्य। तस्मात् विकल्पाकारमात्रं सामान्यं अलीकं वा। **ननु** यथा ज्ञानवैचित्र्यसिद्ध्यर्थं बाह्यानि स्वलक्षणानि अभ्युपगम्यन्ते, तथा गवाश्वादिविकल्पवैचित्र्यसिद्धये विचित्राणि सामान्यानि किं नाम नाभ्युपगम्यन्ते। **न**। विचित्रस्वभावस्वलक्षणदर्शनवशादेव विकल्पवैचित्र्योपपत्तेः। अर्थशून्या अपि विकल्पाः विचित्रार्थक्रियासमर्थस्वलक्षणाभिमानिनो जायमानाः तत्र व्यवहारार्थिनं प्रवर्तयन्तः परंपरया तत्प्रभवतया तत् प्रापयन्तो मणिमिव मणिप्रभाविषयमणिबुद्धिः व्यवहाराविसंवादिनो भवन्ति, इति न लोकयात्रास्थितेः कश्चित् विरोधः। तस्मान्नास्ति जातिः।

एतेन अवयवि द्रव्यं प्रत्यूढं, तस्यापि अवयवभेदादिविकल्पाक्षमत्वात्। स्थूलावभासस्तु संचितानेकरूपादिपरमाणुवशादेव केशोण्डुकापभासवत् उपपन्नो नावयविकल्पनायालम्। तदभावे च निराधारत्वात् दूरापास्तं गोत्वादि सामान्यम्। कथमसति एकरूपे सामान्ये अत्यन्तविलक्षणानि स्वलक्षणानि अविलक्षणरूपं विकल्पं जनयन्ति। जनयन्ति चेत्, किमिति कानि चिदेव गोविकल्पं जनयन्ति, कानि चिदेव अश्वविकल्पं, न सर्वाणि सर्वम्। सामान्यवादिनो वा कथं विलक्षणरूपा व्यक्तयो विलक्षणसामान्यात्मकत्वं तदाश्रयत्वं तदभिव्यञ्जकत्वं वा भजन्ते। भजन्ति चेत् किमिति काश्चिदेव व्यक्तयः केन चिदेव सामान्येन संबध्यन्ते, न सर्वाः सर्वैः। स्वभावादिति चेत्, अस्माकमपि तुल्यमिदमुत्तरम्। अथ व्यक्तीनामपि अविलक्षणरूपसामान्यसंबन्धसिद्ध्यर्थं परं अविलक्षणरूपं अभ्युपगम्यते, ततस्तेनापि संबन्धसिद्ध्यर्थं अपरापरसामान्यापेक्षायां अनवस्था स्यात्। तस्मात् विकल्पमात्रमेवेदं, न परमार्थतः सामान्यं नाम किंचित्।

अत्राभिधीयते— '**प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः। न शक्योऽपह्नवः कर्तुं, सर्वं विजयते हि तत्॥**' सर्वेष्वपि वस्तुषु 'इयमपि गौः इयमपि गौः' 'अयमपि वृक्षः अयमपि' इति व्यावृत्तानुवृत्ताकारं प्रत्यक्षं देशकालावस्थाऽन्तरेषु अविपर्यस्तं उदीयमानं सर्वमेव तर्काभासं विजित्य द्व्याकारं वस्तु व्यवस्थापयत् केनान्येन शक्यते बाधितुम्। नहि ततोऽन्यत् बलवत्तरमस्ति प्रमाणं, तन्मूलत्वात् प्रमाणान्तराणां, तद्बाधसामर्थ्याभावात्। **किंच** अनुमानान्यपि सामान्यापेक्षत्वात् सुतरां सामान्यं समर्थयन्ते, न तु बाधितुं शक्नुवन्ति। नहि यत् यदपेक्षं, तत् तस्य बाधं शक्नोति कर्तुम्। तद्बाधे हि स्वात्माऽपि न सिध्येत्, तदपेक्षत्वात्। तथाहि, भेदाभेदविकल्पेन सामान्यं निराकुर्वता अवश्यमेवं वक्तव्यं 'यत् वस्तु तत् भिन्नमभिन्नं वा

भवति, सामान्यमपि यदि वस्तु स्यात्, ततः अनेनापि भिन्नेन अभिन्नेन वा भवितव्यम्। न च द्वेधाऽपि संभवति, तस्मादवस्तु' इति। एवं च वदता वस्तुत्वं सामान्यमङ्गीकार्यम्। अन्यथा कथं वस्तुत्वस्य भेदाभेदाभ्यां व्याप्तत्वात् व्यापकानुपलब्ध्या सामान्यस्य वस्तुत्वं न संभवति इति भणितुं शक्यम्। **ननु** औपाधिको वस्तुशब्दो न जातिनिमित्तकः, तत्कथमनेन जात्यापत्तिः। **उच्यते**। जातिर्वा भवतु उपाधिर्वा, सर्वथा तावत् सामान्यरूपमपेक्षितव्यम्। औपाधिकानामपि मूलोपलक्षणमेकमन्तरेण आत्मलाभाभावात्। न च व्यावृत्तैकरसं सर्वं वस्तुजातं अभ्युपगच्छतः सौगतस्य क चिदपि किं चिदपि अनुवृत्तं रूपं संभवति, इति औपाधिको व्यवहारो दुर्घट एव। तस्मात् सर्वप्रामाणसिद्धं सामान्यं न शक्यमपह्नोतुम्।

कः पुनर्विकल्पानां परिहारः। न तावत् अपरिहृता अपि शक्नुवन्ति सामान्यमपह्नोतुं, तेषामपि तदपेक्षत्वात् इत्युक्तम्। तथापि परिहारोऽभिधीयते। (**जातिव्यक्त्योर्भेदाभेदौ**) भेदाभेदविकल्पे तावत् **के चिदाहुः**। भिन्नमेव सामान्यं व्यक्तिभ्यः। न च पृथगुपलब्धिप्रसङ्गः, व्यक्तिसंबन्धित्वात्। कः पुनः संबन्धः? **समवायः**। कः पुनरसौ? अयुतसिद्धानां इहप्रत्ययहेतुः संबन्धः इति **के चित्**। तत्तु अयुक्तं इहप्रत्ययासिद्धेः। 'इयं गौः' इति हि सर्वदा सर्वेषां प्रतीतिः, न 'इह गोत्वं' इति। का चेयमयुतसिद्धिः? युतसिद्ध्यभावः। का पुनर्युतसिद्धिः? पृथग्गतिमत्त्वं पृथगाश्रयाश्रितत्वं वा, तदभावः अयुतसिद्धिः। यद्येवं अवयवावयविनोः संबन्धः, समवायो न स्यात्। विनाऽपि अवयविचलनेन अवयवानां चलनात्, अवयविनः अवयवानां च स्वावयवाश्रयत्वात्। तथा सामान्यस्य व्यक्त्याश्रयत्वात् व्यक्तेश्च स्वावयवाश्रितत्वात् अस्ति पृथगाश्रयाश्रयित्वं, इति समवायानुपपत्तिः। तस्मादेवं वक्तव्यं, येन संबन्धेन आधेयं आधारे स्वानुरूपां बुद्धिं जनयति, स्वाकारेण बोधयति इत्यर्थः, स संबन्धः समवायः इति। **यदि** जात्यात्मना व्यक्तिः प्रतीयते, ततो जातिव्यक्त्योः अभेद एव प्रतीतिबलात् आपद्यते, कथं भेदाभ्युपगमः। **उच्यते**। 'गौरयं शाबलेयः' (शबलायाः अपत्यं), 'गौरयं बाहुलेयः' (बहुलायाः अपत्यं) इत्युभयत्र गवाकारोऽनुवर्तमानो दृश्यते, शाबलेयबाहुलेयाकारौ तु व्यावर्तेते। तद्यदि तयोः शाबलेयबाहुलेयगवाकारयोः अभेदः स्यात्, एकानुवृत्तौ इतरोऽप्यनुवर्तेत। तद्व्यावृत्तौ वा, गवाकारोऽपि व्यावर्तेत। किंच तस्यामेव व्यक्तौ 'इयं गौः' इति गवात्मना प्रतीयमानायामपि, न इयंबुद्धिगोबुद्ध्योः 'गौः गौः' इतिवत् पर्यायत्वं प्रतीयते। तस्मान्नाभेदः। कथं तर्हि तादूप्यं व्यक्तेः प्रतीयते? इदमेव हि तादूप्यं व्यक्तेः, यत्तत् समवायः संबन्धः। तस्यैष महिमा, येन आधेयं आधारं स्वबुद्ध्या अनुरञ्जयति। तस्माददोषः। अथवा तादात्म्यप्रतीतेः अभेदोऽप्यस्तु, पूर्वोक्तन्यायेन भेदोऽपि। तस्मात् प्रमाणबलेन भिन्नाभिन्नत्वमेव युक्तम्। ननु विरुद्धौ भेदाभेदौ कथमेकत्र स्याताम्। न विरोधः, सहदर्शनात्। यदि हि 'इदं रजतं, नेदं रजतं' इतिवत् परस्परोपमर्देन भेदाभेदौ प्रतीयेयातां, ततो विरुध्येयाताम्। न तु तयोः परस्परोपमर्देन प्रतीतिः। 'इयं, गौः' इति बुद्धिद्वयं अपर्यायेण प्रतिभासमानं एकं वस्तु द्व्यात्मकं व्यवस्थापयति। सामानाधिकरण्यं हि अभेदमापादयति, अपर्यायत्वं च भेदं, अतः प्रतीतिबलात् अविरोधः। अपेक्षाभेदाच्च। तथाहि, गोरूपेण निरूप्यमाणया जात्या व्यक्तिः अभेदेन प्रतीयते 'गौरयं शाबलेयः' इति। यदा तु जातिः व्यक्त्यन्तरात्मना निरूप्यते, तदा इयं व्यक्तिः ततो भिन्नरूपा अवसीयते, 'योऽसौ बाहुलेयो गौः, सोऽयं शाबलेयो न भवति' इति। एवं धर्मिणो द्रव्यस्य रसादिधर्मान्तररूपेण रूपादिभ्यो भेदः, द्रव्यरूपेण चाभेदः। तथा अवयविनः स्वरूपेण अवयवैः अभेदः, अवयवान्तररूपेण तु अवयवान्तरैर्भेदः इत्यूहनीयम्। तत्र यथा दीर्घह्रस्वादीनां विरुद्धस्वभावानामपि अपेक्षाभेदात् एकत्रापि अविरुद्धत्वं प्रतीतिबलात् अङ्गीक्रियते, तथा **भेदाभेदयोरपि** द्रष्टव्यं प्रतीत्यविशेषात्। **कश्चित्** (प्राभाकरः) पुनराह, 'प्रतीतिरेव भेदाभेदावभासिनी न संभवति इति। विलक्षणरूपा प्रतीतिर्हि भेदावभासः, अविलक्षणरूपा प्रतीतिश्च अभेदावभासः। तत् येन

भेदप्रतिभाससमये जातिरूपं व्यक्तिरूपं च प्रतीतं, तेन अभेदप्रतीतिवेलायां तयोरन्यतरत् प्रत्येतव्यम्। तत्र एकस्य द्विरवभासोऽयं भवेत्, न पुनः इतरेण अभेदः प्रतीतो भवति। तस्मान्नास्ति भेदाभेदयोः एकत्र प्रतीतिः इति।' **तदिदमसारम्**। नहि वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः, तद्भावेऽपि अभेदात्। प्रथमं व्यक्तिदर्शनेऽपि हि अस्ति जातिव्यक्त्योः द्वयोः प्रतीतिः। न च तदा तयोः भेदः प्रतीयते, व्यक्त्यन्तरदर्शनेन तु जातेः अन्वयात्, पूर्वव्यक्तेश्च व्यतिरेकात्, अन्वयव्यतिरेकाभ्यां जातिव्यक्त्योः भेदोऽवधार्यते इति भवतोऽपि सिद्धान्तः। तथा देवदत्तमुपलभ्य कालान्तरे तत्सदृशं यज्ञदत्तं दूरात् पश्यन् पूर्वोपलब्धं च देवदत्तं स्मरन् वस्तुतः तद्विलक्षणमेव पुरुषद्वयं प्रत्येति, तथापि न भेदमवधारयति, संशेते हि 'किं स एवायं देवदत्तः किंवा अन्यः' इति। तस्मात् वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः इत्ययुक्तम्। तथा तमेव देवदत्तं कालान्तरे दूरात् पश्यन्नपि 'किं स एवायं, उतान्यः' इति संदिहानो वस्तुगत्या एकमेव प्रतियन्नपि नाभेदमवधारयितुं अलं भवति। तस्मात् न वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः। नापि एकवस्तुप्रतीतिरेव अभेदप्रतीतिः। किंतु 'अन्योऽयं' इति बुद्धिः भेदावभासः, 'अनन्योऽयं' इति च अभेदावभासः। अस्ति च शाबलेयबाहुलेयौ उपलभमानस्य 'अयं गौः, अयमपि गौः' इत्यभेदावभासः, 'अन्यः शाबलेयात् बाहुलेयः' इति च भेदावभासः। तस्मादुपपन्नं **भिन्नाभिन्नत्वम्**। **ननु** अनुवृत्ता नित्या अनुत्पत्तिविनाशधर्मा च जातिः, विपरीतस्वभावा च व्यक्तिः, कथं तयोरैक्यम्। नहि एकमेव वस्तु अनुवृत्तं व्यावृत्तं, नित्यमनित्यं, उत्पत्तिविनाशधर्मकं अतद्धर्मकं च संभवति, त्रैलोक्यसंकरप्रसङ्गात्। जातिरप्येवं अनित्यत्वादिधर्मा स्यात्, व्यक्तिरपि नित्यत्वादिधर्मा। **नैष दोषः**। नानाऽऽकारं हि तत् वस्तु केनचिदाकारेण नित्यत्वादिकं, केनचिच्च अनित्यत्वादिकं बिभ्रत् न विरोत्स्यते। जातिरपि व्यक्तिरूपेण अनित्या, व्यक्तिरपि जात्यात्मना नित्या इति नात्र काचिदनिष्टापत्तिः।

(**जातिः सर्वगता न वा**) **यत्तु** सर्वगता व्यक्तिगता वा जातिः इति विकल्पितं, **तदपि** व्यक्त्यात्मत्वाभिधानादेव परिहृतम्। व्यक्तेर्हि असौ आत्मा कथमन्यत्र स्यात्। **ननु** एवं व्यक्तिदेशे व्यक्त्युत्पत्तेः प्राक् अविद्यमाना जातिः कथं तत्र पश्चात् भवति। स्वकारणात् निष्पद्यमाना व्यक्तिः जातिविशेषात्मना संबद्धैव उत्पद्यते इति न दोषः। तत्राविद्यमाना जातिः कथं व्यक्त्या संबध्यते, नहि असौ तदानीमेव तत्र उत्पद्यते नित्यत्वात्, न च अन्यतः आगच्छति अमूर्तत्वात्। **उच्यते**। योऽपि देशान्तरादागत्य अनेन देशेन संयुज्यते, सोऽपि प्राक् अस्मिन् देशे अविद्यमान एव कथमनेन देशेन संयोगमनुभवति? कारणवशात् इति व्यक्तं (वक्तव्यम्)। एवं जातिरपि कारणवशादेव व्यक्तिसंबन्धमनुभवति। इयांस्तु विशेषः। संयुज्यमानः पूर्वत्रावस्थितः अनन्तरदेशेन प्रथमं संयुज्यते, ततः तदनन्तरदेशेन, इति क्रमेण देशान्तरसंयोगं गच्छति, तादात्म्यसमवाययोस्तु अनन्तरदेशमनपेक्ष्यैव स्वकारणतो निष्पत्तिः। नहि यः संयोगस्य स्वभावः, स एव तादात्म्यस्य समवायस्य वा अङ्गीकर्तव्यः प्रमाणाभावात्, विलक्षणस्वभावत्वाद्भावानाम्। तस्माददोषः। यद्वा अस्तु सर्वगतं सामान्यम्। न च सर्वत्रोपलब्धिप्रसङ्गः, व्यक्तीनामभिव्यञ्जकत्वात्। सर्वगतमपि सामान्यं व्यक्तेरेवात्मा तत्समवेतं वा। संयुक्तसमवायसंनिकर्षेण च सामान्यस्योपलम्भः तेन च संनिकर्षो व्यक्तिदेशे एव संभवति नान्यत्र, इति न सर्वत्रोपलब्धिः। अभेदेऽपि जातिव्यक्त्योः भेदस्यापि विद्यमानत्वात् नित्यत्वानित्यत्वादिवत् सर्वगतत्वासर्वगतत्वमपि नानुपपन्नम्।

**यत्तु** कार्त्स्न्येन वा अवयवशो वा वृत्तिरिति विकल्पितं, **तदप्ययुक्तम्**। भेदापेक्षं हि कार्त्स्न्यम्। न च सामान्यस्य स्वरूपतोऽवयवशो वा भेदोऽस्ति, एकत्वादनवयवत्वाच्च। निरवयवत्वादेव अवयवशोऽपि वृत्तिः असंभाव्यैव। तस्मात् व्यक्तिषु जातिर्वर्तते इत्येतावदेव अत्र वक्तुं शक्यते, प्रमाणतोऽवगमात्। न कार्त्स्न्यभागविभागः, प्रमाणाभावात्, असंभवाच्च। तथा अवयविनोऽपि अवयवेषु न कार्त्स्न्यं संभवति, बहुत्वाभावात् तदपेक्ष-

त्वाच्च कृत्स्नत्वव्यवहारस्य । अवयवशो वृत्तिरपि अवयवान्तराभावात् अयुक्तैव । **किमिदानीं** एकरूपैव सामान्यस्य व्यक्तिषु, अवयवेषु चावयविनो वृत्तिः ? **नेत्युच्यते** । सामान्यं प्रत्येकं वर्तते, अवयवी तु व्यासज्य, इत्येवं विशेषः । व्यक्त्यन्तरमनपेक्ष्यैव व्यक्त्यन्तरे वर्तमाना स्वानुरूपां बुद्धिं जनयन्ती जातिः प्रत्येकं वर्तते इत्युच्यते , न तु कार्त्स्न्येन वृत्तिः । अवयवी तु अवयवान्तराण्यपेक्ष्य अवयवान्तरे वर्तमानः स्वाकारां बुद्धिं जनयन् व्यासज्य वर्तते इति व्यपदिश्यते । नहि एकस्यामेव व्यक्तौ गोबुद्धिवत् एकस्मिन्नेव तन्तौ पटबुद्धिरुत्पद्यते । तस्मान्न वृत्तिविकल्पादपि जात्यपह्नवः । **यत्तु** नित्यत्वाज्जातेः स्वविषयज्ञानजननसामर्थ्यात् न ग्राह्यत्वमिति । **तदसत्** । नित्यानामपि अर्थक्रियासामर्थ्यं क्षणभङ्गनिराकरणे वक्ष्यामः । न च हेतुलक्षणं ग्राह्यत्वं, ज्ञानजन्यफलभागित्वलक्षणं हि तत् इति शून्यवादे वर्णितम् । तस्मादयमप्यदोषः ।

**यत्तु** स्वलक्षणैरेव स्वानुभवद्वारेण गवादिविकल्पोदयसंभवात् अप्रामाणिकी जातिकल्पना इति । **तदप्यसारम्** । नहि जातिर्न दृश्यते, येन एवमुपालम्भः स्यात् । उपजायमानं तु ज्ञानं स्वविषयभूतां जातिं उपस्थापयति इति नेदृशानां प्रलापानामवसरः । कथं च अत्यन्तविलक्षणानि स्वलक्षणानि एकरूपं विज्ञानं जनयन्ति, 'तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः' इति स्थितेः । **भवतो** वा कथं विलक्षणानां विशेषाणां एकरूपसामान्यसंबन्धकारणत्वं **इति चेत्**, स्वहेतुवशादिति ब्रूमः । कानि चित् स्वलक्षणानि स्वकारणादुत्पद्यमानानि एकेन केन चित् स्वसामान्येन तादात्म्यं समवायं वा भजन्ते । **ननु** हेतवो विलक्षणाः कथं एकविधसामर्थ्ययुक्तानि स्वलक्षणानि जनयन्ति । **न जनयेयुः**, यदि विलक्षणाः स्युः, तेऽपि तु एकजातीया एव । **ननु** एवं तत्संबन्धसिद्ध्यर्थं अपरापरजात्यपेक्षायां अनवस्था । **नैष दोषः** । यथा तालबीजमेकजातीयं परिणामपरंपरया तालजातिसंबद्धां व्यक्तिमुपजनयति साऽपि तथैव स्वकारणभूतबीजसमानजातीयं बीजान्तरं, तथैकगोजातीयात् शुक्रात् गोजातीयव्यक्तिनिष्पत्तिः तस्यां च तज्जातीयशुक्रनिष्पत्तिः, इति नात्यन्तं तादात्म्यापत्तिः । तस्मात् अस्ति एकं आकृतिजातिसामान्यशब्दाभिलपनीयं शाबलेयादिषु अनुगतम् । न च सादृश्यमेव सामान्यं, तद्बुद्ध्यभावात् । स एवायं इति प्रतीतिः, न तत्सदृशः इति । न च सर्वसामान्यापह्नववादिनः सादृश्यमपि संभवति, भूयोऽवयवसामान्यात्मकत्वात्तस्य । न च अतद्व्यावृत्तिरूपमपि सामान्यं अनङ्गीकृतविधिरूपसामान्येन शक्यते प्रत्येतुम् । अगोव्यावृत्तिं हि प्रतीयता अवश्यं प्रथममेव ( विधिरूपेण ) गौः प्रत्येतव्यः । नहि अप्रतीते गवि तद्व्यतिरेकात्मना गवां निरूपणं संभवति, इति प्रथममवश्यं विधिरूपेण गौः प्रत्येतव्यः । नहि तेभ्यो व्यतिरेकरूपमपहाय अश्वादिव्यक्तीनां प्रातिस्विकेन रूपेण ग्रहः संभवति । तेषामनन्तानां बुद्धौ अनारोहात्, अनारूढेषु च तेषु तद्व्यावृत्तिरूपस्य गोः प्रत्येतुमशक्यत्वात् । गौर्गौः इति च विधिरूपं सामान्यं अवगम्यमानं कथं निवृत्तिरूपं शक्यं अङ्गीकर्तुम् । तस्मात् इदं अतिपेलवं दर्शनम् । तस्मादस्ति जातिः । **शा.** पृ. ९७–१०४. ＊ अनित्यव्यक्तिशब्दार्थत्वे वेदाप्रामाण्यापत्तेः तत्प्रामाण्यप्रतितिष्ठापयिषया नित्या आकृतिः पदार्थभूता स्थाप्यते **आकृतिवादेन** । **बाल.** पृ. ६–७. ＊ **आकृतिव्यक्त्योः** अत्यन्तभेदाभावात् कदा चित् व्यक्तिरूपेण द्रव्यमभिधीयते कदा चित् सामान्यरूपेण यथाविवक्षितम् । ... जातेर्वा व्यक्तितः अत्यन्तभेदाभावात् व्यक्तौ कृता धर्माः जातौ कृता एव भवन्ति । **वा.** १।३।९।३५, ＊ **आकृतिशब्दानां** व्यक्तौ शक्त्यभावः प्रतीयते । ३।४।४।१३ पृ. ९१३, ＊ **आकृतिशास्त्राणि** आकृतौ असंभवन्ति व्यक्तिलक्षणार्थानि भवन्ति । तानि व्यक्तिषु परोक्षत्वात् दुर्बलानि जायन्ते । ३।४।१४।४१ पृ. ९७८.

**आकृत्यधिकरणम्** । आकृतिः शब्दार्थः ॥

**प्रयोगचोदनाऽभावादर्थैकत्वमविभागात्** । १।३।९।३० ॥

**भाष्यं**— यदि ( ये एव ) लौकिकाः ते एव ( वेदेऽपि ) अर्थाः, तदा संदेहः, किं आकृतिः शब्दार्थः, अथ व्यक्तिरिति । का पुनराकृतिः का व्यक्तिरिति । द्रव्यगुणकर्मणां सामान्यमात्रं आकृतिः ।

असाधारणविशेषो व्यक्तिः । कुतः संशयः ? गौः इत्युक्ते सामान्यप्रत्ययात्, व्यक्तौ च क्रियासंबन्धात् । तदुच्यते व्यक्तिः शब्दार्थ इति । कुतः ? प्रयोगचोदनाऽभावात् । आलम्भनप्रोक्षणविशसनादीनां प्रयोगचोदनाः आकृत्यर्थे न संभवेयुः । यत्र उच्चारणानर्थक्यं तत्र व्यक्त्यर्थः, अतोऽन्यत्र आकृतिवचनः, इति चेत्, उक्तं अन्यायश्चानेकार्थत्वं इति । कथं सामान्यावगतिरिति चेत्, ( 'व्यक्तिसंबन्धात् । कथं व्यक्त्यन्तरेण प्रयोगः ?' इति भाष्यद्वयं अत्र गलितं इति सुधायामुक्तम् । पृ. ३५६–५७ ) । व्यक्तिपदार्थकस्य आकृतिश्चिह्नभूता भविष्यति, य एवमाकृतिकः, स गौरिति । यथा यस्य दण्डोऽस्ति, स दण्डी इति । न च दण्डवचनो दण्डिशब्दः । एवमिहापि ।

वा— लोकवेदयोः अभिन्नाः शब्दार्था इति सिद्धे विचार्यते 'किं आकृतिः शब्दार्थः अथ व्यक्तिरिति' । **'द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि । व्याख्यातारस्तथाप्यत्र कुर्युः पक्षान्तराण्यपि ॥ नियोगेन विकल्पेन द्वे वा सह समुच्चिते । संबन्धः समुदायो वा विशिष्टा वैकयेतरा ॥ एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम् । लिङ्गकारकसंख्याभिः संहतासंहतात्मभिः । पुनर्जात्यादिपक्षाणां तादृश्येवात्र योजना ॥'** प्रथमं तावत् अष्टपक्षी एवं दर्शयितव्या । गोशब्दस्यार्थः किं (१) आकृतिरेव (२) व्यक्तिरेव (३) उत आकृतिर्वा व्यक्तिर्वा (४) अथ आकृतिश्च व्यक्तिश्च (५) किमुभयोः संबन्धः (६) उत समुदायः (७) किमाकृतिविशिष्टा व्यक्तिः (८) उत व्यक्तिविशिष्टा आकृतिः इति ( प्रथमेयमष्टपक्षी, इत उत्तरं वार्तिके अनेका अष्टपक्ष्यो दर्शिताः । सुधायां च तद्विवरणमपि कृतम् । अन्ते च 'चतुःषष्ट्यधिकं पक्षसहस्रद्वयं भवति' इत्युक्त्वा 'परस्परव्यतिकरादेतेषां बहवोऽपराः । संभवन्तोऽपि नोच्यन्ते ग्रन्थगौरवभीतितः ॥' इत्युक्तम् । अस्माभिस्तु नातिफलकत्वात् एकैवाष्टपक्षी संगृहीता नाधिको विस्तरः । ) **'अत्र चाकृतिरेवेति दृढः पक्षोऽयमेकतः । इतरे त्वन्यतः सर्वे व्यक्तिपक्षानुयायिनः ॥ व्यक्तौ निराकृतायां च समस्तानां निराक्रिया । सुलभेति न सर्वेऽमी भाष्यकारेण दर्शिताः ॥ न चैतस्मान्न सन्त्येव, न चैते निष्प्रयोजनाः । विकल्पिता हि जिज्ञासोः प्रज्ञाविकसनक्षमाः ॥ दर्शितेष्वपि सर्वेषु विचारः क्रियते द्वयोः । का शब्देनाकृतिव्यक्त्योरुच्यते काऽनुगम्यते ॥'** ततश्च **'विचारमुखसिद्ध्यर्थं स्वरूपं तावदेतयोः । प्रश्नपूर्वमुपन्यस्य याथात्म्येन निरूप्यते ॥'**

ननु प्रथमपादे एव आकृतेर्निरूपणात् इदानीं प्रश्नोत्तरे मन्दप्रयोजने । उच्यते । **'सत्यमेवाऽऽकृतिः पूर्वं प्रत्यक्षेण निरूपिता ।** ( श्लो. वा. आकृतिवादे ) **संस्थानाशङ्कया त्वत्र सामान्यात्मा निरूप्यते ॥'**

'द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः' इति ( भाष्यम् ) । **'द्रव्यादीनां च सामान्यं परापरविभागवत् । वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा ॥ पुनर् वायुत्वतेजस्त्वजलत्वात्मत्वभिन्नता । पृथिवीत्वाद् घटत्वं च, तद् व्यक्तिषु समाप्यते ॥ वृक्षत्वात् परतश्चेष्टं शिंशपात्वादि केवलम् । शरीरत्वाच्च गोवाजिहस्तिपुंस्त्वादि गम्यते ॥ वाजिकत्वादि चाश्वत्वात् कर्कादिस्तु गुणो मतः ॥'** ( 'हयो भूत्वा देवानवहत्, वाजी गन्धर्वान्, अर्वा असुरान्, अश्वो मनुष्यान्' इति बृहदारण्यकश्रुत्यनुसारेण ( १।१।२ ) हयत्वं वाजित्वं अर्वत्वं अश्वत्वं इत्यपरं सामान्यम् । के. । कर्कादिस्तु इति—अश्वत्वैकार्थसमवायिशुक्लावान्तरसामान्यं कर्कत्वं, रक्तावान्तरसामान्यं शोणत्वं इत्यर्थः । सु. पृ. ३४२ ) **'हस्तित्वाद् भद्रमन्द्रादिदिङ्नागकुलजातयः ॥'** ( हस्तित्वादपराः भद्रादिजातयः । आदिशब्देन मृगजात्युपादानम् । ताश्च दिङ्नागकुलजातास्वेव हस्तिव्यक्तिषु वर्तन्ते । सु. पृ. ३४२ । पर्वतभेदेनापि मद्रभद्रमृगजातयः अन्यत्र वर्णिताः न केवलं दिग्गजजातिजाता एव । के. ) **'पुंस्त्वाद् ब्राह्मणकौण्डिन्यकठत्वादि समाप्यते । तथा गुणत्वकर्मत्वरूपता जन्मताऽऽदि यत् ॥'** ( असिद्धस्य कर्तुः स्वात्मलाभफलकव्यापारसामान्यं जन्मत्वम् । सिद्धस्य

कर्तुः अनात्मलाभफलकव्यापारसामान्यं यागत्वं आदि-शब्देनोक्तम्। सु. पृ. ३४३)। '**ततः शुक्लादि तद्व्यक्तिगुणेषु प्रतितिष्ठति। कर्मणामपि यागत्व-होमत्वादिविभागतः॥ अपर्यायस्मृतैरुक्तं धातुभिः प्रविभज्यते॥ पुनर्विधानसंख्याऽऽख्यागुणप्रकरणा-न्तरैः। अन्ये तु भेदमाचार्याः कर्मणामेव मन्वते॥**' (यथा यजतिजुहोतिददातिरूपशब्दान्तरैः कर्मावान्तरभेदः, तथा पुनर्विधानं नाम अभ्यासः, संख्या, आख्या, गुणः, प्रकरणान्तरं च इत्येतैरपि जायमानः कर्मभेदः कर्मत्वा-वान्तरसामान्यान्येव इति केचिदाचार्या मन्यन्ते इत्यर्थः।

**के.) 'अपिवाऽव्यतिरेकात् स्याद्देशादेरेकरूपता। रूपशब्दाविभागाच्च वक्ष्यत्येतद्धि जैमिनिः (६।३।३। १२)॥ एवं प्रपञ्चितं सर्वमर्थसामान्यमाकृतिः। न संस्थानं, कुतो ह्येतदात्मादिगुणकर्मसु॥**' सर्वेषु हि पार्थिवेषु गवादिघटादिषु संस्थानं भवेत्। अग्नितोयवाय्वा-काशानां तु पार्थिवद्रव्यपरिग्रहवशात् आकारानुवृत्तिः कल्प्येत, न स्वातन्त्र्येण। (पार्थिवेषु स्वाभाविकं संस्था-नम्। अग्नेः इन्धनसंस्थानानुसारिसंस्थानभेददर्शनात्, तोयस्य च आधारभूतपात्रादिसंस्थानानुसारिसंस्थानभेद-दर्शनात्, आकाशस्य च अवच्छेदकघटादिसंस्थानानु-सारिसंस्थानभेददर्शनात्, वायोश्च घटाद्यवच्छिन्नाकाश-संचारिणः घटादिसंस्थानानुसारिसंस्थानभेददर्शनात् औपा-धिकं संस्थानम्। सु. पृ. ३४४) दिक्कालात्ममनसां तु गुणकर्मणां च न कथंचिदपि संस्थानं संभवति। सामान्यमात्रं तु सर्वस्वविशेषानुवृत्तिरूपं संभाव्यते। (संस्थानाख्याकाराभावेऽपि एकाकारप्रत्ययवेद्यः सर्व—स्व—व्यक्त्यनुगतः विजातीयेभ्यो व्यावृत्तः निरालम्बन-बुद्ध्ययोगात् ब्राह्मण्यादिवत् नापह्नोतुं शक्यः। सर्वेषु स्वविशेषेषु अनुवृत्तिरेव रूपं यस्य इति विग्रहः। सु. पृ. ३४४)। तस्मात् एतदेव अभिधेयाकृतिलक्षणं, न अवयवरचनासंस्थानाकृतित्वं अवकल्पते। '**संस्था-नस्य च नाशित्वात् प्रतिव्यक्ति च भेदतः। सामान्यव्यवहारित्वं नाकृतित्वेऽवकल्पते॥ अथ संस्थानसामान्यमाकृतित्वेन गृह्यते। अश्वादिष्वपि तुल्यत्वाद् भवेदाकृतिसंकरः॥ न चावान्तर-संस्थानं सर्वगोपिण्डवृत्ति यत्। अश्वादिभ्यो निवृत्तं च गोशब्दालम्बनं भवेत्॥**' तस्य हि उपलक्षणमालोच्यमानं न जातेरन्यत् लभ्यते। ततश्च जातिरेव सामान्यं इति न्यायेन आपद्यते। तेन प्रथम-पादे रुचकस्वस्तिकवर्धमानकोदाहरणात् संस्थानाकृत्य-भिधानाशङ्काक्षयादर्शनवत् आसीत् इति एताभ्यां प्रश्नो-त्तराभ्यां (भाष्यस्थाभ्यां) व्यावर्त्यते (तेन व्यावर्त्यते इत्यन्वयः। सु. पृ. २४५)। अतश्च द्रव्यगुणकर्मणां यावत् किंचित् प्राक् व्यक्तिभ्यः सामान्यं, तत् सर्वं आकृतिरेव इत्यभिप्रेत्य मात्रशब्दः प्रयुक्तः (भाष्ये)।

'**असाधारणविशेषा व्यक्तिः**' इति (भाष्यं)। **केचिद्गुः**, असाधारणा विशेषा एव व्यक्तिः। विशेषव्यतिरिक्तव्यक्त्यभावात् इति। '**तत्तु नैवं विशे-षेभ्यो व्यक्तिरन्यैव हीष्यते। खण्डमुण्डादयः सर्वे विशेषत्वेन संमताः। ते चान्यत्रापि दृश्यन्ते तथा जात्यन्तरेष्वपि। शाबलेयादिभेदोऽस्ति तदपत्या-न्तरेष्वपि॥**' खण्डमुण्डादयस्तावत् अन्या अपि व्यक्तयो भवन्त्येव, गवयमहिषादिव्यक्तयश्च। शाबले-योऽपि यथा एकः, तथा अन्योऽपि यः शबलापत्यत्वेन गम्यते, स सर्वः शाबलेयः। एतच्च उभयवर्णनिमित्तं वा यादृच्छिकं वा नाम अन्यत्रापि विनियोगवशाद्वर्तते एव। तदपत्ये च शाबलेय इति असाधारणव्यपदेशानुप-पत्तिः। विशेषव्यक्तिशब्दयोः बहुवचनैकवचनान्तयोः सामानाधिकरण्यप्रयोगवचनभेददोषः (वृक्षाः वनं इति)। तस्मात् असाधारणा विशेषा यस्यां सा व्यक्तिः इत्येवं व्याख्येयम्। **ननु** पूर्वोक्तेन न्यायेन खण्डादीना-मपि बहुव्यक्तिसाधारण्यात् व्यक्तिव्यतिरिक्तानां च अन्येषां केवलैकैकव्यक्तिगतानां विशेषणानामसंभवात् बहुव्रीहिरपि अनुपपन्नः। **उच्यते**। नैव विशेषाणां प्रत्येकं असाधारणत्वमाश्रित्य व्यक्तिविशेषणत्वेन उपादानम्। कथं तर्हि? साधारणरूपाणामपि एकद्वित्रादिभेदेन क्वचिदुपलब्धानां यदेकत्र पिण्डीकृतानां ग्रहणं, तदपेक्षं असाधारणविशेषत्वाभिधानम्। '**प्रविभक्ता हि ये दृष्टा दृश्यन्ते संहताः पुनः। पिण्डासाधारणत्वेन तैर्व्यक्तिरुपलक्ष्यते॥**' न च एकस्यां व्यक्तौ ये समुदिताः

दृष्टाः, ते एव व्यक्त्यन्तरेऽपि अन्यूनानतिरिक्ता दृश्यन्ते। यः एव अदृष्टपूर्वः तस्मिन् समुदाये संप्रति दृश्यते, स एव असाधारणतां आपादयति। अनन्तभेदास्वपि व्यक्तिषु न अत्यन्तापूर्वविशेषणोपलक्षणोपादानं, किंचिदुत्कर्षापकर्षमात्रेण च सर्वत्र असाधारणोपलक्षणलाभात्। परसामान्यापेक्षया च सर्वाण्येव अवान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति। संघातावस्थायां च व्यक्तिविशेषणत्वात् तेषु विशेषशब्दः। एतच्च व्यक्तेर्विशेषाणां अन्यत्वं उपरिष्टात् भाष्यकारोऽपि वक्ष्यत्येव 'योऽर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिः' इति (पृ. ३०३)।

(आकृतिसामान्यस्य 'द्रव्याद्यनुगतसत्तासामान्यमेव आकृतिः, न गोत्वाद्यवान्तरसामान्यं' इति सत्तावाच्यत्ववादिनां व्याख्यां बुद्धिस्थां दूषयितुं तन्मतमुपन्यस्यति— तत्रेति। सु. पृ. ३४६) तत्र **केचित्** गोत्वादिषु विशेषत्वमङ्गीकृत्य सामान्यवाचिना शब्देन अनभिधेयत्वात् यदेव महासामान्यं सत्ता-वस्तु-भावशब्दाभिधेयं, तदेव शब्दस्वरूपव्यवच्छिन्नं गोत्वादिविशेषव्यवच्छिन्नं वा गोसत्ताऽऽख्यं आकृत्यभिधानपक्षे वाच्यं इति मन्यन्ते। यथा आहुः। 'अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम्। अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु॥' इति (अस्तीत्येवंरूपः सर्वशब्दानामर्थः इति ईदृशं प्रत्याय्यस्य वाच्यस्य लक्षणमाहुः। तस्य गवादिपदेषु अपूर्वादिपदैः सह तुल्यत्वादित्यर्थः। सु. पृ. ३४७) '**तत्तु कक्ष्याविभागेन सामान्यानां निरूपणात्। अयुक्तं, न गवादीनां तत्र वाचकशक्तता**॥' प्रतिनियतार्थविषया हि शब्दानां वाचकशक्तिः अर्थापत्त्या गम्यते। तत्र अनन्तरावान्तरसामान्यवचनानां द्रव्यगुणकर्मशब्दानामेव तावत् असंकीर्णार्थत्वात् सत्ताऽर्थत्वं अनुपपन्नं, किमुत दूरान्तरितार्थगवादिशब्दानाम्। (कक्ष्याशब्दः कोष्ठवाची। द्रव्यत्वगुणत्वकर्मत्वानि एकस्यां सत्ताऽवान्तरसामान्यकक्ष्यायां वर्तन्ते। पृथिवीत्वजलत्वादीनि द्रव्यत्वावान्तरसामान्यकक्ष्यायां, रूपत्वरसत्वादीनि गुणत्वावान्तरसामान्यकक्ष्यायां इत्येवमादिः कक्ष्याणां विभागः। तत्र द्रव्यशब्देन द्रव्यत्वसत्तयोः निश्चितप्रतीतिर्भवति, पृथिवीत्वादिषु संदिग्धा प्रतीतिः, गुणत्वादिषु तु अप्रतीतिरेव।

(तथा च) सत्ताऽवान्तरसामान्यविषयाणां द्रव्यादिशब्दानामेव तावत् सत्तावाचित्वमयुक्तम्। तत्रैवं सति दूरान्तरितार्थानां गवादिशब्दानां सुतरां सत्तावाचकत्वे शक्तिर्नास्ति। सु. पृ. ३४७) '**सत्तामेते वदन्तश्च न शुद्धां सविशेषणाम्। वदन्तीत्यभिधातुं हि शक्यं द्वेधाऽप्यसंभवात्**॥' शुद्धवचनत्वे तावत् सर्वेषां च एकार्थप्रत्यायनात् पर्यायत्वप्रसङ्गः। पुनरुक्तत्वाच्च अस्तिशब्दप्रयोगानुपपत्तिः। '**गौर्नास्तीति प्रयोगश्च विरोधान्नावकल्पते। नहि सत्त्वैव नास्तीति कथंचित् संप्रतीयते**॥' देशकालाद्यपेक्षायामपि नैव सत्तायां नास्तित्वमभिधातुं युक्तम्। विभुत्वनित्यत्वाभ्यां सर्वदेशकालव्यापित्वात्। '**रूढिशब्दश्च नैवायं लोकदृष्ट्या प्रतीयते। तेन द्रव्यादिसामान्यं सत्तेत्येतन्न युज्यते**॥' य एव हि अस्तिशब्देन द्वितीयो भावविकारः उच्यते। (षड् भावविकारा भवन्तीति वार्ष्यायणिः, जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति। **निरुक्त. १।२**) जायमानविपरिणामाद्यवस्थसर्ववस्तुषु विनश्यत्तापर्यन्तेषु वस्त्वाकृतिप्रतिपत्तिर्दृश्यते। तेन यदि नाम महासामान्यं अभिधेयं प्रतिज्ञायते, ततो 'वस्त्वर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम्' इति कामं वक्तव्यं, न 'अस्त्यर्थः' इति। न च अवयवार्थपरित्यागेन सच्छब्दसत्ताशब्दौ वर्तेते इति भवच्छब्दवदेव अस्तीति सद्भावः सत्ता इति। न तु वैशेषिकपरिभाषया 'यतो द्रव्यगुणकर्मसु सदिति प्रतीतिः सा सत्ता' इत्येवंलक्षणा जातिः प्रतिपत्तव्या। ('सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' इति तु सूत्रपाठः १।२।७ के.। यतो वस्तुत्वात् महासामान्यात् द्रव्यादिषु सत् इति बुद्धिर्भवति सा सत्ता इति सूत्रार्थः। सु. पृ. ३४८) '**सेयमव्ययशब्देन वस्तुपर्यायवाचिना। भवत्साधारणार्थेन प्रसिद्धिरुपपादिता॥ अस्तित्वमस्तितेत्येवं दृश्येते प्रत्ययौ यतः। स वस्तुवचनः शब्द आख्यातप्रतिरूपकः॥ अप्रातिपदिकत्वाद्धि नाख्यातात् त्वतलौ स्मृतौ। अस्तिक्षीरासमासश्च तेन सद्वाचिनेष्यते**॥' 'अस्तिक्षीरा गौः' इति तिङन्तसमासत्वेन अनुपसंख्यानात् अवश्य-

भाविप्रत्ययलक्षणद्वारसुबन्तत्वयोग्याव्ययपदेन ( अस्ति इति विभक्तिप्रतिरूपकं अव्ययम् ) सह क्षीर-शब्दस्य अन्यपदार्थे बहुव्रीहिरभ्युपगन्तव्यः । तत्र चायं सदर्थवचनः, सक्षीरा गौः इति प्रत्ययोत्पादात् । ततश्च वस्तुनि सति च प्रयुज्यमानं अस्तिशब्दमुपलभ्य तदर्थानुसरणप्रत्यासन्नं सच्छब्दं च 'देवात्तल्' (पा० ५।४।२७ ) इति च स्वार्थिकं देवता इतिवत् तलं इहापि अस्तिधातुवाच्यार्थविशिष्टकर्तृप्रतीतिं अनङ्गीकृत्य शुद्धधात्वर्थमात्रवचनावेव सच्छब्दसत्ताशब्दौ गृहीत्वा एवं तार्किकैः कल्पितं 'सच्छब्दवाच्या सत्ता महासामान्यं' इति । तदुक्तान्तगमने ( तार्किकोक्त ) अनादराच्च पदवाक्यविद्भिरपि उपेक्षितं प्रसिद्धमिव इमामवस्थां प्राप्तं ( युक्तायुक्तत्वविचारावस्थां प्राप्तं ) गवादिशब्दवाच्यत्वेनापि संभाव्यते । **'न त्वर्थाद् गम्यमानस्य वस्तुत्वस्यापि वाच्यता । धर्मान्तरत्ववृत्तेस्तु सत्तायाः कुत एव सा ॥ वस्तुशब्दो हि रूढित्वाद् व्यक्तिजात्यन्तराश्रितम् । सामान्यं यद् ब्रवीत्येतद् गम्यतेऽर्थैर्गवादिभिः ॥ शुद्धाभिधानपक्षस्य दुष्टत्वात् तैर्विशेषितम् । महासामान्यमिष्टं चेद् वाच्यं, तदपि दुर्लभम् ॥'** यदेव आकृतिविशिष्टव्यक्त्यभिधानपक्षे व्यक्तिविशिष्टाकृतिपक्षे वा निराकरणकारणं, तदत्रापि सुलभं, विशेषणस्य पूर्वतराभिधानप्रसङ्गात् । **'गोसत्तां चापि गोशब्दो यदि नाम ब्रवीत्ययम् । गोजात्या वा विशिष्टां तां वदेद् व्यक्तिभिरेव वा ॥'** तत्र **'गोत्वजातिविशिष्टा चेत् सत्ताऽनेनाभिधीयते । उक्ताद् विशेषणादेव तत्सिद्धः सा किमुच्यते ॥'** विशेषणमनभिधाय तद्विशिष्टविशेष्याभिधानासंभवात् विशेषणस्य च विशेष्येण अत्यन्तसंबन्धात् पूर्वतराभिहितविशेषणभूतगोत्वसंबन्धादेव सत्ताऽवगमसिद्धेः न तत्र अभिधानशक्तिकल्पनायां अर्थापत्तिरपि अन्यथाऽपि उपपद्यमानफलत्वप्रतिहता सती न प्रवर्तते । तथा व्यक्तिविशिष्टसत्ताऽभिधानेऽपि एष एव निराकरणहेतुः । अनित्यसंबन्धज्ञानानन्तशब्दशक्तिव्यक्त्यभिधानपूर्वैकैकसत्ताऽभिधानकल्पनायाश्च केवलव्यक्त्यभिधानपक्षवत् अनुपपत्तिः । यत्तु 'अपूर्वदेवतास्वर्गैः सममाहुः' इति ( केचित्पक्षस्य श्लोके ), तत्राभिधीयते । **'नैवापूर्वादिशब्दानां सत्ता वाच्येत्यवस्थितम् । विशेषानेव तेऽप्याहुरर्थापत्त्यादिकल्पितान् ॥'** के चित् श्रुतार्थापत्त्या, के चित् वाक्यशेषवाक्यान्तरपर्युपस्थापितार्थविशेषवचना एव सन्तः अत्यन्ताव्यभिचारिस्वार्थद्वारेण सत्तां गमयन्तः अनभिधायकत्वेन अवधार्यन्ते, न सत्ता पदार्थो व्यभिचरति इति लक्षणयैव तेभ्यः सत्ताप्रतीतिः । **'कार्यसामर्थ्यमिन्द्रादिनिर्मिश्रसुखसंगतिः । सामान्येनाप्यपूर्वादि सत्तातोऽन्यत्तु लभ्यते ॥'** सर्वपदार्थानामेव कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति । यागादिजनितं च पुंसां फलप्राप्तिसामर्थ्यं अपूर्वशब्दवाच्यं यागानुष्ठानात् पूर्वं अभूतं अनुष्ठानोत्तरकालं च अपूर्वं जायते इति यौगिकत्वादेव अपूर्वशब्दाभिधानं सर्वत्र लभ्यते । तथा दीव्यन्ति द्योतन्ते वा चन्द्रादित्याग्निग्रहनक्षत्रतारकादिरूपेण, वायवश्च सततगत्या स्तूयन्ते सर्वैर्मन्त्रैः इति देवाः सुज्ञानशब्दसंबन्धाः विशेषरूपैरेव, इति न सत्तागोचरत्वं प्रतिपद्यन्ते । तथा स्वर्गशब्देनापि नक्षत्रदेशो वा वैदिकप्रवादपौराणिकयाज्ञिकदर्शनेन उच्यते, यथा हि वेदे 'ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति, तेषामेतानि ज्योतींषि नक्षत्राणि' तथा च 'एष ज्योतिष्मन्तं पुण्यलोकं जयति' इति । यदि वा इतिहासपुराणोपपन्नं मेरुपृष्ठं, अथवा अन्वयव्यतिरेकाभ्यां विभक्तं केवलमेव सुखं, यत् संवत्सरादिषु अनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वंद्वरहितार्थापत्तिसिद्ध - देशान्तरानुभवनीयम् । तच्च यद्यपि तादृशं अदृष्टपूर्वं, तथापि मिश्रानुभवादेव विवेकेन उद्धृत्य स्वर्गशब्दार्थत्वेन ज्ञायमानं सत्तां गमयति, इति न तदभिधानमपेक्ष्यते । **'तेनापूर्वादिशब्दार्थाः समाः सत्यं गवादिभिः । स्वशब्दाभिहिताः सन्तः सत्तां लक्षयितुं क्षमाः ॥ अतश्च नैव गोशब्दो गोसत्तामभिधास्यति ॥'**

**'गोत्वाख्याकृतिवाच्यत्वसंदेहात्तु विचार्यते ॥ कुतः संशय इत्येतत् कार्ययोग्यार्थनिर्णयात् । व्यक्तिमात्रपदार्थत्वं मन्यमानेन चोद्यते ॥ उच्यते**

**कार्ययोगित्वात् गम्यते व्यक्तिवाच्यता । शब्द-शक्त्यनुरोधात्तु नाकृतेर्व्यतिरिच्यते ॥ शक्तिकार्य-विसंवादादेव शब्दार्थगोचरात् । किं समञ्जसमित्येवं नाविचार्यावधार्यते ॥'** ( प्रयोगचोदनाऽभावात् इति सूत्रं लोकवेदाधिकरणसिद्धान्ते अन्यथा योजितत्वात् विवेकाय आकृत्यधिकरणपूर्वपक्षेऽपि आवृत्त्या योजयति– किं तावदिति-- ) किं तावत् प्राप्तं ? **'प्रयोगचोदनाऽभावाद् व्यक्तिर्वाच्या, न तूभयम् । अर्थैकत्वं यतो युक्तमविभागाद् द्वयोर्गतिः ॥ नित्यं यथैव शब्दानामाम्नातानां प्रयोजने । अर्थप्रत्यायनार्थत्वात् तद्वशेनावधारणा ॥ एवं सर्वपदार्थानां वाक्यार्थ-प्रत्ययाङ्गता । यथा सिध्येत् तथा कार्यं तेषां रूप-निरूपणात् ॥ आकृतिर्यदि शब्दार्थः कस्य स्युः प्रोक्षणादयः । केन चेज्येत, न त्याग आकृतेरुप-पद्यते ॥ अमूर्ता ह्याकृतिर्नित्या नावघातादिभा-जनी । तद्विधिः प्रतिषेधो वा तेनास्या नाव-कल्पते ॥'** व्रीहीनवहन्ति, पशुं संज्ञपयति, सोममभि-षुणोति, पावयति, सोमेन पशुना व्रीहिभिश्च यजते, इति यावन्त एवमादयो विनाशिमूर्तिमद्विषयाः संस्काराः प्रयोजनसिद्ध्यर्था वा, तेषां प्रयोगचोदनायाः आकृतौ अभावात् व्यक्तौ तु भावात्, कार्यप्रधानत्वात् च पदार्थप्रतीतेः, विध्यधीनत्वाच्च सर्वपुरुषचेष्टानां, अवश्यं विधिविषयत्वयोग्यवाक्यार्थपूरणसमर्थपदार्थकल्पनं अङ्गी-कर्तव्यम् । तथा **यदपि** 'ब्राह्मणो न हन्तव्यः' **'न कलञ्जं भक्षयितव्यं'** इत्यादिप्रतिषेधविधानं, **तदपि** प्राप्तिपूर्वकत्वेन सापेक्षत्वात् व्यक्तौ च प्राप्तिसंभवात्, आकृतेश्च अनधिकारात् असत्यां प्राप्तौ अनर्थकमेव स्यात् । तस्मात् येन शब्दार्थेन प्रयोगचोदनानां भावो भवति, स एव अभ्युपगन्तुं न्याय्यः, न तत्त्वज्ञानमात्राद्दृष्टसिद्ध्यर्थ-पदार्थकल्पना युक्तेति । **स्यादेतत्** । व्यक्तिसंभवत्प्रयोग-चोदनासु व्यक्त्यर्थः, ततोऽन्यत्र आकृत्यर्थ एव भवि-ष्यतीति । **तदसत्** । न्यायेन हि स्थितं एकस्य शब्दस्य अर्थैक्यं, ( न्यायत्रयमाह– ) अनवस्थितसंबन्धानेका-दृष्टवाचकशक्तिकल्पनविकल्पदोषप्रसङ्गात् । ( यववराहाधि-करणोक्तं न्यायमाह– ) संबद्धानां चार्थानां अन्यतरा-भिधानेनैव इतरत्र प्रतिपत्तिसिद्धेः । कथं तर्हि आकृति-प्रत्यय इति चेत् अत आह 'अविभागात्' इति । यतस्तु नित्यमेव व्यक्त्याकृत्योः अविभागः, तस्मात् व्यक्तिरभिहिता सती शक्नोत्येव आकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे, यस्य तु पदस्य योऽर्थः अभिधेयत्वेन आश्रितः, तस्य तत्परिहारासंभवात् अवश्यं तत्रस्थस्यैव अर्थान्तरं लाक्षणिकत्वेन अभ्युप-गन्तव्यं इति । ( भाष्यनिष्कर्षोऽयं न तु साक्षात् भाष्यपङ्क्तिः । तथा च **सुधा**– एतच्च 'यत्र हि शुक्ल इति वा कृष्ण इति वा गुणः प्रतीतो भवति, भवति खलु असौ अलं गुणवति प्रत्ययमाधातुम्' इति तद्भू-ताधिकरणभाष्येण [ पृ. ९६–९७ ] तुल्यन्यायत्वात् उक्तं भवति इत्याह तदुक्तमिति– इति पृ. ३५७ ) । अपि च आकृतिपदार्थकस्य व्यक्तिषु साधारणानैकान्तिक-त्वात् निर्णयो न स्यात् । व्यक्तिपदार्थकस्य पुनः अत्य-न्तान्तर्भूताकृतिनिश्चयसिद्धेः न शब्दव्यापारकल्पनो-पपत्तिः । तस्मात् व्यक्तिरेव शब्दार्थः, नाकृतिः । न च विकल्पसमुच्चयसंबन्धसमुदायान्यतरविशिष्टान्यतराभिधान-पक्षाः संभवन्ति अविभागादेव सर्वेषामपि ज्ञानसिद्धेः ।

**अद्रव्यशब्दत्वात् । ३१ ॥**

**भाष्यं**-- द्रव्याश्रयस्य शब्दः द्रव्यशब्दः । न तत्र द्रव्याश्रयवचनः शब्दो भवेत्, यदि आकृतिः शब्दार्थो भवेत् । 'षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः' इति । नहि आकृतिः षडादिभिः संख्याभिर्युज्यते । तस्मान्नाकृतिवचनः ।

**वा**-- **'अपि चाद्रव्यशब्दत्वाद् व्यक्तेरेवा-भिधेयता । सामानाधिकरण्यं हि नाकृत्यर्थगुणा-र्थयोः ॥'** गोशब्दादीनां आकृतिवचनत्वे 'गौः शुक्लः,' 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा क्रीणाति' इति 'षड् गावो देयाः' 'एकां गां दक्षिणां दद्यात्' इत्येवमादिषु प्रयोगेषु सर्वेषां जातिगुणमात्रवचनत्वात् सामानाधिकरण्यं न प्राप्नोति । **'गोत्वस्य नहि संबन्धः शुक्लत्वारुणिमादिभिः । येन षष्ठ्यपि तावत् स्यात् कुतस्त्वेकार्थवृत्तिता ॥ नहि गोत्वाकृतिः शुक्ला नारुणा नापि षड्गुणा । व्यक्तिस्त्वेवंगुणा**

**तस्माद् व्यक्तेरेवाभिधेयता ॥ मम हि व्यक्तिशब्दत्वात् सिध्यत्येकार्थवृत्तिता । तत्र त्वद्रव्यशब्दत्वाद् भवेद्भेदो गवाश्ववत् ॥** ' जातिगुणविशिष्टव्यक्तिवचनत्वेन शुद्धव्यक्तिवचनत्वेन वा प्रत्यक्षे भवति सामानाधिकरण्यम् । तच्च तत्र द्रव्यम् । एवंविधमपि समानद्रव्यशब्दत्वं त्वत्पक्षे न स्यादिति नञा तदभावप्रसङ्गं दर्शयति ।

**यत्तु** भाष्यकारः विपरीतार्थेन द्रव्यशब्देनैव तदाश्रयगुणलक्षणया नञश्च असमर्थसमासमङ्गीकृत्य ' न द्रव्याश्रयवचनः शब्दो भवेत् ' आकृतिवादिनः इत्याह । **तदतिक्लिष्टं** व्यधिकरणनिर्दिष्टगुणप्रयोगार्हं च, इति उपेक्षितव्यम् ; तत्रापि चैवं अक्षरार्थमात्रसंभवयोजना, द्रव्याश्रयस्य गुणस्य यः शब्दः द्रव्यशब्दः, स आकृतेः निर्गुणत्वात् एकवाक्यसंबन्धं गोत्वं शुक्लं इत्यादिवत् न प्रतिपद्यते । सामानाधिकरण्यचोद्यं तु स्वपक्षेऽपि अविशेषात् तदानीमपि अनुपपन्नमेव इति पूर्वैव व्याख्या कर्तव्या । ( व्यक्तिपक्षे गुणोपलक्षितद्रव्यव्यक्तिवाचित्वं गुणशब्दानां सूचयित्वा जातिपक्षे द्रव्यशब्दत्वाभावात् सामानाधिकरण्यं न संभवति इति ) ।

**अन्यदर्शनाच्च । ३२ ॥**

**भाष्यं**—'यदि पशुरुपाकृतः पलायेत अन्यं तद्वर्णं तद्वयसमालभेत' इति । यदि आकृतिवचनः शब्दो भवेत् अन्यस्यालम्भो नोपपद्येत । अन्यस्यापि पशुद्रव्यस्य सैव आकृतिः । तस्मात् व्यक्तिवचन इति ।

**आकृतिस्तु क्रियाऽर्थत्वात् । ३३ ॥**

**भाष्यं**— तुशब्दः पक्षं व्यावर्तयति । आकृतिः शब्दार्थः । कुतः ? क्रियाऽर्थत्वात् । 'श्येनचितं चिन्वीत' इति वचनं आकृतौ संभवति, यदि आकृत्यर्थः श्येनशब्दः । व्यक्तिवचने तु न चयनेन श्येनव्यक्तिः उत्पादयितुं शक्यते, इति अशक्यार्थवचनात् अनर्थकः । तस्मात् आकृतिवचनः । ननु श्येनव्यक्तिभिः चयनमनुष्ठास्यते , न साधकतमः श्येनशब्दार्थः, ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते । अतः चयनेन श्येनो निर्वर्तयितव्यः । स आकृतिवचनत्वे अवकल्प्यते । **ननु** उभयत्र क्रियायाः असंभव एव व्यपदिश्यते, ' न आकृतिः शब्दार्थः, कुतः ? क्रिया न संभवेत् आकृतौ शब्दार्थे व्रीहीन् प्रोक्षति इति ' तथा ' न व्यक्तिः शब्दार्थः क्रियैव न संभवेत् व्यक्तेः शब्दार्थत्वे श्येनचितं चिन्वीत ' इति । यदप्युच्येत ' व्रीहीन् प्रोक्षति ' इति व्यक्तिलक्षणार्था आकृतिः इति, शक्यमन्यत्रापि ' श्येनचितं चिन्वीत ' इति वदितुं आकृतिलक्षणार्था व्यक्तिरिति । **किं पुनरत्र न्यायः ?** आकृतिः शब्दार्थ इति । यदि व्यक्तिः शब्दार्थो भवेत् , व्यक्त्यन्तरे न प्रयुज्येत । अथ व्यक्त्यन्तरे प्रयुज्यते, न तर्हि व्यक्तिः शब्दार्थः । सर्वसामान्यविशेषनिर्मुक्ता हि व्यक्तिः इत्युच्यते । **नैष दोषः** । व्यक्त्यन्तरे सर्वसामान्यविशेषविनिर्मुक्ते एव प्रवर्तिष्यते । **यदि** व्यक्त्यन्तरे सर्वसामान्यविशेषवियुक्ते प्रवर्तिष्यते, सामान्यमेव तर्हि तत् । **नेत्युच्यते** । यो ह्यर्थः सामान्यस्य विशेषाणां चाश्रयः, सा व्यक्तिः । व्यक्तिवचनश्च शब्दो न सामान्ये न विशेषे वर्तते । तेषां तु आश्रयमेव अभिदधाति । तेन व्यक्त्यन्तरे वृत्तिः अदोषः । नहि तत् सामान्यम् । यदि व्यक्त्यन्तरेष्वपि भवति, सर्वसामान्यविशेषवियुक्तायां अश्वव्यक्तौ गोशब्दः किमिति न वर्तते ? आह , येष्वेव प्रयोगो दृष्टः तेषु वर्तिष्यते न सर्वत्र । न च अश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः, तस्मात् तत्र न वर्तिष्यते । यदि यत्र प्रयोगो दृष्टः तत्र वृत्तिः, अद्य जातायां गवि प्रथमप्रयोगो न प्राप्नोति तत्रादृष्टत्वात् । सामान्यप्रत्ययश्च न प्राप्नोति इयमपि गौरिति इयमपि गौरिति, इयं वा गौरिति इयं वा गौरिति स्यात् । भवति तु सामान्यप्रत्ययः अदृष्टपूर्वायामपि गोव्यक्तौ । तस्मान्न प्रयोगापेक्षो गोशब्दो व्यक्तिवचन इति शक्यते आश्रयितुम् । एवं तर्हि शक्तेः स्वभाव एषः, यत् कस्यां चित् व्यक्तौ वर्तते कस्यां चिन्न । यथा अग्निरुष्णः, उदकं शीतं, एवमेतद् भविष्यतीति । नैवं सिध्यति । न हि एतत् गम्यते कस्यां चित् व्यक्तौ वर्तते कस्यां चिन्नेति । सत्यमेतत्, गोत्वं लक्षणं भविष्यतीति । यत्र गोत्वं, तस्यां व्यक्तौ इति । एवं तर्हि विशिष्टा व्यक्तिः प्रतीयेत, यदि च विशिष्टा, पूर्वतरं विशेषणमवगम्येत । **नहि अप्रतीते विशेषणे विशिष्टं के चन प्रत्येतुमर्ह-**

न्तीति । **अस्तु,** विशेषणत्वेन आकृतिं वक्ष्यति, विशेष्यत्वेन व्यक्तिम् । नहि आकृतिपदार्थकस्य व्यक्तिर्न पदार्थः, व्यक्तिपदार्थकस्य वा नाकृतिः । उभयमुभयस्य पदार्थः । कस्य चित् किं चित् प्राधान्येन विवक्षितं भवति, तेनात्र आकृतिर्गुणभावेन व्यक्तिः प्रधानभावेन विवक्ष्यते इति । **नैतदेवम्** । उभयोरुच्यमानयोः गुणप्रधानभावः स्यात् । यदि चात्र आकृतिः प्रतीयते शब्देन, तदा व्यक्तिरपि पदार्थः इति न शक्यते वदितुम् । कुतः ? आकृतिर्हि व्यक्त्या नित्यसंबद्धा, संबन्धिन्यां च तस्यामवगतायां संबन्ध्यन्तरमवगम्यते । तदेतत् आत्मप्रत्यक्षं, यत् शब्दे उच्चरिते व्यक्तिः प्रतीयते इति । किं शब्दात् उत आकृतेः इति विभागो न प्रत्यक्षः, सोऽन्वयव्यतिरेकाभ्यां अवगम्यते । अन्तरेणापि शब्दं य आकृतिमवबुध्येत, अवबुध्येतैव असौ व्यक्तिम् । यस्तु उच्चरितेऽपि शब्दे मानसादपचारात् कदा चित् आकृतिं नोपलभेत, न जातु चित् असौ इमां व्यक्तिमवगच्छेत । ननु व्यक्तिविशिष्टायामाकृतौ वर्तते । व्यक्तिविशिष्टायां चेत् वर्तेत व्यक्त्यन्तरविशिष्टा न प्रतीयेत । तस्मात् शब्दः आकृतिप्रत्ययस्य निमित्तं, आकृतिप्रत्ययः व्यक्तिप्रत्ययस्येति । ननु गुणभूता प्रतीयते इत्युक्तम् । न गुणभावः अस्मत्पक्षस्य बाधकः । सर्वथा तावत् प्रतीयते । अर्थात् गुणभावः प्राधानभावो वा । स्वार्थे चेदुच्चार्यते, प्रधानभूता । अथ न स्वार्थं, परार्थमेव, ततो गुणभूता, न तत्र शब्दव्यापारोऽस्ति । **ननु** च दण्डी इति, न तावत् दण्डिशब्देन दण्डोऽभिधीयते, अथ च दण्डविशिष्टोऽवगम्यते । एवमिहापि न तावदाकृतिरभिधीयते, अथ च आकृतिविशिष्टा व्यक्तिः गम्येत इति । **नैतत्** साधु उच्यते । सत्यं दण्डिशब्देन दण्डो नाभिधीयते, न तु अप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति । अस्ति तु दण्डिशब्दैकदेशभूतो दण्डशब्दो, येन दण्डः प्रत्यायितः । तस्मात् साध्वेतत्, यत् प्रतीते विशेषणे विशिष्टः प्रतीयते इति । न तु गोशब्दावयवः कश्चिदाकृतेः प्रत्यायकः अन्यो व्यक्तेः । यत उच्येत तत आकृतिरवगता, न गोशब्द आकृतिवचन इति । न च यथा दण्डिशब्दो न दण्डे प्रयुक्तः, एवं गोशब्दो न आकृतौ । तदर्थमेव निदर्शितं केवलाकृत्यभिधानः श्येनशब्द इति । तदेवं अन्वयव्यतिरेकाभ्यां असति श्येनव्यक्तिसंबन्धे श्येनशब्दोच्चारणात् आकृतिवचन इति गम्यते । न तु व्रीह्याकृतिसंबन्धमन्तरेण व्रीहिव्यक्तौ शब्दस्य प्रयोगो दृष्टः । तस्मात् आकृतिवचनः शब्दः इत्येतज्ज्यायः ।

**वा**— ( भाष्यदूषणं आदौ ) किंच नैव इष्टकाभिः आकृतिसंपादनं अभ्युपगतं, यतः स्वभावात् स्नाय्वाद्यारब्धद्रव्यसमवायित्वेन उपालम्भः स्यात् । पिष्टपिण्डसिंहवत् सादृश्यसंपत्तिः पक्षद्वयेऽपि चोदनाऽर्थः । सा तु आकृत्यन्तरविलक्षणश्येनाकृत्या स्यात्, न तु व्यक्त्यन्तरविलक्षणश्येनविशेषेण असाधारणेन वा, निर्विकल्पत्वात्, सामान्यविशेषानपेक्षं व्यक्तिमात्रसादृश्यं अविधेयं सर्वद्रव्येषु तुल्यत्वात् । एकव्यक्तिपरिग्रहाच्च व्यक्त्यन्तरेण सादृश्यं न कार्यं स्यात् । तस्मात् श्येनचित्–क्रिया व्यक्तौ शब्दार्थे न संभवति ।

‘ **न साधकतमः** ’ इति ( भाष्यम् ) । नहि एवं स्मृतिः श्येनैश्चीयते इति श्येनचित् । ‘ कर्मण्यग्न्याख्यायां ’ इति हि सा ( पा० ३।२।९२ कर्मणि उपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यात् अग्न्याधारस्थलविशेषस्य आख्यायां, श्येन इव चितः श्येनचित् । **सि. कौमुदी.** ) । श्येनं चयनेन साधयेत् इति ईप्सिततमत्वम् । तत्रापि मुख्यासंभवात् सादृश्यपरिग्रहः । असाधारणे शब्दप्रवृत्त्यसंभवात् अव्यपदेश्यत्वेन च सर्वत्राविशेषात्, सामान्याकारेण च निरूपणे विकल्पात् ( गौर्न पदा स्प्रष्टव्या इत्यादौ यत्र सामान्याकारेण व्यक्तिविशेषमनाश्रित्य शब्दः प्रयुज्यते तत्र व्यक्तिविकल्पः प्रसज्येत । **सु. पृ.** ३६२ ) व्यापकापेक्षया व्याप्यसामान्यस्य नैव विशेषव्याप्यापेक्षया इतरत्र आकृतिः । ( गोत्वैकार्थसमवायिनां शाबलेयत्वाद्यवान्तरसामान्यरूपाणां विशेषाणां गोत्वव्याप्यत्वात् व्यापकगोत्वापेक्षामात्रेण इतरत्र तदाश्रयभूतं असाधारणं व्यक्तिशब्दाभिलप्यं नैव गोत्वापेक्षं भवति । व्याप्यस्य धूमत्वसामान्यस्य व्यापकाग्न्यपेक्षत्वेऽपि तदाश्रयस्य असाधारणस्य अग्न्यपेक्षा नास्ति । **सु. पृ.** ३६३ ) तत्र विशेषपक्षे संबन्धानन्वाख्यान– व्यभिचार– सामान्यबुद्ध्यभाव–प्रत्यर्थशक्ति-

कल्पनादयो दोषाः ( अन्वाख्यानं कथनं, तदभावः अनन्वाख्यानम् । साधारणरूपेण शब्दप्रवृत्त्यसंभवे सति विशेषावच्छिन्नत्वरूपेण व्यक्तेरभिधेयं वाच्यं, तस्मिंश्च पक्षे संबन्धकथनाभावादयो दोषाः स्युः । 'वाच्यवाचकनियमहानिः संबन्धानित्यत्वापत्तिः विकल्पप्रसङ्गः अशेषव्यक्त्यानयनापत्तिः नित्यबहुवचनप्रसङ्गः शुक्लादिशब्दसामानाधिकरण्यासंभवश्च आदिशब्देनोपात्ताः । सु. पृ. ३६३ ) न च यत्र संशयः, तत् प्रत्याय्यं भवति इति निर्विषयता शब्दस्य ।

एतेन स्वतन्त्रोभयाभिधानमार्गः प्रत्युक्तः । व्यक्तिविशिष्टाकृतिमार्गोऽपि नागृहीतविशेषणा इति न्यायात् व्यक्तेः प्रथमग्रहणप्रसङ्गात् ( प्रत्युक्तः ) । संबन्धसमुदाययोरपि स्वरूपप्रत्ययाभावात् सर्वत्र चाविशेषात् अवश्यं संबन्धिसमुदायिविशेषणता अभ्युपगन्तव्या भवति । तत्रापि शक्तित्रयकल्पना । व्यक्त्यंशे च उक्तदोषप्रसङ्गः । न च व्यक्त्याकृत्योः भिन्नकार्ययोः गुणप्रधानावस्थयोः समुदायोपगमनं युक्तम् । अनत्यन्तभेदाच्च भिन्नधर्मौ संबन्धसमुदायौ न युक्तौ । आकृतिविशिष्टोऽपि व्यक्तिविशेषो नैव प्रतीयते । व्यक्तिविशेषबुद्ध्यभावात् व्यक्तिमात्रमिति चेन्न, तदानीं तस्य आकृतितोऽन्यत्वेन अनिरूपणात् । मात्रशब्दो हि सामान्यवाची इति आकृतिरेवोच्यते । नानाऽऽकारेषु च वस्तुषु तद्भेदानुसारित्वात् शक्तीनां अन्वयव्यतिरेकाभ्यां गोत्वाकारनिबन्धनैव गोशब्दवाच्यत्वशक्तिर्गम्यते । तदेकाधारसामान्यान्तरावगतिः विशेषाकाङ्क्षा वा इत्यर्थव्याप्त्यव्याप्तिभ्याम् । अनत्यन्तव्यतिरेकाच्च आकृतेः अमूर्तत्वाद्याश्रयदोषाप्रसङ्गः । सा हि प्रतीयते निष्कृष्टरूपा, क्रियायोगिनी तु व्यक्त्युपेता भवत्येव इति, प्रोक्षणावेक्षणादि तु न कथं चिन्न संभवति । विशसनाद्यपि तु व्यक्त्यव्यतिरेकापेक्षया संभवत्येव । तथाहि, पश्वादिषु अपनीताङ्गेषु विशेषबुद्ध्यभावात् सामान्यरूपैव विशसनादिविशिष्टा बुद्धिर्दृष्टा । ननु एवमनित्या आकृतिः स्यात्, तेनांशेन इष्टैव । आश्रयान्तराविनाशात्तु सर्वैरपि अविनाशः अवश्यमेव एष्टव्यः । तेन यत् तावन्मात्रमेव तस्य विनाशः, अनेकदेशस्य तु न कथं चिद्विनाशः स्यात् इत्युभयथा व्यवहारः । अत्यन्तव्यतिरेके तु नैव धर्मविधिविषयो व्यवतिष्ठेत । न च पशुत्वं ( विधिविषयः ), अमूर्तत्वात् । तदुपलक्षितं तु यत् द्रव्यं, तत् द्रव्यत्वात् ऋते न ताद्रूप्येण गम्यते इत्येकार्थसमवायात् व्यापकत्वाच्च द्रव्यं गमयितव्यं, तत्रापि अमूर्तत्वं दोषः । आश्रयोपलक्षणाच्च द्रव्यमात्रप्रसङ्गः । विशेषस्तु पशुत्वस्य वा द्रव्यत्वस्य वा अव्यापकत्वादगम्यः । न चाप्रतीतं विधिना संबध्यते । न च यत्र संशयः, तत् प्रतीतम् । न च अन्यत्रोक्तो धर्मः तत्रासंभवात् अन्यत्र कार्यः । तस्मान्न सामान्ये कृतः, विशेषेषु युक्तः । विशेषा अपि व्यपदेशात् सामान्यमेव इत्यमूर्तता । असाधारणेन तु नैव व्यवहारः । तस्मात् अनिरूप्यो धर्मविधिविषयः । सामानाधिकरण्यादि च प्रसिद्धिविपरीतं लक्षणया कल्प्यम् । **भाष्यकारेण** तु व्यतिरेकाभ्युपगमेन आश्रयमात्रगतिरुक्ता । विशेषरूपा न कदा चित् व्यक्तिः प्रतीयते । योऽपि आश्रयाश्रयिभावः, सोऽपि औपचारिकः । सामान्याच्च विशेषलक्षणं तत्र नाश्रयितव्यं, आक्षेपमात्रभावात् । अथवा एतद्विषय एवायं प्रपञ्चः किं शब्देन आकृत्या वेति । अन्वयव्यतिरेकाभ्यां च आकृत्या इति निर्णयः । यो हि धूमात् अग्निमत्त्वं प्रतिपद्यते तस्य तैक्ष्ण्येऽपि आकाङ्क्षा सिद्धा ।

'मानसादपचारात्' इति ( भाष्यम् ) । यो हि जाड्यात् सामान्यवाचितां हित्वा कं चिदेव विशेषं यत्र संबन्धानुभवः तं वाच्यं मन्यते, तस्य सामान्याप्रतीतेः न विशेषान्तरापेक्षा भवति । अथवा, यथा शब्दात् स्वतन्त्रामाकृतिं बुध्यते, नैवं कदा चित् आकृतिं अबुध्वा व्यक्तिमिति । केन तर्हि गोत्वगोशब्दयोर्विशेषः ? व्यतिरेकांशस्य एकत्र विवक्षा, गोत्ववान् इति तु स्फुटं प्रत्ययेन जातिमदभिधानं, विभागोपपत्तेः । सामान्यस्य वा उपलक्षणत्वात् न भेदपक्षदोषः । भेदानामेव चायं प्रत्येकं सर्वेषां वाचकः । यस्तु उपादीयमानत्वे संशयः, स संख्याऽऽधारविषयः । उद्दिश्यमानेषु निर्णय एव । गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानां अन्तर्भावार्थम् ।

प्रयोजनं सामान्यविशेषशब्दयोः एकविषयत्वात् सामान्यशिष्टस्य विशेषशिष्टेन अबाधः पूर्वपक्षे ( सिद्धान्ते तु बाधः ) ।

(अत्र सुधा— ' वर्णकान्तरस्याभावेऽपि पूर्वव्याख्याप्रकारे केन चित् व्याक्षेपदोषेण अप्रसन्नाभिधानात् शिष्यक्लेशापत्तेः सुखप्रतिपत्त्यर्थं प्रकारान्तरमारभते — ' एवं वा ' इति ' । ) एवं वा । ' गौरित्येवंविधाः शब्दाः साधुत्वेन निरूपिताः । तेषामेवाभिधेयेऽर्थे व्यापारः केति चिन्त्यते ॥ चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः । क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥ तयोरर्थाभिधाने हि व्यापारो नैव विद्यते । यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥ वाचकत्वेऽपि पाश्चात्यमनुयात्येवमादिषु । प्रतीयते विशेषो यः संशयेन स नाप्यते ॥ यदि ह्यर्थद्वये बुद्धिर्निपातोच्चारणाद् भवेत् । ततो विचारो जायेत न सामान्यधिया विना ॥ ' ( पौनरुक्त्यापत्तेः आख्यातं न विचार्यमित्याशङ्कते ) आख्यातस्यापि नन्वत्र न युक्ताऽर्थविचारणा । द्वितीयादावियं यस्माद् विस्तरेण करिष्यते ॥ ' कः पुनर्भाव ' इत्यादौ ( २।१।१ भाष्ये ) विवेकेनार्थनिर्णयः । आख्यातस्य कृतस्तेन तच्चिन्ता नोपपद्यते ॥ ( प्रत्ययार्थचिन्तेव प्रकृत्यर्थचिन्ता इति परिहरति— ) प्रत्ययार्थस्य भावस्य वाच्यता प्रतिपादिता । ( स्वमतेन परिहरति— ) प्रकृत्यर्थविवेकार्थं विचारः क्रियतेऽधुना । प्रत्ययस्यापि वा तत्र भावार्थत्वे निरूपिते । सामान्यं वा विशेषो वा किं वाच्यमिति चिन्त्यते ॥ या चोक्ता भाष्यकारेण यागादेरभिधेयता । सिद्धा सेह विवेकार्थं तत्र भावस्य भाषिता ॥ ( अपरितोषात् अन्यथा परिहरति— ) यज्याद्यर्थेऽपि वा वाच्ये किं सामान्यविशेषयोः । अभिधेयमिति प्राप्ता चिन्ता कर्तुं क्रियापदे ॥ अपूर्वं भावशब्देभ्यो द्रव्यादिभ्यः किमिष्यते । एषा तत्र च चिन्तोक्ता शेषा प्रासङ्गिकी कथा ॥ नामाख्यातपदे तेन कस्यार्थस्याभिधायके । किमाकृतेरुत व्यक्तेरिति चिन्ता प्रवर्तते ॥ प्रयोगस्य प्रतीतेश्च तुल्यत्वाच्छब्दलक्षणे । व्यक्तिपक्षाभिधानाच्च संशयः प्रतिभाति नः ॥ ( न तु भाष्योक्तः संशयो युक्तः ) । कथं लक्षणसंबन्धश्चिन्तायाः प्रकृतेन वा । स्मृतिमूलविचारेण वक्तव्यं त्विदमादितः ॥ इयं प्रासङ्गिकी चिन्ता साधुशब्दे निरूपिते । उदाहृतस्य तस्यैव क्रियतेऽर्थविनिश्चयः ॥ ( ननु— ) वक्तव्यः पूर्वमर्थश्चेच्छब्दरूपनिरूपणात् । नहि वाच्यमविज्ञाय साधुत्वमवधार्यते ॥ ( उच्यते ) अनिश्चितेऽपि वाच्यत्वे व्यक्त्याकृत्योर्विवेकतः । साधुत्वं शक्यते ज्ञातुं तेन वाच्यमिहोच्यते ॥ वाच्यमात्रे हि साधुत्वमविज्ञाते न लभ्यते । न चाकृत्या न च व्यक्त्या विना तन्नोपपद्यते ॥ अथवोक्तेन मार्गेण सर्वा व्याकरणस्मृतिः । प्रमाणमिति सिद्धस्य किं चिदत्र विचार्यते ॥ व्यक्तिर्वाच्येति विज्ञानं न सन्मूलमसंभवात् । तेन व्याकरणेऽपीदृक् न प्रमाणं स्मृतिर्मता ॥ स्मृतेस्तेनापवादोऽयं प्रामाण्यस्य क चित् कृतः । युक्तो लक्षणपादाभ्यां पूर्वया चापि चिन्तया ॥ ( प्रयोजनाभावेन अधिकरणारम्भमाशङ्कते— ) ननु चाकृतिपक्षेऽपि व्यक्तावेव क्रियाक्रिये । शब्दार्थे संभवात् तेन किमर्थैषा विचारणा ॥ ( वेदे प्रयोजनाभावेऽपि लोके प्रयोजनं भविष्यति इति तावत् परिहरति, यद्यपीति— ) यद्यप्येवं न भेदोऽस्ति वेदार्थकरणे नृणाम् । दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥ व्यक्तिपक्षे विकल्पः स्यात् कौण्डिन्ये दधितक्रयोः । सामान्यवाक्यदौर्बल्यात् तक्रमेवेतरत्र तु ॥ ( स्वमतेन प्रयोजनमाह— ) वेदेऽपि च विशेषोऽस्ति व्रीहिप्रोक्षणचोदके । दध्नेत्यादिषु भेदश्च जायते होमचोदके ॥ प्रोक्षणं पूर्वपक्षेऽपि कर्तव्यं लौकिकेष्वपि । व्रीहिषु श्रुतिसामर्थ्याद् बाधित्वा संनिधिक्रमम् ॥ प्रकृतेष्वेव सिद्धान्ते श्रुतिसंनिध्यनुग्रहात् । तत्रापि कृत्स्नमस्त्येव व्रीहित्वं हि श्रुतीरितम् ॥ एवं होमेऽपि दध्यादौ प्रकृतेऽप्रकृतेऽथवा । प्रकृते श्रुतिवाच्यस्य होमत्वस्यापि संभवात् ॥ सोपपत्तिकमन्यच्च वक्तव्य-

मनया दिशा। कर्तव्या तेन यत्नेन चिन्तेयं सप्रयोजना ॥'

'ननु गौरितिशब्दादौ सर्वमेतद्विचारितम्। (गौः इति शब्दः आदिर्यस्य तस्मिन् 'गौः इत्यस्य शब्दस्य कोऽर्थः' इति भाष्ये १।१।५ पृ. ४९) तेन, तेन गतार्थत्वात् पुनश्चिन्ता न युज्यते ॥ (परिहरति-) आकृतेरभिधेयत्वप्रतिज्ञा केवला कृता। तत्रेदानीं सहेतुत्वं तस्या एवाभिधीयते ॥ यथा चाकृतिरित्यादौ भाष्यकारेण चोदितम्। पुनरस्याः प्रतिज्ञाया हेतुरप्यभिधास्यते ॥ (स्वमतेनान्यथा परिहरति-) यद्वोक्तस्तत्र सद्भावः शब्दार्थत्वमिहोच्यते। या तु शब्दार्थता प्रोक्ता सेह सिद्धा, न चिन्तिता ॥ (अनभिमतमपि परिहारं विभवार्थमाह-) उक्ते वाऽप्यभिधेयत्वे जातेः सद्भावसिद्धये। व्यक्तिर्वाच्या न वेत्येतदगतार्थं विचार्यते ॥ एतच्चिन्ताप्रसिद्ध्यर्थमिदं तावद्विचार्यते। शब्दार्थौ लौकिकौ वेदे किमन्याविति संशयः ॥ एकत्वे सति कर्तव्यो विचारः शब्दवाच्ययोः। भेदे तु संशयाभावान्न चिन्ताऽवसरो यतः ॥ शब्दार्थेन न कार्यं हि व्यवहारेऽर्थलक्षणे। लौकिकव्यवहारार्थं तेनेदं न विचार्यते ॥ वेदे तु प्रत्यभिज्ञाने शब्दार्थविषये सति। विवेकः शक्यते ज्ञातुं प्रतीतेर्वाच्यगम्ययोः ॥ अलौकिके च शब्दार्थे वाच्यवाचकरूपयोः। अज्ञातयोर्न जायेत संदेहो वाच्यवस्तुनि ॥ तेन प्रतीतशब्दार्थे निर्णयार्थमिदं पुरा। एकत्वं विद्यते नेति चिन्त्यं शब्दाभिधेययोः ॥ (पौनरुक्त्यपरिहारं वक्तुमाशङ्कते) संख्याऽभावादिति (१।१।६।२०) ह्येतन्ननु स्पष्टं निरूपितम्। शब्दस्य प्रत्यभिज्ञानान्नान्यतोच्चारणान्तरे ॥ अभेदकारणं चात्र प्रत्यभिज्ञानमेव ते। अन्यत्तूपचयत्वेन तेन चिन्ता न युज्यते ॥ (परिहरति) लौकिकेष्वेव शब्देषु तत्राभेदः प्रसाधितः। वैदिकानामभेदार्थं चिन्तनीयमिदं पुनः ॥ व्यपदेशादिभेदाच्च कथं भेदो न जायते। तत्रानुक्तमिदं वक्तुं विचारोऽयं प्रवर्तितः ॥ एकत्वेऽपि च शब्दस्य सिद्धे तत्रेह चिन्त्यते। किमर्थो भिद्यते नेति तेनाप्यपुनरुक्तता ॥ अर्थाभेदे च चिन्तेयं शब्दाभेदे तु सत्यपि। घटते, कस्य वाच्यत्वं व्यक्त्याकृत्योर्द्वयोरपि ॥ (संशयहेतुमाह-) व्यपदेशादिभेदेन शब्दे च प्रत्यभिज्ञया। भेदाभेदनिमित्ताभ्यां क्रियते संशयोद्भवः ॥ (विमृश्य पूर्वपक्षमाह-) किं प्राप्तमुच्यते भिन्नौ शब्दार्थौ लोकवेदयोः। व्यपदेशस्य भिन्नत्वादाख्याया लक्षणस्य च ॥ स्वरोच्चारणभेदाच्च लोपव्यत्ययदर्शनात्। स्वरुयूपादिशब्दैश्च स्पष्टभेदैः सह श्रुतेः। अनध्यायादिभेदाच्च शूद्रोच्चारणवर्जनात् ॥ (अर्थभेदे हेतुमाह-) अश्ववालादिशब्दानां स्पष्टार्थान्तरदर्शनात्। अग्न्यादीनां च भिन्नत्वं भाष्ये यदभिधीयते ॥ तदयुक्तं क्रियाभेदे कर्तृभेदो हि नेष्यते। हन्तिकर्तृत्वमग्नेश्च पदार्थेभ्यः प्रतीयते ॥ अशाब्दं वह्निशब्दस्य तद्वाच्यं कथमुच्यते। हननं (वृत्रस अग्निना) किं कृतं नेति प्रमाणं चात्र नास्ति नः। असता कथमन्यत्वं कर्मणाऽतः प्रतीयते ॥ अपूर्वे वृत्रशब्दार्थे क्रियाशब्देऽप्यलौकिके। हन्तिकर्तरि वह्नित्वं कथमध्यवसीयते ॥ (देवताविग्रहादिमत्त्वबोधकमन्त्रादीनां-) स्तुतिमात्रपरत्वाच्च न वह्नित्वं विधीयते ॥ अक्रियत्वाच्च भाष्योक्तैर्वाक्यैरित्यभिधास्यते। तेनोक्तस्यैव शब्दस्य त्रिवृदादेर्नवादिषु। वृत्तिरर्थेष्वपूर्वेषु वक्तव्या भेदसिद्धये ॥ यच्चान्यदिदमित्याह (भाष्यकारः) रूपभेदं क्रियाश्रुतेः। तदसत्यं न शब्दस्य भेदोऽर्थगुणकारितः ॥ (कथं भाष्यं व्याख्येयं तदाह-) तेन स्वरादिभेदेन वक्तव्या भिन्नरूपता ॥ पूर्वोक्तेनैव मार्गेण नार्थभेदनिबन्धना। तस्माच्छब्दार्थयोर्भेदः स्पष्ट इत्यवधारिते ॥ (सिद्धान्तमुपक्रमते-) तावेव वेदे शब्दार्थौ लोके याविति भाष्यते। वेदस्यैव प्रसज्येत सकलस्याप्रमाणता ॥ अविज्ञातार्थसंयोगात् स्थितप्रामाण्यबाधया। (प्रयोगचोदनाऽभावात् इति सौत्रं हेतुं प्रयोगस्य चोदनायाश्चाभावात् इत्येवं व्याचष्टे-) प्रयोगस्याग्निहोत्रादेश्चोदनायाश्च जायते। अभावः, प्रत्ययार्थस्य विधेरप्रतिपादनात् ॥ (अर्थान्तरे शब्दप्रयोगविषयायाश्चोदनायाः विधेः

ाभावात् इत्येवं अन्यथा व्याचष्टे– ) **अर्थान्तरे च ाब्दस्य न प्रयोगो विधीयते ॥ वेदेनाशास्त्रहेतुवात् संबन्धस्येति हि स्थितम् ।** ( ३।२।२।४ त्यत्र । अविभागात् इति सूत्रावयवस्य भाष्यव्याख्यानानुसंधत्ते– ) **किंचाविभक्तरूपत्वं प्रत्यभिज्ञायते फुटम् ॥ वैदिकेष्वपि शब्देषु प्रत्यक्षेण पुनःपुनः । द्वा विभागशब्देन शब्दस्योच्चारणे सति । गोत्वबुद्धेः समानत्वान्न भेद इति कीर्त्यते ॥** ( शब्दक्षणाविभागात् इत्येवं स्वयमन्यथा व्याचष्टे– ) **लक्षास्याविभक्तत्वं शब्दानां वेदमुच्यते** ( वा इदं ) । **सर्वथा शक्यते भेदो न वक्तुं शब्दवाच्ययोः ॥ कत्वे याज्ञिकानां च प्रसिद्धिरनुगृह्यते । मीमांसा वापि वेदार्थतत्त्वनिर्णयकारणम् ॥** ( अनुगृह्यते त्यनुषङ्गः । अविभागशब्देनोक्तं प्रत्यभिज्ञानमेव पूर्वक्षोक्तानां हेतूनां कालात्ययापदिष्टत्वलक्षणदोषाभिधानात्वेन व्याचष्टे– ) **व्यपदेशादिभेदैश्च न भेदोऽत्रानुमीयते । प्रत्यक्षप्रत्यभिज्ञाते वेदशब्देऽन्यरूपता ॥ व्यपदेशादिभेदश्च स्वरभेदादिकारितः । स्वरादयश्च भिद्यन्ते वेदत्वात् किमिहोच्यते ॥** ( ‘ अग्निर्वृत्राणि जङ्घनत् ’ इत्यादिषु स्वरनियमस्य, व्योमन् ’ इत्यादिषु च वर्णलोपस्य, ‘ देवासः ’ इत्यादेषु आगमस्य, ‘ अगृभ्णन् ’ इत्यादिषु विकारस्य ग्रहणं स्वरादयश्च इति पदेन । सु. पृ. ३४७ । यत्तु स्वरुयूपादेस्पष्टभेदशब्दसाहचर्ये गवादिशब्दे भेदहेतुत्वेनोपन्यस्तं, ान्निराकरणार्थं अविभागशब्दोक्तं शब्दप्रत्यभिज्ञानं योजयति– ) **स्वरुयूपादिशब्दानामन्यत्वेनेतरत्र च । नान्यत्वं युज्यते बाधात् प्रत्यक्षप्रत्यभिज्ञया ॥ वचनाद् धर्मभेदस्तु** ( अनध्यायादिधर्मभेदस्तु ) **शूद्रवर्जितताऽपि वा । धर्मावुच्चारणस्यैतौ, न शब्दस्य स्वरश्च यः** ( सोऽपि उच्चारणस्य धर्मः ) । अविभागशब्दोक्तं अर्थप्रत्यभिज्ञानं योजयति–) **अश्ववालादिशब्दार्थभेदे वचनकारिते । न च भिन्नत्वमन्येषु प्रज्ञातार्थेषु युज्यते । उत्तानानां च केषां चिद् वहतां न विधीयते । गोत्वं, तेषामसिद्धत्वात् पदार्थाग्रहणादपि ॥** (किमर्थं तर्हि ‘उत्ताना वै देवगवा वहन्ति ’ इति वाक्यं इत्यपेक्षायामाह– ) **विधेरन्यस्य शेषत्वात् स्तुतिरेपाऽवगम्यते । उत्तानेत्यादिका, तेन नातो भेदः प्रतीयते** ( गोपदार्थस्य । लोकवेदाधिकरणसिद्धान्तमुपसंहरति– ) **तस्माद्यावेव शब्दार्थौ लोके पूर्वं निरूपितौ । वेदे तावेव विज्ञेयाविति सिद्धं प्रमाणवत् ॥**

( आकृत्यधिकरणविचारमनुसंधत्ते– )

**‘ यद्वा चैवं तदा युक्ता चिन्तेयं क्रियतेऽधुना । किमाकृतेः पदार्थत्वं, किं व्यक्तेः किं द्वयोरिति ॥** वहवः प्रतिभान्त्यत्र पक्षाः प्रतिपदं च ये । ते च सर्वेऽभिधीयन्ते व्यामोहविनिवृत्तये ॥ **गौरित्युच्च**रिते सप्त वस्तूनि प्रतिभान्ति नः । जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके । संख्या च सप्तमी, **तेषामष्टपक्षी द्वयोर्द्वयोः ॥ किं जातिरेव शब्दार्थो व्यक्तिरेवाथवोभयम् । किं विकल्पोऽथ संबन्धः समुदायो निरूप्यताम् ॥ जातिर्व्यक्तिविशिष्टा वा व्यक्तिर्जातिविशेषिता । जातिसंबन्धयोरेव सामान्यसमुदाययोः ॥ जातिकारकयोश्चैवं संख्यासामान्ययोरपि । लिङ्गसामान्ययोरेवमेकैकस्येतरैः सह ॥ अष्टौ पक्षा नियोक्तव्याः षड्भिः प्रत्येकमुक्तवत् ॥ एवमानन्त्यमेतेषां पक्षाणामिह गम्यते ॥** ( इह पक्षसहस्राणां मिलिता सप्तविंशतिः । शतानि षट् चतुःषष्टिश्चापरा वस्तुसप्तके [ २७६६४ ] ॥ शीघ्रसंकलनाशक्तेरुपचारात् तथापि तु । आनन्त्यवचनं, यद्वा लिङ्गाद्याधिक्यकारितात् ॥ विशेषणविशेष्यत्वप्रकाराधिक्यतोऽधिकाः । पक्षात् चतुःशतात् पूर्वं गणितादित्यनन्तता ॥ **सु.** पृ. ३७८ ) । **पूर्वपक्षेऽपि चत्वारो भाष्ये चैते प्रदर्शिताः ॥ व्यक्तेरेवाभिधेयत्वं द्वयोर्वा स्वप्रधानयोः । व्यक्तेर्जातिविशिष्टाया विपरीतमथापि वा ॥ उपन्यासेन चैतेषां ज्ञेयाः सर्वे प्रपञ्चिताः । निराकरणयुक्त्या च निषिद्धा इति नोदिताः ॥ ’**

तेन आद्यौ द्वावेव पक्षौ विचार्येते, किमाकृतिः शब्दार्थो व्यक्तिरिति । **भाष्यकारेण** च संशयकारणमुक्तं ‘ सामान्यप्रत्ययात्, व्यक्तौ च क्रियासंभवात् ’

इति । एतदयुक्तं, व्यक्तेरपि प्रतीयमानत्वात् कथं जातेरेव प्रतीतिरुपन्यस्यते । यदि च व्यक्तिर्न संप्रतीयेत, ततः संशय एव न स्यात् 'किमभिधीयते अनेन' इति । न च क्रियासंभवः अभिधेयत्वे कारणं, व्यक्त्यन्तराणामपि प्रसङ्गात् । तेन पूर्वोक्तमेव संशयकारणं मन्तव्यम् । (तदेवाह–) प्रयोगप्रतीत्योः साधारणत्वात् शास्त्रान्तरे (न्यायशास्त्रे) व्यक्तिपक्षाभ्युपगमात् संशयः । यद्वा शब्दे उच्चारिते सामान्यप्रत्ययात् व्यक्त्याकृत्योः सामान्यात् तुल्यात् प्रत्ययात्, व्यक्तौ च शब्दात् आकृतौ आलम्भन–स्पर्शन–श्येनसदृशचयनादिक्रियासंभवात् सामान्ये व्यक्तौ च प्रत्ययात् क्रियासंभवात् इति चोक्तम् ! (अनेन भाष्यमुपपादितम्) । 'का पुनराकृतिः, का व्यक्तिरिति' (भाष्यं) कथं पुनरयं प्रश्नः, यदा 'गौः इत्येतस्य शब्दस्य कोऽर्थः' (१।१।५ आकृतिवादे) इत्यत्र जातिर्निरूपिता । नैष दोषः । येन एतन्न ज्ञातं, असौ पृच्छति, 'का पुनराकृतिः का व्यक्तिः' इति । संदेहाद्वा अत्र पुनः उभयस्मिन् प्रतीयमाने, का व्यक्तिः, कियती वा जातिरिति । वैपरीत्येन वा कश्चित् पृच्छति, यदा शाबलेयादिपिण्डात् न किं चित् व्यक्तं वस्त्वन्तरं भिन्नमुपलभ्यते, तदा कुतोऽयं विवेकः 'व्यक्तिरियं, जातिरियं' इति । अथवा व्यवहारार्थं सर्वैव चिन्ता क्रियते । जातेश्च पदार्थत्वेऽपि व्यक्तौ क्रियासंभवात् निष्प्रयोजना चिन्ता । यतस्त्वसौ प्रयत्नेन एतत् विचारयति, तेन नूनं काऽपि अस्य पिण्डात् अत्यन्तभिन्नव्यवहारयोग्या जातिरभिप्रेता इत्यभिप्रायः । तत्राह, 'द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः' इति । यौ तावत् अज्ञानसंशयवादिनौ, तयोः स्वरूपकथनमात्रेणैव निराकरणं वक्तव्यम् । यस्तु विपरीतवादी, तस्यैव निराकरणमभिधीयते । यद्यपि जातिः व्यक्तेरत्यन्तभिन्ना नोपलभ्यते, तथापि शबलाकारे तस्मिन्नुपलभ्यमाने सामान्यबुद्धेरालम्बनं प्रथमपादोक्तेन न्यायेन आकृतिः, इतरा व्यक्तिः । न चानेन ग्रन्थेन जातेः सद्भावः प्रमाणं वा प्रतिपाद्यते, व्यक्तेर्विवेकः केवलः कथ्यते । तेनैवाभिप्रायेण मात्रशब्दप्रयोगः, अन्यथा तस्य गतार्थतैव भवेत् । यदप्युक्तं नूनं काऽपि अत्यन्तभिन्ना जातिरभिप्रेतेति, तस्याप्युत्तरं द्रव्यगुणकर्मणां सामान्यमात्रं आकृतिरभिप्रेता नात्यन्तव्यातिरिक्ता इति । द्रव्यादीनां च सर्वेषां यत् सामान्यं सत्तारूपं, तदनेन निर्दिश्यते, तन्निर्देशेन अवान्तरसामान्यानामपि निर्देशसिद्धिः । यद्वा सामान्यशब्दस्य प्रत्येकं संबन्धात् द्रव्यत्वादीनि त्रीणि सामान्यानि निर्दिश्यन्ते, सत्तया व्यवहाराभावात् । अथवा मात्रशब्दप्रयोगात् द्रव्यादिषु यावन्ति अवान्तरसामान्यानि महासामान्यं च, तत् सर्वमभिधीयते । 'असाधारणविशेषा व्यक्तिः' इति बहुव्रीहिः । असाधारणाः विशेषाः यस्यां व्यक्तौ सेयं असाधारणविशेषा, न तु असाधारणाश्च ते विशेषाश्च इति सामानाधिकरण्यं संभवति, उपरिष्टात् विशेषाधारस्य व्यक्तित्वाभिधानात्, स्मृतेश्च (वैशेषिकतन्त्रे द्रव्यगुणकर्मव्यक्तीनां सामान्यविशेषाधारत्वस्मृतेश्च । **सुधा.** पृ. ३७९) तेन सम्यगभिहितं किमाकृतिर्वा व्यक्तिरिति ।

किं प्राप्तं ? (प्रयोगचोदनाऽभावात् इति सूत्रं आवृत्त्या एतद्विचारपूर्वपक्षेऽपि योजयति–) आलम्भनप्रोक्षणविशसनादिप्रयोगचोदनायाः व्यक्तिपक्षे भावात् आकृतिपक्षे चाभावात्, 'ब्राह्मणो न हन्तव्यः' 'सुरा न पातव्या' इत्यादिप्रतिषेधचोदनायाश्च व्यक्तिपक्षे एव संभवात् 'देवदत्त गामभ्याज' इत्येवमादिलौकिकव्यवहारचोदनायाश्च उपपत्तेः व्यक्तिः शब्दार्थ इति निश्चीयते । (अनेनैव सूत्रावयवेन आक्षिप्तानि हेत्वन्तराणि आह–) संख्याकारकोपपत्तेश्च । यदि हि व्यक्तिः शब्दार्थो भवति, ततो वृक्षौ वृक्षाभ्यां इति प्रातिपदिकाभिहितासु व्यक्तिषु प्रत्ययाभिहितद्वित्वादिसंख्या करणादिकारकं वा उभयमुपपद्यते, इतरत्र तु जातेरसंख्येयत्वात् अकारकत्वाच्च उभयमप्यनुपपन्नं, लाक्षणिकव्यक्त्याश्रयणं च आपद्येयाताम् । तथा च सर्ववैदिकवाक्यार्थानां लाक्षणिकत्वं स्यात् । व्यक्तिपक्षे तु 'पुरुषो देवदत्तः' इति मुख्यशब्दसामानाधिकरण्योपपत्तिः । जातिपक्षे लाक्षणिकद्वारं सामानाधिकरण्यं कल्पयितव्यं भवेत्, तेनापि व्यक्तेः पदार्थत्वमवसीयते । 'पशुमालभेत' इति च श्रुतेः हृदयजिह्वादिभिः व्यक्त्यवयवैः उपरिष्टात् व्यवहारो दृश्यते, न जात्या । कर्मभिश्च द्रव्यस्यापेक्षितत्वात् ।

व्यक्तिपक्षे अपेक्षिताभिधानं, नेतरत्र। सिद्धस्वरूपायाश्च व्यक्तेः अभिधेयत्वं युक्तं, नाप्रसिद्धायाः जातेः। अतो व्यक्तिः शब्दार्थः। ( अर्थैकत्वं इति सूत्रावयवमवतारयितुं शङ्कते- ) किमिति उभयं वाच्यं नाश्रीयते प्रयोगप्रतीतिक्रियोपपत्तेः इति चेत्। ( सूत्रावयवेन निराकरोति- ) न, अनेकशक्तिकल्पनाप्रसङ्गात्, एकाभिधानेनैव संबन्धात्, इतरत्र प्रतीतेरुपपन्नत्वात् व्यक्तेरेवाभिधेयत्वम्। ( अविभागात् इति सूत्रावयवावतारणाय शङ्कते- ) सामान्यप्रत्ययः कथमिति चेत्, ( सूत्रावयवेन निराकरोति- ) व्यक्तिसंबन्धादुपपत्स्यते। यत्रैव क्रियाऽनुपपत्तिः तत्रैव अर्थापत्त्या व्यक्तिवचनत्वं युक्तं, अन्यत्र तु पूर्वप्रतीतेः जातिवचनत्वमेव न्याय्यं इति चेत् न, उक्तमार्गेण अनेकशक्तिकल्पनादिदोषप्रसङ्गात्। अनवस्थितशब्दार्थसंबन्धापत्तेः संशयापत्तेश्च। व्यक्तिवादिनः कथं निर्निमित्ता व्यक्त्यन्तरे शब्दस्य प्रवृत्तिरिति चेत्, आकृतिचिह्ननिमित्तत्वात् व्यक्त्यन्तरे प्रयोगस्याविरोधः।

**भाष्यकारस्तु** 'कथं सामान्यावगतिः' इत्युपन्यस्य 'आकृतिश्चिह्नभूता भविष्यति' इत्युत्तरं ददाति, तदसंबद्धम्। कथं सामान्यप्रत्ययः कारणे पृष्टे व्यक्त्यन्तरप्रयोगनिमित्तं कथ्यते। तेन अध्याहारेण एतद् व्याख्येयम्। कथं सामान्यावगतिः इति चेत्, व्यक्तिसंबन्धात्। कथं व्यक्त्यन्तरे प्रयोगः, चिह्नत्वात् आकृतेः, इत्येवम्। यद्वा 'कथं सामान्यावगतिः इति चेत्' इत्युपन्यस्ते पूर्वपक्षवादी सामान्यावगतिमपह्नोतुं अशक्नुवन् आकृतिविशिष्टव्यक्त्यभिधानपक्षं परिगृह्णाति आकृतिश्चिह्नभूता विशेषणभूता अभिधेया भविष्यति। अतश्च तत्प्रतीतिरचोद्या। तेन केवला विशिष्टा वा व्यक्तिः शब्दार्थः। ( अद्रव्यशब्दत्वात् इति सूत्रं ३१ संक्षेपेण व्याचष्टे- )तथा च 'षड् देयाः' इत्येवमादिषु षडादिका संख्या उपपत्स्यते। ( अन्यदर्शनाच्च ३२ इति सूत्रं अन्वयमुखेन व्याचष्टे- ) 'अन्यं तद्वर्णं' इति च व्यक्त्यन्तरे अन्यशब्दोपपत्तिः तद्धर्मता च भविष्यति। ( व्यतिरेकमुखेन भाष्यकारीयव्याख्यानमनुसंधत्ते- ) अन्यथा व्यक्त्यन्तरानयनेऽपि जातेरनन्यत्वात् अगुणत्वाच्च उभयमनुपपन्नम्। तस्मात् व्यक्तिः पदार्थः।

इति प्राप्ते अभिधीयते। नैतत् व्यक्तिः शब्दवाच्येति, किंतु आकृतिः पदार्थः इति विज्ञायते। 'श्येनचितं चिन्वीत' इति श्रवणात्। अत्र हि श्येनव्यक्तिं चयनेन कुर्यात् आकृतिं वा इति वाक्यार्थौ स्याताम्। यावदिष्टकाभिः श्येनव्यक्तेः कर्तुमशक्यत्वात्, स्नाय्वादिभिरपि अनिर्वृत्तेः, इष्टकाबाधात्, श्येनव्यक्तेः प्रयोजनकल्पनात्, चिनोतेरमुख्यार्थत्वात्, 'कर्मण्यग्न्याख्यायां' इति ( पा० ३।२।९२ ) स्मृतिपरित्यागप्रसङ्गाच्च चयनेन श्येनव्यक्तिं कुर्यात् इत्येवं तावत् नोपपद्यते। तथा आकृतेरपि इष्टकाभिः कर्तुमशक्यत्वात्, दैवनिर्मितत्वात्, प्रयोजनकल्पनात्, चिनोतेरयथार्थत्वप्रसङ्गात्, स्मृतिबाधाच्च, आकृतिं कुर्यात् इत्यपि नोपपद्यते। परिशेषात् श्येनमिव चितं अग्निस्थलं चयनेन निर्वर्तयेत् इति वाक्यार्थः। ततश्च यया कया चित् श्येनव्यक्त्या सादृश्यस्य अग्रेश्चेतुमशक्यत्वात् सर्वव्यक्तिसादृश्यासंभवात् अतीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्येनाकृतिसादृश्यसंपत्तिसंभवाच्च आकृतिः शब्दार्थ इति निश्चीयते।

अथ कस्मात् श्येनव्यक्तिभिः चयनचोदनेयं नाश्रीयते 'श्येनचितं चिन्वीत' इति ? तत्र **भाष्यकारेणोत्तरं** दत्तं 'ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते' इति। **तदयुक्तम्**। नह्यत्र श्येनशब्दः स्वार्थः, न च सकलश्येनचिच्छब्दोत्तरकालं श्रुतत्वात् द्वितीयायाः तदन्तः ( द्वितीयान्तः श्येनशब्दः ), येन ईप्सिततमार्थप्रतिपादकः स्यात्। तेन 'कर्मण्यग्न्याख्यायां इति स्मृतेः श्येनशब्दार्थस्य करणत्वं निषेद्धव्यम्। कर्मणि हि कारके चिनोतेः क्विप्-प्रत्ययः स्मर्यते, यदि चिनोतिः अग्न्याख्या भवति। न च चिनोतेः केवलस्य अग्निवचनत्वं संभवति। तेन क्विबन्तचिनोतिश्रुतेः श्येनचिच्छब्दस्य सकलस्य अग्निवचनत्वं निश्चीयते, न श्येनशब्दस्य पृथगर्थता। तेन न श्येनशब्दार्थः करणतया विज्ञायते। यदि वाऽसौ करणं स्यात् ततो लक्षणाऽभावात् तृतीयासमासवचनानुपपत्तिर्भवेत्, तृतीया चाश्रुता कल्पनीया। श्रुतकरणत्वे इष्टकापरित्यागश्च स्यात्। सत्यां च गतौ प्रतिषिद्धानेकश्येनव्यक्तिहिंसा जायते। तेन करणत्वानुपपत्तेः 'श्येनमिव चितमग्निं चिन्वीत इति' वाक्यार्थः। अतश्च उक्तेन

न्यायेन अस्य वाक्यस्य आकृतिपक्षे संभवात् आकृतिः पदार्थः इति ।

नैतदेवं, नहि चयनक्रियासंभवमात्रेण आकृतेरभिधेयत्वं लभ्यते, व्यक्तिपक्षेऽपि उपलम्भनादिक्रियासंभवात्, बहुत्वाच्च आलम्भनादिवाक्यानां तदन्यथाऽनुपपत्त्या व्यक्तेरेव पदार्थत्वमवसीयते । अथ आकृतिपक्षेऽपि व्यक्तिलक्षणया तानि उपपत्स्यन्ते इत्युच्यते, तदा एतदपि शक्यमेव वक्तुं श्येनवाक्ये व्यक्तिः आकृतिलक्षणार्था इति । युक्ता चैकत्र लक्षणा, नेतरेषु बहुषु । अगत्या वा तृतीयासमासाश्रयण श्येनवाक्ये करिष्यते । संख्याकारकाद्युपपत्तिश्च व्यक्तिपक्षे । तेन व्यक्तिः शब्दार्थः । इति स्थिते अभिधीयते जातिरभिधेयेति । कुतः ? '**पूर्वं सामान्यविज्ञानाच्चित्रबुद्धेरनुद्भवात् । गामानयेति वाक्याच्च यथारुचिपरिग्रहात्** ॥' गोशब्दोच्चारणे हि पूर्वमेव अगृहीतासु व्यक्तिषु सामान्यं प्रतीयते, तदाकारज्ञानोत्पत्तेः पश्चात् व्यक्तयः प्रतीयन्ते, अतश्च आकृतिप्रत्ययस्य निमित्तान्तराभावात्, व्यक्तिप्रत्यये च पूर्वप्रतीतसामान्यनिमित्तत्वात् आकृतिः शब्दार्थ इति विज्ञायते । यदि च व्यक्तयोऽभिधेयाः भवेयुः, ततस्तासां चित्रखण्डमुण्डादिविशेषस्वरूपग्रहणात् विचित्रा शब्दोच्चारणे बुद्धिः स्यात्, एकाकारा तु उत्पद्यते । तेनापि आकृतिः शब्दार्थ इति निश्चीयते । 'गामानय' इति चोदिते अर्थप्रकरणाभावे यां कांचित् सामान्ययुक्तां व्यक्तिमानयति, न सर्वां, न विशिष्टाम् । यदि च व्यक्तेरभिधेयत्वं, ततः सर्वासां युगपदभिहितत्वात् अशेषानयनं स्यात् । या वाऽभिधेया, सैवैका आनीयेत । यतस्तु अविशेषेण जातिमात्रयुक्ता आनीयते, तेनापि सामान्यस्य पदार्थत्वं विज्ञायते । व्यक्तिपक्षे च सर्वा वा स्वतन्त्रा व्यक्तयोऽभिधीयेरन्, व्यक्तिविशिष्टो वा समुदायः, काचिद्वा एका व्यक्तिरिति । तत्र सर्वव्यक्त्यभिधानं तावदयुक्तम् । अनेकवाचकशक्तिकल्पनाप्रसङ्गात्, अनित्यशब्दार्थसंबन्धापत्तेः, अशेषव्यक्तिग्रहणाशक्तेश्च संबन्धाग्रहणे सति व्यवहारानुपपत्तेः । नित्यवत् गोशब्दस्य अष्टशब्दवत् बहुविषयत्वात् एकवचनद्विवचनश्रुत्यसंभवात् गोशब्दाभिहितासु च सर्वव्यक्तिषु शुक्लगुणाभावे 'गौः शुक्लः' इति सामानाधिकरण्यासंभवात् । 'पशुना यजेत' इति च पशुशब्दोपात्ताभिः सर्वव्यक्तिभिः यागस्य कर्तुमशक्यत्वात्, ततश्च वेदाप्रामाण्यप्रसक्तिः । एवं समुदायपक्षोऽपि न संभवति । तत्रापि हि विशेषणत्वेन व्यक्तयः अभिधातव्याः, ततश्चोक्तदोषप्रसङ्गः । ( दोषषट्कमाह- ) ( १ ) व्यक्तिव्यतिरिक्तसमुदायकल्पना, ( २ ) तेन च व्यवहाराभावात् अभिधानानर्थक्यं, ( ३ ) समुदायिविनाशे च तस्यापि अनित्यत्वात् अनित्यशब्दार्थसंबन्धप्रसङ्गः, ( ४ ) समुदायस्य चैकत्वात् द्विवचनबहुवचनानुपपत्तिः, ( ५ ) सामानाधिकरण्यासंभवश्च, ( ६ ) तेन चामूर्तेन यागाद्यसंभवात् वेदस्याप्रामाण्यम् । अथ एका व्यक्तिरभिधीयते इत्युच्यते, तत्रापि संबन्धानित्यत्वं, काऽसौ अभिधीयते इत्यज्ञानात् व्यवहाराणामसंभवः, सामान्यप्रत्ययानुपपत्तिः, द्विवचनबहुवचनाभावप्रसङ्गः, प्राक् च अभिधेयव्यक्त्युत्पत्तेः उत्तरकालं च प्रयोगासंभवः, समाने च गोत्वे प्रतीतौ च 'इयमभिधीयते नेयं' इति विशेषकारणं नास्ति । ( एतावता ग्रन्थेन व्यक्तिपक्षं निरस्य आकृतिपक्षः सिद्धान्तितः ) ।

अतः परं भाष्यार्थः । ( 'यदि व्यक्तिः शब्दार्थः' इत्यादेर्भाष्यस्य अर्थः उच्यते इत्यर्थः । ) यदि चैका व्यक्तिरभिधेया भवेत् व्यक्त्यन्तरे प्रयोगो न स्यात्, अभिधेयव्यक्तेस्तत्राभावात्, अत्यन्तविलक्षणत्वाच्च । सामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते । न च सामान्यविशेषौ मुक्त्वा व्यक्त्यन्तरे अन्यदस्ति, येन शब्दप्रयोगः स्यात् । ननु च यथैव एका सामान्यविशेषविनिर्मुक्ता तथा द्वितीया, यतश्च यथैव एकस्यां सामान्यविशेषविनिर्मुक्तायां शब्दस्य प्रवृत्तिः एवमविशेषात् इतरत्रापि भविष्यति । यदि सामान्यरूपं विशेषरूपं वा व्यक्त्यन्तरं स्यात्, ततो विलक्षणत्वात् शब्दो न प्रवर्तते । यदा तु तदपि उभयविनिर्मुक्तं रूपं, तदा तुल्यरूपत्वात् अयुक्ता शब्दस्य प्रवृत्तिरिति । यद्येवं सामान्यविशेषविनिर्मुक्तत्वात् एकत्र इतरत्र च शब्दो वर्तते, हन्त तर्हि सामान्यविशेषविनिर्मुक्तत्वमेव सामान्यं शब्दस्याभिधेयं स्यात्, इति सिद्धो नः पक्षः । तस्य आकृतिशब्दवाच्यत्वे केवलं भवतः प्रद्वेष इति । पूर्वपक्षवादी आह, नैवं मयोच्यते सामान्य-

विशेषविनिर्मुक्तत्वात् व्यक्तौ शब्दो वर्तते व्यक्त्यन्तरे वेति, किंतु सामान्यविशेषव्यतिरेकेण अन्यापोहवत् व्यक्तिः कथ्यते। तत्र कथं सामान्यमेव तर्हि वाच्यं इत्युच्यते। यो हि अर्थः सामान्यस्य विशेषाणां चाश्रयः सा व्यक्तिः, न सामान्यविशेषौ। ततश्च यथैव एकस्यां सामान्यविशेषव्यतिरिक्तायां व्यक्तौ शब्दस्य वृत्तिः, तथा अन्यस्यामपि भविष्यति। **सिद्धान्तवादी** आह, यदि तावत् सामान्यविशेषविनिर्मुक्तत्वात् शब्दो वर्तते, ततः सामान्यमेव वाच्यम्। अथ समानं निमित्तं नास्ति, तदा व्यक्त्यन्तरे वृत्तिर्न प्राप्नोति। तदभावेऽपि चेत् वर्तेत, ततः अश्वव्यक्तावपि वृत्तिप्रसक्तेः अतिप्रसङ्गः स्यादिति। **मैवम्**। सामान्यनिरपेक्षायामेव शब्दप्रवृत्तौ प्रयोगकृतव्यवस्थाऽऽश्रयणात् नातिप्रसङ्गो भविष्यति। यद्येवं प्रयोगवशेन शब्दो वर्तेत, ततः अद्य जातायां गवि न दृष्टः इति शब्दो न प्रवर्तेत, तेन प्रयोगकृता चेत् व्यवस्था क चित् अप्रसङ्गः न चेदतिप्रसङ्गः इति। **यत्तु** भिन्नासु व्यक्तिषु सामान्यप्रत्ययो न प्राप्नोति 'अयमपि गौः, अयमपि' इति तदिह अतिप्रसङ्गापादनेन न संबध्यते, इति व्यक्त्यन्तरे प्रयोगो न प्राप्नोति इति अस्मिन्नवसरे वक्तव्यम्। **शक्त्या** तर्हि व्यवस्था भविष्यति। यत्र शक्तः शब्दः, तत्र वर्तिष्यते प्रयोक्ष्यते च। यत्र तु शक्तिर्नास्ति, तत्र प्रयोगप्रवृत्ती न भविष्यतः। ततश्च गोव्यक्तिष्वेव शक्तेः प्रयोगव्यवस्था भविष्यति। **नैवमपि** व्यवस्था लभ्यते, प्राक् प्रयोगात् शब्दशक्तेः अविज्ञानात्। प्रयोगप्रतीत्यधीनं हि शब्दशक्तिज्ञानं, तत् कथमिव अनुत्पन्नं प्रयोगकाले व्यवस्थाकारणत्वेन आश्रयितुं युक्तम्। यद्यपि श्रोता प्रयोगात् शक्तिं जानाति, तथापि प्रयोक्त्रा कथं ज्ञातं 'गोव्यक्तौ अयं शक्तः शब्दः, नाश्वव्यक्तौ' इति, तेन अश्वव्यक्तावपि प्रयोगः प्राप्नोति। **जात्या** किमिति व्यवस्था नाश्रीयते, यत्र गोत्वमुपलक्षणं, तत्र शब्दो वर्तिष्यते, यत्र तन्नास्ति, तत्र अश्वव्यक्त्यादौ वृत्तिर्न भविष्यति, ततश्च व्यवस्थासिद्धिरिति। **सत्यमेवं** सिध्यति, किंतु आपन्नो भवान् अस्मत्पक्षं आकृतिर्वाच्येति। **नहि अनभिधाय गोत्वमुपलक्षणं गोव्यक्तावेव प्रयोग**व्यवस्था लभ्यते। तच्चेदभिहितं, सिद्धं आकृतिशब्दार्थत्वमिति।

**पूर्वपक्षवादी** तु द्वितीयं पूर्वपक्षमुपन्यस्यति (भा. पृ. ३०४ पं. ५) सत्यमाकृतिरभिधीयते किंतु गुणत्वेन स्थिता व्यक्तिः प्राधान्येन शब्दार्थः। न च आवयोरुभयं नाभिधीयते इति प्रतिज्ञा। कस्य चित् प्राधान्येन किं चिदभिधेयतया विवक्षितं, किं चित् गुणत्वेन, तदुक्तं व्यक्तिः प्राधान्येन अभिधेयेति। एवं सति प्रयोगव्यवस्था उभयप्रतीतिश्च, तथा आलम्भनादिक्रियोपपत्तिश्च भविष्यति। **इतरस्त्वाह**, मैवं लभ्यते। जातिश्चेत् पूर्वमभिधेयत्वेन अभ्युपगता अत्रैव शब्दस्य उपक्षीणशक्तित्वात् न व्यक्तिवचनता लभ्यते। न च आकृतिसंवेदनेनापि व्यक्तिप्रतीतेः अन्यथाऽप्युपपन्नत्वात् सत्यां गतौ अनेकार्थता युज्यतेऽभ्युपगन्तुम्। अर्थापत्त्या च शब्दस्य वाचकशक्तिः कल्प्यते। सा च यदा व्यक्तिप्रतीतेः अन्यथाऽप्युपपन्नत्वात् क्षीणा, तदा वाचकशक्तिकल्पनायां प्रमाणं नास्ति। न च सामान्यविशेषवचनत्वं शब्दस्य दृष्टं, अक्षादिशब्दानां अनेकसामान्यवचनत्वात्। अन्वयव्यतिरेकाभ्यां च व्यक्तेरशब्दार्थत्वं निश्चीयते। अनुच्चारितेऽपि शब्दे प्रतीतसामान्यस्य व्यक्तिप्रतीतेः श्रुतशब्दस्यापि च अगृहीतसामान्यस्य व्यक्तिप्रत्ययाभावात्। तेन आकृतिरेव शब्दार्थ इति।

सांप्रतं पक्षान्तरमुपन्यस्यति (भा. पृ. ३१७)। अथ व्यक्तिविशिष्टायामाकृतौ किमिति न वर्तते। तदेतत् प्रयोगप्रतीतिक्रियासंभवत्वेन वा पक्षान्तरमुपन्यस्तम्। यद्वा व्यक्तेरेव शब्दार्थत्वं साधयितुमिदमुच्यते। अनेनाभिप्रायेण 'यदा चित् सिद्धान्तवादी आकृतेः शब्दार्थत्वं अनेन अभ्युपगतमेव, आलम्भनादिक्रियासंभवश्च भविष्यति इत्यनेनाभिप्रायेण व्यक्तेरपि गुणत्वेन अभिधानमिच्छति, ततोऽहं पूर्वं तावत् विशेषणे वर्तितुमर्हति इति व्यक्तिवचनत्वमेव साधयिष्यामि' इति। **इतरस्तु** तदभिप्रायं ज्ञात्वा उत्तरं वदति, व्यक्त्यन्तरविशिष्टायां प्रयोगो न प्राप्नोतीति। यदि हि व्यक्तिविशिष्टा जातिरभिधीयते ततो व्यक्त्यभिधानपक्षोक्तदोषप्रसङ्गः, अनेकशक्तिकल्पना-

ऽऽदिरूपो व्यक्त्यन्तरे प्रयोगश्च न प्राप्नोति, विशेषणस्यान्यत्वादिति। तेन जातिरेव शब्दार्थः।

ननु गुणभूता प्रतीयते अतश्चान्येन प्रधानेन अभिधेयेन भवितव्यमिति। नैवं, शब्देन तावत् सैवाभिधीयते। यदि विवक्षावशेन अर्थात् गुणत्वं प्राधान्यं वा भवति, भवतु नाम, न तावता शब्दाभिधेयत्वं व्याहन्यते। यदा चासौ शब्देनाभिधीयते, तदा गुणत्वं नैव प्रतीयते, तेन अर्थात् गुणत्वप्रतीतिरदोषः। ननु पूर्वपक्षोक्तैः कारणैः व्यक्तेरेव शब्दार्थत्वं युक्तम्। व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीति चेत्, आकृतिश्चिह्नभूता भविष्यति। यथा अनभिधीयमानमपि काकनिलयनं देवदत्तगृहशब्दस्य स्वार्थमभिदधतः चिह्नभूततां प्रतिपद्यते, तद्वत् आकृतिः चिह्न व्यक्त्यभिधाने भविष्यति। भाष्यकारेण तु दण्डिशब्दो दृष्टान्तत्वेनोपात्तः, यथा तेन न नाम किल दण्डोऽभिधीयते, अथ च दण्डविशिष्टः पुरुषः प्रत्याय्यते, तद्वदाकृतावपीति। ननु दण्डिशब्दे प्रकृत्या दण्डोऽभिधीयते एव, कथमुच्यते 'न च तावत् दण्डोऽभिधीयते' इति, कथं च उपलक्षणत्वेन आकृतौ उपन्यस्तायां विशिष्टः प्रत्याय्यते इति विशेषणं दृष्टान्ततया उपन्यस्तमिति। नायं दोषः। विशेष्याभिधायकप्रत्ययाभिप्रायत्वात् दण्डानभिधानस्य। यथा प्रत्ययेन न च तावत् दण्डोऽभिधीयते, अथ च तद्विशिष्टः पुरुषः प्रत्याय्यते, तथेहापि भविष्यतीत्यभिप्रायः। यत्तु उपलक्षणोपन्यासे विशेषणस्य दृष्टान्तता न युक्तेति, तदुपलक्षणस्यापि विशेषकत्वात् न चोद्यम्। यद्वा, केन चित् सामान्येन दृष्टान्तता भविष्यति अनभिधेयत्वेन विशेषकत्वेन च इत्यदुष्टम्। ततश्च सम्यगभिहितं, यथा दण्डिशब्दे तद्वदत्रापि भविष्यतीति। एवं च अप्रसङ्गातिप्रसङ्गौ न भविष्यतः इति। तदेतन्न युज्यते। युक्तं देवदत्तगृहस्य पुरुषस्य च केवलस्य अभिधानं, विशिष्टप्रतीतावपि काकनिलयनदण्डयोः प्रत्यक्ष-दण्डशब्दावगतयोः विशेषणत्वोपपत्तेः। न तु गोत्वस्य असंनिहितस्य इहोपलक्षणत्वं युज्यते। अप्रतीतविशेषणे विशेष्याप्रतीतेः। न च दण्डिशब्दवत् तदवयवेन गोत्वाभिधानं प्रतीमः, येन द्वितीयावयवेन व्यक्तेरेवाभिधानं स्यात्। अतश्च यदि तावत् गोत्वमभिधीयते, ततः तदेव उक्तेन न्यायेन वाच्यं भवेत्। अप्रतीतस्य विशेषणत्वासंभवात्। उक्तवत् अतिप्रसङ्गः शब्दप्रयोगस्य प्राप्नोति। न च यथा दण्डिशब्दः केवले दण्डे न प्रयुज्यते इति विशिष्टवचनोऽवधार्यते, तद्वदाकृतौ प्रयोगाभावात् विशिष्टवचनो ऽवधारयितुं शक्यते। श्येनचित्यादौ आकृतौ प्रयोगदर्शनात् अन्वयव्यतिरेकाभ्यां च जातिरेव वाच्या, इत्यवधार्यते, श्येनचिद्वाक्ये केवलायामाकृतौ प्रयुक्तत्वात्, क्वचिदपि च आकृत्या विना व्यक्तिमात्रे प्रयोगादर्शनात्। एवं येऽपि संबन्धसमुदायादयः पूर्वपक्षाः, तेऽपि उक्तेन न्यायेन निराकृताः। तेन आकृतिरेव शब्दार्थः इति।

**न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत्। ३४॥**

**भाष्यं** -- अथ यदुक्तं न क्रिया संभवेत् 'व्रीहीन् प्रोक्षति' इति। न द्रव्यशब्दः स्यात् 'षड् देयाः' इति। अन्यदर्शनवचनं च न स्यात् 'अन्यं तद्रूपं' इति। तत् परिहर्तव्यम्।

**तदर्थत्वात् प्रयोगस्याविभागः। ३५॥**

**भाष्यं**— आकृत्यर्थत्वाच्छब्दस्य यस्याः व्यक्तेः आकृत्या संबन्धः, तत्र प्रयोगः। प्रोक्षणं हि द्रव्यस्य कर्तव्यतया श्रूयते। कतमस्य? यत् यजतिसाधनं अपूर्वप्रयुक्तत्वात्तस्य, नाकृतेः अशक्यत्वात्। तत्र व्रीहिशब्दः आकृतिवचनः प्रयुज्यते प्रोक्षणाश्रयविशेषणाय। स हि आकृतिं प्रत्याययिष्यति, आकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेक्ष्यतीति। तेन आकृतिवचनं न विरुध्यते इति। एवं 'षड् देया गावो दक्षिणा' इति दक्षिणाद्रव्ये संख्यायाः प्रयोक्तव्ये 'गावः' इति आकृतिवचनो विशेषकः। तथा 'अन्यं' इति विनष्टस्य प्रतिनिधेः अन्यत्वसंबन्धः। तत्र पशुशब्दः आकृतिवचनः आकृत्या विशेक्ष्यतीति। तस्मात् गौः अश्वः इत्येवमादयः शब्दाः आकृतेरभिधायका इति सिद्धम्।

**वा**— ये तु आलम्भनादिचोदनाभावादयः 'न क्रिया स्यात्' इत्येतत्सूत्रानुभाषिताः पूर्वपक्षोक्ता हेतवः, तेषां सर्वेषां अनेन सूत्रेण परिहारोऽभिधीयते। 'तदर्थत्वात् प्रयोगस्याविभागः' इति। तदर्थत्वात् अपूर्वार्थ-

त्वात् आलम्भनप्रोक्षणाद्यङ्गानां अपूर्वसाधने प्रयोगेण भवितव्यम् । द्रव्यं च अपूर्वसाधनं, यागेन स्वसिद्ध्यर्थं आक्षिप्तत्वात्, नाकृतिः, असमर्थत्वात् । तदभिधानं तु द्रव्यनियमार्थं प्रतिपत्तव्यं, न स्वार्थं, जातेरनपेक्षितत्वात् अदृष्टार्थत्वप्रसङ्गात्, साधनत्वाप्रतीतेश्च । यदपि जातेः प्रातिपदिकाभिहितायाः करणत्वं प्रतीयते, तदपि द्रव्यनियामकत्वेनैव न साक्षात्, अयोग्यत्वात् । तेन आकृत्यभिधानस्य द्रव्यनियमार्थत्वात्, द्रव्ये च आलम्भनप्रोक्षणसंख्याकारकसामानाधिकरण्यादिसंभवात् अदुष्टता । तदाह 'प्रयोगस्याविभागः' इति, आकृतिपक्षेऽपि आलम्भनादिप्रयोगस्य द्रव्यादविभक्ततैवेति । **अथवा**, आकृत्यभिधानस्य द्रव्यनियमार्थत्वात् उक्तवत् प्रयोगस्य अविभागः इति । **यद्वा**, आकृतिव्यक्त्योः अत्यन्तभेदाभावात् कदा चित् व्यक्तिरूपेण द्रव्यमभिधीयते, कदा चित् सामान्यरूपेण यथा विवक्षितं, तथा शब्दस्य उभयरूपवस्त्वर्थत्वात् व्यक्त्यभिधानेऽपि न प्रयोगस्य विभागो नानारूपतेति । **जातेर्वा** व्यक्तितः अत्यन्तभेदाभावात् व्यक्तौ कृता धर्माः जातौ कृता एव भवन्ति, इति न प्रयोगस्य विभागेन प्रयोजनमिति । **यद्वा**, आकृतिव्यक्त्योः उभयोः यागार्थत्वात् धर्माणां च यत्रक्वचन यागसाधने कृतानां प्रयोजनवत्त्वात् द्रव्यादविभक्ततेति । तस्मात् आकृतिपक्षेऽपि आलम्भनादिसंभवात् आकृतिरेव शब्दार्थः इति सिद्धम् ।

**शा**— इदानीं वाचकप्रसङ्गात् वाच्यविशेषश्चिन्त्यते, किमाकृतिः, उत व्यक्तिरिति । तत्र यदि लोकवेदयोः शब्दार्थानामन्यत्वं भवेत् तत इदमनारम्भणीयम् । ... तेन आकृत्यधिकरणोपोद्घाततया लोकवेदयोः पदपदार्थानां अन्यत्वानन्यत्वे विचार्येते । ... **अन्ये इति प्राप्ते अभिधीयते 'प्रत्यक्षप्रत्यभिज्ञानाद् वर्णैकत्वं प्रतिष्ठितम् । वर्णात्मकं पदं तच्च तद्भेदान्न भिद्यते ॥'** एवं सिद्धे विचार्यते, किं आकृतिः शब्दार्थः, उत व्यक्तिः, उत आकृतिविशिष्टा व्यक्तिः, इति त्रयः पक्षाः प्राधान्यतश्चिन्त्यन्ते । ... तत्र '**प्रयोगचोदनाऽभावाद् व्यक्तेरेवाभिधेयता । नह्याकृतिरमूर्तत्वाद् व्यवहारोपयोगिनी ॥ लिङ्गकारकसंख्याभिः संबन्धोऽस्या न कल्प्यते । सामानाधिकरण्यं च न जातिगुणशब्दयोः ॥ व्यक्तिवाचित्वपक्षे तु सर्वमेतत् समञ्जसम् । तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः ॥**' नैतद्युक्तम् । कुतः ? '**आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः । आकृतेः प्रथमज्ञानात् तस्या एवाभिधेयता ॥ व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता । लिङ्गसंख्याऽऽदिसंबन्धः सामानाधिकरण्यधीः ॥ सर्वं समञ्जसं ह्येतद् वस्त्वनेकान्तवादिनः । लक्षणा वाऽभ्युपेतव्या जातेस्तेनाभिधेयता ॥**'

**सोम**— लोकवेदाधिकरणस्य आकृत्यधिकरणोपोद्घातत्वात् **संगतिः** ।

**वि**— ( वर्णकं २ ) 'व्यक्तेर्व्रीह्यादिशब्दार्थ आकृतिर्वा, क्रियाऽन्वयात् । व्यक्तिर्व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते ॥ शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता । क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्ष्यताम् ॥' **अत्रैव गुरुमतमाह** 'गवादिचोदना नो मा जातिव्यक्त्योरनिर्णयात् । , आनन्त्यव्यभिचाराभ्यां न व्यक्तिरिति निर्णयः ॥'

**भाट्ट**— तत्रावघातादिक्रियाणां लिङ्गकारकसंख्यादीनां च जातौ अयोग्यत्वात् गौः शुक्लेत्यादिसामानाधिकरण्यनिर्देशाच्च व्यक्तिवाचित्वमेव । न चैवं जातिबोधानापत्तिः, लक्षणाऽऽदिना तद्बोधोपपत्तेः । व्यक्तिशक्तिग्रहस्यैव वा कार्यताऽवच्छेदकं जातिविशिष्टशाब्दबोधत्वम् । अतो न दोषः । न च विनिगमनाविरहः, लाघवस्यैव नियामकत्वात् । तथाहि, न शक्तिग्रहस्य स्वातन्त्र्येण कारणत्वं, अपि तु लाघवात् शक्यत्वादिसंबन्धेन घटपदवत्ताज्ञानस्यैव । अतश्चास्मन्मते घटत्वं धर्मिताऽवच्छेदकीकृत्य शक्यत्वसंबन्धेन घटपदप्रकारकस्य ज्ञानस्य घटो घटपदवानित्याकारकस्य विशेष्यतासंबन्धेन विशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति कारणत्वम् । भवन्मते तु घटत्वत्वं धर्मिताऽवच्छेदकीकृत्य तद्वाच्यम् । अतश्च घटत्वत्वस्य घटेतरावृत्तित्वादिरूपस्य अनेकपदार्थघटितस्य प्रवेशात् तव कार्यकारणभावे गौरवम् । न च शक्त्यानन्त्यादिदोषः, तस्य फलमुखत्वात् । अतश्च लाघवात् व्यक्तावेव शक्तिः,

जातिविशिष्टव्यक्तौ वा, न तु जातावेव। इति प्राप्ते, घटत्वं धर्मिताऽवच्छेदकीकृत्य शक्यत्वसंबन्धेन घटपदवत्ताज्ञानस्य कारणत्वं, पदत्वं धर्मिताऽवच्छेदकीकृत्य शक्तत्वसंबन्धेन घटवत्ताज्ञानस्य वा घटपदं घटवदित्याकारकस्य कारणत्वमित्यत्र विनिगमनाविरहेण अनन्तकार्यकारणभावप्रसङ्गात्। अस्मन्मते तु घटपदत्वं धर्मिताऽवच्छेदकीकृत्य शक्तत्वसंबन्धेन घटत्ववत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनात् लाघवम्। न च ममापि विपरीतमापादयितुं शक्यं, तथा सति घटत्वस्य धर्मित्वे स्वरूपेण तस्य धर्मित्वायोगात् घटत्वत्वेन तस्य प्रवेशे गौरवस्य त्वयैवोक्तत्वात्। अतो न घटत्वत्वावच्छिन्नं घटत्वं शक्यत्वसंबन्धेन घटपदवदित्याकारकं ज्ञानं कारणं, अपि तु घटपदं शक्तत्वसंबन्धेन घटत्ववदित्याकारकमेव, जातेः स्वरूपेणैव प्रकारत्वोपपत्तौ घटत्वत्वस्याप्रवेशात्। न च समवायेन अन्यप्रकारत्वे एव जातेः स्वरूपेण प्रकारता, न संबन्धान्तरेणेत्यत्र प्रमाणमस्ति, परैरपि तथाऽनभ्युपगमाच्च। अतश्च कार्यकारणभावेऽपि लाघवात् घटत्वे एव शक्तिः। शक्त्यानन्त्यादि च नास्त्यस्मन्मते। अतः प्रथमोपस्थितत्वात् जातावेव शक्तिः। एवमरुणादिशब्दानामपि गुणे एव गुणत्वे वा, न तद्विशिष्टद्रव्ये। कथं तर्हि व्यक्तिबोधः, अभेदात्। उक्तविधकारणस्य जातिगुणविशिष्टव्यक्तिशाब्दत्वे एव कार्यताऽवच्छेदकत्वस्वीकाराद्वा। वस्तुतस्तु जातिगुणशाब्दत्वमेव लाघवेन कार्यताऽवच्छेदकम्। व्यक्तिस्तु तृतीयाऽऽदिस्थले 'पशुना यजेत' 'अरुणया पिङ्गाक्ष्या क्रीणाति' इत्यादौ नैव पदाद्भासते, जातिगुणयोरेव व्यक्तिपरिच्छेदद्वारा कारणत्वोपपत्तेः। लिङ्गसंख्ययोरपि पाशाधिकरणन्यायेन (९।३।४–५) सामानाधिकरण्येन पार्ष्ठिको जातिगुणसंबन्धः। अतः संबन्धविधयैव तत्र व्यक्तिबोधः। द्वितीयाऽऽदिस्थले तु जातिगुणयोः कर्मत्वाद्यन्वयायोग्यत्वात् व्यक्तेर्लक्षणया बोधः। तस्याः एव कर्मत्वाद्यन्वयः। लिङ्गसंख्याऽन्वयश्च साक्षात्संबन्धेनैव। सामानाधिकरण्यं च व्यक्तिद्वारकमिति सर्वं सुस्थम्। प्रयोजनं पूर्वपक्षे रथंतरादिशब्दानां ऋग्वाचित्वात् 'रथंतरमुत्तरयोर्गायति' इत्यादौ उत्तरापदोपलक्ष्योत्तराकार्ययोः ऋग्विधानम्। सिद्धान्ते तु गीत्यतिदेशः उत्तरास्विति वक्ष्यते।

**मण्डन**— 'गवादिशब्दोऽभिदधाति जातिम्।'

**शंकर**— 'आकृतेरेव वाच्यत्वम्।'

* लौकिकवैदिकानां शब्दार्थानामन्यत्वे अनारम्भणीयमेवेदं **आकृत्यधिकरणं** स्यात्। तदुभयानन्यत्वे तु लोके कृतः शब्दार्थनिर्णयः तत्रानुपयुक्तत्वेऽपि वेदे उपयुक्तो भविष्यति इत्यधिकरणोपोद्घातत्वेन लोकवेदयोः पदपदार्थानां अन्यत्वानन्यत्वे विचार्येते। **कु.** १।३।१०। २७ पृ. ८०. * यस्यापि हि द्रव्यं कारकं, तेनापि शक्तिः विशेषणत्वेन अवश्यमभ्युपगन्तव्या, तद्रहितद्रव्यव्यापारासंभवात्। ततश्च **आकृत्यधिकरणात्** शक्तेरेवाभिधानं इति द्रव्यशब्देन सह सामानाधिकरण्यानुपपत्तिः। **वा.** ३।४।४।१३ पृ. ९३३. * **आकृत्यधिकरणे** 'अद्रव्यशब्दत्वात्' इति सूत्रव्याख्याने 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति' इति गोपदमाम्नातं इति वार्तिककृता उक्तम्। **बाल.** पृ. १६७. * आकृत्यधिकरणे अवघातादिक्रियाऽन्वयस्य जातिव्यक्त्योः अर्थतासंभवासंभवः उपपादितः। **कौ.** १।४।१।१ पृ. १५३. * आकृत्यधिकरणे एकार्थत्वेन अनेकार्थत्वं बाध्यते इत्युक्तम् (१।३।१० वर्णकं २)। **बाल.** पृ. १४०. * आकृत्यधिकरणे किं आकृतिः शब्दार्थ उत व्यक्तिः, उत आकृतिविशिष्टा व्यक्तिः, इति त्रयः पक्षाः चिन्त्यन्ते। सामान्यमेव अभिधेयं इति सिद्धान्तः। व्यक्तौ तु लक्षणा जातिव्यक्त्योरभेदो वा। **परिमल:** ३।४।२ ब्रसू. * आकृत्यधिकरणे भट्टैरुक्तं '**चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः। क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः॥**' इति। **शब्दकौस्तुभे** विषयनिरूपणे। * आकृत्यधिकरणे सर्वप्रातिपदिकानां सत्तावाचित्वं निरस्तम्। **सु.** पृ. ५०६. * ननु नागृहीतविशेषणान्यायस्य **आकृत्यधिकरणे** एव व्युत्पादनात् किमर्थमिदं (नाम्ना धर्मातिदेशस्य) अधिकरणम्। **सोम.** ७।२।१. * बहुद्व्येकशब्दाः संख्यावचनाः तामनभिधाय संख्येये वृत्त्यसंभव. इति आकृत्यधिकरणे स्थापितम्। **वा.** ३।४।४।१३ पृ. ९२४, * विशेषणं तावत् सर्वत्र पूर्वतर-

मभिधीयते इति स्थितं आकृत्यधिकरणे। ३।१।६।१२ पृ. ६७३, * यदपि गम्यमानस्य विशेषणसंबन्धो नास्ति अतस्तत्संबन्धदर्शनात् अभिधानमिति, तदपि **आकृत्यरुणाधिकरणयोः** उभयथाऽपि दर्शनात् निराकृतम्। ३।४।४।१३ पृ. ९४०. * जातिगुणशब्दानां गौः शुक्लः अरुणा स्त्री इति व्यक्तिद्रव्यविशेषणगुणलिङ्गान्वयिनामपि आकृत्यरुणाधिकरणयोः व्यक्तिद्रव्यवाचित्वनिरासात्। **सु.** पृ. १४६०. * सर्वत्र हि भावना तद्विशेषणातिरिक्तेऽर्थे विधिव्यापारो नास्ति इति उत्तराधिकरणे (आकृत्यधिकरणे) वक्ष्यामः। **वा.** ३।१।६।१२ पृ. ६९१. * श्रुत्यैव ग्रहप्रातिपदिकस्य व्यक्तिवाचित्वान्न मत्पक्षे जातेः संस्कार्यत्वापत्तिः इत्याशङ्क्य **आकृत्यधिकरणविरोधेन** निरस्यति। **सु.** पृ १०२९. * **आकृत्यधिकरणव्युत्पादितेन** नागृहीतविशेषणान्यायेन आद्यप्रवर्तनाऽपरपर्यायाद्यानुष्ठानात्मकाद्यप्रयोगस्यैव प्रथमशब्दमुख्यार्थतया (न प्रथमयज्ञे प्रवृञ्ज्यात् इत्यत्र) प्रथमप्रयोगाङ्गमेव प्रतिषेधः। **कु.** ३।३।१७।२८ पृ. ३३७, * **आकृत्यधिकरणव्युत्पाद्येन** 'नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते' इति न्यायेन अरुणाशब्दः केवलगुणवाचकः लक्षणया द्रव्येऽपि प्रयुज्यते। ३।१।६।१२. * **आकृत्यधिकरणोक्तं** शब्दानां जातिवाचित्वम्। **सु.** पृ. ११२४. * देवदत्तादयः सामान्यतः पचतिशब्देन यदि अभिहिताः, ततस्तैः सामानाधिकरण्यं लभ्यते लक्षणया। **आकृत्यरुणाधिकरणोक्तन्यायेन** भविष्यतीति चेत् न तण्डुलस्थेन पाकेन लक्षयितुमशक्यत्वात्। **वा.** ३।४।४।१३ पृ. ९३०. * **आकृत्यधिकरणोक्तान्वयव्यतिरेकन्यायेन** प्रीतेरेव वाच्यत्वात् न स्वर्गशब्दस्य द्रव्यवाचिता युक्ता। **रत्न.** ६।१।१।१. * वाचकप्रसङ्गात् वाच्यांशनिर्धारणाय प्रवर्तिष्यमाणा**कृत्यधिकरणोपोद्घातत्वेन** लौकिकानां वैदिकानां च शब्दानां तदर्थानां च अनन्यत्वं निर्णेतुं लोकवेदाधिकरणमारभ्यते। **कु.** १।३।१०।२७ पृ. ७९. * **आकृत्यधिकरणन्यायः** तत्र प्रवर्तते, यः शब्दः कदाचिदपि विशेषणमात्रे दृष्टप्रयोगः। तेन पाचक–नप्तृ–स्नुषा–कुलालादिशब्दाः न तत्रोदाहरणं इत्युक्तम्। बहुव्रीहेरपि विशेषणमात्रे अप्रयोगात् न आकृतिन्यायः। **बाल.** पृ. ९३. * अथ ग्रहशब्दस्य (ग्रहं संमार्ष्टि) व्यक्तिवाचित्वात् परिहार उच्येत, तत **आकृत्यधिकरणन्यायो** बाध्येत। नहि एकदेशकालवर्तिज्योतिष्टोमप्रयोगस्थग्रहव्यक्तिसंबन्धानुभवोऽस्ति। **वा.** ३।१।७।१४ पृ. ७१७, * **आकृत्यधिकरणन्यायेन** अग्निष्टोमादिशब्दः स्तोत्रेषु मुख्यः, संस्थायां लाक्षणिकः। ३।६।१६।४२ पृ १०६२–६३. * आकृत्यधिकरणन्यायेन अप्रवृत्तपूर्वस्य कर्तुः आद्यं प्रवर्तनं अभिदधानोऽपि प्रथमशब्दः प्रकृते यागसामानाधिकरण्यात् प्रथमप्रवर्तनविषययागनाम (अग्निष्टोमयागस्य नाम)। **सोम.** ३।३।१२. * आकृत्यधिकरणन्यायेन अरुणस्यैव गुणस्य अरुणादिपदवाच्यस्य द्रव्यपरिच्छेदमुखेन क्वचिदन्वयः, यथा तृतीयाऽन्ते। क्वचिच्च गुणलक्षितव्यक्तेः यथा द्वितीयाऽऽदौ। क्वचिद् गुणे द्रव्यस्य विशेषणतया, यथा घटस्यारुणः इति। **कौ.** ३।१।६।१२ पृ. १५७. * आकृत्यधिकरणन्यायेन ग्रहशब्दवाच्यतया निर्णीतस्य ग्रहत्वस्य कृत्स्नव्यक्त्युपस्थापकत्वम्। **कु.** ३।१।७।१४ पृ. २५९. * आकृत्यधिकरणन्यायेन तर्हि सहैव मतुपा बहुव्रीहावपि (अरुणया, पिङ्गाक्ष्या) संबन्धे एव शक्तिरस्तु, इति चेत्। नायं आकृत्यधिकरणस्य विषयः। तथाहि सर्वत्र तावत् अनेकार्थबोधके पदे एकत्र शक्तिः, अन्यत्राक्षेपः इति अनेकशक्तिकल्पनापरिहाराय अवश्यं अभ्युपेतव्यम्। तत्रापि च गुरुभूतेऽपि प्रधाने शक्तिः। तेन च अप्रधानानामाक्षेपः इति उत्सर्गः यत्र उभयोरपि प्राधान्यं तत्र नागृहीतविशेषणान्यायः दुर्बलस्यापि प्रधानस्याभ्यर्हितत्वात्। **कौ.** ३।१।६।१२ पृ. १५९. * आकृत्यधिकरणन्यायेन प्राचीनशब्दस्य प्राग्भागमात्रवाचित्वात् ( 'यत् किंचित्प्राचीनमग्नीषोमीयात्' इत्यत्र)। **भाट्ट.** ९।१।६. * आकृत्यधिकरणन्यायेन रथंतरादिशब्दानां गीतिविशेषमात्रं विजातीयगीतित्वमात्रं वा वाच्यम्। **के.** * आकृत्यधिकरणन्यायेन विशेषणान्यनुपादाय विशिष्टव्यापारासंभवः। **वा.** २।२।३।६ पृ. ४८५, * आकृत्यधिकरणन्यायेन स्वर्गशब्दस्य प्रीतिरभिधेया। सा साध्या पुरुषार्थत्वात्। सर्वो हि प्रीत्यै

यतते । ६।१।१।२ पृ. १३५०. * अत्र मूलानुयायिनः **आकृत्यधिकरणन्यायेन** गुणमात्रवाचित्वसिद्धौ क्वचित् द्रव्यप्रतीतिः निरूढलक्षणया तामादायैव च मतुब्लोपाद्यनुशासनानि । **कौ.** ३।१।६।१२ पृ. १५७. * अरुणया इत्यादौ आकृत्यधिकरणन्यायेन अरुणाशब्दस्य गुणमात्रवाचकत्वेऽपि 'केवलगुणाभिधानदशायामपि विशेष्यभूतात् आश्रयतो लिङ्गवचने भवतः' इति स्त्रीलिङ्गम् । **सोम.** ९।१।९. * अरुणाशब्दस्तावत् आकृत्यधिकरणन्यायेन अरुणव्यक्तिनानात्वपक्षे अरुणत्वजातिवचनः । जगतीतलवर्त्येकारुणव्यक्तिपक्षे तु गुणवचनः । **कौ.** ३।१।६।१२ पृ. १५५. * आख्यातवाच्या भावना कर्तारं विना अनुपपन्ना तमाक्षिपति, आक्षेपादेव कर्तुः प्रतिपत्तिसंभवे किमिति तद्वाचकत्वं आख्यातस्य कल्पनीयम् । न च विनिगमनाविरहः कृतिमान् हि कर्ता, एवं कृतेरेव भावनापरंपरया आकृत्यधिकरणन्यायेन आख्यातवाच्यत्वसंभवेन तद्वतः कर्तुर्वाच्यत्वं न कल्पनीयं, गौरवप्रसङ्गात् इत्युक्तमिति । अन्यत्रापि– आख्यातवाच्यः कर्ता इति वादिनोऽपि मते 'देवदत्तः पचति' इति सामानाधिकरण्यं मुख्यं, तन्मते आख्यातेन तृतीयावत् निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात् शक्तिमद्द्रव्यस्य आकृत्यधिकरणन्यायेन अनभिधानात् इत्युक्तमिति । **साहस्री.** ८५४. * ऋगादिशब्दः जातिपरः सन् आकृत्यधिकरणन्यायेन आक्षेपलब्धतदाश्रयमन्त्रपरः स्यात्, न तु वेदपरः लक्षणाप्रसङ्गात् । **कु.** ३।३।१।१. * शक्तेः शक्तिमतो वा कारकत्वे शक्तेरेव आकृत्यधिकरणन्यायेन आख्यातेष्विव कृदन्तेष्वपि वाच्यत्वात् । **सु.** पृ. १४४४. * 'सिंहो देवदत्तः' इत्यत्र अनारोप्यैव सिंहत्वं तत्सादृश्यादिप्रतीतिर्भवति । सा च किं शब्दात् अथ अर्थात् इत्यन्विच्छतां अन्वयव्यतिरेकाभ्यां आकृत्यधिकरणन्यायेन अर्थात् इति निश्चयो जायते । कथं ? '**सिंहशब्दे ह्यनुक्तेऽपि सिंहार्थात् सदृशे मतिः । जायते न त्वबुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि नः ॥**' **वा.** १।४।१२।२३ पृ. ३५८. * **स्वर्गशब्दः** श्रुतिस्मृतिपुराणादिवशात् दुःखासंभिन्नसुखभोगयोग्यदेशविशेषवाची आकृत्यधिकरणन्यायेन तादृशसुखमात्रवाची वा, न तु चन्दनादिवाची । तत्र आधुनिकप्रयोगस्य औपचारिकत्वात् । **भाट्ट.** ६।१।१ पृ. २१९. * आख्यातस्य **आकृत्यधिकरणन्यायात्** शक्तिमात्राभिधायित्वे कृदन्तवत् स्वभावतः शक्तिमद्-द्रव्यपरत्वात् । **सु.** पृ. १४४१. * **आकृत्यधिकरणन्यायस्य** स्वरूपं 'विशिष्टग्रहणं नेष्टमगृहीतविशेषणम्' इति । **वा.** ३।४।४।१३ पृ. ९१५. * आकृत्यधिकरणन्यायस्य स्वरूपं– 'सर्वसिंहव्यक्तिषु यत् सामान्यं तद्वचनः शब्दः' इति स्थितो न्यायः । **भा.** १।४।१२।२३ पृ. ३५६. * **आकृत्यभिधानस्य** द्रव्यनियमार्थत्वात् । **वा.** १।३।९।३५. * **आकृत्यभिधानपक्षे** सत्ता-वस्तु-भाव-शब्दाभिधेयं महासामान्यमेव गोसत्ताऽऽख्यं वाच्यं इति केचिन्मन्यन्ते । तत्खण्डनं 'आकृत्यधिकरणं' इति बिन्दौ द्रष्टव्यम् ।

* **आक्षेपः** अर्थापत्तिः समानवित्तिवेद्यत्वं वा निरूढलक्षणा वा । **मणि.** पृ. १२०–२१. * आक्षेपः विधायकस्य आत्मनि संचारणं प्रयुक्तिर्वा । **सु.** पृ. ८२०. * **आक्षेपे सति** अधिकरणस्य प्रयोजनं न वक्तव्यम् । **भा.** २।१।७।३२ पृ. ४३५. * **आक्षेपापरपर्याया** कल्पना । **सु.** पृ. ७८९.

* '**आख्या चैवं तदर्थत्वात्**' इत्यनेनैवाधिकरणेन ( ३।३।६।१३ ) [ ते सर्वार्थाः इति इदं अधिकरणं ६।७।१९।३९–४० ] सिद्धम् । सत्यं सिद्धं, न तु तत्र विरोधाविरोधौ विचारितौ । इह तु योग्यत्वप्रकरणविशेषात् सर्वार्थत्वप्रसक्त्या विरोधमाशङ्क्य परिहरति, उत्तरविवक्षया वा अनुवदति इत्यपुनरुक्तम् । **वा.** ६।७।१९।४० पृ. ११०५.

**आख्या चैवं तदर्थत्वात् । ३।३।६।१३ ॥**

क्रमो यथा विनियोजकं प्रमाणं एवं आख्या च आख्याऽपि विनियोजकं प्रमाणम् । तदर्थत्वात् शेषशेषिसंबन्धबोधनार्थत्वात् । समाख्या च यौगिकः शब्दः आध्वर्यवादिः । आध्वर्यवं अध्वर्योः कर्म इति समाख्यया यजुर्वेदविहितकर्मणः अध्वर्युणा संबन्धो बोध्यते । यजुर्वेदस्य आध्वर्यवं इति समाख्या इति यजुर्वेदविहितकर्मणोऽपि सा । तदर्थत्वात् कर्तृविशेषसमर्पणार्थत्वात्

इति कुतूहलम् । क्रियाकर्तृसंबन्धार्थत्वात् इति कस्तूरिरङ्गाचार्यः । के.

* **आख्यातानि** इति भावशब्दान् पर्यायशब्देनोपदिशति । **भा.** २।१।१।४, * **आख्यातेन** पुरुषस्य अनभिधानात् । ६।१।१०।४२.

* **आख्यातेन भावना उच्यते**, सा च कर्तारं विनाऽनुपपन्ना तमाक्षिपति । ननु किमिति एवं वर्ण्यते ' आक्षेपलभ्यः कर्ता ' इति, आख्यातवाच्य एव किं न स्यात्, आख्यातश्रवणे भावनाया इव कर्तुरपि प्रतिपत्तेः । **न च** भावनयैव आक्षेपसंभवे किमिति तद्वाचकत्वं कल्पनीयं इति **सांप्रतम्** । तथा सति आख्यातवाच्यकर्त्रैव भावनाऽऽक्षेपसंभवे तद्वाचकत्वमपि न स्यात् । किंच भावनायाः न केवलं कर्त्रैव संबन्धः, कारकान्तरेणापि संबन्धात् । अतः सा न झटिति कर्तारमेवाक्षिपेत् विशेषाभावात् । कर्ता तु भावनयैव संबद्धो न कारकान्तरेण, ' गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् ' इति न्यायात् ( ३।१।१२।२२ ) । अतः स झटिति तामाक्षिपेत् इति स एवाख्यातवाच्यः । भावना तु आक्षेपलभ्यैव किं न स्यात् । ( स्वीक्रियते हि सिद्धान्तिना यष्टा पक्ता इत्यादिकृदन्तेषु कर्तुः शक्यत्वं भावनायाश्चाक्षेपलभ्यत्वं, तथैवाख्याते स्वीकर्तुमुचितम् । आख्यातवद्वा कृदन्तेष्वपि भावनाया एव शक्यत्वं वक्तुमुचितम् । अथ तत्र लिङ्गसंख्याऽन्वयाय कर्तुः शक्यत्वमङ्गीक्रियते, तर्हि आख्यातेऽपि संख्याऽन्वयाय अङ्गीक्रियताम् । अथाख्यातस्थले कारकान्वयाय भावनाऽभिधानस्यावश्यकत्वात् कर्तुराक्षेपः, तर्हि ' काष्ठैः पक्वं ' इत्यादिषु कारकान्वयाय कृदन्तेष्वपि भावनाऽभिधानापत्तिः । **अथ** कृदन्तेषु कर्त्रादेः आख्यातेषु भावनायाः प्राधान्यप्रतीतेरभिधेयव्यवस्थेत्युच्यते । **तन्न** । जातिगुणशब्दजन्यप्रतीतिष्वनभिधेयानामपि व्यक्तीनां प्राधान्यानुभवात् । **किंचैवं** तृतीयाऽऽदिविभक्तीनामपि करणादिवाचकत्वं न स्यात्, तेषामपि कर्तृवदाक्षेपेण लाभसंभवात् । **किंच** यदि कर्ता न वाच्यः स्यात् कथमेकत्वं तेनान्वियात् । नहि शाब्दमशाब्देनान्वेतीति युक्तम् । अन्यथा ऊहादिलोपप्रसङ्गः (तरसमयपुरोडाशेषु पेषणकाले प्रत्यक्षोपस्थितमांसान्वितक्रियाप्रकाशनं कुर्वता मन्त्रेण प्राकृतकार्यसिद्धेर्न मांसमसीति ऊहः स्यात्, उपमितप्रकृतिविधिलक्षितप्राकृताङ्गोपकारविशिष्टां [ उपमितेन प्रकृतिविधिना लक्षितैः प्राकृतानामङ्गानां उपकारैः विशिष्टां ] भावनां विदधतश्च विकृतिविधेः नैराकाङ्क्ष्यसंभवेन नातिदेशवचःकल्पना स्यात् ) । **किंच** ' देवदत्तः पचति ' इति सामानाधिकरण्यं न स्यात् । नहि केवलं भावनावाचकस्य आख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते, एकार्थनिष्ठत्वाभावात् । कर्तृवाचकत्वे तूपपद्यते एव । ' लः कर्तरि ' इति व्याकरणस्मृतिविरोधस्तु कर्तुरनभिधेयत्वे स्पष्ट एव ( ' कर्तरि कृत् ' इत्यस्मिन् सूत्रे हि कर्तरि इति पदं कृदभिधेयतया कर्तारं प्रतिपादयति इत्यविवादं, तस्माच्च ' लः कर्मणि च भावे चाकर्मकेभ्यः ' इति सूत्रे कर्तरीत्यनुवृत्त्या निष्पद्यमानमेव ' लः कर्तरि ' इति सूत्रं कर्तुर्लकाराभिधेयत्वं बोधयति, अबोधकत्वे वा तिङामिव शतृशानचोरपि लादेशत्वाविशेषेण तत्रापि कर्त्रनभिधानमापद्येत । ततश्च ' जञ्जभ्यमानोऽनुब्रूयात् ' इति विहितजपस्य न क्रतुयुक्तपुरुषधर्मत्वं स्यात् ) । **किंच** कर्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगः स्यात् । तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता, आख्यातेन च कर्ता नाभिहित इति कर्तृवाचिनी तृतीया स्यादेव । कर्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति, तस्याः अनभिहिताधिकारस्थत्वात् । देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव, प्रथमाया अभिहितकारकविभक्तित्वात्, ( **अथो**च्येत 'लः कर्तरि' इत्यस्य तृतीयाऽऽदिविधायकसूत्रस्य च द्व्येकयोरित्याद्येकवाक्यत्वेन कर्त्रादिसंख्यायामेकवचनादि तृतीयैकवचनादि च विधीयते, ततश्चाधिकारप्राप्तमनभिहितत्वं संख्यायामन्वेति विशेषणानां प्रधानगामित्वात् । अतः पचतीत्यनेन कर्तुरनभिधानेऽपि कर्तृसंख्याया अभिहितत्वान्न देवदत्तेनेति तद्वाचकविभक्तिप्रसक्तिरिति । **तन्न** । लकारस्यैकवचनाद्यनात्मकत्वेन ' लः ' इत्यस्य द्विवचनैकवचने इत्यनेन सामानाधिकरण्यान्वयायोगात् । ङसन्तेन लः इत्यनेन निरनुबन्धलकारसामान्यग्रहणमङ्गीकृत्य ' वर्तमाने लट् ' इत्यादिविहितस्य लस्यादेशभूते द्विव-

चनैकवचने इत्यन्वयेऽपि द्विवचनादिसंज्ञावतो लादेशतिवादेरेव अर्थकथनापत्तेः, संज्ञारहितस्य शानजादेरर्थो न कथितः स्यात्, स्याच्चादेशपदाध्याहारनिमित्तं गौरवम्। लकारवच्च तृतीयाऽऽदेरपि कर्तृकरणाद्यनभिधायित्वे सति ऐन्द्र्येत्यादौ श्रुतित्वासंभवः। अतः असति लादिविधौ द्व्येकयोरित्यनेनैकवाक्यत्वे कर्तुराख्यातानभिधेयत्ववादिना न कर्तृगतसंख्याया आख्याताभिहितत्वं नियन्तुं शक्यं, यत्किंचित् कारकं परिच्छिन्दत्या अपि क्रियाऽङ्गत्वोपपत्तेः। नापि संख्यायामनभिहितत्वान्वयित्वं, प्राधान्येनोपस्थिते कर्त्रादावेव तदन्वयात्। तेन 'देवदत्तेन पचति' इति प्रयोगापत्तिः। भवतु वा संख्याविशेषणमनभिहितत्वं, तथापि संख्यायाः कृत्तद्धितसमासाभिहितत्वमप्रसक्तमिति तिङनभिहितत्वमेव विशेषणं स्यात्। ततश्च 'देवदत्तेन पक्ता' इति प्रयोगापत्तिः 'चैत्रो मैत्रश्च गच्छतः' इत्यत्र च तिङाद्यनभिहितायां कर्त्रैकत्वसङ्ख्यायां चैत्रेण मैत्रेणेति तृतीयाऽऽपत्तिरिति। 'को देवदत्तो, यः शुक्लवासाः' इत्यादौ विनैव क्रियां प्रथमान्तयोर्नैराकाङ्क्ष्यान्न प्रथमायाः कारकविभक्तित्वमित्यस्वरसादाह— प्रातिपदिकेति। यद्यपि 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति पाणिनिनाऽनेकार्थेषु प्रथमा विहिता, तथापि अलिङ्गनियतलिङ्गेभ्यः उच्चैर्ज्ञानादिशब्देभ्यः परस्याः प्रथमायाः प्रातिपदिकार्थमात्रवाचित्वोपगमात्। प्रकृतदेवदत्तपदस्य च नियतलिङ्गत्वात् तदभिप्रायेण तन्मात्रवाचित्वोपन्यासः इति बोध्यम्।) प्रातिपदिकार्थमात्रवाचित्वाद्वा। न च तदा प्रातिपदिकेनैव अर्थस्योक्तत्वात् प्रथमावैयर्थ्यम्। लिङ्गसंख्याप्रतिपत्त्यर्थं तस्यावश्यकत्वात् (लिङ्गं च संख्या च प्रतिप्रत्तिश्चेति विग्रहः। 'सिंहोऽस्ति' इत्यादौ लिङ्गमात्रार्था, 'घटौ' इत्यादौ संख्यामात्रार्था, 'द्रोणो व्रीहिः' इत्यादौ च द्रोणपदोत्तरा परिमाणाभिधानेन व्रीह्यन्वयप्रतिपत्त्यर्था। भवति हि प्रातिपदिकार्थाभेदान्वयिनो विभक्त्यर्थपरिमाणसामान्यस्य परिच्छेदकत्वेन व्रीह्यन्वयप्रतिपत्तिः न तु प्रातिपदिकार्थस्यैव, साक्षात् नामार्थयोरभेदेनैव अन्वयात्। प्रतिपत्तिपदेन पदार्थान्तरान्वयप्रतिपत्तिरुच्यते)। केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च। ततश्च यदि कर्ता न वाच्यः स्यात् 'देवदत्तेन पचति' इति प्रयोगः स्यात्। तस्मादाख्यातवाच्यः कर्ता इति सिद्धम्। इति **पूर्वपक्षसंक्षेपः।**

(नन्वेवमपि क्रियाऽऽश्रयस्य कर्तृत्वात् तत्साध्यस्य कर्मत्वात् आकृतिन्यायेन क्रियाया एव वाच्यत्वं युक्तम्। कर्तृकर्मोभयवाचिनश्चाख्यातस्य कथं व्यवस्थया उभयबोधकत्वमिति चेत्। शृणु। क्रिया तावत् धातुनैवाभिधीयते, 'भूवादयो धातवः' इति सूत्रेण भूप्रभृतयो वा सदृशा इति लक्षणपरेण क्रियावाचित्वे सति गणपठितत्वस्य धातुलक्षणतयोक्तेः, 'किं कृतं भुक्तं' इत्यादि प्रयोगाच्च, स्वार्थव्यापारानधिकरणवृत्तिफलवाचित्वेन तद्वृत्तिफलवाचित्वेन, धातुषु सकर्मकत्वाकर्मकत्वव्यवहारोपपत्तेश्च। अत एव फलमपि धातुवाच्यम्। आख्यातेन च निष्कृष्टशक्त्यात्मकमाश्रयत्वमात्रमभिधीयते। तथा द्वितीयातृतीयाभ्याम्। आख्यातार्थे च प्रथमाऽन्तपदार्थस्य अभेदेन विशेषणत्वं, आख्यातेन च शाबादिगृहीततात्पर्यकेण बोधिताश्रयत्वस्य धात्वर्थव्यापारं प्रति विशेषणत्वे सति फलं प्रति द्वितीयाऽर्थस्य विशेषणत्वेनान्वयः। यगादिगृहीततात्पर्यकेण तु बोधितस्य फलं प्रति अन्वये व्यापारं प्रति तृतीयाऽर्थस्यान्वयः। ततश्च 'देवदत्तः ओदनं पचति' 'देवदत्तेन ओदनः पच्यते' इत्युभयत्रापि ओदनाश्रयकविक्लित्यनुकूलदेवदत्ताश्रयिका भावना इति बोधः। व्यापाराश्रयस्य च कर्तृत्वात् फलाश्रयस्य कर्मत्वात्। तत्तद्विकरणवशेन व्यापाराश्रयं फलाश्रयं च बोधयतोः 'पचति पच्यते' इत्यनयोर्भवति व्यवस्थया कर्तृकर्मबोधकत्वम्। संभवति चैवं सति समानाभिधानश्रुत्या संख्याऽन्वयव्यवस्थाऽपि। विशिष्टाभिधानाङ्गीकृतेश्च नाकृतिन्यायावतारः। नापि कृतित्वस्य शक्यताऽवच्छेदकत्वात् कृतीनां शक्यताऽवच्छेदकत्वगौरवोपन्यासावसरः। **न च** पक्त्रेत्यादिवत् पचतीत्यादावपि प्रत्ययार्थकर्तृविशेष्यक एव बोध आश्रीयतामिति **वाच्यम्।** 'भावप्रधानमाख्यातं' इति विशेषस्मरणात्। (निरुक्त १।१) **ननु** भावः पाकयागादिः, तदर्था क्रिया आख्यातेनोच्यते, इत्युक्तस्मृतेरर्थः। उक्तं हि निरुक्तव्याख्याने (दुर्ग. पृ. १३) 'क्रियावाचकमपि सद् भावार्थत्वात् क्रियाया भावप्रधानमुच्यते' इति। अतः कथमेतत् स्मृति-

वशेन प्रकृत्यर्थक्रियाया विशेष्यतारूपप्राधान्यसिद्धिरिति **चेत्, न** । आख्यातार्थक्रियावादिभिरपि 'यजेत स्वर्गकामः' 'वेतनकामः पचेत्' इत्यादौ क्रियाया भावार्थत्वानङ्गीकारात् । अमुमेव वा अस्वरसं मनसि निधाय व्याख्याऽन्तरमकारि व्याख्यातृभिः ( दुर्ग. पृ. १३ ) 'एके पुनर्भावप्रधानमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते । प्रकृत्यर्थविशेषणं हि प्रत्ययार्थादयः । भावः कर्म क्रिया धात्वर्थ इत्यनर्थान्तरम् । स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम्' इति । यच्च व्याख्याऽन्तरं ( दुर्ग. पृ. १६ ) 'अपरे पुनः भावकालकारकसंख्याश्चत्वार एवार्था आख्यातस्य, तेषां भावप्रधानता भवति, अतो भावप्रधानमाख्यातम्' इति । तत्रापि कर्तारं प्रति भावना प्राधान्येन भासते इति निर्विवादम् । तद्युक्तं क्रियारूपाया भावनाया धात्वर्थभूतायाः आख्यातार्थं प्रति प्राधान्यम् । किंच आख्यातार्थस्य कर्तुः क्रियां प्रति प्राधान्ये तदभिन्नस्य प्रथमाऽन्तार्थस्य न क्रियां प्रति गुणभावः स्यात् । **भवत्वेवं**, स्वीकुर्वन्त्येव हि **नैयायिका** आख्यातार्थक्रियाप्रकारकप्रथमाऽन्तार्थविशेष्यकं बोधमिति **चेत्, न** । 'तद्यत्रोभे भावप्रधाने भवतः' ( निरुक्त १।१ ) इति वचोविरोधात् । 'पश्य मृगो धावति' इत्यादौ धावनक्रियाविशिष्टस्य मृगस्य पश्येतिक्रियायां कर्मत्वापत्तौ मृगमिति द्वितीयां विना महाभाष्योक्ताया आख्यातद्वयैकवाक्यताया असंभवापत्तेश्च । नामार्थानां कारकद्वारैव क्रियाऽन्वयात् । संभवति तु क्रियायाः कारकव्यवधानमन्तरेणापि क्रियाऽन्वयः, भुक्त्वा व्रजतीति दर्शनात् । तस्मादपि क्रियायां प्राधान्यम् । एवं च कर्तुराख्यातवाच्यत्वे प्रयाजादीनां गुणकर्मत्वापत्तिर्निरस्ता । स्वगुणत्वेन कर्तारं स्वीकुर्वत्याः क्रियायाः तं प्रति गुणत्वासंभवात् । अस्तु वा गुणकर्मत्वं, न तावता किं चिदनिष्टम् ) ।

( सिद्धान्तमाह– ) अत्राहुः, स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते, 'अनन्यलभ्यः शब्दार्थः' इति न्यायात् । अत एव न गङ्गापदस्य तीरमर्थः, लक्षणयैव प्रतिपत्तिसंभवात् । अत एव च न वाक्यार्थे शक्तिः । एवं चाख्यातवाच्यभावना कर्तारं विनाऽनुपपन्ना तमाक्षिपतीत्याक्षेपादेव कर्तुः प्रतिपत्तिसंभवे किमिति तद्वाचकत्वं आख्यातस्य कल्पनीयम् । न च विनिगमनाविरहः । कृतिमान् हि कर्ता ( त्वया आख्यातवाच्यत्वेन स्वीकार्यः ) एवं च कृतेरेव भावनाऽपरपर्यायायाः आकृत्यधिकरणन्यायेन आख्यातवाच्यत्वसंभवे, न तद्वतः कर्तुः वाच्यत्वं कल्पनीयं गौरवप्रसङ्गात् । ( 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन' इति पूर्वाचार्यस्मृतौ प्रकृत्यर्थप्राधान्यव्यवच्छेदप्रतीतेः प्रत्ययार्थं प्रति तस्य गुणत्वमेवेति प्रतीयते । अभ्युपगतं चैतत् प्रामाणिकत्वेन 'प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' ( प्रत्ययार्थः प्रधानं इत्येवंरूपं वचनमपि अशिष्यम् । कुतः ? अर्थस्य लोकत एव सिद्धेः । सिकौ. ) इति सूत्रे ( १।२।५६ ) निर्दिष्टस्मृत्यर्थस्य अशिष्यत्वं वदता पाणिनिना इति । एतद्वशेन च संभवत्परस्पराक्षेपयोः कस्य प्रत्ययार्थत्वमिति संदेहे प्रकृत्यर्थनिरूपितप्राधान्यभाज इत्यपि सिध्यति नियमः । **न चैतस्य** तिङन्तेषु वचनोपग्रहाद्यंशज्ञाप्यार्थोत्तरविषयत्वेन अन्यथासिद्धिः **शङ्क्या** । पाकनिरूपितप्राधान्यस्य तेषु कदा चिदप्यननुभवात् । ततश्च पचति पक्तेत्यत्र प्रकृत्यर्थतया निर्णीतपाकं प्रति कृतितदाश्रययोः प्राधान्यं स्वीकुर्वता तयोरेव प्रत्ययार्थत्वं स्वीकार्यं नाश्रयकृत्योरपि, अभिधाऽन्तरकल्पने अतिगौरवात् । प्रत्ययार्थत्वमेव च तयोः स्वीकार्यं न तु कृतेः प्रकृत्यर्थत्वं, क्व चित्प्रकृत्यर्थप्राधान्यं क्व चित् प्रत्ययार्थप्राधान्यमिति व्युत्पत्तिभेदकल्पने स्मृतिसंकोचकल्पने गौरवात् ) । **न च** भावना कारकान्तरेणापि संबद्धा, तदुज्झित्वा न झटिति कर्तारमाक्षिपतीति **वाच्यम्** । सा हि यथा नियमेन कर्त्रा संबद्धा, न तथा करणादिकारकान्तरेण, तिष्ठतीत्यादिषु तया तदनाक्षेपात् । अतः प्रथमं सा कर्तारमेवाक्षिपति न कारकान्तरम् । अत एव च आख्याताभिहिता संख्या न कारकान्तरेण संबध्यते, तस्य प्रथममनुपस्थितेः । अत एव तृतीयाऽऽदिविभक्तीनां करणादिवाचित्वं, भावनायास्तैः सह नियतसंबन्धाभावेन तया तेषां नियमेन अनाक्षेपात् ।

[ **नन्वेवं** पच्यते इत्यादावपि भावनाऽऽक्षिप्तकर्त्रा संख्याऽन्वयापत्तिः, तन्निवृत्त्यै कर्माभिधानाङ्गीकरणे अपसिद्धान्तः, न स्याच्च देवदत्तेनेति तृतीयया कर्त्रभिधानमिति **चेत्, न** । यतो भवद्भिः शब्दशक्तिवैचित्र्यमहिम्ना यथा कर्तृकर्मणोरभिधानव्यवस्था आश्रीयते तुल्येऽप्याख्यातत्वे, तथा अस्माभिस्तद्वशेनैव कर्तृकर्मणोर्लक्षणाव्यवस्थाऽपि शक्यते एवाश्रयितुम् । तुल्यं च विकरणभेदेन शक्तिविशेषावधारणम् । आश्रीयते च शुक्लरूपशब्दयोर्गुणवाचित्वाविशेषेऽपि शक्तिवशेनैव द्रव्यलक्षणायास्तदभावस्य च व्यवस्था । यथाऽऽहुः '**निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत् । क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव त्वशक्तितः** ॥ ' ( श्लोकं व्याचष्टे– ) इह केषु चिदर्थेषु अभिधानवदेव लक्षणाशक्तिरपि अनादिकालप्रवृत्तत्वेन निरूढा यथा शुक्लादिषु । केषु चित्तु क्रियते यथा ' रथाङ्गनामा चक्रवाकः ' इति । केषु चित् पुनः कर्तुमपि न शक्यते यथा शब्दस्पर्शरूपरसगन्धेषु । कथं पुनः इह अविशिष्टे संबन्धे सति न लक्षणेति ? तत्रोत्तरं अभिधानवत् इति । यथा भवतः समाने गुणशब्दत्वे शुक्लादीनां गुणोपसर्जनद्रव्यवचनत्वं न रूपादीनां, एवं मम लक्षणेति ( **वा.** ३।१।६।१२ **पृ.** ६८३ ) । **नन्वेवं** शक्त्यन्तरस्वीकारे परमतान्न विशेष **इति चेत्** । परिहृतमेतत् **भवदेवेन** अभिधानशक्तेरेव अभिधेयाविनाभावोपस्थितार्थतात्पर्यरूपाया लक्षणाशक्तिशब्दार्थत्वादिति । लक्षणाव्यवस्थातश्च संख्याऽन्वयव्यवस्थासिद्धिः । यथाऽऽहुः ' **यथैव क चिदुक्त्वाऽपि कर्मान्यत्र न वक्ष्यति । तथैव तस्य संख्याऽपि शब्दाशक्तेर्व्यवस्थिता** ॥ ' ( श्लोकं व्याचष्टे– ) यो हि मन्यते कर्मणः क चित् तिङभिहितसंख्याऽर्हत्वं दृष्टं, अतोऽन्यत्रापि तेन भवितव्यमिति, तस्य क चित् तिङन्ताभिधेयत्वदर्शनात् सर्वत्र अभिधेयत्वमपि स्यात् । अथ तत् कथंचित् व्यवतिष्ठते, ततः संख्याऽपि तथैव व्यवस्थास्यते इति अचोद्यमेतत् । (**वा.** ३।४।४।१३ **पृ.** ९१५) इति । यद्वा उक्तन्यायेन आख्यातजन्यप्रतीतिविशेष्यव्यापारान्वये संख्याऽन्वयनियमाङ्गीकरणात् तत्सिद्धिः । **के चित्तु** वत्सशोणशब्दाभ्यां गवाश्वौ अनभिधाय तद्गतवयोविशेषरूपविशेषाभिधानवत् कर्तृकर्मप्रत्ययाभ्यां तद्गतसंख्याऽभिधानमङ्गीकृत्य तन्महिम्नैव कर्तृकर्मप्रतीतिव्यवस्थामाहुः । **तन्न** । अनुभूयेते हि गवाश्वगतौ वत्सत्वरक्तत्वावान्तरभेदौ प्रत्यक्षेणेति संभवतः तदभिधेयौ, नानुभूयते च संख्याऽवान्तरभेदः कर्तृकर्मणोः । यथाहुः ' **न शोणत्वादिवत् संख्या जातिभेदेषु भिद्यते** । ' इति ( वा. ३।४।४।१३ पृ. ९२० ) । न चाख्यातेन भावनाऽभिधाने यज्यादीनां क्रियाऽनभिधायित्वात् उक्तधातुलक्षणासंभवः, धात्वर्थस्य कारकान्वयित्वात्मकक्रियात्वाभावेऽपि व्यापारत्वात्मकक्रियात्वसत्त्वेन तदुपपत्तेः । स्वीकुर्मो वयं व्यापारफलोभयवाचित्वं धातूनाम् । तदाश्रययोस्तु भावनाऽऽक्षेपलभ्यत्वेन न स्वीकुर्मः आख्यातवाच्यताम् । इत्थं च ओदनं पचतीत्यत्र धात्वर्थव्यापारविशिष्टभावनाऽऽश्रयलक्षकत्वं आख्यातस्य, धात्वर्थफलाश्रयवाचकत्वं च द्वितीयायाः । पच्यते इत्यत्र तु फलाश्रयलक्षकत्वमाख्यातस्य, तादृग्व्यापाराश्रयवाचकत्वं च समभिव्याहृताया देवदत्तेनेति तृतीयायाः इति भेदः । फलस्य च ' गच्छति, संयौति, अवहन्ति, करोति ' इत्यादौ तत्तत्संयोगोत्पत्त्यादिभेदेन अभिधानात् तदाश्रयस्य प्राप्योत्पाद्यादिव्यपदेशः । ईप्सितानीप्सितभेदस्तु द्वितीयाऽऽदिशक्तिगम्यो मानान्तरगम्यो वेत्यन्यदेतत् । सत्यपि धात्वर्थफलाश्रयवाचित्वे द्वितीयायाः द्वितीयाऽर्थस्य न धात्वर्थेऽन्वयः, किन्तु आख्यातार्थशरीरान्तर्गतभवनाऽऽख्यप्रयोज्यव्यापारे । एकभावनाऽन्वयिनोः परं कर्मकरणीभूतयोः ओदनपाकयोः पार्ष्ठिकान्वयदशायां ओदनादेर्धात्वर्थफलाश्रयत्वप्रतिपत्तेः तदाश्रयत्ववाचित्वं ओदनोत्तरद्वितीयायां व्यवह्रियते । इत्थं हि पाकान्वयः फूत्करणादिव्यापारेण विक्लित्तिविशिष्टात्मना ओदनो भवतीति । संभवति च तादृशपचननिरूपिताश्रयताया ओदननिष्ठाया विक्लित्तिनिरूपितत्वम् । एतेन पच्यते इत्यत्र फलाश्रयलक्षकत्वे सत्यपि न लक्षिताश्रयस्य फलेऽन्वय इति ध्येयम् । संगच्छते चैवं सति कारकाणां क्रियाऽन्वयनियमः । यत्र तु अधात्वर्थफलशालिनो द्वितीयाऽन्तेन निर्देशः यथा ' अग्निं चिनुते ' इति, तत्र न पार्ष्ठिकान्वयदशायामपि फलान्वयित्वं, किंतु फलाश्रयस्थलद्वारेण भाव्यत्वम् ।

सत्यपि तादृशफलशालिनि द्वितीयाऽऽदिनिर्दिष्टे यत्र कामशब्दादिना भावनाभाव्यावगतिः, तत्र तु लक्षणया द्वितीयाऽर्थस्य धात्वर्थे अन्वयः । अत एव ईदृशस्थले मत्वर्थलक्षणाव्यवहारः प्राचाम् ] । आख्यातश्रवणात् प्रागपि तृतीयाऽऽदिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च । **न च** शाब्दी संख्या कथमशाब्देन कर्त्रा अन्वेतीति **वाच्यम्** । कर्तुर्लक्षणाऽङ्गीकारात् । यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति , एवं लक्षितः कर्ता एकत्वेनान्वेष्यति । अत एव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते , कर्तुर्लक्षणाऽङ्गीकारात् । **न च** मुख्ये संभवति किमिति लाक्षणिकत्वं स्वीकार्यमिति **वाच्यम्** । अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात् । अन्यथा ' सिंहो देवदत्तः' इति सामानाधिकरण्यं मुख्यं स्यात् । किंच आख्यातवाच्यः कर्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम् । तन्मते आख्यातेन तृतीयावत् निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्, शक्तिमद्द्रव्यस्य आकृत्यधिकरणन्यायेन अनभिधानात् , देवदत्तशब्देन च द्रव्यमात्राभिधानात् । अतश्च भिन्नार्थनिष्ठत्वात् तन्मतेऽपि न मुख्यं सामानाधिकरण्यं , किं तु लाक्षणिकमेवेति न कश्चिद्विशेषः । **न च** ' लः कर्तरि ' इति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्तेति **वाच्यम्** । नहि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः, तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात् । भवतु वा स्मृतिगम्यः, तथापि नेयं स्मृतिः कर्तुराख्यातवाच्यत्वे प्रमाणं , किंतु कर्तुरेकत्वे एकवचनात्मको लकारः, द्वित्वे द्विवचनात्मकः, बहुत्वे बहुवचनात्मकः इत्यस्मिन् अर्थे प्रमाणं , ' द्व्येकयोर्द्विवचनैकवचने ' ' बहुषु बहुवचनम् ' इत्यनेन अस्याः स्मृतेरेकवाक्यत्वात् ।

[ अत्र हि द्व्येकादिशब्दा भावप्रधानतया संख्यापराः, अन्यथा द्व्येकेष्वित्यापत्तेः । ' बहुः समुद्रः, बहुः ओदनः' इत्यादौ प्रसिद्धवैपुल्यमहत्त्वात्मकबहुत्वपरिहारेण द्वित्वाधिकसंख्याऽऽत्मकबहुत्वचनप्राप्त्यै परं बहुत्वे इत्यस्य स्थाने बहुष्विति निर्दिदिक्षुः तदैकरूप्याय द्व्येकयोरित्युक्तवान् सूत्रकारः । कस्य द्वित्वादौ इत्यपेक्षायां च लकारसूत्रैकवाक्यतया उक्तविषया कल्पनात् भवति लकारसूत्रं संख्यावाच्यत्वग्राहकम् । नेदं पदैकवाक्यत्वं इति भ्रमितव्यं , एकवाक्यत्वोपन्यासावसरे वार्तिककृद्भिः (१।४।४। १३ पृ. ९२३ ) ' यावज्जीवमग्निहोत्रं जुहोति ' इति उत्सर्गापवादयोः वाक्यैकवाक्यताया दृष्टान्ततयोपन्यासात् । तद्व्याख्यानं च कुर्वता **न्यायसुधाकारेण** ( सु. पृ. १४१९ ) प्रकृते वाक्यैकवाक्यताया एव स्पष्टीकरणात् । एतैरपि केवललकारसूत्रं संख्यावाच्यत्वे मानमिति प्रतिज्ञाकरणात् । अतो लकारसूत्रे कर्त्रादिपदोत्तरविभक्त्या कर्त्रादिगतसंख्यासामान्यं लक्षयित्वा कर्त्रादौ तत्संख्यायां च लकारो विधीयते । तिबादीनां शत्रादीनां च मध्ये कस्य लादेशस्य का संख्या वाच्येत्यपेक्षायां साकाङ्क्षद्व्येकादिसूत्रेण वाक्यैकवाक्यत्वं कल्प्यते , तेन च लकारे संख्यावाचित्वानुशासनं एकवचनादिसंज्ञायोगितिबादिविषयमिति निर्णीते , कर्त्रादिवाचित्वानुशासनांशस्यापि तद्विषयत्वे **गौरवात्** तादृशसंज्ञाहीनशत्रादिविषयत्वं तस्य भवति । ततश्च भावकर्मणोरपि शत्रादिर्लभ्यते इति क्रीयमाण इत्यादिप्रयोगोपपत्तिः । अन्यथा लकारसूत्रस्य संख्यावाचित्वमात्रपरत्वे कर्तरि शत्रादिप्राप्तिसंभवेऽपि न भावकर्मणोस्तत्प्राप्तिः स्यात् । द्योतितं च लकारसूत्रस्य कर्तुराख्यातवाच्यत्वे प्रामाण्यप्रतिषेधोक्त्या शत्रादिवाच्यत्वे प्रामाण्यं तथापीतिग्रन्थे । **न** चैवमपि स्थानिनो वाचकत्वमते कथमेकस्मिन् लकारे संख्यावाचित्वकर्तृवाचित्वव्यवस्था स्यादिति **शङ्क्यम्** । पदोपस्थापितपदार्थेभ्यः एव शाब्दधीरिति नियमवत् आदेशविशेषेण स्थानितया उपस्थापितलकारादेः एव अर्थविशेषधीरिति नियमसंभवात् । अत एव तिबादिस्मारितलकारस्य एकत्वादिवाचित्वेन एकवचनादिव्यपदेशसंभवात् लकारस्य तत्तद्वचनात्मकत्वनिर्देशः संगच्छते । शक्यते च वक्तुं ' तान्येकवचनद्विवचनबहुवचनान्येकशः ' इति सूत्रं आदेशेषु संज्ञाः अन्वर्थाः विदधत् तत्स्थानिष्वपि ता एव आक्षिपतीति ]। **यत्तूक्तं**, कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्गः इति । **तन्न** । तृतीया हि कर्तुः प्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा ? । तत्र कर्ता तु भावनाऽऽक्षेपादेव लभ्यते इति न तत्र तृतीयाऽपेक्षा ।

तत्संख्या तु आख्यातेनैव प्रतीयते इति न तत्राप्यपेक्षा । यथा आहुः '**संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते । उभयं चात्र तत् सिद्धं भावनातिङ्विभक्तितः** ॥' 'पचति देवदत्तः' इत्यत्र कर्तृत्वं तावत् भावनयैव बोधितम् । याऽपि संख्या, साऽपि तिङा । ( **वा.** ३।४।४।१३ पृ. ९३५ ) इति । यत्र तु नाख्यातेन तद्गता संख्योच्यते, तत्र भवत्येव तृतीया यथा 'देवदत्तेन ओदनः पच्यते' इति । तस्मान्न कर्तुरनभिधाने किं चित् दूषणम् ।

[ यदि च कर्ता आख्यातवाच्यः स्यात्, समिदादिषु संनिपातित्वलिप्सया कर्त्रर्थत्वेन विधिः स्यात् । भवत्विति चेत् 'स्थाणौ स्थाण्वाहुतिं जुहोति' इति विहिता आहुतिः कर्तुः संस्कारिकैव स्यात्, न यूपस्य । यूपार्थत्वं हि तस्याः श्रुतिबलेनोक्तं दशमे ( १०।१।६।१० )। नापि दृष्टार्थत्वलिप्सया, किंतु संनिपातित्वलिप्सयोक्तम् । वक्ष्यति चैतत् । तुल्यं च संनिपातित्वं यूपार्थत्वकर्त्रर्थत्वयोः । इयांस्तु कर्तरि यूपाद्विशेषो, यदयं जुहोतीत्यभिहितः क्रियया च साक्षात्संबध्यः । **न चास्तु** यूपार्थत्वसिद्धान्तभङ्ग इति **शङ्क्यम्** । 'अतस्त्वं देव वनस्पते शतवल्शो विरोह' इति आहुतिमन्त्रे देवादिपदाभिहितयूपगतातिशयप्रकाशनानुपपत्तेः । न च तव तद्वशेनैव यूपार्थत्वसिद्धिः, न्यायविरुद्धमन्त्रलिङ्गस्य अकिंचित्करत्वात् । **किंच** उपांशुयाजस्य वाक्यान्तरेण यागान्तरसाधारण्येन सिध्यतः फलसंबन्धात् 'अन्तरा यजति' इति स्वपदोपस्थितकर्तृसंबन्धः शीघ्रं भवति इति समिदादेस्तत्कर्त्रर्थत्वमेव स्यात् । अवगतं च 'यजमानः आज्यमवेक्षते' इति कर्तुः प्रयोजनवत्त्वम् । आग्नेयादिवाक्येषु तु संस्कारार्हकर्त्रभिधाय्याख्याताभावात् तेषां प्रधानवाक्येन फलसंबन्धः । भवत्वेवमिति चेत्, समिदादिवदुपांशुयाजस्य वैश्वदेवपर्वण्यतिदेशे सति त्रिंशदाहुतिश्रुत्यनुपपत्तेः, 'हृदयमुपांशुयाजः' इति प्रधानप्रायपाठानुपपत्तेश्च । **किंच** स्तोत्रशस्त्रादीनामपि यजमानसंस्कारकत्वे यजमानेन कर्तव्यता आपद्येत, तत्र औद्गात्रसमाख्याबाधः स्यात् । सत्रे च प्रतियजमानं शस्त्रावृत्तौ नाध्वर्योः प्रतिगरावसरः, इति तद्बाधः स्यात् । **न च** सिद्धान्तेऽपि कर्तृलक्षणया आक्षेपेण चोपस्थित्यवश्यंभावात् प्रयाजादेः संनिपातित्वप्रसक्त्या उक्तदोषतादवस्थ्यमिति **शङ्काऽऽस्पदम्** । अङ्गभावनानां प्रधानकर्त्रैव नैराकाङ्क्ष्यसंभवेन प्रधानकर्तृसंख्याया एव चाङ्गवाक्येष्वनुवाद्यत्वेन तत्र कर्तुराक्षेपलक्षणयोरनभ्युपगमादित्येवं सुधीभिरूह्यम् ] इत्यलमतिविस्तरेण । **मीन्या. भाट्टालंकारश्च** पृ. १३३–१५१.

* आख्यातेन शुद्धेन निमित्तप्रत्ययानुत्पादः । **वा.** ३।४।१३।२५ पृ. ९७२. * आख्यातेन हि योऽर्थः कर्तव्य इत्युच्यते, तत्र एतदुपनिबद्धं 'यथा शक्यते तथा' इति । **भा.** ६।५।१९।५४, * 'पूर्वापरीभूतं भावं **आख्यातेन** आचष्टे । व्रजति पचति इत्युपक्रमप्रभृति अपवर्गपर्यन्तम्' इति शास्त्रकारा आहुः ( निरुक्त १।१ ) । १।१।५।५ पृ. ४७, * **आख्यातादेव** पुरुषमात्रं गम्यते । ११।१।१।१ पृ. २०१९. * **आख्यातेभ्यः** अपूर्वभावना गम्यते । तत्र च धात्वर्थस्य करणत्वप्रतिपत्तिः प्रत्यासत्तेः । ... '**सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति । सामानाधिकरण्येन करोत्यर्थोऽवगम्यते** ॥' ... लब्धात्मककर्तृव्यापारवचनानि करोत्यर्थवन्ति आख्यातानि । ... यदा अस्य ( करोतेः ) उत्पादनाऽभिधायित्वं, तदैव विशिष्टाख्यातसामानाधिकरण्यं दृष्टम् । **वा.** २।१।१।१ पृ. ३७६–३७७, * **आख्यातस्य** अन्वयव्यतिरेकाभ्यां भावनापरत्वं ... '**यागदानाद्यनुस्यूते भावनात्माऽवगम्यते । नित्यमाख्यातशब्देभ्यस्तस्माद्भावार्थतेष्यते** ॥' यावानेव हि अनन्यलभ्योऽर्थः शब्दाद्गम्यते स सर्वः शब्दार्थः । सर्वत्र च आख्याते धात्वर्थश्च तदनुरक्ता च भावना विज्ञायते । २।१।१।१ पृ. ३७४–३७५. * आख्यातस्य अर्थमुपदिशन्ति 'उपक्रमप्रभृति अपवर्गपर्यन्तमाह' इति । उपक्रमादारभ्य यावत् परिसमाप्तिः इत्येतावान् व्यापारविशेषस्तस्यार्थः, न यथा पाकः त्यागः इति । तत्र हि पाकसत्तामात्रं निर्दिश्यते, नारभ्य परिसमापयितव्यमिति । एवं च आख्यातार्थे लौकिका अपि प्रतिपद्यन्ते । **भा.** ६।२।३।१३. * आख्यातस्य कल्प्यस्य कल्पकपारतन्त्र्येण भेदाभेदयो-

रव्यापारात् ज्योतिरादौ च 'एतेन सहस्रदक्षिणेन यजेत' इत्यादिगुणान्वयव्यापारेण 'एतेन ऋद्धिकामो यजेत' इत्यादिफलान्वयव्यापारेण च श्रुतस्यापि आख्यातस्य भेदाभेदयोरव्यापारात् तदन्वितस्यापि नाम्नोऽपि भेदकत्वं अविरुद्धम् । **सु.** पृ. ७१२. * आख्यातस्य नाक्षेपलभ्ये कर्तृत्वादौ शक्तिः किंतु आक्षेपकक्लृप्तावेव । **मणि.** पृ. ११४. * आख्यातस्य पूर्वकर्मविषयत्वं विना नाम्नः पूर्वकर्मवाचित्वानवधारणात् । **सु.** पृ ९५३. * आख्यातस्य प्रधानकर्मविधायकत्वं, गुणविधायकत्वं, अभिधायकत्वं चेति । **वि.** २।१।६. * आख्यातस्य भावप्रधानत्वात् । **वा.** २।२।१।१ पृ. ४६३. * आख्यातस्य भेदकत्वे तत्पारतन्त्र्यात् गुणस्य भेदकत्वं नास्ति । **सु.** पृ. ७१२. * आख्यातस्य यत्नो वाच्यः पचति इत्यस्य पाकं करोति इति यत्नार्थककरोतिना विवरणात् इति नैयायिकाः । **मणि.** पृ. १०६. * आख्यातस्य वाक्यतोद्घोषः 'पदान्तरस्य पारार्थ्यादाख्यातं योऽपि मन्यते । वाक्यं प्राधान्ययोगेन वाक्यार्थं चापि भावनाम् ॥' इति । **सु.** पृ. ११८६, * आख्यातस्य श्रौतेनैव भावनाऽऽख्येन अर्थेन उपयोगसंभवात् लाक्षणिकेऽर्थे तात्पर्यानुपपत्तिः । पृ. १३८४, * भावनावाचित्वबलेन भावनाऽऽक्षेपादेव कर्तृप्रतीतिसिद्धेः **आख्यातस्य** कर्तृवाचित्वं कर्त्रधिकरणे निषेत्स्यते । पृ. ५४७. * नहि द्वयोः **आख्यातयोः** केन चिदुपबन्धेन विना एकवाक्यत्वं संभवति । **वा.** ३।१।१४।२४ पृ. ७४१, * **आख्यातानां** अनेकेषां एकवाक्यत्वं निमित्तत्वादिभिर्विना न घटते । ३।५।२०। ५३ पृ. १०२३.

**आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायः** । अयं न्यायो मीमांसादर्शने व्याख्यातः । 'कटे भुङ्क्ते' 'कांस्यपात्र्यां भुङ्क्ते' इत्यत्र लौकिकास्तत्तद्रस्त्वनुसारेण व्यवस्थां कल्पयन्ति, कटे आसीनः, कांस्यपात्र्यामोदनं निधायेति । वेदेऽपि 'अञ्जलिना सक्तून् जुहुयात्' इत्यत्र यद्यपि द्विहस्तसंयोगोऽञ्जलिस्तथापि गुरुदेवतादिप्रसादनार्थाञ्जलिवन्निश्छिद्रसंयोगो न भवति, तादृशाञ्जलौ सक्तूनामवकाशाभावात् । अतः सामर्थ्यात् संयुक्तप्रसृतिद्वयात्मको मध्यगतावकाशोपेतोऽञ्जलिर्गृहीतः, एवमत्रापि द्रवद्रव्यस्याज्यस्य स्रुवो योग्यः, छेदनीयस्य मांसस्य शस्त्रविशेषः स्वधितिः, संहतस्य पुरोडाशस्य हस्तः, इत्यनेन प्रकारेण स्रुवाद्या व्यवस्थिताः । शक्तिः पुरुषसामर्थ्यमिति । **साहस्री.** २३२.

* आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी इति 'अर्थाद्वा कल्पनैकदेशत्वात्' (१।४।२०।३०) इत्यधिकरणन्यायस्य स्वरूपम् । **के.** * आज्यमांसपुरोडाशेषु हविःषु अमी स्रुवस्वधितिहस्ताः अवदानहेतवः संकीर्णाः, व्यवस्थापकस्य शब्दस्याभावात् । इति चेन्मैवम् । शक्तेर्व्यवस्थापकत्वात् '**आख्यातानां०**' **इति न्यायात्** । **वि.** १।४।२०. * आख्यातानां कर्तृसंख्यावाचित्वं, न तु कर्त्राश्रयद्रव्यसंख्यावाचित्वम् । **सोम.** ६।२।१. * **आख्याते** प्रधानभूते विशेषणं विवक्षितं, गुणभूते अविवक्षितं, शब्दवृत्तेन विधीयमानं परार्थमुच्चार्यते । तेनायमर्थः, यत्र आख्यातार्थः स्वविधानार्थमुच्चार्यते, तत्र विवक्षितं विशेषणं, यत्र परविधानार्थमुच्चार्यते यथा 'दध्ना जुहोति' इति दधिसंबन्धविधानार्थं होमः उच्चार्यते, तत्र द्वितीयपदसंबन्धो नास्ति, वाक्यभेदप्रसङ्गात् । **वा.** ६।४।६।२३ पृ. १४४४. * आख्याते शक्तताऽवच्छेदकं लत्वादिकं स्थानिवृत्तितिबादिप्रत्ययात्, अर्थप्रत्ययस्तु आदेशिस्मरणात् इति के चित् । अन्ये तु स्थानिभूतलादिकमजानतोऽपि अर्थप्रत्ययात्, शबादीनां साधुत्वार्थं कल्पितत्वेन प्रतिव्याकरणं भिन्नत्वेन च तत्र शक्तिग्रहासंभवात् आदेशवृत्तितिप्त्वादिकमेव शक्तताऽवच्छेदकं, गच्छेत्यादौ शबादिविकरणवृत्ति तत् इत्याहुः । **मणि.** पृ. ११०. **आख्यातेषु** भावप्रधानत्वात् न कदा चित् धात्वर्थस्य नित्यं करणभूतस्य प्राधान्यं इति स्थितम् (भावार्थाधिकरणे) । **वा.** ३।४।४।१२ पृ. ९०३, * आख्यातेषु सर्वेषु करोत्यर्थद्वारेण भावयत्यर्थः सिद्धः । २।१।१।१ पृ. ३७८.

* आख्यातेषु सर्वेषु क्रियाऽनुष्ठानं श्रूयते, न कारकं किं चित् । कथमेतद् गम्यते, प्रत्ययात् । यतः क्रियामनुष्ठेयां प्रतीमः । ननु कर्तारमपि प्रतियन्ति, सत्यं प्रतियन्ति, न तु शब्दात् । कुतस्तर्हि ? अर्थात् । यदा क्रिया अनुष्ठातव्या विधीयते, तदा अर्थात् कारक-

व्यापारो गम्यते। यश्चार्थात् गम्यते, न स श्रौतः। यश्च न श्रौतः, न स वाक्यात् गम्यते। कथमसौ प्रकरणं बाधिष्यते। **आह** प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इत्याचार्योपदेशात् कर्ता शब्दार्थः, कर्म च इत्यवगम्यते। 'कर्तरि शप्' 'कर्मणि यक्' इति प्रत्यार्थे कर्तारं कर्म च समामनन्ति आचार्याः। तस्मात् शब्दार्थः कर्ता कर्म चेति। **उच्यते,** न आचार्यवचनात् सूत्रकारवचनाद्वा शब्दार्थो भवति। प्रत्ययादसौ गम्यते। अनुष्ठेया च क्रिया प्रतीता सती कारकाणि प्रत्याययति इत्यवगतमेतत्। अपिच नैव कर्ता प्रत्ययार्थः कर्म च इत्याचार्या आहुः। ननु कर्तरि कर्मणि च लकारः श्रूयते। नासौ कर्तरि कर्मणि वा श्रूयते, किंतु एकस्मिन् एकवचनं द्वयोर्द्विवचनं बहुषु बहुवचनं इति तत्र अपरं वचनम्। तत्र एवमभिसंबन्धः क्रियते एकस्मिन् कर्तरि, द्वयोः कर्त्रोः बहुषु कर्तृषु इति। एवं कर्मणि एकत्वादिसंबन्धः। तत्र नैवं भवति 'कर्तरि भवति, एकस्मिंश्च' इति। कथं तर्हि? कर्तरि एकस्मिन् एकवचनं, कर्तुरेकत्वे इत्यर्थः। एवं द्वित्वे बहुत्वे, कर्मणि च। एवं वर्ण्यमाने लौकिकन्यायानुगतः सूत्रार्थो वर्णितो भवति। सूत्राक्षराणि च न्यायानुगतानि भवन्ति। आगमोऽपि च अयमेव, यदा एकत्वादयो विभक्त्यर्थाः तदा कर्मत्वादयो विशेषणत्वेनेति। **ननु** एतदपि अस्ति, यदा कर्मादयो विभक्त्यर्थाः, तदा एकत्वादयो विशेषणत्वेन इति। **उच्यते**। अर्थप्राप्ता हि कर्मादयः, ते न भवन्ति शब्दस्याभिधेयभूताः। न तु एकत्वादयः अर्थात् प्राप्नुवन्ति। तेन ते शब्दार्थभूताः। तस्मात् यद्यपि विशेषणं एकत्वादयः, तथापि विशेषणमेवाभिधीयते। यथा 'हिरण्यमालिन ऋत्विजः प्रचरन्ति' इति हिरण्यमालित्वं विशेषणत्वेन, तथापि तदेव विधीयते। तस्मात् कर्तुरेकत्वं शब्दार्थः, न कर्ता। **ननु** कर्तुरेकत्वादेकवचनं, कर्तुर्द्वित्वात् द्विवचनं, कर्तुर्बहुत्वात् बहुवचनं, तेन नूनं कर्ता शब्दार्थः इति गम्यते। **उच्यते**। नैतदनुमानात् शक्यम्। कर्ता अनुष्ठेयक्रियावगमादेव अवगम्यते इति प्रत्यक्षम्। तत् तावत् केन चिन्न बाध्यते। एकवचननिर्देशे कर्त्रेकत्वं गम्यते, द्विवचननिर्देशे कर्तुर्द्वित्वं, बहुवचननिर्देशे कर्तुर्बहुत्वम्। तदपि प्रत्यक्षम्। कतरदनुमानं बाधितुमर्हतीति। यथा आकृतिवचने शब्दे द्विवचने द्रव्यभेदोऽवगम्यते एकवचने द्रव्यैकत्वं, एवमिहापि द्रष्टव्यम्। तस्मान्न श्रौतः (पुरुषप्रयत्नः)। न चेच्छ्रौतः, न प्रकरणं बाधिष्यते। **भा.** ३।४।४।१३ पृ. ९१३–९४०.

* **आख्यातगतकर्त्रादिलक्षकत्वविचारः** । **ननु** इदं (प्रथमाप्रयोजकविषयकं यदुक्तं, तत्) आख्यातस्य कृतिवाचिनः कर्तृलक्षकत्वे सिध्येत्। तत्रैव तु प्रमाणाभावः **इति चेत्**। पचति इत्युक्ते कीदृग्विधः इति प्रश्नस्यैव तत्र प्रमाणत्वात्। नहि धर्मिज्ञानं विना धर्मविशेषप्रश्नो युज्यते। न च धर्मिज्ञानं त्वन्मते संभवति, पचतिपदार्थपाकप्रकारकानुकूलतासंसर्गकाख्यातार्थविशेष्यकाखण्डवाक्यार्थबोधस्यैव जननात्, प्रथमाऽन्तपदजन्योपस्थितिरूपकारणाभावेन कृतिप्रकारकाश्रयविशेष्यकबोधस्य जनयितुमशक्यत्वात्। यद्यपि भवन्मते कृतिप्रकारकबोधं प्रति आख्यातपदज्ञानत्वेनापि कारणता अस्ति, तथापि तत्कार्यताऽवच्छेदकं यदि कृतिप्रकारकबोधत्वं, तदा आश्रयज्ञानाभावात् धर्मिज्ञानाभावः सुलभ एव। यदि तु कृतिप्रकारकाश्रयविशेष्यकबोधत्वं, तदाऽपि तत्र प्रथमाऽन्तपदजन्योपस्थितेरपि दण्डचक्रादिवत् समुच्चित्य कारणत्वात् तदभावेन अभावः सुलभः। अतः अवश्यं प्रश्नोपपादकधर्मिज्ञानार्थं प्रथमाऽन्तपदाध्याहारार्थं च आश्रयज्ञानं वाच्यम्। तच्च शाब्दं मानसं स्मरणं वा इति विप्रतिपत्तिः। तत्र 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा० ३।४।६९) इत्यनुशासनात् शाब्दमेव। अत्र चकारात् 'कर्तरि कृत्' (पा० ३।४।६७) इतिसूत्रीयस्य कर्तरि इत्यस्य अनुकर्षणात् कर्तर्यपि लकारलाभः। इदं हि न लकारस्य कर्त्रादौ शक्तिः इत्येवंपरं, पदार्थे वृत्तौ च तात्पर्यकल्पने गौरवात्। लाघवेन कृतौ शक्तौ अवधारितायां तदनुशासनस्य निरूढलक्षणयैव व्याख्येयत्वाच्च। कर्तुर्मानसत्वे तत्र संख्याऽन्वयानुपपत्तेः, 'पचति' इत्येतावन्मात्रश्रवणे कर्तरि एकत्वसंशयापत्तेश्च। 'पचति इति पाचकः' इत्येवं कृदर्थविवरणाच्च। अतः आश्रयज्ञानस्य शाब्दत्वमुक्तम्। युक्तं चैतत्, आख्यातोपात्तसंख्याप्रकारकशाब्दबोधं प्रति

आख्यातपदस्य प्रथमाऽन्तपदापेक्षया उपस्थितत्वेन आख्यातपदजन्योपस्थितित्वेन कारणत्वकल्पने लाघवात् । अतः लाघवात् अनुशासनाच्च धर्मिज्ञानानुरोधात् आख्यातस्य कर्त्रादौ लक्षणा ।

एतेन एकत्वादेः अस्मन्मते कर्त्रादिघटितसामानाधिकरण्यसंबन्धेनैव भावनाऽन्वयात् कर्त्रादेः सांसर्गिकविषयितयैव बोधः इत्यपास्तम् । 'पाककर्ता एको न वा' इत्यस्य संशयस्य 'पचति' इत्यतः व्युदासानुपपत्तेः । धर्मिताऽवच्छेदकविशिष्टधर्मिज्ञानाभावात् 'पाककर्ता कः' इतिसंशयानापत्तेश्च । न च क्व चिदपि शक्तिमात्रजन्यशाब्दबोधाभावे तस्यैव पदस्य अर्थान्तरलक्षकत्वासंभवः, इत्यत्र प्रमाणमस्ति, मुख्यार्थासंभवस्येव अर्थान्तरबोधानुपपत्तेरेव लाघवतर्कसहकृतायाः लक्षणातात्पर्यग्राहकत्वात् । तत्रापि शबादिविकरणस्थले कर्तरि, यगादिविकरणस्थले च कर्मणि, इत्येवं व्यवस्थया लक्षणा । लक्ष्यताऽवच्छेदकं च आश्रयत्वं कर्तृत्वकर्मत्वाद्यखण्डोपाधिर्वा । कर्तृत्वादिकं हि कृत्याश्रयत्वादिसमनियतः अखण्डधर्मः अनुगतव्यवहारसाक्षिकः, न तु कृत्याश्रयत्वादिकमेव । तथात्वे 'चैत्रेण पाकः क्रियते' इत्यत्र 'चैत्रेण पाकः' इत्येतावतैव 'चैत्रनिष्ठकृतिसाध्यः पाकः' इत्यर्थबोधोपपत्तेः, पुनः 'क्रियते' इति कृतिवाचकपदप्रयोगवैयर्थ्यापत्तेः । अतः कर्तृत्वादिकं अखण्डमेव तृतीयाऽऽद्यर्थः । तस्य च आश्रयत्वादिवदेव कृत्यादिनिरूपितत्वादिधर्मकल्पनात् 'चैत्रनिष्ठकर्तृत्वनिरूपककृतिसाध्यः पाकः' इत्यर्थबोधोपपत्तिः । इदं च परमतेनोक्तम् । स्वमते 'उक्तकृतिसाध्यत्वं पाकवृत्ति' इत्येवं शाब्दबोधस्य वक्ष्यमाणत्वात् । सर्वथा कर्तृत्वादिकं अखण्डोपाधिः । इष्टं चैतत् प्राचां, दंपत्योः व्यासज्यवृत्तिकर्तृत्वसिद्ध्यर्थं, अग्नीषोमयोः व्यासज्यवृत्तिदेवतात्वसिद्ध्यर्थं च । अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमानद्रव्योद्देश्यत्वरूपस्य च देवतात्वस्य आश्रयभेदेन भिन्नतया व्यासज्यवृत्तित्वसिद्धान्तानुपपत्तेः । अतः कर्तृत्वं कर्मत्वं च लक्ष्यताऽवच्छेदकीकृत्य कर्तृकर्मणोः आख्यातस्य लक्षणा । इदं च औत्सर्गिकीं रीतिमनुसृत्योक्तम् । यत्र षष्ठोक्तन्यायेन आश्रयानेकत्वग्राहकं प्रमाणान्तरमस्ति यथा दंपत्योः, तत्र विधिवाक्ये एकवचनश्रवणात् आख्याते नाश्रयलक्षणा, एकत्वानन्वयापत्तेः । अतस्तत्र द्वित्वलक्षणायां प्रमाणाभावात् आख्यातेनैव लाघवात् कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते, न तदाश्रयोऽपि, तस्य अर्थादेव बोधोपपत्तेः । इष्यते च कर्तृत्वत्वादिना कर्तृत्वबोधः तृतीयाऽऽदौ । स परं शक्त्या तत्र, अत्र तु लक्षणया इत्येतावान् भेदः । तत्रैव च साक्षात् संबन्धेन एकत्वान्वयः न तु आश्रये, तस्य द्वित्वात् । यदपि तत्र आख्यातसमानाधिकरणं स्वर्गकामपदं, तदपि न कर्तृपरं, अपितु लक्षणया उपस्थितस्वर्गाख्यभाव्यपरमेव । प्रथमा च तत्रत्या लक्षणया कर्मत्वार्थिका, इति न तत्सामानाधिकरण्यबलेनापि आख्यातेन आश्रयलक्षणा । प्रथमाप्रयोजकं तु सर्वत्र कर्तृत्वोक्तिरेव । सा परं कर्तृत्वप्रकारिका कर्तृत्वविशेष्यिका वा इत्यन्यदेतत् ।

अतः सिद्धा आख्यातेऽपि कर्तृत्वादिलक्षणा । **रहस्य.** पृ. ३५-३८.

* **आख्यातत्वं** दशसु लकारेषु विद्यते । ( तच्च भावनाशक्तताऽवच्छेदकम् ) । **मीन्या.** पृ. १७.

* **आख्यातपदावृत्तिलक्षणः** वाक्यभेदः वाजपेयगुणविधौ । **बाल.** पृ. १८१. * **आख्यातप्रत्ययविधिः** धात्वर्थस्य साध्यस्वभावद्योतनाय । **वि.** २।१।१ वर्णकं २. * **आख्यातभेदानुसारेण** अपूर्वभेदानुगमे सर्वत्र प्राप्ते तदपवादार्थं ( तानि द्वैधं इत्यधिकरणेन ) गुणप्रधानविवेकारम्भः । **वा.** २।१।३।६ पृ. ४०५. * **आख्यातलक्षणं**– 'येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि' येषां तु शब्दानां उच्चारणोत्पत्तौ स्वे अर्थे प्रयोगो न विद्यते, प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः । तानि आख्यातानि इति भावशब्दान् पर्यायशब्देनोपदिशति । **भा.** २।१।१।४. * **आख्यातवाच्यः** कर्ता इति व्याकरणं, कृतिः इति न्यायः, भावना इति मीमांसा । **के.**

* **आख्यातवादः** । आख्यातस्य व्यापाररूपभावनायां शक्तिः । **ननु** धातोरेव व्यापारवाचितया धात्वर्थातिरिक्तभावनायां मानाभावः । **न च** अस्तिभवत्यादिधातुतः फलस्यैव प्रतीतेः व्यापाराप्रतीतेश्च तत्सामा-

न्येन पच्यादीनामपि फले एव शक्तिः, न व्यापारे इति **वाच्यम्**। तत्रापि 'अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना' इत्यादिवैयाकरणोक्तरीत्या, 'कपालावस्थो घट आत्मानं भावयति' इति वार्तिकोक्तरीत्या च तद्वाचित्वात्। नापि फलमात्रे तस्य (धातोः) शक्तिः संभवति, व्यापारोपरमे 'पाको विद्यते' इति प्रतीतेः, 'ग्रामो गमनवान्' इति प्रयोगस्य चापत्तेः। घञादिसमभिव्याहारस्य व्यापारप्रत्यायकत्वकल्पने फलप्रत्ययप्रतिबन्धकल्पने वा गौरवं, 'पच्यर्थो विद्यते' इति प्रयोगापत्तिश्च। घञादेर्व्यापारवाचित्वकल्पना तु सर्वभावप्रत्ययानां धात्वर्थातिरिक्तवाच्याभावनियमेन निरस्ता। अतो न फलमात्रं धात्वर्थः। नापि व्यापारमात्रं, त्यजिगम्योः पर्यायताऽऽपत्तेः। अतः फलव्यापारौ धात्वर्थः। पच्यादिधातोः विक्लित्त्यादिफले अनुकूलव्यापारे च प्रत्येकं शक्तिः, न विशिष्टे, व्यापारस्य एकदेशत्वापत्त्या कारकानन्वयापत्तेः। व्यापारश्च आत्मनिष्ठः प्रयत्नः, फूत्कारादिः शरीरगता चेष्टा च। अनुकूलत्वस्य संसर्गमर्यादालभ्यत्वात्, न तत्र शक्तिः। यावत्सु च व्यापारेषु पचति इति प्रयोगः, तावत्सु प्रत्येकं शक्तिः। शक्यताऽवच्छेदकं च तावदन्यतमत्वं, फलानुकूलत्वं तत्त्वं वा। **एतेन** 'प्रयत्नस्य अन्यथासिद्धत्वेन अजनकत्वात् प्रयोजकव्यापारस्य तत्त्वे व्यवहितकृष्यादीनामपि संग्रहापत्तिः' इति **परास्तम्**। **न च** धातूपात्तव्यापाराश्रयत्वस्य कर्तृतया सर्वेषां कारकाणां कर्तृत्वापत्त्या तृतीयाऽऽद्यापत्तिरिति **वाच्यम्**। विवक्षाया एव नियामकत्वात्। अत एव तत्तत्कारकव्यापारस्य पच्यर्थत्वविवक्षायां 'काष्ठं पचति' 'स्थाली पचति' इत्यादिप्रयोगोपपत्तिः। न चैवं प्रत्ययवैयर्थ्यं, प्रकृत्युपात्तफलव्यापारान्यतराश्रयस्य आख्यातत्वेन तिप्त्वादिना वा, एकवचनत्वादिना च एकत्वादिसंख्यायाः, लट्त्वादिना वर्तमानत्वादेश्च तदर्थत्वात्। तत्रापि लाघवेन आश्रयत्वस्यैव शक्यताऽवच्छेदकत्वं यत्ननिरूपकत्वादीनां संसर्गत्वात्। अत एव फलव्यापाराश्रयस्य तिङर्थत्वात् अनभिहिताधिकारे 'कर्मणि द्वितीया' (पा० २।३।२) इत्यादिशास्त्रबोधिततृतीयाद्वितीयाऽन्तत्वं कर्तृकर्मणोर्युज्यते। अन्यथा तिङां कर्तृकर्मानभिधायकत्वेन सर्वदा द्वितीयातृतीयाऽऽद्युत्पत्तिप्रसङ्गेन 'देवदत्तः पचति' इत्यादीनां अबोधकत्वप्रसङ्गः। तत्रापि धात्वर्थव्यापारस्य मुख्यविशेष्यत्वं, सर्वकारकाणां फलस्य वर्तमानत्वादिकालस्य च व्यापारविशेषणत्वं, एकत्वादिसंख्यायाश्च कर्तृकर्मणोः, कर्मणश्च फले। एवं च कर्त्राख्याते 'तण्डुलनिष्ठविक्लित्तिजनकः एकाश्रयको व्यापारः' इति, कर्माख्याते च एकाश्रयकफलजनको व्यापारः इति बोधः। प्रथमाऽन्तपदोपस्थाप्यस्य आख्यातोपस्थाप्यकर्तृकर्मभ्यां अभेदेन अन्वयः। 'स्थीयते' इत्यादौ भावाख्याते संख्या अनन्वितैव, धात्वर्थान्विता वा। अनुशासनाच्च द्विवचनादीनामसाधुत्वम्। न च प्रत्ययार्थाश्रयस्य धात्वर्थव्यापारविशेषणत्वे 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यं' इति प्रत्ययार्थप्राधान्यबोधकस्मृतिविरोधः, तस्याः 'भावप्रधानमाख्यातं' (निरुक्त. १।१) इति विशेषस्मृत्या बाधात्। किंच नात्र प्रत्ययार्थोद्देशेन प्राधान्यविधिः, लिङ्गसंख्ययोर्व्यभिचारेण विधेयस्य उद्देश्याव्यापकत्वात्। नापि प्राधान्योद्देशेन प्रत्ययार्थत्वविधिः, नामसु प्रातिपदिकार्थप्राधान्येन व्यभिचारात्। अत एव तस्याः (स्मृतेः) प्रमाणान्तरसिद्धप्राधान्यानुवादकत्वम्। इति **वैयाकरणाः**।

अत्र **गौतमीयाः**। आख्यातस्य यत्नो वाच्यः, यत्नार्थककरोतिना विवरणात्। 'किं करोति' इति यत्नप्रश्ने 'पचति' इत्युत्तरस्य यत्नार्थकत्वं विना अनुपपत्तेः। कृञश्च यत्नाभिधायकत्वं, पटाङ्कुरयोः कृत्यकृतिव्यवहारात्। तृजन्तकर्तृपदस्य कृत्याश्रयवाचकत्वम्। अन्यथा क्रियाऽऽश्रयवाचित्वापत्त्या कारकमात्रं कर्तृपदार्थः स्यात्। अतः '**कृताकृतविभागेन कृतरूपव्यवस्थया। यत्न एव कृतिः पूर्वापराऽस्मिन् सैव भावना॥**' इति यत्न एव आख्यातार्थः। 'रथो गच्छति' इत्यत्र अनुकूलव्यापारे, 'जानाति इच्छति यतते करोति' इत्यादौ आश्रयत्वे, 'अपक्षीयते नश्यति भविष्यति' इत्यादौ प्रतियोगित्वे, सर्वत्र अनुकूलव्यापारे वा निरूढा लक्षणा। अत्र शक्यताऽवच्छेदकं च जीवनयोनिनिवृत्तिजनकयत्नभिन्नयत्नत्वम्। यतते करोति इत्यव्यवहारात्। शक्तताऽवच्छेदकं च

त्वं तिप्त्वादिकं वा । तस्य प्रत्ययार्थत्वात् धात्वर्थनिरूपितं विशेष्यत्वं प्रत्ययार्थप्राधान्यबोधकस्मृतेः । आख्याताभिहितसंख्या च आख्यातार्थविशेष्ये आख्याततात्पर्यविषयविशेष्ये वा अन्वेति । स च प्रथमाऽन्तपदोपस्थाप्यः । 'चैत्रः पचति' इति कर्त्राख्याते, 'तण्डुलः पच्यते' इति कर्माख्याते, 'पच्यते ओदनः स्वयमेव' इति कर्तृकर्माख्याते प्रथमाऽन्तविशेष्यकशाब्दबोधानुभवात् । आख्यातार्थयत्नस्य समवायेन चैत्रे स्वजन्यव्यापारजन्यफलवत्त्वसंबन्धेन प्रथमाऽन्तपदोपस्थाप्ये तण्डुलादौ वा प्रकारत्वात् । **एतेन** अनभिहिताधिकारकत्वानुपपत्तिकृता 'तण्डुलं पच्यते' इत्यादिप्रयोगापत्तिः **अपास्ता** । कर्तृकर्मनिष्ठसंख्याऽनभिधानस्यैव अनभिहिताधिकारार्थत्वात् । **न च** व्यापार एवाख्यातार्थ इति **वाच्यम्** । व्यापारत्वस्योपाधितया यत्नत्वजातेः वाच्यताऽवच्छेदकत्वे लाघवात् । अत एव न कर्ता वाच्यः, आक्षेपलभ्यत्वाच्च । तदुक्तं '**आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना । संख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिः** ॥' इति । अतो यत्न एवाख्यातार्थः ।

**रत्नकोशकारस्तु** व्यापारो धात्वर्थः । उत्पादनं आख्यातार्थः । तेन 'रथो गच्छति जानाति नश्यति' इत्यादौ न लक्षणा । 'उत्पादयति' इत्यत्र प्रत्ययार्थः अनुवादकः । अनुत्पादवाचिधातूत्तरप्रत्ययस्य चोत्पादवाचित्वं इत्याह ।

**सिद्धान्तस्तु** कृञो न यत्नार्थकत्वं, 'बीजेनाङ्कुरः कृतः' 'स्वर्गादिना सुखं कृतं' इति यत्नं विनापि व्यवहारात् (एतादृशस्य प्रयोगस्य गौणत्वात् न करोतेर्यत्नार्थकत्वमपगच्छति इति **के.**) । कर्तृपदस्य कर्मादिपदवत् रूढत्वात् । रूढिश्च कृत्याश्रये व्यापाराश्रये वा । अन्यथा प्रकृतिप्रत्ययार्थयोः कृतिकृत्याश्रययोः अनन्वयापत्तिः । अतः कृञा विवरणेन आख्यातस्य यत्नार्थकत्वं गर्भस्रावगलितम् । **किंच** 'यतते, करोति' इत्यत्र प्रकृतिप्रत्ययार्थयोः अनन्वयापत्तिः पौनरुक्त्यं च । 'एधिष्यति, द्वौ, त्रयः' इत्यादाविव प्रत्ययस्य अनुवादकत्वं वा । अयत्नार्थकधातूत्तराख्यातप्रत्ययानां यत्नार्थत्वं वा । 'रथो गच्छति' इत्यादौ अचेतने, 'जानाति, इच्छति' इत्यादौ कृत्यजन्ये च आख्यातप्रयोगस्य गौणत्वं, अनुकूलत्वमात्रे वा लाक्षणिकत्वं ब्राह्मणे श्रोत्रियपदस्येव कल्पयितुं युक्तम् । एवं मध्यमोत्तमपुरुषयोः युष्मदस्मदोः चेतनार्थकतया अचेतनार्थे अनुपपत्तिः । अतः कृञो व्यापारोऽर्थः, तेन विवरणाच्च आख्यातप्रत्ययानां तत्रैव शक्तिः । एवं सति फलानुकूलव्यापारस्य धात्वर्थत्वेऽपि न यत्नस्य तदर्थत्वम् । 'पाके यतते,' 'पाकं करोति' 'पाकं भावयति' इत्यादिषु पाकात् पृथक्करणेन यत्नभानानुपपत्तेः । अतो विवरणवेलायां भासमानस्य यत्नस्य धातुवाच्यत्वासंभवात् फलजनकव्यापारस्य उक्तरीत्या वा व्यापारस्यैव धातुवाच्यत्वम् । न च अन्ते त्यजिगम्योः पर्यायता, तत्तद्धातुसमभिव्याहृतद्वितीयाया एव संयोगादिरूपफलविशेषबोधकत्वाङ्गीकारात् । सर्वत्र फलानां द्वितीयाऽऽद्यर्थत्वस्य, आश्रयत्वजन्यत्वादीनां च संसर्गलभ्यत्वस्य अङ्गीकारात् । **के चित्तु** विक्लित्त्यादिफलजनकताऽवच्छेदकतया व्यापारसमुदायनिष्ठः अन्तिमव्यापारनिष्ठो वा वैजात्यं अखण्डोपाधिर्वा पच्यर्थः । कर्मत्वकर्तृत्वादिकमपि जातिरूपं अखण्डोपाधिरूपं वा । अत एव तस्य व्यासज्यवृत्तित्वं संगच्छते । एवं देवतात्वमपि । अतः प्रयोज्यव्यापारवाचिषु 'भवति विक्लिद्यति' इत्यादिषु प्रयोज्यव्यापारजन्यत्वस्य, प्रयोजकव्यापारवाचिषु पच्यादिषु विक्लित्त्यनुकूलत्वादेः, आक्षेपेण मानात् यत्नभिन्नफलानुकूलव्यापाराणां तत्तद्वृत्तिजातेः अखण्डोपाधेर्वा धातुवाच्यत्वम् । यत्नस्य तु उक्तरीत्या धात्वर्थत्वासंभवात् पारिशेष्यात् प्रत्ययवाच्यत्वम् । तत्रापि न यत्नत्वेन वाच्यता, किंतु अनुकूलव्यापारवाचिकरोतिना विवरणात् 'रथो गच्छति' इत्यादिसाधारण्याय अनुकूलव्यापारत्वेन वाच्यता । करोतेश्च भवत्यर्थकर्तृकर्मकत्वात् णिजन्तभवतिसमानार्थकत्वम् । तादृशकरोतिना विवरणेन अन्योत्पादानुकूलत्वेन यत्ने एव शक्तिः, सैव भावनेति । **के चित्तु** लघुभूतशक्यताऽवच्छेदके संभवति तद्गौरवस्य अन्याय्यत्वात् यत्नार्थककृञा विवरणाच्च यत्नत्वमेव वाच्यताऽवच्छेदकम् । **ननु** एवं करोतेः यततिसमानार्थकत्वे

फलसमानाधिकरणव्यापारवाचितया अकर्मकत्वापत्तिः । उत्पत्तिरूपफलव्यधिकरणव्यापारवाचित्वेन ज्ञानादिवत् सकर्मकत्वे तु यततेरपि सकर्मकत्वापत्तिः । 'एधांचक्रे' इत्यादिवत् अनुप्रयोगापत्तिश्च । **न च** 'कृञ् चानुप्रयुज्यते लिटि' (पा० ३।१।४०) इति कृधातोरेव अनुप्रयोगविधानात् न तदापत्तिः इति **वाच्यम्** । अनेन प्रत्याहारान्तःपातिव्यापारसामान्यवाचिधातूनां अनुप्रयोगविधानात् । अत एव प्रत्याहारान्तःप्रविष्टसंपदः नानुप्रयोगः । **इति चेत्** । विवक्षाऽविवक्षाभ्यां धात्वोः सकर्मकाकर्मकत्वे पच्यास्योरपि 'पचति, मासमास्यते' इत्यादौ अतिप्रसङ्गात् नोक्तं सकर्मकत्वम् । किंतु अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वम् । तेन सकर्मके विशेषणाभावेन अकर्मकत्वस्य, विवक्षासत्त्वेन सकर्मकत्वस्य च अक्षतिः । आकाङ्क्षायाः शब्दवैचित्र्यकृतत्वात् एकस्य धातोः अर्थभेदेन सकर्मकत्वाकर्मकत्ववत् पर्यायाणामपि तदव्याहतम् । एवं अविवक्षाविरहविशिष्टकर्मद्वयाकाङ्क्षधातुत्वं द्विकर्मकत्वं, इति द्विकर्मकस्यापि एककर्मत्वे निनायेत्यादौ न क्षतिः । अनुप्रयोगस्तु शब्दसामर्थ्यकृतव्यापारसामान्यवाचककृञादिधातोरेव उपपादनीयः । एवं च यततिपर्यायत्वेऽपि कृञः सकर्मकत्वोपपत्त्या तदर्थयगादिविध्युपपत्तेः 'क्रियते घटः स्वयमेव' इत्यादिप्रयोगोपपत्तिः । अतो यत्नत्वमेव वाच्यताऽवच्छेदकं इत्याहुः । 'जानाति इच्छति यतते करोति भवति नश्यति' इत्यादौ आश्रयत्वप्रतियोगित्वादौ निरूढलक्षणा । **न च** आश्रयत्वं संसर्गः इति **वाच्यम्** । नामार्थधात्वर्थयोः अभेदातिरिक्तसंबन्धेन अन्वयस्य अव्युत्पन्नत्वात् । अन्यथा 'तण्डुलः पचति, चैत्रः पच्यते तण्डुलः' इत्यादौ अन्वयबोधापत्तेः । शक्तताऽवच्छेदकं लत्वादिकं स्थानिवृत्ति । तिबादिप्रत्ययात् अर्थप्रत्ययस्तु आदेशिस्मरणात् इति **केचित्** । **अन्ये तु** स्थानिभूतं लादिकं अजानतोऽपि अर्थप्रत्ययात्, शबादीनां साधुत्वार्थं कल्पितत्वेन प्रतिव्याकरणं भिन्नत्वेन च तत्र शक्तिग्रहासंभवात्, आदेशवृत्तितिप्त्वादिकमेव शक्तताऽवच्छेदकम् । 'गच्छ' इत्यादौ शबादिविकरणवृत्ति तत् **इत्याहुः** ।

तत् सिद्धं व्यापारत्वेन यत्नत्वेन वा प्रत्ययवाच्यो यत्नो भावनेति । स च नित्यं सकर्मकः, नित्यसकर्मकेण कृञा णिजन्तभवतिना च विवरणात् । एवं च 'स्वास्थ्यकामः स्वपेत्' इत्याद्यकर्मकधातूनामपि स्वास्थ्यादिभाव्यकत्वोपपत्तिः, तस्य भावनायां कर्मत्वेन अन्वयात् । तस्याश्च मुख्यविशेष्यत्वेनैव अन्वयः । **न च** 'चैत्रः पचति' इत्यादौ तस्याः प्रथमाऽन्तपदोपस्थाप्ये चैत्रादौ प्रकारतया अन्वयानुभवात् न मुख्यविशेष्यत्वं संभवति इति **वाच्यम्** । 'स्थाल्यां पचति' 'काष्ठैः पचति' 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यादौ प्रथमाऽन्तपदाभावेऽपि शाब्दबोधानुभवेन भावनाप्रकारकशाब्दबोधे प्रथमाऽन्तपदोपस्थितेः हेतुत्वस्य वक्तुमशक्यत्वात् । न च तत्र प्रथमाऽन्तकर्तृवाचिपदाध्याहारः, प्रत्ययवाच्यसंख्यायाः समानपदोपस्थाप्यकर्त्रन्वयसंभवेन अध्याहारापेक्षया लक्षणाया लघुत्वेन च आख्याते कर्तृलक्षणाया एव युक्तत्वात् । **एतेन** "आख्यातार्थविशेष्ये आख्याततात्पर्यविषयविशेष्ये वा प्रथमाऽन्तपदोपस्थाप्ये वा संख्याऽन्वयः, 'गगनेन स्थीयते' इत्यत्र प्रथमाऽन्तपदाभावात् संख्या अनन्वितैव" **इत्यपास्तम्** । 'काष्ठैः पचति' इत्यत्रापि अनन्वयापत्तेः, 'पचति' इत्यत्र कृतिविशेष्यकबोधस्वीकारे अननुगमाच्च, आख्यातार्थविशेष्यत्वादिना हेतुत्वस्य आख्यातजन्योपस्थितेः हेतुत्वापेक्षया गुरुत्वाच्च । एवं च यत्र प्रथमाऽन्तपदोपस्थाप्यः अस्ति, तत्रापि आख्यातार्थकर्तरि अभेदेन तस्यान्वयः, न तु भावनाविशेष्यत्वम् । न च कारकाणां भावनायां प्रकारत्वेन अन्वयः, भावनायाश्च प्रथमाऽन्तपदोपस्थाप्ये, इत्यनेकव्युत्पत्तिकल्पनाऽऽपत्तिः । **एतेन** 'कारकाणां धात्वर्थे, तस्य वर्तमानत्वादीनां च भावनायां, तस्याश्च प्रथमाऽन्तपदोपस्थाप्ये प्रकारत्वेन अन्वयः' इति **परास्तम्** । **किंच** 'पश्य मृगो धावति' इत्यत्र दर्शनभावनायां धावनभावनाया एव कर्मत्वेन अन्वयः, मृगस्य प्रथमाऽन्तत्वेन (त्वेऽपि) तदनुपपत्तेः, अध्याहारे वाक्यभेदात् । सा च अन्यविशेषणीभूता न संभवति, इत्यतोऽपि मुख्यविशेष्यत्वम् । **न च** मृगनिष्ठयत्नस्य अनुमेयत्वेन साक्षाद्धावनाकर्मत्वं **न**

संभवतीति **वाच्यम्**। ज्ञानकर्मत्वसंभवात्, भावनाऽऽश्रयत्वस्य तत्संभवाच्च । अतः एकवाक्यत्वस्य अनुपपत्त्याऽपि विशेष्यत्वम् । न चैवं 'पाकभावना जायते' इत्यस्मिन्नर्थे 'पचति भवति' इति प्रयोगापत्तिः, इष्टापत्तेः । **किंच** 'भावप्रधानमाख्यातं' इति स्मृतेः ( निरुक्त १।१ ) भावनाप्राधान्यबोधिकायाः सार्थकत्वं, अन्यथा आनर्थक्यापत्तिः । **न च** नेयं भावनाप्राधान्यबोधिका, किंतु 'धात्वर्थः केवलः शुद्धो भावना' इति वैयाकरणपरिभाषितधात्वर्थप्राधान्यबोधिका इति **वाच्यम्** । लिङ्प्रत्ययवाच्या-( वाचि आ ) ख्यातशब्दसामानाधिकरण्यानुपपत्तेः । **न च** 'सर्वमाख्यातजं नाम' इति स्मृतेः आख्यातपदेन धातुरेव उच्यते इति **वाच्यम्** । 'पाकः' इत्यादौ आख्यातपदाप्रयोगात् । नामनिर्वचने तु आख्यातपदं तत्प्रकृतौ लाक्षणिकम् । तेन आख्यातशब्दस्य धातुवाचित्वाभावात् प्रत्ययवाचि-आख्यातपदसामानाधिकरण्यानुपपत्तिः । अतोऽत्र 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनं' इतिवत् अनेकाख्यातार्थोद्देशेन भावनाप्रधानविधिः । तेन आख्यातवाच्यलक्ष्य-कालसंख्याभावनाकर्तृकर्मसु भावनाप्राधान्यं विधत्ते ( भावप्रधानमाख्यातं इति स्मृतिः ) । अन्यथा धात्वर्थनिरूपितप्राधान्यविधौ 'प्रकृतिप्रत्ययौ' इति स्मृतिप्राप्तत्वेन अनुवादे आनर्थक्यापत्तिः । वैयाकरणपरिभाषणं तु 'नपुंसके भावे क्तः' ( पा० ३।३।११४ ) इत्यादौ धात्वर्थग्रहणमेव, न त्वतलाद्यर्थग्रहणं इत्येतदर्थं, न तु भावपदशक्तिग्राहकम् । एवं 'सत्त्वप्रधानानि नामानि' ( निरुक्त. १।१ ) इत्यत्रापि 'पावकः, लावकः' इत्याद्यनेकार्थनामसु लिङ्गसंख्याऽन्वययोगिनः प्राधान्यबोधनम् । घटादिपदेऽपि जातिव्यक्त्योरुभयोरपि प्राधान्यम् । अत एव च आकृत्यधिकरणे ( १।३।९।३०-३५ ) जातिव्यक्त्योः बोधद्वयं इत्याहुः । अतः अनेकार्थप्रतिपादकेषु आख्यातेषु भावनाप्राधान्यनियमः 'भावप्रधानमाख्यातं' इत्यनया स्मृत्या क्रियते । 'सत्त्वप्रधानानि नामानि' इति स्मृत्या अनेकार्थप्रतिपादकसुबादिषु क्रियापदं विना अन्वयबोधाजननात् क्रियाऽन्वयं विना कारकत्वव्याघाताच्च प्रधानभूतक्रियाऽन्वयित्वेन कर्तृत्वादिकारकप्राधान्यनियमः । कारकाणामेव प्राधान्यं, संख्याऽऽदीनां प्रातिपदिकार्थस्यापि प्रत्ययार्थप्राधान्यबोधकस्मृत्या कारकान्वयः । संख्याऽऽदीनां तु समानाभिधानश्रुत्या तत्परिच्छेदद्वारा कारके एवान्वयः इति चतुर्थे ( ४।१।५।११-१६ ) स्फुटम् । अतः सर्वकारकाणां भावनाऽन्वयात् सिद्धं भावनाया मुख्यविशेष्यत्वम् ।

कारकाणां भावनाऽन्वयश्च साक्षात् असंभवात् धात्वर्थपरिच्छेदद्वारकः । तत्र 'अभिहितकर्तृकर्मवाचिनी प्रथमा' इति मते प्रथमाऽर्थकर्तृत्वादेर्भावनाऽन्वयः । 'प्रातिपदिकार्थे प्रथमा' इति मते कर्तृत्वादिसंसर्गेण चैत्रादेरेव तत्रान्वयः इति **केचित्** । **वस्तुतः** लक्षणैव युक्ता, निपातातिरिक्तनामार्थाख्यातार्थयोः भेदान्वयासंभवात् इति । तत्र च अधिकारित्वमपि संसर्गः इति **केचित्** । एवं संबोधनविभक्तेरपि प्रथमासमानार्थकत्वात् तदर्थोऽपि भावनाऽन्वयी । एवं क्त्वा-णमुल्-कृत्वसुच्-नञ्-घञाद्यर्थानां कालावृत्त्यभावादीनामपि भावनायामन्वयः । एवं निमित्तस्य कारकत्वाभावेऽपि अनुग्रापकत्वसत्त्वात् भावनाऽन्वयः । षष्ठ्यास्तु कारकविभक्तित्वाभावात् तदर्थस्य उपपदार्थेनाऽन्वयः इति **संप्रदायः** । **अन्ये तु** साक्षात्परंपरासंबन्धेन भावनायामेव प्राधान्येन अन्वयो युक्त इत्यप्याहुः । एवं वर्तमानत्वादिकमपि ( भावनाऽन्वयि ) । विध्यर्थोऽपि प्रवर्तना जनकतासंबन्धेन भावनाऽन्वयी । संख्यायास्तु भावनाऽऽश्रिताखण्डोपाधिरूपकर्तृत्वकर्मत्वान्वयः, न तु तदाश्रिततदाश्रयान्वयः । एवं च 'यजेत' इत्यादौ आश्रयभेदेऽपि एकवचनोपपत्तिः । 'वसानौ' इत्यादौ प्रमाणान्तरानुरोधात् लक्षिताश्रये ( दंपत्योः ) तदन्वयः । तत्र शब्विकरणस्थले कर्तृत्वान्वयः, यगादिविकरणे कर्मत्वान्वयः इति व्यवस्था इति **संप्रदायः** । **केचित्तु** 'स्थीयते, सुप्यतां' इत्यादौ भावनायामेव संख्याऽन्वयः, प्रधानान्वयस्य युक्तत्वात् । न चैवं कृतौ संख्याऽन्वये तस्याः सत्त्वताऽऽपत्तिः, इष्टत्वात् तत्रापि स्मृतिबोधितप्राधान्याक्षतेः । नहि इयं स्मृतिः असत्त्वभूतस्य प्राधान्यबोधिका, संख्यायाः प्राधान्यप्रसङ्गात् ।

न च भावनाद्वये द्विवचनापत्तिः एकवचनस्यैव साधुत्वात् । अतो युक्तः परंपरया भावनाऽन्वयः । 'गगनेन स्थीयते' इत्यादौ आख्यातलक्ष्ये आश्रयत्वे संख्याऽन्वयः अनन्वितैव वा संख्या इत्यप्याहुः । कर्तृत्वकर्मत्वयोरपि भावनायामन्वयः । तत्र कर्त्राख्याते आख्यातलक्षितकर्तृत्वस्य सामानाधिकरण्येन, कर्माख्याते तद्वाच्यप्रयत्नप्रयोज्यतया लक्षितफलस्य सामानाधिकरण्येन अन्वयः । तदाक्षिप्ताश्रयाभेदेन प्रथमाऽन्तोपस्थाप्यान्वयः । एवं च 'तण्डुलाभिन्नाश्रितत्वकर्मत्वसमानाधिकरणफलप्रयोजको व्यापारः' इति कर्माख्याते, कर्त्राख्याते 'देवदत्तनिष्ठकर्तृत्वसमानाधिकरणः पाकानुकूलो यत्नः' इति बोधः । कर्तृत्वं च तृतीयार्थः । एवं 'ओदनः पच्यते स्वयमेव' इति कर्तृकर्माख्याते ओदननिष्ठयोः कर्तृत्वकर्मत्वयोर्विवक्षणात् 'ओदननिष्ठकर्मत्वसमानाधिकरणफलप्रयोजकौदननिष्ठकर्तृत्वसमानाधिकरण – पाकानुकूलभावना' इति बोधः । तत्र कृतेर्बाधात् व्यापारे लक्षणा । न चैवं 'ओदनः स्वयं पचति' इति प्रयोगापत्तिः, 'कर्मवत् कर्मणा तुल्यक्रियः' (पा० ३।१।८७) इति यगादिविधानेन तादृशस्य असाधुत्वात् । अत एव तत्र चैत्रे न प्रथमा न तृतीया, किंतु षष्ठी इति **संप्रदायः** । तस्मात् 'भावप्रधानमाख्यातं' इति स्मृत्यैव सर्वकारककर्तृत्वादिनिरूपितं प्राधान्यं भावनायाः इति सिद्धम् । **किंच** अनयैव स्मृत्या प्राधान्ये भावनाया बोधिते प्रधानस्य गुणाक्षेपकत्वनियमेन भावनाया एव कर्तृत्वकर्मत्वाक्षेपकत्वं युक्तं, न वैपरीत्यम् । अनन्यलभ्यस्य शब्दार्थत्वाच्च नाक्षेपलभ्ये कर्तृत्वादौ शक्तिः, किंतु आक्षेपककृतावेव । अत एव यत्र नाक्षेपकत्वं, तत्र नानैव शक्तिः यथा संख्याऽऽदौ ।

**न चैवं** पक्ता पचमानः पक्वः इत्यादिकर्तृकर्मकृतामपि भावनावाचित्वं लाघवात् इति **वाच्यम्** । नामार्थयोर्भेदान्वयानुपपत्तेः । अतस्तत्र 'कर्तरि कृत्' (पा० ३।४।६७) इत्याद्यानुशासनिकी आश्रये शक्तिः । न च आक्षेपेण तद्बोधो लक्षणया वा, शक्त्या क्वचिदपि अप्रयोगे शक्यज्ञानेन लक्षणाया असिद्धेः । अतस्तत्र नामत्वेन सत्त्वप्राधान्यबोधकस्मृत्या लिङ्गसंख्याऽन्वययोग्यस्य प्रधानभूतस्य कृत्याक्षेपकत्वबोधनम् । न च कृतौ लक्षणा कर्तरि शक्तिः, लाघवस्यापि प्राधान्यविरोधित्वेन अप्रयोजकत्वात् । तत् सिद्धं कर्तृकर्मकृतां कृतिबोधशक्तिरिति । भावकृतां तु 'पाको यागः' इत्यादौ 'जायते क्रियते' इत्यादिकृतिवाचिपदाध्याहारेण बोधः । अन्यथा धात्वर्थमात्रप्रतीतेः तत्र कारकान्वयानुपपत्तेः । अतस्तत्र धात्वर्थमात्रे शक्तिः, कृतेस्तु आक्षेपः एवेति सिद्धम् । अतो धात्वर्थातिरिक्ता कृतिरूपा भावना आख्यातार्थः ।

आश्रयस्तु आक्षेपलभ्यः । आक्षेपलभ्यत्वादेव वैयाकरणोक्तं कर्तृकर्मवाचित्वं अपास्तम् । 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( पा० ३।४।६९ ) इति स्मृतिरपि 'लः' इति षष्ठ्यन्तमाश्रित्य 'द्व्येकयोर्द्विवचनैकवचने' ( पा० १।४।२२ ) 'बहुषु बहुवचनं' ( पा० १।४।२१ ) इत्यनुशासनैकवाक्यतया लादेशतिबादीनां कर्तृकर्मगतैकत्वादिविवक्षायां एकवचनादिविधानपरा व्याख्येया । अनभिहिताधिकारस्मृतिरपि ( पा० २।३।१ ) कर्मादिगतसंख्याऽनभिधाने द्वितीयातृतीयाऽऽदिविधानपरा । 'कर्तरि कृत्' (पा० ३।४।६७) इति स्मृतिस्तु नामार्थयोर्भेदान्वयानुपपत्तिभयेन न कृत्यभिधानपरा किंतु कर्त्रभिधानपरैव । इति दिक् । **मणि.** पृ. १०३–११५.

* **आख्यातविशेषाणां** मन्त्रत्वेन विधिशक्तिः तिरोधीयते इति नायमेकान्तः । दृष्टाश्च मन्त्रगता अपि विधायकाः 'वसन्ताय कपिञ्जलानालभते' इत्यादयः । **वा.** २।१।६।३० पृ. ४३१. * **आख्यातशब्दाः** ये शक्नुवन्ति गुणवचनसहिताः गुणं कर्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुम् । यो हि पाषाणान् भक्षयति, ईषत्कराः तस्य मुद्गशष्कुल्यः इति । **भा.** १०।३।२।८. * प्रवृत्तीनामपि अभिधायकाख्यातवशेन ऐदमर्थ्यं निरूप्यते इति **आख्यातशब्दा**श्चिन्तयितव्याः किमर्थाः पुनः प्रवृत्तीरुपादातुं शक्नुवन्तीति । **वा.** ३।४।४।१२ पृ. ९०१, * **आख्यातशब्दस्य** न व्यक्त्याकृतिवाचिता । १।३।७।१६ पृ. २४७, * **आख्यातशब्दानां** मन्त्रगतानां ब्राह्मणगतानां च येषां शब्दान्तरेण विधिशक्तिरपगच्छति तेषामभिधायकत्वम् । ३।१।६।३१

पृ. ४३३. * **आख्यातशब्दाभिधानेन** नहि प्रधानभूतो गुणभूतो वा अर्थो भवति । यः स्वभावतो गुणभूतोऽर्थः, नासौ आख्यातशब्दाभिधानेन प्रधानभूतो भवति । **भा.** १०।३।१।१०. **आख्यातसमभिव्याहारे** प्रथमाऽन्तार्थ-विशेष्यकबोधनियमं वदन्तः तादृशनियमे मानाभावेन परास्ताः । नहि प्रथमाऽन्तपदार्थस्य प्राधान्यबोधकं स्मृत्यादि मानमस्ति । वाक्यार्थसंसर्गस्य उभयविषत्वेन विनिगमनाऽयोगात् । **मणि.** पृ. १७३. * 'प्रायेणाख्यात-संबन्धि नामेष्टं पारतन्त्र्यभाक् ।' यानि उपादेयार्थानि नामपदानि, तानि तावत् आख्यातपरतन्त्रत्वात् तदनुसारीणि सन्ति तद्वृत्तिं प्रतीक्षन्ते । **वा.** २।२।२।२ पृ. ४६७. * **आख्याताक्षिप्तस्य** कर्तुः गुणभूतत्वम् । सु. पृ. १०९३, * कारकविभक्तिं विना **आख्यातान्वयायोगः** । पृ. ४०१. * **आख्याताभिहिता** संख्या अनभिहितेऽपि कर्तर्येवान्वेति इत्युत्सर्गः इत्युक्तं कर्त्रधिकरणे । **बाल.** पृ. ७९. * आख्याताभिहितभावनाऽविनाभावादेव लभ्यमानः कर्ता नाभिधेयो भवितुमर्हति । **शा.** ३।४।८. * **आख्यातार्थः** धात्वर्थातिरिक्ता कृतिरूपा भावना । आश्रयस्तु आक्षेपलभ्यः । **मणि.** पृ. ११५. * आख्यातार्थः न फलाकाङ्क्षापूरणसमर्थः । स्वयमेव साध्यत्वात् । **वा.** २।१।१।१ पृ. ३७५.

* **आख्यातार्थः** । ( भाट्टरहस्यम् ) पाकाद्यनुकूल-व्यापारसामान्यस्यैव प्रत्ययार्थत्वं, 'पाकं भावयति' इति णिजन्तभूधातुना व्यापारसामान्यवाचकेन विवरणात् । यदपि 'पाकं करोति' इति विवरणं, तदपि करोतेः व्यापारसामान्यवाचकत्वात् अनुकूलमेव । नहि करोतिर्यत्नार्थकः, तथात्वे करोतेः यततेरिव अकर्मकताऽऽपत्तेः । फलव्यधिकरणव्यापारवाचित्वं हि धातोः सकर्मकत्वम् । फलसमानाधिकरणव्यापारवाचित्वं चाकर्मकत्वम् । पचेः फलं विक्लत्तिः ओदनवृत्तिः । व्यापारः चैत्रवृत्तिः इति व्यधिकरणत्वात् सकर्मकः । स्वापस्य फलं सुखं, तत् चैत्रे एव इति द्वयोः समानाधिकरणत्वं इति सः ( स्वपितिः ) अकर्मकः । यद्यदि करोतियतत्योः एकार्थत्वं, तदा एकस्यैवार्थस्य फलव्यधिकरणत्वं फलसमानाधिकरणत्वं च विरुद्धम् । अतः करोतिरपि व्यापारसामान्यवाच्येव । अत एव 'रथो गच्छति' इत्यत्र 'रथो गमनं करोति' इति विवरणमपि संगच्छते । अतः करोतिभावयतिभ्यां विवरणात् आख्यातस्यापि फलोद्देश्यकं प्रकृतधात्वर्थातिरिक्तं व्यापारसामान्यं वाच्यम् । तच्च फलं क्व चिद्धात्वर्थः क्व चित् स्वर्गादि इत्यन्यदेतत् । व्यापारसामान्यस्य च विशेषाकाङ्क्षारूपेतिकर्तव्यताऽऽकाङ्क्षायां प्रयाजादिवाक्यैः विशेषसमर्पणं इति **पार्थसारथिः । वस्तुतस्तु** तत्तत्फलभेदेन तत्तद्व्यापारभेदेन च अनुगतैकलघुभूतशक्यताऽवच्छेदकाभावात् 'पचति, पाके यतते, पाकं करोति' इत्यादिविवरणाच्च आख्यातस्य यत्नत्वमेव शक्यताऽवच्छेदकम् । न च करोतिस्तदनुकूलव्यापारवाची । वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीयवायुसंयोगरूपव्यापारवत्यपि 'नाहं स्पन्दं करोमि, अपि तु वातरोगेण मच्छरीरं स्पन्दते' इति प्रतीत्या करोतेर्यत्नार्थकत्वप्रतीतेः यत्नत्वस्य शक्यताऽवच्छेदकत्वे लाघवाच्च । एवं च 'रथो गमनं करोति' इत्यादौ अनुकूलव्यापारे कृञो लक्षणा इति ध्येयम् । न च भवत्यर्थकर्तृकर्मकत्वाविशेषात् करोतेर्भावयतिपर्यायत्वं, पर्यायत्वाभावेऽपि भावयतिशक्यताऽवच्छेदकव्याप्ययत्नत्वशक्यताऽवच्छेदकत्वेनापि भवत्यर्थकर्तृकर्मकत्वोपपत्तेः । न च करोतेर्यत्नार्थकत्वे यततेरिव अकर्मकताऽऽपत्तिः, सत्यपि यत्नरूपैकार्थत्वे धात्वर्थताऽवच्छेदकफलभेदेन सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तेः । यततेर्हि चैत्रनिष्ठा क्रियैव यत्नसमानाधिकरणं फलम् । करोतेस्तु तद्व्यधिकरणं उत्पत्त्याख्यं धात्वर्थताऽवच्छेदकं फलम् । ततश्च यथैव पचतिगच्छत्योर्व्यापाररूपक्रियैकत्वेऽपि फलभेदादेव व्यवस्था, एवमिहापि व्यापाररूपयत्नैकत्वेऽपि फलाभेदादेव सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तिः । तत् फलं पुनः उभयत्रापि प्रमाणान्तरावगतमेव धात्वर्थोपलक्षणं, धातुवाच्यमेव वा इत्यन्यदेतत् । **वस्तुतस्तु** एतल्लक्षणस्य कौस्तुभोक्तरीत्या अव्याप्त्यादिदोषदुष्टत्वात् अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वमेव सकर्मकत्वं, तदभावश्च अकर्मकत्वं इत्येवं कौस्तुभोक्तलक्षणं युक्तम् । अत्र च आकाङ्क्षा समभिव्याहारात्मिका शब्दधर्मः । तेन सत्यपि अर्थैकत्वे यथा 'घटः कर्मत्वं' इत्यादौ

अनाकाङ्क्षत्वं 'घटं' इत्यादौ साकाङ्क्षत्वं, तथैव यततेः कर्मानाकाङ्क्षत्वं करोतेश्च कर्मसाकाङ्क्षत्वं अविरुद्धम्। पच्यादेश्च स्वरूपेण कर्मसाकाङ्क्षत्वेऽपि अविवक्षादशायां अकर्मकत्वात् अविवक्षाविरहेति। अत एव 'ओदनस्य पच्यते' इति भावेऽपि प्रयोगः। आसादिधातूनां च स्वरूपेण अकर्मकाणामपि मासादिकालयोगे कर्मसाकाङ्क्षत्वात् सकर्मकत्वात् 'चैत्रेण आस्यते मासः' इति प्रयोगोपपत्तिः। एवं एकस्यैव ग्रथधातोः चैत्रनिष्ठव्यापारवाचित्वरूपधर्मपुरस्कारेण कर्मसाकाङ्क्षत्वात् सकर्मकत्वं, पुष्पनिष्ठव्यापारवाचित्वेन कर्मानाकाङ्क्षत्वात् अकर्मकत्वं च द्रष्टव्यम्। अतो यत्नार्थकत्वेऽपि करोतेः सकर्मकत्वाक्षतेः, तेन विव्रियमाणाख्यातस्यापि यत्नार्थकत्वम्। एवं च 'रथो गच्छति जानाति इच्छति प्रयतते' इत्यादौ यत्र यत्नस्य बाधः, तत्र अनुकूलव्यापारस्य आश्रयत्वस्य वा लक्षणा इति द्रष्टव्यम्। 'नश्यति' इत्यादौ प्रतियोगित्वे लक्षणा।

तत् सिद्धं भाक्तमुख्यसाधारण्येन सर्वत्र धात्वर्थातिरिक्ता भावना आख्यातार्थः इति। तस्याश्च शक्तताऽवच्छेदकं करोतीति विव्रियमाणाख्यातत्वम्। अतश्च भवतीत्यादौ करोतिना विवरणाभावेन भावनाऽभावात् धात्वर्थे एव कारकान्वयः, परंपरासंबन्धेन एकत्वान्वयश्च इति प्राञ्चः। वस्तुतस्तु लाघवात् आख्यातत्वमेव शक्तताऽवच्छेदकम्। भवतीत्यादौ आश्रयत्वे लक्षणा। एवं च कारकाद्यन्वये न व्युत्पत्त्यन्तरकल्पनाऽपि। शक्तताऽवच्छेदकं च (आख्यातस्य) न लत्वम्। यथाकथंचिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः। नापि आदेशोपस्थापितलत्वं शानजाद्यादेशोपस्थापितलकारादपि शक्त्या भावनाबोधापत्तेः। नापि तिबाद्यादेशोपस्थापितलत्वं, तथात्वे तिबादीनामनेकेषां प्रवेशात् शक्तताऽवच्छेदकानां अननुगमेन शक्त्यनेकत्वापत्तेः। तत् वरं तिप्त्वादिनैव प्रत्येकं शक्तिः। अत एव तिप्त्वादिना लकारानुपस्थितावपि शाब्दबोधः, अन्यथा अनेकेषु तिबादिषु तावतां शक्तिभ्रमाणां कारणत्वकल्पने गौरवात्। **एतेन** 'आख्यातत्वमेवैकं शक्तताऽवच्छेदकं, तच्च शक्यत्वसंबन्धेन आख्यातपदवत्त्वम्। तद्वत्त्वं च तिबादिषु इति ते शक्ताः' इत्यपि **अपास्तम्**। तिप्त्वादिषु आख्यातपदवाच्यत्वाज्ञानेऽपि तिप्त्वेन पचतीत्यादौ ज्ञानेऽपि भावनाबोधात्। अतः सिद्धं आख्यातार्थो भावनेति। **रहस्य. पृ.** ४९–५२.

* आख्यातार्थः यत्र स्वविधानार्थमुच्चार्यते, तत्र विवक्षितं विशेषणं, यत्र परविधानार्थमुच्चार्यते यथा 'दध्ना जुहोति' इति दधिसंबन्धविधानार्थे होम उच्चार्यते, तत्र द्वितीयपदसंबन्धो नास्ति, वाक्यभेदप्रसङ्गात्। **टुप्.** ६।४।६।२३ पृ. १४४४. * **आख्यातार्थस्य** मुख्यविशेष्यत्वं इति व्युत्पत्तिः। **रहस्य. पृ.** २४. * **आख्यातार्थे** प्रधानभूते संहत्य विशेषणं भवति, परार्थे पुनः वियुज्य इति। उच्यते। प्रधानभूते आकृतिर्गुणो वा तत्संबन्धार्थमुच्यते, तत्रोभयविशेषणविशिष्टः एकस्माद्वाक्यादवगम्यते। तद्विशिष्टं च कृत्वा कृती भवति। अन्यतरविशिष्टं कुर्वन् अश्रुतं कुर्यात्। यत्र पुनः आकृतिलक्षिते द्रव्ये आख्यातार्थः कीर्त्यते, तत्र सर्वेष्वेव तज्जातीयेषु उक्तो भवति। न तत्र एकस्मिन् निर्वृत्ते कृती मन्येत, अपरस्मिन्नपि हि आकृतिलक्षिते तदुक्तमेव। तत्रोक्तं, अप्रतिषिद्धं च किमिति न क्रियेत। आख्यातार्थे पुनः प्रधाने न तस्य आकृतिलक्षितेन संबन्धः। तत्र तदाकृतिकान्तरे अनुपसंह्रियमाणेऽपि कृतमेव प्रधानम्। सगुणं च प्रधानं भवति। न च किं चित् श्रुतं हीयेतेति। तस्मात्तत्र विशेषणं युक्तम्। **भा.** ६।४।६।२३ पृ. १४४१–४२. * **आख्यातार्थत्वेन** करोत्यर्थस्य स्थापितत्वात्। **रहस्य. पृ.** १३७. * **आख्यातार्थविषये** कर्त्रधिकरणं सर्वं द्रष्टव्यम्। **के.**

* **आख्यातिक्यो** विभक्तयः पचति पचतः पचन्ति इत्यादयः। **भा.** २।१।१।४.

* **आख्यानम्**— 'इयं वेदिः' इत्यादि। **भा.** २।१।७।३२.

* **आख्यायिकास्वरूपं च** 'तुग्रो ह भुज्युं०' इति। **भा.** २।१।८।३३.

**आख्याविकारन्यायः**। न च अर्थप्रकरणशब्दान्तरैः विस्पष्टं सामानाधिकरण्यमस्ति। येन केन चित् वर्णसामान्यात् आख्याविकारन्यायेन **गौणत्वेन** वा

तद्विषयत्वं अध्यवसीयेत । वा. २।२।३।३ पृ. ४७६ । सु- विद्वद्वाक्ययोः प्रकृतयागानुवादित्वाभावे पौर्णमास्यमावास्याशब्दयोः तद्वाच्यकालयोगिप्रकृतयागनामत्वानवगतेः, तयोर्वा लक्षणया प्रकृतयागप्रवृत्तावपि दर्शपूर्णमासशब्दयोः तात्पर्यावधारणहेतुसामानाधिकरण्याभावात्, पूर्णमासशब्दस्य किंचिद्वर्णसाम्यात् वाचकपौर्णमासीशब्दोपस्थापनेन आख्याभूतपौर्णमासीशब्दविकारत्वाद्वा ततोऽनन्यत्वेन दर्शशब्दस्य जघन्यवृत्तित्वसाम्यात् गौणत्वशब्दोक्त्या विरुद्धलक्षणया अमावास्याशब्दैकार्थ्यकल्पनात् दर्शपूर्णमासशब्दस्य प्रकृतपौर्णमास्यमावास्याकालयोगियागविषयत्वाध्यवसानं न भवतीत्यर्थः । पृ. ७२५.

☒ **आखुवन्नपिटकन्यायः** । यथा मूषकोऽन्नपिटकं भक्षणीयद्रव्याधारविशेषं पातयितुमेव शक्नोति, तदुद्धर्तुं सम्यक्संपादयितुं वा न शक्नुते इत्यर्थविषयेऽस्य प्रवृत्तिरिति । **साहस्री.** ८०१.

* **आगन्तवः अनुनिर्वाप्याः** श्रुतिविशेषात् । एवं हि श्रूयते 'पशुपुरोडाशमनु निर्वपति' इति । **भा.** १२।३।२।३.

☒ **आगन्तुकानामन्ते निवेशः** इति वा, आगन्तुन्यायः इति वा, आगन्तूनां न्यायः इति वा, आगन्तूनामन्ते निवेशः इति वा न्यायः । एतदर्थक एव 'अन्ते तु बादरायणः' इति न्यायः प्राग्गतः । एतत्प्रतिपादकमधिकरणं तु 'नारिष्ठन्यायः' इति बिन्दौ द्रष्टव्यम् । **के.**

* आगन्तुकानामन्ते निवेशः इति नारिष्ठाधिकरणप्रतिपाद्यः 'अन्ते तु बादरायणः' इति सूत्रेण (५।२।९।१९) उक्तः **न्यायः** । **के.** * अग्निचयने सावित्रादीनां **आगन्तुकानां** दीक्षणीयादिनकृत्यस्य **अन्ते निवेशः** इति प्राप्ते । **भाट्ट.** ५।२।११. * 'आगन्तुकानामन्ते निवेशः' इति **न्यायेन** अदेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रस्वरूपपरत्वं तस्य' इत्यादि विवरणे स्पष्टमित्यलं बहुना । **साहस्री.** ४७५. * यत्र क्रत्वङ्गत्वेन स्मृतौ पदार्थविधिः, न तु स्थलविशेषाम्नानं, तत्रापि आगन्तुकानामन्ते निवेशः इति न्यायेन अन्ते एवानुष्ठानम् । **कौ.** १।३।३।७ पृ. ३५. * आगन्तुकानामन्ते निवेशः इति **न्यायाच्च** असाधारणस्थानहीनानां वरुणादीनां तद्विदानन्तर्यं युक्तम् । **न्यायनिर्णयः** ४।३।३ ब्रसू. * समाजेषु पूर्वं निविष्टेषु केषु चित्, अन्ये अवकाशाभावात् न निविशन्ते, तत्र **आगन्तुन्यायः** प्रवर्तते । **रत्न.** १०।५।१. * यत्र प्राथमिकपदार्थनिवेशो निश्चितः, तत्र **आगन्तुन्यायात्** अन्त्यलोपः । **सोम.** १०।५।१. * समाजेषु समासेषु च ये आगन्तवो भवन्ति, ते पूर्वोपविष्टान् अनुपमृद्यैव निविशन्ते । **भा.** १०।५।१।१, * समाजेषु समासेषु च आगन्तुर्जनो वास्तव्याननुपमृद्यैव निविशते । १०।५।१।४, वास्तव्यैराक्रान्ते देशे आगन्तुर्जनः असंभवात् अन्ते निविशते । १०।५।१।४. * लोकंपृणायाः पूरणार्थत्वेन मध्यमैकचितिविषयाणां इष्टकानां **आगन्तूनां न्यायेन** प्राप्तो निवेशो बाधितुं न शक्यते इति पूर्वः पक्षः । **रत्न.** ५।३।८. * **आगन्तूनामन्ते निवेशः** । दर्शपूर्णमासयोः 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यत्र सामिधेनीषु अधिकानां षण्णामृचां अन्ते निवेशः । **वि.** ५।३।३. * आगन्तूनां स्तोमानां बहिष्पवमाने पर्यासोत्तरकालता । **भा.**५।३।४।७–१२, माध्यंदिनार्भवपवमानयोस्तु साम्नां गायत्र्यादिष्वेव निवेशः । ५।१।५।१३–१४. * पूरणप्रत्ययेन लोकव्यवहारस्य ऐच्छिकत्वेऽपि अपौरुषेये वेदे तदयोगात् आगन्तूनामन्ते निवेशः इति **न्यायेन** अभिघारणोत्तरं पश्चार्धादवदेयं जामदग्न्यानां पञ्चावत्ते इति पूर्वपक्षः । **संकर्ष.** २।२।८.

* **आगमः** सामान्तराणां विवृद्धस्तोमके क्रतौ श्रुतसंख्यासंपत्तये । **भा.** १०।५।६।१५–२५, * **आगमेन** संख्यापूरणं प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानां सामिधेनीविवृद्धौ । १०।५।८।२७–३३, * आगमेन संख्यापूरणे समाम्नायपाठक्रमेणैव ऋचः आगमयितव्याः एकविंशे त्रिणवे त्रयस्त्रिंशे चातिरात्रे । ५।१।६।१३. * **आगमस्य** आनन्त्यात् उपदेशः अर्थवान् । **बृहती.** पृ. २७०. * आगमस्य न्यायविषये तात्पर्याभावात्, तद्विषयत्वाभावेऽपि न्यायविरुद्धार्थाभिधायित्वात् तद्बाधकत्वं भविष्यति (इति चेन्न) तात्पर्यं विना आगमस्य प्रामा-

ण्याभावात् बाधकत्वायोगात् । सु. पृ. १४१८. * तत्र नाम **आगमविरोधो** युक्तः उद्भावयितुं, यत्र न्यायागमौ समानविषयौ भवतः । **वा.** १।४।४।१३ पृ. १२२, * **आगमविरोधे** न्यायः कार्यक्षमो न भवति । ३।४।४। १३ पृ. ९३८.

* **आगामिसंनिहितस्यापि** अतीतसंनिहितस्येव संनिहितवाचिना एतच्छब्देन परामर्शः संभवति । यथा 'अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः' इति । **वि.** २।२।८.

* **आगूर्य** ( संकल्प्य ) सत्रं, अप्रवृत्तस्य विश्वजिद्विधिः । **भा.** ६।४।११।३२–३३.

* **आग्नावैष्णव** एकादशकपालः प्रथमे त्रिसंयुक्ते प्रथमं हविः राजसूये । **भा.** ११।४।१।२, * **आग्नावैष्णव**मष्टाकपालं निर्वपेदध्वरकल्पायां प्रातश्च माध्यंदिने च तृतीयसवने च प्रथमं हविः । ११।२।४।१९. * 'आग्नावैष्णवमेकादशकपालं' इति अध्वरकल्पायां आग्नावैष्णवस्य अग्नीषोमीयपुरोडाशविकारत्वम् । **भाट्ट.** ८।३।१. * 'आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वतीमाज्येन यजेत' इति श्रुतेः मुख्यस्य आग्नावैष्णवस्य विकल्पेन अग्नीषोमीयैन्द्राग्नविकारत्वात् पौर्णमास्यमावास्यातन्त्रप्राप्तेनैव नैराकाङ्क्ष्यात् पाश्चात्यस्य सारस्वतस्य उपांशुयाजविकारत्वहेतुकपौर्णमासतन्त्रनियमा ( म ) प्रवृत्तिः द्वादशाधिकरणे वक्ष्यते । **सु.** पृ. ११७१. * 'आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वतीमाज्यस्य यजेत' इति । तत्र आग्नावैष्णवः ऐन्द्राग्नस्य विकृतिः । ( पूर्वपक्षे स्थित्वा उक्तमिदम् )। **वि.** १२।२।८. * **आग्नावैष्णवस्य** प्रथमं निर्वापः ततो बार्हस्पत्यचरोर्निर्वापः, वैकृतमुख्यक्रमानुरोधात्, अध्वरकल्पायाम् । **भाट्ट.** ५।१।१०. * अध्वरकल्पायामा**ग्नावैष्णवस्य** ऐन्द्राग्नविकारत्वे '. अग्निः प्रत्नेन मन्मना० सोम गीर्भिष्ट्वा वयं०' इति वृधन्वत्यौ आज्यभागयोरनुवाक्ये । अग्नीषोमविकारत्वे तु वार्त्रघ्न्यौ ' अग्निर्वृत्राणि० त्वं सोमासि०' इति । **के.**

* **आग्नावैष्णवद्वादशकपालः** अध्वरकल्पायां दार्शिकैन्द्राग्नविकारः । **बाल.** पृ. १४१.

**आग्नावैष्णवन्यायः** । प्रधानेषु समसंख्येषु धर्मविरोधे प्रथमपठितस्यैव धर्मस्यानुग्रहः ।।

**मुख्यं वा, पूर्वचोदनाल्लोकवत्** । १२।२।८।२३॥

**भाष्यं**— यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः, तत्र मुख्यधर्मः कर्तव्यः । यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेदपराह्णे, सरस्वतीमथाज्यस्य यजते' इति । तत्र मुख्यस्य आग्नावैष्णवस्य कल्पो भवति । कुतः ? पूर्वचोदनात् पूर्वचोदितत्वात् । पाठक्रमेण पूर्वमाग्नावैष्णवः कर्तव्यः । तस्य धर्मा अप्रत्यनीकाः प्राप्नुवन्ति । उत्तरस्य तु पूर्वेण विरुद्धाः । तदुत्तरकाला हि तस्य प्राप्तिः, तद्धर्माणां च । पूर्वस्य कृते कल्पे उत्तरस्य तेनैव कृतार्थत्वात् स्वकल्पो निवर्तते । ऐकाधिकरण्यं त्वेके मन्यन्ते । तेषां पञ्चदशरात्रेऽपि मुख्यधर्मानुग्रह एव ।

**टुप्**— मुख्यं वा पूर्वचोदनात् लोकवत् इति समसंख्ययोः ( प्रधानयोः ) धर्माणां ( विरोधे मुख्यस्य स्वाधर्म्यं अनेन सूत्रेणोच्यते । अल्पभूयोविरोधे भूयसां साधर्म्यं, अल्पे तु तद्धर्मजनितमुपकारं प्रसङ्गादुपजीवन्ति, समसंख्याविरोधे तु मुख्यस्यैव साधर्म्यं इतरे तु प्रसङ्गोपजीविनः, इति यस्मादेवं न्याययोर्विषयभेदः– ) तस्मात् भिन्ने एवैते अधिकरणे, न तु वाशब्दश्रवणमात्रेण ऐकाधिकरण्यं वृत्तिकारान्तरकृतं सम्यक् ।

**तथा चान्यार्थदर्शनम्** । २४ ॥

**भाष्यं**— अन्यार्थोऽपि पूर्वं प्राप्तस्य बलीयस्त्वं दर्शयति । अध्वरस्येव पूर्वमथाग्नेयीज्यते रूपाऽपि ह्येव कर्मवदग्निकर्मेति । ( बिवलकरीये तु– अध्वरस्य पूर्वमथाग्नेः उपायि ह्येतत् कर्म यदग्निकर्म इति– इति पाठः ) इदं चापि, यथा वै पूर्वावसायिनो जघन्यावसायिनं नोन्नीयन्तै ( नेनीयन्ते इति बिवलकरीये ) नावसास्यन्तीत्येवमेवैतत् इति । ( अत्र 'अध्वरस्येव' इत्यारभ्य 'ग्निकर्म' इत्यन्तं श्रुतिवाक्यम् । 'इति । इदंचापि' इति भाष्यपदानि । 'यथा' इत्यारभ्य 'मेवैतत्' इत्यन्तं श्रुतिवाक्यं, 'इति' इति भाष्यपदम् । अथ ५।२।९।२० सूत्रभाष्ये 'अध्वरस्य पूर्वमथाग्नेरुपप्रैत्येतत् कर्म, यदग्निकर्म' इति मुद्रयित्वा 'पश्चात् समाम्नातस्य पश्चात् प्रयोगं

दर्शयति ' इति भाष्यं मुद्रितम् । १०।३।४।२९ सूत्रभाष्ये तु ' अध्वरस्य पूर्वमथाग्नेः, उपाग्नि ह्येतत् कर्म यदग्निकर्म ' इति वाक्यं, भाष्यं च ' पूर्वमध्वरस्य, अथाग्नेः इति व्यपदेशः समुच्चये अवकल्पते नासति विशेषे ' इति मुद्रितम् । सर्वथाऽपि एतच्छ्रुतिवाक्यपाठः समीचीनो दुर्निरूपः । **के.** )

शा— यत्र समसंख्यानां धर्मप्रतिषेधः, तत्र कस्य स्वधर्मलाभः, कस्य वा अन्यधर्मोपजीवनं इति चिन्तायां अनियमप्राप्तौ मुख्यस्य स्वाधर्म्यमित्याह । तस्य हि धर्माः असंजातविरोधावस्थायां निर्विघ्नमवगम्यते, जघन्यस्य तु तद्विरुद्धत्वान्न धर्मः ग्रहीतुं शक्यते । न चात्र अवगतस्य त्यागे, अनवगतसंग्रहे च किं चित् कारणं भूयस्त्वं प्रधानधर्मत्वं वाऽस्ति । तस्मादत्र मुख्यस्य स्वाधर्म्यं इति । किमिहोदाहरणं ? अध्वरकल्पायां श्रूयते ' आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे, सरस्वतीमाज्यस्य यजेत ' इति । तत्र आग्नावैष्णवस्य औषधद्रव्यकत्वद्विदेवत्यत्व-द्वादशकपालत्वैः ऐन्द्राग्नविकारत्वात् दार्शिकं तन्त्रं, आज्यस्य तु उपांशुयाजविकृतित्वात् पूर्णमासधर्मापेक्षा । तत्र पूर्ववत् आज्यभागमन्त्रयोर्विरोधे मुख्यधर्मत्वात् वृधन्वत्यौ ( अग्निः प्रत्नेन मन्मना० सोम गीर्भिष्ट्वा० ) ग्रहीतव्ये । ऐकाधिकरण्यं तु एकीयमतत्वेन उपन्यासात् ( ' ऐकाधिकरण्यं तु एके मन्यन्ते ' इति भाष्ये ) अन्याय्यत्वाच्च परमतमेव । नहि अल्पवैगुण्ये संभवति भूयोवैगुण्यं प्रयोगवचनः क्षमते, अवगतमपि कारणान्तरवशात् बाध्यते एव । यथा उपरितने अधिकरणे मुख्यमपि दीक्षणीयाधर्मत्वं हित्वा प्रधानधर्मत्वबलेन सुत्याकालः एवानुग्रहीष्यते, तथा भूयस्त्वेनापि । तस्मात् द्वे एवाधिकरणे ( विप्रतिषिद्धधर्माणां० इति, मुख्यं वा० इति च ) ।

**सोम**— पूर्ववदिह भूयस्त्वस्य नियामकस्याभावात् अनियमः इत्युत्थितेः ( प्रत्युदाहरणं ) **संगतिः** । **सूत्रार्थस्तु**– मुख्यं अनुग्राह्यधर्मकं स्यात् तस्य पूर्वचोदितत्वेन तदीयधर्मस्य प्रथमावगतत्वात् । लोकवत् प्रथमावगतस्यैव लोके परिग्राह्यत्वादिति ।

**वि**– ' आग्नावैष्णवसारस्वतयोरिच्छाऽथ मुख्यगम् ।, आद्यो नियामकाभावा, दन्त्यः प्राथम्यतो भवेत् ॥ '

**भाट्ट**— यत्र तु समसंख्याकयोर्विरोधः, यथा अध्वरकल्पायां ' आग्नावैष्णवं द्वादशकपालं सरस्वत्याज्यभागाऽपराह्णे ' इति । अत्र हि द्वादशकपालत्वात् आद्यः ऐन्द्राग्नविकारः, तस्यापि वैकल्पिकद्वादशकपालत्वात् । सरस्वती तु पूर्ववत् । तत्राज्यभागाभिमर्शनमन्त्रयोरनियमः, परस्य वा प्राबल्यम् । **इति प्राप्ते**, सत्यपि भिन्नवाक्यत्वे उभयत्र वा अतिदेशकल्पनाऽवश्यंभावे, अन्यतः उपकारलाभनिमित्तस्य प्रसङ्गस्य आद्ये असंभवेन अन्त्ये एव पुरःस्फूर्तिकत्वात् आद्ये एव धर्मानुग्रहात् तन्त्रित्वं, अन्त्ये च तद्बाधात् प्रसङ्गः । वृत्तिकारान्तरैः भूयस्त्वं न मुख्यत्वस्यापवादकं, किंतु पशुकामेष्ट्यामेव भूयस्त्वेन पूर्वपक्षमभिधाय मुख्यत्वेन सिद्धान्तयित्वा ऐकाधिकरण्येन सूत्रद्वयं व्याख्येयमित्युक्तं, तत् लोके प्रथममल्पपुरुषावरुद्धस्यापि दुर्गस्य पश्चादागतैरपि बहुभिर्बाधदर्शनादुपेक्षितम् ।

**मण्डन**—' समेषु मुख्यधर्मः स्यात् । '

**शंकर**— ' मुख्यं स्वधर्मकं साम्ये । '

* **आग्नावैष्णवन्यायेन** इष्टेः प्रथमपठितत्वात् दीक्षणीयेष्टिः पर्वणि अनुष्ठेया, तदनुसारेण दिनान्तरे सुत्याया उत्कर्षः इति पूर्वपक्षः । **वि.** १२।२।९. * **आग्नावैष्णवादीनां** राजसूयगतानां पृथग्दक्षिणायुक्तानां अङ्गानि न तन्त्रम् । **भा.** ११।४।१।१--३.

* **आग्निमारुतं** शस्त्रं सोमाङ्गम् । एकादश अनुयाजाश्च सवनीयपश्वङ्गम् । नानयोरङ्गाङ्गिभावः । तस्मात् ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' इति कालोपदेशार्थः संयोगः । **वि.** ४।३।१५. * **आग्निमारुतादूर्ध्वं** अनुयाजादिकाण्डमुत्कृष्यते, अग्नीषोमीये पशौ च प्रयाजान्तकाण्डमपकृष्यते । **भा.** ५।१।१२।२३–२४.

**⌛ आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण उत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतापदानामपि उत्कर्षः ॥**

**उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः, पश्वनङ्गत्वाद् यथा निष्कर्षेऽनन्वयः । ११।३।१६। ५५ ॥**

**भाष्यं**— अनुयाजा उत्कृष्यमाणाः सूक्तवाकमप्युत्कर्षन्ति । तत्र सवनीयानां पुरोडाशानां देवताः संकीर्त्यन्ते 'भृज्जन्निन्द्राय हरिवते धानाः, पूषण्वते करम्भं' इत्यारभ्य । तासामुत्कर्षः, नेति संदेहः । किं प्राप्तम् ? उत्कर्षे सूक्तवाकस्य, न सवनीयदेवतानामुत्कर्षः । कुतः ? पश्वनङ्गत्वात् । अनुयाजाः पशोरङ्गमुत्कृष्यमाणाः पश्वङ्गमेवोत्क्रष्टुमर्हन्ति, न सोमाङ्गम् । सोमाङ्गं च सवनीयदेवताः । तस्मात्तासामनुत्कर्षः । यथा निष्कर्षे अनन्वयः । यथा पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवतानां निष्कर्षे अमावास्यादेवतानामनन्वयः, इतरत्र चेतरासाम् । तत् कस्य हेतोः, इतरेतरस्यानङ्गत्वात् । तद्वदिहापि अनुत्कर्षः ।

**टुप्**— सवनीयानां या देवताः, ताः सूक्तवाकोत्कर्षेऽपि नोत्कृष्यन्ते । पश्वनङ्गत्वात् सवनीयानाम् । यथा पौर्णमास्यां प्रयुज्यमानः सूक्तवाकः अमावास्यादेवतां नोत्कर्षति, एवमिहापि ।

**वाक्यसंयोगाद्वोत्कर्षः, समानतन्त्रत्वादर्थलोपादनन्वयः । ५६ ॥**

**भाष्यं**— अथवोत्कर्ष एव न्याय्यः । कुतः ? वाक्यसंयोगात् । सूक्तवाकस्य एकदेशभूतानि सौमिकदेवतासंकीर्तनानि, 'भृज्जन्निन्द्राय हरिवते धानाः, पूषण्वते करम्भं, सरस्वतीवते परिवापं अयं यजमानः' इति संबध्यते । तथा, 'इन्द्राय हरिवते धानाभिः, पूषण्वते करम्भेण, सरस्वतीवते परिवापेण सूपस्था अद्य देवो वनस्पतिरभवत्' इति संबध्यते । तान्येतानि सूक्तवाकस्य मध्ये उच्यमानानि अर्थवन्ति । निष्कृष्टानि केवलानि अनर्थकानि भवन्ति । न च सवनीयानां सूक्तवाकोऽस्ति, यत्रैतान्युच्चार्येरन् । पाशुकः एव सूक्तवाकः तेषां प्रसङ्गसिद्धः । अतस्तत्र एतद्देवतानां संकीर्तनं युक्तम् । स चोत्कृष्यते । तस्मात्तासामप्युत्कर्षः । आर्षं चैवमनुग्रहीष्यते ।

यत्तु 'यथा निष्कर्षेऽनन्वयः' इति, समानतन्त्रत्वादर्थलोपादनन्वयः । समानतन्त्रौ दर्शपूर्णमासौ । तयोः साधारणं सूक्तवाकाम्नानम् । तद्यथार्थं निविशते । अर्थलुप्तं च अमावास्यादेवतानां पौर्णमास्यां संकीर्तनं, इतरासां चेतरत्र । यत्कारणं, या इष्टा देवतास्ताः संकीर्तनेन प्रत्यवेक्ष्यन्ते, इयमपीष्टा न का चिदन्तरितेति । तस्मात्, यथा निष्कर्षेऽनन्वय इत्यदृष्टान्तः ।

**टुप्**— प्रस्तरस्तावत् प्रासङ्गिकः एषाम् (सवनीयानाम्) । यदर्थश्च प्रस्तरः, तदर्थमेव (तत्संस्काररूपं) प्रहरणम् । प्रहरणाङ्गं (च) सूक्तवाकः । तस्मात् सूक्तवाकोऽपि परार्थः (पश्वर्थः) । सूक्तवाकमध्ये (च) सवनीयदेवतापाठात् तेन सह एकवाक्यता (तासामवगम्यते) । अपकर्षे (च) एकवाक्यता बाध्येत । अपिच अपकृष्टानि साकाङ्क्षत्वादनर्थकानि भवेयुः । न च तन्त्रपदानां (अग्निमद्य होतारमवृणीत इत्यादीनां) अपकर्षः (लभ्यते), येन निराकाङ्क्षीभवेयुः, परार्थत्वात् सूक्तवाकस्य । पौर्णमास्याममावास्यायां च तन्त्रेण (साधारण्येन) सूक्तवाकः (विनियुक्तः प्रकरणाविशेषात्) तत्रापकर्षो युक्तः । इह तु उत्कर्षे सूक्तवाकस्य (तन्त्रपदानामपि उत्कर्षात्) उत्कृष्टा एव सवनीयानां देवताः प्रकाशयिष्यन्ते ।

**शा**— पूर्वं प्राजापत्यप्रचारस्य उत्कर्षे अभिहिते प्रसङ्गात् सवनीयपुरोडाशदेवतापदानामपि उत्कर्षः प्रतिपाद्यते इति संबन्धः (संगतिः) । १५.

**सोम**— **सूत्रे** 'यथा निष्कर्षे अनन्वयः' इत्यस्य 'यथा पौर्णमास्यमावास्ययोः तत्तद्देवतापदानां निष्कर्षे सति इतरदेवतापदानामनन्वयः तद्वत्' इत्यर्थः । १५.

**वि**— 'सवनीयपुरोडाशे देवोत्कर्षो न विद्यते । अस्ति वा, पश्वनङ्गत्वान्न, न्वयाभावतोऽस्ति सः ॥' तस्मादुत्कर्षोऽस्ति ।

**भाट्ट**— सवनीये पशौ प्राकृतस्य सूक्तवाकस्य विकृतः पाठः समाम्नातः । स चानूयाजोत्कर्षात् आग्निमारुतादूर्ध्वमुत्कृष्यते इति स्थितम् । तत्र च सवनीयपुरोडाशदेवता 'भृज्जन्निन्द्राय हरिवते धानाः' इत्यादिना संकीर्त्यते, हरिवदादिपदैश्च तद्यागदेवता इन्द्र एव लक्षणया

प्रकाश्यते । यद्यपि आपस्तम्बाद्युक्तरीत्या निर्वापे हरिवदादीनामप्युद्देशः प्रतीयते, तथापि त्यागवेलायां इन्द्रोद्देशस्यैव वाचनिकत्वाल्लक्षणया सूक्तवाके तत्प्रतिपादनं नायुक्तम् । पाशुकं तन्त्रं सवनीयेषु पुरोडाशेषु प्रसज्यते इति वक्ष्यते । तत्रोत्कृष्यमाणे सूक्तवाके पुरोडाशदेवतापदानामप्युत्कर्षो, न वेति चिन्तायां, पुरोडाशदेवतापदानां पश्वनङ्गतया पाशुकानूयाजैर्बद्धक्रमत्वाभावेन दाक्षिणाग्निकहोमवदनुत्कर्षात् तानि तावत् सवनीयपुरोडाशेडाभक्षणोत्तरकालं पठनीयानि । अतश्च तदेकवाक्यताऽऽपन्नानां तन्त्रपदानामपि तद्गुणत्वात् तत्र पाठावश्यकता । ततश्च तेषां पशुदेवतापदं प्रत्यपि गुणत्वादावृत्तिः **इति प्राप्ते**, तन्त्रपदापेक्षितत्वादेषां न तावत् केवलानां प्रयोगाशङ्का । तदनुरोधेन तन्त्रपदावृत्तिकल्पना तु पुरोडाशविधेस्तन्त्रपदांशे पशुप्रयुक्तानामेवोपकारलाभेन प्रयोजकशक्तिकल्पनागौरवापत्तेरयुक्तैव । नहि प्रधानभूतपुरोडाशदेवतापदानां अनूयाजोत्तरकालं प्रयोगे किंचिद्वैगुण्यम् । इडाभक्षणोत्तरकालत्वस्य प्रकृतिदृष्टस्य इहाप्यबाधात् । अव्यवहिततदानन्तर्यस्य च प्रकृतौ अप्यसत्त्वात् । प्रधानप्रत्यासत्तिस्तु बाध्यमानाऽपि प्रयोजकशक्तिकल्पनागौरवभिया नैव दुष्यति । अतस्तेषामप्युत्कर्षः । १५.

**मण्डन—** 'उत्कृष्येरन् देवताः सूक्तवाके ।'

**शंकर—** 'सूक्तवाकेन्द्र उत्कृषिः ।' इन्द्रे उत्कृषिः उत्कर्षः ।

* आग्निमारुतादूर्ध्वं सवनीयपुरोडाशीयपिष्टलेपफलीकरणहोमयोः पश्वर्थानुयाजैः सह नोत्कर्षः । **वि.** ५।१।१५.

* **आग्निवारुण्या इष्टेः** क्रमे अतीते सोमारौद्राणामनागते मनोर्ऋचः, ताः सामिधेनीषु धाय्या इत्युच्यन्ते । तथा 'पृथुपाजाः' 'सं सबाधो' इति द्वे धाय्ये कल्प्येते । **भा.** ३।२।७।२०.

* **आग्नीध्रः** ( ऋत्विक् ) अग्निं 'उक्षान्नाय वशान्नाय' इति पुनरभ्युन्नीते द्वितीये होमे यजति । **भा.** ३।२।१२।३०, * आग्नीध्रः प्रैषार्थः, आध्वर्यवः प्रैषः । ३।८।१२।२४, * आग्नीध्रः समानत्वादुत्करदेशस्थ ( वरुणप्रघासेषु उत्तरवेदिद्वयेऽपि ) तत्रावस्थित एव प्रत्याश्रावणेन उभौ कर्तारौ ( अध्वर्युं प्रतिप्रस्थातारं च ) अनुगृह्णाति । अतोऽसौ न भिद्यते । ११।२।१०।४५, * **आग्नीध्रं** ( मण्डपं ) आग्नेय्या उपतिष्ठते प्रकृतया, न तु दाशतयीस्थया, ज्योतिष्टोमे । ३।२।८।२१-२४. * **आग्नीध्रात्** ( अग्नेः ) धिष्ण्यान् विहरन्ति ( सोमे ) । **संकर्ष.** ३।२।१५. * **आग्नीध्रमण्डपसंमर्शनं** हिरण्यकेशिनः 'अयं नो अग्निः' इत्यनया ऋचा कुर्वन्ति, बौधायनाश्च 'अग्निर्मूर्धा' इत्यनया । **मीन्या.** * **आग्नीध्रमण्डपोपस्थानं** प्रकृतया 'अग्न आ याहि वीतये' इत्याग्नेय्या ऋचैव कर्तव्यम् । न दाशतयीस्थया कया चित् । **वि.** ३।२।८.

**आग्नीध्रशालान्यायः** । ( तात्स्थ्यात् ताच्छब्द्यम् ) ननु आग्नीध्रशालान्यायेन शालास्थितऋत्विगादीनामपि आग्नीध्रशब्दवत् प्रधानेऽपि आत्मशब्दप्रयोगदर्शनात् । **श्रीकर.** १।१।७ ब्रसू.

* **आग्नीध्रीयः नाम अग्नि**र्ज्योतिष्टोमे । स च आग्नीध्रीये मण्डपे भवति । **के.** * **आग्नीध्रीये (मण्डपे)** प्राचीनवंशगतो वह्निर्वैसर्जनहोमादूर्ध्वं प्रणेतव्यः । **वि.** ५।१।१४. * **आग्नीध्रीयप्रणयनं** औत्तरवेदिकाग्निप्रणयनोत्तरम् । ( सोमे ) । **संकर्ष.** ३।२।१४, * **आग्नीध्रीयाग्निः** यज्ञतन्वादिहोमाधिकरणम् । ३।२।१४, * **आग्नीध्रीयाग्नेः** अपि आहवनीयैकदेशत्वमेव । ३।२।१४, * आग्नीध्रीयाग्नेः शालामुखीयादेव प्रणयनं नौत्तरवेदिकात् । ३।२।१४.

* **आग्नेयः** अग्निष्टोमः । **भा.** ३।६।७।१८. * **आग्नेयः** इति यो निरपेक्षाग्निदेवत्यः सोऽभिधीयते । न च द्विदेवत्ये निरपेक्षोऽग्निर्देवता । तेनायं तद्धितो नाग्नीषोमादिगताग्निशब्दादुत्पद्यते, इति न तदर्थस्य देवतात्वमाह । यत्र तु असौ निरपेक्षो देवता, स शक्यः आग्नेय इति वक्तुम् । **वा.** ३।१।१५।२७. * 'आग्नेयः कृष्णग्रीवः' ऐकादशिनेषु प्रथमः पशुः । **वि.** ८।१।७, * 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णः श्यामः' इत्याद्येकादशिन्यां देवतानामनेकत्वात् 'मेषपतिभ्यो मेषं' इत्येकवचनान्तमन्त्रस्य ऊहः । ९।३।१४. * आग्नेयः पशुः अग्निष्टोमे आलभ्यः सवनीयः । **भा.** ३।६।७।१८, * आग्नेयः पुरोडाशः

उभयत्र विहितः ‘ यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ’ इति । १०।८।१४।४३, * आग्नेयः पुरोडाशः दर्शपूर्णमासयोः किं सर्व एव अग्नये दातव्यः शेषयितव्यं वा किंचित् इति संदेहे शेषयितव्यं इति सिद्धान्तः । ३।४।१४।३७-४१. * ‘ **आग्नेयो वै ब्राह्मणः** ’ अत्र आग्नेयशब्दः ब्राह्मणस्य स्तावकः । प्रजापतिमुखजन्यत्वं अग्निगुणो ब्राह्मणे विद्यते । **वि.** १।४।१४. * आग्नेयो वै ब्राह्मणः इत्यादौ आग्नेयादिशब्दाः अर्थवादाः, न गुणविधयः । **भा.** १।४।१२-२। २३-२. * ‘ आग्नेयो वै ब्राह्मणो देवतया ’ इति वचनेन ब्राह्मणस्य कृत्स्नोत्कर्षो विधीयते, तस्य सोमपूर्वत्वमेव इति पूर्वपक्षः । तेन वचनेन दर्शपूर्णमासैकदेशस्य पौर्णमासीमात्रस्य उत्कर्षो विधीयते, अथवा पौर्णमासैकदेशस्य अग्नीषोमीयहविषः एव उत्कर्षो विधीयते । उभयथाऽपि ब्राह्मणस्य इष्टिपूर्वत्व-सोमपूर्वत्वयोर्विकल्पः इति सिद्धान्त्येकदेशिपक्षः । कर्मान्तरमेवेदं ऊर्ध्वं सोमात् ब्राह्मणस्य विधीयते, ततश्च ब्राह्मणस्य विकल्प एव इति सिद्धान्त्येकदेश्यन्तरपक्षः । एकस्यैव हविषः उत्कर्षो विधीयते ब्राह्मणस्यापि विकल्पः इति सिद्धान्तः । **रत्न.** ५।४।५।१५-१६. * ‘ **आग्नेयोऽष्टाकपालः** ’ इतीयं चोदना नीवारैरपि संपादयितुं शक्यते । **वा.** ६।३।४।१५, * ‘ आग्नेयोऽष्टाकपालो भवति ’ इत्यष्टाकपाले द्रव्यमाक्षिप्तम् । तत्र व्रीहयो नियम्यन्ते । १०।८।८। १६ पृ. २०६९, * ‘ आग्नेयोऽष्टाकपालो भवति ’ इत्ययं यागः फले चोदितः । यदा व्रीहयो न सन्ति प्रक्रान्ते कर्मणि, तदाऽपि यागचोदना द्रव्यमाक्षिपति । द्रव्येण विना यागो न निर्वर्तते । ( इति प्रतिनिर्धिर्शायते ) । १०।८।८।१६ पृ. २०७०. * ‘ आग्नेयोऽष्टाकपालो भवति ’ इत्यादौ विधिं प्रकल्प्य तच्छेषत्वेन ‘ अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् ’ इत्यादेः अर्थवादस्यान्वयः । **सु.** पृ. ४९. * ‘ **आग्नेयाः** ( प्रयाजाः ) इति तु स्थितिः, भक्तिमात्रमितरत् ’ इति स्मृतिः । ( कल्पसूत्रम् ) **संकर्ष.** २।२।२. * **आग्नेयं** काण्डं ‘ युञ्जानः प्रथमं मनः ’ ( तैसं. ४।१।१ ) इत्यारभ्य पठितम् । **वि.** ३।३।११. * ‘ आग्नेयं पयः ’ इत्यत्र सांनाय्यधर्माणामतिदेशः हविःसामान्यस्य देवतासामान्यात् बलवत्त्वात् । **भा.** ८।१।१७।३२-३४. * **आग्नेयं** ( द्वितीयान्तं ) अवदाय हुत्वा अग्नीषोमीयमवदाय जुहुयात् । अवदानादिप्रदानान्तः एकः पदार्थः । **वि.** ५।२।४. * ‘ आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं पुरोधायां ( पुरोहितत्वे ) स्पर्धमानः ’ इत्येकत्वेऽप्यग्नेर्देवतायाः कर्मभेदात् भेदेनावाहनं क्रियते । **भा.** ११।४।७।२७. * ‘ आग्नेयं चतुर्धा करोति ’ ‘ पुरोडाशं चतुर्धा करोति ’ इति क्रत्वर्थं उपसंहारविधिः । **बाल.** पृ. १७. * ‘ आग्नेयं चतुर्धा करोति ’ ‘ पुरोडाशं चतुर्धा करोति ’ इत्यादौ भिन्नवाक्यस्थलेऽपि गुणानुरोधेन प्रधानयोः अभेदान्वयः ( यत् पुरोडाशं चतुर्धा करोति इति, तत् आग्नेयं चतुर्धा करोति इति उपसंहारोऽत्र, तेन आग्नेयं इतिपदस्य पुरोडाशं इति पदस्य चाभेदेन अन्वयः । के. ) **भाट्ट.** ३।१।७. * **आग्नेयमष्टाकपालं** निर्वपति, सौम्यं चरुं, वारुणं दशकपालं, सारस्वतं चरुं, आग्नावैष्णवमेकादशकपालं ’ इत्यस्यामिष्टौ निर्गुणाग्निदेवत्ये आग्नेयकर्मणि ‘ आयुर्दा अग्ने हविषो जुषाणः ’ इति सगुणाग्निदेवत्ययाज्यायाः विनियोगः । **सोम.** १।२।१ पृ. ५. * ‘ आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः ’ इदं कर्मान्तरं न तु दार्शपौर्णमासिके आग्नेये फलविधिः । **भा.** २।३।१२।२५. **आग्नेयस्य** पुरोडाशस्य चतुर्धाकरणं नाग्नीषोमीयादेः । **वि.** ३।१।१६. * आग्नेयस्य पुरोडाशस्य पूर्वं, पश्चात् दध्नः अवदानाभिघारणासादनानि यथाप्रदानम् । **भा.** ५।४।२।२-४, * आग्नेयस्य पुरोडाशस्य प्रथमभाविनो विकृतिः बार्हस्पत्यचरुः । उपांशुयाजस्य पश्चाद्भाविनो विकृतिः सारस्वतमाज्यम् । अतः अतरङ्गत्वात् चरुधर्मा एव पूर्वमनुष्ठेयाः अध्वरकल्पायाम् । **वि.** ५।१।१०, * आग्नेयस्य पुरोडाशस्य प्रथममनुष्ठानं, तत उपांशुयाजोत्तरमग्नीषोमीयस्य, ब्राह्मणपाठात् मन्त्रपाठस्य बलीयस्त्वात् । ५।१।९. * आग्नेयस्यैव ( पशोः ) प्रथममुपाकरणं न त्वग्नीषोमीयस्य साद्यस्के । **वा.** ५।१।६।१३. * **आग्नेयानां** सूक्तानां सांवत्सरिके चयने इष्टकोपधाने विनियोगः । तेषां चयने

एव विनियोगः, न तु उपस्थाने। **संकर्ष**. २।१।३२,३४, ३६, तत्रापि ब्रह्मवर्चसकामस्य गायत्रीछन्दस्कान्येव, वीर्यकामस्य त्रैष्टुभान्येव, पशुकामस्य जागतान्येव, नेतरच्छन्दस्कानि। २।१।३७. * **आग्नेये** अनुवाक्या 'अग्निर्मूर्धा दिवः०' इति दर्शपूर्णमासयोः। **भा.** ८।१।१६।३१. * **आग्नेयकपालानि** सर्वाण्युपधाय अग्नीषोमीयस्योपधानम्। **सोम.** ५।२।३.

**आग्नेयचतुर्धाकरणन्यायः**, आग्नेयचतुर्धाऽधिकरणं, आग्नेयचतुर्धाऽधिकरणन्यायः इत्येकमेवेदम्। तच्च 'उपसंहारन्यायः' इति बिन्दौ द्रष्टव्यम्। (३।१ १५।२६) **के.**

* **'आग्नेयत्वं** तथा न स्यात् द्विदेवत्योपलक्षणम्।' (आग्नेयं चतुर्धा करोति इत्यत्र)। **वा.** ३।१।१५।२४. * **आग्नेयधर्मस्यैवा**तिदेशः सौर्ये चरौ। **भा.** ८।१।१६।२७-३१, * **आग्नेय(पुरोडाश)धर्माणां** शुचिदेवकादौ अतिदेशः, एकदैवतत्वात्। ८।३।१।१-२, * **आग्नेयधर्मातिदेशः** कृष्णलचरौ। ८।१।१८।३५-३९.

**'आग्नेयपशुद्वयन्यायः ॥**

**व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम्। ११।१।११।६८ ॥**

**भाष्यं**— क्व चिच्छ्रूयते, 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः' इति। तत्र विचार्यते किं कृष्णग्रीवस्य प्रथमस्य तृतीयस्य च सह प्रदानं कर्तव्यं, अथवा भेदेनेति। किं प्राप्तम्? व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम्। व्याख्यातं प्रयोगे यौगपद्यमिति। 'तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्यात्'। इति (११।१।१०।५६)। इह तु कृष्णग्रीवयोरेकदेवतत्वात् सह प्रयोगे क्रियमाणे न गृह्यते विशेषः। सहक्रिया चैकफलत्वात् प्राप्ता। तस्मात् सहप्रदानम्।

**भेदस्तु कालभेदाच्चोदनाव्यवायात्, स्याद् विशिष्टानां विधिः प्रधानकालत्वात्। ६९॥**

**भाष्यं**— भेदस्तु प्रदानस्य युक्तो, न तन्त्रता। कुतः? कालभेदात्। कथं कालभेदः? चोदनाव्यवायात्। सौम्यचोदनया व्यवहिते कृष्णग्रीवचोदने। तत्र पाठक्रमादेकस्य पुरस्तात् सौम्यस्य प्रयोगः प्राप्तः, एकस्योत्तरत्र। तयोर्यदि सह प्रदानं क्रियेत, क्रम उपरुध्येतान्यतरस्य। पुरस्तात् क्रियायामुत्तरस्य, उपरिष्टात् पूर्वस्य। तस्मात् भेदेन प्रयोगः।

**तथा चान्यार्थदर्शनम्। ७०॥**

**भाष्यं**— 'अभितः सौम्यमाग्नेयौ भवतः' इति।

**विधिरिति चेन्न, वर्तमानापदेशात्। ७१॥**

**भाष्यं**— अथ विध्यभिप्रायं कल्प्येत, श्रुत्यर्थमुत्सृज्य लक्षणार्थः परिगृहीतः स्यात्। तस्मात् प्रदानभेदः।

**सोम**— पूर्ववत् तन्त्रं इत्युत्थानात् **संगतिः**।

**वि**— 'कृष्णग्रीवद्वयं तन्त्रं पृथग्वा, देवतैक्यतः। तन्त्रं, सौम्यव्यवायेन कालभेदात् पृथग् भवेत्॥'

**भाट्ट**— 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं, पुरोधायां स्पर्धमानः' इति श्रुतम्। अत्रालभेतपदानुषङ्गेण वाक्यत्रयेण यागत्रयोत्पत्तिं विधाय चतुर्थे तानालभेतेत्यध्याहारानुषङ्गाभ्यां साहित्येन सर्वेषां फलसंबन्धः, न तु स्पर्धमानपदानुषङ्गेण वाक्यत्रयमेव अङ्गीकृत्य प्रत्येकं फलसंबन्धः। तथात्वे द्वितीयाग्नेयवाक्यस्य वैयर्थ्यापत्तेः। अतश्च त्रयाणां पशुयागानामेकप्रयोगतासिद्धौ किमाग्नेयद्वयस्य संप्रतिपन्नदेवताकत्वात् सांनाय्यवत् तन्त्रेण प्रधानं, उत पाठक्रमानुरोधेनावृत्त्येति **चिन्तायां**, एकप्रयोगविधिना साङ्गानां प्रधानानां यौगपद्यावगतौ यत्र विभिन्नदेवताकस्थले तदसंभवः, तत्र क्रमापेक्षायां पाठादिना क्रमनियमेऽपि यत्र संप्रतिपन्नदेवताकस्थले यौगपद्यसंभवः, तत्र क्रमापेक्षाऽभावेन पाठादिना तन्नियमायोगात् सांनाय्यवत् तन्त्रेणैवानुष्ठानम्। न च प्रयोगविधौ एकेन पदेन अनेकेषामुपादानात् दण्डचक्रादिवत् समुच्चयरूपसाहित्यावगतावपि एकक्षणवृत्तित्वरूपयौगपद्ये प्रमाणाभावः, फलानि सन्तीत्यादौ लोके एकप्रयोजनकत्वस्येव एकदेशकालवृत्तित्वस्यापि उत्सर्गेण प्रतीतेरानुभविकत्वात्। अत एव देशे वृत्तौ कालस्यावच्छेदकता, काले वृत्तौ देशस्येति प्रामाणिकाः। (प्रमाणप्रतिपादनपरा नैयायिकाः - **के.**) अतश्च प्रयोगविधिना एकक्षणवृत्तित्वरूपयौगपद्यस्यापि बोधात् युक्तं तन्त्रेणानुष्ठानम्। न च एवमपि आग्नेय-

योस्तन्त्रत्वसंभवेऽपि सौम्येन तयोः क्रमावश्यंभावात् आद्यस्य सौम्यप्राक्कालत्वं, अन्त्यस्य तदुत्तरकालत्वं च तन्त्रानुष्ठाने बाध्येतेति **वाच्यम्**। पूर्वपदार्थे उत्तरपदार्थ-प्राक्कालत्वस्याङ्गत्वे प्रमाणाभावात्। सौम्ये आद्याग्नेयो-त्तरत्वरूपमङ्गं तु आद्याग्नेयेन सह उत्तरस्य तन्त्रत्वेऽपि, सौम्यस्य आद्याग्नेयोत्तरत्वाबाधात् न विरुध्यते। उत्तरा-ग्नेये सौम्योत्तरत्वं तु पयोयागे दधियागोत्तरत्ववत् नैव प्रामाणिकम्। न चैवं आग्नेयाज्यभागेनापि प्रधानाग्ने-यस्य तन्त्रताऽऽपत्तिः, तत्र याज्याऽनुवाक्याभेदेन भेदा-ङ्गीकारात्। **इति प्राप्ते**, द्वितीयाग्नेये सौम्योत्तरत्वस्य द्वितीयाग्नेयोत्तरभाविपदार्थे च द्वितीयाग्नेयोत्तरत्वस्य च प्रामाणिकस्य बाधापेक्षया प्रयोगविध्यवगतस्यैकस्य यौगपद्य-स्यैव त्यागौचित्यात् नाग्नेयद्वयस्य तन्त्रत्वम्। पयोयागो-त्तरभाविस्विष्टकृदादौ पयोयागोत्तरत्वं तु पयोयागस्य दधि-यागेन तन्त्रत्वेऽपि न विरुध्यते इति विशेषः। **न चैवं** प्रकृतेऽपि पयोयागे दधियागोत्तरत्वस्येव सौम्योत्तरत्व-स्यापि द्वितीयाग्नेये प्रयोगविध्यवगतयौगपद्यानुरोधेन पाठेन अबोधनात् तदुत्तरभाविस्विष्टकृदादिपदार्थस्य च द्वितीयाग्नेयेन सह पाठाभावात् कथं यौगपद्यबाधः इति **वाच्यम्**। प्रयोगविधिना यौगपद्यावगमेऽपि सौम्यद्विती-याग्नेययोः पाठस्य अनन्यथासिद्धतया अपूर्वक्रमबोध-कत्वात्। तेन याज्याऽनुवाक्याभेदादिनैव यौगपद्यबाधो-पपत्तेः दधियागपयोयागयोः कश्चित्पाठो ह्यवर्जनीयतया अन्यथासिद्धः इति नासौ क्रमकल्पकः इति न यौगपद्यं बाधते। प्रकृते तु तन्त्रत्वं यदि विवक्षितं स्यात् आग्नेय-द्वयस्याव्यवधानेन पाठः स्यात्। सौम्योत्तरं पाठात्तु अनन्यथासिद्धः पाठः अपूर्वमपि क्रमं कल्पयतीति युक्तस्तेन यौगपद्यस्य बाधः। तस्मान्नाग्नेययोस्तन्त्रत्वम्। ११।१।९.

**मण्डन**— 'आग्नेययागे च पृथक् प्रदानम्।'

**शंकर**— 'अन्तःसौम्याग्नेययोर्न तत्।' तत् तन्त्रम्। अन्तः सौम्यः ययोः।

* **आग्नेयपुनःश्रुतिः** 'आग्नेयोऽष्टाकपालोऽमावा-स्यायां भवति' इति ऐन्द्राग्नस्तुत्यर्था। **भा.** २।३।१४।२७-२९. * **आग्नेयपुरोडाशस्य** हविरासादन-प्रयाजशेषा-भिघारणस्विष्टकृदवदानानि पूर्वं कर्तव्यानि, सांनाय्यस्य तु पश्चात्। प्रवृत्तिक्रमात् मुख्यक्रमस्य बलीयस्त्वात्। दर्श-पूर्णमासयोः। **भाट्ट.** ५।४।२. * आग्नेयपुरोडाशस्यौष-धस्य विध्यन्तः ऐन्द्रे पुरोडाशे। **भा.** ८।१।१७।३२-३४, * आग्नेयपुरोडाशधर्माणां एकदेवत्येषु अतिदेशः। ८।३।१।१-२. * **आग्नेययागः** अष्टाकपालस्य उत्पत्तेः उपादानस्य पालनस्य च प्रयोजकः। **बाल.** पृ. १०६. * **आग्नेयवत्**- आवाहने 'अग्निमग्न आवह' इति य एव संबोध्यते, स एवोच्यते 'आत्मानमावह' इति तद्वत्। **भा.** १०।७।९।२५, * आग्नेयवत्, तद्यथा 'अग्नये पावकाय अग्नये शुचये' इति देवतैक्यात् चोदनासामान्यात् आग्नेयस्य विध्यन्ताभ्यासः, तद्वत्। ८।३।२।३. * आग्नेयवत्। यथा आग्नेयपुरोडाशस्य पुनर्वचनं पूर्वपक्षे भेदकमुक्तं तथा। **के.** * आग्नेयवत्- यथा 'ऋजीषाणामाग्नेयेन संवत्सरमुपधाने आसीत, सूक्तेन सूक्तस्याविच्छेदाय' इति। आग्नेयेन सूक्तेन इत्युक्ते यावन्ति आग्नेयानि सूक्तानि दाशतयानि तैः सर्वैरिष्टका उपधीयन्ते। तद्वत्। (ऋजीषाणां इत्यस्य ऋजीषाणामयने इत्यर्थः)। **भा.** १०।६।१९।७३. * 'आग्नेयवत् सौर्योऽनुष्ठेयः' इति चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषनियमः। 'आग्नेयमष्टाकपालं निर्वपति' इत्यत्र एकदेवतायोगित्वं औषधद्रव्यकत्वं निर्वापः एतानि लिङ्गानि श्रुतानि, तानि सौर्येऽपि सन्ति। **वि.** ८।१।२. * **आग्नेयवाक्यं** (आग्नेयोऽष्टाकपालः इति) अन्यथात्वकल्पने विपरिणामः इत्यत्रोदाहरणम्। **बाल.** पृ. ४. * **आग्नेयविकारेषु** अभिमर्शनमन्त्रस्य विकल्पः ऐकार्थ्यात् (चतुर्होता वा पञ्चहोता वा इति)। **भा.** ८।२।५।२४. * **आग्नेयसांनाय्ययोः** दर्शपूर्णमासे मुख्यक्रमेण क्रमः। **रत्न.** ५।१।१.

## आग्नेयस्तुत्यर्थताऽधिकरणम्। आग्नेयाधि-करणम्। दर्शे आग्नेयपुनःश्रुतिः ऐन्द्राग्नस्तुत्यर्था॥

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते।** २।३। १४।२७॥

**भाष्यं**— दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालोऽ-मावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय

पुनरुच्यते 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति। तत्र संदेहः किममावास्यायां द्विराग्नेयेन यष्टव्यं, उत सकृदिति। किं प्राप्तम्? आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत, एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्, इति (२।२।२।२)।

**वा—** 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति श्रूयते। किं य एवासौ उभयत्रापि अच्युतः, तस्यैवैषा पुनःश्रुतिः केनापि प्रयोजनेन, अथ कर्मान्तरं इति संदेहः। तत्र 'संनिधौ त्वविभागात्' (२।३।१३।२६) इति सत्यपि अनुपादेयाममावास्यां प्रति उपादाने, तदेव कर्म इति सिद्धान्ते प्राप्ते, अभिधीयते '**पुनःश्रुतिरनन्यार्था भेदिकेत्यवधारिता। तादृशी चेयमित्येव द्विराग्नेयः प्रयुज्यताम्**॥' प्रयोगद्वित्वद्वारेण कर्मद्वित्वप्रतिज्ञानमेवैतत् द्रष्टव्यमिति।

**अविभागात्तु कर्मणो, द्विरुक्तेन विधीयते। २८॥**

**भाष्यं—** नैतदस्ति, पुनरभ्यसितव्य आग्नेय इति। कुतः? नाभ्यासस्य वाचकः शब्दोऽस्तीति। नन्वाग्नेयः पुनरुच्चरितः परं कर्म विधास्यति। नेति ब्रूमः। शब्दः पुनरुच्चरितो न पुनरर्थः कर्तव्य इति शक्नोति वदितुम्। योऽस्य प्रथममुच्चरितस्यार्थः, शतकृत्वोऽप्युच्चरितस्य स एवार्थो भविष्यति नान्यः। ननु विहितमेव पुनरविशिष्टं विदधत् अनर्थको भवति। भवतु काममनर्थकत्वं, न त्वन्यं शक्नोति वदितुम्। भवेदुपपन्नमनर्थकत्वं, न त्वर्थान्तरवचनता। तस्मान्न द्विरभ्यस्येतेति।

**वा—** तत्र पक्षान्तरमाह— अविभागात्तु कर्मणो, द्विरुक्तेन विधीयते इति। युक्तं समिदादिषु प्रत्यक्षयागपुनःश्रुतेः भेदकत्वम्। इह तु द्रव्यदेवतासंबन्धात् असौ अनुमातव्यः। तच्च द्रव्यदेवतं अभिन्नमुपलभ्यमानं पूर्वसंबन्धानुभववशात् एकान्तेन तमेव यागं बोधयति। द्रव्यदेवतमपि अन्यत् इति चेन्न, अविभागप्रत्ययोपलम्भात्। यदि नु व्यक्तिकृतो भेदः आश्रीयते, स प्रयोगान्तरे तस्यापि अविशिष्टः। तस्मात् वैकल्पिकेन वचनद्वयेन अमावास्यायां आग्नेयविधानम्। अथवा युगपत् प्रवृत्तेः 'यथा स्यात् सत्त्वदर्शनम्' इत्यनेन न्यायेन (६।२।१।२) तदेव कर्म एकेन इतरेण च प्रतिपाद्यते। न च गम्यते विशेषः कतरेण प्रतिपाद्यते, कतरत् पौनरुक्त्यादनर्थकमिति। कामं भवतु आनर्थक्यं, तदेव हि युक्त्या अन्विष्यमाणं इहोपपन्नतरं भवेत् नार्थान्तरवचनत्वं, शब्दार्थानित्यत्वप्रसङ्गात्। तस्मात् सकृदेव प्रयोग इति। सर्वं तु इदं अभ्यासाधिकरणे (२।२।२।२) निराकृतमपि सत् उत्तरसूत्रदर्पेण विश्रब्धमभिधीयते, न तु परमार्थेन आनर्थक्याभ्युपगमं वेदः क्षमते।

**अन्यार्था वा पुनःश्रुतिः। २९॥**

**भाष्यं—** अथवा नानर्थिका पुनःश्रुतिः। अर्थवादार्था भविष्यतीति। उच्यते। किमर्थवादेन प्रयोजनं, यदा पूर्वेणैव वाक्येन सार्थवादकेन विहित आग्नेयः कमन्यमर्थं विधातुं स्तुतिः प्रयुज्येत। स्तुतिमात्रं यन्न कस्य चिद्विधानार्थं, तदनर्थकमित्युक्तं 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां' इति (१।२।१।१)। स्तुतश्चास्तुतश्च तावानेव सोऽर्थः। यथा स्तुता वा अस्तुता वा देवता अङ्गभावं साधयति, एवमेतदिति। तदुच्यते, अन्यार्था वा पुनःश्रुतिः, नाग्नेयं विधातुम्। ऐन्द्राग्नविधानार्था। आग्नेयोऽष्टाकपालोऽमावास्यायां भवत्येव, न केवलेनाग्निना स साधुर्भवति, इन्द्रसहितोऽग्निः समीचीनतरः। तस्मादैन्द्राग्नः कर्तव्य इति।

**वा—** सर्वथा पुनःश्रुतिप्रयोजनेषु अत्रान्विष्यमाणेषु गुणस्याश्रवणात् परिसंख्यायाश्च त्रिदोषत्वात् अर्थवादार्थत्वेऽभ्युपगते, कस्यार्थवाद इति विविच्य असंकीर्तनान्नूनमाग्नेयस्यैवेति मत्वा वदति—सार्थवादकेन विहिते किं प्रदेशान्तरस्थेन एकवाक्यतामनागच्छता अर्थवादेनेति। विधिशेषत्वं ह्यर्थवादानामवस्थितम्। परिचोदना तु पूर्वपक्षाभिप्रायेण कृता। तत्र यथा स्तुता वा अस्तुता वा सैव देवतेत्यविवरणान्न विज्ञायते किंविषयमिति। तत्तु एतदतिक्रान्तालोचनेन महेन्द्राधिकरणे 'गुणश्चानर्थकः स्यात्' (२।१।५।१८) इत्यत्र सूत्रेऽभिहितं परामृष्टमिति दृश्यते। यथैव हि महत्त्वं देवताऽनन्तर्गतमिति पक्षे केवलस्यैवेन्द्रस्य साधनत्वात् विध्युद्देशे अर्थवादे अवस्थितमनर्थकं प्राप्नोति। तथैवेदं स्वतन्त्रस्तुतिमात्रमिति मन्यते। तत्रोच्यते। '**प्रशस्तशब्दै-**

रवधारितेन वाक्यान्तरात् केवलदैवतेन । कर्तुं सहेन्द्रेण पुनः प्रशंसां पुनःश्रुतिः सम्यगिहाश्रितेयम् ॥'

शा— 'कर्मणः प्रत्यभिज्ञानादविभागः प्रतीयते । ऐन्द्राग्नस्य प्रशंसार्था तस्यैवैषा पुनःश्रुतिः ॥' इति सिद्धान्तः ।

सोम— संनिधानादकर्मान्तरमिति पूर्वन्यायातिदेशात् संगतिः । सूत्रार्थस्तु–आग्नेयः अमावास्यायामावर्तनीयः अभ्यासस्य कर्मभेदकत्वस्योक्तत्वेन अमावास्यायामाग्नेयद्वयावगमात् इति । 'भेदेन प्रतीयेत' इति वक्तव्ये संप्रतिपन्नदेवताकत्वात् यागभेदेऽपि तन्त्रेणानुष्ठानात् अनुष्ठानभेदो नास्ति इति शङ्कां निराकर्तुं यागद्वयस्य तन्त्रानुष्ठानेऽपि पुरोडाशद्वयं कर्तव्यं इति प्रयोजनप्रदर्शनार्थं 'अभ्यासेन प्रतीयेत' इत्युक्तम् ।

वि— 'दर्शपूर्णिमयोः प्रोक्त आग्नेयः केवलोऽप्यसौ । दर्शे यदितिवाक्याभ्यां कर्मान्यद्वाऽनुवादगीः ॥, अभ्यासादन्यकर्मत्वं दर्शेष्टौ द्विःप्रयुज्यताम् ।, एकत्वप्रत्यभिज्ञानादनूक्त्यैन्द्राग्नसंस्तुतिः ॥' अनूक्त्या अनुवादेन ।

भाट्ट— कालद्वययोगेन आग्नेयं विधाय 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति श्रुतम् । तत्र कालद्वययुक्तादाग्नेयात् कर्मान्तरमिदं, प्रकरणान्तरादभ्यासाद्वा भेदोपपत्तेः । अनेनैव विहितस्य इतरेण पौर्णमासीमात्रविधिस्तु उत्पत्तिशिष्टकालावरोधान्निराकर्तव्यः । न चैकस्यैव कर्मणोऽभ्युदयशिरस्कतया विधिद्वयेन विधानं पिङ्गाक्ष्यैकहायनीशब्दाभ्यामिव द्रव्यविशेषस्येति वाच्यम् । पिङ्गाक्ष्यैकहायनीशब्दाभ्यामुपस्थितस्याप्येकेन विधिना विधाने बाधकाभावात् । प्रकृते त्वेकेन विहितस्य नेतरेण विधिसंभवः, इति कर्मान्तरमेव । अत एव अमावास्यायामाग्नेयद्वयकरणं पूर्वपक्षे प्रयोजनम् । इति प्राप्ते, एतस्यैन्द्राग्नविधिशेषत्वान्न स्वातन्त्र्येण विधायकत्वम् । प्रशस्ताग्नेयसाहित्येन चैन्द्राग्नप्रशंसा । अतो न कर्मान्तरम् ।

मण्डन— 'आग्नेयः पर्वणोर्भवेत् ।' पर्वणोर्द्विर्भवेत् न तु त्रिः ।

शंकर— 'आग्नेयेऽमामात्रयुज्यपि ।' अमामात्रयुजि आग्नेयेऽपि कर्मभेदो न ।

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते । २।३।१४।२७ ॥**

दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय पुनरुच्यते 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति । अयमाग्नेयः अभ्यासेन प्रतीयते । अमावास्यायां द्विरनुष्ठेयः इति ज्ञायते । उक्तहेतुत्वात् । उक्तः हेतुर्यस्य स उक्तहेतुः । 'एकस्यैवं पुनःश्रुतिरविशेषात्' ( २।२।२।२ ) इति सूत्रेण पुनरनुष्ठानज्ञाने पुनःश्रुतिर्हेतुरुक्तः । सोऽत्रापि वर्तते इति आग्नेयो द्विरनुष्ठेयः इति पूर्वः पक्षः । तुशब्दः सकृत्करणपक्षनिरासार्थः ।

**अविभागात्तु कर्मणो द्विरुक्तेन विधीयते । २८॥**

आग्नेयः द्विः कर्तव्य इति पूर्वपक्षे सिद्धान्त्येकदेशी आह । तुशब्दः पूर्वपक्षनिरासार्थः । कर्मणः आग्नेयकर्मणः अविभागात् विभागाभावात् भेदाभावात् द्विरुक्तेन वाक्येन एकमेव कर्म विधीयते । तस्मान्न द्विरनुष्ठानम् ।

**अन्यार्था वा पुनःश्रुतिः । २९ ॥**

मुख्यसिद्धान्ती आह । सा आग्नेयस्य पुनःश्रुतिः न द्विरनुष्ठानार्था किंतु अन्यार्था ऐन्द्राग्नस्तुत्यर्था । केवलेन अग्निना न तावती साधुता, इन्द्रसहितेन तु अग्निना भूयसी साधुता इति स्तुत्यर्था सा पुनःश्रुतिः । वाशब्दः पूर्वसूत्रोक्तपक्षद्वयनिरासार्थः । तस्मात् अमावास्यायां आग्नेयस्य सकृदेवानुष्ठानं इति सिद्धान्तः । के.

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत । २।३।१४।२७ ॥**

दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय पुनरुच्यते 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति । तत्र संदेहः किममावास्यायां द्विराग्नेयेन यष्टव्यं, उत सकृत् इति । पूर्वाधिकरणेनैव प्रकरणान्तराधिकारे पर्यवसिते सति इदानीमुपादेयोपबन्धवाक्यचिन्ताप्रसङ्गादिदं चिन्त्यते ।

अत्रायं पूर्वपक्षः, अनुपादेयकालसंबद्धस्याग्नेयस्य पुनः श्रुतस्य 'संनिधौ त्वविभागात्' इत्यनेन न्यायेनापवादात्

मा भूत् प्रकरणान्तरनिमित्तको ह्याग्नेयाद्भेदः, अभ्यासनिमित्तकस्तु भविष्यति। तथाहि, न तावदाग्नेययागे किंचिदनेन विधीयते, द्रव्यदेवताकालानां पूर्वत्रैव प्राप्तत्वात्। न चास्यार्थवादत्वम्। आग्नेयविधायकवाक्यस्य दूरस्थत्वेन तदेकवाक्यत्वाभावात्। नापि संनिधानादैन्द्राग्नस्तुतिरियम्। आग्नेयमात्रकीर्तनेन ऐन्द्राग्नस्तुत्यनवगतेः। विधित्वे च सति विहितविधानासंभवादभ्यासादेव कर्मभेद इति। तदुक्तं '**विधिश्रुतिरनन्यार्था भेदिकेत्यवधारिता। तादृशी चेयमित्यर्थाद् द्विराग्नेयः प्रयुज्यताम्॥**' इति। ( वा. पृ. ६२१ ) तेनाभ्यासोक्तहेतुत्वादाग्नेयाभिधानं कर्मद्वयमेति। **एवं प्राप्तेऽभिधीयते,**

**अन्यार्था वा पुनःश्रुतिः। २९॥**

अयमभिप्रायः। भवेदेवं यदि ऐन्द्राग्नस्तुत्यर्थोऽयमाग्नेयार्थवादो न भवेत्। तथाहि, न तावदत्र विधिः श्रूयते। न च कल्पयितुमपि शक्यते, ऐन्द्राग्नविध्येकवाक्यतया तदर्थवादत्वेनैवोपपत्तेः। **न चात्र** ऐन्द्राग्नस्तुतिः न प्रतीयते इति **वाच्यम्**। केवलाग्नेयकीर्तनादेव ऐन्द्राग्नस्तुतिः प्रतीयते। अयं खल्वस्यार्थः, केवलाग्निदेवतस्तावदाग्नेयः प्रशस्तो ज्ञात एव। तस्मादपि इन्द्रयुक्ताग्निदेवतः सुतरां प्रशस्त इति। तदुक्तं— '**प्रशस्तशब्दैरवधारितेन वाक्यान्तरात् केवलदेवतेन। कर्तुं सहेन्द्रेण पुनः प्रशंसां पुनःश्रुतिः सम्यगिहाश्रितेयम्॥**' इति। ( वा. पृ. ६२३. ) **प्रयोजनं**—पूर्वपक्षे आग्नेययागयोर्भिन्नत्वात् पुरोडाशद्वयोपादानम्। सिद्धान्ते त्वेकत्वात् आग्नेयस्यैकपुरोडाशोपादानमिति। **सूत्रं** तु—आग्नेयस्य पुनः श्रुतिरन्यार्था आग्नेयस्तुत्यर्थेत्यर्थः। **तौता.**

* **आग्नेयाग्नीषोमयोः** चोदनापृथक्त्वेऽपि ऐकतन्त्र्यं सहप्रयोगः। समवेतानां अङ्गप्रधानानां एककालसंयोगात्। 'पौर्णमास्यां पौर्णमास्या यजेत' साङ्ग्या इति। **भा.** ११।४।५।२२.

* **आग्नेयाग्नीषोमीययोः** अवदानेन होमान्तेन ( प्रदानान्तेन ) अनुसमयः, न तु केवलावदानेन ( दर्शपूर्णमासयोः )। **वि.** ५।२।४. * आग्नेयाग्नीषोमीययोः एकफलत्वात् एककर्तृकत्वाच्च सहप्रयोगो भवति। **भा.** ११।४।५।१७. * **आग्नेयाग्नीषोमीयनिर्वापयोः** पदार्थानुसमयः ( दर्शपूर्णमासयोः )। **शा.** ५।२।२.

* **आग्नेयाज्यभागस्य** आरादुपकारकत्वं ( दर्शपूर्णमासयोः )। **भा.** १०।१।८।१६–१८.

⌛ **आग्नेयाज्यभागन्यायः**। आग्नेयाज्यभागस्य आरादुपकारकत्वम्॥

**तथाऽऽज्यभागाग्निरपीति चेत्। १०।१।८।१६॥**

**भाष्यं**—दर्शपूर्णमासौ स्तो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्रेदमाम्नायते 'आज्यभागौ यजति' इति। इदं चापरं श्रूयते 'तौ होचतुः किमावयोस्ततः स्यादिति। यस्यै कस्यै चिद्देवतायै हविर्निर्वपँस्तद्वान् पुरस्तादाज्यस्य यजन्निति। तस्माद्यस्यै कस्यै चिद्देवतायै हविर्निर्वपन्ति ते पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति, तौ न सौम्येऽध्वरे न पशौ' इति। तत्रैतत् संदिह्यते। यदाज्यभागयोरग्नीषोमौ इज्येते, किं तत्राग्नियागो देवतासंस्कारार्थः, उत आरादुपकारक इति। किं प्राप्तम्? इति चेत् संदेहं पश्यसि, तथा आज्यभागाग्निरपि स्यात्, यथोत्तमः प्रयाजः। 'अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत' इति ( १०।१।६।११ )।

**व्यपदेशाद् देवताऽन्तरम्। १७॥**

**भाष्यं**— न चैतदस्ति, देवतासंस्कारः आज्यभागयोरिति। किं तर्हि? आरादुपक्रिया। कुतः? व्यपदेशादवगम्यते। प्रधानाग्नेर्देवताऽन्तरमिहेज्यते इति। कोऽसौ व्यपदेशः? 'अग्निमग्न आवह, सोममावह, अग्निमावह' इति। कथमस्मिन्नावाहने एतावत्यश्च देवता इज्येरन्निति। एवमावाहनेन देवतासु अव्यामोहार्थं परिगण्यमानासु द्विरग्निशब्देन परिगणनं कृतम्। तद्देवताऽन्तरेऽवकल्पते। इतरथा हि संख्यावृद्ध्या व्यामुह्येत। गणनं चोभयोरपि पक्षयोस्तुल्यम्। अपि च त्वत्पक्षे सोमव्यवधानात् गणने क्रमो बाध्येत। अपिच, असकृद्वचनं शब्देनानुबध्यमानमन्यमिव व्यपदिशति। यथा, 'ब्राह्मण आगतो वृषल आगतो ब्राह्मण आगतः' इति द्वयोरिव ब्राह्मणयोर्भवति गणनावादः। एवमिहापि द्वयोरिवाग्न्योर्भवति वादः।

**समत्वाच्च । १८ ॥**

**भाष्यं**— स एष व्यपदेशो भवति लिङ्गं, प्राप्तिस्तु वक्तव्या। सोच्यते। इयं प्राप्तिः। समोऽत्र देवतया यागः। देवताऽपि श्रुता प्रधानयागे, यागोऽपि वाक्यान्तरे आज्यभागौ यजतीति। तदिहोभयोर्यागदेवतयोः प्रयोजनवतोर्देवताया यागार्थता न्याय्या। प्रज्ञातं ह्यारादुपकारकत्वं यागस्येति। नहि देवतां विना यागो भवति, तेन स देवतामाकाङ्क्षति। न तु प्रधानदेवता यागान्तरमाकाङ्क्षति। यच्च येन आकाङ्क्ष्यते तत्तदर्थं भवति। तस्मात् देवता यागार्था। अपिच, आरादुपकारकैः कर्मभिः साम्यं भवति। कथम्? 'अभीषू वा एतौ यज्ञस्य यदाघारौ' 'चक्षुषी वा एतौ यदाज्यभागौ' 'यत्प्रयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै' इति।

**टुप्**— आज्यभागः ( यागः ) देवतामपेक्षते ( निर्वर्तकत्वेन ), प्रधानयागः ( तु ) देवतास्मारकं ( यत् किं चिदपेक्षते )। तत्र ( आज्यभाग- ) यागो देवतया विना न भवति, न तु प्रधान-( याग- ) देवता आज्यभागमेव ( स्मारकं ) अपेक्षते ( अन्यथाऽपि स्मरणसंभवात् ) । तस्मात् अदृष्टार्थं आज्यभागः। अस्मिन् व्याख्याने स्वाहाकारः ( यागः ) अपि एवमेव ( अदृष्टार्थः ) आपद्येत। **यदि** कश्चित् ब्रूयात् तस्मिन् ( स्वाहाकारे ) मन्त्रे यक्ष्यमाणा देवताः ( सर्वाः क्रमेण कीर्तिताः ) विद्यन्ते। ( न त्वाज्यभागे तथा कीर्तितमस्ति इति )। **सत्यं** विद्यते ( स्वाहाकारे मन्त्रे देवतासंकीर्तनं, तथापि तत्- ) निर्वर्त्यांशेनैव यागो गुणभूतां देवतामाकाङ्क्षीत। तस्मात् आज्यभागस्वाहाकारयोस्तुल्यत्वात् ( द्वयोरपि अदृष्टार्थत्वात् ) कथं स्वाहाकाराधिकरणम् ( १०।८।१० )। उच्यते ( स्वाहाकार- ) यागो हि ( प्रथमदेवतया ) निर्वृत्तः ( अपि ) सन् विपरिवृत्य देवताप्रकाशनद्वारेणैवोपकरोति। तस्याः ( च ) प्रकाशनं अपूर्वेणैवापेक्ष्यते। तदस्य दृष्टमेव प्रयोजनम्। ( नादृष्टं कल्पयितुं शक्यते। तस्मात् संस्कारार्थः स्वाहाकारः )। **ननु** आज्यभागोऽपि ईदृशमेव ( प्रयोजनं ) प्राप्नोति। **सत्यम्**। ( किंतु ) विधानात् तादृशमेव [ लिखिते तु 'इव' इति। तन्त्ररत्ने 'एव' इति, आनन्दाश्रमीये तु न किमपि ] अपूर्वेण नापेक्ष्यते। ( विहिता हि बहवोऽन्ये देवतास्मरणोपायाः आवाहनं, स्वाहाकारः, स्विष्टकृन्निगदः, सूक्तवाकः इति। तेषु सत्सु तादृशं तत्कार्यकरमेव अन्यन्नापेक्षितम्। ननु बहुकृत्वोऽपि स्मरणं प्रयोजनवदेव। अतः संस्कारकता युक्ता इत्याशङ्क्य सूत्रोक्तं मूलहेतुमाह-) आज्यभागौ इति च द्विसंख्या ( द्विवचनं ) श्रूयते। सा च केन चित् ( समानधर्म- ) योगेन प्रवर्तते ( तेन द्वयोरपि प्राधान्यं गुणत्वं वा आश्रयणीयम् ) तत्र सोमः ( देवता ) तावत् आरादुपकारकः ( इति न संशयः ), यदि अग्निरपि ( आरादुपकारकः स्यात् ) एवं द्विसंख्या युज्यते नान्यथा। ( तस्मात् द्वयोः समत्वात् आग्नेयोऽपि आरादुपकारकः इति )।

**सोम**— पूर्ववदुत्थानात् **संगतिः**। आज्यभागाग्निरपि संस्कार्यः इति चेत् इति **प्रथमसूत्रार्थः**।

**वि**— 'आज्यभागो य आग्नेयः किं मुख्याग्नेः स संस्कृतिः। आरादुतोपकारी स्यात्, पूर्वन्यायेन संस्कृतिः ॥, निगदेऽग्नेर्द्विरुक्तत्वाद् विधावेकपदोक्तितः। उपकारी ततः सोऽग्निः सौर्यादौ न निवर्तते ॥' बाधापवादो विचारफलम्।

**भाट्ट**— दर्शपूर्णमासयोः 'अग्नीषोमाभ्यामाज्यभागौ यजति' इति श्रुतम्। तत्र संख्यया कर्मभेदेऽपि एकैकस्मिन् यागे अग्नीषोमयोर्व्यासज्यवृत्ति देवतात्वं, द्वन्द्वान्ते श्रूयमाणचतुर्थ्या परस्परसहितानामेव देवतात्वप्रतीतेः। द्वित्वं परमधिष्ठानाभिप्रायेण। अतश्च द्वयोरपि अग्नीषोमदेवतासंस्कारकत्वं, मन्त्राः पुनर्मनोतान्यायेन उभयलक्षकाः। द्विरुच्चारणाच्चाधिकतरः संस्कारो देवतान्तरे इव आवाहनस्वाहाकारादौ न विरुध्यते। अथवाऽस्तु 'अथाग्नये सोमाय इत्याज्यभागाभ्यां चरति' इति शाखाऽन्तरवचनात् अस्यामपि शाखायां प्रत्येकमेव देवतात्वं, द्वित्वस्य देवतात्वपर्याप्त्यधिकरणभेदकत्वे संभवति संबन्धान्तरेणाधिष्ठानाभिप्रायत्वकल्पने प्रमाणाभावाच्च। **अत**-श्चैक आग्नेयः अपरः सौम्यः। तत्र सौम्यस्य देवतासंस्कारकत्वासंभवेऽपि आग्नेयस्याग्निदेवतासंस्कारकत्वं

पूर्ववत् । न चैकस्मिन् विधौ एकांशे आरादुपकारकत्वं इतरांशे संनिपत्योपकारकत्वमित्येवं वैरूप्यापत्तिः, आश्रयिकर्मान्तरवत् आर्थिकविध्यन्तरकल्पनया तदुपपत्तेः, अत एव श्रूयमाणविधौ अग्नीषोमयोर्गुणत्वेनैव अन्वयेन तत्पदेऽपि वैरूप्याभावाच्च । अतोऽत्रापि संस्कारकर्मत्वम् । **इति प्राप्ते**, आवाहनादिमन्त्रेषु सोमात् पूर्वोत्तरमग्नेः द्विः पाठात् पूर्वोऽग्निः आग्नेयदेवतातो भिन्नः इति क्रमपर्यालोचनया अवगम्यते । अभिन्नत्वेऽपि वा स उद्देशांशं प्रति आग्नेयादाविव गुणभूतः एव, इतरथा पशौ द्वयोराज्यभागयोः प्रसक्त्यभावेन प्रतिषेधानुपपत्तेः । गृहमेधीये चाग्नेयस्याज्यभागस्य क्लृप्तोपकारकत्वाभावेन अपूर्वत्वानापादकत्वात् सौम्यपुनःश्रवणस्य वैयर्थ्यापत्तेश्च, सौम्यमात्रविधानेन अपूर्वत्वकल्पने आग्नेयांशे आरादुपकारकत्वेन विधौ वैरूप्यापत्तेश्च । अतः प्रकृतावेव तस्य आरादुपकारकत्वात् सौर्यादावपि अग्निदेवत्यत्वमेव, न तु अग्निदेवताया बाधः, सूर्यदेवताया वा ऊहः इति सिद्धम् ।

**मण्डन**—'न देवतासंस्करणाय यागः ।' १०.

**शंकर**—'नाज्यभागोऽग्निदेवत्यः ।' न संनिपाती । १०.

* **आग्नेयादीनि** पयोऽन्तानि प्रधानानि, आघारादीनि आरादुपकारकाणि अङ्गानि । **सु.** पृ. ७२९. * **आग्नेयादीनां** एकप्रयोगवचनग्रहणात् समप्रधानता । **टुप्.** ४।४।४।७. * आग्नेयादीनां त्रयाणां षण्णां वा समुच्चयः दर्शपूर्णमासयोः । **रत्न.** ५।३।११।२२९–३१. * आग्नेयादीनां प्रधानत्वं आघारादीनामङ्गत्वं दर्शपूर्णमासादौ । (आग्नेय – अग्नीषोमीय – उपांशुयाज – सांनाय्ययागाः प्रधानम् । आघारौ, आज्यभागौ, प्रयाजानुयाजाः, पत्नीसंयाजाः, समिष्टयजुः, स्विष्टकृत् एतान्यङ्गानि ) । **भा.** ४।४।११।२९–३८. * आग्नेयादीनां फलवाक्ये सहितानां फलान्वयेऽपि यथा प्रत्येकमेव अङ्गापेक्षित्वं तथा एकादशे उपपादयिष्यामः । **सोम.** ३।२।६. * आग्नेयादीनां षण्णां प्रधानानां संघस्य दर्शपूर्णमासेष्टित्वम् । **वि.** १०।१।३. * आग्नेयादीनां समस्तानां फलसाधनार्थः प्रयोग उक्तः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन । **भा.** ११।२।२।४, * आग्नेयादीनां समुच्चितानां दर्शपूर्णमासादिषु एकस्वर्गफलकत्वम् । ११।१।१।१–४. * **आग्नेयादिकर्मत्रयसंघस्य** व्यासक्तदेवताकत्वम् । **वि.** ९।२।१८, * **आग्नेयादिकाम्येष्टिः** कर्मान्तरम् । २।३।१२.

## ⌛ आग्नेयादिप्रधानानां एकदेशकालकर्तृकत्वं दर्शपूर्णमासचातुर्मास्यादौ ॥

**एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् । ११।२।१।१ ॥**

**भाष्यं**— दर्शपूर्णमासयोराग्नेयादीनि प्रधानानि । तत्र देशकालकर्तारः, 'समे दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' 'दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विजः' इति । तथा चातुर्मास्येषु 'प्राचीनप्रवणे वैश्वदेवेन यजेत' 'वसन्ते वैश्वदेवेन यजेत' 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः' इति । तत्र विचार्यते किमाग्नेयादीनां प्रधानानां तन्त्रं देशकालकर्तारः, अथवा भेदेनेति । तत एतावन्नः परीक्ष्यम् । किं चोदनाविधिशेषा देशादयोऽपि, 'यदाग्नेयोऽष्टाकपालः' इत्येवमादय आग्नेयादिचोदनाविषयः, तेषामिमे समादिविधयः शेषाः, आग्नेयोऽष्टाकपालः समे भवति एवं सर्वत्र, अथवा प्रयोगाङ्गं देशादयः । स एषामाग्नेयादीनां प्रयोगः फलसाधनार्थस्तदङ्गमिति । किंचातः ? यदि प्रयोगाङ्गं ततस्तन्त्रम् । अथ चोदनाविधिशेषाः, ततो भेदेनेति । किं प्राप्तम् ? एकदेशकालकर्तृत्वं मुख्यानां तन्त्रमित्येषा प्रतिज्ञा । तत एवं तावद्वर्णयन्ति, प्रयोगाङ्गं देशादय इति । कुतः ? न तावदृते देशकालकर्तृभ्यः प्रयोगो भवति । यच्च येन विना न भवति, तत् तदङ्गमित्यवगम्यते । तस्मात् प्रयोगाङ्गं देशादयः । यदा प्रयोगाङ्गं, तदा तन्त्रभावः । कस्मात् ? एकशब्दोपदेशात् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येकशब्दोपदेशादेकं फलम् । एकफलत्वात् सहप्रयोगः । तत्र न गृह्यते विशेषो देशादीनामैदमर्थ्ये प्रति । अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । तस्मात्तन्त्रं देशादयः ।

टुप्— किमाग्नेयः अग्नीषोमीयादिनिरपेक्षो देशादिभिः संबध्यते, उत अग्नीषोमीयादिसहितः इति ( चिन्ता )। अत्र **पूर्वः पक्षः**, आग्नेयादयः ( यदाग्नेयोऽष्टाकपालः इत्येवमादिभिरुत्पन्नाः ) प्रज्ञाताः। ताननूद्य अप्रज्ञाता देशादयो विधीयन्ते ( 'समे दर्शपूर्णमासाभ्यां यजेत' इत्येवमादिभिः ), तेषां चोद्दिश्यमानानां इतिकर्तव्यतया संबन्धः ( नोपादीयमानानाम् )। तस्मिंश्च ( संबन्धे यद्यपि तन्त्राभिहिता यागाः, तथापि ) आग्नेयः अग्नीषोमीयादिनिरपेक्षः इतिकर्तव्यतया संबध्यते। तस्मात् ( अविवक्षितसाहित्ययागोद्देशेन विधीयमानाः ) देशकालकर्तारः, ( अन्वाधानादिः ) इतिकर्तव्यता च अग्नीषोमीयादिनिरपेक्षस्यैव आग्नेयस्य न्याय्या, इति इतिकर्तव्यतायाः आवृत्तिः। **अत्र चोद्यते**, यदि आग्नेयं अग्न्यन्वाधानादिब्राह्मणतर्पणान्तं कृत्वा अग्नीषोमीय आरभ्यते, तदा एतयोर्यः फलप्राप्तिं प्रति इतरेतरयोगः (अवगतः प्रधानविधिना ) सः ( अत्यन्तं ) बाधितः स्यात्। यथा सौर्ये ( कर्मणि ) आग्नेयेन सह इतरेतरयोगशङ्का ( शङ्कैव ) नास्ति, एवमिहापि प्रसज्यते। तस्मात् यदि तन्त्रेणेतिकर्तव्यता क्रियते, एवमितरेतरयोगः संपादितो भवति, नान्यथा। ( तस्मात् फलवाक्यावगतसाहित्यबलादेव देशादीनां अन्येषां चाङ्गानां तन्त्रमिति )। **उच्यते**। इतरेतरयोगादयमर्थो लभ्यते, एकेनापि अक्रियमाणेन यागेन फलं न प्राप्यते। तस्मात् एकैकस्य कृत्स्ना इतिकर्तव्यता क्रियमाणा नेतरेतरयोगं बाधते। **सिद्धान्तस्तु**—यद्यपि अयं कालः कारकविभक्तियुक्तः श्रूयते, तथापि ( स्वभावात् ) अनुपादेयः। अवश्यं च ( तस्य ) क्रियया सह संबन्धः करणीयः। तस्मिंश्च संबन्धे ( द्वयोरुद्देश्ययोरुपादेययोर्वा मिथः संबन्धाभावात् अन्यतरोद्देशेन अन्यतरस्मिन् उपादातव्ये ) कालं ( अनुपादेयं ) प्रति उपादीयमानत्वाच्च इतरेतरयोगादि विवक्षितम्। ( आदिशब्देन तृतीयोपात्तं करणत्वं गृह्यते ) करणविभक्तिश्च इतिकर्तव्यतया विना नोपपद्यते। तस्मात् इतरेतरयुक्ताः त्रयो यागाः पौर्णमास्यां सेतिकर्तव्यताका विधीयन्ते। एवममावास्यायामपि। एवं च ( काले कर्मविधानात् ) धात्वर्थोऽन्यत्र विहितो भवति, तत्र श्रुतिरनुगृहीता स्यात्। इतरथा तु परार्थे ( कालविधानार्थे ) धातुः उच्चार्येत। एवं देशेऽपि द्रष्टव्यम् ( तस्यापि अनुपादेयत्वस्य तुल्यत्वात् )। कर्तारस्तु सेतिकर्तव्यताके प्रयोगे ( फलवाक्येन ) विज्ञाते ( सति यजमानः ) कथं करिष्यति ( किं ससहायः, उत असहायः ) इत्येतस्यामवस्थायां ( स्वयं प्रयोगे स्यात् ३।७।८।१८ इति न्यायात् केवले ) यजमाने प्राप्ते वचनात् अध्वर्य्वादयो विधीयन्ते। ( उपसंहरति— ) तस्मात् यदि एकैकं इतरेतरनिरपेक्षं कुर्यात्, तथा सति देशं प्रति विधीयमानानामितरेतरयोगो बाधितः स्यात्। ( तथा ) कालेऽपि अङ्गैश्च विना करणविभक्तिर्बाधिता स्यात्। तस्मात् वचनात् ( सहितानि साङ्गानि प्रधानानि प्रति देशादीनां ) तन्त्रता। ( अत्र भाष्यकारेण 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनेन कालविधानमुदाहृतं, तत्र चोदयति— ) **ननु** 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनेन कालविधानं न क्रियते, उत्पत्तिवाक्येन 'यदाग्नेयः' इत्यादिना कालस्य प्राप्तत्वात् ( अनुवादमात्रं तु एतत्। ननु, फलार्थत्वात् कथमनुवादता, अत आह— ) फलसंबन्धोऽपि न क्रियते, दर्शपूर्णमासवाक्येन कृतत्वात्। अपिच ( अत्र ) फलसंबन्धाशङ्कैव नास्ति, फलाश्रवणात् ( तस्मात् अनर्थकमेवैतत् )। **उच्यते**। एतेन वाक्येन विना ( उत्पत्तिवाक्येषु प्रत्येकं कालश्रवणात्, तस्य च साङ्गप्रधानविषयत्वात् ) एकैकस्य कृत्स्नं इतिकर्तव्यताकाण्डं ( आग्नेयादेः ) आवर्तेत। सति तु एतस्मिन् वाक्ये पौर्णमास्यां ये यागा उत्पन्नाः, ते ( सर्वे ) करणविभक्तियुक्ताः फलं प्रति विधीयन्ते। करणविभक्तिश्च इतिकर्तव्यतामन्तरेण न संभवति। उपादीयमानत्वाच्च (तेषां) साहित्यविवक्षा। तस्मात् यदि एकैकः कृत्स्नेतिकर्तव्यताकः क्रियते, यत्तु साहित्यमवगतं तत् बाध्येत। तेन ( तदबाधाय ) इतिकर्तव्यतां प्रति साहित्यं क्रियते। तस्मादनेन वाक्येन इतिकर्तव्यता तन्त्रेण भवति इति ( अयं ) अर्थः क्रियते त्रयाणां यागानाम्। ( अत्र चोदयति— ) अयमस्य ( वाक्यस्य ) भवतोऽर्थः ( प्रयोजनं ) अभिप्रेतः। अयं च वाक्यान्तरेण क्रियते एव ( लभ्यते एव इति रत्नपाठः। तथाहि, ) 'समे दर्शपूर्णमासाभ्यां यजेत'

इत्यनेन इतरेतरयुक्ताः सेतिकर्तव्यताकाः ( यागाः ) देशं प्रति विधीयन्ते, विधीयमानानां च साहित्यं विवक्षितम्। तत् यदि इतिकर्तव्यता आवर्तेत, ( तदा ) यत् साहित्यमवगतं, तत् बाध्येत। तस्मात् अस्मिन् वाक्ये ( सति सिद्धमङ्गानां तन्त्रत्वं इति ) 'पौर्णमास्यां पौर्णमास्या यजेत' इति ( अनर्थकः ) अनुवाद एव।

**अत्र केचित्** तावत् वर्णयन्ति। प्रधानस्य ( केवलस्य उत्पत्तिवाक्ये ) पौर्णमासी कालः अवगतः, अङ्गानां ( तु ) अनवगमात् कालस्य, पञ्चम्यामपि प्रयोगः प्राप्नोति, तस्मात् अनेन ( अङ्गानां ) कालनियमः क्रियते इति। **तदयुक्तम्**। कथं ? करणमनुगृह्णती इतिकर्तव्यता उपकरोति इत्युक्तम्। ( तथा ) यस्मिंश्च काले करणं, तस्मिन्नेव इतिकर्तव्यता इत्युक्तम्। या च संनिपत्योपकारिका इतिकर्तव्यता, या च आरादुपकारिका, ते उभे अपि अनेन ( प्रधान– )कथंभावेन संबध्येते। तत्र पौर्णमास्यां प्रधानं कुर्वता संनिपत्योपकारिका ( तावत् इतिकर्तव्यता अवश्यं ) करणीया (न तु अन्यथा प्रधानमेव निर्वर्तते), येन प्रमाणेन संनिपत्योपकारिकां करोषि तेनैव ( प्रमाणेन ) आरादुपकारिकामपि ( कुरु )। न च ईदृशः कश्चित् न्यायः ( अस्ति ), येन प्रधानमात्रमेव कर्तव्यं स्यात्। ( देशं प्रति करणीभूता उत्पन्नाः सेतिकर्तव्यताका एव कर्तव्या भवन्ति। तच्च कालैक्ये सिध्यति, नान्यथा, इति सिद्धं अङ्गानामपि तत्कालत्वम् ) तस्मात् अवाच्यं ( अनर्थकं ) इदं ( वाक्यमिति। **अत्राभिधीयते ) नैतदेवम्**। 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यनेन षडपि यागाः सेतिकर्तव्यताकाः इतरेतरयुक्ताः देशं प्रति विधीयन्ते। तत्र षण्णामपि यागानां तन्त्रेण इतिकर्तव्यता प्राप्नोति साहित्यस्य विवक्षितत्वात्। (प्रयोगतन्त्रं तु नान्यत् ) तस्मात् ये पौर्णमासीसंज्ञकाः ( यागाः ) तेषां पौर्णमास्यां क्रियमाणानां ( प्राक्तनान्यङ्गानि ) आज्यभागान्तानि ( पाठक्रमात् ) करिष्यन्ते। एवममावास्यासंयुक्तानां ( सांनाय्यादियागानां पश्चात्तनानि अङ्गानि ) अनुयाजादीनि ( करिष्यन्ते )। एवं तन्त्रेण अङ्गप्रयोगे प्राप्ते 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यनेन अङ्गानामावृत्तिः प्रतिपाद्यते इति। अपि च 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यनेन इतरेतरयोगस्य विवक्षितत्वात् तन्त्रेण इतिकर्तव्यता प्राप्यते। तत्र पौर्णमास्यां प्रारब्धं प्रधानं अमावास्यायां समाप्यते। ( प्रातःसवनारब्धः सवनीयः इव तृतीयसवने। तेन सर्वोऽपि प्रधानकालः इति ) पौर्णमास्यमावास्ययोरन्तराले ( यत्र क्वचिदपि ) कुर्वन् अङ्गानि 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यस्य न किं चित् बाधते, न च फलवाक्यस्य ( तत्रापि इतरेतरयोगावगमात् )। तस्मात् अनेन ( पौर्णमास्यां पौर्णमास्या यजेत इत्यनेन ) वाक्येन कालानियमः ( अन्तरालकाले यत्र क्व चिदनुष्ठानं ) अङ्गानामपनीयते, अनियतकालता च ( आज्यभागान्तानां पौर्णमासीकालता, अनुयाजादीनां चामावास्याकालता इति ) बाध्यते। तस्मात् अनेन अङ्गानां कालविधिः क्रियते। ( अनेन हि यागत्रयस्य करणभूतस्य कालं प्रति उपादानात् साङ्गं यागत्रयं पौर्णमास्यां कर्तव्यं, तथा अमावास्यायामपि इति त्रिकस्त्रिकस्य सर्वाङ्गयुक्तस्य स्वेस्वे काले प्रयोगद्वयं सिद्धं भवति इति )।

**अविधिश्चेत् कर्मणां नाभिसंबन्धः प्रतीयेत, लक्षणार्थाभिसंयोगाद् चोदनाविधिस्त्वाचेतरेषां प्रतिप्रधानं भावः स्यात्। २॥**

**भाष्यं**— अविधिश्चेत् यदि चोदनाविधिशेषो न स्याद्देशादिविधिः, ततः कर्मणामाग्नेयादीनां भेदेन देशादिभिरभिसंबन्धो न प्रतीयेत। चोदनाविधिशेषस्त्वयम्। किं कारणम् ? इह समे दर्शपूर्णमासाभ्यामित्येवमादिभिर्वाक्यैर्देशादयो विधीयन्ते, अप्राप्तत्वात्। ते चेद्विधीयन्ते, आग्नेयादीनां दर्शपूर्णमासशब्देनानुवाद एषितव्यः, अन्यथा अनेकार्थविधानमेकस्मिन् वाक्ये भवतीति। अनुवादे च तेषां सहत्वं न विवक्ष्यते। विवक्ष्यमाणे वाक्यभेदो भवति। आग्नेयादीनां देशादयः, तेषां च सहितानामिति। कथं पुनः समे दर्शपूर्णमासाभ्यामित्येवमादिभिर्वाक्यैराग्नेयादिषु देशादयो विधातुं शक्यन्ते ? लक्षणार्थाभिसंयोगात्। लक्षणार्थेन अभिसंयोगो विज्ञायते। दर्शपूर्णमासशब्दः समुदायार्थोऽयम्। समुदायश्च समुदायिलक्षणार्थः शक्नोति साहचर्यात् समुदायिनो लक्षयितुम्। ननु एवमपि लक्षणा आश्रिता

भवति, वरं लक्षणा नैकवाक्यस्यानेकार्थत्वम्। अनेकार्थत्वे अगमकत्वम्। लक्षणा तु गमिका, लौकिकत्वात्। अपि च श्रुत्या समुदाये देशादयो विधीयेरन्। न च समुदायस्य देशादिभिः संबन्धोऽस्ति। कारकं हि समादयः। कारकस्य कर्मणा संबन्धो न कर्मगुणेन। तस्मादपि लक्षणा। यथा पौर्णमासीमभिमृशेदिति हविर्लक्षणा। चोदनाविधित्वाच्चेतरेषां देशादीनां प्रतिप्रधानं भावः स्यात्, गृह्यमाणविशेषत्वात्। अथ केन समादय आग्नेयादिषु विधीयन्ते ? समे यजेत, पौर्णमास्यां यजेतेत्यनेन आख्यातेन। अत्र हि धातुना यागमनूद्य विभक्त्या तेषु समादीनां विधिः। कर्तारोऽपि, यस्तेषां यागानां रूपविधानार्थो भवति अच्युतो भवतीति, तेन विधीयन्ते। अथवा, अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति। एवं स्थितमपर्यवसितम्।

**यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात्। ४॥**

**भाष्यं**—स्थितादुत्तरम्। यद्याग्नेयादेः कर्मणः समादिविधिसंबन्धः स्यात्ततः स्याच्चोदनाविधिशेषत्वं, भेदेन च समादयः। न तु तदस्ति। कुतः ? ऐकशब्द्यात् प्रधानार्थाभिसंयोगात्। यस्मादाग्नेयादीनां समस्तानामेकः शब्दो वाचकस्तेन समादीनामभिसंयोगः, 'समे दर्शपूर्णमासाभ्यां यजेत' इति, न ये व्यस्तानां वाचकाः, 'यदाग्नेयोऽष्टाकपालः' इत्येवमादयः। तत्र प्रत्यक्षं समस्तसंयोगमुत्सृज्य परोक्षो व्यस्तसंयोगः कल्प्यः। सोऽपि लक्षणया। अथ तु प्रधानार्थाभिसंयोगः क्रियेत, तत उभयमपि परिहृतं भवति। कः पुनः प्रधानार्थः ? प्रधानं फलं, तत्साधनार्थो यो व्यापारः। कश्चासौ ? आग्नेयादीनां प्रयोगः। कथं तेनाभिसंयोगः समादीनां विज्ञायते। उच्यते। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन समस्तानामाग्नेयादीनां फलसाधनार्थः प्रयोग उक्तः। तस्य च यदि पुनःश्रुत्या समादयो विधीयन्ते, याभ्यामेताभ्यां दर्शपूर्णमासाभ्यां यजेत ताभ्यां समे यजेतेति, ततो न परोक्षो व्यस्तसंबन्धः कल्पितो भवति। न च लक्षणा। तस्मात् प्रयोगे विधिरेतेषाम्। स च सर्वेषां प्रधानानां साधारणः। तत्रैदमर्थ्यं प्रति न गृह्यते विशेषः। तस्मात् तन्त्रं देशकालकर्तारः।

**तथा चान्यार्थदर्शनम्। ५॥**

**भाष्यं**— अन्यार्थोऽप्येतमेवार्थं दर्शयति। 'उग्राणि ह वा एतानि घोराणि हवींषि यदमावास्यायां संभ्रियन्ते, आग्नेयं प्रथममैन्द्रे उत्तरे' इति। संभरणं पौर्वापर्यं चैककालत्वे उपपद्यते। तस्मादपि तन्त्रम्।

**श्रुतिश्चैषां प्रधानवत्, कर्मश्रुतेः परार्थत्वात्। ६॥**

**भाष्यं**— इतश्च प्रयोगचोदना पुनःश्रुतिरियम्। कुतः ? श्रुतिस्तेषां समादीनां प्रधानानामिव। कथं कृत्वा ? कर्मश्रुतेः परार्थत्वात्। या अत्र कर्मश्रुतिः, दर्शपूर्णमासाभ्यामिति सा परार्था, तृतीयायोगात्, तया सामानाधिकरण्यात्। यजेतेति यजिरपि परार्थ एव। तदेतदेवमापद्यते, दर्शपूर्णमासयागेनान्यत् किमपि कुर्यादिति।

**कर्मणोऽश्रुतत्वाच्च। ७॥**

**भाष्यं**— कर्म च न श्रुतं, कार्यं न श्रुतं, प्रधानं न श्रुतमित्यर्थः। तस्य स्थाने समादीनि श्रूयन्ते। प्रधानसाधने श्रुतत्वात्, श्रुतिरेषां प्रधानवदित्युच्यते। न च तानि प्रधानानि। तत्र यद्याग्नेयादिवाक्यानां पुनःश्रुतिरियं कल्प्येत, गुणभावानुवादो भज्येत। नहि तत्र तेषां गुणभाव उक्तः। उत्पत्तिमात्राख्यानानि तानि। न च किं चित् कार्यं निर्दिष्टं, यदपेक्ष्यानुक्तोऽपि गुणभावोऽर्थप्राप्तोऽनूद्येत। प्रयोगचोदनायां तु गुणभावो युक्तः। कार्यमपि फलम्। तस्मात्तस्याः पुनःश्रुतिरियम्। तथा च तन्त्रभावः सिद्धः।

(अत्र तृतीयं अष्टमादिद्वादशान्तानि चेति षट् सूत्राणि अन्तरागर्भिणीरूपाधिकरणस्थानि इति नात्र संगृहीतानि, इति ज्ञेयम्। के.)

शा— '**कर्मरूपेण संबन्धो देशादीनां फलस्य च। उत्पत्तिविधिनैवातः सर्वेषामेकवाक्यता॥**' इति प्राप्तेऽभिधीयते। '**भावनोत्पत्तिवेलायां देशादिविधयो यदि। तत एवं भवेत्, ते तु फलवद्भावनाऽऽश्रयाः॥**' तस्मात् तन्त्रं देशकालकर्तारः।

**सोम— सूत्रे** एकशब्दोपदेशात् एकेन शब्देन तन्त्रेणोपादाय फलं प्रति उपदेशादित्यर्थः।

वि— 'आग्नेयादिप्रधानस्य देशे काले च कर्तरि। भेदः स्यादथवा तन्त्र, मङ्गत्वाद् द्रव्यदेववत् ॥ उत्पत्तिविधिशेषत्वाद् भेदः स्या, देकशब्दतः । विधेः प्रयोगशेषत्वादभेदेन तु तन्त्रता ॥' तस्मादेकस्मिन् प्रयोगे देशादीनां तन्त्रेण संबन्धः ।

भाट्ट— इह सिद्धं प्रयोगविधिमङ्गीकृत्य पूर्वं तस्योत्पत्तिविधिभेदेन न भेदः, अपि तु स्वातन्त्र्येण श्रवणाभावे विनियोगैक्येनैक्यमित्युक्तम् । इह स एवाक्षिप्य समाधीयते । न प्रयोगविधिर्नाम कश्चिद्भिन्नो विधिः, उत्पत्तिविधावेव लिङादिवाच्यया प्रवर्तनया कृतिसाध्यत्वस्य स्वविषये आक्षेपेण अनुष्ठानबोधोपपत्तेः । अत एव देशकालकर्तारोऽपि ये उत्पत्तिवाक्ये श्रुताः 'बार्हस्पत्यश्चरुर्ब्राह्मणो गृहे' 'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्', 'ब्राह्मणो बृहस्पतिसवेन यजेत' इत्यादिषु, तत्र द्रव्यदेवतावैशिष्ट्यस्येव कालादिवैशिष्ट्यस्यापि यागे एवान्वयात् न साङ्गे प्रधाने कालाद्यन्वयः । नहि द्रव्यदेवतादिकं तदीयप्रयाजाद्यङ्गेषु निविशते, प्रधानमात्रे एव वैशिष्ट्यावगमात् । एवं कालादयोऽपि । एवं च तदङ्गानि तद्भिन्नकालादावपि सुखेन कार्याणि। अनीकवत्यादेः सत्यपि प्रधानान्तरसाहित्येन फले विनियोगे, तत्र कालाद्यप्राप्तिस्तु भवतोऽपीष्टैव । यत्र तूत्पन्नस्य कर्मणो वाक्यान्तरेण कालादिश्रवणं यथा 'पौर्णमास्यां पौर्णमास्या यजेत' 'समे दर्शपूर्णमासाभ्यां यजेत' 'यदि ब्राह्मणो यजेत' इत्यादौ, तत्रापि 'व्रीहिभिर्यजेत' इत्यादिवत् पौर्णमास्यादिशब्दवाच्यप्रधानमात्रोद्देशेन विहितानां कालादीनां प्रधानमात्रे एवाङ्गता, न त्वङ्गेषु, तत्राङ्गवाचकपदाश्रवणात् । अत एव पौर्णमास्यादिपदवाच्यप्रधानानामुद्देश्यतया न तत्साहित्यविवक्षा, अतश्चाग्नेयत्रये (आग्नेयादित्रये) प्रत्येकं व्रीह्यादिवत् प्रत्येकमेव पौर्णमास्यादिकालः । न च व्रीह्यादिवाक्ये यागानां करणत्वानुपादानात् कर्मत्वेनैवोद्देश्यत्वात् युक्ता तत्साहित्याविवक्षा, अङ्गानुपादानाच्च नाङ्गेषु व्रीह्यादिप्राप्तिः । प्रकृते तु करणत्वश्रवणात् सेतिकर्तव्यताकस्यैव च करणत्वात् अङ्गेष्वपि कालादिप्राप्तिः । कालादौ अनुपादेये कर्मण एव करणीभूतस्योपादेयत्वात् तद्विशेषणीभूतसाहित्यस्य विवक्षितत्वेन सहितेष्वेव प्रधानेषु तत्प्राप्तिरिति वाच्यम् । वस्तुतः सेतिकर्तव्यताकस्यैव करणत्वेऽपि प्रकृते इतिकर्तव्यतावाचकपदाश्रवणेन तत्र कालादिप्राप्त्यनुपपत्तेः, उत्पत्तिवाक्ये यागस्य करणत्वेन तत्रत्यद्रव्यदेवताऽऽदेः साङ्गवृत्तित्वापत्तेश्च, करणीभूतस्यापि कर्मणः अनुवाद्यत्वेन तद्विशेषणस्य साहित्यस्य सेतिकर्तव्यत्वादेरविवक्षाऽऽपत्तेश्च, कर्तृरुपादेयत्वेन तत्र कर्मण एवोद्देश्यतया तद्विशेषणविवक्षाया दुरुपपादत्वाच्च, 'सायं जुहोति' इत्यादौ करणत्वश्रवणाभावेन तत्र विवक्षितफललाभस्य दुरुपपादत्वापत्तेश्च। न च देशादिवाक्ये सर्वत्र देशादिविशिष्टकर्मप्रयोगस्यैव विधेयत्वात् तद्विशेषणस्य साहित्यादेर्विवक्षोपपत्तिः, 'य इष्ट्या पशुना' इत्यादावपि प्रयोगविध्यापत्तौ सर्वेषामिष्टिपशुसोमानामेकप्रयोगताऽऽपत्तेः । अतो न क्वापि प्रयोगविधिर्नाम अतिरिक्तः कश्चिदस्ति । अपितु तत्रतत्रोत्पत्तिवाक्ये एव प्रवर्तनाऽऽक्षिप्ततत्तद्विषयककृतिसाध्यत्वमादायैव सर्वत्र देशकालादिविधिरिति नाङ्गेषु प्रधानान्तरसाहित्येन च कालादिप्राप्तिः । इति प्राप्ते, सर्वत्र लिङाद्यभिहितप्रवर्तनाविषयस्य त्रिविधा विधेयता, एका स्वरूपेण यागत्वादिना, अपरा इष्टसाधनत्वेन, अन्या कृतिसाध्यत्वेन । अत एव तद्भेदेनैवोत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिरिति च त्रिविधो विधिरिति भण्यते । नहि धर्मिज्ञानं विना इष्टसाधनत्वं कृतिसाध्यत्वं वा ज्ञातुं शक्यते, विना वा प्रवर्तनां इति त्रितयमप्यावश्यकम् । अत एव धर्मिस्वरूपज्ञापको विधिरुत्पत्तिविधिः, इष्टसाधनत्वबोधको विधिर्विनियोगविधिः, कृतिसाध्यत्वबोधको विधिः प्रयोगविधिरिति तल्लक्षणानि । तत्र द्रव्यदेवताऽऽद्यङ्गानां यागवृत्तिस्वकृतिसाध्यताज्ञानमन्तरेणापि यागस्वरूपस्य द्रव्यदेवताघटितत्वात् विशेषणज्ञानविधया तत्स्वरूपपरिचये एवोपयोगात् उत्पत्त्यन्वयित्वम् । एवं तत्पृष्ठभावेन तत्संस्काराणामवघातादीनामपि । दर्शपूर्णमासादिवाक्ये तन्त्राभिधानावगतसाहित्यादेस्तु विनियोगान्वयित्वम् । देशकालकर्तृस्वरादेस्तु यागगतकृतिसाध्यत्वज्ञानं विना अनपेक्षितत्वात् प्रयोगान्वयित्वमेव । अन्येषां तु प्रयाजादीनां प्रथमातिक्रमे कारणाभावादुत्पत्तावेव । अत एवोत्पत्त्यन्व-

यिनः सर्वस्याङ्गस्य प्रत्येकमेव सर्वप्रधानाङ्गता । विनियोगान्वयिनः साहित्यादेस्तु व्यासज्य सर्वप्रधानाङ्गता । प्रयोगान्वयिनस्तु साङ्गसहितसर्वप्रधानाङ्गता , अङ्गप्रयोगस्यापि प्रधानप्रयोगविधिविधेयत्वस्यैव स्थापितत्वात् । तद्यत्र एकमेव वाक्यं निर्गुणं सगुणं वा , तत्रोत्पत्तिविनियोगप्रयोगा एकेनैव विधिना पूर्वपूर्वस्योत्तरोत्तरं प्रति वैशिष्ट्यमङ्गीकृत्य विधीयन्ते, गुणाश्च तत्रत्याः स्वयोग्यताऽनुसारात् तत्रतत्रान्वीयन्ते । यत्र तु वाक्यद्वयं वाक्यत्रयं (वा) श्रुतं, तत्र वाक्यवैयर्थ्यपरिहारार्थं विधिलाघवाय च एकेनैको विधिरपरेणापरः, तत्र च तत्तदन्वयिगुणान्वयः एव नियामकः इति ध्येयम् ।

तदिह दर्शपूर्णमासयोराग्नेयादिवाक्येषु सत्यपि कालश्रवणे तस्य फलसंबन्धसिद्ध्यर्थत्वेन विधितात्पर्यविषयत्वाभावात् द्रव्यदेवताऽऽद्युत्पत्त्यन्वयिगुणश्रवणेन तत्रोत्पत्तिविधिमात्रं , विनियोगप्रयोगांशे तस्यानुवादकत्वमेव । अन्यथा तत्रापि तात्पर्यकल्पने गौरवात् । एवं फलवाक्ये निमित्तवाक्ये च विनियोगविधिमात्रं, तत्र प्रयोगविधिकल्पने गौरवात् । प्रयोगविधिस्तु देशादिविधावेव , तदन्वयिगुणस्यैव तत्र तद्विधिनियामकत्वात् । अत एव देशादिविधौ विनिगमनाविरहात् सर्वत्रैव तत्तद्विशिष्टप्रयोगविधिः । प्रयोगश्च भावनाया इतिकर्तव्यताऽन्वयस्वाभाव्यात् अङ्गविधीनां प्रत्येकमङ्गप्रयोगविधिकल्पने गौरवाच्च साङ्गस्यैव देशादिविधौ विधीयते । स्वरूपेण प्राप्तानामपि च प्रधानानां प्रयोगविषयत्वेन विधेयत्वात् तद्विशेषणस्य साहित्यसाङ्गत्वादेर्विवक्षितत्वेन देशकालकर्मादिः सर्वोऽपि सहितसर्वसाङ्गप्रधानेष्वेव संबध्यते । न चैवं एकप्रधानविकृतौ कतिपयाङ्गयुक्तायां देशाद्यतिदेशानापत्तिः, प्रकृतौ प्रधानान्तरसहितसमस्ताङ्गयुक्तस्यैवोद्देश्यत्वादिति वाच्यं, प्रकृतौ देशादिवाक्ये देशवत् अङ्गप्रधानसाहित्यस्यापि ' एकत्र द्वयं ' इति न्यायेन प्रधानप्रयोगे वैशिष्ट्याङ्गीकारेण सकलविशेषणविशिष्टप्रयोगविधानात् आर्थिकेन च विशेषणविधिना अङ्गप्रधानोद्देशेन प्रत्येकमेव देशादिविधानात् प्रकृतौ साहित्यसंपत्तये देशादितन्त्रत्वसिद्धिः । विकृतौ च प्रधानान्तराद्यभावेन तत्साहित्यबाधेऽपि अङ्गान्तरयुक्तैकप्रधाने एव देशादिप्राप्त्युपपत्तिरिति फलद्वयसिद्ध्युपपत्तेः । अतश्च ' समे दर्शपूर्णमासाभ्यां यजेत ' इत्यनेन षण्णां यागानामेको दैशिकः प्रयोगः । ' दर्शपूर्णमासयोश्चत्वार ऋत्विजः ' इत्यनेन कर्तृसंबन्धी अपरः विनिगमनाविरहात् , तयोश्च युगपदनुष्ठानमविरोधात् । अत एव षट्स्वपि यागेषु साङ्गेषु एको देशः, एकः कर्ता इति सिध्यति । 'पौर्णमास्यां पौर्णमास्या यजेत ' इत्यादौ ' सायं जुहोति' 'प्रातर्जुहोति ' इत्यादौ च कालिकोऽप्यपरः, विरुद्धकालभेदात् , विशेष्यभूतप्रधानभेदाच्च । तत्परं प्रयोगद्वयं व्याप्यव्यापकभावेन च दैशिकादिप्रयोगेणाविरोधः । न चैवं सर्वत्र कालादिविधौ एकप्रयोगत्वे 'य इष्ट्या पशुना' इत्यत्रापि कालविशिष्टैकप्रयोगविध्यापत्तेः सर्वेषामिष्टिपशुसोमयागानां एकप्रयोगताऽऽपत्तिः, तत्र यच्छब्दसमभिव्याहारात् तत्तद्विकृतिप्रयोगानुवादेन कालमात्रविधानावगतेः तत्तद्विकृतिवाक्येष्वेव प्रयोगविधिकल्पनाया अभ्यनुज्ञानात् , तत्तद्विलक्षणफलसाधनानां तेषामेकप्रयोगविधिविषयत्वानुपपत्तेश्च । अत एव तत्तद्वाक्यगतं विकृतिप्रयोगसाहित्यमपि अनुवाद्यगतत्वादविवक्षितम् । यत्र तु नैवंविधं किं चित् प्रयोगानुवादज्ञापकं , तत्र प्रयोगस्यैव विधेयत्वात् साहित्यविवक्षोपपत्तेर्युक्तैव प्रयोगविषयीभूतयावत्प्रधानानामङ्गानां च एकदेशकालकर्तृता , पौर्णमास्यादिकालिकप्रयोगभेदे चाङ्गावृत्तिः ।

**मण्डन**— ' देशाद्यैक्यं प्रधानानाम् । '

**शंकर**— ' कालाद्यैक्यं प्राकृतेष्टेः । '

* आग्नेयादिप्रधानानां एकफलसंबन्धापेक्षया अङ्गानां चैककरणोपकारसंबन्धापेक्षया स्वार्थपर्यवसायिनामपि वाक्यानां संहत्य एकमहावाक्यार्थापादनेन एकवाक्यत्वं भवति । **सु.** पृ. ५२५. * आग्नेयादिप्रधानभेदेऽपि प्रयाजाद्यङ्गतन्त्रत्वम् । **भाट्ट.** ५।२।२. * **आग्नेयादियागः** देवतायाः उद्देशात्मक–उपादानस्यैव प्रयोजकः, देवतोत्पत्तिपालनयोस्तु अप्रयोजकः । **बाल.** पृ. १०७. * **आग्नेयादिवाक्ये** द्रव्यदेवतासंबन्धाक्षिप्तयागवत् श्रुत्यादिभिरुपस्थितस्य क्रमस्य अध्याहृतशब्दाभिहितस्य विधेयत्वसंभवात् । **सोम.** ५।१।१. * **आग्नेयादिशब्दाः** गुणविधयः न कर्मनामधेयम् । ( ' यदाग्नेयोऽष्टाकपालः ' ) । **सु.** पृ. ४६३. * **आग्नेयादिशब्दैः**

केवलाग्न्यादिदेवताकैः ऐन्द्राग्न-अग्नीषोमीयादीनां असामर्थ्यात् अग्रहणं इति वक्ष्यति चतुर्थाकरणेन्द्रपीतपूषप्रपिष्टभागविचारेषु । **वा.** २।१।६।१७ पृ. ४२०.

**आग्नेयाधिकरणम्** । आग्नेयाग्नीषोमीयादिशब्दाः गुणविधयः न कर्मनामधेयम् ॥

**तद्गुणास्तु विधीयेरन्नविभागाद् विधानार्थ, न चेदन्येन शिष्टाः । १।४।६।९ ॥**

**भाष्यं—** ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' इत्येवमादयः श्रूयन्ते । तत्र संदेहः किमाग्नेयः अग्नीषोमीयः इत्येवमादयो गुणविधयः, कर्मनामधेयानि इति । किं तावत् प्राप्तं ? गुणविधौ सति अनेको गुणो विधीयेत अग्नि-पुरोडाश-अष्टाकपाला इति । तस्मान्न गुणविधय इति । **एवं प्राप्ते ब्रूमः** । तच्च कर्म, गुणाश्चास्य विधीयेरन् । अविभक्ता हि ते कर्मणो विधानार्थे तद्धितान्ते शब्दे । तत्र हि अष्टाकपालस्य आग्नेयता विधीयते । स एष एवमाग्नेयो भवति, यदि अग्नये संकल्प्य दीयते । तेन अयं अनेन प्रकारेण यागो विहितो भवति । स एवं विधीयमानो न शक्यः अग्निं अष्टाकपालं च अविधाय विधातुम् । संबन्धो हि विधीयमानो न शक्यते संबन्धिनौ अविधाय विहित इति वक्तुम् । तस्मात् गुणविधयः । अष्टसु कपालेषु संस्क्रियमाणो व्रीहिमयो यवमयो वा पुरोडाश एव भवति, सोऽनुवादः । सिद्धश्चात्र अष्टाकपाल उच्यते ' कपालेषु श्रपयति ' इति वचनात्, नान्येन श्रपितं गृह्णन्ति । तेन अस्मिन् पक्षे न वाक्यभेदो भवति । न चेदन्येन शिष्टाः । यत्र पुनः अन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयम् । यथा ' अग्निहोत्रं जुहोति ' इति ।

**वा—** एवं सिद्धेषु नामधेयेषु नामधेयकार्येषु च इदानीमपवादः प्रस्तूयते । कस्मात् पुनः इहैव दर्विहोमपदं न विचार्यते ? विचारितमेतदपि तत्प्रख्यं ( १।४।३।४ ) इत्यनेन । विध्युद्देशगतानां च इह विचारः । तत्र तु ( ८।४।१।१ ) अर्थवादगतानां ' यदेकया जुहुयात् दर्विहोमं कुर्यात् ' इति । सिद्धे वा कर्मनामधेयत्वे तद्विशेषविचारस्तत्र । इह पुनः सामान्यचिन्ता, इति नोपन्यस्तम् । या तु तत्र गुणविध्याशङ्का, सा अधिकरणमध्ये परिचोदनामात्रं, सर्वमेवैतत् प्रासङ्गिकम् । अष्टमे च पूर्ववत् अपूर्वचिन्ताऽधिकारात् । केन पुनः विहितानां कर्मणां आग्नेयादीनां नामधेयत्वमाशङ्क्यते ? तदुच्यते । ' अष्टाकपालो भवति ' इत्यादिभिः द्रव्यमात्रयुक्ताः क्रमवत्यो भावनाः प्रतिपाद्यन्ते । तासां च स्थानक्रमेण अग्न्यादिदैवत्यानि याज्याऽनुवाक्यायुगलानि आम्नायन्ते । तानि क्रमविनियुक्तानि सन्ति मान्त्रवर्णिकीः कर्माङ्गभूता देवताः कल्पयन्ति । नहि अन्यथा ते मन्त्राः कर्मोपयोगं गच्छेयुः । क्रियास्वरूपप्रकाशनेन तत्संबन्धिप्रकाशनेन वा मन्त्राः कर्मोपयोगितां गच्छन्ति । न चैतैः क्रिया द्रव्यं चाभिधीयते । यत् अग्न्यादि अभिधीयते, तस्य संबन्धित्वं न ज्ञातं, तत्र असंबन्ध्यग्न्यादिप्रकाशने अनङ्गत्वप्रसङ्गः । तेन अवधारिताङ्गत्वमन्त्रानुरोधेन एवं विज्ञायते ' यान् एते वदन्ति, ते नूनमग्न्यादयः क्रियाऽङ्गं ' इति । ते च मन्त्रेषु प्राधान्याभिधानात् देवतात्वेन प्रज्ञाताः इति तद्वैलक्षण्यात् कर्मस्वपि देवता भवन्ति । पुरोडाशादिभिरपि च हविरात्मकत्वात् योग्यतया यागसाधनत्वेन उपप्लवमानैः देवतैव आकाङ्क्षिता इति द्रव्यदेवतासंबन्धनिष्पत्तेः अनुमितानां यागानां ' तत्प्रख्यं चान्यशास्त्रं ' ( १।४।३।४ ) इति आग्नेयादीनां नामधेयत्वम् । **अथवा** अष्टाकपालादीनां हविष्ट्वात् ' द्विर्हविषोऽवद्यति ' इति हि अवदाने गृहीते चोदनाऽन्तरेण च तत्संस्कारार्थोपस्तरणाभिघारणग्रहणात् चतुरवत्ते निष्पन्ने ' चतुरवत्तं जुहोति ' इति वचनात् यावद्-द्रव्यं निष्पन्नानां होमानां तथैव अग्न्यादिषु प्राप्तेषु नामधेयत्वम् । एवं च अनेकार्थविधिदोषो न भविष्यति । **तथा प्राप्तेऽभिधीयते । ' न चेदन्येन शिष्टाः स्युर्यागाः शब्देन केन चित् । ते गुणाश्चोपदिश्येरन् विधिना ह्यविभागतः ॥ '** न तावत् द्रव्यदेवतासंस्कारसंयोगेन यागविधिरुपपद्यते । कथं ? **' न द्रव्यस्य स्वरूपेण मन्त्राकाङ्क्षाऽवकल्पते । न चान्यवाचिना तस्य संबन्धः संप्रतीयते ॥ '** न ' अष्टाकपालो भवति ' इत्येतावता कश्चित् पुरुषव्यापारो विधीयते, योऽनुष्ठानाय स्मृतिकरणं मन्त्र-

मपेक्षेत। न च पुरोडाशभवनं पुरुषस्यानुष्ठेयं, प्रतिनियतकर्तृत्वात् क्रियाणाम्। नापि द्रव्यं स्वरूपेण सिद्धात्मकत्वात् कर्तव्यं, येन स्मर्येत। न च 'अग्निर्मूर्धा' इत्यादिभिः द्रव्यं तद्व्यापारो वा अभिधीयते, येन आकाङ्क्षयाऽपि संबध्येरन्। अग्न्याद्यभिधायिनां न कश्चित् तैः संबन्धो विद्यते। '**न च यागो हविष्ट्वं वा पुरोडाशेऽवधारितम्। येन स्याद् देवताऽऽकाङ्क्षा तन्मन्त्राणां च संगतिः॥**' यदि हि प्रथमं यागत्वमवधार्येत, ततो देवताऽऽकाङ्क्षायां सत्यां देवतावाचिनो मन्त्राः संबध्येरन्, न तु तत् भवति शब्देनोक्तम्। न च यागसंबन्धात् प्राक् पुरोडाशादीनां हविष्ट्वमवधार्यते। संबन्धिशब्दो ह्ययं, न द्रव्यस्वरूपप्रयुक्तः। तदेव हि द्रव्यं अयागसंबद्धं पयःप्रभृति न लोके हविःशब्दवाच्यं भवति। एतेन चतुरवत्तचोदनाकल्पितकर्मनामत्वं प्रत्युक्तम्। आघारादिषु तु क्रियाऽऽत्मकत्वात् मन्त्राकाङ्क्षायां वचनविनियोगवशाच्च भवति मान्त्रवर्णिकदेवताकल्पना। सर्वजघन्यश्चायं देवताविधिः सर्वज्येष्ठे तद्धितदेवताविधौ संभवति किमित्याश्रीयते। अन्यथाऽनुपपत्तिमूलश्चासौ। न च तद्धिते संभवति अन्यथाऽनुपपत्तिः। तस्मात् अनेनैव कृते द्रव्यदेवतासंबन्धे अर्थवादपुरःसरेण भवति-शब्देन विहिते विशेषार्थे क्रमेण मन्त्राम्नानम्। अगत्या च अनेकार्थविधिरङ्गीक्रियते। 'विधानार्थे तद्धितान्ते शब्दे' इति (भाष्यं) विधिप्रयोजनत्वाभिप्रायेण। सर्वं चैतत् तस्मादविभक्तं गम्यते। देवता तावत् प्रातिपदिकेनोक्ता। तद्विशिष्टं द्रव्यं तद्धितेन, संबन्धोऽपि तत्रैव अर्थगृहीतः, तत्सामानाधिकरण्याच्च अशेषात्मीयोपसर्जनयुक्तं अष्टाकपालपदं विशेषणत्वेन तत्रैवान्तर्गतम्। द्रव्यस्य आग्नेयत्वेन भवनं च अभाव्यमानस्य न सिध्यति, इति तदाक्षिप्ता भावनाऽपि तत्रैव। न च यागेन विना आग्नेयत्वं भावयितुं शक्यं, इति पुरुषव्यापारविशेषोऽपि यागः तदन्तर्गतः। ततश्च तद्धितान्तपदोपात्तविधिना सर्वमन्यत् अर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति। भावनाविधिपूर्वकश्च सर्वत्र धात्वर्थकारकविधिर्भवति, इत्यश्रूयमाणाऽपि सैव तावद्विशिष्टा विधीयते। ततो विशेषणान्यथाऽनुपपत्त्या सर्वसंसर्गात्मकत्वाच्च तामेव संबन्धशब्देनाभिधत्ते। न तु अव्यापारात्मकत्वात् द्रव्यदेवतासंबन्धः शक्यते विधातुम्। 'अविभागात्' इति अर्थाक्षेपहेतुः। 'न चेदन्येन' इति अन्यथाऽनुपपत्तिशरणाभिधानम्।

**शा**— उच्यते (सिद्धान्तः), '**मन्त्राकाङ्क्षा न चात्रास्ति, सत्यामपि न योग्यता। मन्त्रस्य नास्ति वचनमग्निहोत्रेऽस्ति तत् त्रयम्॥**'

**सोम**— यथा वाजपेयशब्दस्य नामत्वं, एवं आग्नेयशब्दस्य इति प्रत्यवस्थानात् **संगतिः। प्रयोजनं** पूर्वपक्षे 'आग्नेयं पयो भवति' इत्यत्र आग्नेयशब्दस्य कौण्डपायिनामयनगताग्निहोत्रशब्दवत् अतिदेशकतया चोदनालिङ्गापेक्षया प्रबलेन नामधेयेन पुरोडाशधर्मप्राप्तिः, सिद्धान्ते तु नामत्वाभावात् असति नामधेयनिमित्तातिदेशे देवतासामान्यापेक्षया प्रबलेन द्रव्यसामान्येन सांनाय्यधर्मप्राप्तिः। **तैत्तिरीयशाखायां** द्वितीयकाण्डे प्रथममग्नीषोमीयस्य विधिः, पश्चादाग्नेयस्य। हौत्रकाण्डे च प्रथममाग्नेयस्य याज्याऽनुवाक्यायुगलं, पश्चादग्नीषोमीययाज्याऽनुवाक्यायुगलम्। **वाजसनेयिशाखायां** तु प्रथममाग्नेयस्य पश्चादग्नीषोमीयस्याम्नानम्। **सूत्रार्थस्तु**— स यागो द्रव्यदेवताऽऽत्मकगुणौ च विधीयेरन् विधानार्थलिङ्प्रत्यये यागस्यैव द्रव्यस्यैव देवताया एव (वा) विधानमिति विशेषाभावात्। एवमपि यदि विध्यन्तरेण शिष्टाः स्युः, तदा एषां विधानं न भवेत् विध्यन्तरशिष्टत्वाभावे कथं न विधेयाः भवेयुरिति।

**वि**— 'यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा।, नामाग्निहोत्रवत्, मैवं नामत्वे देवता नहि॥ मन्त्रोऽपि नेह प्रत्यक्षस्तद्धिताद् देवताविधिः। देवद्रव्यविशिष्टस्य विधानादेकवाक्यता॥'

**भाट्ट**—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्यादौ आग्नेयशब्दो गुणविधिः, कर्मनामधेयं वा इति चिन्तायां अग्नेः मन्त्रवर्णाल्लाभात् आग्नेयपदं नामधेयम्। **इति प्राप्ते**, पुरोडाशकर्मिकायाः भावनायाः मन्त्रापेक्षाऽभावात् मन्त्रस्य च तत्रायोग्यत्वात् नोपांशुयाजे इव मन्त्रस्य देवताकल्पकत्वम्। न च आघारवत् वाचनिको विनियोगो मन्त्रस्य, येन

तत्कल्पकत्वं संभाव्येत । न च मन्त्रस्य अष्टाकपालकर्मक-भावनाऽङ्गत्वे प्रमाणमस्ति । प्रकरणस्य च उपांशुयाजादिषु अविशिष्टत्वात् । नापि क्रमः, ब्राह्मणपाठक्रमापेक्षया मन्त्रपाठक्रमवैपरीत्यस्य पञ्चमे वक्ष्यमाणत्वात् ( ५।१।९।१६ ) । अतः तत्प्रख्यन्यायाभावात् नामत्वानुपपत्तेः, द्रव्यदेवतोभयविशिष्टभावनाविधिप्रतीतेः, तस्य च यागमन्तरेण अनुपपत्तेः, भूधातुना तल्लक्षणात्, सकलविशेषणविशिष्टयागभावनाविधानेन अर्थात् विशेषणानामपि विधिकल्पनात् गुणविधिरेव आग्नेयशब्दः। **प्रयोजनं** ' आग्नेयं पयः ' इत्यादौ नामातिदेशेन आग्नेयविध्यन्तः पूर्वपक्षे, सिद्धान्ते सांनाय्यविध्यन्तः। ७.

**मण्डन**—' विधिरष्टाकपालभाक् । '

**शंकर**—' आग्नेयादौ त्वनामता । ' ७.

* आग्नेयाधिकरणं द्विप्रकारं व्यवहृतम् । तत्रैकं ' आग्नेयस्तूक्तहेतुत्वात् ' ( २।३।१४।२७-२९ ) इत्यादिसूत्रत्रयात्मकम् । द्वितीयं तु ' तद्गुणास्तु विधीयेरन् ' इत्याद्येकसूत्रात्मकं ( १।४।६।९ ) ज्ञेयम् । **के.** * आग्नेयाधिकरणं नामधेयविचारस्यापवादः । **सु.** पृ. ४७०. * **आग्नेयाधिकरणे** गुणविधित्वं साधितम् । **कौ.** १।४।११।१३ पृ. २४४, * आग्नेयाधिकरणे ( मत्वर्थलक्षणा– वाक्यभेद– तत्प्रख्य– तद्व्यपदेशाख्येन ) प्रकारचतुष्टयेनैव सर्वत्र नामधेयत्वं, तदभावे तु गुणविधानमेव इत्युक्तम् । १।४।८।१० पृ. २३४. * आग्नेयाधिकरणे ' यदाग्नेयोऽष्टाकपालः ' इत्याग्नेयशब्दः न कर्मनामधेयं किंतु गुणविधिः इति साधितम् । ( १।४।६।९ ) **के.** * आग्नेयाधिकरणे विशिष्टविधिः व्युत्पादितः । **सु.** पृ. ३९८. * नामधेयत्वे सार्वत्रिके उपपादिते अधुना ( आग्नेयाधिकरणे ) तदपवादः प्रस्तूयते । **कौ.** १।४।७।९ पृ. २२७, * **आग्नेयाधिकरणन्यायेन** प्रकृतस्तुतद्रव्यमात्रग्रहणोपपत्तिः (अक्ताः शर्कराः तेजो घृतं इत्यत्र) १।४।१९।२९ पृ. २९८, * ' वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते ' इत्यत्र **आग्नेयाधिकरणन्यायेन निर्वपतेः** अतिदेशप्राप्तनिर्वापानुवादेन यागलक्षकत्वमङ्गीकृत्य । १।४।१२।१७ पृ. २५५. * आग्नेयस्य पुनर्वचनं 'आग्नेयस्तूक्तहेतुत्वात्' इति **आग्नेयाधिकरणपूर्वपक्षसूत्रे** यथा भेदकमुक्तं, तथा प्रतिशाखं अग्निहोत्रादिपुनर्वचनं भेदकम् । ' अन्यार्था वा पुनःश्रुतिः' इति आग्नेयाधिकरणसिद्धान्तसूत्रे आग्नेयस्य ' पुनर्वचनं अन्यार्थत्वान्न भेदकं ' इत्युक्तम् । **सु.** पृ. ९८९. * यत् ( आग्नेयः अमावास्यायामेव ) पुनर्वचनं भेदकत्वेनोक्तं, तत् **आग्नेयाधिकरणसिद्धान्तन्यायेन** किं चित् प्रयोजनं कल्पयित्वा परिहर्तव्यम् । **कौ.** २।४।२।१५ पृ. १२०, * **आग्नेयाधिकरणोक्त**गुणविधित्वे बुद्धिस्थे सति । १।४।११।१३ पृ. २४४.

* **आग्नेयाष्टाकपालादीनां** द्व्यवदानमात्रहोमः । **विन्दु.** ३।४।१८. * **आग्नेयेष्टिरेव** तेजस्कामेष्टिः इत्याख्यायते । ' आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः ' इति । **वि.** २।३।१२, * **आग्नेयैन्द्राग्नौ** पुरोडाशौ असोमयाजिनः । सोमयाजिनस्तु सांनाय्यम् । १०।८।१४.

* **आग्नेयी** सुब्रह्मण्या ' अग्न आगच्छ रोहिताश्व धूमकेतो जातवेदो विचर्षणे' इति अग्निष्टुति । **भा.** ९।१।१५। ४४ वर्णकं १. * ' **आग्नेय्यो** ह्योषधयः ' इति लिङ्गात् व्रीह्यादेः अग्न्युदकसंयोगजत्वावगतेः । **सु.** पृ. ६०. * **आग्नेय्या** आग्नीध्रमुपतिष्ठते इत्यत्र प्रकृतैव आग्नेयी ग्राह्या, न तु दाशतयीभ्यः आगमयितव्या ज्योतिष्टोमे । **भा.** ३।२।८।२१-२४. * 'आग्नेय्या आग्नीध्रमुपतिष्ठते ' इत्यादिषु सामान्येन उपदिश्यन्ते, स्तोत्रशस्त्रादिसाधनत्वेन विशेषरूपेण । प्रथमं ज्योतिष्टोमे आम्नाता विहिताश्च ' अग्न आ याहि वीतये ' इत्याद्याः । तत्र आग्नेयी प्रकृता एव ग्राह्या । **वा.** ३।२।८।२१ पृ. ७७३. * **आग्नेयीसुब्रह्मण्याप्रवर्तकं** अग्निष्टुन्नाम ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना न बाध्यते पञ्चदशरात्रे । **बाल.** पृ. १३२.

**आग्नेयीन्यायः** । आग्नेय्यधिकरणम् । आग्नेय्यधिकरणन्यायः । आग्नीध्रोपस्थाने प्रकृतस्यैव मन्त्रस्य ग्रहणम् ॥

**अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ।** ३।२।८।२१ ॥

**भाष्यं**— ज्योतिष्टोमे श्रूयते ' आग्नेय्या आग्नीध्रमुपतिष्ठते, ऐन्द्र्या सदः, वैष्णव्या हविर्धानम् ' इति ।

तत्र संदेहः किं प्रकृताभिः एवंलिङ्गवतीभिरुपस्थातव्यं, उत दाशतयीभ्यः एवंलिङ्गा आगमयितव्या इति । किं तावत् प्राप्तं ? प्रकरणे च मन्त्रो लिङ्गेन विधीयमानो दाशतयीभ्य एव आगमयितव्यः । आग्नेयी इत्येवमादिभिर्हि शक्या दाशतय्यः अभिवदितुम् । यश्चायं प्रकृतः, स कार्यान्तरे विनियुक्तो, न इहापि उपदेशमर्हति । उपदिष्टोपदेशो हि न न्याय्य एवंजातीयकस्य । कथंजातीयकस्य ? यः कस्मिंश्चित् विशेषेणोपदिष्टः, नासौ सामान्येन लिङ्गेन अन्यत्रोपदेशमर्हति । कथं ? यदि तल्लिङ्गं तस्य लक्षणत्वेन, ततः स विशिष्टो लक्ष्येत 'येन अनेन एवंलिङ्गेन एतत् करोति' इति, ततो नोपदिष्टो भवति । अथोपदिश्यते एवंलिङ्गेन करोतीति, ततो न लक्ष्यते, तेन उपदिष्टस्य एवंजातीयकस्य एवंजातीयकः पुनरुपदेशो न न्याय्यः । तस्मात् दाशतया लिङ्गवन्तो मन्त्रा ग्रहीतव्याः । **ननु** प्रकरणसामर्थ्यतः प्रकृता ग्रहीतुं न्याय्याः, **नेत्युच्यते** । लिङ्गं हि प्रकरणात् बलीयः । **आह**, विरोधे सति लिङ्गेन प्रकरणं बाध्येत, न चैतयोर्विरोधः । न वयं प्रकरणमनुजिघृक्षन्तः प्रकृतं लिङ्गवन्तं उपाददानाः लिङ्गमपबाधेमहि । यदि तु प्रकृतं विलिङ्गं उपाददेमहि, ततो बाधेमहि लिङ्गम् । उभयं संपादयिष्यामः प्रकरणं लिङ्गं च । नैतदेवम् । लिङ्गेन प्रत्ययो भवति दाशतयेनापि कर्तव्यमिति । दाशतय्योऽपि हि आग्नेयीशब्देन शक्यन्ते वदितुम् । स प्रत्ययो लिङ्गजनितो यन्मिथ्येति कल्प्यते, तत् प्रकरणानुरोधात् । स चेत् प्रकरणमनुरुध्यते, मिथ्येति कल्प्यते । अथ नानुरुध्यते, सम्यगिति । तस्मात् विरोधः । विरोधे च प्रकरणदौर्बल्यम् । **उच्यते** । तल्लिङ्गवत्ता अनेनोपस्थानेन अनुग्रहीतव्या, न दाशतयीमन्त्रव्यक्तिः । सा च प्रकृते मन्त्रे उपादीयमाने निरवशेषा उपात्ता भवति । दाशतय्यां पुनः मन्त्रव्यक्तौ उपादीयमानायां प्रकरणात् या मन्त्रव्यक्तिः प्राप्नोति, सा बाधिता भवति असति विरोधे । न चेह लिङ्गप्रकरणयोर्विरोधः । प्रकरणात् व्यक्तिः प्रतीयते, लिङ्गात् सामान्यम् । अन्या च व्यक्तिः, अन्यत् सामान्यम् । तस्मात् प्रकृतो लिङ्गवान् उपादेय इति । **उच्यते** । सत्यमेवमेतत्, प्रकृते उपादीयमाने प्रकरणं न बाधितं भवति, लिङ्गमपि अनुगृहीतम् । लिङ्गजनितस्तु प्रत्ययः कश्चित् मिथ्येति कल्पितो भवति । **ननु** व्यक्तिः अपदार्थः, कथं व्यक्तौ अनुपादीयमानायां प्रत्ययो बाध्येत । **उच्यते** । एतदेव न विजानीमः. लिङ्गवत्ता अत्र अङ्गं न वेति । किंतु तद्धितनिर्देशोऽयम् । तत्र देवतया मन्त्रो लक्ष्यते । मन्त्रव्यक्तिर्हि साधनं, न सामान्यं नाम किं चिदपरम् । देवतैवात्र सामान्यं यथासाधनं लक्षयितव्यम् । न च गम्यते विशेषः अयमसौ मन्त्रो नायमसौ इति । अनवगम्यमाने विशेषे सर्वे तल्लिङ्गा ग्रहीतव्या इति । दाशतय्यामपि मन्त्रव्यक्तौ भवति प्रत्ययः, स प्रकरणानुरोधेन बाध्येत इत्यन्याय्यम् । एवं सति न दाशतय्य एव उपादातव्या भवन्ति । प्रकृतमपि उपाददीरन् । **ननु** एतदुक्तं, कार्यान्तरे प्रकृतस्योपदेशो, नासौ अर्थान्तरे उपदेक्ष्यते इति । **उच्यते** । न नियोगतः स एव अर्थान्तरे वर्तते । स चान्यश्च सामान्येन लिङ्गेन । नैवं सति किं चिद्दुष्यति । **ननु** एतद् दुष्यति, नोभयमनुगृहीतं भवति लिङ्गं प्रकरणं च । **सत्यं** नानुगृहीतं भवति, किंतु अननुग्राह्यमेव प्रकरणं, लिङ्गप्रत्ययविरुद्धत्वात् । अपिच न लिङ्गं प्रकरणं वा अनुग्रहीतव्यं इति तत्परिच्छिन्ने प्रवृत्तिर्भवति, यदवगम्यते एतत् फलवदिति, तत्र प्रवर्तते । किमतो यद्येवम् ? एतदतो भवति, न लिङ्गमनुगृहीतं क चित् इति अपरस्मिन् तत्परिच्छिन्ने न प्रवृत्तिर्भवितुमर्हति । तस्मात् दाशतय्यो ग्रहीतव्या इति गम्यते ।

**वा**—ज्योतिष्टोमे प्रथमं आग्नेय्यैन्द्र्यादयः स्तोत्रशस्त्रादिसाधनत्वेन 'अग्न आ याहि वीतये' इत्येवमादयो विशेषरूपेण आम्नाता विहिताश्च । पुनश्च सामान्येन 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यादिषु उपदिश्यन्ते । तत्र संदेहः किं तद्व्यतिरिक्ता ग्रहीतव्याः, उत ता वा अन्या वा, अथवा ता एवेति । ग्रन्थात् त्रयः पक्षाः प्रतिभान्ति (इति के चित् तन्न । कथं ? ) न तु इह अप्रकृता एव इत्यस्य पक्षस्य प्रमाणमस्ति । महता हि प्रबन्धेन अविशेषग्रहणं प्रतिपाद्यते, न केवलाप्रकृतनिश्चयः । येन हि प्रमाणेन आग्नेयीशब्दाविशेषेण अप्रकृता गृह्येरन्, तेनैव प्रकृता अपि । न च किं चित् कारणमस्ति, येन

प्रकृताः परित्यज्येरन् । न च भाष्यकारेण त्रयः पक्षाः प्रदर्शिताः । किं तर्हि ? अविशेषपक्ष एव आदौ अपि-शब्दरहितेन अप्रकृतशब्देन परिगृहीतः, येन अप्रकृता एवेति भ्रान्तिर्भवति । यत्तु तत्र प्रमाणं, तत् अविशेष-पक्षमेव साधयति । तथा च परस्तात् विवृतं 'अप्र-कृतेऽपि प्रत्ययो भवति,' 'प्रकृतमपि उपाददीरन्' इति च ( अत्र प्रथमं वाक्यं, 'दाशतय्यामपि मन्त्र-व्यक्तौ भवति प्रत्ययः' इत्यस्य भाष्यस्य तात्पर्यम् । द्वितीयवाक्यं तु यथाश्रुतमेव भाष्यम् ) । यदि तु अवश्यं तृतीयोऽपि पक्षः समर्थनीयः, तत एता-वती श्रोत्रियोपपत्तिः, प्रकृतस्य कार्यान्तरोपयोगेन यात-यामत्वादग्रहणम् । अथवा सामान्यविधानमिदम् । तानि तु आग्नेयीविशेषविधानानि । परिहृत्य च विशेषविधि-विषयं सामान्यशास्त्राणि प्रवर्तन्ते । यदि तु तत्रापि विशेषग्रहणं न स्यात्, ततस्तदपि अनेनैव तुल्यं इत्युदा-हरणत्वेन गृह्येत । तस्मादप्रकृता एव ग्रहीतव्याः । अथवा आग्नेयादिशब्दैः अविशेषप्रत्ययो जातः । न चान्यत् प्रकृतग्रहणक्षमं विशेषणं पश्यामः । प्रकरणस्य ग्राहकत्वेन अविशेषकत्वात् । संनिधिलक्षणलौकिकप्रक-रणस्य च यौगिकश्रुतिजनिताविशेषप्रत्ययेन बाध्य-मानत्वात् । तस्मात् सर्वप्रत्ययः ।

'उपदिष्टोपदेशो हि न न्याय्यः' इति ( भाष्यं ) इह उपदिष्टस्यैव इत्यर्थः । 'एवंजातीयकस्य' इति विशेषणरहितस्येत्यर्थः । 'कथंजातीयकस्य' इति, अस्ति विनाऽपि विशेषणेन विशेषग्रहणप्रमाणं प्रकरणं इति सिद्धान्तवादी मन्यते । परः पुनः स्वाभिप्रायेणैव सिद्धान्तवाद्यभिमतां विशेषग्रहणोपपत्तिं ( वस्तुतः ) अनभिमतामेव परिकल्प्य 'कथं ? यदि तत् लिङ्गं तस्योपलक्षणत्वेन' इत्याह । न चात्र उपरि वक्ष्यमाण-देवतालिङ्गाभिप्रायेण लिङ्गपदं युक्तम् । किं तर्हि ? आख्यातप्रत्ययसामर्थ्यं तद्विहितत्वं वा, तदुपक्षीणशक्तौ तस्मिन् विध्यभावप्रसङ्गोपन्यासात् । 'नासौ सामान्येन लिङ्गेन' इति अग्निना विह्नेन, सर्वासु प्रतीयमानासु स्फुटेन विशेषणेन विना न शक्यो मन्त्रविशेषः प्रतिपत्तुं इत्यभिप्रायः । तदिह यदि विशेषणमिष्यते, ततो दार्शपौर्णमासिकनिर्वापालम्भन्यायेन ( २।३।५।१२ ) कर्तव्यतावचनेन लिङ्गेन विशेष्टव्यम् । तद्धि अकर्माङ्ग-भूतेभ्यो दाशतयेभ्यो निवृत्तं अत एव विशेषणम् । तथा च दर्शयति 'येन अनेन एवंलिङ्गेन एतत् करोति' इति कर्तव्यम् । येन अनेन एवंलिङ्गेन अग्निलिङ्गेन इन्द्रलिङ्गेन वा किंचित् करोतीति, आख्यातप्रत्ययविहितत्वेन उप-लक्षितेन आग्नीध्रोपस्थानमिति, ततो विधायकस्य उपलक्ष-णत्वेन उपक्षीणत्वात् नोपदिष्टो भवति । 'अथोपदिश्येत' आग्नेय्यादिना 'करोति' इति, 'ततो न' विशेषितो भवति । ततश्च अविशेषिताग्नेयीमात्रग्रहणप्रसङ्गः । 'तेन उपदिष्टस्य' एव तदुपलक्षितस्य 'पुनरुपदेशः' इत्यप्रमा-णकम् । तस्मात् कर्तव्यतावचनवर्जितकेवलाग्न्यादिदेवतो-पलक्षणसामर्थ्यात् पुनः दाशतया अपि ग्रहीतव्या इति । 'ननु प्रकरणसामर्थ्यात्' इति सिद्धान्ताभिप्रायेणोक्तम् । लिङ्गं प्रकरणात् बलीयः इति लिङ्गशब्देन अत्र देवता-संबन्धात् यौगिकी श्रुतिरभिधीयते न सामर्थ्यमात्रम् । उपरिष्टात् बहुप्रयोगगतोऽपि लिङ्गशब्दः एवमेव यौगिक-श्रुतिवचनो व्याख्येयः । 'आह, विरोधे सति' इति यदि प्रकृतमनाग्नेयं गृह्णीमः, ततो विरोधो भवेत् । प्रकृताग्नेयग्रहणे तु द्वयमपि अनुगृह्यते । तथा तद्भूता-धिकरणे श्रुतिवाक्ययोः अविरुद्धत्वमुक्तम् ( १।१।७ श्लो. वा. ३४७-३४८ ) । 'नैतदेवं' इति । दाशतयानामपि विकल्पेन प्राप्तानां न युक्तः प्रकरणानुरोधेन बाधः । तस्मात् नोभयमनुग्रहीतव्यमिति । सामान्यस्य प्रतिव्यक्ति समाप्तेः, प्रकृतायामपि व्यक्तौ समस्तपदार्थसंभवात् न कश्चिद्विरोध इति मत्वा आह 'तल्लिङ्गवत्ता अनेनानुग्रहीतव्या' इति । तस्मात् लिङ्गयुक्तस्य वाक्यस्य सामान्यविषयत्वात् प्रकरणेन तदाकाङ्क्षितविशेषसमर्पणात् असति सम-वायविरोधे न युक्तो बाधः । इतरस्तु व्यक्त्यभिधाना-भिप्रायेण दाशतयप्राप्तिनिवर्तनात् विरोधं समर्थयते ( सत्यमेवमेतत् इत्यादिना ) । 'ननु व्यक्तिरपदार्थः' इति अभिप्रायप्रत्यादेशः । परस्तु आह, 'एतदेव न विजानीमः तल्लिङ्गवत्ता' सामान्यभूता 'अत्र अङ्गं न वेति ।' यदि हि गवादिशब्दवत् व्यक्त्य-भिधानासंभवः, ततः सामान्यचोदनायां सत्यां अश्रुत-

व्यक्तिग्रहणानुषङ्गिणि प्रकृतव्यक्तिग्रहणेऽपि अदोषः । अथ तु देवता उपलक्षिता, व्यक्तिरेव शब्दार्थः, ततः प्रकृतग्रहणे सति श्रुतिजनितप्रत्ययैकदेशबाधः स्यात् । सा चेह 'व्यक्तिरेव साधनं, न सामान्यं नाम किंचित्'। किं पुनरिदानीं आकृत्यधिकरणोक्तसामान्यापह्नवं भाष्यकारः करोति ? नेति ब्रूमः । तस्य अङ्गत्वासंभवमात्रमाह इति **के चित्**। तदयुक्तम्। तथा सति व्यक्तीनामश्रुतत्वात् अपरिग्रहेऽपि दोषाभावात् । अतः प्रकृतापेक्षया सामान्यमपह्नूयते इति वक्तव्यम् । व्यक्तिशब्दो ह्ययं यौगिकत्वात् ( आग्नेय्या इति ) न जातिशब्दत्वं प्रतिपद्यते । न चात्र जातिः का चित् प्रतीयते । नानारूपासु नानाछन्दस्कास्वपि च देवतैकत्वमात्रेण आग्नेय्यादिशब्दप्रयोगात् । नहि 'अग्न आ याहि वीतये' 'अग्निं होतारं मन्ये दास्वन्तं' इत्येतयोः देवताव्यतिरिक्तं किं चित् सामान्यं दृश्यते । देवतासंबन्धमेव एष न व्यभिचरति । व्यभिचरति तु ऋग्जातिं, द्रव्यकर्मादिष्वपि प्रयोगात् ( आग्नेयशब्दस्य ) । अतो देवतैवात्र समाना इत्याह । संबन्धस्तु समानः सन्नपि न अभिधेयत्वेन अर्थसिद्धत्वात् भाष्यकारेणोपन्यस्तः । तस्या एव च देवतायाः समानत्वात् व्यक्त्यानन्त्यादिदोषनिवृत्तिः । पूर्वाभिहितेऽपि च विशेषणे प्रकृतिप्रत्यययोः शक्तिभेदात् प्रत्ययेन विशेष्याभिधानं अविरुद्धम् । यत्र तु तावानेव शब्दः उभयत्र व्यापारयितव्यः, तत्र विशेष्यानभिधानं यथा गवादौ । न चात्र विशेषणाभिधानमात्रस्य अग्निशब्दस्य कदा चिदपि विशेष्येषु प्रयोगः, नापि आग्नेयीशब्दस्य अग्नौ, यतो विशेष्यं यावत् नीयेत । यदि चेह विशेषणमात्रमभिधीयेत ततस्तस्यैव कार्यक्षमत्वात् नैव विशेष्यं परिगृह्येत । तस्मात् व्यक्तय एव अत्राभिधेयाः । तदुक्तं ( ३।१।६।१२ ) पिङ्गाक्ष्यैकहायनीशब्दयोः । ततश्च पक्षे प्रकृतमपि उपाददीरन् । 'ननु एतदुक्तं' इति आद्यपक्षाभिप्रायेण । ननु त्वयैव यातयामत्वादिदोषात् तस्यानुपादानमुक्तम् । परस्तु मध्यमपक्षं परिगृह्य आह । केवलप्रकृतग्रहणे हि प्रत्ययस्य युगपद्विधिलक्षणव्यापारात् विरोधोऽभिहितः । मत्पक्षे तु न नियोगतः स एवात्र आग्नीध्रायुपस्थाने, किं तर्हि अविशेषवचनेन स च अन्यश्च इत्यविरोधः । 'ननु एतद् दुष्यति' इति विना कारणेन प्रकरणपीडामसहमानो वदति । परस्तु देवतालिङ्गयुक्तश्रुतिबलीयस्त्वमेव उत्तरं ददाति । 'अपि च न लिङ्गं' यौगिकश्रुत्यात्मकं 'प्रकरणं च अनुग्रहीतव्यं' इति लोकस्य अतिसंमुग्धां वाचोयुक्तिं निराकर्तुमुपन्यस्यति । सर्वप्रमाणव्यवहारेष्वेव न प्रमाणमनुग्रहीतुं पुरुषाः प्रमेयेषु प्रवर्तन्ते, किं तर्हि ? आत्मानम् । ततः किमिति चेत् अत आह, 'एतदतो भवति'। बहुष्वपि एकरूपं प्रमाणं क्व चिदनुगृहीतं इति कृतार्थत्वात् न पुरुषार्थौपयिकान्यपि सन्ति अर्थान्तराणि न गृह्यन्ते । सकृत् प्रयुक्ते वा काम्ये फलभूमार्थिनामपि न भूयः प्रयोगो भवेत् । तस्मात् प्रमाणानुग्रहमनादृत्य आत्मानुग्रहार्थे तत्रतत्र प्रवर्तितव्यं इति अविशेषग्रहणसामर्थ्यम् । 'लिङ्गप्रत्ययविरुद्धत्वात्' इति अत्रापि लिङ्गशब्दः तस्मिन्नेव प्रयुक्त इति द्रष्टव्यम् । सूत्रमपि अतदाख्यप्रापणं करोति इति न अतदाख्यमात्रनियमार्थमिति व्याख्येयम् । तदाख्येषु तु असंवाद एवेति न परामृश्यन्ते ।

**तदाख्यो वा प्रकरणोपपत्तिभ्याम् । २२ ॥**

**भाष्यं—** तदाख्यः ज्योतिष्टोमसमाख्यात एव ग्रहीतव्यः । कुतः ? प्रकरणोपपत्तिभ्याम् । प्रकृतो ह्यसौ । प्रकृतप्रत्ययश्च न्याय्यः । कथं ? न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते प्राप्तत्वादेव । व्यापारविशेषविधानं तु उपपद्यते, अप्राप्तत्वात् व्यापारविशेषस्य । अनपेक्ष्य च प्रकरणं दाशतये विधीयमाने वाक्यं भिद्येत उपस्थानं च कुर्यात्, तच्च एवंलिङ्गेनेति ।

**वा—** अधिकाराख्यः अधिकृतसंज्ञक इति । ( एवमादिना सौत्रस्थतदाख्यपदं व्याख्यायते ) । अथवा तत्र आख्यायते इत्येवं तदाख्यः । तदीयत्वेन वा य आख्यातः स ग्रहीतव्यः इति । कुतः '**क्रतुकार्यविशेषोऽयं मन्त्रस्यास्योपदिश्यते । सामान्यप्राप्त्यपेक्षश्च विशेषो नित्यमिष्यते ॥**' 'आग्नेय्या आग्नीध्रं' इति हि न आग्नीध्रस्वरूपप्रयुक्तमुपस्थानम् । नापि स्वतन्त्रं पुरुषार्थं फलाश्रवणात् । अतः अवश्यं एवमाश्रयितव्यं, ज्योतिष्टोमापूर्वसिद्ध्यर्थं आग्नीध्रोपस्थानं करोतीति । ततश्च ज्योति-

ष्टोमकार्यविशेषविधानमेतत् इति निश्चीयते । स च विशेषः सामान्यप्राप्तौ सत्यां शक्यो विधातुं नान्यथा । तत्र यदि द्वावपि सामान्यविशेषसंबन्धौ इदमेव वाक्यं कुर्यात्, ततो वाक्यं भिद्येत । ननु च अनेन विशेषमात्रं आग्नीध्रसंबन्धः क्रियते, प्रकरणात् सामान्यसंबन्धः सेत्स्यति इति । सत्यं प्रकरणात् सिध्यति, न तु श्रुतिमकल्पयित्वा । सा च श्रुतिः क्लृप्तायां सत्यां कल्पयितुं न शक्यते । ननु विशेषे विधीयमाने अर्थादेव सामान्यमन्तर्भविष्यति । न अर्थस्यापि ( श्रुतार्थापत्त्याख्यस्य ) प्रकरणतुल्यत्वात् । यदि तु आग्नीध्रसंबन्धे कृते, भोजनादिवत् तृप्तिः, ज्योतिष्टोमसंबन्धो नान्तरीयकत्वेन अनुनिष्पादी स्यात्, ततः शास्त्रं न आयस्येत् । अयं तु द्रव्यस्वरूपेण संबन्धस्य निष्फलत्वात् प्रथमतरमाश्रीयते । न च शास्त्रादृते तदुपपद्यते, इति अस्त्येव अश्रुतकल्पनाक्लेशः । किंच **'लौकिकेऽप्युपपन्नत्वात् संबन्धोऽयं यथाश्रुतः। नैकान्तात् कर्मसंबन्धमुपपादयितुं क्षमः ॥'** तेन अवश्यं प्रकरणानुमितैव श्रुतिः कल्पयितव्या । सर्वत्र च एवमादौ अर्थापत्तेः प्रामाण्यम् । सा चान्यथाऽनुपपत्त्या भवति । तद्यदि इदं विशेषसंबन्धवाक्यं सामान्यसंबन्धश्रुतिं अकल्पयत् नोपपद्येत, ततः कल्पयेत् । उपपद्यते तु अस्य क्लृप्तसामान्यसंबन्धासु ऋक्षु स्वार्थमात्रविधानम् । तावता च सिद्धार्थत्वात् न गुर्वी कल्पनामवलम्बते । तद्दर्शयति 'न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते' अन्यत एव प्राप्तत्वात् । यथा वसन्तादिश्रुतिभिः प्राप्तेः न कामश्रुतयः आधानाक्षेपसमर्थाः इति आहिताग्नीनेव अधिकुर्वन्ति, तथा एताः प्राप्तज्योतिष्टोमसंबन्धाधिकारिण्यः इत्यभिप्रायः । इतरथा यदि तावत् अप्रकृता एव गृह्यन्ते, ततो गत्यन्तरसंभवे सति वेदेन अनभ्युपगतः सन् अतिभारः निष्प्रमाणक आपद्येत । अथ अविशेषग्रहणं, तथापि एकत्र प्राप्तसामान्यसंबन्धानुवादेन विशेषमात्रकरणात्, अपरत्र च सामान्यविशेषप्रापणात् वैरूप्यनिमित्तोऽपि वाक्यभेदः स्यात् । प्रकृतग्रहणे न कश्चित् दोषः । एवं च प्रत्यासत्तेः प्रत्ययविप्रकर्षो न भविष्यति । ननु च प्रकरणेऽपि यथाऽभिलषितः सामान्यसंबन्धो नैव कस्य चिदस्ति । यद्यपि स्यात् तथापि कार्यान्तरे विनियुक्तः, इत्यादि विरुध्येत । उच्यते । नैष दोषः । कार्यान्तरविनियुक्तानामेव ग्रहणात् । ननु एवं सति सामान्यसंबन्धप्राप्तिवाचोयुक्तिः न घटते । कथं न घटते ? यदा सर्वविशेषेषु सामान्यमन्तर्गतं, तेन यत्तत्र विशेषरूपं, तद्विशेषान्तरे अनुपयुज्यमानत्वात् अविवक्षितं कृत्वा तद्–द्वारसिद्धसामान्याश्रयणमविरुद्धम् ।

यस्तु भाष्यकारेण वाक्यभेदो दर्शितः, स सर्वविशिष्टविधानेषु तुल्यः । यागं कुर्यात्, तं च सोमेन इत्यपि शक्यं दर्शयितुम् । अपूर्वकर्मविधानाच्च नायमन्येभ्यो विशिष्टविधानेभ्यो न्यूनतरो विज्ञायते । सिद्धान्तेऽपि च अन्यलिङ्गानाश्रयणात् 'तच्चैवंलिङ्गेन' इत्येतदस्येव । नहि अविधीयमानः प्रकृतोऽपि एवंलिङ्गं उपस्थानाङ्गम् । तस्मात् यथाकथंचित् पूर्वोक्त एवात्र वाक्यभेदो योजयितव्यः, ( विधिगौरवरूपः ) । तत्र 'उपस्थानं च कुर्यात्' इत्येतत् ज्योतिष्टोमकार्यविशेषप्रदर्शनम् । 'तच्च एवंलिङ्गेन' इति प्रकरणनिरपेक्षाप्राप्तज्योतिष्टोमसंबन्धदेवतालिङ्गोपलक्षितमन्त्रमात्रप्रदर्शनार्थम् ।

**अनर्थकश्चोपदेशः स्यादसंबन्धात् फलवता, नह्युपस्थानं फलवत् । २३ ॥**

**भाष्यं**—ननु च प्रकरणात् ज्योतिष्टोमस्योपकारकं स्यात् । यदि उपस्थानज्योतिष्टोमसंबन्धो विवक्ष्येत, तदा उपस्थानं ज्योतिष्टोमे उपदिश्येत । प्रकरणात् तेन एकवाक्यतामियात् । यदा तु खलु उपस्थानस्य मन्त्रसंबन्धो विवक्ष्यते, सर्वोपस्थानेषु तदा मन्त्रः प्राप्नोति प्रकरणं बाधित्वा । न प्रकरणं विशेषकं भवितुमर्हति । उभयसंबन्धे वाक्यभेदः । अस्मत्पक्षे न पुनरयं दोषः । येन आग्नेयेन ऐन्द्रेण वा ज्योतिष्टोमे व्यापारः क्रियते, तेन उपस्थानव्यापारविशेषः तदा ज्योतिष्टोमिको विधीयते, अन्यत् सर्वमनूद्यते इति न दोषो भवति । अथवा आग्नीध्रहविर्धानसदःसंबन्धमात्रं विधीयते । उपतिष्ठते इत्ययमनुवादः । अनेन मन्त्रेण आग्नीध्रमुपतिष्ठते इति समासीदति इत्यर्थः । तस्मात् प्रकृता मन्त्रा एवंजातीयका उपादातव्या इति ।

वा—अथ वाक्यभेदं परिहर्तुं यथाश्रुताग्नीध्राद्युपस्थानसंबन्धमात्रमित्युच्यते तत्राह, (सूत्रकारः) 'अनर्थकश्चोपदेशः स्यादसंबन्धात् फलवता' इति । 'ननु प्रकरणात् ज्योतिष्टोमस्य उपकारकः स्यात्' इति अन्यतः सामान्यसंबन्धसिद्धिं मन्यते । न तु असावपि अविधीयमानः संभवति इति दर्शयति । 'यदि उपस्थानज्योतिष्टोमसंबन्धो विवक्ष्येत' ततः 'तेन एकवाक्यतामियात् । यदा तु खलु' तमविधाय उपस्थानमनूद्य विशिष्टविधानेन वा मन्त्रसंबन्धो विधीयेत, तदा लौकिके निष्फले शुद्धे एवोपस्थाने मन्त्रः प्राप्नोति अननुमितश्रुतिप्रकरणं बाधित्वा । नहि तदा प्रकरणात् विशेषप्रत्ययः । अस्मत्पक्षे तु प्रथममेव ज्योतिष्टोमेन स्वीकृतत्वात् नान्यत्र प्राप्तिः, इति अर्थवत्ता लाघवं च । अथवा आग्नीध्रादीनां कर्माङ्गभूतानां मन्त्राणां च करणानां संबन्धे विधीयमाने उपस्थानमपि अनूद्यते इति लघुतरम् ।

**सर्वेषां चोपदिष्टत्वात् । २४ ॥**

**भाष्यं**— यदप्युक्तं उपदिष्टा हि ते प्रकृताः कार्यान्तरे इति, तदुच्यते । उक्तोत्तरमेतत् (न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते इति ग्रन्थेन २२ सूत्रे) । अपि च न केवलमेते एवोपदिष्टाः । सर्वे वाचःस्तोमे आश्विने (च) शस्यमाने सूर्ये अनुद्यति । तेन न प्रकृते कश्चिद् विशेषः । तस्मात् प्रकृतस्यैव ग्रहणम् ।

**वा**— यत्तु यातयामत्वात् सामान्यविशेषबाधाद्वा न प्रकृतग्रहणमिति, तन्न । वचनात् यातयामविधानात् गुणभूतमन्त्रावृत्त्या च समुच्चये सति विरोधाभावात् उभयमपि अदोषम् । तथा येन एवंलिङ्गेन एवं कुर्यात् इत्येषाऽपि वचनव्यक्तिः नाश्रीयते, सर्वेषां क्व चिदुपदिष्टत्वेन अविशेषणत्वात् । यत्तु प्रत्ययेन विशेष्टव्यमिति, तदन्यथैव विशेषसिद्धेः असंबद्धाध्यारोपणमात्रमेव शोभते । तथाहि **'यद्यप्यहमृचां कुर्यां प्रत्ययेन विशेषणम् । तथापि नैव मुच्येय सर्वासां ग्रहणादिह ॥ सर्वा ह्यध्ययनस्थेन ब्रह्मयज्ञाश्रितेन च । वाचःस्तोमाश्विनावस्थागतेन विहिता हि ताः ॥ अतो नैवेदमाशङ्क्यमाख्यातेन विशेषणम् । सर्वप्रत्यय एव स्यात् कृतेऽपि हि विशेषणे ॥'** तस्मात् अर्थापत्तिप्रतिबन्धमात्रेणैव प्रकृतप्रत्ययसिद्धिः ।

(यातयामवचनं 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनःपुनः ॥' इति ।)

शा— **'तत्राग्नेयी- (य्ये)तिशब्देन सर्वासामभिधानतः । अविशेषो, न काचिद्धि प्रकृतग्रहणे प्रमा ॥'** इति प्राप्तेऽभिधीयते, **'प्रकृता एव गृह्येरन् प्रसिद्धक्रतुसंगमाः । तासां कार्यविशेषो हि सुखमत्रोपदिश्यते ॥'**

पूर्वं लिङ्गस्य सामान्यसंबन्धापेक्षितत्वमुक्तं तत्प्रसङ्गात् श्रुतेरपि सति संभवे सामान्यसंबन्धं अन्यतः सिद्धमपेक्ष्य विशेषमात्रपरत्वं संभवति इति प्रतिपाद्यते इति लिङ्गाधिकारेऽपि श्रुतिविनियोगश्चिन्तितः ।

**सोम— अवान्तरसंगतिः** प्रासङ्गिकी । **सूत्रार्थस्तु—** अधिकारे प्रकरणे यो मन्त्रविधिः, स अतदाख्येषु प्रकरणानाख्यातेषु चकारात् प्रकरणाख्यातेषु च स्यात् आग्नेयीशब्देन सामान्येन शिष्टत्वात् इति ।

**वि**— 'आग्नेय्याऽऽग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः । उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥, साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः ।, विशेषे विधिसंक्रान्त्या प्रकृताभिरितीष्यताम् ॥'

**भाट्ट**— ज्योतिष्टोमे 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यत्र प्रकृताप्रकृतसाधारण्येन ऋङ्मात्रं आग्नीध्रोपस्थानाङ्गं, उत प्रकृता एव याः स्तोत्रादावपि विनियुक्ताः, ता एव **इति चिन्तायां**, आग्नेयीपदस्य अविशेषेण सर्वपरत्वात् प्रकरणस्य तत्संकोचकत्वानुपपत्तेः अग्निदेवत्यऋङ्मात्रस्यैव विशिष्टविध्युत्तरकालीनविशेषणविधिना आग्नीध्रोपस्थानाङ्गत्वेन विधानम् । नहि अत्र आग्नेयी उद्देश्या, येन आनर्थक्यभिया व्रीहिवत् प्रकरणेन संकोच्येत, तृतीयया उपादेयत्वावगमात् । यत्र च उपस्थानस्वरूपे आनर्थक्याशङ्का, तत्र प्रकरणानुप्रवेशेऽपि न आग्नेयीपदस्य प्रकृतपरत्वापत्तिः । न च आग्नेयीपदस्य यौगिकत्वात् तद्धितान्तत्वाद्वा संनिहितपरत्वं, यौगिकानां अवयवार्थविशिष्टव्यक्तिमात्रवाचित्वेन संनिहितवाचित्वे

प्रमाणाभावात्। तद्धितस्य तद्वाचित्वेऽपि प्रकृतानामृचां एकप्रकरणस्थत्वेऽपि प्रदेशान्तरस्थत्वेन संनिहितत्वाभावात्। अस्तु वा प्रकरणसंनिहितस्यैव तद्धितेन ग्रहणं, तथापि यत्र न तद्धितश्रवणं यथा ब्रह्मौदनप्राशनादौ 'चतुरो ब्राह्मणान् भोजयेत्' इत्यादौ, तत्र प्रकृतऋत्विग्ग्रहणे प्रमाणाभावः। **न च** प्रकृतानां अपूर्वार्थत्वस्य क्लृप्तत्वात् केवलं द्वाररूपाग्नीध्रोपस्थानसंबन्धकरणे लाघवात् अप्राकृतानां उभयकरणे गौरवापत्तेः प्रकृतनियम इति **वाच्यम्**। प्रकृतग्रहणेऽपि उपस्थानस्वरूपस्य द्वारत्वे तत्कार्यापन्ने ऊहाद्यनापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्। नहि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तरकल्पनया अपूर्वार्थत्वबोधः, तथात्वे व्रीहीणां स्वरूपेण द्वारत्वापत्तौ यवानां तदनापत्तेः। अतो लाघवात् अपूर्वसाधनीभूतस्तोत्रत्वेनैव उद्देश्यता। तावता च अपूर्वसाधनीभूतोपस्थानार्थत्वस्य अलाभात् अस्त्येव प्रकृतग्रहणेऽपि तद्विधौ अपूर्वसाधनलक्षणा। अपिच स्तोत्रापूर्वसाधनत्वक्लृप्तावपि नोपस्थानजन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम्। अतः सर्वासामेव ग्रहणं अप्रकृतानामेव वा कार्यसाकाङ्क्षत्वात्। **इति प्राप्ते,** अप्रकृतग्रहणे तासां अपूर्वसाधनीभूतोपस्थानार्थत्वान्यथाऽनुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत् कल्पनीयत्वापत्तेः, प्रकृतानां च कार्यान्तरसंबन्धबोधकविधौ एव अपूर्वार्थत्वस्य क्लृप्तत्वात् लाघवोपजीविना प्रकृतनियमः। संभवति च प्रकृतानामपि आग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसंबन्धासंभवेऽपि कार्यान्तरद्वारा सः। आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तावदपूर्वसंबन्धावगमः। अयमेव च ब्रह्मौदनप्राशने ऋत्विक्त्वनियामकन्यायः। न चैवं 'आत्रेयाय हिरण्यं ददाति' इत्यत्रापि तन्नियमापत्तिः। ऋत्विक्त्ववत् आत्रेयत्वस्य नियमेन अप्राप्तेः। अत एव च 'अग्निमुपनिधाय स्तुवीत' इत्यादौ आक्षेपणीयस्तोत्रापूर्वसंबन्धस्य आहवनीयादौ अप्राप्तत्वात् न तन्नियमः, अपि तु विना वचनं आयतनबहिर्भावायोगात् लौकिकस्यैव इति वक्ष्यते (७।३।१२)। अतः सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम्।

**मण्डन**—'आग्नेयमन्त्रः प्रकृतः प्रयोज्यः।'

**शंकर**—'श्रुतश्च सति संभवे।' श्रुतः प्रकृतो मन्त्रः।

* यत्र यजमानः न स्वरूपेण उपयुज्यते परंतु गुणभूतः, यथा औदुम्बरीसंमानादिषु, तत्रापि **आग्नेयीन्यायः**। **भाट्ट.** ९।१।१४. * **आग्नेयीन्यायेन** ब्रह्मसंस्थशब्दस्य प्रकृतसर्वगोचरत्वस्य उक्तत्वात् (पूर्वपक्षे)। **कल्पतरुः.** ३।४।२।२० ब्रसू. * अन्नाद्यफलकब्राह्मणादिकर्तृकावेष्ट्यादिप्रयोगे दक्षिणापेक्षायां सति संभवे तत्तत्प्रधानाङ्गत्वेन अवगताया दक्षिणायाः एव उपस्थितत्वात् आग्नेयीन्यायेन ग्रहणं, न तु अन्तःक्रतुप्रयोगे बाधितायाः अन्वाहार्यदक्षिणायाः इति वक्ष्यते। अस्तु वा तत्रापि सा। **भाट्ट.** ११।४।१-३, * 'आत्रेयाय हिरण्यं ददाति' नात्र आग्नेयीन्यायेन दैववशसंपन्नऋत्विगात्रेयस्यैव ग्रहणं, आत्रेयत्वस्य अपूर्वसाधनताऽवच्छेदकत्वेन अक्लृप्तेः तन्न्यायाभावात्। १०।२।२५. * न च प्रसङ्गासंभवेऽपि आग्नेयीन्यायेन प्रकृतानामेव (स्रुचां) उपादानशङ्का, तस्य (न्यायस्य) प्रकृतिप्राप्तनानावृक्षीयत्वबाधकृतवैगुण्यप्रसङ्गेन अनुदयात्। **कौ.** २।१।५।१२ पृ. ८५. * विशेषाश्रुतेः 'इमे व्रीहयः क्लृप्तसामान्यसंबन्धाः, न इमे' इति विशेषाज्ञानात् **आग्नेयीन्यायानुपपत्तेः** प्रकरणस्यैव विशेषकत्वं वाच्यं, न च तत् संभवति। **सु.** पृ. ६२६, * प्रक्षेपस्य प्रकृतयाग्नेपयुक्तद्रव्यप्रतिपत्तित्वात् प्रकृतद्रव्यावलम्बित्वेऽपि त्यागोद्देशाख्यांशद्वयस्य प्रतिपत्त्यनौपयिकतया प्रक्षेपेण अनपेक्षणात् तद्-गृहीतदेवताग्रहणनियमानुपपत्तेः चतुरवत्तशब्दवच्च प्रकृतापेक्षसंस्कारनिमित्तस्य शब्दस्य देवताविषयस्य अभावेन **आग्नेयीन्यायाभावात्**। पृ. १५३०.

## ⌛ आग्नेय्यधिकरणम्। (आग्नेयीन्यायः)

आग्नेय्या आग्नीध्रमुपतिष्ठते। आग्नीध्रादीनां मन्त्राणां च प्राप्तत्वात् उभयप्राप्तौ संबन्धविधानस्य 'यत्रोभौ लक्षणत्वेन, तत्र स्वशब्देन संबन्धो विधीयते' इति जाघन्याधिकरणभाष्ये वक्ष्यमाणत्वात् (३।३।१०।२१ पृ. ८६९) धात्वर्थाविधानेऽपि च प्रत्ययार्थभूताया भावनायाः विशेषणपरेऽपि विधौ विध्यभ्युपगमात् तदन्वयद्वारा अवगतस्य कारकयोः परस्परान्वयस्य विधेः भावनायाश्च

अवच्छेदकधात्वर्थापेक्षायां आत्मनेपदालोचनया अभिधाऽऽख्यधात्वर्थावच्छिन्नत्वावगमात् 'आग्नेय्या आग्नीध्रं अभिदध्यात्' इति वाक्यार्थप्रतीतेः 'अग्न आ याहि' इत्यादिभिश्च संनिहितविषयामन्त्रणविभक्त्यादियुक्तेः (क्त्याद्युक्तेः ?) समीपस्थानं विना अभिधानाशक्तेः प्राप्तस्य समीपस्थानस्य अनुवादोपपत्तेः तस्यापि सामान्यान्वयवत् अविधानं इति अतिलाघवम्। **सु.** ११३२.

* **आग्नेय्यधिकरणे** 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्यादौ अन्यत्र विनियुक्तोऽपि प्रकृत एव मन्त्रो ग्राह्यः, न तु दाशतय आगमयितव्यः इत्युक्तम्। (३।२।८।२१–२४) **के.** * आग्नेय्यधिकरणे यौगिकानां पदानां संनिहितमात्रवाचकत्वस्य निराकृतत्वात् ( पार्थसारथिना )। **के.**

* ( आग्नेय्या आग्नीध्रमुपतिष्ठते इति ) आग्नेयीवाक्ये सामान्यसंबन्धबोधकप्रकरणेन प्रकृताप्रकृतसाधारण्यप्रवृत्तश्रुतिस्वारस्यभङ्गः ( **आग्नेय्यधिकरणे** प्रतिपादितः )। **कु.** ३।२।९।२२. * जञ्जभ्यमानशब्दस्य यौगिकत्वेन व्यक्तिवाचित्वात् आग्नयीशब्दवच्च सर्वनामार्थवृत्तित्वाभावेन संनिहितार्थवाचित्वाभावात् **आग्नेय्यधिकरणपूर्वपक्षन्यायेन** सर्वव्यक्तिवाचित्वावगतेः। **सु.** पृ. १४६६. * हविर्धानविशेषसंबन्धपरे वाक्ये सामान्यसंबन्धशक्तिमपि कल्पयतः **आग्नेय्यधिकरणोक्तो** वाक्यभेदो योज्यः। **वा.** ३।७।७।१६. * आग्नेय्यधिकरणोक्तगौरवलक्षणवाक्यभेदापत्तेः। **सु.** ३।७ पृ. १५. * द्रवावदाने स्वाभाविकसामर्थ्येन स्रुवस्य झटिति प्राप्तत्वात् तेनैव निराकाङ्क्षे विधौ, इतरांशे ( स्वधितिहस्तरूपांशे ) सामर्थ्यकल्पने गौरवापत्तेः **आग्नेय्यधिकरणन्यायेनापि** स्रुवस्यैव ग्रहणमवसीयते। **कौ.** १।४।२०।३० पृ. ३००. * श्राद्धे अनग्निकस्य विप्रपाणौ होमः, विप्रश्च आग्नेय्यधिकरणन्यायेन प्रकृत एव। **श्राद्धमयूखः** पृ.४९. * होमस्यापि त्र्यंशस्य समाप्तिपर्यन्तत्वात् सर्वान्त्येंऽशे प्रक्षेपे चोद्यमाने त्यागतद्दैवतोद्देशयोः किं अपूर्वयोः अर्थापत्त्या विधिः कल्प्यतां, उत कुतश्चित् प्राप्तयोरेव आश्रयणं क्रियतां इति। तत्र आग्नेय्यधिकरणन्यायेन लाघवे सति गौरवस्याप्रमाणकत्वात् अवगतत्यागोद्देशांशद्वयानि अष्टाकपालादीन्येव गृह्यन्ते! **वा.** ३।४।१४।४१ पृ. ९८१.

* **आग्नेय्यधिकरणन्यायस्वरूपं** (३।२।८।२१–२४) 'विनियुक्तस्यापि वचनात् विनियोगः' इति। **के.**

## आग्रयणं एकस्मिन्नपि संवत्सरे सस्यभेदेन भिन्नमेव कर्तव्यम्॥

'तासामितरेण' इति श्रुतौ ग्राम्यौषधीनां मध्ये व्रीहिधान्येनाग्रयणं विधाय 'संवत्सराद्वयेतदधि भवति' इति श्रुतम्। तत्र 'इतरेण' इत्येकवचनात् व्रीहिधान्यकमेवाग्रयणम्। अत एव संवत्सरोत्तरमेव पुनःकरणश्रुतिरुपपद्यते। वसन्ते यवैराग्रयणकरणे तु वत्सरमध्ये एव तदावृत्तेस्तद्विरोधः। अतो नास्त्येव यवाग्रयणं इत्यौडुलोमिराचार्यो मन्यते। **इति प्राप्ते,** स्यादेव यवाग्रयणं, 'उभाभ्यामाग्रयणेन यजेत' इति श्रुतेः। न चेयं फालकृष्टाफालकृष्टविषया, 'तस्मात् तासामुभाभ्यामग्निहोत्रं जुहोति उभाभ्यां दर्शपूर्णमासाभ्यां यजेत' इत्यत्र व्रीहियवयोरेव प्रकृतत्वात्, अस्याश्च तत्प्राये पाठात्। 'व्रीहिसस्ये वा यवसस्ये वाऽऽगते' इति स्पष्टं कौषीतकिश्रुतेश्च (४। १४)। 'संवत्सराद्वयेतत्' इति तु व्रीह्याग्रयणपरत्वेनाप्युपपन्नम्। अत एव 'द्विर्वा एष आदित्यः संवत्सरादावर्तते तमेताभ्यामाग्रयणाभ्यामर्वाञ्चं च पराञ्चं चाभियजते' इति श्रुतौ प्रत्ययनमाग्रयणोक्तिः। 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः, यवैरिष्ट्वा यवैरेव यजेत आ व्रीहिभ्यः' इत्यनेन तत्तदाग्रयणोत्तरभाविदर्शपूर्णमासयोर्द्रव्यनियमश्च, श्यामाकव्रीहियवानां प्राशने मन्त्रत्रयविधानं च संगच्छते। **संकर्ष.** ३।१।८.

## आग्रयणं नवान्नबुभुक्षाऽभावेऽपि कर्तव्यम्॥

नवान्नाशनस्य बुभुक्षातल्लाभोभयपूर्वकत्वेन अन्यतराभावे इष्टिपरिमितनवान्नलाभेऽपि नैवाग्रयणेऽधिकारः। तस्यानिष्टाग्रयणत्वेऽपि प्रतिषेधातिक्रमाभावेन प्रत्यवायाभावात्। **इति प्राप्ते**, नवान्नप्रथमाशनप्रागभावविशिष्टवसन्तादिकालजीवित्वस्यैव अधिकारिताऽवच्छेदकत्वेन बुभुक्षाऽऽदेस्तत्तद्घटकत्वे मानाभावादप्रतिहतोऽधिकारः। **संकर्ष.** ३।१।१४.

* **आग्रयणानि** चत्वारि श्यामाकाग्रयणं, व्रीह्याग्रयणं, यवाग्रयणं, वेणुयवाग्रयणं चेति । तत्र वेणुजन्यानि गोधूमसदृशानि बीजानि वेणुयवा उच्यन्ते । **के.**

**आग्रयणस्य आधानोत्तरमेव प्राप्तौ तदकरणे नवान्नभक्षणनिषेधः ॥**

वसन्ते नवान् पक्वयवान् प्राशितवता पश्चादग्न्याधाने कृतेऽपि यवाग्रयणं कर्तव्यम्। पूर्वमधिकाराभावेऽपि संप्रत्यधिकारसंपत्त्या तत्प्राप्तेः । **इति प्राप्ते**, नवान्नप्रथमप्राशनस्यैवानिष्टाग्रयणं प्रति प्रतिषिद्धत्वात्, तस्य च वृत्तत्वेन द्वितीयादिप्राशने निन्दाऽभावेन तादृशस्य न तत्राधिकारः । **संकर्ष.** ३।१।१३.

**आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकस्य बाधः ॥**

**दाने पाकोऽर्थलक्षणः । १०।३।८।३६ ॥**

**भाष्यं**— तत्रैव 'वत्सः प्रथमजो दक्षिणा' इति । तत्रैतत् समधिगतं, अन्वाहार्यधर्माः कर्तव्या इति । तदत्र संशयः किं वत्से पाकः कर्तव्यः, उत नेति । किं प्राप्तम्? चोदकानुग्रहाच्छक्यत्वाच्च कर्तव्य इति । **एवं प्राप्ते**, ब्रूमः। वत्सस्य दाने पाको न कर्तव्यः । अपक्वो हि वत्सो वत्स एव । वत्सश्च श्रूयते, न मांसम् । परिक्रयाय च श्रूयते, न पुरुषसंस्काराय । तस्माच्चोदकः पाकं न प्रापयति । तद्यदि पाकः क्रियेत, अश्रुतः प्राणिवध आचारविरुद्धोऽनुष्ठीयेत । तस्मात् पाको न कार्यः ।

**शा**— अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहाय पक्त्वा वत्सं, तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते । श्रुतं तु वत्सद्रव्यं पाकेन नश्येत्, अश्रुतं च मांसं दीयेत, वत्सशब्दो वा मांसलक्षणार्थः स्यात्, न चैतत् न्याय्यम् । तस्मान्न वत्सस्य पाकः ।

**सोम**— यदर्थं पूर्वं प्राप्तिरुक्ता तन्निरूप्यते इति **संगतिः । सूत्रार्थस्तु**- प्रकृतौ दाने अन्वाहार्यसिद्ध्यर्थं पाकः अर्थसिद्धः, इह तु न तथा, इति नासौ कर्तव्यः इति ।

**वि**— 'पाकोऽस्ति नो वा वत्से, स्यादन्वाहार्यस्य दर्शनात् ।, न वत्सनाशादश्रौती दक्षिणा मांसदानतः ॥'

**भाट्ट**— वत्से स्थानापत्त्यतिदेशावलम्ब्यः पाको निवर्तते एव, प्रकृतौ तस्य दक्षिणासाधनीभूतद्रव्यनिष्पादकतया वत्से अर्थलोपात् । न च वत्सस्यापि प्रकृतिद्रव्यत्वेन विधिः, साक्षाद्दक्षिणासाधनत्वसंभवे परंपराऽङ्गीकारे प्रमाणाभावात् । अतिदेशप्राप्तपाकानुरोधेन तदाश्रयणे अन्योन्याश्रयात् । अतः श्रुतवत्सत्वविरोधान्न पाकः ।

**मण्डन**— 'वत्से न पाकः क्रियते विरोधात् ।'

**शंकर**— 'वत्से पाकस्य बाधः स्यात् ।'

**आग्रयणे, अन्वाहार्यस्थानापन्नेऽपि वाससि पाकस्य बाधः ॥**

**पाकस्य चान्नकारितत्वात् । १०।३।९।३७ ॥**

**भाष्यं**— तत्रैव श्रूयते 'वासो दक्षिणा' इति । तत्रायमर्थः समधिगतः अन्वाहार्यधर्माः कर्तव्या इति । अथ पाकः कर्तव्यो नेति संशयः । अर्थापत्तेः कर्तव्यः । **इति प्राप्ते, ब्रूमः । न कर्तव्यः ।** अन्नकारितत्वादिति । अन्नकारितो हि पाकः । न च वासोऽन्नम् । न तत्र पाकः शक्यते कर्तुम् । तस्मात्तत्र पाको न कर्तव्य इति ।

**सोम**— पूर्ववत् श्रुतद्रव्यस्य पाकेन नाशाभावात् (वाससि पाकः कर्तव्य इत्युत्थानात् प्रत्युदाहरण**संगतिः**)। ननु कथं प्रयोजनाभावः, पाकगतविकारलक्षणस्य प्राकृतप्रयोजनस्य सद्भावात् । भवति वाससोऽपि पाकेन शुक्लरूपोत्पत्तिलक्षणो विकारः इति (चेन्न) प्रकृतौ न विकारमात्रं पाकस्य प्रयोजनं, किंतु अदनीयद्रव्यसिद्ध्यर्थतया लोकसिद्धत्वात् पाकस्य अन्नलक्षणदक्षिणाद्रव्यसिद्धिः प्रयोजनम् । इह च वासोरूपद्रव्यस्य पाकं विनाऽपि सिद्धेः प्रयोजनाभावः इति । **सूत्र** निवृत्तिः इति शेषः ।

**वि**— 'वाससस्ति न वा पाको, विनाशाभावतोऽस्त्यसौ ।, वैयर्थ्यादप्यशक्यत्वात् पाको वाससि नोचितः॥'

**भाट्ट**— वाससि विरोधाभावेऽपि पाकस्य प्रकृतौ दक्षिणाद्रव्यनिष्पादकत्वादिह तदभावेऽपि निष्पत्तेः प्रयोजनाभावाच्चरौ पेषणवदकरणम् । सिद्धमपि चेदं शिष्यहितार्थमुच्यते इति द्रष्टव्यम् ।

**मण्डन**— 'वासो न पच्येत न हीदमन्नम् ।'

**शंकर**— 'पाकबाधश्च वाससि ।'

आग्रयणे उपदिष्टवासोवत्सदक्षिणया अतिदिष्टान्वाहार्यदक्षिणाया बाधः ॥

**वासोवत्सं च सामान्यात्** । १०।३।६।३४॥

**भाष्यं**— 'आग्रयणं भवति, हुताद्याय यजमानस्यापराभावाय नवानामैन्द्राग्नः, पुराणानामाग्नेयः, सौम्यः श्यामाकः, वैश्वदेवः पयसि चरुः, द्यावापृथिव्य एककपालः' इति । तत्र श्रूयते 'वासो दक्षिणा, वत्सः प्रथमजो दक्षिणा' इति । अस्ति तु प्रकृतौ 'अन्वाहार्यो दक्षिणा' इति । स इह चोदकेन प्राप्यते । तदत्र संशयः किं वासोवत्समन्वाहार्यस्य निवर्तकं, उतानिवर्तकमिति । किं प्राप्तम्? चोदकानुग्रहाद्विरोधाभावाच्च अनिवर्तकमिति । एवं प्राप्ते ब्रूमः । वासोवत्सं च सामान्यात् । उक्तमधस्तात् आधानदक्षिणानां पुनराधेये निवृत्तिरिति । चशब्देनान्वादेशः क्रियते । अन्वाहार्यस्य निवृत्तिः । कुतः? कार्यसामान्यात् । दक्षिणाकार्ये अन्वाहार्यः प्रकृतौ । इह वासोवत्सं तस्मिन् कार्ये, दक्षिणाशब्दश्रवणात् । तस्मान्न समुच्चयः, निवृत्तिरिति । प्राप्तिर्वोत्तरविवक्षया क्रियते इति ।

**वि**— 'वासोवत्सं समुच्चेयमन्वाहार्येण वा न वा ।, अविरोधात् समुच्चेयं, न कार्यैक्याद् विरोधतः ॥'

**भाट्ट**— श्यामाकाग्रयणे 'वासो दक्षिणा' इति श्रुतम् । व्रीह्याग्रयणे च 'वत्सः प्रथमजो दक्षिणा' इति । सा प्राकृतस्यान्वाहार्यस्य निवर्तिका इत्यविवादमेव । न च क्रयाणामिव आनत्यतिरेकार्थत्वकल्पनया प्राकृतवैकृतयोः समुच्चयोपपत्तिः, ऋत्विक्संपत्तिफलकानतिरूपकार्यस्यैकेनैव सिद्धौ आनत्यतिरेकस्य निष्प्रयोजनत्वात् । तस्या एवानतेरुभाभ्यां करणे व्रीहियवयोर्व्रीहिप्रियङ्ग्वोश्च समुच्चयापत्तेः । क्रयेषु तु 'दशभिः क्रीणाति' इति वचनात् समुच्चयः । अतः प्राकृतदक्षिणा वैकृतदक्षिणया बाध्यते इत्युत्तरविवक्षया प्राप्यते ।

**मण्डन**— 'वत्सादि पूर्वस्य निवर्तकं स्यात् ।'

**शंकर**— 'वासोवत्से प्राप्तबाधः ।'

आग्रयणे ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रनियमो नास्ति । आग्रयणेष्टिन्यायः ( द्वितीयः ) ॥

**तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्, यथा पाशुकं सूक्तवाकेन** । १२।२।१५।३५ ॥

**भाष्यं**— तस्य प्रसूनस्य प्रवृत्त्या वैश्वदेविकं तन्त्रं नियम्यते । यथा पाशुकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतम् ।

**न वाऽविरोधात्** । ३६ ॥

**भाष्यं**— न वा नियम्यते । कुतः? अविरोधात् । अविरुद्धोऽयं धर्म इतरेषामपि हविषाम् । तेन न वैशेषिकः । अवैशेषिकत्वान्न ततोऽन्यतरत् नियन्तुं शक्नोति । वैशेषिकस्तु सूक्तवाकः । तस्मात् सोऽन्यतरन्नियन्तुमुत्सहते ।

**अशास्त्रलक्षणाच्च** । ३७ ॥

**भाष्यं**— किंच न च शास्त्रविहिताः प्रसूनाः । किं तर्हि? चोदकप्राप्ताः । किमतः? यदि शास्त्रविहिता भवेयुः, ततस्तेन प्रकृतिलिङ्गेन वैश्वदेविकं तन्त्रं नियम्येत । अथवा द्यावापृथिवीयधर्मत्वात् प्राप्तानामेव प्रसूनानां पुनर्वचनमानर्थक्यपरिहाराय लक्षणया वैश्वदेविकस्य तन्त्रस्य विधानं विज्ञायते प्रसूनादि तत्र भवतीति, न तच्छास्त्रलक्षणम् । तस्मान्नास्ति तन्त्रस्य नियम इति ।

**सोम**— पूर्वोक्तप्रसूननियमोपजीवनेन अस्य प्रवृत्त्या संगतिः । **सूत्रे** तच्छब्दः प्रसूनपरः ।

**वि**— 'द्यावापृथिव्यस्तन्त्री स्यात् सर्वे वा तन्त्रिणो, ऽग्रिमः । प्रैषन्यायात् प्रसूनस्य तन्त्रित्वापादकत्वतः ॥, प्रसूनत्वं नोपदिष्टमविरोधात् समाश्रितम् । तन्त्रित्वनियतौ शक्तं नातः सर्वेऽत्र तन्त्रिणः ॥'

**भाट्ट**— न चैवं विरुद्धेष्वपि नवप्रयाजत्वादिषु द्यावापृथिव्यस्यैव धर्मानुग्रहादितरयोः प्रसङ्गसिद्धिः, इतराभ्यां बर्हिर्मात्रग्रहणेन प्रसूनमयत्वस्य तदनुपकारकत्वेन तदंशे इतरयोः प्रसङ्गित्वाभावात् । अतश्च नवप्रयाजत्वादिविरुद्धधर्मविषये मुख्यत्वभूयस्त्वाभ्यामितरयोरेव तन्त्रित्वादेककपालस्य प्रसङ्गित्वमेव । अविरुद्धसर्वधर्मांशे तु तन्त्रित्वमेव, सहोपक्रमेण अगृह्यमाणविशेषत्वात् । अत्र नवसु पञ्चानामविरोधात् नवप्रयाजत्वमपि न विरोधीति प्रतिभाति । **याज्ञिकास्तु** तथा नानुतिष्ठन्ति । पशुपुरोडाशादौ तु यत्र तन्त्रमध्यपाठादिना गृह्यमाणविशेषता, तत्र विरुद्धाविरुद्धोभयांशेऽपि प्रसङ्ग एव ।

**मण्डन**—'न द्यावापृथिवीयस्य तन्त्रिताऽऽग्रयणे भवेत् ।'

**शंकर**—'सर्वेषां तन्त्रितेह च ।'

**आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः ॥**

**अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याऽभिसंयोगात् । १०।३।७।३५ ॥**

**भाष्यं**— तत्रैव वाससि वत्से च संशयः अन्वाहार्यधर्माः कर्तव्याः, उत नेति । किं प्राप्तम् ? न तावन्न्याय उच्यते कर्तव्या इति । तेन अकर्तव्या इति मन्यामहे इति । **एवं प्राप्ते ब्रूमः** । अर्थापत्तेस्तद्धर्मा वत्सः स्यात् तद्धर्मकं च वासः । साधनविशेषनिबन्धना हि ते धर्माः, नान्वाहार्यनिबन्धनाः । तस्मादन्यस्मिन्नपि तत्कार्यापन्ने भवितुमर्हन्तीति । कथं पुनर्वासोवत्सं तत्कार्यापन्नमिति ? निमित्ततया आख्याय परिक्रयेण, दक्षिणेति तया अभिसंयोगो भवति 'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणा' इति । तस्माद्वासोवत्सौ अन्वाहार्यधर्मकौ स्यातामिति ।

**सोम**—**सूत्रार्थस्तु**— वासोवत्सं अन्वाहार्यधर्मकं स्यात् अन्वाहार्यकार्यपरिक्रयनिमित्तकदक्षिणाशब्दसंयोगात् इति ।

**वि**—'अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथवा ।, न तद्धर्मत्वतो, मैवं साधनत्वप्रयुक्तितः ॥'

**भाट्ट**—वैकृती दक्षिणा प्राकृतदक्षिणाकार्यापन्नत्वात् प्राकृतान्वाहार्यादिदक्षिणाधर्मान् लभते इत्यपि तथैव ।

**मण्डन**—'वत्सादिरन्वाहरणादिधर्मा ।'

**शंकर**—'तत्रान्वाहार्यधर्मता ।'

* आग्रयणे द्यावापृथिव्य एककपालः । **भा.** ७।१।५। २३, * आग्रयणे द्यावापृथिव्यैककपाले चातुर्मास्यवैश्वदेविकद्यावापृथिव्यैककपालविध्यन्तस्य अतिदेशः । ७।३। १०।२६-२७.

**आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः ॥**

**तथाऽभिघारणस्य । १०।३।१०।३८ ॥**

**भाष्यं**— आग्रयणे श्रूयते, 'वासो दक्षिणा' 'वत्सः प्रथमजो दक्षिणा' इति । तत्रायमर्थः समधिगतः अन्वाहार्यधर्मा वाससि वत्से च कर्तव्या इति । अथायमर्थः सांशयिकः, किमभिघारणं कर्तव्यं नेति । किं तावत्प्राप्तम् ? अर्थापत्तेः कर्तव्यमिति । **एवं प्राप्ते ब्रूमः** । तथाऽभिघारणस्य । किम् ? अक्रियेति । अभिघारणं हि अन्वाहार्ये स्वादिम्ने क्रियते । स्वादिमा हि ओदनस्य परिक्रये उपकरोति । न च वाससि वत्से च स्वादिम्ना प्रयोजनम् । तस्मात्तत्राभिघारणं न स्यादिति ।

**सोम**— इह तु अदृष्टार्थत्वान्न प्रयोजनं इत्युत्थितेः **संगतिः** ।

**वि**—'अभिघारोऽस्ति नो वाऽत्र, शक्यत्वाद्वत्सवाससोः । अस्त्यन्वाहार्यवत्, मैवं स्वादुताया असंभवात् ॥'

**भाट्ट**—अभिघारणस्य तु प्रकृतौ अदृष्टार्थत्वात् वासोवत्सादावपि करणे प्राप्ते, ओदनस्वादिमाऽर्थत्वेन दृष्टार्थत्वसंभवे अदृष्टार्थत्वकल्पनाऽनुपपत्तेः स्वादिम्नश्चेह प्रयोजनाभावादकरणमेव ।

**मण्डन**—'न चाभिघारो वसने च वत्से ।'

**शंकर**—'उभयोरभिघारस्य ।' बाधः इत्यनुषङ्गः ।

**आग्रयणेषु तत्तत्सस्योत्पत्तिकालावधिकः संवत्सरो ग्राह्यो न चान्द्रादिः ॥**

'संवत्सराद्ध्येतदधि भवति' इति श्रुतौ 'द्वादश मासाः संवत्सरः' इत्यादिश्रुत्यन्तरसिद्धचान्द्रादिसंवत्सरान्यतमः एव विकल्पेन ग्राह्यः । **इति प्राप्ते**, 'संवत्सरे सस्यानि पच्यन्ते' इत्यादिषु लोके परुत्सस्यपाकाद्यैषमःसस्यपाकावधिकालस्यापि संवत्सरत्वेन व्यवहारात् सस्यपाकनिमित्तकर्मसु तस्यैवोपस्थित्या नियमनसंभवे विकल्पायोगात् द्वादशमासन्यूनातिरेकयोरपि 'संवत्सरादधि' इति वादः । ('परुत् परारि ऐषमोऽ (मस्) ब्दे पूर्वे पूर्वतरे यति' इत्यमरः । परुत् पूर्वे अब्दे, परारि पूर्वतरे अब्दे, ऐषमः यति वर्तमाने अब्दे) । **संकर्ष.** ३।१।१७.

**आग्रयणेषु तत्तद्द्रव्यकालयोर्नियमो न विकल्पः ॥**

'आग्रयणेनान्नाद्यकामो यजेत' इति विधाय वाक्यान्तरेण कालानां द्रव्याणां च विधानात् अग्निहोत्रद्रव्याणामिव विकल्पः स्यात् । **इति प्राप्ते**, **प्राप्तो-**

द्देशेन कालद्रव्याद्यनेकगुणविधाने वाक्यभेदात् विशिष्टविधित्वावश्यंभावेन त्रयाणामपि आग्रयणानां अभ्यासाद्भेदः। नैमित्तिकानामपि अन्नाद्यकामवाक्येन काम्यताऽपि। कौषीतकिब्राह्मणे तु श्यामाकाग्रयणं विधाय 'सप्तदश सामिधेन्यः, सद्वन्तावाज्यभागौ' (४।१२) इत्यादिना प्राकृताङ्गानि उद्दिश्य गुणविशेषान् विधाय, यवाग्रयणादींस्ततो विधाय 'एतत्तन्त्रमेवैतद् ब्राह्मणं' (४।१३) इति वाचनिकातिदेशकथनात् स्पष्टः कर्मभेदः, अतो न द्रव्यविकल्पः, नापि कर्मविकल्पो निमित्तभेदात्। 'द्विर्वा एष आदित्यः' इत्यादिना अयनभेदेन आवृत्तिश्रुतेश्च। **संकर्ष.** ३।१।१६.

**आग्रयणस्थव्रीहिश्रुत्या प्रकृतौ द्रव्यविधिः ॥**

'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः' इत्यनेन व्रीहिकालयवकालान्तराले व्रीह्याग्रयणाभ्यासो विधीयते यजिशब्देन प्रकरणिनः एवोपस्थितेः। **इति प्राप्ते**, अन्तरालकाले नित्यप्राप्तयोर्दर्शपूर्णमासयोः द्रव्यनियमविधिपरत्वे संभवति अत्यन्ताप्राप्ताभ्यासपरत्वमयुक्तम्। 'व्रीहिभिरेव' इत्येवकारेण यवनिरासप्रतीतेः। **संकर्ष.** ३।१।१५.

**आग्रयणाकरणे ग्राम्यधान्यभक्षणस्य निषेधः॥**

'तस्मान्नानिष्ट्वा आग्रयणेन, नवस्याशितव्यम्' इति निषेधः फालकृष्टारण्याशनस्यैव, न व्रीहियवाशनस्य 'याः फालकृष्टास्तासामितरेण' इति वाक्यशेषे फालकृष्टकीर्तनेन विशेषे व्यवस्थापनात्। तस्मात् फालकृष्टातिरिक्तानां ग्राम्याणां भक्षणं अनियतम्। **इति प्राप्ते**, अञ्जनस्य द्रव्यसामान्येन करणासंभवेन प्रवृत्तेः विशेषैकविषयकत्वेन सामान्यस्य विशेषे पर्यवसानाय वाक्यशेषावश्यकत्वेऽपि निवृत्तेः नवधान्यसामान्याशनविषयकत्वानुपपत्तेरभावेन विधिना अनाकाङ्क्षितस्य वाक्यशेषेण असमर्पणात् फालकृष्टार्थवादः छत्रिवत् लक्षणया स्तावकमात्रं इति सर्वग्राम्याणामेव भक्षणप्रतिषेधः। **संकर्ष.** ३।१।१०.

**आग्रयणाकरणेऽपि मुद्गादिशमीधान्यानां भक्षणनिषेधो नास्ति ॥**

मुद्गादिशमीधान्यानामपि पक्वौषधित्वाविशेषेण **निषेधे प्राप्ते**, तेषां अयागयोग्यत्वादेव न निषेधः। **संकर्ष.** ३।१।१२.

**आग्रयणाकरणेऽपि शाकापक्वौषधीनां भक्षणे न दोषः ॥**

'सस्यं नाश्नीयात्' इति वचनान्तरेण शाकादीनामपि भक्षणनिषेधे **प्राप्ते**, तेषां यागयोग्यत्वाभावेन 'देवा ओषधीषु पक्वासु आजिमीयुः, ता इन्द्राग्नी प्रथममुदजयतां' इत्युपक्रम्य नवाशननिषेधेन देवेभ्यो दातुं योग्यानां धान्यानां पक्वानामेव तेभ्यः अनिष्ट्वा भक्षणस्य निन्दया पक्वशाकानां हरितयवादीनां च भक्षणे याथाकाम्यम्। **संकर्ष.** ३।१।११.

**आग्रयणेष्टिन्यायः। कांस्यभोजिन्यायः।** आग्रयणे जघन्यद्यावापृथिव्यानुरोधेन मुख्यस्य ऐन्द्राग्नादेरपि विरोधाभावात् प्रसूनबर्हिषो नियमः ॥

**अधिकश्च गुणः साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि। १२।२।१४।३४ ॥**

**भाष्यं**— आग्रयणे द्यावापृथिव्य एककपालः। स वैश्वदेविकैककपालप्रकृतिः। तस्य धर्मः प्रसूनं बर्हिः। इतरेषां प्रसूनमप्रसूनं वा। तत्र किमनियमः, उत प्रसूनमेवेति विचारः। आग्रयणे तु ऐन्द्राग्नस्य मुख्यत्वात् **अनियमे प्राप्ते, उच्यते**। साधारणे एतस्मिन्, दार्शपौर्णमासिकैन्द्राग्नादीनां योऽयमधिको गुणो द्यावापृथिवीयस्य वैशेषिकः, सः अमुख्येऽपि सति द्यावापृथिवीये नियम्येत अविरोधात्। कांस्यभोजिवत्। तद्यथा शिष्यस्य कांस्यपात्रभोजित्वनियमः, उपाध्यायस्य न नियमः। यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते, अमुख्यस्यापि शिष्यस्य धर्मो नियम्येत, मा भूद्धर्मलोप इति। एवमिहापि न स्यादनियमः।

**सोम**— पूर्वत्र अनियमाभावेऽपि इह तथाविधबाधकाभावात् अनियमोऽस्तु इत्युत्थितेः **संगतिः**। प्रसूनं पुष्पितं, लूनशेषात् पुनरुत्पन्नं वा। अप्रसूनस्य न तत्त्वेन (अप्रसूनत्वेन) अङ्गता, किंतु बर्हिर्मात्रत्वेन। ततश्च

अप्रसूनत्वस्य बाधेऽपि शास्त्रार्थस्य बर्हिर्मात्रस्य बाधाभावात् न कस्य चिद्वैगुण्यम्। **सूत्रार्थस्तु--** तन्त्रसाधारण्ये अधिको गुणः प्रसूनत्वलक्षणः गुणिनि अमुख्येऽपि सति विरोधाभावात् नियम्येत। यथा शिष्यस्य कांस्यभोजित्वनियमः, उपाध्यायस्यानियमः। यदि द्वयोरेकस्मिन् पात्रे भोजनमापद्येत, तत्र अमुख्यस्यापि शिष्यस्य धर्मोऽनुगृह्यते तद्वत् इति।

**वि--** 'बर्हिराग्रयणे किं चित् प्रसूनं वा, बहुत्वतः। प्राथम्याच्चाग्रिमो, मैवमलोपात् कांस्यभोजिवत्॥'

**भाट्ट--** आग्रयणे 'ऐन्द्राग्नो द्वादशकपालः वैश्वदेवश्चरुर्द्यावापृथिव्य एककपालः' इति त्रयो यागाः श्रुताः। तत्रैककपालो वैश्वदेविकैककपालप्रकृतिक इत्युक्तम्। तेन तत्र प्रसूनमयं बर्हिः। आद्ययोर्द्वयोर्दर्शपूर्णमासातिदेशादनियमः। तत्र जघन्यैकद्यावापृथिव्यानुरोधेन मुख्ययोरनेकयोरपि प्रसूनमयत्वनियमः एव। नहि तयोरनियमो नाम कश्चित् पदार्थोऽङ्गं, येन जघन्यैकवृत्तित्वान्नियमो बाध्येत, बर्हिर्मात्रं तु तदङ्गम्। अतश्च कांस्यभोजिन्यायेन दुर्बलानुरोधेनापि प्रसूनमयत्वग्रहणे न कश्चिद्दोषः।

**मण्डन--** 'अमुख्योऽपि गुणो ग्राह्यो येनान्येऽपि गुणान्विताः।'

**शंकर--** 'बर्हिः सूनं त्वाग्रयणे।' सूनं प्रसूनं पुष्पितम्।

* **आग्रयणेष्ट्यां** सामिधेनीसाप्तदश्यम्। **भा.** १०।८। ९।१७.

( प्राचीनः आग्रयणशब्दः यागविशेषपरः, अग्रे तु सोमयागस्थग्रहविशेषपरः )

* **आग्रयणग्रहो** ज्योतिष्टोमे प्रातःसवने गृह्यते। **वि.** २।३।१, * **आग्रयणपात्रात्** षोडशी ग्रहो ग्राह्यः। उक्थ्यग्रहणोत्तरं च तद्ग्रहणम्। १०।५।१०. * **आग्रयणस्थालीं** द्विदैवत्यशेषः आदित्यस्थाल्याः सकाशात् आगच्छति। आग्रयणस्थाल्याः पात्नीवतो गृह्यते। ३। २।१३. * **आग्रयणाग्राणि** अहानि व्यूढे द्वादशाहे। **के.**

**आग्रयणाग्रताया विषुवति निवेशः॥**

**जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात्। ५८॥**

**भाष्यं--** ज्योतिष्टोमे श्रूयते, 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति। आग्रयणाग्रानित्येतदुदाहरणम्। तत्र संशयः किमाग्रयणाग्रतायाः प्रकृतौ निवेशः, उत विकृताविति। किं प्राप्तम्? प्रकरणानुग्रहात् प्रकृताविति। यदि जगत्सामेति ज्योतिष्टोमः एवोच्यते, येन केनचिदभिसंबन्धेन गुणेन क्रियया वा। **एवं प्राप्ते, ब्रूमः।** जगत्साम्नि श्रूयमाणेऽपि ऋक्तः साम तदाख्यमित्यध्यवसीयते। कुतः? सामाभावात्। नहि कृत्स्नेऽपि सामवेदे जगन्नाम सामास्ति। तस्माद्यत्र जगत्यामुत्पन्नं साम, स जगत्सामा। स विषुवान्। ननु शुक्राग्रो विषुवानित्युच्यते। नैष दोषः। स कामाय भविष्यति। तस्माद्विकृतौ विषुवति निवेश इति।

**सोम--**यथा ( चतुर्थेचतुर्थेऽहनि इति ) वीप्साया यथाकथंचिदनुवादतया नयनं, एवं ज्योतिष्टोमे एव जगत्सामशब्दस्य कथंचिन्नयनं इत्युत्थानात् ( दृष्टान्त- ) **संगतिः।** जगत् साम अस्येति बहुव्रीहिः। जगत्यां साम अस्येति व्यधिकरणबहुव्रीहिरपि संभवति। अत्र जगतीशब्दपर्यायो जगच्छब्दः, छान्दस ईकारलोपो वा बोध्यः। **सूत्रार्थस्तु--** 'यदि जगत्सामा' इत्यत्र जगत्साम्नः अभावात् उक्तं साम ऋक्संबन्धात् तदाख्यं जगच्छब्दाभिधेयं स्यात् इति। एवं वदतः सूत्रकारस्य समानाधिकरणसमास एवाभिप्रेतः।

**वि--** 'प्रकृतौ विकृतौ वा स्याद् ग्रहेष्वाग्रयणाग्रता।, आद्यः प्रकरणा, दन्त्यो जगत्सामत्वसंभवात्॥'

**मण्डन--** 'भवेज्जगत्साम मखे विकारे।'

**शंकर--** 'विषुवाग्रयणाग्रता।' १६.

**के--** 'विभ्राड् बृहत् पिबतु सोम्यं मधु' इति जगतीछन्दस्कायामृचि उत्पन्नं साम जगत्साम।

* **आग्रयणाग्रत्वं** ज्योतिष्टोमविकृतिभूते विषुवति पृष्ठस्तोत्रस्य जगत्सामत्वे सति कर्तव्यम्। **वि.** २।३।१, * आग्रयणाग्रत्वं धाराग्रहेषु, द्वादशाहे व्यूढे चतुर्थपञ्च-

मयोर्नवमे चाहःसु । समूढे च चतुर्थसप्तम–एका-दशाहःसु । १०।५।२३–२४, * आग्रयणाग्रत्वं सोमस्य जगतीछन्दस्कऋच्युत्पन्नसामकत्वे । तच्च विकृतौ विषुवति नाम । १०।५।१५.

* **आघार:** न कृतमात्रः एव प्रधानेषूपकरोति । यत् कारणं, तस्मिन् काले प्रधानान्येव न सन्ति । यदा तु सर्वाण्यङ्गानि कृतानि, तदा तज्जन्यापूर्वाणि संभूय प्रधानेषूपकुर्वन्ति । **भा.** ११।१।१०।५७. * आघार: प्रथमः अमन्त्रकः ' प्रजापतिं मनसा ध्यायन् आघारयति ' ' तूष्णीमाघारयति ' इति श्रुतेः । दर्शपूर्णमासयोर्वायव्यपशौ च । **वि.** १०।३।२, * आघारः ' स्रुच्यमाघार्य जुह्वा पशुं समनक्ति ' इति अग्नीषोमीयपशुप्रकरणे श्रुतः । ८।१।५. * **आघारौ** अङ्गकर्म, न फलप्रयुक्तम् । तत्र फलश्रुतिरर्थवादः । तौ च आग्नेयाद्यर्थौ क्रत्वर्थौ । **भा.** ४।३।१।१–४, * आघारौ आज्यभागौ प्रयाजानुयाजाः पत्नीसंयाजाः समिष्टयजुः स्विष्टकृत् एतान्यङ्गानि । आग्नेयाग्नीषोमीय–उपांशुयाज–ऐन्द्राग्न-सांनाय्ययागाः प्रधानम् । ४।४।११।२९–३८, * **' आघारमाघारयति '** इति द्रव्यपरा चोदना ।......द्रव्यं हि अनया क्रियया क्षार्यते, क्षारितं च यागं साधयति ।......एतदेव आघारणं प्रधानकर्म ।...आज्यं द्रव्यं, मान्त्रवर्णिकी इन्द्रो देवता । द्रव्यदेवतासंयुक्तमाघारणं, तस्माद्यजतिः । तस्य यजतेर्नामधेयम् । १।४।३।४, * स्रुवेणा**घार**माघारयति उपसत्सु । १०।७।१४।४५, * **आघारे** ' ऊर्ध्वमाघारयति ' इति गुणविशेषविधिः । २।२।५।१३–१६. * आघारे ऋजुत्व–संततत्व–ऊर्ध्वत्वधर्माणां समुच्चयः अदृष्टद्वारभेदात्, न तु विकल्पः । **वि.** १२।३।३.

**⌛ आघारे च दीर्घधारत्वात् । १२।३।१२।२८॥**

दर्शपूर्णमासयोराघारे इतरहोमवत् मन्त्रान्तेन कर्मादिसंनिपातः । ' संततमाघारयति ' इति संततशब्दस्तु दीर्घधारत्वात् दीर्घा धारा यस्य तादृशत्वात् प्रयुक्तः । आघाराज्यस्य धारा एककोणमारभ्य अन्यसंमुखकोणपर्यन्तं दीर्घा भवति । चशब्दः पूर्वोक्तहोमस्य वसोर्धाराया वा दृष्टान्तार्थः । **के.**

* आघारे द्वितीये दर्शपूर्णमासयोः ' समारभ्योर्ध्वो अध्वरः ' इत्यादिर्मन्त्रः । वायव्यपशौ तु ' हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति ' । **वि.** १०।३।२.

**⌛ आघारे मन्त्रान्तेन कर्मादिसंनिपातः ॥**
**आघारे च दीर्घधारत्वात् । १२।३।१२।२८ ॥**

**भाष्यं**— दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते ' संततमाघारयति ' इति । तत्रापि क्षणिकत्वान्मन्त्रेण कर्मणः सह तननं न घटते । एकत्वात् कर्मसंतानो नास्ति । तस्मात् द्रव्याभिप्रायः संतानशब्दः । संततं क्षारयतीति दीर्घधारया जुहोतीति दीर्घधारत्वात् संततशब्दः ।

**सोम— न च** कर्मणः क्षणिकत्वेऽपि क्रियायाः एकफलावच्छिन्नव्यापारनिचयरूपत्वात् दीर्घकालत्वसंभवेन साहित्यमुपपद्यते इति **वाच्यम्** । अवयवानामपि कतिपयत्वेन दीर्घतरमन्त्रसाहित्यस्य तथाप्यनुपपत्तेः ।

**वि**— ' आघारे मन्त्रसाहित्यं धारा वा संतता, ऽग्रिमः । कर्मैकत्वा, त्वाज्यधारानैरन्तर्यस्य संभवात् ॥ ' तस्मात् पूर्ववत् मन्त्रान्ते कर्मादिसंनिपातः ।

**भाट्ट**— ' संततमाघारयति ' इत्यत्र कर्मैकत्वात् तदविच्छेदविधानानुपपत्तेर्मन्त्रसाहित्यमेव विधीयते इति मन्त्रादेः कर्मादेश्च संनिपातः । **इति प्राप्ते**, क्षणिकस्य कर्मणो बह्वक्षरघटितमन्त्रसाहित्यानुपपत्तेः दीर्घधारस्य आघार्यमाणस्य द्रव्यस्य सान्तत्यमनेन विधीयते, इति नात्रापि मन्त्रान्तोत्तरकालताबाधः । एतान्यपि पञ्चाधिकरणानि उपस्थितमन्त्रप्रसङ्गात् निरूपितानि इति द्रष्टव्यम् ।

**मण्डन**— ' आघारे स्यादेवमेव । ' एवं वसोर्धारावत् ।

**शंकर**— ' संतताघारकर्म च । ' मन्त्रान्ते आरभेत ।

* **आघारयोः** ' अभीषू वा एतौ यज्ञस्य यदाघारौ ' इति फलार्थवादः, न तु फलविधिः दर्शपूर्णमासयोः । **भा.** ४।३।१।१–३. * **आघारकर्मणः** द्रव्यदेवताऽन्वयेन यागरूपता तत्प्रख्याधिकरणे अभिहिता । **सु. पृ.** ७६१. * **आघारशब्दः** कर्मान्तरविधायकः, न समुदायानु-

वादः । भा. २।२।५।१३–१६. * आघारशब्दः क्रियावाची, न द्रव्यवाची । वि. १।४।४, * आघारशब्दः यौगिकं कर्मनामधेयम् । यस्मिन् कर्मणि नैर्ऋतीं दिशमारभ्य ऐशानीं दिशमवधिं कृत्वा संतत्या घृतं क्षार्यते, तस्य कर्मण एतन्नामधेयम् । आघारशब्दश्च 'घृ क्षरणदीप्त्योः' इत्यस्माद्धातोरुत्पन्नः क्षरद् घृतमाचष्टे । १।४।४.

**आघाराग्निहोत्रमरूपत्वात् । २।२।५।१३ ॥**

'आघारमाघारयति' इति श्रूयते । तथा 'ऊर्ध्वमाघारयति' 'ऋजुमाघारयति' 'संततमाघारयति' इति । इदं च– 'अग्निहोत्रं जुहोति' तथा 'दध्ना जुहोति' 'पयसा जुहोति' इति । तत्र संदेहः किमूर्ध्वमाघारयति, दध्ना जुहोतीत्यादिभिराघारा होमाश्च विहिताः, तेषां 'अग्निहोत्रं जुहोति, आघारमाघारयति' इत्येतौ समुदायानुवादौ उतापूर्वयोराघारहोमयोर्विधातारौ इति । पूर्वमेव वाक्यत्वानुरोधेन विष्ण्वादियुक्तानां अर्थवादत्वेनैव अन्वयोपपत्तेः अन्तरावाक्यस्यैव विधित्वं, न समुदायानुवादकत्वमित्युक्तम् । इह तु तथाभूतहेत्वभावात् पुनः प्रत्यवतिष्ठते । अत्रायं पूर्वपक्षिणोऽभिसंधिः– 'आघारमाघारयति' इत्यनेन सह 'ऊर्ध्वमाघारयति' इत्यादीनां न तावदेकवाक्यत्वं प्रतीयते । नापि 'अग्निहोत्रं जुहोति' इत्यनेन सह । 'दध्ना जुहोति' इत्यादीनां तावत् स्तुतिः प्रकाश्यते । अतो नार्थवादत्वम् । तेनोर्ध्वादियुक्तवाक्यानामूर्ध्वादिगुणविशिष्टाघारकर्मविधायकत्वं, दध्यादियुक्तानां च दध्यादिगुणविशिष्टहोमविधायकत्वमिति । तदुक्तं **'न चैषामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः । ऐकान्तिको विधिस्तेन गुणवत् कर्मगोचरः ॥' इति ।** (वा. पृ. ४९७) तथा सति ऊर्ध्वादियुक्तवाक्यविहितानामाघारकर्मणां 'आघारमाघारयति' इति समुदायानुवादः । मैवं, केवलस्य गुणविधानासंभवात् । प्रवर्तनात्मको हि विधिः क्रियायामेव पुरुषं प्रवर्तयति । गुणश्च न क्रिया । अतः कथं गुणो विधीयते ? किंच न गुणपदस्थो विधिः श्रूयते, किंतु आख्यातपदस्थः । स च समानपदस्थधात्वर्थभावनापरित्यागेन न पदान्तरस्थं गुणं विधातुमुत्सहते । **न च गुणस्य** कारकतया भावनाविशेषणत्वात् भावनास्थेनापि विधिना गुणो विधास्यते इति **वाच्यम् ।** यतस्तत्रापि किं भावनां विहाय निष्कृष्ट एव गुणः कारकतया विधातव्यः, उत भावनाकारकतया ? न तावन्निष्कृष्टो गुणो विधातुं शक्यते, विधेः क्रियाश्रयत्वस्योक्तत्वात् । भावनाकारकतया च विधानं भावनामन्तरेण न संभवतीति भावनाविशिष्टो विधीयते इत्युपपद्यते । तेन वस्तुतः शब्दतश्च सर्वत्र गुणविशिष्टभावनाविधानमेव वाच्यम् । न तु क्वापि केवलगुणविधानमिति । तदुक्तं **'विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति । तद्विधिर्भावनातश्चेत् सैव पूर्वं विधीयताम् ॥' इति ।** (वा. पृ. ४९७) **ननु** ऊर्ध्वादिवाक्येषु न द्रव्यं, नापि देवता समस्ति । दध्यादियुक्तवाक्येषु च द्रव्यसद्भावेऽपि देवता नास्ति । द्रव्यदेवते हि कर्मणो रूपम् । अतः कथमेभिः कर्मविधानम् ? कथं वा 'आघारमाघारयति' 'अग्निहोत्रं जुहोति' इति वाक्यद्वयेन समुदायद्वयानुवादः इति निश्चीयते ? **न च** वाच्यं– 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य' इत्यनेन आघारेष्वाज्यद्रव्यविधानम् । 'इत इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयति' इत्यनेन विहितमन्त्रद्वारेण मान्त्रवर्णिकी देवताप्राप्तिः । तथा 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत् सूर्याय च प्रजापतये च प्रातर्जुहोति' इत्येताभ्यां दध्यादिहोमेषु कालभेदेन देवताविधानं' **इति ।** यतो नात्रत्यपूर्वपक्षी केवलगुणविधानं किं चिदपि पश्यति, सर्वत्रैव विधेः क्रियाश्रयत्वस्योक्तत्वात् । तेन सर्वाण्येवैतानि वाक्यानि गुणविशिष्टविधायकान्येव, न तु वाक्यान्तरस्थक्रियानुवादेन क्व चिद्देवतालक्षणगुणविधायकानि । अतोऽत्र यस्मिन् वाक्ये क्रियापदमस्ति, तत्र सैव क्रिया गुणविशिष्टा विधीयते । यत्र नास्ति, तत्र अध्याहृतैव क्रिया गुणविशिष्टा विधीयते । **न चैवं** सति विशिष्टविधावपि गुणस्याक्रियारूपत्वेन विधिसंस्पर्शाभावात् कथं चिद्विशेषणीभूतगुणोपादानमिति **वाच्यम् ।** यतोऽत्रत्यः पूर्वपक्षी एवं मन्यते 'निष्कृष्टगुणविधानं हि न संभवति । यदा तु भावनास्थो विधिरेकेनैव व्यापारेण भवनाविधानं सकलविशेषणविशिष्टमेव विधत्ते, न तु विशिष्टविधिं कल्पयति, तदा न किंचिदनुपपन्नम् ।' अतः कथं पूर्वपक्षः ? इति ।

उच्यते सत्यमेवं, तथापि आकाङ्क्षावशात् परस्परद्रव्यदेवताऽनुषङ्गेण सर्वेषामेव वाक्यानां द्रव्यदेवताविशिष्टकर्मविधायकत्वात् द्रव्यदेवतालाभो नानुपपन्नः। तेन यानि वाक्यानि आघाराग्निहोत्रयोर्गुणविधायकत्वेन सिद्धान्तिनोऽभिमतानि, तानि सर्वाणि अन्योन्यानुषङ्गद्रव्यदेवताभिधायिपदानि विशिष्टविधायकानि। **न चैवं** सति आघाराग्निहोत्रवाक्ययोरपि द्रव्यदेवताऽभिधायिपदानुषङ्गेण कर्मविधायकत्वात् नानुवादकत्वमिति **वाच्यम्**। यतो वर्तमानापदेशरूपमिदं वाक्यद्वयम्। न चावश्यं पञ्चमलकारत्वेन विधित्वाभिव्यञ्जकार्थवादः समस्ति। न चात्रानुवादानर्हं ऊर्ध्वादिस्थानीयं दध्यादिस्थानीयं वा गुणान्तरमस्ति। नाम्नश्चानूद्यमानविशेषप्रतिपत्तिहेतुत्वेनापि उपपत्तेः। तेन ऊर्ध्वादिवाक्यविहितकर्मसमुदायद्वयानुवादः। एवं च आघाराग्निहोत्रवाक्याभ्यामिति निश्चीयते। समुदायद्वयानुवादप्रयोजनं तु अग्निहोत्रे एकसमुदायापन्नानामेकवचनेन 'अग्निहोत्रं जुहुयात् स्वर्गकामः' **तथा** 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिभिः फलनिमित्तयोर्विधानसिद्धिरिति सुष्ठूक्तमेव। आघारेऽग्निहोत्रे 'पञ्च प्रयाजान् यजति' इतिवत् संज्ञोपबन्धार्थ एवायं समुदायानुवादः। संज्ञोपबन्धप्रयोजनं च सिद्धान्तवदेवेति स्वतः परतश्च कर्मविधित्वापादकरूपोपलम्भाभावात् आघाराग्निहोत्रवाक्ययोः समुदायद्वयार्थवादत्वमिति।

**चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनःश्रुतिः। १६॥**

**एवं प्राप्तेऽभिधीयते**। अयमभिप्रायः। भवेदेवं, यदि 'आघारमाघारयति' 'अग्निहोत्रं जुहोति' इति वाक्यद्वयेन कर्मद्वयं न विधीयेत। ऊर्ध्वादिसंयुक्तवाक्यैर्दध्यादिसंयुक्तवाक्यैर्वा अत्र गुणो विधातुं न शक्यते। तथाहि, आघाराग्निहोत्रवाक्याभ्यां तावत् नामावच्छिन्नः कर्मविशेषः प्रतिपाद्यते। नासौ वर्तमानापदेशपञ्चमलकारसंदेहान्न विधीयते, प्रयोगवचनोपसंग्रहेणैव अस्य पञ्चमलकारत्वनिर्णयात्। न च पौर्णमासीवत् यच्छब्दाद्युपबन्धोऽनुवादकारणमस्ति। तेन अनन्याक्षिप्तशक्तिरयं विधिः कर्मैव विदधाति। नाप्यूर्ध्वादिसंयुक्तैर्वाक्यैर्गुणो विधातुं न शक्यते। यतः सर्वत्र भावनास्थः एव विधिः योग्यमुपपदार्थमीक्षमाणो विशिष्टविधिगौरवात् वाक्यान्तरविहिते कर्मणि गुणं विधत्ते। न चात्र वाक्ये अनेकगुणश्रवणमस्ति। न च प्रकृते कर्मणि गुणावरोधोऽस्ति। तेनैषामभ्याहतमेव गुणविधित्वम्। न च वाच्यं 'क्रियाविषयो विधिः, गुणश्च न क्रियेत्युक्तम्। अतः कथं गुणविधानं' इति। यतोऽत्रापि क्रियैव विशिष्टा विधीयते इति ब्रूमः। न च प्राप्तत्वान्न विधीयते, गुणविशिष्टभावनाया अप्राप्तत्वात्। **ननु** प्राप्ते कर्मणि विधिश्चात्र (न) गुणसंक्रान्तः, किं तर्हि गुणविशिष्टकर्मविषयः? तेनाप्राप्तस्वर्गविधिवत् प्राप्ते कर्मणि विशिष्टविधिन्यायेनैवानेकगुणविधानोपपत्तेः 'चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत' (२।२।३) इत्यनर्थकमापद्यते। **मैवम्**, यदि भावनास्थोऽयं विधिर्भावनास्वरूपं प्रति प्रवृत्तिप्रयोजनत्वेन गृह्यते, तदा आक्षिप्तविशेषविधौ सति अवाक्यभेदो भवत्येव। यदा तु भावनास्वरूपस्य प्राप्तत्वात् गुणविशिष्टभावनाविधिः, तदा अनेकगुणसंनिधानेऽपि, यस्यैव गुणस्य भावनया सह विशेषणविशेष्यभावप्रतिपादनपरोऽयं विधिः, तस्यैव प्रतिपादयेत्, नेतरस्यापीति तदर्थे विध्यावृत्तौ वाक्यभेद एवेति। तदुक्तं '**विधित्वे भावनास्थेऽपि तादर्थ्ये प्रविभज्यते। विशेषणफले चास्मिन् वाक्यभेदो भविष्यति॥**' इति (वा. पृ. ५०३)। तेन प्राप्ते कर्मणि तदनुवादेन गुणो विधीयते इति यदेतत् तत्रतत्रोच्यते, तत् भावनास्वरूपस्य प्राप्तत्वात् तद्गतविधितात्पर्याभावेन गुणविशिष्टाया अप्राप्तत्वात् तद्गतैवेति तात्पर्याभिप्रायेणेति मन्तव्यम्। यत्तु एकस्यैव विधेः विशेष्ये विशेषणे च तात्पर्यमित्युक्तं, यतो विशेष्यत्वं हि प्रधानत्वं, विशेषणत्वं च तद्गुणत्वम्। **न** च सकृत् श्रुतस्य विधेर्वैरूप्यं संभवतीति नैकस्योभयतात्पर्यत्वमिति। **न च** द्रव्यदेवतयोरभावात् आघाराग्निहोत्रवाक्ययोर्होमविधानमिति **वाच्यम्**। वाक्यान्तरविहितद्रव्यदेवतासद्भावेन होमविधिनिर्वाहात्। तथाहि, आघारे तावत् 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य' इति वचनेन चतुर्गृहीताज्यविधानात् द्रव्यं प्राप्तमेव। 'ऊर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रा-

वान्स्वाहा इत्याघारमाघारयति ' इति वचनेन मन्त्रविधानात् मान्त्रवर्णिकदेवतालाभः। तथा अग्निहोत्रेऽपि दध्यादिवाक्यैर्द्रव्यविधानं स्फुटमेव । तथा 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्जुहोति ' इति वचनद्वयविहितमन्त्रद्वयवशेन सायंप्रातर्होमयोर्मान्त्रवर्णिकाग्निसूर्यदेवताप्राप्तिः । तथा 'यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातर्जुहोति' इति वचनद्वयेन सायंप्रातर्होमयोरेव प्रजापतिदेवताऽन्वयः। तेन सायंहोमे अग्निश्च प्रजापतिश्च देवता, प्रातर्होमे सूर्यश्च प्रजापतिश्च देवतेति। **न च** 'यदग्नये च प्रजापतये च, यत्सूर्याय च' इति वचनद्वयेनैव अग्निप्रजापत्योः सूर्यप्रजापत्योश्च सायंप्रातर्होमयोर्विधानमिति **वाच्यम्** । प्राप्ते कर्मण्येकेन वाक्येन नानेकगुणविधानं संभवति, अन्यपरविधाने सति अग्निसूर्ययोर्मान्त्रवर्णिकप्राप्तिदर्शनेन प्रजापतिमात्रविधानात् । अतो वाक्यद्वये प्रजापतिरेवैको विधीयते । अन्यत् सर्वमनूद्यते इति। **प्रयोजनं** पूर्वपक्षे आघाराणां होमानां बहूनामनुष्ठानं, सिद्धान्ते तु नैवमिति । **सूत्रं तु**– आघाराग्निहोत्रयोः कर्मचोदना कर्मविधानं भावनारूपस्य शब्दार्थस्य प्रयोगभूतत्वात् तत्संनिधेः भावनासंनिधानात् गुणार्थेन गुणविधानार्थेन पुन.श्रुतिः विधेः पुनरुच्चारणमित्यर्थः। **तौता.**

**आघाराग्निहोत्रमरूपत्वात् । २।२।५।१३ ।।**

आघारश्च अग्निहोत्रं च तयोः समाहारः आघाराग्निहोत्रम् । 'ऊर्ध्वमाघारयति' 'संततमाघारयति' 'ऋजुमाघारयति' इत्युक्तानां ऊर्ध्वत्वादीनां समुदायस्य 'आघारमाघारयति' इत्यनुवादः । तथा 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिभिरुक्तानां समुदायस्य 'अग्निहोत्रं जुहोति' इत्यनुवादः, नापूर्वविधिः। कुतः? अरूपत्वात्। स्वतन्त्रेण द्रव्यदेवतात्मकेन रूपेण रहितत्वात्। प्रकृतानां च रूपवत्त्वात् एतौ प्रकृतानुवादौ इति पूर्वः पक्षः।

आघाराग्निहोत्रमरूपत्वात् (२।२।५।१३) इत्यत्र आघाराग्निहोत्रयो अङ्गाङ्गिसंबन्धाभावेन 'अभ्यर्हितं पूर्वं निपतति' इत्यस्याविषयत्वात् अल्पाच्–तरत्वेन आघारशब्दस्य पूर्वनिपातो युक्तः। **सु.** पृ. ७८८, पूर्वाधिकरणपूर्वपक्षसूत्रात् पौर्णमासीवत्पदानुषङ्गेण आघाराग्निहोत्रं पौर्णमासीवत् समुदायानुवादः इत्येवमेतत् सूत्रं व्याख्यातं भाष्येण। पृ. ७६०, आघाराग्निहोत्रवाक्योत्पादितयोः अज्ञातरूपयोः कर्मणोः फले विधानाशक्तेः कथंभावात्मकप्रकरणायोगात् अधिकारात्मकस्य च प्रकरणस्य वाक्येन अनवेक्षणात् विरोधः सिद्धान्ते। पृ. ७६४.

**संज्ञोपबन्धात् । १४ ।।**

'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इति अग्निहोत्रसंज्ञकं होमं जुहोति, आघारसंज्ञकं कर्म करोति इति संज्ञायाः कर्मनामधेयस्य उपबन्धो भवति। न चात्र कर्मस्वरूपं ज्ञायते। तस्मात् प्रकृतानुवादौ आघाराग्निहोत्रशब्दौ इति पूर्वपक्षे हेत्वन्तरम्।

**अप्रकृतत्वाच्च । १५ ।।**

द्रव्यदेवतयोः प्रकृतत्वाभावात् प्रकरणाम्नातवाक्यान्तरेणापि अनवधृतत्वात् 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इत्यनयोः विधायकत्वं न संभवति, किंतु प्रकृतानुवादत्वं इति पूर्वपक्षे हेत्वन्तरमुक्तम्।

अत्र कुतूहलं– ननु 'दध्ना जुहोति' इत्यादिवाक्ये गुणविधानात् विशेषावगमः संभवति इत्यत आह । प्रकृते कर्मणि दध्यादिगुणविधिः इति वक्तव्यम्। तच्च **न** संभवति, कस्य चित् कर्मणः अप्रकृतत्वात्–इति।

अत्र वार्तिकं– ननु च प्रकरणात् विशेषोऽवगम्यते। अत आह अप्रकृतत्वाच्च इति। नहि उत्पत्तिवाक्ये अस्ति कर्मणां प्रकरणम्। फलसंबन्धोत्तरकालत्वेन कथंभावात्मकस्य प्रकरणस्य प्रयोगवाक्याधीनप्रसूतत्वात् । ननु च (आघारे) प्रकरणाद्विशेषो लप्स्यते। तत्रापि **सूत्रम्**। नहि आघारः प्रकृतः, परप्रकरणपातित्वात् । दर्शपूर्णमासप्रकरणमेतत् सकलं, नान्यस्य प्रकरणस्य अन्यत्राव(अत्राव-)काशः। संनिधेर्विशेषावगम इति चेत्, अत्रापि सूत्रम्। न वाक्यबलीयस्त्वेन अत्र प्रकृतैरपि संबन्धात्। तस्मात् समदायानुवादौ—इति।

**चोदना वा, शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनःश्रुतिः । १६ ।।**

आघाराग्निहोत्रशब्दौ समुदायानुवादौ न कर्मान्तर-विधायकौ इति पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह। "अग्निहोत्रवाक्यं आघारवाक्यं च चोदना अपूर्वकर्म-विधायकमेव, नानुवादः। शब्दार्थस्य आघारयतिशब्दस्य जुहोतिशब्दस्य च योऽर्थः, तस्य प्रयोगे भूतत्वात् अनुष्ठानं प्राप्तत्वात्। आघारहोमयोः अनन्यप्राप्तत्वेन अवश्यं विधेयत्वादित्यर्थः। ननु ऊर्ध्वादिवाक्यैः दध्यादिवाक्यैश्च विशिष्टकर्मविधायकैः प्राप्तत्वात् अप्राप्तत्वमसिद्धं, अत आह– गुणार्थेन ऊर्ध्वत्वादिदध्यादिगुणविधानप्रयोजनाय आघारयति जुहोति इति पुनःश्रुतिः अनुवाद इत्यर्थः। ननु संनिहितं धात्वर्थं परित्यज्य प्रत्ययः कथं गुणं विदध्यात् तत्राह–तत्संनिधेः। तस्य गुणस्य विशेष्यधात्व-र्थानुप्रवेशेन प्रत्ययसंनिधानात्" इति **कुतूहलम्**।

"तत्संनिधेः 'अग्निहोत्रं जुहोति' इत्यादिवाक्य-विहितकर्मसंनिधानात् पुनःश्रुतिः 'दध्ना जुहोति' इत्यादि पुनःश्रवणं गुणार्थेन गुणविध्यर्थतया उपपद्यते" इति **कस्तूरिवृत्तिः**।

तस्मात् आघाराग्निहोत्रशब्दौ कर्मान्तरवाचकौ न समुदायशब्दौ इति सिद्धान्तः। **के.**

* **आघाराग्निहोत्रवाक्यं** न समुदायानुवादः। **कौ.** २।२।५।१६ पृ. २०५, (किंतु) आद्यविधिविषया कर्मविधी आघाराग्निहोत्रवाक्ये। **भाट्ट.** पृ. १२०.

X **आघाराग्निहोत्राधिकरणम्**। आघाराग्निहोत्र-वाक्यं कर्मान्तरविधायकं, न समुदायानुवादः॥

**आघाराग्निहोत्रमरूपत्वात्। २।२।५।१३॥**

**भाष्यं**— 'आघारमाघारयति' इति श्रूयते। तथा इमान्यपराणि (श्रवणानि) 'ऊर्ध्वमाघारयति' 'संततमा-घारयति' 'ऋजुमाघारयति' इत्येवमादि। इदं च 'अग्निहोत्रं जुहोति' तथा 'दध्ना जुहोति' 'पयसा जुहोति' इत्येवमादि। तत्र संदेहः किं 'ऊर्ध्वमाघारयति' 'दध्ना जुहोति' इत्येवमादिभिः आघारा होमाश्च विहिताः, तेषां आघारमाघारयति, अग्निहोत्रं जुहोति इत्येतौ समु-दायानुवादौ, उत एतावेव अपूर्वयोः आघारहोमयोः विधातारौ इति। किं तावत् प्राप्तं? नापूर्वयोर्विधी इति। कुतः? अरूपत्वात्। नहि एतयोः पूर्वेभ्यो होमाघारेभ्यो विशिष्टं रूपमस्ति, यतः कर्मान्तरमध्यवसेयम्। अतः प्रकृतानां रूपवत्त्वात् प्रकृतानुवादौ।

**वा**— ('नापूर्वविधी' इति भाष्येण पूर्वाधिकरण-पूर्वपक्षसूत्रस्थपौर्णमासीवत्पदानुषङ्गेण आघाराग्निहोत्रं पौर्णमासीवत् समुदायानुवादः इति एतत् सूत्रं व्याख्या-तम्। तत्र उपांशुयाजवत् प्रकृतकर्माभावेन इहापि समु-दायानुवादत्वनिराससिद्धेः प्रत्यवस्थानानुपपत्तिमाशङ्क्य उपांशुयाजवैषम्यमाह–) 'ऊर्ध्वमाघारयति' 'तण्डुलैर्जु-होति' इत्यादिभिः एवंभूता एव आघारा होमाश्च विहिता विपरिवर्तन्ते। नहि 'विष्णुरुपांशु यष्टव्यः' इत्यादिवत् द्रव्यप्राधान्येन यागहोमभावनयोः अभिभवः। किंच **'न चैषामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः। ऐकान्तिको विधिस्तेन गुणवत्कर्मगोचरः॥'** नोपांशु-याजवाक्यवत् एषामेकवाक्यत्वमिष्टं, न च स्तुत्यर्थता। तेन उभयपक्षे निश्चिते विधित्वे गुणमात्रं विधीयतां, तद्युक्तं वा कर्म इति (विचारे) कर्मविधानं युक्तम्। कुतः? **'विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति। तद्विधिर्भावनातश्चेत् सैव पूर्वं विधीयताम्॥'** न तावत् दध्यादिशब्दैः स्वयं विधित्वमभिधीयते। न च प्रत्ययोपात्तं सत् भावनाधात्वर्थव्यतिरेकेण स्वतन्त्रै-र्दध्यादिभिः संबध्यते। नहि भवति 'दध्ना यात्' इति (अत्र चौखम्बापुस्तके शुद्धिपत्रे यात् इत्यस्य स्थाने यत् इति शुद्धत्वेन प्रदर्शितम्। तदयुक्तम् 'विधौ स्मृताया लिङः यासुडागमविधानात् 'यात्' इत्येता-वता प्रयोगाननुगतमपि विध्यभिधायित्वमभ्युपेत्य' इति सुधायां स्पष्टमुक्तत्वात्। (पृ. ७६०)। किं तर्हि 'दध्ना कुर्यात्' इति संबध्यते, होमं वा अनेन कुर्यात् इति। तस्मात् यत्प्रसादेन दध्यादेः कर्तव्यता, तावेव भावनाधात्वर्थौ न विधीयेते इति कुत एतत्। नहि तद्विध्यनपेक्षं कथंचिदपि गुणविधानं शक्यं दर्शयितुम्। यदैव हि दर्शयितुमुपक्रम्यते, तदैव पूर्वतरं भावनाधात्वर्थ-विधिः बलादापद्यते। तस्मात् होमदध्यादिविशिष्टभाव-नैव विधीयते। ततश्च तासां रूपवतीनां प्रचयशिष्टः समु-दायोऽस्ति इति 'अग्निहोत्रं जुहोति' इति तदनुवादो विज्ञायते। निमित्तफलचोदनयोश्च एकत्वोपजनः समु-

दायानुवादे प्रयोजनम् । एवं च सति दध्यादेः भिन्नकर्मविषयत्वात् अन्याय्यो विकल्पो न प्रसज्यते । ( ननु आघारकर्मणोः द्रव्यदेवतानयेन यागरूपतायाः तत्प्रख्याधिकरणे अभिहितत्वात् यागरूपस्य च द्रव्यदेवतस्य आघारवाक्यवत् ऊर्ध्वादिवाक्येऽपि अश्रुतेः अरूपता तुल्या इत्याशङ्क्याह–तथेति ) तथा 'ऊर्ध्वमाघारयति' इत्यादिषु यद्यपि द्रव्यदेवतं न श्रूयते, तथापि उपांशुत्वन्यायेन ( ३।८।१९।३५ ) व्यवच्छेदकारणत्वात् ऊर्ध्वत्वादिभिरेव रूपवत्तायां कल्पितायां 'आघारमाघारयति' इत्यरूपः सन् स्वार्थे विनियोक्तुमशक्नुवत् अनुवादो भवति । तस्यापि प्रयोजनं 'इन्द्र ऊर्ध्वो अध्वरः' इति मन्त्रविनियोगे 'तस्याघारमाघार्य' इति च द्रव्यविधौ एकत्वसिद्धिः ।

**संज्ञोपबन्धात् । १४ ॥**

**भाष्यं**—संज्ञोपबन्धश्च भवति । अग्निहोत्रं नाम होमं जुहोतीति, आघारसंज्ञकं कर्म करोतीति संज्ञाविशिष्टौ आघारहोमौ विधीयेते । न च विज्ञायेते कोऽसौ आघारो नाम कर्मविशेषः, कश्चाग्निहोत्रसंज्ञक इति । ननु विज्ञायते आघारणमाघारो, हवनं होमः । यद्याघारणसामान्यं होमसामान्यं च विधीयेते विज्ञातपूर्वौ तर्ह्याघारहोमौ, तेनानुवादौ । अथ अव्युत्पन्ना उभयोरपि संज्ञा, तथापि नाघाराग्निहोत्रसामान्यमुच्येत, विशेषाश्रयत्वात् संज्ञायाः । न च स विशेषो गम्यते, इत्यपूर्वौ आघारहोमविधी नावकल्प्येते । अपि च कथं क्रिया साधनशब्देनोच्येत । ईप्सिततमं हि यत् साधनं तद् द्वितीयान्तेनोच्यते, क्रिया तिङन्तेन । अनुवादपक्षे क्रियाणां समुदायोऽर्थान्तरं, तदीप्सिततमं साधनं भविष्यति ।

**वा**— अपिच । '**विशेषप्रतिपत्त्यर्थं संज्ञा सर्वा प्रवर्तते । यदा, तदा विशेषोऽसौ कोऽस्येति न निरूप्यते ॥ सामान्यं स्यादिदं ज्ञेयं ज्ञातत्वान्न क्रियाऽन्तरम् । तदज्ञेयतया नात्र विधानमवकल्पते ॥ क्रियाश्चाकारकत्वेन युज्यन्ते न द्वितीयया । ताभिस्तु साध्यमानत्वात् समुदायस्य कर्मता ॥**' आघारमग्निहोत्रमिति द्वितीयानिर्देशः क्रियेप्सितस्य कारकस्य युज्यते । न च जुहोत्याघारयतिभ्यां आत्मैव आप्तुमिष्यते, स्वात्मनि क्रियाविरोधात् । समुदायः पुनर्निष्कृष्य शब्देन अर्थान्तरात्मना उच्यमानः शक्यः साध्यत्वेनाभिधातुं, यथौदनपाकं पचतीति विशेषः सामान्येप्सिततमः कर्मत्वेनोच्यते । **ननु** च समुदायस्य समुदायिभ्यः अव्यतिरेकान्न कथं चित् साध्यत्वमवसीयते, इत्ययुक्तमेव कर्मत्वम् । **न** । अवयवक्रियाप्रचयसाध्यत्वात् समुदायस्य । समस्तार्भ्यो हि समुदायस्याव्यतिरेकात् एवमुपादानं न स्यात्, प्रत्येकरूपात्तु समस्तरूपमर्थान्तरमिष्टं, न च प्रत्येकरूपैर्विना समस्तरूपनिष्पत्तिरिति उपपन्नमीप्सिततमत्वम् । **ननु** चैवमादयः समुदायिवचनत्वेनावधारिता इति समुदायिनां स्वात्मनि क्रियाविरोधस्तदवस्थ एव स्यात् । **नैष दोषः** । समुदायिवचनेनापि प्रातिपदिकेन समुदायोऽपि लक्षणया गम्यते । ततश्चैकत्ववत् कर्मत्वं समुदायस्य प्रत्येष्यते । न च सामान्यविशेषभेदेनापि भवतः क्रियात्वकर्मत्वे पाकवत् संभवतः, सामान्यविशेषशब्दयोर्भेदेन अनुपादानात् । एतच्च पौर्णमासीमित्यत्रापि सिद्धान्ते योज्यम् । तस्मात्तद्वदेव समुदायानुवादत्वम् ।

**अप्रकृतत्वाच्च । १५ ॥**

**भाष्यं**— न च प्रकृतमपि द्रव्यदेवतमाघारे विद्यते, येन रूपवान् स्यात् । तस्मात् एतावपि समुदायशब्दाविति ।

**वा**— **अथोच्येत** यथा 'गुणस्तु श्रुतिसंयोगात्' ( २।२।३।५ ) इत्यत्र पक्षेऽन्येषां गुणविधित्वाद्रूपलाभ आशङ्कितस्तथाऽत्र अग्निहोत्रं जुहोतीत्युत्पत्तिवाक्यत्वेन तण्डुलादिसंयुक्तैः रूपलाभ इति । **न** । तत्र स्ववाक्यगतपौर्णमास्यमावस्यापदनिमित्तत्वादनुवादाशङ्कायाः । **न** चेह तण्डुलादिवाक्येऽग्निहोत्रशब्दोऽस्ति, यस्तु अस्ति जुहोतिशब्दः, स सर्वहोमसाधारणत्वान्नाग्निहोत्रविधिपरं एव । ननु च प्रकरणाद्विशेषोऽवगम्यते, अत आह— ( सूत्रकारः ) अप्रकृतत्वाच्चेति । नहि उत्पत्तिवाक्ये अस्ति कर्मणां प्रकरणम् । फलसंबन्धोत्तरकालत्वेन कथंभावात्मकस्य प्रकरणस्य प्रयोगवाक्याधीनप्रसूतत्वात् । **तत्रैतस्यात्** तदारूढस्यैव द्रव्यदेवतासंबन्धो भविष्यतीति, **तदुच्यते** । अनभिज्ञातरूपस्य फले विधातुमशक्यत्वात् । अतः प्रसिद्धरूपाण्येव तेन ग्रहीष्यन्ते । **ननु** च 'तस्या-

घारमाघार्य ' ' इन्द्र ऊर्ध्वो अध्वर इत्याघारः ' इति च द्रव्यमान्त्रवर्णिकदेवताविधौ नामप्रयोगाद्रूपं विज्ञास्यते । न । आघारशब्दस्य धात्वर्थव्यतिरेकेण अविशेषणकत्वात् । तत्र नाम्ना विशेषः प्रतीयते, यत्र कं चिद्विशेषमुपादाय नामानि प्रवर्तन्ते । अत्र पुनः संनिहितावयवार्थत्वात् समुदायप्रसिद्धिमन्तरेण आघारशब्दः क्षरणमात्रवाचित्वान्न विशेषे वर्तते ।

ननु च प्रकरणाद्विशेषो लप्स्यते । तत्रापि सूत्रम् । न ह्याघारः प्रकृतः परप्रकरणपातित्वात्, दर्शपूर्णमासप्रकरणमेतत् सकलं, नान्यस्य प्रकरणस्यान्यत्रावकाशः ।

संनिधेर्विशेषागम इति चेत्, अत्रापि सूत्रं, न, वाक्यबलीयस्त्वेनात्र प्रकृतैरपि संबन्धात् । तदेवं वाक्यप्रकरणयोर्विरोधो यदि द्रव्यदेवतासंयुक्तान्येव उत्पत्तिवाक्यान्यभ्युपगम्यन्ते । यत्र यः कश्चित् रूपलेशोऽस्ति, तत्र निरूपिते कर्मणि केन चित् प्रकारान्तरेण गुणान्तराणि कल्पन्ते । सर्वेषु चोर्ध्वत्वं तण्डुलादि किं चिद्रूपमस्ति, न तु ' आघारमाघारयति ' ' अग्निहोत्रं जुहोति ' इत्यनयोः । तस्मात् समुदायानुवादौ ।

**चोदना वा, शब्दार्थस्य प्रयोगभूतत्वात्, तत्संनिधेर्गुणार्थेन पुनःश्रुतिः । १६ ॥**

**भाष्यं**—न चैतदस्ति समुदायशब्दौ इति । कर्मान्तरचोदने स्याताम् । कुतः ? शब्दार्थस्य प्रयोगभूतत्वात् । आघारयति जुहोतीति होमाघारौ प्रयोक्तव्याविति शब्दार्थः । तेन कर्मान्तरे विधीयेते इत्यवगच्छामः । आघाराग्निहोत्रशब्दौ च हवनाघारणसामान्यवाचिनौ प्रज्ञातौ, अतो नाविज्ञातार्थौ । तेन रूपवन्तौ सन्तौ विधीयेते । यदुक्तं, ऊर्ध्वमाघारयति, दध्ना जुहोति, इत्येवमादिभिः विहितत्वात् अनुवादौ इति । नैतदेवम् । नह्येते होमाघारौ विधातुं शक्नुवन्ति । ' ऊर्ध्वमाघारयति ' ' दध्ना जुहोति ' इति च नैतदुक्तं भवति ' आघारः कर्तव्यो, होमः कर्तव्यः ' इति, किं तर्हि ऊर्ध्वताघारसंबन्धः कर्तव्यो, दधिहोमसंबन्धः कर्तव्यः इति । तस्मात् अप्राप्तत्वान्नानुवादौ । ननु संबन्धे विहिते अर्थाद्धोमाघारौ भविष्यतः । नैतदेवम् । अस्मिन् हि सति विधानेन संबन्धः ( अत्र विधाने विधानेन इति सप्तम्यन्तं तृतीयान्तं वेति द्वेधा व्याख्यातं वार्तिके ) । तस्मात् नार्थादापद्येते होमाघारौ, अतः अपूर्वौ विधीयेते इति ब्रूमः ।

नन्वाघारयति जुहोतीति होमाघारगतो व्यापारः श्रूयते न दध्यूर्ध्वतादिसंबन्धः । सत्यं न श्रूयते । तत्संनिधेर्गुणार्थेन व्यापारश्रवणमवकल्पिष्यते । ननु पदार्थान्तरगतं व्यापारं श्रुतिर्न शक्नोति वदितुम् । सत्यमेवमेतत्, स्वपदार्थगतं वक्ष्यति, तं तु स्वपदार्थं गुणशब्दो विशेक्ष्यति, स एष विशिष्टः प्रत्येष्यते इति । भवेदेतत् विशिंष्यात् स्वपदार्थं गुणशब्दः, न त्वेवं गुणगतो व्यापारः प्रतीयेत । तत्र किं भविष्यति ? अव्याप्रियमाणेऽपि गुणे शब्दार्थोऽवक्लृप्तो भविष्यति । गुणवचनसंनिधिरिदानीं किमर्थः ? अनर्थकस्तु । कथं पुनरनर्थको नाम वेदे भवितुमर्हति ? सत्यर्थे नानर्थकः, असति त्वर्थे किमन्यदुच्येत । एवं तर्हि वाक्यान्द्रविष्यति, श्रुत्यर्थे सति न वाक्यार्थोऽवकल्प्यते । सत्यमेवमेतत् । अविवक्षिते त्ववकल्पिष्यते । कथमविवक्षा ? गुणवचनस्य अप्रमादपाठात्, स्वपदार्थस्य च शब्दान्तरेण विहितत्वात् । तस्मात् सिद्धं गुणार्थेन दध्ना जुहोतीत्येवमादीनां पुनःश्रुतिरिति । जुहोतेरुच्चारणं चानुवादो गुणसंबन्धार्थः । यदि जुहोतीत्यनुवादः, केनेदानीं गुणो विधीयते । दधिशब्देनेति मा वोचत । नन्विदानीमेव वाक्यात् गुणगतो व्यापारो गम्यते इत्युक्तम् । सत्यमेवमेतत् । अविधीयमानस्तु कुतो गम्यते इति प्रमाणमस्य नावगम्येत । असति प्रमाणे व्यामोहः स्यात् । एवं तर्हि विधायकौ जुहोत्याघारयतिशब्दौ । कस्य तर्ह्यनुवादः ? धात्वर्थस्येति ब्रूमः । यदि विधायकौ, पूर्वमेव विहिते स्वार्थे किमर्थं पुनरुच्चार्येत ? वाक्यार्थो यः तं विधातुमित्यदोषः । तस्मात् कर्मान्तरचोदने । यदुक्तं नास्त्याघारे प्रकृतं द्रव्यदेवतमिति, किमेवं सति द्रव्यदेवतेन, यदा प्रसिद्धार्थाभिधानात् निर्ज्ञातमेवास्य रूपम् । अपि च ' चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य ' इत्याज्यमस्य द्रव्यं, मान्त्रवर्णिको देवताविधिः । ' इन्द्र ऊर्ध्वोऽध्वरो दिवि स्पृशतु महतो यज्ञो यज्ञपते इन्द्रवान् स्वाहेत्याघारमाघारयति ' इति । एवमसौ इन्द्रवान्, यदि

अस्येन्द्रो देवता। तद्यदि देवताभिधानमेतदाघारस्य, ततोऽनेन आघारः कृतो भवति। तस्मात् कर्मान्तरे, न समुदायशब्दौ इति सिद्धम्।

**वा**— 'कर्मचोदने स्यातां' इति वक्तव्ये अन्तरग्रहणं उपांशुयाजाधिकरणवत् नेयम्। आघारयतिजुहोत्योः अनन्याक्षिप्तविधिशक्तित्वात् कर्मप्रयोगविधानमेव शब्दार्थः इत्यवगम्यते। न च प्रकृताघारहोमसद्भावः, प्रकृतवाक्यस्थानां विधीनां अप्राप्तदध्याद्याक्षिप्तायां विधिशक्तौ कर्मानुवादबुद्ध्यनपायात्। 'न चेदन्येन शिष्टाः' (१।४।६।९) इति वा अपवादात् न विशिष्टविधानन्यायः संभवति। तत् दर्शयति (भाष्यं–) 'अस्मिन् हि सति विधाने' प्रत्यक्षे न संबन्धः शक्नोति अर्थादाक्षेप्तुमित्यर्थः (अत्र पक्षे विधाने इति सप्तम्यन्तं, संबन्धशब्दश्च विशिष्टवाची)। अथवा अस्मिन् हि सति संबन्धिविधौ इतरेण गुणविधानेन संबन्धः एव केवलः आश्रीयते (अत्र पक्षे विधानेन इति तृतीयान्तं, संबन्धशब्दश्च यथाश्रुतहोमाघारसंबन्धपरः)। तस्मात् नैतद्वाक्यनिरपेक्षैः संबन्धविधिभिः अर्थात् अपरौ कल्पयितुं होमाघारौ शक्येते, यद्बलेन अनयोरनुवादत्वं स्यात्। भावनाधात्वर्थौ उज्झित्वा न विधिः दध्यादिभिः संबध्यते इति चेत्, सत्यमेतत्। न विधित्वं भावनातः उत्तार्यते, तद्गतेनैव तु गुणः संस्पृश्यते, गुणस्य कारकविभक्त्या भावनामध्यनिक्षेपात्। तेन एतदुपदिष्टं भवति। सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं, किं न प्राप्तं इत्यन्वेषणायां अप्राप्तमात्रविषयोपसंहारात् विधिः भावनाधात्वर्थयोः अनुवाद इत्यभिधीयते, न तु आदित एव तौ अनूद्य गुणो द्रव्यं वा विधीयते इति कदा चिदपि शास्त्रार्थाभिव्यक्तिः। तत्र पश्चात्तने व्यापारे मन्दबुद्धिप्रतिपत्त्यर्थं स्थूलेन न्यायेन कथ्यमाने शास्त्रकृता एवैता वचनव्यक्तयः इति मन्यमानाः स्वयमिव अन्येषामपि भ्रान्तिमुत्पादयितुं अष्टौ श्रुतिप्रकारान् परदौर्बल्यवतः के चित् दर्शयन्ति। **प्रथमः** किल श्रुतिप्रकारो धात्वर्थविधानं, **द्वितीयः** सगुणं धात्वर्थविधानं, **तृतीयः** किं चिदुद्दिश्य धात्वर्थविधानं, **चतुर्थस्तत्रैव** विशिष्टविधानं, **पञ्चमस्तु** धात्वर्थोद्देशेनान्यस्य विधानं, **षष्ठस्तु** धात्वर्थेन अन्ययोः संबन्धः, **सप्तमः** पुनर्धात्वर्थविशिष्टेन प्रत्ययेन अन्ययोः संबन्धः, **अष्टमस्तु** मुक्त्वा धात्वर्थमन्ययोरेव संबन्ध इति। (उक्तान् अष्टौ प्रकारान् परदौर्बल्यनियमं च दूषयन् शुद्धधात्वर्थविधिरूपं प्रकारं दूषयति–) तत्र तावत् यदुच्यते 'अग्निहोत्रं जुहोति' इत्येतत् धात्वर्थविधानमिति, तदयुक्तम्। नहि विधिः भावनामुत्सृज्य धात्वर्थे निपतति। न च भावनां मुक्त्वा अन्यत्र पुरुषः प्रवर्तते। सा हि पुरुषस्य स्वव्यापारः, धात्वर्थस्तु कदा चित् कर्माश्रितोऽपि भवति। यथा अयमेव प्रक्षेपो द्रव्यदानाश्रितः। न चान्यदीयव्यापारं अन्यः शक्नोति कर्तुं, इत्यवश्यं भावनाविशेषणत्वादेव दध्यादिवत् धात्वर्थो विधातव्यः। इदं च भावार्थाधिकरणे अभिहितं यथा 'न धात्वर्थः साध्यत्वेन विधीयते' इति। नहि अकरणभूतोऽसौ साध्यापेक्षत्वात् वाक्यान्तरेणापि फले विधातुं शक्येत। (विशिष्टधात्वर्थविधिरूपं द्वितीयं प्रकारं दूषयति–) 'सोमेन यजेत' इत्यत्रापि तद्भूताधिकरणोक्तेन (१।१।७) मार्गेण धात्वर्थकारकाणां अरुणैकहायन्यादिवत् परस्परेणासंबध्य भावनासंबद्धानां उत्तरकालं परस्परोपकारित्वम्। तथा च सप्तमनवमाद्ययोर्वक्ष्यति, इति न विशिष्टधात्वर्थविधानम्। भावनां च प्रति यागस्य करणत्वात् द्रव्यं प्रति कर्मत्वे सति 'ऐकशब्द्ये परार्थवत्' (१।४।५।८) इत्येतदापद्यते इति अयुक्तमेतत्। (धात्वर्थस्य अन्यत्र विधिरूपं तृतीयं प्रकारं दूषयति–) तथा 'व्रीहीन् प्रोक्षति' इत्यत्र न प्रोक्षणेन व्रीहीन् इति कश्चित् संबन्धः। तेन उभयोः करोत्यर्थसंबन्धात् न धात्वर्थो व्रीहिषु विधीयते। यदि तु भावनाऽभिप्रायेण अन्यत्र विधानमुच्यते, तत् सर्वत्राविशिष्टम्। न च अस्य विशिष्टविधानात् दुर्बलत्वमस्ति इति तृतीयस्थाननिवेशोऽपि अयुक्तः। (अन्योद्देशेन विशिष्टधात्वर्थविधिरूपं चतुर्थं प्रकारं द्वितीयतृतीयपक्षोक्तदोषापादनेन दूषयति–) पक्षद्वयोक्तमपि निराकरणं 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यत्रापि आपद्यते, इति अयुक्तं अन्यत्र विशिष्टधात्वर्थविधानम्। (धात्वर्थे अन्यविधिरूपं पञ्चमं प्रकारं दूषयति–) 'दध्ना जुहोति' इत्यत्रापि न कदा चित् 'दधि होमे करोति'

इत्ययमर्थः शब्देनोच्यते। नहि होमस्याधिकरणत्वं शब्दात् वस्तुतो वा सिद्धम्। न च दध्नः कर्तव्यता, नित्यं करणात्मकत्वात्। इयमपि च श्रुतिः द्विविधादपि विशिष्टविधेः बलीयसी, एकविधिसंभवे अनेकशक्तिकल्पना-(कल्पना-) ऽनुपपत्तेः। उभयपक्षभाविनश्च विप्रकृष्टार्थविधेः अपर्यनुयोज्यत्वात्। संनिकृष्टासंभवकृतमेव चास्य (दध्नः) विप्रकृष्टस्य ग्रहणं, तत्रोभयाश्रयणे युगपद्विप्रतिषिद्धसंभवासंभवापत्तिः। अगत्यैव (विशिष्टविधिः) गृह्यते। अन्यत्र विशिष्टधात्वर्थविधानात् नातिगुर्वी एव (दध्ना इत्यादिश्रुतिः) इति न पञ्चमे स्थाने निवेशयितव्या। कामं वा शुद्धधात्वर्थविधानात् तस्य वा अन्यत्र विधेरनन्तरा कर्तव्या (श्रुतिलिङ्गादिवत् आसां अष्टानां श्रुतीनां प्रदर्शितानां पूर्वपूर्वानपेक्षत्वात् न क्रमोपन्यासेन प्रयोजनं, यदि तु अवश्यं क्रमेणोपन्यस्तव्याः ततो वरं एवं क्रमः इत्यर्थः। धात्वर्थे अन्यसंबन्धविधिरूपं षष्ठं प्रकारं दूषयति- ) यत्तु 'प्राकाशौ अध्वर्यवे ददाति' इत्यनेन ददातिधात्वर्थे प्राकाशाध्वर्युसंबन्धो विधीयते इति, तदयुक्तं, वचनव्यक्त्यविवेकात्। सर्वत्र हि यच्छब्देन अनूद्यमानमुपनिबध्य तच्छब्दयुक्तं विधेयमुपनीयते। तदिह यदि तावत् यद्ददाति इत्यत्र अध्वर्युप्राकाशयोः संबन्धः इति विधीयते, ततः सकलदानानुवादात् समस्तदक्षिणाविकारप्रसङ्गः। प्रत्ययस्य च अनेकविधिशक्तिकल्पना चोदिते सति कर्मणि अपरिहृतैव। संबन्धो हि विधीयमानः संबन्धिनं तावत् आक्षिपेत्, धात्वर्थे तु पुनः स विधातव्य एव संबन्धी, अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात्, न क्रियायाः। तत्रैतत् स्यात्, धात्वर्थानुरक्तः प्रत्ययो विदधत् अवश्यमेव तत्र विधास्यति। एवं तर्हि उत्तरयोरपि श्रुत्योः अत्रैवान्तर्भावात् भेदेनोपादानं व्यर्थम्। नहि 'वायव्यं श्वेतमालभेत' 'दध्नेन्द्रियकामस्य जुहुयात्' इति धात्वर्थाननुरक्तः प्रत्ययः संबन्धं विदधाति इति। प्रकृतिलिङ्गमात्रफलकश्च आलभतिः उच्चार्यमाणो न द्रव्यदेवतासंबन्धिविधौ आत्मानुरञ्जनेन किंचिदुपकरोति, न चासौ संबन्धः आलभतिना संपादयितुं शक्यो यागविषयत्वात् द्रव्यदेवतयोः। यदि चान्यसंबन्धकरणे प्रत्ययोच्चारणसिद्धिव्यतिरिक्तं किं चिद् धातुः कुर्यात् ततो दधीन्द्रियसंबन्धविधाने किमिति होमः परित्यज्येत, किमिति वा प्रकरणलभ्योऽभ्युपगम्येत (अनेन प्रसङ्गात् सप्तमाष्टमश्रुतिप्रकारावपि दूषितौ)। तस्मान्न धात्वर्थे अन्यसंबन्धविधिः। पूर्ववच्च धात्वर्थाधिकरणता कारककर्तव्यता च निराकर्तव्या। न च धात्वर्थे संबन्धस्यापि प्राग्भावनासंगतेर्विधिरित्युक्तम्। एवं तावन्न दानमात्रे संबन्धविधिः। अथाध्वर्युविशिष्टं दानमनूद्यतां अध्वर्युर्वा तद्विशिष्टः, एवमपि विशिष्टानुवादात् वाक्यभेदः। शुद्धाध्वर्य्वनुवादे तु यद्यपि संप्रदानश्रुतेः अर्थाद्दानमाक्षिप्यते, तथापि संप्रदानसंप्रदेयसंबन्धस्य ददातिमन्तरेण अनुपपद्यमानत्वात् द्रव्यदेवतासंबन्धादिव यजेः कल्पनमिति न धात्वर्थे अन्यसंबन्धः इति वचनव्यक्तिः संभवति। अवश्यं चात्र दानाध्वर्य्वोः चोदकेन प्राप्तत्वात् प्राकाशावेव विधातव्यौ। तत्रार्थात् संबन्धविधिरिति न श्रुतित्वोपन्यासो घटते। वक्ष्यति चैतत् जाघन्यधिकरणे (३।३।१०।२०) 'यत्रान्यतरदप्राप्तं, तत्रैव इतरोद्देशेनेतरविधिः अर्थात् संबन्धः, उभयप्राप्तौ अनुभयप्राप्तौ वा केवलसंबन्धविधानं' इति। तिसृणामपि च संबन्धविधिश्रुतीनां प्रत्ययविक्षेपसाम्यान्न बलाबले कश्चिद्विशेषो, नापि समवायविरोधसंभवो यत्र तज्ज्ञानमुपयुज्यते, इति मन्दफलं क्रमगणनोपन्यासस्य। तस्मात् प्रस्तुताधिकरणन्यायेन सर्वत्र विशिष्टभावनाविधिरेव तत्त्वम्। इतरत्तु तत्रतत्र स्थूलबुद्धिप्रतिपादनोपायमात्रं भाष्यकारेण कृतमिति द्रष्टव्यम्। यच्च संनिकर्षविप्रकर्षाभिधानं तद्भावनास्थे एव विधित्वे कारकाणां भावनाविशेषणत्वं प्रति इति मन्तव्यम्। कथं पुनः प्राप्ता सती भावना विधीयते? विशिष्टा न प्राप्तेति तादात्म्येन विधास्यते, फलतश्च तदा विशेषणार्थो विधिरिति व्यपदेक्ष्यते। **नन्वेवं** सति विशेषणेषु अनवतरन् विधायको भावनाद्वारेणापूर्वविधिवत् प्राप्तकर्मविधानेऽपि अनेकं विधातुं समर्थ इति 'चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत' (२।२।३।६) इत्यस्याविषयत्वं प्रसज्येतं। **नैष दोषः।** पश्य '**विधित्वे भावनास्थेऽपि तादर्थ्यं प्रविभज्यते। विशेषणफले चास्मिन् वाक्यभेदो भविष्यति॥**' यदा हि भावनाऽऽरूढं विधित्वं भावनाऽर्थे-

त्वेनैव गृह्यते, तदा अर्थाद्विशेषणविधौ सति अवाक्यभेदं वक्ष्यामः । यदा तु तद्विशेषणार्थमिति अवधार्यते, तदा भावनायाः संनिहितप्रोषितत्वात् अनेकविशेषणयोगे सति यदर्थे विधित्वमवसीयते, तस्यैवैकस्य विधानं, नेतरस्य तद्देशस्यापि चक्षुषेव स्पर्शादेः, इति वाक्यभेदो भविष्यति । सर्वत्र समानदेशमपि विधित्वं फलतः प्रचलितमिव एकत्रोपसंहृतं दर्शितम् । तस्मादविरोधः । यस्तु अभ्युदितेष्टिप्राकाशादिविधिषु अनेकार्थविधिदोषः, स सर्वपक्षेषु तुल्यः । यथा चास्मत्पक्षे न भविष्यति, तथा तदधिकरणेष्वेव वक्ष्यामः । 'भवेदेतत् विशिंष्यात्' इति । यदि साक्षात् गुणो न विधीयते, ततः पुरुषस्य तत्र अप्रवर्तितत्वात् तत्परित्यागेन अनुतिष्ठतः कृतार्थता स्यात् इति मन्यते । 'तत्र किं भविष्यति' इति वाक्यलक्षणविध्यभिप्रायेण प्रश्नः । 'अव्याप्रियमाणे' इति स्वाभिप्रायविवरणम् । स एव वा स्वयं कर्म निरूपयति । तेनैवाभिप्रायेण पुनः प्रश्नोत्तरे 'गुणवचनसंनिधिः' इति । तथा 'कथं पुनः' इति 'तुल्यं च सांप्रदायिकं' (१।२।१।८) इत्यभिप्रायेण । 'असति त्वर्थे किं' इति त्वयैवं क्रियते, येन तदानर्थक्यमापद्यते, मत्पक्षे तु सति अर्थे नानर्थक्यं भविष्यति । 'एवं तर्हि' इति वाक्येन विशिष्टायां भावनायां प्रवर्तमानः श्रौतोऽपि विधिः वाक्यात् भविष्यति इत्युच्यते । परस्तु यत्प्रसादेन स विधीयते, सैव तावत् विधीयतां इति 'श्रुत्यर्थे सति न वाक्यार्थः' इत्याह । 'सत्यमेतत्' इति विधिशक्तिसंक्रान्तिं "न चेदन्येन शिष्टाः" इति च दर्शयति । 'कथं' इति सानुशयः प्रश्नः, स्वोक्तिर्वा । तस्मात् तत्संनिधेः गुणस्य भावनाऽनुप्रवेशात् विधेयत्वं, अथवा गुणसंनिधेः शक्तिसंचरणं, भावनाधात्वर्थप्राप्तिसंनिधेर्वा श्रुत्यविरोधात् गुणविधानम् । जुहोतेः इति स्पष्टमपि धातूच्चारणं अनवबुध्य सकलाख्यातानुवादाभिप्रायेणाह 'यदि जुहोतीत्यनुवादः' इति । 'दधिशब्देन इति मा वोचत' इति वाजपेयाधिकरणवत् ग्रन्थच्छाया योजनीया । (**सुधा** पृ. ७७६– यथा वाजपेयाधिकरणे भा. १।४।५।८ पृ. ३३९ 'यदि यजेतेत्यनुवादः, केनेदानीं गुणो विधीयते' इति प्रश्नोपपादनार्थं 'वाजपेयशब्देनेति मा वोचत, नहि आख्यातं वा कृत्यं वा अन्तरेण नामपदस्य विधिशक्तिरस्ति' इत्युक्तं, तथा अत्रापि वाच्यमित्यर्थः । छायाशब्दः प्रक्रियार्थः । इति । अत्र सुधाकृते भाष्यानुवादे किंचिदक्षरभेदो दृश्यते) प्रत्ययो विधिरेव, धात्वर्थोऽनुवादः इति विवेकः । 'यदि विधायकौ' इति (एवं तर्हि विधायकौ इति भाष्ये पाठः), भावनायां प्राप्तायां कथं विधानं इत्यभिप्रायः । 'वाक्यार्थो यः, तं विधातुं' इति । दध्नः पदार्थत्वात् नैव वाक्यार्थत्वं संभवति इत्येतदपि दधिविशिष्टभावनाऽभिप्रायमेव । 'तस्मात् कर्मान्तरचोदने' इति । उपांशुयाजवदेव व्याख्येयम् (२।२।४) । जुहोत्याघारयतिलक्षितासाधारणार्थविषयत्वाच्च संज्ञोपबन्धसिद्धिः । इह विधीयमानत्वेन च कर्मान्तरेभ्यो व्यवच्छेदः । प्रकरणाच्च द्रव्यदेवतं लप्स्यते इति नारूपत्वम् । न चोत्पत्तिवाक्ये कथंभावो नास्ति, फलसंबन्धं तु यावत् प्रतीक्षिष्यते । न च अविहितद्रव्यदेवतस्य फलविध्यनुपपत्तिः, होममात्रतया विहितस्य पश्चादपि तद्ग्रहणाविरोधात् । इष्यते चैवमादौ संनिधिवशेनापि अनुवादः । प्राप्त्यपेक्षो ह्यसौ यथाकथंचित् प्रत्यभिज्ञानं प्रार्थयते । न च परप्रकरणे पाठादाघारस्य अवान्तरप्रकरणलोपः, तस्यापि हि आख्यातप्रत्ययवशेन किं केन कथमित्यस्त्यपेक्षा, तेन शक्यं प्रकरणेन द्रव्यदेवतविधानम् । बहूनि चादृष्टानि त्वया कल्प्यानि । न च तण्डुलादिहोमानां ऊर्ध्वाद्याघाराणां च विहिता देवता अस्ति । न च देवतावत् द्रव्यम् । सर्वे चैते अपूर्वकर्मविधित्वात् नान्योन्यं गुणविधयो भवन्ति । ततो यथोक्तमेवास्तु । यत्तु क्रियायाः कर्मत्वनिर्देशो न युज्यते इति, अत्रोच्यते । भवति हि क्रियाणामपि संकल्पादिभिः आप्यमानत्वात् कर्मत्वं, तेन जुहोत्याक्षिप्तसंकल्पाद्यपेक्षया 'अग्निहोत्रं' इति द्वितीयानिर्देशात् अविरोधः । ननु च 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रातः' इत्यनयोः अनेकगुणत्वात् 'चोदना वा गुणानां युगपच्छास्त्रात्' (२।२।३।६) इत्येतदापद्यते । तथा नामेति **केचित्** । एवं च यथापूर्वमाहुती जुहुयात्, सायमग्निहोत्रं प्रातरग्निहोत्रं इत्येवमादयो भेदव्यव-

हाराः सिद्धा भवन्ति । न चात्र ज्योतिष्टोमस्येव ग्रहाभ्यासेषु अवयवबुद्धिः, उभयत्रापि साकल्यप्रतीतेः । एवं च दर्शपूर्णमासवत् उभयत्र समस्तेतिकर्तव्यताऽऽवृत्तिरुपपद्यते । अन्यथा तु पशुतन्त्रविप्रकर्षन्यायेन ( ११।२।३।१८ ) सकृत्कृतैव उपकुर्यात् ( सवनीयपशौ पशुपुरोडाशाङ्गप्रचाराणां कालभेदेऽपि अङ्गानावृत्तिवत् इहापि अनावृत्तिः इत्याशङ्क्य कर्मणः प्रक्रमात् प्रभृति आ समाप्तेः एककालत्वात् , सवनीयपशोश्च ऐककर्म्यात् , प्रयोगाख्यस्य तन्त्रस्य विप्रकृष्टकालत्वेऽपि अङ्गानावृत्तिर्युक्ता इति वैषम्यं वक्ष्यमाणं दृष्टान्तितम् । सु. पृ. ७७९ ) न चैककर्मत्वे किं चित् प्रयोजनमस्ति । ( परमतमुपसंहरति ) तस्मात् द्वयोराहुत्योः समुदायानुवाद इति । ( समुदायानुवादं निष्प्रयोजनत्वेन दूषयति—उच्यते इति । सु. पृ. ७७९ ) अत्राभिधीयते । ( उच्यते इति पाठोऽत्र सुधायाम् ) **'समुदायानुवादस्य न तावत् दृश्यते फलम् । प्रयोगवचनैकत्वं लप्स्यते राजसूयवत् ॥'** यथैव हि समुदायानुवादत्वं अवयवशिष्टसमुदायैकत्वद्वारेण भवति , एवमेव प्रयोगवाक्यगतं 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति भविष्यति । यथा च 'राजसूयेन स्वाराज्यकामः' इति विनापि अन्येन समुदायानुवादेन सिद्धिः, एवमिहापीति । नन्वेवं सति आपराग्निकानामपि होमानां प्रधानत्वं स्यात् । समुदायानुवादे वा केन तेषामपकर्षः । नहि यथा पौर्णमास्यमावास्याशब्दयोः प्रयाजादिभ्यः कालसंयोगेन अवच्छेदः तथेह केन चित् क्रियते । नन्वग्नये होत्रमस्मिन्निति विशेषणं भविष्यति । न । तेषामपि अग्निदेवत्यत्वात् । अपि चैवं सति अनिष्टं तव प्रसज्येत। प्रातराहुतेरग्निसंयोगाभावात् अनग्निहोत्रत्वेन अङ्गत्वं प्राप्नोति । तस्मात् सत्यसति वा समुदायानुवादे न कश्चिद्विशेषः । तथा यद्यापराग्निकानां होमानां भेदो , यदि वा सर्वाग्निष्वेकमेवाभ्यस्तकर्म क्रियते , सर्वथाऽग्निहोत्रशब्देन संनिध्यग्निसंयोगहोमत्वाविशेषात् फलसंयोगेन समप्रधानत्वम् । तथा चैकेषां सर्वसामानाधिकरण्येनाग्निहोत्रशब्दप्रयोगः ( अग्निहोत्रशब्दस्य सर्वविषयत्वमापादयन्नुपपन्नो भवति। ) गार्हपत्यान्वाहार्यपचनयोश्चतस्रश्चतस्र आहुतीः आहवनीये च द्वे विधायाऽऽह 'य एवं विद्वान् विराट्संपन्नमग्निहोत्रं जुहोति' इति । तस्मादनन्यप्रयोजनत्वात् अग्निहोत्रं जुहोतीत्ययमेव कर्मविधिः । ततश्च तण्डुलादिवाक्यवदेव गार्हपत्यादिसंयोगस्य गुणार्थत्वान्न कर्मभेदहेतुरस्ति । तदेव हि प्रकृतं कर्म तत्रतत्र प्रत्यभिजानीमः । कस्मात् पुनरेककर्मविषयत्वात् दध्यादिवदेव अग्नयो न विकल्प्यन्ते ? केचिदाहुः । अदृष्टार्थत्वादिति। निराधारस्यापि हि प्रक्षेपस्य अप्रतिष्ठेऽपि द्रव्ये संभवात् अदृष्टार्थोऽग्निसंयोगः । तच्च सर्वमदृष्टं संभावनीयमित्यावर्तते होमः । एवं तु सति पदादिभिरपि आहवनीयो न बाध्येत । अथ तत्र सकृद्धोमश्रवणात् आवृत्तिभयाद्बाधः, इहापि तत्तुल्यमिति विकल्पप्रसङ्गः । तस्माद्विराट्संपन्नमित्येतस्मादेव वचनात् 'संख्याविहितेषु तु समुच्चयः' इत्यनेन न्यायेन ( १२।३।१३।३० ) समुच्चयः । अन्यथा हि, **'अग्निभ्योऽपूर्वसिद्धिः स्यादाधारत्वोपलक्षिता । न चैकेनावरुद्धत्वादाधारान्तरसंभवः ॥'** सत्यपि अग्निसंयोगस्य अदृष्टार्थत्वे सप्तमीश्रवणात् आधारत्वप्रतिपत्तिद्वारं तत् इत्यवगमात् तस्य च प्रत्यक्षप्रतीतेः एकेनावरुद्धे कर्मणि नान्यत् संभवतीति विज्ञायते। तेन एकान्तेन विकल्पः प्राप्नोत्येव । कस्मात्पुनः 'तिस्र आहुतीर्जुहोति' इत्यादिवत् संख्यया कर्मभेदो न भवति । न । उत्पन्ने सति कर्मणि संख्योपजननात् । उत्पत्तिस्था हि संख्या भेदिका भवति 'तिस्र आहुतीः' इत्यादिषु । इयं पुनरवधारिते कर्मणि उपजायमाना 'एकादश प्रयाजान्' इतिवत् अभ्यासेनैव पूर्येतेति न स्वरूपभेदाय प्रभवति । तेन एकमेव सर्वाग्निषु अभ्यस्तं कर्मेति निश्चीयते । यत्तु सायंप्रातर्वाक्ययोरनेकार्थत्वात् कर्मविधित्वमिति । तत्र ब्रूमः । 'सायं जुहोति' 'प्रातर्जुहोति' इति वाक्यान्तरप्राप्तः कालो देवताव्यवस्थापरे वाक्ये संकीर्त्यते । नन्वेवमपि कालविशिष्टकर्मानुवादात् वाक्यभेदः स्यात् । न । प्रकरणलब्धे कर्मणि कालमात्रे देवताविधानात् । स तु कालो न स्वरूपेण देवतया संबध्यते, इति प्रकरणलभ्यकर्मानुरक्तः संबध्यते । अथवा विधीयमानसंप्रदानभूतदेवताऽऽकाङ्क्षितप्रकृतहोमपर्युपस्थापनेन कालस्योपयोगः । न च लक्षणया लभ्यमानो होमो वाक्यं भिनत्ति । न च सायं-

कालेनान्यत्र स्थितो लक्षितः। तेन सायंहोमस्य अग्नि-प्रजापती भविष्यतः। एवं प्रातर्होमस्य सूर्यप्रजापती इति सिद्धम्।

नन्वेवमपि भिन्नपदोपात्ते द्वे देवते विदधती वाक्ये भिद्येयाताम्। न, एककारकत्वादिति **केचित्**। कारकान्यत्वे हि विधेर्व्यापारभेदो भवति। एककारकनिबन्धनं तु अर्थसहस्रमपि एकप्रयत्नसाध्यमित्युक्तम्। **अत्राभिधीयते। 'अनेकपदसंबद्धं यद्येकमपि कारकम्। तथापि तदनावृत्तैः प्रत्ययैर्न विधीयते॥'** ( अयं श्लोकार्थः—'अग्नये दात्रे' इतिवद्विशेषणविशेष्यभावाङ्गीकरणेन प्रजापतित्वगुणविशिष्टस्याग्नेर्देवतात्वाद्यद्यप्येकं कारकं, तथापि अनेककारकपदोपात्तयोरग्निप्रजापतिरूपकारकयोः विभक्तिश्रुत्या क्रियाऽन्वयप्रतीतेस्ततः प्राग्विशेषणविशेष्यभावानवगमात् प्रत्येकं विधिव्यापारावश्यंभावात् विधायकप्रत्ययावृत्तिः स्यादेवेति वाक्यभेदो दुर्निवारः। वस्तुतस्तु प्रजापतेः स्वातन्त्र्येण देवतात्वप्रसिद्धेः विशेषणत्वाभावेन कारकैक्यमपि नास्तीति सुदृढो वाक्यभेद इति। ) विभक्त्या हि कारकं प्रत्याय्यते। सा च यत्रैका अग्नीषोमादौ तत्र सकृदेव प्रत्ययस्य व्यापारो भवति। यत्र पुनर्भिन्नविभक्तिसंबद्धानेकपदोपात्तमेकमपि कारकं भवति यथा अत्रैव अग्नये च प्रजापतये चेति, तत्र युगपत् प्रत्यवेक्षणाभावादवश्यं भेदेन अग्निप्रजापती प्रत्ययेन आलोचयितव्यौ। कारकविभक्तिर्हि नामपदार्थालोचनाय प्रत्ययं प्रयुङ्क्ते, सा च नानोच्चारितानां नैव प्रयुङ्क्ते इत्यावृत्तिप्रसङ्गः। तस्मान्नैष परिहारः, इति एवमभिधीयते वाक्यद्वयेऽपि अस्मिन् प्रजापतिरेवैको विधीयते। अग्निसूर्ययोः पुनर्मन्त्रवर्णादेव प्राप्तिः, वाक्यान्तरेण एवंदेवत्यौ मन्त्रौ विहितौ, ताभ्यामेव च ते देवते प्राप्ते सत्यौ प्रजापतिविधौ औचित्येन स्तुत्यर्थमुपादीयेते। यदपि च 'तत्प्रख्यं चान्यशास्त्रम्' इत्यत्र एते वाक्ये निदर्शिते, तदपि मन्त्रवर्णप्राप्तिद्योतनार्थत्वेन द्रष्टव्यं, एवं मन्त्रविध्योर्न पौनरुक्त्यं भविष्यति, अन्यथा तदर्थशास्त्रदोषपरिहारप्रयोजनगुणविधिपरिसंख्यार्थवादादीनां अन्यतमे अतिक्लेशः स्यात्। तस्मात्तत्र वाक्यभेद इति सिद्धम्।

यत्तु सायंप्रातर्होमयोरवयवबुद्धिर्नास्तीति, दाक्षायणयज्ञादिवत् सकलकर्मावृत्तिप्रज्ञानात् तदित्यवगन्तव्यम्। **नन्वेवं** सति सकलकर्मपरिच्छेदात्मकत्वेन सायंप्रातःकालयोस्तुल्यार्थत्वात् विकल्पे सति सायं प्रातर्वाऽग्निहोत्रं होतव्यं नोभयत्रेति प्राप्नोति। **नैतदस्ति**। यावज्जीवचोदनया तावत् जीवता सायं हुते, पुनर्जीवतः एव प्रातःकाले सति समस्तनिमित्तोपजननात् नैमित्तिकहोमकरणं भविष्यति। सत्यमेवमपि सिध्यति, अयं तु विशेषः, यदा सायं प्रातरभ्यस्तोऽयमेक एव प्रयोगो भवति, तदा सायंहोमे कृते, यदा नाम यजमानस्य कदा चिदापद्भवति, तदा यथाकथंचित् प्रातर्होमः कर्तव्यः प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम्। अथ तु वसन्ते ज्योतिष्टोमवत् सायंकाले समाप्तं कर्म, ततो नावश्यं प्रातर्होमः कर्तव्यः। किंच। '**काम्यः सर्वाङ्गसंयुक्तः प्रयोगश्च फलार्थिना। सायंप्रातर्विकल्पेन प्रयोक्तव्यस्तदा भवेत्**॥' अभ्यस्तैककर्मपक्षे तु कालद्वयेऽपि प्रयत्नेन अवैगुण्यं संपादनीयम्। कथं पुनर्न विकल्प इति, वचनकृतात् समुच्चयादिति ब्रूमः। 'प्रवर्ग्यो वा एषः' इति हि प्रकृत्य ब्रवीति 'स वै सायं च प्रातश्च जुहोति' इति। भेदपक्षेऽपि चशब्दात् समुच्चयः। न च समुच्चये सति साहित्यापत्तिर्भवति, अनुपादेयत्वात् कालस्येत्यविरोधः। प्राप्तयोश्च वचनान्तरेण कालयोः समुच्चयार्थमेवेदं वाक्यमिति न वाक्यभेददोषः। तस्मादभ्यस्तमेकं कर्म। यत्तु अङ्गानां भेदेन प्रयोगो न प्राप्नोतीति, नैष दोषः। कालं प्रति हि कर्मोपादीयमानं विवक्षिताङ्गसंयोगं भवति, तेन सायंतनस्य प्रधानस्य तत्कालाङ्गान्येव उपकुर्वन्ति नान्यकालानि, वैगुण्यात्। एवं प्रातस्तनस्यापीत्यावर्तते। यत्तु प्रयोजनं नास्तीति, तत्रोच्यते। कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्येककर्मविधानात् एकेतिकर्तव्यताऽपेक्षणे सति सायंहोमस्य प्रातर्होमस्य वा धर्मा आगच्छन्तीत्येकधर्मयुक्तं सकृदेव प्रयुज्येत, अभेदे तु यथाप्रकृतीति।

**शा— 'तत्र रूपापरिज्ञाने विशेषानवधारणात्। सामान्यस्याविधेयत्वान्नानयोर्विधिसंभवः॥'** इति प्राप्ते ब्रूमः **'प्रकृतानामसद्भावात् कर्मणां**

नानुवादता । नहि दध्यादिवाक्येषु दध्याद्याक्षिप्तशक्तिना । विधिना शक्यते कर्म विधातुमितरत्र तु । अनन्याक्षिप्तशक्तित्वाद् विधिः कर्मैकगोचरः॥ '

**सोम—** इह दध्यादेः अन्यतः अप्राप्तत्वेन मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन विष्ण्वादिवाक्यानामिव स्तावकत्वाभावात् विधायकत्वे सति दध्यादिविशिष्टकर्मविधेः अग्निहोत्रादिवाक्यमनुवादः इति प्रत्यवस्थानात् **संगतिः**। **प्रयोजनं** पूर्वपक्षे दध्यादिवाक्यविधेयानां कर्मणां समुच्चित्यानुष्ठानं, सिद्धान्ते तु एकस्मिन्नेव कर्मणि द्रव्याणां विकल्पान्न समुच्चयः । तथा पूर्वपक्षे सायंप्रातर्वाक्ययोरपि दध्यादिवाक्यवत् कर्मान्तरविधायकत्वेन दध्यादिवाक्यविहितकर्मसु सायंप्रातःकालनियमाभावः, सिद्धान्ते तु तद्भावः इत्यादि । आघारवाक्ये तु पूर्वपक्षे ऊर्ध्वत्वसांतत्यादिमध्ये यस्य भ्रंशः, तद्गुणकस्य कर्मणः पुनरनुष्ठानं, सिद्धान्ते तु कर्मभेदाभावात् गुणानुसारेण प्रधानावृत्त्ययोगात् लोपप्रायश्चित्तमात्रमिति । **सूत्रार्थस्तु**— आघाराग्निहोत्रवाक्यमपि पौर्णमासीवत् समुदायानुवादः स्यात् अरूपत्वादिति ।

**वि**—'अग्निहोत्राघारवाक्यमनुवादोऽथवा विधिः ।, अरूपत्वात्तु दध्यूर्ध्ववाक्येनोक्तमनूद्यते ॥ , गुण्यसिद्धौ न दध्यादिर्गुणो दुष्टा विशिष्टता । रूपं दध्यादि मन्त्राभ्यामतोऽसौ गुणिनो विधिः ॥ '

**भाट्ट—** तत्रैव ' आघारमाघारयति ' इति श्रुते ' अग्निहोत्रं जुहोति ' इत्यत्र च पूर्ववद्वाक्यभेदस्य दूषकस्याभावात् भेदकप्रमाणाभावाच्च ' ऋजुमाघारयति ' ' संततमाघारयति ' ' दध्ना जुहोति ' ' पयसा जुहोति ' इत्यादिवाक्यविहितकर्मणां यथायोगं समुदायानुवादकत्वोपपत्तिः, दध्यादिवाक्यानां निर्व्यापारे विध्यन्वयासंभवेन अवश्यं गुणविशिष्टकर्मविधायकत्वात् । अतश्च रूपाभावात् भेदकप्रमाणाभावाच्च आघारवाक्ये अग्निहोत्रवाक्ये वा न कर्मान्तरं, अपि तु तेषामेव समुदायसिद्ध्यर्थमनुवादः । तत्प्रयोजनं चाग्निहोत्रवाक्ये सर्वेषामेवाग्निहोत्रसंज्ञकत्वेन फलसंबन्धसिद्धिः । इतरथा अग्निदेवत्यस्यैव तदापत्तिः । आघारवाक्ये समुदायानुवादप्रयोजनं कौस्तुभे द्रष्टव्यम् । ( तच्च सोमनाथोक्तमेवेति ज्ञेयम् । **के.** )

न च दध्यादिहोमेषु देवताऽऽद्यभावः, समुदायानुवादबलेन एकप्रयोगपरिग्रहावगतेः सकृदनुष्ठानेन अग्न्यादिहोमाङ्गभूतदेवतायाः प्रसङ्गेन दध्यादिहोमोपकारकत्वोपपत्तेः । **इति प्राप्ते,** सर्वत्र गुणमात्रविधानेन तृतीयविधिप्रकारोपपत्तौ पञ्चमविधिप्रकाराङ्गीकरणस्यान्याय्यत्वात् न दध्यादिवाक्येषु विशिष्टकर्मविधानम् । न च गुणे विध्यन्वयानुपपत्तिः, होमकर्मकगुणकरणकभावनायामेव विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन विधिफलस्याज्ञातज्ञापनरूपस्य भावनायाः स्वरूपेण प्राप्ततया गुणमात्रविषयत्वोपपत्तेः। अत एव सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षड् विधिप्रकाराः, तेषां चोत्तरोत्तरस्य दौर्बल्यं पूर्वमुक्तम् । अतश्च प्राप्त्यभावादेव समुदायानुवादत्वासंभवेन आद्यविधिविधया कर्मविधौ आघाराग्निहोत्रवाक्ये । न च रूपज्ञानाभावात् कर्मविध्यनुपपत्तिः, तस्यानुष्ठानं प्रति कारणत्वेऽपि शाब्दबोधं प्रति अकारणत्वात् । अतश्च विजातीयहोमत्वावच्छिन्नस्य विधाने अवगते वाक्यान्तरेण रूपलाभेऽपि न काचित् क्षतिः ।

**मण्डन**— ' आघारसंततिविधिर्गुणमात्रनिष्ठः । '

**शंकर**— ' तथाऽऽघाराग्निहोत्रे च । ' यजिविधिः इत्यनुषङ्गः ।

* **आघाराग्निहोत्राधिकरणं** पौर्णमास्यधिकरणोक्तसमुदायानुवादापवादः । **वा.** २।२।४।९ पृ. ४८९. * **आघाराग्निहोत्राधिकरणे** वक्ष्यते नहि अकरणभूतोऽसौ ( धात्वर्थः ) साध्यान्तरानपेक्षत्वात् वाक्यान्तरेणापि फले विधातुं शक्यते इति । **शा.** १।४।४ पृ. ६५.

* आघाराग्निहोत्राधिकरणे वक्ष्यमाणो न्यायः ' द्रव्यदेवतासंबन्धसमुदाययोर्विधौ संबन्धो विधीयमानः संबन्धिनं तावदाक्षिपेत्, धात्वर्थे पुनः स विधातव्य एव संबन्धी, अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात् न क्रियायाः' इति । **सु.** पृ. ७४२. * आघारपदेन कश्चित् होमविशेषः इत्येतावन्मात्रावगमे सति तस्य चतुर्गृहीताज्यैकदेशत्वेन इन्द्रत्वेन च द्रव्यदेवताज्ञानाभावे पर्यवसानाभावात् वाक्यशेषमन्त्रवर्णाभ्यां यागत्वे पर्यवसानम् । यथा चैतत् तथा **आघाराग्निहोत्राधिकरणे** निरूपितमस्माभिः । **कु.** २।३।९।२०. * धात्वर्थभेदाभेद-

चिन्तायां ददातिवाक्ये गुणविधौ संबन्धविधेः आघा० करणे निराकरिष्यमाणत्वात् वाक्यभेदापत्तेः पूर्वपक्षायोगः । **सु.** पृ. ७१०, * रूपावचनस्य प्रकृतानुवादहेतुत्वोपपादनार्थं 'य एवं विद्वान्' इत्यादिभाष्येण संज्ञया कर्मविशेषाभिधानात् रूपं च विना विशेषाप्रतिपत्तेः विध्यसंभवोऽभिहितः आघा०रणे संज्ञोपबन्धात् इत्यस्मिन् सूत्रे व्याख्यास्यमानत्वादुपेक्ष्य, स्वयं विधिस्वभावमेव प्रश्नपूर्वकमुपपादकमाह । पृ. ७२६, * वार्तिककृता आघाराग्निहोत्राधिकरणे परदौर्बल्यवतः **अष्टौ** श्रुतिप्रकारान् परोक्तान् निराकुर्वता विशिष्टविधेः अत्यन्तक्लिष्टत्वं तृतीयस्थाननिवेशासंभवोपपादनार्थं वक्ष्यमाणत्वात् नेह प्रपञ्चितम्। पृ. ४१९, * शुद्धस्य कर्मणोऽननुष्ठेयत्वेन विधातुमशक्यत्वात् श्रुतेष्वपि गुणविधिषु स्वातन्त्र्येण गुणविधानस्य आघाराग्निहोत्राधिकरणे वार्तिककृता निराकरिष्यमाणत्वेन अर्थापत्तिप्रसूतेषु स्वातन्त्र्यस्य दूरनिरस्तत्वात् तद्-दृष्टान्तेन विशेष्यस्वरूपस्य स्वातन्त्र्यस्य विधानाशङ्काऽनुपपत्तेः । पृ. ४२०. * आहवनीयादेः अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वात् अदृष्टार्थत्वस्य **आघाराग्निहोत्राधिकरणवार्तिके** उक्तत्वात् । **बाल.** पृ. २२. * एकस्यापि तु कारकस्य अनेकपदोपात्तस्य एकयत्नेन विध्यसंभवः 'अनेकपदसंबद्धं' इत्यत्र आघाराग्निहोत्राधिकरणवार्तिके साधयिष्यते । **सु.** पृ. ७४०, * सर्वत्र विधेर्भावनाविषयत्वात् गुणसंचारायोगाशङ्कानिरासं **आघा०करणोक्तं** स्मारयन्। पृ. ८४४. * **आघाराग्निहोत्राधिकरणन्यायेन** सर्वत्र विशिष्टभावनाविधिः । **वा.** २।२।५।१६ पृ. ५०३.

* **आघारादीनां** तन्त्रेणानुष्ठानं दर्शे पौर्णमासे च प्रधानभेदेऽपि । **भाट्ट.** ११।१।८. * आघारादीनां दर्शपूर्णमासाङ्गत्वम्। **भा.** ४।४।११।२९-३८. * **आघारार्थं** वेद्यतिक्रमणकरणमन्त्रोक्तं फलं आध्वर्यवं, कर्मार्थत्वात् । परंपरया तु याजमानम् (दर्शपूर्णमासयोः) । **वि.** ३।८।१५.

* **'आङ्क्ते** चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति चक्षुरञ्जनसंस्कारस्य फलश्रुतिरर्थवादो ज्योतिष्टोमे । **वि.** ४।३।१.

* **आङ्गिरसः** द्विरात्रः । उत्तरमहः अतिरात्रस्तत्र । तत्र च 'वैखानसं पूर्वेद्युः साम भवति, षोडश्युत्तरे' । **कु.** १०।५।१३।४८.

* **आङ्गिरसव्रतं** नाम साम अनृकम् । **बाल.** पृ. ७२.

* **आचमनं** 'क्षुते आचामेत्' इति विहितं पुरुषार्थम् । यदा तु क्रतुमध्ये क्षुतादि निमित्तं प्राप्नोति, तदा नैमित्तिकमाचमनं क्रत्वङ्गत्वेन स्मृत्या विधीयते 'आचान्तेन कर्तव्यं' इति । 'वेदं कृत्वा वेदिं करोति इति ...... वेदवेद्यादिश्रुत्युक्तपदार्थवत् आचमनादयः स्मृत्युक्ताः अनुष्ठेयाः पदार्थाः। क्रमस्तु पदार्थनिष्ठो धर्मः। स च पदार्थानुपजीवति। तत उपजीव्यविरोधात् क्रम एव बाध्यते, न तु क्रमेण आचमनस्य बाधोऽस्ति। तस्मादियं स्मृतिः प्रमाणम् । **वि.** १।३।४. * आचमनं पदार्थः, पदार्थानां च गुणः क्रमः । न च गुणानुरोधेन पदार्थो न कर्तव्यो भवति । **भा.** १।३।३।७ पृ. १९९. * 'क्षुते निष्ठीविते सुते परिधानेऽश्रुपातने । कर्मस्थ एषु चाचामेत् दक्षिणं श्रवणं स्पृशेत् ॥' इति स्मृतिपर्यालोचनया पदार्थमध्ये **अनाचमनं** सूचितम् । **सु.** पृ. १८१. * ताम्बूलभक्षणोत्तरमनाचमनं अनाचारः उदीच्यानां दाक्षिणात्यानां च । **वा.** १।३।३।७ पृ. २०४, * **आचमनविधिः** 'दक्षिणत उपवीय उपविश्य हस्तावविनिज्य त्रिराचम्य द्विः परिमृज्य' इति । यद्यपि इदं ब्रह्मयज्ञप्रकरणे श्रूयते, तथापि वेदोच्चारणसंबन्धात् तदङ्गत्वेनापि तावत् ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात् तदङ्गं भवति । तथा च 'न सोमेनोच्छिष्टा भवन्ति' इति प्राप्ताचमनप्रतिषेधार्थमेव अवधार्यते । १।३।३।७ पृ. २०१.

**आ चाग्ने देवान् वह सुयजा च इति मन्त्रे आहवनीयवादः ॥**

'अग्निं होत्रायावह' इत्युपक्रम्य 'आ चाग्ने देवान् वह सुयजा च यज जातवेदः' इत्यत्रापि गार्हपत्यवादे प्राप्ते, 'अग्निमग्न आवह' इति सर्वोपक्रमे संबोधितस्य इहापि प्रत्यभिज्ञानादाहवनीयस्यैव वादः । **संकर्ष.** ४।२।१४.

* **आचान्तेन कर्तव्यं** इत्यादिस्मृतिः श्रुत्याऽविरुद्धत्वात् प्रमाणम् । **भा.** १।३।३।५–७.

* **आचारः** प्रत्यक्षवैदिकलिङ्गेन बाध्यते यथा–यववराहाधिकरणे ( १।३।४।८–९ ) 'यदा वा अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इत्यर्थवादलिङ्गेन प्रियङ्गुषु यवशब्दप्रयोगरूप आचारो बाध्यते । **बाल.** पृ. १३८. * आचारः स्मृत्या बाध्यते । अयमप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०. * आर्यावर्तनिवासिनां अन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर **आचारो** भवति । **भा.** १।३।२।३ पृ. ५८१. * **आचाराः** के चित् क्रतुप्रकरणाम्नाताः केन चिन्निमित्तेन उत्कृष्यमाणाः पुरुषधर्मतां भजन्ते, यथा 'मलवद्वाससा सह न संवदेत' 'तस्मात् न ब्राह्मणायावगुरेत्' इत्येवमादयः । **वा.** १।३।१।२ पृ. १६४.

* आचाराः 'धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानि चित् । वैदिकैः कर्तृसामान्यात् तेषां धर्मत्वमिष्यते ॥ प्रदानानि जपो होमो मातृयज्ञादयस्तथा । शक्रध्वजमहो यात्रा देवताऽऽयतनेषु च ॥ कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः । प्रदीपप्रतिपद्दानमोदकापूपपायसाः ॥' अनग्निपक्वं माघसप्तमीपौर्णमासीफाल्गुनीप्रतिपद्वसन्तोत्सवादीनां नियमक्रियाप्रमाणं न शास्त्रादृते किं चिदस्ति । स्मृतिकाराश्च 'आचारश्चैव साधूनां देशजातिकुलधर्माश्च आम्नायैः अविरुद्धाः प्रमाणं' इति वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यन्ते । तथा अनध्यायाधिकारे 'ऊर्ध्वं भोवनादुत्सवः' इति देशनगरोत्सवप्रामाण्याश्रयणम् । वेदेऽपि च महाव्रते 'प्रेङ्खमारुह्य होता शंसति' इत्येतद्वाक्यशेषे श्रूयते 'यदा वै प्रजा मह आविशन्ति, प्रेङ्खं तर्हि आरोहन्ति' इति । महःशब्दवाच्या उत्सवप्रसिद्धिरनूदिता । **वा.** १।३।३।७ पृ. २०५ । **सुधा**— शक्रध्वजमहः शक्रध्वजोत्सवः । महा इति पाठे शक्रध्वजे महायात्रा इति सप्तमीसमासः । देवताऽऽयतनेषु इत्यत्र महायात्रा इत्यनुषङ्गः । प्रदीपानां कार्तिकशुक्लप्रतिपदि दानम् । मोदकादिचतुर्भिर्द्रव्यैः तत्साध्यानि दानभक्षणादीनि लक्ष्यन्ते । माघसप्तमीपौर्णमासीभ्यां तत्कालानुष्ठेयं कर्म लक्ष्यते । फाल्गुनीपौर्णमास्यनन्तरायां प्रतिपदि वसन्तनिमित्तः उत्सवः । ( पृ. १८७ ) * आचाराः । यानि तु म्लेच्छादिसमानानि नियतानियतक्रियाऽन्तराणि अर्थसुखसाधनकृषिसेवावाणिज्यादीनि मृष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि, तेषु नैव कस्य चित् धर्मत्वाशङ्का अस्ति, इति न तत्सामान्यतोदृष्टेन इतरनिराक्रियोपपत्तिः । केषां चिद्वा धर्मत्वाभ्युपगमात् न सर्वेषामेव तत्प्रसङ्गः । किंतु '**देवब्राह्मणपूजाऽऽदि यत् तेषामपि किं चन । तत्रेष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥ लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते । कश्चित्तु प्राणिसामान्यप्राप्तस्तैरपि संगतः ॥ तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते । स एव केवलो धर्मो, नेतरः प्राणिमात्रगः ॥**' **वा.** १।३।१।७ पृ. २०६. * आचारा ये दृष्टार्थाः, ते तत एव प्रमाणम् । ये तु अदृष्टार्थाः, तेषु वैदिकशब्दानुमानम् । **भा.** १।३।१।२ पृ. १६६, १६८.

* आचाराः विरुद्धा अपि शिष्टगृहीताः– 'पञ्चधा विप्रतिपत्तिर्दक्षिणतः, अनुपनीतेन भार्यया च सह भोजनं, पर्युषितभोजनं, उच्छिष्टभोजनं, पितृष्वसृ–मातुलदुहितृपरिणयनं इति । तथोत्तरतः पञ्चधा ऊर्णाविक्रयः, सीधुपानं, उभयतोदद्भिर्व्यवहारः, आयुधीयकं, समुद्रयानं इति' इति **बौधायनेन** स्मृतिविरुद्धदृष्टाचारोदाहरणानि दत्त्वा 'इतर इतरस्मिन्' इति देशप्रामाण्यव्यवस्थया प्रामाण्यं आपस्तम्बेनोपन्यस्तं 'मिथ्यैतदिति गौतमः, उभयं त्वेतन्नाद्रियन्ते शिष्टस्मृतिविरोधात्' इति निराकृतम् । **सु.** पृ. १९७. ( उभयतः मुखे अधरफलके उपरिफलके च येषां पशूनां दन्ता भवन्ति, तैः अश्वाश्वतरगर्दभैः क्रयविक्रयरूपो व्यवहारः उभयतोदद्भिर्व्यवहारः । ) * **आचारेण** अदृष्टार्थेन दृष्टार्थ आचारो बाध्यते, यथा वसन्तोत्सवाद्याचारेण अदृष्टार्थेन तत्समानकालीनस्य कस्य चित् दृष्टार्थाचारस्य बाधः । **बाल.** पृ. १३९, *आचारेण अविगीतेन विगीताचारो बाध्यते, यथा लोभादिमूलकत्वेन मांसभक्षणाचारस्य विगीतस्य असंभवल्लोभादिमूलकेन अविगीतेन मांसवर्जनाचारेण बाधः । पृ. १३९,

* **आप्ताचारेण** अनाप्ताचारो बाध्यते । यथा वृक्ष-विषयपीलुशब्दप्रयोगरूपाचारेण हस्तिविषयम्लेच्छरूप-अनाप्तप्रयोगरूपाचारस्य बाधः । इदं पील्वधिकरणे (१।३।८।९ वार्तिके वर्णकं २ पृ. २१९।७–२२०।७) उक्तम् । पृ. १३९.

॥ **आचाराद् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात्** । ६।२।१०।३१ ॥

सिद्धान्तसूत्रम् । आचारात् शिष्टाचारात् गृह्यमाणेषु ज्ञायमानेषु 'गुरुरनुगन्तव्यः' 'वृद्धवयाः प्रत्युत्थेयः' इत्यादिकर्मसु तथा पूर्वाधिकरणोक्ताग्निहोत्रादिकर्मवत् पुन पुनर्निमित्ते प्राप्ते पुनःपुनरनुष्ठेयता स्यात् । निमित्तावृत्तौ नैमित्तिकावृत्तिः न तु सकृत्करणम् । पुरुषार्थत्वात् गुर्वनुगमनादीनाम् । **के.**

* आचारात् स्मृतिर्बलीयसी । **भा.** १०।१।१०।४२, * तत्रभवतामाचारात् स्मृतिरनुमीयते, स्मृतेः श्रुतिः । १०।१।१०।३६. * लोकेऽपि अदृष्टार्थाः संस्काराः **आचाराद्** गम्यन्ते । यथा ग्रामान्तरादागतानां शान्त्यर्थं अग्निलवणदध्यक्षतप्रभृतेः शिरस उपरि भ्रामणं शुचिदेशप्रतिष्ठापनं च । न चास्यानुपपत्तिः । आचारप्रामाण्यात् । **वा.** २।१।४।१२ पृ. ४१२. * **आचारस्य** मूलश्रुतिकल्पनेन प्रामाण्यात् । **सु.** पृ. ६३३. * आचारस्य यदि ऐकरूप्यं भवेत्, नैव स्मृतयः प्रयत्नेन धार्येरन् । स एव तु संकीर्णत्वादस्फुटस्मरणेन प्रतिपाल्यते । **वा.** २।१।४।१२ पृ. ४०९, * **आचाराणां** आम्नायविरुद्धानां गौतमेन अप्रामाण्यमुक्तम् । आह 'यदि वेदविरोधः स्यादिष्येतैवाप्रामाणता ।' इति । १।३।३।७ पृ. २११. * आचाराणां धर्माधर्मयोः प्रामाण्यम् । **भाट्ट.** १।३।३ वर्णकं ३. * आचाराणां प्रत्युपस्थितनियमानां दृष्टार्थत्वादेव प्रामाण्यं 'गुर्वनुगमनं, प्रपाः, तडागानि, गोत्रचिह्नम्' इत्यादीनाम् । **भा.** १।३।१।२ पृ. १६५. * आचाराणां मन्वादिवाक्यप्रतिषिद्धानां प्रामाण्यमशक्यमभ्युपगन्तुम् । **वा.** १।३।३।७ पृ. २११. * आचाराणां वसन्तोत्सवादीनां प्रामाण्यम् । **भाट्ट.** १।३।३ वर्णकं ३. * आचाराणां स्मृतीनां च सर्वधर्मत्वं असति विशेषणे । **शा.** १।३।८.

* **आचारे** लोभादिदृष्टासंभवे एव स्मृतिमूलकत्वं 'अपिवा कारणाग्रहणे' (१।३।७) इति सूत्रे वक्ष्यते । **कौ.** १।३।२।४ पृ. २०. * **सदाचारेषु** हि दृष्टो धर्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च । प्रजापतेस्तावत् 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्' इत्यगम्यागमनरूपात् अधर्माचरणात् धर्मव्यतिक्रमः । इन्द्रस्यापि तत्पदस्थस्य च नहुषस्य परदाराभियोगात् धर्मव्यतिक्रमः । तथा वसिष्ठस्य पुत्रशोकार्तस्य जलप्रवेशात्मत्यागसाहसम् । विश्वामित्रस्य चाण्डालयाजनम् । वसिष्ठवत् पुरूरवसः प्रयोगः । कृष्णद्वैपायनस्य गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेषु अपत्योत्पादनप्रसङ्गः । भीष्मस्य च सर्वाश्रमधर्मव्यतिरेकेण अवस्थानं, अपत्नीकस्य च रामवत् क्रतुप्रयोगः । तथा अन्धस्य धृतराष्ट्रस्य इज्या पाण्डवार्जितैर्धनैः इत्यनधिकृतक्रिया । तथा युधिष्ठिरस्य कनीयोऽर्जितभ्रातृजायापरिणयनं, आचार्यब्राह्मणवधार्थमनृतभाषणं च । वासुदेवार्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणीसुभद्रापरिणयनं, 'उभौ मध्वासवक्षीबौ' इति सुरापानाचरणम् । अद्यत्वेऽपि हि अहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् । केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनादि उदीच्यानाम् । मातुलदुहितृद्वाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम् । मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतदवसानानाचमन– (ताम्बूलादनान्ते आचमनाभावः इत्यर्थः) निर्णेजकधौतगर्दभारूढवस्त्रपरिधान-ब्रह्महत्याऽतिरिक्तमहापातककार्यपरिहरणादीनि (पातककारिणः अपरिहरणं) उभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि तु अनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्तीति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसंभवः । **वा.** १।३।३।७ पृ. २०३–०४.

* **आचारकल्प्यः** प्रतिषेधो यथा हरिवासरपरिभाषिते काले पारणानिषेधः । **बाळ.** पृ. २९.

* **आचारतः** पुरुषस्य वासोद्वयं प्राप्यते । (अधरं उत्तरं चेति) । **भा.** १२।३।१।२.

* **आचारप्रामाण्यं** न दृष्टमूलासंभवमात्रेण उच्यते, किंतु धर्मबुद्ध्या अनुष्ठीयमानत्वेनैव 'अपिवा कारणाग्रहणे' इति सूत्रे (१।३।३।७)। **के.** * आचारप्रामाण्यं स्मृत्यधिकरणे साधितम् । **सु.** पृ. १८५. * **आचारविरोधः** स्यात् अभिप्रवृत्तस्य नियमस्योत्सर्गे । **भा.** ११।३।६।१४. * **आचारविषयको** विचारः स्मृतिपादे प्रथमतृतीये । **वि.** प्रस्तावनायां श्लो. १३०.

* **आचारस्मृतिविरोधे** बलाबलचिन्तनं 'स्मृत्याचारविरोधे बलाबलं' इति बिन्दौ द्रष्टव्यम् । (**वा.** १।३।४।९ पृ. २२०–२२१) * '**शीलाचारात्मतुष्टीनां** गोष्ठीहास्यादितुल्यता ।' (इदं पूर्वपक्षे) । **वा.** १।३।३।७ पृ. २१५, * 'स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी ।' १।३।८।२४ पृ. २६०.

* **आचार्यः** वेदाध्यापनेन भवति । **भा.** ६।१।७।३५. * 'आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि दृश्यते । अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया ॥' इति स्तुतशस्त्राधिकरणोदाहृतवृद्धश्लोके विरुद्धानामपि अपेक्षाभेदेन एकत्र युगपत्संभवस्योक्तत्वात्, वस्तुविरोधस्तावन्नास्ति । **सु.** पृ. ११११. * '**ऋत्विगाचार्यौ** नातिचरितव्यौ' इति तु पुरुषधर्मोऽसौ, न कर्मधर्मः । **भा.** ११।३।१२।३३. * 'अङ्गानां च प्रणेतार **आचार्या** ऋषयो मताः।' **वा.** १।३।६।११ पृ. २३२. * **आचार्यस्य** शिरसोऽवतारिताया अपि स्रजः शिष्येण शुचिदेशेऽवस्थापनम् । तत्संबन्धादाचार्यस्यैव संस्कारायावकल्पते । **वि.** १०।१।६. * **आचार्ये** प्रोषिते 'आचार्यानी भवतामाचार्यः' इति आचार्यशुश्रूषा आचार्यान्यां अतिदिश्यते । **भा.** ७।२।१।१२. * **आचार्यकरणविधेः** अध्ययनेन सह नान्विताभिधानं, पदश्रुत्या अध्ययनविधिनैव अन्विताभिधानसिद्धेः । **ऋजु.** पृ. ५, * **आचार्यकरणविधौ** उपनयनं पदश्रुत्या दूरस्थमपि अङ्गतया समर्पितम् । तच्च स्वभावतः उपनेयनिष्ठं उपनेयासत्तिद्वारेण उपकारकम् । तत्र आसाद्यमानो माणवकः यदि अकिंचित्करः, तदा तदासादनमनुपयोगि । आसादनानुपयोगे च उपनयनमपि अनुपयोगि । ततश्च आसाद्यमानस्य कर्मापेक्षायां उपनयनकर्मप्रक्रमात् उपनीतकर्तृकं अध्ययनं श्रूयमाणं तत्कर्मतया विज्ञायते । तेन उपनयनं स्वाङ्गभूतमाक्षिपन् आचार्यकरणविधिः अध्ययनमाक्षिपति । तदाक्षिप्ताध्ययनानुष्ठानसिद्धश्च अध्ययनविधिः स्वसिद्ध्यर्थं नाधिकारान्तरमपेक्षते । पृ. ४. * '**आचार्यचोदितः** करोमि' इति हि दृश्यते । (तेन चोदनाशब्दः प्रवर्तकवचनपरः) । **भा.** १।१।२।२ पृ. १२, * **आचार्यवचः** प्रमाणं इति श्रुतिः । अत्र आचार्यो वेदोऽभिप्रेतः । आचिनोति अस्य बुद्धिमिति । यद्वा आचार्यवचनं प्रमाणं तदपेक्षम् । कतरत्तत्, यत् प्रमाणगम्यम् । १।३।६।१३, * **आचार्यवचनात्** सूत्रकारवचनाद्वा न शब्दार्थो भवति, प्रत्ययादसौ गम्यते । ३।४।४।१३ पृ. ९२३. * **आचार्यशब्दस्यार्थः** मन्वादिभिरेव व्याख्यातः । 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ॥' इति । **वा.** १।३।६।१४ पृ. २४२.

* **आच्छादनं** वाजपेये नित्यम् । "वाजपेये श्रूयते 'दर्भमयं वासो भवति' इति" । **भा.** ६।८।८।२८.

**आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् । १०।४।७।१३ ॥**

महाव्रते 'तार्प्यं यजमानः परिधत्ते, दर्भमयं पत्नी' इति श्रुतम् । प्रकृतौ तु अहतं वासः श्रुतं चोदकेन प्राप्तम् । तत्र आच्छादने गुह्यादिशरीराङ्गाच्छादने निमित्ते सति यत् चोदकेन प्राकृतं अहतं प्राप्तं, तस्य प्राकृतस्य तार्प्यादिना विशेषविहितेन विकारो बाधः स्यात् । ऐकार्थ्यात् एकः आच्छादनरूपः अर्थः प्रयोजनं ययोः तार्प्याहतयोः ते एकार्थे, तयोर्भावः ऐकार्थ्यं तस्मात् । तथा च एककार्यकरत्वात् प्राकृतस्य बाध इति पूर्वः पक्षः । तुशब्दः संशयनिवृत्त्यर्थः । तार्प्यं घृताक्तं कम्बलं इति वदन्ति ।

**अधिकं वाऽन्यार्थत्वात् । १४ ॥**

पूर्वपक्षं सूत्रप्राप्तं वाशब्दो व्यावर्तयति । तार्प्यं दर्भमयं च अहतात् अधिकं स्यात्, समुच्चय इत्यर्थः । अन्यार्थत्वात् अहतात् तार्प्यस्य भिन्नकार्यकरत्वात् । अहतं

अधोवासः, तार्प्यं दर्भमयं च उपरिवासः इति । तस्मात् तार्प्याहतयोः, एवं दर्भमयाहतयोश्च समुच्चयः ।

**समुच्चयं च दर्शयति । १२ ॥**

सिद्धान्ते लिङ्गदर्शनमाह । 'वासांसि वाराही चोपानहौ विमुञ्चति ' इति ' कृष्णविषाणया वासांसि विस्रंसयति ' इति च बहुवचनं समुच्चयं दर्शयति । चकारो हेतुसमुच्चयार्थः । **के.**

※ **आज्यं** अग्निसंयोगात् द्रवीभवति । **भा.** ८।१।१९।४३ । ( अत्र प्रकरणे प्रायः आज्यशब्दः घृतार्थक एव, क्व चित्तु ज्योतिष्टोमगतस्तोत्रपरोऽपि भवति । अर्थभेदेऽपि रचनासौकर्याय न पृथक् कृतः । स्पष्टार्थकत्वाच्च वाचकानां व्यामोहासंभवात् । 'आज्यप'–शब्दविषयकश्च एक एव लघुसिद्धान्तः रचनासंकटपरिहाराय वर्णक्रममनुसृत्यैव यथास्थानं निवेशितः इति ज्ञेयम् । ), ※ आज्यं उपांशुयाजीयं अग्नीषोमीयं प्राजापत्यं वैष्णवं वा दर्शपूर्णमासयोः । ५।४।६।२१, ※ आज्यं गवां सारः । ८।१।१८।३५, ※ आज्यं द्रव्यं दर्शपूर्णमासयोः उपांशुयाजे नियतम् । तच्च ध्रौवमेव । १०।८।१५।४७–४८, ※ आज्यं विलापयति इति आज्यशब्दः जातिशब्दः, न तु संस्कारशब्दः । १।४।७।१० . ※ आज्यं सारस्वतं ( सरस्वतीदेवताकं ) उपांशुयाजविकारः अध्वरकल्पायाम् । **वि.** ५।१।१० .

※ आज्यं स्तोत्रविशेषो ज्योतिष्टोमे । ' आज्यैः स्तुवते ' । **वि.** २।१।५.

※ आज्यं हविः अनादेशे । **संकर्ष.** ३।२।२०. ※ उपांशुयाजाज्यं ब्राह्मणेन सोमात् प्राक् अग्नीषोमीयं न कर्तव्यम् । प्राजापत्यं वैष्णवं वा कर्तव्यमिति न तस्य सोमादुत्कर्षः दर्शपूर्णमासयोः । **भा.** ५।४।६।१९–२१.

※ **आज्यानि स्तोत्राणि** इत्यनेन शब्देन लक्षणयैव गुणो विधीयते । **भा.** १।४।२।३. यदि तु आज्यैः स्तुवते इत्यनेन विहितानां पञ्चदशत्वविधिरुच्येत ( पञ्चदशान्याज्यानि ) ततः पूर्वाधिकरणन्यायेन ( उद्भिदधि० ) सैव मत्वर्थलक्षणा इति मत्वा वदति ( भाष्यकारः ) । **वा.** पृ. ३३१. यदि वाक्यभेदपरिहाराय उत्पत्तिवाक्यविहिताज्यानुवादेन पञ्चदशत्वं गुणो विधीयेत, ततः सामानाधिकरण्यसिद्ध्यर्थं आज्यशब्देन मत्वर्थलक्षणया विहितेषु आज्येषु गुणविध्यापत्तेः लक्षणैव दोषः इत्येवं भाष्यं व्याख्यातम् । **सु.** पृ. ४२४. ※ यत्तु अप्रसिद्धं कर्मणां नामधेयमिति अवयवप्रसिद्ध्या आजिगमनात् **आज्यानि** । आजिगमनं अर्थवादवचनात् ' यदाजिमीयुस्तदाज्यानामाज्यत्वं ' इति । **भा.** १।४।२।३.

※ **आज्येन** जाघनी विकल्प्यते दर्शपूर्णमासयोः पत्नीसंयाजेषु । **भा.** ३।३।१०।२०–२३, ※ आज्येन पत्न्यवेक्षितेन यजमानावेक्षितेन च होम उच्यते । तत्र अन्यतराभावे वैगुण्यम् । ६।१।४।१७ पृ. १३६२, ※ ' आज्येन यूपमनक्ति ' इत्यत्र आज्ये प्राकृताज्यधर्माः न कर्तव्याः ज्योतिष्टोमे अग्नीषोमीये पशौ । ३।८।१६।३१, ७।३।७।१८. ※ आज्येन व्याघारणं धिष्ण्यानां तृतीयसवने । **संकर्ष.** ३।२।१७. ※ 'आज्येन शेषं संस्थापयति ' इत्यनेन आज्यद्रव्यकं पत्नीवद्देवताकं शेषवत्पशुयागसमनन्तरभावि कर्मान्तरं विधीयते । **वि.** ९।४।१९. ※ आज्येन समापनं प्रकृतौ द्रव्यनाशे ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेत ' इति वचनात् त्यागांशस्य आरादुपकारकत्वपक्षे । ( इदं सर्वं स्विष्टकृद्विषयं इति शास्त्रदीपिकादौ सोमनाथे च स्पष्टम् ) । **भाट्ट.** ४।१।७. ※ आज्येन समापनं वाजिनयागस्य वाजिननाशे चातुर्मास्यवैश्वदेवे । **भा.** ४।१।९।२२–२४, ※ **आज्यैः** स्तुवते इति स्तोत्रं प्रधानकर्म, न गुणकर्म । २।१।५।२९, ※ ' आज्यैः स्तुवते ' इत्यत्र आज्यशब्दः स्तोत्रविशेषस्य वाचकः । १।४।३।४. ※ **आज्यस्य** उपांशुयाजीयस्य धर्माणामतिदेशः चित्रेष्टौ मधूदकयोः । **वि.** ८।१।१९, ※ आज्यस्य उपांशुयाजीयस्य सोमादूर्ध्वं नोत्कर्षः । ५।४।६, ※ आज्यस्य औपभृतस्य अनुयाजवत् चतुर्थपञ्चमप्रयाजनिष्पादकमानयनमपि प्रयोजकम् । ४।१।१. ※ आज्यस्य औपभृतस्य प्रयाजार्थं समानयनं प्रयोजकम् । **भा.** ४।१।१५।४०–४१. ※ आज्यस्य औपभृतस्य विनियोगः— ' अष्टावुपभृति ' ' यदुपभृति, प्रयाजानूयाजेभ्यस्तत् ' । अनुयाजार्थं चतुर्थपञ्चमप्रयाजार्थं च तत् इत्यर्थः । तत्रैकं चतुर्गृहीतं प्रयाजद्वयार्थं,

अपरं चतुर्गृहीतमनुयाजार्थम् । वि. ४।१।१५, * आज्यस्य जौहवस्य विनियोगः— 'चतुर्जुह्वां गृह्णाति' 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति । प्रयाजत्रयायेत्यर्थः । ४।१।१५, * आज्यस्य ध्रौवस्य विनियोगः— 'चतुर्ध्रुवायां' 'सर्वस्मै वा एतद्यज्ञाय गृह्यते, यद् ध्रुवायामाज्यम्' इति । ४।१।१५. * आज्यस्य प्रतिनिधित्वं हविषो नाशे दोषे वा । वा. ६।४।१।१. * आज्यस्य प्रयाजार्थस्य पात्रात् अनुयाजार्थपृषदाज्यपात्रं भिन्नं अग्नीषोमीये पशौ । भा. ५।१।८।१६. * 'चतुर्जुह्वां गृह्णाति' 'अष्टावुपभृति' 'चतुर्ध्रुवायां' 'यज्जुह्वां गृह्णाति, प्रयाजेभ्यस्तत्, यदुपभृति, प्रयाजानूयाजेभ्यस्तत् । सर्वस्मै वा एतद्यज्ञाय गृह्यते, यद् ध्रुवायामाज्यम्' इति श्रुतम् । गृहीतानां आज्यानां न सर्वार्थता, किंतु यथाश्रुतं व्यवस्था । वि. ४।१।१५–१६. * आज्ये (पयःसक्तुधानाहिरण्याज्येषु) प्रदानधर्माः नानुष्ठेया ज्योतिष्टोमे । भा. ९।४।१२।४९–५०.

* **आज्यकार्याणां** श्येनयागीयानां सर्वेषामेव दृतिनवनीतम् । भा. ३।८।२१।३९–४१.

* **आज्यग्रहणम्** । 'अष्टावुपभृति' इत्यत्र 'चतुर्गृहीतं जुहोति' इति विध्यनुसारेण चतुर्गृहीतद्वयं विधीयते, न तु अष्टसंख्याविशिष्टमेकम् । तत्र एकं चतुर्गृहीतं चतुर्थपञ्चमप्रयाजार्थं, अपरं तु अनुयाजार्थम् । सह ग्रहणार्थं तु 'अष्टौ' इत्युक्तम् । हविष्ट्वसिद्धये तु चतुर्गृहीतद्वयमेव विधेयम् । वि. ४।१।१७, * आज्यग्रहणं स्रुक्षु 'चतुर्जुह्वां गृह्णाति' 'अष्टावुपभृति' 'चतुर्ध्रुवायाम्' । ४।१।१५. * **आज्यग्रहणे** मन्त्राः अध्वर्युप्रतिप्रस्थातृभ्यां भेदेन प्रयोक्तव्याः न तन्त्रं, वरुणप्रघासेषु विहारपृथक्त्वे । भा. १२।१।९।१८, * आज्यग्रहणे यागयोग्यस्य आज्यस्योपादानं प्रयोजनम् । ११। ४।१४।४४, * **आज्यग्रहणमन्त्राः** 'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि' इत्यादयः अध्वर्युणा यजमानेन च उभाभ्यामेव कर्तव्याः दर्शपूर्णमासयोः । ३।८। ७।१७, * **आज्यग्रहणमन्त्रस्य** आज्यग्रहणेषु प्रतिग्रहणं आवृत्तिः दर्शपूर्णमासयोः । ११।४।१४।४४–४५.

* **आज्यदोहसामानि** गर्गत्रिरात्रे लौकिकाग्निमुपनिधाय गीयन्ते । भा. ७।३।१२।३०.

* **आज्यद्रव्यकत्वं** इष्टिप्रकृतिलिङ्गम् । **बाल.** पृ. ११९.

* **आज्यधर्माः** उत्पवनं विलापनं ग्रहणं आसादनं इत्यादयः । भा. ३।१।४।७। अवेक्षणं इत्यादयः । **वि.** ३।१।४, चतुर्गृहीतत्वं इत्यादयः । ५।१।८. * आज्यधर्माः औषधधर्मानन्तरं अध्वरकल्पायाम् । **वि.** ५।१।१०, * आज्यधर्माः पश्चात् कर्तव्याः पुरोडाशधर्मा आदौ । पाठक्रमस्य मुख्यक्रमात् प्रबलत्वात् दर्शपूर्णमासयोः । ५।१।८.

* **आज्यपनिगदे** चातुर्मास्येषु आज्यपशब्दस्यैव प्रयोगः कर्तव्यः, न पृषदाज्यपशब्दस्य अनुयाजेषु । **भा.** १०।४।२५।५०–५१.

* **आज्यप्रक्षेपस्य** स्विष्टकृद्यागः प्रयोजकः, न तु अवयविनो हविषः तदुत्तरार्धस्य वा दर्शपूर्णमासयोः । **भाट्ट** ४।१।१३.

* **आज्यबर्हिरादिशब्देषु** एकदेशेऽपि जातिनिमित्तत्वे लभ्यमाने निमित्तान्तरं न कल्पनीयम् । **वा.** २।३।२।३ पृ. ५८१.

* **आज्यभागः** आग्नेयः आरादुपकारकः । **भा.** १०।१।८।१६–१८. * '**आज्यभागौ** अग्नीषोमाभ्यां यजति' तयोः प्रथमः आज्यभागः आग्नेयः, द्वितीयः सौम्यः । इष्टेरारादुपकारकावेतौ । सौर्यादियागेऽपि इमावेव कर्तव्यौ । वि. १०।१।८. * आज्यभागौ अङ्गकर्म न फलप्रयुक्तम् । तत्र फलश्रुतिरर्थवादः । तौ च आग्नेयाद्यर्थौ क्रत्वर्थौ । **भा.** ४।३।१।१–४, * आज्यभागौ आग्नेयादिषु गुणभूतौ नैतौ पुरुषार्थौ । ४।३।१।१. * आज्यभागौ दर्शपूर्णमासयोः अङ्गं न प्रधानम् । **वि.** ४।४।११. * आज्यभागौ पवमानेष्टिषु आधाने 'बुधन्वानाग्नेयः, पावकवान् सौम्यः' । तत्र देवताऽभिधानं निर्गुणमेव कर्तव्यम् । मन्त्रौ तु तथा । 'अग्निं स्तोमेन बोधय०' इति आग्नेयो मन्त्रो बुधन्वान् । (अग्न आयूंषि पवसे इति सौम्यस्य) । **भा.** १०।४।१५।३०–३१, * आज्यभागौ पशौ न विद्येते प्रतिषिद्धत्वात् 'तौ न

सौम्येऽध्वरे, न पशौ ' इति । १२।१।२।७, * आज्यभागौ पशुपुरोडाशे कर्तव्यौ । १२।१।२।७, * आज्यभागौ पौर्णमास्यां वार्त्रघ्नौ, अमावास्यायां वृधन्वन्तौ । ३।१।१३।२३, * आज्यभागौ प्रकृत्य ' न तौ पशौ करोति न सोमे ' इत्याम्नायते । अत्र ' न सोमे ' इति वाक्यं ' तौ न पशौ करोति ' इत्यस्य अर्थवादः । १०।८।२।५.

**आज्यभागौ विकृतिषु सद्वन्तौ प्राकृतौ वा ॥**

' अनुपदावाज्यभागौ ' इति विकृतौ निविशमानमपि काम्येष्टिष्वेव, तदीयफलार्थत्वात् । अत एवातिदेशिकमन्त्रबाधोऽपि काम्येष्टिषु । वस्तुतोऽनुपदसंज्ञकमन्त्राणामभावात् पदं स्वस्थानमनुगतौ इति व्युत्पत्त्या प्राकृतावेवेत्यर्थः । एवमुक्तिश्च पौर्णमास्यमावास्याविकृतिषु वार्त्रघ्नादिव्यवस्थासिद्ध्यर्था । तस्याः सर्वस्या न्यायेनैव सिद्धत्वान्नित्यानुवादोऽयम् । **इति प्राप्ते**, कौषीतके ' सर्वासु विकृतिषु सद्वन्तावाज्यभागौ ' इति विधिभिः अचोदितानां प्राकृतमन्त्राणां प्रतिप्रसवार्थोऽयं विधिः । तेन विकृतिषु सद्वन्तौ वा प्राकृतौ वेति विकल्पः । **संकर्ष. ४।४।२.**

* **आज्यभागयोः** अवभृथे सौमिके याज्यापुरोऽनुवाक्ये अप्सुमती । ' अप्सुमन्तावाज्यभागौ यजति ' । अप्स्वग्ने सधिष्टव०, अप्सु मे सोमो० इति, इमौ लिङ्गक्रमाभ्याम् । **भा. १०।७।१५।४८.** * आज्यभागयोः कालकृतं व्यवस्थामात्रं सुकरं इति पौर्णमास्यधिकरणे उक्तम् ( २।२।३।३-८ ) । **वा. ३।१।१३।२३.** * आज्यभागयोः गुणवाचकपदरहितस्य देवतावाचकपदस्याभिधानं कर्तव्यं पवमानेष्ट्यादिषु । **भा. १०।४।१५।३०-३१,** * आज्यभागयोः ' चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ ' इति फलार्थवादः न तु फलविधिः दर्शपूर्णमासयोः । ४।३।१।१-३. * आज्यभागयोः ध्रौवं साधारणं द्रव्यम् । देवता मान्त्रवर्णिकी । ' रूपवन्तावतो यागौ विधीयेते पृथक्तया । ' **वा. २।२।३।३ पृ. ४७५.** * आज्यभागयोः पुरोऽनुवाक्ये इति पशुकामेष्टौ वार्त्रघ्न्यावेव कर्तव्ये न वृधन्वत्यौ, भूयसामनुग्रहात् । **वि. १२।२।७,** * आज्यभागयोः पौर्णमास्यां पुरोऽनुवाक्ये वार्त्रघ्न्यौ ' अग्निर्वृत्राणि जङ्घनत् ' इत्याग्नेयी, ' त्वं सोमासि सत्पतिः ' इति सौम्या । दर्शे तु वृधन्वत्यौ ' अग्निः प्रत्नेन मन्मना ' इत्याग्नेयी, ' सोम गीर्भिष्ट्वा वयं' इति सौम्या । याज्ये तु ' जुषाणो अग्निराज्यस्य वेतु' 'जुषाणः सोम आज्यस्य वेतु' इति । ३।१।१३, * आज्यभागयोः याज्यापुरोऽनुवाक्ये अध्वरकल्पायां आग्नावैष्णवसारस्वतीष्टौ वृधन्वत्यौ, अविरोधे प्रथमस्य मुख्यत्वात् । १२।२।८. * आज्यभागयोः सोमस्तावत् आरादुपकारकः, यज्ञपरोऽपि आरादुपकारकः, एवं द्विसंख्या युज्यते, नान्यथा । **वा. १०।१।८।१८.** * **आज्यभागे उत्तरे,** हविषः इति पदस्य विकल्पः । शाखाभेदेन व्यवस्था वा ( ' जुषाणः सोम आज्यस्य वेतु ' इति आश्वलायनानां, ' जुषाण. सोम आज्यस्य हविषो वेतु ' इति सांख्यायनानाम् ) । **संकर्ष. ४।३।११ ( १० ).**

* **आज्यभागन्यायः** त्रेधा, गृहमेधीयाज्यभागन्यायः ( १०।७।९ ), पाशुकाज्यभागन्यायः ( १०।८।२ ), पौरोडाशिकाज्यभागन्यायश्चेति ( १२।१।२ ) । **के.** * **आज्यभागपुनःश्रवणस्य** परिसंख्यार्थत्वमिति पञ्चमे पक्षे स्विष्टकृच्छ्रवणं स्वसजातीयप्रतिपत्त्यन्तराणां शेषकार्याणां निवर्तकं चातुर्मास्येषु गृहमेधीये । क्त्वाचिन्ता । **भा. १०।७।११।३५-३७.** * आज्यभागपुनःश्रुतिः गृहमेधीयस्य अपूर्वत्वज्ञापनार्था इति दशमे वक्ष्यति (१०।७।९।२४-३३) । **सु. पृ. ९३९.** * **आज्यभागप्रतिषेधः** पशौ अर्थवादः ' न तौ पशौ करोति ' इति । **भा. १०।८।२।५,** * आज्यभागप्रतिषेधः सोमे नित्यानुवादः ' न सौम्येऽध्वरे ' इति । १०।८।२।५, * **आज्यभागस्विष्टकृतौ** अन्तरा ( मध्ये ) आवापस्थानम् । १०।४।१९।३८, * **आज्यभागाङ्गता** वार्त्रघ्न्यादीनां अनुवाक्यानाम् । ३।१।१३।२३, * **आज्यभागादयः** पशुपुरोडाशे कर्तव्याः । १२।१।२।७. * **आज्यभागान्तं** मन्द्रया वाचा , ततः परं मध्यमया, उत्तमया अनुयाजादि दर्शपूर्णमासयोः । **वा. ३।३।२।९ पृ. ८११.** * **आज्यवत्**– यथा ' सर्वस्मै वा एतद् यज्ञाय गृह्यते , यद् ध्रुवायामाज्यम् ' इत्याज्यं सर्वार्थं, तथा ' प्रणीताभिर्हवींषि संयौति ' ' अन्तर्वेदि प्रणीता निनयति ' इति

संयवननिनयनोभयार्थत्वं अपां, न गम्यते विशेषः। इति पूर्वः पक्षः। भा. ४।२।५।१४, * **आज्यशब्दः** सर्पिषो वाचकः। १०।४।२५।५९. * 'पञ्चदशानि आज्यानि' इति **आज्यशब्दः** ज्योतिष्टोमे प्रातःसवनीयानां स्तोत्रविशेषाणां नामधेयं, न गुणविधिः। भाट्ट. १।४।२.

* **आज्यशस्त्राणि** चत्वारि होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकप्रयोज्यानि। सु. पृ. ११०. * **आज्यशेषस्य** प्रतिपत्तिः 'यद्यग्निष्टोमः जुहोति, यद्युक्थ्यः परिधिमनक्ति, यद्यतिरात्रः यजुर्जपन् हविर्धानं प्रतिपद्येत' इति सर्वावस्थस्य विशेषवचनादवगम्यते। भा. ३।६।१६।४२, आज्यशेषस्य प्रतिपत्तिं विदधत्तुल्यवत्संस्थाक्रतुप्रकरणसंबन्धित्वेन कीर्तयति। 'यद्यग्निष्टोमः, जुहोति। यद्युक्थ्यः, तेनैव शेषेण परिधिमनक्ति। यद्यतिरात्रः, एतदेव होमयजुः 'यमग्ने पृत्सु मर्त्यं' इति जपन् हविर्धानं प्रतिपद्येत' इति। वा.

**आज्यसंस्था प्रतिनिधिः स्याद् द्रव्योत्सर्गात्। ९।४।१४।५६ ॥**

'पर्यग्निकृतं पात्नीवतमुत्सृजति' 'आज्येन शेषं संस्थापयति' इति श्रूयते। इदमाज्यं किं पूर्वस्मिन् प्रतिनिधिभूतं, उत आज्यद्रव्यकं कर्मान्तरं विधीयते इति विचारे पूर्वपक्षमाह। आज्यसंस्था आज्येन येयं संस्था समाप्तिरुक्ता, सा पात्नीवतस्य पशोः प्रतिनिधिः स्यात् यथा व्रीहीणां नीवाराः। कुतः? द्रव्योत्सर्गात् पशुरूपस्य द्रव्यस्य 'पात्नीवतमुत्सृजति' इति वचनेन उत्सर्गात्। द्रव्याभावे च प्रतिनिधेर्ग्राह्यत्वात्। तस्मात् आज्यसंस्था प्रतिनिधिः। इति पूर्वः पक्षः।

**समाप्तिवचनात्। ५७ ॥**

पूर्वपक्षे हेत्वन्तरमाह– 'पर्यग्निकृतं पात्नीवतमुत्सृजति' 'आज्येन शेषं संस्थापयति' इत्यत्र 'संस्थापयति' इति समाप्तिवचनम्। समाप्तिवचनाच्च अवगम्यते आरम्भोऽपि स्यादिति। तथा च आरब्धमेव कर्म आज्येन परिसमाप्तं स्यादिति अवगमात् आज्यं प्रतिनिधिः स्यात् इत्यवगच्छामः।

**चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात्। ५८ ॥**

पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह। चोदना एषा स्यात् कर्मान्तरस्य 'आज्येन शेषं पात्नीवतं संस्थापयति' इति। कर्मोत्सर्गात् पूर्वस्य कर्मणः उत्सर्गात् उत्सर्गेण परिसमाप्तत्वात्, अन्यैः कर्मान्तरविधायकैः निर्वपत्यादिभिः अविशिष्टत्वात् सदृशत्वात्। तस्मात् आज्यसंस्था न प्रतिनिधिः किंतु कर्मान्तरं इति सिद्धान्तः।

**अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति। ५९ ॥**

आज्येन संस्थापनं कर्मान्तरं इति सिद्धान्ते युक्त्यन्तरमाह। प्रसिद्धां वनस्पतेः अनिज्यां, वनस्पतेः प्रसिद्धाया इज्यायाः अभावं, तेन 'यत् त्वष्टारं च वनस्पतिं चावाहयसि, अथवैतौ यक्ष्यसि, त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी' इति वाक्येन दर्शयति। यदि पूर्वं कर्म परिसमाप्तं ततो लुप्ता स्यात् वनस्पतीज्या। तत्र अभावदर्शनं उपपद्यते। तस्मात् आज्येन संस्थापनं कर्मान्तरं, न प्रतिनिधिः। इति सिद्धान्तः।

**संस्था तद्देवतत्वात् स्यात्। ६० ॥**

यत्तु पूर्वपक्षिणा 'संस्थापयति इति अप्रवृत्ते नोपपद्यते' (९।४।१४।५३) इत्युक्तं, तत् परिहरति सिद्धान्ती। असंस्थायां संस्थावचनमेतत्। पूर्वं कर्म पात्नीवतं, इदमपि पात्नीवतमेव इति। तद्देवतत्वात्, सा देवता यस्य, किंवा तस्य पूर्वस्य कर्मणो देवतैव देवता यस्य कर्मान्तरस्य तत् तद्देवतम्। तद्देवतत्वात् पूर्वसमाप्तिसादृश्यं अत्र दृश्यते इति कृत्वा सादृश्यात् संस्थापयति इति संस्थाशब्दः उपपद्यते। तद्देवतत्वात् संस्था स्यात्। तस्मात् आज्यसंस्था कर्मान्तरं, न पात्नीवतस्य प्रतिनिधिः इति सिद्धम्। के.

**अज्यसमानयनाधिकरणम्।** दर्शपूर्णमासयोः प्रयाजार्थं समानयनं औपभृताज्यस्य प्रयोजकम् ॥

**समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात्। ४।१। १५। ४० ॥**

**भाष्यं**— दर्शपूर्णमासयोः श्रूयते 'अतिहायेडो बर्हिः प्रति समानयति' इति। तत्र संदेहः किं समानयनं

आज्यस्य धर्माणां च प्रयोजकं, उत अप्रयोजकमिति। किं प्राप्तं ? अप्रयोजकमिति। कुतः ? प्रयाजानुयाजार्थस्य आज्यस्य अयमेकदेशः समानीयते इति पूर्वेण न्यायेन अप्रयोजकता प्राप्ता। तदुच्यते। मुख्यं समानयनं, लिङ्गदर्शनात्। किं लिङ्गं ? 'चतुर्गृहीतान्याज्यानि भवन्ति, नहि अत्रानुयाजान् यक्ष्यन् भवति' इति आतिथ्यायां श्रूयते। यदि प्रयाजार्थं समानयनं, ततस्तत्र एकं चतुर्गृहीतं समानीयते, एकमपि अनुयाजानां भवति। ततश्च आतिथ्या इडान्ता संतिष्ठते इति अनुयाजाभावे। उपभृति समानयनार्थे एकं चतुर्गृहीतं ग्राह्यं, न तु अनुयाजार्थम्। तत्र बहूनां चतुर्गृहीतानां दर्शनमुपपद्यते, इतरथा हि अनुयाजाभावे नैव उपभृति चतुः गृह्येत। तत्र 'चतुर्गृहीतानि' इति बहुवचनं नोपपद्येत। तस्मात् प्रयोजकं समानयनमिति। ननु लिङ्गमुपदिश्यते, का प्राप्तिः ? उच्यते, दृष्टं तत्र प्रयोजनम्। प्रयाजौ द्वौ यष्टव्यौ, तत्र जुह्वां आज्येन प्रयोजनं, नोपभृति रिक्तायाम्। उपभृतो रेचनमदृष्टार्थं, जुह्वां निधानं दृष्टार्थमेव। तेन प्रयाजहोमार्थं आज्यसमानयनं औपभृतमाज्यं प्रयोजयति। तदपि हि प्रयाजार्थमनुयाजार्थं च, इति वक्ष्यते।

**टुप्**— 'अप्रयोजकं' समानयनं 'प्रयाजानुयाजार्थस्य (आज्यस्य) अयमेकदेशः समानीयते इति पूर्वेण न्यायेन अप्रयोजकता' इत्ययुक्तोऽयं ग्रन्थः। यदि प्रयाजानुयाजार्थमेतत् (द्रव्यं यत् समानीयते, ततः) प्रयाजा आत्मीयं द्रव्यं प्रयुञ्जते एव। कथमप्रयोजकता। अतः पूर्वेण (प्रयाजार्थत्वाभिधानेन) उत्तरं (अप्रयोजकत्वाभिधानं) न संबध्यते (तस्मादयुक्तः)। तत्र **केश्चित्** प्रयाजशब्दं त्यक्त्वा अनुयाजार्थस्यायमेकदेशः समानीयते इत्येवं ग्रन्थो नीतः। **अपरैः** प्रयाजे अनुयाजार्थस्यायमेकदेशः समानीयते इति (सप्तम्यन्तं प्रयाजशब्दं व्यस्तमाश्रित्य ग्रन्थो नीतः)। **अन्यैस्तु** 'यदुपभृति गृह्णाति, अनूयाजेभ्यस्तद् गृह्णाति' इत्यनेन (केवलानुयाजार्थमेव औपभृतमष्टगृहीतं इति उपरितनाधिकरण-) पूर्वपक्षेण अत्र पूर्वपक्षः कृतः। त्रीण्यपि एतानि (मतानि) अयुक्तानि, एकैः ग्रन्थः (प्रयाजशब्दरूपः) परित्यक्तः (तेषां स एव दोषः), अपरैः अधिकरणत्वमसंभवि प्रयाजानां निर्दिष्टं (नहि आज्याधारत्वं क्रियारूपाणां प्रयाजानां संभवति)। अन्येषां (तृतीयपक्षवादिनां) ग्रन्थपरित्यागस्तदवस्थ एव (अयं चापरो दोषः–) असिद्धेन चासिद्धं साध्यते। तस्मात् उत्तरग्रन्थानुरोधेन अन्यथा वर्ण्यते (तस्मात् अर्थग्रन्थानुरोधेन इति तु आनन्दाश्रमीयादन्यत्र लिखितमुद्रितेषु पाठः)। उपभृति द्वे चतुर्गृहीते प्रयाजानुयाजार्थे। 'प्रयाजानुयाजेभ्यस्तद् गृह्णाति' इति समासोऽयम्। तत्र प्रयाजप्रातिपदिके विभक्तिर्न श्रूयते। भवितव्यं तु तया। तत् (तस्मात् इत्यर्थः) उत्तरपदे या विभक्तिः, सा तन्त्रेण (प्रातिपदिकद्वयेऽपि) द्रष्टव्या श्रुतत्वात् तस्याः। अन्यस्यां (तु द्विवचनरूपायां प्रयाजप्रातिपदिके-) आनीयमानायां श्रुतहानं अश्रुतकल्पना च। तस्मात् प्रयाजेभ्यः इति बहुवचनसामर्थ्यात् सर्वप्रयाजानां औपभृतम्। जौहवं च (सर्वेषाम्। प्रयाजेभ्य इति विशेषविधानात् विकल्पेन उभयोरर्थवत्ता भविष्यति इत्यभिप्रायः। ततः किं ? तत्राह–) 'जुह्वा जुहोति' इति (वचनात्) यस्मिन्नेव काले प्रयाजान् जुहोति, तस्मिन्नेव काले यत् औपभृतं प्रयाजार्थं, तत् जुह्वामानयति (नहि अन्यथा तथा होतुं शक्यते। एवं च सति) अतः उत्पत्त्यपेक्षायां यदुपभृति प्रयाजानुयाजार्थं च द्रव्यं गृहीतमासीत् तदस्मिन् काले 'अतिहायेडो बर्हिः प्रति समानयति' इति। आदावेव (प्रयाजारम्भे) प्रयाजार्थस्य समानीतत्वात् न (उभयार्थतया) विद्यते, इति अनुयाजार्थं (अर्धं) केवलमिदानीमास्ते, तत् समानीयमानं परकीयत्वात् (अनुयाजार्थत्वात्) अप्रयोजकं, अदृष्टार्थं च। सिद्धान्तस्तु, यत् औपभृतं समानयते जुह्वां, तत् अतिहायेडो बर्हिः इति अस्मिन् काले (न तु सर्वप्रयाजारम्भे) इति कालनियमो विधीयते, तस्मात् प्रयाजत्रयस्य जौहवं, द्वयोः औपभृतं अतिहायेडो बर्हिः प्रति समानयति इति। सत्यपि तुल्यकार्यत्वे नास्ति विकल्पः, भिन्नविषयत्वात्। समासेऽपि द्वयोः औपभृतस्य प्रमाणान्तरावगत-

त्वात् विरोधात् न श्रुता विभक्तिर्ग्रहीतव्या, द्विवचनं अध्याह्रियते प्रयाजाभ्यां इति । तस्मात् प्रयोजकम् ।

**वचने हि हेत्वसामर्थ्यम् । ४१ ॥**

**भाष्यं**— अथ कस्मान्न वचनमेतत्, चतुर्गृहीतान्याज्यानीति । उच्यते । वचने हि हेतुरसमर्थितः स्यात्, 'न ह्यत्रानुयाजान् यक्ष्यन् भवति' इति । यदा समानयनं न प्रयाजार्थमिति गम्यते, तदा वचनम् । यदा वचनं, तदा नानुयाजाभावो हेतुः । असति हेतौ, 'न ह्यत्रानुयाजान् यक्ष्यन् भवति' इति हेतुवन्निगदो नोपपद्येत । तस्मात् प्रयाजार्थं समानयनं प्रयोजकं औपभृतस्य आज्यस्य । किं भवति प्रयोजनम् । प्रयाजार्थे समानयने यावत् प्रयाजार्थं, तावत् सर्वं समानेयमर्धमौपभृतस्य । अप्रयोजकत्वे न नियोगतोऽर्धं यावत्तावद्वा ।

**शा**— 'सर्वार्थं हि प्रयाजार्थमविशेषाद् बहुश्रुतेः । सर्वादौ तत् समानीतमिदानीं नोपभृत्यदः ॥' उच्यते । 'समानयनमुद्दिश्य कालमात्रं विधीयते । अदृष्टकल्पनाऽनेकविधानं चान्यथा भवेत् ॥'

**सोम**— यथा अभिघारणस्य परप्रयुक्तद्रव्यसंस्कारकत्वात् अप्रयोजकत्वं एवं समानयनस्यापि इति प्रत्यवस्थानात् (दृष्टान्त-) **संगतिः** । **प्रयोजनं** पूर्वपक्षे उपभृति यत् प्रयाजार्थं, तत् सर्वमादौ समानीय बर्हिःप्रयाजकाले अनूयाजीयस्य जुह्वां किंचित् क्षारणं, कदा चित् जौहवेनैव पञ्चापि प्रयाजाः, अत्रापि बर्हिःकाले औपभृतस्य किंचित् क्षारणम् । सिद्धान्ते तु जौहवेन त्रीनिष्ट्वा औपभृतार्धेन अवशिष्टौ इति । **सूत्रार्थस्तु** -- समानयनं औपभृतस्य प्रयोजकं स्यात् । आतिथ्यायां 'चतुर्गृहीतान्याज्यानि, नह्यत्रानूयाजान् यक्ष्यन् भवति' इति चतुर्गृहीतबहुत्वलिङ्गात् । तद्धि जौहवौपभृतयोः प्रयाजेषु समुच्चये घटते, इतरथा जुहूपभृतोरन्यतरदेकं प्रयाजार्थं चतुर्गृहीतं, ध्रुवायां चापरं इति चतुर्गृहीतद्वयमेव स्यात् । तस्मात् आतिथ्यायां चतुर्गृहीतबहुत्वलिङ्गात् जौहवौपभृतयोः प्रयाजेषु समुच्चये सति समानयनस्य उपरितनप्रयाजद्वयार्थकत्वात् प्रयोजकत्वमिति ।

अत्र **प्राभाकराः** जौहवं सर्वेषां प्रयाजानां द्रव्यं, औपभृतं तु तत्संस्कारकत्वमात्रेण सर्वप्रयाजार्थम् । ततश्च पूर्वपक्षेऽपि तयोः समुच्चय एव । एवं च औपभृतस्य स्वयं द्रव्यत्वाभावेन प्रयाजाद्यनुष्ठानार्थं अर्थात् आदौ समानेयं इति निर्बन्धाभावात् प्रयाजार्थत्वेऽपि इदानीमेव तस्य समानयनम् । तच्च जुह्वाज्यगतार्द्रताजननेन कृतकरिष्यमाणसर्वप्रयाजार्थं इति औपभृतस्य समानमुखेन (समानयनेन) प्रयाजेषु अदृष्टं कार्यं, अनूयाजेषु दृष्टमेव । तेन अनूयाजप्रयुक्तमेव औपभृतं इति न समानयनं तस्य प्रयोजकं इति पूर्वपक्षयन्ति । तदयुक्तम् ।

**वि** — 'चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतम् । जुह्वामानयतीत्यौपभृतं नैषां प्रयोजयेत् ॥ प्रयोजयेद्गुताऽऽनीतिः, प्रयाजाद्यखिलार्थता । श्रुतौपभृत आज्येऽतो जौहवेन विकल्पनात् ॥ न प्रयोजकता, मैवं नियतार्थं तु जौहवम् । अतिहायेड इत्युक्ते चतुर्थे सा प्रयोजयेत् ।'

**भाट्ट**— दर्शपूर्णमासयोः प्रयाजार्थं जुह्वां चतुर्गृहीतं विधाय 'अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' इति वचनेन औपभृतं विधाय पुनर्ध्रुवायां चतुर्गृहीतं विहितम् । तत्रैव च 'अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतम्' इति श्रुतम् । तत्र किं प्रयाजाः समानयनस्य तत्संस्कृताज्यस्य च प्रयोजकाः तदर्थं चेदमुभयं, उत ते अप्रयोजकाः, अनूयाजा एव तु तयोः प्रयोजकाः, तदर्थं चेदमुभयमिति **चिन्तायां**, 'प्रयाजानूयाजेभ्यस्तत्' इति द्वंद्वान्ते श्रुतस्य बहुवचनस्य प्रत्येकं संबन्धात् उद्देश्यगतस्यापि अप्राप्तत्वेन अनुवादायोगात् औपभृतस्य न्यायत एव सर्वप्रयाजार्थत्वप्रतीतेः प्रयाजार्थस्यार्धस्य सर्वप्रयाजादौ समानीतत्वात् बर्हिःप्रयाजकाले उपभृति अनूयाजार्थस्यैव सत्त्वेन तस्यैवेदं समानयनं तत्संस्कारार्थमनूयाजप्रयुक्तं, न तु प्रयाजप्रयुक्तम् । अत एव जौहवस्यापि अविशेषेण सर्वप्रयाजार्थत्वादौपभृतेन विकल्पः । 'त्रिरितः प्राचीनान् प्रयाजान् यजति' इति त्ववयुत्यानुवादः । **इति प्राप्ते**, कालविशिष्टसमानयनस्य अनूयाजीयाज्यसंस्कारकत्वे अदृष्टार्थत्वापत्तेः विशिष्टविधिगौरवात् 'त्रिः' इत्यस्य अवयुत्यानुवादत्वापत्तेश्च

प्रयाजार्थस्येदं समानयनम्। तच्च 'जुह्वा जुहोति' इति वचनादर्थप्राप्तमेवेति तदनुवादेन कालमात्रमनेन विधीयते। अतश्च 'प्रयाजानूयाजेभ्यः' इत्यत्र प्रयाजाभ्यां अनूयाजेभ्य इति विग्रहे न दोषः। अत एव जौहवमपि परिशेषात् आद्यप्रयाजत्रयार्थमिति न विकल्पप्रसङ्गोऽपि। एवं चातिथ्यायां इडाऽन्तत्वेन अनूयाजाभावेऽपि च 'चतुर्गृहीतान्याज्यानि' इति बहुवचनं जौहवौपभृतचतुर्गृहीतयोः प्रयाजेषु समुच्चयात् ध्रौवचतुर्गृहीतमादाय संगच्छते। इतरथा तयोर्विकल्पादनूयाजाभावे ध्रौवमादाय चतुर्गृहीतद्वित्वापत्तेर्बहुवचनानुपपत्तिः। अतश्च प्रयाजद्वयं समानयनस्य तत्संस्कृताज्यस्य च प्रयोजकमिति सिद्धम्। सूत्रादौ तु समानयनपदं तत्कालीनप्रयाजद्वयपरं आज्यसंस्कारकस्य समानयनस्य आज्यप्रयोजकत्वसिद्धान्तानुपपत्तेः।

**मण्डन**—'समानयः प्रयोक्ता स्यात्।' १७. औपभृतस्याज्यस्य।

**शंकर**—'प्रयाजयोरौपभृतम्।' १८. प्रयोजकम्।

* **आज्यसांनाय्यौषधधर्माः** न सर्वे सर्वत्र कर्तव्याः। किंतु प्रयोजनानुसारेण व्यवस्थया। **भा.** ३।१।४।७-१०. * आज्यसांनाय्यौषधधर्माणां संस्कार्यतः वाचनिकी व्यवस्था। **बाल.** पृ. १९. * **आज्यसोमग्रहौ** दधिग्रहस्य विकारः कर्मान्तरं ज्योतिष्टोमे। **संकर्ष.** ३।३।९.

* **आज्यस्तोत्राणि** चत्वारि ज्योतिष्टोमे प्रातःसवने पञ्चदशस्तोमानि। **वि.** १।४।३, * आज्यस्तोत्राणि चत्वारि बहिष्पवमानोत्तरमग्निष्टोमे प्रातःसवने। मिलित्वा पञ्च स्तोत्राणि प्रातःसवने। ८।३।५, * आज्यस्तोत्राणि प्रातःसवने गायत्रसाम्ना गीयन्ते। १।४।३. * **आज्यस्तोत्राणां** तृचाः- १ अग्न आ याहि वीतये०, २ आ नो मित्रावरुणा०, ३ आ याहि सुषुमा हि ते०, ४ इन्द्राग्नी आगतं सुतं०, इति। **मीन्या.** * **आज्यस्तोत्र**-पृष्ठस्तोत्रादयः सामवेदे। **वि.** ३।३।६.

**आज्याच्च सर्वसंयोगात्। ३।५।१।१ ॥**

दर्शपूर्णमासयोः 'उत्तरार्धात् स्विष्टकृते समवद्यति' 'इडामुपह्वयति' इति श्रुतम्। तत्र किं उपांशुयाजद्रव्यात् आज्यादपि स्विष्टकृदादिशेषकार्यार्थं अवदातव्यं, उत नेति विचारे पूर्वपक्षमाह। आज्याच्च पुरोडाशादिव आज्यादपि शेषकार्यार्थमवदातव्यम्। सर्वसंयोगात् साधारणप्रकरणसमाम्नातात् 'सर्वेभ्यो हविर्भ्यः समवद्यति' इति वचनात् सर्वैः हविर्भिः संयोगस्यावगमात् सर्वेषां शेषकार्याणि। तस्मात् उपांशुयाजाज्यादपि शेषकार्याणि कर्तव्यानि।

**कारणाच्च। २ ॥**

पूर्वपक्षे हेत्वन्तरमाह। चकारः पूर्वेण हेतुना समुच्चयार्थः। 'देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीत् वरं वृणै भागो मेऽस्त्विति, वृणीष्वेत्यब्रुवन्, सोऽब्रवीत् उत्तरार्धादेव मह्यं सकृत्सकृदवद्यात्' इत्यत्र हविःशेषात् स्विष्टकृद्ग्रहणे यत् कारणमुक्तं, तत् दर्शपूर्णमासयोः उपांशुयाजीयात् आज्यात् स्विष्टकृदिडयोर्ग्रहणेऽपि समानम्। तस्मात् उपांशुयाजीयाज्यादपि स्विष्टकृदिडं कर्तव्यम्।

**एकस्मिन् समवत्तशब्दात्। ३ ॥**

पूर्वपक्षे हेत्वन्तरम्। दर्शपूर्णमासयोः स्विष्टकृदिडं उपांशुयाजीयादपि आज्यात् कर्तव्यम्। एकस्मिन् कर्मणि, कस्मिंश्चित् कर्मणीत्यर्थः। प्रायणीये कर्मणि इति यावत्। प्रायणीयेष्टौ चरुः आज्यं च हविः। आज्यं च उपांशुयाजविकारः। तत्र च 'अग्नये स्विष्टकृते समवद्यति' इति समवत्तशब्दः प्रयुक्तः। अनेकेभ्यो हविर्भ्यः अवदाने कर्तव्ये एव समवत्तशब्दः प्रयुज्यते। तस्मात् प्रायणीये आज्यादपि स्विष्टकृत् क्रियते एव। अर्थात् दर्शपूर्णमासयोरपि उपांशुयाजीयाज्यात् स्विष्टकृदिडं कर्तव्यम्। अथवा सिद्धान्तानुसारेण एकस्मिन् एव केवले पुरोडाशहविषि स्विष्टकृदर्थे अवदीयमाने सति समवत्तशब्दो नावकल्पेत आज्यादपि अवदीयमाने तु हविरनेकत्वस्य लाभेन समवत्तशब्दोऽवकल्पेत। तस्मात् आज्यादपि स्विष्टकृत्।

**आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य। ४ ॥**

पूर्वपक्षे हेत्वन्तरम्। ध्रुवागते आज्ये स्विष्टकृदर्थवादस्य दर्शनात् 'अवदायावदाय ध्रुवां प्रत्यभिघारयति, स्विष्टकृतेऽवदाय न ध्रुवां प्रत्यभिघारयति' इति। अत्र

च ध्रौवात् आज्यात् स्विष्टकृतोऽवदानं स्पष्टम् । तस्मात् ध्रुवायां उपांशुयाजीयाज्यस्यापि सत्त्वात् उपांशुयाजीयाज्यादपि स्विष्टकृदादिशेषकार्यं स्यात् ।

**अशेषत्वात्तु नैवं स्यात्, सर्वादानादशेषता । ५ ॥**

सूत्रचतुष्टयेन प्राप्तं पूर्वपक्षं तुशब्देन निरस्यन् सिद्धान्तमाह । एवं स्विष्टकृदर्थं उपांशुयाजशेषग्रहणं न स्यात् । अशेषत्वात् अविद्यमानः शेषो यस्य तादृशत्वात् उपांशुयाजीयाज्यस्य शेषस्य अभावात् । सा अशेषता शेषशून्यता च सर्वादानात् । चतुर्गृहीतं हि आज्यं उपांशुयाजयागार्थम् । तच्च सर्वमेव ध्रौवाज्यात् होमकाले एव आदीयते । तथा च सर्वस्यैव आदानात् नास्ति तस्य शेषः । ध्रुवायां यद्यपि आज्यशेषो विद्यते, तथापि नासौ उपांशुयाजीयः, अन्यार्थस्तु सः । तस्मात् उपांशुयाजीयात् आज्यात् न स्विष्टकृदादि, इति सिद्धान्तः ।

**साधारण्यान्न ध्रुवायां स्यात् । ६ ॥**

उक्तं शेषाभावं विवृणोति । न तावत् ध्रुवायां शेषः स्यात् । कुतः ? ध्रुवागतस्याज्यस्य साधारण्यात् ‘ सर्वस्मै वा एतद् यज्ञाय गृह्यते, यद् ध्रुवायामाज्यं ’ इति ध्रौवाज्यस्य सर्वसाधारणत्वोक्तेः । तस्मात् ध्रुवायां उपांशुयाजशेषो न स्यात् । अनेन चतुर्थसूत्रोक्तस्य पूर्वपक्षहेतोर्निरास उक्तः ।

**अवत्तत्वाच्च जुह्वां, तस्य च होमसंयोगात् । ७ ॥**

इतश्च ध्रुवायां उपांशुयाजशेषो नास्ति । कथम् ? जुह्वामुपात्तत्वात् । उपांशुयाजहोमकाले ध्रुवायाः सकाशात् जुह्वां आज्यं चतुर्वारमवत्तं, ततो नास्ति उपांशुयाजलेशोऽपि ध्रुवायां इति सिद्धम् । ननु जुह्वामस्ति, तेनैव स्विष्टकृदादि कर्तव्यमिति चेत्, नेत्याह तस्य च होमसंयोगात् इति । तस्य जुह्वामवत्तस्य उपांशुयाजाज्यस्य होमेन उपांशुयाजहोमेन साकं संयोगात् । तद्धि होमेन संयुक्तं हुतं इति जुह्वामपि स्विष्टकृत्काले नास्ति अवशिष्टं, येन स्विष्टकृदिडं स्यात् । एवं ध्रुवायां जुह्वां वा उपांशुयाजशेषाभावात् नास्ति तस्मात् शेषकार्यम् ।

**चमसवदिति चेत् । ८ ॥**

पूर्वपक्षी शङ्कते । ननु यथा सोमयागे चमसेषु वर्तमानस्य सोमरसस्य होमे कृतेऽपि शेषोऽवशिष्यते तद्वत् जुह्वां उपांशुयाजाज्यस्य शेषः अवशिष्टः स्यात्, तेन स्विष्टकृदादि कर्तव्यं इति । तत्र सिद्धान्ती ब्रूते इति चेत् इति । चमसे इव चमसवत् इति विग्रहः । शङ्कानुवादसूत्रमिदम् ।

**न चोदनाविरोधाद्, हविष्प्रकल्पनत्वाच्च । ९ ॥**

चमसवत् इति शङ्कायां सिद्धान्ती ब्रूते । न चमसदृष्टान्तोऽत्र युज्यते । चमसे सोमशेषो युक्त एव । शेषाभावे ‘ सोमस्याग्ने वीहि इत्यनुवषट्करोति ’ इति चोदनया सह विरोधः स्यात् । वषट्कारे सोमस्य होमे कृतेऽपि अनुवषट्कारहोमार्थं चमसे सोमेन अवशिष्टेन भवितव्यमेव, इति युक्तस्तत्र शेषः । अथवा चमसे सोमशेषो युक्त एव, तथा सति अनुवषट्कारहोमचोदनया सह अविरोधो यथा स्यात् । चोदनया अविरोधाय शेषः स्यात् । शेषाभावे तु चोदनया विरोधः स्यात् । स मा भूत् इति शेषः स्यात् । हविष्प्रकल्पनत्वाच्च न चमसदृष्टान्तो युज्यते । ‘ऐन्द्रवायवं गृह्णाति’ इत्येवमादिभिरुक्तानि ग्रहचमसेषु सोमग्रहणानि केवलं हविष्प्रकल्पनानि, न होमसंयुक्तानि । होमार्थं ग्रहचमसेषु गृहीत्वा सोमरूपं हविः सिद्धं क्रियते । होमस्तु परस्तात् भविष्यति । इति युक्ता चमसेषु सोमस्थितिः । प्रकृते तु न का चित् ‘शेषः कर्तव्यः ’ इति चोदना । ‘चतुर्गृहीतं जुहोति’ इति च उपांशुयाजाज्यस्य होमसंयोग एव श्रुतः, न हविषः प्रकल्पनम् । तस्मात् अत्र नास्ति शेषः ।

**उत्पन्नाधिकारात् सति सर्ववचनम् । १० ॥**

प्रथमसूत्रे पूर्वपक्षिणा उक्तस्य हेतोर्निरासार्थं सिद्धान्तसूत्रम् । यदुक्तं ‘ सर्वेभ्यो हविर्भ्यः समवद्यति ’ इति सर्वशब्दसंयोगात् दर्शपूर्णमासयोः स्विष्टकृत् उपांशुयाजीयादाज्यादपि कर्तव्य इति, तत्रोच्यते । सति विद्यमाने हविःशेषे एव सर्ववचनं विज्ञेयम् । उत्पन्नाधिकारात् उत्पन्नस्य प्रकृतस्य अधिकारात् विषयीकरणात् । सर्वशब्दः विद्यमानमेव हविःशेषं अधिकृत्य प्रयुक्तः । उपांशुयाजाज्यं तु न विद्यमानं, होमेन निःशेषं समाप्तत्वात् । तथा च न सर्वशब्दविरोधः । तस्मात् उपांशुयाजाज्यस्य न स्विष्टकृदादि ।

**जातिविशेषात् परम् । ११ ॥**

पूर्वपक्षिणा तृतीयसूत्रे उक्तस्य हेतोर्निरासाय सिद्धान्तसूत्रमिदम् । परं परस्तादुक्तं समवत्तशब्दरूपं हेत्वन्तरं जातिविशेषादुपपद्यते । ज्योतिष्टोमे प्रायणीयायां अदितये चरुर्भवति, पथ्यादिभ्यश्च चतुर्भ्यो देवताभ्य आज्यम् । तत्र चरोरेव स्विष्टकृत् । तस्य चरोः स्विष्टकृदर्थे जुह्वां अवदाने गृह्यमाणे उपस्तरणार्थं द्विरभिघारणार्थं च आज्यमपि गृह्यते एव । एवं सति चरुजातिं आज्यजातिं चेति जातिविशेषद्वयमभिप्रेत्य समवत्तशब्दः प्रयुक्त इति ज्ञातव्यम् । ततश्च उपांशुयाजाज्यस्य न स्विष्टकृत् ।

**अन्त्यमरेकार्थे । १२ ॥**

पूर्वपक्षिणा ' स्विष्टकृतेऽवदाय न ध्रुवां प्रत्यभिघारयति ' इति अर्थवादः स्विष्टकृदर्थे ध्रुवायां अभिघारणं दर्शयति इति यदुक्तं अन्त्यं अन्तिमं कारणं, न तत् स्विष्टकृदर्थं, शेषाभावादित्युक्तम् । अपराहुतेरभावात् प्रत्यभिघारणनिषेधः । स्विष्टकृदुपस्तरणाभिघारणपर्यन्तं ध्रुवाज्यस्य कार्यमस्ति, ततश्च तत्पर्यन्तं ध्रुवायाः अरेकार्थे अरिक्तत्वार्थे अर्थवादः । तस्मात् प्रयाजशेषात् न शेषकार्यमिति सिद्धान्तः । **के.**

* **आज्याधिकरणं** द्वेधा चित्राज्याधिकरणं ( १।४।२।३ ), बर्हिराज्याधिकरणं चेति ( १।४।७।१० ) । **के.**

* **आज्यावेक्षण**– विष्णुक्रमादयः क्रत्वर्थाः इति तल्लोपे क्रतोरनिष्पत्तिः । **वि.** ६।१।२, * **आज्यासादनं** ' प्रोक्षणीश्चासादयति आज्यं च ' दर्शपूर्णमासयोः । ३।८।१०.

**आज्येडा पत्नीसंयाजाङ्गमेव ॥**

औषधेडाया इव आज्येडाया अपि प्रकरणे पाठात् प्राकरणिकसर्वयागानामाज्यसापेक्षत्वेन तत्संस्कारकत्वात् तद्द्वारेयं सर्वेषामङ्गम् । **इति प्राप्ते,** येनाज्येन पत्नीसंयाजा इष्टास्तच्छेषेणैवाज्येडायाः कथनात् तस्यैवाज्यसंस्कारद्वारा पत्नीसंयाजमात्राङ्गम् । एवमौषधेडाऽप्याग्नेयादीनामेव । तेन शंय्विडान्तेषु नाज्येडा । **संकर्ष.** ४।३।१६.

* आज्येडा शंय्विडान्तेषु नास्ति । **संकर्ष.** ४।३।१७ ( १६ ).

* **आतञ्चनं** पूर्वेद्युर्दर्शे, तस्य त्र्यहकालत्वात् । **वि.** १।५।१.

* **आतिथ्या** नाम इष्टिः ज्योतिष्टोमे क्रीतं सोमं शकटे अवस्थाप्य प्राचीनवंशं प्रति आनयने सोमसत्कारार्थं यामिष्टिं निर्वपति सेयमातिथ्या । अतिथये इति आतिथ्या । तादर्थ्ये ' अतिथेर्ञ्यः ' ( पा० ५।४।२६) । **वि.** ४।२।१३. * आतिथ्या पूर्वशंय्विडाऽन्ता । **भा.** १०।७।१३।४०, * ' इडाऽन्ता **आतिथ्या** संतिष्ठते, नानुयाजान् यजति ' । १०।७।१२।३८, ११।४।७।२८. * **आतिथ्यायाः** प्राग्वंशो देशः । **वि.** १२।६।२०. * **आतिथ्यायां** अनुयाजा न सन्ति, पूर्वेडाऽन्तत्वात्तस्याः । 'नानुयाजान् यजति ' इति तु नित्यानुवादः । **के.** * आतिथ्यायां ' आश्ववालः प्रस्तरः ' ' ऐक्षव्यौ विधृती ' । **शा.** १।३।५ पृ. ३५. **सोम**–– दीर्घश्लक्ष्णपत्राणां काशानां अश्वकेशैः सादृश्यात् काशेषु गौणत्वम् ( ऐक्षव्यौ च काशपिञ्जूले एव । न तु इक्षुपत्रे, याज्ञिकास्तु इक्षुपत्रे एव गृह्णन्ति ) । * आतिथ्यायां इडाऽन्तत्वेन अनूयाजाभावेऽपि 'चतुर्गृहीतान्याज्यानि भवन्ति ' इति बहुवचनं जौहवौपभृतचतुर्गृहीतयोः प्रयाजेषु समुच्चयात् ध्रौवचतुर्गृहीतमादाय संगच्छते । **भाट्ट.** ४।१।१५. *आतिथ्यायां उपसत्सु अग्नीषोमीये च बर्हिषः स्तरणमन्त्रः अभ्यावर्तते देशपृथक्त्वात् । **भा.** १२।१।२०।४४. * आतिथ्यायां गार्हपत्यदेशे सादिते बर्हिषि प्रोक्षणाय आहवनीयदेशं नीयमाने दैवात् विश्लिष्टे सति संनहनं तूष्णीमेव कर्तव्यम् । **के.** * आतिथ्यायां दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः । **भा.** ८।१।३।३, * आतिथ्यायां मन्द्रतरमनुब्रूयात् । अयं स्वरः आतिथ्याऽपूर्वप्रयुक्तः, न परमापूर्वयुक्तः । ९।१।२।२–३वर्णकं २, * ' **यदातिथ्यायां** बर्हिः, तदुपसदां, तदग्नीषोमीयस्य ' त्रयाणां एकमेव बर्हिः । १२।१।१९।४२. * **आतिथ्याऽन्ते** उपसत्सु च या सुब्रह्मण्या क्रियते , तस्यां यथादेवतमेव तन्त्रभेदः, नास्ति तन्त्रेण उच्चारणम् । तस्मात् द्वे अपि सुब्रह्मण्ये आह्वातव्ये पञ्चदशरात्रे । **टुप.** १२।२।७।२२. * **आतिथ्येष्टौ** वैष्णवो नवकपालः । तत्र वैष्णवशब्दो

राजसूयगते वैष्णवे त्रिकपाले नवकपालधर्मान् नातिदिशति । नानयोः प्रकृतिविकारभावः । वि. ७।३।६.

**आतिथ्योपसदग्नीषोमीयपशूनां बर्हिः एकमेव ॥**

**विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् । ४।२।१४।२९ ॥**

**भाष्यं**—ज्योतिष्टोमे श्रूयते ' यदातिथ्यायां बर्हिः, तदुपसदां, तदग्नीषोमीयस्य ' इति । तत्र संदेहः किं परद्रव्यस्य उपदेशः, उत निरिष्टकस्य ( निर्गतं निर्मितं वा इष्टं साध्यं यस्य तत् निरिष्टकं, कर्मणि सकृत् उपयुक्तं निरिष्टकम् ) अथवा धर्मविधिप्रदेशः, अथवा बर्हिः साधारणमिति । किं प्राप्तं ? परद्रव्यस्य उपदेशः । कुतः ? परद्रव्यस्योपदेशसदृशः शब्दः 'यदातिथ्यायां, तदुपसदां ' इति । यथा 'यो देवदत्तस्य गौः, स विष्णुमित्रस्य कर्तव्यः' इति, देवदत्तात् आच्छिद्य विष्णुमित्राय दीयते इति । अतः परद्रव्यस्योपदेश इति । न च एतदस्ति । तथा सति आतिथ्यायां तस्य विधानं यत् पूर्वं, तत् अनर्थकं स्यात् । एवं तर्हि निरिष्टकस्य उपदेशः, तेन आतिथ्यायां यत् विहितं आतिथ्यायां यदुपात्तमिति । तथा सति अर्थवत् आतिथ्यायां तद्वचनं, निरिष्टकेन तु उपसदः कर्तव्या भवन्ति इति । न चैष शिष्टानामाचारः ( यातयामस्य ग्रहणमिति ) । न च सर्वे चोदकप्राप्ता धर्मा भवेयुः । अतो ब्रूमः विधेः कर्मापवर्गित्वात् अर्थान्तरे विधिप्रदेशः स्यात् । तत् बर्हिः परिसमाप्तायामातिथ्यायां अपवृक्तमासीत् । पूर्वं तत् आतिथ्यायामासीत् । उपसत्काले आतिथ्यासंबन्धः तस्य नास्ति । भूतपूर्वेण आतिथ्याकर्मणा लक्ष्येत । लक्षणाशब्दश्च न न्याय्यः । तस्मात् आतिथ्याबर्हिषः आञ्जस्याभावात् यद्धर्मकं आतिथ्याबर्हिः, तद्धर्मकं उपसदां अग्नीषोमीयस्य चेति न्याय्यम् ।

**टुप्**—यदि परद्रव्योपदेशः उपसदामग्नीषोमीयस्य च, तथा सति ' यदातिथ्यायां बर्हिः ' इत्युपदेशः अनर्थकः स्यात् । कतरत् बर्हिः आतिथ्यायाः संबन्धि, यदन्यस्य उपदिश्येत ? । गोस्तु देवदत्तसंबन्धे प्रथममवगते, तदुत्तरकालं युक्त उपदेशः । इह तु स्वस्वामिसंबन्धानवगमात् ' यदातिथ्यायां बर्हिः, तदुपसदां ' इति न घटते । ननु ( असत्यपि स्वामिसंबन्धे ) यत् आतिथ्यार्थमुपात्तं, तत् आतिथ्याऽऽदेः घटते एव ( विधिः । नेत्याह— ) तथा सति तस्य आतिथ्यायां विधानमनर्थकम् । निरिष्टकोपदेशोऽपि अन्याय्यः ( निरवशेषं इष्टं यस्य, तत् निरिष्टकं अन्यत्रोपयुक्तं इति यावत्–सोम. ) सत्यां गतौ । अस्ति च गतिः, यद्धर्मकं आतिथ्याबर्हिः, तद्धर्मकं उपसदामपि इति । ननु अपूर्वत्वादुपसदां बर्हिषः अभावः ( तस्मिन्नसति कथं धर्मातिदेशः ? ) । उच्यते पूर्वाघारोऽत्र विद्यते ( ' स्रुवेणाघारयति ' इति ) बर्हिश्च अङ्गप्रधानार्थम् । तस्मात् ( उपसदङ्गतया प्राप्त्यभावेऽपि तदङ्गभूतपूर्वाघाराङ्गतया बर्हिः ) प्राप्नोति ।

**अपिवोत्पत्तिसंयोगादर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् । ३० ॥**

**भाष्यं**—अपिवेति पक्षो व्यावर्तते । उत्पत्तिसंयोगः एवैषोऽस्य बर्हिषः । यदि हि उत्पन्नं आतिथ्यायां बर्हिः विशिष्टं स्यात्, तस्य धर्मा औपसदे बर्हिषि अतिदिश्येरन्, न तु तदस्ति केन चिद्वाक्येन । यदातिथ्यायामित्येवं प्रकृत्य, बर्हिषो विशेषो वक्ष्यते ' आश्ववालः प्रस्तरः, विधृती च ऐक्षव्यौ ' इति । तेन न परविहितं बर्हिरुच्यते, न निरिष्टकं, न कुतश्चिद्धर्मा अतिदिश्यन्ते । किं तर्हि ? साधारणममीषां बर्हिरुच्यते । यदातिथ्यायां विधीयते, तदेवोपसदां अग्नीषोमीयस्य च विधीयते, इति अविशिष्टानां बर्हिषा संयोगः एकेन सर्वेषाम् । यदादौ बर्हिर्लूयते, तल्लवनं सर्वेषामर्थेन, साधारणो बर्हिषः प्रयोगः । एवं श्रुतिः शब्दस्य परिगृहीता भविष्यति । इतरथा धर्मलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तस्मात् त्रयाणां साधारणं बर्हिरिति । पक्षोक्तं प्रयोजनम् ।

**टुप्**— ' यदातिथ्यायां बर्हिः ' इत्यनेन बर्हिषः साधारण्यं प्रतिपाद्यते । एतद्वाक्योत्तरकालं च आश्ववालादयो धर्माः पठ्यमानाः साधारण्यं प्रतिपद्यन्ते । सत्यपि आतिथ्याप्रकरणे, बर्हिषः साधारणत्वात् । यदि वाक्यान्तरेण आतिथ्यासंबन्धिनो धर्मा अवगताः स्युः, ततः अन्यत्र एतदेव वाक्यं स्याद्धर्मातिदेशकम् । ते तु

प्रकरणावगताः । तस्माद्धर्मसाधारण्यम् । एवं च लक्षणा न भवतीति सिद्धम् ।

शा—' डित्थस्य गौर्डिपित्थाय तत आच्छिद्य दीयताम् । ईदृग्वचनसारूप्यादाच्छिद्य विधिरिष्यते ॥ एवं चाच्छिद्यमानस्य बर्हिषः स्यादनर्थकः । आतिथ्यायां विधि, स्तस्मान्निरिष्टकविधिर्वरम् ॥ शिष्टाचारविरोधात्तु नैतदप्युपपद्यते । तस्माद्धर्मातिदेशोऽयमातिथ्यायां हि यादृशम् । अश्ववालादिभिर्बर्हिस्तादृगेवोपसत्स्वपि । बर्हिःशब्देन धर्माणां लक्षणैवं भवेदतः ॥ साधारण्यविधिर्ज्यायांस्तत्र दोषो न कश्चन । आतिथ्याऽर्थमुपादेयं यद् बर्हिस्तत्र केवलम् । तदर्थत्वेन संग्राह्यं तदेवोपसदामपि ॥ बर्हिर्धर्माश्च तद्द्वारा तद्वत् सर्वाङ्गतामियुः ॥ १३ ॥

सोम— यथा प्रसिद्धचतुरवत्तानुवादेन प्रक्षेपविधिः, एवमिहापि यच्छब्दयोगात् प्रसिद्धातिथ्यासंबन्धस्यैव बर्हिषः अग्नीषोमीयादिसंबन्धविधिर्वाच्यः, ततश्च बर्हिःसाधारण्यविधौ सर्वार्थतया बर्हिषः संप्रति विधीयमानत्वे प्रसिद्धातिथ्यासंबन्धस्य अन्यत्र विध्ययोगात् न बर्हिःसाधारण्यविधिः इत्याच्छिद्य विधानात् अन्यतमपक्ष एव स्वीकार्यः इति प्रत्यवस्थानात् संगतिः । उपसदामपूर्वत्वात् उपसदङ्गतया बर्हिःप्राप्त्यभावेऽपि बर्हिस्तद्धर्माणां अङ्गप्रधानसाधारणतया उपसदङ्गत्वेन विहितस्रौवाघारार्थत्वेन उपसत्सु बर्हिःसद्भावात् आच्छिद्यविधाने बर्हिरुपादानमात्रं आतिथ्याप्रयुक्तं, तेन तदेव आतिथ्यायामनुष्ठेयं, इतरे तु संस्काराः उपसदग्नीषोमीयप्रयुक्ताः, इति तत्रैव तदनुष्ठानं कृत्वा हविरासादनादिकं तस्मिन् बर्हिषि कार्यम् । निरिष्टकोपदेशे तु आतिथ्यायां कृतहविरासादनादिकार्यस्यापि बर्हिषः उपसदग्नीषोमीयौ धारणं प्रयुञ्जाते, तस्य चोपसदग्नीषोमीययोरपि उपादानव्यतिरिक्ताः संस्काराः कर्तव्याः, पूर्वकृतसंस्काराणां आतिथ्याकार्यापवर्गेण अपवर्गात् , उपात्तस्योपादानायोगात् उपादानमात्रं न कर्तव्यम् । धर्मातिदेशे तु त्रयाणामपि पृथक् सधर्मकबर्हिःप्रयोजकत्वात् आतिथ्याऽऽदिषु त्रिष्वपि अन्यदन्यत् आश्ववालादिधर्मकं बर्हिः कर्तव्यम् । सिद्धान्ते तु सर्वप्रयुक्तं एकं बर्हिः इति त्रिष्वपि एकमेव बर्हिः, इति लक्षणसंगतिप्रयोजने द्रष्टव्ये । सूत्रार्थस्तु–विधेः विधिगम्यातिथ्यासंबन्धस्य तत्कर्मातिथ्याऽपवर्गे अपवर्गित्वात् उपसदादिसंबन्धकाले आतिथ्यासंबन्धाभावात् भूतपूर्वगत्याश्रयणे लक्षणाप्रसङ्गात्, लक्षणायां धर्मलक्षणैव शिष्टाचारानुग्रहात् ज्यायसी इत्यर्थान्तरे उपसदादौ विधिप्रदेशः आतिथ्याविहितधर्मातिदेशः स्यात् इति । १३.

वि— ' यदातिथ्याबर्हिरेतदुपसत्स्वतिदेशनम् । साधारण्यविधिर्वा, ऽऽद्यस्तदीयस्योपसंहृतेः ॥, बर्हिः– श्रुत्यैकताभानान्नातिदेशस्य लक्षणा । अतिथ्ययोपसद्भिश्च बर्हिरेतत् प्रयुज्यते ॥' तस्मात् आतिथ्योपसदग्नीषोमीयाः त्रयोऽपि बर्हिषः प्रयोजकाः । १३.

भाट्ट— सोमे ' यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य ' इति श्रुतम् । तत्र देवदत्तस्य गौर्यज्ञदत्ताय प्रदीयतामितिवत् यदातिथ्यायां बर्हिः तत्ततः आच्छिद्य उपसदाद्यर्थे विधीयते , तेनातिथ्यया बर्हिष उपादानमात्रं प्रयुज्यते , अन्ये धर्माः आस्तरणादिकार्ये चेतराभ्याम् । इति प्रथमः पक्षः । उपादानमात्रस्य आतिथ्याप्रयुक्तत्वे अप्राकृतकार्यकारित्वापत्तेः अतिदेशप्राप्तधर्मादिलोपे प्रमाणाभावाच्च आच्छिद्य विधानानुपपत्तेः आतिथ्यायामुपयुक्तायाः बर्हिर्व्यक्तेरेव उभयोद्देशेन निरिष्टकोपदेशः । ततश्च बर्हिर्धर्माणां आतिथ्याऽर्थं कृतानां तदपूर्वोत्पत्तौ नाशात् तस्यामेव व्यक्तौ उपसदाद्यर्थं पुनःपुनरुपादानवर्जं करणम् । यद्यपि च कलसोपकारप्राकृताघारपुनःश्रवणबलात् उपसदामपूर्वत्वं वक्ष्यते , तथापि प्रकृतौ बर्हिषः अङ्गप्रधानसाधारणत्वात् नैवाघारार्थमेव तत्करणं , बर्हिर्व्यक्तेरपि च तेनैव संबन्धेनोपसदुद्देशेन विधानं , इतरथा अप्राकृतकार्यकारित्वापत्तेः । बर्हिःप्रतिपत्तेस्तु दाहाख्यायाः प्रकृतौ उत्पत्त्यपूर्वनिष्ठयोग्यतासंपादकतयैव तस्य नाशात् अग्नीषोमीयान्ते करणेऽपि नातिथ्योपसदर्थत्वम् । सिद्धान्तेऽप्येवम् । खण्डेष्टित्वाद्वा तयोस्तल्लोपः । तेन निरिष्टकोपदेशः । इति द्वितीयः । विना वचनं अन्यत्रोपयुक्तस्य अन्यत्रोपदेशे शिष्टाचारविरोधात् अतिदेशप्राप्तलवनादिबाधे प्रमाणाभावाच्च आतिथ्याप्रकरणपठिततदङ्गाश्ववालादिबर्हिर्धर्माणामुभयो –

रतिदेशो वाचनिकः। इति **तृतीयः**। अस्मिन् पक्षे न त्रिष्वपि व्यक्त्यैक्यम्। **सिद्धान्तस्तु**— बर्हिःपदे धर्मलक्षणायां प्रमाणाभावात् त्रिष्वपि व्यक्त्यैक्यविधानम्। ततश्चातिथ्योपक्रमे लूयमानं बर्हिः त्रितयसाधारणमिति तत्र क्रियमाणा धर्मा अपि प्रतिपत्तिवर्जं सर्वसाधारणाः। न चाश्ववालादिधर्माणां प्रकरणेन तन्मात्रार्थत्वापत्तेः प्रसङ्गेनोपकारकत्वेऽपि इतरार्थत्वे प्रमाणाभावः, आश्ववालादिवाक्यानां एतद्वाक्याव्यवधानेन त्रितयापूर्वसाधनीभूतैतद्व्यक्तेरेवोद्देश्यत्वात्। अत्र च लक्षणया एतत्त्रित्वमेवोद्देश्यताऽवच्छेदकं, अतो न वाक्यभेदः। बर्हिःपदेन तद्व्यक्त्यैक्यं लक्षणया विधीयते। न चैवं लक्षणाद्वयावश्यकत्वे धर्मातिदेशपक्षात् को विशेषः? जहत्स्वार्थलक्षणातो विशेषात्, आश्ववालादिधर्माणां उपसदाद्यर्थत्वस्य वाक्यीयत्वेन प्राकरणिकातिथ्याऽर्थत्वबाधापत्तेश्च। अतस्तदुद्देशेनापि विधाने त्रिष्वपि पदेषु त्रित्वरूपोद्देश्यताऽवच्छेदकलक्षणाया आवश्यकत्वाच्च। यथा च व्यासज्यवृत्तिधर्मस्योद्देश्यताऽवच्छेदकत्वेऽपि एकैकविकारे अतिदेशः, तथा कौस्तुभे ग्रहैकत्वाधिकरणे (३।१।७) निरूपितम्।

**मण्डन**— 'समानमिष्टित्रितयेऽपि बर्हिः।' १५.

**शंकर**— 'आतिथ्यादौ बर्हिरेकम्।' १८.

**आतिथ्याबर्हिःप्रोक्षणन्यायः**। आतिथ्याबर्हिषः अग्नीषोमीयार्थं स्तरणकाले स्तरणमन्त्रस्यावृत्तिः कार्या॥

**देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते। १२।१।२०।४५॥**

**भाष्यं**—तत्रैव स्तरणमन्त्रश्चिन्त्यते। किमग्नीषोमीये भेदेन कर्तव्यः, अथवा आतिथ्यायां प्रयुक्तः स एव प्रसज्यते इति। साधारणे बर्हिषि प्रयोगात् पूर्वोक्तेन न्यायेन प्रसङ्गे **प्राप्ते उच्यते**। मन्त्रोऽभ्यावर्तते, भेदेन कर्तव्य इति। कुतः? देशपृथक्त्वात्। पृथगेतौ देशौ, उत्तरवेदिसमीपं प्राग्वंशश्च। देशभेदात् स्तरणमावर्तेत। स्तरणाङ्गं च मन्त्रः 'ऊर्णाम्रदसं त्वा स्तृणामि' इति। स्तरणावृत्तौ मन्त्रस्यावृत्तिर्न्याय्या। प्रधानतन्त्रत्वात् गुणानाम्। अपि च स्तरणं देशसंस्कारकम्। तेन आतिथ्यायां प्राग्वंशदेशः संस्कृतः, नोत्तरवेदिदेशः। तत्र यदि मन्त्रो न प्रयुज्येत, विगुणस्तस्य संस्कारः स्यात्। तस्मादावृत्तिः स्तरणमन्त्रस्य।

**सोम**—अत्र प्राकृतस्तरणावृत्तावपि मन्त्रस्य नावृत्तिः, किंतु आतिथ्याकाले प्रयुक्त एव मन्त्रः प्रसङ्गादुपकरिष्यति, इत्येवं पूर्वः पक्षः इति न भ्रमः कर्तव्यः, करणमन्त्रस्य स्तरणावृत्तौ आवृत्तेरवर्जनीयत्वात्। तस्मात् स्तरणस्य बर्हिःसंस्कारत्वात् समन्त्रकं स्तरणमेव प्रसज्जते, अपरेणोत्तरवेदिं अग्नीषोमीयार्थेन क्रियमाणं तु स्तरणं सौकर्यार्थं लौकिकमन्यदेव इति न तद्बलात् मन्त्रावृत्तिप्रसक्तिः इत्येवं पूर्वः पक्षः। एवं च मन्त्रमुखेन स्तरणस्यैव प्रसङ्गावृत्ती विचार्येते इति ध्येयम्।

**वि**—'तत्रास्तरणमन्त्रस्य प्रसङ्गो यदि वा भिदा।, आद्यः प्रोक्षणवत्, मैवं देशस्तरणभेदतः॥'

**भाट्ट**— तदेव बर्हिः आतिथ्योपसदर्थे प्राग्वंशे 'ऊर्णाम्रदसं त्वा' इति मन्त्रेण वेद्यामास्तृतं पुनरग्नीषोमीयार्थं अपरेणोत्तरवेदिं स्तीर्यते देशभेदेन तत्तत्संस्कारकस्य तत्रासाद्यमानहविराधारभूतबर्हिःसंस्कारकस्य वा आस्तरणस्यावृत्तेः प्रयोजनानुरोधेन आवश्यकत्वात्। अतः प्राकृतस्य स्तरणस्यावृत्तौ तदङ्गभूतो मन्त्रोऽप्यावर्तते, इति न तत्र प्रसङ्गस्तन्त्रं वा। आतिथ्याकालपठितमन्त्रजन्यस्मृतेः अग्नीषोमीयकालीनस्तरणवेलायां अविद्यमानत्वात्। सिद्धमेव चेदं शिष्यहितार्थमुक्तम्।

**मण्डन**—'तेषां तु मन्त्रान् स्तरणे पुनः पठेत्।'

**शंकर**—'देशभेदे भिदा मनोः।' २१.

* **आतिथ्याबर्हिःप्रोक्षणन्यायेन** यूपव्यक्तेरेकत्वात् तत्र कृतानां प्रोक्षणादीनां प्रसङ्गेन उपकारकत्वोपपत्तेः तेषामपि नावृत्तिः। **भाट्ट.** ११।३।४, * आतिथ्याबर्हिःप्रोक्षणन्यायेन होतृव्यक्तेरेकतया दीक्षणीयायामेव कृतस्य होतृवरणस्य अन्ते प्रसङ्गेन उपकारसिद्धेः नावभृथे प्रसक्त्युपपत्तिः इति न च वाच्यम्। ११।३।९, * **न चैवं** एकत्वपक्षे (देशऋत्विक्पात्राणां प्रयोगभेदेऽपि) व्यक्तेरेकत्वेन **आतिथ्याबर्हिःप्रोक्षणन्यायेन** सकृत्कृतैरेव वरणसंमार्जनादिसंस्कारैः सर्वकर्मसु कार्यसिद्धेः प्रतिप्रयोगं वरणाद्यननुष्ठानापत्तिः इति **वाच्यम्**। व्यक्त्यैकत्वस्य नैयत्याभावेन आतिथ्याबर्हिःप्रोक्षणन्यायाभावात्। ११।३।१२.

* आतिथ्याबर्हिःप्रोक्षणादिना उपसदग्नीषोमीयबर्हिःप्रोक्षणादेः प्रसङ्गसिद्धिः ॥

**यज्ञोत्पत्त्युपदेशे निष्ठितकर्म, प्रयोगभेदात् प्रतितन्त्रं क्रियेत । १२।१।१५।४३ ॥**

**भाष्यं**— सोमे श्रूयते 'यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति । तत्र यत् निष्ठितस्य बर्हिषो लूनस्य क्रियते, यथा प्रोक्षणं अग्राणामुपपायनं, मूलानामवसेचनं, तत् किं आतिथ्यादिप्रयोगभेदेन कर्तव्यं, अथवा यदातिथ्यायां कृतं तदेवेतरत्र प्रसज्यते । किं प्राप्तम् ? यज्ञोत्पत्त्युपदेशे आतिथ्योत्पत्त्युदेशे एकस्मिन्, 'यदातिथ्यायां बर्हिस्तदुपसदां' इति, यत् निष्ठितकर्म क्रियेत, न तत् प्रयोगभेदाद्भिन्नम् । भिन्नप्रयोगाण्येतानि आतिथ्याऽऽदीनि कर्माणि । तेषु गृह्यते विशेषः । यत् यस्य प्रयोगे प्रोक्षणादि कृतं, तत्तदर्थमिति । तस्मादन्यार्थमावर्तयितव्यमिति । एवं प्रतिकर्माभ्यासः । न चात्र प्रसङ्गो युज्यते । नहि आतिथ्यायाः तन्त्रमध्यपतिता उपसत् अग्नीषोमीयो वा ।

**न वा कृतत्वात्, तदुपदेशो हि । ४४ ॥**

**भाष्यं**— न वा प्रोक्षणादि कर्तव्यम् । कुतः ? कृतत्वात् । कृतं तत् आतिथ्यायां बर्हिषः । तेन संस्कृतं तत् बर्हिः, पुनः क्रियायां हेतुर्नास्ति । **ननु** कर्मार्थाः संस्काराः । तच्च कर्म भिन्नम् । अतो यस्मिन्नेव कर्मणि क्रियन्ते, तदर्था भवन्ति । **उच्यते** । कर्मार्था अप्येते सन्तो नास्कन्दपालिकावत् कर्मणि संबध्यन्ते । किं तर्हि ? बर्हिर्द्वारेण । यदीयं बर्हिः, तेन संबध्यते । साधारणं चेदं आतिथ्यादीनां बर्हिः । कथं ज्ञायते ? तदुपदेशो हि । 'यदातिथ्यायां बर्हिः' इत्यनेन वाक्येन तेषां बर्हिषः साधारण्यमुच्यते । न धर्मातिदेशः । नहि निरिष्टकोपदेश इत्युक्तं, 'अपिवोत्पत्तिसंयोगात् तदर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात्' ( ४।२।१४।३० ) इति । एवं चेत् आतिथ्यायामपि क्रियमाणाः संस्काराः सर्वार्था एव भवन्ति । तस्मान्न प्रतिकर्म कर्तव्या इति ।

**सोम**— पूर्ववत् इहापि आवृत्तिरित्युत्थितेः संगतिः । **सूत्रार्थस्तु**— यज्ञोत्पत्त्युपदेशे 'यदातिथ्यायां' इत्युत्पत्तिदशायामेव सर्वसाधारण्येन उपदिश्यमाने यत् बर्हिषि अनुष्ठितं प्रोक्षणादि, तत् प्रयोगभेदात् प्रतितन्त्रं क्रियेत इति ( पूर्वः पक्षः ) ।

**वि** 'आतिथ्यादिगतं बर्हिष्युक्षणादि पृथङ् न वा ।, आद्योऽतन्त्रप्रसङ्गत्वात्, न प्रसङ्गानिवारणात् ॥'

**भाट्ट**— आतिथ्योपसदग्नीषोमीयार्थं साधारणमेकं औपदेशिकाश्ववालादिगुणकं बर्हिरित्युक्तं चतुर्थे ( ४।२।१४ ) तत्र छेदनप्रोक्षणादयः तत्तदतिदेशेन भेदेन प्राप्ता अपि बर्हिष एकत्वात् भेदेन न कार्याः । **न चाग्नेः** पात्राणां वा एकत्वेऽपि प्रतिप्रयोगं संमार्गभेदवत् तत्तदपूर्वेणैव प्रोक्षणादिजन्यापूर्वनाशात् भेदेन करणोपपत्तिरिति **वाच्यं**, व्रीहिप्रोक्षणादिवत् यत्कार्यकूटोद्देशेन यद्व्यक्तेरुत्पत्तिः, तत्कार्यकूटाङ्गभूतफलोपहिततद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वाङ्गीकारात् अग्नीषोमीयापूर्वेणैव तन्नाशोपपत्तेः । अग्निपात्रादेस्तु यत्कार्यकूटोद्देशेनोत्पत्तिः तत्कार्यकूटाङ्गता न संमार्गस्य, तस्य ज्योतिष्टोमाद्यनङ्गत्वात् । अतस्तत्र तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति तत्फलीभूतान्तिमकार्यत्वेन नाशकतेति विशिष्यैव कार्यकारणभावकल्पनात् तत्तत्प्रयोगवृत्त्यन्तिमफलेनैव नाश इति प्रतिप्रयोगं भेदः । आवश्यकश्चायं प्रकारो यूपसंस्काराणां यागत्रितयसाधारण्यनिर्वाहार्थमित्युक्तम् । तदिह तद्वदेव बर्हिष एकत्वान्न प्रोक्षणादीनां भेदः । तत्रापि न तन्त्रत्वं, आतिथ्याप्रयोगमध्यवर्तित्वेन गृह्यमाणविशेषत्वात् । अतश्चातिथ्याऽर्थमेव कृतानामेषां प्रसङ्गादुपसदग्नीषोमीयोपकारकत्वं, न चेतरयोः तन्त्रमध्यपाताभावात् । कथं प्रसङ्गः ? तन्त्रमध्यपाताभावेऽपि तज्जन्योपकारसत्त्वेन प्रसङ्गोपपत्तेः । अत्र च छेदनं तन्त्रेणैवोपकरोति बर्हिःसाधारण्यविधेः तन्त्रतां विना अनुपपत्तेः, प्रोक्षणादीनां तु प्रसङ्गः इति **केचित्** । वस्तुतस्तु छेदनस्यापि गृह्यमाणविशेषत्वाविशेषात् आतिथ्याऽर्थे कृतस्यैव प्रसङ्गेनोपकारकत्वोपपत्तेः, तादृशच्छेदनोपात्तस्यापि च बर्हिषो वचनात् साधारण्ये बाधकाभावात् तत्रापि प्रसङ्ग एव । **यदि तु**

गृह्यमाणविशेषत्वेऽपि बर्हिषि त्रितयोद्देशात् तत्र क्रियमाणसंस्काराणामपि त्रितयोद्देशोपपत्तिरिति विभाव्यते, तदाऽस्तु सर्वत्र तन्त्रमेव । भेदाभावमात्रेण च प्रासङ्गिकी अध्यायसंगतिः । यूपसंस्काराणामपि चाग्नीषोमीयकालक्रियमाणानां अनयैव विधया तन्त्रत्वम् । बर्हिःप्रतिपत्तेः परं अग्नीषोमीयार्थत्वमेव, इतरयोः खण्डेष्टित्वेन तत्र प्रतिपत्त्यनतिदेशात् । युक्तं चैतत्, संस्कारव्यक्तेः उपधेयकार्यजिज्ञासायां संस्कार्यबर्हिर्व्यक्त्युपधेयकार्यकूटस्यैव झटित्युपस्थितत्वेन फलत्वोपपत्तौ एकप्रयोगवृत्तित्वेन विलम्बोपस्थितातिथ्यामात्रोपकारकत्वकल्पने प्रमाणाभावात् । अत एव यत्र नाग्निसंमार्गादौ कूटस्य फलत्वोपपत्तिः; तत्रोपस्थापकान्तरापेक्षायामेकप्रयोगवृत्तित्वस्यैव कार्योपस्थापकत्वात् तदुपस्थापितस्यैव फलत्वमिति ।

**मण्डन**— ' न प्रोक्षणादीन्युपसत्सु बर्हिषाम् । '

**शंकर**— ' बर्हिरैक्ये तदङ्गं न । ' २०.

* **आतिदेशिकं** अर्थवशेन बाध्येतापि । **वा.** ३।३। ९।१९.

* **आतिदेशिकेन** आतिदेशिकस्य अङ्गप्रसङ्गो यथा, पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः । **बाल.** पृ. १३३, * आतिदेशिकेन औपदेशिकस्य प्रसङ्गो यथा, ' एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य ' इति काम्ये अनुवचनान्तरे नित्यानुवचनप्रकृतिके अतिदिष्टाभिः सामिधेनीभिः प्राकृतसामिधेनीकार्यस्य अग्निसमिन्धनस्य प्रसङ्गात् सिद्धेः तासां बाधः । पृ. १३३, * आतिदेशिकेन औपदेशिकस्य अङ्गप्रसङ्गो यथा, श्येने अतिदिष्टैः कर्तृभिः प्रयोगविधिचितश्चोदकबलीयस्त्वेन प्रापितैः श्येनस्य औद्गात्रसमाख्यया प्राप्तस्य उद्गातुः कार्यसिद्धेः प्रसङ्गः । पृ. १५०. * आतिदेशिकद्व्यहकालत्वं औपदेशिककालत्वबलात् बाध्यं, तेन चातुर्मास्यसाकमेधीयेष्टिषु सद्यस्कालत्वमेव । **सोम.** ५।१।११. * आतिदेशिकपाठक्रमः औपदेशिकमुख्यक्रमात् बलवान् । **भा.** ५।१।१०।१७–१८. * आतिदेशिकपाठविरोधे एव मुख्यक्रमादेर्दौर्बल्यम् । **भाट्ट.** ५।१।१०.

* **आत्मा** एव अपूर्वाश्रयः । सत्यपि चास्य ( आत्मनः ) चलनादिक्रियारहितत्वे कर्तृसंबन्धमात्रेण तद्देशान्तरप्रापणादिक्रियासंबन्धाभ्युपगमात् निष्क्रियताऽनुपालम्भः । ' **आत्मैव चाश्रयस्तस्य** ( अपूर्वस्य ) **क्रियाऽप्यत्रैव च स्थिता । आत्मवादे स्थितं ह्येतत् कर्तृत्वं सर्वकर्मसु ॥** ' ह्यवदानप्रक्षेपादीनां हि सर्वेषां संकल्पादिद्वारेण आत्मैव कर्ता इत्यवधारितम् । **वा.** २।१।२।५ पृ. ३९७. * ' **आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् । कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ॥** ' **श्लोवा.** १०३ ॥ ' **विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः । साऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥** १०४ ॥ ' **रत्नाकरः**– विवेकज्ञानस्य पारलौकिकफलेषु ज्योतिष्टोमादिषु वृत्तिः अध्ययनस्येव प्रयोजनं दृष्टमेव, इति नादृष्टफलापेक्षेति । निर्ज्ञाते च ज्ञानस्य कर्मप्रवृत्तिहेतुतया कर्मफलस्वर्गाद्यर्थत्वे वाक्यशेषस्था फलश्रुतिः पर्णमयीन्यायेन अर्थवादमात्रं स्यात्, न फलान्तरमलं बोधयितुं इत्याह–**विज्ञाते** इति । उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावात् अदृष्टापेक्षायां श्रुत्याद्यभावेन क्रत्वर्थत्वाभावात् वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलतया रात्रिसत्रवत् पुरुषार्थत्वमेव इति व्याकरणाधिकरणे वक्ष्यतीति । * आत्मा नाणुः, ' **यद्यणुः कल्प्यते तत्र देहे न व्याप्नुयादसौ । ततश्च सर्वगात्रस्थसुखपुष्ट्याद्यसंभवः ॥** ' यदा हि अणुमात्र आत्मा भवति, तदा यावानेव प्रदेशविशेषस्तेनाधिष्ठितः, तन्मात्रगतानामेव सुखदुःखादीनामुपलब्धिः प्राप्नोति, ततश्च एकस्मिन् क्षणे शिरःपादवेदनाऽनुभवो न स्यात् । **वा.** २।१।२।५ पृ. ४०२. * आत्मा । प्रकृतौ हि ' शुक्रं यजमानोऽन्वारभते ' इत्यादौ यजमानपदवाच्यो यागकर्ता जीवात्मैव कर्तृत्वेनोच्यते । शरीरस्य तु अवच्छेदकतामात्रं, न कर्तृत्वम् । आत्मनश्च कर्तृत्वं अन्वारम्भानुकूलकृत्याश्रयत्वेनैव । न च मृतस्य तादृशकर्तृत्वसंभवः । जीवच्छरीरावच्छेदेनैव आत्मनि कृत्युत्पत्तिनियमात् । **भाट्ट.** १०।२।१९. * आत्मा प्रतिशरीरं भिन्नः । **वा.** २।१।२।५ पृ. ४०३. * आत्मा फलसंबद्धः सर्वस्येष्टः, तदर्थं कर्म कर्तव्यम् ।

भा. ६।२।३।३. *आत्मा। 'बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य, नः। नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः॥' ( बुद्धिश्चैतन्यं चितिशक्तिः पुंसः स्वाभाविकत्वात् नित्यमेकं चेति ) श्लोवा. शब्दाधिकरणे ४०४। 'तथैव ( छायाग्राहिस्फटिकवत् ) नित्यचैतन्याः पुमांसो देहवृत्तयः। गृह्णन्ति करणानीतान् रूपादीन्... ॥ ४०७॥

* 'आत्मा वा अरे द्रष्टव्यः' इत्यादिभिः उपासनाऽपरनामधेयं ध्यानमेव विधीयते। सु. पृ. २५. * आत्मा शरीरपरिमितः इति अर्हतपक्षः अयुक्तः। वा. २।१।२।५ पृ. ४०२, * आत्मा सर्वव्यापी। न तावदात्मनि चलनं समवैति। सर्वव्यापिनः संयुज्यमानवियुज्यमानदेशासंभवे चलितुमसामर्थ्यात्। २।१।२।५ पृ. ४००. * सुखेच्छादीनां मनोगुणत्वस्य श्रुतिसिद्धतया निर्गुणज्ञानस्वरूप एवात्मा। तस्य च निष्प्रकारकमेव उपनिषज्जन्यं प्रत्यक्षं मोक्षसाधनं इति वेदान्तिनः। मणि. ५४. * 'महाभौतिकदेहस्था यथाऽऽत्मानः सचेतनाः। कंचिदर्थं विवक्षन्ति न विवक्षन्ति चापरम्॥ तेषामन्तर्गताऽपीच्छा तद्वाक्यार्थविचारिभिः। ज्ञायते शब्दशक्त्यैव स्फुरन्तीव बहिःस्थिता॥' वा. १।१।७।१३ पृ. ७०२. * आत्मने संकल्प्यमानस्य द्रव्यस्य स्वत्वनिवृत्त्यसंभवात्। पराक्रम. ३।१.

* आत्मनः शरीरादिभेदसमर्थनम् ॥ संप्रति शरीरेन्द्रियमनःप्राणबुद्धिभ्यो भिन्नत्वं, नानात्वं, ग्राहकतया सिद्धत्वं च, आत्मनः प्रतिपाद्यते।

तत्र तावत् बार्हस्पत्याः शरीरमेवात्मानं आचक्षते। तथाहि, प्रत्यक्षत एव देहात्मत्वमवगम्यते। ज्ञाता तु आत्मा भवति इति निर्विवादं सर्ववादिनाम्। तत्र शरीरस्यैव ज्ञातृत्वं प्रतीयते 'अहं जानामि' इति। अहंकारगोचरश्चाभेदः, 'स्थूलोऽहं कृशोऽहं गच्छाम्यहं तिष्ठाम्यहं' इति स्थौल्यादियुक्तेन देहेन अहंकारस्य सामानाधिकरण्यस्य प्रतीतेः। अथायं प्रयोगो लाक्षणिकः, अतो न शरीरालम्बनत्वमिति चेन्न। मुख्यपूर्वको हि सर्वत्र लाक्षणिकः प्रयोगः। न चात्र देहातिरेकेण अन्यो मुख्यार्थ उपलभ्यते। ननु करचरणाद्यनेकावयवरूपाद्यन्वितं शरीरं तदालम्बनत्वे अहमिति ज्ञानावभासस्य तदीयानेकावयवरूपादिप्रतिभासान्वयोऽपि स्यात् शरीरप्रतिभासवत्, न च तथा दृश्यते। अतः शरीरादिनिमित्तार्थे अहंप्रत्ययः। सत्यं अवयवरूपादिप्रतिभासानन्वयः, बाह्येन्द्रियप्रत्यक्षघटादौ तन्नियमदर्शनात्। अयं च मानसः प्रत्ययः। मनोरूपेन्द्रियस्य तु आन्तरगुणग्रहणे एव सामर्थ्यनियमात्तथा नावभासः। किंच बाह्येन्द्रियप्रत्यक्षेऽप्येवं नियमो नास्ति, अनेकावयवयोगिनः त्र्यणुकस्य ग्रहणे अवयवग्रहणाभावात्। तथा त्वगिन्द्रियेण वायुप्रतीतौ स्पर्शाधिष्ठानमात्रतयैव प्रतीतिः, न त्ववयवप्रतिभासान्वयः। भवतामपि देहव्यतिरिक्तालम्बनत्वेऽपि अहंप्रत्ययस्य तदीयगुणसुखादिगुणप्रतिभासान्वयः समान एव। किंच शरीरे एव चैतन्योपलम्भात्, अन्यत्र अनुपलम्भाच्च शरीरगुणः एव चैतन्यम्। ननु शरीरगुणत्वे चैतन्यस्यासाधारणत्वात् विशेषगुणत्वं प्राप्तं भवतीति चेत्, तर्हि कारणगुणपूर्वकत्वमपि स्यात्। तदपि भवत्विति चेन्न, प्रत्येकं शरीरारम्भकेषु अवयवेषु चैतन्यप्रसङ्गादेकस्मिन् शरीरे अनेकसहस्रचैतन्यप्रसङ्गः। न चैतत् दृष्टमिष्टं वा। अतो न शरीरगुणत्वं चैतन्यस्य। नैवं, शरीरगुणः एव चैतन्यं, तत्रैवोपलम्भात्। यद्यपि कारणगुणपूर्वकविशेषणगुणत्वं न संभवति, तथापि शरीरगुणत्वं न निराकर्तुं शक्यते। न च अयावच्छरीरभावित्वात् इत्यादिभिरनुमानैः शरीरगुणत्वप्रतिषेधः, प्रत्यक्षबाधितविषयत्वात्तेषाम्। विशेषगुणत्वप्रतिषेधे च देहगुणत्वाभ्युपगमप्रसङ्गश्च। यद्यप्यारम्भकावयवेषु चैतन्यं नास्ति, तथापि क्रमुकफलताम्बूलीदलावयवादिषु अविद्यमानोऽपि कार्ये परिदृश्यमानो रागः इव आरम्भकावयवसंयोगविशेषाच्छरीरे तदुपलम्भो नानुपपन्नः। किंच विशेषगुणस्यापि क्वचिदकारणपूर्वकत्वं दृष्टं, यथा शुक्लकृष्णादिनानातन्तुभिरारब्धे पटे चित्रत्वमारम्भकेषु प्रत्येकमविद्यमानमपि दृश्यते। यदि अवयविनि चित्रत्वं रूपं नाङ्गीक्रियते, तदा नीरूपत्वादवयविनः अप्रत्यक्षत्वप्रसङ्गः। विशेषगुणस्यापि करकाकाठिन्यस्य अकारणगुणपूर्वकत्वदर्शनादनैकान्तिकत्वं च। अपि च इच्छानुविधायिक्रियत्वं इन्द्रियाश्रयत्वं च देहे दृश्यमानं अचेतनात् घटादेर्व्यावर्तमानं देहस्यैव चेतन-

त्वमवगमयति । **अथेतरभूतसंघातेषु** अचैतन्यात् शरीरेऽपि नोपपद्यते इति मतं, **भवतामपि** पृथिव्यादिद्रव्येषु चैतन्यानुपलम्भात् द्रव्यत्वादेव व्यतिरिक्तात्मन्यपि न संभवेदिति समानोऽयमनुयोगः । 'मम शरीरं' इत्यादिव्यतिरेकदर्शनमपि 'ममात्मा' इति व्यतिरेकवदौपचारिकत्वेन समाधेयम् । **अथोच्येत**, दृश्यस्य देहस्य द्रष्टृत्वं न घटते, एकस्य कर्मकर्तृभावविरोधादिति । **नैवं**, व्यतिरिक्तात्मवादे वा कथमहंप्रत्ययदृश्यस्य द्रष्टृत्वम् ? रूपभेदादिति चेत्, तदस्माकमपि समानम् । **किंच** परसमवायिक्रियाफलयोगित्वं हि कर्मत्वम् । तच्च शरीरे व्यतिरिक्तात्मनि च न संभवति, स्वसमवायिज्ञानफलयोगित्वात् । अत उभयवादिसंमतस्य देहस्यैव चेतनत्वोपपत्तौ न तत्त्वान्तरकल्पनायां प्रमाणमस्ति । तथा च सूत्रं 'पृथिव्यापस्तेजोवायुरिति तत्त्वानि, तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्' इति । **अत्र प्रतिविधीयते** । न तावद्देहस्यात्मत्वं संभवति, प्रत्यक्षेणैव व्यतिरेकस्य प्रतीयमानत्वात् । तथाहि, इदमाकारगोचरं शरीरं पराक्तया प्रतीयते, अहमिति च प्रत्यक्तया आत्मा । अत इदंकारगोचराद्देहात् घटादिवत् व्यतिरिक्तगोचरोऽहंप्रत्ययः । इतरथा परस्पराविभागापत्तिः । ननु एकस्यैव रूपभेदोपपत्तिः, न । चैत्रः कुण्डलिनि आत्मनि रूपभेदेन प्रतिपद्यमानः 'अयं कुण्डली' इति प्रतिपद्यते, न कुण्डलमहमिति । अतो मिश्रितेदंप्रत्ययात् अहंप्रत्ययात् भेदसिद्धिः । **किंच** उपरतबाह्येन्द्रियस्यापि अहंप्रत्ययो जायते । तत्र शरीरावयव्यालम्बनत्वे अवयवप्रतिभासोऽवश्यंभावी स्यात् । न चावयवग्रहणमन्तरेण अवयविग्रहणं संभवति । बाह्येन्द्रियप्रत्यक्षे एव तन्नियम इति चेत्, तर्हि अवयवी अपि बाह्येन्द्रियप्रत्यक्षः एव, न मानसप्रत्यक्षोऽवयवी दृष्टः । अथ बाह्येन्द्रियप्रत्यक्षेऽपि त्र्यणुके व्यभिचार इति चेत्, यत्रावयवग्रहणाधीनः अवयविग्रहः तत्रेयं व्याप्तिः । अतः शरीरावयविग्रहणे अवयवग्रहो दुर्निवारः एव । वायोः स्पर्शाधिष्ठानतया ग्रहणे रूपप्रतीतिमात्रमेव नास्ति, अवयवग्रहणं तु विद्यते एव स्पृश्यमानघटवत् । **यत्तु** शरीरे एव अहंप्रत्ययो दृश्यते स्थूलोऽहं कृशोऽहमिति स्थौल्यादिसामानाधिकरण्यादिति, **तन्न नैवं**, नियमितबहिरिन्द्रियवृत्तेः अहमिति प्रतिभासे स्थौल्यादिप्रतीतिरेव न दृश्यते । अतः चाक्षुषदेहप्रत्ययवदहंप्रत्ययस्य न स्थौल्यादिसंबन्धनियमः । एवं सति यत्र स्थूलोऽहमिति प्रतीतिः, तत्र अहंशब्दः शरीरे लक्षणया वर्तते इत्यङ्गीकर्तव्यं, मुख्यस्याहमर्थस्य शरीरव्यतिरेकेण प्रतिपन्नत्वात् । मम शरीरमिति व्यतिरेकप्रतीतेः साक्षाद्भेदप्रतीतेः शिलापुत्रकस्य शरीरमिव नौपचारिकत्वमाश्रयितुमुचितम् । ममात्मेत्यत्र तु व्यतिरेकस्योभयवादिसिद्धत्वादविवादाच्च युक्तं औपचारिकत्वम् । अतः शरीरव्यतिरिक्तत्वमात्मनः प्रत्यक्षम् ।

अनुमानाच्च व्यतिरेकः । तथाहि, विवादास्पदं अहंप्रत्ययो न शरीरालम्बनः, तदवयवप्रतिभासरहितत्वात्, यथा घटोऽयमिति प्रतिभासः । तथा, शरीरं अहंप्रत्ययगोचरो न भवति, इदमिति गृह्यमाणत्वात् बाह्येन्द्रियग्राह्यत्वाद्वा घटादिवदिति । तथा शरीरं परार्थं, संघातत्वात् शयनासनादिवत् । तथा शरीरं प्रयत्नवता अधिष्ठितं, हिताहितप्राप्तिपरिहारयोग्यचेष्टायोगित्वात् यथा रथादि । तथा शरीरं धर्मि प्रयत्नवता अधिष्ठितमिति साध्यो धर्मः, इच्छाऽऽयत्तविकृतकर्मवायुयुक्तत्वात्, यदेवं तदेवं यथा भस्त्रा । तथा शरीरं प्रयत्नवता अधिष्ठितं, निमेषोन्मेषयुक्तावयवयोगित्वात् दारुयन्त्रवत् । तथा शरीरस्य वृद्धिक्षतभग्नसंरोहणं व्यतिरिक्तचेतननिमित्तं, वृद्धिक्षतभग्नसंरोहणत्वात् गृहपतिनिमित्तगृहवृद्धिक्षतभग्नसंरोहणवत् । तथा देहो नात्मा भवितुमर्हति, उत्पत्तिमत्त्वात्, परार्थत्वात्, संनिवेशविशिष्टत्वात्, रूपादिमत्त्वात्, भूतत्वात्, घटादिवत् । तथा देहो नात्मा, सच्छिद्रत्वात्, अदेहित्वात्, देहत्वात् मृतदेहवत् । तथा देहः स्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वात् घटादिवत् इत्यादिसाधनशतैर्बाधितविषयत्वात् । इन्द्रियाश्रयत्वात् इत्यादिव्यतिरेकहेतवो न साध्यं साधयितुमीशते ।

**अथ** अनुमानं न प्रमाणं, एकस्यैव प्रत्यक्षस्य (चार्वाकैः) प्रामाण्याभ्युपगमात् । **तन्न** । किमत्र प्रमाणमनुमानं अप्रमाणमिति, प्रत्यक्षमनुमानं वा ? **न**

तावत् प्रत्यक्षं अनुमानाप्रामाण्यं गोचरयत् किमप्युदीयते। अनुमानं चेत्, अङ्गीकृतमनुमानस्य प्रामाण्यम्। नाप्रत्यक्षं प्रमाणं प्रत्यक्षान्यत्वात्, तदाभासवदित्येतदेव भवद्भिरुच्यते। वादानधिकारश्च अनुमानानभ्युपगमे। **किंच** भवद्भिरनुमानप्रामाण्यमङ्गीकृत्यान्तर्भाव एव कथ्यते, इतरथा लोकविरोधात्। **किंच** ज्ञानसुखादेः विशेषगुणत्वात्, तेषां च कार्यद्रव्ये कारणगुणपूर्वकत्वात्, न शरीरविशेषगुणत्वम्। **यत्तु** मदशक्तिवत् चैतन्यस्यापि शरीरविशेषगुणत्वमुक्तं, **तत्** अनुपपन्नं, शक्तेरविशेषगुणत्वात् न तत्साम्यं ज्ञानसुखादीनाम्। शरीरगुणत्वे तस्य असाधारणत्वात् विशेषगुणत्वं ज्ञानादेः। किंच ज्ञानादिकं विशेषगुणः, कार्यत्वे सति एकेन्द्रियप्रत्यक्षत्वात् रूपादिवत्। अतो विशेषगुणत्वात् अकारणगुणपूर्वकत्वाच्च न शरीरगुणत्वम्। ताम्बूलरागस्तु चर्वणजनितपूर्वद्रव्यावयवविभागानन्तरसंयोगेन कारणभूतपरमाणुप्रभृति जन्यते इत्यदोषः, अवयवेषु अवयविरागस्योपलभ्यमानत्वात्। न चात्र शरीरावयवेषु चैतन्यमुपलभ्यते इति वैषम्यम्। यत्तु चित्रत्वमकारणपूर्वकं दृष्टमिति, तन्न नानारूपतैव चित्रता। नानारूपं तु तन्तुभिरारभ्यते, इति न किंचिदप्यनुपपन्नं पश्यामः। अस्तु वा चित्रत्वं नाम रूपविशेषः, स तु कारणगतैर्नानाविधरूपैरेवारभ्यते इति युक्तम्। न चैवमत्र, शरीरावयवेषु चैतन्यं नोपलभ्यते इत्यसकृदुक्तत्वात्। न च करकाकाठिन्यस्य विशेषगुणत्वं, संयोगविशेषत्वात् काठिन्यस्य, द्विष्ठत्वमपि अन्योन्यसंश्लिष्टापेक्षया अस्त्येव। अपि च स्थिरे एव शरीरे गुणान्तरोत्पादाभावेऽपि स्रग्विलेपनगन्धवत् विनिवर्त्यन्ते ज्ञानोदयादयः, न च शरीरगुणत्वेन संप्रतिपन्ना रूपादयस्तथा निवर्त्यन्ते। तदुक्तम् 'तस्मिन् दृढेऽप्यसद्भावात् स्रग्विलेपनगन्धवत्' इति। किंच ये शरीरगुणाः रूपादयः, ते स्वस्य च प्रत्यक्षाः, बाह्येन्द्रियग्राह्याश्च, ज्ञानसुखादयस्तु न तथेति न शरीरगुणाः। अतः शरीरव्यतिरिक्त आत्मा सिद्धः।

**ननु** अस्तु शरीरव्यतिरेकः, शरीरस्य इदंतया भानात् अहंप्रत्ययवेद्यत्वानुपपत्तेः, **इन्द्रियाण्येवात्मा** भवतु, न च तेषामिदंतया प्रतीतिरस्ति। नापि तेषामहंप्रत्ययवेद्यत्वे अवयवरूपादिप्रतीतिप्रसङ्गः, तेषां सूक्ष्मत्वादवयवप्रतिभासानुपपत्तेः। किंच इन्द्रियव्यापारफलं हि ज्ञानम्। अतस्तान्येव ज्ञातॄणीति युक्तं, तद्व्यापारफलस्य तद्गामित्वस्य स्वतः प्राप्तत्वात्, यथा स्नानाध्ययनादिफलं तत्कर्तृगामि, अत इन्द्रियाण्येव आत्मेति **पौराणिकाः**। अत एव वचनं **सत्यतपसः** 'द्रष्टुश्चक्षुषो नास्ति जिह्वा' इति। **एतदपि** न साधु। तथाहि, इन्द्रियान्तरदृष्टस्य इन्द्रियान्तरेण प्रतिसंधानं दृश्यते 'यमहमद्राक्षं तमहं स्पृशामि' इति, तत् इन्द्रियात्मवादे नोपपद्यते। नहि देवदत्तानुभूते यज्ञदत्तस्य प्रत्यभिज्ञानं संभवति। **अथ** संहत्येन्द्रियाणामात्मत्वमिति मतं, **तदप्यनुपपन्नं**, नहीन्द्रियाणि संहत्य अर्थज्ञातॄणि। ज्ञाता ह्यात्मा भवतीत्यविवादम्। किंच एकस्मिन्निन्द्रियेऽपि गते आत्मनः प्रायणमपि प्रसज्येत। न चैतदिष्टं दृष्टं च। अपि च एकेन्द्रियवैकल्येऽपि तदनुभूतार्थविषयिणी स्मृतिर्दृश्यते, साऽपि इन्द्रियात्मवादे न घटते। यत् पुनरिदमुक्तं, यत् यद्व्यापारफलं तत् तत्कर्तृगामि युक्तमिति, तदप्यनैकान्तिकं, यतः परशूत्पतननिपतनव्यापारजन्यं द्वैधीभावाख्यं फलं न च परशुगामि दृष्टम्। यत्तु सात्यतपसं वचनं, तत् शरणागतपरित्राणस्य अवश्यं कर्तव्यतां, अन्यथा च व्याधस्य प्राणयात्राऽऽपत्तिं चालोच्योक्तमिति न दोषः।

तर्हि **मन एवात्मा** भवतु? तथा सति इन्द्रियान्तरदृष्टस्येन्द्रियान्तरेण प्रतिसंधानं न घटते, एकत्वात् सर्वेन्द्रियाध्यक्षत्वाच्च। मनसो नित्यत्वादेव इन्द्रियाभावेऽपि तद्विषयस्मरणमप्युपपद्यते। एतदपि न चतुरश्रं, मनसः करणत्वात्। यत् करणं तन्न चेतनं, यथा चक्षुरादि। बाह्याभ्यन्तरज्ञानकरणत्वेन च वादिभिर्मनसः अवक्लृप्तिः। अतः करणरूपस्यैव ज्ञानकर्तृत्वं कथमिव संभवति? स्वातन्त्र्यलक्षणं हि कर्तृत्वं, करणत्वं तु पराधीनाधिष्ठानाधीनपारतन्त्र्यवत्त्वम्। अतः कथमिदमन्योन्यविरुद्धरूपद्वयमेकस्मिन् संभवेत्? अथ तस्य कारणान्तरं कर्तृ, तर्हि नामान्तरेण आत्मैवाङ्गीकृतः। अतो न मनसश्चेतनत्वम्। एवं तर्हि **प्राण आत्माऽस्तु**, तथा च सति जीवच्छरीरे सात्मकत्वप्रतीतिः लोकान्तरगमनं देहादुत्क्रमणं देहान्तरसंचरणं च सुतरामुपपद्यते, गत्वरस्वाभाव्यात् प्राणस्य।

अन्यथा आत्मनः परममहत्त्वे चाभ्युगम्यमाने स्पर्शशून्यत्वादेव परिस्पन्दानुगमनादयो न मुख्याः स्युः । एतदप्यसारम् । वाय्वात्मकत्वात् प्राणस्य ज्ञानसुखाद्यनुपपत्तेः । अपि च सुषुप्तौ आत्मा वृत्तिहीनः इति निर्विवादम् । प्राणस्य तु तदानीमपि श्वासप्रश्वासलक्षणा वृत्तिरुपपद्यते । अतः स्पर्शेन्द्रियग्राह्यघटादिवत् स्फुटमनात्मत्वं प्राणस्य । अतः प्राणव्यतिरिक्त एवात्मा ।

अस्तु तर्हि **बुद्धिरेवात्मा,** अजडत्वात् । जडत्वव्याप्तं शरीरादिषु दृष्टमनात्मत्वं, जडत्वं च संविदि निवर्तमानं अनात्मत्वमपि निवर्तयति । अजडत्वं च बुद्धेः प्रभाकरैः अभ्युपगतमेव । किंच यैस्तु संविद्व्यतिरिक्त एवात्मा अभ्युपेतः, तैः संवेदनमपि अङ्गीक्रियते एव, तदधीनत्वात् तत्सिद्धेः । अत उभयवादिसिद्धसंविदैव सकलव्यवहारोपपत्तौ किं तत्त्वान्तराभ्युपगमेन ? **ननु** 'अहं जानामि' इति ज्ञाता व्यतिरिक्त आत्मा प्रत्यक्षतः प्रकाशते । **नैवं,** तस्य विकल्परूपत्वात् । तदुक्तम् ' अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ।।' इति । **एतदप्यनुपपन्नम्** । क्षणभङ्गिन्याः संविदः आत्मत्वे प्रतिविषयमन्यथाभावेन अपरेद्युर्ज्ञातस्य परेद्युः प्रत्यभिज्ञानानुपपत्तिः । भवति हि अन्येद्युर्दृष्टे परेद्युरिदमहमदर्शं इति प्रत्ययः । न चास्य निरालम्बनत्वमुचितं, प्रमाणविरोधात् । निरालम्बनत्वसाधनानां निरालम्बनत्वे निरालम्बनत्वमेव न सिध्येत्, सालम्बनत्वेन अनैकान्तिकत्वम् । **अथ** विज्ञानलक्षणसन्तानस्थायितया प्रत्यभिज्ञोपपत्तिः, **नैवं,** तस्य स्थायित्वे क्षणिकत्वप्रतिज्ञाविरोधात् अपसिद्धान्तप्रसङ्गाच्च । **अथ** विज्ञानक्षणानां भेदेऽपि सौसादृश्यात् प्रत्यभिज्ञोपपत्तिः । लूनपुनर्जातनखकेशादिजातिविवेकवदिति **चेन्न,** तत्र तद्व्यतिरिक्तः पूर्वापरव्यक्तिदर्शी सादृश्यानुसंधाता चैकः समस्ति, अत्र तु विज्ञानव्यक्तीनां क्षणिकत्वेन परस्परानुसंधानं च न संभवतीति न सादृश्यनिबन्धनं प्रत्यभिज्ञानम् । किंच सादृश्यमपि क्षणिकं स्थायि वा ? क्षणिकत्वे ज्ञानतुल्यत्वान्न तन्निबन्धनं प्रत्यभिज्ञानम् । स्थायित्वे च क्षणिकत्वहानिरपसिद्धान्तश्च । अतः प्रत्यभिज्ञानसमर्थः संविदाश्रयः स्थायी चेतनोऽभ्युपगन्तव्यः ।

स च विभुः, सर्वत्र कार्योपलम्भात् । तथाहि, नानादेशेषु सर्वत्र बुद्धिसुखादीनामुपलम्भात्तत्र सर्वत्रात्मनः संनिधिरभ्युपगन्तव्यः, गुणिनमन्तरेण गुणस्यावस्थानासंभवात् । तत्र गत्वा संनिधौ कल्प्यमाने गतिकल्पनं तत्कारणकल्पनं चेति गौरवं प्रसज्यते, अगच्छतोऽपि संनिधानदर्शनात् । आकाशादौ इदमेव विभुत्वं, यदगच्छतोऽपि युगपन्नानादेशेषु संनिधानम् । किंच आत्मा सर्वमूर्तिमद्भिः संयुज्यते, अणुपरिमाणरहितत्वे सति नित्यद्रव्यत्वात्, यदित्थं तदित्थं यथा आकाशादि । **अथ** अणुपरिमाणो भवतु आत्मा, को दोषः ? **अयमेव** दोषः, अणुपरिमाणत्वे युगपदेव शिरःपादवेदना नोपपद्यते । किंच आत्मा अणुपरिमाणाधारो न भवति, इन्द्रियग्राह्यगुणाधिकरणत्वात्, घटादिवदिति । **ननु** भवतु तर्हि शरीरपरिमाणः । तथाहि, आत्मा यत्रोपलभ्यते तत्परिमाणः तत्रैव सर्वत्रोपलभ्यमानगुणत्वात्, यदित्थं तत्तथा, यथाऽन्तर्वर्तितयोपलभ्यमानप्रभाऽनुगुणः प्रदीपो गृहपरिमाणः इति **दिगम्बराः** । **तत् नोपपन्नं,** आत्मनः सर्वमूर्तिमद्भिः सह संयोगस्य साधितत्वात्, तत्रैवोपलभ्यमानगुणत्वं विरुद्धं, दृष्टान्तश्च साध्यविकलः । नहि गृहोदरवर्तिनी प्रदीपप्रभा गृहसमानपरिमाणा, तदन्तर्वर्तित्वेन न्यूनपरिमाणत्वात् । नहि समानपरिमाणं गृहान्तरं गृहान्तर्वर्ति दृष्टम् । तथा साधनविकलश्च, नहि गृहान्तर्वर्तिनी प्रभा गृहे सर्वत्रोपलभ्यते । किंच शरीरपरिमाणत्वे सावयवत्वप्रसङ्गः । यत् निरवयवद्रव्यं, तत् अणु वा विभु वा दृष्टम् । अत उभयपरिमाणरहितस्य सावयवत्वमेव । किंच मशकहस्तिदेहयोरात्मनो विषमपरिमाणत्वप्रसङ्गश्च । तदपि सावयवस्यैव युज्यते, न निरवयवस्य । तथा च श्रुतिः ' अनन्तमपारं ' ' सर्वव्यापी सर्वभूतान्तरात्मा' इति च । भगवद्गीता च ' नित्यः सर्वगतः स्थाणुः ' इति । एवं च अणुत्वाङ्गुष्ठपरिमितत्ववादाश्च सूक्ष्मत्वाभिप्राया वेदितव्याः । अतो विभुरेवात्मा । तथा नित्यश्च आत्मा । उपनिषदश्च कार्यपरा अपि नित्यत्वमसकृदनुवदन्ति । तस्मादनित्यत्वानुमानान्यपि आगमविरुद्धत्वान्न साध्यसाधनानि । अतः **सिद्धं** नित्यत्वम् । तथा प्रतिशरीरं नानाभूतश्च । तथाहि आत्मभेदप्रतीतिः सर्ववादिसंमता ।

एकात्मवादिनोऽपि भेदप्रतीतिमङ्गीकृत्य काल्पनिकत्वमाहुः। अतोऽयं भेदः पारमार्थिकः काल्पनिको वेति वादिनां विप्रतिपत्तिः। तत्र पारमार्थिकत्वमेव भेदस्य युक्तं, प्रमाणसिद्धत्वात्। तथाहि, प्रत्यक्षानुमानार्थापत्त्यागमैः आत्मभेदोऽवसीयते। **प्रत्यक्षेण** तावत् अहमिति भोक्तृतया स्वात्मा परात्मनो भिन्नः प्रतीयते। परात्मा चानुमानेनायमिति गृह्यते, नाहमिति। अतो विलक्षणाकारबुद्धिबोध्यतया घटपटयोरिव स्वात्मपरात्मनोः भेदः स्फुटतरः। **अथ** य एवाहमिति प्रतीयते, स एव परशरीरस्थोऽयमिति प्रतीयते इति, **मैवं**, यदि परशरीरेऽपि स एवात्मा, **तर्हि** करणभेदेऽपि प्रत्यभिज्ञायेत। तथा, **यथा** कर्तुरेकत्वे करणभेदेऽपि चक्षुषा दृष्टस्यार्थस्य त्वगिन्द्रियेण प्रत्यभिज्ञाय 'अहमद्राक्षं, अहं स्पृशामि' इति, **तथा** परशरीरस्थ आत्मा परानुभूतमपि प्रत्यभिजानीयात्, एकत्वादात्मनोऽनुभवितुः। **न च** मनोभेदात् अप्रत्यभिज्ञेति **वाच्यम्**। मनसोऽपि करणत्वात्। **तथा अनुमानेनापि** आत्मभेदोऽवगम्यते। विवादाध्यासितोऽयमात्मा द्रव्यत्वातिरिक्तपरजात्याधारभेदेन नाना, अश्रावणविशेषगुणाधिकरणत्वात्, यदित्थं तत्तथा यथा घटादि। तथा आत्मा नाना भवितुमर्हति, ज्ञानासमवायिकारणाश्रयत्वात्, मनोवत्। तथा आत्मा नाना, विशेषगुणाधारत्वात् घटादिवत्। **ननु** एकत्वमपि अनुमानेन साधयितुं शक्यते। विवादाध्यासितानि शरीराणि एकेन आत्मना आत्मवन्ति, शरीरत्वात् प्रतिवादिशरीरवत्। **तन्न**, सर्वात्मानः सर्वगता इत्यसन्मतम्। ततः एकस्यापि आत्मनः सर्वशरीरेषु विद्यमानत्वात् सिद्धसाधनम्। अथ एकेनैवात्मना आत्मवत्त्वं साध्येत, तर्हि प्रतिवादिशरीरे सर्वेषामात्मनां सद्भावात् साध्यविकलता दृष्टान्तस्य। **अथ** एकस्यात्मनो भोगसाधनानीति साध्यते, **तर्हि** एकमेव शरीरं यथा स्वस्य भोगसाधनम्, तथा स्वस्य च भार्यादीनां शरीराण्यपि भोगसाधनान्येवेति पुनरपि साध्यविकलता। **अथ** न भोगसाधनत्वमात्रं साध्यं किंतु भोगायतनत्वं, अतश्च न साध्यविकलतेति। **तन्न**, किमिदं भोगायतनत्वं नाम? यदि भोगसाधनत्वं, तर्हि पूर्वोक्तमेव दूषणम्। अथ भोगः सुखं, तदायतनत्वं नाम सुखसमवायित्वमभिप्रेतं, तदा शरीरेषु सुखसमवायाभावात् बाधितविषयत्वमपसिद्धान्तश्च सप्रतिसाधनश्च हेतुः। तथाहि, विवादाध्यासितानि एककालवर्तिशरीराणि स्वसंख्यया आत्मवन्ति, शरीरत्वात्, प्रतिवादिशरीरवत्। न च जन्मान्तरशरीरेषु अनैकान्त्यम्, एककालवर्तिनां पक्षीकृतत्वात्। **न च** सौभर्यादिशरीरेषु व्यभिचारः, तेषां युगपदेव बहुशरीरपरिग्रहे प्रमाणाभावात्, पुराणवादानां चान्यत्वात्। यदि तेषामनेकशरीराणि सन्तीत्यभिनिवेशः, तदा अस्मदाद्येककालवर्तीनि शरीराणीति पक्षविशेष एव कर्तव्यः। **तथा अर्थापत्त्याऽपि** भेदोऽवसीयते। तथाहि, सुखदुःखव्यवस्था तावत् प्रतीयते, एकः सुखमनुभवति यदा, तदैवापरो दुःखी दृष्टः, इयं सुखदुःखादिव्यवस्था आत्मभेदं विना अनुपपद्यमाना भेदं कल्पयति। **ननु** इयं व्यवस्था एकात्मकत्वेऽप्युपपद्यते, यथा एकशरीरे 'पादे मे वेदना, शिरसि मे सुखं' इति व्यवस्था, तथा शरीरान्तरेऽपि व्यवस्थोपपत्तेरन्यथोपपत्तेरिति। **मैवं**, यत्रैकात्मत्वं संप्रतिपन्नं, तत्र संबन्ध्यनुसन्धानमप्यस्ति। यत्र संबन्ध्यनुसंधानं नास्ति, तत्र एकात्मकत्वमपि नास्त्येव। शरीरभेदप्रयुक्तं अननुसंधानं नात्मभेदप्रयुक्तमिति चेन्न, आत्मन एकत्वेऽपि शरीरभेदे जातिस्मरस्यानुसंधानदर्शनात्। तथा बालस्य स्तन्याभिलाषादेर्जन्मान्तरानुभूतहर्षहेतुत्वस्मरणनिबन्धनत्वाच्च। एतच्च सर्ववादिभिरभ्युपगतमेव। अन्यथा अकस्मादेव स्तन्याभिलाषानुपपत्तेः। जन्मान्तरशरीरानुभूते सर्वेषां सर्वविषयमनुसंधानं किमिति नास्तीति चेन्न। वर्तमानशरीरानुभूतेऽपि अनुभूतस्य सर्वस्यानुसंधाननियमाभावात्। अतोऽत्यन्ताननुसंधानं आत्मभेदे सत्येवोपपद्यते न शरीरमात्रभेदे। एतेन मनोभेदादननुसन्धानमित्यपि प्रत्युक्तम्। अतोऽर्थापत्त्याऽपि आत्मनानात्वसिद्धिः। **तथा आगमादपि**। 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति'। 'पृथगात्मानं प्रेरितारं च मत्वा' 'सर्व एतेऽप्यात्मानोऽभ्युचरन्ति' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' 'एको बहूनां

विदधाति कामान्' 'निरञ्जनः परमं साम्यमुपैति' 'मम साधर्म्यमागताः' 'उत्तमः पुरुषस्त्वन्यः' इत्यादिः श्रुतिः स्मृतिरपि । तथा 'ब्राह्मणो बृहस्पतिसवेन यजेत' 'राजा राजसूयेन' 'वैश्यो वैश्यस्तोमेन' इत्यादिकर्मविषयः अधिकारिभेदार्थं आत्मभेदमाक्षिपन्ति । ननु भवतां कृत्स्नस्यागमस्य कार्यपरत्वेन प्रामाण्यात् न सिद्धार्थभूतात्मभेदप्रामाण्यमुपपद्यते । नैवं, एकात्मवादिनां भवतां सिद्धेऽपि प्रामाण्यात् आत्मभेदे प्रमाणमेवागमः । अस्माकं तु कार्यपरत्वेऽपि भेदानुवादकत्वादेवागमसिद्धो भेदः । एवं नानात्वग्राहकप्रमाणविरोधादेकत्वश्रुतयोऽपि अन्यथा व्यावर्णनीयाः । न च प्रत्यक्षादिविरोधे आगमस्यैव बलीयस्त्वं, तथा सति उपनिषद्वाक्यानां क चिद्गौण्या व्यावर्णनं स्वशास्त्रे क्रियमाणमसङ्गतं स्यात् । अतो नाम्नायस्य बलीयस्त्वम् । अतः प्रत्यक्षाद्यविरोधेन द्वैतवादा निर्वर्णनीयाः । तत्र 'एकमेवाद्वितीयं' इत्याद्येकत्वश्रुतयः एकस्मिन् शरीरे एक एव स्वामीत्येवंपराः । 'नेह नानास्ति किं चन' इत्यादि नानात्वनिषेधश्रुतयः अनेकशरीरग्रहणेऽप्येक एवात्मा, न नाना इति । एवं 'एष नेति नेति' इत्यादयस्तु देहेन्द्रियादिभ्यो भेदपराः । तस्मादागमादपि आत्मनानात्वं सिध्यति । एवं च सति नानाऽऽत्मवादे एव बद्धमुक्तव्यवस्थोपपत्तिः । एकत्वे तु काल्पनिकी बद्धमुक्तव्यवस्थेति चेत्, तर्हि बन्धमोक्षयोर्मिथ्यात्वात् साधु समर्थितः अद्वैतवादिभिर्मोक्षः ।

तथा विषयग्रहणे ग्राहकत्वेनैव आत्मनः सिद्धिः, न ग्राह्यत्वेन, एकस्य कर्मकर्तृत्वविरोधात् । यदि विषयग्रहणे कर्तृतया आत्मा न प्रकाशते, तदा स्वपरवेद्ययोरनतिशयः स्यात् । अथोच्यते, ग्राहकतया अनवभासेऽपि आत्मपरवेद्ययोरतिशयः सिध्यत्येव । तथाहि, स्वसमवेतज्ञानजननमेव स्ववेद्यस्यातिशयः, परसमवेतज्ञानजननमेव परवेद्यस्य । यथा यस्यैव गमनं तत्क्षणं स्पन्दनं, तस्यैव देशान्तरप्राप्तिः, नास्पन्दनवतः । अथ स्वपरसंबन्धिज्ञानजननव्यवस्थैव कथमवगम्यते इति चेत्, स्वकीयपरकीयेन्द्रियार्थसंनिकर्षादिज्ञानहेतुसामग्रीभेदेन सुखमवगन्तुं शक्यते । ननु ग्राहकस्यापि तत्सामग्र्यन्तर्भूतत्वेनावगमप्रसङ्गः । नैवं, इन्द्रियादिवत् अनवगतस्यापि सत्तयाऽपि कारणत्वसंभवात् । विषयबोध एवात्मबोध इति च भ्रान्तभाषितम् । नहि अन्यस्य बोधेन अन्यस्य सिद्धिः, अतिप्रसङ्गात् । किंच संविदधीना च सकलभावव्यवस्थासिद्धिः, सा विषयप्रकाशकाले न प्रकाशते, किमुत पुनस्तदाश्रयस्यात्मनः प्रकाशे । यत्तु घटमहं जानामीति विषयप्रकाशकाले सर्वत्र नियमेन त्रितयं प्रकाशते इत्युच्यते, तदपि सर्वलोकविरुद्धं, घटोऽयं पटोऽयमिति विषयमात्रस्यैव प्रकाशनं सार्वत्रिकम् । यत्तु क चित् ज्ञानव्यवहारः, स प्राकट्याद्यनुमितज्ञाननिबन्धनः प्रकाशः । ज्ञातृव्यवहारस्तु मानसप्रत्यक्षहेतुक इति न विषयबोधादात्मसिद्धिः । अपि च यदि घटमहं जानामीतिव्यवहारात् आत्मसिद्धेर्विषयज्ञाननिबन्धनत्वं, तर्हि 'चाक्षुषं रूपं' 'श्रावणः शब्दः' इत्यादीन्द्रियविशिष्टव्यवहारात् चक्षुरादिसिद्धिरपि रूपादिज्ञानात् स्यात् । अथ तत्रानुमानसिद्धचक्षुरादिनिबन्धनश्चाक्षुषादिव्यवहारः, तर्हि अत्रापि ज्ञानान्तरनिबन्धनः इति तुल्यचर्चः । न चैकस्य कर्मकर्तृभावविरोधः, रूपभेदादपि तदुपपत्तेः । चेतनत्वादिरूपेण ग्राह्यत्वं ज्ञातृरूपेण ग्राहकत्वमिति । अत्रोच्यते । सर्वविषयबोधे आत्मनः अहमिति प्रतीतिरास्थेया । अन्यथा मयेदं विदितमिति प्रतिभासाभावप्रसङ्गात् । भवति च विषयवित्तौ मयेदं विदितमिति सर्वेषां सर्वत्र प्रतिभासः । तदनवभासे स्वपरवेद्ययोः अतिशयो न स्यात् । अस्ति च वैलक्षण्यं स्वरूपतः कार्यतश्च । स्ववेद्यं तु स्वप्रतियोगितया प्रकाशते, परवेद्यं तु परप्रतियोगितया । यथा स्ववेद्यः स्वव्यवहारः कार्यं, परवेद्यः परव्यवहारः । योऽयं स्ववेद्यस्य परवेद्यादतिशयः, सः असति स्वभावे नोपपद्यते इत्यर्थापत्तिः ग्राहकसिद्धौ प्रमाणम् । ननु अतिशयः अन्यथाऽपि उपपद्यते । स्वसमवेतज्ञानोत्पत्तिरेव स्ववेद्यस्य परवेद्यादतिशयः । यथा यस्यैव गमनं, तस्यैव देशान्तरप्राप्तिरिति । तन्न, यदि स्वसमवेतज्ञानात् वेद्यमात्रमेव ज्ञानं, तदा ज्ञाताद्विषयात् अज्ञातस्य सोऽतिशयो भवतु, न परज्ञानात् स्वज्ञानस्य । यदा पुनः स्वसमवेतज्ञाने आत्मनोऽपि प्रतीतिरस्ति, तदा स्ववेद्यस्य परवेद्यात् रूपवैलक्षण्यं कार्यवैलक्षण्यं चोपपद्यते, अभावस्य व्यवहारानुपपत्तेः ।

न च वास्तवज्ञानसमवायमात्रादसाधारण्यं, व्यभिचारात्। नहि स्वकीयेन दीपेन स्वस्यैव प्रकाशो, न परस्येति नियमः। यत्तु विषयमात्रमेव प्रथते, व्यवहारोऽपि तस्यैव, आत्मव्यवहारस्तु न विषयग्रहणनियत इति। **तन्न**, यत्र घटमहं जानामीति आत्मव्यवहारः संप्रतिपन्नः, तत्रापि नात्मविषयज्ञानात् अहंव्यवहारस्योपपत्तिः, आत्मविषयज्ञानस्य शशविषाणायमानत्वात्। न चासिद्धेन अन्यथोपपत्तिर्वक्तुं शक्यते। अतस्तत्रापि विषयबोधादेव अहंव्यवहार इति वक्तव्यम्। एवं च सति यत्र विषयमात्रव्यवहारः घटोऽयमिति, तत्रापि विषयज्ञानादेव कर्तृतया 'आत्मा मे ज्ञातः' इति, यदि परं व्यवजिहीर्षाऽभावादात्मनि संविदि व्यवहारो न जातः। न च ज्ञातस्य सर्वस्य व्यवहारनियमः, निर्विकल्पादौ व्यभिचारात्। अतो विषयबोधादेव आत्मा च साभासोऽङ्गीकर्तव्यः। किंच यदि अर्थमात्रस्यैव ज्ञानं, न ज्ञानज्ञात्रोः, तदैवं प्रतीतिः स्यात् 'घटस्तावदयं, ज्ञायते न वेति न विद्मः, मम वा प्रतिभासते परस्य वा इत्यपि न विद्मः' इति। न च तथा दृश्यते। यत्तु चाक्षुषं रूपमित्यादिप्रतीतिव्यवहाराभ्यां चक्षुषोऽपि विषयज्ञानेन प्रतीतिप्रसङ्ग इति, **तदयुक्तं**, तथाविधप्रतीतिनियमाभावात् चक्षुराद्यनुमानज्ञानपूर्वकत्वमेव निश्चीयते। अत्र तु ज्ञानान्तरमेव न संभवति, व्यवहारोऽपि नियतः इत्युक्तम्। न च मानसप्रत्यक्षेण आत्मविषयज्ञानं भवति, एकस्यैव कर्तृकर्मभावविरोधात्। न च रूपभेदात् कर्तृकर्मभावोपपत्तिः, निरंशत्वात् ग्राहकैकरूपत्वाच्चात्मनः। द्रव्यादिरूपत्वं तु नात्मन एव। **ननु** क्रियाजन्यफलभागित्वं हि कर्मत्वं, यथा गमनजन्यफलभागिनो ग्रामस्य, **अत्रापि** संवेदनक्रियाजन्यफलं भासनं व्यवहारो वा, तदुभयमपि आत्मनि अभ्युपगतमेव, अतो न कर्तृत्वम्। न चैकस्य कर्मकर्तृभावः क्वचिदपि दृष्टः। तस्मादात्मविषयमात्मकर्तृकमेव किमपि ज्ञानं शशविषाणतुल्यमेव। किंच घटमहं जानामीति वर्तमानप्रतीतिव्यवहारौ दृश्येते, तत्र भवतां ज्ञानस्य क्षणिकत्वेन स्वानुमानकाले अतीतत्वात् अज्ञासिषमिति भूतप्रतीतिव्यवहारावेव स्यातां न वर्तमानप्रतीतिव्यवहारौ। किंच अनुमानादपि आत्मनो ग्राहकतया सिद्धिः। 'घटमहं वेद्मि' इत्यात्मनो ग्राहकतया भानं सर्वेषां संमतमेव। तदिदं ग्राहकतया भानं विषयवित्त्यधीनं, भानत्वात्, वित्तिवेद्यभानवत्। वित्तेश्च विषयवित्त्यधीनत्वं साधितमेव। **अपि च** आत्मसाधिका संवित् स्वाश्रयव्यतिरिक्तकर्मिका, सकर्मकक्रियात्वात्, पाकादिवत्। घटमहं जानामीत्यात्मनो व्यवहारः घटज्ञाननिबन्धनः, तदनन्तरमुपजायमानत्वात्, घटव्यवहारत्वात्, आत्मविषयज्ञानानन्तरमुपजायमानत्वात्। तदनन्तरमुपजायमनत्वमसिद्धमिति चेन्न, आत्मविषयज्ञानस्यैव शशविषाणतुल्यत्वात् असिद्धिः अन्यथासिद्धिर्वा वक्तुं न शक्यते। **किंच** विवादाध्यासितात्मस्वरूपसिद्धिः विषयानुभवनिबन्धना, आत्मस्वरूपसिद्धित्वात् जाग्रतः आत्मस्वरूपवत्, यथा सुषुप्तिकाले आत्मस्वरूपसिद्धिर्नास्ति, प्रबोधदशायां विषयानुभवदर्शनात् आत्मस्वरूपसिद्धिर्निश्चीयते तद्वदित्यर्थः। अतः सिद्धम् '**बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः। नानाभूतः प्रतिक्षेत्रमर्थवित्तिषु भासते**॥' इति। **प्रवि.** पृ. ८४–९७.

* कर्तृत्वोपन्यासस्तु विरुध्यते निष्क्रियत्वात् **आत्मनः**। सर्वगतत्वाच्च निष्क्रियत्वम्। **बृहती.** पृ. १७३. * साक्षात्कारेण प्रतिभासमानत्वात् आत्मनः अनुमानादिष्वपि प्रत्यक्षतैव। **ऋजु.** पृ. १८५.

* **आत्मनां** विभूनां सतां कथं पुनर्नानात्वेऽपि सर्वेषां सर्वशरीरैः संबन्धात् अन्यदीयसुखदुःखाद्यनुपलब्धिः? **केचित्** तावदाहुः, '**यथा शरीरमात्रेऽपि मातृगर्भात्मवर्तिनाम्। सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति**॥' शरीरपरिमाणात्मवादिनोऽपि किलायं तुल्यो दोषः, तस्यापि गर्भात्मसमानदेशत्वात् मातृक्षेत्रज्ञः तद्गतानि सुखादीनि उपलभेत। तत्र यस्तस्य परिहारः, स सर्वात्मनां सर्वशरीरेषु भविष्यतीत्यविशेषः, यदि अत्र उपपत्तिरुच्येत। न तु परपक्षसाम्यापत्तिरेव उपपत्तिः। तस्य च तव च उभयोरपि अन्येन पर्यनुयोगात्। अपिच तस्य त्वगिन्द्रियपरिमाणत्वात् अन्तःशरीराकाशे बाह्यवदेव आत्मनः अनभ्युपगमात् नैव गर्भ-

शरीरेण मातृक्षेत्रज्ञस्य प्राप्तिरस्ति, येन तुल्यदोषता स्यात् । तस्मादेवं परिहर्तव्यं, '**देशप्राप्त्या यदीष्येत सुखादेरुपभोग्यता । ततो दोषः प्रसज्येत योग्यभोगे त्वदुष्टता ॥**' यदि हि आत्मनः सुखादीनां च समानदेशलक्षण एव संबन्धः उपभोगकारणमिष्येत, ततोऽयं दोषः स्यात् । इह तु चक्षुरादीनामिव क्षेत्रज्ञयोग्यतालक्षणः संबन्धः । तत्र यथैव त्वगिन्द्रियेण स्पर्शसमानदेशानामपि रूपादीनामग्रहणं, एवमन्येनात्मना अन्यदीयधर्माधर्मोपात्तसुखदुःखाद्यग्रहणम् । तस्मात् आत्मवादोक्तस्वस्वामिभावव्यवस्थानात् अदोषः । एवं सर्वगतत्वात् सिद्धमात्मनो निश्चलत्वम् । **वा.** २।१।२।५ पृ. ४०४, * आकाशदिक्का**लात्मनां** परमाणुदृष्टान्तबलेन नित्यत्वात् १।३।८।२७ पृ. २८५, * **आत्मज्ञानं** विना ( कर्मसु ) प्रवृत्तिरेव नास्ति । अतः सर्वकर्मार्थमङ्गीकर्तव्यम् । ३।८।८।१८. * ब्रह्मविरुद्धं चैतत्, यदुत अहंप्रत्ययप्रमेयता आत्मनः इति । मूर्धाभिषिक्तमिदं अनात्मनि आत्मज्ञानं इत्युदाहृतं, यदुत अहंकृतिर्ममकारश्चेति । निर्मुक्ताहंकारममकारं आत्मज्ञानं आत्मविदो मन्यन्ते । **बृहती.** पृ. १६९. * **आत्मज्ञानस्य** उपनिषज्जन्यस्य अविद्यानिवृत्तिद्वारा मोक्षसाधनस्य प्रमाणान्तरप्राप्तत्वात् नालौकिकत्वं इति न तत्र धर्मत्वम् । **मणि.** पृ. ९. * **आत्मतत्त्वस्य** कर्मभिः कृतकामनिबर्हणेन दान्तेन कामैः अनागर्धितमनसा सुप्रत्ययत्वात् । **विवि.** पृ. ४६८. * '**आत्मतुष्टिः स्मृताऽन्या तै-** ( मन्वादिभिः ) **र्धर्मे सा चानवस्थिता ।**' यथाऽभ्यासं हि आशयवैचित्र्येण शुभाशुभोभयहीनक्रियाऽनुष्ठायिनां आत्मतुष्टिरपि विचित्रैव भवति । इत्यादि 'सदाचारप्रामाण्यनिरूपणं' इति बिन्दौ पूर्वपक्षे द्रष्टव्यम् । **वा.** १।३।३।७ पृ. २०३, * '**एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् । आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥**' इत्यादि 'सदाचारप्रामाण्यनिरूपणं' इति बिन्दौ द्रष्टव्यम् । १।३।३।७ पृ. २०७, * '**शीलाचारात्मतुष्टीनां** गोष्ठीहास्यादितुल्यता ।' १।३।३।७ पृ. २१५.

* **आत्मनिष्ठगुणप्रत्यक्षे** तादात्म्येन ज्ञानस्यैव प्रतिबन्धकत्वकल्पनमुचितम् । **मणि.** पृ. १५.

**आत्मनेपदं** प्रयोगवचनस्थं साङ्गायां भावनायां फलार्थिनं कर्तृत्वेन प्रयुङ्क्ते । **वा.** ३।७।८।१८. * आत्मनेपदं विनियोक्त्री श्रुतिर्यथा 'अग्नीनादधीत' इति । तथा आधानसाध्याग्निसाध्यकर्मफलानां आधात्रर्थता भवति इत्युक्तं षष्ठे 'प्रयोगे पुरुषश्रुतेः' इत्यधिकरणे ( ६।२।२ ) तन्त्ररत्ने 'अन्यार्थेनाभिसंबन्धः' इति सूत्रे ( ९ ) । **बाल.** पृ. ४१. * **आत्मनेपदार्थः** । उपग्रहविशेषरूपस्य आत्मनेपदादेः अर्थः कर्तृगामिफलादिरूपः । सोऽपि कर्मताऽऽदिसंबन्धेन तस्यामेव ( भावनायां ) अन्वेति । यद्यपि स्वर्गत्वादिरूपेण असौ स्वर्गकामादिपदैरुक्तः, तथापि कर्तृगामित्वादिना तदभिधानं आत्मनेपदादिना नानुपपन्नम् । अस्तु वा कर्तृगामित्वादिकमेव तदर्थः । स च स्वाश्रयफलकर्मत्वादिसंबन्धेन कृत्यन्वयी । **रहस्य.** पृ. ४४-४५.

* **आत्मप्रतिपत्तयः** तिस्रः संभवन्ति श्रुतमयी चिन्तामयी साक्षात्कारवती चेति । **कणिका** पृ. २७०.

* **आत्मरक्षण**शास्त्रविरोधो वपोत्खननस्य । ( पूर्वपक्षे दर्शितः ) । **सु.** पृ. ४.

* **आत्मवादः** । **ननु** आत्मसद्भावे मानं न पश्यामः । न च 'अहं जानामि' इति प्रत्यक्षं तत्र मानं, तस्य 'अहं गौरः' इत्यादिवत् शरीरादिविषयकत्वेनापि उपपत्तेः **इति चेत्** । **अत्र जीर्णाः** । शरीरान्तर्गतवायोः ऊर्ध्वाधोगमनानुकूलप्रयत्नाश्रयतया सुखाद्याश्रयतया वा तत्सिद्धिः । तेषां अयावच्छरीरभावित्वेन तद्धर्मत्वासंभवात् । कार्यद्रव्यवृत्तिविशेषगुणानां पाकादिना, विरोधिगुणान्तरोत्पत्त्या, द्रव्यनाशेन वा नाश्यत्वं इति नियमः । उक्तयत्नस्य सुखादीनां च मृतावस्थायां उक्तनाशकत्रयाभावेन नाशानुपपत्तेः न शरीरगुणत्वं संभवति । एवं ज्ञानेच्छाऽऽदीनामपि अयावच्छरीरभावित्वेन न शरीरगुणत्वम् । किंच अवयविविशेषगुणानां अवयवगुणपूर्वकत्वनियमेन ज्ञानादीनां शरीरावयवगुणत्वाभावेन न तदुत्पत्तिसंभवः । अतः सुखादिगुणितया शरीरादिभिन्नात्मसिद्धिः । न च

तेषामिन्द्रियगुणत्वं, इन्द्रियनाशेन संस्कारनाशे स्मरणानुपपत्तेः। नापि मनोगुणत्वं, तस्य अणुतया तद्गुणप्रत्यक्षानुपपत्त्या ज्ञानादीनां अप्रत्यक्षत्वप्रसङ्गात्। मनसो विभुत्वनये तु (सांख्यानां) तद्गुणत्वे ज्ञानादीनां करणाभावात् प्रत्यक्षानुपपत्तिस्तुल्या। तस्मात् तदाश्रयतया आत्मसिद्धिः। **किंच** स्वर्गकामादिश्रुत्याऽपि देहातिरिक्तात्मसिद्धिः। तथाहि, स्वर्गकामादिश्रुतयः कर्मजन्यफलभोक्तारं शरीरातिरिक्तं कर्तारमाक्षिपन्ति। 'अविनाशी वा अरेऽयमात्मा' इत्यादय उपनिषदोऽपि तमेवार्थं द्रढयन्ति। अतः अहंप्रत्ययवेद्यः शरीरातिरिक्त आत्मेति। **न च** तस्य अहंप्रत्ययगम्यत्वमनुपपन्नं ज्ञातृत्वज्ञेयत्वयोर्विरोधात्, एकस्यां क्रियायां एकस्य कर्तृत्वकर्मत्वानुपपत्तेः इति **वाच्यम्**। स्वात्मनि क्रियाविरोधस्य दूषकतावीजाभावेन अदूषकत्वात्। **न च** परसमवेतक्रियाजन्यफलभागित्वस्य कर्मत्वतया कर्मसंज्ञायाः तद्विभक्तेश्च असाधुताऽऽपत्तिः दूषकतावीजं इति **वाच्यम्**। तादृशकर्मत्वाभावेऽपि तद्विभक्तेः 'आत्मा ज्ञातव्यः' 'आत्मानं वेद' 'आत्मानमुपासीत' इत्यादिलौकिकवैदिकप्रयोगेणैव साधुत्वात्। यथा चलतिगच्छत्योः एकार्थत्वेऽपि सकर्मकत्वाकर्मकत्वे, एवं ज्ञातुः ज्ञानजन्यप्राकट्यरूपफलवत्तया ज्ञानकर्मत्वे बाधकाभावात्। 'स मानसीन आत्मा जनानां' इत्यादिश्रुतिवशाच्च मानसाहंप्रत्ययवेद्यः आत्मा सिद्ध इत्याहुः। **वेदान्तिनस्तु** सुखेच्छाऽऽदीनां मनोगुणत्वस्य श्रुतिसिद्धतया निर्गुणज्ञानस्वरूप एव आत्मा। तस्य च निष्प्रकारकमेव उपनिषज्जन्यं प्रत्यक्षं मोक्षसाधनं इत्याहुः। **मणि. पृ. ५३–५४.**

* **आत्मवादः। भाष्यं**–आह कोऽसावन्यो नैनमुपलभामहे। प्राणादिभिरेनमुपलभामहे। योऽसौ प्राणिति अपानिति उच्छ्वसिति निमिषति इत्यादि चेष्टितवान् सोऽत्र शरीरे यज्ञायुधी इति। ननु शरीरमेव प्राणिति अपानिति च। न। प्राणादयः शरीरगुणविधर्माणः अयावच्छरीरभावित्वात्। यावत् शरीरं तावदस्य गुणा रूपादयः। प्राणादयस्तु सत्यपि शरीरे न भवन्ति। सुखादयश्च स्वयमुपलभ्यन्ते, न रूपादयः इव शरीरगुणाः परेणापीति। तस्मात् शरीरगुणवैधर्म्यात् अन्यः शरीरात् यज्ञायुधीति। **आह**– कुत एष संप्रत्ययः सुखादिभ्योऽन्यः तद्वानस्तीति। नहि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे। तस्मात् शशविषाणवत् असौ नास्ति। अथोच्यते, तेन विना कस्य सुखादय इति। न कस्य चिदपीति वक्ष्यामः। नहि वोधः उपलभ्यते, तस्य तस्य संबन्धिना भवितव्यम्। यस्य संबन्धोऽपि उपलभ्यते संबन्धी च, तस्य अयं संबन्धी इति गम्यते। नहि चन्द्रमसमादित्यं वा उपलभ्य संबन्धान्वेषणा भवति कस्यायमिति, न कस्य चिदपि इत्यवधार्यते। तस्मात् न सुखादिभ्योऽन्यः तद्वान् अस्तीति। अथ उपलब्धस्य अवश्यं कल्पयितव्यः संबन्धी भवति, तत आत्मानमपि अनेन प्रकारेण उपलभ्य कस्यायं इति संबन्ध्यन्तरं अन्विष्येम। तमपि कल्पयित्वा अन्यमपि कल्पयित्वा अन्यं इत्यव्यवस्थैव स्यात्। **अथ कं चित्** कल्पयित्वा न संबन्ध्यन्तरमपि कल्पयिष्यसि, तावत्येव विरंस्यसि, तावता च परितोक्ष्यसि, ततो विज्ञाने एव परितुष्य तावत्येव विरन्तुमर्हसि। **अत्रोच्यते**। यदि विज्ञानादन्यो नास्ति, कस्तर्हि जानातीत्युच्यते। ज्ञानस्य कर्तुरभिधानं अनेन शब्देनोपपद्यते। तदेष शब्दः अर्थवान् कर्तव्यः इति ज्ञानात् व्यतिरिक्तं आत्मानं कल्पयिष्याम इति। **आह**, वेदा एनं शब्दं अर्थवन्तं कल्पयिष्यन्ति यदि कल्पयितव्यं प्रमंस्यन्ते। बहवः खलु इह जनाः 'अस्त्यात्मा, अस्त्यात्मा' इति आत्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति, तथापि नात्मसत्तां कल्पयितुं घटन्ते। किमङ्ग पुनः 'जानाति' इति परोक्षशब्ददर्शनात्। तस्मादसदेतत्। **उच्यते**। इच्छया आत्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे हि अभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यानि अस्मज्जातीयैः अनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रति अस्माकमिच्छा भवति। नो खलु अन्येन पुरुषेणोपलब्धेऽपि विषये अन्यस्योपलब्धुरिच्छा भवति। भवति च अन्येद्युरुपलब्धे अन्येद्युरिच्छा। तेनोपलम्भनेन समानकर्तृका सा इत्यवगच्छामः। यदि विज्ञानमात्रमेवेदं उपलम्भकं अभविष्यत्, प्रत्यस्ते तस्मिन् कस्य अपरेद्युः इच्छा

अभविष्यत् । अथ नु विज्ञानादन्यो विज्ञाता नित्यः, तत एकस्मिन्नहनि य एव उपलब्धा, अपरेद्युरपि स एव एषिष्यतीति । इतरथा हि इच्छा नोपपन्ना स्यात् । **अत्रोच्यते** ( विज्ञानवादिना ) । अनुपपन्नमिति नः क संप्रत्ययः । यन्न प्रमाणेनावगतम् । विज्ञानात् तावत् अन्यं नोपलभामहे । यत् नोपलभामहे, तत् शशविषाणवदेव नास्तीत्यवगच्छामः । न च तस्मिन्नसति विज्ञानसद्भावः अनुपपन्नः प्रत्यक्षावगतत्वादेव । क्षणिकत्वं चास्य प्रत्यक्षपूर्वकमेव । न च ज्ञातरि विज्ञानादन्यस्मिन् असति, ज्ञाने च अनित्ये अपरेद्युरिच्छा अनुपपन्ना, प्रत्यक्षावगतत्वादेव । नो खल्वपि एतत् दृष्टं, य एव अन्येद्युः उपलब्धा स एव अन्येद्युरेषितेति । इदं तु दृष्टं, यत् क चिदन्येन दृष्टं अन्य इच्छति, क चिन्न । समानायां संततौ अन्य इच्छति, संतत्यन्तरे नेच्छतीति । तस्मान्न सुखादिव्यतिरिक्तः अन्योऽस्तीति । **अत्रोच्यते** । नहि असर्तारः इच्छन्ति इत्युपपद्यते । न वा अदृष्टपूर्वे स्मृतिर्भवति । तस्मात् क्षणिकविज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति । **अत्राह** । स्मृतिरपि इच्छावत् पूर्वज्ञानसदृशं विज्ञानं, पूर्वविज्ञानविषयं वा स्मृतिः इत्युच्यते । तच्च द्रष्टरि विनष्टेऽपि अपरेद्युरुत्पद्यमानं नानुपपन्नं प्रत्यक्षावगतत्वादेव । अन्यस्मिन् स्कन्धघने अन्येन स्कन्धघनेन यत् ज्ञानं, तत्संततिजेन अन्येनोपलभ्यते, न अतत्संततिजेनान्येन । तस्मात् शून्याः स्कन्धघनाः इति । अथास्मिन्नर्थे ब्राह्मणं भवति ' विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञाऽस्ति ' ( बृ. ६।५ ) इति । **उच्यते** । नैतदेवम् । अन्येद्युर्दृष्टे अपरेद्युः ' अहमिदमदर्शम् ' इति भवति प्रत्ययः । प्रत्यगात्मनि च एतद्भवति, न परत्र । अपरो ह्यसौ अन्येद्युर्दृष्टवान् । तस्मात् तद्व्यतिरिक्तः अन्योऽस्ति, यत्रायं अहंशब्दः । **आह** । परत्रापि अहंशब्दो भक्त्या दृश्यते, यथा अहमेव पुत्रः, अहमेव देवदत्तः, अहमेव गच्छामि इति । **अत्रोच्यते** । न वयं ' अहं ' इति इमं शब्दं प्रयुज्यमानं अन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः । किं तर्हि ? शब्दात् व्यतिरिक्तं प्रत्ययम् । प्रतीमो वयं इममर्थं, वयमेव अन्येद्युरुपलभामहे, वयमेवाद्य स्मराम इति । तस्मात् वयं इममर्थमवगच्छामः ' वयमेव ह्यो, वयमेवाद्य ' इति । ये ह्योऽद्य च, न ते विनष्टाः । अथापि अस्मिन्नर्थे ब्राह्मणं भवति ' स वा अयमात्मा ' इति प्रकृत्य आमनन्ति ' अशीर्यो न हि शीर्यते ' इति । तथा ' अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा ' इति । विनश्वरं च विज्ञानम् । तस्मात् विनश्वरादन्यः स इत्यवगच्छामः । न च शक्यमेवमवगन्तुं ' यथा उपलभ्यन्ते अर्था न तथा भवन्तीति, यथा तु खलु नोपलभ्यन्ते तथा भवन्ति' इति । तथाहि सति ' शशो नास्ति, शशस्य विषाणमस्ति ' इत्यवगम्येत । न च अहंप्रत्ययो व्यामोह इति शक्यते वक्तुं, बाधकप्रत्ययाभावात् । तस्मात् सुखादिभ्यो व्यतिरिक्तोऽस्ति । एवं चेत् स एव यज्ञायुधी इति व्यपदिश्यते ।

**आह** । यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तत् निदर्श्यतां ' इदं तत्, ईदृशं च ' इति । न च तत् निदर्श्यते । तस्मान्न ततोऽन्यदस्तीति । **अत्रोच्यते** । स्वसंवेद्यः स भवति, नासौ अन्येन शक्यते द्रष्टुं, कथमसौ निदर्श्येतेति । यथा च कश्चित् चक्षुष्मान् स्वयं रूपं पश्यति, न च शक्नोति अन्यस्मै जात्यन्धाय तत् निदर्शयितुम् । न च तन्न शक्यते निदर्शयितुं, इत्येतावता नास्तीत्यवगम्यते । एवमसौ पुरुषः स्वयमात्मानं उपलभते न चान्यस्मै शक्नोति दर्शयितुम् । अन्यस्य द्रष्टुः तं पुरुषं प्रति दर्शनशक्त्यभावात् । सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते, न च परात्मानम् । तेन सर्वे स्वेनस्वेनात्मना आत्मानमुपलभमानाः सन्त्येव, यद्यपि परपुरुषं नोपलभन्ते इति । अथास्मिन्नर्थे ब्राह्मणं भवति ' शान्तायां वाचि किंज्योतिरेवायं पुरुषः ' ' आत्मज्योतिः सम्राडिति होवाच ' इति ( बृ. ६।३ ) । परेण नोपलभ्यते इत्यत्रापि ब्राह्मणं भवति ' अगृह्यो न हि गृह्यते ' इति (बृ. ५।५) परेण न गृह्यते इत्येतदभिप्रायं एतत् । कुतः ? स्वयंज्योतिष्ट्ववचनात् । अथापि ब्राह्मणं भवति 'अत्रायं पुरुषः स्वयंज्योतिर्भवति ' इति ( बृ. ६।७ ) केन पुनरुपायेन अयमन्यस्मै कथ्यते इति, तत्राप्युपाये ब्राह्मणं भवति ' स एष नेति नेत्यात्मेति होवाच ' इति ( बृ. ६।३ ) ' असौ एवं-

रूपः ' इति न शक्यते निदर्शयितुम्। यच्च परः पश्यति तत्प्रतिषेधः तस्योपदेशोपायः। शरीरं परः पश्यति। तेनात्मोपदिश्यते ' शरीरं नात्मा, अस्ति शरीरादन्यः ' इति। स च आत्मेति शरीरप्रतिषेधेन उपदिश्यते। तथा प्राणादयो नात्मानः, तत्प्रतिषेधेन तेभ्योऽन्यः उपदिश्यते। तथा परस्थाः सुखादयः परेण लिङ्गैरुपलभ्यन्ते, तेऽपि नात्मानः इति तत्प्रतिषेधेन अन्यः उपदिश्यते। यः स्वयं पश्यति, न ततोऽन्यः पुरुषः इत्येतदपि पुरुषप्रवृत्त्या अनुमीयते। यदा असौ पुरुषः पूर्वेद्युः सामिकृतानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यतते, अतः प्रवृत्त्या अवगम्यते नूनमसौ अनित्यात् नित्यमवगच्छति इति। उपमानाच्चोपदिश्यते, यादृशं भवान् स्वयमात्मानं पश्यति अनेनोपमानेन अवगच्छ, अहमपि तादृशमेव पश्यामीति। यथा कश्चित् आत्मीयां वेदनां परस्मै आचक्षीत 'दह्यमानस्येव मे भवति, पात्यमानस्येव मे भवति, रुध्यमानस्येव मे भवति ' इति। अतः स्वयं अवगम्यमानत्वात् अस्ति तद्व्यतिरिक्तः पुरुष इति।

यदुच्यते विज्ञानमपास्य तन्निदर्श्यतामिति। यदि उपायमेव निषेधसि, न शक्यं उपायमन्तरेण उपेयं उपेतुम्। अयमेवाभ्युपायः ज्ञातव्यानामर्थानां यो यथा ज्ञायते, स तथेति। तद्यथा कः शुक्लो नाम? यत्र शुक्लत्वमस्ति। किं शुक्लत्वं नाम? यत्र शुक्लशब्दप्रवृत्तिः। क्व तस्य प्रवृत्तिः? यत् शुक्लशब्दे उच्चरिते प्रतीयते। तस्मात् न विज्ञानं प्रत्याख्याय कस्य चिद्रूपं निदर्शयितुं शक्यम्। न च नियोगतः प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति, अप्रतीतेऽपि हि प्रत्यये सति, अर्थः प्रतीयते एव। नहि विज्ञानं प्रत्यक्षं, विज्ञेयोऽर्थः प्रत्यक्षः इत्येतत् पूर्वमेवोक्तम्। तदवश्यकर्तव्ये अपह्नवे कामं विज्ञानमपह्नूयेत नार्थाः, इत्येतदुक्तमेव। तस्मादस्ति सुखादिभ्योऽन्यः नित्यः पुरुष इति।

अथ यदुक्तं ' विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति ' इति, **अत्रोच्यते**। ' अत्रैव मा भगवान् मोहान्तमापीपदत् ' इति परिचोदनोत्तरकाले अपह्नुत्य मोहाभिप्रायमस्य वर्णितवान् ' न वा अरेऽहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्तु अस्य भवति ' ( बृ. ६।५ ) इति। तस्मात् न विज्ञानमात्रम्। तस्माद्वैषम्यम्। भा. पृ. ६०-७२.

( श्लोकवार्तिकस्य आत्मवादो न संगृह्यते सर्वः। केचिदेव तु अंशाः संगृह्यन्ते। पृ. ६८९) **'साक्षाद् यद्यपि संबन्धो नात्मनो यज्ञसाधनैः। तथापि लक्षणावृत्त्या शरीरद्वारको भवेत्। १॥ प्रत्यक्षत्वं च देहस्थं भाक्तमात्मनि कल्पितम्। आत्मनः स्वर्गयानं वा शरीरस्योपचर्यते। २॥ नैरात्म्येनात्र चाक्षिप्ताः सर्वा एव हि चोदनाः। साध्यसाधनसंबन्धस्तदुक्तो नहि सिध्यति। ३॥ ता हि कर्तुः फलेनाहुः संबन्धं क्वापि जन्मनि। न च विज्ञानमात्रत्वे भोक्तृकर्तृत्वसंभवः। ४॥ शरीरविनिपाताच्च परं नान्यद् यदेष्यते। अदत्तफल इष्ट्यादौ तदा तद्वचनं मृषा ।५॥ तस्माद्वेदप्रमाणार्थमात्माऽत्र प्रतिपाद्यते। ६॥ शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः। नित्यत्वं चेष्यते, शेषं शरीरादि विनश्यति। ७॥ नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते। विक्रियामात्रवाचित्वे, नह्युच्छेदोऽस्य तावता। २२॥ स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ। न त्ववस्थाऽन्तरप्राप्तौ लोके बालयुवादिवत्। २३॥** ( **रत्नाकरः**--विभोस्तावत् कर्तृत्वमुपपादयिष्यते। नित्यस्य तु अविक्रियत्वेन सत्यं न कर्तृत्वभोक्तृत्वे, स तु प्राच्यं औदासीन्यं हित्वा कर्तृत्वभोक्तृत्वाभ्यां विक्रियते एव, न त्वेवमनित्यः स्यात्। यदि विकारमात्रमनित्यं, तदस्तु, नहि विकारमात्रेण स्वरूपोच्छेदो भवति प्रत्यभिज्ञानात् ) **। तस्मादुभयहानेन** (सुखित्वदुःखित्वहानेन) **व्यावृत्त्यनुगमात्मकः। पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत्। २८॥ न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थासमाश्रिते। तेनावस्थावतस्तत्त्वात् कर्तैवाप्नोति तत्फलम्। २९॥ न चावस्थाऽन्तरोत्पादे पूर्वाऽत्यन्तं विनश्यति। उत्तराऽनुगुणत्वात्तु सामान्यात्मनि लीयते। ३०॥ स्वरूपेण ह्यवस्थानामन्योन्यस्य विरोधिना। अविरुद्धस्तु सर्वासु सामान्यात्मा**

प्रवर्तते । ३१ ॥ ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् । देहान्तरक्षमः कल्प्यः सोऽगच्छन्नेव योक्ष्यते ॥ ७३ ॥ ( रत्नाकरः– अवश्यं कृतनाशाकृताभ्यागमपरिहाराय नित्यः पुमान् प्रतिपादयितव्यः । स च भोक्तृत्वसिद्ध्यर्थं चेतनः । देहान्तरप्राप्तये च सर्वगतः । सर्वगतोऽप्यसौ अगच्छन्नेव शक्नोति देहान्तरेण संबन्धुम् । अयमेव तस्य शरीरेण संबन्धो, यत् भोगायतनत्वेन आत्मसात्करणम् ) । यजमानत्वमप्यात्मा सक्रियत्वात् प्रपद्यते । ( कथं सक्रियत्वं विभोः तदाह– ) न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ।७४॥ न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया । क्रिया धात्वर्थमात्रं स्यादन्याधारेऽपि कर्तृता । ७५ ॥ सत्ताज्ञानादिरूपाणां कर्ता तावत् स्वयं पुमान् । योऽपि भूतपरिस्पन्दस्तत्राधिष्ठानतो भवेत् । ७६ ॥ तदुद्देशप्रवृत्तेश्च याया देहेन्द्रियैः क्रिया । क्रियते पुरुषेणैव सासा सर्वा कृतोच्यते । ७७ ॥ नैव ह्येषां प्रवृत्तिः स्यात् पुरुषेणापरिग्रहे । अस्वातन्त्र्यादतो नैषां परिस्पन्देऽपि कर्तृता ।७८॥ तत्कर्मोपार्जितैश्चैतैः क्रियमाणेषु कर्मसु । कर्तृता यजमानानामृत्विक्परशुकर्मवत् । ७९ ॥ यथा परिक्रयाम्नानादृत्विग्द्वारा क्रियेष्यते । गमनादिविधेस्तद्वद् भूतद्वारत्वमाश्रितम् । ८० ॥ क्रयो यथाऽऽत्मनो नास्ति गमनादि तथैव हि । विधीयते च तेनात्र परद्वाराऽस्य कर्तृता । ८१ ॥ यथा वा देवदत्तस्य छेदने काष्ठसंश्रिते । कर्तृत्वमेवं पुंसः स्याच्छरीरगमनादिषु । ८२ ॥ व्यापारान्तरतस्तत्र कर्तृत्वं चेदिहापि नः । संकल्पसत्त्ववत्त्वाभ्यां पुमानिष्टः प्रयोजकः ( सत्त्व–वत्त्वं अन्तःकरणवत्त्वं ) । ८३ ॥ साधारण्येन कर्तृत्वं सत्त्ववत्त्वेन कर्मसु । संकल्पनैः पुनर्भेदात् प्रतिकर्मास्य कर्तृता । ८४ ॥ न च सर्वत्र तुल्यत्वं स्यात् प्रयोजककर्मणाम् । चलनेन ह्यसिं योद्धा प्रयुङ्क्ते छेदनं प्रति । ८५ ॥ सेनापतिस्तु वाचैव भृत्यानां विनियोजकः । राजा संनिधिमात्रेण विनियुङ्क्ते कदा चन । ८६ ॥ तस्मादचलतोऽपि स्याच्चलने कर्तृताऽऽत्मनः । यथैवाभिद्यमानस्य देवदत्तस्य भेत्तृता । ८७ ॥ अहंप्रत्ययविज्ञेयो ज्ञाता नः सर्वदैव हि । १२६ ॥ ममात्मेति मतिर्भेदव्यपदेशेन याऽऽत्मनः । तत्रावस्थाऽऽत्मना भेदं ज्ञानस्याश्रित्य कल्पना । १३० ॥ ममेत्येतस्य मुख्यार्थो नात्मनोऽन्यः प्रतीयते । तेनासौ भेदहेतुः स्याद् भेदश्च ज्ञानहेतुकः । १३१ ॥ ये चेहाज्ञातनानात्वास्तेषां देहेष्वहंमतिः । तत्राप्यात्माभिमानेनेत्यहंबुद्धिर्ध्रुवाऽऽत्मनि । १३२ ॥ ये तु विज्ञातनानात्वास्ते देहेष्वनहंकृताः । जानाम्यहमितीदं तु ज्ञानं नैव निवर्तते । ( योगिनामपि ) १३३ ॥ तन्निवृत्तौ न तेषां स्याद् ध्यानं, शिष्योपदेशने । प्रवृत्तिर्दृश्यते सा च, तेनात्मा तैः प्रतीयते । १३४॥ (रत्नाकरः– न केवलमुपनिषद्वचनादेव आत्माऽस्तित्वं, अग्निहोत्रादिविधयोऽपि नित्यं भोक्तारमन्तरेण अनुपपद्यमानाः, तमर्थात् द्योतयन्त्येव । तमेव तु उपनिषदः गहनतया विस्पष्टीकर्तुं श्रुत्यादिभिरभिदधति । १४१ ) अविनाशी स्वरूपेण पुरुषो, या तु नाशिता । मात्राणां साधिकाराणां भूतादीनामसंज्ञिता । १४७॥ ( असंज्ञिता अचैतन्यम् ) ॥ इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥ १४८ ॥ ( रत्नाकरः– नित्यात्मसत्तामात्रेणैव वेदप्रामाण्यसिद्धेः तन्मात्रमिह प्रतिपादितं, दार्ढ्यार्थिभिस्तु वेदान्तविहितेष्वेव श्रवणमनननिदिध्यासनादिषु यतितव्यं इति ) ।

बृहती— ननु च अन्यत्वोपलब्धौ सत्यां गोः वाहीकस्य च, गौण्या निर्देश उपपद्यते 'गौर्वाहीकः' इति । 'न चात्र शरीरादन्यमुपलभामहे ।' नोपलभामहे इति कोऽस्याभिप्रायः? अयमेवाभिप्रायो नोपलभामहे इति । ननु च कार्यभूतैः प्राणादिभिरुपलभामहे । ' ननु शरीरमेव प्राणिति अपानिति च । ' शरीरं नाम किमभिप्रेतमायुष्मतः ? योऽयं चातुर्भौतिकः संघातः । ( ऋजु— एषा तु अत्र पदार्थविदां स्थितिः । चतुर्णां भूतानां समाहारमात्रं शरीरं, न चतुर्भूतारब्धं, किंतु पार्थिवमेव शरीरं,

परतन्त्राण्यन्यानि तैजसानि वायवीयानि च द्रव्याणि संयोगीनि । तदुक्तं परैः 'संयोगस्त्वपि विप्रतिषिद्धो मिथः पञ्चानां' इति । तथाहि, शरीरमिदं न पञ्चभूतारब्धं चतुर्भूतारब्धं वा, चाक्षुषाचाक्षुषद्रव्यारब्धस्य अचाक्षुषत्वापत्तेः वायुवनस्पतिसंयोगवत् । तदाहुः 'प्रत्यक्षाप्रत्यक्षाणां न–( णाम–)प्रत्यक्षत्वात् संयोगस्य पञ्चात्मकत्वं न विद्यते' ( वैशे. ४।२।२ ) इति । न च पृथिव्यप्तेजोभिरपि चाक्षुषैः यथाक्रमं अनुष्णाशीतशीतोष्णस्पर्शभाग्भिः आरभ्यते, एतत्त्रयविलक्षणस्पर्शापत्तेः । यथा हि सितासिततन्त्वारब्धः पटः विलक्षणचित्ररूपो भवति, तथा इदमपि शरीरं विलक्षणस्पर्शं स्यात् । अनुष्णाशीतस्पर्शं चेदं, अतः केवलपार्थिवावयवारब्धम् । तदुक्तं तैरेव 'गुणान्तरप्रादुर्भावाच्च त्र्यात्मकमपि न' ( वैशे. ४।२।३ ) इति । अनेन हेतुना द्व्यात्मकमपि न भवति । एकपार्थिवाणुगतस्य च एकाकिनो गन्धस्य गन्धान्तरारम्भकत्वानुपपत्तेः अगन्धं शरीरमापद्येत । गन्धवच्चेदं, इति पार्थिवमेव शरीरम् । तत्संयोगिनः परतन्त्राः परे भूतान्तरारब्धाः कार्यद्रव्यविशेषाः चक्षुरादयः इति तन्त्रान्तरात् अनुसरणीयम् । दिङ्मात्रम् तूक्तम् । तेन चातुर्भौतिकः संघातः) न तर्हि शरीरकार्याण्येतानि अयावच्छरीरभावित्वादित्यर्थः । सत्यपि भूतत्वे उपात्तानां न रूपादयः इवोपलभ्यन्ते । ( **ऋजु**—अनेन 'यावदस्य शरीरं' इत्यादेर्भाष्यस्य यथाश्रुतोऽर्थो दर्शितः । स चायं नैकान्तेन शरीरकार्यताया असंभवं साधयितुं क्षमते । वैगुण्येनापि यावच्छरीरं कार्याभावसंभवात् । मृतशरीरे वैगुण्यमविवादम् । तस्मादन्यथा व्याख्यायते । अयावद्भूतभावित्वादित्यर्थः । यदि भूतारब्धद्रव्यसमवायीनि एतानि स्युः, तदा कार्यद्रव्यसमवायित्वात् कारणद्रव्येऽपि तदापत्तिः स्यात् । कारणगुणपूर्वको हि कार्यद्रव्ये वैशेषिकगुणारम्भः यथा घटे रूपाद्यारम्भः, वैशेषिकगुणाश्च बुद्ध्यादयः । ननु द्रव्याणामपि अपां कठिनो विकारो दृश्यते करकाऽऽदिः । अचेतनाच्च गोमयादेः चेतनो वृश्चिको जायते इति । तदिदमाकाशभ्रान्तम् । काठिन्यं नाम न गुणान्तरं, अपितु अवयवानामविरलः संयोगः । न च संयोगे वैशेषिकगुणः । अचेतनात् चेतनोत्पत्तिरस्ति नास्तीति विवादास्पदीभूतमिदानीम् । तत्र यदि कारणद्रव्येऽपि बुद्ध्यादयः स्युः तदारब्धानि घटादीनि बुद्ध्यादिभाञ्जि भवेयुः । न च तथाऽस्ति । तथा 'सत्यपि भूतत्वेन अनुपात्तानां' [ 'भूतत्वे उपात्तानां' इति बृहतीपाठः अशुद्धः स्यात् ] शरीरत्वेन अस्वीकृतानां न रूपादय इव वैशेषिकगुणाः प्राणादयः उपलभ्यन्ते । तदाह भगवान् काश्यपः 'कारणाज्ञानात्' ( वैशे. ३।१।४ ) 'कार्यतां न कारणज्ञानं' [ 'कार्यान्तराज्ञानात् कारणाज्ञानं' इति पाठ आवश्यको भाति अनुपदमेव तथा व्याख्यानात् । मूले वैशेषिकसूत्रपाठे तु 'कार्येषु ज्ञानात् ५ अज्ञानाच्च ६' इति दृश्यते ] इति । कारणभूतस्य पृथिव्यादेः अज्ञानात् ज्ञानाभावात् तदारब्धस्य शरीरस्य अज्ञानं ज्ञानाभावः । कारणाज्ञानं कार्यान्तरस्य घटादेरज्ञानात् इति अस्य सूत्रद्वयस्यार्थः । किंच सुखादयश्च न भूतधर्माः शक्यन्ते वक्तुम् । परेन्द्रियग्राह्या हि भूतधर्मा रूपादयो भूतवदेव ( भूतानामिव भूतवत् ) न सुखादयः ( परेन्द्रियग्राह्याः ) । मा भूवन् भूतधर्माः सुखादयः, तद्व्यतिरिक्तस्यान्यस्य इति किमत्र प्रमाणम् । **ननु** च कार्यमेतत् कारणादृते नोपपद्यते इति इदमेवात्र प्रमाणम् । निरस्ता च भूतानां कारणता (समवायिकारणता) इति सिद्धमन्यधर्मत्वम् । **नैवं** सिध्यति परस्परकार्यतयाऽपि उपपत्तेः । 'नहि योय उपलभ्यते तस्यतस्य संबन्धिना भवितव्यं' इति यदुक्तं तदयुक्तमिव प्रतिभाति । यत् उत्पत्तिमत् दृष्टं, तत् कथं संबन्ध्यन्तरं नावगमयतीति । हेतुमती हि उत्पत्तिरिति केचित् । विसभागहेत्वभिप्रायमेतत् । (विसदृशकारणाभिप्रायमेतत् इत्यर्थः) । न पुनः उत्पत्तिः अहेतुकैवोक्ता । कथं पुनरिदमवगम्यते विसभागहेत्वभिप्रायमेतदिति 'नहि चन्द्रमसमादित्यं वा' इत्यत्र संबन्ध्यन्तरं इति अन्तरशब्दश्रवणात् ( अन्तरशब्दश्रवणे हि विलक्षणः संबन्धी कारणभूतः प्रतीयते । स एव च प्रतिषिध्यते ) । ननु अन्यत्वेऽपि अन्तरशब्द उपपद्यते एव । सत्यमुपपद्यते, न तु कार्यमकारणं इति शक्यते वक्तुम् । भवतु दुष्टता ग्रन्थस्य, न पुनः दोष एव अर्थान्यत्वे ( अर्थान्तराव-

गमे इति पाठः ऋजु. ) हेतुः । न, संतानाभ्युपगमात् । संततिर्हि हेतुहेतुमद्भावनिबन्धना । तस्मात् विसभागहेत्वभिप्रायं इत्यवेहि । अतः समानसंततिहेतुकमेवेदं कार्यजालं नात्र विसदृशोपलब्धौ प्रमाणमस्ति इत्युपसंहृतम् । यदि च विसभागादृते नोपपत्तिः स्यात् अव्यवस्थैव स्यात् । अनयैव युक्त्या ( बुद्ध्यादिभ्योऽन्यस्य अनुपलब्धेः परस्परकारणतया चोपपत्तेः, जानातीति– ) कर्तृशब्दार्थः इच्छा स्मृतिश्च प्रत्युक्ताः, अन्यस्य ( ज्ञानातिरिक्तस्य ) अदर्शनात् इति । नहि अदृष्टे अन्यस्मिन् विसभागे ( विसदृशे) स्मृत्यादयो नोपपद्यन्ते इति शक्यते वक्तुम् । नहि दृष्टेऽनुपपन्नं नाम । तदिदमुक्तं 'अनुपपन्नमिति नः क संप्रत्ययः ' इति । किं पुनः कारणं सर्वे एवामी प्रतिपत्तिहेतवः आत्मनः उपन्यस्य निरस्यन्ते भाष्यकारेण । एभिः अनात्मनि आत्मबुद्धिः प्राप्नोति । सर्वप्रकारं चाज्ञानं निरसनीयम् । यदि एते हेतवो न निराक्रियेरन् तदा शिष्याणां एष्वपि वैशेषिकादिदर्शनश्रवणविप्रलब्धबुद्धीनां समीचीनात्महेत्वभिमानः न स्यात् इति तेषां हेतूनां निराकरणम् ) । यत्तावदिदमुक्तं ( भा. पृ. ६० ) 'प्राणादिभिरेनमुपलभामहे' इति किमत्रायुक्तम् ? भूतगुणा ह्यमी न भवन्ति अयावद्भूतभावित्वादिति निरस्ते भूतधर्मत्वे आश्रयित्वाच्च संबन्धितायामवगतायां चित्तचैत्तानां च स्वयमाश्रयित्वात् आत्मगुणा ह्येते इति युक्तमेवोक्तम् । कथमनेन अनात्मनि आत्मबुद्धिः शक्यते वक्तुं ? तत्सुखादयोऽपि आश्रिततया उपलभ्यमाना अयावद्भूतभावितया च सम्यगात्मगुणतया उक्ताः ( वैशेषिकादिभिः । अत्रोच्यते– ) प्राणादयस्तावत् अयावद्भूतभावितया नैव शक्यन्ते वक्तुम् । चलनात्मका ह्यमी, वायोश्चायं धर्मः । सर्वत्र हि श्वसनादिषु चलनात्मकतैवोपलभ्यते । तस्मात् अयावद्भूतभावित्वं असिद्धम् । सेयं अनात्मनि आत्मबुद्धिः । येऽपि सुखादय उपन्यस्ताः, तेऽपि भूतविकारहेतुत्वात् भूतगुणा एवेति शक्यते वक्तुम् । नहि अगुणो गुणिनं विकर्तुमुत्सहते । अवस्था हि विकारः । अवस्था च अवस्थाऽन्तरोत्पत्तौ हेतुः । न च अवस्था अवस्थावतोऽन्या इति सिद्धं भूतगुणत्वं ( सुखादीनाम् । समवायिकारणप्रत्यासन्नं हि असमवायिकारणं भवति । यथा तन्तुसंयोगः तन्तुसमवेतस्य पटस्यौत्पत्तौ कारणम् । तेन सुखादयोऽपि भूतेषु समवायिषु नयनादिषु प्रसन्नतादिविकारं प्रति असमवायिकारणभूताः भूतसमवायिन एवेति ) । ननु च एवमेव वक्तव्यं, किमित्युक्तं कामं सुखादय एव स्युरिति । अभ्युपगम्यापि ( अभूतधर्मत्वं ) अयमर्थः ( आत्मधर्मत्वं ) न सिध्यतीत्यभिप्रायः, कामाभिधानात् । किं पुनरभ्युपगमे कारणम् ? इदमस्ति कारणम् । अत्र के चित् प्रज्ञाभिमानिनो विप्रतिपन्नाः ( बौद्धाः ) । केयं आश्रयाश्रयिता नाम, संघातमात्रमेवेदमुपलभ्यते । नहि एकत्र उपलब्ध्याश्रयाश्रयिता भवति भूतानामिव परस्परम् । तस्मात्तेऽपि सुखादयः स्वतन्त्रा वा आश्रयिणो वा इत्यभ्युपगमात् प्रदर्शितम् । अत्रापरे ब्रह्मविदः ( सांख्याः ) कर्तुरभिधानात् स्मृतेरिच्छातश्च महदादिभूतपर्यन्तात् शरीरात् अतिरिक्तमात्मानं उपलभामहे इति प्रतिपन्नाः । कथं पुनः अभिधानादेः हेतुता उक्ता तैः ? ज्ञानात्मकं हि अन्तःकरणं महदादि ( बुद्ध्यहंकारमनांसि ), ज्ञेयं च कार्यम् । अतः कार्यकारणव्यतिरेकी ' जानाति ' इति शक्यते वक्तुम् । ज्ञानेन किमपि ज्ञेयं, भावयेत् इति हि प्रत्ययः । तस्मात् सिद्ध आत्मा कर्तृभूतः । ननु असौ निष्क्रिय इत्यभ्युपगतं ( सांख्यैः ) । प्रत्ययस्य च कर्तरि जानातीत्ययं प्रत्ययः । ( उत्तरं– ) येषां तावत् ( वैशेषिकाणां ) आत्मनि ज्ञानं समवैति, तेषां तत्कारणत्वात् प्रत्ययकर्तृताऽपि सिद्धैव । येषां ( सांख्यानां ) पुनः बुद्धिधर्मतयैव प्रसिद्धा ज्ञानादयः, तेषामपि भोक्तृतया अयं हेतुः । ( आत्मनो हि भोक्तृतया बुद्धिर्ज्ञानरूपेण भोग्यतया विपरिणमते । तदाहुः ' वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं प्रवर्तते तद्वदव्यक्तम् । ' इति ) । कथं इच्छातः उपलब्धिरुक्ता ? ( यावता विषयज्ञानादेव कार्यभूतेच्छा उपपद्यते इति ज्ञानव्यतिरिक्तं स्वकारणं इच्छा अवगमयितुं न शक्नोति । उत्तरं– ) एवमुक्ता, अनुभूतपूर्वविषयो हि अभिलाषः इच्छा । न च क्षणिकेषु अनुभूतपूर्वाभिमानः उपपद्यते ( यस्य बौद्धस्य दर्शने

समवायिकारणं नाम नास्ति, न तस्य क्षणिकेषु स्कन्धेषु विज्ञानरूपवेदनासंस्कारसंज्ञकेषु भुक्तपूर्वा बुद्धिरुत्पद्यते, पूर्वभोक्तुः अधुनातनभोक्तुश्च अन्यत्वात्। तस्मादस्ति पूर्वोत्तरकालवर्ती भोगयोगी स्कन्धातिरेकी पुरुष इति)। ननु नहि दृष्टे अनुपपन्नं नाम। दृष्टे हि अनुपपत्तिर्नास्ति। न पुनः दृष्टस्यान्यथाभावो दृष्टत्वात् नानुपपन्न इति शक्यते वक्तुम्। दृष्टश्चायमन्यथाभावः। तस्मादिच्छया कार्यकारणादन्यं उपलभामहे इत्युक्तम्। तथा स्मृतेः। स्मृतिरपि अनुभूतविषयैव। न क्षणिकेऽर्थे अयमनुभूतानुभवः उपपद्यते। न हि दृष्टेऽनुपपन्नं नाम। कथं तर्हि भाष्यकारेणोक्तं 'अनुपपन्नमिति नः क्व संप्रत्ययः' इति। श्रूयतां यथोक्तम्। किमनुभवस्य अनुपपन्नत्वं (विनाऽपि स्थिरेणात्मना। ननु अनुभूयमानेन स्थिरेणार्थेन विना स्थिरानुभवः एव यथा नोपपद्यते, तथा कर्त्रा विना कर्त्रनुभवः। तत्राह-) अनुभवः एव यस्य (बौद्धस्य) अनुभूयते, का तस्य अनुभूयमानापेक्षा। तस्मात् सुष्ठु उच्यते 'अनुपपन्नः इति नः क्व संप्रत्ययः' इति। 'तस्मात् शून्याः स्कन्धाः' इत्युपसंहृतम्।

तथा ब्राह्मणमिममेवार्थमनुवदति। 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति' इति। तस्मात् अनात्मनि आत्मबुद्धिहेतवः अमी निराकरणीयतया उपन्यस्ता भगवता भाष्यकारेण। 'अत्रोच्यते नैतदेवं अन्येद्युर्दृष्टः परेद्युः अहमिदमदर्शं इति भवति प्रत्ययः। प्रत्यगात्मनि चैतद्भवति, न परत्र। अपरो ह्यसौ यो ह्यन्येद्युर्दृष्टवान्। तस्मात् न व्यतिरिक्तः अन्योऽस्ति, यत्रायं अहंशब्दः'। किं पुनः कारणं अत्रानुमाननिराकरणे? असंभवात् इति ब्रूमः। प्रत्यक्षदृष्टे अनुमानं न संभवति इति साहसमिदम्। स्वयमेव वक्ष्यति 'नूनमसौ अनित्यान्नित्यं पश्यति इति। तस्मात् नात्र (अनुमानस्य-) असंभवाभिप्रायो वर्णयितुं शक्यते। अथैतन्मनसि वर्तते परोक्तमनुमानं न संभवतीति, प्रत्यक्षोपन्यासस्तर्हि किमर्थः। नहि असति प्रत्यक्षे अनुमानमुपपद्यते इति चेत्। (एवं च अनुमानसामग्रीत्वेन प्रत्यक्षमुपन्यस्तम्)। किमिदं असति प्रत्यक्षे इति, अस्ति चानुमानं प्रत्यक्षव्यापारनिरपेक्षं (क्रियाऽऽदिषु। चशब्दो यस्मादर्थे)। न ब्रूमो नहि अनुमानं प्रत्यक्षव्यापारनिरपेक्षं नास्तीति, किं तर्हि, स्वयमात्मानं प्रत्यक्षेणानुपलभ्य नेदमनुमानं प्रवर्तते इति। (निराकरोति-) उपलब्धश्चेत् स्वयं, किमनुमानेन। स्वपरिज्ञानबुद्धिर्हि श्रेयसे, तदर्थश्चायमारम्भः। अथायमुपदेशः परार्थ एव प्रवृत्तः, आत्मसंविदः इदानीं क्व उपयोगः (प्रत्यक्षं तर्हि नोपन्यसनीयम्)। अथ परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणं इति मतं, (तर्हि) अनुमानोपन्यासो निरर्थकः। यदप्युच्यते, 'यत्रायमहंशब्दः' इति। पुनश्च अपह्नूयते 'न वयमहमिति इमं शब्दं प्रयुज्यमानं अस्मिन्नर्थे हेतुत्वेन व्यपदिशामः' इति, तदपि अबुद्धिमत इवाभिधानं प्रतिभाति। किं अपह्नवीयस्य (अहंशब्दस्य) उपन्यासे प्रयोजनम्? इदमपरमयुक्तं 'यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यतां इदं तदीदृशं चेति' पृष्टे 'अत्रोच्यते' इत्येवमादि उत्तरं नोपपद्यते। अत्र विज्ञानाग्रहणे तद्ग्रहणं नास्तीति चोदितम्। स्वसंवेद्यतया कथमस्य निराकरणम्। नहि स्वसंवेद्यत्वनिबन्धनं विज्ञानग्रहणपूर्वकं ग्रहणं वस्तुनः। अथायमभिप्रायः, स्वसंवित् न पृथक्तया व्यपदेष्टुं शक्यते परस्मै इति, अत्यल्पमिदमुच्यते। अपृथक्तया वा कथं परेण असंविन्नः अर्थः व्यपदेष्टुं शक्यते परस्मै? तस्मात् इदमपि अनालोचनापूर्वकमिव प्रतिभाति। प्रयुक्तस्य चोपन्यासे किं प्रयोजनमिति नैव ज्ञायते। न चायमर्थः परित्यक्त एव विज्ञानग्रहणोपसंहारात्। (विज्ञानग्रहणपुरःसरो विशेषबोधः इति सिद्धान्तेऽपि अयमर्थो न परित्यक्तः। 'तस्मात् विज्ञानं प्रत्याख्याय न कस्य चिद्रूपं दर्शयितुं शक्यं' इत्यनेन भाष्येण विज्ञानग्रहणेन उपसंहारः कृतः। अतो नायमर्थो निराकृतः सिद्धान्तेऽपि)। अथायमभिप्रायः, विज्ञानग्रहणपक्षेऽपि आत्मनः प्रत्यक्षत्वं न शक्यते अपह्नोतुमिति। रूपान्तरं नोपलभामहे इति अनिवारितैव इयं युक्तिः। न च कश्चित् विशेषोऽभिहितः (येन प्रत्यक्षज्ञानपक्षेऽपि बाह्यार्थसिद्धिः स्यात्) उपमानमपि नैयायिकोक्तं अभिदधता स्वलक्षणा-

मिधानविरुद्धमुक्तम् । न च 'अहं गच्छामि' इति चोद्यस्य विस्पष्टं किं चिदुत्तरमुपलभ्यते । ब्रह्मविद्विरुद्धं चैतत्, यदुत अहंप्रत्ययमेयता आत्मनः । मूर्धाभिषिक्तमिदं अनात्मनि आत्मज्ञानं इत्युदाहृतं यदुत अहंकृतिर्ममकारश्चेति । निर्मुक्ताहंकारममकारं आत्मज्ञानं आत्मविदो मन्यन्ते । तस्मात् अनात्मज्ञानविलसितमिदं अहंप्रत्ययप्रमेयः आत्मेति । 'अत्रोच्यते, अन्येद्युर्दृष्टे अपरेद्युः अहमिदमदर्शं इति भवति प्रत्ययः, प्रत्यगात्मनि चैतद्भवति, न परत्र'। किमिदं अहमिदमदर्शं इति ? यदि तावत् प्रत्यभिज्ञा, क्षणिकत्वस्यैतदुत्तरं, न नैरात्म्यस्य (तेन अहंप्रत्ययमात्रमेवोपन्यसनीयं न प्रत्यभिज्ञानम्)। न चात्र क्षणिकत्वनिराकरणमभिप्रेतं, किं तर्हि ? बुद्धीन्द्रियशरीरव्यतिरिक्तस्य आत्मनः सद्भावप्रतिपत्तिः (अभिप्रेता)। न च क्षणिकतया नैरात्म्यमुक्तं परैः। किं तर्हि ? स्कन्धातिरिक्तानुपलब्धेः । नित्यतया हि क्षणिकत्वं विरोधि, नात्मसद्भावस्य । तस्य चात्र सद्भावः परैराक्षिप्तः प्रतिपाद्यते । न पुनरात्मनो विद्यमानस्य नित्यताऽऽक्षेपं प्रति समाधिः (प्रतिपाद्यते) । न चान्य उपलब्धा ह्यः, अद्य चान्य इत्येतावता नैरात्म्यम् । तस्मात् अहंप्रत्ययग्राह्यः कार्यकरणव्यतिरिक्तः आत्मा अस्तीत्येतावत् वक्तव्यम् । ह्यः अद्य इत्यतिरिच्यते । अथेयं बुद्धिः, क्षणिकत्वात् साधितेऽपि (आत्मनः) अस्तित्वे आत्मतैव हीयते इति । (भोक्तृता हि आत्मता, क्षणिकस्य भोक्तृतैव हीयते इत्यर्थः)। केयं वाचोयुक्तिः, स्कन्धानां स्कन्धता किमिति न हीयते । भोक्तृत्वं हि आत्मनः स्वरूपम् । भोग्यता च स्कन्धानाम् । यथा क्षणिकत्वेऽपि भोग्यता नापनेतुं शक्यते स्कन्धानां, तथा भोक्तृत्वमपि आत्मनः । तत् इदं (तस्मात् भाष्यं) क्षपाप्रयाणकम् । (समाधत्ते-) अनात्मज्ञो भवान्, यस्य एवंविधानि चोद्यानि । वेत्सि भोः किमिति क्षणिकता स्कन्धानामुक्तेति । (पृच्छति पूर्वपक्षी-) किमिति चोक्ता । (समाधत्ते) भोक्तुरभावात् । पृच्छति पूर्वपक्षी-) भोक्तुरभावे क्षणिकता स्कन्धानां इति किमियं राजाज्ञा ? नेयं राजाज्ञा, नयाज्ञा ह्येषा । कथं ? भोक्तुः सद्भावे कार्यकरणं क्षणिकं इति नास्ति नः प्रमाणम् । कस्मात् ? अनुमेयं हि कारणं कार्यतः । अतश्च क्रियासिद्धिः । (यो हि भोक्तारमभ्युपगच्छति, अभ्युपगच्छत्यसौ भुक्तिरूपां क्रियाम् । तस्य कदा चित्तु कार्योदयात् कारणानुमाने प्रस्तुते ततोऽनुमानात् क्रियासिद्धिर्भवति । क्रिया च क्षणिकस्य स्यात् आ फलनिष्पत्तेः इत्यनुपपन्नम्। तस्मात् भोक्तारमभ्युपगच्छद्भिः भुक्तिरूपां क्रियां अङ्गीकुर्वाणैः स्थिरं द्रव्यं अङ्गीकरणीयम् । स्थिरद्रव्याङ्गीकारे च, क्षणिकत्वे नास्ति प्रमाणम्)। क्रियाफलकलापनिबन्धनोऽयं क्षणिकत्ववादः (क्रियायां हि असत्यां कादाचित्कं कार्यं आगन्तुकस्वभावं कारणं अनुमापयत् द्रव्यमेव क्षणिकत्वं नयति । क्रियायां तु अङ्गीकृतायां तत एव कादाचित्ककार्यस्य उपपन्नत्वात् क्षणिकता द्रव्याणामवगन्तुं न शक्यते। अथ क्रियाऽङ्गीकारः एव न क्रियते, तदा कर्तृत्वं भोक्तृत्वं च न सिध्यति । तदाह-) लुप्तक्रियस्य च कर्तृत्वभोक्तृत्वाक्षेपः । तदाक्षेपे च आत्माक्षेपः । परिणतिस्वभावमात्रमिदं कार्यकारणं इति कल्पनं कर्ता भोक्ता इति च (अतो भोक्तारमिच्छता अवश्याङ्गीकरणीया क्रिया। सा च स्थिरद्रव्याङ्गीकारनिबन्धना। स्थेमा च द्रव्यस्य प्रत्यभिज्ञाऽधीनः, इति मन्वानो भाष्यकारः सप्रत्यभिज्ञं प्रत्यक्षं उपदर्शितवान् इत्याह-) तस्मात् अहंप्रत्ययालम्बनमात्रसिद्धौ, सिद्धेऽपि बुद्धीन्द्रियशरीरव्यतिरेकिणि कर्तृत्वभोक्तृता इति मन्वानः सप्रत्यभिज्ञं प्रत्यक्षमुपन्यस्तवान् भाष्यकारः । अत एव च नैरात्म्यवादिनः मुहुर्मुहुः क्षणिकतां अकिंचित्करतां च आपादयन्ति आत्मनः 'चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्समः' इति । तस्मात् भोक्तृतैवात्मेति । युक्तं भोक्तृतैवात्मेति, कर्तृत्वोपन्यासस्तु विरुध्यते निष्क्रियत्वादात्मनः । सर्वगतत्वाच्च निष्क्रियत्वम् । प्रतिपन्नं च सर्वगतत्वं सर्वत्र सुखोपलम्भात् । नहि असत्यागमने किंचित् विरुद्धमिति । (सत्ता तावदात्मनः सर्वत्र सुखोपलम्भेन सिद्धा । सेदानीं गमनपूर्विका इति नास्ति प्रमाणम् । विनाऽपि गमनेन न कस्य चिदनुपपत्तिः । शरीरागमने तु या सुखाद्युपलब्धिः, सा प्रादेशिकत्वेन सुखादीनामुपपन्ना । प्रादेशिकत्वं च सुखादीनां आत्ममनःसंनिकर्षजत्वात् मनसश्च

प्रादेशिकत्वात् । आत्मैव यत् शरीरशून्ये देशे नोपलभ्यते, तत्रापि प्रादेशिकतैव ज्ञानस्य हेतुः। यत्रैव ज्ञानं तत्रैवोपलभ्यते इति । परिहरति– ) चलनात्मिकां क्रियां अङ्गीकृत्य अनिष्क्रियता उक्ता , न पुनर्भोगोऽपत्त्यापि । तस्मात् सुष्ठूच्यते कर्तृभोक्तृतैवात्मेति । तस्मादुपपन्नोऽयं ग्रन्थः ' अहमिदमदर्शं ' इति । विषयप्रत्यभिज्ञा च एतन्निबन्धना इति शब्दाधिकरणे उपन्यस्यते ( स एवायं गकार इति येयं प्रत्यभिज्ञा, सा पूर्वापरानुभवानुवर्तिस्थिरानुभवितृप्रत्यभिज्ञानिमित्ता इति शब्दाधिकरणसमीपे प्रत्यभिज्ञेय उपन्यस्यते , स्थिरेऽनुभवितरि सिद्धे विषयप्रत्यभिज्ञा यथा स्यादिति ) । ' प्रत्यगात्मनि चैतद्भवति ' इति कस्यार्थस्य सिद्धये ? भोक्तृत्वस्यैव । कथं ? प्रत्यगात्मनि भोगदर्शनात् । यदि परोऽपि अहंप्रत्ययस्य विषयतामापद्यते भोक्तृत्वज्ञानं प्राप्नोति । भोक्तृता चात्मा इत्युक्तम् । ' न परत्र ' परो ह्यसौ योऽन्येद्युर्दृष्टवानिति प्रत्यभिज्ञाऽनुपपत्तिः । ' यत्रायमहंशब्दः ' इति अहंशब्दोपन्यासः तर्हि किमर्थः ? यदि परमपह्नवाय ( ' न वय अहं इतीमं शब्दं प्रयुज्यमानं अस्मिन्नर्थे हेतुत्वेन व्यपदिशामः ' इत्येवं अपह्नवं कर्तुम् ) । नापह्नवाय , ( किंतु ) परप्रतिपत्तये । किमिति तर्हि अपह्नवः ? साक्षात् हेतुत्वाशङ्कानिराकरणाय । परेण हि साक्षात् हेतुतां मन्वानेन आत्मन्यपि अहंशब्दोऽस्ति इति प्रदर्शितं ' परत्रापि अहंशब्दो भक्त्या दृश्यते ' इत्येवमादिना । ' न वयं' इति न साक्षात् हेततया इदमुपन्यस्तं इति प्रकटितम् । हेत्वर्थप्रदर्शनार्थस्तु शब्दप्रयोगः ( प्रत्यय एव तु साक्षात् हेतुः ) । ननु च ' अहं गच्छामि ' इति न हेत्वर्थप्रदर्शनमात्रतया शक्यते परिहर्तुम् । अत्र हि अहंप्रत्ययोऽपि व्यभिचार्येव उपलभ्यते अचलनात्मकत्वादात्मनः । तस्मात् स्कन्ध एवालम्बनतामापद्यते इत्याशङ्कनीयमिदम् । किमिति निराशङ्कैरेव गम्यते ? ( उत्तरं– ) किमत्राशङ्कनीयम् ( नास्त्येवाशङ्कनीयम् । कस्मादित्याह– ) इदंप्रत्ययग्राह्यं हि कार्यकरणम् । प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययान्तरालम्बनता नोपपद्यते, गौर्वाहीक इति यथा ( न कदाचिदपि वाहीकः गोप्रत्ययविषयतामापद्यते ) । गौणः उपपद्यते इति चेत्, परिहृतं त्वयैव । तस्मात् असंभिन्नेदंप्रत्यय एव अहंप्रत्यय आलम्बनम् । ब्राह्मणमपि अमुमेवार्थमनुवदति ' अशीर्यो न हि शीर्यते ' इति अशीर्यतया भोक्तृत्वमात्मनः । विनश्वरं च विज्ञानं इति तद्व्यतिरिक्तालम्बनतामापादयति । व्यामोहोऽयं अहंकारग्रन्थिः इति न शक्यते वक्तुं ' यस्य च दुष्टं करणं , यत्र च मिथ्येति भवति प्रत्ययः, स एव असमीचीनः प्रत्ययो नान्यः' इति सिद्धत्वादस्यार्थस्य । यदि परं ब्रह्मविदामेष निश्चयः ' यदुपलभ्यते तदसत् , यन्नोपलभ्यते तत् तत्त्वं ' इति नमस्तेभ्यः । ' विदुषि नोत्तरं वाच्यं ' इति अत्र परिहारः । तस्मात् यथार्थोऽयमर्थवादः ' स एष यज्ञायुधी यजमानः ' इति ।

' आह यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यतां इदं तत् ईदृशं चेति ' किमिदं चोद्यते ? इदमत्र चोद्यते, तदेव न ज्ञायते ( इति ) । कथं न ज्ञायते ? किंवा स विज्ञानस्य आत्मनोऽहंप्रत्ययः प्रमाणतया उपन्यस्तः, येनेदमुच्यते विज्ञानमपास्य तत् निदर्शयितव्यमिति, अनेकवस्त्वालम्बनं हि यत्र ज्ञानं, तत्रेदं युज्यते वक्तुं ' इदमपास्य इदं निदर्शयितव्यं ' इति, इह तु एकात्मरूपैव संवित् । तस्मात् इदं व्युदसनीय इति तमसि पदम् ( असमीक्ष्य प्रवृत्तम् ) । अत्रोच्यते। अयमस्याभिप्रायः, ज्ञेयत्वे ह्यात्मनः ज्ञानज्ञातृणी न व्यतिरिक्ते शक्येते वक्तुम् । न च अपास्यैव ते संविदस्तीति सिद्धम् । तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक्प्रमेयतया निदर्शयितव्यम् ( इति ) । ' अत्रोच्यते, स्वसंवेद्यः स भवति , नासौ अन्येन शक्यते द्रष्टुं ' इति । किमिदमस्योत्तरमुपपद्यते ? किमिति वा नोपपद्यते ? सैवेयं पूर्वोक्ता ( वृत्तिकारग्रन्थे ) एकालम्बनानेकाकारता प्रत्ययस्य अभ्युपगता भवति । अविवेकापराधोऽयं, नात्र आयुष्मतो दोषः । ( एकग्रन्थेनाह– ) ननु च अहंप्रत्ययोऽयं ' अहमिदमदर्शं ' इत्युपन्यस्तः, नाहमहमदर्शं इति । एवं च सति केयमनेकाकारता ? तस्मात् ' अविवेकः परमापदां पदम् ' ( भारविः २।३० ) । यदि हि आत्मशब्दवाच्यतया ज्ञेयता उपन्यस्ता प्रमेयान्तरशून्यता वा, तदा एतच्चोद्यमभविष्यत् । इह तु सर्वज्ञेयप्रमातृ-

तयैव संविदुपन्यस्ता। तस्मात् प्रतिपक्षोपन्यास एवायम्। कथं तेनैव तत् बाध्यते। नहि यत् यस्यैव बाध्यं, तत् तस्यैव बाधकं भवितुमर्हति। तस्मात् सम्यगुत्तरम्। 'यथा कश्चिच्चक्षुष्मान्' इति अनेनापि निदर्शनेन कर्तृकरणान्तरनिषेध एव स्थिरीकृतः।

ननु चात्र कर्त्रन्तरं (पुरुषः) करणान्तरं (चक्षुः) भिन्ने मेयात् (रूपात्) किमिदं निदर्शनं? कर्त्रन्तराभावसामान्यात्। तस्मात् कारणदोषरहिता अविपरीता च संवित् आत्मास्तित्वे हेतुः, भवतु कर्त्रन्तरं मा वा (अस्ति च आत्मन्यपि संवित्। अतः अस्त्यात्मा यद्यपि कर्त्रन्तरं नास्ति) उक्तं च 'यथाऽवगम्यन्ते अर्थाः तथा भवन्ति। न तथा, यथा नावगम्यन्ते' इति। अत्रापि ब्राह्मणं भवति 'शान्तायां वाचि' इति। व्यापृते अन्यत्र कर्तृतया कथं कर्तृकरणान्तराभावे गृह्यते इति प्रश्नः। वाग्ग्रहणं च करणान्तराभावनिदर्शनार्थम्। 'आत्मज्योतिः सम्राडिति होवाच' इत्ययमर्थः पूर्वोत्तरपक्षभङ्ग्या प्रदर्शितः। एवं च 'अगृह्यो न हि गृह्यते' इति ब्राह्मणमुपपन्नम्। ननु चात्र अग्राह्यतैवोपन्यस्ता। (उत्तरं–) ननु न श्रुतं भवता 'आत्मज्योतिः सम्राट्' इति, इदमपि किं न श्रुतं द्वयोः श्रुत्योः तदनुरोधेन (स्वयंज्योतिष्ट्वानुरोधेन) अस्य अग्रहणश्रुतिः आपेक्षिकी, न पुनः आत्मग्रहणं अन्यथा (परपुरुषाभिप्रायेण) व्याख्यायते इति। का युक्तिः? स्वयंज्योतिर्ग्रहणे गुणवादस्यासंभवात्, अग्राह्यत्वे च आपेक्षिकतया उपपत्तेः। आत्मा ज्ञातव्यो मन्तव्यः इति चाविरोधात्। एवं च स्वयंज्योतिष्ट्वमुपपद्यते इति। ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते? परप्रत्यार्थे चायमारम्भः शास्त्रकाराणां श्रुतीनां च। स्वसंविदेव अभ्युपायतां प्रतिपद्यते। यत आत्मना संवेद्यते न परेणेति। सर्वपुरुषेषु च परासंवेद्या संविदस्ति इति सिद्धा। परसंवित्प्रतिषेधमुखेन चोपदेशानां उपदेशता, तदिदं 'नेति नेति' इत्युपन्यस्तम्। ननु च सुखादयोऽपि स्वसंवेद्या एव, तेऽपि परेण नैव परस्याः संवेद्यन्ते। कथं तेभ्योऽन्यतया परस्मै उपदिष्ट आत्मा भवति। तत्र भाष्यकारेण लिङ्गावगम्यतया परेणावगम्यन्ते एवेत्युक्तम्। तदयुक्तमिव, आत्मनोऽपि प्रसङ्गात्। तत्रापि चेष्टाऽनुमानं स्वयमुपन्यस्यति। अतः प्रतिपक्षोपघाती कथं विद्वद्भिर्लिख्यते? तदिदमनुपासितगुरोश्चोद्यम्। चेष्टा हि कारणदोषनिराकरणतया उपन्यस्ता। सुखादयस्तु भ्रूभङ्गनेत्रविलासादिगम्याः। कः पुनरनयोर्विशेषः? अनेनापि (चेष्टाऽनुमानेन) परस्यैव (आत्मनः) संविदनुमीयते। अकार्यतया इति विशेषः। (चेष्टा हि नात्मकार्यम्। तेन चेष्टातो यदनुमानं, न तत्कार्यात् भ्रूभङ्गादीनां सुखादिकार्यत्वात् अनुमानं कार्यतः -। तेन चेष्टातो नात्मा प्रतीयते, भ्रूभङ्गादिभिस्तु सुखादयः प्रतीयन्ते। तेन परात्मा नानुमानतोऽपि परेणावगम्यते, सुखादयस्तु अवगम्यन्ते इति विशेषः)। कथं पुनः असंबद्धमुपलक्षयति (यदि अकार्यभूता चेष्टा आत्मनः, तदा कथं आत्मना असंबद्धा सती आत्मानमुपलक्षयति), कथं वा अनुपलक्षितः पुरुषान्तराविपर्ययः स्वात्मनि विपर्ययाशङ्कां निरस्यति। (उत्तरं–) विपर्ययाग्रहणादिति ब्रूमः। (प्रयत्नेनापि अन्विष्यमाणो यदा पुरुषान्तरे विपर्ययो नावगम्यते, तदा स्वविषये या विपर्ययाशङ्का, सा निवर्तते एव। चेष्टाऽनुमानेन हि यादृशी मम आत्मप्रतिपत्तिः, तादृश्येव अस्यापीति प्रतिपत्तिः सदृशी प्रतीयते। प्रत्येतव्यस्य चात्मनः न विपरीतस्वरूपमवगम्यते इति शङ्कानिवृत्तिः) न चाग्रहणे संबन्धिना उपयुज्यते इत्युक्तम्। तस्मादुपपन्नमिदं शाबरं वचः। उपमाऽप्यत्र कथनोपायतयैवोपन्यस्ता। कथनं च प्रमाणान्तरपूर्वकं इति न लक्षणव्यवहारयोर्विरोधः।

यदप्युच्यते 'विज्ञानमपास्य तन्निदर्श्यतां' इति, ननु च दत्तोत्तरमेतत् 'स्वसंवेद्यः स भवति' इति। दत्तोत्तरस्य च पुनरुपन्यासो नोपपद्यते। अथायमभिप्रायः, नैवेदमस्योत्तरं (इति)। कस्य तर्हि तदुत्तरम्। यदि न कस्य चिदुत्तरं, किमेतावता तदुत्तरेण भवितव्यम्?। (दूषणवादी आह–) ननु च तदनन्तराभिधानात् तदुत्तरमिति गम्यते। (एकदेश्याह–) पुनः प्रश्नाभिधानात् नोत्तरमवेहि। लिङ्गं क्रमात् बलीयः। (सिद्धान्ती आह–) तदिदमाकाशभ्रान्तम्। उभयं तस्यैवोत्तरम्। 'स्वसंवेद्यः स भवति' इतीदमपि लिङ्गादेव उत्तरमवसीयते। व्याख्यातं चास्य तद-

पाकरणसामर्थ्यम् । पुनः प्रश्न इदानीं किमर्थः ? अस्ति किं चिदवलम्बम् । ( अवलम्बमाह– ) सत्यं ' इदमहं वेद्मि ' इति संवेद्यते, नाकारान्तरकल्पना । विज्ञान-विविक्तस्य तु ग्रहणं न प्राप्नोति व्यापृतावगमात् ( विषयं जानन्नात्मा अवगम्यते इति विज्ञानरहितस्य आत्मनो ग्रहणं न प्राप्नोति इति विज्ञानस्यापि ग्रहणेन भवितव्यम् ) । विज्ञानापगमे च रूपान्तरानुपलब्धेः पुनरपि शून्यता । ( विज्ञानं हि गृह्यमाणं केन चित् रूपेण ग्राह्यं, रूपरहितस्य ग्रहणाभावात् । तत्र च नीलादिव्यतिरिक्त-रूपान्तरानुपलब्धेः तस्यैव नीलादिरूपता प्राप्नोति । ततश्च अर्थशून्यता ज्ञानानां प्राप्नोति ) । तस्मात् ( विज्ञानग्रहणनिबन्धने बाह्यार्थे अवस्थिते ) विकल्प एवायं अहंकारग्रन्थिः । ( इदं तदवलम्बनम् ) इति पुनरुपन्यासः ।

' यदि उपायमेव प्रतिषेधसि ' इति किमभिप्रेतमुत्तरवादिनः ? इदमभिप्रेतं, ग्राह्यानुकारिता हि ग्रहणस्योक्ता, न ग्राहकानुकारिता व्यापृतावस्था अनुपायतयैव ( उपायतयैव इति ऋजुपाठः ) उपन्यस्ता । कथं अनुपायं उपेयं शक्यते कथयितुमिति । तदिदमाह— ' यदि उपायमेव प्रतिषेधसि न शक्यते उपायमन्तरेण उपेतव्यमुपेतुम् । अयमेवाभ्युपायो ज्ञातव्यानामर्थानामिति । ' तद्यथा, कः शुक्लो नाम ? यत्र शुक्लत्वमस्ति ' इत्यनेन किं समर्थितम् ? इदं समर्थितं, यथा न शुक्लतामन्तरेण शुक्लोऽवगम्यते । तथा न ज्ञानमन्तरेण ज्ञेयमवगम्यते इति । ननु चैवं शुक्लतापुरःसरैव शुक्ले बुद्धिः ( एवं ज्ञानपुरःसरैव ज्ञेयेऽपि बुद्धिः ) एवं च अनभिप्रेतोऽर्थः समर्थितो भवति । न अनभिप्रेतः । एतावदनेनोक्तं, नोपायमन्तरेण उपेयानामुपेयत्वमिति । यस्य यथैवोपायत्वं तथैव तस्य, ज्ञानस्य तु उपायत्वेऽपि तत्पुरःसरा न संवित् इत्युक्तम् । तस्मात् सर्वविज्ञानानां ज्ञेयता आत्मनः स्थिता भवति ' अहमिदमदर्शं ' इति ( तस्मात् सर्वज्ञानविषयता स्थिता आत्मनः अहमिदमदर्शं इति भाष्येण ) । इयान् विशेषः, अनुमानादिष्वपि प्रत्यक्षता ( साक्षात्कारेण प्रतिभासमानत्वात् आत्मनः अनुमानादिष्वपि प्रत्यक्षतैव ) । विषयभेदाद्धि प्रमाणभेदः, न प्रमातृभेदात् । प्रमातृरूपता तु ज्ञानस्य अनाशङ्कनीयैव, अनाशङ्कितत्वात् ( केन चिद्वादिना ) । युक्तं चेदं यन्नाशङ्कितं कर्मप्रवणत्वात् कर्मणः सकर्मकस्य ( सकर्मिकायाः क्रियायाः कर्मप्रधानत्वात् ) । यदपि ज्ञातृतैव ज्ञानादृते न शक्यतेऽवगन्तुमिति, तदधीनत्वात् तदवगतेः । यदुक्तं ' न च रूपान्तरोपलब्धिः ' इति, तदपि प्रत्युक्तं ' कामं विज्ञानमपह्नूयेत नार्थः ' इति । तस्मात् सिद्धमात्मतत्त्वं इति । यत् पुनर्ब्राह्मणं ' न प्रेत्य संज्ञाऽस्ति ' इति, तत् पूर्वोत्तरभङ्ग्या स्वयमेव ब्राह्मणान्तरेण व्याख्यातम् । एवं च अर्थवादार्थता उपपन्नैवेति । ' न चैष विधिशब्दः ' इत्यपि प्रत्युक्तम् । ननु च स एषः इत्युपपन्नार्थे, ' स्वर्गं लोकं याति ' इति कथं, अधिकृतकामसिद्धेः सिद्धम् ।

यदुक्तं ' अहंकारममकारौ अनात्मनि आत्माभिमानौ ' इति, मृदितकषायाणामेवतत् कथनीयं, न कर्मसङ्गिनां इत्युपरम्यते । आह च भगवान् द्वैपायनः ' न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ' ( भगी. ३।२६ ) इति रहस्याधिकारे । तस्मान्न विवृतमत्र भाष्यकारेण भगवता वचनान्तरानुरोधात्, नाज्ञानात् इति । **बृहती–ऋजु.** पृ. १४७.

* **आत्मवादः** । यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं ' स एष यज्ञायुधी यजमानः अञ्जसा स्वर्गं लोकं याति ' इति एतत् शब्देन प्रत्यक्षं शरीरं यज्ञायुधसंयुक्तं उपदिशति इति । तदभिधीयते, अर्थवादत्वात् अस्य अन्यपरत्वात् न स्वार्थे प्रमाणान्तरविरोधो दोषः । न च विरोधोऽपि विद्यते । नहि अनेन शरीरस्य स्वर्गगमनमुच्यते, किं तर्हि ? आत्मनो यस्य एतत् शरीरं, सोऽपि हि शरीरशरीरिणोः अभेदोपचारेण शरीरस्थेन यज्ञायुधित्वेन प्रत्यक्षत्वेन च व्यपदिश्यते । आत्मनो वा स्वर्गगमनं शरीरे उपचर्यते इति नास्ति विरोधः । यजमानशब्दोऽपि तस्यैव यागस्वामित्वात् कर्तृत्वाच्च वाचकः । न च शक्यते तस्य कापिलवत् अकर्तृत्वं वक्तुं, श्रुतिविरोधात् । सर्वत्र हि कर्तृभोक्तृशब्दयोः सामानाधिकरण्यं दृश्यते । यथा अत्रैव ' यजमानः स्वर्गं लोकं याति ' इति । यथा ' य एवं विद्वानग्निं चिनुते ऋध्नोत्येव ' ' य एवं विद्वान्

द्विरात्रेण यजते स्वर्गमेव लोकमेति '। तथा उपनिषत्स्वपि 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ' इति कर्तृत्वाभिधायिन्या षष्ठ्या आत्मनः संकल्पं प्रति कर्तृत्वमुक्तम्। संभवति च सर्वगतस्यापि आत्मनो याग–ज्ञान–प्रयत्न–संकल्पादिषु साक्षादेव कर्तृत्वम्। नहि वयं स्पन्दमेव क्रियामुपगच्छामो वैशेषिकवत्, येन आत्मनः कर्तृत्वं न स्यात्। धात्वर्थमात्रस्य क्रियात्वात्। स्पन्देष्वपि प्रयोजकत्वेन अस्यैव कर्तृत्वं संभवति। प्रयत्नेन हि असौ शरीरं स्पन्दे प्रयोजयति। साक्षात्तु न संभवति, सर्वगते स्पन्दस्यासंभवात् इत्यनेन अभिप्रायेण पुराणेषु उपनिषत्सु च अकर्तृत्ववादाः। ... (सर्वथाऽपि–) प्रतिशरीरं भिन्ना एवात्मानः सर्वगता नित्याः। एवं च बद्धमुक्तादिव्यवस्थाऽपि युक्ततरा भवति। **शा.** तर्कपादे पृ. ११९–१२५.

* **आत्मवादेन** (औत्पत्तिकसूत्रस्थभाष्यगतेन) स्वर्गगमनसमर्थः आत्मा साधितः। **बाल.** पृ. ७.

* **आत्मविषयको** विचारः अपूर्वाधिकरणे वार्तिके भूयसा कृतः। सः 'अपूर्वाधिकरणं' इति बिन्दौ वार्तिके द्रष्टव्यः। **के**

**⌛ आत्मसमारोपणपक्षेऽपि अरण्योरेव उपावरोहणम्॥**

प्रत्यवरोहणं तु आत्मसमारूढस्य लौकिकेऽग्नावेव 'यस्याहिताग्नेरग्निर्मथ्यमानो न जायते, यत्रान्यं दीप्यमानं परापश्येत्तत आहृत्य होतव्यं ' इति विधिना लौकिकेऽग्नावपि होमविधानात्, पूर्वं लौकिकस्यापि मन्त्रेण प्रत्यवरोहणोत्तरं तस्यैव संस्कृतत्वेन वैदिकत्वसंभवात्। 'यस्याहिताग्नेरग्निर्मथ्यमानः ' इत्यविशेषेण मथनश्रवणेऽपि तस्यारणिसमारोपपक्षाभिप्रायेण व्यवस्थापयितुं युक्तत्वात्। 'उपवेषेणाङ्गारमपोहति ' इत्यविशेषेण श्रवणेऽपि सांनाय्यपक्षे एवोपवेषस्य व्यवस्थादर्शनात्। आत्मनि आरोपितस्य अरण्योरुपावरोहणेन मन्थने आत्मारोपस्यैव वैयर्थ्यापत्तेः, गुरुलघुपक्षयोर्विकल्पायोगात्। **इति प्राप्ते,** आत्मारोपपक्षेऽपि अरण्योरेव उपावरोहणम्। अरणिमथनस्य प्रत्यवरोहणसाधनत्वेन नित्यवच्छ्रुतस्य पाक्षिकत्वकल्पनाऽयोगात्। उपवेषस्य शाखानुनिष्पन्नत्वेन तस्य सांनाय्याभावे असंभवादेव व्यवस्थितत्वेऽपि प्रकृते तदयोगात्। प्रत्युत लौकिकाग्नौ अरण्योर्वा उपावरोहणस्य अनियमप्राप्ता मन्थनविधिबलादेव आधारनियमस्य कल्पयितुं युक्तत्वात्। प्रत्यवरोहणस्य संस्काररूपत्वाभावेन लौकिकाग्नेस्तावतैव वैदिकत्वायोगात्। यत्रान्यं दीप्यमानमिति तु होमकालातिक्रमसंभावनायां वचनेन तावन्मात्रस्य होमस्य तत्र विधानमित्यदोषः। गुरुलघ्वोरपि एकविंशतिसर्ववेदसयोरिव विकल्पो युक्त एव। तस्मादात्मसमारोपपक्षेऽपि अरण्योरेव प्रत्यवरोह्य मथनम्। या तु स्मृतिर्लौकिकेऽग्नौ प्रत्यवरोहणपरा सूत्रान्तरकाराणां, सा सुकरत्वरूपहेतुमूलिकैवेति। **संकर्ष.** ३।२।३६.

**⌛ आत्मार्थे पृथिवीं त्यजेत् इति न्यायेन** प्रधानविरोधिनां बहूनामपि गुणानां बाधनं न्याय्यम्। उपक्रमोपसंहारकरूप्यावगतवेदान्तप्रतिपाद्याद्वैतविरोधिनां बहूनामपि तत्तत्पदसमर्पितप्रवृत्तिनिमित्तभूतधर्माणां बाधाभ्युपगमात्। सूक्ष्मखदिरादिप्रधानयूपद्रव्यविरोधिनां तक्षणादीनां बहूनामपि बाधस्य पूर्वतन्त्रे (द्रव्यसंस्कार० ६।३।१८।३८ भा.) प्रतिपादनात्। **पराक्रमः.** ६।१, * न च 'आत्मार्थे०' इति, ततोऽपि (त्यजेदेकं० इत्यस्मात्) बलवता **न्यायेन** प्रधानविरोधिनां बहूनामपि गुणानां बाधनं न्याय्यम्। ५५।२.

**⌛ आत्माश्रयन्यायः।** स्वापेक्षत्वमात्माश्रयः। स चोत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा। **साहस्री.** ६०९.

* कारणदोषरहिता अविपरीता च संवित् **आत्माऽस्तित्वे** हेतुः। **बृहती.** पृ. १७९.

* **आत्रेयः** मुनिः, अनधिकृतः अग्निहोत्रादिषु शूद्रः इति मन्यते स। **भा.** ६।१।७।२६. * **आत्रेयाय** हिरण्यदानं ऋतुयाज्यावरणं च ज्योतिष्टोमे अदृष्टार्थं क्रियते। सत्रेष्वपि अदृष्टार्थं कर्तव्यमेव। आत्रेयः अत्रिगोत्रोत्पन्नः। **वि.** १०।२।२६.

* **आत्रेयीं** हत्वा भ्रूणहा भवति। आत्रेयीमापन्नगर्भामाहुः। अत्र कुक्षौ अस्याः विद्यते इत्यात्रेयी (इति पूर्वपक्षे ६।१।३।७)। न च आपन्ना आत्रेयी, गोत्रं ह्येतत्। नहि अत्रशब्दात् अयं तद्धित उत्पन्नः।

समर्थानां हि तद्धित उत्पद्यते । न च अश्वशब्दस्य सामर्थ्यमस्ति । भा. ६।१।३।९.

* **आथर्वणं सूक्तं** = 'छन्दोगाय बृहद्रथाय' इत्यादि । उत्सर्गमयूखः पृ. ९. * **आथर्वणस्य** ( वेदस्य ) त्रयीभिन्नप्रस्थानरूपता । शा. १।३।३ पृ. २७. * **आथर्वणसर्वानुक्रमण्यां** ' यत्र सर्वाणि छन्दांसि इत्युच्यते, तत्र गायत्र्यादिजगत्यन्तानि सप्त छन्दांसि जानीयात् ' इत्युक्तम् । **संकर्ष.** ४।२।२.

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथेति न्यायः** । जगत् उत्पत्तेः प्राङ् नासीत् , प्रलयात् परं च न भविष्यति, इति मध्ये दृश्यमानमपि तात्त्विकं न भवति इति । **साहस्री.** २९२.

* **आदित्यः** एक एव, न नाना । **भा.** १।१।६।१५. * आदित्यः नित्यः । ' नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुः आकाश आदित्यो वा।' १।२।१।१०.

* **'आदित्यः प्रायणीयः** पयसि चरुः' इति पयसि प्रणीताधर्माः उत्पवनादयः कर्तव्याः, न तु सांनाय्यधर्माः वत्सापाकरणादयः । ( आदित्यः अदितिदेवताकः ) **वि.** ९।४।१०. * ' आदित्यः प्रायणीयश्चरुः ' इत्यत्र चरुशब्दस्य ओदनः इत्यर्थः, न तु स्थाली । 'अदितिमोदनेन' इति वाक्यशेषात् । **शा.** १।३।५ पृ. ३५.

* ' **आदित्यो यूपः** ' इति अशक्यत्वात् यूपकार्यसाधने यजमानस्य यजमानकार्यसाधने वा यूपस्य, विध्यन्तरभावाच्च न विधिः, किंतु यूपस्तुत्यर्थः अर्थवादः । **भा.** १।४।१२।२३-३ पृ. ३६२. * 'आदित्यो यूपः ' इत्यत्र आदित्यशब्देन यूपस्य स्तुतिः सारूप्यात् । **वि.** १।४।१५.

* आदित्यश्चरुः प्रायणीये आग्नेयविकारः । **के**

**आदित्याज्जायते वृष्टिः इति न्यायः** । प्रजापतेस्तनूनां मध्ये अन्नपत्नी नाम तनूः । स चादित्यः । ' अन्नस्य पत्नी पालयित्री सूर्यमूर्तिः । आदित्यात् ० न्यायेन पालयितृत्वम् । ' ऐब्रासा. २४।६।१७.

* **आदित्यस्य** ( उदयास्तमनकाले ) अनीक्षणं कर्तव्यं इति मनसा संकल्पयति, अतः अनीक्षणस्य मानसो व्यापारः अविनाभूतः । **वा.** ४।१।३।३.

* **आदित्यानामयनप्रभृतीनि** संवत्सरसत्राणि । तेषु गवामयनस्य विध्यन्तः, न तु द्वादशाहिकः । **भा.** ८।१।११।१८.

**आदित्यगतिन्यायः** । यथा आदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्या अनुमीयते, तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात् प्रत्यक्षेण अशक्यं ग्रहीतुं तत्कृतकार्यदर्शनादनुमीयते, एवं प्रकृतेऽपीति ' स्त्रियाः ' पा० ४।१।३ इति सूत्रभाष्ये स्पष्टम् । **साहस्री.** ५७८

**आदित्यपयोऽधिकरणम्** । प्रायणीयन्यायः । ज्योतिष्टोमे प्रायणीयेष्टौ अदितिदेवताकचरुपयसि प्रदेयधर्मा न कर्तव्याः ॥

**प्रदानदर्शनं श्रपणे तद्धर्म, भोजनार्थत्वात् संसर्गाच्च मधूदकवत् । ९।४।९।३२ ॥**

**भाष्यं--** ज्योतिष्टोमे समाम्नायते ' आदित्यः प्रायणीयः पयसि चरुः' इति । तत्र संदेहः किं प्रदानार्थाः पयोधर्माः पयसि कर्तव्याः, उत नेति । यदि प्रदानार्थमेतत् पयः, ततः कर्तव्याः । अथ श्रपणार्थं, न कर्तव्याः । कथं संशयः ? सप्तमीनिर्देशाच्छ्रपणार्थं पय इति गम्यते । देवतासंबन्धस्य तु चरोरधिकरणे पयसि श्रूयमाणे वाक्यभेदाशङ्का । अतः संशयः । किं तावत् प्राप्तम् ? प्रदानार्थमिति । कथम् ? आदित्यश्चरुर्भवति , स च पयसि इत्येवं अनेकार्थविधाने वाक्यं भिद्येत । द्वावपि चेमौ अर्थौ अतो वाक्यात् अवगम्येते , अतो न वाक्यभेदः । यथा च न वाक्यभेदः, तथा आश्रयितव्यम् । तत्र अधिकरणसंबन्धे विधीयमाने देवतासंबन्धावगतिः नावकल्पेत , प्रमाणान्तरेण अप्राप्तत्वात् । देवतासंबन्धे विधीयमाने हि ये निर्दिश्येते चरुपयसी , तयोर्निर्देशसामर्थ्यात् वाक्येन संसृष्टं गम्यते , तच्च देवतया संबध्यते । तत्र अर्थात् पयआधारश्चरुर्भवति । ( पयः आधारो यस्य सः)। **आह** । वाक्येन द्वे चरुपयसी गम्येते । न तयोः संसर्गः । **उच्यते** । यदा द्वे गम्येते, तदा प्रयोगवचनेन यौगपद्यमेतयोर्गम्यते । तत्रार्थात् संसर्गः । एकत्वाच्च वाक्यस्य समुच्चयः । तेनात्र निर्देशः एव विवक्षितः, नाधिकरणसंबन्धो गम्यमानोऽपि विधीयते । एवं तु

निर्देशः क्रियते, संसृष्टे चरुपयसी कथं गम्येयातामिति। तत्र चरुसंसृष्टं पयः चरौ त्यज्यमाने नियतं त्यज्यते। तदस्य प्रदानदर्शनं भवति। पयसा श्रप्यमाणस्य तस्य प्रदानं कथं स्यादिति सप्तमी निर्दिश्यते। तस्माद्भोजनार्थे यागार्थमेतत् पयः। भोजनमिति सारूप्यात् यागमाह। तस्माच्च पयः प्रदानार्थं पयोधर्मैः संबध्यते। **आह**। न त्यागमात्रं यागः। देवतामुद्दिश्य यस्त्यागः, स यागो भवति। **उच्यते**। अयमपि अदितिदेवतामुद्दिश्य त्यागः क्रियते इति। **आह**। न पयसः अदितिर्देवता। नहि उद्देश्यमात्रेण देवता भवति। या यस्य श्रूयते, सा तस्य देवेतेति। चरोश्चैषा श्रूयते, न पयसः। **उच्यते**। उभयस्य निर्देशात्। उभयेन देवता संबध्यते संसृष्टेन मधूदकवत्। यथा 'दधि मधु घृतं धाना उदकं तत् संसृष्टं प्राजापत्यं' इति भवति। एवमेवेदं द्रष्टव्यं यद्यपि सप्तमीनिर्दिष्टं, सप्तम्यर्थस्याविधित्सितत्वात्, निर्देशमात्रस्य विवक्षितत्वात्। यथौदने दधि दत्त्वा अभ्यवहर्तव्यमिति, ओदनस्य निर्देशमात्रं विवक्ष्यते, नाधिकरणत्वम्। एवमिहापि द्रष्टव्यम्। तस्मात् प्रदानार्थं पयः। प्रदानार्थाश्च पयोधर्माः कर्तव्या इति।

**संस्कारप्रतिषेधश्च तद्वत्। ३३॥**

**भाष्यं**— एवं च कृत्वा प्रदेयसंस्काराणां केषां चित् प्रतिषेध उपपन्नो भवति। 'अयजुषा वत्सानपाकरोति' 'अपवित्रवति गां दोहयति' इति। प्राप्ते हि प्रतिषेधो न्याय्य इति।

**तत्प्रतिषेधे च तथाभूतस्य वर्जनात्। ३४॥**

**भाष्यं**— तत्प्रतिषेधे पयःप्रतिषेधे, तथाभूतमपि लोके वर्ज्यते। पयसा सिक्तं, पयः शृतं च। न चैष श्रपणार्थस्य द्रव्यस्य धर्मः। यथा श्रपणार्थं पानीयम्। तत्प्रतिषेधे, तैले पीते पानीयं न पातव्यमिति विलेप्यं यवागूश्च पीयते। न च तथाभूतस्य वर्जनात् पयो लोके एवं भवति। भोजनार्थं हि तत्। यथा हि लोके पयः, तद्वदिहापि भवितुमर्हतीति सामान्यतोदृष्टं व्यपदिष्टम्।

**अधर्मं त्वप्रदानात्, प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः। ३५॥**

(अत्र सर्वपुस्तकेषु अधर्मत्वमप्र० इत्येव पाठ उपलभ्यते। भाष्ये तु 'अधर्मत्वं तु पयसः' इति मूले मुद्रितं, 'अधर्मकं तु पयः' इति टिप्पण्यां पाठः प्रदर्शितः। अस्य तावत् सिद्धान्तसूत्रत्वात् तुशब्द आवश्यक एव। पठितश्चासौ भाष्ये। परंतु सार्वत्रिकपाठे तु-शब्दो न लभ्यते। तस्मात् सार्वत्रिकः पाठो न समीचीनः इति स्पष्टम्। एवं सति 'त्वप्रदानात्' इति लब्धम्। ततः पूर्वं तु अधर्मत्वं इति वा अधर्मं इत्येव वा पदं स्यादिति चिन्तायां, प्रथमसूत्रे पूर्वपक्षीये 'तद्धर्म' इति बहुव्रीहिणा समस्तस्य अनिच्प्रत्ययान्तस्य पदस्य पाठात् सिद्धान्तसूत्रेऽपि अधर्म इति अनिच्प्रत्ययान्तमेव पठितुं युक्तं, न तु अधर्मत्वं इति, वैरूप्यात्। सधर्म-अधर्म इति हि युक्ता विप्रतिपत्तिः, न तु 'सधर्म-अधर्मत्वं' इति। तस्मात् अत्र 'अधर्मं त्वप्रदानात्' इत्येव पाठः स्वीकृतोऽस्माभिः। विवलकरीयेऽपि अधर्मं त्वप्र० इत्येव पाठः)।

**भाष्यं**— अधर्मं तु पयः, नास्य प्रदेयधर्मा भवेयुः, इत्यर्थः। (अत्र 'अधर्मत्वं तु पयसः नास्य' इति भा-पाठः। 'अधर्मकं तु पयः नास्य' इति भा-टिप्पणी पाठः। किंच 'प्रदेयपयोधर्माः' इति भा-पाठः, 'प्रदेयधर्माः' इति तु भा-टिप्पणीपाठः। एवं सति भाष्ये अन्यादृश एव पाठः अनुमितोऽस्माभिः) कुतः? अप्रदानात्। नहि इदं प्रदीयते। ननु चरौ प्रदीयमाने प्रदायिष्यते इत्येवमर्थं पयसि श्रपणमुच्यते। नेत्याह, शृतश्चरुः कथं स्यात् इत्येवमर्थं हि तत् ज्ञायते। शृतैस्तण्डुलैः प्रयोजनमस्ति। नहि अन्यथा चरुर्भवति इति। न तु प्रत्तेन पयसा नैतद्दातव्यं श्रूयते। कथम्? प्रणीतार्थे विधानात्। **ननु** वाक्यभेदः एवं भवतीति परिहापित एष पक्षः। संसृष्टमत्र हविर्भवतीत्युक्तम्। **उच्यते**। अतुल्यत्वादसंसर्गः। अतुल्ये चरुपयसी। प्रत्यक्षतोऽधिकरणत्वेन पयः श्रूयते, प्रदेयत्वेन चरुः। पयसो यत् वाक्येन प्रदेयत्वं गम्यते, तत् अधिकरणश्रुत्या बाध्यते। यत्तु वाक्यभेदप्रसङ्ग इति, तन्न। नहि पयसि चरुरिति संबन्धो भविष्यति। कथं तर्हि? पयसि आदित्यः इति। उभौ आदित्यशब्देन संभन्त्स्येते। आदित्यः

पयसि, आदित्यश्चरुरित्युभौ चरुपयःशब्दौ आदित्यप्रधानौ इत्येकं वाक्यं भविष्यति, न वाक्यभेदप्रसङ्गः। पयआधार आदित्यो भविष्यति। तस्मान्न पयसि प्रदेयधर्मा भवितुमर्हन्ति।

**परो नित्यानुवादः स्यात्। ३६॥**

**भाष्यं**— अथ यल्लिङ्गमुक्तं, 'अयजुषा वत्सानपाकरोति' 'अपवित्रवति गां दोहयति' इति। नैतदेवं सति अस्यार्थस्य साधकं भवति। किं तर्हि? एतन्नित्यानुवादकम्। नित्यमेतमर्थं सन्तमनुवदति। नैव अप्रदेयत्वात् यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते। ननु नित्यानुवादोऽनर्थकः। उच्यते। न वयं प्रयोजनवत्तामप्रयोजनवत्तां वा विचारयामः। किमेतस्माद्वाक्यात् गम्यते इति परीक्षामहे। अस्माच्च वाक्यादिदं गम्यते, न यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते इति। तच्च अस्य अप्रदेयत्वादप्राप्तं यजुः पवित्रं चेति।

**विहितप्रतिषेधो वा। ३७॥**

**भाष्यं**— अथवा विहितस्यैव प्रतिषेधो द्रष्टव्यः। विहितं केषां चित्, यजुषा वत्सानपाकरोति, पवित्रवति गां दोग्धीति। तस्य प्रतिषेधः अर्थवानेव भवतीति।

**वर्जने गुणभावित्वात् तदुक्तप्रतिषेधात् स्यात्, कारणात् केवलाशनम्। ३८॥**

**भाष्यं**— अथ यदुक्तं, पयःप्रतिषेधे, पयसा सिक्तं पयसा संसृष्टं च वर्ज्यते इति। तत्र ब्रूमः। युक्तं हि लोके यत्संसृष्टस्य वर्जनं, तदेव हि तत्र प्रतिषिध्यते। नित्यं हि उपसर्जनीभूतं भोजने पयः प्रचरति। यच्च प्रचरति, तत्प्रतिषेधोऽर्थवान्। यन्न प्रचरति, तस्य हि अप्रसङ्गात् प्रतिषेधोऽनर्थकः। ननु केवलमपि लोके पय उपभुज्यते। उच्यते। कारणात् केवलाशनं, व्रतमौषधं वा यस्य, स केवलमुपयुङ्क्ते। न त्वेतत् प्रचुरम्। तस्मात् प्रायेण गुणभूतत्वात् पयसः पयोयुक्तमेव न भक्षयितव्यमित्येवमर्थः पयःप्रतिषेध उच्यते।

**व्रतधर्माच्च लेपवत्। ३९॥**

**भाष्यं**— अथ कस्मान्नायमन्यः परिहारः? उच्यते। व्रतवदेतत् द्रष्टव्यमिति। यथा 'ब्रह्मचारिणा मांसं न भक्षयितव्यं' इत्युक्ते दर्विगननमपि लेपं वर्जयन्ति, एवमिहापि 'पयो न पातव्यं' इत्युक्ते पयसा सिक्तं पयसा संसृष्टं वर्जयिष्यन्तीति।

**रसप्रतिषेधो वा, पुरुषधर्मत्वात्। ४०॥**

**भाष्यं**— न वैष परिहारः। परिहारान्तरनिवृत्त्यर्थो वाशब्दः। कुतः? पुरुषधर्मत्वात् व्रतस्य। अदृष्टार्थं ब्रह्मचारिणो मांसाभक्षणम्। तत्र तावदपि यो भक्षयति, यावति मांसरसमात्रं विदितं भवति, तस्यापि दोषः, न श्लेष्मप्रकोपादि किं चित् दृष्टमपेक्षते। न तु पयःप्रतिषेधे तथा। तस्मात् पूर्व एव परिहार इति।

शा— '**चरोर्दैवतया योगं पयसश्चरुसंगतिम्। विदधद् भिद्यते वाक्यमर्थद्वयविधानतः॥**' (तस्मात् पयः प्रदेयधर्मैर्वत्सापाकरणादिभिः संबध्यते)। इति प्राप्ते ब्रूमः '**चरुणाऽऽधारभूतेन पयसा च विशेषतः। द्रव्यदैवतसंबन्ध एकोऽर्थोऽत्र विधीयते॥**' तस्मान्न पयसि प्रदेयधर्माः। १०.

**सोम**— दर्शार्थोद्धरणस्य अग्निहोत्रार्थत्वाभावेन तदुद्धरणधर्मप्राप्त्यभावेऽपि पयसः प्रधानार्थतया प्रदेयधर्मप्राप्तिः इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**— सह श्रपणे प्रदानमपि सह दृश्यते, चरोः पयसा सह त्यज्यमानत्वानुभवात् 'दधि मधु घृतमापो धानाः' इत्यादिवत्। संसृष्टत्वाच्च पयसोऽपि यागार्थद्रव्यत्वात् प्रदेयधर्माः स्युः इति।

वि— 'प्रदेयधर्माः स्युर्नो वा पयसि प्रायणीययगे।, चरुवत् स्युः, पाकहेतुः सप्तम्या स्युर्न ते ततः॥'

**भाट्ट**— 'आदित्यः प्रायणीयः पयसि चरुः' इत्यत्र पयसि इत्यधिकरणत्वनिर्देशात् न पयसो हविष्ट्वं, अपि तु चरोरेव, तद्धितसामानाधिकरण्येन तस्यैव देवतासंबन्धात्। पयसस्तु श्रपणाधिकरणत्वमात्रं, अतो न तत्र प्रदेयधर्माः। प्रणीताधर्मास्तु तत्र भवन्तीति **प्राञ्चः**। वस्तुतस्तु संयवनार्थत्वात्तेषां, चरौ च तदभावात्, तेऽपि न भवन्त्येवेत्युक्तम्। प्रदेयधर्मप्राप्त्याशङ्का तु यद्यपि नान्या का चित्, तथापि आदित्यप्रकरणे 'अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयति' इत्यादिप्राप्तवत्सापाकरणाद्यनुवादेन यजुरादिपर्युदासविधिरेव उत्पत्तिवाक्ये सप्तम्यर्थाविवक्षातात्पर्यग्राहकः अभ्युदितेष्टि-

वत्। इति प्राप्ते, नित्यानुवादत्वेनापि अस्योपपत्तेर्न सप्तम्यर्थाविवक्षा। वस्तुतस्तु लौकिकसिद्धपयोग्रहणस्यैव तदा प्रसक्तेर्दोहनादिकर्तव्यताया अप्राप्तत्वेन अवश्यविधेयत्वेऽपि इतरस्य सर्वस्यैव नित्यानुवादत्वात् न सप्तम्यर्थाविवक्षा। अतो न तत्र प्रदेयधर्माः। अभ्युदितेष्टौ तु उत्तराधिकरणे वक्ष्यते।

मण्डन— 'नादित्ये पयसो धर्माः।'

शंकर— 'पयः प्रदेयं नादित्ये।' १०

* **आदित्यवत्** (आदित्यवद् यौगपद्यम्)। यत्तु एकदेशस्य सतो नानादेशेषु युगपद्दर्शनमनुपपन्नमिति, आदित्यं पश्य देवानांप्रिय ('मूर्ख' इत्यर्थः), एकः सन् अनेकदेशावस्थित इव दृश्यते,... एवं शब्देऽपि। **भा.** १।१।६।१५. * आदित्यवद् यौगपद्यम् (१।१।६।१५)। नापि एकशेषेण तन्त्रोच्चारिताः सप्तदश प्राजापत्यशब्दाः संभवन्ति शब्दैकत्वप्रत्यभिज्ञानात्। तथा चोक्तं 'आदित्यवद् यौगपद्यं' इति। अत्र एकत्वप्रत्यभिज्ञानमुक्तम्। **वा.** २।३।१३।२६. * आदित्यवद् यौगपद्यम्। यथा आदित्यस्य नानादेशेषु युगपदुपलम्भेऽपि न भेदः, तथा शब्दस्यापि इति सूत्रार्थः। **सु.** पृ. ९६०. * **आदित्यस्थाल्याः** पुनः आग्रयणस्थालीं द्विदैवत्यशेष आगच्छति। आग्रयणस्थाल्याः पात्नीवतो गृह्यते ज्योतिष्टोमे। **वि.** ३।२।१३. * **'आदित्यात्मा'** नाम साम अनृक्म्। **बाल.** पृ. ७२. * **आदित्यादयो ग्रहाः** ज्योतिष्टोमे तृतीयसवने। **वि.** ३।६।९.

* **आदेशाः** वस्तुस्वभावापेक्षिणो भवन्ति। **बृहती.** तेन वस्तुस्वभावं ज्ञात्वा तेषामर्थो वर्णनीयः। **ऋजु.** पृ. २४३.

⌛ **'आदौ यच्छ्रद्धया सिद्धं, पश्चान्न्यायेन साधितम्' इति न्यायः।** ननु 'मन्तव्यश्चोपपत्तिभिः' इतिस्मृतिगतोपपत्तिशब्दस्य 'मतिर्याविदयुक्तता' इति स्मृतिस्थायुक्तशब्दस्य 'श्रोतव्यः श्रुतिवाक्येभ्यः' इति श्रुतिशब्दस्येव सामान्यपरत्वाहानेन आदौ० इति न्यायेन युक्त्यनपेक्षश्रद्धामात्रेण प्रतिवाक्यं अयमस्य वाक्यस्यार्थः इति गुरुमुखात् वेदार्थग्रहणं श्रवणं, पश्चात् न्यायानुसंधानं मननं इति भेदसंभवे युक्तिष्वेव श्रवणमननभेदकथनायोगः इति चेन्न। (आदौ प्रथमतः यत् तत्त्वं श्रद्धया श्रद्धापूर्वकेण वेदान्तादिश्रवणेन सिद्धं ज्ञातमभूत्, तदेव पश्चात् न्यायेन न्यायविचारात्मकेन मननेन साधितं भवति इति न्यायाक्षरार्थः। **के.**) **अद्वैत.** पृ. ३।४।३२-३७.

* **आद्यं** मुख्यं, अन्त्यं जघन्यम्। मुख्यजघन्ययोः अन्यतरस्मिन् लोतव्ये जघन्यो लुप्येत, मुख्योऽनुग्रहीतव्यः। **भा.** १०।५।१।१. * **आद्यानां** ग्रहणं अन्त्यलोपः विकृतिषु एकदेशग्रहणे यावत्संख्यम्। यथा 'आश्विनं द्विकपालं' 'वैष्णवं त्रिकपालं' 'आग्नेयमष्टाकपालं' इति अष्टाकपालस्य यदाद्यं द्वयं, तस्य धर्माः आश्विने द्विकपाले ग्राह्याः इत्यादि। **के.** १०।५।१।१-६.

* **आद्यग्रहणापवादाधिकरणम्**। १०।५।५।१४। आनुपूर्व्यवतां० इत्यधिकरणे आद्यग्रहणं अन्त्यलोपः इति सिद्धान्तितं, तस्यायं 'अपूर्वासु तु संख्यासु०' (१०।५।५।१४) इति अपवादः क्रियते।

* **आधातृवत्**। यथा अन्यत्रापि ऋत्विजां संस्कारो विधीयते आधाने 'यस्तं श्वोऽग्निमाधास्यन् स्यात्, स एतां रात्रिं व्रतं चरेत्' इति 'न मांसमश्नीयात्, न स्त्रियमुपेयात्' इति वचनात् अध्वर्योर्नियमो विधीयते, तथा ज्योतिष्टोमे 'सर्वे ऋत्विजः उपवसन्ति' इति ऋत्विजामुपवासो विधीयते, तद्वत् इहापि (सत्रे) ऋत्विजामेव संस्कारो भविष्यति। (आधाता आधानकर्ता अध्वर्युः। इति पूर्वपक्षः)। **भा.** १०।६।१५।५३.

* **आधानं** अग्निचयनगते काम्ये वार्क्षे भ्राष्ट्रजे वा अग्नौ नास्ति पूर्वसिद्धत्वात्, संस्कारानुपयोगाच्च। **वि.** १२।४।९. * आधानं अग्निप्रयुक्तं न कर्मप्रयुक्तम्। सर्वकर्मार्थास्तु अग्नयः इति सर्वार्थमित्युच्यते। **भा.** ३।६।५।१५, * आधानं 'अष्टसु प्रक्रामेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्यः'। (प्रक्रामः एकपदो द्विपदो वा)। ६।१।७।२८, * आधानं आरभ्यैव यज्ञपात्राणां धारणं कर्तव्यम्। ११।३।१४।४५-४७. * आधानं गुणकर्म वैदिकम्। **बाल.** पृ. ८१. * आधानं 'चक्षुर्निमितमादध्यात्'। (इति पक्षान्तरम्। चक्षुषा दृष्ट्वैव स्थलनिश्चयः कर्तव्यः

इति ) भा. ६।१।७।३१. * आधानं न क्रत्वर्थं, न पुरुषार्थं इति तन्त्ररत्ने द्रव्यार्जनवर्णके ( ४।१।२।२ वर्णकं ३ ) उक्तम् । ' आधानं न पुरुषार्थं ' इति सिद्धान्तवार्तिकं तन्त्ररत्ने ' प्रत्यक्षेण द्रव्यार्जनस्य यथा पुरुषार्थता अवगम्यते नैवं आधानस्य ' इत्यभिप्रायं व्याख्यातम् । बाल. पृ. ८१. * आधानं न पवमानेष्टयर्थम् । भा. ३।६।४।११-१३, * आधानं-पुनराधानं प्रायश्चित्तं उभयाग्निनाशे । ६।४।८।२६-२७. * आधानं प्रकृतौ न निविशते, किंतु आधानसंस्कृतानामग्नीनां अग्निहोत्राद्युत्तरक्रतुषु विनियोगः । वि. ३।६।५. * आधानं प्रधानं, सामगानं गुणः । भा. ३।३।२।९ पृ. ८१०, * आधानं भार्यासंयुक्तं श्रूयते । ६।८।२।१३, * आधानं यथा अग्नेर्गुणः संस्कारार्थः, एवं पवमानहवींष्यपि अग्नेरेव गुणभूतानि । ३।१।१२।२२.

**⌛ आधानं सर्वकर्मणां तन्त्रं, न तु प्रतिकर्म पृथक् ॥**

**द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्, स्वकालत्वात् । ११।३।२।२ ॥**

**भाष्यं**— ' वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः ' इति श्रूयते आधानम् । तत् कर्मार्थमित्यभ्युपगमः । किं कारणं ? अफलत्वात् । ' आहवनीये जुहोति ' ' गार्हपत्ये हवींषि श्रपयति ' दक्षिणाग्नौ अन्वाहार्यश्रपणादि करोति इति तेषामग्नीनां कर्मसूपयोगः । तत्र विचार्यते किं तस्यतस्य कर्मणोऽर्थेन भेदेन आधानं कर्तव्यं, अथवा सर्वेषां ऐष्टिकपाशुकसौमिकदार्विहोमिकानां कर्मणां तन्त्रं इति । किं प्राप्तं ? द्रव्यस्य अग्नेः, अकर्मकालनिष्पत्तेः वसन्ते ग्रीष्मे शरदि इति, प्रयोगः आधानं, सर्वार्थं स्यात् । कुतः ? स्वकालत्वात् । स्वोऽस्य कालो वसन्तादिः । न कस्य चित् कर्मणः काले श्रूयते । तत्र न गृह्यते विशेषः अस्मै कर्मणे इदमाधानं नास्मै इति । अगृह्यमाणविशेषत्वाच्च तन्त्रभावो न्याय्यः । ननु आधानानन्तरं यस्य कर्मणः प्रयोगः, तदर्थं तदाधानं इति गृह्यते विशेषः । स खलु गृह्यते विशेषः, किंतु आनन्तर्यमकारणम् । यदाऽपि सर्वार्थं तदाऽपि अवश्यं कस्य चित् कर्मणः पूर्वं प्रयोगः, यौगपद्यस्यासंभवात् । तदेकेन आनन्तर्ये समो हेतुः सर्वार्थत्वे एकार्थत्वे च । समत्वादहेतुर्भवति । न वा आधानेन कर्माणि उपक्रम्यन्ते, यथा प्रणयनेन । यदि उपक्रम्येरन् ततः यदनन्तरं कर्म, तस्योपक्रमो विज्ञायेत, नोत्तरेषाम् । तेन व्यवहितत्वात् तदपवर्गे चापवृज्येत प्रणयनवत् । नह्यनेन किं चित् कर्म प्रक्रम्यते अप्राप्तकालत्वात् । अत उत्तरकाला हि कर्मश्रुतयः । किं तर्हि अनेन क्रियते ? द्रव्यमर्ज्यते ऽग्निविशेषः । यथा कश्चित् लोहं सुवर्णं वा अर्जयेत् अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति, स तेन यथाकालं इष्टं दात्रादि करोति । एवमयं अग्निविशेषमर्जयति, अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति । तत्र न गृह्यते विशेषः अस्मै कर्मणे इदमर्जितं, अस्मै नेति । सर्वेभ्यश्च युज्यते । तस्मात् सर्वार्थम् । अपिच नित्यकाम्यनैमित्तिकानि कर्माणि यथोपपत्तिकालानि । तेषां वसन्ते आहितेनाग्निना कार्यम् । न च अन्यस्मिन् क्रतौ शक्यः वसन्तेऽग्निराधातुम् । सोऽयमसंयोगो भवति भेदेनाधाने । अथ तु सर्वकर्मणामर्थे तन्त्रमाधानं, नैष विरोधो भवति । तस्मादपि तन्त्रम् ।

**शा**—आधानमग्निहोत्रादीनामङ्गं इति कृत्वा चिन्त्यते ।

**' प्रयाजादिवदङ्गत्वादावृत्तिः स्यात् प्रतिक्रियम् । आनन्तर्याद् विशेषश्च गृह्यतेऽतो न तन्त्रता ॥ स्वकालत्वाच्च तन्त्रत्वं विशेषाग्रहणाद्भवेत् । आनन्तर्याद् विशेषश्चेन्नाधानसमयेऽस्त्यसौ ॥ '**

**सोम**—पूर्वोक्तभिन्नकालत्वोपजीवनेन सिद्धान्तप्रवृत्तेः **संगतिः । सूत्रार्थस्तु**—आधानस्य स्वकालत्वात् वाचनिकवसन्तादिकालत्वात् द्रव्यस्य आधानसाध्यस्याग्नेरपि अकर्मनिष्पन्नस्यैव कर्मोपयोगित्वकल्पनात् आधानप्रयोगः सर्वार्थः स्यात् इति ।

**वि**— ' प्रतिकर्म पृथक् कार्यमाधानं यदि वा सकृत् । अन्याङ्गवत् पृथङ्, मैवं स्वकालत्वसमत्वतः ॥ '

**भाट्ट**— आधानस्य अग्निमात्राङ्गभूतस्य स्वतन्त्रप्रयोगविधिपरिगृहीतस्य उत्तरक्रत्वनङ्गत्वात् वस्तुतः तत्तत्क्रतुभेदेन अनावृत्तिरेव । अङ्गत्वं तु कृत्वाचिन्तायामपि न प्रयाजादिवत् प्रतिक्रत्वावृत्तिः, तद्वत् प्रयोगान्तःपाताभावात् स्वतन्त्रकालकत्वाच्च । स्वतन्त्रकालकृतस्य हि

आधानस्य अगृह्यमाणविशेषत्वात् सर्वार्थत्वम् । न चानन्तर्याद्विशेषः । निमित्तादिवशेन अनेकेषु क्रियमाणेषु कस्य चित् आनन्तर्यस्य चावर्जनीयत्वात् । आधानसमये कस्यापि कर्मविशेषस्य नियतत्वाभावेन अनुद्देशादेव सर्वोद्देशावगतेश्च । अतः स्वतन्त्रकालत्वादेव तन्त्रत्वम् । अत एव प्रयोगबहिर्भावेऽपि बृहस्पतिसवस्य तत्तद्वाजपेयव्यक्त्युत्तरकालत्वरूपगृह्यमाणविशेषतया प्रतिवाजपेयमावृत्तिरेव । न चैवं षण्णां यागानां प्रत्येकं दर्शपूर्णमासपदवाच्यत्वात् पूर्णमासारम्भे दर्शारम्भे च ततः पूर्वकालक्रियमाणान्वारम्भणीयाया आवृत्तिप्रसङ्गः, कालभेदेन पृथक्प्रयोगेऽपि एकफलसाधनानां षण्णा सहैव महासंकल्पादारभ्य ऐक्योपपत्तेः । स्वतन्त्रकालत्वेऽपि च यत्र प्रमाणान्तरेण व्यक्तिविशेषस्यैव उद्देश्यताऽवगमः तत्रापि गृह्यमाणशेषत्वात् आवृत्तिः इत्यपि ध्येयम् ।

**मण्डन**— ' सर्वेषां स्यात्तन्त्रमाधानमेकम् । '

**शंकर**— ' अङ्गत्वेऽप्याधानतन्त्रता । '

**आधानं सर्वकर्मार्थम् ॥**

**तत् प्रकृत्यर्थं, यथाऽन्येऽनारभ्यवादाः । ३।६। ५।१४ ॥**

**भाष्यं**— तदेतदाधानं किं प्रकृत्यर्थं, उत सर्वकर्मार्थमिति संदेहः । किं प्राप्तं ? उच्यते । तत् प्रकृत्यर्थम् । कथं ? यथा अन्ये अनारभ्यवादाः प्रकृत्यर्थाः, तेनैव हेतुना ।

**वा**— सिद्धे अनारभ्यवादत्वे खादिरत्वादिवदेव प्रकृत्यर्थत्वं, अग्निद्वारेण प्रकृत्यनुप्रवेशात् ।

**सर्वार्थं वाऽऽधानस्य स्वकालत्वात् । १५ ॥**

**भाष्यं** — सर्वकर्मार्थं वा आधानम्; कोऽर्थः? सर्वकर्मार्थं यदग्निद्रव्यं तदर्थमाधानं, न प्रकृत्यर्थम् । न प्रकृतीः प्रकृत्य श्रूयते । न च श्रुत्यादयोऽस्य सन्ति, ये अङ्गभावमुपपादयन्ति । अन्येषु अनारभ्यवादेषु अन्यतो निर्ज्ञाते अङ्गभावे ततो विचारः किं प्रकृतेरङ्गभूतानि विकृतेरिति, तस्मात्तेषु युक्तम् । इह तु अङ्गभावे न कारणमस्ति । तस्मात् अग्निप्रयुक्तमाधानं न कर्मप्रयुक्तम् । सर्वकर्मार्थास्तु अग्नयः इति सर्वार्थमित्युच्यते । अपिच अस्य स्वतः कालो विधीयते, स न विधातव्यः; यदा ज्योतिष्टोमस्य प्रयोगः तदेदं कर्तव्यम् । तदा च वसन्तः । एवं यदा दर्शपूर्णमासयोः प्रयोगः, तदा कर्तव्यम् । तदा पौर्णमासी अमावास्या वा । अप्रकृत्यर्थे तु न प्रकृतिप्रयोगे क्रियेत । तत्र कालवचनं युक्तम् । तस्मान्न प्रकृत्यर्थम् ।

**वा**— सूत्रात् तावत् इयं बुद्धिर्भवति, " यदि प्रकृतिकाले आधानं क्रियेत, ततः प्रकृत्यर्थं भवेत् । स्वकाले तु वसन्तादौ क्रियमाणं अगृह्यमाणविशेषत्वात् सर्वार्थं विज्ञायते । तथा च अनुष्ठानसाधारण्यं अस्य एकादशे वक्ष्यति ' द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् ' ( ११।३।२।२ ) इति । प्रकृत्यर्थत्वे च दर्शपूर्णमासज्योतिष्टोमार्थमेतद्भवेत् । तत्र च प्रधानवशवर्तित्वात् वसन्ते पौर्णमास्यमावास्ययोश्च क्रियेत । तथा च सति वसन्ते पौर्णमास्याममावास्यायामादधीत इत्येतानि वचनानि अनर्थकानि भवेयुः । तस्मात् सर्वार्थत्वं" इति । **न तु एतद्युक्तम्** । नहि आधानस्य प्रकृत्या विकृत्या वा संबन्धे किं चित् प्रमाणमस्ति । प्रकरणे सति यत् पवमानेष्ट्यर्थं न जातं, तत् विनैव श्रुत्यादिषट्केन अन्यकर्मार्थं भविष्यति इति कुत एतत् ? ननु एवं सति पूर्वाधिकरणेनैव गतमेतत् । सत्यं गच्छेत्, यदि पवमानेष्टिवत् दर्शपूर्णमासादीन्यपि निष्फलानि भवेयुः । तेषां तु फलवत्त्वात् ' गुणानां च परार्थत्वात् ' ( ३।१।१२।२२ ) इत्येष न्यायो नास्ति, इति शक्यं अग्निद्वारेण कर्माङ्गत्वं कल्पयितुम् । निष्फलस्याधानस्य अवश्यकल्पनीये प्रयोजने अग्निद्वारेण खादिरत्वादिवत् कर्मार्थत्वमापद्यते । शक्नुवन्ति हि प्रयोगमध्यस्था बह्वयः कर्माण्युपस्थापयितुम् । यथैव प्रोक्षणादीनां व्रीह्यादिस्वरूपमतिक्रम्य खादिरत्वादीनां च स्रुवादिस्वरूपं, कर्मापूर्वप्रयुक्तत्वं कल्पितं, तथा आधानस्यापि अग्निस्वरूपातिक्रमेण कल्पयितव्यम् । यदि च अग्निस्वरूपमात्रप्रयुक्तमेव आधानं भवेत्, ततः कर्माणि अनाहितेनापि अग्निना सिध्येयुः । तैश्च पुरुषस्य सगुणैः कार्यं नाग्निभिः । तेन अवश्यंभाविनि कर्मसंबन्धे प्रकृत्यर्थत्वं अद्विरुक्तत्वात् उपन्यस्तम् । यत्तु स्वकालत्वं, तत् उपदेशातिदेशप्राप्तस्य यूपच्छेदनवत् प्रयोगसाधारण्यार्थं, इति न सर्वार्थत्वं गमयति । यदपि वसन्तादिग्रहण, तदपि अप्राप्तविषयं

अर्थवद्भविष्यति। नहि दर्शपूर्णमासार्थस्य आधानस्य वसन्तकालत्वं प्राप्तं प्रत्यर्धमासं प्रयोगप्रसक्तेः। नापि अग्निहोत्रेतरदर्विहोमार्थस्य पौर्णमास्यमावास्याकालप्राप्तिः। न च प्रयोगसाधारण्यं स्वकालवचनादृते सिध्यति, इति नानर्थकत्वम्। अत एवं व्याचष्टे ( भाष्यकारः ) न कस्य चित् कर्मणः अङ्गमाधानम्। किं तर्हि ? द्वितीया-संयोगात् अग्न्यर्थमेव। ते तु 'अग्नयश्च स्वकालत्वात्' ( ३।७।३९ सू. ) इत्यनेन सर्वार्था भविष्यन्ति इति तद्-द्वारेण सर्वार्थत्वमित्युच्यते। स्वकालत्वात् इत्यपि स्वातन्त्र्याम्नानात् इत्यर्थः। यत्तु इतरानारभ्य-वादवदिति, तत्राभिधीयते। '**सिद्धेऽङ्गत्वे ततस्तेषां किमर्थत्वं विचारितम्। न तु कर्माङ्गभावे हि प्रमाणं किं चिदस्ति ते॥**' खादिरत्वादीनि स्रुवा-दिभिः संयुक्तान्यपि तत्स्वरूपप्रयुक्तत्वं न प्रतिपद्यन्ते। स्रुवादिशब्दानां आकृतिवचनत्वात्, विनाऽपि खादि-रत्वादिभिः उपपत्तेश्च। अन्यादिरोऽपि हि तदाकारयुक्तः स्रुवशब्दवाच्यो भवत्येव। तत्र प्राक् कर्मार्थत्वात् न जातिनियमस्य प्रयोजनमस्ति इति युक्तं स्वरूपातिलङ्घनम्। इह तु आहवनीयादिशब्दानां संस्कारनिमित्त-त्वात् न आधानाद्विना प्रवृत्तिरुपलभ्यते इति शब्दप्रवृत्ति-निमित्तत्वेनैव अर्थवत्ता विज्ञायते। यत्त तेन विनाऽपि कर्माणि अविगुणान्येव भवेयुरिति, नैव तदभावेन तत्कृतं वैगुण्यं भवति, किं तर्हि ? आहवनीयाद्यसंभवकृतम्। यदि हि आधानमकुर्वतः तावन्मात्रमेव न स्यात् ततो नैव वैगुण्यं भवेत्। तदभावे तु आहवनीयादयोऽपि न भवन्ति। ते च एकान्तेन कर्मणामङ्गम्। अतस्तत्कृता वैगुण्यप्रसक्तिः। यदि च अग्निमात्रेण कर्माणि संबध्येरन् ततः तत्स्वरूपस्य अन्तरेणाप्याधानं निष्पत्तेः अतत्प्रयु-क्तता भवेत्। 'यदाहवनीये जुहोति' इत्येवमादिचोद-नार्थैः पुनः न कदा चित् आधानमन्तरेण संभाव्यते। तेन कर्माणि कुर्वता तदपि अवश्यं कर्तव्यम्। तस्मादग्न्यर्थम्। यत्तु 'द्रव्यस्याकर्मकालनिष्पत्तेः' ( ११।३।२।२ ) इति, सा कृत्वाचिन्ता इति तत्रैव वक्ष्यते। एतेन पव-मानेष्टीनामपि अग्न्यर्थत्वं व्याख्यातम्। आशङ्काशेषश्च उत्तरेणाधिकरणेन व्यावर्त्यते।

शा- '**स्थितेऽनारभ्यवादत्वे संप्रत्येतद्विचार्यते। किमाधानं प्रकृत्यर्थमग्निमात्रार्थमेव वा॥ तत्र पर्णमयीन्यायात् प्राप्ता प्रकृतिगामिता। उच्यते श्रुतिसंयोगादाधानस्याग्निशेषता। प्रसिद्धक्रतु-शेषत्वं प्रकृतावुपदिश्यते॥ पर्णत्वमन्यथा दोषो द्विरुक्तिः स्यादितीह तु। न कस्य चित् क्रतोरङ्ग-मिदं श्रुत्याद्यभावतः। वाक्यं लक्षणया स्याच्चेन्ना-ग्न्यङ्गत्वोपपत्तितः॥**'

**सोम**—— अवसरसंगतिः। अत्रेदमवधेयम्। जुहू-द्वारा पर्णमयत्वस्येव अग्निद्वारा आधानस्य क्रत्वर्थत्वेऽपि न प्रकृतिमात्रार्थत्वम्। यत्र विकृतिषु प्रत्यक्षोपदिष्टो होमः तादृशविकृतिसाधारण्यस्य अग्नीनां अग्निसपादे वक्ष्यमाणतया तद्द्वारस्याधानस्यापि तद्वदेव साधारण्य-संभवात्। ततश्च यत्राग्नय उपदेशेन प्राप्नुवन्ति तदर्थ-त्वेन पूर्वपक्षः प्रवर्तयितुं युक्तो, न तु प्रकृत्यर्थत्वेनेति। **प्रयोजनं** पूर्वपक्षे आधानस्य क्रत्वर्थत्वेऽपि न क्रतु-कालत्वं वसन्तादिकालविधानेन सर्वक्रतुप्रयोगात् बहि-रेवानुष्ठेयत्वात्। ततश्च आधानानुष्ठानमात्रेण सर्वेषां प्रकृतिविकृतियागानां काम्यनित्यनैमित्तिकानामुपक्रान्त-त्वात् काम्यानामपि अवश्यानुष्ठेयत्वप्रसङ्गः, सिद्धान्ते तु नेति।

**वि**— 'अधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम्।, संस्कृताग्निप्रनाड्यैतत् पर्णवत् प्रकृतौ स्थितम्॥, लौकिकाकारमात्रत्वे विफलत्वात् क्रतौ युतिः। पर्णस्या-हवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता॥'

**भाट्ट**— तदाधानं अग्निवदेव पर्णतान्यायेन अव्यभि-चरितक्रतुसंबन्ध्यग्न्यङ्गत्वेन क्रत्वङ्गत्वावगतेः द्विरुक्तता-दोषभियैव प्रकृत्यर्थम्। **इति प्राप्ते**, नाधानस्य क्रत्वङ्गत्वं प्रमाणाभावात्। जुह्वादयो हि आकृतिविशेषरूपाः पर्णताऽऽदिव्यतिरेकेणापि काष्ठान्तरेण जायमानाः आनर्थक्यभयात् युक्तं यत् पर्णताऽऽदेः स्वजन्यापूर्वार्थतां बोधयन्तीति। आहवनीयाद्यग्नयस्तु अदृष्टविशेषरूपाः आधानं विना उत्पत्तौ प्रमाणाभावात् आनर्थक्याभावेन स्वस्वरूपार्थत्वमेव आधानस्यावबोधयन्ति। अत एव तत्र नाग्निशब्दे अपूर्वसाधनत्वेलक्षणा। अतः क्रत्वर्थे-

त्वस्यैवाभावात् प्रकृत्यर्थता दूरापास्तैव। न चैवं आधानाकरणे क्रतुवैगुण्यानापत्तिः, अग्न्यभावेन वैगुण्योपपत्तेः। वस्तुतस्तु लाघवेन क्रतुविधीनां आधानसिद्धाग्निग्रहणेनैव उपपत्तौ स्वयमग्निप्रयोजकत्वाभावात् अनाहिताग्नेः अनधिकार एव क्रतुषु, इति वैगुण्याशङ्का दूरापास्तैव। एवं पवमानेष्टीनामपि अक्रत्वर्थत्वं व्याख्यातम्। **प्रयोजनं** पूर्वपक्षे आधानस्य कालान्तरेणाम्नानस्य भिन्नप्रयोगविधिविहिततया सर्वार्थे सकृदनुष्ठानेऽपि बृहस्पतिसवादिवत् अधिकारिविशेषणत्वे प्रमाणाभावात् नित्ये आधानं विनाऽप्यनुष्ठानं यथाशक्तिप्रयोगे। सिद्धान्ते तु अधिकारसंपादकत्वात् नेति।

**मण्डन**— 'अग्न्यर्थमेतन्न गुणः क्रतूनाम्।' एतत् आधानम्।

**शंकर**— 'न क्रत्वङ्गं तदग्न्यङ्गम्।'

* **आधानेन** अग्नेः सकृत् संस्कृतस्य न पुनः कर्मणि संस्कारः एतस्य क्रियते। **भा.** ११।३।११।२५,

* आधानेन अग्निविशेषमर्जयति, अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति। तत्र न गृह्यते विशेषः, अस्मै कर्मणे इदमर्जितं अस्मै नेति। सर्वेभ्यश्च युज्यते, तस्मात् सर्वार्थम्। ११।३।२।२.

**आधानेन पवमानेष्टिभिश्च संस्कृतेष्वग्निषु कर्माणि कर्तव्यानि॥**

**संस्कृतेषु कर्माणि संस्काराणां तदर्थत्वात्।** ५।३।९।२१॥

**भाष्यं**— अग्न्याधेये सन्ति पवमानेष्टयः, सन्ति च नियतानि कर्माणि अग्निहोत्रादीनि, अनियतानि च ऐन्द्राग्नादीनि। तत्र संदेहः किं पवमानेष्टीः कृत्वा कर्माणि प्रतिपत्तव्यानि, उत आहितमात्रेषु अग्निषु इति। किं प्राप्तं? आहितमात्रेषु इति। कुतः? आहितमात्रेषु असौ अग्निषु कर्माणि कर्तुं समर्थो भवति। यथा 'आहिताग्निर्न क्लिन्नं दारु अभ्यादध्यात्' इत्येवमादीनि आहिताग्निव्रतानि आहितमात्रेष्वेव भवन्ति इति दर्शयति। 'अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्ति' इत्याहितमात्रेषु अग्निहोत्रं दर्शयति। तस्मान्न पवमानेष्टयः प्रतीक्षितव्याः इति। एवं प्राप्ते ब्रूमः। पवमानेष्टिभिः संस्कृतेषु अग्निषु कर्माणि वर्तेरन्। कुतः? संस्काराणां तदर्थत्वात्। संस्कारशब्दा एते आहवनीयादयः। संस्कारस्य कस्य चिदभावे नाहवनीयादिषु प्रतिपत्तिः स्यात्। तस्मात् संस्कृतेषु अग्निषु कर्माणीति।

**टुप्**— (पूर्वपक्षमाह–) प्रागाधानात् कर्मसु अयोग्यः (पुरुषो मा नाम तानि कुर्यात्), कृते (तु) आधाने अग्नीनां विद्यमानत्वात् सर्वकर्मभिः (योग्यत्वात्) अधिक्रियते। (किंच) 'अग्निं वै सृष्टं (–अग्निहोत्रेणानुद्रवन्ति इति) अग्निमुत्पाद्य अग्निहोत्रेण अनुद्रववचनं आधानानन्तरमेव अग्निहोत्रं दर्शयति। (तस्मादाहितमात्रे स्युः। अत्र निदर्शनमाह–) 'आहिताग्निर्न क्लिन्नं दारु अभ्यादधीत' इत्यनन्तरमेव एते (धर्माः) प्राप्नुवन्ति, एवं कर्माण्यपि इति। **एवं प्राप्ते ब्रूमः**। पवमानेष्ट्यादिभिः (समुच्चितैः) आहवनीयादयः उत्पाद्यन्ते, उत्पन्नाश्च सन्तो यागाङ्गतां प्रतिपत्तुं शक्नुवन्ति (नानुत्पन्नाः)। अतः (अकृतेषु हविःषु) अग्न्यभावात् अभावः कर्मणाम्। (यत्तु निदर्शनमुक्तं, तत्राह–) 'न क्लिन्नं दारु अभ्यादधीत' इति पुरुषसंयोगेन श्रवणात् आहिताग्नित्वेन निमित्तेन (निमित्तात्–) अनन्तरमेव भवन्ति (आहिताग्नित्वेन निमित्तेन पुरुषसंयोगेन श्रवणात् इत्यन्वयः), निमित्तस्य विद्यमानत्वात्। (यत्तु लिङ्गमुक्तं तत्राह–) 'अग्निहोत्रेणानुद्रवन्ति' इति (तूष्णींहोमस्तुतिः इति परेण संबन्धः। तदेकवाक्यत्वं दर्शयति–) 'यद् यजुषा जुहुयात् अयथापूर्वमाहुतीः जुहुयात्' (कुर्यात् इति मुद्रिते रत्ने च पाठः भाष्ये तु जुहुयात् इत्येव। वाक्यं व्याचष्टे–) पवमानेष्ट्यनन्तरं आहुतीनां करणात् (कर्तुं योग्यत्वात्। ततः पूर्वं आधानानन्तरमेव क्रियमाणास्ताः–) अयथापूर्वं कृताः स्युः। ('यन्न जुहुयात्, अग्निः परा पतेत्' इत्यर्थवादं दर्शयति–) यदि (हविर्भ्यः) पूर्वं (आहुतयो–) न क्रियेरन् (ततोऽस्य) अग्निरुद्वायेत्। तस्मात् ('तूष्णीमेव होतव्यं' इति) तूष्णींहोमस्तुतिरियम्। स च (तूष्णींहोमः) अग्न्यर्थः। (अतः पवमानहविर्वत् असति आहवनीये एव प्रवर्तते। **प्रासङ्गिकं किं चिन्निरूप**

यति–) किमस्मिन् (तूष्णींहोमे) अग्निहोत्रधर्माः प्राप्यन्ते न वेति। केचिदाहुः, अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते यथा कौण्डपायिनामयने ( मासमग्निहोत्रं जुहोति इति ) । तदयुक्तम् । 'तूष्णीं होतव्यं' इत्यनेन (अत्र) कर्म विधीयते । तस्मिंश्च विधिवाक्ये अग्निहोत्रशब्दो नास्ति, येन धर्मातिदेशको भवेत् । ( इतश्च न धर्मातिदेशक इत्याह–) तूष्णींहोमः अग्निसंधुक्षणार्थे क्रियते (अग्निसंस्कारार्थम् । ततः किं भवति–) एतदतो भवति, अग्न्यर्थो होमः इत्यवगते यः अग्निहोत्रशब्दः अत्र वाक्ये अर्थवादत्वेन प्रवृत्तः, स योगेन प्रवर्तते अग्नये होत्रमस्मिन् इति । अतो योगस्य विद्यमानत्वात् नास्ति नामधेयम् । ( नहि दण्ड्यादिपदानि नामधेयमित्युच्यते ) नामधेयाभावाच्च अतिदेशो नास्ति ।

**अनन्तरं व्रतं तद्भूतत्वात् । २२ ॥**

**भाष्यं**— यत्तु 'आहिताग्निर्न क्लिन्नं दारु अभ्यादध्यात्' इत्येवमादि, युक्तं तत्र, यदाहितमात्रेषु क्रियते आहिताग्नेः, तद् व्रतमुच्यते । स च आहितमात्रेषु आहिताग्निः संवृत्तः । तस्मात् अनन्तरं व्रतं स्यात्, तद्भूतत्वात् ।

**पूर्वं च लिङ्गदर्शनात् । २३ ॥**

**भाष्यं**— अथ यदुक्तं आहितमात्रेषु अग्निहोत्रं दर्शयति पूर्वमिष्टिभ्यः इति, तत्र कः परिहारः ? इति आभाषाऽन्तं सूत्रम् ।

**अर्थवादो वाऽर्थस्य विद्यमानत्वात् । २४ ॥**

**भाष्यं**— अर्थवाद एषः । कुतः ? अर्थस्य विद्यमानत्वात् । विद्यमानो हि तत्र अन्य एव अग्निहोत्रहोमः । कथं ? 'होतव्यमग्निहोत्रं, न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यद् यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात्, यदि न जुहुयादग्निः परा पतेत्, तूष्णीमेव होतव्यं' इति । तस्य तूष्णींहोमस्य प्रशंसार्थोऽयमर्थवादः ।

**न्यायविप्रतिषेधाच्च । २५ ॥**

**भाष्यं**— न्यायविप्रतिषेधश्च भवेत् यदि अनन्तरं अग्निहोत्रहोमादयः स्युः । यः पूर्वोक्तो न्यायः, स विप्रतिषिध्येत 'न वा तासां तदर्थत्वात्' ( ३।६।४।१२ ) इति । तस्मात् संस्कृते कर्माणि भवेयुरिति ।

**शा** — आधानप्रकरणे पवमानहवींषि विहितानि । तानि आधानाद्विप्रकृष्यन्ते 'द्वादशसु रात्रीषु अनु निर्वपेत्' इत्यादिभिः ।

**सोम** --पूरणार्थकत्ववचनात् आगन्तूनां लोकंपृणाऽऽनन्तर्येऽपि इह वचनाभावान् न पवमानहविरानन्तर्यं इति प्रत्यवस्थानात् **संगतिः** । **ननु** भाष्यकारमते पवमानहविषामपि अग्निनिष्पादकत्वस्य, वार्तिककारमते तेषामाधानाङ्गत्वस्य च तृतीये प्रतिपादनात् मतद्वयेऽपि आधानस्य पवमानहविःसापेक्षत्वात् इह कथं निरपेक्षत्वालम्बनेन पूर्वपक्षप्रवृत्तिः इति चेत् । **उच्यते** । भाष्यकारमते पवमानहविषामपि अग्न्युत्पादकत्वेऽपि आधानेन विकल्पसंभवात् । वार्तिककारमतेऽपि यथा बृहस्पतिसवस्य वाजपेयाङ्गत्वेऽपि स्वकाले वसन्ते कर्तव्यबृहस्पतिसवात् पूर्वमेव शरदि वाजपेयानुष्ठानमात्रेण तत्साध्यं परमापूर्वमुत्पद्यते, उत्पन्नं च परमापूर्वं बृहस्पतिसवेन पश्चात् फलमुखीक्रियते, तथेहापि आधानमात्रादेव अग्नयो निष्पद्यन्ते, पवमानहविर्भिस्तु तेषां फलवत्त्वसंपादनमात्रं इत्यपि संभवात् मतद्वयेऽपि पूर्वपक्षप्रवृत्तिरप्रत्यूहैव ।

**वि** — 'आहिते पवमानेष्टिसंस्कृते वाऽग्निहोत्रकम् ।, आधानेनाग्निनिष्पत्तेस्तन्मात्रे कर्म संभवेत् ॥, आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता । समुच्चितस्य हेतुत्वात् कर्म स्यादिष्टिसंस्कृते ॥'

**भाट्ट**-- आधानस्य नैरपेक्ष्येण उत्पत्तिवाक्ये अग्निनिष्पादकत्वावगमात् आधानमात्रेणैव अग्निनिष्पत्तिः इति सिद्धत्वात् अग्नीनां आधानमात्रानन्तरमेव उत्तरक्रतूनां प्रवृत्तिः । पवमानेष्टयस्तु यदि **भाष्यकारमतात्** अग्न्यङ्गं, तदा सिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया संमार्गवत् संस्कारविशेषाधायकाः । यदि तु **वार्तिककारमतात्** आधानाङ्गं, तदा बृहस्पतिसववत् एता अग्नीनां स्थापिकाः इति केषां चित् क्रतूनां आधानानन्तरमेव करणेऽपि न पवमानेष्टीनां वैयर्थ्यापत्तिः । 'अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्ति' इति पवमानेष्टिभ्यः

प्रागेव अग्निहोत्रप्रवृत्तिं दर्शयति । अतश्च 'आहिताग्निर्न क्लिन्नं दारु अभ्यादध्यात्' इत्याद्याहिताग्निव्रतवदेव आधानोत्तरमेव क्रतुप्रवृत्तिः । **इति प्राप्ते, भाष्यकारमते** तावत् तत्तद्वाक्ये नैरपेक्ष्यश्रवणेऽपि एकस्योत्पादकत्वं, इतरस्य संस्कारकत्वं इत्यत्र प्रमाणाभावः । प्रत्युत पवमानेष्टीनामेव स्वविनियोजकवाक्ये आहवनीयोत्पादकत्वावगतेः आधानस्य गुणवाक्यावगताहवनीयोत्पादकत्वं विलम्बोपस्थितिकम् । न चैवं उभयोरुत्पादकयोर्विकल्पः, 'सद्यो निर्वपेत्' 'द्वादशसु रात्रिषु अनुनिर्वपेत्' इत्यादिकालविधिवशादेव समुच्चयसिद्धेः । **वार्तिकमते** तु साङ्गस्यैव आधानस्य उत्पादकत्वात् न तदभावे अग्निसिद्धिः । न च स्थापकत्वं बृहस्पतिसववत् पवमानेष्टीनां, आधानप्रयोगबहिर्भावेऽपि तद्वदत्र आधानकरणकभावनाबहिर्भावस्याश्रुतत्वेन स्थापकत्वकल्पनाऽनुपपत्तेः । अतः पवमानेष्टिव्यतिरेकेण आहवनीयनिष्पत्तेरभावात् तदनन्तरमेव अग्निहोत्रादीनि । आहिताग्निव्रतेषु तु आधानोत्तरमेव पुरुषस्य आहिताग्निपदवाच्यत्वोपपत्तेः तदनन्तरं करणम् । यत्तु निदर्शनमुक्तं, तत् तूष्णींहोमस्य आधानाङ्गभूतस्य स्तुत्यर्थं, नाग्निहोत्रस्य पूर्वप्रवृत्तिसूचकम् । तूष्णींहोमो हि नाग्निहोत्रहोमः, प्रमाणाभावात् । नापि अग्निहोत्रधर्मकः, अर्थवादगतस्य नाम्नः अनतिदेशकत्वात् । एतद्धोमस्यापि आधानद्वारा अग्निप्रयोजकस्य अग्निसंबन्धित्वाविशेषात्, प्रायणीयादिपदवत् अनतिदेशकत्वाच्च । अतः अपूर्वस्यैव होमस्य इयं स्तुतिः इति नाग्निहोत्रस्य पूर्वप्रवृत्तौ लिङ्गम् । **भिन्नप्रयोगपरिगृहीतानामपि** च पौर्वापर्यमात्रं प्रसङ्गात् **निरूपितम्** । व्यवहिताव्यवहितसाधारण्येन पौर्वापर्यमेव अध्यायार्थ इत्यपि ध्येयम् ।

**मण्डन—** 'सपावमानेऽग्नौ कर्म ।'

**शंकर—** 'अग्निहोत्रादीष्टितः परम् ।' अग्निहोत्रादि इष्टितः परं कर्तव्यम् ।

**‘आधानस्याप्राप्तकालत्वात्’ । इति न्यायः ।**

'अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात्' इति । 'अवकीर्णिपश्वधिकरणं' इति बिन्दौ द्रष्टव्यम् । (६।८।४।२२) विवाहात् प्राक् ब्रह्मचारिणः आधानं न संभवति आधानकालस्य तदानीमप्राप्तत्वात् इति न्यायार्थः । **के.**

* **आधानस्य** आवश्यकता अवसीयते 'नानाहिताग्निर्म्रियेत' इति वाक्यात् । **सु.** पृ. ९१५. * आधानस्य इष्टिपूर्वत्वपक्षे ब्राह्मणस्य पौर्णमासीगताग्नीषोमीयस्य हविषः सोमादूर्ध्वमुत्कर्षः । पौर्णमासेष्टेरेव उत्कर्षः इत्येकदेशिमतम् । **भा.** ५।४।४।१०.

**आधानस्य इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः ॥**

**वचनादिष्टिपूर्वत्वम्** । ५।४।३।५ ॥

**भाष्यं—** (आधानस्य–) इष्टिपूर्वत्वं समाम्नातम् । तत्र संदेहः किमिष्टिपूर्वत्वं सोमपूर्वत्वं वा विकल्प्यते, अथवा इष्टिपूर्वत्वमेवेति । किं प्राप्तं ? इष्टिपूर्वत्वमेव स्यात् । कुतः ? वचनात् । वचनमिदं भवति, 'एष वै देवरथो यद् दर्शपूर्णमासौ, यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यति' (रथेन स्पष्टे वरे श्रेष्ठे देवानामवसाने स्थाने अवस्यति समाप्यते तिष्ठतीत्यर्थः) । इति । नास्ति वचनस्यातिभारः । तस्मात् इष्टिपूर्वत्वमेवेति ।

**सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् तदर्थेनानर्थकं हि स्यात्** । ६ ॥

**भाष्यं** — इष्टिपूर्वत्वमित्येतत् गृह्णीमः । किंतु सोमश्चैकेषां पूर्वो दर्शपूर्णमासयोः स्यात् । कुतः ? अग्न्याधेयस्य ऋतुनक्षत्रातिक्रमवचनात् । 'यः सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तुं प्रतीक्षेत न नक्षत्रं' इति । यः सोमयागं कर्तुमादधीत, स न प्रतीक्षेत नक्षत्रं, नापि ऋतुं, तावत्येव आदधीतेति आनन्तर्यमुच्यते । इतरथा ऋतुनक्षत्रातिक्रमवचनं अनर्थकं स्यात् । आनन्तर्ये अनपेक्ष्यमाणे यस्यैव ऋतुनक्षत्रे उक्ते तस्यैव तयोरनादरः कीर्तितः स्यात् । तस्मादस्ति सोमाधानयोरानन्तर्यमिति । अपि च विस्पष्टा चाद्यतनी विभक्तिः 'सोमेन यक्ष्यमाणः' इति । यदा सा इष्टिपूर्वत्वमनुज्ञाय विवक्ष्यते, न तदा अद्यतनकालविवक्षा, तत्रायं शब्दो विप्रतिषिध्येत । तस्मात् आनन्तर्यविवक्षा इत्यवगम्यते ।

**टुप्** — प्रागपि दर्शपूर्णमासाभ्यां कर्तव्यः सोमः । कथं ? 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' [णोऽग्नि-

माद०इति रत्नपाठ: ] इति हि (आधानोत्तरकाले सोम:) श्रूयते । स च ( सोमस्य कर्मान्तरेभ्य: ) असाधारण्ये ( सति ) उपपद्यते । यदि आधानोत्तरकाले ( प्रागेव दर्शपूर्णमासाभ्यां ) सोमेन यजेत, न दर्शपूर्णमासोत्तरकाले, एवं ( सति ) असाधारण: संबन्ध: ( स्यात् ), इतरथा दर्शपूर्णमासपशुबन्धादिभि: सर्वैरेव ( पुरुषो ) यक्ष्यते । तत्र सोमेन यक्ष्यमाण इति विशेषण नावकल्पेत । न चैवंविध: ( पुरुष: ) अस्ति, य: सोमेन नैव यक्ष्यते, यदपेक्षया ( सोमेन यक्ष्यमाण इति ) विशेषणं भवेत् । नित्यो हि सोम: । ( सूत्रस्यार्थमाह– ) ऋतुनक्षत्रप्रतिषेधश्च सोमाधानानन्तर्ये एव घटते ( नान्यथा ) । सोमस्य हि काल: ( 'वसन्ते ज्योतिष्टोमेन यजेत' इति ) विहित: । स यदि प्रतिषिध्येत, किमर्थं तस्य विधानम् । यदि (तु) आधानोत्तरकालस्य सोमस्य ( नर्तुं पृच्छेत् इति ) कालप्रतिषेध:, ततो दर्शपूर्णमासोत्तरकाले ( सोमे 'दर्शपूर्णमासौ इष्ट्वा सोमेन यजेत' इति विहिते ) वसन्तकालविधानं कृतार्थं भवति । ( उपसंहरति–– ) तस्मात् सोमस्य द्वौ कालौ प्राक् दर्शपूर्णमासयो:, ऊर्ध्वं च । ( एवं स्थिते अधिकरणे किमाधानानन्तरं अन्यत् किं चिदकृत्वा सोम एव कर्तव्य:, उत अन्तराऽपि किं चिद्भवत्येव इति संशये, न किं चित् कर्तव्यं आनन्तर्यावगमात् सोमाधानयो: इति प्राप्ते पक्षान्तरमाह– ) न च आधानानन्तरं अन्यत् न किं चिदनुष्ठेयं सोम एव कर्तव्य: ( इति मन्तव्यं ), किं तर्हि पवमानेष्टि--व्रात्यपशु–अग्निहोत्राणि कृत्वाऽपि सोमो दर्शपूर्णमासयो: प्राक् कर्तव्य: इत्येतदपेक्षया 'सोमेन यक्ष्यमाण:' इत्यसाधारण्यमुपपद्यते एव । ( तदिदं भाष्यकारो न मृष्यतीत्याह– ) यथा तु भाष्यकारेणोक्तं, तथा व्रात्यपशु: सोमाङ्गत्वात् भवति, पवमानेष्टयोऽपि अग्निसंस्कारत्वात् भवन्त्येव । अग्निहोत्रं तु नास्ति । ( ये तु इष्टिपूर्वकत्वपक्षे एव व्रात्यपशुं मन्यन्ते, तेषां किं मूलमिति न विद्म: । रत्न. )

**तदर्थवचनाच्च नाविशेषात् तदर्थत्वम् । ७ ॥**

**भाष्यं––** इतश्च सोमाधानयो: आनन्तर्यम् । कुत: ? तदर्थवचनात् । 'य: सोमेन यक्ष्यमाणोऽग्निमादधीत' इति च सर्वैरप्यसौ यक्ष्यमाण: अग्निमाधत्ते सोमेन अग्निहोत्रादिभिश्च । नानति सोमस्य विशेषे सोमार्थता स्यात् । अयमसौ विशेष: स्यात्, यत् आनन्तर्यं सोमाधानयोरिति ।

**अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशादानन्तर्याद् विशङ्का स्यात् । ८ ॥**

**भाष्यं––** सोमेन अयक्ष्यमाणस्य च पवमानहविषां कालो निर्दिश्यते । 'य: सोमेनायक्ष्यमाणोऽग्निमादधीत, स पुरा संवत्सराद्धवींषि निर्वपेत्' इति । न खलु कश्चिदयक्ष्यमाण:, सर्वस्य विहितत्वात् । तस्मात् अनन्तरमयक्ष्यमाण इति गम्यते ।

**इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम् । ९ ॥**

**भाष्यं––** इदं प्रयोजनसूत्रं वर्ण्यते । क्षीणमधिकरणम् । किं प्रयोजनं चिन्ताया: ? इष्टि: अयक्ष्यमाणस्य सोमेन, निरभिसंधिके आधाने । तादर्थ्ये सोमपूर्वत्वम् । सोमार्थतायां तु आधानस्य सोमपूर्वत्वं स्यात् ।

**सोम––** पवमानेष्टिभिर्व्रात्यपशुना च व्यवधानावश्यंभावेन आधानानन्तर्यविध्यसंभवात् अर्थादपि सोमस्य न दर्शपूर्णमासापेक्षया पूर्वत्वम् । एवं चात्र वाचनिकक्रमस्य न केनापि बाध: इति प्रत्यवस्थानात् संगति: । 'सोमेन यक्ष्यमाण:' इति वाक्ये सोमस्य चाधानस्य च अन्यत: प्राप्तेर्लक्षणया सोमस्याधानानन्तर्यमेव विधेयं, अन्यथा वाक्यानर्थक्यात् । तत्र पवमानेष्टीनां आधानाङ्गत्वात् व्रात्यपशो: सोमाधिकारसिद्ध्यर्थत्वाच्च न व्यवधायकत्वम् ।

**वि––** 'दर्शादीष्ट्वा सोमयाग: क्रमोऽयं नियतो न वा ।, उक्तेराद्यो, न सोमस्याधानानन्तरताश्रुते: ॥'

**भाट्ट––** आधानप्रकरणे 'य: सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं पृच्छेन्न नक्षत्रं' इति श्रुतम् । न च तेन सोमस्य आधानानन्तर्यं विधातुं शक्यं, आनन्तर्यस्याश्रवणात् वाक्यभेदप्रसङ्गाच्च । अतो विहितकालानादरमात्रं आधानोद्देशेन विधीयते । 'सोमेन यक्ष्यमाण:' इति तु अनुवाद: । तेन 'दर्शपूर्णमासाभ्यामिष्ट्वा

सोमेन यजेत ' इत्येतद्वाक्यविहितदर्शपूर्णमासोत्तरकालत्वमेव सोमस्य। **इति प्राप्ते**, आधानमात्रोद्देशेन विहितकालानादरविधाने ' सोमेन यक्ष्यमाणः ' इत्यस्य वैयर्थ्यापत्तेः। आधानकर्तुश्च सर्वस्यापि सोमयागाधिकारित्वात् विशेषणस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः, सोमेन आधानानन्तरं यक्ष्यमाणः अग्निं इत्यर्थावगतिः। **न च** रथकाराधानव्यावृत्त्यर्थं विशेषणोपपत्तेः नानन्तर्यकल्पना युक्तेति **वाच्यम्**। यक्ष्यमाणः इति अद्यतनवाचिप्रत्ययश्रवणेन आनन्तर्यस्य अकल्पनीयत्वात्, रथकाराधानस्य अदृष्टार्थत्वेन अग्निं इति द्वितीयाऽनुपपत्तेश्च। रथकाराधाने कालानादरस्य ' यदहरेवैनं ' इति वचनेनैव सिद्धतया तस्य प्रसक्त्यभावेन निवारणीयत्वानुपपत्तेश्च। अतोऽत्र सोमाव्यवहितपूर्वकालीनाधाने निमित्ते विहितकालानादरो विधीयते। कर्तृसमानाधिकरणेन भाष्यकारोदाहृतेन यच्छब्देन निमित्तत्वावगतेः, सकलकारकाणामन्वयस्य व्युत्पन्नत्वाच्च न विशिष्टोद्देशे वाक्यभेदः। अतश्च सिद्धवन्निर्देशान्यथाऽनुपपत्त्या कल्पितेन विध्यन्तरेण ' उपरि हि देवेभ्यो धारयति ' इतिवत् सोमाङ्गतया आधानानन्तर्यं विधीयते। **अथवा** ' अपहतपाप्मान ऋतवः, असौ खलु वावादित्य उद्यन्नेषां पाप्मानमपहन्ति, तस्माद्यदहरेवैनं श्रद्धोपनमेत् अथादधीत अथ यजेत ' इति वचने ' अथ यजेत ' इत्यनेन आधानानन्तर्यं सोमे विधीयते, यजेत इत्यनेन सोमस्यैव परामर्शात्। अत एव ' अथादधीत ' इत्यनेन आधाने एव कालबाध इति वक्ष्यते। अतश्च न निमित्तश्रुत्यन्यथाऽनुपपत्त्याऽपि विध्यन्तरकल्पना। **अत एव** इष्टिपूर्वत्वे एव यदा इष्ट्युत्तरं अग्निविनाशादिनिमित्ताधानाव्यवहितोत्तरसोमकरणं, तदा सोमे कालानादरविधानोपपत्तेः, न विध्यन्तरकल्पनया विकल्पाङ्गीकरणं युक्तं **इत्यपास्तम्**। प्रत्यक्षविधिनैव अपूर्वाधानानन्तर्यस्य विहितत्वात्। नहि ' अथादधीत ' इत्यत्र पुनराधानप्रसङ्गोऽस्ति, तस्य निमित्तवशवर्तित्वेन तत्र कालानादरविधिवैयर्थ्यात्। अतश्च अपूर्वाधानानन्तर्ये एव कालानादरविधानात् इष्टिपूर्वत्वस्य सोमपूर्वत्वेन युक्त एव विकल्पः। **केचित्तु** ' सोमेन यक्ष्यमाणः ' इति भिन्नं वाक्यं, ' नर्तुं पृच्छेत् ' इति भिन्नम्। तत्र आद्येन प्रकरणात् तृतीयविधिप्रकारे लाघवाच्च आधानोद्देशेन सोमाव्यवहितपूर्वकालता विधीयते, सोमपूर्वकालतामात्रविधाने वाक्यवैयर्थ्यात्। अतश्च वाचनिकेन सोमपूर्वत्वेन इष्टिपूर्वत्वस्य विकल्प इत्याहुः। **तन्न**। वाक्यभेदे प्रमाणाभावात्, आधानाङ्गभूतसोमपूर्वत्वेन सोमाङ्गभूतेष्टिपूर्वत्वस्य विकल्पापादनायोगाच्च। **किंच** एवं अस्मिन्नेव वाक्ये विशिष्टाधानविधिः, आधानमात्रविधिर्वा अस्तु, ' सोमेन यक्ष्यमाणः ' इत्यस्य ' ऐन्द्रवायवाग्रान् ' इतिवत् अनुवादोपपत्तेः। न चेष्टापत्तिः, वसन्तादिवाक्यानां निमित्तार्थत्वापत्तेः। न च ' यच्छब्दस्य धात्वर्थांशे एव विधिप्रतिबन्धकत्वं, न विशेषणांशे ' इत्यत्र प्रमाणमस्ति, प्राप्तमात्रे एव तस्य प्रतिबन्धकत्वात्। न च अस्याधानोत्पत्तिविधित्वे अग्निं इत्येकवचनात् आधानस्य एकाग्न्युत्पादकत्वापत्तिः, अग्निगतस्यैकत्वस्य बहुत्वस्य वा उद्देश्यगतत्वेन प्रमाणान्तरसिद्धसंख्योपलक्षणार्थत्वात्। अनेकाग्न्युत्पादकत्वं तु ' आयतनेषु संभारान् निदधाति ' इति आयतनबहुत्वविवक्षाबलात् इत्युक्तं ग्रहैकत्वाधिकरणे ( ३।१।७।१३–१५ ) कौस्तुभे। **किंच** एवं विहितकालानादरः शुद्धाधानेऽपि स्यात्, न सोमाव्यवहितपूर्वाधाने एव। उत्तराधिकरणवक्ष्यमाणरीत्या कालानादरस्य सोमाङ्गत्वेऽपि स इष्टिपूर्वत्वपक्षेऽपि स्यात्, न सोमपूर्वत्वपक्षे एव। अतश्च अस्मदुक्तप्रकार एव श्रेयान्। आधानानन्तर्येऽपि न पवमानेष्टिभिः न वा अधिकारपशुना व्यवधानं, तेषां सोमोपकारकत्वात्। अत एव सोमाधानपक्षे पवमानेष्टीनां सद्य एव करणं, सोमेन अयक्ष्यमाणस्यैव संवत्सरादिकालाम्नानात्।

**मण्डन**— ' इष्टिं कृत्वा सोमयागं न कुर्यात्। ' ३. ' यद्वा सोमः पूर्वमिष्टेरपि स्यात्। ' ४.

**शंकर**— ' विकल्पः सोमपूर्वत्वे। '

* आधानस्य इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पो न क्षत्रियवैश्ययोरेव, किंतु ब्राह्मणस्यापि। **भा.** ५।४।४।१०–१४, १७–१८. * आधानस्य उपनयनाध्ययनदारप्रतिग्रहपुत्रजननोत्तरकालत्वम्। **सोम.** ६।७।१३.

* आधानस्य काम्यत्वाभावः । सु. पृ. ९१४. * आधानस्य कालः 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' ( वर्षासु रथकार आदधीत । ) भा. ११।३।३।२, * आधानस्य च श्येनस्य च न कश्चिदस्ति संबन्धः। अग्नीनामाधानं अग्नयश्च श्येनस्य। तस्मान्न पवमानहविःषु दृतिनवनीतम्। ३।८।२०।३८.* आधानस्य न पृथक् दारक्रियाप्रयोजकत्वम्। सोम.६।८।२, * आधानस्य यत् साक्षात् फलं अग्निगताहष्टरूपं तस्य कर्तृगामित्वासंभवात् आहवनीयाद्यग्निसाध्यक्रतुफलस्य कर्तृगामित्वे एव आधानवाक्यगतात्मनेपदपर्यवसानादेव दर्शादिष्वपि फलस्य कर्तृगामित्वसिद्धेः, ' यजेत ' इत्यात्मनेपदं क्रतुगतानग्निसाध्यगोदोहनादिगुणफलस्य कर्तृगामित्वार्थम्। ६।२।२. * आधानस्य वाक्येन अग्न्यर्थता अवगता। बा. ४। १।२।२ वर्णकं ३ पृ. ११९७. * आधानस्य सर्वकालत्वात् सोमकालस्यापनयः स्यात्। नैवाधाने कश्चित् कालनियमोऽस्ति ' यदहरेवैनं श्रद्धोपनमेत् तदहरादधीत ' इति। भा. ५।४।५।१६.

**आधानस्य सोमपूर्वत्वे सोमकालस्य बाधः, नाधानकालस्य ॥**

**स्वकाले स्यादविप्रतिषेधात् । ५।४।५।१५ ॥**

**भाष्यं**— अन्तरा चिन्ताऽन्तरं वक्ष्यते । ' यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेत्न नक्षत्रं ' इति । अत्र संदेहः किं आधानस्य अयं कालविशेषबाधः, उत सोमस्येति । किं प्राप्तं ? आधानस्य कालबाधः, स्वकाले स्यात् सोमः । कुतः ? अविप्रतिषेधात् । अङ्गमाधानम् । तस्य कालबाधो न्याय्यः, न प्रधानस्य । ' अङ्गगुणविरोधे च तादर्थ्यात् ' ( १२।२।९।२५ ) इति वक्ष्यते ।

**अपनयो वाऽऽधानस्य सर्वकालत्वात् । १६ ॥**

**भाष्यं**—अपनयो वा सोमकालस्य स्यात् । कुतः ? आधानस्य सर्वकालत्वात् । नैव आधाने कश्चित् कालनियमोऽस्ति ' यदहरेव एनं श्रद्धोपनमेत् तदहरादधीत ' इति । अप्राप्तमेव तत् आधानस्य, यत् प्रतिषिध्यते । तस्मात् सोमस्य कालबाधः इति ।

त्रि— ' नर्तुर्नित्याहितेः काले बाध्यः सोमस्य वा, ऽग्निमः । अङ्गमाख्यात्, पुरैवास्य बाधात् सोमीयबाधनम् ॥ '

**भाट्ट**— ' यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं पृच्छेन्न नक्षत्रं ' इत्यनेन विधीयमानः कालानादरोऽपि प्रकरणात् आधानोद्देशेनैव विधीयते, न तु सोमोद्देशेन, अङ्गगुणविरोधन्यायेन ( १२।२।९।२५ ) उपकारके आधाने एव कालबाधस्य न्याय्यत्वाच्च । तेन स्वकाले सोमं कुर्वता अव्यवहितपूर्वे आधाने क्रियमाणे नाधानकालप्रतीक्षा कार्या । इति प्राप्ते, अस्यामेव शाखायां 'यदहरेवैनं श्रद्धोपनमेत् अथादधीत ' इति वचनान्तरेण आधानमात्रे कालानादरस्य विहितत्वात् तत एव सोमाव्यवहितपूर्वाधानेऽपि कालानादरप्राप्तेः अनेन वाक्येन स्ववाक्योपस्थितस्य सोमस्यैव उद्देश्यवाचकपदकल्पनया उद्देश्यत्वं इति तस्यैव कालानादरः । यत्तु **शतपथे** ' अपहतपाप्मानो वै ' इत्यादिवचनेन उभयोरपि कालानादरविधानं, तत् शाखाऽन्तरत्वात् आधानकालबाधे इव न दोषः । वस्तुतस्तु तत्र ' अथ यजेत ' इति वचनेन आधानानन्तर्यमेव सोमस्य विधीयते । ' अथादधीत ' इति पूर्ववचनेन तु आधाने एव कालबाधः इत्युक्तमेव । अत्र च ' अर्धमन्तर्वेदि ' इतिवत् लक्षणया विहितकालमात्रस्य अनादरविधानात् पौर्णमास्यादिपर्वणोऽपि अनादरः इति **के चित्** । नञ्द्वयाम्नानवैयर्थ्याच्चु वाक्यभेदमपि अङ्गीकृत्य ऋतुनक्षत्रमात्रानादर एव । अन्यथा पञ्चाहत्वादेरपि बाधापत्तेः इति तत्त्वम् ।

**मण्डन**— ' सोमाधाने सोमकालस्य बाधः । ' ६.

**शंकर**— ' सोमेऽप्यृत्वादिबाधः स्यात् । '

* **आधानस्य सोमार्थत्वे सोमपूर्वत्वं, सोमार्थत्वाभावे तु इष्टिपूर्वत्वम्** । **भा.** ५।४।३।९.

**आधाने आहवनीयः गार्हपत्यात् प्रणीय आधीयते ॥**

अन्येऽग्नयो व्रीह्यादिद्रव्यवत् लोकत एव आधीयेरन् **इति प्राप्ते**, ' अयं चापरो भूः, असौ पूर्वो भुवः, तमपरमधत्त, एष ह्येतस्य **योनिरेतस्मादेषोऽधिप्रणीयते** '

इति श्रवणाद् गार्हपत्यादेव आहवनीयाधानम् । **संकर्ष.** ३।२।२.

※ **आधाने ' उत्पत्तिविधिमालोच्य साम्नां वेदान्तरीयता । साङ्गप्रधानसंबन्धादुपांशुत्वं तु गम्यते ॥'** यदि हि यजुर्वेदे एव एषामुत्पत्तिः स्यात्, तत्स्वरूपनिमित्तमेव उपांशुत्वं स्यात् । एतेषां तु सामवेदोत्पन्नानां स्वरूपतः उच्चैस्त्वप्रसङ्गे प्रधानसंस्पर्शनिमित्तमुपांशुत्वं इति प्रधानधर्मता । **वा.** ३।३।२।९ पृ. ८१०. ※ आधाने ' क्षौमे वसानौ अग्नी आदधीयातां ' इति । अत्र दंपत्यभिप्रायं द्विवचनम् । एकस्मिन्नाधाने एकस्यैव सपत्नीकस्य पुंसोऽधिकारः, न द्वयोः पुरुषयोः । **वि** ६।१।५. ※ आधाने दक्षिणानां अपरिमितत्वं पूर्वोक्तात् एकादिसहस्रान्तसंख्यायाः सकाशात् संख्याऽन्तरम् । **भा.** ६।७।१०।२२.

**आधाने दक्षिणानां अपरिमितत्वं सहस्राधिकत्वम् ॥**

**अनियमोऽविशेषात् । ६।७।११।२३ ॥**

**भाष्यं--** अपरिमिते ( अपरिमितं देयं इत्यत्र ) कल्पान्तरं इति समधिगतम् । अथेदानीमिदं संदिह्यते किं सहस्रादूनं अपरिमितं, उत सहस्रादधिकमिति । किं तावत् प्राप्तं ? अनियमोऽविशेषात् । न कश्चिदिह बहुत्वे विशेष आश्रीयते सहस्रादूनमधिकं वेति । अनाश्रीयमाणे यथाकामं स्यात्, यथाकृतं साधु । तस्मादनियमः ।

**अधिकं वा स्याद् , बह्वर्थत्वादितरैः संनिधानात् । २४ ॥**

**भाष्यं—** वेति पक्षव्यावृत्तिः । नैतदस्ति अधिकमूनं वा सहस्रादिति । किं तर्हि ? अधिकमेवेति । कुतः ? बह्वर्थत्वात् अपरिमितशब्दस्य । बहुषु हि इमं शब्दं उपचरन्ति इत्येतदुक्तम् । बहुत्वं चापेक्षिकं, किंचिदपेक्ष्य ततोऽधिकं बहु इत्युच्यते । असत्यामपेक्षायां अपरिपूर्णमेतत् । यथा पुत्रः इति किंचिदपेक्ष्य भवति, नान्यथा । तत्र प्रकृतं संनिहितं चापेक्ष्य निर्णयः, सहस्रं च संनिहितम् । तस्मात् ततोऽधिकं अपरिमितमिति ।

**अर्थवादश्च तद्वत् । २५ ॥**

**भाष्यं--** कथमेवं ? तत्र ' उत्कृष्टं वै अपरिमितं ' इति तदनूनतां सहस्रस्य दर्शयति ।

**शा — ' आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् । तस्यानन्तरनिर्देशात् सहस्रादधिकस्ततः ॥ '**

**सोम—** पूर्वोक्ते विशेषविचारात् **संगतिः** ।

**वि—** ' अर्वागपि बहुत्वं तत् सहस्रादूर्ध्वमेव वा ।, संभवादग्रिमो, ऽन्यः स्यात् सहस्रानन्तरोक्तितः ॥ '

**भाट्ट--** ( दशमाधिकरणे एव एकादशस्यान्तर्भावात् न पृथक् किंचित् ) ।

**मण्डन--** ' सहस्रादधिकं तच्च । '

**शंकर—** 'सहस्राधिकमेव तत् ।' १३. उभयत्र तत्-शब्दस्य अपरिमितत्वं इत्यर्थः ।

**आधाने दक्षिणानां संख्यासु विकल्पः ॥**

**संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् । १२।४।५।९ ॥**

**भाष्यं—** आधाने दक्षिणाविषयः ' एका देया, षड् देयाः, द्वादश देयाः ' इत्येवमादयः । तेषां समुच्चयो विकल्पो वा इति विचारणा । तत्र अङ्गभूयस्त्वाय सर्वाङ्गग्राहिणा प्रयोगवचनेन **समुच्चये प्राप्ते उच्यते** । संख्यासु तु विकल्पः स्यात् । कुतः ? श्रुतिविप्रतिषेधात् । ' एका देया ' इत्येकसंख्यापरिच्छिन्नं द्रव्यं परिक्रयसाधनं श्रूयते । तथा ' षड् देयाः ' इति षट्संख्यापरिच्छिन्नम् । यदि एका च षट् च समुच्चीयेरन् ( तदा ) संख्याऽन्तरं सप्तसंख्या उत्पद्यते । तत्परिच्छिन्नेन द्रव्येण परिक्रयः कृतः स्यात् । तत्र एकश्रुतेः षट्श्रुतेश्च विप्रतिषेधः स्यात् । ननु नैवात्र परिक्रयः श्रूयते, किं तर्हि ? दानं, एका देया षड् देयाः इति । अत्रोच्यते । दानं नाम आत्मीयस्य द्रव्यस्य परस्वत्वापादनम् । तच्च परः स्ववान् स्यात् इत्येवमर्थम् । स्ववानेवासौ तस्यार्त्विज्यं करोति, तेन चास्य दातुरर्थः । एवं दृष्टार्थो भवति । अथ दानमात्रं कल्प्यते, ततः अदृष्टं कल्पयितव्यम् । परिक्रये एव एकादीनां श्रवणम् । तत्र यः सप्तभिः परिक्रीणीते, न तेन एकया षड्भिर्वा परिक्रीतो भवति । नहि ते एका

इत्यामनन्ति, न पठिति, किं तर्हि ? समेति । स एष श्रुतिविप्रतिषेधः । तस्मात् विकल्पः संख्यासु ।

**सोम**— पूर्ववदिहापि समुच्चयः इति उत्थितेः **संगतिः** ।

**वि**— 'एका देया समुच्चेयं विकल्प्यं वा,ऽऽद्य आनतेः । सौलभ्या, दन्तिमो नैरपेक्ष्यात् संख्याऽन्तरादपि ॥'

**भाट्ट**— अग्न्याधेयाङ्गदक्षिणानां 'एका देया, षड् देयाः' इत्यादीनां निरपेक्षसाधनत्वात्, समुच्चये संख्याऽन्तरोपजननापत्तेः, विकल्प एव । **न च** एकवाक्यतालाभाय उपजायमानसंख्याऽन्तरे एव लक्षणा सर्वेषामिति **वाच्यम्** । प्रत्यक्षविधिश्रवणेन वाक्यभेदस्यैव प्रामाणिकत्वात् ।

**मण्डन**— 'षडेकादौ विकल्पः स्यात् ।'

**शंकर**— 'नाग्न्याधेये दक्षिणासु ।' समुच्चयः । ५.

**आधाने दक्षिणाग्निः निर्मन्थ्यः गार्हपत्याद्वा ॥**

दक्षिणाग्निशब्दस्यापि दिक्पदघटिततया दक्षिणदिशः सकाशादाहृतलौकिकाग्निपरत्वात् लोकत एव क्लृप्तिः । **इति प्राप्ते**. 'निर्मन्थ्यात् दक्षिणाग्निमादधीत' इति शाखाऽन्तरे श्रवणात्, गार्हपत्यस्य सर्वयोनित्वात् वा तत एवाधानम् । **संकर्ष**. ३।२।४.

* आधाने पवमानहविर्भ्यः प्राक् द्वादशसु दिनेषु तूष्णींहोमः । 'तूष्णीमेव होतव्यमग्निहोत्रं' इति विधानात् । तस्य च 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते' इत्यादिः अर्थवादः । **वि. १०।८।५.**

**आधाने पवमानहविषां काम्यप्रयोगे प्रथमस्य तन्त्रभेदः उत्तरयोस्तन्त्रं, ब्रह्मवर्चसकामत्वे नित्यप्रयोगे च त्रयाणामपि तन्त्रम् ॥**

**पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् । ११।४।४।११ ॥**

**भाष्यं**— आधाने पवमानेष्टयः 'अग्नये पवमानायाष्टाकपालं निर्वपति, अग्नये पावकाय, अग्नये शुचये' इति । तत्र विचार्यते किमासां ऐकतन्त्र्यं, भेदो वेति ! किं प्राप्तं ? पवमानहविःषु ऐकतन्त्र्यं स्यात् । कुतः ? प्रयोगवचनैकत्वात् । एक आसां प्रयोगवचनः 'अह्नो निरुप्याणि' इति । प्रयोगवचनैकत्वात् सहप्रयोगः । तत्र न गृह्यते विशेषः । तस्मादैकतन्त्र्यम् ।

**टुप्**— 'अह्नो निरुप्याणि' इति कालवचनं मन्यमानः तन्त्रतामावादयति । यथा पौर्णमास्यां त्रयाणां कालसंयोगात् तन्त्रेणाङ्गानि एवमिहापि ।

**लिङ्गदर्शनाच्च । १२ ॥**

**भाष्यं**— लिङ्गं च सहयोगं दर्शयति 'समानबर्हींषि भवन्ति' इति । अनुवादोऽयं वर्तमानापदेशात् ।

**वचनात्तु तन्त्रभेदः स्यात् । १३ ॥**

**भाष्यं**— न च ऐकतन्त्र्यं स्यात् । किं तर्हि ? तन्त्रभेदः । स च भवन् एवं स्यात्, प्रथमायाः भेदः, उत्तरयोस्तन्त्रम् । कस्मात् ? वचनात् । वचनमिदं भवति 'अथ यः कामयेत वर्षीयान् श्रेयान् स्यामिति, तस्याग्नये पवमानाय निरुप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत्, यदेनमग्रहीत् तेन स उत्तरं वर्षीयान् श्रेयान् भवति' इति । किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । तस्मादेवं कर्तव्यम् । अथ यदुक्तं प्रयोगवचनैकत्वात् इति, तस्य कः परिहारः ? नासौ प्रयोगवचनः, कालवचनोऽसौ 'अह्नो निरुप्याणि' इति । तस्मादहेतुः स भवति ।

**टुप्**— सिद्धान्तवादी तु अहःशब्देन सद्यःकर्तव्यानि इति विज्ञायते, न कालं प्रति उपादीयन्ते । अहःशब्दस्य कालो न वाच्यः, येन कालं प्रति उपादीयेरन् । तस्मात् भेदो वचनात् ।

**सहत्वे नित्यानुवादः स्यात् । १४ ॥**

**भाष्यं**— यच्चोक्तं 'समानबर्हींषि भवन्ति' इति समानप्रयोगं दर्शयतीति । तत्र ब्रूमः । सहत्वे नित्यानुवादः स्यात् । इदमपरं श्रूयते 'यो ब्रह्मवर्चसकामः स्यात्, तस्य सर्वाणि हवींषि निरुप्याणि' इति । तस्य सहप्रयोगो भवति । तस्मिन् सहत्वे नित्यानुवादोऽयं स्यात् 'समानबर्हींषि भवन्ति' इति । कथं पुनः निरुप्याणि इत्युक्ते सहप्रयोगो विज्ञायते ? 'निरुप्याणि' इति बहुत्वयुक्तः प्रयोगो विज्ञायते । तच्च बहुत्वं उपादेय-

**मण्डन**—' न पावमानीं प्रति पावमानी । '

**शंकर**—' इष्ट्यर्था नेष्ट्यो मता: । '

* **आधाने** पवमानेष्टिषु ' अग्नये पावकाय ' इत्यादि शब्दद्वयमेव पठनीयं, न तु गुणरहितं केवलमग्निपदम् । **भा.** १०।४।१४।२६-२७, * आधाने पवमानेष्टिषु अग्निहोत्रहवण्यभावेऽपि पात्रान्तरेण निर्वापोऽनुष्ठेयः । १०।२।२७।६३, * आधाने पवमानेष्टिषु आज्यभागौ ' बुधन्वान् आग्नेय: कार्यः, पावकवान् सौम्यः' इति । नाग्नेर्विशेषणं बुधन्वत्ता, किंतु मन्त्रस्य । ' अग्निं स्तोमेन बोधय० ' इति । तस्मात् निर्गुणमभिधानं देवतायाः कर्तव्यम् । १०।४।१५।३०-३१.

**⌛ आधाने पवमानेष्टिषु आज्यभागदेवतावाचकयोः पदयोः गुणवाचकपदरहितयोरेव उच्चारणं कर्तव्यम् । बुधन्वदादिपदं तु मन्त्रबोधकम् ॥**

**बुधन्वान् पवमानवद् विशेषनिर्देशात्** १०।४। १५।३० ॥

**भाष्यं**— अस्त्याधानं, ' य एवं विद्वानग्निमाधत्ते ' इति । तत्र पवमानेष्टयः ' अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये ' इति । तत्र आज्यभागौ प्रकृत्य श्रूयते ' बुधन्वानाग्नेयः कार्यः, पावकवान् सौम्य: ' इति । तत्रायमर्थः सांशयिक: किं सगुणं अग्नेरभिधानं कर्तव्यं, उत निर्गुणमिति । तत्रैवं तावत् परीक्ष्यते । किं देवतानिर्देशोऽयं, मन्त्रनिर्देश इति । देवतानिर्देशे सति सगुणमभिधानं, मन्त्रनिर्देशे निर्गुणमिति । किं तावत् प्राप्तं ? सगुणमभिधानमिति । तत्रैतद्वर्ण्यते, देवतानिर्देश इति । कुतः ? रूपत एव मन्त्राणां प्राप्तत्वात् विधानमनर्थकं, देवता पुनर्न प्राप्नोति । तस्या विधानं अर्थवद्भवति ' बुधन्वानाग्नेयः कर्तव्यः ' इति । देवतया बुधन्वद्गुणयुक्तया भवति बुधन्वानाग्नेयः । तस्मात् सगुणमभिधानम् । यथा पावमानेष्टिषु, ' अग्निः पवमानः ' इति, एवमत्रापि अग्निर्बुधन्वानिति विशेषनिर्देशोऽर्थवान् भविष्यति । तस्मात् सगुणमभिधानमिति ।

**मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात्** । ३१ ॥

**भाष्यं** – न चैतदेवं सगुणमभिधानमिति, निर्गुणं कर्तव्यम् । तत्रैतत् वर्णयन्ति मन्त्रविशेषनिर्देशोऽयमिति । कुतः ? मन्त्रविशेषसरूपोऽयं शब्दः । आग्नेयो यो विशिष्टाग्निविशिष्टः स बुधन्वान् कर्तव्यः, नाग्निः । अथ अग्निर्बुधन्वान् क्रियते, तत्र बुधन्वानग्निर्देवता स्यात् । तत्र आग्नेयः इति सापेक्षे तद्धितनिर्देशो न स्यात् । नहि सविशेषणानां वृत्तिर्भवति । न खल्वपि वृत्तस्य विशेषणं प्रयुज्यते । तस्मान्नाग्नेर्विशेषणं बुधन्वत्ता । कस्तर्हि बुधन्वत्तया विशेष्यते ? आग्नेयः । तस्य बुधो मन्त्रः, तेनासौ बुधन्वान् भवति यागः । ' अग्निं स्तोमेन बोधय समिधानो अमर्त्यः' इति । अथवा, मन्त्र एवाभिसंबध्यते, बुधन्वानाग्नेय इति । अथ यदुक्तं, रूपादेव मन्त्रः प्राप्नोति, न विधातव्य इति । उच्यते । यः कश्चिदग्न्यभिधानो मन्त्रः प्राप्नोति । तन्निषेधार्थमिदमुच्यते बुधन्वान् कर्तव्यः, अग्निं स्तोमेन बोधयेति । एवं चेत्, न देवताविशेषणम् । तस्मान्निर्गुणमभिधानं देवतायाः कर्तव्यम् । एवं चोदकानुग्रहो भविष्यति ।

**शा**— किं बुधन्वत्तया पावकवत्तया च गुणेन सगुणमभिधानं कर्तव्यं ' बुधन्वन्तमग्निमावह, पावकवन्तं सोममावह ' इति, उत अविकारेण प्रकृतिवन्निर्गुणं (' अग्निमावह, सोममावह ' ) इति चिन्त्यते । ( यद्यपि नकारोपसर्गस्य छान्दसत्वात् निगमेषु देवतानिर्देशस्योहरूपत्वेन लौकिकत्वात् ' बुधवन्तमावह ' इत्येवं वक्तुमुचितं, तथापि छन्दसि यः शब्दो दृष्टः, तदनुसारेणैव प्रयोज्य ऊहः इति याज्ञिकैरङ्गीकारात् बुधन्वच्छब्दस्यैव विधिशब्दत्वाच्च ' बुधन्वन्तमावह ' इत्युक्तम् । ' बुधन्वत्तया, बुधन्वत्ता ' इत्यादिः ग्रन्थकारव्यवहारस्तु अनुकरणत्वात् साधुः ) ।

**सोम**— यदि पवमानेष्टिदेवतासु गुणश्रवणे सगुणमभिधानं, तदिहापि गुणश्रवणात् सगुणमभिधानं इत्युत्थितेः ( दृष्टान्त- ) **संगतिः । सूत्रार्थस्तु**— यथाऽग्नये पवमानाय इत्यत्र सगुणाभिधानं तथा ' बुधन्वान् ' इत्यत्रापि बुधन्वत्तारूपगुणविशेषनिर्देशात् इति ।

**भाट्ट**—पवमानेष्टिषु आज्यभागौ प्रकृत्य ' बुधन्वानाग्नेयः कार्यः, पावकवान् सौम्यः' इति श्रुतम् । तत्र

नकारश्छान्दसः। वृधवानित्यर्थः। तत्र किमियं वृधवत्ता पावकवत्ता च देवताविशेषणत्वेन विधीयते, उत मन्त्रविशेषणत्वेन इति चिन्तायाम्। वृधशब्दोपेतमन्त्रविशेषपरत्वे वृधशब्दस्य शब्दलक्षकत्वापत्तेर्वृधरूपार्थः एव लाघवात् विधीयते। न च यद्यपि नाग्निविशेषणत्वेन विधातुं शक्यते, तद्धितार्थे वृत्तस्याग्निपदस्य विशेषणान्तरासहत्वात्, तथापि आग्नेयपदोक्तयागोद्देशेनैव वृधाख्यगुणो विधीयमानः अपरित्यक्ताग्निसंबन्धोद्देशेन विहितत्वात् नाग्निबाधकत्वेन विधीयते, अपि तु तद्विशेषणत्वेनैव। एवं पावकवाक्येऽपि। अतश्च त्यागे आवाहनादिनिगमेषु च वृधादिगुणस्याप्युल्लेखः। इति प्राप्ते, नाग्नेयादिदेवतातद्धितेन यागग्रहणं 'सूक्तहविषो:' इति स्मृत्या सूक्तहविषोरेव नियमात्। नापि आज्यग्रहणं, पुंस्त्वानुपपत्तेः। वृधादिदेवतायाः समुच्चयेन बाधेन वा विधाने आज्यभागस्य आग्नेयत्वादिनिर्देशानुपपत्तेश्च। अतः सूक्तद्धितमङ्गीकृत्य मन्त्रमेव आग्नेयशब्देनानूद्य तदुद्देशेन वृधवत्ता विधीयते, न तु यागमुद्दिश्य। तद्धितस्य यागे 'वैश्वदेवेन यजेत' इतिवल्लक्षणाऽऽपत्तेः। न च वृधादिशब्दस्य तत्रापि शब्दपरत्वे लक्षणाऽऽपत्तिः, वृधादिरूपार्थस्यैव प्रतिपाद्यतासंबन्धेन मन्त्रसंबन्धित्वात् वृधादिरूपार्थवत्त्वस्यैव मन्त्रोद्देशेन विधानोपपत्तेः। प्रत्युत देवताविशेषणत्वपक्षे पूर्वोक्तरीत्या शब्दस्यैव विधेयत्वेन शब्दलक्षणाऽऽपत्तिः। न चैवं प्राकृतस्यैव मन्त्रस्य लक्षणाऽऽदिना वृधादिरूपार्थप्रकाशकत्वापत्तेर्न वृधादिपदोपेतमन्त्रविशेषविधिरूपसिद्धान्तसिद्ध्यापत्तिः। भाष्यकारलिखनस्वारस्यात् पवमानेष्ट्यङ्गभूताज्यभागक्रमे अनेकेषामग्निसोमदेवत्यमन्त्राणां आम्नानावगतेः तैः प्राकृतमन्त्राणां बाधात्। अत एव वैकल्पिकानेकमन्त्रप्राप्तौ तत्तदाज्यभागाङ्गभूतमन्त्रोद्देशेन वृधादिप्रकाशकत्वविधानात् 'अग्निं स्तोमेन वर्धय' इत्यादिमन्त्रयोरेव नियमसिद्धिः। एवं च मन्त्रान्तराणामुत्कर्षः इत्यादि बोध्यम्। यदि तु अत्र अनाश्वासः, तदा वृधपावकवन्मन्त्रयोरेव आज्यभागक्रमे समाम्नानेन प्राकृतमन्त्रबाधो द्रष्टव्यः। अत एव लिङ्गादेव तत्तन्मन्त्रयोस्तत्तदाज्यभागाङ्गत्वसिद्धेः इदं वचनद्वयमनुवाद एव पवमानेष्टिस्तुत्यर्थः। अभ्युदयशिरस्कन्यसिद्ध्यर्थं वा विधिः, न तु वृधादेर्देवतात्वविधायकं समुच्चयेन बाधेन वा, तत्र देवताविधौ आग्नेयत्वादिनिर्देशानुपपत्तेः। यत्र तु तत्पदोपेतमन्त्रा दाशतयीष्वेव प्रसिद्धाः, केवलं विकृतिप्रकरणे एवंविधवचनाम्नानं, तत्र गमकान्तरबलेनैव प्राकृतबाधेन मन्त्रान्तरविधिः। गमकाभावे तु प्राकृतमन्त्रे एव लक्षणाऽऽदिना तदर्थप्रकाशनं, प्राकृतमन्त्रस्यैव प्रकाशकत्वसंबन्धेन तदर्थवत्त्वविध्युपपत्तौ तद्वाचकपदोपेतमन्त्रान्तरविधौ गौरवादिति ध्येयम्। १६.

**मण्डन** 'बुधन्वान् नाग्निरिष्यते।' १७.

**शंकर**-- 'वृधन्वान् देवता न च।' १८.

**आधाने मथितोऽग्निर्गार्हपत्यार्थ एव॥**

आधाने 'ब्राह्मौदनिके अग्नौ अरणी संताप्य तदुपोह्य भस्माग्निं मन्थति सैव साऽग्नेः संततिः' इति मन्थनमाम्नातम्। तच्च सर्वाग्न्यङ्गं अविशेषात्। तेन मथित्वा विभज्य सर्वेऽग्नय आधीयेरन्। इति प्राप्ते, ब्राह्मौदनिकाग्नौ गार्हपत्यत्वश्रवणात् 'तेन संवत्सरमासीत' इति संवत्सरपर्यन्तं एकस्यैवाग्नेर्धारणश्रवणाच्च कृत्स्नेन निर्मथितेन गार्हपत्यः एवाधेयः। **संकर्ष**. ३।२।१.

* आधाने 'वर्षासु रथकार आदधीत'। रथकारः संकीर्णजातिविशेषः। वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी, करण्यां माहिष्यादुत्पन्नो रथकारः। न तु अत्र 'रथं करोति' इति व्युत्पत्त्या त्रैवर्णिको रथकारः। रथकारस्याधानकालो वर्षर्तुः। **वि.** ६।१।१२. * आधाने 'वारवन्तीयं गायति' इत्यादिना सामानि विहितानि, 'उपवीताः (अचिरान्नष्टाः) वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति च निन्दया निषिद्धानि। तस्मात् तत्र साम्नां विकल्पः। ब्रह्मशब्दश्चात्र उद्गातृपरः। **भा.** १०।८।६।९-११. * आधाने श्रुतं वैकङ्कतादिपात्रं दर्शपूर्णमासादिसर्वयज्ञार्थम्। **वि.** ३।१।१२.

**आधाने सभ्यावसथ्यौ लौकिकाग्निरूपौ, न तु आहवनीयात्॥**

सभ्यावसथ्ययोः आहवनीयादाधानं स्यात्। 'भूर्भुवः सुवरित्युभावेतौ सहाधत्ते स हि तस्य योनिः' इति श्रुतौ उभाविति पदेन गार्हपत्याहवनीययोः उपादानोपा-

देययोः सहाधानाभावेन परामर्शायोगात् सभ्यावसथ्यपरत्वस्य वक्तव्यतया 'स हि तस्य' इत्यस्य साहित्यवदुभयपरत्वेन आहवनीययोनिकत्वश्रवणात्। 'यदेव तृतीयं ज्योतिस्तदेव तेनाप्यते' इत्याहवनीयं प्रकृत्य श्रुत्यन्तराच्च। इति **प्राप्ते**, तृतीयज्योतिःपदस्य औत्तरवेदिकाग्निपरत्वात् 'स हि तस्य' इत्येकवचनेन सहिताग्निद्वयपरत्वायोगेन स गार्हपत्यः तस्याहवनीयस्य योनिरित्येव तदर्थकतया ऋत्विजामिव तयोर्लोकत एव प्रक्लृप्तिः। **संकर्ष.** ३।२।३.

आधानेऽसर्वशेषत्वात् । २।३।३।४ ।।

इदमामनन्ति 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति। तत्र संदिह्यते किं ब्राह्मणादिश्रवणं निमित्तार्थं, ब्राह्मणादयश्चेत् आदधानाः, वसन्तादिषु आदधीरन्निति, उत ब्राह्मणादीनामाधानं विधीयते इति। पूर्वाधिकरणे प्रासङ्गिकमवेष्टेः प्रयोगभेदं निरूप्य इदानीं प्रस्तुत एव गुणनिबन्धनः कर्मभेदः प्रतिपाद्यते। अत्रायं पूर्वपक्षिणोऽभिसंधिः। सर्वत्रोपपदश्रवणे सति उपपदार्थसंक्रान्तो विधिः धात्वर्थानुवादमपेक्षते इति सिद्धम्। तदपि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति वसन्ताद्युपपदाक्षिप्तशक्तिविधायकं आधानानुवादमपेक्षते। न चाधानमप्राप्तं, अग्निहोत्रादिश्रुतिभिरेव आक्षेपतः प्राप्तत्वात्। तथाहि, आहवनीयसाध्याः खलु अग्निहोत्रादयः 'यदाहवनीये जुहोति' इति श्रुतेः, 'आहिताग्निराहवनीयः' इत्यर्थवादवशात् आहवनीयश्च आधानसाध्यः इत्याक्षेपात् अस्त्येव आधानप्राप्तिः। **अथवा** 'य एवं विद्वानग्निमाधत्ते' इत्येतस्मादेव अनन्याक्षिप्तशक्तेः विधायकात् आधानस्य प्राप्तत्वात् तदनुवादेन वसन्तादिकालविधानाय निमित्तार्थं ब्राह्मणादिश्रवणमिति। न चायं वर्तमानापदेशत्वान्न विधिः। 'य एवं सपत्नं भ्रातृव्यमवर्तिं सहते, य एवं विद्वानग्निमाधत्ते' इत्यर्थवादसंबन्धात् विधित्वसिद्धेः। तदुक्तं **'सामर्थ्याक्षिप्तमाधानं सामान्यवचनेन वा। तस्माद् वर्णविशेषाणां निमित्तार्था पुनःश्रुतिः ॥'** इति। (वा. पृ. ५८८)। नन्वाधानविशिष्टो ब्राह्मणो ब्राह्मणविशिष्टं वा आधानमत्र निमित्तं? उभयथाऽपि च विशिष्टानुवादे वाक्यभेदः। उच्यते। अप्राप्तवसन्तविधौ प्राप्तत्वात् ब्राह्मणाधानयोरनुवादः। तत्रापि विशेषणतात्पर्यात्, कारकस्य च क्रियाविशेषणत्वात्, ब्राह्मणस्यैव निमित्तत्वान्न वाक्यभेदः। **न च** निमित्तकालयोर्द्वयोरपि उद्देश्यत्वेन कथमेकस्मिन् वाक्ये समावेशः इति **वाच्यम्**। कालस्य क्रियाऽन्वयित्वात् निमित्तस्य च कर्तव्यत्वात् वैलक्षण्येन समावेशोपपत्तेः। तेन यथाद्युपबन्धव्यतिरेकेण आधानसंबन्धेन ब्राह्मणाद्यनुवादार्थवादत्वात् ब्राह्मणादिनिमित्तके आधाने वसन्तकालविधानमिति। **एवं प्राप्ते अभिधीयते**। भवेदेवं, यदि यथाश्रुतस्याधानस्य आक्षेपतः प्राप्तिर्भवेत्। अत्र हि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यात्मनेपदात् कर्तृगामिफलमाधानं प्रतीयते। फलं च आधानस्य आहवनीयः। तेन अनुवादपक्षे एवायं वाक्यार्थः, 'कर्तृगताहवनीयफलमाधानं ब्राह्मणेन वसन्ते कर्तव्यम्'। न च अग्निहोत्रादिश्रुतिभिरेव आक्षेपादेवंविधमाधानं लभ्यते, यदनूद्येत। आहवनीयो हि तैराक्षिप्यते, न तु आधानानुष्ठानम्। एकेन आहितस्य अन्यैः क्रयणादिनाऽपि उपादानसंभवात्। **न च** अनुवादगतविशेषदर्शनात् तथाभूतस्यैवाक्षेप इति **वाच्यम्**। संदेहे सति अनुवाददर्शनादपि निर्णयो भवति। यथा 'ऐरं कृत्वोद्गेयम्' इत्यत्र इरापदस्य कस्मिन् स्थाने निवेशः इति संदेहे 'न गिरागिरा' इति निषेधानुवाददर्शनात् इरापदस्य गिरापदस्थाननिवेशो निर्णीतः। इह तु 'आहवनीये जुहोति' इति विनियोगबलात् आहवनीयमन्तरेण क्रतुविध्यसंभवात् भवतु आहवनीयोपादानाक्षेपः। स च स्वतः प्राप्त्यभावात् वसन्तादिविशिष्टाधानमेव। **ननु** मा भूत् क्रतुश्रुत्याक्षिप्तस्यानुवादः। 'य एवं विद्वानग्निमाधत्ते' इति प्रत्यक्षमेव वचनं विधायकमस्ति आत्मनेपदयुक्तम्। तत्र कर्तृगामिफलस्यैव आधानस्य प्राप्तत्वात् तदनुवादेन वसन्तादियुक्तवाक्येषु ब्राह्मणादिनिमित्तं वसन्तादिकालमात्रं विधास्यते। **मैवम्**, स्यादेवं यदि 'य एवं विद्वानग्निमाधत्ते' इति विधिर्भवेत्। किं तर्हि? आधानाङ्गभूतोपसर्जनादिसंभारविध्येकवाक्यतया वर्तमानापदेशरूपः कृत्स्न एवायमर्थवादः। एवं हि श्रूयते 'स एवं सपत्नं भ्रातृव्यमवर्तिं

सहते ' य एवं विद्वानग्निमाधत्ते अप उपस्पृशति ' इति । किंच आदधीतेति असंदिग्धः प्रत्यक्षोऽत्र विधिः श्रूयते । तथा सति अग्निहोत्रादिश्रुतेराक्षेपः, वर्तमानापदेशस्य विधित्वकल्पनं वा न संभवति । तदुक्तं ' **प्रत्यक्षविधिसद्भावे लक्ष्यते नानुमानिकः । प्रापकत्वमतो नार्थवर्तमानापदेशयोः ।।** ' **इति** । ( वा. पृ. ५८९ ) अतः सर्वथा प्राप्त्यभावाच्च वसन्तादिवाक्येषु ब्राह्मणादीनां निमित्तार्थं श्रवणं, किंतु कर्तृकालानेकगुणसंबद्धानि भिन्नान्येव आधानानि विधीयन्ते । **ननु** अपशूद्राधिकरणे एव आधानाक्षेपो ' य एवं विद्वानग्निमाधत्ते ' इत्यस्य विधित्वं ब्राह्मणादियुक्तवाक्यानां च निमित्तार्थत्वमिति सर्वमुपन्यस्यते । अतः कथमत्रास्य विचारः ? इति । **उच्यते** । तत्र हि प्रधानभूतकर्मणि कमिश्रुतेः वर्णचतुष्टयसाधारणत्वात् । तद्बलेन शूद्राधिकारे सति तदुपपत्त्यर्थं कमिश्रुतिभिरेव वर्णचतुष्टयसंबन्धेनैव आधानस्याक्षेपो भविष्यति । ' अग्निमाधत्ते ' इत्यस्य वर्णचतुष्टयसाधारणाधानविधायकत्वं वसन्तादिवाक्यैश्च त्रैवर्णिकस्यैव कालविशेषविधानात् शूद्रस्यानियतकालीनमेवाधानमिति शूद्रस्यापि आहिताग्नेरधिकारपूर्वपक्षे, सिद्धान्तितं कमिश्रुतेस्त्रैवर्णिकपरत्वेऽपि अविरोधात् न एतदधिकरणसिद्धवसन्तादिवाक्यानां विशिष्टाधानाक्षेपेण शूद्राधिकारः संभवति । तेन कमिश्रुतेः वर्णचतुष्टयाधिकारपरत्वेन समधिकशूद्राधिकारशङ्कानिरासार्थं तदधिकरणम् । तत्सिद्धं चैतदधिकरणसिद्धमेव सर्वं स्मारितमित्यपौनरुक्त्यम् । **प्रयोजनम्** — पूर्वपक्षे आहितस्यापि अग्नेः क्रयणादिलक्षणस्य कर्माङ्गत्वम् । सिद्धान्ते तु आधानोत्पन्नस्यैव कर्माङ्गत्वम् । **सूत्रं तु**– आधानेऽपि पूर्ववदेव प्रापणवचनानि न निमित्तार्थानि आधानस्य असर्वशेषत्वात् आहवनीयवत् कर्मशेषत्वाभावेन आक्षेपाभावादित्यर्थः । द्वितीयवर्णके तु सर्वशेषत्वादिति । तत्रैषा व्याख्या, अबुपसर्जनादिसर्वसंभारशेषत्वादित्यर्थः । **तौता.**

**आधानेऽसर्वशेषत्वात्** । २।३।३।४ ॥

' वसन्ते ब्राह्मणोऽग्नीनादधीत ' ' ग्रीष्मे राजन्यः ' ' शरदि वैश्यः ' इति श्रुतिः आधाने ब्राह्मणादीनां निमित्तत्वमाह, न तु आधानप्रापिका श्रुतिरियं इति उक्तसूत्रे पूर्वपक्षे सिद्धान्तमाह । आधाने विषये वसन्तादिवाक्यं ब्राह्मणादिवसन्तादिविशिष्टाधानप्रापकं, न तु प्रामाधाने निमित्तसंयोगेन कालविशेषबोधकम् । आधानस्य असर्वशेषत्वात् सर्वकर्मशेषत्वाभावात् सर्वक्रत्वर्थतया आधानविधेः अश्रवणात् । तस्मात् ब्राह्मणादीनां आधानस्य प्रापकाणि श्रवणानि इति सिद्धान्तः । भवदेवेन तु सर्व— असर्व इत्युभयथा व्याख्यातम् । तत्र सर्वशेषत्वात् सर्वसंभारशेषत्वात् इति वर्णकान्तरेण व्याख्यातम् । **के.**

* आधाने साङ्गस्यैव प्रधानस्य याजुर्वेदिकत्वात् उपांशुत्वेनैव भवितव्यम् । **वा.** ३।३।२।९ पृ. ८१०. * आधाने सामवेदोत्पन्न वारवन्तीयादि साम उच्चैस्त्वेन प्राप्तं, यजुर्वेदविहितत्वेन उपांशुत्वप्राप्त्या बाध्यते । **बाल.** पृ. १४०. * **आधानकालः** सद्यःसोमचिकीर्षायां ऋतुनक्षत्रप्रतीक्षानिषेधेन बाध्यते । **वि.** ५।४।५.

* **आधानन्यायेन** ( ३।६।४।११-१३ ) यन्नाम प्रयाजादि प्रकृतेरङ्गं भवति, तदतिदिश्यते । न तु पवमानेष्टयः कर्माङ्गं इति साधितम् । **वा.** ३।६।६।१७.

* **आधानपवमानेष्टिभ्यां** ( समुच्चिताभ्यां ) आहवनीयसिद्धौ पश्चात् तस्मिन् अग्निहोत्रहोमः । **बृ.** ५।३।९।२१–२५. * **आधानपौर्णमास्योर्मध्ये** यजमानस्य कदा चित् मरणे पात्राभावेन दाहाभावप्रसङ्गात् आधानमारभ्यैव यज्ञपात्राणि धार्याणि । **वि.** ११।३।१४, * **आधानवत एव** सत्राधिकारो नान्यस्य । ६।६।५. * **आधानव्रतवत्** । आधानव्रतानि आहिताग्निव्रतानि आधानानन्तरमेवारभ्यन्ते, न तु पवमानेष्ट्यनुष्ठानापेक्षा, तथा अग्निचिद्व्रतान्यपि चयनानन्तरमेव कर्तव्यानीति पूर्वपक्षः । **बृ.** ५।३।१०।२६–२८. * **आधानसमनन्तरं** सोमेनायक्ष्यमाणः ' पुरा संवत्सरात् हवींषि निर्वपेत् ' । **भा.** ५।४।३।८, * **आधानसामान्य**विहितैकादिदक्षिणायाः बाधः पुनराधानप्रकरणश्रुतदक्षिणया । १०।३।५।३०–३३. * **आधानसाम्नां** कस्यां चित् सामवेदशाखायां विधिः कल्पनीयः इति केषां चिन्मतम् । **सु.** पृ. ११८४, * **आधानसामोत्पत्ते**र्वस्तुतो याजुर्वेदिकत्वेऽपि सामवेदिकत्वं कृत्वाचिन्तया । पृ. ११७७. * **आधानसोमयोरानन्तर्य**-

मस्ति ऋतुनक्षत्रातिक्रमवचनात् । भा. ५।४।३।६. * **आधानाङ्गं तूष्णींहोमः । भाट्ट.** ५।३।९. * आधानाङ्गं पवमानहवींषि वार्तिकमते । **सोम.** ५।३।९. * **आधानाङ्गत्वेन** अपूर्व एवायं (तूष्णीं) होमः विधीयते । मन्त्रे प्रमाणाभावात् 'तूष्णीमेव होतव्यं' इत्यनुवादः । देवता तु अनादिष्टे प्रजापतिः । **याज्ञिकास्तु** अग्निहोत्रधर्मातिदेशं मन्यन्ते । तदा च तूष्णींत्वस्यापि विधिः । परंतु कर्मान्तरत्वे प्रमाणं मृग्यम् । **भाट्ट.** १०।८।५.

* **आधानादिवाक्यन्यायेन** 'आधानादिवाक्यानां क्रत्वङ्गभूताग्निसंस्कारप्रतिपादनद्वारेण पुरुषार्थत्वं' इत्येवंरूपेण उपनिषदामपि दूरस्थेनैव क्रतुफलेन नैराकाङ्क्ष्यं क्रत्वर्थकर्तृप्रतिपादनद्वारेण । **सु. पृ.** २४. * **आधानादिसंस्कारलोपः** अग्निचयने भ्राष्ट्राग्नौ काम्ये । **भा.** १२।४।९।२८-२९.

⌛ **आधानाधिकरणम्** । आधानन्यायः । आधानादिवाक्यन्यायः । आधानाधिकरणन्यायः । आधानस्य ब्राह्मणादीनां प्रापकाणि श्रवणानि ॥

**आधानेऽसर्वशेषत्वात् । २।३।३।४ ॥**

**भाष्यं**— इदं समामनन्ति 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति । तत्र संदिह्यते किं ब्राह्मणादिश्रवणं निमित्तार्थं ब्राह्मणादयः आदधानाः वसन्तादिषु आदधीरन् इति, उत ब्राह्मणादीनामाधानं विधीयते इति । कथं निमित्तार्थता स्यात्, कथं चाधानविधानमिति ? यदि ब्राह्मणो वसन्ते इति पदद्वयं परस्परसंबद्धं, ततो निमित्तार्थं श्रवणं, अथ ब्राह्मणः आदधीत इति, आधानविधानं ब्राह्मणस्य । एवं राजन्यादिष्वपि । किं तावत् प्राप्तं ? निमित्तार्थं श्रवणमिति । कुतः ? निमित्तसरूपा एते शब्दाः । किं निमित्तसारूप्यं ? ब्राह्मणादीनां वसन्तादिभिः समुच्चारणम् । तच्च अविदितं वेद्यते इति । ननु ब्राह्मणादीनां आदधातिनाऽपि अस्ति समुच्चारणम् । बाढमस्ति समुच्चारणं, न तु अमीषां आधानसंबन्धो न विदितः । केन प्राप्तो विदित इति ? कामश्रुतिभिः । काः कामश्रुतयः ? 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवमादयः । कथमाभिः श्रुतिभिः आधानं प्राप्तमिति ? उच्यते, सामर्थ्यात् । यथा अग्निहोत्रं अभिनिर्वर्त्येते तथा कुर्यात्, यथा दर्शपूर्णमासौ अभिनिर्वर्त्येते तथा कुर्यात् । न च गार्हपत्याहवनीयान्वाहार्यपचनादिभ्यो विना एतानि कर्माणि सिध्यन्ति । समामनन्ति हि 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इत्येवमादि । तेन सामर्थ्यादेतदुक्तं भवति, आहवनीयादि कर्तव्यमिति । तच्च आधानेन विना न सिध्यति, इत्याधानमपि कर्तव्यमिति अवगम्यते । तत् केन कर्तव्यं ? यस्य कामश्रुतयः ; ताश्चाविशेषेण ब्राह्मणादीनाम् । तस्मात् अमीषां आधानसंबन्धो विदित इति । अपि च उभाभ्यां ब्राह्मणादीनां संबन्धे विधीयमाने वाक्यं भिद्येत । नहि तदानीमेकोऽर्थो विधीयते । अतो निमित्तार्थाः श्रुतयः इत्येवं प्राप्तम् । **एवं प्राप्ते ब्रूमः** । आधाने असर्वशेषत्वात् । प्रापकाणि आधानस्य एतानि श्रवणानि । कुतः ? सर्वकर्मणां शेषभूतमाधानं इति न श्रुतिलिङ्गादीनामन्यतमेनोच्यते । किं तर्हि ? अग्नीनां सर्वशेषत्वात्, तच्छेषत्वाच्च आधानस्य । किमतो यद्येवं ? अग्नयः कामश्रुतिभिः प्राप्नुवन्ति, नाधानमिति । ननु अग्नीनामभ्युपायः आधानमिति । उच्यते । नैतेषामर्जने आधानमेव एकोऽभ्युपायः । किं तर्हि ? यथा अन्येषां द्रव्याणामुत्पादने क्रयणादयश्च अभ्युपायाः, एवं अग्नीनामपीति, न नियोगतः उत्पादनमेव । तेन पक्षे आधानं प्राप्नोति, पक्षे न । यतरस्मिन् पक्षे अप्राप्तिः, ततरः पक्षः उत्पत्तिं प्रयोजयिष्यति ब्राह्मणादीनामाधानस्य, ब्राह्मण आत्मार्थमादधीतेति । यदा एतद्वचनं, तदा आत्मार्थमेव आहिता आहवनीयादयो भवन्ति नान्यथा । एवं च सति न कृत्रिमेण याचितेन वा कर्माणि अग्निहोत्रादीनि अनुष्ठातव्यानि इति गम्यते । तेन अकृत्रिम एव केवलोऽग्निः तेषां साधक इति निश्चीयते । कथं च आत्मार्थता आधानस्य गम्यते इति ? कर्त्रभिप्राये हि क्रियाफले आदधीत इत्येतत् आत्मनेपदं संभवति । असति अस्मिन् वचने कामश्रुतिपरिग्रहे नाधानस्य आत्मार्थता भवेत् ।

**अपि च** सतीषु एतासु आधानश्रुतिषु न कामश्रुतयः शक्नुवन्ति अपरामाधानश्रुतिं कल्पयितुम् । यथा-

प्राप्तस्याधानस्य पुनःश्रुतय एता भवेयुः । असतीषु एतासु आधानश्रुतिं अपरिगृह्णन्त्यः कामश्रुतयः अशक्यानग्निहोत्रादीन् वदन्ति इति परिगृह्णीयुराधान-श्रुतिम् । सतीष्वेतासु येषामाधानमुक्तं तानविकल्प्य उत्तर-काल्याः कामश्रुतयो भवन्तीति गम्यते । अत्राह । अस्ति केवलस्य आधानस्य विधायिका श्रुतिः ‘ एवं संपन्नं भ्रातृव्यमवर्तिं सहते , य एवं विद्वानग्निमाधत्ते ’ इति । तथा प्राप्तस्य निमित्तार्थानि ब्राह्मणादीनां श्रवणानि भवि-ष्यन्ति । उच्यते , संभारविधानार्था पुनःश्रुतिरेषा । नेति ब्रूमः । भिन्नं हीदं वाक्यं संभारविधानवाक्यात् । अन्यो ह्यर्थः ‘ आधत्ते ’ इति , अन्यः ‘ अप उप-सृजति ’ इति । एकार्थविधाने हि एकं वाक्यं भवति , भिन्नौ चेमावर्थौ । तस्मादत्र वाक्यभेद इति । उच्यते , ‘ वसन्ते ब्राह्मणोऽग्नीनादधीत ’ इत्यस्यां श्रुतौ सत्यां पुनःश्रुतिः केवलस्याधानस्य अविधायिका । अपामुप-सर्जनं तु विधीयते । तदेकस्मिन्नर्थे विधीयमाने नानेकार्थं भवति । ननु आधानस्यैतत् विधानं, गुणार्था सा पुनःश्रुतिः । नेति ब्रूमः । सा ब्राह्मणादि-संबद्धा प्रथमा श्रुतिः, इयं केवला पुनःश्रुतिः । कुतः ? सा हि शब्देन विदधाति, तत्र लिङमुच्चरन्तीं पश्यामः । इयं प्रशस्तमाधानमित्याह । ततः प्रशस्ततां आधानस्या-नुमन्यामहे । एवं च ‘ वसन्ते ब्राह्मणोऽग्नीनादधीत ’ इत्येषा विधायिका श्रुतिः इति ब्रूमहे । नैतत् प्रशंसा-वचनं अस्मत्पक्षं बाधते । शक्यते हि , अन्येन विहितं अन्येन प्रशस्तमिति वदितुम् । यदि तु एतद्विधायक-मित्युच्येत , ततोऽस्मत्पक्षं विरुध्येत । कथं ? अज्ञातस्य ज्ञापनं विधानमेतत् । यदि प्रशंसावचनेन अपूर्वं विज्ञा-प्येत , तदा लिङा नापूर्वं ज्ञापितं भवेत् । तत्र अपूर्व-ज्ञापनवचनः शब्द उपरुध्येत । विहितेऽपि हि वाक्या-न्तरेण प्रशंसावचनमवकल्पते ।

अपि च यत् लिङा विधानं तच्छ्रुत्या , वाक्येन तु प्रशंसा गम्यते , श्रुतिश्च वाक्यात् बलीयसी । ननु इद-मपि वाक्यं ‘ ब्राह्मणोऽग्नीनादधीत ’ इति । उच्यते । स्वपदार्थमत्र श्रुतिर्विदधाति आधानं ब्राह्मणादिसंबन्धेन , परपदार्थं प्रशंसति ‘ य एवं संपन्नं भ्रातृव्यमवर्तिं सहते ’ इति । ननु अनेकगुणविधानं त्वया वाक्येनाध्यवसितं भवति । नैष दोषः । अगुणविधिपरे हि वाक्ये भवति अनेकगुणविधानं इत्युक्तं ‘ तद्गुणास्तु विधीये-रन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ’ ( १।४। ६।९ ) इति । तस्मात् ब्राह्मणादिसंयुक्ता विधा-यिका श्रुतिः, इयमपि केवलस्याधानस्य पुनःश्रुतिः संभारविधानमुपक्रमयितुं इति सिद्धम् । यदुक्तं अनेक-गुणविधाने वाक्यं भिद्येत इति , यदीमौ गुणौ आधान-विशिष्टौ विधीयेयातां , भवेत् वाक्यभेदः । द्वाभ्यां तु विशेषणाभ्यां विशिष्टमेकमाधानं विधास्यते । तेन न भविष्यति वाक्यभेदः । तस्मात् ब्राह्मणादीनां आधानस्य प्रापकाणि श्रवणानि इति सिद्धम् । ४.

वा— ‘ वसन्ते ब्राह्मणोऽग्नीनादधीत ’ इत्यादिषु प्राप्त्यप्राप्त्याशङ्कायां पूर्ववदेव संदेहः । तत्र यदि कथं-चिदपि प्राप्तिरस्ति , ततो विनाऽपि यदिशब्दात् निमि-त्तार्थत्वं , तदा च ब्राह्मणवसन्तादिसंबन्धः परस्पर-नियमात्मकं फलं भविष्यति । अथ तु अप्राप्तिः, ततः प्रापकाणि ब्राह्मणवसन्तादिविशिष्टस्याधानस्य । तदा च पूर्वत्रपूर्वत्र उत्पत्तिवाक्यशिष्टगुणावरोधात् उत्तरउत्तरो गुणः कर्मान्तरं कल्पयति इति त्रीण्याधानानि भविष्यन्ति । स्वार्था एव वा अग्नयः आत्मनेपदनिर्देशात् विज्ञास्यन्ते । शूद्रस्य चाप्राप्तिः । निमित्तार्थपक्षे तु सर्वं विपरीतमेव । एतेन ‘ वसन्ते ब्राह्मणमुपनयेत् ’ इत्येवमादीन्यपि तुल्य-हेतुत्वात् विचारितानि द्रष्टव्यानि । तत्र एतावान् संक्षे-पार्थः ( अधिकरणस्य ) ‘ **सामर्थ्याक्षिप्तमाधानं सामान्यवचनेन वा । तस्माद् वर्णविशेषाणां निमित्तार्था पुनःश्रुतिः ॥** ’ एकस्तावत् पूर्वपक्षहेतुः अग्निहोत्रादिचोदनाभिरेव आधाननिष्पाद्याहवनीयादि-साधनत्वात् विना अनुपपद्यमानाभिः प्रापितत्वात् ब्राह्म-णादीनामाधानं निमित्तार्थं श्रूयते इति । यदि तु प्रत्यक्ष-वचने सति सामर्थ्यमप्रापकं इति कल्प्यते , ततः अस्मात् गुणापहृतशक्तिकात् विधेः अनपहृतशक्तिः अपरो निर्गुणो विधिरस्ति ‘ य एवं विद्वानग्निमाधत्ते ’ इति , तेन प्राप्तेः अप्रापकत्वमिति । सिद्धान्तहेतुस्तु ‘ **प्रत्यक्षविधि-**

**सद्भावाल्लभ्यते नाऽनुमानिकः। प्रापकत्वमतो नार्थवर्तमानापदेशयोः ॥**' न तावत् नित्यमर्थस्य ( अर्थापत्तेः ) प्रापकमस्ति । उपायान्तरेणापि प्रतिग्रहादिना पुरुषान्तराहितानां आत्मनेपदेनानियतानां सुलभत्वात् । प्रत्यक्षवचने सति अन्यथाऽनुपपत्तिपक्षे सति अर्थापत्तिलभ्यश्रुत्यपरिग्रहाच्च । ' य एवं विद्वान् ' इत्यपि वर्तमानापदेशः प्रत्यक्षायां लिङि ब्राह्मणादिवाक्येषूपलभ्यमानविधिशक्तिं लभते । अस्ति चैतदुपन्यासस्य प्रत्यक्षविधियुक्तोदकोपसर्जनादिसंभारविधानार्थत्वं इति अप्राप्तमेव ब्राह्मणादिविशिष्टमाधानं विधीयते इति ।

' किं निमित्तसारूप्यं ' इति ( भाष्यं ), यदिशब्दाद्यनुपबन्धाभिप्रायम् । ' ब्राह्मणादीनां वसन्तादिविधिभिः समुच्चारणं ' इति , परपदसंबन्धसंचारितायां विधिशक्तौ निमित्तफलत्वात् । ' ननु ब्राह्मणादीनां आदधातिनाऽपि ' इति , अप्राप्तौ विशिष्टविधानोपपत्त्यभिप्रायम् । इतरस्तु प्राप्तत्वेन विधेयत्वं निवर्तयति ' न तु अमीषां आधानसंबन्धो न विदितः ' इति ' केन प्राप्तो विदित इति ' प्रापकाक्षेपः । इतरस्तु निराकरणमपश्यन् बलीयांसं च प्रत्यक्षविधिं , किमर्थं प्रथममेव उपन्यस्यामि इति मत्वा ' कामश्रुतिभिः ' इत्याह । ' काः कामश्रुतयः ' इति सक्रोधं प्रापणशक्तौ आक्षितायां स्वरूपमेव एष न जानाति इति मन्यमानो दर्शयति 'अग्निहोत्रादिफलविषयः' इति ( आर्थिकं भाष्यं ) कथं अन्यपराभिः सतीभिः तत् प्रापितं इत्याशङ्क्य अर्थापत्तिं दर्शयति । तेन 'कर्मजे कर्म यूपवत् ' ( ७।३।९।२८ ) इति आहवनीयादिग्राहिभिः कर्मभिः अनन्योपायत्वात् गृहीतमाधानमिति । सर्वप्रकारासंभवे च विशिष्टविधिर्भवति इति संभवापेक्षया वाक्यभेदमाह ।

**एवं प्राप्ते ब्रूमः** । आधानेऽपि पूर्ववदेव प्रापकाणि श्रवणानि । कथं ? असर्वशेषत्वात् । यदि हि सर्वकर्मणां शेषभूतमाधानं भवेत् , ततः तैः आक्षिप्येत वा न वा । तेषां तु ' रूपं वाऽशेषभूतत्वात् ' ( ७।३।११।२९ ) इत्यनेनैव न्यायेन आहवनीयादिग्रहणमात्रपर्यवसानात् न कश्चिदपि आधानाङ्गत्वप्रतिपादने हेतुरस्ति । यत्तु ' सर्वार्थं वा ' ( ३।६।५।१५ ) इति वक्ष्यति , तत् सर्वकर्मार्थाग्न्यर्थत्वात् इति व्याख्यास्यते । ' किमतो यद्येवं ' इति , अङ्गाङ्गमपि अन्यथाऽनुपपत्त्या शक्यमाक्षेप्तुं इति मन्यते । सिद्धान्तवादी तु अन्यथाऽनुपपद्यमानत्वात् अग्नयः कामश्रुतिभिः प्राप्नुवन्ति , नाधानमित्याह ' ननु आधानमग्नीनामभ्युपायः ' इति । तत्र नाम रूपमात्रं गृह्यते , यत् लौकिकोपायसाध्यं भवति वस्त्रशकटादि । न च आहवनीयादयः लौकिकोपायाः । तस्मात् अवश्यमेषां वेदेनैव उपायोऽपि आक्षेप्तव्यः, स तु नाधानव्यतिरिक्तोऽस्ति इति तदपि आक्षिप्तमिति । उच्यते । न । अनैकान्तिकत्वात् । अग्नीनां हि याच्ञाक्रयापहारादयोऽभ्युपायाः सन्ति । सर्वैश्च तैः आहवनीयादिमात्रप्रार्थिन्यः कामश्रुतयो निराकाङ्क्षाः क्रियन्ते । तस्मान्नैकान्तेन आधानं प्राप्तं इत्यस्ति नियमविधेरवकाशः । **तत्रैतत् स्यात्** । नैव उपायान्तरोपात्तानामाहवनीयादित्वं संभवति , संस्कारनिमित्तत्वादिति । **तत्रोच्यते । ' सत्यं प्रथममाधानादुत्पद्यन्तेऽग्नयस्त्रयः । पश्चात्तु व्रीहिवत्तेषां नोपायान्तरवारणम् ॥'** यथैव हि व्रीह्यादीनां न तावत् कृषिमन्तरेणोत्पत्तिः, अथ च न सर्वपुरुषैः तथैवाप्यन्ते , क्रयादिभिरपि लभ्यमानत्वात् । एवं तावत् प्रथमं एके आधानेनोत्पादयिष्यन्ति, अपरे तु तस्मात् उपायान्तरेण प्राप्स्यन्ति । ततश्च यथा घटादीन् कुम्भकार उत्पाद्योत्पाद्य विक्रीणाति ददाति च , तथैव एकः कश्चित् पुनःपुनः अग्नीनाधाय अपरेभ्यो दद्यात् । अतः प्रतिपुरुषमाधानं पक्षे प्राप्तं, पक्षे न इत्यस्ति विधानस्य विषयः । पक्षेऽपि वा नैव प्राप्तिरस्ति इति वक्ष्यामः । प्रत्यक्षविधिपक्षे पुनः उपायान्तराणि निवर्तन्ते । तदा हि आदधीत इत्यात्मनेपदेन आधातृगामि एव आधानफलमिति गम्यते । तस्य च फलं आहवनीयादि तदकर्तुर्न भवति , इति तं प्रति अनाहवनीयत्वमेव स्यात् । अर्थाक्षेपपक्षे तु आनुमानिक्याः श्रुतेः आत्मनेपदपरस्मैपदविवेकाभावात् अकर्तृविषयेऽपि अविरोधात् उपायान्तराणि न निवर्तेरन् । अतोऽवश्यमेव विधेयमेतदिति । ' अपि च सतीष्वेव आधानश्रुतिषु ' ( भाष्यं ) इति पाक्षिकीमपि प्राप्तिं निराकरोति । पूर्वमेव हि व्याख्यातं नियमादीनां

अधानविधित्वं श्रुतसंभावनायां अश्रुतकल्पनाऽनवसरात्। सन्ति च आधानस्य प्रत्यक्षाः श्रुतयः, इति नान्याः कल्पयितुं लभ्यन्ते। यदि हि एता न स्युः, तत्राधानादृते अग्निहोत्रादीनामशक्यानुष्ठानत्वात् विधयोऽनर्थका भवन्ति इति स्वसिद्धयर्थं आधानश्रुतिं परिगृह्णीयुः। सतीषु तु अश्रुतकल्पनाभयात् येषामेताभिः प्रापितं, तेषामेव कामश्रुतयः प्रयोजिकाः इति न कल्पयन्ति। सर्वपूर्वोक्तदोषपरिहारेण इदानीं प्रत्यवतिष्ठते ( अत्राह इत्यादिना भाष्यं ) प्रत्यक्षं अन्यत् विधायकमस्ति आधानस्य वचनम्। यस्मिन् सति निमित्तार्थानि इतराणि इति ' य एवं विद्वानग्निमाधत्ते ' इति। तत्र प्रतिविधत्ते 'संभारविधानार्था पुनःश्रुतिरेषा ' इति ( भाष्यम् )। परः पुनः प्रकरणेन संभारसंबन्धं मन्वानः पृथग्वाक्यत्वमापाद्य एतदेव उत्पत्तिवाक्यमित्याह। नहि उदकोपसर्जनादीनां आधानेन एकवाक्यता संभवति। ( तत्रोत्तरं-- ) भवेदत्रार्थभेदे नानावाक्यत्वं, यदि आधानं विधीयेत। तत् ब्राह्मणादिसंयुक्तैर्विहितं इति गुणार्थमेव इह पुनः श्रूयते। कुतो नु खलु निर्णयः। कतरदनयोः उत्पत्तिवाक्यमिति। तदुच्यते ' **ब्राह्मणत्वादिसंयुक्ते प्रत्यक्षः श्रूयते विधिः। इतरत्रार्थवादेन कल्पनीयो बलादसौ॥**' यदि हि एते द्वे अपि वाक्ये विधातृणी स्यातां, ततः समानविषये सती स्पर्धेयातां कतरत् विधत्तामिति। अत्र पुनरेकं विधायकं, एकं स्तावकम्। न च स्तावकेन ब्राह्मणादिसंयुक्तस्य विधायकत्वं निवार्यते तदानुगुण्यात्। यदि तु ' य एवं विद्वान् ' इत्यपि विधिसरूपं स्यात्, ततो विहितस्य पुनर्विधानानुपपत्तेः अस्मत्पक्षं निरुन्ध्यात्। लिङा तु विहितस्य संबन्धिसंभारविधिप्ररोचनार्थं तु स्तुतिसहितस्य पुनःश्रवणं इत्यविधायकम्। लिङा च तावत् धात्वर्थविधानं स्वपदेन उपात्तत्वात् श्रौतं, प्राशस्त्यं पुनर्वाक्येन, ततश्च आनुमानिको विधिः इति विप्रकृष्यते। ' ननु इदमपि वाक्यं ' इति ब्राह्मणादिपदार्थपरित्यागाभिप्रायम्; सिद्धान्तवादी वदति, आधानं तावच्छ्रुत्या, शेषं वाक्येन नाम भवतु, स्वपदोपात्तायाः स्तुतेरभावात्। ' एवं द्विषन्तं भ्रातृव्यमर्ति सहते ' इत्यादिपदसंबन्धेनैव स्तुतिः इति वाक्यम्। कर्तृकालविशिष्टप्रधानाधानविधानाच्च वाक्यभेदपरिहारात् सिद्धं प्रापकत्वम्।

शा— किं ब्राह्मणादीनां आधानोपनयनयोः प्राप्तानां वसन्तादिकालं प्रति निमित्तार्थानि श्रवणानि किंवा ब्राह्मणादीनां अप्राप्तमाधानं उपनयनं च विधीयते। तत्र ' **विना नैवाग्निविद्याभ्यां क्रत्वनुष्ठानसंभवः। अग्निविद्ये न च स्यातामाधानोपनयौ विना॥** ' तस्मान्निमित्तार्थानि श्रवणानि। इति प्राप्ते ब्रूमः। '**न तावत् क्रतुसामर्थ्यात् प्राप्तिरैकान्तिकी नयोः। सामान्यवचनं यत् तद्वर्तमानापदेशकम्॥**' तस्मात् प्रापकाणि वचनानि आधानोपनयनयोः।

**सोम**-- इह तर्हि प्राप्तार्थत्वात् निमित्तार्थत्वमस्तु इति प्रत्यवस्थानात् **संगतिः**। यदि तु अन्यतः आधानप्राप्त्या ब्राह्मणादिश्रवणं निमित्तार्थं, तदा ब्राह्मणानामिव शूद्रस्याप्यस्ति आधानम्। यदि तु ब्राह्मणादिवाक्यान्येव आधानविधायकानि तदा शूद्रस्य पृथगाधानविध्यभावात् नाधानं इत्यधिकरण**प्रयोजनम्**।

**सु**-- ब्राह्मणादेर्गुणस्य विधेयत्वे भेदकता, अविधेयत्वे तु अभेदकता इति संदिग्धविधेयत्वस्य गुणस्य भेदकाभेदकत्वनिर्णयार्थं विधेयाविधेयकत्वविचारात् **अवान्तरसंगतिः**।

**कौ**— पूर्वत्र राजसूयस्य क्षत्रियमात्रकर्तृकत्वात् ब्राह्मणादीनां कथमपि अप्राप्तेः युक्ता विधेयकत्वेन भेदकता। प्रकृते तु आधानस्य उपनयनस्य वा आक्षेपादेव सर्वकालकर्तृकत्वोपपत्तेः प्राप्तानां ब्राह्मणादीनां निमित्तत्वोपपत्तिः इति पूर्वपक्षोत्थानात् अनन्तरा **संगतिर्द्रष्टव्या**।

**वि**— ' वसन्ते विप्र आदध्यात् तत्रैवोपनयीत तम्। अनुवादः प्रापणं वा, ऽनुवादः कालसिद्धये॥ अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात्। क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः॥, लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम्। कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते॥ ' वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते।

भाट्ट— ' वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः ' इति श्रुतम् । तथा ' वसन्ते ब्राह्मणमुपनयीत , ग्रीष्मे राजन्यं , शरदि वैश्यं ' इति । तत्र सर्ववर्णसाधारणानां क्रतूनां अग्निविद्यासाध्यत्वात् अग्नेश्च उपायभूतस्याधानस्य ' य एवं विद्वानग्निमाधत्ते ' इत्यनेन अनन्याक्षिप्तशक्तिकेन अग्न्युद्देशेन आधानविधायिना प्राप्तत्वात् आधाने ब्राह्मणादीनां प्राप्तेः निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालः आधानाङ्गत्वेन विधीयते । अथवा अस्तु एतस्य ' अथ संभारान् संभरति ' इति विध्यन्तरशेषस्य वर्तमानापदेशता । तथापि 'संभारेष्वग्निमादधाति' इत्ययं आधानप्रापको विधिः । अत्र हि न संभारा विधेयाः, प्रमाणान्तरप्राप्तत्वात् । नापि तदधिकरणत्वं ' तस्मिन्नाधीयतामयम् ' इति मन्त्रवर्णादेव प्राप्तत्वात् । अतः आधानमात्रविधिपरम् । **अथवा** प्राप्ताधानानुवादेन कालविधेः, आत्मनेपदार्थस्य अनाधातुः आहवनीयत्वाभावरूपस्य च विधिः इति वाक्यभेदापत्तेः ' जातपुत्रः कृष्णकेशोऽग्नीनादधीत ' इत्ययं आधानप्रापको विधिः । उक्तवाक्ये तु अभ्युदयशिरस्कतया मन्त्रवर्णात् पूर्वमेव अधिकरणत्वविधिः । एवं च जातपुत्रवाक्ये वयोवस्थाविशेषलक्षणाऽपि नापद्यते । सर्वथा आधानप्राप्तेः निमित्तार्थानि ब्राह्मणादिश्रवणानि, न भेदकानि । तथा विद्यासाधनतया अध्ययनं तत्साधनत्वेन उपनयनं चार्थप्राप्तम् । अध्ययनस्य तु ' स्वाध्यायोऽध्येतव्यः ' इत्यनेन नियमोऽपि । अतः सर्वसाधारण्येन प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालो विधीयते । **इति प्राप्ते,** सर्वकर्तृकत्ववत् सर्वकालकत्वस्यापि आधानादौ प्राप्तिसंभवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधिः, काले वा निमित्ते कर्तृविधिः इत्यत्र विनिगमनाविरहात् उभयविशिष्टाधानविधिरेव । उपनयनस्य च पक्षेऽपि असंभवत्प्राप्तिकत्वेन सुतरां विध्युपपत्तिः । अत एव विनिगमनाविरहात् कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविध्यापादकत्वावश्यंभावे एतद्विधिविहितप्रयोगानुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधिः । आत्मनेपदार्थस्य च उत्पत्त्याद्यन्वयिनो गुणस्य श्रवणात् उत्पत्त्यादिकमपि अत्रैव, न तु जातपुत्रादिवाक्ये, वाक्यभेदापत्तेः । प्राथम्याद्वा ब्राह्मणवाक्ये एव उत्पत्त्यादि । इतरयोस्तु प्रयोगमात्रम् । तेन सिद्धः अत्रापि गुणात् प्रयोगभेदः । तयोश्च आधानोपनयनयोः अग्निविद्याफलकत्वेऽपि अकरणे प्रत्यवायादिश्रवणात् नित्यत्वमपि । एवं च स्वविधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे क्रतुविधयः नाग्निविद्ये तदुपायान् वा प्रयुञ्जते, इति न तद्रहितस्य शूद्रादेः अधिकारः इति **प्रयोजनं** षष्ठे वक्ष्यते ।

**मण्डन**— ' आधानं कर्तृभिर्भिन्नम् । '

**शंकर**— ' वसन्ताधानविधिता । '

* दाक्षायणयज्ञेन, साकंप्रस्थायीयेन, संक्रमयज्ञेन इत्यादिषु अयनपदोपलक्षितेषु **आधानाधिकरणन्यायेन** चोदनाऽन्तरं कर्मान्तरस्य विधायकं, न गुणस्य । **कस्तूरिरङ्गाचार्यवृत्तिः** २।३।४।५–११.

* आधानाधिकरणं ( द्वितीयम् ) ३।६।५।१४–१५। ' सिद्धाध्ययनपुरुषाधिकारत्वात् प्रयोगश्रुतीनां अध्ययनाक्षेपकत्वस्य द्वितीयाधानाधिकरणोक्तस्य । **सु.** ३।७ पृ. ६३, * **आधानाधिकरणपूर्वपक्षसूत्रेण** ' तत् प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः ' ( ३।६।५।१४ ) इत्यनेन द्विरुक्तत्वापत्तिलक्षणो न्यायः आधाने अतिदेशात् दृढीकरणेन प्रतिपादितः । ३।७ पृ. ४१.

* **आधानाधिकारः** रथकारस्य सौधन्वनापरपर्यायस्य, ' वर्षासु रथकार आदधीत ' इति वचनात् । **भा.** ६।१।१२।४४–५०.

* **आधानानन्तरं** अन्यत् किं चिदकृत्वा सोम एव कर्तव्यः , उतान्तरापि किं चिद् भवति इति संशये पवमानेष्टि–व्रात्यपशु–अग्निहोत्राणि कृत्वा सोमो दर्शपूर्णमासयोः प्राक् कर्तव्यः इति वार्तिकं तन्त्ररत्नं च । भाष्यकारमते तु व्रात्यपशुः सोमाङ्गत्वाद्भवति । पवमानेष्टयोऽपि अग्निसंस्कारत्वाद्भवन्ति, अग्निहोत्रं तु नास्ति इति । के चित् इष्टिपूर्वकत्वपक्षे एव व्रात्यपशुं मन्यन्ते, तदमूलं इति तन्त्ररत्नम् । सोमपूर्वत्वपक्षे व्रात्यपशुर्न संभवति , अस्य निरूढपशुप्रकृतिकत्वात् निरूढस्य च दर्शप्रकृतिकत्वात् दर्शस्य चाद्यापि दूरत्वात्, विकृत्यनुष्ठानस्य प्रकृत्यनुष्ठानात् प्राक् असंभवाच्च केचिन्मतमेव युक्तं

भाति तन्त्ररत्नं तु भाष्यवार्तिकानुसारात् । **के.** ५।४। ३।५-३.

*** आधारे** सप्तमीविभक्तिर्भवति । आधारश्च क्रियायाः तत्कारकाणां च विशिष्टानां धारणे वर्तते । तस्मात् गुणभूतः । **भा.** ११।२।१६।६८.

*** आधूननं** अग्निचयने उखास्थापने । तत्र प्रकरणपठिता येकेचित् चतुर्दश मन्त्रा ग्राह्याः, न तु आदित एव । 'वेशीनां त्वा पत्मन्नाधूनोमि' इत्यादयो मन्त्राः । **वि.** १०।५।५.

*** आधेयशक्तिः** 'शक्तिवादः' इत्यत्र द्रष्टव्यम् । **मणि.** पृ. ४३-४४, *** आधेयशक्तौ** अर्थापत्तिः प्रमाणम् । पृ. ६१.

**ॐ आध्वरिकाहुतीनां दीक्षाऽऽहुतिभिः समुच्चयः॥** 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः 'आकूतिमग्निं प्रयुजं स्वाहा' इत्यादयश्च होमलिङ्गाः षट् षट् मन्त्रा आम्नाताः । तत्र 'षड् जुहोति' इति श्रूयमाणो विधिः अन्यतरषट्कस्य होमेषु विनियोगार्थमाहुतिवादः एव । **इति प्राप्ते,** द्वयोर्द्वयोः सजातीययोरेकीकरणेन 'द्वादश जुहोति' इति वचनान्तरविहितानामेष 'सावित्राणि जुहोति' इतिवत् पर्यायवादः । **संकर्ष.** २।४।२७.

*** आध्वर्यवं** अध्वर्युणा कर्तव्यम् । **भा.** ३।७।१९। ४०, * आध्वर्यवं इति समाख्यातानि कर्माणि अध्वर्युणा कर्तव्यानि । हौत्रमिति च होत्रा । ३।३।६।१३, * आध्वर्यवमिति समाख्याते वेदे जयादयः समाम्नाताः सन्तः अध्वर्युणा करिष्यन्ते । ३।४।९।२७. * आध्वर्यवं न प्रोक्षण्यासादनादि, दर्शपूर्णमासयोः, किंतु आग्नीध्रम् । **वि.** ३।८।१२, * आध्वर्यवं महाकाण्डं, याजमानं अवान्तरकाण्डम् । ३।८।१०. * आध्वर्यवं वाजसनेयिशाखायां चरकशाखासु च बहु, इत्येतावता नाल्पविषयं अप्रमाणीकुर्वन्ति । **वा.** १।३।८।२७ पृ. २८६. * आध्वर्यवः प्रैषः, आग्नीध्रः प्रैषार्थः । **भा.** ३।८।१२।२३-२४. * आध्वर्यवः होमः इत्यनया निरपेक्षया प्रबलया समाख्यया अध्वर्युरेव सत्यां शक्तौ चमसैर्जुहुयात् । ग्रहहोमव्यापृतत्वेन कदा चिदशक्तौ चमसाध्वर्यवो जुहुयुः । **वि.** ३।७।२२, *** आध्वर्यवाः** प्रैषाः इति याज्ञिकसमाख्या । तत्र व्यस्ताः प्रैषा आध्वर्यवाः 'अग्नये समिध्यमानायानु ब्रूहि' इत्याद्याः । ३।७।२१. *** आध्वर्यवानेव** (पदार्थान्) कुर्वन् 'अध्वर्युर्यजति' इत्येवमुच्यते । **भा.** ६।१।४।१७. *** आध्वर्यवेऽपि** तु क्व चिद्स्त्येव याज्याऽनुवाक्याऽऽम्नानम् । **वा.** २।२।४।१० पृ. ४९६, *** आध्वर्यवेष्वपि** प्रयोक्तृत्वेन यजमानस्य कर्तृत्वम् । ३।१।१४।२४. *** आध्वर्यवत्वं** द्वादशद्वन्द्वानां दर्शपूर्णमासयोः । **भा.** ३।८।९।१९-२०. *** आध्वर्यवप्रवचनाख्यो** यजुर्वेदः । **सु.** पृ. ७५७, *** आध्वर्यवशब्दवाच्यत्वेन** अन्वाधानादेः, अध्वर्युशब्दवाच्यत्वेन च ऋत्विजः अन्वाधानादिकर्तृत्वकल्पना भवति । पृ. १२००. *** आध्वर्यवसमाख्याते** वेदे समाम्नातानां पदार्थानां अध्वर्योरेव कर्तृत्वावश्यंभावः । **संकर्ष.** १।१। १४. *** आध्वर्यवादि** कर्म कुर्वाणेषु हि कर्तृषु कर्मनिमित्ता एता आख्याः प्रसिद्धाः, न याजमानं कुर्वाणेषु । **भा.** १०।६।१५।५६.

*** आध्वर्यवादिसमाख्यायाः** अवैदिकत्वेऽपि अनादित्वेन पुरुषनिबन्धनदोषाभावात् मिथ्यात्वं तावन्नास्ति । **सु.** पृ. ११३७. *** आध्वर्यवादिसमाख्यानां** वेदे एव प्रयोगात् न लौकिकत्वचोद्यं क्रियते । **वा.** ३।३। ६।१३, *** आध्वर्यवादिसमाख्यानात्** ज्योतिष्टोमादिप्रधानेषु तदर्थेष्वेव प्राप्नुवत्सु स्वर्गकामाद्येकवाक्यत्वात् अर्थिमात्रविषयत्वं विज्ञायते । वाक्यं समाख्यायाः बलवत् । ३।३।७।१४ पृ. ८३७.

*** आनतिः** भृत्या परिक्रीय वशीकारः । सा च यज्ञे ऋत्विजां दृष्टप्रयोजना । द्वादशशतादिपरिमाणनियमो मन्त्रवत्त्वनियमश्च अदृष्टार्थः । **वि.** १०।२।८. *** आनत्यर्थं** ऋत्विग्भ्यो दक्षिणादानं ज्योतिष्टोमादौ । **भा.** १०।२।८।२२-२८.

**ॐ आनन्तर्यमकारणं इति न्यायः । सु. पृ.** ७४६ । आनन्तर्यमेकवाक्यत्वे अकारणं असत्यामाकाङ्क्षायाम् । **भा.** ३।१।६।१२ पृ. ६८८, ३।१।१४। २४ । '**यस्य येनार्थसंबन्धो दूरस्थस्यापि तेन सः । अर्थतोऽह्यसमर्थानामानन्तर्यमकारणम् ॥**' **सु.** पृ. ७४६.

आनन्तर्यमचोदना । ३।१।१४।२४ ॥

ज्योतिष्टोमे 'मुष्टी करोति, वाचं यच्छति, दीक्षितमावेदयति' इति, 'हस्ताववनेनिक्ते, उलपराजिं स्तृणाति' इति च श्रूयते । तत्र आनन्तर्येण पाठात् मुष्टीकरणं वाग्यमश्च दीक्षितावेदनाङ्गं, तथा हस्तावनेजनं उलपराजिस्तरणाङ्गं इति उत्सूत्रः पूर्वपक्षः । मुष्टीकरणवाग्यमयोः सर्वकर्मार्थत्वं, हस्तावनेजनस्य च आध्वर्यवसकलपदार्थाङ्गत्वं इति उत्सूत्र एव सिद्धान्तः । सूत्रं तु पूर्वपक्षहेतोः आनन्तर्यस्य निराकरणार्थम् । आनन्तर्यं संनिधिः । चोदना अत्र प्रमाणम् । तथा च उक्तमानन्तर्यं अचोदना, न चोदना, न प्रमाणम् । प्रबलेन लिङ्गेन प्रकरणेन च बाधात् इति ।

**वाक्यानां च समाप्तत्वात् । २५ ॥**

'मुष्टी करोति, वाचं यच्छति, दीक्षितमावेदयति, हस्ताववनेनिक्ते, उलपराजिं स्तृणाति' इति ज्योतिष्टोमे पठितानां वाक्यानां स्वेनस्वेन पदसमूहेन सार्थकेन समाप्तत्वात् । भिन्नान्येव एतानि वाक्यानि विभागे निराकाङ्क्षाणि । तस्मात् मुष्टीकरणवाग्यमयोः सर्वकर्मार्थत्वं, न दीक्षितावेदनमात्राङ्गत्वम् । तथा हस्तावनेजनस्य आध्वर्यवसकलपदार्थाङ्गत्वं, न तु उलपराजिस्तरणमात्राङ्गत्वम् । चकारो हेतुसमुच्चयार्थः । सिद्धान्तहेतुप्रदर्शनार्थं सूत्रम् । **के.**

* आनन्तर्यमचोदना **इति न्यायेन** प्रकरणस्य प्राबल्यम् । **कौ.** १।४।२।२ पृ. १६६. * आनन्तर्यमचोदना इत्यनेन न्यायेन आनन्तर्यस्य अकारणतया बुद्धिनिवृत्तेः संनिधित्वेन अनुषङ्गाधिकरणे अभिहितत्वात् । **सु.** पृ. ११११. * आनन्तर्ये सत्यपि यदि द्वितीयेनान्वयः तदा **'आनन्तर्यमचोदना' इति न्यायेन** ( ३।१।१४।२४ ) तृतीयान्वयो दूरापेतः । **सोम.** २।१।१६. * साकाङ्क्षप्रधानस्थले सांनाय्यसंनिधिपठितपात्रशुन्धनमन्त्रे साकाङ्क्षबुद्धिविपरिवृत्तिरूपाधिकारस्य आग्नेयादिसाधारणत्वात् तस्य च आनन्तर्यमचोदना इति न्यायेन प्रयाजादाविव अन्यवहितसंनिध्यपेक्षया प्राबल्यात् न केवलसांनाय्याङ्गत्वम् । **कौ.** ३।३।५।१२ पृ. ३३७. * आनन्तर्यमचोदना ( ३।१।१४।२४ ) इत्यानन्तर्यलक्षणस्य क्रमस्य अविनियोजकत्वाभ्युपगमात् । **सु.** पृ. ४५७. * **आनन्तर्येण** निराकाङ्क्षीकरणं सत्यामाकाङ्क्षायाम् । **भा.** ३।१।१४।२४. * **आनन्तर्यरूपक्रमस्य** आनन्तर्याधिकरणेन ( ३।१।१४।२४ ) अविनियोजकत्वमुक्तम् । **सु.** पृ. १०७२, * **आनन्तर्यलक्षणस्य** क्रमस्य विनियोजकत्वं सिद्धान्ते नाभ्युपगम्यते । पृ. ११९३, * आनन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वं संभवति संनिधिविशेषाम्नानार्थवत्त्वाय प्रकरणादिकल्पनस्य आनन्तर्येऽपि तुल्यत्वात् । पृ. १०६७, * आनन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वे तस्य पूर्वोत्तरयोः पदार्थयोः तुल्यत्वात् पूर्वस्यैव उत्तराङ्गत्वं नोत्तरस्य पूर्वाङ्गता इति नियमायोगः । पृ. १०६६.

**आनन्तर्याधिकरणम् ।** हस्तावनेजनाधिकरणम् । मुष्टीकरणहस्तावनेजनादि कृत्स्ने प्रकरणे निविशते ॥

**आनन्तर्यमचोदना । ३।१।१४।२४ ॥**

**भाष्यं**— ज्योतिष्टोमे श्रूयते 'मुष्टी करोति, वाचं यच्छति, दीक्षितमावेदयति' इति । तथा 'हस्ताववनेनिक्ते, उलपराजिं स्तृणाति' इति । तत्र संदेहः किं मुष्टीकरणं वाग्यमश्च आवेदनार्थं, उत कृत्स्नप्रकरणे निवेशः इति । तथा हस्तावनेजनं किं उलपराजिं स्तरितुं, उत प्रकरणे सर्वपदार्थान् कर्तुं इति । किं तावत् प्राप्तं ? हस्तावनेजनं हस्तसंस्कारार्थं, वाग्यमः पुरुषसंस्कारार्थः । आमन्त्रयमाणः एकाग्रो भवति, पदार्थान् अनुतिष्ठति । तेन केषांकेषां पदार्थानां इमौ संस्कारौ, इत्याकाङ्क्षा अस्ति । सत्यामाकाङ्क्षायां आनन्तर्येण निराकाङ्क्षीकरणम् । तस्मात् आनन्तर्यात् आवेदनार्थो वाग्यमः मुष्टीकरणं च । हस्तावनेजनं च उलपराजिं स्तरितुम् । **एवं प्राप्ते ब्रूमः ।** सर्वैः प्रकरणाधीतैः संबन्ध इति । कुतः ? वाक्यभेदात् । कथं वाक्यभेदः ? अर्थद्वयस्याभिधानात् । नहि 'दीक्षितं आवेदयितुं' इत्यस्मिन् अर्थे 'आवेदयति' इति ( भवति ), न च 'स्तरितुं' इत्यस्मिन् अर्थे 'स्तृणाति' इति । स्तरणमपि विधीयते अवनेजनं च । मुष्टीकरणं वाग्यमश्च विधीयते आवेदनं च । न च एषां परस्परेण कश्चित् संबन्धोऽस्ति । न च

पदार्थाकाङ्क्षायां सत्यां आनन्तर्यं एकवाक्यतायां कारणं भवति । तस्मात् प्रकरणधर्मा एवंजातीयकाः ।

**वा**— क्रमविनियोगः अनन्तरमवस्थितः । इदानीं तदपवादः क्रियते । मुष्टयोः करणं, वाग्यमश्च याजमानं, आवेदनमाध्वर्यवं, तत्र कथमङ्गाङ्गिभाव आशङ्क्यते । नैष दोषः । आध्वर्यवेष्वपि प्रयोक्तृत्वेन यजमानस्य कर्तृत्वात् । **अथवा** यत् तत्र दीक्षितस्य आवेद्यमानं, तस्याङ्गत्वेन इतरौ संदिह्येते । कस्मात् पुनस्तुल्ये आनन्तर्ये पूर्वस्यैवाङ्गत्वमुच्यते, न परस्य ? **के चिदाहुः**, अनियमप्रदर्शनार्थमेव प्राथम्यात् पूर्वोपादानम् । **अथवा** सर्वभावनासु ' किं ' इत्युपकार्यापेक्षणं प्रथममुत्पद्यते । सर्वापेक्षणेषु च पुरस्तादुच्चरितस्य ग्रन्थानुगुण्यात् पूर्वमालोचनं भवति, तेन ' मुष्टिकरणवाग्यमाभ्यां किं कर्तव्यं ' इत्यपेक्षिते ' दीक्षितमावेदयति ' इत्युपतिष्ठते । न च तदतिक्रमे हेतुरस्ति । शक्यते च तस्यापि परतः प्रयोजनवत्त्वं कल्पयितुं, अतस्तदर्थत्वमेव युक्तम् । एवं हस्तावनेजनस्य उलपराजिस्तरणार्थत्वम् । ऊर्ध्वैस्तृणैः दीर्घं वेदिमध्ये स्तरणं उलपराजिस्तरणं प्रत्येतव्यम् । ( **सुधा**— उत्पूर्वस्य लुनातेः कपन्प्रत्यये धात्वन्तोपसर्गान्तयोः लोपनिपातनात् ककारनकारयोश्च इत्संज्ञात्वेन लोपात् उलपशब्दस्य ऊर्ध्वलवनार्हसुगन्ध्यादिकठिनतृणवाचिता ऊर्ध्वशब्देनोक्ता । तृतीयया उलपैः कृता राजिः इत्यर्थे तृतीयासमासो दर्शितः । रेखाऽपरपर्यायराज्याकारत्ववाचितया राजिशब्दं व्याख्यातुं दीर्घमित्युक्तम् । पृ. १०६७. **कुतूहले तु** उलपाः उशीरतृणानि शुष्कतृणानि वा । तेषां राजिः पङ्क्तिः इत्येवोक्तम् । **याज्ञिकास्तु** एकं दर्भमुष्टिमेव पृथक् गृह्णन्ति ) । सर्वत्र च योग्यत्वं, अवान्तरप्रकरणं, एकवाक्यत्वं च महाप्रकरणात् बलीयांसि विनियोजकानि । तस्मात् सर्वं पूर्वसमाम्नातं उत्तरसमाम्नातस्याङ्गम् । योग्यत्वाभावात्तु मुष्टिकरणवाग्यमयोः परस्पराङ्गत्वं नोपन्यस्तम् । नहि उभयोः प्रधानार्थयोरन्योन्यापेक्षा । तेन अयोग्यमात्रमतिक्रम्य न दूरं गन्तव्यमिति । **एवं प्राप्ते ब्रूमः । ' न तावदेकवाक्यत्वं दृश्यते, योग्यता समा । अवान्तरकथंभावस्तदानीं नावगम्यते ॥ '** नहि द्वयोराख्यातयोः केन चिदुपवन्धेन विना एकवाक्यत्वं संभवति, यत् प्रकरणं बाधेत । योग्यता पुनः अनन्तरार्थत्वे च समा, यद्वा सर्वार्थत्वे युक्ततरा । बहुषु हि पदार्थेषु अवधानं उपयुज्यतेतरां, एकस्तु यथाकथंचिदपि क्रियते । न च अवान्तरप्रकरणमिह विद्यते । यदि तावत् पूर्वस्य कथंभावः, तत उत्तरमेवाङ्गं प्राप्नोति । न चैवं भवितुमर्हति, साध्यांशस्य अपरिपूर्णत्वात् । न च उत्तरेण असौ ( कथंभावः ) अक्लृप्तप्रयोजनावस्थेन शक्यः पूरयितुम् । एवं तस्याप्युत्तरेण, इति यावत्प्रधानं प्राप्तम् । यद्येवं ततो योऽन्तराले गुणकामः ( गोदोहनादिः ) तेन सह सर्वमाधस्त्यं ( अधस्तनं इत्यर्थः ) अङ्गं संबध्येत, नैव प्रधानं यावत् प्राप्नुयात्, अवान्तरकथंभावस्य निष्पन्नत्वादिति । **उच्यते** ।

**' यदि नामास्य विज्ञातौ स्यातां वाक्यगतौ गुणौ । अवान्तरकथंभावस्ततस्तावन्तरा भवेत् ॥ '** [ तौ गुणौ ] । प्रधानकथंभावस्तु अभितः [ प्रधानात् प्राक् पश्चाच्च ] अन्यसंबन्धमात्रमुक्त्वा यावदन्तं गच्छति इत्यनुषङ्गाधिकरणे ( २।१।१६ ) व्याख्यातम् । **ननु** एवं सति सर्वावान्तरप्रकरणोच्छेद एव प्राप्नोति । **उच्यते** ।

**' परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः । ज्ञाते, पुनश्च तैरेव संदंशेन तदिष्यते ॥ '** [ तत् अवान्तरप्रकरणम् ] । सर्वेषां हि प्रयाजादीनामङ्गं किं चिदुक्त्वा पुनः परामर्शोऽस्ति, इति तत्पर्यन्तावान्तरप्रकरणकल्पना भवति । अन्यथा हि अव्यवस्थैव स्यात्, सर्वशेषाणां परस्परशेषत्वप्रसङ्गात् । यत्र पुनः संकीर्तनं नास्ति, तत्र सर्वं प्रधानार्थमेव अध्यवसातव्यम् । तस्य तु किं केवलस्य, अथ साङ्गस्य इत्यत्र विवेकं ' प्रकरणविशेषादसंयुक्तं प्रधानस्य ' ( ३।७।१।१ ) इत्यारभ्य वक्ष्यति । तदिह योग्यतया मुष्टिकरणादीनां साङ्गप्रधानार्थत्वं निश्चितम् । यदि तु आवेदयितुं स्तरितुं इति च श्रूयते, ततः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (पा० ३।३।१० ) इत्येकवाक्यतया विनियोगो भवेत्, न तु एवमस्ति । तस्मात् सर्वार्थत्वमिति ।

**वाक्यानां च समाप्तत्वात् । २५ ॥**

**भाष्यं**—स्वेनस्वेन पदसमूहेन परिपूर्णमेकं वाक्यम् ।

तथा अपरं, तथा सर्वाणि यान्युदाहृतानि। तस्मात् विस्पष्टमर्थद्वयं, विभागे च निराकाङ्क्षता। तेन वाक्यभेदः। अतः संयोगतोऽविशेषात्प्रकरणाविशेषाच्च कृत्स्ने प्रकरणे निवेशः इति।

**वा**—इतश्च आनन्तर्यमप्रमाणम्। यत एकवाक्यतालक्षणमेषु प्रत्येकं दृश्यते, न सर्वेषु। तस्मादपि नान्योन्यार्थता।

**शा**—आनन्तर्यात् एकवाक्यत्वात् अवान्तरप्रकरणाद्वा तन्मात्राङ्गत्वे प्राप्ते अभिधीयते '**लिङ्गप्रकरणाभ्यां हि सर्वार्थत्वं प्रतीयते। क्रमश्च दुर्बलस्ताभ्यामतः सर्वार्थता भवेत्॥**'

**सोम**—पूर्वत्र क्रमात् आज्यभागार्थत्वे मन्त्राणामभिहिते इह क्रमः अपोद्यते इति (अपवाद-) **संगतिः**। **प्रयोजनं** स्वकाले दैवात् हस्तावनेजनादि अकृत्वा कतिपयपदार्थानुष्ठानानन्तरं तत्स्मरणे यत्र स्मृतं, तदुत्तरपदार्थानामवैगुण्याय तत्र कर्तव्यं सिद्धान्ते, पूर्वपक्षे तु अनन्तरपदार्थस्य अनुष्ठितत्वात् हस्तावनेजनाद्यकरणप्रायश्चित्तमात्रम्। **सूत्रे** अचोदना अप्रमाणमित्यर्थः।

**कौ**—**प्रयोजनं** उलपराजिस्तरणस्य आरादुपकारकत्वेन प्रधानमात्रार्थत्वात् गृहमेधीये लोपेन हस्तावनेजनस्यापि लोपः पूर्वपक्षे। सिद्धान्ते तु आज्यभागाङ्गत्वेन करणमिति। पृ. २१६.

**वि**—'हस्तौ द्वाववनेनिक्ते स्तृणात्युलपराजिकाम्। दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिले॥, तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात् क्रमात्।, लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता॥'

**भाट्ट**—दर्शपूर्णमासयोः 'हस्तावववनेनिक्ते' 'उलपराजीः स्तृणाति' इति, तथा ज्योतिष्टोमे 'मुष्टी करोति वाचं यच्छति' 'दीक्षितमावेदयति' इति श्रुतम्। तत्र हस्तावनेजनं हस्तसंस्कारार्थं मुष्टीकरणवाग्यमौ च मनःप्रणिधानार्थौ। अतस्तत्त्रयमपि तावत् करिष्यमाणकर्मार्थमित्यसंदिग्धम्। तत्र करिष्यमाणं कर्म आनन्तर्यादेकवाक्यत्वाद्वा उलपराजिस्तरणदीक्षितावेदनरूपमेव। **इति प्राप्ते,** आनन्तर्यस्य अवर्जनीयत्वात् अङ्गताग्राहकत्वानुपपत्तेः, ग्राहकत्वेऽपि वा प्रकरणेन बाधात् 'पश्य मृगो धावति' इतिवत् आकाङ्क्षाविरहेण चाख्यातद्वयस्य यच्छब्दाद्युपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारकस्य अस्य प्रकरणात् अङ्गप्रधानसाधारणत्वोत्तरपदार्थाङ्गत्वं हस्तावनेजने। मुष्टीकरणवाग्यमयोस्तु अङ्गुलिवाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम्।

**मण्डन**—'न मुष्टिर्वाग्यमार्थो।' १३.

**शंकर**—'उत्तराङ्गं न वाग्यमः।'

* आनन्तर्याधिकरणं (३।१।१४) 'मिथश्चानर्थसंबन्धः' (३।१।१३) इत्यधिकरणस्यापवादः। **भा.** ३।१।१४। २४.

* **आनमनं** दक्षिणानामेकं कार्यम्। **भा.** १०।६। १८।७०. * दक्षिणानां ऋत्विगानमनार्थत्वात् **आनमनस्य** च साहाय्योपादित्सया प्रयोगार्थता। **वा.** ३।७। ५।११.

* **आनयतिरयं द्विकर्मकः**। तत्रैकं कर्म क्रियया व्याप्यमानमपि गुणत्वं प्रतिपद्यते इतरत् प्रति। यथा, अजां ग्रामं नयतीति। तत्र विवक्षातः प्राधान्यम्। यदि अजा संस्कार्या, ततः सा प्रधानं, ग्रामस्तदर्थः। अथ ग्रामस्य केन चित् कारणेन प्राधान्यं, ततः आनयतिविशिष्टा अजा तदर्था। तत्र द्वयोर्द्वितीयाऽन्तयोर्न शब्दतो निर्णयः, किं तर्हि वस्तुतः। यत्र तु द्वे अपि प्रयोजनवती द्वितीयाऽन्ते च, तत्र नास्त्येव निर्णयः। यत्र तु सप्तम्या निर्दिष्टमेकमाधारभूतं, तत्र इतरत् आधेयत्वात् तत् प्रति नीयते। तेन व्याप्यमानत्वात् इतरदेव तत्र प्रधानम्, अधिकरणभावो नान्तरीयकत्वादनूद्यते तच्छेदमात्रं क्रियते। **वा.** ४।१।९।२३.

* **आनयनं** चतुर्थपञ्चमप्रयाजनिष्पादकं जुह्वां औपभृताज्यस्य प्रयोजकम्। **वि.** ४।१।१५. * आनयनं तप्ते पयसि दध्नः आमिक्षायाः प्रयोजकम्। **भा.** ४।१। ९।२२-२४.

* **आनर्थक्यं** वाक्यदोषः। तत्र विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्यं इत्यत्रोदाहरणं— 'आमनमस्यामनस्य देवाः इति तिस्र आहुतीर्जुहोति'। अत्र हि 'सांग्रहण्या ग्रामकामो यजेत' इति प्रधानवाक्यगतग्रामकामपदानुषङ्गेण विवक्षितार्थापेक्षया आमन-

होमविधेः आविक्याभ्युपगमे ग्रामकामपदानुपङ्गानर्थक्यम्। बाल. पृ. ३.

**आनर्थक्यात् तदङ्गेषु। ३।१।९।१८॥**

वाजपेये 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति श्रूयते। अत्र सप्तदशारत्निता यूपस्य उक्ता। परंतु वाजपेये साक्षात् यूपस्य संबन्ध एव न संभवति। तथा च यूपस्य वाजपेये आनर्थक्यात्, अविद्यमानः अर्थः प्रयोजनं यस्य यूपस्य सः अनर्थकः तस्य भावः आनर्थक्यं, आनर्थक्यात् प्रयोजनशून्यत्वात् बाधितत्वप्रसङ्गात् वाजपेयापूर्वरूपप्रयोजनकत्वं न संभवति, इति कृत्वा तदङ्गेषु वाजपेयाङ्गेषु पशुषु यो यूप. तत्र सप्तदशारत्निता निविशते। एवं अन्यत्रापि मुख्ये असंभवे अङ्गे निवेशः इति न्यायसामान्यार्थं तदङ्गेषु इति बहुवचनम्। वाजपेयेऽपि च सप्तदश पशवः। तदर्थमपि बहुवचनम्। के.

**आनर्थक्यतदङ्गन्यायः॥**

**आनर्थक्यात् तदङ्गेषु। ३।१।९।१८॥**

**भाष्यं**— वाजपेये श्रूयते 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति। तत्र संदेहः किं सप्तदशारत्निता वाजपेयस्य ऊर्ध्वपात्रे निविशते, उत पशोर्यूपे निविशते इति। किं तावत् प्राप्तम्? ऊर्ध्वपात्रे इति। कुतः? वाजपेयस्य यूपाभावात्। यत् वाजपेयस्यास्ति पात्रं यूपसदृशं, तत्र भवितुमर्हति। अस्ति च षोडशिपात्रम्। तच्च खादिरत्वात् ऊर्ध्वत्वाच्च यूपसदृशम्। तत्र निवेशे सति वाजपेयशब्दः आञ्जस्येन भवति। इतरथा वाजपेयाङ्गपशुयागे लक्षणया वाजपेयशब्दो वृत्तः इति गम्यते। ननु त्वत्पक्षेऽपि यूपशब्दो लक्षणया ऊर्ध्वपात्रे। उच्यते। सर्वथा वयं लक्षणाशब्दान्न मुच्यामहे। मत्पक्षे तु वाजपेयप्रकरणमनुगृह्यते। तस्मादूर्ध्वपात्रे निवेश इति। **एवं प्राप्ते ब्रूमः।** आनर्थक्यात् तदङ्गेषु। वाजपेयशब्दस्तावत् सोमयागविशेषवचनः। तस्य साक्षात् यूपेन न प्रयोजनम्। अस्ति तु तस्य अङ्गं पशुयागः, तस्य तु पशुं बन्धुं यूपेन कार्यम्। साक्षात् वाजपेययूपस्य यदि सप्तदशारत्निता विधीयते, तस्य अभावात् अनर्थकमेव वचनं प्राप्नोति। तत् अनर्थकं मा भूत् इति योऽस्य पशुयागे यूपः, तत्र निवेशमर्हति। ऊर्ध्वपात्रे च यूपशब्दो लक्षणया स्यात्। ननु इतरस्मिन्नपि पक्षे वाजपेयशब्दो लक्षणयेति, नेति ब्रूमः। वाजपेये एव वाजपेयशब्दो भविष्यति, शक्ष्यति च स पशुयूपं विशेष्टुम्। सः अस्याङ्गस्य उपकारकः। यश्च यस्योपकारिणः उपकरोति, भवति स तस्य संबद्धो मुख्येनैव संबन्धेन। न च एकान्तरितं इति कृत्वा असंबद्धो भवति। यथा 'देवदत्तस्य नप्ता' इति, पुत्रेण चासौ अन्तरितः, अथ च देवदत्तेन मुख्येनैव संबन्धेन संबद्धः। तस्मात् एष एव पक्षः आश्रयणीयः। नहि एतस्मिन् पक्षे कश्चिदपि लक्षणाशब्दो भवतीति।

**वा**— यदि 'सप्तदशारत्निः वाजपेयस्य' इति विधीयते, यूपशब्दः यथाकथंचित् तदनुवादः, ततः षोडशिपात्रे निवेशः। अथापि 'यो वाजपेयस्य संबन्धी, स सप्तदशारत्निः' इति विधीयते, तथाप्येवम्। अथ 'यो यूपः, स सप्तदशारत्निः' इति वचनव्यक्तिः, वाजपेयशब्दो यथाकथंचित् विशेषणं प्रकरणप्राप्तानुवादो वा, ततः तदङ्गपशुयूपस्य इदं परिमाणमिति। किं प्राप्तं? '**आनन्तर्यात् प्रधानत्वात् तथा प्रकरणात् श्रुतेः। वाजपेयेन संबन्धः साक्षान्न पशुना सह॥**' साक्षात् कर्मणः सप्तदशारत्नित्वं न संभवति इति तदङ्गद्रव्यं गृह्यते। तत्र यदेव साक्षात् संबन्धि, तदेव ग्रहीतव्यम्। **यद्यपि** पशुरपि वाजपेयप्रकरणान्तर्गतः इति तत्संबन्धेऽपि प्रकरणात् अनतिरेको भवत्येव, वाजपेयस्य तद्धि भवति, **तथापि** अङ्गप्रधानानां भिन्नकथंभावयोगित्वात् वाजपेयकथंभावेन अग्रहणात् प्रकरणबाधः अभिधीयते। वाजपेयस्य इति च षष्ठीश्रुत्या संबन्धो भवति। भवतस्तु यूपसामानाधिकरण्यात् वाक्येन स्यात्। न च वाजपेयशब्दवेलायां कश्चित् विरोधः, येन लक्षणा आश्रीयते 'गुणे त्वन्याय्यकल्पना' (१।३।५।१५) इति। तत् वरं यूपशब्दे एव लक्षणा। तस्मात् ऊर्ध्वपात्रे एव निवेशः। **इति प्राप्तेऽभिधीयते। 'अगत्या लक्षणावृत्तिः समभिव्याहृतैर्भवेत्। न चोर्ध्वपात्रसंबन्धी यूपशब्दः प्रतीयते॥'** यो हि प्रकरणं अव्यवहितसंबन्धं च अनुजिघृक्षति, तस्य

यूपशब्दः अनर्थकः स्यात् । ऊर्ध्वपात्रं लक्षयिष्यति इति चेन्न । असति सामानाधिकरण्ये अन्यथा संभवे वा लक्षणाऽभावात् । अस्मत्पक्षे पुनः न किंचित् लक्षणावृत्तं, षष्ठ्याः संबन्धमात्रवाचित्वेन अनङ्गेऽपि उपकारकमात्रापेक्षया उपपन्नत्वात् । नहि असौ अङ्गाङ्गिसंबन्धमेव एकं ब्रवीति । अनङ्गमपि स यूपः तदङ्गपश्वर्थत्वात् उपकारको वाजपेयस्य । यत्तु आनन्तर्येण षष्ठीश्रुतिः विनियोजिकेति, तत् यूपशब्देनापि सह अविशिष्टम् । अतश्च सप्तदशारत्निविधिपरे अनूद्यमानत्वात् यादृशं वयं वाजपेयस्य यूपं पश्यामः, तादृशस्य ग्रहणं, इति पशुयूपाश्रयणम् । अस्ति तु एषाऽपि जिज्ञासा, यदि वाजपेयस्य साक्षात् यूपः स्यादिति । यदा तु स नोपलब्धः, तदा पक्षान्तरमवलम्बितम् । किंच '**वाजपेयेन संबन्धस्त्रेधाऽपि न निरूप्यते । साक्षात् संबन्धिमात्रेण तद्यूपेनाथवा स्फुटः ॥**' (त्रेधा इति व्याचष्टे–) साक्षात् तावत् न सप्तदशारत्नित्वं युज्यते इत्युक्तम् । संबन्धिमात्रमपि अनिर्दिष्टं वाजपेयस्य इत्येतावन्मात्रेण न ज्ञायते । यूपशब्दार्थस्तु अतत्संबन्धित्वात् दूरभ्रष्टः । तस्मात् यथोक्तमेवास्य ( पारंपर्येण ) विशेषणत्वं अधिकारप्रकरणप्राप्तं अनुवदिष्यति । वक्ष्यति हि एतत् ' आरादपीति चेत्, तद्वाक्ये हि तदर्थत्वात् ' ( ३।७।१।३–४ ) इत्यत्र ' यथा प्रकरणवशेन तदुपकारिमात्रे धर्मा विधीयन्ते, न साक्षात् अङ्गेष्वेव केवलेषु इति । ' तस्मात् न केन चित् प्रमाणेन विरोधः इति ।

**शा**—सप्तदशारत्नित्वस्य ऊर्ध्वपात्रे निवेशः । इति प्राप्ते उच्यते । '**स्यादेवं यदि यूपेन संबन्धे लक्षणा भवेत् । वाजपेयश्रुतेर्नासौ श्रुतिवृत्त्यैव सा यतः ॥ षष्ठी संबन्धमात्रार्था नाङ्गाङ्गित्वमपेक्षते । नाप्यव्यवधिसंबन्धं देवदत्तस्य नप्तृवत् ॥ यूपस्य च पशुद्वारा वाजपेयोपकारतः । संबन्धमात्रमस्त्येव क्रतुनाऽतो न लक्षणा ॥ ऊर्ध्वपात्रेण संबन्धे यूपशब्दस्य गौणता । अनन्तरेण संबन्धः प्रधानेन च संगतिः ॥ प्रक्रियाऽनुग्रहश्चैवं नादृत्यः श्रुतिबाधतः । तेन सप्तदशारत्निर्यूप इत्येव संगतिः ॥ सा च प्रकरणाद् वाजपेयसंबन्धियूपगा । तेनायं वाजपेयस्येत्यनुवादो भविष्यति ॥**'

**सोम**—संस्कारविनियोगविशेषनिरूपणानन्तरं गुणविनियोगनिरूपणात् **संगति**रित्याहुः । **सूत्रार्थस्तु**—सप्तदशारत्नित्वादिकं प्रधाने वाजपेये आनर्थक्येनायोग्यत्वात् तदङ्गेषु निविशते इति ।

**वि**— ' भवेत् सप्तदशारत्निर्वाजपेयस्य यूपकः । उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥, आनन्तर्यात् प्रकरणात् कर्माङ्गं षोडशिन्यदः । ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥ , यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः । सौमिकत्वाद् वाजपेये यूपो नास्ति पशुं विना ॥ '

**भाट्ट**— ' सप्तदशारत्निर्वाजपेयस्य यूपः ' इत्यत्र अव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशारत्नित्वं वाजपेयोद्देशेन षष्ठीश्रुत्या विधीयते न यूपोद्देशेन, अतिप्रसङ्गापत्तेः, वाजपेयेन विशेषणे विशिष्टोद्देशाच्च । अतः सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयोर्ध्वपात्रद्वारेण निविशते, यूपपदं सादृश्याद्गौणम् । इति प्राप्ते, यूपपदस्य गौणत्वे प्रमाणाभावात् यूपपदेन स्वकार्यं लक्षयित्वा तदुद्देशेन सप्तदशारत्निर्विधीयते । यद्यपि च द्रव्यं अरत्निपरिमाणं चातिदेशतः संभवत्प्रातिकं, तथापि तदनुवादेन संख्याविधाने एकप्रसरताभङ्गापत्तेः ततः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टद्रव्यमेव संख्याविधिफलकं ' लोहितोष्णीषाः ' इत्यादिवत् विधीयते । यूपकार्यस्वरूपे चानर्थक्यात् प्रकरणात् वाजपेयापूर्वसाधनत्वलक्षणया वाजपेयापूर्वसंबन्धियूपलाभात् 'वाजपेयस्य ' इत्यनुवादः । षष्ठी च परंपरासंबन्धेऽप्युपपन्ना नप्तरि देवदत्तस्यायमितिवत् । व्यवहितत्वादि च गौणत्वापेक्षया न दोषः ।

**मण्डन**— ' यूपेऽरत्निगुणः पशोः । ' ८.

**शंकर**— ' अनर्थकेऽङ्गावतारः । ' ९.

* ( **आनर्थक्यतदङ्गन्यायस्य स्वरूपम्** ) साक्षात्संबन्धेन अन्वयासंभवे परंपरासंबन्धेन अन्वयो भवति, विधेरानर्थक्यप्रसङ्गे इति । **के.** * आनर्थक्यात् तदङ्गेषु इत्यधिकरणे ' सप्तदशारत्नित्वस्य वाजपेये साक्षादन्वयासंभवात् वाजपेयाङ्गभूतपशुयागद्वारा अन्वयः ' इति

न्यायः ' आनर्थक्यात् तदङ्गेषु ' इत्यधिकरणे वक्ष्यते । कु. २।२।१२।२७. * ' पदार्थे अनर्थकस्य सतः तदङ्गे निवेशः ' इति आनर्थक्यतदङ्गन्यायसूत्रस्यार्थः, एतदेव च न्यायस्य स्वरूपम् । के.

* ( **आनर्थक्यतदङ्गन्यायारम्भस्य कारणम्** ) भावनाद्वाराऽपि प्रवर्तमानस्य विधेः अप्राप्तप्रापणस्वभावत्वेन अन्यतः प्राप्तायां तात्पर्यायोगात् आनर्थक्यतदङ्गन्यायेन गुणे तात्पर्यावतारो युक्तः । **सु.** पृ. ७७५, * रेवतीवारवन्तीयसंबन्धोपजीवनाशक्तेः गुणत्वेन च आनर्थक्यतदङ्गन्यायविषयत्वात् अङ्गेषु तत्संबन्धं निक्षेप्तुमारभमाणः ...। पृ. ८६१. * ( **अयं न्यायो यत्र यथा न प्रवर्तते** ) आनर्थक्यतदङ्गन्यायः अन्यथा आनर्थक्यपरिहारोपपत्तौ न प्रवर्तते । **सु.** पृ. ८५६. * आनर्थक्यतदङ्गन्यायेनापि कर्मगतसाध्यत्वानिर्वाहात् न द्वितीयास्थले तन्न्यायप्रवृत्तिः । अत एव ' न सौम्येऽध्वरे ' इति सप्तमीस्थले आनर्थक्यतदङ्गन्यायो नावतरति इति दशमे वक्ष्यते ( वार्तिके १०।८।२।५ ) । **सोम.** ३।७।४. * आनर्थक्यात्तदङ्गेषु इति न प्रधानादवतार्य तदङ्गमाश्रीयते । यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थितः उपकरोति इत्येवं कल्प्यते । **वा.** १।२।२।२२ पृ. १३६. * **न च** पूर्वाधिकरणन्यायेन ( ३।३।१।१-७ ) यजुर्वेदविहिताधानेऽपि ज्ञायमानमुपांशुत्वं तत्रासंभवात् आनर्थक्य० न्यायेन तदङ्गमन्त्रेषु निविशमानं वारवन्तीयमपि आस्कन्दतीति **वाच्यम्** । तत्तद्वेदविहितत्वनिबन्धनस्वरस्य साक्षादेव निवेशसंभवात् नात्र आनर्थक्यतदङ्गन्यायावतरणम् । **कु.** ३।३।२।८ पृ. ३१३. * न च षष्ठीप्रतिपाद्यात् संबन्धाद्विना आनर्थक्यतदङ्गन्यायोऽस्ति इत्युक्तम् । **वा.** ३।६।७।२५. * न प्रत्यक्षेण न चोदकेन ज्योतिष्टोमे उपवीतम् । तत्प्रकृतिश्च श्येनः, न दर्शपूर्णमासप्रकृतिकः । आनर्थक्यात्तदङ्गेषु इति न्यायोऽत्र नास्ति । प्रधाने हि असंभवन् अङ्गेषु अर्थात् क्रियते । संभवति चात्र प्रधाने एव निवीतम् । **टुप्.** १०।४।१।१ पृ. १९०६. * नायं आनर्थक्यतदङ्गन्यायस्य विषयः । सर्वत्र हि श्रुतशब्दजन्यशाब्दबोधे योग्यताज्ञानाभावेऽपि अयोग्यतानिश्चयाभावमात्रेण शाब्दबोधस्य आनुभविकत्वात् अयोग्यतानिश्चयः प्रतिबन्धकमात्रम् । यत्र तु कल्पितशब्देन शाब्दबोधः तत्र शब्दकल्पनायां योग्यताज्ञानस्यैव कारणत्वं, अयोग्यतानिश्चयाभावसत्त्वेऽपि योग्यताज्ञानाभावे शब्दकल्पनाऽनुदयस्य आनुभविकत्वात् । अतश्च यागगतयोग्यताज्ञानाभावेन तद्गताश्रयन्वबोधकशब्दस्यैव प्रकरणेन अकल्पनात् कुतस्तदसंभवे अङ्गेष्ववतारः ? **कौ.** २।२।१२।२६ पृ. २८६. * सर्वत्र स्वोद्देश्यस्य अपूर्वव्यभिचारे अपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशः, यथा ' व्रीहीनवहन्ति ' इत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः । प्रकृते तु ( पवमानहविषां अग्न्यङ्गत्वानङ्गत्वविचारस्थले वारणो यज्ञावचरः इत्यत्र ) यज्ञपदेनैव अव्यभिचरितापूर्वसाधनत्वोपस्थितौ क्व तदङ्गावतारः इति वार्तिककारः । **भाट्ट.** ३।१।१२.

* ( **अस्यापवादः** ) अभिक्रमणोपसंव्यानयोः आनर्थक्यतदङ्गन्यायेन कर्त्रन्वयसिद्धिमुपजीव्य तद्विशेषे विचारिते संप्रति आनर्थक्यतदङ्गन्यायापवादः क्रियते ( गुणानां च परार्थत्वात् ० इति ) । **सोम.** ३।१।१२।२२.

* ( **अस्योज्जीवनम्** ) अनुवाक्यानां प्रधानान्वये आनर्थक्यापत्तेः तदङ्गभूतयोः आज्यभागयोः क्रमानुसारेण अवतारोक्त्या वारणाधिकरणा( ३।१।१२ )पोदितानर्थक्यतदङ्गावतारोज्जीवने कृते । **सु.** पृ. १०६५.

* ( **अथ आनर्थक्यतदङ्गन्यायसाध्याः विषयाः वर्णक्रमेणोपन्यस्यन्ते** । स च वर्णक्रमः न वाक्यप्रथमाक्षरेषु, किंतु स्थूलाक्षरेषु द्रष्टव्यः ) । **अध्रिगुप्रैषे** ' न पिता वर्धते, न माता ' इत्यत्र अर्थे पुष्ट्यादिवृद्धेः प्रत्यक्षत्वात् प्रतिषेधासंभवात् आनर्थक्यतदङ्गन्यायेन शब्दे विज्ञायते । **वा.** १।२।४।४४. * वाजपेयाङ्गत्वेनावगतस्य सप्तदशारत्नित्वस्य तत्रासंभवात् तदङ्गपशुयागावतारे अभिहिते तेनैव न्यायेन **अभिक्रमणोपव्यानयोः** कर्माङ्गभूतकर्त्रवतारे सिद्धे किमभिक्रमणस्य कृत्स्नदर्शपूर्णमासाङ्गत्वात् तदङ्गेषु सर्वर्त्विक्षु अवतारः, प्रयाजहोमाङ्गत्वाद्वा तदङ्गभूते अध्वर्युमात्रे ( इति विचारात् ) उपवीतस्य च किं सामिधेन्यनुवचनमात्राङ्गत्वात् तदङ्गभूते होतृमात्रे अवतारः, कृत्स्नदर्शपूर्णमासाङ्गत्वाद्वा

तदङ्गभूतेषु सर्वेष्विति इति विचारात् पर्यवसितः आनर्थक्यतदङ्गावतारन्यायः। **सु.** पृ. १०५९. * न च प्रधानभूतपशुयागस्य आश्रयत्वासंभवे आनर्थक्यतदङ्गन्यायेन यूपे अवतारः, **आश्रयत्वस्य** आनर्थक्यतदङ्गन्यायाविषयत्वेन रेत्वत्यधिकरणे स्थापयिष्यमाणत्वात्। **कौ.** १।२।२।२२. पृ. ४५, * '**इषे त्वा**' इति मन्त्रः समाख्यया पुरोडाशाङ्गत्वेन प्रसक्तः 'इषे त्वेति शाखां छिनत्ति' इति इतिकरणाख्यगौणश्रुत्या शाखाछेदनाङ्गत्वेन विनियुज्यते। न चात्र अधिकाराख्यप्रकरणेन साक्षात् यागाङ्गत्वावगतेः अयं श्रुतिक्रमविरोधः, यागस्य स्पष्टलिङ्गकमन्त्रान्तरावरुद्धत्वेन अस्य साक्षात् तत्रानन्वये आनर्थक्यतदङ्गन्यायेन अङ्गेषु प्रसक्तौ समाख्याऽनुरोधेन पुरोडाशाङ्गतोपपत्तेः। ३।३।७।१४ पृ. ३५६. * **उच्चैस्त्वादेः** शब्दधर्मस्य क्रियायां संनिवेशासंभवात् आनर्थक्य० न्यायेन तदङ्गमन्त्रेषु निवेशः। **कु.** ३।३।१।१. * परे तु अविवक्षितकारकं गुणमात्रं प्रकरणयुक्तं प्रयोगवचनेन अनुगृहीतं आनर्थक्यात्तदङ्गेषु इत्येवं द्रव्येषु अवतीर्णं सर्वार्थं मन्यन्ते। तत्तु प्रकरणेन अनितिकर्तव्यताऽऽत्मकगुणग्रहणाभावात् आनर्थक्यतदङ्गन्यायस्य च क्रयाङ्गैकहायन्यां उपपन्नतरत्वेन पूर्वपक्षमूलाभावप्रसङ्गात् उपेक्षणीयम्। **वा.** ३।१।६।१२ पृ. ६९१. * स्वनिर्विषयत्वान्यथाऽनुपपत्त्या कथंचित् आनर्थक्यतदङ्गन्यायेन ( **औद्गात्रसमाख्यायाः** ) अङ्गमात्रविषयकत्वकल्पनेऽपि। **भाट्ट.** ३।७।२४. * '**कर्तरि शप्**' ( पा० ३।१।६८ ) अत्र कर्तरीति **परसप्तमी**। न च शब्दसंनिवेशे कर्ता परत्रावस्थितः संभवति, अतः 'आनर्थक्यात्०' इति शब्दे कार्ये विज्ञायते। तत्रैषोऽर्थः 'कर्तृवाचिनि सार्वधातुके प्रत्यये परत्रावस्थिते इति'। **वा.** ३।४।४।१३ पृ. ९२२. * **कर्तृशब्दस्य** आनर्थक्यतदङ्गन्यायेन कर्तृवाचिशब्दवाचित्वं अङ्गीकृत्य सार्वधातुकशब्दसामानाधिकरण्येन व्याख्यानात्। ( कर्तरि कृत्, सार्वधातुके यक् ) **सु.** पृ. १४१७. * **दृतिनवनीतमाज्यम्**। अनेकार्थविध्यसंभवात् आज्यमनूद्य विशेषमात्रं विधीयते। न च प्रधानस्याज्यप्राप्तिः। तस्मात् 'आनर्थक्यात्तदङ्गेषु' इत्येव सिद्धम्। **वा.** ३।८।२०।३८. * **नञः** निपातत्वेन क्रियाऽन्वयनैयत्याभावात् क्रियाऽन्वयाङ्गीकारे च प्रधानभूतायाः तस्या एवान्यथात्वापत्तेः, आनर्थक्यतदङ्गन्यायेन क्रियाविशेषणेषु अन्वयावगमात् भक्षणाभावसंकल्पस्य विधानं 'न कलञ्जं भक्षयेत्' इत्यत्र इति पूर्वः पक्षः। **भाट्ट.** ६।२।५. * 'आधानेऽपि तथेति चेत्' ( ३।८।२०।३८ ) इति अनिष्टापादनेन सिद्धान्ताक्षेपार्थं सूत्रं **पवमानेष्टीनामनङ्गत्वेन** आनर्थक्यतदङ्गन्यायाविषयत्वादयुक्तमाशङ्क्य अनङ्गेऽपि यूपे अरत्निसाम्यदर्श्यावताराभ्युपगमात् उपकारिमात्रस्य तन्न्यायविषयत्वाशयेन समाधत्ते। **सु.** ३।७ पृ. ८३. * **पशुधर्माः** योग्यतया पशुयागमपेक्षन्ते न सोमयागम्। न च अनपेक्षिताः प्रकरणेन ग्रहीतुं शक्यन्ते। तदङ्गावतरणेन चात्र विप्रकृष्टतरः श्रुतोऽर्थः। न च षष्ठीप्रतिपाद्यात् संबन्धात् विना आनर्थक्यतदङ्गन्यायः अस्तीत्युक्तम्। **वा.** ३।६।७।२५, * ज्योतिष्टोमस्य सोमद्रव्यकत्वात् न **पशुधर्मैः** किंचित् प्रयोजनं इति आनर्थक्यात्तदङ्गेषु इत्येवमङ्गेष्वेव अवतरन्तः अङ्गत्वाविशेषात् त्रिष्वपि अवतरन्ति। तस्मात् त्रयाणां समानं विधानं इति प्राप्ते अभिधीयते। ३।६।७।१८ पृ. १०४३. * **पशुधर्माणां** अग्नीषोमीयाङ्गत्वावगमात् पूर्वे औपवसथ्ये अहन्येवानुष्ठानं, इत्यत्र न प्रमाणमस्ति। सत्यपि तत्र पाठे प्रकरणेन आनर्थक्यतदङ्गन्यायसहकृतेन पशुत्रयेऽपि अङ्गत्वावगमात् तेषां कालभेदेन तत्रतत्र अनुष्ठानप्रतीतेः। ( इति पूर्वपक्षे ) **कौ.** ३।३।५।१२ पृ ३३६. * **पशुधर्माणां** महाप्रकरणवशात् ज्योतिष्टोमसंबद्धानां पशुधर्मत्वेन साक्षात्संबन्धायोगात् आनर्थक्यतदङ्गन्यायेन पशुयागद्वारा जनकत्वावगतेः, तेषां च मध्ये कस्य चित् विशिष्य प्रकरणबाधकबलवत्प्रमाणाभावेन अविशेषात् सर्वार्थत्वं इति आद्यः पूर्वपक्षः। **भाट्ट.** ३।६।७. * यदि ( पात्राणि पवमानेष्टेः ) अङ्गं, ततो यज्ञसंयोगात् साक्षात् आधाने ( प्रधाने ) असंभवन्त्यपि **पात्राणि** आनर्थक्यतदङ्गन्यायेन पवमानेष्टिषु ( आधानाङ्गभूतासु ) भवन्ति ( पूर्वपक्षे )। **शा.** ३।१।१२. * वारणवैकङ्कतानि होमार्थानि अहोमार्थानि च **पात्राणि** यज्ञगामित्वेन विदितानि आधान-

प्रकरणं बाधित्वा कतमस्य यज्ञस्य भवन्तु इति 'आनर्थक्यात्०' इति पवमानहविःषु विज्ञायन्ते इति पूर्वः पक्षः। **वा.** ३।१।१२।२२ पृ. ७३६. * **पाशमन्त्रस्य** बहुवचनान्तस्य विकृतौ उत्कर्षः। न च सामान्यसंबन्धबोधकप्रमाणाभावः ज्योतिष्टोम-महाप्रकरणस्यैव आनर्थक्यतदङ्गन्यायसहकृतस्य ऋतुपशुषु सामान्यसंबन्धबोधकस्य सत्त्वात्। **भाट्ट.** ९।३।५. * **पौर्णमास्यमावास्याशब्दयोः** प्रधानमात्रवचनत्वात् 'आनर्थक्यात्०' इत्येवं अवतरतोः प्रधानहविःष्वेव केवलेषु प्रवृत्तिः। तस्मात् प्रधानहविर्मात्रं अभिमृष्टव्यम्। इति पूर्वः पक्षः। **वा.** ३।७।४।८, * अनुपयुक्तश्रौत-व्यापारावस्थ एव **प्रत्ययः** 'आन०' इत्यनेन न्यायेन भावनातोऽवतीर्य तत्संबद्धानि कारकाणि उपसर्पति। २।२।३।६ पृ. ४८६. * **प्राकाशशब्दवाच्ययोः** प्रदीपयोः दानसंबन्धस्य प्रदानत्वात् आनर्थक्यतदङ्गन्यायेन विशेषणे अवतारात् विशेषणभूतस्याध्वर्योः प्रदीपसंबन्धविधिः, विधेयत्वसंबन्धेन अध्वर्योरेव प्राधान्यविवक्षायां दान-विशिष्टमध्वर्युं अनूद्य तस्य प्रदीपसंबन्धविधिः, ददात्य-विवक्षया वा शुद्धाध्वर्य्वनुवादेन प्रदीपसंबन्धविधिः, इति वचनव्यक्तीनां मध्ये कया धात्वर्थे अन्यसंबन्धविधिः इत्य-शक्यं विवेक्तुम्। **सु.** पृ. ७६९. * आनर्थक्यतदङ्गन्या-येन धर्मयोरेव **प्रैषत्वानुवचनत्वयोः** इतरेतरयोगप्रतीतेः (मैत्रावरुणः प्रेष्यति चानु चाह इत्यत्र)। **भाट्ट.** ३।७।२२, * आनर्थक्यतदङ्गन्यायेन **प्रोक्षणस्य** उलूखलमुसलयो-रवतारेऽपि वाक्यात् अवघातोद्देशेनैव विधानम्। ९।१।२. * विशेष्यभूतायाः **भावनायाः** विद्वद्वाक्या-देव प्राप्तत्वात् विधेः तद्विधितात्पर्यविषयत्वायोगात् आन-र्थक्यतदङ्गन्यायेन विशेषणे एव अवतारात्। **कौ.** २। २।३।६ पृ. १७५. * **गोमतो भावो गोमत्त्वम्।** तत्र यास्तावत् प्रातिपदिकार्थे विशेषणं गावः, तासां तद्वतः पुरुषादत्यन्तभेदात् भावप्रत्ययेनाग्रहणम्। न चान्योऽ-भिधीयमानस्तत्र गुणः संभवति। न च पुरुष एव 'तस्य भावः' इत्येवं व्यपदेशभेदं लभते। तेन **भावप्रत्ययः** आनर्थक्यात्तदङ्गेषु इत्यर्थप्राप्तं संबन्धमवलम्बते। **वा.** ३।१।६।१२ पृ. ६७७. * **मण्डूकसूक्तस्य** (ऋसं. ७।१०३। १-१०) प्रकरणात् ज्योतिष्टोमसंबन्धे अव-गते आनर्थक्यतदङ्गन्यायेन तदङ्गभूते चयने निवेशः। **कौ.** २।१।१६।२३, * इष्यते च पश्ववयवावदानसंब-न्धिनो **मनोतामन्त्रस्य** महाप्रकरणात् ज्योतिष्टोमे प्राप्तौ आनर्थक्यतदङ्गन्यायेन तदङ्गभूते स्वरूपेण असंनिहितेऽपि सवनीये प्राप्तिः। ३।१।१२।२२ पृ. २०६, * प्रधान-संबन्धानुपपत्तौ आनर्थक्यतदङ्गन्यायेन स्वतः असंनिहिते-नापि अङ्गेन प्रधानोपस्थापितेन धर्मसंबन्ध इष्ट एव। यथा **मनोतामन्त्रस्य** सवनीयेन। ३।१।१२।२२ पृ. २०९. * यदा तु आग्नेयः सवनीयः पशुः ज्योतिष्टोमेऽस्ति, तदा **मनोतामन्त्रस्य** महाप्रकरणात् ज्योतिष्टोमसंबन्धे अवगते अवदीयमानहृदयादिसंबन्धावगमाच्च तत्रानर्थ-क्यप्रसक्तौ आनर्थक्यतदङ्गन्यायसहकृतप्रकरणेन सवनीये सामान्यसंबन्धबोधकप्रमाणेन तत्रैव निवेशः। **भाट्ट.** १०। ४।२२. * अस्तु वा (**अग्निष्टुत्**-)**यागस्य** अग्निष्टोमस्तोत्र-जन्यत्वात् परंपरासंबन्धेन जन्यत्वापरपर्यायाश्रयत्वा-योगेऽपि आनर्थक्यतदङ्गन्यायेन अग्निष्टोमस्तोत्रे अवतारः (पूर्वपक्षे स्थित्वा इदमुक्तम्)। **कौ.** २।२।१२।२६ पृ. २८२. * **रथंतरसाम्नः** साक्षात् सोमयाग-संबन्धाभावात् आनर्थक्यतदङ्गन्यायेन '**रथंतरसामा**' इति निर्देशः पृष्ठस्तोत्रद्वारा परंपरासंबन्धे एव योग्यत्वात् पर्यवस्यति। **सोम.** २।३।१. * '**वाजपेयस्य**' इत्यादौ यत्रैव श्रुतः संबन्धः, तत्रैव आनर्थक्यतदङ्ग-न्यायः। यदि तु तस्यापि पशोः (सवनीयस्य) विशिष्य प्रमाणान्तरं अपूर्वसाधनत्वोपस्थापकं न स्यात्, ततो महाप्रकरणपरिगृहीतानामेषां परिव्याणादीनां आन-र्थक्यतदङ्गन्यायेन भवेत् सर्वपश्वर्थत्वम्। न त्वेतदस्ति, स्थानेन अग्नीषोमीयार्थत्वात्। **भाट्ट.** ३।६।७. * यद्यपि पवमानेष्टीनां प्रदेशान्तरपठितत्वात् न विशिष्य अधि-कारोऽस्ति उपस्थापकः, तथापि प्रधानाधिकारेणैव प्रधा-नांशे बाधितेन तत्संबन्धिपवमानेष्ट्युपस्थापनात् आन-र्थक्यतदङ्गन्यायेन **वारणादेः** तदर्थताऽविरोधः। **कौ.** ३।१।१२।२२ पृ. २०६. * यज्ञसाधनत्वेन श्रुतानां **वारणादीनां** साक्षात् अयज्ञरूपाधाने निवेशासंभवात् आनर्थक्यतदङ्गन्यायेन पवमानेष्टिरूपे यज्ञे एव

निवेशः इति प्राप्ते, भाष्यकारसिद्धान्तः आधानप्रकरणे पठितेन 'यदाहवनीये जुहोति' इति वाक्येन पवमानहविषां अग्न्यङ्गत्वावगतेः आधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासंभवात् वारणादीनां सर्वयज्ञाङ्गत्वं इति । **भाट्ट.** ३।१।१२. * आनर्थक्यतदङ्गन्यायेन अग्निष्टोमस्तोत्रमात्रे **वारवन्तीयस्य** युक्त एवावतारः । **कौ.** २।२।१२।२६ पृ. २८३. * गुणफलान्वयविधायिनो वाक्यस्य आश्रयलाभार्थं प्रकरणापेक्षत्वेन तद्बाधकत्वायोगात् प्रकरणेन अङ्गत्वज्ञाने सति आनर्थक्यतदङ्गन्यायविषयत्वसंभवात् योग्यत्वात् स्तोत्रं अवतरतो वारवन्तीयस्य ... । **सु.** पृ. ८७१. * आनर्थक्यतदङ्गन्यायेन क्रत्वङ्गभूतस्तोत्रनिर्वृत्तिद्वारा **वारवन्तीयसाम्नो** यागाङ्गत्वसंभवः इति न च वाच्यं, वैषम्यात् । सप्तदशारत्नित्वं हि वाजपेये साक्षादसंभवात् तदङ्गपश्वङ्गयूपद्वारा वाजपेयाङ्गतामश्नुते । वारन्तीयं साम तु अङ्गभूतस्तोत्रद्वारा कथं यागकारकतामश्नुवीत ? क्रियाकारकभावस्य साक्षात्संबन्धरूपत्वात् । **कु.** २।२।१२।२७. * आनर्थक्यतदङ्गन्यायेन क्रतुसंबन्धित्वेन श्रुतस्य **वैरूपादेः** स्तोत्रसंबन्धः । न च आनर्थक्यतदङ्गन्यायेन अवतीर्णस्य सर्वविषयत्वं, तथात्वे याज्यादावपि चातुःस्वर्यबाधेन वैरूप्यापत्तेः । **भाट्ट.** १०।६।६. * आनर्थक्यात्तदङ्गेषु ( ३।१।९।१८ ) इत्ययं न्यायोऽत्र ( न तौ पशौ करोति, न सोमे ) नास्ति, सोमे येन प्रतिषेधः स्यात् । वाजपेयस्य इति षष्ठ्या संबन्धी उपात्तः । तस्य **सप्तदशारत्निता** विधीयते । संबन्धमात्रं च अङ्गाङ्गस्यापि अस्त्येवेति यूपे निवेशः । इह तु आधारत्वेन सोमः श्रूयते, न संबन्धिमात्रतया । **वा.** १०।८।२।५. * वाजपेये सप्तदशारत्निता षोडशिपात्रे निविशते यूपे वा इति चिन्तायां आनर्थक्यात्तदङ्गेषु इत्यनेन यूपे निवेशः अभिहितः । **सु.** पृ. १०७२. * आनर्थक्यात्तदङ्गेषु इत्यनेन न्यायेन क्रतुसंबन्धेन **श्रुतं साम** स्तोत्रेष्ववतरति । **वा.** २।३।१।१ पृ. ५७२. * आनर्थक्यात्तदङ्गेषु इति न्यायेन **सामिधेनीनां** प्रधानेन अन्वयरहितत्वेऽपि सन्नीयपशुरूपसोमाङ्गान्वयोपपत्तिः । **ऐब्रासा.** ५।१।१।१. * 'स्फ्येनोद्धन्ति' इत्यत्र तृतीयया विनियुक्तस्य **स्फ्यादेः** उद्धननादिस्वरूपे आनर्थक्यात् उद्धननत्वसमानाधिकरणप्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षशक्यक्रियात्वमेव लक्ष्यते, न तु उद्धननादिमात्रजन्यव्यापारकसाधनताश्रयत्वं, यज्ञायुधवाक्येन यज्ञसाधनतया स्फ्यादीनि विनियुञ्जानेन उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धत्वात् साक्षात् प्रधानाङ्गत्वेनाविनियोगात्, आनर्थक्यतदङ्गन्यायेन प्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षक्रियामात्रे विनियोजकत्वेन तात्पर्यग्रहणात् । **कौ.** ३।१।५।११ पृ. १५३, * न चैवं तदुत्तरभाविप्रधानाङ्गत्वस्यैवाभावेन कथं प्रधानप्रकरणेन अङ्गमात्रार्थत्वं इति वाच्यम् । आनर्थक्यतदङ्गन्यायेन तदुपपत्तेः । तस्मात् सर्वार्थत्वं **हस्तावनेजनस्य** । ३।१।१४।२४ पृ. २१५. * अङ्गाङ्गिभावे आनर्थक्यतदङ्गन्यायावतारसंभवात् **सौभरार्थस्यापि हीषादिनिधनस्य** पुरुषशेषतया विधिः संभवति । **सोम.** २।२।१३ पृ. १५९.

* **आनर्थक्यप्रतिघातन्यायः** । अयमेव आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इति न्यायः । **के.** * लिङ्गस्य निरवकाशत्वात् **आनर्थक्यप्रतिघातन्यायेन** तस्य प्राबल्यम् । ( लिङ्गप्राप्तं उच्चैस्त्वं, वचनप्राप्तं उपांशुत्वम् ) । **सोम.** २।१।१३. * न केवलं तार्तीयप्रमाणमेव आनर्थक्यप्रतिघातेन बाध्यते, किंतु द्वैतीयकमपि । यथा अभ्युदितेष्टौ गुणेन कर्मभेदस्य प्रसक्तस्य 'सह श्रपयति' इति विध्यानर्थक्यात् बाधः । **बाल.** पृ. १४५, * बाधभेदानां **आनर्थक्यप्रतिघाते** विपरीतो बाधो भवति । तद्यथा 'व्रीहीनवन्ति' इत्यत्र व्रीहिमात्रावघातप्रापिका श्रुतिः प्रकरणेन बाध्यते । पृ. १४५.

**आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इति न्यायः।** **साहस्री.** ७४४. प्रबलेन प्रमाणेन दुर्बलस्य प्रमाणस्य सर्वथा बाधे प्राप्ते दुर्बलमपि प्रबलतरं भवति । आनर्थक्येन सर्वथा प्रतिहतानां प्रमाणानां बलाबलं विपरीतं भवति । यत् प्रबलं तद्दुर्बलं भवति, यद्दुर्बलं तत् प्रबलं भवति इति । **के.**

* 'आनर्थक्यप्रतिहतानां' इति न्यायेन 'ऐन्द्रवायवं गृह्णाति' 'उद्भिदा यजेत' इत्यादिनाम्नां आख्यातपारतन्त्र्येऽपि भेदकता । **सु.** पृ. ७१२.

* 'आनर्थक्यप्रतिहतानां' इति न्यायेन निगदगतसंबोधनविभक्तिसामर्थ्यरूपलिङ्गस्यैव प्रबलतया तेन उपांशुत्वबाधो युज्यते । उपांशुत्ववचनस्य निगदभिन्नयजुरन्तरे सावकाशत्वात् । **कु.** २।१।१३।३९. * 'आनर्थक्यप्रतिहतानां' इति न्यायेन वाक्यवशवर्तित्वं एवंविधस्थले ( शुक्लं पटमानय इत्यादौ ) श्रुतीनाम् । तत्र विशिष्टार्थप्रत्ययाय संनिहितविशेषश्रुतिवशात् सामान्यश्रुतेः संकोचः इत्युक्तं भवति । **कल्पतरुः.** ३।३।३१। ५५ ब्रसू. * 'आनर्थक्यप्रतिहतानां' इति न्यायेन वाक्यशेषानुगुण एवात्रार्थः । ( त्रिवृत्–चरु–आश्ववाल–ऐक्षवी –स्तोमशब्देषु ) **कु.** १।३।५।८ पृ. ६६. * 'आनर्थक्यप्रतिहतानां' इति न्यायेन वाक्याधिकरणगतवेदोवाप्रायदर्शनादिति सिद्धान्तसूत्रस्थभाष्योक्तेन वाक्यस्य अत्यन्तानर्थक्यप्रसक्तौ श्रुतेरपि असामञ्जस्यस्य कल्पना उचिता । **सु.** पृ. १५०१. * आनर्थक्यं वाक्यभेदादपि बलवत् अप्रामाण्यापत्तेः । अत एव श्रुत्यादीनामपि आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इत्युक्तम् । **बाल.** पृ. ११४. * उपक्रमबलीयस्त्वात् उपदेशानुरोधेन अतिदेशेन वर्तितव्यं इत्याशङ्क्य आनर्थक्य० इति न्यायेन अनन्यगतित्वात् अतिदेशोऽपि अत्र उपदेशात् बलीयान् इत्युक्तम् । **सु.** पृ. ८१४. * उपांशुत्वस्य यदि निरवकाशत्वं स्यात्, तदा आनर्थक्य ० इति न्यायेन दुर्बलमपि उपांशुत्वं अनुरोध्यं स्यात् । न चात्र निरवकाशत्वम् ( मन्त्रस्य प्रधानात् परप्रत्यायनकार्यात् मन्त्रस्याङ्गं उपांशुत्वं दुर्बलम् ) । **सोम.** २।१।१३. * कालान्तरभाविनमर्थमादायापि मन्त्रलिङ्गानि सावकाशानि भवितुमर्हन्ति । स्मृतीनां पुनः लिङ्गबलबाध्यमानानां न कश्चिदन्योऽवकाशः शक्यः कल्पयितुं इति 'आनर्थक्य–बलाबलं' इति न्यायेन स्मार्तैरपि विधिभिरेव श्रौतान्यपि लिङ्गानि अर्थान्तरविषयतामापाद्यन्ते इति स्मृतिप्राबल्याङ्गीकरणमेव युक्तम् । **सनातनधर्मप्रदीपे** विवाहः पृ. २८३–८४. * ननु लिङ्गस्य आनर्थक्यात् आनर्थक्य० इति न्यायेन प्राबल्यं इति, अत आह । **सोम** ६।५।८. * मन्त्राणां भाविरजस्वलात्वबोधनेनापि चारितार्थ्यात् अचरितार्थानामपि स्मृतीनामेव वा आनर्थक्य० इति न्यायेन न प्राबल्यं इति यदुक्तं तन्न संगतम् । प्रयोगसमवेतार्थस्मारकत्वेन खलु मन्त्राणां चारितार्थ्यं, न तु संभवदर्थप्रकाशकत्वमात्रेण । **सनातनधर्मप्रदीपे** विवाहः पृ. २९१. * यत्तु श्रौतः पदार्थः न वाक्यानुरोधेन कुतश्चिद् विशेषात् अपवर्तितुमर्हतीति, सत्यमेवैतत् । यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावात् अनर्थकः संजायते इत्यवगतं भवति, तत्र वाक्यार्थोऽपि तावद्भवतु इति विशिष्टार्थता अवगम्यते, न सर्वत्र । **भा.** १।१।७।२५ । आनर्थक्य० इति न्यायेन दुर्बलवाक्यगम्योऽपि विशिष्टार्थरूपो वाक्यार्थः स्वीकार्य एव इत्यर्थः । **वैद्यनाथी.** * विधिस्तुत्योर्भिन्नविषयत्वे विध्यविषयस्य स्तुत्यानर्थक्यात् आनर्थक्य० इति न्यायेन वाक्यशेषस्य प्राबल्यम् । **सोम.** १।३।५ पृ. ३५, * 'स्नात्वा भार्यामधिगच्छेत्' इति वचनात् नोपनयनात् पूर्वं दारपरिग्रहः संभवति । **न च** उपनयनहोमस्य आहवनीयरूपपदार्थसिद्ध्यर्थं पदार्थगुणभूतक्रमबाधेन प्रागपि दारपरिग्रहः संभवति इति **वाच्यम्** । एवं च सति 'स्नात्वा भार्यामधिगच्छेत्' इति वचनं अप्रमाणमेव स्यात् । तस्मात् आनर्थक्य० इति न्यायेन अत्र क्रमबाधासंभवः । ६।८।२. * **आनर्थक्य० इति न्यायात्** अनन्यार्थसंनिधिः स्वानर्थक्यपरिहाराय श्रुतिसंकोचकः । यदि पदैकवाक्यतायां संनिधिमात्रं संकोचकं भवेत्, तदानीं 'अश्वेन गच्छति श्वेतेन पटेन प्रावृतः' इत्यत्र पटसंबन्धनिराकाङ्क्षश्वेतशब्दसंनिधानेनापि अश्वश्रुतेः संकोचः स्यात् । **पराक्रमः** २६।१. * 'वैश्वदेवेन यजेत' इति वैश्वदेववाक्यस्य अगत्या विषमशिष्टविकल्पमङ्गीकृत्य प्रकृतकर्मगुणविधायकत्वमेव अभ्युपेयम् । आनर्थक्य० इति न्यायात् इति चेन्मैवम् । **कु.** १।४।११।१४. * यत्तु 'सृष्टीरुपदधाति' इत्यत्र उपसंहारानुसारेण समुदायलक्षणाऽऽश्रयणं, तत् आनर्थक्य० न्यायात् । तल्लक्षणाऽनाश्रयणे हि प्रत्येकं असृष्टिलिङ्गकमन्त्रोपधेयेष्टकास्तुतीनां इष्टकासादृश्यकीर्तनस्य च सर्वथा बाधः स्यात् । ततो वरं एकस्य सृष्टिशब्दस्य लक्षणा । **पराक्रमः** ४१।१-२. * **आनर्थक्यप्रतिहतानां** श्रुत्यादीनां सर्वेषामेव दुर्बलैरपि बाध्यत्वमिष्यते, तद्यथा, व्रीह्यादीनां प्रोक्षणादीन् प्रति श्रुत्या शेषित्वं प्राप्नु-

वदपि अतिलङ्घ्य प्रकरणलभ्यापूर्वसाधनत्वकृतः संबन्धो भविष्यति । **वा.** ३।३।७।१४ पृ. ८३३. * **आनर्थक्यप्रतिहतन्यायेन** अनारभ्याधीतस्यापि आतिदेशिकबाधकत्वात् । **कौ.** १।४।३।३ पृ. १७६, * खनित्रादेः सामान्यतो यागसंबन्धानवगमेन आनर्थक्यप्रतिहतन्यायेन श्रुतभावनासंबन्धनिर्वाहार्थं यागवदेव फलसंबन्धकल्पनाऽऽपत्तेः अवश्यं विशिष्टविधिकालेऽपि आनर्थक्यनिराकरणार्थं मत्वर्थलक्षणया यागसंबन्धोऽपि अङ्गीकर्तव्यः पूर्वपक्षे । १।४।२।२ पृ. १६५. * दर्शे शाखाऽऽहरणं वत्सापाकरणं इत्यादयो दोहधर्माः समाम्नाताः । पूर्वाधिकरणे सोमे विशसनादिधर्माणामनन्वयात् प्रकरणं आनर्थक्यप्रतिहतम् । इह तु नास्ति आनर्थक्यप्रतिहतिः । ततः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोः ते धर्मा अभ्युपेयाः । **वि.** ३।६।८. * दुर्बलस्यापि प्रमाणस्य बाधे यदि किं चिदनर्थकीभवति, ततो विपरीतो बाधो योजयितव्यः । तदुक्तं ' व्रीहीन् प्रोक्षति ' इत्यत्र श्रुतिमुत्सृज्य अपूर्वसाधनत्वग्रहणमिति । तथा ' दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदाऽपि विपरीतत्वं शिष्टाकोपे ( १।३।३।५ ) यथोदितम् ॥ ' सर्वप्रमाणानामेव अर्थद्वारः परस्परविरोधो , न स्वरूपनिमित्तः । तत्र यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते, तत्र यद्यपि प्रमाणतः अन्यादृशं बलाबलं, तथापि प्रमेयानुरोधेन तदाश्रयणात् स्वरूपदुर्बलेनापि बलवत् बाध्यमानं तदानुगुण्यं प्रतिपद्यते । तदुक्तं आचमनादयः पदार्थाः, ( पदार्थधर्माः– ) तेषां क्रमः इति । तथा च लोके ' अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ ' **वा.** ३।३।७।१४ पृ. ८४१. * ' वैराजस्य स्तोत्रायाग्नेयो गृह्यते ' इति वचनेन वैराजस्तोत्राख्यदेवताकयागविधिः ' आग्नेयः ' इत्यस्य उपांश्वादिवत् नामधेयत्वेन देवतातद्धितत्वायोगात्, चतुर्थ्या आनर्थक्यप्रतिहतत्वाच्च इति प्राप्ते । **संकर्ष.** ३।३।६.

* **आनुपूर्व्येण अपच्छेदे** उत्तरापच्छेदनिमित्तकप्रायश्चित्तानुष्ठानम् । **वि.** ६।५।१९.

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात्** । १०।५।१।१ ॥

अत्रत्यविचारस्य भूमिका तावदित्थम् । ' आग्नेयमष्टाकपालं निर्वपेत् ' इति समस्तकपालवचनम् । तदेकदेशवचनानि च द्यावापृथिव्यमेककपालं, आश्विनं द्विकपालं, वैष्णवं त्रिकपालं, वारुणं चतुष्कपालं, इत्यादि । तत्र सर्वेषां कपालानां अष्टाकपालः प्रकृतिः । एकद्वयादिकपालानि विकृतयः । एवं सति अष्टाकपालगतस्य प्रथमस्य कपालस्य ये धर्माः, ते द्यावापृथिव्ये एककपाले भवन्ति । अष्टाकपालगतयोः आदिमयोर्द्वयोः ये धर्माः, ते आश्विने द्विकपाले भवन्ति । एवमुत्तरत्रापि । सोऽयं कपालन्यायः द्विरात्रादिषु अहीनेषु सामिधेनीषु च योज्यः । तत्र अहीनानां सत्राणां च द्वादशाहः प्रकृतिः । द्विरात्रः त्रिरात्रः चतूरात्रः इत्येवमादिर्विकृतिः । तत्रायं विशेषः, द्वादशाहस्य प्रथमं दशमं चाहो वर्जयित्वा अवशिष्टो यो दशाहः, सः द्विरात्रादीनां प्रकृतिः । तत्र पूर्वोक्तः कपालन्यायो योज्यः । अथ सामिधेनीषु पञ्चदशसामिधेन्यः प्रकृतिः । एका सामिधेनी , तिस्रः सामिधेन्यः इत्यादिर्विकृतिः इति ।

अथ सूत्रार्थः । आनुपूर्व्यं पूर्वपूर्वमनतिक्रम्य वर्तनं अनुपूर्वम् । तस्य भावः आनुपूर्व्यं नाम क्रमः । आनुपूर्व्यवतां क्रमेण प्रवृत्तानां एकदेशग्रहणानि , तत्रत्यैकत्वविशिष्टस्य द्वित्वविशिष्टयोः त्रित्वविशिष्टानां इतिरीत्या यत्र एकदेशानां ग्रहणानि भवन्ति , तत्र आदिमस्य आदिमयोः आदिमानां वा ग्रहणं अन्त्यानां अन्त्ययोः अन्त्यस्य वा लोपः इति अन्त्यलोपः स्यात् । यथा वैष्णवे त्रिकपाले अष्टाकपालगतस्य आदिमस्य कपालत्रयस्यैव प्रथमत उपस्थितिर्भवति इति तस्यैव ग्रहणं , अन्त्यानां पञ्चानां कपालानां तु लोपः । अन्यथा केषां चिदेव त्रयाणां ग्रहणे प्रयोगे अव्यवस्था स्यात् । तस्मात् क्रमवतां आदिमग्रहणं स्यात् । आगमवत् । आगच्छन्ति पश्चात् इति आगमाः आगन्तवः । यथा समाजेषु समासेषु च ये आगन्तवो भवन्ति , ते पूर्वोपविष्टान् अनुपमृद्यैव निविशन्ते , एवमिहापि द्रष्टव्यम् ।

**लिङ्गदर्शनाच्च ॥**

क्रमवतां एकदेशग्रहणे आद्योपादानं अन्त्यलोपश्च लिङ्गस्य दर्शनात् । 'लुप्येत वा एतत् षष्ठमहः, यत् पञ्चाहानुपयन्ति ' ' लुप्येत वा एतत् षष्ठं कपालं, यत् पञ्चकपालान् निर्वपन्ति ' इति लिङ्गं षष्ठस्य लोपं दर्शयति न प्रथमस्य । तस्मात् क्रमवतामेकदेशग्रहणे अन्त्यलोपः । चकारो हेत्वन्तरसमुच्चयार्थः ।

**विकल्पो वा , समत्वात् । ३ ॥**

क्रमवतां एकदेशग्रहणे अन्त्यलोपे आद्यलोपे वा विकल्पः स्यात् उभयोः समत्वात् । नहि तत्र कश्चित् विशेषः । इति पूर्वः पक्षः ।

**क्रमादुपजनोऽन्ते स्यात् । ४ ॥**

यदुक्तं सिद्धान्तिना समाजेषु आगन्तवो जनाः पूर्वोपविष्टाननुपमृद्यैव निविशन्ते इति, तन्न । यतः, उपजनः आगन्तुकः अन्ते भवति इति सत्यं , परंतु सः क्रमात् इतरैः आदिमस्थानानामाक्रमणात् अन्ते रिक्ते स्थाने भवति । आदिमे स्थाने रिक्ते लब्धे तु तत्रापि स निविशेत । तस्मात् क्रमवतां एकदेशग्रहणे अन्त्ये आद्ये वेति विकल्प एव युक्तः इति पूर्वपक्षी ।

**लिङ्गमविशिष्टं, संख्याया हि तद्वचनम् । ५ ॥**

यच्च सिद्धान्तिना लिङ्गमुक्तं ' लुप्येत वा एतत् षष्ठमहः यत् पञ्चाहानुपयन्ति ' इति षष्ठस्य लोपं दर्शयति न प्रथमस्येति , तत् अविशिष्टं आद्यान्त्यलोपविकल्पेऽपि । हि यस्मात् तत् संख्यायाः वचनं पूरणवचनम् । यस्मिन् कस्मिंश्चिदपगतेऽपि येन प्रथमेन मध्यमेन अन्त्येन वा संख्या पूर्यते तत् षष्ठम् । तस्मात् क्रमवतां एकदेशग्रहणे अन्त्यग्रहणे आद्यग्रहणे वा विकल्पो युक्तः इति पूर्वपक्षी ।

**आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्, वचनादन्त्यविधिः स्यात् । ६ ॥**

पूर्वपक्षं व्यावर्तयितुं वाशब्दः । तादृशस्थले आदितः आरभ्य प्रवृत्तिः स्यात् , न तु द्वितीयादिकं यं कं चिदारभ्य । आरम्भस्य तदादित्वात् । सः आदिमः पदार्थः आदिर्यस्य आरम्भस्य , स तदादिः । आरम्भस्य तदादित्वात् आदित एव प्रवृत्तिः स्यात् । क्व चित् वचनात् वचनबलात् अन्त्यस्यापि विधिः स्यात् । यथा ' अपबर्हिषः प्रयाजान् यजति ' ' अपबर्हिषौ अनुयाजौ यजति ' इति । विना वचनं तु आदित आरभ्यैव प्रवृत्तिः अन्त्यलोपश्च न्याय्यः । विकल्पस्तु अनेकदोषदुष्टः अव्यवस्थाकरश्च । तस्मात् व्यवस्थासिद्ध्यर्थं आदितो ग्रहणं अन्ततो लोप इत्येव स्वीकर्तुं युक्तम् । इति सिद्धान्तः । **के.**

* **आनुबन्ध्यवनस्पतियागयोर्निगमेषु** विधिगतोस्तावनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोरभिधानं ज्योतिष्टोमे । **भा.** १०।४।१६।३२–३३.

* **आनुमानिकं** तुल्यकारणेन हि प्रत्यक्षश्रुतेन बाध्यते । **भा.** १०।७।११।३७, * आनुमानिकं प्रत्यक्षश्रुतात् दुर्बलम् । ६।१।७।३७. * **आनुमानिकी** श्रुतिः लिङ्गं च प्रत्यक्षं यत्र , तत्र कथं ? तत्र स्मृतेर्मूलान्तरमपि संभाव्यते , न तु लिङ्गस्य , इति तदेव बलवत् इत्यनुसर्तव्यम् । **वा.** ३।३।७।१४ पृ. ८४१. * **आनुमानिका** अनुयाजाः सांग्रहण्यामिष्टौ प्रत्यक्षश्रुतैरामनहोमैर्न निवर्त्येरन् किंतु समुच्चीयेरन् । **भा.** ४।४।४।७. * **आनुमानिकैः** श्रुत्यादिभिः आनुमानिकानां तेषां बाधः, यथा पशौ अनुमेयैः प्रयाजादिविनियोजकैः श्रुत्यादिभिः पशुपुरोडाशे तद्विनियोजकानां आनुमानिकानां श्रुत्यादीनाम् । **बाल.** पृ. १४६. * **आनुमानिकाच्चोदकात्** नाम प्रबलं प्रत्यक्षश्रुतत्वात् , तेन गवामयनगतज्योतिरादिषु एकाहज्योतिरादिधर्माणां नाम्ना अतिदेशः । **वि.** ७।४।३. * **आनुमानिकानां** श्रुत्यादीनां प्रत्यक्षैः लिङ्गादिभिर्बाधः, यथा कृष्णलेषु सामर्थ्येन 'व्रीहीनवहन्ति' इत्यतिदेशानुमितश्रुतेः । **बाल.** पृ. १४६, * आनुमानिकानां श्रुत्यादीनां प्रत्यक्षैः श्रुत्यादिभिर्बाधः, यथा श्येनादौ ' शरमयं बर्हिः ' इति प्रत्यक्षश्रुत्या ' बर्हिषि हवींष्यासादयति ' इत्यानुमानिकश्रुतेः ( कुशविधायिकायाः ) । पृ. १४६. * **आनुमानिकवचनातिदेशेऽपि** अर्थवादातिदेशसिद्धिः । **भाट्ट.** ७।१।३. * **आनुमानिकवचनातिदेशविषयकं** अतिदेशशब्दे बालप्रघट्टके द्रष्टव्यम् । **बाल.** पृ. ११७–११९.

* ( **आन्धीगवं** श्यावाश्वं च साम ज्योतिष्टोमे आर्भवे पवमाने । ' पुरोजिती वो अन्धसः ' इत्यनुष्टुप् , ' यो धारया पावकया ' ' तं दुरोषमभी नरः ' इति द्वे गायत्र्यौ ( साम. ३९७–३९९ ) एतासां तिसृणां अनुष्टुप्कारं प्रग्रथनेन जाते आनुष्टुभे तृचे गेयम् । अनुष्टुभं कृत्वा अनुष्टुप्कारम् । णमुल् । तत्र गायत्र्योः प्रत्येकं तृतीये चरणे द्विरावृत्त्या गीते द्वे अनुष्टुभौ भवतः । प्रथमा तु उत्पत्तित एव अनुष्टुप् । इति आनुष्टुभस्तृचः संपद्यते । **के.** ) **भा.** ९।२।६।२५–२८ वर्णकं ३.

* **आन्ध्राः** प्रयोक्तारः जनपदपुरपरिरक्षणवृत्तिं अनुपजीवत्यपि क्षत्रिये राजशब्दं प्रयुञ्जते । **भा.** २।३।२।३ पृ. ५८०. * **आन्ध्रद्रविडादयः** अभिषिक्ते क्षत्रियान्यजातीयेऽपि राजशब्दप्रयोगमभ्युपगच्छन्ति । **सु.** पृ. ९०४.

* **' आन्यभाव्यं** तु कालशब्दव्यवायात् ' ( पा० वा. १।१।२ पृ. ४४ ) इति उच्चारणभेदे शब्दभेदस्मृतिः । **सु.** पृ. ९५९. ( अत्र **कैयटः**— अकारस्य भेदं साधयति–आन्यभाव्यमिति । अन्यस्य भावः अन्यभावः । ततो ब्राह्मणादिषु ( पा० ५।१।१२४ ) स्वार्थे विधानार्थात् पाठात् स्वार्थे ष्यञ् । अथवा अन्यो भावः अन्यत् वस्तु , तस्य भाव इति भावे ष्यञ् । इह कालशब्दाभ्यां व्यवधानं भिन्नानां दृष्टं यथा असंहितायां अ इ उ इत्यादीनां कालव्यवायः । इतिः इत्यादौ शब्दव्यवायः, तत्र तकारेण ऋकार–इकारयोः व्यवधानात् । इति ) ।

* **' आपो वै शान्ताः '** इत्यादौ यत्र न किंचिदपि पदं स्तावकं निन्दकं वोपलभ्यते तत्रापि ' वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति ' इति विधिसंनिधिवशेन लक्षणया तद्विधेयवेतसावकास्तुतिप्रतीतेः लक्षितलक्षणया वा विकर्षणस्तुतिप्रतीतेः विध्येकवाक्यत्वात् तात्पर्यनिर्णयः । **सु.** पृ. ३९.

* **आपदि** जीवनं त्रैवर्णिकस्य **रथकर्मणा** इति केचित् । **भा.** ६।१।१२।४८.

⌛ **आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः इति न्यायः** । ( न मुञ्चन्ति ) अयं पतिव्रतासतीत्वरक्षणविषये प्रवर्तते इति । **साहस्री.** ९४१.

* **'आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।'** ' तथा च मनुनाऽप्युक्तं आपद्धर्मगतं प्रति । तत्रत्यपापशेषाणामन्ते शौचं भविष्यति ॥ कर्मणा येन केनेह मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ' इति । ' धर्मश्च प्रथमं तावत् प्रायश्चित्तात्मको भवेत् । ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥ ' **वा.** १।३।२।४ पृ. १९०–१९१.

* **आपराग्निकानां होमानां** वरुणप्रघासेषु विहारभेदेनावृत्तिः । ( आपराग्निका होमा नाम पत्नीसंयाजाः ) **भा.** ११।२।११।४९–५०.

* **आपस्तम्बकल्पसूत्रं** पौरुषेयमेव । वेदमूलकत्वात्तु प्रमाणम् । **वि.** १।३।७. * **आपस्तम्बीय**बौधायनीये धर्मगृह्यसूत्रे तैत्तिरीयैरेव प्रतिपन्ने । **वा.** १।३।७। १५ पृ. २४४.

* **आपाटलिकाभिरुपगायन्ति** पत्नयः गवामयने महाव्रते । ( आपाटलिकाः वाद्यविशेषः ) **भा.** १०।४।५।८.

* **आपूर्विकं तन्त्रं** दर्विहोमेषु । **भा.** ८।४।४। १०–२८.

* **आप्तत्वं** प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वम् । **रहस्य.** पृ. १४.

* **आप्तवाक्यस्यापि** स्तुत्याद्यर्थस्य स्वरूपार्थे प्रामाण्यादर्शनात् तात्पर्यशून्यार्थे प्रामाण्यायोगः । **सु.** पृ. १४१८.

* **आप्तविगीतस्मृत्या** अनाप्तविगीतस्मृतिर्बाध्यते । **वा.** ३।३।७।१४ पृ. ८६०.

* **आप्यायनं** ध्रुवायाः वचनमन्तरा नोपपद्यते । **संकर्ष.** २।४।७.

* **आभाणकः**— ' सोऽयमाभाणको लोके यदश्वेन हृतं पुरा । तत् पश्चात् गर्दभः प्राप्तुं केनोपायेन शक्नुयात् ॥ ' **वा.** १।३।७।१४ पृ. ७१२.

आभाणकन्यायः । आभाणकं लौकिकोक्तिर्लोकप्रसिद्धकथनमिति यावत् । यथा वराटकान्वेषणे प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठोक्तिरिति । **साहस्री. १६५.**

* आभाणकन्यायः । आभाणको लौकिकी गाथा । 'म्हण' इति भाषा । किं चिद् वाक्यं आभाणकत्वं प्रतिपद्यते । सा रीतिः आभाणकन्यायो नाम । **संग्रहः.**

* **आभिचारिकः** सौमारौद्रश्चरुः कृष्णानां व्रीहीणाम् । अत्र शरमयं बर्हिः । तेन च कुशबर्हिषो बाधः । **वि.** १०।४।२. * **आभिचारिकौ** इषुः श्येनश्च यागौ । **भा.** ७।१।२।१३. * **आभिचारिके** सौमारौद्रे चरौ विहितकृष्णव्रीहिभिः प्राकृतयवानां बाधः । १०।७। १९।६४-७१.

**आमने लिङ्गदर्शनात् । १०।४।४।७ ॥**

सांग्रहण्यामिष्टौ श्रूयते 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति । प्राकृतास्त्रयोऽनुयाजाश्च चोदकेन प्राप्ताः । तत्र आमनहोमैः अनुयाजानां निवृत्तिः इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । आमनपदघटितमन्त्रकरणकत्वात् आमनहोमा इत्युच्यन्ते । ते च उपहोमाः । आमनं असि आमनस्य इति मन्त्रे पदच्छेदः । समुच्चयबोधकं 'अधिकं' इति पदं तृतीयात् सूत्रात् अनुवर्तते । आमने आमनहोमेषु उक्तेषु अनुयाजैः समुच्चयः स्यात् । लिङ्गदर्शनात् 'बहिरात्मा वै प्रयाजानुयाजाः, आत्मा देवता, यत् प्रयाजानुयाजानां पुरस्ताद्वा उपरिष्टाद्वा जुहुयात्, आत्मानं सजातानामादधीत । अथ यन्मध्यतो जुहोति, मध्यत एव सजातानामात्मानं धत्ते' इति अनुयाजानामनिवृत्तिं दर्शयति लिङ्गम् । एतस्मात् लिङ्गदर्शनात् आमनहोमानां अनुयाजैः समुच्चयः इति सिद्धान्तः । **के.**

* **'आमनमस्यामनस्य** देवा इति तिस्र आहुतीर्जुहोति' इति विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आनर्थक्यं इत्यत्रोदाहरणम् । अत्र हि 'सांग्रहण्या ग्रामकामो यजेत' इति प्रधानवाक्यगतग्रामकामपदानुषङ्गेण विवक्षितार्थापेक्षया आमनहोमविधेः आधिक्याभ्युपगमे ग्रामकामपदानुषङ्गानर्थक्यम् । **बाल. पृ. ३.** * 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यत्र संख्यामन्त्रभेदेन यागान्तराणि विधीयन्ते । **भा.** १०।४।४। ७, * **आमनहोमाः** सांग्रहण्या अङ्गं, न तया समप्रधानता । ४।४।४।७. * आमनहोमाः सांग्रहण्यामिष्टौ प्रकरणेन गृह्यन्ते इति **तन्त्रसारे** ( ४।४।७ सूत्रे ) उक्तम् । मिश्रा अपि न्यायरत्नमालायां प्रकरणग्राह्यतामाहुः । बलाबलाधिकरणे तु **भट्टसोमेश्वरः** क्रमादेव आमनहोमानामङ्गतामाह, तदभ्युपेत्यवादमात्रम् । यदपि **मिश्रैः** शास्त्रदीपिकायां ( ४।४।७ ) संनिधिग्राह्यत्वमुक्तं, तदपि अभ्युपेत्यवादमात्रम् । **बाल. पृ.** ११. * आमनहोमाः सांग्रहणीप्रयुक्ता एव, न तु फलार्थाः । अतः सर्वदैव प्रयाजानूयाजमध्ये कर्तव्याः, न तु ग्रामकामनायामेव । **भाट्ट.** ४।४।४. * **आमनहोमैः** प्रत्यक्षश्रुतैः आनुमानिका अनुयाजाः न निवर्त्येरन् किंतु समुच्चयः । **भा.** १०।४।४।७. * **आमनहोमेषु** 'तिस्र आहुतीर्जुहोति' इति संख्यया कर्मभेदः । **वि.** २।२।७.

**आमनहोमन्यायः** । सांग्रहणीन्यायः । आमनहोमाः सांग्रहणीष्ट्यङ्गम् ॥

**फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् । ४।४।४।७॥**

**भाष्यं**— 'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' इति । तत्र आमनहोमाः श्रूयन्ते, 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति । **अत्र** संदेहः किं समप्रधानभूता आमनहोमाः सांग्रहणीष्ट्याः, उताङ्गं तस्या इति । किं प्राप्तम् ? समप्रधानभूता इति । कुतः ? तुल्यहेतुत्वादितरस्य । तुल्यं हि यजिमत्त्वम् । नन्वफला होमाः । उच्यते । ग्रामकाम इत्येवानुषज्यते । तस्मात् समप्रधानभूता इति । **एवं प्राप्ते ब्रूमः ।** फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् । न चैतदस्ति, समप्रधानभूता होमा इष्ट्येति । फलवत् हि अफलस्य प्रधानम् । फलवती चेष्टिः, अफला होमाः । ननूक्तमनुषङ्गो भविष्यतीति । उच्यते । नानुषङ्गः प्राप्नोति । कुतः ? व्यवायात् । तदुक्तं, व्यवायान्नानुषज्येतेति ( २।१।१७।४९ ) । केन व्यवायः । परिधिमन्त्रैः 'उग्रोऽस्युग्रस्त्वं देवेष्वध्युग्रोऽहं सजातेषु भूयासं प्रियः सजाता-

नामुग्रश्चेत्ता वसुवित्' इत्येवमादिभिः। एताननुक्रम्य, 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यामनन्ति। तस्मात् सांग्रहण्या अङ्गमामनहोमा इति।

टुप्— विकृतिर्हि (सांग्रहणी) उपकाराकाङ्क्षिणी क्लृप्तोपकारान् (प्राकृतान्) पदार्थान् उपमितलक्षित-प्रापणेन [अनुमितलक्षित इति पाठः भाष्योक्तानुसारेण, उपमित इति तु स्वमतेन] गृह्णाति। तस्मात् निराकाङ्क्षी-भूता, सत्यपि स्वसंनिधाने, नाक्लृप्तोपकारान् आमन-होमान् गृह्णाति। अतस्ते (फलपदानुषङ्गेण) पृथ-क्फला इति। 'किं समप्रधानभूता आमनहोमाः' इति किं फलवन्तः इत्यर्थः। यथा आग्नेयादीनां एकप्रयोग-वचनग्रहणात् समप्रधानता, नैवमेषाम्। (किंतु उभयोः फलवत्त्वमात्रेण समप्राधान्याभिधानमिति)। 'तुल्यं हि यजिमत्त्वं' (इति भाष्यस्यायमर्थः) यदि संस्कारकर्म स्यात्, ततः फलं न कल्प्येतापि, यागास्त्वेते, तस्मा-देतेभ्यः फलं कल्प्यते। **एवं प्राप्ते ब्रूमः**। प्राकृतैरङ्गैः यदपूर्वं (अङ्गं) तदपूर्वमपि संबध्यते एव आकाङ्क्षाया-मन्यावृत्तायां असंबद्धैः पदैर्व्यवहितमपि। आमन-होमानां च विद्यते प्राकृतैरङ्गैः संबन्धः 'यत् प्रयाजानां पुरस्तात् जुहुयात्, बहिरात्मानं सजातानां दध्यात्, यदनुयाजानामुपरिष्टात्, स्वर्गं लोकमपक्रामेत्' (यन्मध्ये जुहोति, मध्यत एव सजातानामात्मन् धत्ते) इत्येवं परामृश्यमानाः (आमनहोमाः) असंबन्धिपदव्यवायेन (संबन्धिपद इति पाठः) ग्रहीष्यन्ते (तस्मादामन-होमाः क्रतुप्रयुक्ता इति सिद्धम्)।

**सोम**— यथा सौम्यस्य चरोः फलार्थत्वात् उप-सदनङ्गत्वं एवमिहापि इति प्रत्यवस्थानात् **दृष्टान्त-संगतिः**। प्रकृतौ परिधेरङ्गप्रधानार्थत्वेऽपि दर्विहोमा-नामपूर्वत्वेन परिध्यनुवादेन मन्त्रमात्रविधानानुपपत्तेः विशिष्टविधौ गौरवाच्च, परिधिमन्त्राणामपि सांग्रहण्य-र्थत्वे सति 'सजातेषु भूयासमिति परिधीन् परिदधाति' इति तैत्तिरीयशाखायां परिधिमन्त्रविधायकैः असंबन्धि-पदैः, शाखान्तरे परिधिमन्त्रैर्वा व्यवधानात् 'व्यवाया-न्नानुषज्यते' इति न्यायेन तदसंभवः। न चानुषङ्गा-संभवेऽपि आर्थवादिकफलवत्त्वेन प्राधान्यं युक्तम्। तथा सति प्रयाजादीनामपि तत एव प्राधान्यापत्तेः। **सूत्रा-र्थस्तु**— फलवत्सांग्रहण्यादिकं इतरस्य अफलस्य आमन-होमादेः प्रधानं स्यात्। कुतस्तेषामफलत्वं? 'व्यवाया-न्नानुषज्यते' इत्यनुषङ्गाभावस्य उक्तहेतुत्वात् अनुषङ्गा-संभवेन फलवत्त्वासंभवात् इति।

**वि**— 'मुख्यताऽऽमनहोमस्य सांग्रहण्यङ्गताऽ-थवा।, मुख्यत्वमविरुद्धत्वात्, फलाय स्यात्तदङ्गता॥'

**भाट्ट**— 'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' इति प्रकृत्य 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति श्रुतम्। तत्र आमनहोमानां सांग्रहणीष्टयङ्गत्वं, तस्याः विकृतित्वेन प्रकरणाभावेऽपि संनिधानादेव तदङ्गत्वोपपत्तेः। 'यत्प्रयाजानां पुरस्ता-ज्जुहुयाद् बहिरात्मानं सजातानां दध्यात्, यदनूयाजाना-मुपरिष्टाज्जुहुयात् स्वर्गं लोकमपक्रामेत्, मध्ये जुहोति' इति प्राकृताङ्गमध्यवृत्तित्वश्रवणेन प्रकरणाद्वा तदुप-पत्तेश्च। वस्तुतस्तु आकाङ्क्षाऽनुवृत्तौ प्रमाणाभावान्नेदं प्रकरणमिति ध्येयम्। एवं प्रयोजनवत्त्वोपपत्तौ च न ग्रामकामपदानुषङ्गेण स्वतन्त्रफलार्थत्वकल्पना प्रमाणा-भावात्, इष्ट्यङ्गपरिधिपरिधानाङ्गभूतवैशेषिकमन्त्रैर्व्यवा-याच्च। अतः सांग्रहणीप्रयुक्ता एवैते, न तु सौम्य-वत् फलार्थाः। अतः सर्वदैव प्रयाजानूयाजमध्ये कर्तव्याः। न तु ग्रामान्तरकामनायामेव।

**मण्डन**— 'सांग्रहणीगुण आमनहोमः।'

**शंकर**— 'आमनाः सांग्रहण्यङ्गम्।'

* **आमन्त्रणविभक्त्या** विधिशक्तिप्रतिबन्धः 'अहे बुध्निय मन्त्रं मे गोपाय' इत्यादौ। **वा.** २।१।६।३१.

⌛ **'आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा'** (वा. ३।२।३।७ श्लोकोत्तरार्धम्)। **इति न्यायेन** अग्नीत् (-अग्नीन् विहर) इति आमन्त्रणसामर्थ्यं प्रैषसामर्थ्यं च लिङ्गसूत्रार्थत्वेन व्याख्येयम्। **सु. पृ.** १०१८. * यच्छब्दा**मन्त्रणो**त्तमपुरुषाद्युपहतविधि-शक्तयो मन्त्राः धर्मसाधनत्वेनोच्यमानाः 'देवांश्च याभि-र्यजते ददाति च' इत्येवमादिभिराख्यातपदैः पुनःपुनः श्रुतैरपि न कर्मान्तरं कल्पयन्ति। **वा.** ३।१।१।१ **पृ.** ६४९.

* **आमयाविनः** आयुर्नाम चतुर्थः अतिरात्रः । बाल. पृ. ३४.

* **आमहीयवं नाम साम** ज्योतिष्टोमे माध्यंदिनपवमाने 'उच्चा ते जातमन्धसः' इति गायत्रे तृचे गीयते। **वि.** ९।२।६ वर्णकं २.

* **आमिक्षा** एव सा भवति, यत्र तप्ते पयसि दधि आनीयते । **भा.** ४।१।९।२३ । पयसि दध्नि निक्षिते आमिक्षाशब्दं प्रयुञ्जते । **वा.**

**आमिक्षा तप्ते पयसि दध्यानयनस्य प्रयोजिका, न वाजिनम् ॥**

**एकनिष्पत्तेः सर्वं समं स्यात् । ४।१।९।२२ ॥**

**भाष्यं**— चातुर्मास्येषु वैश्वदेवे श्रूयते, 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति । तत्र संदेहः किं तप्ते पयसि दध्यानयनं आमिक्षा प्रयोजयति न वाजिनं, उतोभयमिति । किं प्राप्तम् ? उभयमिति । कुतः ? यस्मिन् कृते यन्निष्पद्यते प्रयोजनवत्, तत् तस्य प्रयोजकमिति गम्यते । दध्यानयने च कृते उभयं निष्पद्यते । आमिक्षाऽपि, तत एव वाजिनमपि । तत्र अन्यतरार्थे क्रियेत, यदि विनिगमनायां हेतुर्भवेत् । अगम्यमाने विशेषे उभयार्थमानयनमिति गम्यते । तस्मादेकाऽसौ उभाभ्यामपि प्रयोजिता निष्पत्तिरिति ।

**टुप्**— ( सूत्रगतः ) सर्वशब्दो वक्ष्यमाणपूर्वपक्षालोचनया द्रष्टव्यः ( सर्वमेव आमिक्षावाजिनक्रयपांस्वादिसंयवननिनयनपर्यन्तं एकरूपायाः निष्पद्यते अनेनेति निष्पत्तेः दध्यानयनैकहायनीनयनादेः प्रणीतापर्यन्तायाः प्रयोजकत्वेन समं स्यात् इति वक्ष्यमाणसर्वपूर्वपक्षाणां तन्त्रेण इदं सूत्रं व्याख्येयमित्यर्थः ) । यत् प्रयोजनवत्, तत् प्रयोजकम् । आमिक्षावाजिने च प्रयोजनवती । अतो दध्यानयनमुभयप्रयुक्तम् । तच्च उभयनिष्पादनसमर्थम् ।

**संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् । २३ ॥**

**भाष्यं**— नैतदस्ति उभयं प्रयोजकमिति । आमिक्षा प्रयोक्त्री । कुतः ? नात्र यत् दधिपयोभ्यां निर्वर्त्यते, तत् हविः । यदि तत् हविः स्यात्, उभयं ताभ्यामेव निष्पद्यते, इति न गम्येत विशेषः । किं तर्हि हविरिति ? पयो दधिसंसृष्टम् । कुत एतत् ? 'सा वैश्वदेवी' इत्युच्यते, न ततो यत् निष्पद्यते इति । ननु स्त्रीलिङ्गनिर्देशात् आमिक्षा हविः, सा च ततो निष्पद्यते । वाजिनं च हविः, तदपि निष्पद्यते इति । नेत्युच्यते । तदेव हि पयस्तप्तं दधिसंयुक्तं आमिक्षा भवति । तस्मात् स्त्रीलिङ्गे अदोषः । आह, यदि पयो दधिसंसृष्टं हविः, किं तर्हि उच्यते आमिक्षा प्रयोजिकेति । उच्यते । आमिक्षायां दधिपयसी विद्येते । कथमवगम्यते ? संसर्गरसनिष्पत्तेः । तत्र हि दधिपयसोः संसृष्टयोः रस उपलभ्यते, तेन तत्र दधिपयसी इत्यनुमानं भवति । वाजिने तिक्तकटुको रसः । आह । तप्ते पयसि दधनि आनीयमाने उभयं भवति । दध्ना च पयः संसृज्यते, वाजिनाच्च विविच्यते । तत्र संसर्गश्चिकीर्षितो, न विवेकः इति कुत एतत् । उच्यते । शाब्दः संसर्गो दध्ना, अशाब्दो वाजिनेन विवेकः पयसः इति । सर्वनाम च पूर्वोक्तेन शब्देन एकवाक्यतां याति । इतरस्मिन् पक्षे पयसि दध्यानयनं वाजिनविवेकलक्षणाऽर्थं स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्मादामिक्षाऽर्थं दध्यानयनम् । आमिक्षाशब्दश्चात्र अनुवादः । आमिक्षैव सा भवति, यत्र तप्ते पयसि दधि आनीयते । तस्मादामिक्षा प्रयोक्त्री, वाजिनमप्रयोजकमिति ।

**टुप्**— यत् ( सा इति ) सर्वनाम्ना प्रतिनिर्दिश्यते, तत् देवतासंबन्धि ( वैश्वदेवी इति वचनात् ) तेन च ( सर्वनाम्ना ) अनन्तरनिर्दिष्टं प्रधानभूतं प्रतिनिर्दिश्यते । तच्च ( दध्यानयनस्य ) प्रयोजकम् । ( त्रयं पूर्ववाक्ये निर्दिष्टं तप्तं पयो, दधि, आनयतिश्च । तत्र ) आनयतिः संस्कारकत्वात् अन्यत्र ( दध्नि पयसि वा ) शेषभूतत्वात् अनन्तरोऽपि न प्रतिनिर्दिश्यते । ( आनयतिः क्रियारूपत्वेन प्राधान्यात् प्रतिनिर्दिश्यतां इति चेत्, तत्राह- ) देवतासंबन्धे अयोग्यत्वाच्च ( न खलु क्रिया देवतामुद्दिश्य त्यक्तुं शक्यते )। ( कश्चिदाह- ) दधि तु आनयतौ प्रधानं द्वितीयानिर्दिष्टत्वात् । सप्तमीनिर्देशात् पयोऽपि तच्छेषः

( तच्छेषभूतं इति पाठान्तरम् । इति न प्रतिनिर्देशार्हम् ) । तस्मात् तप्तपयः आनयतिविशिष्टं ( तप्ते पयसि आनीयमानं इत्यर्थः ) द्वितीयाऽन्तं दधि ( पूर्ववाक्ये ) प्रधानभूतम् । तत् सर्वनाम्ना प्रतिनिर्दिश्यते । तत् ( तदेव इति पाठान्तरम् ) देवतासंबन्धि ( तदेव च सर्वनामसमानाधिकरणेन आमिक्षाशब्देनोच्यते । इति आमिक्षैव दध्यानयनस्य प्रयोजिका । तदेतत् निराकरोति- ) एतदपि ( आनयतिवत् ) नास्ति । ( गुणत्वाविशेषात् । तद्दर्शयितुमाह- ) आनयतिरयं द्विकर्मकः । तत्र एकं कर्म क्रियया व्याप्यमानमपि ( तां प्रति प्रधानमपि ) गुणत्वं प्रतिपद्यते इतरत् प्रति । यथा 'अजां ग्रामं नयति' इति । तत्र विवक्षातः प्राधान्यम् । ( तदेव दर्शयति- ) यदि अजा संस्कार्या ( विवक्षिता ) ततः सा प्रधानं, ग्रामस्तदर्थः । अथ ग्रामस्य केन चित् कारणेन प्राधान्यं, ततः आनयतिविशिष्टा अजा तदर्था । तत्र द्वयोर्द्वितीयाऽन्तयोर्नास्ति शब्दतो निर्णयः ( साधारणत्वात् ) किं तर्हि वस्तुतः ( यदि एकं फलवत् इतरदफलं, ततः फलवदङ्गमितरत् निर्णीयते ) । यत्र तु द्वे अपि ( कर्मणी ) प्रयोजनवती द्वितीयाऽन्ते च, तत्र नास्त्येव निर्णयः । यत्र तु सप्तम्या निर्दिष्टमेकं आधारभूतं, तत्र इतरत् ( द्वितीयाऽन्तं कर्म ) आधेयत्वात् तत् ( सप्तमीनिर्दिष्टं प्रति नीयते ; ततश्च ) तेन ( द्वितीयानिर्दिष्टेन कर्मणा ) व्याप्यमानत्वात् इतरदेव ( सप्तमीनिर्दिष्टं ) तत्र प्रधानम् । अधिकरणभावो नान्तरीयकत्वादनूद्यते । एतत् छेदमात्रं क्रियते ( छेदो विभागः । एतं सामान्यन्यायं प्रकृते दर्शयति— ) इह तु पयः प्रधानकर्म । कथं ? (सप्तम्या पयसो विशेषणत्वं गम्यते, कथमस्य प्राधान्यमित्यर्थः । तदुपपादयति-- ) सप्तमी द्व्यंशा ( सप्तमीनिर्दिष्टस्य द्वे रूपे ) अधिकरणत्वात् गुणभूता, आधेयेन व्याप्यमानत्वात् प्रधानभूता ( प्रधानभूतता कर्मभूतता इति च पाठद्वयम् ) तत्र ( आनयतिना द्विकर्मकेण ) द्वितीयस्य कर्मणः अपेक्षितत्वात् यो व्याप्यमानोऽर्थः ( व्याप्यमानत्वरूपोऽर्थः ), स गृह्यते, न तु गुणभावः ( अनपेक्षितत्वात् ) । तस्मात् आनयतिविशिष्टेन दध्ना व्याप्यमानं ( पयो व्याप्यमानत्वात् इत्यर्थः ) प्रधानकर्म । तत्रावश्यं सामर्थ्यादेव दधि शेषभूतम् । अतः सर्वनाम्ना ( प्रधानभूतं ) पयः प्रतिनिर्दिश्यते । तच्च देवतासंबन्धि । मन्त्रवर्णश्च पयस एव देवतासंबन्धं दर्शयति 'जुषन्तां युज्यं पयः' इति ( युज्यं दध्ना संयुक्तं पयः जुषन्तां सेवन्तां इति मन्त्रार्थः । पयसः प्राधान्यसाधनस्य फलमाह-- ) यदि चात्र पयो देवतासंबन्धि, ततो विशेषातिदेशः सिध्यति 'पयो वा तत्प्रधानत्वात्' ( ८।२।४।२२ ) इति । दधिप्राधान्ये तु नैतत् सिध्यति इति ( हेतोः ) न तत् ( दधि ) संस्क्रियते ( किंतु पय एव दध्यानयनेन संस्क्रियते ) । पयसि दधनि निक्षिप्ते आमिक्षाशब्दं प्रयुञ्जते । अत एव स्त्रीलिङ्गं ( अपि उपपद्यते आमिक्षायाः स्त्रीत्वात् ) । तदस्यामवस्थायां प्राप्तत्वादनूद्यते ( तदिति उभयोः परामर्शः ) । आमिक्षायां पयसो रसः ( पयोरसः इति पाठः ) उपलभ्यते संस्कारकस्य च दध्नः । ( यत्तु वाजिनमपि पय एवेत्युक्तं तत्राह-- ) उभौ रसौ वाजिने न स्तः । अनेनाभिप्रायेण आह ( भाष्यकारः ) 'नामिक्षा नाम पयसः अर्थान्तरं हविरिति' ( अनेन 'नात्र यत् दधिपयोभ्यां निर्वर्त्यते, तद्धविः' इति भाष्यं अर्थद्वारेण पठितम् ) । 'किं तर्हि हविरिति, पयो दधिसंसृष्टं' पयो दधिसंस्कृतमित्यर्थः । ( 'आह, तप्ते पयसि' इत्यादिचोद्यभाष्यस्य उत्तरभाष्यं 'शाब्दः संसर्गः' इति । तदिदमयुक्तं, यत्परो हि शब्दः स शब्दार्थः । न चेह संसर्गपरः शब्दः। यदि हि दधिपयसी संसृष्टे हविः स्यातां, ततः तत्संसर्गपरः शब्दः स्यात् । पयसस्तु हविष्ट्वे तत्संस्कारपरत्वात् शब्दस्य स एव शाब्दो, न तु संसर्गः, तस्यापि संस्कार्यत्वात् । अत आह— ) पयसश्च संस्कार्यता शब्देनैव दधि प्रति । तच्च ( दधि, पयसः ) संस्कारकं, संसर्गादृते न भवति । तस्मात् अनेन द्वारेण ( संस्कारसिद्ध्यर्थतया ) संस्कारश्चिकीर्षितः इत्यतः ( अभिप्रायात् भाष्यकारः ) आह 'शाब्दः संसर्गः' इति । 'इतरस्मिन् ( वाजिनसंस्कारार्थत्व-- ) पक्षे पयसि दध्यानयनं वाजिनविवेकलक्षणाऽर्थं स्यात्' इति ( भाष्यं, तदनुपपन्नम् ) । पयः प्रति संस्कारकत्वं

शब्देनावगम्यते, तत् हित्वा अन्यस्य (अश्रुतस्य) वाजिनस्य शेषभूतं क्रियते। अतः अश्रुतेन संबन्धात् लक्षणा। (यद्यपि न कस्य चित् पदस्य श्रुत्यर्थं हित्वा अन्यत्र वृत्तिरस्ति, तथापि विधीयमानस्य दध्यानयनस्य अश्रुतवाजिनशेषत्वे तद्द्वारेण शब्दस्यापि अश्रुते तात्पर्यात् लक्षणेत्युक्तम्। श्रुतपरित्यागेन 'नाश्रुततात्पर्यं युक्तं इति भाष्यतात्पर्यम्)।

**मुख्यशब्दाभिसंस्तवाच्च। २४॥**

**भाष्यं**—न चोभयं प्रयोजकं न्याय्यम्। नात्र वचनमस्ति इदं प्रयोजकमिदं नेति। असति प्रयोजके अनर्थकं भवतीति प्रयोजकं कल्प्यते। तत्र एकस्मिन्नपि प्रयोजके सिद्धे अर्थवत्युपदेशे, नान्यदपि प्रयोजकं भवितुमर्हति। न च न गम्यते विशेषः। कथं गम्यते? मुख्यशब्दाभिसंस्तवात्। मुख्यशब्दः संस्तोतुं न्याय्य इति। प्राथम्यात्तु तस्य तावत् प्रयोजकत्वं ज्ञातम्। तस्मिन् सति प्रयोजके परिहृतत्वादानर्थक्यस्य, न द्वितीयमपि प्रयोजकम्। प्रथमा च आमिक्षा, द्वितीयं वाजिनम्। तस्मादामिक्षा प्रयोक्त्री। अपिच मुख्यशब्देन च आमिक्षा स्तूयते 'मिथुनं वै दधि च शृतं च। अथ यत्संसृष्टं मण्डमिव मस्त्विव परिह्रयते, गर्भ एव सः' इति गर्भसंस्तुता आमिक्षा। मिथुनस्य च गर्भः प्रयोजकः, न गर्भोदकम्। तस्मादपि आमिक्षा प्रयोजिकेति मन्यामहे। किं भवति **प्रयोजनम्**। यद्युभयं प्रयोजकं, वाजिने नष्टे पुनस्तप्ते पयसि दधि आनेतव्यम्। अथ वाजिनमप्रयोजकं, नष्टे वाजिने लोपो दध्यानयनस्य।

**टुप्**— तापविशिष्टे दध्यानयनं प्रयोजकेन यावन्न संबध्यते, तावत् साकाङ्क्षमनर्थकम्। तस्मात् आनर्थक्यपरिहारार्थमामिक्षा प्रयोक्त्री। आमिक्षया च आनर्थक्ये परिहृते, नास्ति वाजिनेन संबन्धः।

**शा**— '**मधुराम्लरसाऽऽमिक्षा घनरूपा च, तेन सा। पयसोऽर्थान्तरं, तद्धि मधुरैकरसं द्रवम्॥**' अत उभयप्रयुक्तमानयनमिति। उच्यते। '**पयस्तदा** (तच्छब्देन) **परामृष्टं वैश्वदेवं विधीयते। मन्त्रवर्णाच्च पयसो हविष्ट्वमवगम्यते॥ पयस्त्वं न द्रवापेक्षं रसमात्रनिमित्तकम्। पय एव घनीभूतमामिक्षेत्यभिधीयते॥**' मन्त्रः 'जुषन्तां युज्यं पयः' इति। तस्मात् पय एवामिक्षा वैश्वदेवयागहविः इति वैश्वदेवयागप्रयुक्तमानयनं, न वाजिनयागप्रयुक्तम्।

**सोम**— पूर्वसूत्रोपक्षितार्थविचारणात् (एकविषयत्वं--) **संगतिः। तन्त्रसारे**-- कटकादेर्हैमविकारत्वेऽपि हेमत्ववत्, घटादेर्मृद्विकारत्वेऽपि मृत्त्ववच्च पयोविकारत्वे सत्येव आमिक्षायाः पयस्त्वं, न तु आमिक्षापयसोरत्यन्तामेदः इत्युक्तम्। वाजिनयागात् पूर्वं वाजिनापचारे पुनर्दध्यानयनेन वाजिनं न संपादनीयं इति **प्रयोजनम्**। तत्र पुनः '**द्रव्यप्रयुक्त्यभावात् वाजिनयागस्य लोपः**' इति न्यायः। 'यस्य सर्वाणि' इति वचनात्तु स्विष्टकृद्वत् आज्येन तदनुष्ठानमिति। **सूत्रार्थस्तु**-- एकस्मात् दध्यानयनात् उभयोर्निष्पत्तेः सर्वे आमिक्षा वाजिनं च दध्यानयनप्रयुक्तौ समं स्यात् इति। **यद्वा** एकनिष्पत्तेरित्यनेन युगपन्निष्पत्तिर्विवक्षिता। न च सिद्धान्ते वाजिनस्यानुनिष्पादित्वात् युगपन्निष्पत्तिरसिद्धा। नहि पश्चान्निष्पादित्वं अनुनिष्पादित्वं, किंतु परनिष्पत्त्यर्थयत्नेनैव स्वार्थयत्नं विना निष्पद्यमानत्वम्। तच्च युगपन्निष्पत्तावपि संभवति इति युगपन्निष्पत्तेः सिद्धान्तेऽपि अविरोधात् तस्याः हेतूकरणं नानुपपन्नम्।

**वि**— '**आमिक्षा वाजिनं च स्याद्दध्यानीतेः प्रयोजकम्। उतामिक्षैव, सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः॥, आमिक्षा पय एवात्र तच्छब्दान्मन्त्रतो रसात्। प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनम्॥**'

**भाट्ट**— चातुर्मास्येषु प्रथमे पर्वणि 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति श्रुतम्। तत्र दध्यानयनस्य आमिक्षा वाजिनं चेत्युभयं प्रयोजकं, उत आमिक्षा **एव इति चिन्तायां**, दध्यानयनवाक्ये तावत् तप्तपयोऽधिकरणकदध्यानयनमात्रं श्रुतं, न तु पयसो दध्नो वा प्राधान्यं, सप्तम्या प्राधान्यानभिधानात्। तथात्वे उद्देश्यविशेषणत्वेन तापस्य अविवक्षाऽऽपत्तेश्च। न चानयतेर्द्विकर्मकत्वात् पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः। द्विकर्मकधातुस्थले अधिकरणत्वादिकारकान्तराविवक्षायां **संबन्धमात्र**विवक्षायां च **संबन्धसामान्ये षष्ठीप्राप्तौ 'अकथितं च'**

इति कर्मसंज्ञाकरणात् द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्, प्रकृते सप्तमीश्रवणेन अधिकरणत्वविवक्षाऽवगतेर्द्वितीयकर्मप्रसक्त्यभावाच्च । दध्नस्तूपयोगाभावादेव सक्तुवन्न प्राधान्यावगतिः । नहि आमिक्षा नाम दधिपयोरूपा, रसघनीभावादिधर्मभेदेन अर्थान्तरत्वात् । 'तस्यै शृतं, तस्यै दधि, तस्या आमिक्षा, तस्यै वाजिनम्' इति भेदेन व्यपदेशाच्च । 'गोपयसोर्यत्' (पा० ४।३।१६०) इति विकारवाचियत्प्रत्ययान्तपयस्याशब्दपर्यायत्वाच्च । 'जुषन्तां युज्यं पयः' इति तु धान्यशब्दवत् विकारपरम् । अतश्च दध्यानयनस्य स्ववाक्ये उद्देश्याभावात् सामर्थ्येन दधिसंसृष्टपयोजन्यामिक्षाऽर्थत्वाङ्गीकारे च जन्यत्वाविशेषेण वाजिनार्थत्वस्याप्यवगतेः उभयं प्रयोजकम् । इति प्राप्ते 'सा वैश्वदेवी' इति सर्वनाम्नः प्रकृतपरामर्शित्वात् पूर्ववाक्ये यत् प्राधान्येन निर्दिष्टं, तदामिक्षेत्यवधार्यते, न त्वर्थान्तरम् । रसश्च मधुराम्लरूपः तयोरेवावधार्यते, इति न ततोऽप्यर्थान्तरम् । घनीभावस्तु पीयूषादिवत् अभेदेऽपि उपपन्न एव । पृथङ्निर्देशोऽपि अवस्थाऽन्तरात् । विकारार्थकयत्प्रत्ययस्मृतिरपि तच्छब्दानुरोधेन अवस्थापरैव । तस्मान्नामिक्षा अर्थान्तरं, अपि तु दधि पयो वा, तत्रापि विशेषस्तु अष्टमे (२।४) अतिदेशविशेषसिद्ध्यर्थं निरूपयिष्यते । तत् सिद्धं स्ववाक्ये एव आमिक्षारूपोद्देश्यसंबन्धित्वावगतेर्दध्यानयनं तत्प्रयुक्तमेव, न तु वाजिनप्रयुक्तं, तस्य तच्छब्दाद्यभावेन अर्थान्तरत्वप्रतीतेः, तज्जन्यत्वेऽपि शेषित्वानवगमात् । अतश्च तस्य अनुनिष्पन्नत्वात् तद्यागस्य स्विष्टकृदादिवत् अनुनिष्पन्नप्रतिपत्तित्वावगतेः तदभावेऽपि च परप्रयुक्तदध्यानयनोपजीवित्वावगतेर्न तत्प्रयोजकत्वं वाजिनस्य कल्पनीयं गौरवप्रसङ्गात् ।

**प्रयोजनं** पूर्वपक्षे वाजिनयागस्य अर्थकर्मत्वेन समप्राधान्यापत्तेः आमिक्षायागविकारे अनतिदेशः । सिद्धान्ते तु अनुनिष्पन्नप्रतिपत्तित्वेन आमिक्षायागाङ्गत्वात् तद्विकारेऽतिदेशः । **सोमेश्वरस्य** तु सिद्धान्तेऽपि वाजिनयागे अर्थकर्मत्वं वदतः आमिक्षायागाङ्गत्वानापत्तेः तद्विकारेऽतिदेशो न सिध्येत् । 'अष्टौ हवींषि' इत्यस्य विनिगमनाविरहेण अवयुत्यानुवादत्वस्य तन्मतेऽपि आपत्तेः ।

**यत्तु** भाष्यकारादिभिः पूर्वपक्षे वाजिननाशे आमिक्षानाशे इव पुनर्दध्यानयनेन वाजिनोत्पत्तिः, सिद्धान्ते तु आज्येन समापनमिति प्रयोजनमुक्तं, **तत्** षष्ठे (४।६) हविर्नाशादिनिमित्ते आज्येन समापनस्य विधिबलेन वक्ष्यमाणत्वेन पूर्वपक्षेऽपि तुल्यत्वादुपेक्षितम् ।

**मण्डन**--- 'दध्नः प्रयोजिकाऽऽमिक्षा ।' ११.

**शंकर**— 'वाजिनार्थे न दध्यादि ।' १२.

* आमिक्षा दधिपयोभ्यां नार्थान्तरं, अपितु दधि पयो वा । तत्रापि विशेषस्तु (पय एवेति) अष्टमे (८।२।४) अतिदेशविशेषसिद्ध्यर्थं निरूपयिष्यते । **भाट्ट.** ४।१।९, * आमिक्षा दध्यानयनप्रयोजिका । यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताशालि यत्, तत् तस्य प्रयोजकम् । ४।१।१. * आमिक्षा पय एव अम्लसंयोगेन घनीभूतम् । प्रभूतं तत्र पयः, अल्पं दधि । दधि च तत्र पयो घनीभावयितुं उपादीयते । दध्यभावे अन्येनापि अम्लेन काञ्जिकादिना क्रियते । तत्रापि च आमिक्षाशब्दो भवति । दधिनियमः अम्ले अदृष्टार्थः । **भा.** ८।२।४।२२, * आमिक्षा मारुती वारुणी च वरुणप्रघासेषु । ११।२।१५।६३, * आमिक्षा मैत्रावरुणी वैश्वदेव्या आमिक्षायाः धर्माणां ग्राहिका । ७।३।१०। २६--२७. * आमिक्षा 'मैत्रावरुणीमामिक्षां वशा दक्षिणा' इयं राजसूये चतुर्थी अवेष्टिः । **भाट्ट.** ११। ४।३. * आमिक्षा वाजिनोत्पत्तेः प्रयोजिका नोत्पत्तिपालनयोः । **बाल.** पृ. १०६. * 'आमिक्षा वैश्यस्य' व्रतं ज्योतिष्टोमे दीक्षासु । **भा.** ४।३।४।८–९, ६।१।७। २८, १२।१।१४।३०, * आमिक्षा सांनाय्यविकारः सोमादूर्ध्वमुत्कृष्यते 'नासोमयाजी संनयेत्' इति वचनात् । ५।४।८।२५. * आमिक्षा सुतप्ते पयसि दधनि निक्षिप्ते अल्पेन कालेन द्वेधा तद्भवति । तत्र घनीभूतो भाग आमिक्षा । केवलजलरूपो भागो वाजिनम् । **के.**

**🙵 'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः। आमिक्षापदसांनिध्यात् तस्यैव त्रिषयार्पणम् ॥' इति न्यायः** (वा. २।२।९।२३ पृ. ५३४) । **नैव**

हि द्रव्यमात्रस्य तद्धितैर्दैवतोच्यते अन्यशब्दाभिधेयस्य विग्रहवाक्यस्थेन अन्येतिसर्वनाम्ना संनिहितस्य द्रव्यविशेषस्यैव देवतासंबन्धः तद्धितेन क्रियते, न चैतावता पदान्तरानर्थक्यं ' आमिक्षां० ' इत्यनेनैव न्यायेन संनिहितविशेषणापेक्षितविशेष्यसमर्पणार्थत्वात् पदान्तरस्य । **सु.** पृ. ४७५ । न्यायश्लोकार्थस्तु वार्तिकेनैव इत्थमुक्तः—नैवात्र नीलोत्पलादिवत् अर्थद्वारं वैश्वदेव्यामिक्षाशब्दयोर्विशेषणविशेष्यत्वं, किं तर्हि ? ' आमिक्षां० ' । नैवात्र तद्धितान्तेन एकोऽर्थोऽभिहितः, आमिक्षापदेन अन्यः, पश्चात्तयोर्विशेषणविशेष्यता, तद्धितान्तवाच्यस्य प्रथमप्रतीतेः । किं तर्हि ? तद्धितान्तस्य अनुपयुक्तानभिधानशक्तेरेव ( अपि तु उपयुक्ताभिधानशक्तेरेव ) प्रतीक्षमाणस्य उपपदेन विषयदानमात्रं क्रियते । तेन आमिक्षापदसंनिधिबलात् वैश्वदेवीशब्द एव तामभिधत्ते । इति ।

* **आमिक्षाया** वारुण्याः निष्कासः तुषाश्च चातुर्मास्यगतवरुणप्रघासावभृथे द्रव्यम् । **भा.** ७।३।५।१६. ***आमिक्षायां** सांनाय्यगतपयोधर्मातिदेशः, न दधिधर्मातिदेशः, आमिक्षायां पयसः प्राधान्यात् । **वि.** ८।२।४. * **आमिक्षाऽधिकरणम्** ( गुणाधिकरणं इत्यत्र द्रष्टव्यम् ) २।२।९।२३ । रूपभेदात् कर्मभेदः इति यदप्युक्तं, तत्र रूपशब्देन धात्वर्थभेदो गुणभेदो वा अभिप्रेतः ? नाद्यः, कर्मभेदसाधकतया आमिक्षाऽधिकरणोपन्यासासंगतेः । नहि आमिक्षाऽधिकरणे धात्वर्थभेदात् भेदः सिध्यति । **समयमयूखः.** पृ. २९. * यस्य चाङ्गद्वारेण प्रयोजकत्वं, तदेव प्रयोजकं इत्यामिक्षाऽधिकरणे वक्ष्यामः । **ऋजु.** १।१।१।१ पृ. ९. * **आमिक्षायागात्** वाजिनयागः द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात् कर्मान्तरम् । **वि.** २।२।९.

**आमिक्षायागस्विष्टकृतो न बाधः वाजिनानुवषट्कारस्यैव स्विष्टकृद्यागत्वात् ॥**

अस्ति सोमस्य इव वाजिनस्याप्यनुवषट्कारः । स च स्विष्टकृद्रूप एव, प्रधानद्रव्यप्रतिपत्तिरूपत्वात् । अतः आमिक्षायागीयस्विष्टकृतं प्रत्यामनेत् अनिज्याशेषत्र्यङ्गैः स्विष्टकृद्यागमिव । **इति प्राप्ते,** वाजिनानुवषट्कारस्य वाक्येन वाजिनसंबन्धात् वाजिनैकशेषप्रतिपत्तिरूपत्वेऽपि आमिक्षायागशेषस्य प्रतिपत्त्याकाङ्क्षाया अनिवृत्तेः चोदकप्राप्तस्य स्विष्टकृतो न बाधः । **संकर्ष.** १।४।२.

**आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् । ८।२।४।१९ ॥**

चातुर्मास्यगतवैश्वदेवपर्वणि वैश्वदेवी आमिक्षा भवति । सा दधिपयसोरुभयोर्वा विकारः, दध्नो वा केवलस्य, पयसो वा केवलस्य इति विचारे एकं पूर्वपक्षमाह । आमिक्षा वैश्वदेवी उभयविकारः उभयोः दधिपयसोः विकारः स्यात् । उभयभाव्यत्वात् उभाभ्यां दधिपयोभ्यां भाव्यते उत्पाद्यते यस्मात् । तस्मात् आमिक्षायां दधिपयसोरुभयोर्धर्माः स्युः इति ।

**एकं वा, चोदनैकत्वात् । २० ॥**

दधि पयश्च इत्युभयं प्रकृतिः इति पूर्वपक्षनिरासार्थो वाशब्दः । उभयं न प्रकृतिः किंतु किं चिदेकं प्रकृतिः दधि वा पयो वा । ' वैश्वदेवी आमिक्षा ' इति चोदनैकत्वात् । एषा एका चोदना । सा एकेनैव विध्यन्तेन निराकाङ्क्षीक्रियते । तस्मादेकमेव प्रकृतिः नोभयम् । इति द्वितीयः पूर्वपक्षः ।

**दधि, संघातसामान्यात् । २१ ॥**

सत्यं, वैश्वदेवपर्वगताया वैश्वदेव्या आमिक्षायाः एकमेव प्रकृतिरिति । तत्तु एकं दधि, न पयः । तथा च दधि आमिक्षायाः प्रकृतिः । संघातसामान्यात् । संघातः संहतत्वं मूर्तिः । दधि संहतं, आमिक्षा च संहता । पयस्तु न संहतं किंतु द्रवम् । इति तृतीयः पूर्वपक्षः ।

**पयो वा, तत्प्रधानत्वाल्लोकवद् दध्नस्तदर्थत्वात् । २२ ॥**

वाशब्दः पूर्वोक्तपूर्वपक्षनिरासार्थः । वैश्वदेवपर्वगताया वैश्वदेव्या आमिक्षायाः पयः प्रकृतिः, न दधि नाप्युभयम् । तत्प्रधानत्वात् । तत् पयः प्रधानं भूयः अस्यां सा आमिक्षा तत्प्रधाना पयोबहुला । तत्प्रधानत्वादामिक्षायाः पयः प्रकृतिः । दध्नः तदर्थत्वात् । दधि आमिक्षाभवनार्थम् । दध्ना हि पयः घनीभवति । लोकवत्, लोके यथा पयसो घनीभावार्थं दधि उपादीयते ।

तप्ते पयसि दधनि प्रक्षिप्ते पयो घनीभवति योग्येन कालेन । दध्नः अन्येनापि च अम्लेन द्रव्येण आतञ्चने दत्ते पयो घनीभवति । तस्मात् दध्नो घनीभावार्थत्वात्, पयःप्रधानत्वाच्च आमिक्षायाः पयः एव प्रकृतिः, न दधि नोभयम् । तस्मात् पयसो विध्यन्त आमिक्षायाम् । इति सिद्धान्तः ।

**धर्मानुग्रहाच्च । २३ ॥**

सिद्धान्ते हेत्वन्तरमाह । सद्यस्कालतारूपस्य धर्मस्य अनुग्रहात् पय एव प्रकृतिः । वैश्वदेवं पर्व सद्यस्कालम् । पयश्च सद्यस्कालम् । आमिक्षायाः पयोविकारत्वे स्वीकृते सद्यस्कालत्वस्य धर्मस्य अनुग्रहः स्यात् । दधिविकारत्वे तु दध्नो द्व्यहकालत्वात् सद्यस्कालत्वानुग्रहो न स्यात् । तस्मात् आमिक्षा पयसो विकारः इति सिद्धान्तः ।

**सद्योभावं च दर्शयति । २४ ॥**

हेत्वन्तरमाह । 'विश्वे देवा ऋतावृधा ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः' ( ऋसं. ६।५२।१० ) इति पयःपदं सद्योभावं सद्यस्कालतां दर्शयति । यदि दध्नो विकारः स्यात् तदा द्व्यहकाले दातव्यं स्यात्, तथा च न कथमपि पयः स्यात् । तत्र च मन्त्रस्थः पयःशब्दो नोपपद्येत । तस्मात् पय एव आमिक्षायाः प्रकृतिः । पयोधर्मा आमिक्षायाम् । **के.**

* **आमुष्मिकफलकं काम्यं** वैदिकं कर्म यथा, स्वर्गार्थाग्निहोत्रादि । **बाल. पृ. ८६.**

⌛ **आमोदषट्पदन्यायः** । अयं च पद्येनोपनिबद्धः अनर्घराघवनाटके । तथाहि, 'आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् । गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः ॥' इति । **साहस्री. ७८१.**

⌛ **आम्नातादन्यदधिकारे, वचनाद् विकारः स्यात् । ९।१।१८।५०॥**

ज्योतिष्टोमे यज्ञायज्ञीयं साम प्रकृत्य आमनन्ति 'न गिरागिरेति ब्रूयात्, यद् गिरागिरेति ब्रूयात् आत्मानं तदुद्गाता गिरेत्, ऐरं कृत्वोद्गेयम्' इति । इदमेतादृशं वचनं भाष्ये १०।४।१।१ इत्यत्र, विस्तरे च ९।१।१८ इत्यत्र पठितम् । भाष्यादावेव अन्यत्र तु 'तदुद्गातोद्गिरेत्' इति पाठः । वस्तुतस्तु 'न गिरा' इत्यारभ्य 'गिरेत्' इत्यन्तं वाक्यं न वेदे क्वाप्युपलभ्यते । तत्र 'यद् गिरागिरेत्याह आत्मानं तदुद्गाता गिरति' इति **ताण्ड्ये** ( ८।६।९ ), 'यद् गिरा गिरा चेति ब्रूयात् अग्निर्वैश्वानरो यजमानं गिरेत्' इति **जै. ब्राह्मणे** ( १।१७५ ) पठ्यते । अथ 'यज्ञायज्ञा वो अग्नये' इत्यस्यामृचि उत्पन्नं साम यज्ञायज्ञीयम् । यज्ञायज्ञा-शब्दात् 'मतौ छः सूक्तसाम्नोः' ( पा० ५।२।५९ ) इति छप्रत्यये तस्य ईयादेशे च यज्ञायज्ञीयं इति सामविशेषस्य नामधेयम् । ऐरं इति, इरायाः संबन्धि गानं ऐरम् । इरापदं चान्नवाचकम् । तत्र किं गिरापदं इरापदं वा विकल्पेन गेयं, किंवा इरापदमेव नियमेन गेयमिति विचारे सिद्धान्तमाह । अधिकारे ज्योतिष्टोमप्रकरणे यदाम्नातं 'यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे' इति, तस्मात् आम्नातात् गिरापदात् अन्यत् इरापदमेव गेयम् । 'ऐरं कृत्वा उद्गेयं' इति विशेषवचनात् विकारः स्यात् गेयः । तस्मात् विशेषवचनात् इरापदं गिरापदस्य बाधकं भवति ।

**द्वैधं वा तुल्यहेतुत्वात्, सामान्याद् विकल्पः स्यात् । ५१ ॥**

इरापदमेव गेयमिति सिद्धान्ते उक्ते पूर्वपक्षी आह । वाशब्दः सिद्धान्तपक्षं व्यावर्तयति । द्वैधं द्विधाभावः द्विधात्वं स्यात् गिरापदं वा गेयं, इरापदं वेति । तुल्यहेतुत्वात् मन्त्राम्नानात् गिरापदं प्राप्नोति, इरापदमपि गानसंबन्धेन विधानात् प्राप्नोति । एवं उभयत्रापि प्रापकप्रमाणसत्त्वात् द्वैधं प्रकारद्वयं स्यात् । ननु समुच्चयस्तर्हि स्यात्, नेत्याह– सामान्यात् फलतः समानत्वात् एककार्यकरत्वात् न समुच्चयः किंतु विकल्प एव स्यात् । उभयोरपि गिरा-इरापदयोः समानमेव फलं अग्निष्टोमस्तोत्रस्य साधनम् । एकमपि स्तुत्यर्थं, अपरमपि । तस्मात् इरापदेन गिरापदस्य न बाधः इति पूर्वः पक्षः ।

**उपदेशाच्च साम्नः । ५२ ॥**

ननु नैतयोः पदयोस्तुल्यता, येन विकल्पः स्यात् । गिरापदस्य समाम्नानमात्रं न कर्तव्यता विधीयते, इरापदं तु विधीयते इति । अत्रोच्यते । नैवं, साम्नः उपदेशात् । 'यज्ञायज्ञीयेन स्तुवन्ति' इति साम उपदिष्टम् ।

गिरापदवत्त्वाच्च यज्ञायज्ञीयस्य गिरापदमपि उपदिष्टमेव भवति। एवं च गिरापदस्य न समाम्नानमात्रत्वम्। तथा च विकल्पः स्यात्।

**नियमो वा, श्रुतिविशेषादितरत् साप्तदश्यवत्। ५३ ॥**

वाशब्देन पूर्वपक्षं व्यावर्त्य सिद्धान्तमाह। न विकल्पः, किंतु इरापदस्यैव नियमः स्यात्। 'ऐरं कृत्वोद्गेयं' इति श्रुतिविशेषात्। गिरापदं पाठमात्रं, न तस्यात्र कर्तव्यता। न तु गिरापदं विना साम कृतं भवति, इति अर्थापत्त्या गिरापदस्य कर्तव्यता कल्प्येत, इरापदस्य तु श्रुत्यैव कर्तव्यतोक्ता। तेन च इरापदेन साम्नि सिद्धे, नास्ति अर्थापत्तिर्गिरापदस्य। ननु गिरापदपाठस्य तर्हि निरर्थकता प्रसज्यते। तत्राह इतरत् गिरापदं साप्तदश्यवत्। यथा सामिधेनीसाप्तदश्यं विकृतिषु निविशते, तथा गिरापदमपि काश्चित् विकृतीः अभिनिवेष्टुमर्हति। तथाहि अग्नौ श्रूयते 'यज्ञायज्ञीयं पुच्छे गायति' इति। तत्र यथाऽऽम्नातं गिरापदं प्रयोक्तव्यमिति। यत्र तु अग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञीयं प्रयुज्यते, तत्र इरापदेन गिरापदस्य बाध एव। इति सिद्धान्तः। **के.**

* **आम्नानं** यतरत् क्रियाऽर्थं, तद्धर्मा भविष्यन्ति (ग्राह्याः)। **भा.** ३।३।३।१०. * **आम्नानान्यथाऽनुपपत्त्या** हि अदृष्टं कल्प्यते। तच्चाम्नानं यत्र दृष्टार्थतया उपपन्नं, तत्र अर्थापत्तेरसंभवः। **वा.** ३।१।४।१० **पृ.** ६६८.

**आम्नायस्य क्रियाऽर्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते। १।२।१।१ ॥**

'सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं' 'स आत्मनो वपामुदक्खिदत्' 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि। तानि किं कं चिद्धर्मं प्रमिमते, उत नेति भवति विचारणेति। ननु अध्यायोपक्रमे 'चोदनालक्षणोऽर्थो धर्मः' इति चोदनायाः प्रामाण्यं प्रतिज्ञातं, न तु मन्त्रार्थवादादेः। प्रवर्तकं च वचनं चोदना। तदुक्तं 'चोदनेति क्रियायाः प्रवर्तकं वचनं' (भा. पृ. १२) इति। तत्प्रामाण्यं च प्रथमपादे प्रतिपादितमेव। तत् कथं सिद्धार्थानामर्थवादानां अप्रतिज्ञातप्रस्तुतप्रामाण्याप्रामाण्यविचारसंगतिरिति? (**प्राभाकरमतेन पूर्वपक्षः**) तत्रैके समाधानमेवमभिदधति—प्रथमपादसिद्धमपि चोदनाप्रामाण्यं अर्थवादैकवाक्यतावशेन अप्रतिपादकतया पुनराक्षिप्यते इति। तत्रायं पूर्वपक्षिणोऽभिप्रायः— वृद्धव्यवहारे हि शब्दानां कार्यार्थतयैव व्युत्पत्तेः अर्थवादानामपि कार्यार्थत्वम्। न चार्थवादानां साक्षात् कार्यार्थत्वं संभवति। संभवति तु चोदनैकवाक्यतया। न च लक्षणया प्राशस्त्यप्रतिपादनेन चोदनैकवाक्यत्वं, प्राशस्त्यस्य विध्यनपेक्षितत्वेन असंबन्धात्, अर्थवादानां परोक्षवृत्तिताऽऽपत्तेश्च। सिद्धार्थसाध्यार्थतयोश्च एकवाक्यत्वं तदर्थयोर्हेतुहेतुमद्भावेन दृष्टम्। यथा 'मलिनः स्नायात्' 'मलिनानि मे वसनानि, राजकुलं मया न गन्तव्यं' इत्यादिषु लोके तथा दर्शनात्। नहि रुद्ररोदनादीनां हेतुत्वं करणेतिकर्तव्यतयोः अन्यतररूपेण अपूर्वोत्पत्तौ संभवति, अपूर्वोद्देशप्रवृत्तकृतिसाध्यत्वाभावात्। नापि व्रीह्यादेरिव कारकतया, उत्पन्नातिवृत्तस्य रुद्ररोदनादेर्व्यापारयितुमशक्यत्वात्। तेन ज्ञप्तावेव हेतुत्वं वक्तव्यम्। तत्रापि न विषयतया, नापि नियोज्यतया। यतः कृत्यवच्छेदकतया हि यागादीनां विषयत्वम्। न च कृत्यसाध्यानां कृत्यवच्छेदकत्वम्। स्वकृतिप्रयोजनवत्त्वेन हि नियोगनियोज्यः। न चार्थवादानां तथाभावोऽस्तीति पारिशेष्यात् धूमादिवत् ज्ञप्तिहेतुत्वं वक्तव्यम्। तत्र यदि हेतुस्वरूपतत्प्रतिबन्धग्राहकं प्रमाणमस्ति, तदा प्रतिबन्धबलेन अनुमानवाक्यमिव हेतुद्वारेण अर्थं व्यवस्थापयन्ती चोदना अनुमानवाक्यवदेव स्वतो न प्रमाणम्! अथ हेतुस्वरूपादिग्राहकं प्रमाणं नास्ति, तदा लिङ्गभावेनापि ज्ञप्तौ हेतुत्वासंभवात् अप्रतिपादकत्वादेव अप्रामाण्यं चोदनायाः इति पारमार्थिकः पूर्वपक्षः। **न च अरुणपराशरादिशाखासु** अर्थवादाभावान्न तदेकवाक्यतया कृत्स्नवेदाप्रामाण्यमिति **वक्तव्यम्**। यतः 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायेन क्वचित् प्रतिपादितस्य प्रधानस्य वा अङ्गस्य वा शाखाऽन्तरीयसार्थवादाङ्गप्रधानैकवाक्यतया सर्वाक्षेपोपपत्तिः।

तथा चोक्तं '**अङ्गद्वारः प्रधानेषु सिद्धार्थानुगमः क्वचित्। प्रधानद्वारकाङ्गेषु क्वचिदस्ति, स्वतः क्वचित्॥**' इति। **ननु** यद्यपि वृद्धव्यवहारत एव व्युत्पत्तिः, तथापि सर्वशब्दानां कार्यान्विताभिधानसामर्थ्यं हित्वा आकाङ्क्षितयोग्यसंनिहितान्वितमात्राभिधानसामर्थ्येनैव सामान्यव्युत्पत्तौ लिङादियुक्तवाक्येषु कार्यस्यैव तथाभूतत्वात्। तदन्वितावगतेर्न सर्वशब्दानां विशेषशक्तिकल्पना, व्युत्पत्तिकालावगतत्वमात्रेण विशेषशक्तिकल्पने शाब्दसंनिहितेनैव व्युत्पत्तौ अन्वयदर्शनात् 'द्वारं द्वारं' इत्यादौ अश्रुताध्याहारशब्दकल्पनाप्रसङ्गः। तेन यथा होलाकाऽधिकरणे सामान्यशास्त्रकल्पनयैव विशेषाचारोपपत्तौ न विशेषशास्त्रकल्पना, एवमिहापि आकाङ्क्षाऽऽदिमन्मात्रशक्तिकल्पनैवेति। **तदयुक्तम्।** नहि वृद्धव्यवहारदृष्टत्वमात्रेण कार्यान्विताभिधानशक्तिकल्पनम्। किं तर्हि? स्वसंतानव्युत्पत्त्यनुसारेण। स्वसंताने च कार्यस्यैव अनेकविशेषणविशिष्टस्य प्रवृत्तिहेतुत्वावगमात् व्यवहारवाक्येऽपि तदर्थत्वनिर्णयः। न च स्वसंताने आकाङ्क्षाऽऽदिमन्मात्रे शब्दसंनिहिते वा व्युत्पत्तिः। होलाकाऽधिकरणे तु व्यभिचारेण तत्तद्देशादिविशेषप्रतिपादकोपपदवत् शास्त्रकल्पनाप्रमाणाभावात् भवतु सामान्यशास्त्रकल्पना। नहि तत्र अनुष्ठातृमात्रानुगतं अननुष्ठातृव्यावृत्तं च किंचित् व्यवस्थाकारणमस्ति। तथा चोक्तं '**अव्यवस्थितवाच्यार्थप्राच्यादिपदतः श्रुतिः। वाच्यानध्यवसायेन प्रामाण्यं नैव गच्छति॥**' इति। तथा वार्तिककारपादैरप्युक्तं '**न त्वत्रोपपदं किंचिद्यथाचारानुसारि यत्। अनुमीयेत तद्देशदृष्टकर्तृविशेषणम्॥**' इति। (वा.१।३।७।१७पृ. २४५)। तेन होलाकाऽधिकरणन्यायमभिदधता उभयदर्शनानभिज्ञतैव ज्ञापितेति। **अथोच्येत**— यथा 'गामानय' इत्यादिषु कार्यार्थान्वयोऽवगतः, तथा 'गौर्गच्छति' इत्यादिषु सिद्धार्थान्वयोऽपि अवगत एव। तेनोभयत्रापि प्रयोगदर्शनात् उभयानुगताकाङ्क्षाऽऽदिमन्मात्रे एव शक्तिरवधार्यते, न कार्यमात्रे। यथा देवदत्तस्य पुत्र इति नप्तेति च साक्षात्संबन्धे परंपरासंबन्धेऽपि च प्रयोगदर्शनात् षष्ठीविभक्तेः उभयानुगतसाक्षात्पारंपर्योदासीनसंबन्धमात्रे शक्तिः। यथा च तत्रैव द्वितीयाविभक्तेः ईप्सितेऽनीप्सिते च प्रयोगदर्शनात् उभयानुगतक्रियाजन्यफलभागित्वमात्रे एव शक्तिः, न तु **भट्टस्येव** ईप्सितमात्रे इति। **तदयुक्तम्।** स्वव्युत्पत्त्यनुसारेण तावत्, सर्वशब्दानां कार्यान्वयपरत्वमेव अवगतं, पश्चात् सिद्धार्थपरत्वमवगम्यमानं, न व्युत्पत्तिकालावगतं अनन्यथासिद्धं कार्यान्वयपरत्वं बाधितुमुत्सहते, सिद्धान्वयावगमस्य लक्षणयैवोपपत्तेः। **ननु** व्युत्पत्तिकालावगतमपि क्रियाकार्यवाचित्वं यथा पश्चाद्भाविस्थायिकार्यावगमेन बाध्यते एव, तथा अत्रापि भविष्यतीति। **मैवम्।** पश्चाद्भाविनोऽपि स्थायिकार्यावगमस्य अनन्यथासिद्धत्वात्, पूर्वावगतार्थे हि लक्षणाऽऽदिकं भवति। न चापूर्वस्य पूर्वावगतिरस्ति, अपूर्वत्वव्याघातात्। अस्ति तु क्रियाकार्यस्य पूर्वावगतिः। तेन अनन्यथासिद्धेन पश्चादवगतेन अपरस्य असिद्धस्य पूर्वावगतस्यापि बाधितत्वाद्भवति क्रियाकार्यस्य लाक्षणिकत्वं, अपूर्वकार्यस्यैव च मुख्यत्वम्। न चेह तथेति वैषम्यम्। यत्तु षष्ठीद्वितीयाविभक्त्यर्थनिदर्शनं, तदसंबद्धमेव। नहि तत्र नियमेन प्रथमं षष्ठ्याः साक्षात्संबन्धं परंपरासंबन्धं वा, द्वितीयाया ईप्सितत्वमनीप्सितत्वं वा कश्चिदवगच्छति, येन मुख्यार्थत्वमेव भवेत्। अनियमेन तु प्रतीतौ साधारणार्थत्वमेव युक्तम्। **अथैवमभिधीयते।** मैवेदेवं यदि व्युत्पत्तौ सर्वशब्दानां कार्यान्वयपरत्वमेव अधिगतं भवेत्। 'पुत्रस्ते जातः' इत्यादिषु सिद्धार्थपरत्वेनापि व्युत्पत्तेः। यथा हि 'गामानय' इति शब्दश्रवणसमनन्तरं विशिष्टार्थविषयव्यवहारदर्शनात् शब्दजनितविशिष्टार्थविषयकार्यावगमानुमानं, तथा पुत्रजन्मप्रतिपादकवाक्यश्रवणानन्तरं पितृगतमुखप्रसादरोमहर्षादिदर्शनेन प्रमाणान्तरावगततत्पुमपत्यजन्मनो व्युत्पद्यमानस्य शब्दजनितहर्षहेतुसिद्धरूपपुत्रजन्मावगमानुमानमपि संभवतीति क्व कार्यान्वयः? एवं सर्वशब्दानां व्युत्पत्तिरिति। **तदयुक्तं,** विकल्पासहत्वात्। किं सर्वथा शब्दव्यवहाराव्युत्पन्नस्य इयं सिद्धार्थव्युत्पत्तिः, अर्धव्युत्पन्नस्य वा? तत्र अव्युत्पन्नस्य हर्षहेतूनामानन्त्यात् विशेषानवगतिरेव। यथा हि तत्र हर्षहेतुतया पुत्रजन्म संभावितं, तथा सुभगागर्भविमोक-

मुखप्रसवपशुमत्स्यजन्मादीनां अनेकेषां उपन्यत्वान्न शब्दस्य पुत्रजन्मप्रतिपादनावधारणे प्रमाणमस्ति । नापि अर्थव्युत्पन्नस्य, पूर्वसिद्धव्युत्पत्त्यनुसारेण अव्युत्पन्नशब्दस्यापि कार्यपरत्वस्यैवावगमात् । कार्यपरत्वासंभवे च लक्षणया सिद्धार्थान्वयपरत्वस्य उचितत्वात् । तेन व्युत्पत्त्यनुसारेण सर्वशब्दानामेव सिद्धे कार्यान्वयपरत्वे, अर्थवादानामपि कार्याकाङ्क्षायां स्वतन्त्रकार्याभावात् समभिव्याहृतविध्युद्देशैकवाक्यतया कार्यपरत्वं वाच्यम् । न च तद्युज्यते, पूर्वोक्तदूषणग्रासात् । तस्मादर्थवादैकवाक्यतावशात् अप्रतिपादकत्वात् सिद्धमप्रामाण्यं चोदनायाः । तेन प्रथमपादसिद्धमपि चोदनायाः प्रामाण्यं अर्थवादैकवाक्यतावशेन अप्रतिपादकतया पुनराक्षिप्य समाधीयते इति भवति संगतिरिति । ( **प्रभाकरमतेन सिद्धान्तः** ) अत्रोच्यते । सर्वशब्दानां तावत् व्युत्पत्तिसिद्धं कार्यपरत्वं स्वाभाविकमवगतम् । तच्च क्व चिदनाप्तवाक्ये दोषवशात् तिरोधीयेतापि । न चेह नित्यनिर्दोषवाक्ये तथा संभवति । अतो येन प्रकारेण अस्य कार्यपरता संभवति, तदनुसंधेयम् । तस्य च यद्यपि करणेतिकर्तव्यताविषयनियोज्यरूपार्थप्रतिपादनेन नान्वयोऽस्ति, तथापि प्राशस्त्यप्रतिपादनेन भविष्यति । प्राशस्त्यस्य च क्रमवद्विधेयोपलक्षणतया कार्यविशेषप्रतीत्युपयोगसंभवात् । **ननु** एककर्तृकानेकपदार्थानुष्ठानस्य क्रमविशेषमन्तरेण असंभवात्, क्रमस्य प्रयोगोपलक्षणत्वेन अन्वयस्य आकाङ्क्षितत्वात् युक्तस्तथा अन्वयः । प्राशस्त्यं तु फलसाधनताऽऽदिरूपं विधित एव सिद्धं, न क्रमवदाकाङ्क्षितमिति कथं तदन्वयः ? **मैवम्** । एकवाक्यताबलेन रक्तपटवत् आकाङ्क्षोत्थापनेनैव अन्वयोपपत्तेः । न च वाच्यं रक्तस्य अनन्यलभ्यस्य भवतु आकाङ्क्षोत्थापनेन पटविशेषकत्वादन्वयः, प्राशस्त्यस्य तु विधिबोध्यत्वेन अनधिकत्वात् नाकाङ्क्षेति । यतो नाधिकार्थत्वेऽपि 'एकं ब्राह्मणं भोजयेत्' इत्यादिषु ब्राह्मणपदस्थद्वितीयाविभक्त्यभिधेयैकत्वाभिधायिनामपि एकादिपदानां अनुवादरूपेणापि एकवाक्यताबलेन अन्वयोपलब्धिः । तेन एतदधिकरणव्युत्पाद्यमेतदेव यत् स्वरसतो विध्यनाकाङ्क्षितेऽपि सर्वथा प्रवृत्त्यनुपयोगिनि अन्यलभ्येऽप्यर्थे एकवाक्यताबलेन आकाङ्क्षोत्थापनेनापि शब्दस्यान्वयबोधनसामर्थ्यं इति । तच्च प्राशस्त्यं स्वयमागं अर्थवादपदानि प्रत्येकं वा लक्षयन्ति । सर्वशब्दानां कार्यान्वितस्वार्थाभिधायकत्वे तेषां स्वतोऽनभिधायकतया न्यायसंपादनया च प्रथममवगतप्राशस्त्यलक्षणासंभवादिति । तेन सार्थवादकस्यैव विध्युद्देशस्य कार्यपरतया सिद्धं प्रामाण्यमिति । ( **प्रभाकरमतखण्डनम्** ) तदेतौ पूर्वपक्षसिद्धान्तौ एवानुपपन्नौ । तथाहि कार्यपरत्वमेव सर्वशब्दानामिति यदुपवर्णितं, तत्तावदसंबद्धम् । यतो, यथाहि स्वसंताने स्तनपानादौ विशिष्टकार्यावगमस्य प्रवृत्तिहेतुत्वमवगतं, तथा सिद्धान्वयरूपस्यापि जननीगात्रसंपर्कादेर्हर्षहेतुत्वं अवगतमेव । तेन **यथा** 'गामानय' इत्यादिशब्दश्रवणानन्तरं प्रयोज्यवृद्धस्य विशिष्टव्यवहारदर्शनेन विशिष्टकार्यावगमं उन्नीय विशिष्टकार्यावगमपरत्वं विधिशब्दसमभिव्याहृतशब्दानां अध्यवसीयते, **तथा** अतिदूरस्थपुत्रागमने सति 'अयं ते पुत्रः समायातः' इति शब्दश्रवणानन्तरं मुखप्रसादादिदर्शनेन पितृगतं सिद्धं हर्षहेतुं उन्नीय सिद्धार्थान्वयावगमपरत्वमपि एवंविधशब्दानां तद्भावभावितया प्रतीयते एव । **अथ** 'मालवे ते राज्यं भविष्यति' इति ज्योतिर्विदाख्याते भविष्यद्राज्यावगमस्यापि हर्षहेतोर्दर्शनान्न सिद्धार्थान्वयावगमस्य सर्वत्र हर्षहेतुत्वम् । **एवं तर्हि** भवताऽपि एवंविधवाक्यश्रवणानन्तरं मालवादिगमनप्रवृत्तिसंदर्शनेन व्यभिचारात्, कथं सर्वत्र कार्यान्वयपरत्वम् ? **अथास्य** कार्यानभिधायकत्वेऽपि कार्यपदाध्याहारेण वा, स्वबुद्धिप्रभवकार्याध्यवसायेन वा प्रवर्तनं, **एवमत्रापि** स्वगतमालवराज्ययोग्यताप्रतिपादकशब्दाध्याहारेण वा, स्वबुद्धिप्रभवराज्ययोग्यताऽध्यवसायेन वा सिद्धान्वयावगमस्यैव हर्षहेतुत्वोपपत्तिः । तेन हर्षहेतूनां आनन्त्येऽपि सिद्धार्थान्वयावगमस्तावन्न व्यभिचरति । विशेषावधारणमपि यथा त्वत्पक्षे विशिष्टार्थविषयचेष्टादर्शनात् संपद्यते, तथा ममापि विशिष्टभूतार्थान्वयदर्शनानन्तरं शब्दप्रयोगात् सेत्स्यति । **अथ** प्रतीतमपि हर्षहेतुभूतं पुत्रागमनं पुत्रगतहर्षहेतुगुणोत्कर्षाद्यभिधानशङ्कया तद्वाक्यान्न निश्चीयते, **तदा** तवापि 'गामानय' इत्यादौ गोदर्शनानन्तरं गोगतगुणोत्कर्षादिकार्यप्रतिपादनसंभावनया आनुषङ्गिकं

गवानयनं मन्यमानो नानयनकार्यप्रतिपादनं निश्चिनुयात् । आवापोद्धारभेदेन च तत्तत्पदार्थावगमः अस्माकमपि समान एव । तेन आद्यव्युत्पत्तावेव कार्यान्वयस्येव सिद्धान्वयस्यापि दर्शनात् आकाङ्क्षायोग्यतासंनिधिमात्रयुक्तपदार्थान्वयप्रतिपादने एव सर्वशब्दानां सामर्थ्यमिति निश्चीयते । तेन यदुक्तं शालिकेन 'यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते । तेनान्वितः पदेनार्थः स्वकीयं प्रतिपाद्यते ॥' इति । ( वाक्यार्थमातृका पृ. ५. ) । त्वन्मतेऽपि एतदेव साधु, न पुनः सर्वशब्दानां कार्यान्वयपरत्वमिति । किंच भवतु तावत् वृद्धव्यवहारेण विधिशब्दसमभिव्याहृतपदानां कार्यान्वितार्थप्रतिपादने एव व्युत्पत्तिः, तथापि 'गौर्गच्छति' इत्यादिषु सिद्धार्थान्वयावगतिः कथं लाक्षणिकी ? अवगतमुख्यार्थानुपपत्त्या हि लक्षणा भवति । न चात्र कार्यान्वयरूपो मुख्योऽर्थः प्रतीयते, कार्याभिधायकशब्दाभावात् । न च अभिधायकशब्दाभावेऽपि औचित्योपस्थितस्य कार्यान्वयस्य गच्छतीति सिद्धार्थाख्यातपदे सति असंभवात् योग्यसिद्धान्वयस्यैव लाक्षणिकत्वमिति वाच्यम् । तथा सति समीहितफलार्थिनियोज्यान्वयस्यैव सर्वत्रौचित्यप्राप्तत्वात् नित्याधिकारे तदसंभवेन नियोज्यमात्रान्वयस्यापि लाक्षणिकत्वप्रसङ्गात् । तेन सिद्धार्थान्वयपरत्वमपि शाब्दस्य अवश्याङ्गीकरणीयम् । अतः सर्वशब्दानां कार्यान्वयप्रतिपादनपरत्वात् अर्थवादानां विध्युद्देशैकवाक्यतया पूर्वसिद्धान्तपक्षयोरप्रामाण्यं प्रामाण्यं चेत्युभयमप्यनुपपन्नमेव ।

किंच भवतु सर्वशब्दानां कार्यान्वयपरत्वं, तथापि अर्थवादानां विध्युद्देशैकवाक्यतया पूर्वपक्षो नोपपद्यते । यतो यथा हि 'गामानय' इत्यत्र व्यवहारसंदर्शनेन कार्यपरत्वमवगतं, तथा 'अङ्गुल्यग्रे करियूथं निवासयेत्' इत्यत्र विधिशब्दयोगेऽपि व्यवहारादर्शनान्न कार्यपरत्वमवगतम् । तेन व्युत्पत्तावेव एतत् समधिगतं, यत् कार्यान्वययोग्यानामेव कार्यपरत्वं न तु अयोग्यानामिति । न च अर्थवादानां केनापि प्रकारेण कार्यान्वययोग्यता समस्ति, उत्पत्तिशक्तिहेतुत्वप्रकारयोरसंभवात् । तेन कार्यपरत्वासंभवात् भवतु अर्थवादानामेव अङ्गुल्यग्रादिवाक्यवत् अप्रामाण्यम् । यत्तु तदेकवाक्यतामारोप्य कृत्स्नवेदस्य अप्रामाण्यं, तदतीव हास्यास्पदं 'यथा मशकदोषेण दाहो मोहाद् गृहस्य च । तथाऽर्थवादवैयर्थ्यात् कृत्स्नवेदाप्रमाणता ॥' अतो विध्युद्देशैकवाक्यतया पूर्वपक्षात् आक्षेपोऽयं मन्दाक्षव्यवहारिण एव शोभते इति । तथा प्राशस्त्यप्रतिपादनद्वारेण एकवाक्यतया सिद्धान्तोऽपि अनुपपन्न एव । त्वन्मते विध्यवबोधितत्वेन प्राशस्त्यस्य अनतिरिक्ततया अनाकाङ्क्षितत्वात् । न च रक्तपटन्यायेन आकाङ्क्षोत्थापनेन अन्वयः, अनतिरिक्तार्थस्य आकाङ्क्षोत्थापनासंभवात् । नहि उच्चरिते रक्तपदे पुनरुच्चरितं रोहितपदं आकाङ्क्षामुत्थापयति । 'एकं ब्राह्मणं भोजयेत्' इत्यादिषु तु लोके समुदायपरस्यापि एकवचनप्रयोगस्य 'भक्तं भुङ्क्ष्व' इत्येवमादिषु दृष्टत्वात् संदेहव्युदासप्रयोजनेन भवत्येकपदस्य आकाङ्क्षोत्थापकत्वम् । न त्विह तथा किं चित्प्रयोजनमस्तीति वैषम्यम् । इत्यलमतिविस्तरेण । अतोऽस्य विचारस्य असङ्गतत्वात् यथावार्तिकमन्यथैव सर्वं वर्णनीयमिति ।

अत्र हि चोदनासूत्रे कृत्स्नवेदप्रामाण्यमेव प्रतिज्ञातम् । सर्वत्र पौर्वापर्यप्रतिसंधानेन हि शब्दार्थव्यवस्थितिर्भवति । अत्र च 'अथातो धर्मजिज्ञासा' इति कृत्स्नवेदाध्ययनस्यैव धर्मजिज्ञासाहेतुत्वं प्रथममुपवर्णितम् । तच्च तदैव संभवति यदि कृत्स्न एव वेदो धर्मे प्रमाणमित्यभिमतम् । तथा पश्चादपि औत्पत्तिकसूत्राभिधेयस्य 'अनपेक्षत्वात्' इति हेतोः पदपदार्थसंबन्धसंहतिनित्यताव्युत्पादनस्य च कृत्स्नवेदप्रामाण्योपपत्तित्वात्, उपरिष्टादपि करिष्यमाणानेकविचारस्य वेदमात्रविषयत्वात् । तेन कृत्स्नवेदप्रामाण्यप्रतिज्ञानमेवैतत् । वेदपदे तु प्रयोक्तव्ये यत् चोदनापदं प्रयुक्तं, तत् प्रामाण्यशक्तिप्रदर्शनार्थम् । अतः कृत्स्न एव वेदश्चोदनात्वेन रूपेण धर्मे प्रमाणमिति सूत्रार्थः ।

तत्र प्रथमे पादे सकलेन प्रामाण्यप्रतिपादनप्रबन्धेन यद्यपि अर्थवादानामपि प्रामाण्यं प्रतिपादितमेव, तथापि चोदनात्वरूपानभिव्यक्तेः पुनराक्षिप्य चोदनाऽन्तर्गतिसमर्थनार्थोपयोगप्रतिपादनेन समाधीयते इति सङ्गतिरिति ।

अत्रायं पूर्वपक्षिणोऽभिसंधिः । ' तद्भूतानां क्रियाऽर्थेन समाम्नायः ' ( १।१।२५ ) इत्युपसंहारात् चोदनास्वेव चेत् प्रामाण्यं क्रियाऽर्थतया प्रतिपादितं, तदा अर्थवादानां सिद्धार्थानां साध्यसाधनेतिकर्तव्यतानां अन्यतमरूपाप्रतिपादनान्न क्रियाऽर्थत्वं संभवति । न च क्रियाऽनङ्गत्वेऽपि विधेयस्तुतिद्वारेण प्रवृत्त्युत्साहजनकतया क्रियाविषयविध्यङ्गतया क्रियाऽर्थत्वं, अर्थवादतः स्तुत्यनवगमात् । नापि लक्षणया स्तुत्यर्थत्वं, विनाऽपि लक्षणया भूतार्थानां पदानामन्वयस्योपपन्नत्वात् । नापि विध्येकवाक्यताऽनुपपत्त्या लक्षणा, भिन्नार्थतया विध्येकवाक्यताया एव असंभवात् । **अथैवमभिधीयते**, अपेक्षितदृष्टार्थावबोधार्थोऽयं अध्ययनविधिः कृत्स्नस्वाध्यायाध्ययनं विदधानः साक्षादर्थवादेषु अपेक्षितमर्थं अपश्यन् विधेयस्तुतिलक्षणया तेषां अपेक्षितार्थपरत्वमापादयतीति । **तदयुक्तम्** । विधिमन्तरेणापि उच्चरितात् शब्दादर्थावगतिदर्शनेन विधिवैफल्यात् । तदुक्तं ' अप्राप्ते शास्त्रमर्थवत् ' ६।२।१८ इति । न च अर्थावबोधार्थानां अध्ययनमुपायो नियम्यते, उपश्रुत्यवगतात् लिप्यक्षरानुमिताच्च स्वाध्यायात् अर्थधीदर्शनेन प्रमाणविरोधात् । अवघातादिविषयस्तु नियमः अपूर्वसाधनांशनिपाती, न दृष्टांशोपनिपातीति न तत्र प्रमाणविरोधः । न चेहापि अपूर्वसाधनांशलक्षणा, यतः अध्ययनस्य यागप्रकरणे अनाम्नानात् । न च पर्णताया इव अव्यभिचरितक्रतुसंबन्धजुहूद्वारेण अपूर्वार्थत्वं, स्वाध्यायस्य क्रतुसंबन्धव्यभिचारात् । अथ क्रतूपकारितामात्रेण क्रतौ नियम्येत, तदा द्रव्यार्जनस्यापि क्रतूपकारकतया क्रतौ नियमः प्रसज्येत ।

**किंच** यदि अयं क्रतौ नियमः, तदा अध्ययनावगतस्यैव स्वाध्यायार्थस्य अभ्युदयकरत्वम् । तथा च सति तदहःकृतोपनयनस्य माणवकस्य संध्योपासनाग्निहोमादिकर्मणां तत्प्रकाशकवेदस्य अनवगमे वैफल्यात् सर्वेषामेव अब्राह्मण्यमिति महाननर्थो नियमवादिनामापतितः । **किंच** अनुमितश्रुतेः अनधीतत्वेन तदर्थस्य अननुष्ठेयत्वात् स्मृतिकाराणां सकलस्मृतिप्रणयनवैयर्थ्यप्रसङ्गः । शूद्रस्य च अनधीतवेदत्वेन श्राद्धादिसकलवेदार्थानुष्ठानवैफल्यप्रसङ्गः । किंच अनधीतवेदत्रैवर्णिकस्य निषिद्धकर्मसेवाननुष्ठानेऽपि प्रत्यवायो न भवेत् । अधीतवेदवटुकस्यैव निवृत्तिकार्यस्यापि तथा सति प्रत्यवायपरिहारहेतुत्वात् । **अथ** ' अनधीयाना हि व्रात्या भवन्ति ' इति वचनात् पुरुषे नियमः, नार्थज्ञाने । तेनायमर्थः, द्विजातिः स्वाध्यायमधीत्यैव, न त्वनधीत्यैव अर्थं जानीयादिति । तत्र यद्यपि प्रत्यवायपरिहारेण प्रयोजनवान् अयमध्ययनविधिः, तथापि भावना भाव्याकाङ्क्षायां दृष्टत्वात् प्रयोजनवदर्थज्ञानमेव भाव्यं गृह्णाति । न चैवं शूद्रस्यापि अधिकारप्रसङ्गः, यतो लब्धविद्यत्रैवर्णिककल्पनेनैव निराकाङ्क्षाः कर्मश्रुतयो न शूद्रस्य विद्यासंबन्धं आक्षेप्तुमलम् । एवं च सति त्रैवर्णिकस्य उपायान्तरनिवृत्तेः अर्थात् अयमर्थज्ञाने नियमः, न तु तन्नियमार्थोऽयं विधिरिति । तथा सति प्रयोजनवदर्थज्ञानस्य अध्ययनभावनाभाव्यत्वात्, अर्थवादेषु च मुख्यार्थेषु तदसंभवात्, स्तुतिलक्षणाद्वारेणैव विध्युद्देशैकवाक्यतया प्रामाण्यमर्थवादानामिति । **तदयुक्तम्** । एवं सति अध्ययनविधेः प्रत्यवायपरिहारप्रयोजनेनैव चरितार्थस्य किं भावनाभाव्यस्वीकारेऽपि व्यापारोऽस्ति, न वा ? यद्यस्ति, तदा दृष्टे विधिवैफल्यात् न दृष्टमर्थज्ञानं भावनाभाव्यं संभवति । क्रतुसंबन्धितया च नियमविधेरनिष्टत्वात् । उक्तसकलदोषानतिक्रमेण च तस्य असंभवात् । अथ नास्ति, तदा निष्कृष्टभावनामात्रस्य लोकदृष्टभाव्याकाङ्क्षायां नान्तरीयकतया अर्थज्ञाने संबध्यमाने अर्थवादकृतमपि भूतार्थज्ञानं संबध्येत, न तु पुरुषसमीहितमर्थज्ञानं विधितात्पर्याभावात् । अतः अर्थवादानां मुख्यभूतार्थोपपन्नत्वान्न लक्षणयाऽपि स्तुतिपरत्वम् । तेन प्रत्यवायपरिहारप्रयोजनेन अर्थवतोऽध्ययनविधेः भावनाभाव्ये अर्थज्ञाने तात्पर्यविरहेऽपि प्रथमपादे विधेयक्रियाऽर्थत्वेन चोदनाप्रामाण्यप्रतिपादनात्, यस्मिन् स्वाध्यायैकदेशे विध्युद्देशरूपे प्रामाण्योचितं विधेयरूपक्रियाज्ञानं संभवति, तद् भवतु प्रमाणम् । यत्र पुनरर्थवादभागे भूतार्थान्वयज्ञानमात्रं, तत् विधेयरूपक्रियाऽर्थत्वाभावात् अप्रमाणमेव । एतेनैतदपि न शङ्कनीयं—किमर्थमर्थवादाध्ययनमिति । कृत्स्नस्वाध्यायाध्ययनस्यैव प्रत्यवायपरिहारप्रयोजनेन अर्थवत्त्वात् ।

एतदेव च अस्याधिकरणस्य पारमार्थिकं पूर्वपक्षरहस्यम्। तस्मात् आम्नायस्य वेदस्य विधेयरूपक्रियाऽर्थत्वात् पृथगवस्थितानामर्थवादानां आनर्थक्यं विधेयक्रियाऽनर्थत्वम्। तस्मादनित्यं अप्रमाणं उच्यते इति। एवं प्राप्ते अभिधीयते—

**विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः। ७॥**

अयमभिप्रायः— भवेदेतदेवं, यदि स्तुतिद्वारेण विधेयक्रियाऽर्थत्वं अर्थवादानां न स्यात्। विधिर्हि शब्दभावना। सा च अर्थभावनेव साध्यसाधनेतिकर्तव्यताऽऽकाङ्क्षिणी। तत्र पुरुषप्रवृत्तिरूपं भाव्यं, संबन्धबोधं च करणमासाद्य इतिकर्तव्यताऽऽकाङ्क्षायां लोकानुसारेण प्रवृत्त्युत्साहजनकं विषयप्राशस्त्यज्ञानमेव स्वीकुरुते। दृष्टं च लोके क्रयविक्रयादिव्यवहारे प्रवृत्त्युत्साहजनकं विषयप्राशस्त्यज्ञानमेव। यथा 'इयं गौः क्रेया अनष्टप्रजा बहुक्षीरा स्त्र्यपत्या' यथा वा 'अयं क्रेतव्यः पुरुषो न पुरुषमात्रं, किन्तु अयं मत्तो हस्ती' यथा वा प्रतिग्रहादिप्रवृत्तौ 'नायं ब्राह्मणमात्रं, किंतु वसिष्ठोऽयं' इत्यादिषु। तद्यथा लोके सदसदर्थप्रतिपादकस्य पदनिचयस्य लक्षणयाऽपि वृत्त्या प्राशस्त्यप्रतिपादनेन विध्येकवाक्यत्वं, तथा अत्रापि अर्थवादानां प्राशस्त्यलक्षणया शब्दभावनेतिकर्तव्यतांऽशपूरणेन विध्युद्देशैकवाक्यत्वेन भवति क्रियाऽर्थत्वम्। न च अर्थभावनारूपक्रियायां साध्यसाधनेतिकर्तव्यतानामेव परमन्वयः, अनेवंभूतस्य विधेः अनन्वयप्रसङ्गात्। विधेश्च सपरिकरस्यैव अन्वयात् प्रवेशादेव प्राशस्त्यान्वयः, न तु स्वातन्त्र्येणेति नानुपपन्नम्। **ननु** भवतु लोके पुरुषाभिप्रायवशेन अन्यार्थस्यापि शब्दस्य लक्षणया अन्यपरत्वम्। अपौरुषेये तु वेदे कथमर्थवादशब्दस्य लक्षणयाऽपि प्राशस्त्यपरत्वम्। **मैवम्**। भवेदेवं यदि वेदे पुरुषस्थानीयः अध्ययनविधिर्न स्यात्। स हि 'स्वाध्यायोऽध्येतव्यः' इति श्रूयमाणः अध्ययनभावनाभाव्यमाकाङ्क्षमाणः अध्ययनं धात्वर्थतया संनिहितमपि अपुरुषार्थभूतं भाव्यांशे निरस्य करणांशे निवेशयति। ततश्च अध्ययनेन पुरुषः समीहितं भावयेदिति स्थिते, दृष्टासंभवे च अदृष्टकल्पनाऽवसरात्, 'यच्छक्यते' इत्युपबन्धात्, लोकावगतशक्त्यनुसारेण अध्ययनस्य अक्षरग्रहणक्रमेण पुरुषाभिलषितार्थज्ञानहेतुत्वदर्शनात् तदेव भाव्यतया अनुमन्यते, न तु स्वर्गादिकमदृष्टम्। न च दृष्टे विध्यानर्थक्यात् नार्थज्ञानं विध्यवरुद्धभावनाभाव्यं, वेदस्य अध्ययनविधिमन्तरेण अर्थतात्पर्यावधारणासंभवात्। गुरूच्चारणाधीनं हि उच्चारणमध्ययनमित्युच्यते। उच्चारणस्य अर्थपरत्वे शब्दानामर्थपरत्वं संभवति, न तूच्चारणमात्रेण। **ननु** लोकव्युत्पत्तिसिद्धमेव शब्दानामौत्सर्गिकं अर्थपरत्वं क्व चित् पुरुषदोषादपोद्यते। वेदे तु अपौरुषेये दोषाभावात् उत्सर्गसिद्धं अनपोदितमस्त्येव, किं विधिना? **मैवम्**। द्विविधो हि शब्दानामर्थः केवलो विशिष्टश्च। तत्र औत्सर्गिकेऽपि केवलार्थपरत्वे विशिष्टार्थपरत्वं विशिष्टार्थप्रत्ययसमुद्देशतः समुच्चारणात् नियतसमभिव्याहारकल्पनात् नान्यतः सिध्यति। तथाहि, 'गौरश्वः पुरुषो हस्ती' इति परस्परासंबद्धार्थेष्वपि पदार्थेषु यदा विशिष्टार्थप्रतीतितात्पर्यकमुच्चारणमुन्नीयते, तदा जघन्यवृत्त्याश्रयणेनापि 'अयं गौः अश्वो वेगवान्' 'पुरुषोऽप्यनियतचेष्टः हस्ती महाबलः' इति विशिष्टार्थबोधो भवति। तथा अनेकार्थेष्वपि अक्षादिशब्देषु अर्थविशेषावधारणं न शब्दस्वभावकृतं, अनेकरूपवाक्यार्थावगमप्रसङ्गात्, किन्तु उच्चारणतात्पर्यकृतमेव। तथाहि, 'गौरित्ययमाह' इत्युच्चरिते न गोशब्देन अर्थप्रत्ययः, किन्तु उच्चारणस्य शब्दपरत्वात् शब्दप्रत्ययः एव परं भवति। तेन विशिष्टार्थज्ञानं न शब्दस्वभावकृतं, नापि उच्चारणस्वभावकृतं, किंतु विशिष्टार्थप्रत्ययतात्पर्यकात् उच्चारणभेदादेव। तच्च उच्चारणतात्पर्यं यथा लोके पुरुषाभिप्रायवशादुन्नीयते, तथा वेदे विशिष्टार्थज्ञानार्थोच्चारणविधिवशादेव परं प्रतीयते इति दृष्टार्थत्वेऽपि भवति अध्ययनविधिसाफल्यम्। **ननु** उच्चारणस्य अर्थबोधहेतुत्वे अवगते दृष्टार्थत्वादध्ययनविधेः अर्थपरत्वं, अध्ययनविधौ च अर्थपरे उच्चारणादर्थावगतिः इत्यन्योन्याश्रयम्। **मैवम्**। लोकावगतशक्त्यनुसारेण हि दृष्टार्थत्वमङ्गीक्रियते। लोकदृष्ट्या च उच्चारणस्य अक्षरादिग्रहणक्रमेण समभिव्याहृतपदार्थान्वयज्ञानमुत्पद्यते एव, किंतु

 आम्नायस्य क्रियाऽर्थत्वा

तात्पर्यावधारणप्रमाणाभावादवसीदति, अध्ययनविधेस्तु तात्पर्यावधारणे सति व्यवतिष्ठते । तेन अयत्नो लोकानुसारेण वाक्यावधारणार्थं, अध्ययनविधिस्तात्पर्यावधारणमिति नेतरेतराश्रयम् । न च वाच्यं 'चिरवृत्ते अध्ययने मीमांसादिपरिचयोत्तरकालमर्थज्ञानं भवति, नाध्ययनानन्तरम् । अतः कथं दृष्टत्वादर्थज्ञानार्थत्वं अध्ययनविधेरिति' यतः अक्षरादिग्रहणक्रमेण हि अध्ययनस्य अर्थज्ञानार्थत्वं, तेन च क्रमेणोत्तरकालमपि स्मृतिसमारूढस्यैव स्वाध्यायस्य अर्थावबोधहेतुत्वमविरुद्धम् । नहि लोकेऽपि शब्दश्रवणानन्तरमेव विशिष्टार्थावबोधः, किंतु स्मृतिस्थेष्वेव पदेषु न्यायसंभावनासंभावितान्वयेषु । तथेहापीति नानुपपन्नम् । **ननु** द्वितीयाविभक्तेः कृत्याच्च स्वाध्यायस्य अध्ययनसाध्यत्वमवगम्यते । तत् कथमर्थज्ञानस्यापि साध्यत्वम् । नहि एकस्मिन् वाक्ये साध्यद्वयसमावेशः संभवति, वाक्यभेदप्रसङ्गात् । **मैवम्** । भवेदेवं, यदि विधिमेयं उभयसाध्यत्वं भवेत् । अत्र च एवमर्थावबोधस्यैव साध्यत्वं दृष्टत्वात्, न तु स्वाध्यायस्यापि, तस्य अर्थावबोधसमुद्देशिसमुच्चारणविधेः प्रागनवधारितार्थतात्पर्यस्य कार्यान्तरे च श्रुत्यादिभिः अविनियुक्तस्य निष्प्रयोजनतया साध्यत्वायोगात् । विधिस्तु अवधृते अध्ययनस्यार्थपरत्वे स्वाध्यायस्य अर्थपरत्वे सिद्धे तद्व्यक्तिफलं समुच्चारणं 'यैस्तु द्रव्यं चिकीर्ष्यते' ( २।१।३।८ ) इति न्यायात्, वस्तुतः स्वाध्यायसंस्कारः एव भवति, इत्यर्थसिद्धमेव स्वाध्यायस्य संस्कार्यत्वरूपेण साध्यत्वं द्वितीयया कृत्येन च अनूद्यते । तेन विधिमेयं अस्य प्रधानकर्मत्वं, अर्थसिद्धं तु गुणकर्मत्वमित्यविरोधः । तदुक्तं बादर्यधिकरणे ( ३।१।३ ) 'इति सिद्धमर्थावबोधार्थमध्ययनं स्वाध्यायसंस्कारश्च' इति । न च वाच्यं "यथा प्रथमं अनवगतोपयोगस्याऽपि अग्नेः 'अग्नीनादधीत' इति संस्कारविधानं, तथा स्वाध्यायस्यापि प्रथमं अनवगतोपयोगस्य संस्कारविधिरेवायं भविष्यति । तदुपलब्धेः पश्चात् अवबोधोपयोगित्वं लिङ्गतो भविष्यतीति" । यतो न शब्दस्य स्वभावकृतमर्थपरत्वं, नाप्युच्चारणस्वभावकृतमिति प्रागेवोक्तम् । अस्य तूच्चारणविधेः उभयतात्पर्ये स्फुट एव वाक्यभेदः । आधानसंस्कृतस्य तु अग्नेः 'यदाहवनीये जुहोति' इति विध्यन्तरस्य विनियोजकस्य विद्यमानत्वात् अयं दोषः । न चेहापि तथा विध्यन्तरमस्तीति वैधर्म्यम् ।

एवं तावत् सर्वशब्दानामुच्चारणस्य विशिष्टार्थावबोधनतात्पर्यमन्तरेण न विशिष्टार्थज्ञानव्यवस्थेत्युक्तम् । वेदे तु अध्ययनविधिं विना उच्चारणनियमाभावात् उच्चारणविप्लवे सति फलशब्दस्य अङ्गसंबन्धितयाऽपि उच्चारणसंभवात् नाङ्गप्रधानव्यवस्था । एवं पाठक्रमेणापि अनुष्ठानक्रमः प्रयाजादीनां न स्यात् । तथा एकस्मिन्नपि वाक्ये 'यो होता सोऽध्वर्युः' ( तां. ब्रा. २५.४.४. ) इत्यादौ व्यतिक्रमेणापि योऽध्वर्युः स होतेत्युच्चारणसंभवान्न प्रथमावगतत्वेन होतृपदार्थस्वीकारात् अध्वर्युपदस्य कार्यलक्षणापरत्वम् । एवं विकृतौ ऐन्द्रपञ्चशरावे प्राकृतचतुर्मुष्टिनिर्वापे 'चतुरो मुष्टीन्निर्वपति' ( आप. श्रौ. १।१८।२. ) इत्यत्र प्रथमावगतसंख्याऽनुरोधेन मुष्टिबाधो न भवेत् । एवं सकलवेदार्थविप्लव एव आपद्येत । नियतोच्चारणविधौ तु अर्थपरे सति नैवमाद्युच्चारणविप्लवकृतः अन्यथाऽर्थावभानदोषः । तथा सति यथोच्चारितेष्वेव अर्थतत्परेषु यथासमभिव्याहृतेष्वेव न्यायसंपादनवशात् आकाङ्क्षाऽऽद्युपसंहारात् भवत्यपेक्षितार्थप्रत्ययः, नान्यथेति । **न च** अन्यथोच्चारितस्य अवेदत्वात् अनादिरेवायं उच्चारणनियमः पदोच्चारणनियमवदिति **वाच्यम्** । असति अध्ययनविधौ पुरुषेच्छातन्त्रत्वात्, अर्थाभिधानशक्तितन्त्रत्वाच्चोच्चारणस्य, तयोश्च उच्चावचोच्चारणेनापि संभवात् उच्चारणनियमानुपपत्तेः । पदे तु अन्यथोच्चारितस्य अप्रतिपादकत्वाद्युक्तो नियमः । वेदशब्दोऽपि तदा नित्यानुमेयवेदवादिन इव अभिधानतन्त्रो वेदयतीति वेदः, न तु स्वाध्यायशब्दवत् अध्ययनपरतन्त्रः । वेदनं च यथातथोच्चारितादपि भवतीति नोच्चारणनियमहेतुः संभवति । अर्थज्ञानपरे पुनरध्ययनविधौ संभवति, गुरूच्चारणाधीनस्यैव उच्चारणस्य अध्ययनपदार्थत्वात् । अतः सर्वथा मानान्तराप्राप्तमेवेदमध्ययनस्य अर्थावबोधकत्वं विधिना ज्ञाप्यते इति । एवं च सति

अध्ययनविधिना कृत्स्नस्यैव वेदस्य समीहितार्थावबोधपरत्वे सुस्थिते, अर्थवादानां च मुख्यार्थत्वे तदसंभवात् लक्षणाऽऽश्रयणम्। **ननु** अक्षरादिग्रहणक्रमेण अपेक्षितदृष्टोपयोगमनुसंधाय अध्ययनविधेः अपेक्षितार्थावबोधार्थत्वम्। अर्थवादभागे च अक्षरग्रहणक्रमेणापि न अपेक्षितार्थावबोधः संभवति । अध्ययनविधिवशादपेक्षितार्थावबोधे सति इतरेतराश्रयत्वम्। तेन दृष्टार्थावबोधस्य अव्यापित्वान्न कृत्स्नस्वाध्यायाध्ययनविधेः अपेक्षितार्थावबोधार्थत्वं प्रमाणवदिति । **मैवम्**। विध्युद्देशस्येव अर्थवादभागस्यापि लोकानुसारेण अग्रत एव विधेयप्राशस्त्यलक्षणाऽऽश्रयणात् अपेक्षितार्थावबोधनपरत्वस्य न्यायसंपादनोपस्थितत्वात्। अतः सिद्धं प्राशस्त्यप्रतिपादनद्वारेण विध्युद्देशैकवाक्यतया प्रामाण्यमर्थवादानामिति। तच्च प्राशस्त्यं लक्ष्यमाणं न प्रत्येकं पदैर्लक्ष्यते। एकैकस्मिन् पदे प्राशस्त्यप्रत्ययानुत्पादात्। नहि वायुपदमात्रे प्राशस्त्यावगतिः। किं तर्हि ? 'वायुर्वै क्षेपिष्ठा देवता' इति समस्तेषु क्षिप्रफलदातृत्वलक्षणप्राशस्त्यावगतिः। **प्रयोजनं,** यद्यर्थवादानामप्रामाण्यं, तदा 'अक्ताः शर्कराः' इत्यत्र विशेषोपनायकप्रमाणाभावात् यत्किञ्चिदञ्जनसाधनद्रव्योपादानम्। अर्थवादप्रामाण्ये तु 'तेजो वै घृतं' इत्यर्थवादे घृतस्तुतिदर्शनात् घृतोपादानमेव। **सूत्रं तु** विधिना विध्युद्देशेन एकवाक्यत्वात् स्तुत्यर्थेन अर्थवादाः प्रमाणं स्युरिति। **तौता.**

**आम्नायस्य क्रियाऽर्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ।१।२।१।१ ॥**

अर्थवादरूपाणां आम्नायवचनानां अप्रामाण्यं इति पूर्वपक्षप्रतिपादनार्थं सूत्रम्। आम्नायस्य सर्वस्य वेदस्य क्रियाऽर्थत्वात् इष्टानिष्टसाधनविषयकप्रवृत्तिनिवृत्त्यन्यतररूपक्रियाप्रतिपादनार्थत्वात् अतदर्थानां तादृशक्रियाप्रतिपादनशून्यानां आम्नायवचनानां आनर्थक्यं अर्थशून्यत्वं अर्थप्रमितिजनकत्वाभावः अप्रामाण्यं इति यावत्। तस्मात् केषां चिदाम्नायवचनानां अप्रामाण्यात् सर्वेषामेव वचनानां अनित्यं प्रामाण्यं अप्रामाण्यमित्यर्थः, उच्यते कैश्चित् 'विधिवचनानि न प्रमाणं, वैदिकत्वात् अर्थवादवत्' इति।

**शास्त्रदृष्टविरोधाच्च । २ ॥**

शास्त्रं च दृष्टं च शास्त्रदृष्टे, शास्त्रेण दृष्टं शास्त्रदृष्टं, शास्त्रदृष्टे च शास्त्रदृष्टं च शास्त्रदृष्टानि, तैर्विरोधात् इति विग्रहः। तत्र शास्त्रविरोधस्तावत् 'स्तेनं मनः' 'अनृतवादिनी वाक्' इति। अत्र यदि विधिः स्यात्, तदा स्तेयानृतवदननिषेधशास्त्रेण विरोधः स्यात्। अथ दृष्टविरोधः, 'तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः' 'तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः' इति वाक्यद्वयं 'अस्माल्लोकादुत्क्रम्य अग्निरादित्यं गतः, रात्रौ आदित्यस्तं' इत्येतद्वाक्यार्थोपपादनार्थं पठितं, तदुभयमपि दृष्टेन प्रत्यक्षेण विरुद्धम्। ददृशे ददर्श लोकः, अर्चिर्दिवा न दृश्यते धूमस्तु रात्रौ न दृश्यते इति वचनार्थः। 'न चैतद् विद्मो वयं ब्राह्मणाः स्मः, अब्राह्मणा वा' इत्यपरो दृष्टविरोधः। अथ शास्त्रदृष्टेन विरोधः 'को हि तद्वेद, यद्यमुष्मिन् लोके (परलोके) अस्ति वा न वेति' इति। तथा च कानि चिदर्थवादवाक्यानि शास्त्रविरुद्धानि, कानि चित् दृष्टविरुद्धानि, कानि चिच्च शास्त्रेण यत् दृष्टं तेन विरुद्धानि इति अप्रमाणानि।

**तथा फलाभावात् । ३ ॥**

गर्गत्रिरात्राख्ययागप्रतिपादके ब्राह्मणे 'शोभतेऽस्य मुखं य एवं वेद' इति श्रुतम्। 'आ अस्य प्रजायां वाजी (अन्नवान्) जायते य एवं वेद' इति च अन्यत्र। अत्र वाक्यद्वये यत् फलमुक्तं तत्तथा लोके न दृश्यते। तस्मात् उक्तस्य फलस्य अभावात् फलदर्शनाभावात् तथा पूर्वसूत्रोक्तवत् अप्रामाण्यम्। इति पूर्वपक्षे हेत्वन्तरम्।

**अन्यानर्थक्यात् । ४ ॥**

'पशुबन्धयाजी सर्वान् लोकानभि जयति' इत्ययं यदि फलविधिः, तदा अन्येषां ज्योतिष्टोमादीनां आनर्थक्यं प्रसज्येत। नहि अल्पायासेन पशुबन्धे कर्तुं शक्ये बह्वायाससाध्ये ज्योतिष्टोमादौ कस्य चित् प्रवृत्तिर्भवेत्। ततोऽपि अर्थवादा न प्रमाणम्।

**अभागिप्रतिषेधाच्च । ५ ॥**

पूर्वपक्षे हेत्वन्तरम्। भजते प्राप्नोति इति भागि प्राप्तम्। न भागि अभागि अप्राप्तम्। तस्य प्रतिषेधात्।

कथं चित् प्राप्तस्य प्रतिषेधो भवति, नाप्राप्तस्य । अप्राप्तप्रतिषेधश्च अनर्थकः । ‘ न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि ’ इति वेदवचनं अन्तरिक्षे दिवि च अग्निचयनं प्रतिषेधति । तच्च असंभवादप्राप्तमेव । चकारः पूर्वहेतुसमुच्चयार्थः । अभागिप्रतिषेधाच्च हेतोः वचनानर्थक्यम् ।

**अनित्यसंयोगात् । ६ ॥**

अनित्यैः कैश्चित् पुरुषैः भरतभरद्वाजादिभिः संयोगः संबन्धः अर्थवादेषु दृश्यते । उपाख्यानादिषु पुरुषा वर्णिताः । तस्मात् , अर्थवादा भरतादिभ्यः अर्वाचीनाः धर्मे न प्रमाणम् । अत्र संयोगशब्देन प्रतिपाद्यप्रतिपादकभावः संबन्धो ग्राह्यः ।

**विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः । ७ ॥**

अर्थवादानां धर्मे न प्रामाण्यं इति पूर्वपक्षं षड्भिः सूत्रैः प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । विधीनां इति अवयवषष्ठी । अर्थवादाः विध्यवयवाः स्युः । कथं ? स्तुत्यर्थेन विधिना एकवाक्यत्वात् । स्तुतिं प्ररोचनां प्राशस्त्यवर्णनां अर्थयते अपेक्षते इति स्तुत्यर्थो विधिः । तेन स्तुत्यर्थेन विधिना तेन संभूय एकवाक्यत्वात् विशिष्टैकार्थप्रतिपत्तिजनकत्वात् इत्यर्थः । तथा च अर्थवादाः विधेयप्राशस्त्यबोधनद्वारा विधिशेषत्वात् धर्मे प्रमाणम् ।

**तुल्यं च सांप्रदायिकम् । ८ ॥**

अर्थवादा धर्मे प्रमाणम् । चशब्दो हेत्वर्थः । यस्मात् अर्थवादानां विधिवाक्यानां च सांप्रदायिकं धर्मजातं तुल्यम् । संप्रदायः प्रयोजनं यस्य धर्मजातस्य तत् सांप्रदायिकम् । ‘ प्रयोजनं ’ ( पा० ५।१।१०९ ) ‘ तदस्य ’ इत्यनुवर्तते । अनेन ठञ् प्रत्ययः । प्रयोजनं फलं कारणं च । संप्रदायः मन्वादिस्मर्तृपारंपर्यं इति कुतूहलम् । गुरुपरंपरा इति सुबोधिनी । स्वाध्यायानध्यायौ , गुरुमुखोच्चारणानूच्चारणेन ग्रहणं , शिष्योपाध्यायसंबन्धः, इत्येवमादयो धर्माः सांप्रदायिकम् । तस्य तुल्यत्वात् विधिवचनानीव अर्थवादवचनान्यपि प्रमाणम् ।

**अप्राप्ता चानुपपत्तिः, प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत । ९ ॥**

पूर्वपक्षकृतशङ्कानिरासार्थं सिद्धान्तसूत्रम् । शास्त्रदृष्टविरोधात् ( १।२।१।२ ) इत्यादिना या अनुपपत्तिः उक्ता, सा अस्मत्पक्षे अप्राप्ता प्राप्ता न भवति । नानुपपत्तिरित्यर्थः । प्रयोगे तु स्तेयादीनां उच्यमाने, विरोधः स्यात् । शब्दार्थस्तु अर्थवादशब्दानां विधायकानुग्रहार्थानां अर्थस्तु अप्रयोगभूतः प्रयोगं अप्राप्तः न प्रयोगनिविष्टः । तस्मात् उपपद्येत ‘ स्तेनं मनः ’ ‘ अनृतवादिनी वाक् ’ इत्यादि । अत्र **वार्तिकं**–‘शास्त्रदृष्टविरोधिका या अत्र अनुपपत्तिः विधिकल्पनायामुक्ता तां अस्मत्पक्षे अप्राप्तां मन्यामहे । अथवा इदं स्तुतिव्याख्यानं तां अनुपपत्तिं अप्राप्तं ( मन्यामहे ) इति व्याख्येयं, येषां (अप्राप्तं) इति ह्रस्वः पाठः । ... त्रयोऽत्र पाठाः । अप्राप्तां चानुपपत्तिं इति, अत्र मन्यामहे इति वाक्यशेषः । अप्राप्तं चानुपपत्तिं इत्यपरः, तत्र असद्–व्याख्यानं इत्यध्याहारः । अप्राप्ता चानुपपत्तिः इत्यपरः, तत्र अस्मत्पक्षे विज्ञेया इति ’ इति । अत्र **सुधा**–‘ प्रयुज्यते अनेन इति व्युत्पत्त्या प्रयोजनवचनः प्रयोगशब्दः । अविवक्षितश्च अर्थः प्रयोजनं न भवति इति अप्रयोगशब्देन अविवक्षितत्वमुक्तम् । ... अथवा प्रयोगशब्दः अनुष्ठानवचन एव । प्राप्तशब्दार्थे च भूतशब्दः ’ इति ।

**गुणवादस्तु । १० ॥**

**ननु** ‘ वेतसशाखया अवकाभिश्चाग्निं विकर्षति ’ इति वेतसशाखा अवकाश्च अग्निचयने चितिसमुदायोपरि आकर्षणार्थं विधाय ‘ आपो वै शान्ताः ’ इति आपः स्तुताः । तत्र वेतसा नाम नदीतीरस्थजले उत्पद्यमानानि काण्डजालानि ( परळ इति भाषा ), अवकाश्च शैवालानि । तत्र विधेरर्थवादस्य च न कश्चित् संबन्धः । तस्मात् अर्थवादा अप्रमाणम् । **अत्रोच्यते** । गुणवादस्तु अयम् । अवका वेतसाश्च अप्सु जायन्ते । अप्सु स्तुतासु च तज्जन्या अवकादयः स्तुता भवन्ति इति नासंबद्धता । कस्मिंश्चिद्देशे स्तुते तद्देशस्था जना आत्मानं स्तुतं मन्यन्ते , तथैतत् द्रष्टव्यम् । तस्मान्नायं दोषः । तुशब्दः शङ्कानिराससूचकः ।

**रूपात् प्रायात्** । ११ ॥

'स्तेनं मनः' 'अनृतवादिनी वाक्' इत्यत्र दृष्टविरोधः पूर्वपक्षिणा द्वितीयसूत्रे उक्तः, तन्निरासार्थं सिद्धान्तसूत्रम् । 'हिरण्यं हस्ते भवति, अथ ( अंशुग्रहं ) गृह्णाति' इत्यस्य विधेः शेषोऽयम् । यथा स्तेनाः प्रच्छन्नरूपाः एवं मनः इति रूपात् गुणवादः । अनृतवादिनी वाक् इति प्रायात् गुणवादः । वाक् हि प्रायः अनृतं वदति इति अनृतवादिनी इत्युक्तम् । मनसा संकल्प्य वाचा मन्त्रमुच्चार्य कर्म क्रियते । ते च वाङ्मनसे दोषयुक्ते, हिरण्यं तु निर्दोषं, तस्मात् अंशुग्रहग्रहणकाले हस्ते हिरण्यं धार्यम् । इति विध्यर्थवादयोः संबन्धः । गुणवाद इति पदमत्र सूत्रेऽनुवर्तते, तच्चावर्तनीयम् । रूपात् मनोविषये, प्रायाच्च वाग्विषये गुणवादः । तेन हिरण्यगुणस्याभिधानं इत्येकोऽर्थः । स्तेनं अनृतवादिनी इति च गुणवादः गौणः शब्दः इत्यपरोऽर्थः ।

**दूरभूयस्त्वात्** । १२ ॥

पूर्वपक्षशङ्काया द्वितीयसूत्रोक्तायाः निरासार्थं सिद्धान्तसूत्रम् । 'तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः' इति 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इत्यग्निहोत्रहोममन्त्रस्य प्रातस्तनस्य विधेः स्तावकोऽयमर्थवादः । अग्निः प्रातरादित्यं गच्छति इति सूर्यमन्त्रः एव वक्तव्यः इति स्तुतिः । दूरत्वात्तु अग्नेः दिवा अदृश्यत्वं इति गौणः प्रयोगः । एवं 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रस्य सायंकालिकस्य विधेः स्तुत्यर्थं 'तस्मादर्चिरेव नक्तं ददृशे न धूमः' इति वाक्यम् । रात्रौ आदित्यः अग्निमनुप्रविशति इति तेजसो भूयस्त्वात् रात्रौ अग्निर्दृश्यते न धूमः इति गौणता प्रयोगस्य । एवं सति न दृष्टविरोधः । दूरं च भूयश्च दूरभूयसी तयोर्भावो दूरभूयस्त्वम् । द्वंद्वान्ते श्रूयमाणस्य भावप्रत्ययस्य प्रत्येकमन्वयात् दूरत्वात् भूयस्त्वात् इति पृथक् हेतुत्वसिद्धिः ।

**स्त्र्यपराधात्, कर्तुश्च पुत्रदर्शनात्** । १३ ॥

पूर्वपक्षोक्तशङ्कानिरासार्थं सिद्धान्तसूत्रम् । "न चैतद् विद्मो वयं ब्राह्मणा अब्राह्मणा वा इति 'देवाः पितरः पितरो देवा योऽहमस्मि स सन् यजे, यस्यास्मि, न तमन्तरेमि' इति प्रवरे प्रव्रियमाणे जपति" इत्यत्र श्रूयते । तच्च ब्राह्मण्यस्य दुर्ज्ञानत्वे गौणम् । कुतः ? स्त्र्यपराधात् स्त्रियाः मातुः अपराधात् मातुर्व्यभिचारसंभवात् । ब्राह्मणमातापितृकत्वमेव ब्राह्मण्यम् । तत्तु क्षेत्रिणमादाय सर्वस्यापि सुविज्ञानं इति चेत्, तत्राह कर्तुश्च पुत्रदर्शनात् इति । 'उत्पादयितुः पुत्र इति ब्राह्मणं' इत्युपक्रम्य 'रेतोधाः पुत्रं नयति' इत्यादिना बीजावापस्य कर्तुः पुत्रः, न तु क्षेत्रिणः इत्यर्थस्य आपस्तम्बादिभिर्निर्धारणात् । तदेवंविधमपि ब्राह्मण्यं 'देवाः पितरः' इत्यादिमन्त्रजपेन अब्राह्मणस्यापि संपद्यते इति स्तुतिरुपपद्यते ।

**आकालिकेप्सा** । १४ ॥

'शास्त्रदृष्टविरोधाच्च' इति द्वितीयसूत्रे शास्त्रदृष्टेन विरोधः इति यः अन्ते दोष उक्तः, तन्निरासार्थं सूत्रम् । आकाले आवृते काले ईषत्काले वा भवं, अथवा समानकाले भवं आकालिकं क्षणभङ्गुरं ऐहिकं सुखमित्यर्थः । तस्य ईप्सा इच्छा 'को हि तद्वेद' इत्यादिना अर्थवादेन प्रदर्शिता इति न शास्त्रदृष्टेन स्वर्गसुखेन विरोधः । अयमर्थः— ज्योतिष्टोमे प्राचीनवंशाख्यशालायाः अतीकाशाः ( खिडकी, झरोका इति भाषा ) कर्तव्या इति 'दिक्षु अतीकाशान् करोति' इति विहितम् । गवाक्षकरणे हि धूमक्लेशनिराकरणं तावत् आकालिकं तात्कालिकं फलं लभ्यते । किंच ज्योतिष्टोमेन कदा चित् स्वर्गसुखालाभेऽपि अत्रत्यस्य ऐश्वर्यस्य गवाक्षद्वारा दर्शनेनैव सुखलाभः स्यात् । अतीकाशाभावे तु सोऽपि न स्यात् तस्मात् अतीकाशाः कर्तव्याः इति अतीकाशस्तुत्यर्थं 'को हि तद्वेद' इत्यादि शास्त्रम् । एवं च अतीकाशविधिस्तुत्यर्थवादत्वात् न शास्त्रदृष्टविरोधः । अत्र आकालिकेप्सा, अकालिकेप्सा इति द्वेधा पाठो भट्टपादैरुक्तः । तत्र आकालिकशब्दस्य 'आकालिकडाद्यन्तवचने' ( पा० ५।१।११४ ) इति सूत्रेण सिद्धिः । आदिर्जन्म अन्तो नाशः, तयोः समानकाले वचने प्रतिपादने गम्यमाने समानकालशब्दस्य स्थाने आकाल इत्यादेशे परस्तात् इकट्प्रत्यये च निपातिते आकालिकशब्दस्य सिद्धिः इति सूत्रकारमहाभाष्यकारयोरभिप्रायः । महावार्तिककारेण तु इकट्प्रत्ययं प्रत्याख्याय 'आकाला-

दाद्यन्तवचने ' इति सूत्ररचनामभिप्रेत्य आद्यन्तकालार्थ-कात् ईषत्कालार्थकाद्वा आकालशब्दादेव आधिकारिके प्राग्वतेष्ठञि कृते रूपसिद्धिः स्वीकृता । अचिरभाविनमिति उभयपक्षेऽपि समानः शब्दार्थः । अकालिकेति पाठे तु ' काल इति लोके विप्रकर्षः ( भूयान् कालः ) उच्यते, तत्र भवं ' कालात् ठञ् ' ( पा० ४।३।११ ) इति ठञि कालिकं, न कालिकं अकालिकं ( अल्पकालं विनश्वरं ) ' इति भट्टपादैरेव व्युत्पत्तिः प्रदर्शिता ।

**विद्या प्रशंसा । १५ ॥**

' तथा फलाभावात् ' इति सूत्रेण उपन्यस्तायाः पूर्वपक्षशङ्कायाः निरासार्थं सिद्धान्तसूत्रम् । याऽसौ गर्गत्रिरात्रवेदानुमन्त्रणविद्या मुखशोभावाजिमत्त्वहेतुत्वेन उक्ता, सा गर्गत्रिरात्रवेदानुमन्त्रणयोः प्रशंसा इति **सुधा** । अत्र विद्याप्रशंसाशब्दयोः सामानाधिकरण्यदर्शनात् द्वे पृथक् पदे इति निश्चीयते । **कुतूहले** तु ' विद्यया ज्ञानेन गर्गत्रिरात्रस्य प्रशंसा ' इति तृतीयातत्पुरुषेण व्याख्यातम् । **सुबोधिन्यां** तु विद्यायाः गर्गत्रिरात्रवेदनस्य प्रशंसया क्रतुस्तुतिरियं इति षष्ठीतत्पुरुषेण व्याख्यातम् । तेनोभयमतेऽपि सूत्रे ऐकपद्यं ज्ञेयम् ।

**सर्वत्वमाधिकारिकम् । १६ ॥**

' अन्यानर्थक्यात् ' इति सूत्रोक्तपूर्वपक्षशङ्कानिरासार्थं सिद्धान्तसूत्रम् । ' पूर्णाहुत्या सर्वान् कामानवाप्नोति ' इति उक्तं सर्वत्वं आधिकारिकं प्राकरणिकं आधानविषयकं ज्ञेयम् । यथा ' सर्वे ब्राह्मणा भोजयितव्याः ' इति गृहप्राप्ताः सर्वे , न तु अवनितलवर्तिनः सर्वे । तथा आधानेन योयः कामो लभ्यते तान् सर्वान् कामान् पूर्णाहुत्या आप्नोति इत्यर्थः । तेन नान्यानर्थक्यं दोषः ।

**फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात् । १७ ॥**

' अन्यानर्थक्यात् ' इति सूत्रोक्तशङ्कायाः रीत्यन्तरेण निरासार्थं सिद्धान्तसूत्रम् । स्वर्गादेः फलस्य पूर्णाहुत्यग्निहोत्रादिभिर्गुरुलघुभिः कर्मभिः निष्पत्तेः उत्पत्तिश्रवणात् , तेषां कर्मणां परिमाणतः अल्पत्वभूयस्त्वतारतम्यात् सारतश्च सारसारतरत्वादिना च फलविशेषः फलतारतम्यं स्यात् । लोकवत् । लोके यथा सेवादितारतम्यात् फलतारतम्यं तद्वत् । ततश्च पूर्णाहुत्यां स्वर्गादिसर्वफलानि अल्पानि भवन्ति । अग्निहोत्रदर्शपूर्णमासादिभिस्तु ततस्ततो भूयांसि भवन्ति । इति न विरोधः । सूत्रे परिमाणतः इत्यस्यानन्तरं ' सारतो वा ' इति पदद्वयं केवलं मुद्रिते कुतूहलपुस्तके टिप्पण्यां पाठान्तरत्वेन निर्दिष्टम् । सुधायां तु ' असारद्रव्यदानेनापि क्रतुसिद्धौ सारद्रव्यदाने प्रवृत्त्ययोगात् सूत्रातिरेकेण भाष्ये सारग्रहणं ' इत्युक्तम् । भाष्यं चेत्थम् ' यद्यपि विधिः, तथापि अर्थवत्ता परिमाणतः सारतो वा फलविशेषात् ' इति । अल्पेन कर्मणा अल्पपरिमाणं असारं वा फलं स्यात् । महता कर्मणा महत्परिमाणं सारभूतं च फलं स्यात् । महत्तरकर्मणा महत्तरपरिमाणं सारतरं च फलं स्यात् इति । एतेन सुधोक्तदोषः अलग्नक एव छिन्नाभ्रमिव नश्यति । तस्मात् भाष्यानुसारात् अन्यत्र अनुपलब्धमपि पदद्वयं सूत्रावयवत्वेन भाष्यसंमतं स्यात् इति भाति । तथापि प्रायः क्वाप्यनुपलब्धत्वात् नास्माभिः सूत्रे संगृह्यते ।

**अन्त्ययोर्यथोक्तम् । १८ ॥**

अर्थवादानां अप्रामाण्यस्य साधनार्थं यत् अन्त्यं कारणद्वयं अभागिप्रतिषेधात् ( १।२।१।५ ) अनित्यसंयोगात् ( १।२।१।६ ) इति सूत्राभ्यामुक्तं तयोः अन्त्ययोः यथोक्तमेवोत्तरम् । ' न पृथिव्यामग्निश्चेतव्यो, नान्तरिक्षे, न दिवि' इति अभागिनः अप्राप्तस्यैव अन्तरिक्षचयनस्य दिविचयनस्य च प्रतिषेधः सः अनर्थकः इति अप्रामाण्यकारणम् । तत्तु न, पृथिव्यां सुवर्णं निधाय अग्निश्चेतव्यः इत्यस्य विधानस्य स्तुत्यर्थत्वात् । जन्मवतीनां व्यक्तीनां वेदे वचनं अप्रामाण्यकारणं इति यदुक्तं , तदपि जातिवाचित्वात् भरतत्वादिजातेश्च नित्यत्वात् न दोषावहं इत्युक्तम् । सर्वथाऽपि अर्थवादा अपि स्तुत्यादिद्वारा धर्मे प्रमाणम् । इति सिद्धान्तः । तत्र ' वायुर्वै क्षेपिष्ठा देवता ' इत्यादयो विधेयस्तुत्यर्थत्वेन विधिशेषाः, ' सोऽरोदीत् ' इत्यादयः निषेध्यनिन्दार्थत्वेन निषेधशेषाः इति विवेकः । **के.**

* आम्नायस्य क्रियाऽर्थत्वादानर्थक्यमतदर्थानां इति स्तुतिमात्रं यत्, न कस्य चिद्विधानार्थं तदनर्थकमित्युक्तम्। भा. २।३।१४।२९.

**आम्नायस्य क्रियाऽर्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते इति न्यायः।** १।२।१।१।
विधिवाक्यातिरिक्तस्य अन्यस्यापि वेदभागस्य इष्टानिष्टफलजनकत्वे प्रामाण्यं कुतो नाङ्गीक्रियते? अन्यथा आम्नायस्य० इति न्यायानुसारेण सर्वेषामपि वेदान्तमहावाक्यानां आनर्थक्यमापतेत्। **सनातनधर्मप्रदीपे** प्रामाण्यप्रकाशः. पृ. ५१.

**आम्नायस्य गतिं वक्तुं प्रभवामो, नाम्नायं पर्यनुयोक्तुम्। इति न्यायः।** विनाऽप्यर्थवादं स्तावकत्वे विधेरेव सिद्धेऽपि आम्नायस्य० इति न्यायेन कथंचित् अर्थवादानां सार्थक्यसंपादनार्थमेव पूर्वमीमांसकैः स्तावकत्वमूरीक्रियते, अन्यथा तस्य वैयर्थ्यात्। **सनातनधर्मप्रदीपे** प्रामाण्यप्रकाशः पृ. ९३.

* आम्नायस्य 'तद्भूतानां क्रियार्थेन' इति न्यायेन (१।१।७।२५) क्रियाऽर्थत्वावधारणात्। **सु.** पृ. ३.

* **आम्नायविरुद्धाना**माचाराणां गौतमेन अप्रामाण्यमुक्तम्। **वा.** १।३।३।७ पृ. २११, * **आम्नायशब्दप्रयोगः** स्मृतिग्रन्थेऽपि। स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यामुक्तं 'आम्नायः स्मृतिधारकः' इति। ग्रन्थकारगतायाः स्मृतेः कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिनां स्मृतिधारणार्थत्वेनोक्तः। १।३।३।७ पृ. २११.

**आम्रान् पृष्टः कोविदारानाचष्टे इति न्यायः।** अयं हि 'अर्थवत्०' इति सूत्रमहाभाष्ये अभिहितः। 'अर्थवत्ता नोपपद्यते केवलेनावचनात्'। अर्थवत्ता नोपपद्यते वृक्षशब्दस्य। किं कारणं? केवलेनावचनात्। न केवलेन वृक्षशब्देनार्थो गम्यते। केन तर्हि? सप्रत्ययकेन। 'न वा प्रत्ययेन नित्यसंबन्धात् केवलस्याप्रयोगः।' न वा एष दोषः। किं कारणं? प्रत्ययेन नित्यसंबन्धात्। नित्यसंबद्धौ एतावर्थौ प्रकृतिः, प्रत्ययः इति। प्रत्ययेन नित्यसंबन्धात् केवलस्य प्रयोगो न भविष्यति। अन्यत् भवान् पृष्टः, अन्यदाचष्टे आम्रान् पृष्टः कोविदारानाचष्टे इति। (कोविदारः काञ्चनवृक्षः। 'कोविदारश्चमरिकः कुद्दालो युगपत्रकः' इत्यमरः। **के.**) **साहस्री.** २७१.

**आम्रवणन्यायः।** आम्राणां वृक्षाणां वनं आम्रवणम्। यद्यपि न सर्वे वृक्षास्तत्र आम्रा एव भवन्ति चिञ्चापनसादीनामपि तत्र सत्त्वात्, तथापि भूयांस आम्राः इति भूयस्त्वेन आम्रवणं इत्युच्यते। (प्रनिरन्तः-शरेक्षु० (पा० ८।४।५) इत्यादिना णत्वम्। **के.**) **संग्रहः.**

* '**आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनां**' इति (पा० ७।१।२) स्मृत्या (खप्रत्ययस्य स्थाने ईनादेशविधानात्) अयं (अहीनः इति) शब्दः खप्रत्ययान्तः। (सूत्रार्थस्तु आयन् फस्य स्थाने, एय् ढस्य, ईन् खस्य, ईय् छस्य, इय् घस्य आदेशो भवति, यदि फादयः प्रत्ययानां आद्यवयवाः स्युः इति) **भाट्ट.** ३।३।८. * '**आयन्नादिषु** उपदेशिवद्वचनं स्वरसिद्ध्यर्थं' (आयनेयी-सूत्रे प्रथमं वार्तिकं, पा० ७।१।२) इत्येवं ईनादेशे आश्रीयमाणे प्रत्ययाद्युदात्तत्वेन ईकारे स्वरः सिध्यति। **वा.** ३।३।८।१६ पृ. ८६४। आयन्नादिषु आदेशेषु स्वरसिद्ध्यर्थं (उपदेशिवद्वचनं-) उपदेशो विद्यते येषां फगादिप्रत्ययानां (ते उपदेशिनः) तद्वद्भावस्य वचनं कार्यं इति (महावार्तिक-) स्मृतेः आदेशसंबन्धिनि अपि ईकारे स्वरः सिध्यति। **सु.** पृ. १२८८.

**आयातः प्रवाहः केन वार्यते इति न्यायः** सर्वदर्शनसंग्रहे आर्हते उक्तः। स्पष्टार्थः। **साहस्री.** ६९८.

* **आयुः नाम** एकाहविशेषः। गवामयने आयुर्नामको यागः। तत्र ऐकाहिकी इतिकर्तव्यता ग्राह्या, न तु द्वादशाहिकी। **वि.** ७।४।३, * आयुः नाम क्रतुः ज्योतिष्टोमविकारः अष्टरात्रादौ। ६।७।८.

* **आयुतं** (वृतं) शिरसि निहितं मनुष्याणां सुखकरमेव। **भा.** ३।४।३।११.

* **आयुधपदस्य** युद्धसाधनत्वे शक्तिः, साधनत्वमात्रे लक्षणा । ( यज्ञायुधानि इत्यादौ ) **मणि.** पृ. १६४. * **आयुधशब्दः** स्फ्यादिषु गौणः । **भा.** ४।१।४।८ । आयुधशब्दः आयुधेष्वेव प्रसिद्धः, लक्षणया स्फ्यादिषु वर्तते, तान्यपि साधनानि, एतान्यपि इति । **वा.** * **आयुधशब्दस्य** यज्ञायुधवचनस्य क्रियाऽन्तरसाधनेषु औपचारिकत्वात् । वा. ३।१।५।११ पृ. ६७२.

**आयुरादिफलन्यायः** । दर्शपूर्णमासगतसूक्तवाकस्थयजमानशब्दस्य अनेकयजमानके सत्रादौ ऊहः ॥

**विकारस्तत्प्रधाने स्यात्** । ९।१।१५।४१ ॥

**भाष्यं--** अस्ति दर्शपूर्णमासयोः सूक्तवाकः, ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति । तत्रेदं समाम्नायते ' अयं यजमान आयुराशास्ते ' इति । तत्रायमर्थः सांशयिकः किं बहुकर्तृके विकारे यजमानशब्द ऊहितव्यः, उत नेति । किं प्राप्तम् ? अविकारेण प्रयोक्तव्यः । तथा सामर्थ्यमनुगृह्यते । न चायं समवेतवचनः । परार्थेन हि अत्र ' यजमान आयुराशास्ते ' इति । आयुराशासनेन यजमानस्य न कश्चित् दृष्टोऽर्थः संजन्यते । तस्मात् आयुराशासनमदृष्टार्थम् । यजमानविशिष्टा आशीः एकेनापि यजमानेन कीर्तितेन यथा श्रुता, तथा कृता भवति । यथा ' यजमानेन संमितौदुम्बरी भवति ' इति, तथैतत् । तस्मादविकारेण प्रयोक्तव्यमिति । **एवं प्राप्ते ब्रूमः** । विकारः स्यात् ऊहः । तत्प्रधाने यजमानप्रधाने । कथं यजमानप्राधान्यम् ? एवं श्रूयते ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति । यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधनं तत्फलं वा प्रकाशयति, ततः सूक्तवाकेन प्रस्तरः प्रहृतो भवति । प्रहरणफलं आयुराशासनं कल्पितम् । यजमानः आयुराशास्ते एतेन कर्मणेति यजमानेन प्रस्तरः प्रहृतो भवति । तत्र य एव यजमानः फलं प्रति प्रधानभूतो न संकीर्त्यते, तेन न प्रहृतं स्यात् । तस्मात् सर्वे समवेताः संकीर्तयितव्याः । सर्वेषु च कीर्त्यमानेषु बहुवचनं भवति । तस्मादूहो यजमानस्येति ।

**टुप्**— प्रत्युदाहरणमेतत् । ( पूर्वसूत्रे परार्थत्वान्नोहः इत्युक्तं, तस्य परार्थग्रहणस्य प्रत्युदाहरणं, स्वार्थे पुनर्भवत्येव इति ) । अथवा अधिकरणान्तरं कया चिदाशङ्कया आरभ्यते । ( आशङ्कामाह- ) ' अयं यजमान आयुराशास्ते ' इति आयुषः फलत्वं नावगतं प्रमाणान्तरेण । तस्मात् यजमानस्य आशिषः संबन्धो वाच्यः अदृष्टाय । ( तत्र ) यजमानसंबद्धा आशीर्वक्तव्या । सा चैकेनापि ( यजमानेन ) भवत्येव । तस्मात् अनूहः । ( **सिद्धान्तयति-** ) नैतदेवम् । ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति करणविभक्तिनिर्देशात् सूक्तवाकः प्रहरणाङ्गम् । न चासौ प्रहरणं प्रकाशयति, न च तत्साधनम् । श्रुत्या च तस्याङ्गता निर्ज्ञाता । तस्मात् श्रुतेः यदनेन प्रकाश्यते तत् प्रहरणसंबन्धि । तेन च ( अग्न्यादयो ) देवताः प्रकाश्यन्ते, आयुरादीनि च फलानि । तत्र देवताः ( क्रियायाः ) साधनतां प्रतिपद्यन्ते, आयुरादीनि च ( फलानि ) साध्यताम् । तस्मादायुरादीनि फलानि । कर्तृगामि च क्रियाफलम् । तस्मात् यजमानः प्रधानभूतः फलं प्रति । प्रधानभूतत्वात् ऊह्यः ।

**के**-- इदमधिकरणं भाष्ये पृथगेव । वार्तिके तु ' प्रत्युदाहरणमिदं ' इत्युक्त्वा ' अथवा अधिकरणान्तरं ' इत्युक्तम् । शास्त्रदीपिकायामपि तथैव । तच्च ' चोदिते तु० ' इति त्रयोदशाधिकरणान्ते निवेशितम् ।

**सोम**-- यज्ञपतिशब्दवत् यजमानपदस्याप्यनूहः इत्युत्थितेः **संगतिः** । आयुरादीनां फलत्वस्य प्रमाणान्तरासिद्धतया मन्त्रप्रकाश्यत्वादेव फलत्वं कल्पनीयं, तच्च फलितया प्राधान्येन प्रकाशने एव संभवति, न कर्तृत्वेन । ततश्च य एव फलितया न प्रकाशितः, तस्य प्रहरणं प्रति सूक्तवाको न करणं इति तेन प्रस्तरो न प्रहृतः स्यात्, ततश्च न फलमाप्नुयात्, इति सर्वत्र प्रकाशनाय सिध्यति ऊहः । यजमाने प्रधाने ऊहः स्यात् इति **सूत्रार्थः** ।

**वि**-- ' यजमानो नोहितव्य ऊह्यो वा, नहि पूर्ववत् ।, मन्त्रः फलप्रधानोऽत ऊह्यः सर्वफलित्वतः ॥ '

**भाट्टदीपिकायां** तु अस्य प्रत्युदाहरणत्वेनैव ' चोदिते तु० ' इति चतुर्दशाधिकरणे एव व्याख्यातत्वात् नात्र भाट्टनिवेशः ।

**मण्डन**— 'सूक्तोक्त ऊह्यो यजमानशब्दः।' सूक्तोक्तः सूक्तवाकोक्त इत्यर्थः। १६.

**शंकर**— 'यजमानपदे तु सः।' ऊहः। २३.

* दृष्टं हि 'ममाग्ने वर्चः' इति मन्त्रस्य प्रत्यगाशीष्ट्वेन याजमानत्वौचित्येऽपि सूक्तवाकमन्त्रप्रतिपाद्या**युरादिफलन्यायेन** विवक्षितस्य तत्प्रतिपाद्यफलस्य यजमानगामित्वेऽपि अन्वाधानकर्त्रा अध्वर्युणैव अन्वाधानकरणमन्त्रतया तदङ्गस्यापि वक्तव्यत्वम्। **परिमलः**. ३।४।१३।४४ ब्रसू. * **आयुरादिफलप्रकाशकभागस्य** सूक्तवाकगतस्य लोपः अस्थियज्ञस्य मृतकर्तृकत्वपक्षे। **भा.** १०।२।२१।५२–५४, * **आयुराशासनादेः** सूक्तवाकान्तर्गतस्यानुष्ठानं सर्वस्वारे जीवद्दशायां क्रियमाणप्रायणीयादौ। १०।२।२५।६०–६१.

**आयुर्घृतमिति न्यायः**। आयुषो निमित्तमिति गम्यते। तज्जनकत्वात् ताच्छब्द्यम्। **साहस्री**. १९३.

* '**आयुर्दा अग्नेऽस्यायुर्मे देहि**' इति मन्त्रो याजमानः। भा. ३।८।६।१५–१६.

* '**आयुर्यज्ञेन कल्पतां**, प्राणो यज्ञेन कल्पतां' इति वाक्यभेदात् भिन्नौ मन्त्रौ। (एते क्लृप्तिमन्त्रा नाम।) **भा.** २।१।१५।४७.

* '**आयुर्वेदं** चिकित्सासु प्रायेण विनियुञ्जते। व्याधितस्यौषधज्ञानं वैद्यके चोपलभ्यते॥' **वा.** १।३।८।२४ पृ. २६२.

* **आयुष्कामः** 'प्राजापत्यं चरुं निर्वपेत् शतकृष्णलम्' 'चत्वारिचत्वारि कृष्णलान्यवद्यति'। **भा.** १०।१।१०।४०.

* **आयुष्यसूक्तं** सामवेदे 'आयुर्विश्वायुर्विश्वमायुरशीमहि० अमुष्य राज्याय' इति पठितं सूक्तम्। **के.**

**आरघट्टघटीभ्रान्तिन्यायः**। वायुः सूर्योदयमारभ्य सार्धघटिकाद्वयं एकैकस्यां नाड्यां भवति, एवं सति अहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते इति। उक्तं चाभियुक्तैः 'सार्धे घटीद्वयं नाडीरेकैकार्कोदयाद् वहेत्। आरघट्टघटीभ्रान्तिन्यायो नाड्योः पुनः पुनः॥' इति सर्वदर्शनसंग्रहे पातञ्जले। **साहस्री**. ७२७.

* **आरण्यानां** पशूनां उत्सर्गः अश्वमेधे। **संकर्ष**. २।४।१.

**आरण्यन्यायः**। आरण्यपशुन्यायः। अश्वमेधे परस्वदारण्यपशुयागे पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गानां प्रतिषेधः॥

**पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत्। ९। ४।१३।५१॥**

**भाष्यं**— अश्वमेधे समामनन्ति 'ईशानाय परस्वत आलभेत' इति। तत् प्रकृत्य श्रूयते 'पर्यग्निकृताना-रण्यानुत्सृजन्ति' इति। तत्र संशयः किमारण्यानामालम्भः उत्सर्गार्थ एव द्रव्योत्सर्गश्चायं, किं कर्मशेषप्रतिषेधः पर्यग्निकरणान्तैः संस्कृता उत्स्रष्टव्या इति। किं प्राप्तम्? द्रव्योत्सर्गोऽयं, आलम्भश्च उत्सर्गार्थ एवेति। कुतः? एवमुत्सर्गमप्राप्तं विदधत् तस्य सत्तां ब्रुवन् श्रुत्या वक्ष्यति। इतरथा उत्सर्गं प्राप्तमनुवदेत्। वाक्यार्थस्य प्रतिषेधस्य सत्तां ब्रूयात् प्रत्ययः। श्रुतिश्च वाक्याद्बलीयसी। एवं च सति देवतासंबन्धो ग्रहणे। ईशानमुद्दिश्य परस्वन्तः (पशवः) आलब्धव्याः, पर्यग्निकरणं कृत्वा त्यक्तव्या इति। उपधानवत्। यथा, 'एतत्खलु साक्षादन्नं, य एष चरुर्य एनं चरुमुपदधाति' इत्युपधानार्थमेव चरोरुपादानम्। एवमिहापि उत्सर्गार्थः एव आलम्भो भविष्यति।

**शेषप्रतिषेधो वाऽर्थाभावादिडाऽन्तवत्। ५२॥**

**भाष्यं**— कर्मशेषप्रतिषेधो वा अस्मिन् वाक्ये उच्यते। कुतः? अर्थाभावात्। 'ईशानाय परस्वत आलभेत' इत्यस्य वाक्यस्य न कश्चिदर्थो भवेत्, यदि उत्सर्गार्थं आलम्भः स्यात्। कथम्? आलम्भकाले एवाध्वर्युर्जानीयात्, नेमे ईशानाय दास्यन्ते इति। तस्यैवं जानतो नैवं संकल्पो भवति, 'ईशानाय दातुं ग्रहीतव्याः' इति। अशक्यार्थत्वात् अनर्थकमिदं वाक्यं भवति। स एष संकल्प एवमवकल्पते, यदि ईशानाय दातव्याः। तस्मादालम्भवचनेन शब्देन दानमेव विधीयते इति गम्यते। यदा च दानं विधीयते, तदा पर्यग्निकृतानुत्सृजन्तीति उत्सर्गमनूद्य एवमुत्सृजन्तीति विशेषविधानार्थं भवति शास्त्रम्।

कथं पुनरत्र विशेषो विधीयते, किं काल: पर्यग्निकरणे, एतस्मिन् काले उत्सृजन्तीति । **नेत्याह** । नात्र कालवचनः शब्दः श्रूयते । काले च विधीयमाने कालान्तरं प्रतिषिध्यते, नाङ्गान्तराणि । **अथ** किं पर्यग्निकरणवदुत्स्रष्टव्यमिति । **तदपि नास्ति** । नहि अत्र पर्यग्निकरणभावना कीर्त्यते । तस्यां च सत्यां पर्यग्निकरणात् प्राञ्चः पराञ्चश्च पदार्थाः सर्वे प्रतिषिध्येरन् । कथं तर्हि ? निवृत्ते पर्यग्निकरणे उत्स्रष्टव्यः इति । किमेतस्यामवस्थायामिति, नेत्याह । चोदकादेवैतत् प्राप्तम् । एतदवस्थः पशुरुत्सर्जनीय इति । अवस्थाऽन्तरप्रतिषेधस्य च नायं शब्दो वाचकः । चोदकप्राप्ते हि काले उत्सृज्यमाने कृतपर्यग्निकरणः एवासौ भवति । यदि तु अवस्थाया: प्रतिषेधः स्यात्, पर्यग्निकरणादूर्ध्वं उत्सर्गात्प्राक् पदार्थाः प्रतिषिध्येरन् न पराञ्चः । कस्तर्ह्यर्थः ? पर्यग्निकरणे कृते यादृशो भवति तादृशस्त्याज्य इति । ननु चोदकेनैव तदङ्गोऽसौ प्राप्तः । उच्यते । पुनरस्य एतदङ्गवत्ता श्रूयते अङ्गान्तरपरिसंख्यार्थम् । एतैरेवाङ्गैः अङ्गवानुत्स्रष्टव्यः । एवं चोदकप्राप्तानि परिसंख्यायन्ते, नान्यान्यङ्गानि भवन्तीति । कथमेष शब्द एवं परिसंख्यातुं शक्नोतीति चेत् । शक्नोतीति ब्रूमः । कथम् ? प्रत्यक्षेण वाक्येन तैरङ्गैर्निराकाङ्क्षीकृते प्रधाने, शेषैरङ्गैः सह चोदकेन परोक्षा सती एकवाक्यता न भविष्यतीति । तस्मात् कर्मशेषप्रतिषेध इति ।

**पूर्ववत्त्वाच्च शब्दस्य, संस्थापयतीति चाप्रवृत्ते नोपपद्यते । ५३ ॥**

**भाष्यं—** पूर्ववांश्च भवति शब्दो यागप्रवृत्तिपूर्वकः ‘ आज्येन शेषं संस्थापयति ’ इति । यदि याग एष प्रारब्धः, ततः संस्थापयतीति समाप्तिसादृश्यादुपपद्यते । यागस्य हीदं यागान्तरं समाप्त्या सदृशम् । यदि हि पूर्वो न यागः प्रवृत्तः स्यादुत्सर्गमात्रं, न तस्य यागः समाप्त्या सदृशः । तत्र संस्थापयतीति नोपपद्यते । तस्मादपि शेषकर्मप्रतिषेधः ।

**टुप्—** ‘ शेषं संस्थापयति ’ इति ( यागत्वे ) लिङ्गदर्शनमेतत् उपरितनाधिकरणव्याख्यानेन शुध्यति । तत् कथमिति ? आरण्योत्सर्गसमानश्रुतिकं तु अन्यत् पात्नीवतं कर्म । तथैतत् श्रुतं ‘ आज्येन शेषं संस्थापयति ’ इति । तत्र परिसमाप्तत्वात् प्रकृतकर्मणः शेषशब्दः अनुपपन्नः, तदभावाच्च संस्थापयतिरपि अनुपपन्न एव धातुः, प्रत्ययस्तु शुद्धः अवशिष्यते । शेषसंस्थयोरभावात् करणार्थोऽपि अनुपपन्नार्थ एव ‘ आज्येन ’ इति । परिशिष्टं ‘ आज्य ’ इति ( प्रातिपदिकमात्रम् ) । एतयोः ( आज्यप्रातिपदिक-आख्यातप्रत्यययोः ) संबन्धे ( सति ) कर्तव्यतावचनेन ( आख्यातेन ) स्पृश्यमानमाज्यं ईप्सिततमं ( कारकं ) भवति ‘ आज्यं कुर्यात् ’ इति । न चैतत् केवलाज्योत्पत्तिविधानं, आनर्थक्यात् । अतः प्रयोगवचनः (विधिः) उपपदान्तराभिवादी संनिहितेन पर्यग्निकरणवाक्यगतेन पात्नीवतपदेन संबध्यते । तदेव संजातं ‘ पात्नीवतमाज्यं कुर्यात् ’ इति । द्रव्यदेवतासंयोगाच्च यागः ( यागान्तरमिदम् । संस्थाशेषशब्दतृतीयानां गतिमाह- ) स च आरम्भवान् समाप्तिमांश्च, इत्यर्थात् तदङ्गभावेन अव्यभिचारी संस्थाधातुरुपादीयते निर्वपतिवत् मौर्ये । स पशुयागात् अल्पेतिकर्तव्यतावान् तदनन्तरं च क्रियमाणः तच्छेष इव, इति शेषशब्दः अर्थवान् । तत्संबन्धात् तृतीया युक्तैव । ( तस्मात् कर्मान्तरचोदना । इति समाप्ते अधिकरणे पूर्वाधिकरणस्थलिङ्गदर्शनमनुसंधत्ते- ) शेषसंस्थोपमा ( सादृश्यात् ) युक्ता, यदि पूर्वोऽपि याग एव । अथ ( तु ) द्रव्योत्सर्गः, ततः ( सादृश्याभावात् शेषं संस्थापयति इति- ) न युज्यते । तद्वच्च आरण्येष्वपि ( तुल्यन्यायत्वात् ) इति सिद्धम् ।

**प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात् तत्कारितत्वाद्, यथा प्रयाजप्रतिषेधेऽग्रहणमाज्यस्य । ५४ ॥**

**भाष्यं—** इदं प्रयोजनसूत्रम् । यदि द्रव्योत्सर्गो विधीयते, ततः संस्काराणामकर्म स्यात् । कुतः ? संस्कारप्रवृत्तेर्यज्ञहेतुत्वात् । तत्प्रतिषेधे यज्ञाभावे, किमिति संस्काराः क्रियेरन्, यज्ञकारिता हि ते । यथा प्रयाजाभावे तदर्थमाज्यं न गृह्यते, ग्रहणमाज्यस्य न क्रियते । ‘ अप्रयाजास्ता अननुयाजाः ’ इति यत्र श्रूयते, तत्र प्रयाजा-

भावे तदर्थमाज्यं न गृह्यते । एवमिहापि संस्कारा न कर्तव्या इति ।

**क्रिया वा स्यादवच्छेदादकर्म, सर्वहानं स्यात् । ५५ ॥**

**भाष्यं--** यदा तु कर्मशेषप्रतिषेधपक्षः, तदाऽपि किं न कर्तव्याः संस्कारा इति । नैतदेवम् । क्रिया स्यादवच्छेदपक्षे । यागो हि तदा भवति । तस्मात् सर्वे यागपदार्थाः कर्तव्याः । यदि न यागो भवेत् ततः अकर्म । संस्काराणां सर्वहानं स्यात् । यागस्तु तदा भवति । तस्मात् कर्मशेषप्रतिषेधपक्षे सर्वं कर्तव्यमिति ।

**सोम**— पयःप्रभृतीनामिव परस्वतामपि न हविष्ट्वं यागविधेरेवाभावात् इत्युत्थितेः (दृष्टान्त-) **संगतिः** । आरण्यमृगविशेषवाचकः परस्वच्छब्द इति **माधवः** । **सूत्रार्थस्तु**- पर्यग्निकरणवाक्येन पर्यग्निकृतानामुत्सर्गे ईशानवाक्यविहितस्य आलम्भस्य तादर्थ्ये, यथा 'चरुमुपदधाति' इति विहितोपधानार्थे चरूपादानं तद्वत्, न तु यागविधिरिति ।

**वि**— 'स्पर्शः परस्वदालम्भो यागो वो, त्सर्गतोऽग्रिमः ।, द्रव्यदेवान्वयाद् यागोऽङ्गरीतिविधिरुत्तमः ॥' १४.

**भाट्ट--** अश्वमेधे 'ईशानाय परस्वत आलभेत' इति प्रकृत्य 'पर्यग्निकृतानारण्यानुत्सृजति' इति श्रुतम् । तथा 'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्य अन्यत्रापि 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति श्रुतम् । तत्र उभयत्रापि आद्यवाक्ये तावत् देवतासंयोगश्रवणात् नालम्भमात्रं विधीयते, अपितु याग एव इत्युक्तमेव द्वितीये (२।३।८) । द्वितीयवाक्ये तु न पर्यग्निकरणान्ताङ्गरीतिविधिः अपूर्वत्वफलको द्वितीयोक्तोऽपि युज्यते । तथात्वे प्राकृतस्य पर्यग्निकरणादिधर्मजातस्य प्रकृतौ प्रदेयप्रकृतिसंस्कारकत्वेन क्लृप्तस्य इह पशोः प्रदेयत्वेन तस्मिन्नप्राप्तेः, अप्राकृतकार्यतया पशौ विधीयमानस्य क्लृप्तोपकारकत्वाभावेन अतिदेशप्रतिबन्धकत्वासंभवात् । तदभावे च प्रदेयप्रकृतिसंस्कारकत्वेनैव पर्यग्निकरणादिप्राप्तेः तस्याविधेयत्वाच्च । न वा पर्यग्निकरणान्ते प्रयोगत्यागास्योत्सर्गविधिः, तथात्वे त्यागस्यापि अभावेन उत्पत्तिवाक्यावगतदेवतासंबन्धबाधापत्तेः । न च उत्सृजतिना यागमनूद्य अप्राकृतपर्यग्निकरणान्तोत्तरत्वविधिः, हृदयाद्यङ्गेषु तद्विधौ पात्नीवतं इत्येकवचनानुपपत्तेः, पशौ तद्विधानस्य व्यर्थत्वापत्तेश्च । अतः पर्यग्निकरणोत्तरकालं यूपात् विमोकरूपस्य उत्सर्गस्य प्राप्तस्यैवायमनुवादः । **इत्याक्षेपे प्राप्ते**, आज्यभागन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानेऽपि नात्र पशोः प्रदेयता प्रमाणाभावात् । उत्पत्तिवाक्यगतदेवतासंबन्धस्य दैक्षवत् प्रदेयप्रकृतित्वेनैव उपपत्तेः । यद्यपि नात्र विशसनादिकं तत्तात्पर्यग्राहकं, तथापि पर्यग्निकरणमेव प्रदेयप्रकृतिसंस्कारकतया क्लृप्तं पशोः प्रकृतित्वतात्पर्यग्राहकम् । संभवति च विशसनाद्यभावेऽपि पश्वारम्भकाणामेव हृदयाद्यङ्गानां स्वदेशस्थितानामेव देवतोद्देशेन स्वत्वत्यागः । अतश्च अप्राकृतकार्यकारिताऽनापत्तेः संभवति पर्यग्निकरणान्ताङ्गरीतिविधानेन अपूर्वता ।

**मण्डन**--- 'शेषो निषिद्ध उत्सर्गे ।'

**शंकर**— 'यागः परस्वत्स्वैशानेषु ।' १४.

* **आरण्यन्यायस्य स्वरूपं**- 'पर्यग्निकृतानारण्यानुत्सृजति इत्यत्र 'पर्यग्निकरणान्ताङ्गरीतिविधानं प्रत्यक्षविहितत्वात्' इति । **के.** * वाजपेये 'तान् पर्यग्निकृतानारण्यानुत्सृजति, ब्रह्मसाम्न्यालभते' इति श्रुतम् । अत्र आलम्भोत्कर्षमात्रं विधीयते । तदा च तदुत्तराङ्गानामुत्कर्षः 'तदादि वाऽभिसंबन्धात्' (५।१।१२।२४) इति न्यायादेव लभ्यते । तेनात्र **आरण्यन्यायासंभवात्** न पर्यग्निकरणान्तानामङ्गानां आवृत्तिः । **भाट्ट.** ११।२।११.

* **आरण्यपशुन्यायेन** सप्तदशोक्षाणः पञ्चशारदीये पर्यग्निकरणप्रोक्षणाभ्यां समापनीयाः (आरण्यन्याय एव अत्रोक्तः) । **वि.** ११।२।१३.

* **आरण्यभोजनं** दर्शपूर्णमासयोः औपवसथ्येऽहनि आम्नातं, तद् वृत्त्यर्थम् । **भा.** १२।१।१४।३०.

⌛ **आरण्यभोजनन्यायः** । आरण्यभोजनस्यातिदेशिकस्य ज्योतिष्टोमाङ्गप्रायणीयादिषु पयोव्रतादिना प्रसङ्गसिद्धिः ॥

**अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् । १२।१।१४।३० ॥**

भाष्यं— दर्शपूर्णमासयोः आरण्यभोजनमाम्नातं ' यदारण्यानश्नाति , तेनारण्यान् ( पशूनाप्नोति ) अथो इन्द्रियं वा ( वै इति च्छेदः ) आरण्यं, इन्द्रियमेवात्मन् धत्ते ' इति । तत् प्रायणीयादिषु चोदकेन प्राप्यते । प्राप्तमपि तत्र कर्तव्यम् । किं कारणम् ? अन्यविधानात् । यत् दर्शपूर्णमासयोरारण्यभोजनं , तत् वृत्त्यर्थम् । सोमेऽपि एतदाम्नातं , ' पयोव्रतं ब्राह्मणस्य , यवागू राजन्यस्य , आमिक्षा वैश्यस्य ' इति । तदपि दृष्टकार्यत्वात् वृत्त्यर्थमेव । तयोः सौमिकं प्रत्यक्षं , श्रुतत्वात् प्राधान्याच्चावश्यं कार्यम् । तेनैव च वृत्तौ प्रसङ्गात् सिद्धायामितरन्निवर्तते ।

सोम— पत्नीसंनहने प्रसङ्गसिद्धेऽपि इह न प्रसङ्गः इत्युत्थितेः **संगतिः** । उभयोर्वृत्त्यर्थत्वे सति भिन्नकालेनापि एकेन अपरस्य कार्यसिद्धेः प्रत्यक्षश्रुतप्रधानधर्मपयोव्रतादिकमेव कर्तव्यं , न तु अङ्गधर्मचोदकप्राप्तारण्याशनम् ।

वि— ' आरण्याशनमत्रास्ति चोदकप्रापितो यदि । , वृत्त्यर्थत्वेन तत् सिद्धं सोमप्रोक्तात् पयोव्रतात् ॥ '

भाट्ट— दर्शपूर्णमासयोः आरण्याशनमाम्नातम् । तदपि सोमार्थेन पयोव्रतेनैव प्रसङ्गसिद्धेः न प्रायणीयाऽऽदिषु कर्तव्यम् । न च तयोर्विजातीयतृप्तिजनकत्वेन कार्यभेदः शङ्क्यः, तृप्तेः क्रत्वनुपयोगित्वेन आनुषङ्गिकत्वेऽपि प्रयोजनत्वाभावात् प्राणधारणस्यैव क्रतूपयोगितया प्रयोजनत्वेन प्रसङ्गोपपत्तेः ।

**मण्डन**— ' नारण्यभुक्तिः क्रियतेऽत्र दार्शिकी । '
**शंकर**— ' सोमे नैवैष्टिकं व्रतम् । ' १५.

* **आरब्धं** अवश्यं समापनीयम् । **वा.** ६।३।८।२२.

⌛ **'आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्' इति** न्यायः । अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् । इति पूर्वार्धः । **के.**

* **आरब्धे** कर्मणि असमाप्य त्यक्ते त्रैधातवीया प्रायश्चित्तम् । ' यो यक्ष्ये इत्युक्त्वा न यजते त्रैधातवीयेन यजेत ' इति । **वि.** ६।२।३. * **आरब्धकाम्यकर्मणः** समाप्तिर्नियता । शिष्टगर्हाऽधिकरणे इदम् । **भा.** ६।२।३।१३-१५. * **आरब्धलौकिककर्मणः** समाप्तेर्न नियमः । तत्राधिकरणे इदम् । ६।२।४।१६-१८.

* **आरभ्य समाप्तिपर्यन्तमनुतिष्ठतः एव फलम्** । मध्ये मृतस्य तु समाप्त्यभावेऽपि फलं समाम्नायते ' यो दीक्षितानां प्रमीयेत अपि तस्य फलं ' इति । **वि.** ६।३।९. * **आरभ्याधीतेन** प्रत्याम्नानेन प्राकृतं बाध्यते । यथा ' कुशमयं बर्हिर्भवति ' इति प्रकृतितः प्राप्ताः कुशाः ' शरमयं बर्हिर्भवति ' इति विकृतौ विहितैः शरैर्बाध्यन्ते । **बाल.** पृ. १३१.

⌛ **आरम्भणाधिकरणन्यायेन** ब्रह्मव्यतिरेकेण जगतः अभावात् भेदाभेदविकल्पस्यानवकाशः । **अद्वैत.** २।४।२४२. * स्थूलानि भूतानि अपञ्चीकृतभूतेषु विलीयन्ते , तत्कार्ये च सतत्त्वकं लिङ्गं **आरम्भणाधिकरणन्यायेन** तन्मात्रतां प्रतिपद्यते । **पञ्चीकरणे आनन्दगिरिः** । न्यायस्तु— ' तदनन्यत्वमारम्भणशब्दादिभ्यः ' ( २।१।६।१४ ब्रसू. ) । तयोः कार्यकारणयोः अनन्यत्वमवगम्यते । कारणात् परमार्थतः अनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते ' वाचारम्भणं विकारो नामधेयं' इत्यारम्भणादिशब्दादिभ्यो हेतुभ्यः इति । अत्र कार्यकारणयोरनन्यत्वमेव न्यायः । **के.**

* **आरम्भणीया** दर्शपूर्णमासकर्तारं आरम्भणयोग्यं करोति । **भा.** ९।१।१०।३४-३५ वर्णकं २.

⌛ **आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् , कृता पुनस्तदर्थेन । १२।२।६।१९ ॥**

पूर्वपक्षसूत्रम् । दर्शपूर्णमासाद्यारम्भे कर्तव्यः आरम्भणीया नाम इष्टिविशेषः विकृतौ निमित्ते न स्यात् न कर्तव्या , प्रकृतिकालमध्यत्वात् । प्रकृतेः दर्शपूर्णमासयोः कालः यावज्जीवनं , मध्ये भवा मध्या, प्रकृतिकाले मध्या प्रकृतिकालमध्या इति विग्रहः । प्रकृतिकालमध्यस्थत्वादित्यर्थः । तदर्थेन प्रकृतिकालमध्यस्थसर्वकर्मार्थेन पुनः आरम्भणीया कृता । तथा सति यावज्जीवने एव या विकृतयः करिष्यन्ते, तदर्थताऽपि सिद्धैव , इति पुनः विकृत्यारम्भे न कर्तव्या । पुनःशब्दः तुशब्दार्थः । कृता पुनः कृता तु तदर्थेन । इति पूर्वः पक्षः ।

**स्याद्वा, कालस्याशेषभूतत्वात्** । २० ॥

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । स्यात् विकृतिषु आरम्भणीया । कालस्य यावज्जीवकालस्य अशेषभूतत्वात् । यावज्जीवकालः प्रकृतेः न शेषभूतः ! कर्तृधर्मोऽसौ । प्रकृतेस्तु दर्शश्च पूर्णमासश्च कालः । तथा च प्रतिपर्व भिन्नप्रयोगत्वेन विकृतीनां तन्त्रमध्यपाताभावात् न प्रसङ्गः । तस्मात् विकृतिषु आरम्भणीया स्यात् इति सिद्धान्तः ।

**आरम्भविभागाच्च** । २१ ॥

आरम्भणीया प्रकृत्यारम्भे इव विकृत्यारम्भेऽपि पृथक् कर्तव्या इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । प्रकृतिविकृत्योः आरम्भस्य विभागात् च विकृत्यारम्भार्थं आरम्भणीया पृथक् कर्तव्या । यदा हि प्रकृतेरारम्भः तदा विकृतिरनुत्पन्नैव, तस्मात् उभयोः विभक्त आरम्भः । चकारो हेतुसमुच्चयार्थः । **के.**

* आरम्भणीया सर्वप्रयोगसाधारणत्वात् पुरुषार्थत्वाद्वा सकृदेव दर्शपूर्णमासारम्भे कर्तव्या । न तु प्रतिदर्शपूर्णमासप्रयोगम् । **वि.** ९।१।११. * अङ्गं चेयं कथं चन परिपूर्णा **आरम्भणीया** विधीयते । सा च दर्शपूर्णमासधर्मानाकाङ्क्षति । तौ च प्राक् विधानात् आरम्भणीयाशून्यौ । टुप् १०।१।४।७.

**आरम्भणीयाया: ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयादिविकृतौ बाधः ॥**

**इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात्** । १०।१।२।४॥

**भाष्यं**— अस्ति ज्योतिष्टोमः ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति । तत्र दर्शपूर्णमासप्रकृतिकानि कर्माणि दीक्षणीयाऽऽदीनि ' आग्नावैष्णवमेकादशकपालं निर्वपेत् ' इत्येवमादीनि । अस्ति तु प्रकृतौ आरम्भणीयेष्टिः ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः । सरस्वत्यै चरुं, स्वरस्वते द्वादशकपालं, अग्नये भगिनेऽष्टाकपालं निर्वपेत्, यः कामयेतान्नादः स्यामिति, नित्यवदेके भगिनमामनन्ति ' ( इति ) । तत्र संदेहः किं दीक्षणीयाऽऽदिषु आरम्भणीया कर्तव्या, उत नेति । किं प्राप्तं ? सर्वं प्राकृतं विकृतौ कर्तव्यम् । ' विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ' ( १०।१।१।१ ) इति । **एवं प्राप्ते ब्रूमः** । इष्टिः आरम्भणीया ज्योतिष्टोमाङ्गभूतात् दर्शपूर्णमासप्रकृतिकात् दीक्षणीयादेः कर्मराशेर्निवर्तते । किं कारणं ? योऽत्रारम्भः स ज्योतिष्टोमस्य, न दीक्षणीयाऽऽदेः । कुतः ? आरम्भो हि प्रथमः पदार्थः स्यात्, प्रथमं वा पुरुषस्य प्रवर्तनम् । यदि प्रथमः पदार्थः, स ऋत्विग्वानमनं देवयजनजोषणं वा । तदिह ज्योतिष्टोमस्याङ्गं क्रतोरर्थेन कृतं सत् दीक्षणीयाऽऽदीनामर्थं साधयति, न पुनस्तेषां कर्तव्यम् । लुप्तमेव तत् । तस्मिन् लुप्ते आरम्भे तत्सिद्ध्यर्थो धर्मः आरम्भणीयाऽऽख्यो लुप्येत । अथ प्रथमप्रवर्तनमारम्भः, औदासीन्यात् व्यावृत्तिः पुरुषस्य व्यापृतता, तदा ज्योतिष्टोमं साङ्गं कर्तुं, असौ औदासीन्यात् व्यावृत्तः ज्योतिष्टोमिकेन प्रथमेन पदार्थेन । स ततः प्रभृति आ साङ्गज्योतिष्टोमसमाप्तेर्व्यापृत एव, न पुनरुदासीनो भवति, यतो व्यावृत्तो भवति । साङ्गज्योतिष्टोमारम्भेणैव प्रवृत्तो दीक्षणीयाऽऽदिषु, इति लुप्यते एव एषामारम्भः । तस्मिन् लुप्ते आरम्भणीयापदार्थः आरम्भसिद्ध्यर्थो लुप्येत । ननु अङ्गभूतस्य दीक्षणीयाऽऽदेः अन्य आरम्भो जातः । नेत्याह । ऋत्विग्वानमनं देवयजनजोषणादि वा प्रथमं पुरुषस्य प्रवर्तनं आरम्भः । प्रथमं प्रवृत्तोऽसौ ज्योतिष्टोमार्थमेव । अथायं अन्यः प्रथमः पदार्थो दीक्षणीयाऽऽदेर्जातः इत्युच्यते, तथापि न तस्य आरम्भणीया प्रकृतौ उक्ता इति । तस्मात् अङ्गभूतात् पदार्थात् आरम्भणीया निवर्तेत । अपि च दीक्षणीययैव ज्योतिष्टोमे आरम्भार्थः सिध्यति । एवं हि श्रूयते, ' आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणः, अग्निः सर्वा देवताः, विष्णुर्यज्ञः, देवताश्चैव यज्ञं चारभते, अग्निः प्रथमो देवतानां विष्णुः परमः, यदाग्नावैष्णवमेकादशकपालं निर्वपति देवताश्चैव यज्ञं चोभयतः परिगृह्यावरुन्धे' इति ।

**टुप्**— ( दीक्षणीयाऽऽदीनामपि अस्त्येवारम्भः । नहि अनारब्धानि तानि कर्तुं शक्यन्ते । तस्मात् निमित्तसद्भावात् कर्तव्या आरम्भणीया, इति पूर्वः पक्षः । सिद्धान्तमाह— ) यदि संकल्प आरम्भः, ( स

तावत् ) ज्योतिष्टोमस्य, न दीक्षणीयाऽऽदीनां ( पृथक् ) संकल्पोऽस्ति । अथ औदासीन्यात् प्रच्युतिः ( आरम्भः ) साऽपि तस्यैव, प्रसङ्गेन दीक्षणीयाऽऽदीनाम् । ( अथायमन्यः इत्यादिभाष्योक्तं चोद्यमाह– ) ननु अग्न्यन्वाधानं प्रथमः पदार्थः । ( तत्र स्वयं तावत् परिहरति– ) तदपि तस्यैव, प्रसङ्गेन ( तु ) दीक्षणीयाऽऽदीनाम् । यथा प्रासङ्गिकेषु न ज्योतिष्मती, एवमारम्भणीयाऽपि । ( भाष्योक्तं परिहारमाह – ) न च प्रकृतावपि अग्न्यन्वाधानं प्रथमं, ( किं तर्हि ) पाठेनैव तत् प्रथमं, ( ततोऽपि– ) पूर्वं क्रियमाणं कर्मान्तरं अस्याः ( प्रकृतेः ) प्रथमः पदार्थः प्रणयनम् । तस्य ( अग्न्यन्वाधानस्य ) प्रकृतौ नेयं ( आरम्भणीया ) अङ्गभावेन दृष्टा । अलुप्तोपकाराश्च पदार्थाः प्राप्यन्ते । यथा यूपाञ्जनाज्ये संस्कारा न क्रियन्ते, एवं दीक्षणीयाऽऽदिषु आरम्भणीया ( न कर्तव्या ) । ' अपि च दीक्षणीययैव ज्योतिष्टोमे आरम्भार्थः सिध्यति ' इति अयुक्तोऽयं ( भाष्य– ) ग्रन्थः । ( कथं ? ) पुरुषसंस्कारेण ( संस्कारद्वारेण क्रतोः ) उपकरोति दीक्षणीया ( न तु आरम्भार्थतया ) । न चास्याः वचनमस्ति आरम्भणीयाकार्ये वर्तते दीक्षणीया इति ( चशब्दो हेतौ ) । दीक्षाजननं ( तु ) अस्याः ( प्रयोजनं ) उत्पत्तिवाक्येनैवावगम्यते । ( यस्मात् उत्पत्तौ निर्ज्ञातं पारार्थ्यं ) तस्मात् आग्नावैष्णवस्तुत्यर्थोऽयं अर्थवादः ( ' देवताश्चैव यज्ञं चारभते ' इति ) ।

शा-- **' कर्तव्या चोदकप्राप्तेरिति प्राप्तेऽभिधीयते । अङ्गभूतास्वियं लुप्तद्वारत्वान्न प्रवर्तते ॥ आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते । नारम्भो दीक्षणीयाऽऽदेः प्रधानारम्भसिद्धितः ॥ '**

सोम-- द्वारनिश्चयाभावात् देवताऽऽवाहनस्य बाधेऽपि दीक्षणीयाऽऽदीनामपि अनुष्ठेयतया पृथगारम्भसद्भावेन द्वारनिश्चयात् आरम्भणीयायाः न बाधः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**-- आरम्भणीयेष्टिः दीक्षणीयायाः ( सकाशात् ) निवर्तेत ( दीक्षणीयाऽऽद्यर्थे आरम्भणीया न कर्तव्या इत्यर्थः ), आरम्भद्वारकत्वात्, आरम्भस्य च प्रधानसंयोगात्, अङ्गेषु ( दीक्षणीयाऽऽदिषु ) पृथक् आरम्भाभावात् इति ।

वि-- ' आरम्भणीया सोमाङ्गदीक्षणीयाऽऽदिगा न वा ।, अचोदनादिमो, ऽन्त्यः स्यादारम्भद्वारलोपनात् ॥ '

भाट्ट-- अन्वारम्भणीया किं ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयाऽऽदिषु अतिदेशप्राप्ततया कर्तव्या, उत लुप्तद्वारकत्वात् निवर्तते इति चिन्तायां, ' कर्तृसंस्कारद्वारा दर्शपूर्णमासारम्भाङ्गं इयमिष्टिः ' इति स्थितम् । आरम्भश्च यदि अन्वाधानादिरूपः प्रथमः पदार्थः, यदि वा **वृत्तिकारमतानुसारात्** अध्यवसायरूपः संकल्पः, सर्वथा तस्य दीक्षणीयाऽऽदौ सत्त्वात् कर्तव्यैव अन्वारम्भणीया । **यदि तु** नवमोक्तरीत्या ( ९।१।११ ) अप्रवृत्तप्रवर्तनमेवारम्भः तद्विषयत्वात्तु पदार्थेषु आरम्भशब्दप्रयोगः, तच्च नवमोक्तरीत्यैव दर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंसासमानकालीन– तदवच्छिन्नोद्देश्यताकप्रवृत्ति — विषयत्वं, अन्यस्य नवमोक्तरीत्यैव दुर्वचत्वात् । अत्र पदकृत्यान्यपि तत्रैव बोध्यानि, **तदाऽपि** तस्य दीक्षणीयाऽऽदौ सत्त्वात् अन्यविकृतिषु इव कर्तव्यैव सा । तथाहि, दीक्षणीयाप्रथमप्रयोगवृत्तितदीयपदार्थे अस्ति दीक्षणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वं, ' दीक्षणीया मे जायतां ' इत्याकारकेच्छयैव तद्विषकप्रवृत्तेर्जायमानत्वात्, तदानीं तादृशप्रवृत्त्यन्तरस्य अजातत्वेन उक्तविधध्वंसासमानकालीनत्वाच्च । अतश्च ' दीक्षणीयया यक्ष्ये ' इत्येवंविधतत्संकल्पात् पूर्वमेव कर्तव्या अन्वारम्भणीया । इति प्राप्ते, ' दीक्षणीया मे जायतां ' इत्याकारकेच्छाऽनुत्पत्तावपि ' साङ्गो ज्योतिष्टोमो ( मे ) जायतां ' इत्याकारकेच्छात एव ' दीक्षणीयया यक्ष्ये ' इत्येवंविधसंकल्पविषयकप्रवृत्तेः संभवेन तादृशसंकल्परूपाध्यवसायस्य दीक्षणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात् । सा हि साङ्गत्वप्रकारिका इच्छा, न तु दीक्षणीयात्वप्रकारिका । अतः तज्जन्यप्रवृत्तौ दीक्षणीयात्वावच्छिन्नोद्देश्यताकत्वाभावात् तद्विषयीभूतस्य उक्तविधसंकल्पस्य निरुक्तप्रवृत्तिविषयत्वाभावेन तद्द्वारलोपात् न अन्वारम्भणीया । **अत एव ' साङ्गेन ज्योतिष्टोमेन**

यक्ष्ये ' इत्येवंविधमहासंकल्पविषयकप्रवृत्तेरेव वस्तुतो दीक्षणीयाविषयकेच्छाजन्यतया दीक्षणीयोद्देश्यताकत्वेन तत्संकल्पात् पूर्वमेव दीक्षणीयाऽऽद्यङ्गत्वेन सा कार्या **इत्यपास्तं**, तदिच्छायाः 'साङ्गो ज्योतिष्टोमो मे जायतां' इत्याकारकत्वेन साङ्गत्वेन रूपेण दीक्षणीयाविषयत्वेऽपि दीक्षणीयात्वेन तद्विषयत्वाभावात् । अतो द्वाररूपार्थ-लोपात् न ज्योतिष्टोमारम्भे, न वा दीक्षणीयाऽऽरम्भे, सा कार्या इति सिद्धम् । विस्तरेण च एतदस्माभिः नवमे एव ( ९।१।११ ) निरूपितम् ।

**मण्डन--** ' नारम्भणीयेति च दीक्षणीये । ' ४.

**शंकर--** ' सोमेष्ट्यारम्भवारणम् । ' ४.

**आरम्भणीयायाः दर्शपूर्णमासविकृतिषु सौर्यादिषु पुनरनुष्ठानम् ॥**

**आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् , कृता पुनस्तदर्थेन । १२।२।६।१९ ॥**

( अत्र भापुस्तके सूत्रात् प्राक् अवतरणत्वेन ' अत्राशङ्कते ' इति मुद्रितम् । कलकत्तापुस्तके बिबलकरीयेऽपि च इदमस्त्येव, परंतु पूर्वसूत्रभाष्यान्ते मुद्रितम् । पूर्वसूत्रे च निशीष्टौ इध्माबर्हिः अग्न्यन्वाधानं च कर्तव्यं इत्युक्तम् । तदुत्तरं च आरम्भणीयाविचारः । एवं सति ' अत्राशङ्कते ' इति पदद्वयं पूर्वत्र उत्तरत्र च सर्वथा असंगतमेव । अस्माभिस्तु तत् पदद्वयं त्यक्तमेव । )

**भाष्यं--** वैकृतेषु कर्मसु दार्शपौर्णमासिकारम्भणीया कर्तव्या, उत नेति विचारे न कर्तव्या इत्युच्यते । किं कारणं ? प्रकृतिकालमध्यत्वात् । प्रकृतेः दर्शपूर्णमासयोः कालः ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । तन्मध्ये वैकृतानि कर्माणि पतन्ति । कृता पुनस्तदर्थेन । कृतस्य यावज्जीविकस्य प्रयोगस्यार्थेन आदौ कृता आरम्भणीया । ' सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ' ( ९।१।१०।३५ ) इत्युक्तम् । एवं सैव तेषां प्रसङ्गात् कार्यं साधयिष्यतीति । तस्मात् न तेषु भेदः स्यात् ।

**स्याद्वा, कालस्याशेषभूतत्वात् । २० ॥**

**भाष्यं--** स्याद्वा विकृतिषु आरम्भणीया । कुतः ? चोदकेन प्राप्यते इति । ननु प्रकृतिकालमध्यपातात् प्रसज्यते इत्युक्तम् । न यावज्जीवकालः प्रकृतेः शेषभूतः । कर्तृधर्मोऽसौ इत्युक्तं ' कर्तुर्वा श्रुतिसंयोगात् ' इति ( २।४।१।२ ) । योऽसौ कर्तृधर्मो नियमः, तस्यायं कालः । प्रकृतेस्तु दर्शश्च पूर्णमासश्च कालः । तस्मान्न दर्शपूर्णमासप्रयोगस्य तन्त्रमध्ये पतिता विकृतयः। अतो न तासु आरम्भणीया प्रसज्यते । अन्यथा कृत्वा दोष उक्तः, अन्यथा परिहारः । दार्शपूर्णमासिको यावज्जीवकालः इति कृत्वा दोष उक्तः, नैयमिकः इति परिहारः । पक्षान्तरैरपि परिहारा भवन्ति ।

**आरम्भविभागाच्च । २१ ॥**

**भाष्यं--** विभक्तः प्रकृतिविकृत्योरारम्भः । यदा प्रकृतेरारम्भः, तदा विकृतिरनुत्पन्नैव । सा हि कामेन निमित्तेन वा चोद्यते । अतस्तस्याः प्रकृत्यारम्भे नारम्भः। आरम्भभेदाच्च तन्निमित्ताया आरम्भणीयायाः भेदः स्यात् । तस्मात् स्यात् विकृतिषु आरम्भणीया ।

**सोम---** पूर्ववत् इहापि प्रसङ्गः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु--** आरम्भणीया विकृतौ न स्यात् प्रकृतेर्यावज्जीवं प्रयोज्यतया विकृतीनां तत्कालमध्यपातेन प्रकृत्यर्थे कृताया एव तस्याः विकृतिषु प्रसङ्गसंभवात् इति ।

**वि---** ' आरम्भणीया सौर्यादौ नोत स्या, न्न प्रयोगवत् ।, क्रत्वर्था न प्रयोगार्था क्रत्वारम्भे ततो भवेत् ॥ '

**भाट्ट---** नावमिकाधिकरणोक्तरीत्या आरम्भणीयायाः दर्शपूर्णमासारम्भाङ्गत्वात् विकृतावपि अतिदेशेन तदारम्भाङ्गत्वोपपत्तेः कर्तव्यैव अन्वारम्भणीया । न च तस्याः सकृत् कृताया एव प्रकृतौ सर्वप्रयोगोपकारकत्वात् अन्त्यदर्शपूर्णमासप्रयोगं यावत् एतज्जन्योपकारावस्थानप्रतीतेः तन्मध्यक्रियमाणविकृतिष्वपि उपकारकत्वोपपत्तेः प्रसङ्गसिद्धिशङ्का, अस्याः दर्शपूर्णमासारम्भाङ्गभूतायाः द्वितीयादिप्रयोगानङ्गत्वात् । विस्तरेण चायमर्थो नवमे एव निरूपितः। सर्वप्रयोगाङ्गत्वं वदतां तन्त्ररत्नकारादीनां च मतं निराकृतम् । अतः अन्वारम्भणीयाजन्यस्य उपकारस्य उक्तविधारम्भे कृते एव नाशात् अन्त्यदर्शपूर्णमासप्रयोगं यावत् अवस्थाने प्रयोजनाभावात्

तत्तद्विकृत्यारम्भाङ्गतयाऽपि अन्वारम्भणीया पृथगेव कार्या। **तन्त्ररत्नकारादीनां** तु तस्याः सकृत् कृताया एव सर्वप्रयोगाङ्गत्वं इच्छतां विकृतौ प्रसङ्गापत्तिः अनिवार्यैव ।

**मण्डन**— ' आरम्भणीया विकृतौ ' स्यात् ।

**शंकर**— ' आरम्भणीया विकृतौ । '

**आरम्भणीयायाः राजसूयगतानुमत्यादीष्टौ बाधः ॥**

**प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्तेतानङ्गत्वात् । १०।१।३।५ ॥**

**भाष्यं**— अस्ति राजसूयः ' राजसूयेन स्वाराज्यकामो यजेत ' इति । तत्र इष्टि–पशु–सोम–दर्विहोमाः प्रधानभूताः । ऐष्टिकेषु अनुमत्यादिषु संशयः किं आरम्भणीया कर्तव्या, नेति । किं प्राप्तं ? कर्तव्या । ' विधेः कारणान्तरेऽतिदेशात् सर्वकर्म स्यात् ' ( १०।१।१।१ ) इति । **एवं प्राप्ते ब्रूमः** । प्रधानाच्च अपरप्रधानसंयुक्तात् निवर्तितुमर्हति । कुतः ? सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते 'अग्निष्टोमं प्रथममाहरति ' इति । स प्रकृतानां प्रधानानां एकैकस्य तन्त्रेण समाम्नातो भवितुमर्हति । एकैकस्य हि अत्र प्रधानस्य तन्त्रेण साधारणं प्रकरणम् । तेन अनुमत्यादीनां आरम्भार्थे सिद्धे, न आरम्भणीया भवितुमर्हतीति ।

**टुप्**— ' सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते ' इत्युक्तं ( भाष्ये ) । कथं ? ज्योतिष्टोमः श्रुत्या फलेन संबध्यते । न चोभयार्थता युक्ता विना वचनेन । अनुमानाद्यपि कार्यापत्तिप्रमाणं न विद्यते । तस्मात् अयुक्तं प्रत्याम्नानाभिधानम् । अर्थलोप एव वक्तव्यः । **ननु** ऋत्विग्वरणं सर्वप्रधानार्थं, तत्र प्रधानत्वादिष्टीनां आरम्भणीया भविष्यति । **उच्यते** । तथापि तु अप्राकृतकार्यत्वात् निवृत्तिः, यथा यूपावटबर्हिषि प्रोक्षणस्य ( निवृत्तिः ) ।

**सोम**— **भाष्यकारेण** राजसूयप्रकरणे ' अग्निष्टोममग्रे आहरति ' इत्यारम्भणीयाकार्ये अग्निष्टोमविधानात् प्रत्याम्नानात् बाधः इति सिद्धान्तितम् । तदयुक्तं, उक्तवाक्यस्य क्रमविधिपरतया उपपन्नत्वेन प्रत्याम्नानाभावात् । तस्मात् द्वारलोपादेव बाध इति **वार्तिककारेण** सिद्धान्तितं, तदेव ग्रन्थकारेणापि ( शा. ) उक्तमिति ध्येयम् । **सूत्रार्थस्तु**–सौमिकसंयुक्तात् ऐष्टिकात् प्रधानादपि आरम्भणीया निवर्तेत सर्वारम्भार्थतया अग्निष्टोमस्य विधानेन आरम्भणीयाया अनङ्गत्वात् इति भाष्यकारपक्षे । वार्तिककारपक्षे तु सर्वेषामारम्भस्य साधारण्येन ऐष्टिकासाधारणाङ्गत्वाभावात् इति ।

**वि**—' सा किमस्त्यनुमत्यादौ न वा, ऽग्निचस्त्युपक्रमात् । , संघस्योपक्रमो नेष्टेर्द्वारलोपान्न सा भवेत् ॥ ' सा आरम्भणीया ।

**भाट्ट**— यत्र राजसूयादौ इष्टिपशुरूपाणि प्रधानान्येव अन्यप्रधानसंयुक्तानि, तत्र सत्यपि तेषां प्राधान्ये ' तत्तदिष्ट्या यक्ष्ये ' इत्यादिसंकल्पस्य ' तत्तदिष्टिर्मे जायतां ' इत्याकारकेच्छामन्तरेणापि ' राजसूयो मे जायतां इत्याकारकराजसूयत्वप्रकारकेच्छाजन्यप्रवृत्त्याऽपि उत्पत्तिसंभवेन तत्तदिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात् न ततः पूर्वं तावदारम्भणीया । न वा ' राजसूयेन यक्ष्ये ' इति महासंकल्पात् पूर्वं, तस्यापि राजसूयत्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेन तत्तदिष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावात् । नहि राजसूयत्वं दर्शपूर्णमासनिष्ठप्रकृतितानिरूपितविकृतिताऽवच्छेदकं, तस्य सोमयागेष्वपि सत्त्वेन अतिप्रसक्तत्वात् । अत एव यत्र चातुर्मास्यादौ आग्रयणादौ वा नातिप्रसक्तं चातुर्मास्यत्वादि, तत्र प्रतियागं भिन्नातिदेशकल्पने सत्यपि, तस्य उद्देश्यताऽवच्छेदकत्वे न का चित् क्षतिः । वस्तुतस्तु प्रकृतावपि दर्शपूर्णमासत्वं नोद्देश्यताऽवच्छेदकं अपि तु आग्नेयत्वादिकमेव, कालैक्यात्तु तन्त्रेण करणम् । ' दर्शपूर्णमासाभ्यां यक्ष्ये ' इत्यस्यापि च ' आग्नेयादिभिर्यक्ष्ये ' इत्येवार्थः । ततश्च विकृतावपि चातुर्मास्यादौ तत्तद्यागत्वमेव उद्देश्यताऽवच्छेदकं, कालैक्याच्च तन्त्रेण करणम् । ' चातुर्मास्यैर्यक्ष्ये ' इत्यस्य च ' तत्तद्यागैर्यक्ष्ये ' इत्येवार्थः इति न कश्चित् विरोधः । अतस्तत्र भवत्येव तदारम्भे अन्वारम्भणीया । प्रकृते तु सत्यपि तत्तदिष्टित्वादेः उद्देश्यताऽवच्छेदकत्वे तत्तत्सोमत्वादेरपि उद्देश्यताऽवच्छेदकत्वात् नान्वारम्भणीया । प्रकृतौ हि

'दर्शपूर्णमासावारप्स्यमानः' इत्यनेन दर्शपूर्णमासयोः विशेषणत्वनिर्देशात् अपूर्वसाधनत्वलक्षणावेलायां प्रकृतापूर्वनिष्ठकार्यतानिरूपितकारणताऽवच्छेदकावच्छिन्नत्वे सति निरुक्तकारणताऽनवच्छेदकानवच्छिन्नत्वं उद्देश्यताविशेषणं विवक्षणीयं, अतश्च राजसूये तादृशोद्देश्यताऽभावात् नान्वारम्भणीया। अत एव प्रकृतौ 'अग्निहोत्रं दर्शपूर्णमासौ च मे जायन्ताम्' इत्याकारकेच्छाऽपि नोद्देश्यताघटिका। अन्यथा अग्निहोत्रीयप्रथमप्रयोगीयाद्यपदार्थस्यापि तादृशोद्देश्यताकप्रवृत्तिविषयत्वात् तत्रापि अन्वारम्भणीयाऽऽपत्तेः। अतः तादृगिच्छोत्तरं 'दर्शपूर्णमासौ जायेतां' इत्याकारकेच्छा जायते, सैव उद्देश्यताघटिका इति ध्येयम्।

**मण्डन**— 'न राजसूयेष्टिषु सा च कार्या।' ५.

**शंकर**— 'राजसूयेष्टिष्वप्येवम्।' ५. आरम्भणीयाया वारणम्।

* **आरम्भणीयाऽऽदिविधिः** आतिदेशिककालदेशाद्येकवाक्यताऽऽपन्नः क्रत्वर्थः प्रयोगविधिः। **बाल.** पृ. १३.

* **आरम्भणीयाऽधिकरणम्।** **भा.** ९।१।११।३४, १०।१।४।६.

⌛ **आरम्भणीयान्यायः** (एकः)। आरम्भणीयायां आरम्भणीयाया बाधः ॥

**तस्यां तु स्यात् प्रयाजवत्।** १०।१।४।६ ॥

**भाष्यं**— अस्ति आरम्भणीयेष्टिः 'आग्नावैष्णवमेकादशकपालं निर्वपेद् दर्शपूर्णमासावारप्स्यमानः, सरस्वत्यै चरुं, सरस्वते द्वादशकपालं, अग्नये भगिनेऽष्टाकपालं, यः कामयेत भगी अन्नादः स्यामिति। नित्यवदेके भगिनमामनन्ति' (इति)। तत्र एषोऽर्थः सांशयिकः किं आरम्भणीयायां आरम्भणीया कर्तव्या, उत नेति। किं प्राप्तं? तस्यां तु स्यात्, प्रयाजवत्। संशयनिवृत्त्यर्थे तुशब्दः। न खलु संशयोऽस्ति। आरम्भणीयायां आरम्भणीया भवितुमर्हति। कुतः? 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' (१०।१।१।१) इति। यथा प्रयाजाः एवं आरम्भणीयाऽपि इति। आह, ननु तस्या अपि अर्थे अन्या आरम्भणीया, तस्या अपि अर्थे अन्या आरम्भणीया, तस्या अपि अर्थे अन्या इत्येवं आरम्भणीया न व्यवतिष्ठेत। व्यवस्थितेन च शास्त्रार्थेन भवितव्यम्। **अत्रोच्यते**। सर्वास्वेव अनवस्थासु सामर्थ्येन व्यवस्था भविष्यति।

**टुप्**— समानेऽहनि इति सामर्थ्यम्। (दर्शपूर्णमासार्था हीयं तत्समानकालत्वात् तदहरेव कर्तव्या। तेन तस्मिन्नहनि यावत्कृत्वः प्रयोक्तुं शक्यते, तावत्कृत्वोऽभ्यस्यते, इति नाव्यवस्था इति)।

**न वा, ऽङ्गभूतत्वात्। ७ ॥**

**भाष्यं**— न वा इति पक्षः प्रतिषिध्यते। न स्यादारम्भणीयायां आरम्भणीयेति। कुतः? अङ्गभूता हि सा दर्शपूर्णमासयोः। अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिः इत्युक्तम्। आरम्भणीयाप्रवृत्तेन दर्शपूर्णमासौ कर्तव्यौ। अतः प्रकृतिवत् आरम्भणीयाऽपि आरम्भणीयाप्रवृत्तेन कर्तव्येति। तस्मात् किल आरम्भणीयायां आरम्भणीया स्यात्। तच्च नैवम्। अकृत्वाऽपि अन्यां आरम्भणीयां, आरम्भणीयां कुर्वन् आरम्भणीयाप्रवृत्तः एव करोतीति गम्यते। तस्मात् न आरम्भणीयायां आरम्भणीया स्यात्। अपि च जलबुद्बुदवत् अव्यवस्था आरम्भणीयायां वाक्येन गम्यमाना सामर्थ्येन बाध्येत। अस्मत्पक्षे न अव्यवस्था, न बाधः। तस्मात् न आरम्भणीयायां आरम्भणीयेति।

**टुप्**— अङ्गभूता हि सा दर्शपूर्णमासयोः, अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिः (इति भाष्यम्)। यद्येवं दीक्षणीयादिवत् मन्यसे, तन्न। कस्मात्? दर्शपूर्णमासप्रयोगात् बहिः आरम्भणीया क्रियते, न तु तथा दीक्षणीयादि। तस्मादयुक्तमेतत्। अङ्गं चेयं कथंभावपरिपूर्णा आरम्भणीया विधीयते। सा च दर्शपूर्णमासधर्मानाकाङ्क्षति। तौ च प्राक् विधानात् आरम्भणीयाशून्यौ।

**एकवाक्यत्वाच्च। ८ ॥**

**भाष्यं**— इतश्च पश्यामः एवमेवेति। कुतः? एकं हीदं वाक्यं यदा आरम्भणीयां विदधाति, तदा नासौ दर्शपूर्णमासयोर्विहिता। तामविहितामिव दर्शपूर्णमासयोः विदध्यात्। विहितामिव च आरम्भणीयायां

अतिदिशेत् । नैतत् कर्तुमलं भवति सकृदुच्चरितम् । तस्मादपि आरम्भणीयायां आरम्भणीया नास्ति ।

**सोम**— इह स्वार्थतया पृथगारम्भसंभवात् कर्तव्या इत्युत्थितेः **संगतिः । सूत्रार्थस्तु** तस्यामारम्भणीयाया सा स्यात् प्रयाजादिवत् इति ।

**वि**— ' तस्यां साऽस्ति न वा, ऽङ्गत्वे-ऽप्यस्याः पृथगुपक्रमात् । अस्ति, मैवं वचोऽशक्ते-र्विधाने चातिदेशने ॥ '

**भाट्ट**— अन्वारम्भणीयायां सत्यपि दर्शपूर्णमास-प्रयोगबहिर्भावे नैव अन्या अन्वारम्भणीया कार्या । ' अन्वारम्भणीयेष्ट्या यक्ष्ये ' इति संकल्पस्य ' साङ्गौ दर्शपूर्णमासौ मे जायेताम् ' इत्याकारकेच्छाजन्यप्रवृत्त्या-ऽपि उत्पत्तिसंभवेन अन्वारम्भणीयात्वावच्छिन्नोद्देश्य-ताकप्रवृत्तिविषयत्वाभावात् । अत एव वैमृधे चातु-र्मास्याद्यङ्गभूतवैश्वानरपार्जन्याधिकारपदवादौ पवमानेष्टि-ष्वपि च नान्वारम्भणीया । अन्वारम्भणीयायां तु तृती-योक्तपवमानेष्टिन्यायेनापि नान्वारम्भणीया । एवं वैमृधे-ऽपि न वैमृधः ।

**मण्डन**— ' स्वारम्भकाले न च तां प्रकुर्यात् । ' स्वं आरम्भणीया । ६.

**शंकर**— ' आरम्भेष्टिर्न चात्मनि । ' आत्मनि आरम्भणीयायाम् । ६.

**आरम्भणीयान्यायः** ( द्वितीयः ) । दर्शपूर्णमासा-वृत्तावपि आरम्भणीयायाः आदौ सकृदेवानुष्ठानं, न तु प्रत्यावृत्ति ॥

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया । ९।१।११।३४ ॥**

**भाष्यं**— स्तो दर्शपूर्णमासौ ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति । तत्र आरम्भणीयेष्टिः समाम्नाता ' आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्यै चरुं, सरस्वते द्वादशकपालं, अग्नये भगिनेऽष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामिति, नित्यवदेके भगिनमामनन्ति ' ( इति ) । आवृत्तिश्च दर्शपूर्णमासयोः श्रूयते ' याव-ज्जीवं दर्शपूर्णमासाभ्यां यजेत ' इति । तत्र इष्ट्यावृत्तौ संदेहः किं आरम्भणीयाऽपि आवर्तेत, नेति । किं प्राप्तं ? आवर्तेत इति । असकृदेव कर्तव्येति । कुतः ? एवं प्रयोगवचनः अनुगृहीतो भविष्यति । प्रयाजवत् । यथा अङ्गभूताः प्रयाजा आवर्तन्ते एवं अङ्गभूता आरम्भणीयाऽपि आवर्तेत ।

**टुप्**— ' अपि वाऽप्येकदेशे स्यात् ' ( ६।३।१।२ ) इति ( सर्वशक्त्यधिकरणे ) यावज्जीविके-ऽपि प्रयोगे इतिकर्तव्यता भवतीत्युक्तम् । तत्र प्रथम-पदार्थद्वारेण श्रूयमाणा ( दर्शपूर्णमासयोः ) अङ्गं आर-म्भणीया ( इत्यसंदिग्धम् । सा— ) किं प्रतिप्रयोगं कर्तव्या, उत सर्वप्रयोगाणां सकृत् ( इति चिन्त्यते ) । किं ( तावत् ) युक्तं ? प्रतिप्रयोगं कर्तव्या ( इति ) । कुतः ? इतिकर्तव्यता प्रयोगाङ्गम् । प्रयोगस्य ( च ) भेदः ( आवृत्तिः ) । तस्मात् ( प्रयोगावृत्तौ आरम्भणी-याऽपि ) आवर्तेत ।

**सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो याव-ज्जीवप्रयोगात् । ३५ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, यदुक्तं ' आरम्भणीया आवर्तेत ' इति । सकृदेव कर्तव्या । कुतः ? आरम्भसंयोगात् दर्शपूर्णमासयोः आरम्भेण संयुज्यते । साधारणश्च सर्वेषां प्रयोगाणा-मारम्भः । कथं ? अग्नीनाधाय सर्वं संकल्पयति, पर्वणि-पर्वणि मया दर्शपूर्णमासौ कर्तव्यौ इति । एवं चाध्य-वसाय दर्शपूर्णमासौ कर्तव्यौ इति आरम्भणीया क्रियते । एष एवास्य आरम्भो यदध्यवसानं नाम । तच्च साधा-रणं सर्वेषां प्रयोगाणां यावज्जीवप्रयोगात् । अथापि प्रथमं प्रवर्तनं आरम्भः, तथापि प्रथमप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्ति । तस्मात् सकृत् आरम्भणीया कर्तव्येति ।

**टुप्**— सकृत् वा कर्तव्या । कुतः ? आधानं कृत्वा सर्वः संकल्पयति ' मया यावज्जीवं दर्शपूर्णमासौ कर्तव्यौ आगतेआगते काले ' ( इति ) स च ( संकल्पः ) सर्वेषां प्रयोगाणां अगृह्यमाणविशेषत्वात् साधारणः । संकल्पश्च पूर्वां ( औदासीन्यरूपां ) अवस्थां बाधमानः अध्यवसानं ( ' इदमहं कुर्वे ' इति एवंविधं ) भवति । अध्यवसानं च पदार्थः ( आरम्भपदस्यार्थः ) । तच्च सर्वेषां साधारणं इत्युक्तम् । तस्मात् सकृत् ( कर्तव्या ।

पक्षान्तरं निगदव्याख्यातेन भाष्येण दर्शयति— ) अत्र ( भाष्य— ) ग्रन्थः ' अथापि प्रथमं प्रवर्तनं ( अग्न्यन्वाधानं ) आरम्भः, तथापि प्रथमप्रवृत्तेन ( इति भाष्यमूले पाठः । आरम्भणीयाप्रवृत्तेन इति टुप्—रत्नयोः भाष्यपाठः ) सर्वे प्रयोगाः कृता भवन्ति इति ।

( भाष्यकारेण पुनर्व्याख्यानान्तरं कृतं पूर्वत्रापरितोषात् । तमपरितोषं दर्शयन् वार्तिककारः पूर्वव्याख्यानं दूषयति— ) नैतद्युक्तम् । कालो नाम निमित्तं ( कर्मणः, तेन ) स कर्म प्रयोजयति । प्राक् पौर्णमासीकालात् कर्म न प्रयुज्यते, निमित्ताभावात् । तत् ( च निमित्तं ) एकं ( एव ) प्रयोगं प्रयोजयति ( न प्रयोगान्तरम् ) । पुरुषश्च पूर्वावस्थां ( औदासीन्यं ) उज्झित्वा तत एव ( निमित्तात् ) संकल्पमध्यवसानं वा करोति । तच्च ( अध्यवसानादि ) एकस्य ( एव प्रयोगस्य ) न द्वितीयादेः ( निमित्ताभावात् ) । अपि च इतिकर्तव्यता प्रयोगेण प्रयुज्यते, न कर्मणा ( कर्मस्वरूपेण ) । प्रयोगभेदाच्च भेदः ( इतिकर्तव्यतायाः ) । यदि च कर्मणा प्रयुज्येत, तथा सति प्रयाजानामपि कर्मैकत्वात् सकृदेव प्रयोगः स्यात् । न चैतदिष्टम् । **यदुक्तं** आधानं कृत्वा सर्वः संकल्पयति, पर्वणिपर्वणि मया दर्शपूर्णमासौ कर्तव्यौ ( इति ) । स च ( संकल्पः ) सर्वप्रयोगाणामगृह्यमाणविशेषत्वात् इति । **अत्रोच्यते** । सर्वप्रयोगाणां संकल्प एव न प्राप्नोति, निमित्ताभावादित्युक्तम् । ( ननु आधानानन्तरं सर्वसाधारणः संकल्पो भवन् नापह्नोतुं शक्यते, अत आह— ) विद्वांश्च अविक्रियते । स च जानाति ' नित्यानि मया कर्तव्यानि, काम्यानि च फलार्थिना ( यदि फलार्थी भविष्यामि ' इति ज्ञानमात्रं तदा भवति, न तु तदैवं संकल्पयति ) । योऽसौ अस्य पुरुषस्य आधानादुत्तरकालं संकल्पः ( इति त्वयोच्यते ) स संकल्प इव, न ( परमार्थतः ) प्रयोगाङ्गम् । तस्मात् इदमशोभनं ( व्याख्यानम् ) । अतः ( भाष्यकारेण व्याख्यानं ) अन्यत् क्रियते ।

( अन्यत् व्याख्यानमाह— )

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया । ९।१। ११।३४ वर्णकं २ ॥**

( एवं वृत्तिकारमतेन अधिकरणं व्याख्याय तत्रापरितोषात् व्याख्याऽन्तरं क्रियते । **शा.** )

**भाष्यं**—एवं वा । यस्तु प्रथमः पदार्थ आरम्भ इति, तत्रैष संशयः किं दर्शपूर्णमासयोः आरभ्यमाणयोः आरम्भणीया प्रथमं पदार्थं सम्यञ्चं करोति, उत पुरुषस्य आरभमाणस्य प्रथमं दर्शपूर्णमासयोः प्रवर्तमानस्य आरम्भणीया कर्तारं आरम्भणयोग्यं करोति । किं प्राप्तं ? दर्शपूर्णमासयोः प्रकरणात् तयोः आरम्भे स्यात् । पुरुषसंबन्धे फलं कल्पयितव्यम् । तस्माद्दर्शपूर्णमासारम्भे । एवं चेत् आरम्भभेदात् इष्ट्यावृत्तौ प्रत्यारम्भं स्यात् । यथा प्रयोगावृत्तौ प्रयाजाः ।

**टुप्**— ' दर्शपूर्णमासावारप्स्यमानः ' इति शानच् कर्तारमभिधत्ते, तत्र संशयः किमारम्भशब्दः दर्शपूर्णमासाद्यं पदार्थं ( अग्न्यन्वाधानाख्यं ) अभिधत्ते, उत ( दर्शपूर्णमासयोः ) अप्रवृत्तस्य ( पुरुषस्य ) प्रवर्तनं ( आरम्भशब्दोऽभिधत्ते इति । तत्र ) पूर्वपक्षवादी मन्यते, यद्यपि अयं ( शानच् ) कर्तारमभिदध्यात्, तथापि फलकल्पनाभयात् आरम्भणीया न पुरुषार्था, किंतु क्रत्वर्था । ( पुरुषार्थत्वे हि फलं कल्पयितव्यं स्यात् ) क्रत्वर्था चेत् प्रतिप्रयोगमावर्तेत ( इति ) ।

**सकृद् वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् । ३५ ॥**

**भाष्यं**— सकृत् वा भवितुमर्हति । कुतः ? पुरुषारम्भसंयोगात् । पुरुषे दर्शपूर्णमासौ आरभमाणे विधीयते । कुतः ? निर्वपेत् इति हि श्रुत्या कर्तृसंबन्धः क्रियते । तत्र पुरुषप्रयत्नवचनं विवक्षितस्वार्थं भवति । इतरथा पदार्थमात्रे विधित्सिते कर्तुः प्रयत्नवचनं अविवक्षितं स्यात् । प्रयोगवचनप्राप्तमेव अनूद्यते । यत्तु कर्तृसंबन्धे फलं कल्पयितव्यं, तन्न कल्पयिष्यते । कृतारम्भणीयाकः पुरुषः प्रयोगवचनेन ग्रहीष्यते । एवं चेत् एकस्मिन्नेवारम्भे कृतारम्भणीयाके कृते पुरुषे तन्त्रप्रयोगात् यावज्जीवं प्रयोगे कृतारम्भणीयाकः पुरुषो भवति । प्रथमं दर्शपूर्णमासौ आरभमाणः कृतारम्भणीयाको जातः । द्वितीयादिष्वपि प्रयोगेषु दर्शपूर्णमासौ आरप्स्यमानः कृतारम्भणीयाको जात इति योग्य एव भविष्यति ।

**अथोच्यते**, समानेऽहनि आरप्स्यमान इति भवति । न च द्वितीयादिषु प्रयोगेषु समानेऽहनि कृतारम्भणीयाकः असौ इति । **अत्रोच्यते**। द्वितीयादिष्वपि प्रयोगेषु समाने एवाहनि दर्शपूर्णमासौ आरप्स्यमानः असौ कृतारम्भणीयाको जातः इति योग्य एव भविष्यति ( तस्मात् सकृदेव आरम्भणीया ) ।

टुप्-- सिद्धान्तस्तु– दर्शपूर्णमासारम्भयोग्यं पुरुषं कुर्वती ( आरम्भणीया ) क्रतुना गृह्यते । अपि च यः ( आरप्स्यमानः इति ) शानचा पुरुषः उपात्तः, तस्य विगरिवर्तमानस्य ( निर्वपेत् ) इत्यनेन आरम्भणीया श्रुत्या ( शानचा ) प्रतिपाद्यते । इतरथा ( यदि केवलक्रत्वर्था आरम्भणीया) शानच् अनर्थकः स्यात् । ( कथं ? ) निर्वपेत् इति उच्चारितेऽपि आरम्भणीया क्रत्वर्था भवत्येव । (कथमित्याह–) महाप्रयोगवचने (दर्शपूर्णमासाभ्यां यजेत इत्यत्र ) यो भाववचनः, तेन विधानं ( ग्रहणं ) भविष्यति ( प्रकरणात् । प्रकृते किमायातं तदाह– ) सा च बहिः ( प्रयोगात् ) क्रियमाणा पुरुषमारम्भयोग्यं करोति । तस्य च ( आरम्भस्य ) एकत्वात् न ज्ञायते अस्यायं ( पुरुषः ) प्रयोगस्य योग्यः, अस्य नेति अगृह्यमाणविशेषत्वात् सर्वप्रयोगाणाम् । यदि च ( दर्शपूर्णमास– ) तन्त्रमध्ये क्रियेत, तथा सति यस्य ( प्रयोगस्य ) तन्त्रं, तस्यैव योग्यं करोति, नान्यस्य इति ( गम्येत विशेषः, न चैवमस्ति । अगृह्यमाणविशेषत्वात्तु सकृत् कृतैव सर्वेषामुपकरोति इति नावर्तनीया ) । **ननु** लटः समानेऽहनि उत्पद्यमानत्वात् यस्यैव ( प्रयोगस्य ) समानेऽहनि आरम्भणीया क्रियेत, तस्यैव पुरुषं योग्यं करोति इति गृह्यते विशेषः । **उच्यते**। तत्र **भाष्यकारस्तावत्** इदं चोद्यं ' द्वितीयादिष्वपि प्रयोगेषु समाने एवाहनि दर्शपूर्णमासावारप्स्यमानोऽसौ कृतारम्भणीयाको जातः, इति योग्य एव भविष्यति ' इत्यनेन ग्रन्थेन निराकरोति । **वयं तु** अन्यथा निराकुर्मः । समानेऽहनि चोद्यते इत्येतत् न क्षम्यते । भविष्यत्कालसामान्ये अयं ( लट् ) उत्पद्यते । **ननु** लुटा अनद्यतनभविष्यत्कालोत्पन्नेन अयं बाध्यते । ( अतः अद्यतने एव भविष्यति ) । **उच्यते**। नैतत् युक्तम् । यदि तु लुट् अनद्यतने विधीयमानः लृटं अबाधमानः आम्नानं न लभेत, ततो बाधेनापि । अद्यतनबाधमानोऽपि लभते एव ( आम्नानम् ) तस्मान्न बाधते । तस्मात् लृट् अनद्यतने अद्यतने च, लुट्प्रत्ययस्तु अनद्यतने एव । ( यदि च अद्यतने एव लृट् स्यात्, ततः भविष्यच्छब्दोऽपि लृडन्तत्वात् अद्यतने एव प्रयुज्येत, तत्र ' भविष्यति अनद्यतने ' इति सामानाधिकरण्यं न स्यात् ) न च ' सोमेन यक्ष्यमाणोऽग्नीनादधीत ' इत्यनेन एतत् तुल्यं, तत्र आधानं कृत्वा सोमेन अन्यैश्च ( क्रतुभिः) यक्ष्यते, ( तत्र ) ' सोमेन यक्ष्यमाणोऽग्नीनादधीत ' इति यदि एतत् ( वाक्यं ) आनन्तर्यं न कुर्यात्, ततोऽनर्थकमेव स्यात् । तस्मादनेन आनन्तर्यं विधीयते । यद्यपि लृट् सामान्येनोत्पन्नः, तथापि सोमाधानानन्तर्यसामर्थ्यात् ( लक्षणया ) अद्यतने कल्प्यते प्रमाणान्तरवशात् । इह तु नास्ति प्रमाणं येन अद्यतने कल्प्येत । तस्मात् सामान्येनोत्पद्यते । ( तेन समाने अहनि इत्यत्र प्रमाणाभावात् बहिःप्रयोगं क्रियमाणा आरम्भणीया सकृत्कृतैव अगृह्यमाणविशेषत्वात् सर्वप्रयोगाणामुपकरिष्यति इति नावर्तयितव्या । अत्यारुच्या अन्यथा वक्तव्यमिति मत्वा आह– ) **अथवा** दर्शपूर्णमासौ ( आरम्भणीयायां ) निमित्तभूतौ श्रूयेते आरम्भसंयुक्तौ । तत्र ( अङ्गित्वात् ) समानेऽहनि दर्शपूर्णमासौ आरम्भणीयासंयुक्तौ कर्तव्यौ ( प्रारब्धव्यौ ) एवं ( आरम्भद्वारेण ) आरम्भणीयां प्रथमः प्रयोगः अपेक्षते द्वितीयश्चैवम् । तत्र बहिः ( प्रयोगात् ) क्रियमाणायां योऽसौ ( दर्शपूर्णमास– ) आरम्भाद्यतनकालः ( यस्मिन् आरम्भणीया कृता ), स सर्वेषु ( प्रयोगेषु ) विद्यते । ( कथमित्याह–) किं ( दर्शपूर्णमासौ ) आरभमाणेन आरम्भणीया अद्यतने न कृता, येन पुनः क्रियेत । न च प्रयोगः अद्यतनेन अपेक्षितः, दर्शपूर्णमासशब्दश्रवणात् ( दर्शपूर्णमासारम्भाङ्गतया हि इयं श्रूयते, न प्रयोगारम्भाङ्गतया ) । तस्मात् ( आरम्भैक्यात् तद्द्वारेण सकृत् कृतैव सर्वप्रयोगाणामुपकरिष्यति इति ) सकृत् कर्तव्या । एवं च काम्ये नैव क्वचित्, प्रयोगमात्रभेदात् ( कर्मणो भेदाभावात् ) ।

शा—'आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया। दर्शाद्यङ्गमियं तस्मादावर्तेत प्रयाजवत्॥' उच्यते। 'आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः। तस्य साधारणत्वेन साऽपि साधारणी भवेत्॥'

द्वितीये वर्णके तु-'पुरुषार्थत्वपक्षेऽपि फलक्लृप्तिः प्रसज्यते। तेनान्वाधानशेषः स्यात् स ह्यारम्भोऽनयोर्यतः॥ तस्यावृत्तौ तदङ्गत्वादेषाऽप्यावृत्तिमश्नुते। प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते॥ न खल्वारम्भशब्देन पदार्थः कश्चिदुच्यते। यदेव ह्यप्रवृत्तस्य कर्तुराद्यं प्रवर्तनम्॥ तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः। आरप्स्यमानशब्दस्तत्कर्तुः श्रुत्यैव वाचकः। लट्प्रत्ययोऽपि श्रुत्यैव तदर्थस्याभिधायकः। आद्या प्रवृत्तिरेकैव, बह्वयो नैकस्य कर्मणः॥' तस्मादारम्भणीया नावर्तते।

सोम—आरम्भप्रसङ्गात् चिन्ता इति संगतिः। 'दर्शपूर्णमासावारप्स्ये, ताभ्यां यावज्जीवं यक्ष्ये' इति याज्ञिकोक्तः संकल्पो न न्यायमूलकः।

वि— वृत्तिकारमते 'प्रतिप्रयोगमारम्भयजिरस्ति न वा ऽस्त्यसौ। अङ्गत्वेन, न तत्सर्वधर्मं आधानवद् भवेत्॥' भाष्यमते 'अन्वाधानाङ्गमारम्भो यद्वा पुरुषसंस्कृतिः। फलवत्त्वादादिमो, ऽन्त्यः पुंयोगान्न पृथक् फलम्॥'

भाट्ट—दर्शपूर्णमासयोः 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपेत्' इति श्रुतम्। तत्र न तावदियं प्रकरणात् प्रयाजादिवत् साक्षात् क्रत्वर्था, 'दर्शपूर्णमासावारप्स्यमानः' इति पदद्वयवैयर्थ्यापत्तेः। नापि वक्ष्यमाणे आरम्भे निमित्ते भेदनहोमादिवत् नैमित्तिकी, क्रियाऽर्थायां क्रियायां उपपदे विहितेन लट्प्रत्ययेन अस्या आरम्भार्थत्वप्रतीतेः इति तावदविवादम्। आरम्भशब्दार्थश्च उद्देश्यकोटिप्रविष्टः कः इति चिन्त्यते। प्रतिप्रयोगं आवृत्त्यनावृत्ती तु सूत्रकाराद्युक्ते अपि फलं, इति न इह अधिकरणशरीरं, एकादशोपयुक्तत्वेन ऊहानुपयुक्तत्वात्। तत्र अग्न्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासारम्भत्वप्रसिद्धेः अग्न्यन्वाधानमेव तत्त्वेन आरम्भपदार्थः। तदर्था च अन्वारम्भणीया तत्कार्यप्रयुक्ता, न तु प्रथमपदार्थत्वेन रूपेण प्रथमपदार्थाङ्गं, येन पूर्ववत् अग्न्यन्वाधानरहितायां विकृतौ आरम्भाङ्गतया ऊह्येत। न च अन्वाधानस्यापि अप्रवृत्तप्रवर्तनविषयत्वेनैव आरम्भपदवाच्यता, न अन्वाधानत्वेन, इति कथं न पूर्वाधिकरणविषयत्वं इति वाच्यम्। अन्वाधाने दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य बाधितत्वात्। तथाहि, दर्शपूर्णमासविषयकप्रवृत्तिसामान्याभाववतः पुरुषस्य या दर्शपूर्णमासविषयिणी प्रवृत्तिः, तद्विषयत्वं तत्, न तु निरुक्तपुरुषस्य यत्किंचिद्विषयप्रवर्तनविषयत्वं, तस्य आधानभोजनादावपि सत्त्वेन अतिप्रसक्तत्वात्। अतश्च निरुक्तपुरुषनिष्ठदर्शपूर्णमासविषयककृतिविषयत्वं दर्शपूर्णमासयोरेव नान्वाधाने, अङ्गप्रधानभेदेन तत्तद्विषयककृत्योर्भेदात्। न तु अत्र दर्शपूर्णमासकरणिका भावना श्रुता 'ता उपांशु कर्तव्याः' इतिवत् द्वितीयानिर्देशेन दर्शपूर्णमासकर्मककृतेरेव आरम्भपदार्थघटकत्वस्य त्वया वाच्यत्वात्। अतः अन्वाधाने तस्य बाधात् याज्ञिकप्रसिद्ध्या रूढिरेव तत्र आरम्भपदस्य। द्वितीया च षष्ठ्यर्था, स तु अनुवादः। ततश्च तदर्था च आरम्भणीया न तद्रहितायां विकृतौ ऊहितव्या। अतः अन्वाधानस्य प्रतिदर्शपूर्णमासप्रयोगमावृत्तेः आवर्तनीया। इति प्राप्ते, वृत्तिकारेण तावत् एवं सिद्धान्तितं, न अग्न्यन्वाधानं आरम्भपदार्थः, तदभावेऽपि 'देवताश्चैव यज्ञमारभन्ते' इति ज्योतिष्टोमेऽपि आरम्भशब्दप्रयोगात्। किंतु 'इदं मया कर्तव्यं' इतिसंकल्पापरपर्यायः अध्यवसायविशेषः। तदर्था अन्वारम्भणीया अन्वाधानरहितायामपि विकृतौ सत्त्वात् कर्तव्यैव। प्रकृतौ च आधानोत्तरं सर्वयावज्जीविकप्रयोगाणां सकृदेव संकल्पकरणात् सकृदेव अन्वारम्भणीया इति। तन्न। तत्तत्कालावस्थिततत्तज्जीवनाख्यनिमित्तवशेन तत्तन्नैमित्तिकसर्वयावज्जीविकप्रयोगाणां तत्तत्काले एवोपस्थितत्वेन अध्यवसायापत्तौ सर्वसाधारणाध्यवसाये प्रमाणाभावात्। तत्र यथैव एकस्मिन् पुत्रे जाते वैश्वानरीं निरुप्य पुत्रान्तरजन्मनि पुनर्निर्वापे नाध्यवसायैक्यं, तद्वत् इहापि अध्यवसायभेदात् सकृत्करणानापत्तिः। तस्मादेवं भाष्यकारादिभिः सिद्धान्तितं, न अध्यवसायवाची

आरम्भशब्दः । तत्रापि अप्रवृत्तप्रवर्तनविषयत्वेनैव आरम्भशब्दप्रयोगात् । अतः अप्रवृत्तप्रवर्तनमेव आरम्भः । तद्विषयत्वात्तु पदार्थेषु आरम्भशब्दप्रयोगः । अतस्तदर्था अन्वारम्भणीया । साऽपि न साक्षात्, अपितु यानत्वा कर्तुरुपात्तत्वात् जञ्जभ्यमानवत् कर्तारं आरम्भयोग्यं करोति इति तद्–द्वारा आरम्भार्था । **यद्यपि** च दर्शपूर्णमासौ इति द्वितीयायाः विषयार्थकत्वात्, दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य च दर्शपूर्णमासाख्यप्रधानस्यैव संभवात्, ततः पूर्वं प्रयोगमध्ये एव अन्वारम्भणीया अनुष्ठेया इत्यर्थः 'दर्शपूर्णमासावारप्स्यमानः' इत्यस्य प्राप्नोति । **तथापि** उक्तार्थस्य पाठादेव प्राप्तेः पदद्वयवैयर्थ्यप्रसङ्गेन द्वितीया उद्देश्यत्वपरा । तेन अङ्गविषयप्रवृत्तेरपि प्रधानोद्देश्यकत्वाविघातात् दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वं तत्प्रथमप्रयोगीयाद्यपदार्थे एव इति तदङ्गं आरम्भणीया । तथाहि, उक्तविधप्रवर्तनविषयत्वं दर्शपूर्णमासोद्देश्यकप्रवृत्तिध्वंसासमानकालीनतदुद्देश्यकप्रवृत्तिविषयत्वम् । तच्च न दर्शपूर्णमासीयप्रथमप्रयोगाद्यपदार्थभिन्ने संभवति । तदितरस्य सर्वस्य तदुद्देश्यकस्य तादृशध्वंससमानकालीनत्वात् । अतश्च दर्शपूर्णमासपदे अपूर्वसाधनत्वलक्षणायां तत्पदार्थरहितायां तादृशप्रथमप्रयोगीयाद्यपदार्थान्तरवत्यां विकृतौ ऊहितव्यैव आरम्भणीया । लट्श्रुत्या च तादृशप्रथमपदार्थप्रागभावविधानात् प्रयोगबहिर्भावसिद्धिः । द्वितीयादिप्रयोगे च उक्तविधधर्मावच्छिन्नपदार्थाभावात् अकरणम् ।

अत्र हि दर्शपूर्णमासयोः न तत्तद्व्यक्तित्वेन प्रवृत्तिं प्रति उद्देश्यता, येन तद्-व्यक्तित्वावच्छिन्नोद्देश्यकप्रवृत्तिध्वंसासमानकालीनतद्व्यक्त्युद्देश्यकप्रवृत्तिविषयत्वात् द्वितीयप्रयोगीयाद्यपदार्थाङ्गत्वेनापि सा स्यात् । दर्शपूर्णमासौ इति श्रवणात्तु दर्शपूर्णमासत्वमेव उद्देश्यताऽवच्छेदकम् । आवश्यकी च उभयत्रापि प्रवृत्तिनिरूपितोद्देश्यताऽवच्छेदकविवक्षा, इतरथा सामान्यतो 'विहितक्रिया मे जायतां' इत्याकारकोद्देश्यतायाः गङ्गास्नानप्रवृत्तावपि दर्शपूर्णमासोद्देश्यकप्रवृत्तित्वसत्त्वात् तत्रापि आरम्भणीयाऽऽपत्तेः । अतो दर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंसासमानकालीनतदवच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेनैव प्रथमपदार्थस्य उद्देश्यता । अत्र सामान्याकारकेच्छायां गङ्गास्नानानुष्ठानोत्तरं आद्यदर्शपूर्णमासप्रयोगेऽपि अन्वारम्भणीया न स्यात्, अतः प्रथमावच्छेदकविवक्षा । दर्शपूर्णमासाकरणेऽपि उक्तविधेच्छया गङ्गास्नानकरणे तदापत्तेः द्वितीयावच्छेदकविवक्षा । वस्तुतस्तु 'दर्शपूर्णमासौ मे जायेतां' इत्याकारकेच्छया गङ्गास्नानकरणेऽपि तदापत्तिवारणार्थं यस्मिन् पदार्थे संकल्पादिरूपे कृते दर्शपूर्णमासौ आरब्धौ इति व्यवहारः तत्पदार्थप्रवृत्तेरेव उद्देश्यताऽवच्छेदककोटिप्रवेशस्य आवश्यकत्वे, तत एव उक्तस्थलेऽपि वारणसिद्धेः, तत्तद्व्यक्तित्वादेः उद्देश्यताऽवच्छेदकत्ववारणार्थमेव अवच्छेदकविवक्षा । अत एव तत्पदार्थस्य उक्तरूपेणैव आरम्भत्वात् न द्वितीयादिप्रयोगे अन्वारम्भणीया ।

**ननु** एवं 'साङ्गेन ज्योतिष्टोमेन यक्ष्ये' इत्येवंविधसंकल्पविषयकप्रवृत्तेः दीक्षणीयात्वावच्छिन्नोद्देश्यकप्रवृत्तित्वे ततः पूर्वं अन्वारम्भणीयाऽऽपत्तिः । यदि तु उद्देश्यतायाः तत्र 'साङ्गो ज्योतिष्टोमो जायतां' इत्येवमाकारकेच्छाविषयविशिष्टवृत्तित्वेन विशिष्टधर्मावच्छिन्नत्वात् नोक्तप्रवृत्तित्वं इत्याशङ्क्येत, ततः 'दीक्षणीयया यक्ष्ये' इत्येवंविधावान्तरसंकल्पात् पूर्वं अन्वारम्भणीयाकरणापत्तिः, तस्य निरुक्तप्रवृत्तिविषयत्वात्, अवान्तरसंकल्पविषयप्रवृत्तेः 'दीक्षणीया मे जायतां' इत्येवमाकारकेच्छाजन्यत्वेन दीक्षणीयात्वावच्छिन्नोद्देश्यकत्वात् । एवं राजसूयगतेष्टिपशुबन्धादिष्वपि अन्वारम्भणीयाऽऽपत्तिः, **इति चेन्न** । 'दीक्षणीया जायतां' इत्याकारकेच्छाऽनुत्पत्तावपि 'साङ्गो ज्योतिष्टोमो जायतां' इत्याकारकसाङ्गत्वराजसूयत्वप्रकारकेच्छात एव 'दीक्षणीयया यक्ष्ये' इत्येवंविधसंकल्पविषयकप्रवृत्तेः संभवेन तादृशसंकल्परूपाध्यवसायस्य दीक्षणीयात्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वाभावेन द्वारलोपादेव दीक्षणीयाऽऽदौ राजसूयगतेष्टिपशुबन्धादौ च अन्वारम्भणीयाऽभावस्य दशमे (१०।१।२।४) वक्ष्यमाणत्वात् । एवं 'सोमो मे जायतां' इत्याद्याकारकेच्छात एव सोमाद्यसंभवे वैश्वानरेष्ट्यादौ प्रवृत्तिसंभवात् 'वैश्वानरेष्ट्या यक्ष्ये' इति संकल्पस्यापि वैश्वानरेष्टित्वावच्छिन्नोद्देश्यताकप्रवृत्तिविषय-

त्वाभावेन द्वारलोपादेव न तत्रापि अन्वारम्भणीया इति द्रष्टव्यम् । दर्शपूर्णमासत्वं तु 'साङ्गौ दर्शपूर्णमासौ जायेतां' इत्याकारकेच्छायां प्रकारत्वात् भवति उद्देश्यताऽवच्छेदककोटिप्रविष्टं इति विशेषः । अतः सिद्धं अन्वारम्भणीयायाः उक्तविधारम्भाङ्गत्वात् विकृतौ ऊहः । द्वितीयादिप्रयोगे च अनङ्गत्वमिति ।

यत्तु मूले प्रथमप्रयोगारम्भे क्रियमाणा अन्वारम्भणीया सर्वप्रयोगाणामुपकरोति । न च आरप्स्यमानः इति अद्यतनकालवाचिलृट्प्रत्ययप्रयोगात् प्रधानदिनकर्तव्यत्वावगतेः कथं सर्वप्रयोगोपकारकत्वं इति वाच्यम् । अद्यतनानद्यतनसाधारणभविष्यत्कालमात्रवाचिलृटः अद्यतनमात्रकालवाचित्वाभावात्, इतरथा 'भविष्यति अनद्यतने लुट्' इत्यत्र 'भविष्यति' इति लृट्प्रत्ययप्रयोगानुपपत्तेः । अतः प्रथमप्रयोगारम्भे कृतैव सर्वेषामुपकारिका इत्युक्तम् । तत् अन्वारम्भणीयाजन्यस्योपकारस्य यावज्जीवसत्त्वे विकृतिष्वपि प्रसङ्गात् उपकारकत्वापत्तेः, असत्त्वे (च) द्वितीयादिप्रयोगेऽपि उपकारकत्वानापत्तेः उपेक्षितम् । ११.

मण्डन--'आरम्भणीया सकृदादितः स्यात् ।' ११.

शंकर-- 'आरम्भणीयाऽनावृत्तिः ।' १७.

* **आरम्भणीयान्यायः** । येषामङ्गानां प्रकृतौ स्वाङ्गसंबन्धेन निराकाङ्क्षता तेषामेवातिदेशः, न पवमानेष्ट्यादीनां, तेषामङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् । अतो नान्वारम्भणीया-वैमृधन्यायेनैव अतिदेशः ।

* **आरम्भणीयेष्टिः** 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः' इति विहिता दर्शपूर्णमासविकृतिः । वि. १०।१।४, * **आरम्भणीयेष्टिः** क्रत्वर्था न प्रयोगार्था । क्रत्वन्तराणि च सौर्यादीनि इति विकृत्यारम्भे आरम्भणीयेष्टिः पृथक् कर्तव्या । १२।२।६. * **आरम्भणीयेष्टिः** क्व चित् काम्ये दर्शपूर्णमासप्रयोगे नैव कर्तव्या, प्रयोगमात्रभेदात् कर्मणो भेदाभावात् । वा. ९।३।११।३५.

* **आरम्भपदस्य** आद्यपदार्थे शक्तिः इति केचित् । आद्यप्रवृत्तौ शक्तिः इत्यन्ये । आद्यत्वं च तत्समानविषयकप्रवृत्तिध्वंसस्यधिकरणत्वम् । मणि. पृ. १६५.

* **आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात्** (१०।४।१४।२८ भा.) इत्यनेन अर्थस्य देवतायाः श्रुतिसमवायित्वात् आरम्भेण स्वरूपेण कर्मणि असमवायात् गुणानभिधाने च गुणशास्त्रस्य आनर्थक्यापत्तेः चोदितेन सगुणेन अभिधानं स्यात् इत्येवं पूर्वपक्षनिरास उक्तः । सु. पृ. ४६८.

⌛ **आराच्छिष्टमसंयुक्तमितरैरसंनिधानात्** । ३।६।११।३२ ॥

अंशुनामके अदाभ्यनामके च सोमग्रहे ज्योतिष्टोमप्रकरणसमाम्नाता ग्रहधर्मा न कर्तव्याः इति पूर्वपक्षप्रतिपादनार्थं सूत्रमिदम् । आरात् दूरात् ज्योतिष्टोमप्रकरणाद्भिन्ने औपसदानुवाक्याकाण्डे, शिष्टं विहितं अंश्वदाभ्यग्रहरूपं, इतरैः आरात्पदोक्तात् भिन्नैः ज्योतिष्टोमप्रकरणाम्नातैः ग्रहधर्मैः असंयुक्तं न संयुक्तं असंबद्धं स्यात् । कुतः ? असंनिधानात्, अंश्वदाभ्ययोः ज्योतिष्टोमसंनिधानाभावात् ।

**संयुक्तं वा, तदर्थत्वाच्छेषस्य तन्निमित्तत्वात्** । ३३ ॥

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । अंश्वदाभ्यग्रहद्वयं संयुक्तं ज्योतिष्टोमप्रकरणोक्तग्रहधर्मैः संयुक्तमेव स्यात् । तदर्थत्वात्, अंश्वदाभ्ययोः ज्योतिष्टोमार्थत्वात् । शेषस्य ग्रहधर्मजातस्य तन्निमित्तत्वात् ग्रहनिमित्तकत्वात् । ग्रहो निमित्तं ग्रहधर्माणां, ग्रहश्च ज्योतिष्टोमार्थः । अथवा तदर्थत्वात् ज्योतिष्टोमापूर्वार्थत्वात्, शेषस्य ग्रहधर्मजातस्य तन्निमित्तत्वात् ज्योतिष्टोमापूर्वनिमित्तकत्वात् । पूर्वोऽर्थस्तु साधीयान् ।

**निर्देशाद् व्यवतिष्ठेत** । ३४ ॥

ननु तर्हि 'पयसा मैत्रावरुणं श्रीणाति' (मैत्रावरुणग्रहस्थं सोमरसं पयसा मिश्रयति) इति विहितं श्रयणमपि सर्वग्रहार्थं स्यात् इति चेन्नेत्याह सिद्धान्ती ।

मैत्रावरुणं इति विशेषस्य निर्देशात् श्रवणं तत्रैव व्यवतिष्ठेत, न सर्वग्रहेषु गच्छेत्। तथा च प्राकरणिकसर्वार्थबाधेन वाक्यात् व्यवस्था भवति। प्रकृते तु प्राकरणिकव्यवस्थाबाधेन वाक्यात् सर्वार्थत्व-मिति विशेषः। तस्मात् अंशुदाभ्ययोः ग्रहधर्माः सादनादयः कर्तव्या इति सिद्धान्तः। **के.**

* **आराद्पीति चेत्। न, तद्वाक्यं हि तदर्थ-त्वात्।** ( ३।७।१३–४ ) अपूर्वसाधनं यो जङ्गम्य-मानः ( पुरुषः ) तस्यैवैष संस्कारः। एवं तीर्थस्नान-मपि। एतौ च चोदनापरिहारौ सूत्रकार एव वक्ष्यति 'आरादपीति चेत्, न तद्वाक्यं हि तदर्थत्वात्' इति। **वा.** ३।४।५।१७ पृ. ९४७, * **आरादपीति चेन्न तद्वाक्ये हि तदर्थत्वात्।** वक्ष्यति ह्येतत् 'आरादपीति०' इत्यत्र प्रकरणवशेन तदु-पकारिमात्रे धर्मा विधीयन्ते, न साक्षात् अङ्गेष्वेव केवलेषु इति। ३।१।९।१८ पृ. ७२८–२९. ( अस्मिन् स्थलद्वये सूत्रद्वयगतपाठद्वयमुपलभ्यते। तत्र लेखकप्रमाद एव कारणं संभवति। चेदन्तसूत्रनिर्णयानु-सारेण तु प्रथमपाठ एव स्वीकार्यो, न द्वितीयः। )

* **आरादुपकारकं** अदृष्टार्थम्। **मीन्या.** पृ. २०७. * आरादुपकारकं क्रत्वर्थे प्रवृत्तिरूपं वैदिकं कर्म अदृष्टा-र्थमेव, यथा प्रयाजाः। **बाल.** पृ. ८२.

* आरादुपकारकं च द्विविधम्। अदृष्टप्रयोजनं दृष्टादृष्टप्रयोजनं च। 'समिधो यजति' इत्यादिषु अस्य कारकगतं किंचित् प्रयोजनं न दृश्यते। तत्र **के** चित्तावत् अधिकारापूर्वसिद्ध्यर्थमेषां अधिकृताधिकारमिच्छन्ति। ते हि मन्यन्ते उत्पत्तिनियोगास्तावत् समिदादिषु निर्विवादं संमताः। न च नियोगो नियोज्यमन्तरेण अभिधीयते। तथा च सति विश्वजिदादिषु नियोज्यपरिकल्पना न स्यात्। तत्र च नियोज्ये कल्पयितव्ये यद्यनुषङ्गः फलपदस्य कल्प्येत यदि वा विश्वजिन्न्यायेन अधिकारी कल्प्येत, तदा अधिकारापूर्वस्य इतिकर्तव्यताऽऽकाङ्क्षा न परिपूर्णेति न परमापूर्वाधिकारकत्वेन अधिकारिणि सति उपायो-पेयभागो गम्यते। नह्यन्यथा अधिकृताधिकारभावः उपपद्यते, यस्य न परमापूर्वसाध्यश्च परमापूर्वाधिकारः।

न च यथा 'स्वर्गकामो यजेत' इत्यादौ साध्यस्वर्ग-विशिष्टाधिकारिणि स्वर्गयागयोः इतरेतरभावः, तथेहापि समिदादिपरमापूर्वयोः। तत्र च न कार्यमन्यार्थमिति न्यायेन अधिकारनियोगैदमर्थ्यमेव समिदादीनामवसीयते। तदिदं ग्राहकग्रहणमिति गीयते। तत्रोत्पत्तिविशिष्टाग्ने-यादिकरणावरुद्धं परमापूर्वं प्रकारान्तरेण ऐदमर्थ्यानुप-पत्तेः इतिकर्तव्यतात्वेनैव संबन्ध इति। **तदिदमनुपपन्न-मिति प्राभाकराः।** यदि सर्वस्य नियोगस्य नियोज्या-न्विताभिधानमाश्रीयते। तत्र राजसूयिकानामिज्याविशे-षाणां उत्पत्तिविनियोगानामपि साधिकारत्वं स्यात्। ततः अभिषेचनीयतन्त्रमध्ये पठितानां विदेवनादीनां अभि-षेचनीयावान्तरापूर्वप्रकरणेन तदङ्गत्वं न स्यात्। **अथो-च्येत** नादृष्टार्थे नियोगो नियोज्यान्वितोऽभिधीयते किंतु अनुष्ठानलब्धये। अभिषेचनीयादयश्च परमापूर्वप्रयु-क्त्यैव लब्धानुष्ठानाः परमापूर्वस्यापि तद्विषयत्वात् तेनैव स्वसिद्ध्यर्थं विषयीभूतासु इज्यासु प्रयुज्यमानासु तद्विषयोत्पत्तिनियोगा अपि लब्धसिद्धयो न स्वसिद्धये नियोज्यान्तरमाकाङ्क्षन्तीति, **तर्हि** प्रयाजादिनियोगा अपि विनियुक्तविषयत्वात् नाधिकारान्तरमपेक्षेरन्। **स्यान्मतं,** विनियोगः एव तेषामधिकृताधिकारमन्तरेण अनुपपन्न इति। **तदसत्।** नियोगैदमर्थ्यमात्रेण प्रथमशब्देन अव-गताधिकारसंबन्धानां प्रकरणेनेतिकर्तव्यतात्वेन विनि-योगात्। तथाहि, अधिकारविधिसंनिधौ यजतीत्यादयो निरधिकारा एव तावदाम्नायन्ते। तत्र योऽसौ अधिकारविधिः, स एव प्रयोजनभूतो निरधिकारैः समि-दादिभिः स्वयमप्रयोजनभूतैरन्वितः शब्देनाभिधीयते। समिदादिवाक्यानि च द्रव्यदेवताविशिष्टानि यागस्वरू-पाण्येव संनिधापयन्ति। संनिधापनमात्रेण तैः सह अधि-कारनियोगस्यान्वयः। यदि च संनिधानं नाद्रियेत, तदा समिदादिष्वपि किमिति परमापूर्वाधिकारी कल्प्येत। तदेवं संनिधानमात्रतः सिद्धमुपकारैदमर्थ्यं कथं भवती-त्यपेक्षा। तथा साध्यभूतस्य अधिकारापूर्वस्य कथमित्या-काङ्क्षा। तेन करणोपकारः एव तेषां द्वारमाश्रीयते। तत्र यदैदमर्थ्येन अन्विताभिधानं, तत् ग्राहकग्रहणम्। **यच्च तेषां करणोपकारद्वारपरिकल्पनं, स एव प्रकरणविनियोगः।**

नन्वेवं अवान्तरापूर्वाण्यपह्नुतानि । नापह्नोष्यामहे । यद्यपि प्रथमं लिङादयो न व्यतिरिक्तं नियोगं प्रतिपादयितुमीशते, अवहन्त्यादिष्विव शङ्क्यमानाधिकारनियोगानुवादकत्वात्, तथापि अधिकारनियोगं प्रति एषां क्षणभङ्गिनां अवान्तरापूर्वाणि अजनयतां अङ्गता उपपद्यते इति पश्चादधिकारापूर्वाङ्गभावोपपादनाय आश्रयणीयावान्तरापूर्वाणि लिङाऽभिधेयान्युपेयन्ते । तदेतत् दीक्षणीयावाङ्नियमाधिकरणे व्युत्पादितम् । नन्वेवमाश्रयिषु अवान्तरापूर्वाभ्युपगमो यथा, तथा तत्रैव वक्ष्यामः । यानि च तानि अवान्तरापूर्वान्वितानि शब्देनाङ्गभूतानि, (तानि) अधिकारापूर्वं प्रति उपनीयन्ते । **ननु** एवं तर्हि दीक्षणीयाऽऽदिषु वाङ्नियमस्य अवान्तरापूर्वप्रयुक्तता न स्यात्, किंतु प्रोक्षिताभ्यामवहन्तीति तदपूर्वप्रयुक्ततैवापद्येत । **न** । तत्स्वरूपनिष्पत्त्यर्थत्वात् । यद्यपि अवान्तरापूर्वाणां परमापूर्वाङ्गतया भावः, (ताऽभावः) तथापि स्वरूपनिष्पत्त्यर्थ एव वाङ्नियमादिको धर्मः, 'न दीक्षणीयायामनुब्रूयात्' इति दीक्षणीयासंबद्धावान्तरापूर्वस्वरूपसंबन्धावगमात् । न च तेषां स्वरूपपरित्यागेन अङ्गाङ्गिभावलक्षणा युक्ता । न च स्वरूपार्थत्वेनानुमानं, स्वरूपस्यैव अनन्यगम्यसिद्धित्वात् । शब्दैकगम्यसिद्धिकं सर्वमपूर्वम् । अवघातादीनां तु प्रमाणान्तरावसेयसिद्धीनां विनाऽपि प्रोक्षणं स्वरूपसिद्धेः, स्वरूपार्थत्वे अयुक्तं नियमनियोगस्यानुष्ठानम् । तदेवं स्वयमङ्गत्वात् लब्धानुष्ठानेषु प्रयाजादिषु नाधिकारकल्पनाऽवकाशः । तेनैव प्रकारेण प्रधानविषयेषु उत्पत्तिनियोगेषु करणावान्तराभावो वेदितव्यः । यो हि तमवान्तरव्यापारं नाभ्युपगच्छति, तस्य कारणभेदो न स्यात् दर्शपूर्णमासादिषु । तथा आग्नेयादिधर्मा उपांशुयाजादिषु भवेयुः, परमापूर्वप्रयुक्तत्वात् तत्प्रतिसंधानभावाविशेषात् । अवान्तरव्यापारभेदे तु युक्ता व्यवस्था, अन्यथा आग्नेयस्य करणता, अन्यथा उपांशुयाजादीनामिति । बृहद्रथंतरयोः स्तुतिसाधनयोरपि अन्यथा साधनतेति धर्मव्यवस्था । तथा पार्वणहोमयोरपि । अत एव विकृतिषु बाधः । नहि यथा आग्नेयस्य अपूर्वसाधनता, तथा सौर्यस्येति प्रकृतद्वाराभावेन पार्वणहोमयोर्बाधः । ये च सन्त्यवान्तरापूर्वाणि, न साधनरूपाणि (इति) आचक्षते, न तेषामवान्तरव्यापारतेति प्राचीनमकलदोषप्रसङ्गः । कार्योत्पत्तिनिमित्ताभावेन हि अवान्तरव्यापारता, अन्यथा आश्रमादेरपि कृषिसमुत्पाद्यविलेखनवत् नवमस्याधिगमे अवान्तरव्यापारताऽऽपत्तेः । नन्वेवमधिकारशून्यत्वे दीक्षणीयाऽऽदिषु अतिदेशो न स्यात् । उच्यते । निरधिकाराणामपि कार्यत्वाविशेषादनिर्ज्ञातोपायत्वाच्च युक्तैव कथमित्याकाङ्क्षा । नन्वेवं अङ्गीकृतमवान्तरप्रकरणम् । कर्तव्यस्य कथमित्याकाङ्क्षा प्रकरणमिति मीमांसकप्रसिद्धिः । नावान्तरप्रकरणं नाम प्रमाणमस्ति, प्रमेयाभावे प्रमाणत्वानुपपत्तेः । यावदेव तान्यवान्तरापूर्वाणि नावगम्यन्ते, तावदेव सर्वस्य आरादुपकारकस्य पदार्थजातस्याविशेषेण प्रधानविधिपरिगृहीतत्वात् । पश्चात्तु सर्वेषामधिकारानुप्रवेशाविशेषात् नान्योन्यं तादर्थ्यमस्ति इति नावान्तरप्रकरणविनियोज्यसंभवः । यानि तु वाक्यादिभिस्तेषु अवान्तरापूर्वाणि निवेशितानि, तत्र प्रतिष्ठितानि न परमापूर्वं संक्रमिष्यन्ति । नन्वेवं प्रयाजादिषु सौमिकविध्यन्तप्रसङ्गः । नायं दोषः । यदि निरधिकाराणामपि साधिकाराणामिव स्वारसिकाकाङ्क्षा भवेत्, भवेदेवम् । अननुष्ठेयत्वान्न स्वाभाविकी इतिकर्तव्यताऽऽकाङ्क्षा । कथं पुनरकार्यता अननुष्ठेयता च ? नूनं भवान् अश्रुतपूर्वः सप्रमादः । विविक्तं हि तत्रेदं **गुरुणा**। यदेव हि पुरुषेण ममेदं कार्यमिति निरपेक्षमेवावगम्यते, तदनुष्ठेयम् । यत्तु तत्सिद्ध्यर्थं प्रागसिद्धं सत् विनियुज्यते, तत् कार्यम् । परमापूर्वं च निरपेक्षं कार्यमवगम्यते । कार्यावगमाद्धि फलावगतिः । न फलावगतेः कार्यतेति षष्ठाद्ये क्षुण्णम् । **अतः सिद्धः अनुष्ठेयकार्यविवेकः** । यदेव चानुष्ठेयं तत्रैव कथमित्याकाङ्क्षा, न कार्यमात्रे । अवहीनस्तर्हि प्रयाजादीनामेव दीक्षणीयाऽऽदिषु आकाङ्क्षाऽपह्नवेन अतिदेशः । न सम्यगवगतं मतमस्माकं भवता । अयं हि नो राद्धान्तः । स्वारसिकी इतिकर्तव्यताऽऽकाङ्क्षा निरधिकाराणां नास्ति । कारणान्तरसमुत्था तु नापह्नूयते । तत्र दीक्षणीयाऽऽदिषु प्रयाजादिदर्शनेन इतिकर्तव्यताऽऽकाङ्क्षा कल्प्यते ।

स्वरसतोऽपि आकाङ्क्षाशून्यस्य कारणान्तरोपनिपात-निबन्धना आकाङ्क्षा। यथा पटो भवतीति निराकाङ्क्षस्यापि पदद्वयस्य रक्तपटोच्चारणात् रक्तं प्रति आकाङ्क्षा, अन्यथा रक्तः पटो भवतीत्यनन्वयप्रसङ्गः। एवं प्रयाजादिषु न किंचिदाकाङ्क्षोत्थापने कारणान्तरमस्तीति न सौमिकधर्मातिदेशः। सिद्धश्च दीक्षणीयाऽऽदिषु ऐष्टिकविध्यन्तलाभः। ये तु अधिकृताधिकाराभ्युपगमेन साधिकारतां अङ्गनियोगानामाहुः, तेषां प्रयाजादिषु रात्रिसत्रन्यायेनार्थवादिकफलकामः एवाधिकारी प्राप्नोति इति नाधिकृताधिकारसंभवः। स्यान्मतं, इतिकर्तव्यताकाङ्क्षा प्रधानविधेर्न परिपूर्यते इति। मा परिपूरि, प्रयोजनं तु परिपूर्णं, न प्रमाणम्। अर्थवादपदानि प्रमाणांशोपनिपातीनि, तेषां परोक्षा वृत्तिर्मा भूदिति तत्प्रतिपाद्यफलकामः एवाधिकारी युक्तः। साधिकारविधिसंनिधिमात्रेण तु निरधिकाराणां प्रतीतेः तादर्थ्ये अधिकाराकाङ्क्षा नास्तीत्यर्थवादपदानि अर्थवादमात्रपर्यवसायीन्येव। तथा पयोव्रतं ब्राह्मणस्येत्यादिषु भोजनाय प्रवृत्तस्य द्रव्यार्जननियमवत् स्ववाक्ये एवाधिकारिणो लब्धत्वान्न प्रधानप्रवृत्तस्य अधिकारकल्पना शक्यते कल्पयितुं, अथ स्वातन्त्र्यं पयोव्रतादीनामापद्यते। तथा नानृतं वदेदिति प्रकरणाधीतेऽपि निषिध्यमानक्रियाकर्तुरधिकारावगमान्न प्रकरणानुप्रवेशसंभवः। तथा भिन्ने जुहोतीति निमित्तस्याधिकारिविशेषणत्वात् विना निमित्तकल्पनात् अधिकारिविशेषणलाभात् न होमस्य दर्शपूर्णमासाङ्गत्वलाभः। न वा इदमिह साधनं भिन्नशब्दस्य यौगिकत्वात् प्रकृतिगामित्वे सति निमित्तवतोऽप्यधिकारेऽधिकृतस्याधिकारः इति, प्रकरणे भिन्नस्य (स्या) विनियोगात्। तद्धि प्रकरणसंनिहितं, यत्तत्र विनियुक्तम्। न च भिन्नस्य विनियोगोऽस्ति। अपि वा अधिकाराकाङ्क्षायां अधिकारे कल्पयितुमुपक्रान्ते किमिति अर्थेन संनिधानेन अधिकारः कल्प्यते, वरं भवत्वनुषङ्गः साक्षाच्छ्रुतस्य अधिकारपदस्य, प्रधानवाक्ये तु श्रुते अधिकारपदे प्रधानेन सह संबन्धे सति संनिहितानां अश्रुताधिकाराणां साधिकारैदमर्थ्येन अन्वितानां अधिकाराकाङ्क्षैव नास्तीति अनुषङ्गनिराकरणे मूलयुक्तिः। अभ्युच्चयमात्रं तु वरमनुषङ्गः, इतिकर्तव्यताऽऽकाङ्क्षापरिपूर्णमेवेति। **अपि च** प्रत्येकं 'समिधो यजति' इत्यादिषु प्रधानाधिकृतस्य अधिकारावगमात् प्रत्येकमेव समिदादीनां प्रधानोपायभावात् प्रत्येकमितिकर्तव्यताभावः स्यात्। अवान्तरविषयो हि तदा स्वविषयाणां उपायभूतं प्रकल्पयन्ति। करणावरुद्धे परमापूर्वे करणतासंभवात् करणोपकारजनकतयैव उपायभावकल्पनम्। ततश्चानपेक्ष्योपायभावमाश्रित्य एकस्यैव करणोपकारसंपादकत्वात् विकल्पः समिदादीनां स्यात्। अधिकारिविधिना तु तावत् तादर्थ्यमात्रग्रहणे तस्य तदन्वितस्य अन्यथाऽनुपपत्तेः तादर्थ्यसिद्ध्यर्थं करणोपकारजनकता स्यात्, तदा विकल्पे सति नित्यवदन्वयो नोपसंह्रियेत, मिलितानां तज्जनकताऽऽश्रयणे सर्वेषां तदन्वयोपसंहारः, इति न प्रत्येकमितिकर्तव्यताभावः। उपायोपेयभावे तु तादर्थ्येन अन्वये सति वैकल्पिकत्वादुपायभावस्य तथैवान्वयोऽपीति युक्तम्। **किंच** अधिकृताधिकारेण सर्वेषु साधिकारेषु सत्सु प्रयाजादेरितिकर्तव्यताऽऽकाङ्क्षा स्वारसिकी इति सौमिकधर्मातिदेशस्तेषु स्यात्। **न च** वाच्यं सत्यामपि आकाङ्क्षायां इतरेतराश्रयतया न तेषु सौमिकधर्मातिदेशः। सोमो हि दीक्षणीयादिभिः अङ्गवान्, दीक्षणीयादीनि ऐष्टिकधर्मग्राहीणि। यदि च इष्टावपि प्रयाजादिषु सौमिकधर्माः प्रवर्तेरन्, तदा स्फुटतरमितरेतराश्रयत्वमिति! **तदिदं** बालजनजल्पितम्। सोमे हि विनाऽपि ऐष्टिकधर्मप्राप्त्या दीक्षणीयादिमात्रनिबन्धनः एवोपकारः, तथा इष्टावपि सौमिकधर्मनिरपेक्षः एवोपकारः। यदि परं अनयोरङ्गनिबद्धयोः उपकारं गृह्णाति, अत्र चोपकारक्लृप्तेः अविशेषात् न कश्चिद्दोषः। निरधिकारेष्वङ्गेषु न स्वारसिकी इतिकर्तव्यताऽऽकाङ्क्षा। किंतु लिङ्गबलोत्थापनीयेति दर्शितमादौ। तेन लिङ्गरहितेषु नाकाङ्क्षोदयः, इति न प्रयाजादिषु सौमिकधर्मातिदेशः। **केचिदाहुः** यदि संनिधिसमाम्नानमात्रेण प्रकृताविकारानुप्रवेशो न भवति, तदा ज्योतिष्टोमप्रकरणे समाम्नातस्य षोडशिनः 'उत्तरेऽहनि द्विरात्रस्य गृह्यते' इति वैकृतत्वमेव स्यात्। **तदसत्**। ग्रहणस्य अबाध्यतया ग्राह्यमपेक्षणीयम्। तत्र प्रकृततया लोकतश्च एव स ग्राह्यत्वेनान्वयं याति, स च ज्योतिष्टोमा-

धिकारसंबद्ध इति तदनुप्रवेशः । पश्चात्तु तस्य वाक्येन पुनर्द्विरात्रसंबन्धः इति नानुपपन्नं किं चित् । तदेवं आरादुपकारकेषु प्रथमं तादर्थ्येन अधिकारनियोगं प्रति अन्वितेषु साधिकारेण विधिना अनुष्ठेयभूतेन करणोपकारे क्लृप्ते, तं प्रति नाधिकारनियोगेन जनकत्वकल्पनम् । न च क्षणिकभावे तेषां परस्परं स्वरूपेण असंभवतां संभूयोपकारजनकतामापद्यते इति अवान्तरापूर्वाणि स्वीक्रियन्ते । एवमाश्रयिषु विनाऽपि अपूर्वेण द्रव्यदेवतासंस्कारमुखेन करणोपकारजनकसिद्धिरिति नापूर्वसमाश्रयणे किं चन प्रमाणम् । किंच **दृङ्मालायां** न तव दृष्टम् । दर्शितं हि तत्रेदं चतुर्धा । तुर्ये न साक्षात् द्रव्यदेवतोपकारो यागः, किंतु स्वाङ्गभूतमन्त्राग्रंशमुखेन । न च यागेऽधिकारानुप्रविष्टे तयोस्तत्र विनियोगोपपत्तिः । न चापूर्वमन्त्रेण यागस्य अधिकारानुप्रवेशः, इति अवश्याश्रयणीयमवान्तरापूर्वम् । तेषां च अदृष्टतया न प्रयोजनत्वम् । दृष्टतया च द्रव्यदेवतासंस्कार एव प्रयोजकः । तत्रापि द्रव्यदेवतासंस्कारयोर्द्रव्यप्रतिपत्तिरेव प्रयोजिका, यागे द्रव्यस्य साक्षाद्यागारादिति मन्तव्यम् । द्रव्यस्य तु न श्रुतिविनियोगः । न क चित् द्रव्यस्य द्वारं श्रुतिः समर्पयति । न तु अप्राकरणिकोऽपि द्रव्यस्य विनियोगः, साक्षात् करणोपकारजनकत्वाभावात् । तस्य लिङ्गेन समाख्यया स्थानेन भावार्थे एव जनकतया संबन्धः । गुणदेवतयोस्तु वाक्येन विनियोगः, नानाव्यापारत्वात् कारणानाम् । अङ्गसाधनतद्द्रव्योपादाने तदवच्छेदकतया अस्त्येव तयोरुपयोग इति न कारकतया विनियोगो विरुध्यते । या तु संख्या उत्पन्नकर्मसमवायीया एकादश प्रयाजान् यजतीति ( सा ) उत्पन्नानां कर्मणां विधानासंभवात् कर्माश्रिता विधीयते । यद्यपि च उद्देश्यगतं विशेषणं वाक्यभेदभयेन विवक्षां नार्हतीति प्रयाजादीनां साहित्यं न विवक्षितं, तथापि तस्य पृथक्त्वनिवेशित्वात् न प्रत्येकमभिसंबन्धः, किंतु समुदायेनैव । न चाभ्यासं विना तस्य प्रतिपत्तिः इत्यर्थात् अभ्यासाश्रयणम् । प्राकृतक्रमानुग्रहात् लब्धाधिकारविधौ च परिपूरणम् । यः पुनरुत्पद्यमानकर्मसमवेतः, नासौ विधेयः । स हि विधीयमानानि कर्माणि अवच्छिनत्ति, न च तथा विधेयत्वसंभवः । बहुषु विहितेषु स प्रयोगेण परिलभ्यते एवेति न पृथग्विधेयत्वमवलम्बते । अविधेयभूतावपि तौ भावार्थौ अभिन्दन् न विधौ उपकरोतीति स नान्वयी । यस्तु भिन्नप्रातिपदिकाभिधेयः, सोऽरुणिमादिवत् न कर्मणि कारकतया विधीयते । यः पुनरयं विभक्त्यभिधेयः, तस्य यद्यपि शक्त्या प्रातिपदिकार्थसंबन्धः, तथापि तस्य तन्मात्रसंबन्धे प्रकरणसमाम्नायादितो ग्रहसंबन्धो नोपपद्यते, इति ग्राहकीयावस्थासंबन्धितैव औपादानिकी इति निर्णीयते । विनियुक्तस्य पश्चादेरुपादानं अनवच्छिन्नस्य न संभवतीत्यस्ति तदवच्छेदकभूतसंख्याऽपेक्षा , संख्यायाश्च प्रतीतग्राहकान्वयनिर्वाहाय आश्रयापेक्षेति तदवस्थासंनिधिना विधिः कल्पयति । उपादानलक्षणो विधिव्यापारः आक्षेपापरपर्यायो **मीमांसकैः** प्रतिपन्नः उत्पत्त्यधिकारविनियोगप्रयोगविषयः प्रतिज्ञायते । तस्य च यथाप्रतीतविध्यनुपपत्तिरेव बीजम् । 'सौर्यं चरुं निर्वपेत्' इत्यादौ साधिकारो विधिः प्रसङ्गतः उत्पत्तिं विना अनुपपद्यमानः उत्पत्तिमाक्षिपति । नहि क्षणिकं यागमात्रं उत्पत्तिविनियोगानपेक्षं अधिकारसिद्धिसमर्थमिति बहुधोक्तम् । विश्वजिदादिषु अधिकारमन्तरेण अनुष्ठानासंभवात् कार्यरूपस्य विधेः अवगतस्य अनुपपत्तिः अधिकारकल्पनाबीजम् । संख्याऽन्वितश्च विध्यर्थः प्रतीतः तदन्वयोपपत्तये ग्राहकीयदशासंबन्धितामापादयति निमित्ते एवेति योऽधिकारे साध्यभूतो विधिः अनुष्ठानापरनामा अलं करणस्य प्रयोजनमाक्षिपति । कामाधिकारे तु कामसिद्धिः तदायत्तत्वात् मानसी प्रवृत्तिः प्रागेव प्रातानुष्ठानप्रवृत्तावपि अप्रतिहता निमित्तता अस्तीति विधिरप्रयोजकः । उभयत्र अङ्गेषु क्रतुरेव प्रयोजकः, क्रतूपकारद्वारत्वात्तेषाम् । यदेव हि यस्य कार्यं, तदेव तस्य प्रयोजकम् । क्रतूपकारश्च अङ्गानां कार्यं, एतदेव अनुष्ठाननिमित्तम् । यच्च विधिना स्वसिद्ध्यर्थमाक्षिप्यते , तद्विधेयमिति तत्त्वज्ञाः । **नन्वेवं** विश्वजिदादौ अधिकारोऽपि आक्षिप्ततया विधेयः एव स्यात् । **उच्यते** । नाधिकारस्य नियोगसिद्धौ व्यापारः, किंतु कर्तृत्वस्य तत्प्रतिपत्त्यर्थश्च अधिकाराक्षेपः इति । एवं च विधिना स्वसिद्ध्यर्थं अनाक्षिप्यमाणत्वात् न क्रमो विधेय

इति मीमांसकानामुद्गारः। क्रमस्य पाञ्चमिकस्य न किंचिदभिधानमस्ति, न च अनभिहितस्य तस्य वैनियोगिकं औपादानिकं वा शेषत्वं घटते। न वा शेषभूतस्य विधिराक्षेपाय प्रभवति। यस्तु 'वषट्कर्तुः प्रथमभक्षः' इति प्रथमशब्दाभिधेयः क्रमः, स हि विनियोज्यो विधेयश्चेति निबन्धनकारः। अत एवासौ न निर्णीयतेति। ततः पञ्चमे हि यस्तावत् श्रौतक्रमः 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादौ, न तस्य किंचिदभिधानमस्ति। कथं तर्हि प्रतीयते। क्त्वाप्रत्ययोऽपि हि समानकर्तृकेऽर्थे वर्तमानाद्धातोः विधीयमानोऽपि य एव प्रथमं प्रयुज्यते, तत एव विधीयते, तत्र क्त्वाप्रत्ययश्रवणात्। अथवा प्रयोज्यत्वे स्थिते अर्थवित्तिरपि तथैव। यथाप्रयोगवाचित्वादर्थावगतेः यथावगति चानुष्ठानं इति क्रमोऽपि तथाविध एवावगम्यते। अर्थादिषु अभिधानशङ्का अनुपपन्नैव। अनभिधीयमानस्यापि अवगत्युपायमात्रस्तत्र तत्र प्रमाणे चिन्तित एव। यदि विध्यर्थं प्रति शेषत्वं क्रमस्य नास्ति, कथं तर्हि चोदनालक्षणत्वम्? न विधेयता चोदनालक्षणत्वे हेतुः अधिकारस्य तदभावप्रसङ्गात्। अविध्यर्थः तदन्वितः प्रतिपाद्येत इति चोदनालक्षणं, तर्हि क्रमान्वितोऽपि प्रयोगविधिः अवसीयते, इति तस्यापि चोदनालक्षणत्वमविरुद्धम्। क्रमविशेषपरिगृहीतप्रयोगावच्छिन्नो हि प्रयोगविधिः प्रतीयते। अत एव अनङ्गत्वोपक्रमनियमस्य तदादरः। तदभावे प्रयोगानुपपत्तेः प्रयोगविधेश्च विशिष्टप्रयोगसाध्यत्वात्। (तदेवं द्विविधधर्मौपदेशिकत्वं वैनियोगिकं औपादानिकं च।) तत्र न यथाऽधिकारं विनियुज्यते। अपि तु यथाविनियोगमधिकारः, सामान्यतोऽपि अधिकाराश्रयणेन विनियोगसिद्धेः, यस्यापि प्रतिप्रकरणं व्यवस्थासिद्धये ग्राहकपूर्वको विनियोगः। यद्यपि च साधिकारस्यैव ग्राहकत्वं, तथापि सामान्यतः स्वर्गकामादौ अधिकारिणि लब्धे, साधिकारत्वे संपन्ने ग्राहकग्रहणे निवृत्ते, नियुक्तेषु अङ्गेषु तदवच्छिन्ने विध्यर्थे कार्यात्मनि तदनुष्ठानसमर्थस्य स्वर्गकामिनोऽधिकारः, इति पश्चादधिकारिविशेषनियमः। अत एव अन्धबधिरपङ्ग्वादीनां अवेक्षणश्रवणातिक्रमणाद्यङ्गवति, पञ्चार्षेयाणामार्षेयत्रयवरणलक्षणाङ्गभाजि, आहवनीयादियोगिनि च अनाहिताग्नीनामनधिकारः। तेषां (उक्तानामन्धादीनां) तथाविधविध्यर्थसंपादने स्वाभाविकशक्त्ययोगादिति स्वयमूहनीयम्। येषां च न स्वाभाविकी शक्तिरपेता, तेषामधिकारो भवत्येव, अद्रव्याणां असमाधेयव्याधिविशेषपरवशेन्द्रियाणां च। **ननु** तेषामधिकारो न निर्वहत्येव अपूर्वसिद्धिनिबन्धनत्वात्तस्य, तस्याः सकलाङ्गग्रामायत्तत्वात्। **सत्यं** कामाधिकारो न भवत्येव, तस्य सेतिकर्तव्यताकफलभावनाकरणविषयत्वात्। फलकामस्य हि फलभावनां प्रति एककरणीभूतेऽधिकारो नावकल्पेत। सर्वं च करणं सेतिकर्तव्यताकं करणतामनुभवतीति संमतम्। ततः साङ्गाननुष्ठाने सेतिकर्तव्यताकत्वम्। व्याघातात् विषयाभावात् विषयिणोऽपि अनुपपत्तेः अधिकारविलय एव कामिनाम्। [इति यथामुद्रणं पङ्क्तिः। दुर्बोधेयमिति किंचित् कल्प्यते 'ततः साङ्गानुष्ठाने (इति पाठः) सेतिकर्तव्यताकत्वम्। (अयं पूर्वस्योपसंहारः)। व्याघातात् (अन्धादेः आज्यावेक्षणादौ व्याघातात्) विषयाभावात् (व्याघातात् हेतोः आज्यावेक्षणाद्यभावेन विषयस्य दर्शपूर्णमासकर्मणः अभावात्) विषयिणोऽपि (दर्शादिकरणकस्वर्गफलस्यापि) अनुपपत्तेः अधिकारविलय एव (स्वर्गकामस्य हि अधिकारः, विशिष्टस्वर्गफलासंभवे च अधिकारस्य विलय एव प्राप्तः) कामिनां (सतां पूर्वोक्तान्धादीनाम्। अन्धादीनां दर्शादिकर्माधिकारो नास्तीत्यर्थः)। इति। अत्र विद्वांसः प्रमाणम्] निमित्तस्य केवलभावार्थविषय एवाधिकार इत्यङ्गानुपसंहारेऽपि विषयप्रमोषात् नाधिकारावगमः। अनपेतश्चाधिकारो यावदुपसंहरणीयाङ्गसंपाद्यतामेव तदानीमवगमयति। औत्सर्गिकी तु सकलाङ्गायत्तसिद्धिसिद्धैव। अनेनैवाधिकारेण निमित्ताधिकारे गौणो मुख्यश्च शास्त्रार्थ इति **प्राभाकराणामुल्लापः**। अस्ति च किंचिदङ्गं निमित्तायत्तविधानम्। तत् सत्येव निमित्ते अङ्गं, यथा भिन्ने जुहोतीति। तत्र चैष शास्त्रार्थः 'सति भेदने भेदनहोमसहितः अङ्गकलापः करणोपकारं कुर्वन् कार्यमारूढः' इति। तदल्पत्वे तु एकल एवेति। यावच्च भेदादिकमावर्तते तावती होमस्यावृत्तिः। एष तावदौप-

देशिकः अङ्गकलापः । कार्यनिबन्धनं केचिदन्ये **मीमांसका** मन्यन्ते । उपदेशो हि प्रतिप्रकरणमङ्गानां व्यवस्थित एव, अपूर्वग्रहणपूर्वकत्वात् विनियोगस्य । यदि हि ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यनेन साधिकारं यागमुद्दिश्य समिधो यजतीति समिदादिविधिः स्यात्, तदानीं एवमुद्दिश्य विधानात् यावद्यागमेव समिदादिविधिरिति यजिमत्सु सर्वापूर्वेषु समिदादिविधानात् उपदेशो न व्यवतिष्ठेत । नहि तदा स्वर्गकामपदं दर्शपूर्णमासपदं च विशेषायालम् । उद्दिश्यमानविशेषणविशेषविवक्षायां वाक्यभेदापत्तेः । संनिधानमात्रेण तु अन्विताभिधानसिद्धेः दर्शपूर्णमासाभ्यां इत्यधिकारवाक्यत्वे सति समिदादीनां तदनुप्रवेशात् विनियुक्तविषयतयाऽपि अनुष्ठानसंपत्तेः दर्शपूर्णमासाभ्यां इत्यधिकारद्वारपरिकल्पनम् । तत्र चोपादानलक्षणेन विधिव्यापारेण अङ्गानां समुदितानां उपकारकत्वपरिकल्पनमिति प्रतिप्रकरणमङ्गव्यवस्था । क्व पुनः केषां कार्यनिबन्धनमङ्गत्वम् ? प्राकृतानां वैकृतापूर्वेषु तदीयकरणे च यथायथं अतिदेशमाचक्षते । प्राकृतानां प्राकृतस्थानप्रतीते अर्थान्तरसमूहमभिदधति द्विविधं शाब्दं उपदेशकं कार्यकं ( करं ) च । तत्र वैकृतापूर्वस्य साध्यभूतस्य सेतिकर्तव्यताऽऽकाङ्क्षस्य विषयीभूते भावार्थे करणे लब्धे या परेतिकर्तव्यताऽऽकाङ्क्षा, तस्यां च न प्रकृतिवदुपकारान्तरकल्पना उपपद्यते । क्लृप्तेऽपि उपकारान्तरे तज्जनकद्विविधपदार्थाकाङ्क्षा पश्चात्तनी, सा प्रकरणानधीतपदार्थवर्गसंबन्धेन न परिपूर्यते । प्राकृते तूपकारे स्वीकृते तत्तन्मुखेन द्विविधप्राकृतपदार्थोपस्थापनात् आकाङ्क्षा परिपूर्यते इति प्राकृतमेवोपकारं स्वीकरोति । **कः पुनर्हेतुः** स्वीकरणे ? अनुमानं अव्यभिचरितलिङ्गसंबन्धाभावान्नोपपन्नं, तस्य सादृश्यमात्रविषयत्वात्, सिद्धविषयावगाहिनोश्च अनयोः कार्यप्रमाणानवतारात् । **उच्यते** । य एवासौ विनियोगाभिधायी लिङादिशब्दः, स एव प्राकृतोपकारान्वितं स्वार्थमभिदधाति । प्रकृतावपि विध्यर्थपरिकल्पितोपकारिणा अन्वितं स्वार्थं लिङादिरेव वक्ति । अन्विताभिधाने च आकाङ्क्षा योग्यता संनिधिश्च कारणम् । इह च प्राकृतस्योपकारस्य एषैव आकाङ्क्षा योग्यता च तावदविवादा । संनिधानं तु बुद्धेन प्राकृतेनैवापूर्वेण । लिङ्गविशेषेण प्राकृतमपूर्वं बुद्धौ संनिधीयते, तच्च स्वोपकारं संनिधापयति । अत एवोपकारसंबन्धः औपदेशिक इति तत्त्वविदः । यो हि ग्रन्थेन विध्यर्थेनैव उपस्थापितः तस्मिन् अन्वयमेति, स औपदेशिकः प्रकृतौ इवोपकारः, यथा विश्वजिदादौ अधिकारी । तदेवमुपकारसंबन्धमुपेतः केन पदार्थवर्गेण जन्यते इति पश्चात् तस्यैव वैकृतस्यापूर्वस्य आकाङ्क्षा भवति । **ननु** प्रकृतौ आत्मोपकारो निर्ज्ञातजनकभूतपदार्थवर्गः, इति नाकाङ्क्षोदये कारणमस्ति । अत एव पदार्थानामतिदेशो नेति मन्यते । यदि पदार्थेष्वपि पश्चाद्भाविनी आकाङ्क्षा, तदा तद्धेतुके प्राकृतानां वैकृतापूर्वसंबन्धे सति को नाम उपकारस्येव पदार्थानामतिदेशं वारयेत् । अन्यतः उत्थितस्य हि अन्येन संबन्धोऽतिदेशः इत्यतिदेशविदः । **अत्र ब्रूमः** । यदि करणोपकारप्रयुक्ताः प्रकृतौ पदार्थाः स्युः, तदा निर्ज्ञातेषु जनकेषु पदार्थाकाङ्क्षा नावतरेत् । अपूर्वप्रयुक्तास्तु धर्मा इति मीमांसकाः । तथा सति यदपूर्वप्रयुक्तास्ते धर्माः, तत्संबन्धे एवोपकारे तेषां जनकता कल्पिता, नान्यसंबन्धे । अतो वैकृतापूर्वसंबन्धस्य अनिर्ज्ञातोपायस्य उपेयाकाङ्क्षा नानुपपन्ना । येषां न प्रकृतिसाधनभावेन पदार्थानामनुष्ठानमेव केवलं, तेषामौपदेशिकत्वात् उपकारसाधनभावस्य ऊहबाधौ न स्याताम् । आकाङ्क्षानिबन्धनेन प्रकृत्यपूर्वसंबन्धे यथोहबाधौ सिध्यतः तथा तत्रैव वक्ष्यामः । एवं च सत्यां पदार्थाकाङ्क्षायां पश्चादुपकारेण ये प्राकृताः पदार्था बुद्धिविषयतामापद्यन्ते, ते अन्वयमासादयन्ति । केन पुनः संबन्धेन उपकारस्तानुपस्थापयति ? उच्यते । प्रकृतौ तेषां पदार्थानां तस्य चोपकारस्य जन्यजनकभावः प्रतीतः इति तया अपूर्वप्रतीत्या स्मृतिस्तेषु जायते । तेषु स्मृतिसंनिहितेषु लब्धान्वयेषु यथाप्रकरणाधीतेषु पश्चादुपकारसाधनत्वं मिलितानां साधनत्वं कल्प्यते । तदाहुः । ' वैकृतं पदार्थवर्गं प्राकृतमुपकाराढौकितम् । तथा निरुपकारे साधनमेकीकृत्य कल्पयति ' । उपकारलक्षणकार्योपस्थापितप्राकृतपदार्थान्वयजातं च विकृत्यपूर्वकार्यकं शाब्दमुच्यते । न च

पदार्थानां अपूर्वान्तरसंबन्धः अनुपपन्नः । अन्यदीयस्य अन्यसंबन्धाभावात् इति तद्भावेनोपकारे अन्विते तज्जन- काङ्क्षायां कार्यतः अन्वयावगमात् । अर्थश्चायं अति- क्षुण्णः ऋजुविमलाऽऽदिषु । तत्र प्राकृतानां संस्काराणां प्राकृतद्रव्यस्थानपतितपदार्थसंबन्धनिश्चयः ऊहापरनामाऽपि कार्यरूपवशात् । प्रकृतौ यत्कार्यं प्रतीतं अवघातादीनां, तदेवेदमिति निश्चये सति यदपूर्वाः अवघातादयः, तदीयतण्डुलोत्पत्तिप्रकृतिद्रव्यमवघातादिभिः संस्कार्यमिति प्रकृतौ शास्त्रार्थः । विकृतावपि तादृशा एव नीवारादयः इति धर्मोहः तेषु । एवं कृष्णलादिषु अवघातादिषु ऊहितेषु द्वारभूतकार्याभावे च यो बाधनिश्चयः, सोऽपि कार्यकर एव । तदेवं अबाधिताभ्युचितपदार्थजन्यप्राकृत उपकारो विकृताविति स्थितम् । तेषां चौपदेशिकानां कार्यसंबद्धानां अनेकप्रधानसंबन्धे प्रयोगविशेषे तन्त्र- मनुष्ठानम् । तथा देशकालकर्तॄणां प्रयोगानुबन्धभूतानां भेदो नावसीयते कार्यस्य वा । भिद्यमाने तु कार्ये कार्यार्थे अनुष्ठानमावर्तते एव देशादिभेदेऽपि प्रयोगभेदावगमात्, आवृत्तिरेवानुष्ठानस्य । यस्य च परार्थमनुष्ठितस्यापि कार्ये तन्त्रमित्यवगम्यते, तस्य अन्यत्रापि उपकारकत्व- मेवेति सकृदनुष्ठानमिति । 'नानाऽमितविषयाणां विधि- सिद्धौ निमज्जताऽङ्गानाम् । प्रविततगम्भीराणां पारायण- मेतदाचरितम् ॥' पञ्जिका. पृ. २११–२२५. ( इदं प्रकरणपञ्जिकास्थं प्रकरणं चौखम्बायां मुद्रितं अशुद्धि- बहुलमपि कथंकथमपि विचार्य किंचिदक्षरपरिवर्तनेन विरामचिह्नदानेन च यथामति परिष्कृत्य क्वचिच्च यथा- मुद्रितमेव निवेशितम् । आदर्शपुस्तकं च द्वितीयं नैवोपलब्धम् । के. )

* आरादुपकारकं साक्षात् प्रधानाङ्गं, तस्य अन्योद्देशेन अविधानात् । मीन्या. पृ. २०८. * आरादुपकार- काणि प्रयाजादीनि उत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते । वि. २।१।२. * आरादुप- कारकाः प्रयाजाः समिदादिपदानां नामधेयत्वात् । भा. ९।३।२०।५९–६०. * आरादुपकारकात् संनिपत्योप- कारकं बलीयः । अत एव 'स्थाणौ स्थाणवाहुतिं जुहोति' इति विहिता स्थाण्वाहुतिः यूपव्रश्चनस्थाणुद्वारा यूप- संस्कारार्था, न तु आरादुपकारिका इत्युक्तं दशमे ( १०।१।६ ) । मीन्या. २१०. * आरादुपकारकात् सामवायिकं गरीयः । ननु उभयथाऽपि अदृष्टार्था ( आहुति. ) किमत्र गरीयस्त्वं ? उच्यते । सत्यमदृष्टार्था, किंतु समवायसंबन्धः क्लृप्तः, आरादुपकारकत्वे कल्प्यः संबन्धः । तत्र प्रकरणेन एकवाक्यता । टुप्. १०।१।६।१२. * आरादुपकारकेभ्यः सामवायिकानि गरीयांसि । तत्र हि साक्षात् वाक्यम् । आरादुपकारकेषु प्रकृतेन परोक्षेण एकवाक्यता स्यात् । भा. १०।८।१९।३८. * आरादुप- कारकाणां अपूर्वार्थत्वं प्रकरणात् । शा. ९।१।१ वर्णकं २ पृ. ५७४. * आरादुपकारकाणां परमापूर्वो- त्पत्तौ उपयोगः । प्रयोगबहिर्भूतस्य तु तत्स्थितौ उपयोगः, यथा बृहस्पतिसवस्य वाजपेयोत्तरकाले अङ्गत्वेन विहितस्य वाजपेयापूर्वस्थितौ । मीन्या. पृ. २१९, * आरा- दुपकारकाणां स्वरूपे अनुपयोगात् परमापूर्वार्थत्वम् । पृ. २१८. * आरादुपकारकेषु बहुधा प्रसङ्ग एव अनेक- प्रधानसाहित्ये । भाट्ट. ५।२।२. * आरादुपकारकल्पना सामवायिकत्वे संभवति न युक्ता । बा. ३।४।४।१२ पृ. ९०२. * आरादुपकारकक्रियानिषेधः प्रकृतिगतो यथा 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति । विकृतिगतोऽपि द्विविधः अतिदिष्टविषयः उपदिष्टविषयश्च । तत्राद्यो यथा 'न तौ पशौ करोति' इत्याज्यभागनिषेधः । विकृत्युपदिष्टारा- दुपकारकविषयो निषेधो यथा कातीयसूत्रे अग्नीषोमीये पशौ 'स्वाहा देवेभ्यो, देवेभ्यः स्वाहा' इति मन्त्राभ्यां परिपशव्ये ( परिवप्ये ) आहुती आरादुपकारिके संज्ञ- पनपूर्वापरकालयोर्विधाय 'न चैते आहुती जुहोति' इति निषिद्धे । अपूर्वकर्मणि उपदिष्टारादुपकारकक्रिया- निषेधो यथा दाशमिकः, अग्न्याधेये वारवन्तीयादिसाम- गानं निषिध्यते 'न ब्रह्मा सामानि गायति' इति । अत्र ब्रह्मणः सामगानस्य अप्राप्तेः अनुवादमात्रत्वात् साम- गाननिषेधात् नित्यं सामगानं इत्याशङ्क्य अनुवाद- मात्रस्य आनर्थक्यात् सामगाननिषेध एवायं, ब्रह्म- शब्दस्तु ब्राह्मणपरोऽनुवादः इत्युक्तं दशमे ( १०।८।६। ९–११ ) । बाल. पृ. ३५–३६. * आरादुपकारकत्वं आग्नेयस्य आज्यभागस्य । भा. १०।१।८।१६–१८.

* आरादुपकारकत्वं द्रव्यदेवताऽन्यतरनिष्ठोद्देश्यता-निरूपितविधेयताशालिकर्मरूपसंनिपत्योपकारकभिन्नक्रत्वर्थक्रियात्वम् । संनिपत्योपकारके अतिव्याप्तिवारणाय भिन्नान्तम् । पुरुषार्थज्योतिष्टोमादिक्रियायां अतिव्याप्तेः क्रत्वर्थेति । सिद्धरूपक्रत्वर्थवारणाय क्रियात्वोपादानम् । **मुरारिः** भा. पृ. ११६२. * आरादुपकारकत्वं प्रकरणात् त्यागांशस्य प्रयाजादिवत् । **भाट्ट.** ४।१।७ पृ. ९३. * आरादुपकारकत्वं सामवायिकत्वेन बाध्यते । अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०, * **आरादुपकारकत्वात्** सामवायिकत्वस्य अभ्यर्हितत्वात् । ३।३।१०।२०, * अङ्गापूर्वाणामपि आत्माश्रितानामेव एकार्थसमवायेन प्रधानैः संबद्धानामपि उपकुर्वतां आश्रयशेषत्वाभावात् **आरादुपकारकत्वप्रसिद्धिः** । २।१।२।५ पृ. ३९८. * **आरादुपकारकस्थले** दर्शपूर्णमासयोः प्रयाजानुयाजयोः संबन्धः कल्प्यः, उपकारोऽपि । **मीन्या.** पृ. २०९, * आरादुपकारकस्थले प्रकरणं विनियोजकम् । पृ. २०९.

* **आरादुपकारिणा** अङ्गेन प्रधानप्रयुक्तद्रव्यग्रहणस्य 'तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागावघातयोः ।' इति वार्तिकोक्तन्यायेन ( वा. २।१।३।८ पृ. ४०७ ) निरस्तत्वात् । **सु.** पृ. ६३८. * **आरादुपकारिणी** तु सा ( देवता ) नासौ त्यज्यते, तस्मात् ( हविर्द्रव्यात्- ) बहिरङ्गम् । **भा.** ८।१।१७।३२. * प्रकृतिगतारादुपकारिपर्युदासः, विकृतिगतारादुपकारिपर्युदासः, अप्रकृतिविकृत्यात्मककर्मगतारादुपकारिपर्युदासः इति त्रिविधः । एषामुदाहरणानि मृग्याणि । **बाल.** पृ. २०.

* **आरादुपकारित्वं** संनिपत्योपकारित्वेन समवेतार्थसंभवे बाध्यते नान्यथा । **सु.** पृ. ७२८. * आरादुपकारित्वं संनिपातित्वेन बाध्यते यथा पशुपुरोडाशादौ । **बाल.** पृ. १४०.

* **आरुण्यं गुणोऽपि** क्रयाङ्गैकहायनीद्रव्यपरिच्छेदद्वारा क्रयाङ्गमिष्यते । **सु.** पृ. १०२८. * **आरुण्यस्य** श्रुत्या ( क्रयरूप- ) क्रियासंबन्धावगमात् द्रव्यसंबन्धो वाक्यलक्षणो दुर्बलत्वात् बाध्यते । **वा.** ३।१।६।१२ पृ. ६८५. * आरुण्यस्य सर्वक्रयद्रव्यस्थानापन्ने त्रिवत्से निवेशः । **भाट्ट.** ३।१।६ पृ. १९१. * **आरुण्यगुणः** क्रयसाधनं सन् क्रयहेतुमेकहायनीमेव भजते । आरुण्यगोद्रव्ययोः पार्ष्ठिकान्वयः । **वि.** ३।१।६. * **आरुण्यगुणः** क्रयहेतौ एकहायन्यामेव व्यवस्थितः, न तु द्रव्यान्तरे संकीर्णः । **भा.** ३।१।६।१२.

* **आरुण्यन्यायः** ( ३।१।६।१२ ) । ननु जातिरपि शब्दाभिहिता आरुण्यन्यायेन क्रियासाधनमेव । ( 'अरुणान्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । ) **रत्न.** ६।१।१।१, * **आरुण्यैकहायनीवत्** वसानौ इत्यत्र पुंस्त्वद्वित्वयोः परस्परनियमः । ६।१।५।२२.

⌛ **आरोपितगुणकथनं स्तुतिरिति न्यायः** । स्तुतिरूपार्थवाद इत्यर्थः । आरोपितानां गुणानां वर्णनं 'आदित्यो यूपः' 'यजमानः प्रस्तरः' इत्यादौ । **साहस्री.** ५४९.

⌛ **आरोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोपः इति न्यायः** । न चैवं घटपटयोरपि तादात्म्यप्रतीत्यापत्तिः, तादृशप्रतीतौ सत्यां एतस्य निमित्तं कल्प्यते आरोपे सति॰ इति न्यायात् । **सिद्धिव्याख्या** पृ. १२९-१३०.

⌛ **आरोप्यवाचकेन पदेन अधिष्ठानस्य ग्रहणं, न तु अधिष्ठानवाचकेन पदेन आरोप्यस्य ग्रहणं इति न्यायस्य** प्रकृते बाधनीयत्वात् । तद्बाधनं च अङ्गानां प्राधान्येन उपास्यत्वावगमात् । इति शङ्का । **आभरणं.** ४।१।५।६ ब्र. सू.

⌛ **आरोहावरोहणन्यायः** । अयं योगशास्त्रे व्यवहृतः । तथाहि, मूलाधारादिब्रह्मरन्ध्रान्तस्थानेषु आरोहावरोहन्यायेन संचारितपवनः अन्तकाले भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्येत्याद्युक्तम् । **साहस्री.** ९१७.

⌛ **आर्तिन्यायः** । आर्त्यधिकरणम् । हविरार्तिन्यायः । हविरार्त्यधिकरणम् । उभयहविरार्तिन्यायः । हविरुभयत्वाधिकरणम् । पञ्चशरावन्यायः । समस्तपञ्चशरावन्यायः । एकहविरार्तावपि पञ्चशरावनिर्वापः ॥

**यथाश्रुतीति चेत् । ६।४।६।२२ ॥**

**भाष्यं**— ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इति श्रूयते । तत्र इदमस्ति वचनं ' यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् ' इति । तत्र संदेहः किं उभयस्मिन् आर्ते पञ्चशरावो निर्वप्तव्यः, उत अन्यतरस्मिन् इति । किं प्राप्तं ? इति चेत् पश्यसि एवंजातीयकः एकस्य आर्त्यामिति । **तत्र ब्रूमः** । उभयोरिति । कुतः ? यथाश्रुति भवितुमर्हति । यद्यत् श्रूयते, तदवगम्यते । उभयोश्च असौ श्रूयते । श्रूयमाणं च विवक्षितुं न्याय्यम् । इतरथा यावदेव ' हविः ' इति, तावदेव ' उभयं हविः ' इति स्यात् । तस्मात् उभयोः आर्त्यां पञ्चशरावः इति ।

**टुप्**— ( ग्रहाधिकरणेन सह अस्यापौनरुक्त्यं केषांचिन्मतेनाह– ) प्रत्ययः प्रातिपदिकार्थमवश्यमुच्चारणीयः, न केवलं प्रातिपदिकं स्वार्थे वर्तते इति । इहोभयपदस्य नान्यदुच्चारणे प्रयोजनमस्ति, तस्मात् विवक्षितम् । ( तन्त्ररत्ने तु ' नहि केवलस्य प्रातिपदिकस्य असाधुत्वात् अर्थवत्ता इति अविवक्षितस्वार्थमपि एकवचनं प्रातिपदिकप्रयोजनमस्ति तस्माद्विवक्षितम् ' इति पाठः ) । **अपरे** त्वाहुः, द्वितीयया ( ग्रहस्य प्राधान्यं प्रतिपादयन्त्या संमार्गस्य– ) तादर्थ्ये प्रतिपादिते संमार्गः कथं विनियुज्यते इति । ( तत्र चिन्ता ) किं ग्रहमात्रे, उतैकस्मिन् ( ग्रहे ) इति । इह (तु) किं उभयेनाधिक्रियते, उत एकेनापीति । ( एतदेव विवृणोति– ) द्वितीया संमार्गस्य तादर्थ्यं प्रतिपादयन्ती किं ग्रहमात्रे प्रतिपादयति, उतैकस्मिन् ( ग्रहे इति । तत्र चिन्ता ) तस्मात् तत्र शेषभावः ( चिन्तितः किं विशेषणशेषिणि शेषो विनियुज्यते , किंवा नेति ) इह ( तु ) अधिकारश्चिन्त्यते ( किं हविर्मात्रमधिकारकारणं , उतोभयत्वविशिष्टमिति ) । एवं ( प्रकारद्वयेन ) कैश्चिदपुनरुक्तता उक्ता । **सा चेयमयुक्ता** । कथं ? ( तत्र प्रथमस्य पक्षस्य दूषणमाह– ) ' यस्य पुरोडाशौ क्षायतः ' इतीदमपि अत्रोदाहरणम् । अत्रापि ( च ) न विभक्तेर्वचनमेवैकं प्रयोजनमिति द्वित्वाविवक्षा ( सिद्धैवेति पुनरुक्तैव स्यात् ) । न चास्य ( न विभक्तेर्वचनमेवैकं प्रयोजनं इत्यस्य हेतोः ) प्रमादात् तत्राविवक्षा ( विशेषणस्य । किंतु ) उपचयत्वेन तत्रावगमादानः, ( वाक्यभेद एव तु मूलहेतुः । स चात्रापि तुल्यः, इति नास्ति अपौनरुक्त्यम् । द्वितीयं पक्षं दूषयति– ) ' इत्थं विनियुज्यते , इत्थमधिकारः ' इति विकल्पमात्रम् ( विशेषमात्रं , न तु औपाधिकं, शेषिणोऽपि उद्देश्यत्वादेव विवक्षितविशेषणत्वं , न तु शेषित्वात् । तच्च अधिकारहेतोरपि निमित्तस्य अविशिष्टं इति न अपौनरुक्त्यसिद्धिः ) । तस्मादन्यथा वर्ण्यते ।

निमित्तमात्रं ( इह ) चिन्त्यते ( निमित्तमेव कीदृशमिति चिन्त्यते । न तु निमित्तस्य मतो विशेषणविवक्षाऽविवक्षे ) । तच्च उद्दिश्यते । उद्दिश्यमानस्य च विशेषणमविवक्षितं इति ( ग्रहाधिकरणे ) स्थितमेव ( न तु उद्देश्यमपि अविवक्षितमिति । तदिह एवं चिन्त्यते– ) उभयपदं किं निमित्तसंनिपाति , उत नेति । ( किं केन चिदपि प्रकारेण एकत्वं विशेषणं संभवति, उत नेति तत्र चिन्त्यते , इह तु किमुभयं निमित्तं, उत हविर्मात्रं इति विचारः । तत्र– ) पूर्वपक्षवादी मन्यते । यथा आर्तिहविषोः श्रवणात् ( उभयोर्मिलितयोर्निमित्तत्वात् ) तयोः ( द्वयोरन्यतरस्यापि ) अभावे नास्ति निमित्तं , एवं उभयपदश्रवणात् तदभावे ( अपि ) नास्ति निमित्तम् ( त्रयाणामपि मिलितानां निमित्तत्वात्, इतरथा आर्तिहविषोरपि मेलनं न स्यात् ) । **अथवा** ' यस्य ' इत्यस्मात् ( पूर्वपठितात् यद्वृत्तात् ) सामान्येन ( निमित्त– ) बुद्धौ उपजातायां ' किं यस्य ' ( इति अपेक्षा भवति ), तत आह ' उभयं ' इति । ' किमुभयं ' इति ( पुनरपेक्षायां सत्यां आह– ) ' हविः ' इति उक्ते अनिराकाङ्क्षत्वात् आर्तौ उच्चरिते ( यद्वृत्तात् प्रक्रान्तः ) निमित्तप्रत्ययः निराकाङ्क्षी भवति । अतः सर्वं ( अपेक्षितत्वात् ) विवक्षितं ( इति ) ।

**न, तल्लक्षणत्वादुपपातो हि कारणम् । २३ ॥**

**भाष्यं**—नैतदेवम् । उपपातो हि आर्तिसंबद्धं द्रव्यं, तत् कारणम् । तस्य लक्षणं हविरार्तिः । तत् व्यस्तं समस्तं च निमित्तं नहि उभयशब्देन शक्यं विशेष्टुम् । विशेष्यमाणे हि वाक्यं भिद्येत ' हविषः आर्तौ पञ्च-

शरावः, स च उभयस्य हविषः' इति । **आह**, यदि विशेषणं न मृष्यते, हविषाऽपि ते विशेषणं न प्राप्नोति । **तदभिधीयते** । मृष्यामहे हविषा विशेषणम् । अविशेष्यमाणे अनर्थकं स्यात् । 'यस्य आर्तिं आच्छेंत्' इत्यविशेषे यत्किंचित् इति गम्यते । तत्र सर्वस्यैव किंचित् आर्तिं ऋच्छति, अन्ततः चरितं निमिषितं चिन्तितं इति । तत्र 'यस्य' इति निमित्तवचनं नित्ये अनुपपन्नं गम्येत । तस्मात् अवश्यं आर्तिः विशेष्टव्या । सा च हविषा विशेष्यते । तथा हविरार्तिसंबन्धनिर्वृत्तिः निमित्त पञ्चशरावस्य । शक्नोति हि श्रुत्या तं संबन्धं वक्तुम् । हविरुभयसंबन्धं तु वाक्येन ब्रूयात् । दुर्बलं च वाक्यं श्रुतेः । ननु हविरार्तिसंबन्धोऽपि वाक्येनैव । उच्यते । आर्तिनिर्वृत्तिरपि तत्र गम्यते, सा च श्रुत्या । हविरुभयसंबन्धे अत्यन्तं श्रुतिरेव हीयते । तस्मात् न तत्संबन्धो निर्वर्त्यमानो निर्दिश्यते इति । कथं तर्हि उभयशब्दः ? उभयं इति नित्यानुवादः । एकस्मिन्नपि आर्ते, अपरस्मिन्नपि । तस्मादुक्तं 'यस्य उभयं हविः आर्तिमार्च्छेत्' इति । **अथ** कस्मात् न पदद्वयविशिष्टा आर्तिः निमित्तं प्रतीयते इति 'यस्य उभयगुणविशिष्टं हविः आर्तिमार्च्छेत्' इति । **अत्रोच्यते** । कथं तावत् भवान् मन्यते विशिष्टेन अर्थेन विशिष्टा आर्तिः निमित्तमिति । **आह**, विशिष्टार्थस्य संनिधानात् विशिष्टोऽर्थः आर्तिसंनिहितः । किं पुनः स्यात् यदि एवं भवेत् ? ततः उभयविशिष्टा आर्तिः निमित्तं इति गम्यते । **अत्रोच्यते** । इदं तावत् देवानांप्रियः प्रष्टव्यः, यस्यापि हि विशिष्टार्थः आर्तिसंनिहितो भवति, किं तस्य अविशिष्टो दण्डैः पराणुद्यते ? किमतो यत् न पराणुद्यते ? एतदतो भवति, अविशिष्टगताऽपि आर्तिः निमित्तं पञ्चशरावस्य भवति । ननु उभयशब्दः हविः विशेक्ष्यति । **न** । हविःशब्देन असंबध्यमानः तन्न शक्नोति विशेष्टुम् । आनन्तर्यात् संभन्त्स्यते तर्हि, तथापि न समर्थः । नहि असौ निवृत्तिं प्रयोजयति । **आह**, विशेषवचनत्वात् तन्निवर्तको भविष्यति यथा '"शुक्ला गौरानीयतां' इत्येवमभिहिते न कृष्णामानयति । शुक्लशब्दः एनां गां कृष्णादिभ्यो निवर्तयति । **उच्यते** । विषम उपन्यासः । न तत्र गवाकृत्या द्रव्यं लक्षयित्वा तस्य आनयनमुच्यते । तत्रापि चेत् एवमभविष्यत्, नैव एनां शुक्लशब्दो व्यशेक्ष्यत । उभयविशेषणविशिष्टं तु तत्र आनयनं प्रधानं उच्यते । इह पुनः आर्तिहविष्ट्वलक्षिते द्रव्ये पञ्चशरावः कर्तव्यः । **किं पुनः कारणं** प्रधानभूते आख्यातार्थे संहत्य विशेषणं भवति, परार्थे पुनः वियुज्य इति ? **उच्यते** । प्रधानभूते आकृतिर्गुणो वा तत्संबन्धार्थमुच्यते, तत्र उभयविशेषणविशिष्टः एकस्मात् वाक्यात् अवगम्यते, तद्विशिष्टं च कृत्वा कृती भवति, अन्यतरविशिष्टं कुर्वन् अश्रुतं कुर्यात् । यत्र पुनः आकृतिलक्षिते द्रव्ये आख्यातार्थः कीर्त्यते, तत्र सर्वेष्वेव तज्जातीयेषु उक्तो भवति, न तत्र एकस्मिन् निर्वृत्ते कृती मन्येत । अपरस्मिन् अपि हि आकृतिलक्षिते तत् उक्तमेव । तत्रोक्तं, 'अप्रतिषिद्धं च किमिति न क्रियेत । आख्यातार्थे पुनः प्रधाने, न तस्य आकृतिलक्षितेन संबन्धः । तत्र तदाकृतिकान्तरे अनुपसंह्रियमाणेऽपि कृतमेव प्रधानम् । सगुणं च प्रधानं भवति, न च किंचित् श्रुतं हीयेत' इति । तस्मात् तत्र विशेषणं युक्तं, न तु इह तथा । इह हि हविराकृतिकस्य द्रव्यस्य आर्तौ पञ्चशरावः इत्युक्तम् । तन्न शक्यं विशेषवचनेन प्रतिषेधावाचकेन निवर्तयितुम् । **अपिच** उभयशब्दे हविषा संबध्यमानेऽपि नैव उभयविशिष्टा आर्तिः प्रतीयते । किं कारणं ? हविषा उभयशब्दः संबध्यते, न आर्तिमार्च्छेत् इत्यनेन पदेन । तत्र संनिहितेऽपि उभयशब्दे हविःशब्दस्य यावानर्थः, तावतैव आर्तिः संबध्यते । अविशिष्टश्च तत्रार्थः । तस्मात् न उभयविशिष्टा आर्तिः निमित्तमिति ।

**अथ** आर्त्याश्रयविभक्तियोगात् उभयशब्दस्य, उभयविशिष्टा आर्तिः इत्युच्यते, तन्न । विभक्तिसंयोगो हि हविर्विशेषणं उभयशब्दं शक्नुयात् कर्तुं, समभिव्याहारात्, नार्तिविशेषणम् । नहि अस्य आर्त्या हविर्विशिष्टस्य समभिव्याहारोऽस्ति । **अथोच्यते** । असत्यपि समभिव्याहारे आर्तिशब्दसंनिधानात् तद्विशिष्टैव आर्तिः प्रत्येष्यते इति । **तन्न** । असत्यां हि आकाङ्क्षायां संनिधानं

अकारणं भवति। यथा 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति। एकवाक्यगतत्वात् तद्विशिष्टं गम्यते इति चेत्, नैतदेवम्। एकस्मिन्नपि वाक्ये तदवयवभूतस्य अनपेक्षितस्य नैव भवति संबन्धः। यथा 'अश्वेन व्रजति श्वेतेन पटेन आवृतः' इति न अनपेक्षितस्य अश्वस्य श्वैत्यं विशेषणं भवति। अथ उच्यते, आर्तिविशिष्टेन हविषा उभयस्य संबन्धः इति, तदपि नोपपद्यते। नहि 'आर्तिमार्च्छेत्' इति हविर्विशेषणत्वेन उपादीयते, किं तर्हि? पञ्चशरावस्य निमित्तत्वेन। हविरार्तेः उभयपञ्चशरावसंबन्धे यौगपद्येन अभ्युपगम्यमाने वाक्यं भिद्येत। अथ हविराकृतिलक्षितेन संबद्धं आर्च्छेत् इति पुनः हविर्विशिष्टेन उभयशब्देन संबध्येत, तथापि वाक्यं भिद्येत। तस्मात् नोभयविशिष्टा आर्तिर्निमित्तम्।

आह, यथैव आख्यातार्थप्राधान्ये उभयविशेषणविशिष्टा उच्यते इति नान्यतरविशिष्टा निमित्तं गम्यते, एवं इतरस्मिन्नपि पक्षे उभयविशेषणविशिष्टा सा उच्यते इति। यद्यपि स्वेन आत्मना अविशिष्टा, तथापि अन्यतरविशिष्टा भवन्ती न निमित्तं भवितुमर्हति इति, को वा विशेषः इति। तदभिधीयते। प्रत्यक्षे उपादेयत्वेन विशेषणद्वयं, त्वत्पक्षे पुनः लक्षणत्वेन। आह, किमतो यत् लक्षणत्वेन? उच्यते, एतदतो भवति, हविराकृत्या लक्ष्यते द्रव्यं, तस्य किंचित् वक्तव्यमिति, तत् अलक्षितं उच्यमानं न विज्ञायेत कस्य स्यात् इति। अथवा सर्वस्यैव द्रव्यस्य इति गम्येत। तस्मिन् उभयस्मिन् अपि निर्दिष्टे सति तस्य आश्रयं लक्षयितुं हविराकृतिः उच्यते। तत्र द्वयमापतति, यत् हविराकृतिकं तत् आर्तं इति, यद्वा यत् हविराकृतिकं तत् उभयं इति। यदि तावत् यत् हविराकृतिकं तत् आर्तं, इत्यपेक्ष्यते, ततः हविराकृतिकं उभयं अनुभयं वा आर्तं निमित्तं गम्यते। अथ यत् हविराकृतिकं तत् उभयं इति, ततः न आर्तिः हविषा विशेष्यते। हविषा अविशेष्यमाणायां आर्तौ 'उभयशब्दः हविः विशेक्ष्यति' इति न एतदवकल्पते। कथमिति? एवं किल विशेष्येत यत् हविराकृतिकं उभयं इति। तत्र पुनर्वक्तव्यं यत् हविराकृतिकं उभयं, तच्चेत् आर्तमिति। कथं तेन विशिष्टेन आर्तिः संबध्येत इति। पुनश्च उभयहविःशब्दौ आर्तिविशेषणार्थं उच्चार्येयाताम्। अथ पुनरुच्चारणं न क्रियते, तथा यद्यपि हविःशब्दः तन्त्रेण आर्त्युभयाश्रयलक्षणत्वेन उच्चार्येत (आनन्दाश्रमीये लक्षणत्वे नोच्चार्येत इति सप्तम्यन्तं छिन्नम्। तृतीयाऽन्तं तु युक्तं भाति), तथापि अविशिष्टं आर्तेः लक्षणं स्यात्, अविशिष्टं उभयस्य। विशिष्टे इष्टे पुनरुच्चारणं कर्तव्यं, तत्र वाक्यभेदः। एवं उभयशब्दो यदि आर्छतिना संबध्येत, न हविः विशिष्टं स्यात्। तत्र अविशिष्टस्य हविषः आर्तिः निमित्तं स्यात्। अथ हविःशब्देन संबध्येत, पुनः आर्तिसंबन्धार्थं हविःशब्दसहितं उच्चार्येत 'तत् चेत्' इति वा सर्वनाम्ना निर्दिश्येत, तत्र स एव वाक्यभेदः। उपादेयत्वे पुनः नान्योन्यविशेषणत्वेन प्रयोजनम्। द्वयमपि आर्ति विशेष्टुं उच्चार्येत, तत्र नान्यतरविशिष्टा आर्तिः निमित्तं भविष्यति। लक्षणत्वे तु अन्यतरविशिष्टा भवति इत्येष विशेषः।

अपिच सर्वस्यैव पदस्य पदान्तरसंबन्धे सति चशब्दात् ऋते तृतीयेन पदेन सत्यां गतौ संनिहितेनापि संबन्धो न युक्तः। नहि भवति 'भार्या राज्ञः पुरुषो देवदत्तस्य' इत्यत्र राजा पुरुषविशेषणम्। असत्यां तु गतौ उपादेयस्य अनेकस्यापि प्रधानेन संबन्धः अवकल्पते व्यवहितेनापि, 'व्यवधानात् अर्थो बलीयान्' इति। लक्षणत्वे तु लक्षणद्वयसंनिपाते अवश्यं हेये अन्यतरस्मिन्, व्यवहितो गुणो वा हातव्यो भवति।

**टुप्**— नैमित्तिकप्रयोगवचनो यथैव पञ्चशरावं (विधेयभूतं) अपेक्षते आत्मसिद्ध्यर्थं (नहि असति विधेये विधिः संभवतीति), एवं निमित्तमपि (अपेक्षते। नहि असति निमित्ते नैमित्तिकविधिरवकल्पते)। तत्र यत् निमित्तासंनिपाति, तत् अनपेक्षितत्वात् अविवक्षितम्। उभयं इति च असंनिपाति। कथं? 'यस्य हविरार्तिमार्च्छेत्' इत्येतावति निमित्तप्रत्यये जाते, नैमित्तिकेन (च) गृहीते, अन्यस्य (उभयपदस्य) अनपेक्षितत्वात् अविवक्षा। (तत्र यदि) हविरार्तिमार्च्छेत् इति (निमित्तं) अनूद्य पञ्चशरावो विधीयते, तच्च (हविः) 'उभयं' इति (हविरनुवादेन) उभयं

( विधीयते ), ततः ( हविःशब्दस्य विधिप्रत्ययस्य च आवृत्तेः ) वाक्यभेदः ( स्यात् ) ग्रहैकत्वन्यायेन ( ३।१।७।१३ )। ‘ आह , यदि विशेषणं न मृष्यते ’ ( हविषा विशेषणं मा भूत् ) इति ( भाष्यं हविषो विशेषणत्वं निराकरोति। तच्चायुक्तं, नहि सिद्धान्ती हविषो विशेषणतामिच्छति, आर्तिसंबद्धं द्रव्यं उपपाताभिधेयं पञ्चशरावस्य कारणं, इत्युपक्रमे आर्तिविशिष्टस्य हविषो निमित्तत्वाभिधानात्। अत आह– ) ‘ यदि उभयशब्दस्य आर्छतिना संबन्धो नेष्यते हविषोऽपि मा भूत् संबन्धः इति, विशेषणशब्देन संबन्धमभिधत्ते ’। ( अयमवतरणस्थो ग्रन्थः लिखिते मुद्रिते च टुप्टीकाग्रन्थे उपलभ्यते। तन्त्ररत्ने तु नायं ग्रन्थ उपलभ्यते। अत्र हि भाष्यपङ्क्तिरेव व्याख्याता इति। तत्र तु अत्र स्थाने इत्थं पङ्क्तिः– ‘ यदि उभयशब्दस्य स्वरूपेण हविर्विशेषणशब्देन संबन्धमभिधत्ते , तेन आर्तिमात्रमेव हविःसंबन्धानपेक्षं निमित्तं प्राप्नोति इत्यभिप्रायः। ननु न तन्मात्रस्य निमित्तता घटते , नित्यत्वात्। अतः कथमिदं चोद्यं, अत आह– ’ इति )। क्रियापदगणो निमित्तत्वं प्रतिपद्यते इति विवेकमगृहीत्वा चोद्यते। ( निमित्तविशेषणे वाक्यभेदाभिधानात् आर्तिहविषोरन्यतरेण अन्यतरस्य विशेषणे वाक्यभेदात् उभयपदस्य निमित्तानन्तर्भावः, इतरयोश्चान्तर्भावः इति विवेकमगृहीत्वा चोदितवानिति ) ‘ मृष्यामहे हविषा विशेषणं ’ इति ( सिद्धान्तभाष्यम्। तदभिप्रायमाह — ) हविरार्तिसंबन्धादृते निमित्तप्रत्ययाभावः। ( तेन ) हविर्विशेषणमिति। परपक्षः उभयथा ( अपि विशेषणत्वे विशेष्यत्वे च ) निराक्रियते इति ( मत्वा अनादरात् ) हविर्विशेषणं ब्रवीति ( सर्वथा केवलयोः निमित्तत्वनिराकरणसिद्धेः )। परमार्थतस्तु आर्तिरेव हविषो विशेषणम्। ‘ तथा हविरार्तिसंबन्धनिर्वृत्तिः निमित्तं पञ्चशरावस्य। शक्नोति हि श्रुत्या तत्संबन्धं वक्तुं, हविरुभयसंबन्धं तु वाक्येन ब्रूयात् ’ ( अस्य भाष्यस्याभिप्रायमाह– ) कर्तव्यतावचनः ( विधिप्रत्ययः ) यस्मात् परः श्रूयते तस्यैव ( परमार्थतः श्रुत्या ) कर्तव्यतामाह। स च ( यागः ) कारकैर्विना नात्मानं प्रति लभते इति ( तदर्थं ) कारकेष्वपि ( विधिः ) व्याप्रियते। फलनिमित्ते ( अपि ) क्रियया ( नैमित्तिक्या ) आकाङ्क्षिते, इति ते प्रति क्रियां विदधाति ( तेन कारकफलनिमित्तानां विधिनैव अपेक्षितत्वात् विवक्षा )। यत् ( तु ) हविषो विशेषणं ( उभयत्वं ), तत् नासौ ( क्रिया ) न तत्साधनं इति ( विधि– )प्रत्ययेन न परामृश्यते। ( ननु उभयत्वविशिष्टं हविः निमित्तं भवतु , न तु आर्तिविशिष्टम्। अत आह– ) एवं चेत् आर्तिविशिष्टेन हविषा निमित्तप्रत्ययः उपजायते। नैमित्तिकप्रयोगवचनेन ( निर्वपेत् इत्यनेन ) तावन्मात्रस्यैव अपेक्षितत्वात्। यदन्यत् ( उभयमिति निमित्तासंनिपाति ) पदान्तरमुदीक्ष्यते, तत् विलम्बितत्वात् ( पर्यवसिते विधौ पश्चादागच्छत् ) वाक्यं ( भवति )।

( भाष्यव्याख्यानान्तरमाह– ) **अथवा** आर्च्छेत् इति ( निमित्ताभिधायी लिङ्शब्दः ) यस्मात् परः श्रुतः, तस्य ( एव आर्छत्यर्थस्य श्रुत्या ) निमित्तभावमाह। तत्र केवलश्रुतिपरिग्रहे ( सति आर्तिमात्रस्य नित्यत्वेन ) निमित्तभावव्याघातः इति आर्छतिना हविषि विशेष्यमाणे ( अपि ) श्रुतिर्न ( अतीव ) हीयते, यथा धात्वर्थे अन्यत्र विधीयमाने ( व्रीहीन् प्रोक्षति इत्यत्र नात्यन्तं श्रुतिहानिः )। हविरुभयसंबन्धे तु न धात्वर्थो विधीयते ( निमित्ततया नाभिधीयते ), न सोऽन्यत्र ( नान्यविशेषणतयाऽपि निमित्तं भवतीत्यर्थः )। तस्मात् उभयपदं निमित्तकर्तव्यतावचनेन ( आर्च्छेत् इत्यनेन ) नापेक्षितं, न ( अपि ) नैमित्तिकेन (निर्वपेत् इत्यनेन), अतः अविवक्षितम्।‘ अथ कस्मात् न पदद्वयविशिष्टा आर्तिः निमित्तं प्रतीयते इति ’ ( इत्यादि ‘ तत उभयविशिष्टा आर्तिर्निमित्तं इति गम्यते ’ इत्यन्तं चोद्यभाष्यं व्याचष्टे– ) यथा हविःशब्दाम्नानात् ( आर्तिहविषोः ) विशेषणविशेष्यभावः परमार्थश्रुतित्यागेन ( अङ्गीक्रियते ), एवं उभयपदाम्नानात् यादृशी श्रुतिः ( तदभावेन संभवति ) तादृश्येव ग्राह्या। तस्मात् आर्त्या ( न केवलं हविर्विशेष्यं किंतु ) द्वे अपि ( हविरुभयत्वे ) इतरेतरयुक्ते विशेष्येते। ( तदेवं ‘उभयविशिष्टा आर्तिः’ इति भाष्यं संबन्धपरं विशिष्टपदं, आर्तिविशिष्ट-

नुभयं इत्येतमर्थं प्रतिपादयति इति व्याख्यातम् । यथाश्रुतमेव वा व्याख्येयमित्याह– ) अथवा आर्तिर्विशेषणं इत्येवं विवेकं ( पूर्वपक्षी ) अगृहीतवान्, किंतु गृहीतं ( पूर्वपक्षिणा ) 'आर्तिनिर्वृत्तिरपि तत्र गम्यते' इति पूर्वस्मात् ( सिद्धान्तभाष्यात् ) आर्तिः विशिष्टा निमित्तं इति । एवं चेत् ( आर्तिनिर्वृत्तिरेवं निमित्तं चेत्, ततः ) यथैव एकेन ( हविःपदेन ) विशेष्यमाणा आर्तिनिर्वृत्तिः ( श्रुत्यभिहिता ) अस्ति ( न तु अवगता ) एवं द्वितीयेनापि ( उभयपदेन विशेष्यमाणा ) आर्तिनिर्वृत्तिरस्त्येव ( इति ) न श्रुतिर्हास्यते ।

'अत्रोच्यते । इदं तावत् देवानांप्रियः प्रष्टव्यः' इत्यादिना ( 'तन्न शक्यं विशेषवचनेन प्रतिषेधवाक्येन निवर्तयितुं' इत्यन्तेन भाष्येण ) अन्तर्णीताभिप्रायः इदानीं प्रतिपादयति ( भाष्यकारः ) । कर्म ( फलं, संस्कार्यं वा ) निमित्तं चोद्दिश्य धात्वर्थस्तत्र विधीयते । ( तयोः ) यत् विशेषणं, न तत् क्रियाङ्गं, इत्यतः तस्य अविवक्षा ( पूर्वं ) उक्ता । ( ननु उभयपदं निमित्तसंनिपात्येव न तु निमित्तविशेषणं, अतः कथं तस्य अविवक्षा ? अत आह–) इह ( च ) आर्तिविशिष्टं द्रव्यं निमित्तं, तद् ( द्रव्यं ) व्यस्तमपि हविराकृतिलक्षितं, समस्तमपि । तस्मात् यद्यत् हविराकृतिकं ( द्रव्यं ) तस्यतस्य निमित्तता शब्देन प्रतिपाद्यते । यथा 'गौः न पदा स्प्रष्टव्यः' इति योयो गौः, सस पदा न स्पृश्यते एवमिहापि ।

'अपिच उभयशब्दे हविषा संबध्यमानेऽपि नैव उभयविशिष्टा आर्तिः प्रतीयेत' ( इत्यादि 'तस्मान्नोभयविशिष्टा आर्तिर्निमित्तं' इत्यन्तं भाष्यमाक्षिपति– ) ननु उभयशब्दो हविर्विशेक्ष्यति इत्यनेन ( पूर्वेणैव ) गतार्थस्य किमर्थं पुनरुपन्यासः ? उच्यते । ( तत्र हि ) आर्त्या संबध्यमानो हविर्विशेक्ष्यति इत्युक्तं ( चोद्यवादिना ) यथा 'शुक्लो गौरानीयतां' इति ( अत्र ) गां ( आनयतिना ) संबध्यमानां शुक्लः अर्थात् ( ऐककर्म्यात् ) विशेषयन् कृष्णादिनिवृत्तिं करोति । एवं दृष्टान्तदार्ष्टान्तिकयोः (उपादेयोद्देश्यविशेषणयोः ) तुल्यत्वे चोदिते इतरः विवेकं कथयति ( 'विषम उपन्यासः' इत्यादिना । तदर्थं संक्षिप्य दर्शयति– ) क्रियाप्राधान्ये तस्याः ( क्रियायाः ) विधीयमानत्वात् विशेषणं विवक्षितम् । गुणभूतायां तु ( क्रियायां ) यत् प्रधानस्य विशेषणं, तत् अविवक्षितम् । ( प्रधानग्रहणं निमित्तस्याप्युपलक्षणम् ) । इह तु ( अपिचेत्यादिना ) हविषा पूर्वं ( एव ) संबन्धमुररीकृत्य निराकरोति, ( निराकरणमाह– ) आर्छतिना हविः परामृश्यते, न ( तु ) उभयशब्दो विद्यमानोऽपि । ( एवं हविर्मात्रसंबन्धात् आर्तिसंबन्धे निराकृते सति– ) 'अथ आर्त्याश्रयविभक्तियोगात्' इति । ( इत्यादि 'अश्वस्य श्वैत्यं विशेषणं भवति' इत्यन्तं भाष्यं समाहृत्य व्याचष्टे– ) अनेन ( भाष्येण ) एकविभक्तिमानन्तर्यं एकवाक्यत्वं च ( उभयशब्दस्य आर्तिसंबन्धे प्रमाणं– ) उपन्यस्यते । ( एकविभक्तिं विवृणोति– ) आर्तेः हविराश्रयः, तत्र ( हविषि ) या विभक्तिः, सा इतरत्रापि ( उभयपदे दृश्यते ) । तस्मात् यया विभक्त्या हविरुच्चार्यमाणं ( आर्त्या ) संबध्यते, तयैव उभयमपि संभन्त्स्यते । (आनन्तर्यं विवृणोति–) यथा च मनसि विपरिवर्तमानया आर्त्या हविः संबध्यते, एवमुभयमपि, विपरिवृत्तेस्तुल्यत्वात् । ( एकवाक्यत्वं विवृणोति– ) एकवाक्यगते चोभे अपि ( आर्त्युभयत्वे ), आनर्थक्यात् उभयशब्दस्य ( नहि संभवति आर्तिसंबन्धेन अर्थवत्त्वे युक्तमानर्थक्यम् ) । यद्येवं मन्यसे इति ( पूर्वपक्षवाद्यभिप्रायं ) उपन्यस्य परिहरति । ( तत्र प्रथमचोद्यपरिहारभाष्याभिप्रायमाह– ) एकविभक्तियोगात् हविषा ( एव वाक्यलक्षणः ) संबन्धः स्यात्, नार्त्या । ( आनन्तर्यं परिहरति, 'भार्या राज्ञः पुरुषो देवदत्तस्य' इत्यत्र– ) यथा भार्यया संबध्यमानो राजा आनन्तर्येऽपि न पुरुषेण संबध्यते, निराकाङ्क्षत्वात्, एवमुभयपदम् । ( एकवाक्यतां परिहरति– 'अश्वेन गच्छति श्वेतेन पटेनावृतः' इत्यत्र– ) यथा श्वैत्यं पटेन संबध्यमानं एकवाक्यत्वेऽपि नाश्वविशेषणं, तेन अनपेक्षितत्वात्, एवं हविषः आर्त्या संबद्धत्वात् उभयपदस्य न आर्छतिना संबन्धः इति । ( एतदेव चोद्यपूर्वकं विवरीतुमारभते– यदेतत् हविःसंबन्धनिरा-

काङ्क्षस्य नार्छतिना संबन्ध इत्युक्तं- ) तदयुक्तम्। अनेन वाक्येन ('यस्योभयं हविरार्तिमार्छेत्' इत्यनेन पूर्वमेव आर्ति- ) संबन्धित्वेन अवधृतत्वात्। अपिच उभयशब्दोऽपि हविषा संबध्यते, न हविः-स्वरूपेण ( आनर्थक्यप्रसङ्गात् ), किंतु येन ( रूपेण ) आर्त्याश्रयो हविः, ( तेन रूपेण संबध्यते )। तस्मात् आर्त्या अनुरक्तेन हविषा संबध्यते। यथा व्रीहिषु प्रोक्षणं अपूर्वीयांशेन ( संबध्यते, न व्रीहिरूपेण। आक्षेपमुपसंहरति- ) एवं चेत् उभयविशिष्टा आर्तिः इति युक्तम्।

उच्यते। तत्र ( प्रोक्षणे ) प्रकरणात् अपूर्वीयांशता शक्या लक्षयितुं व्रीहिस्वरूपे आनर्थक्यात्। इह तु प्रकरणस्थानीयस्य ( प्रमाणान्तरस्य ) अभावात् अशक्या लक्षणा। पूर्वं आर्छतिना ( हविषः ) संबन्धः, ततः तदनुरक्तस्य ( आर्त्यनुरक्तस्य ) उभयेनेति, एवं च लक्षणा भवेत्। एवं च ( सति ) हविषो द्विरुच्चारणात् वाक्यभेदः। ( आर्तिसंबन्धाय प्रथममुच्चारणं, 'यत् हविस्तत् आर्तं' इति। ततः तदनुरक्तस्य उभयसंबन्धाय पुनरुच्चारणं 'यत् आर्तं हविः, तच्चेदुभयं' इति। भाष्यं व्याचष्टे- ) एवं ( पूर्वोक्तन्यायेन उभयशब्दस्य ) आर्त्यनुरागे निराकृते 'अथोच्येत आर्तिविशिष्टेन हविषा उभयस्य संबन्धः' इत्यनेन ( भाष्य- ) ग्रन्थेन ( आर्त्या- ) अनुरक्तेन हविषा संबन्धः कस्मान्न भवतीति। ( उच्यते ) एवं च ( सति ) पूर्वदोषद्वयं परिहृतं भवति, ( दोषद्वयमाह- ) न आर्च्छतिना ( उभयस्य ) संबन्धः, ( किंतु ) शुद्धेन हविषा इति। इतरः ( तु सिद्धान्तवादी ) आह, 'न आर्च्छेत् ( इत्ययं शब्दः ) हविर्विशेषणतया उपादीयते' इति। ननु एतदयुक्तं आर्तिर्हि विशेषयन्ती निमित्ततां प्रतिपद्यते। विपरीते विशेषणविशेष्यभावे अवश्यंभावित्वात् आर्तेर्नित्यत्वप्रसङ्गात् निमित्तत्वव्याघातः। उच्यते। नायं ( आर्तेः ) हविर्विशेषणत्वनिराकरणपरः ( ग्रन्थः ), किं तर्हि परमताभिप्रायेण। हविर्न विशेषयति। ( तदेव विवृणोति- ) कथं नु ( नाम ) उभयपदेन हविः संबध्येत इत्यनेन अंशेन विशेषयति।

'अथ हविराकृतिलक्षितेन संबद्धं' ( इति भाष्ये ) उभयं इत्यध्याहारः। अस्मिन् पक्षे हविर्विशेषणं, उभयं विशेष्यम्। तदुत्तरकालं हविरनुरक्तं उभयं ( उभयपदं ) आर्च्छतिना संबध्यते। एवमपि स एव ( पूर्वोक्तो ) वाक्यभेदः ( उभयशब्दस्य द्विरुच्चारणात् )।

( 'आह यथैव आख्यातार्थप्राधान्ये' इत्यादेः 'उभयहविःशब्दौ आर्तिविशेषणार्थमुच्चार्येयातां' इत्यन्तस्य भाष्यस्याभिप्रायमाह- ) तत्र ( वक्ष्यमाणाः ) वचनव्यक्तीः उपन्यस्यन् आख्यातस्य गुणप्रधानविवेकमाह। प्रधानभूते ( विधेये ) आख्याते विशेषणं विवक्षितं, गुणभूते ( तु ) अविवक्षितम्। ( भाष्यस्य तात्पर्यार्थमाह- ) शब्दवृत्तेन विधीयमानं परार्थमुच्चार्यते। तेनायं ( भाष्यस्य- ) अर्थः, यत्र आख्यातार्थः स्वविधानार्थमुच्चार्यते तत्र विवक्षितं विशेषणं, यत्र ( तु ) परविधानार्थमुच्चार्यते यथा 'दध्ना जुहोति' इति दधिसंबन्धविधानार्थं होम उच्चार्यते, तत्र द्वितीयपदसंबन्धो नास्ति, वाक्यभेदप्रसङ्गात्। एवं विवेके कथिते वचनव्यक्तयः उपन्यस्यन्ते। ( 'अथ पुनरुच्चारणं न क्रियते' इत्यादिना भाष्येण ) प्रथमं हविःशब्दः तन्त्र्यते ( तन्त्रशब्दात् साधारणपर्यायात् 'तत्करोति तदाचष्टे' इति णिचि कर्मणि लकारः। हविःशब्दस्य आर्छत्युभयशब्दाभ्यां तन्त्रेण संबन्धः प्रदर्श्यते इत्यर्थः ) 'एवमुभयशब्दो यदि आर्छतिना संबध्येत न हविर्विशिष्टं स्यात्' इत्यनेन ( भाष्येण ) आर्तिपदं तन्त्र्यते। 'अथ हविःशब्देन संबध्येत' इति ( इत्यादिभाष्येण ) उभयमिति अध्याहृत्य उभयशब्दः तन्त्र्यते। ( सर्वत्र दूषणमाह- ) अतो दोषो वाजपेयाधिकरणोक्तः ( आवृत्तिलक्षणः। १।४।५।६-८ )।

शा— उभयार्तौ पञ्चशरावः इति प्राप्ते, उच्यते **'यच्छब्दोपक्रमं यावन्निमित्तं पर्यवस्यति। तावद्ग्राह्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम्॥'** ...यथैव हविःशब्दः आर्च्छेत् इत्यनेन आख्यातेन संबध्यते, तथा उभयपदमपि असमस्तत्वात् तेनैव संबध्यते, न हविषा, नामपदानां परस्परासंबद्धानां आख्यातेन संबन्धात्। ... तस्मात् हविरार्तिमात्रं निमित्तम्।

उभयपदं तु एवं बोध्यं, न सायंदोहार्तिरेव निमित्तं, न प्रातर्दोहार्तिरेव, किंतु उभयमपि परस्परानपेक्षं निमित्तमिति ।

**सोम**— आर्थिकस्य पुरोडाशदाहकात्स्न्यस्य निमित्तशरीरान्तर्गतत्वे, श्रुतत्वात् उभयत्वस्य ( निमित्तत्वं ) किं वक्तव्यं इति प्रत्यवस्थानात् **संगतिः** ।

**ननु** 'यस्योभयं' इति वाक्यं 'यस्य सायं दुग्धं हविरार्तिमार्च्छेत्' इति प्रकृत्य आम्नायते । तत्र च 'यस्योभयं' इत्येतावन्मात्रमेव विवक्षितं, 'हविरार्तिमार्च्छेत्' इति प्रकरणप्रमाणानुवादः । एवं च प्रकरणलभ्येऽर्थे शब्दव्यापाराभावात् वाक्यभेदप्रसङ्गात् उभयहविरार्तावेव पञ्चशरावयागः कर्तव्यः । तेन सिद्धान्ताभावात् अयं विचारोऽनुपपन्नः ( **इति चेत्**, सत्यं ) नेदं 'यस्य सायं दुग्धं' इत्यत्राम्नायते, किंतु दर्शपूर्णमासप्रकरणे सायंप्रातर्दोहौ आम्नाय इदमाम्नायते इतिकृत्वा चिन्त्यते । तत्र च हविरार्तिमार्च्छेत् इत्यस्याप्रकृतत्वात् प्रकरणात् तल्लाभासंभवात् नोक्तदोषः इति ।

**ननु** ग्रहाधिकरणेन (३।१।७) इदं पुनरुक्तं उद्देश्यविशेषणाविवक्षायास्तत्रोक्तेः । **उच्यते** । उभयत्वस्य विशेषणत्वमङ्गीकृत्य तद्विवक्षितमविवक्षितं वेति नात्र विचार्यते, किंतु उभयत्वं निमित्तान्तर्गतं न वेति । निमित्तान्तर्गतत्वे निमित्तस्वरूपस्य विवक्षितत्वात् तदन्तर्गतं उभयत्वं विवक्षितं, न चेन्नेति । तस्मान्न पुनरुक्तिः ।

**ननु— 'हेलाराजीये ( वाक्यपदीयटीकायां** ३।१।५२ ) 'एकत्वं वा बहुत्वं वा केषां चिदविवक्षितम् । तद्विजात्यभिधानाय द्वित्वं तु स्याद् विवक्षितम् ॥' इति हरिग्रन्थव्याख्यानावसरे "तथा सति 'यस्योभयं' इत्यत्रापि द्वित्वस्य विवक्षायां अन्यतरार्तौ नैमित्तिकाभावप्रसङ्गः इत्याशङ्क्य तत्र द्वित्वमात्रं न श्रुतं, किंतु द्वयवयवः समुदायः, 'संख्याया अवयवे तयप्' इति संख्याविशेषयुक्तावयवघटितसमुदायार्थतयप्प्रत्ययादेशायजन्तत्वात् उभयशब्दस्य । ततश्चात्र उभयशब्दार्थस्य अवयवद्वयारब्धसमुदायस्य एकावयवनाशेऽपि नाशात् अन्यतरनाशेऽपि नैमित्तिकानुष्ठानमुपपद्यते" इत्युक्तत्वात् ( नेदमुपलभ्यते तत्र श्लोके ) उभयस्य विवक्षायामपि एकनाशेऽपि पञ्चशरावः स्यात् । **इति चेत् सत्यम्** । समुदायाभिधानेऽपि हविःपदसामानाधिकरण्यात् वस्तुतो हविःप्राधान्यात् हविर्द्वयनाश एव प्रायश्चित्तं नैकनाशे इति ।

**वि**— 'आर्तौ पञ्चशरावो यः स दोहद्वयसंक्षये । एकनाशेऽपि वा, ऽऽद्योऽस्तु हविर्वदुभयोक्तितः ॥, हविरार्त्युक्तिमात्रेण निमित्तं पर्यवस्यति । उभयोक्त्यविवक्षायामेकनाशेऽप्यसौ भवेत् ॥' एकनाशे द्वयनाशेऽपि असौ ओदनो निर्वपणीयः ।

**भाट्ट**— दधिपयसोरेकैकस्य नाशे प्रायश्चित्तमुक्त्वा 'यस्योभयं हविरार्तिमार्च्छति । ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्याम्नातम् । तत्र च नार्तिमात्रस्य निमित्तता, सर्वदैव कस्य चित् आर्तिसत्त्वेन नित्यतया निमित्तत्वानुपपत्तेः । अतो 'अर्धमन्तर्वेदि' इतिवत् लक्षणया हविरार्तिर्निमित्तमिति तावदविवादम् । अतश्च तद्वदेव उभयत्वमपि उभयपदवैयर्थ्यापत्तेः लक्षणया निमित्तकोटिप्रविष्टमिति उभयहविरार्तिरेव निमित्तम् । नहि अत्रैकवचनादिवत् साधुत्वादिकं प्रयोजनमस्ति । **इति प्राप्ते**, ग्रहैकत्वाधिकरणन्यायेन ईप्सितोद्देश्यविशेषणस्येव निमित्तरूपोद्देशविशेषणस्यापि विवक्षाऽयोगात् विशिष्टलक्षणयाश्च एकवचनाद्यनुरोधेनेव उभयपदानुरोधेन हविरादिपदेषु करणे प्रमाणाभावात् उभयपदस्य च उभयमपि इत्येवं पूर्वोक्तैकैकनाशप्रायश्चित्तापेक्षया अस्य उत्कर्षेण स्तावकतयाऽपि उपपत्तेः उभयत्वस्य निमित्तकोटिप्रविष्टत्वाभावात् एकैकहविर्नाशेऽपीदं प्रायश्चित्तम् । **वस्तुतस्तु** उभयार्तिरेवात्र निमित्तम् । न च तस्यापि नित्यत्वात् निमित्तत्वानुपपत्तिः, प्रकरणादेव हविर्विशेषविषयत्वोपपत्तेः । इतरथा भवन्मतेऽपि दधिपयोविषयत्वानुपपत्तेः । अतो दोहद्वयनाशे एवेदं प्रायश्चित्तम् । हविःपदमेव तु अविवक्षितम् । अधिकरणं तु हविःप्राप्त्यभावं कृत्वाचिन्तया । वस्तुतस्तु पक्षद्वयेऽपि न हविरादिपदे लक्षणा, सर्वेषां पदार्थानां आख्यातार्थान्वयोत्तरं पश्चात् परस्परान्वयोपपत्तेः । एवं च विशिष्टस्य निमित्तत्वानादरो निमित्तताऽवच्छेदकगौरवमिया अन्यतरविवक्षयाऽपि

निमित्तश्रुत्युपपत्तेरन्यतरपदस्य च आधानवाक्यगतपुंस्त्वस्यैव अनुवादत्वेनापि उपपत्तेश्चेति द्रष्टव्यः ।

**मण्डन**— ' आर्ते हविष्येकतरेऽपि यागः । '

**शंकर**— ' उभयार्त्यविवक्षा स्यात् । '

* **आर्तिवाक्ये** ( यस्योभयं हविरार्तिमार्च्छेत् ) तात्पर्यग्राहकस्य अभावात् वाक्यभेदमपरिजिहीर्षया कर्मान्तरविधिरेव न्याय्यः । **बाल.** पृ. ११४–११५.

* **आर्त्यधिकरणे** ( आर्तिन्याये ) उभयपदस्य अविवक्षा । **वाक्यार्थ.** पृ. २०. * यत्संबन्धात् प्राक् निमित्तत्वमेव नोपजायते, भवति तत् निमित्तस्यापि विशेषणम् । यथा **आर्त्यधिकरणे** वक्ष्यते ' मृष्यामहे हविषा विशेषणं ' इति । तस्मान्न विशिष्टानुवाददोषः इति । **वा.** २।३।१।१ पृ. ५७१.

* **आर्त्विज्यं** निन्दितमिव । ' षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते । द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥ ' इति उत्तरोत्तरोत्कृष्टशालीनगृहस्थचतुष्टयानुक्रमणेन अध्यापनजीविनः चतुर्थत्वोक्त्या आर्त्विज्याध्यापनकर्मद्वयजीविनः अपकृष्टत्वसूचनेन आर्त्विज्यनिन्दा कृता । **सु.** ३।७ पृ. २८. * आर्त्विज्यं ब्राह्मणानामेव नेतरयोर्वर्णयोः । **भा.** १२।४।१५।४३. * आर्त्विज्यं याजमानाद्बलवत् । **वि.** १२।४।१५. * आर्त्विज्ये यजमाना: एव स्युः सत्रे, नान्ये । **भा.** १०।६।१५।५३.

* **आर्थवादिकफलप्रयुक्तः** ' नेक्षेतोद्यन्तमादित्यं ' इत्यादिः प्रजापतिव्रतेषु पर्युदासः । **भाट्ट.** ४।१।३.

* **आर्थवादिकफलवत्त्वं** रात्रिसत्रस्य । **भा.** ४।३।८। १७–१९.

* **आर्थिकी व्यवस्था** । अन्यतरकोटिव्यवस्थया कोट्यन्तरस्य आर्थिकी व्यवस्था भवति । साऽपि भावविषया अभावविषया चेति द्विविधा । तत्राद्या यथा ' आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति ' इति अग्नीषोमीयपुरोडाशे कृतसोमयागपुंविषयत्वेन व्यवस्थापिते, अर्थात् तदभावः अकृतसोमयागपुंविषयत्वेन व्यवस्थितो भवति । ' पूर्वेद्युरमावास्यायां वेदिं करोति ' इत्यमावास्यायां पूर्वेद्युर्वेदिकरणे व्यवस्थापिते, अर्थात् हविरभिवासनोत्तरं वेदिकरणं पौर्णमास्यां व्यवस्थितं भवति । तदिदमुदाहरणद्वयं पञ्चमे सिद्धं ' तथाऽपूर्वं ' ( ५।१।१६।२९ ) इत्यत्र पूर्वं, ' उत्कर्षाद् ब्राह्मणस्य ' ( ५।४।४।१०–१४ ) इत्यत्रोत्तरम् । **बाल.** पृ. १९–२०.

* **आर्थी परिसंख्या** द्विविधा, प्राप्तपरिसंख्या अप्राप्तपरिसंख्या चेति । तत्र प्राप्तपरिसंख्या त्रिदोषा अप्राप्तपरिसंख्या च तद्धीना । सा च फलतः परिसंख्येति गीयते । तत्राद्यायाः भाष्यवार्तिकोक्तं सिद्धान्ते उदाहरणं नास्त्येव । पूर्वपक्षे तु गृहमेधीये पञ्चमे पक्षेऽस्ति । भाष्यकारान्तरमते तु सिद्धान्तेऽपि क्वचिदङ्गीकृता, यथा दशमे ( १०।५।१३।५३–५४ ) आङ्गिरसां द्विरात्रे श्रुतं ' वैखानसं पूर्वेऽहन् साम भवति षोडश्युत्तरे ' इति । तत्र द्विरात्रोत्तमाहानां अतिरात्रसंस्थत्वात् प्रकृत्यतिरात्रतः षोडशिविकल्पे प्राप्ते, ' उत्तरेऽहन् द्विरात्रस्य गृह्यते ' इति वाक्यान्तरेण अनारभ्याधीतेन नियतः षोडशी इति ' उत्तरे ' इत्यनेन आङ्गिरसां द्विरात्रे एव परिसंख्यायते । तेन द्विरात्रान्तरे विकल्पः इति भाष्यकारान्तरोक्तः सिद्धान्तः । **शबरस्वामिभिस्तु** परिसंख्या नाङ्गीकृता त्रिदोषत्वात् । वैखानसविधेस्तु अर्थवादः ' षोडश्युत्तरे ' इति इत्यङ्गीकृतमिति । सप्तदशर्त्विजः इत्यपि न प्राप्तपरिसंख्या । यद्यपि ' न वा परिसंख्यानात् ' ( ३।७।१६।३३ ) इति सूत्रकृता तत्र परिसंख्यात्वमेवोक्तं, भाष्यकृता च तथैव व्याख्यातं, तथापि वार्तिककृता अधिकरणान्ते सप्तदशश्रुतेः उपसंहारार्थतैवोक्ता । तदेतदुपपादितमस्माभिः **शास्त्रदीपिकाप्रकाशे** । तस्मात् प्राप्तपरिसंख्योदाहरणं स्मार्तमेव ' पञ्च पञ्चनखा भक्ष्याः ' इति । अप्राप्तपरिसंख्योदाहरणं तु ' इमामगृभ्णन् ' इत्येव । **बाल.** पृ. २५.

* **आर्थी भावना** । आख्यातांशेन आर्थी भावना उच्यते । ननु केयं आर्थी भावना ? कर्तृव्यापार इति चेन्न, यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः । न चेष्टापत्तिः । तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावात् । इति चेत्, **( न्यायसुधाकृन्मतमाह– )** अत्राहुः । सत्यं न यागो भावना, किंतु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः, स भावना । स एव च

आख्यातांशेनोच्यते । 'यजेत' इत्याख्यातश्रवणे 'यागेन यतेत' इति प्रतीतेर्जायमानत्वात् । यश्च प्रयत्नपूर्वकं गमनादि करोति, तस्मिन् 'देवदत्तो गमनं करोति' इति करोतिप्रयोगदर्शनात्, वातादिना स्पन्द्-माने तु 'नायं करोति, किंतु वातादिना अस्य स्पन्दो जायते' इति प्रयोगात् करोत्यर्थस्तावत् प्रयत्नः । करोति-सामानाधिकरण्यं च आख्याते दृश्यते 'यजेत– यागेन कुर्यात्' 'पचति– पाकं करोति' 'गच्छति– गमनं करोति' इति । अतश्च करोतिसामानाधिकरण्यात् प्रयत्नस्य आख्यातवाच्यत्वम् । **न च** 'रथो गच्छति' इति प्रयोगानुपपत्तिः, रथे यत्नाभावादिति **वाच्यम्** । वोढृ-अश्वगतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः । यन्मते-ऽपि अन्योत्पादनानुकूलं व्यापारसामान्यं भावना, तन्मते-ऽपि रथे गमनातिरिक्तव्यापारानुपलब्धेः 'रथो गच्छति' इति प्रयोगस्य औपचारिकत्वमेवेति । अतश्च यत्न एवार्थी भावना । यथा आहुः '**प्रयत्नव्यतिरिक्ताऽऽर्थी भावना तु न शक्यते । वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते** ॥' इति ।

(**मिश्रमतमाह–**) अन्ये त्वाहुः 'भवितुर्भवना-नुकूलो भावकव्यापारस्तावत् भावना । यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति, तादृशो व्यापार इति यावत् । स एव चाख्यातार्थः । 'कुठारेण छिनत्ति' इत्याख्यातश्रवणे हि भवत्येतादृशी मतिः 'कुठारेण तथा व्याप्रियते, यस्मिन् व्यापारे कृते कुठारात् छेदनं भवति' इति । एवं 'यजेत स्वर्गकामः' इत्यस्यायमर्थः 'यागेन तथा व्याप्रियेत, यस्मिन् व्यापारे कृते यागात् स्वर्गो भवति' इति । स च व्यापारः क्व चित् उद्यमन-निपातनादिः, क्व चिच्च अग्न्यन्वाधानादिः ब्राह्मणतर्प-णान्तः कथंभावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते, अन्योत्पादनानुकूलत्वेन सामान्यतस्तु आख्यातादेव । 'रथो ग्रामं गच्छति' इत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते, 'रथस्तथा गमनेन व्याप्रियते, यस्मिन् व्यापारे कृते गमनात् ग्रामप्राप्तिर्भवति' इति प्रतीतेः । न त्वत्र गमनमात्रमाख्यातार्थः, तस्य धातुना उक्तत्वात् । तत्र 'कोऽसौ व्यापारः' इत्यपेक्षायां पूर्वो-त्तरावान्तरदेशविभजनसंयोजनरूपः इति पश्चादवगम्यते, 'पूर्वेण प्रदेशेन विभज्य, उत्तरेण संयुज्य रथो ग्रामं गच्छति' इति प्रयोगात्, 'उद्यम्य निपात्य कुठारेण छिनत्ति' इतिवत् । (चेतनकर्तृकक्रियावाचिष्वपि यतते इत्यादिषु परमते एव लक्षणाप्रसक्तिः, नास्मन्मते इत्याह-) एवं 'देवदत्तः प्रयतते' इत्यत्रापि 'देवदत्तस्तथा व्याप्रियते, यथा प्रयत्नो भवति' इति प्रयत्नानुकूलो व्यापार एवाख्यातार्थः, न तु प्रयत्नः, तस्य धातुना उक्तत्वात् । व्यापारविशेषापेक्षायां च इच्छाऽऽदिः पश्चाद-वगम्यते उद्यमननिपातनवत् । तथा च सर्वत्र अनुगत-त्वात् अन्योत्पादनानुकूलव्यापारसामान्यमेव आख्यातार्थः, न तु प्रयत्नमात्रं, 'रथो गच्छति' 'देवदत्तः प्रयतते' इत्यादिषु तदभावात् ।

(उपपादिता हि अवयवभेदेन प्रयोज्यप्रयोजक-भेदमङ्गीकृत्य भावनाप्रतीतिः वार्तिककृद्भिः भावार्था-धिकरणे । वस्तुतस्तु यथैव 'भवति' इत्यत्र भावनाप्रतीत्युपपादनं वार्तिककारीयं अतिशयार्थं, तथैव इहापि 'रथो गच्छति' इत्यादिषु तदुपपादनमतिशयार्थ-मेव । नहि 'रथो गमनं करोति' 'पुरुषो यत्नं करोति' 'घटो भवनं करोति' इति कस्यापि अनु-भवोऽस्ति । अतः अन्योत्पादनानुकूलत्वांशानादरेण व्यापारसामान्यमेव सर्वत्र आख्यातार्थः इत्यर्थे ग्रन्थतात्पर्यम् । ईदृशोदाहरणेषु रथाश्रितो गमनव्यापारः, पुरुषाश्रितो यत्नव्यापारः, घटाश्रितो भवनव्यापारः, इति विनैव लक्षणां बोधोपपत्तिः ।)

न चात्र औपचारिकत्वं वक्तुं युक्तं, मुख्ये संभवति तस्यान्याय्यत्वात् । करोत्यर्थोऽपि अन्योत्पादानुकूलो व्यापार एव, न प्रयत्नमात्रम् । (व्यापारत्वं शक्यताऽव-च्छेदकं, न यत्नत्वं इत्येतावति तात्पर्यम् । अन्यो-त्पत्त्यनुकूलत्वस्य तु शक्यताऽवच्छेदकान्तर्भावेन प्रतीतिः, आक्षेपाद्वा इत्यन्यदेतत्) करोतेश्च चेतनाचेतनकर्तृका-ख्यातसामानाधिकरण्यादिति । तत् सिद्धं अन्योत्पादानु-कूलो व्यापार आर्थी भावना इति । सैव च यजेत इत्यत्र आख्यातांशेनोच्यते 'भावयेत्' इति । तस्याश्च भाव्या-काङ्क्षायां स्वर्गादिः भाव्यत्वेन संबध्यते । करणाकाङ्क्षायां

यागादिः करणत्वेन संबध्यते । प्रयाजादयः इतिकर्तव्यतात्वेन । **मीन्या.** पृ. ४७८–४८८. ( **अत्र अनन्तदेवः**– ) यत्नत्वविशिष्ट एव आख्यातवाच्यः । यत्नत्वमेव तस्य शक्यताऽवच्छेदकं, न व्यापारत्वं, जातित्वेन यत्नत्वस्यैव लघुभूतत्वात् । ...'पाके यत्नवान्न वा' इतिसंशयनिवृत्तिस्तावत् 'पचति' इति श्रवणाज्जायते । न च सा यत्ननिश्चयं विना संभवति इत्याख्यातेन यत्ननिश्चयस्य अवश्यं वाच्यत्वात्, 'पचति पाकयत्नवान्' इति विवरणदर्शनाच्च । **न च** यत्नाविनाभूतपाकेन यत्नानुमानात् तन्निश्चयोपपत्तिः इति **शङ्क्यम्** । 'चैत्रः पचति' इत्यादौ अशाब्दयत्नस्य लडाद्यर्थवर्तमानत्वाद्यन्वयित्वेन चैत्रादिवृत्तित्वेन च प्रतीत्यभावापत्तेः । 'जानाति' इत्यादौ हि वर्तमानत्वाद्यन्वयो धात्वर्थे दृष्टः, 'यजति' इत्यादौ च आख्यातार्थव्यापारे, न तु अनुमेयेऽर्थे कुत्रापि सोऽनुभूतः । **न च** चैत्रवृत्तित्ववर्तमानत्वाभ्यां विशेषितेन पाकानुकूलव्यापारेणैव तदुभयविशेषिततत्तदनुकूलयत्नानुमानं इत्यपि **सांप्रतम्** । तद्वृत्तिवर्तमानताहशव्यापारस्यापि अन्यदीययत्नादपि जन्मसंभवेन हेतोर्व्यभिचारात् । न च एतादृशस्थले लक्षणया यत्नस्य शाब्दत्वम् । वरा हि ततो 'रथो गच्छति' इत्यादौ व्यापारलक्षणा अभ्युपगता । प्रथमतः स्वीकार्ये शक्यताऽवच्छेदके एव लाघवस्यानुसरणीयत्वात् । पश्चात् स्वीकार्ये लक्ष्यताऽवच्छेदके गौरवस्य फलमुखत्वेन अदोषत्वात् । उक्तं हि आख्यातार्थप्रदर्शनावसरे भावार्थाधिकरणे ( २।१।२ ) भाष्यकृता 'तथा यजेत यथा किंचित् भवति' इति ( भा. पृ. ३७५ ) । गुणकामाधिकरणेऽपि ( २।२।११ ) 'जुहुयादिति शब्दस्य एतत् सामर्थ्यं यत् होमविशिष्टं प्रयत्नमाह' इति ( भा. पृ. ५४९ ) । ( इदं न्यायसुधाकृन्मतानुसारेण । **मिश्रमते तु** ) व्यापारत्वमेव शक्यताऽवच्छेदकं, यत्नत्ववत् व्यापारत्वस्यापि अखण्डोपाधित्वेन जातितुल्यत्वात् । न च तस्य अखण्डोपाधित्वे मानाभावः । श्रुतः एव मधुररसः स्वाश्रये जलाभिलाषगोचरतां नयति इति व्यवहारानुरोधेन तत्समवायतज्ज्ञानादेः अवश्यवक्तव्यव्यापारत्वस्य तज्जन्यत्वाद्यात्मकत्वासंभवेन अखण्डोपाधेरेव औचित्यापातात् । अस्तु वा गुरु एव व्यापारत्वं, तथापि तदेव अवच्छेदकं, 'पचति' इत्यस्मात् पाकयत्नस्येव 'पतति फलं वृक्षात्' इत्यादौ गुरुत्वस्य, 'स्रवति जलं गिरेः' इत्यादौ द्रवत्वस्य, 'व्रजति शरो दूरं' इत्यादौ वेगस्य, 'कम्पन्ते पत्राणि तरोः' इत्यादौ वायुसंयोगस्य संशयनिवृत्त्या निश्चयोऽभ्युपेत्यः । अस्ति च गुरुत्वादौ वर्तमानत्वाद्यन्वयस्य फलवृत्तित्वादेश्च प्रत्ययः, यतो नानुमानिकत्वेनापि तदन्यथासिद्धिः । भवन्ति च यत्नत्ववत् गुरुत्वत्वादीनि जातयः, इति कथं गुरुत्वत्वादीनि विहाय यत्नत्वमेव शक्यताऽवच्छेदकत्वेन शक्यमवधारयितुम् । **भवन्तु** सर्वाण्यपि शक्यताऽवच्छेदकानि, व्यापारत्वस्य तु न तथात्वसिद्धिः इति **चेन्न** । परस्परानपेक्षानेकशक्यताऽवच्छेदकाभ्युपगमेन अनेकवाच्यवाचकभावाभ्युपगममपेक्ष्य गुरुभूतैकशक्यताऽवच्छेदकाभ्युपगमेन एकस्यैव वाच्यवाचकभावस्य स्वीकर्तुमुचितत्वात् । अनेकपदार्थघटितोपाध्यात्मनो हि व्यापारत्वस्य अवच्छेदकत्वं तदाश्रयत्वं चानेकेषां कल्प्यं इति गौरवं वाच्यं, आश्रयताऽवच्छेदकत्वं तु सर्वेषु पर्याप्तमेकमेव स्यात्, यत्नत्वाद्यनेकावच्छेदकाभ्युपगमे तु आश्रयित्वमपि अनेकत्र कल्प्यं संबन्धानेकत्वं च इति गौरवम् । **अनन्तदेवः** पृ. १७८–१८३ ।

'करोत्यर्थोऽपि अन्योत्पादनानुकूलो व्यापार एव, न प्रयत्नमात्रम् । करोतेः चेतनाचेतनकर्तृकाख्यातसामानाधिकरण्यात्' इति मूलम् । ( मीन्या. पृ. ४८५ ) । अत्र **अनन्तदेवः**, न यत्नत्वं करोतेः शक्यताऽवच्छेदकं, येन आख्यातस्यापि करोतिना विवरणात् तथा स्यात् । तत्कर्तृकव्यापाराभिधायित्वेन आख्यातस्य तत्कर्तृकत्वं, यथैव 'चैत्रः पचति' इत्यस्य 'पाकं करोति' इति विवरणं दृश्यते, तथा 'स्थाली बिभर्ति' इत्यस्यापि 'धारणं करोति' इति विवरणं दृश्यते, 'स्थाली पचति' इत्यस्य च पाकं करोतीति । न च तत् करोतेर्यत्नवाचित्वे संगच्छते, दृश्यते हि अयत्नजातेऽपि कृतव्यवहारः, यत्नाभाववति च कर्तृव्यवहारः, 'अग्निना अद्य पाकः कृतः, अग्निः पाककर्ता' इति । यस्तु यत्नसाध्यत्वासाध्यत्वाभ्यां क्वचित् कृताकृतव्यपदेशः, स यत्नसाध्ययोरेव द्वयोर्मध्ये

अल्पयत्नसाध्ये अकर्तृत्वव्यपदेशवत् व्यापारसाध्यत्वा- विशेषेऽपि क चित् यत्नन्यूनत्वेनैव स्वल्पव्यापारसाध्य- त्वात् अकर्तृत्वव्यवहारोपपत्तेर्नासंभवी । यत्नाश्रयत्वे तुल्ये- ऽपि चैत्राश्वयोः स्वातन्त्र्यपारतन्त्र्याभ्यां यथा कर्तृकरण- व्यपदेशव्यवस्था भवति ' चैत्रोऽश्वेन गच्छति ' इति , न तु कदा चित् ' अश्वश्चैत्रेण गच्छति ' इति , तथा करोतेर्व्यापाराभिधायित्वेऽपि ताभ्यामेव संभवति सा व्यवस्था । यथा च सत्यपि तदनुकूलव्यापाराश्रयत्वे तद- भावविवक्षयैव संभवति कर्तृत्वनिषेधव्यवहारः, वातादिना स्पन्दमाने स्वातन्त्र्यविवक्षया अनुभवति तस्मिन्नपि कर्तृत्वव्यवहारः, तथा तदीयस्पन्देन भग्ने ' केनेदं भग्नं , अनेनैव नान्येन ' इति । अतो न व्यापारस्य आख्यात- वाच्यत्वे किं चिद्बाधकं , प्रत्युत पाकानुकूलयत्नवत्त्वस्य चैत्रेश्वरयोस्तुल्यत्वात् ' चैत्रः पचति ' इतिवत् ' ईश्वरः पचति ' इति प्रयोगापत्तिः यत्नस्य वाच्यत्वे बाधिका ।

**अथ** इच्छाजन्यताऽवच्छेदको यत्नत्वव्याप्यो जाति- विशेष एव आख्यातशक्यताऽवच्छेदकः, यद्वा धात्व- र्थस्य पाकादेः आख्यातार्थयत्ने चेष्टादिद्वारकमेव जन- कत्वं संसर्गः, आख्यातार्थयत्नस्य वा प्रथमाऽन्तपदार्थे चैत्रादौ अवच्छेदकत्वं संसर्गः, इति स्वीकृत्य ' ईश्वरः पचति' इति प्रयोगं वारयामः । नहि ईश्वरो जन्यकृतिमान् , नापि तत्कृतेः चेष्टाद्वारकं जनकत्वं, नापि कृतिजन्मनि चैत्रस्येव ईश्वरस्य अवच्छेदकत्वं इति **चेन्न** । तथा सति ईश्वरकर्तृकक्रियावाचिनां वेदपुराणेतिहासगतानां आख्यात- पदानां अनुपपत्तेः । तथा अगत्या व्युत्पत्तित्याग इति चेन्न । ' शास्त्रस्था वा तन्निमित्तत्वात् ' ( १।३।४।९ ) इत्यत्रोक्तेन 'त्रिवृच्चर्वाश्ववालादिन्यायेन' ( वा. पृ. २२१ पं २०–२२४ पं ९ ) तादृश्याः पदानुसारिण्या एव व्युत्पत्तेरङ्गीकार्यत्वात् । किंच यावन्तः पाकजनका यत्नाः, ते प्रत्येकमाख्यातवाच्याः, किंवा यावतो यत्नसमुदायस्य फलोपधाननियमः तावान् समुदायो वाच्यः ? आद्ये तादृशयत्नवन्तं क चित् परं च तादृशसमुदायवन्तमुद्दिश्य नेदृशवचःप्रयोगः स्यात् ' नायमपाक्षीत् , किंतु पर एव ' इति , पाकजनकयत्नस्य द्वयोरपि सर्वाविशेषात् । द्वितीये यत्नत्वं न शक्यताऽवच्छेदकं , तस्य प्रत्येक- समाप्तत्वेन समुदायावृत्तित्वात् । अस्मन्मते तु व्यापारत्व- शक्यताऽवच्छेदकत्वेऽपि फलोपहितत्वसंबन्धेन भाव्य- निष्ठस्यैव तस्य आख्यातेन प्रत्याय्यत्वात् । फलोपहित- त्वस्य च व्यापारनिचयवृत्तित्वात् व्यापारत्वस्य च आद्य- परिस्पन्दप्रभृति आ फललाभात् विततत्वात् ' भावना ' इति व्यवहारात् । कोऽसौ व्यापारः इत्याकाङ्क्षायां अन्वाधानादिब्राह्मणतर्पणान्तपदार्थनिचयस्य ' अयमसौ व्यापारः ' इत्यन्वयकथनाच्च समुदायेऽपि व्यवहारोप- पत्तेः, संभवति व्यापारनिचयवति आख्यातप्रयोगनियमः इत्यलं बहुना । **अनन्तदेवः** पृ ४८५–४८७.

* आर्थी भावना । सर्वाख्यातगता अर्थभावना ; तदुक्तं ' अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥ ' ( वा. पृ. ३७८ ) इति ।...यजेत इत्यत्र आख्यातस्य भाव- येत् इत्यर्थो भवति । तत्र ' किं भावयेत् , केन भाव- येत् , कथं भावयेत् ' इत्याकाङ्क्षायां ' स्वर्गं भावयेत् , यागेन भावयेत् , अग्न्यन्वाधानप्रयाजावघातादिभिः उप- कारं संपाद्य भावयेत् ' इत्येवं भाव्यकरणेतिकर्तव्यता- समर्पणेन आकाङ्क्षापूरणात् प्रकरणाम्नातः सकलः शब्द- संदर्भः भावनावाचिन आख्यातस्यैव प्रपञ्चः । भाव्याद्यंश- त्रयवती सेयं आर्थी भावना इत्युच्यते । सा सर्वाऽपि शब्दभावनायाः भाव्या । ... अर्थभावना सर्वैराख्यात- प्रत्ययैर्गम्यते इत्युक्तम् । तस्यां चार्थभावनायां स्वर्गस्य भाव्यत्वं कर्मयोगादवगम्यते । **वि.** २।१।१.

* **आर्भवे पवमाने** बृहत् पृष्ठं विश्वजिति सर्वपृष्ठे । **वि.** १०।६।५. * आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति सर्वस्वारे क्रतौ । **भा.** १०। २।२५।६१. * " आर्भवे स्तूयमाने औदुम्बरीं दक्षिणेन देशेन अहतेन वाससा परिवेष्ट्य ' ब्राह्मणाः समापयत मे यज्ञं ' इति संप्रेष्य संविशति " इति सर्वस्वारे क्रतौ तृतीयसवने यजमानस्य अग्निप्रवेशः आम्नायते । **वि.** १०।२।२३. * **आर्भवकाले** प्रकृतौ सवनीयपश्वङ्गप्रचारो वृत्तः । **भा.** ११।३।१५।४६. * **आर्भवपवमाने** अतिरात्रगते ' स्वादिष्ठया० ' ( सासं. उत्त. १।५।१३ ) इति गायत्रः आद्यस्तृचः । अन्त्यस्तु जगतीछन्दस्कः । तत्र

गायत्रे तृचे एवागन्तूनां साम्नामावापः । वि. ५।३।५. * आर्भवपवमाने ज्योतिष्टोमगते काबाख्यं साम जगत्यामुत्पन्नम् । सोम. १०।५।१५. * आर्भवपवमानमाध्यंदिनपवमानयोरेव विवृद्धाविवृद्धस्तोमककुतुषु गायत्रीबृहत्यनुष्टुप्सु साम्नामावापोद्वापौ । भा. १०।४। ११।२१-२२. * आर्भवसंज्ञकः पवमानः ज्योतिष्टोमे तृतीयसवनेऽस्ति । तस्मिन् पञ्च सूक्तानि, सप्त सामानि । 'स्वादिष्ठया' इत्येकं सूक्तं, तस्मिन् गायत्र्यः तिस्र ऋचः । तासु गायत्रं संहितं चेति द्वे सामनी । 'पुरोजिती वो अन्धसः' इति सूक्तान्तरं, तत्र एका अनुष्टुप् उत्तरे द्वे गायत्र्यौ । तासु श्यावाश्वं आन्धीगवं चेति द्वे सामनी । 'इन्द्रमच्छ सुता इमे' इत्यपरं सूक्तं, तस्मिन् उष्णिहस्तिस्रः । तासु सफं नाम साम । 'पवस्व मधुमत्तमः' इति प्रगाथः, तस्मिन् पूर्वा ककुप् उत्तरा सतोबृहती । तत्र पौष्कलं साम । 'अभि प्रियाणि पवते चनोहितः' इत्यन्यत् सूक्तं, तत्र तिस्रो जगत्यः । तासु काबं साम । एतेषां पञ्चानां सूक्तानां मध्ये 'पुरोजिती वः' 'पवस्व' इत्यनयोः सूक्तयोः यद्यपि द्वेद्वे छन्दसी, तथापि समासु गानं निष्पादयितुं प्रग्रथने कृते सति एकैकमेव छन्दः संपद्यते । ततः गायत्री-अनुष्टुप्-उष्णिक्-कुकुब्-जगतीभिः (पवमानः) पञ्चच्छन्दाः सप्तसामा च भवति । वि. ९।२।६ वर्णकं ३.

* '**आर्यास्तावद् विशिष्येरन्नदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥**' (इत्युक्त्वा अन्ते उक्तं-) '**अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥**' एतेन आर्यावर्तनिवासिमध्येऽपि '**अभियुक्ततरा येये बहुशास्त्रार्थवेदिनः । तेते यत्र प्रयुञ्जीरन् ससोऽर्थस्तत्त्वतो भवेत् ॥**' इति । वा. १।३।४।९ पृ. २१९-२०. * आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोः अविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति । भाट्ट. १।३।४ वर्णकं २. * **आर्याणां** यदभोज्यं केशकीटावपन्नं अन्येन वोपघातेनोपहतं, तत् व्यापन्नमिति । (व्यापन्नशब्दस्यार्थोऽन्नम्) । भा. ६।५।१६।४८. * **आर्यप्रसिद्ध्या** अविरोधे म्लेच्छप्रसिद्धार्थस्यापि प्रामाण्यं पिकनेमसततामरसादिशब्देषु । भाट्ट. १।३।५. * आर्यप्रसिद्ध्या निर्दोषया बलीयस्या अर्थसिद्धिः (शब्दार्थसिद्धिः) । शा. १।३।५ वर्णकं २ पृ. ३३. * आर्यप्रसिद्ध्या यवशब्देन दीर्घशूकाः (सक्तवः), वराहशब्देन सूकरः, वेतसशब्देन अप्सुजो वञ्जुलो ग्राह्यः, न तु म्लेच्छप्रसिद्ध्या प्रियङ्गवः, काकः, जम्बूश्च । भा. १।३।४।८-९.

* **आर्यम्लेच्छाधिकरणम्** । 'यववराहाधिकरणं' एवेदम् । इति तदेव द्रष्टव्यम् । के. १।३।५.

* **आर्यावर्तः** कृष्णमृगसंचरणोपलक्षितः चातुर्वर्ण्यनिवासस्थानभूतो देशः । वा. १।३।३।७ पृ. २१४. * **आर्यावर्तनिवासिनः** प्रमाणं इतरेभ्य आचारेभ्यः । भा. १।३।२।३ पृ. ५८७, * आर्यावर्तनिवासिनः राज्यशब्दं जनपदपुरपरिरक्षणे ततश्चोद्धरणे (जनपदपुरेभ्यः कण्टकोद्धारे) प्रयुञ्जते । २।३।२।३ पृ. ५८०, * **आर्यावर्तनिवासिनां** शब्दार्थोपायेषु अभियुक्तानां अभिव्याहरतां कर्माण्यनुतिष्ठतां अन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति । २।३।२।३ पृ. ५८१.

* **आर्षज्ञानस्य** 'अहं मनुरभवं सूर्यश्च' इत्यादौ अस्मदर्थज्ञानहेतुत्वेन अर्थज्ञानोपायत्वम् । सु. पृ. १११, * **आर्षप्रयोगेण** सार्वलौकिकेन असार्वलौकिकम्लेच्छप्रयोगबाधः । पृ. ९०१.

⌛ **आर्षेयं वृणीते इति यजमानपूर्वजा एव ऋषयः ॥**

दर्शपूर्णमासयोः 'आर्षेयं वृणीते' इति श्रुतम् । तत्र 'ऋत्विजो वृणीते' इति वरणसंस्कृतस्य ऋत्विजो विशेषणमार्षेयपदं ऋषिपदस्य 'तदुक्तमृषिणा (ऐआ. २।२४।१२) 'बन्धने चर्षौ' (पा० ४।४।९६) इति श्रुतिस्मृत्योः प्रयोगदर्शनात् अविच्छिन्नवेदार्थविज्ञानानुष्ठानशीलपूर्वपुरुषकत्वं बोधयति । 'अथ देवाः योऽनूचानः श्रोत्रियस्तस्यापि वेद, एष वै ब्राह्मण ऋषीणामार्षेयो, यच्छुश्रुवानेष वै पितृमान्, पैतृमत्य आर्षेयो यच्छुश्रुवान्' इति व्यपदेशात् तादृशत्वं ऋत्विग्विशेषणं 'वासिष्ठो ब्रह्मा' इत्यादिवत् । **इति प्राप्ते**, 'यजमानस्याशीर्गच्छेदृषीणां हि देवाः पुरुषमनुबध्यन्ते' इत्यादिना

यजमानपूर्वपुरुषपरत्वेन वाक्यशेषे स्तवनात् 'यो वा अन्यस्यान्यस्य प्रवरेण' इत्यादिना यजमानेतरप्रवरानुकीर्तने निन्दाश्रवणाच्च कौपीनकिब्राह्मणे (३।२) 'अथ यद्यजमानस्यार्षेयमाह, न ह वा अनार्षेयस्य देवा हविरश्नन्ति' इति विधानेन यजमानसंबन्धकीर्तनात् तदीयप्रवरर्षिनामकीर्तनपर एवायं विधिः। संकर्ष. ३।४।१.

॥ आर्षेयाणां नामानि अपत्यप्रत्ययान्तानि संबुद्ध्यन्तानि ॥

प्रवरर्षीणां नाममात्रस्य भृगुवसिष्ठेत्यादिरूपस्य कथनमात्रेण विधिचारितार्थ्ये प्राप्ते, 'अग्ने महाँ असि ब्राह्मण भारत' इत्यस्यान्ते 'आर्षेययोजनेन यजमानाहवनीययोः पितापुत्रभावसंबन्धेनाग्नेः स्तवनं कुर्याद्' इत्यर्थस्य शाखाऽन्तरपर्यालोचनलब्धस्य आनुगुण्याय अपत्यप्रत्ययान्तसंबुद्ध्यन्तपदानि भार्गव वासिष्ठ इत्यादीनि प्रयोज्यानि। संकर्ष. ३।४।२.

॥ आर्षेयत्रयस्यैव वरणं इतरेऽर्थवादाः ॥

'मन्त्रकृतो वृणीते' इत्येक एव विधिः। तत्र चानियमेन बहुत्वसंख्यानां त्र्यादीनां कपिञ्जलन्यायेन (११।१।८) त्रयाणामेव वा वरणप्रसक्तौ, 'न पञ्चाति प्रवृणीते, न चतुरो वृणीते' इत्याभ्यां चतुःषडादिसंख्यानां निरासात् पञ्चार्षेयवरणमेकमेव विधीयते। 'एकं द्वौ त्रीन्' इति अवयुत्यवादस्तु स्तुतिमात्रं, तेन समार्षेयोऽपि पञ्चानामेव वरणं कुर्यात्। इतरेषां तु मनुवत्कल्पः। इति पाठस्य पुनराक्षेपे प्राप्ते, चतुर्वरणस्यापि अवयुत्यवादेनोपपत्तौ 'न चतुरः' इत्यत्र नञो वैयर्थ्यापत्तेः 'पञ्चाति प्रवृणीते' इति वाक्येऽपि पञ्चार्षेयवरणविधेः स्पष्टस्याभावाच्च 'त्रीन् वृणीते' इत्यस्यैव विधित्वावसायात्। तेन मन्त्रकृत इत्यस्योपसंहारात् त्र्यार्षेयस्यैव वरणम्। भाष्यकारस्तु अत्र्यार्षेयस्येति सूत्रे प्रकृतसूत्रे च त्रिपदं पञ्चानामप्युपलक्षणम्। परिमाणाचिख्यासेति त्रिपञ्चसंख्योपलिलक्षयिषा इत्यर्थकमिति व्याचख्यौ। संकर्ष. ३।४।३.

* **आर्षेयत्रयग्रहणसमर्थस्यैव** दर्शपूर्णमासयोरधिकारः। वि. ६।१।११, **आर्षेयवरणम्**। ऋषिर्गोत्रप्रवर्तकः कश्यपभरद्वाजादिः, तस्य संबन्ध आर्षेयः, तं वृणीते कथयति उच्चारयति। 'कश्यपगोत्रोऽहं' 'भरद्वाजगोत्रोऽहं' इति तदुच्चारणम्। द्वौ वृणीते 'उपमन्युवसिष्ठगोत्रोऽहं' इत्यादि। त्रीन् वृणीते 'आङ्गिरसबार्हस्पत्यभरद्वाजगोत्रोऽहं' इत्यादि। ६।१।११. * आर्षेयवरणं द्व्यामुष्यायणानां शैशिरादीनां एकतो द्वौ, अन्यतः एकम्। संकर्ष. ३।४।८. * आर्षेयवरणं निषादस्थपतेः रथकारस्य च अस्त्येव, सर्वस्यैव जगतः ऋषिवंश्यतायाः पुराणेषु कथनात्। ३।४।६.

॥ आर्षेयवरणं राजोपेतब्राह्मणोपेतयोरपि जातिप्रयुक्तम् ॥

क्षत्रियादिवृत्तिमाश्रिता ब्राह्मणा राजोपेताः। ब्राह्मणेन पुत्रत्वेन क्रीता ब्राह्मणवृत्त्या जीवन्तः क्षत्रिया ब्राह्मणोपेताः। तेषां पुरोहितप्रवरस्वप्रवरयोर्विरोधे सति, विकल्पे परेण पूर्वबाधे वा द्विगोत्रवदुभयमेलने वा प्राप्ते, राजोपेतादीनां प्रच्युतस्वकर्मणामपि ब्राह्मणत्वादिजातेरनपायात् स्वस्वजातीयमेव वरणम्। 'मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्' इत्यादयस्तु प्रायश्चित्तविधिशेषभूता निन्दाऽर्थवादाः, न जातिनाशपराः। संकर्ष. ३।४।७.

* **आर्षेयवरणस्य** अवभृथे प्रतिषेधः 'नार्षेयं वृणीते' इति। भा. ११।३।९।१९.

॥ आर्षेयवरणे अध्वर्युवशात् होतुरपि आनुपूर्वीनियमः ॥

त्रयाणामार्षेयाणां अनियतानुपूर्वीकतया उच्चारणम्। कल्पसूत्रेषु गोत्रभेदेन पठितानां मन्त्रकृन्नाम्नां स्मार्तत्वेन पाठक्रमविवक्षायां मानाभावात्। इति प्राप्ते, 'ऊर्ध्वानध्वर्युर्वृणीते' अर्वाचो होता' इत्यादिना अध्वर्युप्रवरेषु तद्धितविनिर्मुक्तप्रातिपदिकानां वच्छब्दान्तानां प्रातिलोम्येन पाठविधानात् होतृप्रवरेषु नियतानुपूर्वीसिद्धिः। संकर्ष. ३।४।४.

* **आर्षेयसंख्यशिखाविधानात्** शिखाकल्पः त्रिशिखपञ्चशिखत्वादिरूपः गोत्रस्य कर्माङ्गतायाश्चिह्नम्। 'कुमारा विशिखा इव' इति नानाशिखत्वद्योतकशिखाकर्मलिङ्गम्। सु. पृ. १२७. * आर्षेयसंख्यशिखाव्यवस्थाविधिः तत्संख्यार्थयुक्तगोत्रज्ञानरूपदृष्टार्थः इत्युक्तं

स्मृत्यधिकरण( १।३।१ )न्यायसुधायाम् ( पृ. १२७ ) । अयं विधिः दृष्टार्थो व्यवस्थाविधिः । **बाल.** पृ. २१.

* **आर्हतः** । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्च, इति सप्तभङ्गीनयवादी आर्हतः स्याद्वादी । स्याच्छब्दस्य आख्यातप्रतिरूपकाव्ययस्य कथंचिच्छब्दार्थवाचित्वाभ्युपगमात् अनैकान्तवादी बद्धानां संसारिणामात्मनां शरीरादत्यन्तव्यतिरेकाभावेन तन्मिश्रत्वात् मूर्तत्वं वदति । **सु.** पृ. ६१६. * **आर्हतपक्षेण** शरीरपरिमित आत्मा अभ्युपगम्यते । तत्रापि बहु अदृष्टं कल्पनीयम् । ' **सद्भावोऽवयवानां च तथा तेषामनन्तता । संश्लेषश्च विनाऽन्येन तद्भावेऽपि च नित्यता ॥ अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः । अन्तराभवसंचारस्तद्भावाज्ञानकारणे** ॥ ' **वा.** २।१।२।५ पृ. ४०२.

* **आलभतिः** अस्माभिः प्राणिसंयुक्तो यजिमदभिधानो दृष्टः । **भा.** २।३।६।१६. * आलभतिः यजिः । ' द्रव्यदेवतासंबन्धान्यथाऽनुपपत्त्या पूर्वमस्माभिः यजिः कल्पितः ( आलभतेः यागार्थकत्वं स्वीकृतम् ) नादृष्टपूर्वशक्त्या आलभत्यभिधानेन व्यभिचार्यनुमानाभासेन वा ' । **वा.** २।३।६।१६. * 'आलभतिः यत्र प्राणिसंयुक्तः, तत्र यागानुमानम् ' इति व्याप्तिः । **सु.** पृ. ९३३, * **आलभतेः** स्पर्शवाचिनोऽपि प्राणिसंयुक्तस्य यागवाचित्वकल्पना न विरुद्धा । पृ. ९३३.

* **आलभतिचोदना** अपूर्वकर्मणो विधायिका, न तु अवद्यतिचोदितानां कर्मणां समुदायस्यानुवादः । ' अग्नीषोमीयं पशुमालभेत ' ' हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः ' । **भा.** २।२।६।१७-२०, * **आलभतिचोदनासामान्यात्** पशुषु दैक्षस्य विध्यन्तः । ८।१।६।१३.

* **आलभतिवत्त्वं** पशुप्रकृतिलिङ्गम् । **बाल.** पृ. ११९.

* **आलम्भः** वत्सस्य संस्कारः । अग्निहोत्रे दोहाधिकारे ' वत्समालभेत ' स्पर्शमात्रविधिरयं, न यागविधिः । वत्सालम्भाधिकरणे इदम् । **वि.** २।३।६, * आलम्भः स्पर्शः ' ईषामालभेत ' इत्यत्र । २।३।५. * **आलम्भस्य**-पशवालम्भस्य शकृत्संप्रवेधो लोहितनिरसनं च न प्रयोजकं, किंतु प्रतिपत्तिः । (शकृल्लोहिताधिकरणे इदम् ) । **भा.** ४।१।१२।२७.

⌛ **आलम्भनिर्वापन्यायः** । आलम्भनिर्वापाधिकरणम् । ईषाऽधिकरणम् । ईषाऽऽलम्भाधिकरणम् । दार्शपौर्णमासिकनिर्वापालम्भन्यायः । निर्वापालम्भन्यायः । वायव्यसौर्ययोर्वाक्ये यागविधिः, न तु गुणविधिः द्रव्यदेवतासंयोगात् ॥

**संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्** । २।३।५।१२॥

**भाष्यं**— अनारभ्याधीयते किंचित् ' वायव्यं श्वेतमालभेत भूतिकामः ' ' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' । दर्शपूर्णमासयोरपि आमनन्ति ' ईषामालभेत ' 'चतुरो मुष्टीन्निर्वपति' इति । ( अत्र प्रथमतृतीयवाक्ययोः द्वितीयचतुर्थवाक्ययोश्च एकवाक्यतां कल्पयित्वा पूर्वपक्षः ) तत्रायमर्थः सांशयिकः किं दार्शपूर्णमासिके आलम्भे आलम्भो गुणविधिः, दार्शपूर्णमासिके च निर्वापे निर्वापो गुणविधिः, उत न प्रकृतिमपेक्षते इतरश्च इतरश्चेति । यदा न प्रकृतिमपेक्षते तदाऽपि किं यावदुक्ते, उत यजिमती एते कर्मणी इति । किं तावत् प्राप्तं ? प्राकृतयोः आलम्भनिर्वापयोः गुणविधी इति । कुतः ? अकर्मशब्दत्वात् । नात्र कर्मणो विधायकः शब्दोऽस्ति । ननु आलभेत, निर्वपेत् इति च, नैतौ विधातारौ । अविदितस्यार्थस्य वक्ता विधायको भवति । न चैतयोरविदितोऽर्थः, आलम्भः कर्तव्यः, निर्वापः कर्तव्यः इति । तस्मादनुवदितारौ । किमर्थमनुवदतः ? आलम्भने श्वेतं विधातुं, निर्वापे च चरुम् । तस्मात् नालम्भान्तरं निर्वापान्तरं च । प्राकृतयोरेव गुणविधी इति ।

**वा**— न कस्य चिदपि कर्मणः प्रकरणे श्रूयते ' श्वेतमालभेत ' ' चरुं निर्वपेत् ' इति । तत्र संदेहः किं अनारभ्यवादानां प्रकृत्यर्थत्वात् प्राकृतयोरेव आलम्भनिर्वापयोः श्वेतचरू गुणौ विधीयेते, किंवा कर्मान्तरे यावच्छ्रुते, उत यजिमती इति । तत्र अनारभ्याधीतत्वोपन्यासः संशयबीजापौनरुक्त्यप्रथमपक्षपरिग्रहतन्निराकरणार्थः ।

कथं ? यदि तावत् आलम्भनिर्वापौ प्रकृत्य श्रूयेयातां, ततः प्रकृतप्रत्ययानुवृत्तिरेव प्रसज्येत इति कर्मान्तराशङ्का न स्यात् । अनारभ्यवादे तु सति, श्वेतादिगुणस्य उपादेयत्वात् कदा चित् दूरस्थानुवादेन गुणो विधीयते, कदा चिद्वा विपरिवृत्त्यभावात् कर्मान्तरं इति जायते संदेहः । तथा 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' ( २।२।६।१७ ) इत्यनेन गतप्रायमिव अत्र यजिमत्कर्मविधानं लक्ष्यते । तत्तु प्रकृतयागाभावात् अनुवादशङ्कायामसत्यां श्वेतादेश्च गुणस्य औत्पत्तिकद्रव्यसंयुक्तेऽपि कर्मणि विधानोपपत्तेः कथं स्यात् इति पुनरुपन्यस्यते । पूर्वपक्षश्च अन्ययोरालम्भनिर्वापयोः अप्रकरणात् अवश्यं प्राकृतावेव ग्रहीतव्यौ इत्येवं प्रवर्तते । तन्निराकरणमपि च प्रकरणाभावात् असाधारणोपलक्षणाभावाच्च न प्राकृतयोः लौकिकव्यावृत्तरूपयोः प्रतीतिरस्ति इत्येवं भविष्यति । गुणविधिविषयत्वाच्च आलम्भनिर्वापौ गुणविधिशब्देनोक्तौ । किं तावत् प्राप्तं ? यथैव अयनेषु गुणसंबन्धपरे वाक्ये कर्मविधिशब्दाभावात् अकर्मान्तरत्वं, तथा इहापि भविष्यति इति चशब्देन अन्वादिश्यते । क्व चासौ गुणविधिः इति विषयावधारणार्थं अप्रकरणग्रहणम् । **अथवा** यद्यपि एतावता पूर्ववैलक्षण्येन अप्रकरणे श्रूयते, तथापि कर्मणो विधिशब्दानवरोधात् गुणार्थैव पुनःश्रुतिरिति । दर्शपूर्णमासयोः (या) शकटेषा, सा श्वेतीकृत्य आलब्धव्या ( स्प्रष्टव्या )। निर्वापश्च चरौ कर्तव्यः, चरुपरिमितो ( ओदनस्थालीपरिमितो ) वा । भूतिब्रह्मवर्चसकामयोश्च 'सर्वेभ्यो दर्शपूर्णमासौ' इत्येवं प्राप्तयोरनुवादः । तथा वायव्यं इति सर्ववनस्पतीनां वायुदेवता(क)त्वात् कथंचित् ईषाया एवानुवादः । सौर्यमिति च आग्नेयस्यैव तेजोदेवत्यसामान्यात् अनुवादः । तस्मात् गुणो विधीयते इति ।

**यावदुक्तं वा, कर्मणः श्रुतिमूलत्वात् । १३ ॥**

**भाष्यं—** न चैतदस्ति, प्राकृतयोर्गुणविधी इति । किं तर्हि ? आलम्भान्तरं विधीयते इति, निर्वापान्तरं च । यदि आलम्भनिर्वापौ विधीयेते, ततो न प्राकृतौ तौ विहितौ । यदि न विधीयेते, ततः प्राकृतौ लक्ष्येते 'यौ आलम्भनिर्वापौ कर्तव्यौ' इति ; ततस्तौ लक्षयित्वा श्वेतो विधातव्यो भवति चरुश्च । तौ च भूतिकामस्य ब्रह्मवर्चसकामस्य च इति द्वावपि अर्थौ विधेयौ स्यातां, तत्र वाक्यं भिद्येत । अथवा योऽसौ विधायकः शब्दः स लक्षयितव्योपयुक्तः, इति विधायकाभावात् एकोऽप्यर्थो न शक्यते विधातुम् । अथ स एव लक्षयिष्यति, तेनैव च विधास्यते गुणः इति, न मिथो विधानलक्षणसंबन्धोऽवकल्पते । अथ धात्वर्थोऽनुवादः, प्रत्ययो विधातुमिष्यते इत्युच्यते 'य आलम्भः स एतद्गुणः कर्तव्यः' इति, तथापि न प्राकृतो लक्ष्येत । लौकिकोऽपि हि आलम्भोऽस्ति । प्रत्ययार्थे अनूद्यमाने प्राकृतोऽनूद्यते इति, स हि कर्तव्यो निर्ज्ञातो न लौकिकः । अतो न प्राकृतानुवादो घटते, इति यावदुक्तं आलम्भमात्रं निर्वापमात्रं च अपूर्वं कर्तव्यम् । कर्मणः श्रुतिमूलत्वात् । श्रुतिमूलं हि कर्म इत्युक्तं 'चोदनालक्षणोऽर्थो धर्मः' इति ( १।१।२।२ ) । तस्मात् कर्मान्तरे ।

**वा— 'यदि ह्यालम्भनिर्वापौ विधेयत्वं न मृष्यतः । ततो गुणविधित्वं स्यात् विधेयौ त्वत्र तौ मतौ ॥'** वायव्यपदं पूर्ववदेव उपेक्ष्य फलपदपरिग्रहेण तावत् प्रत्यवस्थीयते । यदि हि आलम्भनिर्वापौ अनूद्य श्वेतचरू विधीयेते, ततः फलपदं अनर्थकमेव स्यात् । सर्वकामप्राप्तानुवादेऽपि पाक्षिकत्वात् नित्यवद्ग्रहणं विरुध्येत । विशेषणत्वे वाक्यभेदः स्यात् । अथ गुणफलसंबन्धो विधीयते, तथापि आलम्भादेः प्रकृतस्य आश्रयस्याभावात् वाक्येनैव तत्संबन्धकरणे वाक्यं भिद्येत । गुणविशिष्टालम्भविधाने तु न कश्चिद्दोषः । तेनोच्यते ( सूत्रे ) 'कर्मणः श्रुतिमूलत्वात्' इति । कर्मात्र विधेयत्वेन श्रुतिमूलं, न गुणः । स हि अचोदनालक्षण एव स्यात् । **अथवा** यावदुक्तमेव स्यात्, न यजिमत् । कुतः ? कर्मणः श्रुतिमूलत्वात् । नहि अचोदितो यज्यर्थः अध्यवसातुं शक्यते । न च तेन विना इह किंचित् न सिध्यति । आलम्भनिर्वापयोरेव फलवत्त्वेन प्राधान्योपपत्तेः । नहि यदेकत्र गुणभूतं दृष्टं, तेन अन्यत्र प्राधान्यं वाचनिकमपि न प्रतिपत्तव्यं इति किंचित् प्रमाणम् । यथावचनं हि गुणप्रधानभावौ, न

स्वाभाविकौ। वायव्यादिशब्दश्चात्र सर्वत्र द्रव्याणां यथाकथंचित् देवतासंबन्धोपपत्तेः अनुवादः। **अथवा** यत् केन चित् वाय्वादिभ्यः संकल्पितं, तत् आलम्भादिभिर्योज्यमानं अभ्युदयकारि भवति। विशिष्टविधानाच्च न तत्परिग्रहेऽपि अतिभारः। **अथवा** वायुसूर्यावेव उद्दिश्य स्पृष्टं निरुप्तं वा इत्येतावतैव ईप्सितावाप्तिर्भविष्यति। न चावश्यं यागे एव देवता उद्देष्टव्या। यत्रयत्र हि चोद्यते, तत्रतत्र उद्दिश्यमाना न विरुध्यते। तस्मात् यत्किंचित् श्वेतं वायूद्देशेन स्प्रष्टव्यं इति यावदुक्तचोदनाऽनुसारात् ( अवसीयते )। गुणविधिपक्षे फलपदसंबन्धे वाक्यभेदमभिधाय इदानीं तत्परित्यागं अभ्युपेत्यापि ब्रवीति इति ( भाष्यकारः ) 'अथवा योऽसौ विधायकः शब्दः' इत्यादि। तस्याभिप्रायः, यदिदं अनारभ्यवादानां प्रकृत्यर्थत्वमभिधास्यते ( ३।६।१।१-८ ) नैतत् वाचनिकम्। कथं तर्हि? द्वारान्यथाऽनुपपत्तिकारितम्। न च आलम्भनिर्वापौ अन्यत्रानुपपन्नौ, लोकेऽपि विद्यमानत्वादिति। तत्र यदि तावत् लौकिकव्यावृत्त्यर्थं विहितत्वेन विशेष्यते, ततः अन्यविशेषणाभावात् लिङ्गैव विशेष्टव्यौ, 'य आलम्भः कर्तव्यतया चोदितः' इति। तावता च उपक्षीणशक्तौ विधायके गुणविधानं नोपपद्यते। नहि असौ विधातुं लक्षयितुं च सकृदुच्चरितः समर्थः। केवलधात्वर्थानुवादे च लोकेऽपि गुणविधित्वप्रसङ्गः। तत्र च निष्फलत्वादानर्थक्यम्। न च एतावन्मात्रेणैव विनैव प्रकरणादिभिः वैदिकालम्भनिर्वापग्रहणमुपपद्यते। तस्मात् प्राकृतप्रमाणाभावात् अपूर्वयोर्विधानमिति।

**यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात्। १४॥**

**भाष्यं—** यदुक्तं न प्राकृतयोर्गुणविधी इति, एतत् गृह्णीमः, यत्तूक्तं आलम्भमात्रं विधीयते, निर्वापमात्रं इति, एतदपजानीमहे। यजिमती एते कर्मणी इति। कुतः? द्रव्यफलभोक्तृसंयोगात्। द्रव्यदेवतासंयोगात्। द्रव्यदेवतासंयोगोऽत्र विधीयते भूतिकामस्य ब्रह्मवर्चसकामस्य च। कथं? नहि इदमेव उच्यते 'श्वेतमालभेत' इति। यदि हि एतावदेवोच्येत, ततः श्वेतालम्भसंबन्धोऽवगम्येत। इह हि श्वेतं वायव्यं आलभेत इत्युच्यते। तेन श्वेतवायव्यसंबन्धो विधीयते। यथा 'पटं वय' इति पटवयनसंबन्धो विधेयोऽवगम्यते, 'पटं दीर्घं वय' इति पटस्य दीर्घता विधीयते दीर्घशब्दप्रयोगात्। एवमिहापि सौर्यवायव्यशब्दप्रयोगात् द्रव्यदेवताऽभिसंबन्धो विधेय इति गम्यते। इतरथा देवताशब्दः प्रमादसमाम्नातः इति गम्येत। ननु अत्रापि 'श्वेतं वायव्यं कुर्यात्, तं चालभेत' इति अर्थद्वयविधानात् भिद्येतैव वाक्यम्। नेति ब्रूमः। नहि आलभेत इत्यस्य अयमतिभारः, यत् द्रव्यदेवतासंबन्धेन पुरुषप्रयत्नं ब्रूयात् तं चालभेत इत्यर्थविशिष्टम्। श्रुत्यैव हि पुरुषप्रयत्नो विशिष्टो गम्यते, वाक्येन च द्रव्यदेवताऽऽश्रयः इति। नात्र द्वाभ्यां वाक्याभ्यां प्रयोजनम्। यथा 'रक्तमश्वं योजय' इति। यदा गुणविधिपरं भवति वाक्यं, तदा द्वाभ्यां वाक्याभ्यां प्रयोजनं गुणद्वयविधाने। अथ 'शोणमानय' इत्युच्येत, तत्र गुणविधिपरेऽपि वाक्ये पर्यवसिते एव गुणद्वयविधानम्। श्रुत्यैव विशिष्टगुणद्रव्यस्य प्रतीतत्वात्, न भवति एकस्य वाक्यस्यातिभारः, एवमिहापीति। संबन्धश्च बहुभिः पदैर्विशिष्ट एक एवोच्यते इत्येकार्थत्वम्। विभज्यमानानि चात्र पदानि साकाङ्क्षाणि, इत्युपपन्नं एकवाक्यत्वम्। न च यागमन्तरेण देवतायै द्रव्यं संकल्पयितव्यं इत्येष संबन्धोऽवकल्पते। तस्मात् यजिमती एते कर्मणी इति।

**वा—'यथा फलपदं प्रेक्ष्य गुणपक्षो निराकृतः। देवतापदमालोक्य तथैवालम्भमात्रता॥'** विधिस्तावत् उत्तरोत्तरपदानुरोधेन द्रव्यदेवतापदसंबन्धसंक्रान्तः। स च अन्यथाऽनुपपत्तेः आक्षिप्तयजिक्रियः सन् विधीयते। नहि एनं अन्या क्रिया संपादयितुं समर्था। यदि देवतोद्देशेन अपरित्यजन्नेव द्रव्यं आलभेत, न तत् वायव्यं कृतं स्यात्। न च प्रसिद्धवायुदेवत्यं एवं स्प्रष्टव्यं इत्यवगम्येत अनुष्ठानसंपाद्यत्वाद्देवतात्वस्य। तेनावश्यं वायुमुद्दिश्य श्वेतगुणकं द्रव्यं दातव्यं, अतश्च यजिविधानमेतदिति निश्चीयते। तथा च लक्षणं करिष्यति 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' (४।२।१२।२७) इति। ततश्च आलम्भनिर्वापौ चोदक-

प्राप्तौ एव अनुवदिष्येते । तत्र आलम्भविशिष्टत्वात् इति (भाष्ये) गौरवोपन्यासः फल्गुरेव ; कथं चित् अभ्युपेत्यवादिनोपन्यस्तः इति नातीवादर्तव्यः ।

**लिङ्गदर्शनाच्च । १५ ॥**

**भाष्यं**—लिङ्गं खल्वपि एतमर्थं दर्शयति । 'सोमारौद्रं चरुं निर्वपेत्' इति प्रकृत्य 'परिश्रिते याजयेत्' इति परिश्रयणविधिः । एतस्य वाक्ये यजतिशब्देन संकीर्तनमवकल्पते, यदि यजिमती एते कर्मणी । अथ प्रकृतौ गुणविधानं यावदुक्तं वा, यजतिशब्देनानुवादो नावकल्पेत । तस्मादवगच्छामो यजिमती इति ।

**वा** — सोमारौद्रं इत्युक्तं विनाऽपि यजतिशब्देन परिश्रयणविधिपरे वाक्ये यजतिना अनूद्यमाने यजतिमत्कर्मविधायित्वं एवमादीनां इत्यवगम्यते । अग्नीषोमीयेऽपि च अनेनैव यजिमत्त्वसिद्धिः । पूर्वं च एतावदेव विचारितं, किं प्रकृतानुवादित्वं, उत विधायकत्वमिति । सिद्धे तु विधायकत्वे किमात्मकं तत् कर्म इति एतदधिकरणाधीनमेवैतत् इत्यपौनरुक्त्यम् ।

**शा**— (तत्र सिद्धान्तः) '**देवतापदवैयर्थ्यं यावदुक्तविधौ भवेत् । तेन तत्कल्पितो यागो विधेयोऽत्राश्रुतोऽपि सन् ॥**' तस्माद्याग एव गुणफलविशिष्टो विधीयते ।

**सोम**— युक्तं पूर्वत्र कर्मणः संनिहितत्वात् फलाय गुणविधिः, इह तु अनारभ्यविधानात् प्रकरणादाश्रयालाभेन फलाय गुणविध्यसंभवात् कर्मणि गुणविधिः गुणविशिष्टकर्मान्तरविधिर्वा स्वीकार्यः इति प्रत्यवस्थानात् **संगतिः** । ईषा निर्वापार्थशकटावयवभूतदारुविशेषः (धुरांडी, इसाड इति भाषायाम्) । **सूत्रार्थस्तु**—अप्रकरणे अनारभ्यश्रुते वायव्यादिवाक्ये दार्शपूर्णमासिकः संस्कार एवानूद्यते, न तु यागो विधीयते, कर्मणो यागस्य शब्दाभावात् इति ।

**वि**— 'वायव्यः श्वेत आलभ्यो भूत्यै सौर्ये चरुं तथा । निर्वपेद् ब्रह्मतेजोऽर्थमीषामुष्टिनिरुप्तयोः ॥ गुणौ श्वेतं चरुं किंवा यावत्कथितकर्मणी । फलार्थे अथवा यागौ विशिष्टौ विहिताविह ॥, श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे । चरुर्गुणश्चरुः स्थाली निर्वापस्तु तदाश्रितः ॥ फलत्वेन तत् किं तु यागयोर्विनकर्म तत् ।, द्रव्यादिकमंत्तेरवार्थे यागनाऽर्थिके ॥'

**भाट्ट**— 'ईषामालभेत' 'चतुरो मुष्टीन् निर्वपति' इत्येताभ्यां विहितयोः दार्शपूर्णमासिकयोः ईषालम्भचतुर्मुष्टिनिर्वापयोः अनुवादेन अनारभ्याधीताभ्यां 'वायव्यं श्वेतमालभेत भूतिकामः' 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्येताभ्यां श्वेतत्वचरुगुणौ विधीयेते आलम्भकर्मीभूता ईषा श्वेता कर्तव्या इति, निर्वापः चरुशब्दलक्ष्यस्थाल्यां कर्तव्यः इति । सर्ववृक्षाणां च वायुसंबन्धात् वायव्यमित्यनुवादः । सौर्यमिति च आग्नेयस्यैव तेजोदेवत्यत्वसामान्यात् । न तु देवताविधिः यागाश्रवणात् । उभयत्रापि फलपदं सार्वकाम्यवाक्यप्राप्तफलप्रयोजकत्वानुवादः इति **प्रथमः पक्षः** । **द्वितीयस्तु** फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन च गुणफलसंबन्धानुपपत्तेः गुणविशिष्टं यावदुक्तं आलम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयते इति । **सिद्धान्तस्तु** वायव्यं सौर्यं इत्यादितद्धितान्तपदवैयर्थ्यापत्तेः द्रव्यदेवतासंबन्धानुमितो याग एव आलभतिनिर्वपतिधातुलक्षितो द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयते इति । अतिदेशप्राप्तौ च आलम्भनिर्वापौ न विधीयेते ।

**मण्डन**— 'वायव्यं यजिमत् कर्म ।'

**शंकर**— 'वायव्यादौ यजिविधिः ।'

* आलम्भनिर्वापन्यायस्य स्वरूपं तु 'यदि आलम्भनिर्वापौ विधीयेते ततो न प्राकृतौ तौ विहितौ, यदि न विधीयेते ततः प्राकृतौ लक्ष्येते, यौ आलम्भनिर्वापौ (तौ) कर्तव्यौ' इति आलम्भनिर्वापाधिकरणभाष्योक्तेन न्यायेन कर्तव्यतावाचिना प्रत्ययेन उपलक्षणीभूत्वा व्यावृत्त्याख्यविशेषणं वा कर्तव्यं इत्युक्तम् । **सु. पृ.** ११२३.

*** आलम्भोत्कर्षः** वाजपेये प्राजापत्यपशूनां ब्रह्मसामकाले 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्न्यालभन्ते' इति । **भा.** ११।२।१२।५१–५३.

*** आलोकस्य** आलोकान्तरापेक्षायां नहि प्रमाणमस्ति । यत् पुनः नायनरश्मिसापेक्षत्वं, तत् उपलब्धौ,

नाभिव्यक्तौ। उपलब्धियोग्यताऽऽपादनं हि अभिव्यक्तिः, तदुत्तरकाले चोपलब्धिः। **ऋजु.** पृ. २२०.

* **आवसथ्यः** अग्निः आहवनीयान्नाधेयः, किंतु लौकिक एव। **संकर्ष.** ३।२।३. * आवसथ्यः नामाग्निः आवसथे गृहे भवः। पञ्चाग्न्याधानपक्षे पृथगयम्। अत्रैव सर्वः पाकः। त्रेतापक्षे तु आहवनीये एव सोऽपि ध्यायते। **के.**

* **आवापः** तन्त्रं च एकादशाध्यायार्थः। तत्र आवापो नाम अधिकस्य निवेशः। तन्त्रं तु अनेकार्थं सकृत् करणम्। **के.** * **आवापोद्वापौ** साम्नां विवृद्धाविवृद्धस्तोमकेषु क्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव। **भा.** १०।४।११।२१–२२.

**आवापोद्वापाभ्यां अवयवानां शक्तिः इति न्यायः।** वाक्यस्फोटे ग्रन्थकृतां तात्पर्यम्। तत्रापि जातिस्फोटे इत्यवधेयम्। तथा च प्रथमव्युत्पत्तेः व्यवहाराधीनतया संपूर्णस्य वाक्यस्य विशिष्टे प्राथमिकः शक्तिग्रहः इति निर्विवादम्। स च '**आवापोद्वापाभ्यामवयवानां शक्तिः**' इति न्यायोपष्टम्भेन त्यज्यते दर्शनान्तराणां पन्थाः। **शब्दकौस्तुभे** १ स्फोटवादः।

* **आवापिकः**— किमिदं आवापिक इति? आज्यभागस्विष्टकृतौ अन्तरा आवापस्थानम्। तत्र भवः आवापिकः। ब्रहिरावापात् अनुयाजः तान्त्रिकः। या तु स्विष्टकृद्देवता तत्र, सैवासौ प्रधानदेवता आवापिकी। तस्मादावापिक इत्युच्यते। **भा.** १०।४।१९।३८.

* **आवाहनं** न कर्तव्यं काम्ये वैश्वदेवे चरौ कदाचित् संभविष्यतो विष्णोरुरुक्रमस्य देवताऽऽवाहनकाले। **वि.** १०।१।१ वर्णकं ३. * आवाहनं वाजिनां वैश्वदेवे पर्वणि न कर्तव्यम्। **संकर्ष.** ४।४।८. * **आवाहननिगदे** आवाहकोऽग्निः आहवनीयः, आवाह्यश्च आज्यभागाग्न्यादयः, न तु आवाह्यावाहकत्वमेकस्यैव। ४।२।८.

**आवाहननिगदे 'आवह देवान्' इति उत्तरं ऊह्यमानानां सर्वदेवानामेव वादः॥**

'अग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान् यजमानाय' इति मन्त्रे श्रुतमावाहनं समस्तदेवतानां स्यात्। त्वष्ट्रादीनामपि देवतात्वात् प्राकरणिकत्वाच्च। संनिधानेन विशेषपरत्वे तु प्रयाजानामेव प्रथमं इज्यमानत्वात् तद्देवतापरमिति प्रयाजलोपे मन्त्रलोपः। **इति प्राप्ते**, 'ब्राह्मणानावह चैत्रं मैत्रं यज्ञदत्तं च' इति लौकिकवाक्ये सामान्यवाचिनोऽपि ब्राह्मणपदस्य चैत्रादिमात्रपरत्वप्रतीतेः 'अग्निमग्न आवह' इत्याद्युत्तरवाक्येषु कीर्त्यमानानामेवैतदावाहनं न सर्वेषाम्। **संकर्ष.** ४।२।७.

* **आवाहनमन्त्रेण** देवतास्मरणेऽपि स्वाहाकारादिमन्त्रेण दाढर्यार्थं पुनः स्मरणम्। **भाट्ट.** १०।१।९ पृ. २०५.

* **आवाहनवत्**। यथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः' इत्येकत्वेऽपि अग्नेर्देवतायाः कर्मभेदात् भेदेनावाहनं क्रियते, एवं द्वादशाहे सुत्याविवृद्धौ सर्वेषामह्नां सुब्रह्मण्यायां उपलक्षणं कर्तव्यं 'द्वादशाहे त्रयोदशाहे' इति। **भा.** ११।४।७।३०.

* **आवाहनादिनिगदेषु** देवताविशेषपदं सविशेषणमेव पठनीयं विधिवाक्ये देवताविशेषवाचकपदस्य सविशेषणत्वे। **भा.** १०।४।१४।२६–२९, * आवाहनादिनिगदेषु विधिगतशब्देनैव देवताप्रकाशनं कर्तव्यं दर्शपूर्णमासादौ। १०।४।१२।२३–२४, * आवाहनादिनिगदेषु विधिगतसूर्यादिपदेनैव देवताप्रकाशनं सौर्यादिविकृतिषु। १०।४।१३।२५, * आवाहनादिनिगदेषु स्विष्टकृच्छब्दरहितेनैव केवलाग्निशब्देन अग्नेरभिधानं अग्नीषोमीयपशुपुरोडाशाङ्गस्विष्टकृद्धोमे। १०।४।१८।३६–३७.

* '**आविर्भावतिरोभावधर्मकेष्वनुयायि यत्। तद्धर्मि, यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेत्॥**' (श्लो. वा. प्रत्यक्षसूत्रे १५२)। अत्र **न्यायरत्नाकरः**। नहि रूपादिधर्मेभ्योऽन्यो धर्मी विद्यते, यो जात्यादिभिः विशिष्टो गृह्येत। रूपादिसंघातमात्रमेव गवादिकं, वृक्षसंघातमात्रमिव वनं, नान्यत्। अनुपलम्भात् उपलम्भकारणासंभवाच्च। यथा आहुः '**क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु। न षष्ठमिन्द्रियं तस्य (स्वतन्त्रस्य धर्मिणः) ग्राहकं विद्यते बहिः॥**' इति। **न च** असत्यपि बहिरिन्द्रिये अन्तःकरणेन गृह्यता-

मिति वाच्यम् । तस्य बहिरस्वातन्त्र्यात् इति । परि-हरति–आविरिति । रक्तत्वहरितत्वादिधर्मेषु आविर्भाव-तिरोभावधर्मकेषु यत् बदरफलं अवस्थाद्वयानुयायि प्रत्यभि-ज्ञायते, यद्वा पिण्डघटकपालाद्यवस्थासु अनुगतं अवस्था-वत्, यद्वा संतमसे बलाकापङ्क्तौ प्रागेव शुक्लरूपग्रह-णात् गृह्यते, तत् धर्मि । नहि तदभावे प्रत्यभिज्ञा संभवति, धर्माणां भिन्नत्वात् दर्शनस्पर्शनाभ्यां च ग्रहणं इति न ग्राहकाभावः इति ।

* **आवीतहेतवः नाम** अवश्यव्यावृत्तिमुखेन ये साध्यं गमयन्ति यथा प्रमाऽऽदयः । ते हि निरात्मकेभ्यो घटादिभ्यो व्यावृत्ताः शरीरस्य निरात्मकत्वापोहेन सात्मकत्वं गमयन्ति । **गूढार्थविवरण.** पृ. १०५.

* **आवृत्तपृष्ठ्यषडहावृत्तेरन्ते** मध्वशनं, न तु प्रत्येकषडहान्ते । **भा.** १०।६।१०।२९–३०.

* **आवृत्तिः** अग्निहोत्रादिकर्मणां, प्रदोषादिकाला-दिरूपनिमित्तावृत्त्यनुरोधेन । **भा.** ६।२।८।२७–२८. * आवृत्तिः । अनुषङ्गावृत्त्यसाधारणलक्षणं श्रुतपदस्यानु-संधानम् । अश्रुतपदस्यानुसंधानमध्याहारः । स च सर्वा-पेक्षया जघन्यः । **मणि.** पृ. ७१. * आवृत्तिः अवघात-मन्त्रस्य प्रतिबीजं राजसूये नानाबीजेष्टौ । **भा.** ११।४।१३।४६, * आवृत्तिः अहर्गणे सुत्याकालीनस्य सुब्रह्मण्याह्वानस्य प्रत्यहं भेदेन । ११।३।११। २२–३२, * आवृत्तिः उद्गात्रपच्छेदवतः अह्नः एव, न सर्वेषां अहर्गणे । ६।५।२११५६, * आवृत्तिः उपसदां स्वस्थानविवृद्ध्या , न तु दण्डकलितवत् , उपसद्विवृद्धौ । ५।३।२।३, * आवृत्तिः गुर्वनुगमनादीनां निमित्तावृत्तौ । ६।२।१०।३०, * आवृत्तिः दर्शपूर्णमासयोः नैमित्तिकस्य प्रायश्चित्तस्य भेदनस्कन्दनादिनिमित्तावृत्तौ । ६।२।९।२९. * आवृत्तिः प्रधानानां गुणानुरोधेन अयुक्ता । **वा.** २।२।१ पृ. ४६३. * आवृत्तिः बर्हिःस्तरणमन्त्रस्य आतिथ्या-बर्हिषः अग्नीषोमीयार्थे स्तरणकाले । **भा.** १२।१। २०।४४, * आवृत्तिः मध्वशनस्य गवामयने अभि-प्लवषडहव्यवधानेन पृष्ठ्यषडहस्यावृत्तौ । १०।६।११।३१, * आवृत्तिः वसाहोमस्य भिन्नदेवताकपशुगणे यथा ऐकादशिनेषु पशुषु । ११।२।६।२६.

* आवृत्तिः वाक्यदोषः । अन्नेनेत्युभयविधो आख्यात-पदावृत्तिः, प्रकृत्यविवक्षायां पदैकदेशप्रातिपदिकावृत्तिः, हविरार्तैः उभयत्वेन विशेषणे 'हविरार्तैनार्त्तेन्' इति पदसमुदायस्य आवृत्तिः । **सु.** पृ. ६८२. * आवृत्तिः विशेषणसंबन्धार्थे दृष्टा 'आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां' इत्यादौ । **वा.** २।२।१।१ पृ. ४६३.

* **आवृत्तिर्न** दर्शपूर्णमासयोः अवघातमन्त्रस्य प्रति-प्रहारं, किंतु प्रथमप्रहारे सकृदेव पठनम् । **भा.** ११।४। १२।४२, * आवृत्तिर्न सर्वोपधावधानस्य अदृष्टार्थस्य अग्निचयने । ११।१।६।२८, * **आवृत्त्या** आग्नेय-कृष्णग्रीवरज्जुद्रयस्य प्रदानमनुष्ठेयम् । ११।१।११।६८-७१. * **आवृत्तौ** च वाक्यभेदः । **टुप्.** ११।१।२।९. * आवृत्तौ षडहस्य सर्वषडहान्ते मध्वशनस्य सकृदेवा-नुष्ठानं, न तु अवान्तरप्रतिषडहम् । **भा.** १०।६।१०। २९–३०.

* **आवृत्तिन्यायानां** दण्डकलितं न्याय्यं, तथा क्रमानुग्रहो भवति । तद्यथा, कश्चिदुच्यते 'अनुवाकः त्रिः पठ्यतां' इति, दण्डकलितवदसौ पठ्यते क्रमानु-ग्रहाय । **भा.** १०।५।२५।८३.

**आवृत्तिरसकृदुपदेशात् इति न्यायः** ( ४। १।१ ब्रसू. ) । नहि सकृत् श्रवणमात्रात् ( प्रायः ) विद्या दृढा उत्पद्यते 'आवृत्ति०' इति न्यायात्, श्रवणोत्तरकालं मननादिविधानसामर्थ्याच्च । **उपदेश-साहस्री**– रामतीर्थः गद्य. ५ । 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति वाक्येन विहितानां श्रवणमनन-निदिध्यासनानां साक्षात्कारपर्यन्तं आवृत्तिः कर्तव्या, न तु सकृत्करणेन कृतार्थता । असकृत् उपदेशात् श्रवणो-त्तरं पुनर्मननस्य, तयोरुत्तरं पुनर्निदिध्यासनस्य विधानात् आवृत्तिर्गम्यते । इति न्यायसूत्रार्थः । **के.**

* **आवृत्तिलक्षणो** वाक्यभेदस्त्रिविधः । प्रकृत्या-वृत्तिः, प्रत्ययावृत्तिः, उभयावृत्तिश्चेति । प्रकृत्यावृत्ति-रपि द्विविधा , प्रातिपदिकावृत्तिः धात्वावृत्तिश्चेति । प्रातिपदिकावृत्तिरपि द्विविधा समासासमासभेदात् । प्रत्ययावृत्तिरपि चतुर्विधा सुप्-तिङ्-कृत्-तद्धितभेदात् । ( उदाहरणानि तु नोक्तानि ) । **बाळ.** पृ. १८१.

**आवृत्तिस्तु व्यवाये कालभेदात् स्यात् । १०।६।११।३१ ॥**

गवामयने प्रतिमासं चत्वारोऽभिप्लवाः षडहाः, एकश्च पृष्ठ्यः षडहः इत्यनुष्ठानम् । 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इत्यनेन च षडहान्ते मध्वशनमुक्तम् । प्रथममासे पृष्ठ्यषडहे अनुष्ठिते द्वितीयमासस्यादौ अभिप्लवाश्चत्वारोऽनुष्ठीयन्ते । ततः पुनः पृष्ठ्यः । एवं प्रतिमासम् । तथा च पृष्ठ्यषडहानां अभिप्लवैः व्यवाये व्यवधाने सति कालस्य भेदः स्पष्टः । एवं व्यवाये सति कालभेदात् प्रतिपृष्ठ्यषडहान्ते मध्वशनस्यापि आवृत्तिः स्यात्, न तु सर्वषडहान्ते सकृदेव। अतः प्रतिमासमावर्तते मध्वशनम् । सौत्रस्तुशब्दः पूर्वाधिकरणोक्तसकृदनुष्ठानवैलक्षण्यार्थः । **के.**

**आशास्तेऽयं यजमानः इति नित्यं निर्देशः, यन्न निर्दिशेत् इति नित्यानुवादः ॥**

'आशास्तेऽयं यजमानोऽसौ' इति यजमाननामनिर्देशस्य विधिनिषेधाभ्यां षोडशिनं प्रकृत्य 'यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याशीर्गच्छेत् यजमानोऽसाविति निर्दिश्यैवैनं सुवर्गं लोकं गमयति' इति श्रुतौ नामनिर्देशस्य विधिनिषेधाभ्यां षोडशिन इव विकल्पे प्राप्ते, यन्न निर्दिशेदित्ययं नित्यानुवादः अनिर्देशस्यैवोत्तरत्र निन्दितत्वात् । अनिर्देशस्य प्रापकान्तराभावात्, अतो नित्यं निर्देशः । **संकर्ष.** ४।३।२०.

* **'आशास्तेऽयं यजमानोऽसौ,** आयुराशास्ते' इत्यादिः अस्थियज्ञे मृताधिकारपक्षे प्रायणीयेष्ट्यादौ प्रस्तरप्रहरणे सूक्तवाकमन्त्रगतो भागो यजमानाशासनपरो लुप्यते । (कृत्वा चिन्ता) **वि.** १०।२।२१.

* **आशितंभवम्** । या न आशितंभवं करोति नासौ बलकरणी । तस्मात् या नाशितंभवा, नासौ दक्षिणा । आशितंभवाया आधिक्यं वचनस्य (द्वादशशतं दक्षिणा इत्यस्य) विषयः । ... तत्र यावदाशितंभवं नास्ति तावद्बलता । बलवत्तरो हि आशितेन भवति । इति आशितंभवादूर्ध्वं बलकरणम् । तस्मात् आशितंभवं यद् द्रव्यं सा भृतिः, सा दक्षिणा । (आशितंभवं उदरपूरणपर्याप्तम्) । **भा.** १०।३।११।४५.

* **आशिरवत्** । यथा ऋतपेये 'घृतव्रतौ भवतः' इति वचनात् अभावे व्रतदुहः (धेनोः) 'अन्यां यजमानस्य व्रतयुक्तामाशिरे (आशिरार्थे) दुहन्ति' इति श्रुतेः आशिरार्थमन्या गौरुपादीयते, एवं (संस्कारकाले नवानि पात्राण्युत्पाद्यानि, इति पूर्वः पक्षः) । भा. ११।३।१३।३९.

**आशीरधिकरणम्** । प्रोत्साहनमन्त्राणां याजमानत्वम् ॥

**मन्त्राश्चाकर्मकरणास्तद्वत्** । ३।८।६।१५ ॥

**भाष्यं**— इह एवंजातीयका मन्त्रा उदाहरणं 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इति, 'वर्चोदा अग्नेऽसि वर्चो मे देहि' इति । एषु संदेहः किं आर्त्विजाः, उत याजमाना इति । समाख्यानात् आर्त्विजा इति प्राप्तम् । **एवं प्राप्ते ब्रूमः** । मन्त्राश्चैते तद्वत् भवेयुः, यथा कामः । एवं आत्माभिधायि पदं युक्तं भवति आयुर्मे वर्चो मे इति । आयुः वर्चः इत्येवमादिभिः कर्मफलमभिधीयते अग्ने त्वं कर्मफलं मे साधय इति । तत् इह कर्मफलं उत्साहार्थं संकीर्त्यते । यजमानश्च तेन उत्सहते, नान्यः । यत् ऋत्विजः कर्मफलं, न तदर्थः अग्निः, सिद्धं हि तत् । यत् यजमानस्य, तदर्थः अग्निः । तच्च असिद्धं सत् आशासितव्यं, यत् उत्साहं जनयति अवैगुण्याय । ऋत्विगपि सिद्धे यत् उत्सहते, तत् यजमानस्यैव कर्मफलाय उत्सहते, तत्र आत्माभिधायि पदं नावकल्पते । यजमाने च आत्माभिधायि पदं कल्प्यमानं अगौणं भवति । तस्मात् याजमानाः ।

**वा**— अकर्मसंयुक्ता आशीर्मन्त्राः समाख्यया नियम्यन्ते, न तेभ्यः फलनिष्पत्तिः । मन्त्राणां अविधायकत्वात् अन्यस्य च फलकल्पनाहेतोः असंभवात् । यत्तु आशासनं, तत् यजमानवत् अध्वर्योरपि उत्साहकरत्वेन अविशिष्टम् । **इति प्राप्ते**, याजमानाः इत्युच्यते । ते हि फलान्तराभावात् प्रधानफलप्राप्तिं आशासते । यजमानेन च तत् आशासनीयं, न ऋत्विजा, तदीयस्य दक्षिणालाभस्य अन्यथाऽपि सिद्धत्वात् यजमानाच्च लभ्यमानत्वेन अग्नेः अप्रार्थनीयत्वात् । अथ यजमानार्थमेव असौ प्रार्थयेत, तत्र 'आयुर्मे देहि' इति

आत्मविषयं सन् विरुध्येत । तस्मात् यजमानेनैव प्रधान-फलप्राप्तिरूपेण आत्मोत्साहनार्थं प्रयोक्तव्याः इति ।

**विप्रयोगे च दर्शनात् । १६ ॥**

**भाष्यं--** विप्रयोगे च अग्नीनां प्रवासे उपस्थान-मस्ति ( यजमानस्य प्रवासे अग्नीनां उपस्थानमस्ति इत्य-न्वयः ) ' इहैव सन् तत्र सन्तं त्वाऽग्ने ' इति । न च प्रेषितः अग्निभ्यः ऋत्विग् भवति । कर्म कुर्वतः एष वाचकः शब्दः । भवति तु यजमानः अग्निभ्यः प्रेषितोऽपि । यजमानः संविधाय सः अग्निहोत्राय प्रवसति ( अग्निहोत्राय संविधाय प्रवसति ) । शक्यते च विदेशस्थेनापि त्यागः कर्तुम् । स एव प्रोषितस्य उपस्थानविशेषं ब्रुवन् यजमानस्य उपस्थानं दर्शयति । तेनैव एवंजातीयकाः ( मन्त्राः ) यजमानस्य भवेयुः इति ।

**वा—** आशीर्मन्त्रं च प्रवसद्यजमानाग्निहोत्रेषु अग्न्युपस्थानार्थं प्रोषितस्य दर्शयति । न च ऋत्विजः प्रोषितस्य ऋत्विक्त्वं संभवति कर्मसंयोगाभावात् । यजमानस्य तु द्रव्यत्यागेन उपपद्यते । तस्मात् तत्सामान्यात् इतरेषु तथात्वम् ।

**सोम--** फलार्थगुणकामवैषम्येण प्रत्यवस्थानात् **संगतिः** । **सूत्रे** तद्वत् कामवत् याजमाना इत्यर्थः ।

**वि--** ' आयुर्दा इति मन्त्रोक्तिः कस्या--, ध्वर्योः समाख्यया ।, तद्बाधे लिङ्गतः स्वामिगामिता काम-वन्मता ॥ '

**भाट्ट--** इह ये अकरणभूताः कर्मफलप्रकाशकाः कर्माङ्गभूता मन्त्राः ' आयुर्दा अग्ने ' ' अगन्म सुवः' इत्यादयः, ते समाख्यानादाध्वर्यवाः । **इति प्राप्ते** , यद्य-प्येते लिङ्गादिना आहवनीयोपस्थानादौ विनियुक्ताः, न सूक्तवाकादिवत् तृतीयया इतिकरणेन वा विनियुक्तत्वा-भावात् आनुषङ्गिकफलकल्पकाः, तथापि कर्मफलमेव उपस्थानादिप्रयोज्यं प्रोत्साहनार्थं प्रकाशयन्ति । तत्र च यत्र एतत्प्रकाश्यं फलं कर्मजन्यत्वेन क्लृप्तं , तत्र तत् शक्त्यैवं नियतमनियतं वा प्रकाश्यते । अत एव दर्श-पूर्णमासादौ स्वर्गायुरादेः फलत्वात् तत्तत्फलार्थप्रयोगे एव तत्तन्मन्त्रः, न फलान्तरार्थप्रयोगे । यत्र तु नैतत्प्रकाश्यस्य कर्मफलत्वं , तत्र लक्षणया कर्मफलमेवैतेन मन्त्रेण प्रका-श्यते इति द्रष्टव्यम् । तच्च फलं यजमानगाम्येव , ऋत्वि-क्फलस्य उपस्थानाद्यप्रयोज्यत्वेन तत्प्रकाशने तदङ्गत्वानु-पपत्तेः । तस्य यजमानाशास्यत्वेन अग्निं प्रति अना-शास्यत्वाच्च । न च यजमानफलमेवाध्वर्युणा आशास्यतां, ' मे ' इति ' अगन्म ' इत्यध्वर्य्वप्रकाशकत्वेन लिङ्ग-विरोधात् । अतो याजमाना एवैते । अत एव यत्र नैतादृशं लिङ्गं, तत्र आध्वर्यवा एव ।

**मण्डन —** ' तस्यैव चाशंसनमन्त्रपाठः । ' ७. तस्य स्वामिनः ।

**शंकर---** ' प्रत्यगाशीर्मनुर्यष्टुः । ' ९. यष्टुः यज-मानस्य आशीर्मनुः आशीर्मन्त्रः ।

*** आशीर्मन्त्राः** ' आयुर्दा अग्नेऽसि आयुर्मे देहि ' इत्यादयः समाख्यया न नियम्यन्ते, याजमाना एव ते नार्त्विजाः । **वा.** ३।८।६।१६. ***** आशीर्मन्त्राः । गुणी व्याप्यो यत्र प्रार्थ्यते, ते मन्त्राः आशिषः उच्यन्ते । **टुप्.** १२।४।१।१. *** आशीर्मन्त्रं** प्रवसद्यजमानाग्नि-होत्रेषु अग्न्युपस्थानार्थं प्रोषितस्य दर्शयति । ( तिरो मा सन्तं मा प्रहासीः इत्यादिम् । **सु.** । ' इहैव सन् तत्र सन्तं त्वाऽग्ने ' इति तु भाष्ये । ) **वा.** ३।८।६।१६. *** आशीर्मन्त्राणां** ' आयुर्दाः ' इत्यादीनां समुच्चयः । **भा.** १२।४।१।१-२.

*** आशूनां** नाम व्रीहीणां ' अग्नये गृहपतये अष्टा-कपालं निर्वपेत् ' राजसूये नानाबीजेष्टौ प्रथमं हविः । आशवो व्रीहयो नाम ये मासद्वयेनैव सिद्धा भवन्ति । **के.** ११।३।७।१५.

*** आश्रमधर्मव्यतिरेकेणावस्थानं अनाचारः ।** **वा.** १।३।३।७ पृ. १०४.

*** आश्रयः—** यत्र हि गुणः कारकतामापद्यते स आश्रयः यथा होमो दध्नः । **शा.** १।२।२ पृ. ११ । **सोम—** इदं च यत्र फलाय विधीयमानस्य गुणस्य जाति-द्रव्यशुक्लादिगुणरूपत्वं , तदभिप्रायम् । तेन ' दाक्षायण-यज्ञेन स्वर्गकामो यजेत ' ' पशुकाम उक्थ्यं गृह्णीयात् ' ' षोडशिनं वीर्यकामः ' ' शुक्राग्रान् ग्रहान् गतश्रीः प्रतिष्ठाकामः ' इत्यादिषु आवृत्तिसंस्थाऽग्रतादीनां गुणानां

दर्शपूर्णमासादिषु करणत्वाभावेऽपि तेषामाश्रयत्वमुपपद्यते इति ध्येयम् । * **आश्रयेण** सह गुणकामानां समानविधित्वं नास्ति । भा. ३।६।१६।४१-४७, * **आश्रये** च प्रवर्तमाने तदाश्रितमपि प्रवर्तते यथा पटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते । ८।१।१४।२३.

**आश्रयदौर्बल्यन्यायः** । आश्रयस्य दुर्बलत्वे आश्रितं दुर्बलतरमेव भवति इति न्यायार्थः । 'पील्वधिकरण- ( वा. १।३।४।९ पृ. २१८,१९ ) व्युत्पादितम्लेच्छप्रसिद्धिगतम्लेच्छरूपाश्रयदौर्बल्यन्यायः शिष्टाकोपाधिकरण- ( १।३।३।५-७ )पराहतोऽपि पुनरुज्जीवितो भवति । इदं पूर्वपक्षे उक्तम् । कौ. १।३।५।१० पृ. ८०-८१.

* **आश्रयलक्षणनिरूपणम्** । द्वितीये ( २।२।११।२५-२६ ) इन्द्रियकामाधिकरणे गुणे गुणफलसंबन्ध उक्तः । तदपेक्षितस्य च आश्रयस्य लक्षणमुक्तं 'फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः' इति । तदिदमव्यापकं, ज्योतिष्टोमे काम्योक्थ्यादिसंस्थाऽऽश्रयत्वेन मीमांसकादिमते । नहि उक्थ्यादिसंस्थायां फलार्थं क्रियमाणायामपि ज्योतिष्टोमे सा कारकीभवति, किंतु सोमे एव । अतः 'फलाय विधीयमानो गुणो यां क्रियामपेक्षते, स आश्रयः' इत्येव आश्रयलक्षणं अभिमतम् । संस्था च समाप्तिरूपत्वात् समाप्तिमन्तमपेक्षते । अतः अस्त्येवेदं लक्षणं उक्थ्यादिसंस्थाऽऽश्रयभूते ज्योतिष्टोमे इति नाव्याप्तिः । तथा 'फलार्थो गुणो यत्र कारकं' इत्याश्रयलक्षणं, साकंप्रस्थाय्ये कुम्भीसाहित्यं फलार्थो गुणो न प्रकृते आश्रयत्वेन संमते अमावास्यायागे दधिदुग्धकरणके कारकतामापद्यते इति तत्रापि अव्याप्तम् । अतोऽपि उक्तमेव लक्षणं आश्रयस्य युक्तम् । तथा रेवत्यधिकरणे ( २।२।१२।२७ ) क्रियाकारकभावव्यतिरिक्तेनापि समानकर्तृकतासंबन्धेन आश्रयाश्रयिसंबन्धं यागेन सह रेवतीवारवन्तीयसंबन्धकरणस्य फलाय विधीयमानस्य गुणस्य आशङ्क्य क्रियाकारकभावव्यतिरिक्तसंबन्धान्तरेण आश्रयाश्रयिभावो न संभवति इति नोत्तरितं, किंतु तत्संभवमङ्गीकृत्यैव अन्यदेवोत्तरं दत्तं 'एवमपि अग्निष्टोमसाम इति नावकल्पते' इति ( शा० २।२।१२ पृ. १५५ ), तस्मादपि असदुक्तमेव आश्रयलक्षणमभिमतं लक्ष्यते, न फलार्थगुणस्य यत्र कारकत्वमिति । इत्याश्रयलक्षणनिरूपणम् । बाल. पृ. ८७-८८.

* **आश्रयातिदेशः** इन्द्रियकामाधिकरणे ( २।२।११।२५-२६ ) निरूपितः । बुद्धौ विपरिवर्तमानः एव हि तत्र स्वेतिकर्तव्यतायाः आश्रयवत् इति कल्पनया प्रापको भवति, न चोदनासामान्यम् । बाल. पृ. ११८.

* **आश्रयाश्रयिसंबन्धः** । 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र 'होमाश्रितो गुणः फलं साधयिष्यति इति वृत्तिकारेणोक्तं' इति भाष्यम् । अत्र **वार्तिकं-** कः पुनरयं आश्रयाश्रयिसंबन्धो नाम ? किंकेनकथंभावव्यतिरिक्तः, उत अव्यतिरिक्त इति । के चित् तावदाहुः, व्यतिरिक्त एवायमिति । कथं ? '**यथैवांशत्रयापेक्षा भावनाऽन्यत्र गम्यते । तथा गुणविशिष्टायां चतुर्थोंऽशोऽप्यपेक्ष्यते** ॥' यत्र धात्वर्थकरणिका भावना चोद्यते, तत्र अंशत्रयेणैव समाप्यते । यत्र गुणः करणत्वेन चोद्यते, तेन च करणभूतेन फलमुत्पादयितव्यं नोदासीनेन, तत्र अस्य कं चिद्धात्वर्थमकुर्वतः करणत्वानुपपत्तेः, कं धात्वर्थं साधयता तेन फलं भावयितव्यं इति चतुर्थं अपेक्षाऽन्तरं जायते । यश्च धात्वर्थः साध्यः, स एव गुणस्य करणत्वोपजननात् आश्रयः इत्युच्यते । तत्र वाक्ये अन्यसंबन्धपरे वाक्यभेदप्रसङ्गात् स्वयं आश्रयं दर्शयितुमशक्नुवति प्रकरणात् अग्निहोत्रहोमः आश्रयो लभ्यते । तथा लब्धश्च प्रत्ययानुग्रहार्थप्रवृत्तेन आलम्भादिवच्च चोदनालिङ्गभूतेन धातुना अनूद्यते । '**यदा एकस्मादपूर्वं तदा इतरत् तदर्थं**' इति च न्यायेन धात्वर्थो नामपदार्थानुग्रहार्थः अध्यवसीयते ( इति । वस्तुतः ) शक्यते तु अत्र न चतुर्थी अपेक्षा अस्तीति वक्तुम् । कारणापेक्षैव हि एषा प्रविततरा जाता । धात्वर्थेन हि सा शीघ्रं निवर्त्यते । गुणस्य तु क्रियासंबन्धोत्तरकालं करणत्वं निष्पद्यते इति चिरतरेण । तस्मात् तिस्र एव अपेक्षाः । तेन होमोपजनितकरणत्वे फलवति गुणे अवधारिते कथंभावापेक्षायां सत्यां अग्निहोत्रेतिकर्तव्यतैव पूरणी भवति इत्यादि संस्थाऽधिकरण-

विषयः पर्यवसिते अधिकरणार्थे प्रसङ्गादभिधीयते । वा. २।२।११।२६ पृ. ५४९–५५०, * आश्रयाश्रयिसंबन्धः फलसंबन्धानुगुणत्वात् संभवन् गृह्यते । २।२।१२।२७ पृ. ५६२.

* आश्रयाश्रितयोर्भेदाभेदौ अभ्युपगम्य तादात्म्यसंबन्धो वर्ण्यते । वि. ६।३।३.

* **आश्रयासिद्धिः** पक्षाप्रसिद्धिः, यथा आकाशो नित्यः निरवयवद्रव्यत्वात् इति । सौत्रान्तिकं आकाशाभाववादिनं प्रति आश्रयासिद्धिः । पक्षताऽवच्छेदकाप्रसिद्धिरपि सा, काञ्चनमयः पर्वतो वह्निमान् इति । **मणि.** पृ. ४१.

* **आश्रयी** नहि आश्रयभेदेन भिद्यते, अन्यत्वात् तयोः । **ऋजु.** पृ. १९७. * **आश्रयिणः** पदार्था उत्तमप्रयाजः, पशुपुरोडाशः, स्विष्टकृत् इत्येते यागाः द्रव्यदेवतासंस्कारार्थत्वेन दृष्टार्थाः, त्यागांशेन अदृष्टार्थाः इत्युभयार्थाः । **भा.** ४।१।७।१८–२०.

**आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । ४।१।७।१८ ॥**

एकदेशेन अन्यदीयं द्रव्यं देवतां उभयं वा आश्रयन्ते संस्कुर्वन्ति ये पदार्थाः, ते आश्रयिणः उत्तमः प्रयाजः, पशुपुरोडाशः स्विष्टकृत् इति, ते किं संस्कारमात्रं कुर्वन्ति, उत अदृष्टं कुर्वन्ति इति विचारे सिद्धान्तमाह । उक्तेषु आश्रयिषु अविशेषेण अन्यैः आख्यातशब्दैः वैलक्षण्याभावेन भावोऽर्थः अपूर्वं प्रतीयेत । आश्रयिकर्माणि अदृष्टार्थानि इत्यर्थः ।

**चोदनायां त्वनारम्भो विभक्तत्वान्नह्यन्येन विधीयते । १९ ॥**

सिद्धान्ते उक्ते पूर्वपक्षी ब्रूते । तुशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । उत्तमप्रयाजादेः चोदनायां अपूर्वस्य अनारम्भः नोत्पत्तिरुक्ता । विभक्तत्वात् यजतिजुहोतिददातिचोदनाभ्यः प्रकृतचोदनाया विजातीयत्वात् । यजत्यादिषु नास्ति दृष्टं प्रयोजनम् । उत्तमप्रयाजादिचोदनायां तु देवतास्मरणादिना दृष्टेनैव प्रयोजनेन निराकाङ्क्षता इति विभक्तत्वम् । यजत्यादिषु च द्रव्यदेवते गुणभूते, उत्तमप्रयाजादिषु तु प्रधानभूते इति च विभक्तत्वम् । न हि तस्मात् अन्येन शब्देन ' समिधो यजति ' इत्यादिना उत्तमप्रयाजादिषु अपूर्वं विधीयते इति वक्तुं शक्यम् । तस्मात् उत्तमप्रयाजादयो नापूर्वार्थाः ।

**स्याद्वा द्रव्यचिकीर्षायां भावो, ऽर्थे च गुणभूतता, ऽऽश्रयाद्धि गुणीभावः । २० ॥**

सिद्धान्ते पूर्वपक्षिणा आक्षिप्ते पुनः सिद्धान्तमाह । वाशब्देन पूर्वपक्षव्यावृत्तिः । द्रव्यचिकीर्षायां सत्यामपि भावः स्यात् । द्रव्यशब्दः लक्षणया द्रव्यं देवतां चाह । द्रव्यदेवतयोः संस्कारवत्त्वेन चिकीर्षायां सत्यामपि त्यागांशेन भावः अपूर्वं स्यादेव । अपूर्वे अर्थे च त्यागांशस्य गुणभूतता साधनता स्यात् । मन्त्रेण देवतास्मरणस्य दृष्टार्थत्वेऽपि त्यागांशेन अपूर्वार्थत्वात् अदृष्टार्थता इत्यर्थः । हि यस्मात् आश्रयात् स्वप्रधानात् सकाशात् स्वस्य गुणीभावः भवति । तथा च प्रधानं अपूर्वं प्रति त्यागस्य गुणत्वे स्वीकृतेऽपि अपूर्वमस्त्येवेति न दोषः । **के.**

* आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । ( ४।१।७।१८) इति चतुर्थाधिकरणे स्विष्टकृद्यागः प्रतिपत्तिरूपः संस्कारोऽपि मन्त्रयागः प्रतिपत्तिश्च इति उभयात्मकः इति वक्ष्यते । **सु.** पृ. ११०७.

* **आश्रयिकर्म**, गुणकर्म, संनिपत्योपकारकं इत्यनर्थान्तरम् । **मीन्या.** * आश्रयिकर्म स्विष्टकृदादि प्रतिपत्तिः। अयं दृष्टादृष्टार्थः गुणकर्मविधिः । **बाल.** पृ. १३.

**आश्रयिन्यायः** ( मेधातिथिना मनु. ४।१ प्रयुक्तोऽयम् ) । आश्रयिकर्मणां दृष्टादृष्टोभयार्थता ॥

**आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । ४।१।७।१८ ॥**

**भाष्यं**— अत्र आश्रयिणः पदार्था उदाहरणम् । उत्तमः प्रयाजः, पशुपुरोडाशः, स्विष्टकृत् इत्येते यागा उदाहरणम् । एषु संदेहः किं यजिमात्रं संस्कारो देवतायाः, उत यजिना अदृष्टं देवतायां क्रियते इति । किं प्राप्तं ? आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत । आश्रयिषु एवंजातीयकेषु अपूर्वस्य भावोऽर्थः प्रत्येतव्यः, अविशेषादन्यैः आख्यातशब्दैः यजति ददाति जुहोति इति । उक्तमेतत् ' भूतं भव्यायोपदिश्यते ' इति ।

**टुप्**— ( एकदेशेन अन्यदीयं द्रव्यं देवतां उभयं वा आश्रयन्ति संस्कुर्वन्ति ये पदार्थाः, ते आश्रयिणः। तत्र उदाहरणाक्षेपव्याजेन पूर्वपक्षमाह– ) अनुदाहरणं स्विष्टकृत् ( केवलादृष्टार्थत्वेन अदृष्टार्थत्वायोगात्। तदाह– ) मन्त्रः तावत् ( अयाळग्निः इत्यादिः ) इष्टदेवतासंकीर्तनात् दृष्टार्थः। ( यागोऽपि दृष्टार्थ एवेत्याह– ) आकीर्णकरस्य द्रव्यस्य ( इष्टशिष्टस्य पुरोडाशादेः ) अनियमेन प्रतिपादने प्राप्ते यागेन प्रतिपाद्यते। ( तेन ) योऽसौ ( आहवनीये द्रव्य– ) प्रक्षेपः, सोऽपि दृष्टार्थः एव। अतो यागेन द्रव्यस्य संस्क्रियमाणत्वात् न इतरैः ( समिदादियजिभिः ) तुल्यता। समिदादयोऽपि नोदाहरणं, तेषु द्रव्यदेवतस्य गुणभूतत्वात् क्रियैव प्रधानभूता ( इत्युदाहरणम् )। पशुपुरोडाशयागोऽपि देवतासंस्कारद्वारेणैव उपकरोति। वपायागस्य तु यागान्तरत्वे नास्ति प्रमाणम्। ( पशुयाग एव हि वपया हृदयादिभिश्च विततः, स च नाश्रयी। ) तस्मात् एषोऽपि (वपायागोऽपि) अनुदाहरणम्। ( उत्तमप्रयाजोऽपि पशुपुरोडाशन्यायेन निराकर्तव्यः। समाधत्ते– ) यत्र अकृतार्थं द्रव्यं, देवता तु इष्टा यक्ष्यमाणा वा कीर्त्यते यागान्तरं च, तदुदाहरणम्। पशुपुरोडाशस्य देवतोद्देशेन यः प्रक्षेपः, तस्य अदृष्टादृते नान्यत् प्रयोजनमस्ति। तस्माददृष्टार्था एते। अत आह ( सूत्रकारः ) आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत। यागादपूर्वं चोद्येत इत्यर्थः। ' भूतं भव्यायोपदिश्यते ' इति ( भाष्यं ) भूतं द्रव्यं भव्यां क्रियां निर्वर्तयति इति क्रियातः अदृष्टम्। अथवा यद्यपि यागो देवतां संस्कुर्वन् उपकरोति, तथापि साधनतां प्रतिपद्यमानः आश्रयो भवति, नान्यथा। अतो भूतं भव्यायोपदिश्यते इति।

**चोदनायां त्वनारम्भो विभक्तत्वान्नह्यन्येन विधीयते। १९॥**

**भाष्यं**— अस्यां तु चोदनायां अनारम्भः अपूर्वस्य। विभक्तोऽयमाख्यातशब्दो यो दृष्टार्थः, ततो नापूर्वम्। यः खलु अदृष्टार्थः, ततः अपूर्वमिति। दृष्टार्थश्चायम्। अस्मिन् हि यागे क्रियमाणे देवता स्मर्यते, स्विष्टकृत्यपि द्रव्यं प्रतिपाद्यते। न चान्येन शब्देन अत्रापूर्वं विधीयते। तस्मात् यजिमात्रं संस्कारः इति।

**टुप्**— यत्र द्रव्यदेवते गुणभूते आख्यातस्य ( यथा समिदादिषु ), तत्रापूर्वम्। यत्र पुनर्द्रव्यं देवता वा प्रधानं ( स्विष्टकृत्पशुपुरोडाशादिषु ), तत्र तदर्थत्वात् आख्यातार्थस्य नापूर्वम्।

**स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः। २०॥**

**भाष्यं**— स्याद्वा अपूर्वं अतः। सत्यामपि देवताचिकीर्षायां, तस्मिन् देवतासंस्कारार्थे गुणभूतता, यागस्य द्रव्यप्रतिपादनेन च। मन्त्रेण तत्र देवता स्मर्यते। तस्मिन् मन्त्रेण दृष्टेऽर्थे क्रियमाणे त्यागः अपरः अदृष्टार्थः श्रूयते। तस्य न किंचित् दृष्टमस्ति देवताऽऽश्रयात्तु देवतागतं तत् अपूर्वं इति गम्यते।

**टुप्**— ( स्याद्वा इति सिद्धान्तसूत्रस्याभिप्रायमाह– ) यद्देवतासंकीर्तनं मन्त्रेण, तत् दृष्टार्थाय, स्मरणस्यापेक्षितत्वात्। त्यागस्तु अदृष्टाय, तस्माच्चापूर्वम्।

**शा**— उत्तमः प्रयाजः पशुपुरोडाशः स्विष्टकृत् इत्यादयः अंशेन परकीयं द्रव्यदेवतं संस्कुर्वन्तः किं तदर्था एव, उतापूर्वार्था अपीति चिन्त्यते। तत्र '**एकस्य कर्मणो युक्तमेकमेव प्रयोजनम्। दृष्टे च सति नादृष्टं कल्प्यं, नापूर्वमस्त्यतः॥**' उच्यते '**देवतास्मरणं मन्त्रात्, प्रक्षेपाद् द्रव्यसंस्कृतिः। त्यागांशस्य तु नादृष्टादृते किं चित् प्रयोजनम्॥**' तस्मात् त्यागांशेन अदृष्टार्था अपि इत्युभयार्थाः।

**सोम**— यथा द्रव्यपरिच्छेदरूपदृष्टद्वारा लिङ्गसंख्ययोः साधनत्वं, एवं उत्तमप्रयाजादीनामपि इति प्रत्यवस्थानात् **दृष्टान्तसंगतिः**। यद्यपि प्रक्षेपो देवतोद्देशवत् यागशब्दार्थान्तर्गतत्वाभावात् न यागांशः, तथापि प्रक्षेपस्य देवतोद्देशेन त्यज्यमानतादशायां कर्तव्यत्वात् सोऽपि यागांश इव प्रतीयते इत्येतावता प्रक्षेपात् द्रव्यसंस्कृतिः। **ननु** स्वाहाकारस्य केवलदृष्टार्थत्वे अवान्तरापूर्वाभावेन अङ्गापूर्वप्रयुक्ताभिक्रमणाद्यसिद्धेः तत्रापूर्वसद्भावव्युत्पादनस्य अभिक्रमणादिलक्षणं प्रयोजनम्। पशुपुरोडाशे च अपूर्वाभावे अपूर्वप्रयुक्त-

दार्शपूर्णमासिकधर्मातिदेशाभावात् तदतिदेशलक्षणं च प्रयोजनं संभवति, स्विष्टकृति तद्द्व्युत्पादनस्य तु न किंचित् प्रयोजनं, यथा पूर्वपक्षे प्रतिपत्तित्वात् तदर्थावदाननाशे लोपः, तथा सिद्धान्तेऽपि एकदेशद्रव्यत्वेन द्रव्यप्रयोजकत्वाभावात् लोपाविशेषात्। इति चेत्, सत्यम्। उत्तरार्धादिद्रव्यप्रयोजकत्वाभावेऽपि अदृष्टार्थत्वे सति अदृष्टस्य संपादनार्थं 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः प्रतिसंख्याय यजेत' इति हविर्नाशे विहितेनाज्येन स्विष्टकृत् कर्तव्यः इत्यस्ति प्रयोजनम्। एवं पिष्टलेपफलीकरणहोमयोरपि द्रष्टव्यम्। **सूत्रार्थस्तु**– ये अंशेन परकीयं द्रव्यदेवतं संस्कारकत्वेन आश्रयन्ते ते आश्रयिणः, तेषु भाव्यते इति भावः अर्थः अपूर्वं प्रतीयते, अन्यैर्यजतिजुहोतीत्यादिभिः अपूर्वार्थैः अविशेषेण इति।

**वि**— 'स्विष्टकृत् संस्कृतौ क्षीण उतापूर्वोपयोग्यपि।, प्रयोजनैक्यमेकस्मिन् युक्तं कर्मण्यतः क्षयः॥, मन्त्रेण देवसंस्कारः प्रक्षेपाद् द्रव्यसंस्कृतिः। त्यागादपूर्वमुत्पन्नं प्रधानापूर्वगं च तत्॥' तस्मात् स्विष्टकृदादिरुभयार्थः।

**भाट्ट**—यजति जुहोतीति वा यत्र श्रुतं, तत्र यजेस्तावत् देवतोद्देशविशिष्टद्रव्यत्यागवाचित्वात् त्यागांशस्य अदृष्टविधया आरादुपकारकत्वं, उद्देशांशस्य तु दृष्टविधया तदुपकारकत्वमेव। अत एव उद्देशाङ्गभूतदेवतायाः त्यागाङ्गभूतद्रव्यापेक्षया दुर्बलत्वम्। प्रक्षेपस्तु तत्र त्यागाङ्गद्रव्यसंस्कारक एव। जुहोतिस्थले तु तदङ्गमेव अदृष्टविधया इतरौ, समप्रधानौ वा प्रक्षेपेण सह। अत एवोभयत्र मन्त्रः तदङ्गभूतदेवताप्रकाशनार्थ एवेति स्थितिः। यत्र तु स्वाहाकारस्विष्टकृत्सूक्तवाकपशुपुरोडाशपिष्टलेपादिहोमवाजिनेज्यादौ परकीयं द्रव्यं देवता वा प्रक्षेपांशेनोद्देशांशेन मन्त्रेण वा संस्क्रियते, यथा स्वाहाकारसूक्तवाकपशुपुरोडाशादौ आग्नेयादिदेवताः मन्त्रदेवतोद्देशाभ्यां, स्विष्टकृति प्रक्षेपांशेन तदीयं द्रव्यं, मन्त्रेणैव तदीया देवताः उद्देशांशस्य स्विष्टकृद्देवताकत्वात्, पिष्टलेपहोमादौ प्रक्षेपेण तदीयं द्रव्यमेव। सर्वत्र प्रमाणं तत्र-तत्रोक्तं, वक्ष्यते च। यस्तु तत्र त्यागांशः, सः अदृष्टार्थ एव। न च तस्य पदार्थैकदेशत्वात् निष्प्रयोजनत्वेऽपि न श्रुतिः, विहितपदार्थान्यथाऽनुपपत्त्या तदवयवानामपि अर्थाद्विहितत्वेन प्रयोजनाकाङ्क्षोपपत्तेः। अतः सोऽप्यदृष्टार्थ एव सन् फलवत् प्रक्षेपाद्यङ्गं तत्संस्कार्यद्रव्याद्यङ्गमेव वेति तत्संस्कार्यद्रव्यदेवतादावेव प्रोक्षणादिवददृष्टं जनयतीति संनिपत्योपकारकः तत्प्रयुक्तश्च। **इति प्राप्ते**, विशेष्यतया प्रतीतस्य त्यागांशस्य प्रक्षेपाद्यङ्गत्वे प्रमाणाभावात् देवतादेश्च दृष्टमात्रापेक्षत्वेन अदृष्टोपकारानपेक्षत्वात् प्रकरणात् त्यागांशस्य आरादुपकारकत्वमेव प्रयाजादिवत्। तत्र तु एतावान् विशेषः, यत् परप्रयुक्तद्रव्यदेवतोपजीवित्वेन न परप्रयुक्त्यभावे स्वातन्त्र्येण तत्तद्द्रव्यदेवताऽऽक्षेपकत्वम्। अत एव एककपालस्य सर्वहोमे स्विष्टकृद्यागस्य लोप एव, स्वोपकारकद्रव्यस्य नाशादिति निमित्ताभावेन आज्येनापि समापनायोगात्। चयनादौ अयागे वाचनिकप्रयाजादिविनियोगेऽपि च न स्वाहाकारयागः। प्रकृतौ तु द्रव्यनाशे 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेत' इति वचनात् आज्येन समापनम्। संनिपत्योपकारकत्वे तु संस्कार्याभावात् इडावत् लोप एवेति विशेषः।

**मण्डन**— 'स्विष्टकृत्यप्यपूर्वं स्यात्।' ९.

**शंकर** — 'अपूर्वमाश्रयिष्वस्ति।' १०.

* **'आश्रावय, अस्तु श्रौषट्, यज, ये यजामहे, वौषट्'** इति सप्तदशाक्षरः प्रजापतिः यागीयपदार्थस्मरणरूपदृष्टार्थ एव। **संकर्ष.** २।३।१.

* **आश्रितक्रमातिक्रमे** प्रायश्चित्तविधिरुपपत्स्यते। वैकल्पिकानामादित एवाङ्गीकरणात्। **वा.** २।४।२।२३.

* **आश्वत्थी उपभृत्।** अत्र 'ब्रह्मणैवास्यान्नमवरुन्धे' इति फलश्रुतिरर्थवादः, न फलविधायिका। **भा.** ४।३।१।१–४.

* **आश्वलायनकल्पसूत्रं पौरुषेयमेव।** वेदमूलत्वाच्च प्रमाणम्। **वि.** १।३।७.

* **आश्ववालः प्रस्तरः** आतिथ्यायाम्। दीर्घश्लक्ष्णपत्राणां काशानां अश्वकेशैः सादृश्यात् अश्ववालशब्दस्य काशेषु गौणत्वम्। **सोम.** १।३।५ पृ. ३६.

* **आश्ववालशब्दः** अश्वपुच्छकेशसंघाते अवयवव्युत्पत्त्या लोके प्रयुज्यते। वेदे तु 'आश्ववालः प्रस्तरः'

( आतिथ्येष्टौ ) इत्यधिकृत्य ' यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतः, स वालान् मुक्त्वा विवेश, ते वालाः काशा अभवन्' इति वाक्यशेषश्रवणात् काशपरता प्रतीयते । **कु.** १।३। ५।७–८ पृ. ६५ । **सोमनाथ्यां** तु ' यज्ञो वै देवेभ्यो० विवेश ह ते वालाः केशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तैः ' इति वाक्यशेषः पठितः । **वार्तिकेऽपि** २२२ पृष्ठे एवमेव पठितम् । परंतु मुद्रकैः ' कार्योऽतः प्रस्तरस्तु तैः ' इति वाक्यं लघुभिरक्षरैर्मुद्रितं, पूर्वं तु सर्वं स्थूलैरक्षरैः इति विशेषः । **कौस्तुभे तु** १।३।४।९ पृ. ७२ इत्यत्र ' यज्ञो ह वै देवेभ्यो० विवेश, ते वालाः काशतां प्राप्ताः ' इति इयान् ईदृशः वाक्यशेषः पठितः । **के.**

* **आश्ववालाधिकरणं** ' त्रिवृच्चर्वाश्ववालाधिकरणं ' इत्यत्र द्रष्टव्यम् । **वा.** १।३।४।९ पृ. २२१–२२४. * **आश्ववालाधिकरणन्यायेन** ( वा. १।३।४।९ पृ. २२१–२२४ ) सत्यामपि कतिपयानां अशास्त्रस्थानां असंस्कृतजातिविशिष्टमात्रविषयत्वप्रसिद्धौ । **कौ.** १।४। ८।१० पृ. २३४ । अत्र लोकतः ' आश्ववालः प्रस्तरः ' इत्यत्र अश्वस्य ये वालाः दीर्घकेशाः तन्मयः प्रस्तरः इति ज्ञातेऽपि शास्त्रतः अश्ववालाः नाम काशाख्यदर्भाः तन्मयः प्रस्तरः कर्तव्यः इति सिध्यति इत्यधिकरणार्थः । **के.**

* **आश्विनः ग्रहः** ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेषु तृतीयस्थाने पठितः । तस्य च दशमस्थानत्वं वाचकेनैव शब्देनाम्नायते ' आश्विनो दशमो गृह्यते ' इति । तत्र पाठादपि श्रुतिः प्रबला । होमस्तु तस्य द्विदैवतेषु तृतीयस्थाने । **वि.** ५।४।१, * आश्विनः ग्रहः ज्योतिष्टोमे प्रातःसवने गृह्यते । २।३।१. * **' आश्विनो दशमो** गृह्यते, तं तृतीयं जुहोति' । **शा.** २।२।६, यद्यपि आश्विनः पञ्चमो हूयते तथापि उपांशु–अन्तर्यामयोः अवषट्कारहोमकत्वात् वषट्कारहोमेषु आश्विनहोमस्य तृतीयत्वं बोध्यम् । **सोम.**

* **आश्विनो धूम्रः** ( धूम्रवर्णः अजः पशुः ) सौत्रामण्यां प्रथमः । **भा.** ११।४।१०।३७.

* **आश्विनं ग्रहं** अध्वर्युः आदत्ते सौत्रामण्याम् । उत्तरेऽग्नौ पयोग्रहान् जुहोति, दक्षिणेऽग्नौ सुराग्रहान् । **भा.** ३।५।१।१४.

* **' आश्विनं द्विकपालं '** इति आश्विनः पुरोडाशः द्विकपाल उक्तः । **भा.** ५।५।१।१.

* **आश्विनस्य** सोमग्रहस्य ' सर्वतः परिहारमाश्विनं भक्षयति ' इति विशेष उक्तः । स्वमस्तकस्य परितः प्रदक्षिणं भ्रामयित्वा भक्षणीयः इति । **भा.** ३।५।६।२०.

* **आश्विने द्विकपाले** हविष्कृत् सवनीयपश्वर्थया प्रसङ्गसिद्धा भेदेन नाह्वातव्या । **शा.** १२।२।४.

* **आश्विने शस्त्रे** अतिरात्रे शस्यमाने सूर्ये अनुद्यति सर्वे मन्त्राः शंसनीयत्वेनोपदिष्टाः । **भा.** ३।२।८।२४.

* **आश्विनग्रहादूर्ध्वं** सवनीयः पशुरालभ्यते ज्योतिष्टोमे सुत्यादिने प्रातःसवने । **वि.** ५।१।६, * आश्विनग्रहादूर्ध्वं सवनीयपशुस्थाने साद्यस्के यागे साहित्येन पशुत्रयालम्भः कर्तव्यः । तत्रादौ स्थानक्रमेण सवनीयः, ततः प्रकृतिदृष्टपौर्वापर्यात् आग्नीषोमीयश्च अनुबन्ध्यश्चेति । ५।१।६. * **आश्विनग्रहस्य** कामसंयोगे ज्योतिष्टोमे आदितः प्रतिकर्षः स्यात् । स च प्रतिकर्षः अन्तर्यामादूर्ध्वं ऐन्द्रवायवात् प्राक् । ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः । प्रदानस्य तु न प्रतिकर्षः । **भा.** १०।५।१९–२२। ६७–७७. * **आश्विनग्रहग्रहणोत्तरं** चोदकप्राप्तं यूपपरिव्याणं कृत्वा पुनर्विहितं रशनाऽन्तरेण परिव्याणान्तरं कृत्वा आग्नेयः सवनीयः पशुरुपाकर्तव्यः, इति ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति वचनेनोक्तम् । **वि.** ४।५।९.

* **आश्विनद्विकपालस्य** द्विदेवतात्वे सति व्यक्षरतद्धितवत्त्वात् ऐन्द्राग्नविकृतित्वम् । **बाल.** पृ. १२०.

* **आश्विनपात्रे** धाना निदधाति ज्योतिष्टोमे । सवनीयपुरोडाशेषु विद्यमानानां एव अयं एकदेशसंयोगः, न तु अन्यतः । **भा.** ३।८।१८।३३, * **आश्विन–सारस्वत–ऐन्द्राः** ग्रहाः सौत्रामण्याम् । ३।५।३।१४.

* **' आश्विनाग्रान्** गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य '

इति वचनात् आश्विनादीनां सर्वादिनः ( ऐन्द्रवायवात् प्राक् ) प्रतिकर्षः कर्तव्यः । भा. १०।५।१९।६७-६९.

**आषाढवाते चलति द्विपेन्द्रे चक्रीवतो वारिधिरेव काष्ठा इति न्यायः** । चलतीति समस्यन्तं पदं, देहलीदीपकन्यायेनोभयत्र संबध्यते । चक्रीवान् गर्दभः ' चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ' इत्यमरात् । स्पष्टमन्यत् । अयं न्यायः याभिर्युक्तिभिः प्रबलतरशुष्कतर्ककर्कशत्वेन प्रसिद्धोऽपि कश्चिद्वादी जय्यः, ताभिरितरे क्षुद्रा दूरतो निरस्ता भवन्तीति विवक्षायां प्रवर्तते इति । **माहस्री**. २४५. * मत्स्यकूर्मपुराणादीनामपि तामसत्वव्यवस्थापनात् **आषाढवाते० इति न्यायेन** सुतरां पद्मपुराणगतानि अप्रमाणानि, ततश्च प्रक्षिप्तानि इति केचन मन्यन्ते । **न्यायामृताद्वैतसिद्धौ** भूमिका. पृ. ३.

* **आसत्तिस्तु** अव्यवधानेन अन्वयप्रतियोग्युपस्थितिः । अव्यवधानं च प्रकृतान्वयाबोधाननुकूलक्षणेन । अननुकूलत्वं च प्रकृतान्वयबोधाननुकूलोपस्थित्यधिकरणत्वम् । तेन ' गिरिर्भुक्तमग्निमान् देवदत्तेन ' इत्यादौ नासत्तिः । अत एव आन्तरालिकाननुकूलपदार्थोपस्थितेः न व्यवधायकत्वम् । श्लोकादौ आसत्तिभ्रमेण शाब्दबोधः इति केचित् । अन्ये तु अन्वयप्रतियोग्युपस्थापकपदाव्यवधानं आसत्तिः । श्लोकादौ तु योजनावाक्यादेव शाब्दबोध इत्याहुः । **मणि**. पृ. ६८.

* **आसनोपायिचोदनः** द्वादशाहः सत्रभूतः । ' द्वादशाहमृद्धिकामा उपेयुः ' ' द्वादशाहमृद्धिकामा उपासीरन् । ' **भा.** ८।२।५।२५, * आसनोपायिचोदनत्वं सत्रत्वं बहुयजमानवत्त्वं च । १०।६।१६।६०.

* **आसन्दीस्थभोजनं** अनाचारो दाक्षिणात्यानाम् । **वा**. १।३।३।७ पृ. २०४.

* **आसादनं** प्रोक्षणीनां नाध्वर्यवं, किंतु आग्नीध्रस्य । **वि**. ३।८।१२. * आसादनमपि वेद्यां हविषां प्रदानार्थमेव आसन्नकरणम् । **भा.** ५।४।२।३. * आसादनं वाजिनस्योत्करे सौमिकेषु चातुर्मास्येषु ' उत्करे वाजिनमासादयति ' इति गुणविधिः, न कर्मान्तरम् । **वि**. १०।३।३. * **आसादनस्य** ( वाजिनासादनस्य ) अनुवादेन विहितेनोत्करेण प्राकृतवेदेर्बाधः सौमिकचातुर्मास्येषु । **भा.** १०।३।३।१८-२२.

* ' **आमादयति** ' इत्याख्यानेन ( वरुणप्रघासेषु दक्षिणविहारे ) मारुत्याः प्रयोगश्चोद्यते । **भा.** ११।२।९।३१.

* **आमादिधातूनां** स्वरूपेण अकर्मकाणामपि मासादिकालयोगे कर्मनाकाङ्क्षत्वात् सकर्मकत्वात् ' चैत्रेण आस्यते मासः ' इति प्रयोगोपपत्तिः । **रहस्यं**. पृ. ५१.

* ' **आमारितकं** गायति , वर्धमानकं गायति ' । **भा**. ७।२।१।१३, अन्यथालक्षणा आमारितकगीतिः, अन्यथालक्षणा वर्धमानकगीतिः । १६.

* ' **आमीनः** पुरोऽनुवाक्यां ' अन्वाह इत्यत्र आमनगुणो विधीयते । **वि**. १०।४।२२. * आसीनो यजति इति याज्याधर्मः । **वा**. ३।२।५।१२ पृ. ७६०.

* **आसेचनाधिको यागः** होमो नाम । **भा.** ४।२।१३।२८.

* **आस्कन्दपालिकावत्** । कर्मार्था अप्येते सन्तः आतिथ्याबर्हिःप्रोक्षणादयो धर्माः नास्कन्दपालिकावत् अग्नीषोमीयादिबर्हिषः कर्मणि संबध्यन्ते । ( कन्दोत्पादकक्षेत्रपालिका आस्कन्दपालिका ) । **भा**. १२।१।१९।४३.

* **आस्तरणमन्त्रः** बर्हिषः ' ऊर्णाम्रदसं त्वाऽऽस्तृणामि' इति अग्नीषोमीयास्तरणे पुनरावर्तनीयः । आतिथ्याऽग्नीषोमीययोर्देशभेदात् । **वि**. १२।१।२०.

* **आस्तारपङ्क्तिः** पङ्क्तिः । पादेषु अक्षराणि ८।८।१२।१२ उदा० आऽग्निं न स्ववृक्तिभिः ( ऋसं १०।२१।१ ) इति । **के**.

* **आस्ते** । ननु आस्ते इत्युपवेशने भवति । न अवश्यमुपवेशने एव, औदासीन्येऽपि दृश्यते । तद्यथा ' गृहाणि परिगृह्य आस्ते ' ' क्षेत्राणि परिगृह्य आस्ते ' इति । उपवेशनेऽपि व्यापारनिवृत्तौ । **भा.** ३।६।७।२४.

* **'आऽस्य प्रजायां वाजी जायते य एवं वेद'** वेदानुमन्त्रणस्य शेषोऽयम् । **भा.** १।२।१।३,१५ । ' घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनमित्याह , प्र सहस्रं पशूनाप्नोति , आऽस्य प्रजायां वाजी जायते य एवं वेद ' इत्यत्र यज्ञपतिप्रथनवत् मन्त्रा-

मिधानस्य अर्थवादालम्बनत्वसंभवेऽपि मन्त्राभिधानेऽपि आलम्बनाकाङ्क्षानिवृत्त्यर्थं कुले संतताध्ययनश्रवणात् इत्युक्तम्। सु. पृ. ६६.

* **आह इत्यव्ययम्।** अतीतकर्तृकप्राचीनग्रन्थविवरणपरे ग्रन्थे 'इति मनसि निधायाह' 'इत्यभिप्रेत्याह' 'इत्याशङ्क्याह' इत्यादौ क्त्वाप्रत्ययोपपत्तिः। तत्र हि 'आह' इत्यव्ययं उवाच इत्यर्थे विभक्तिप्रतिरूपकं इति वैयाकरणसमयः। कु. २।२।११।२७.

* **आहरणं** शाखायाः दर्शे। परिवासनं समूलमाहरणं छेदनं च सर्वं अग्रकायार्थं, न मूलार्थम्। तत्र च वत्सापाकरणं प्रयोजकं, न कपालोपधानम्। शा. ४।२।३. * **आहरणादिकं** (शाखायाः) उभयदोहार्थं दर्शे। भा. ३।६।८।२८-२९.

* **आहवनीयः** अनारभ्यवादेन सर्वहोमार्थः इति तद्रहितकर्मान्तराभावात् आहिताग्नेः अधिकारः। वा. ३।२।१६।३९. * आहवनीयः गार्हपत्यादेव आधेयः, न तु लौकिकात्। संकर्ष. ३।२।२. * आहवनीयः होमस्य आधारत्वेन विहितः 'यदाहवनीये जुहोति' इति। भा. ८।४।४।८, * 'आहवनीयमुपतिष्ठते' इति विकृतिविशेषे विहितमुपस्थानं 'अयं सहस्रमानवः' इति ऋचा प्रगीतयैव। ९।२।८।३०-३१ वर्णकं २. * **आहवनीयस्य** अजस्रपक्षे सदा प्रदीपनं, अरणिर्वा सदा। संकर्ष. ३।२।६. * आहवनीयस्य अन्वाधाने करणभूतः 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिर्मन्त्रः अध्वर्युणा पठ्यते। तत्र श्रुतं फलं याजमानम्। वि. ३।८।१४. * आहवनीयस्य आधानपवमानेष्टिभ्यां सिद्धौ पश्चात् तस्मिन् अग्निहोत्रहोमः। बृ. ५।३।९।२१. * आहवनीयस्य (सोमक्रयण्याः सप्तमपदपातस्थले 'पदे जुहोति' इति विहितेन) पदेन बाधः। बाल. पृ. १३२. * आहवनीयस्य सामान्येन विहितस्य ज्योतिष्टोमे विशेषविहितेन वर्त्मना, राजसूये विशेषविहितया वल्मीकवपया च बाधः। भा. १०।८।८।१६. * **आहवनीये** गतश्रीभिर्धार्ये उद्वाते सति ज्योतिष्मतीष्टिर्न प्रायश्चित्तं, किंतु मनस्वतीहोमाद्येव। वि. ९।४।८. * 'आहवनीये जुहोति' अयं सामान्यविधिः अदृष्टार्थः। बाल. पृ. २१.

* 'आहवनीये जुहोति' 'आहवनीयमुपतिष्ठते' इत्यादौ आहवनीयादिशब्दानां तत्तदायतनस्थितसंस्कृताग्निवाचित्वेन होमे इव तदितरकार्येष्वपि तादृशस्यैव आवश्यकत्वात् उद्धृत्यैवोपस्थानम्। संकर्ष. ३।२।८. * 'आहवनीये जुहोति' इत्यादिवाक्येन ऐष्टिक-पाशुक-सौमिक-दर्विहोमेषु आहवनीयस्य उपयोगः साधारणः प्रतिपाद्यते। वि. ११।३।२. * आहवनीये प्रक्षेपेण हविषो देवतार्थता भवति 'यदाहवनीये जुह्वति' इति विधेः। वा. ३।४।१४।३७. * आहवनीये वपायाः श्रपणं विहितं तस्यायं प्रतिषेधः, योऽयं मांसपाकप्रतिषेधो वैदिके। भा. १२।२।१।६.

* **आहवनीयगार्हपत्यौ** उभावग्नी यदा नष्टौ भवतः, तदा सूर्यस्य अस्तमयः उदयो वा यदि भवेत्, तदा पुनराधेयं कर्तव्यम्। तस्मात् अस्तमयकाले उदयकाले वा वह्निद्वयनाशः पुनराधेयहेतुः। वि. ६।४।८. * **आहवनीयत्वाभावः** काम्यस्य भ्राष्ट्राग्नेः, चयने। भा. १२।४।८।२६-२७. * आहवनीयदेशाच्च सदः आगच्छन्तः (ऋत्विजः) प्रत्यञ्च एव प्रतिपद्यन्ते। वा. ३।५।११।३२.

**आहवनीयधारणं गतश्रीत्रितयभिन्नस्य न नित्यम्॥**

सर्वे एवाग्नयो निरन्तरं जागरणीयाः प्रतिदिवसं तेषां कर्मोपयोगात्। 'द्रव्यस्याकर्मकालनिष्पत्तेः' इति न्यायात् (११।३।२।२)। 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति प्रतिपत्तिविधानात् यज्ञपात्रवदेव अग्नीनामपि प्राक् प्रतिपत्तेर्धारणम्। इति प्राप्ते, कर्मापवर्गे दक्षिणाग्न्याहवनीयौ अनुगच्छेताम्। 'नान्तराग्नी वीयात्' इति निषिध्य 'कामं हुते संचरेत् पश्चाद्धि स तर्हि गतः' इत्यनेन होमोत्तरमाहवनीयस्य दक्षिणाग्नेश्च गमनादग्निद्वयाभावेन मध्ये संचाराभ्यनुज्ञानेन 'प्रातरुद्धरेत्' इति प्रतिकर्मोद्धरणविधानाच्च। 'धार्यो गतश्रिय आहवनीयः' इत्यनेन गतश्रीकत्रितयस्यैवाजस्रमाहवनीयधारणविधानात् तदितरस्य नाहवनीयधारणम्। संकर्ष. ३।२।५.

* **आहवनीयादिः** अग्निः परिदृश्यमानोऽपि अपवृत्ते कर्मणि लौकिकः संपद्यते। संकर्ष. ३।२।९.

* **आह्वनीयादयः** अग्नयः अपूर्वप्रयुक्ताः । वा. ६। ३।१।२ पृ. १४०९. * **आह्वनीयादेः** अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वेन अदृष्टार्थत्वं आधाराग्निहोत्राधिकरणवार्तिके तथा उक्तत्वात् । **बाल.** पृ. २२.

**आह्वनीयादेः कर्मापवर्गेऽपि न पुनःपुनराधानम् ॥**

संस्कारस्यापि कर्मापवर्गेऽपवर्गात् अर्थप्रयुक्तत्वाच्च संमार्जनवत् प्रतिकर्म कर्तव्यमाधानम्। **इति प्राप्ते,** सकृदाहितस्य गार्हपत्यस्य जागरणमरणिर्वा यथा धारणोपायः, तथा अजस्रपक्षे आहवनीयस्यापि । तेन न पुनःपुनराधानम् । दक्षिणाग्नेस्तु पूर्वं गार्हपत्यादेव उद्धृतत्वात् ततः प्रतिकर्म प्रत्युद्धरणमेव तदाधानम्। गतश्रियां तु कर्मकाले प्रादुष्करणमेव आहवनीयाधानम् । **संकर्ष.** ३।२।५.

**आह्वनीयादेः प्रतिकर्म गार्हपत्यादुद्धरणमेव कार्यं, न तु मथनम् ॥**

प्रतिकर्म प्रादुष्करणमपि अग्न्योः अरणित एव, न गार्हपत्यात् कर्मापवर्गे तयोः स्वोपादानकारणं अरणिं प्रत्येव आगतत्वात्, एकोपादानकार्याणां घटशरावादीनामिव परस्परं विलयाधारत्वायोगात् । तस्मात् अरणित एव प्रतिकर्म मन्थनम् । **इति प्राप्ते**, काष्ठस्य अग्न्युपादानत्वायोगेन तत्र गमनासंभवात् शास्त्रैकसमधिगम्ये तु गमने 'गार्हपत्यात् आहवनीयं ज्वलन्तमुद्धरति' इति अग्निहोत्रप्रकरणस्थवचनेन गार्हपत्ये एव इतराग्निलयध्वननात् तत एव प्रतिकर्मोद्धरणम् । **संकर्ष.** ३।२।७.

* **आह्वनीयादीनां** अप्रकरणोत्पत्तीनां अदृष्टोपकाराणां अनुत्पन्नावस्थानां संस्कारविधानात् उपपन्नमुत्पाद्यत्वम् । **वा.** ३।७।१६।३३ पृ. १०९८. * आहवनीयादीनां एक एव शास्त्रीयः आकारः, न तु लौकिकः । स च विधिबलात् आधानेनैव जन्यते, नान्यथा । **वि.** ३।६।५. * **आह्वनीयादौ** अग्नित्रये वैदिकान्येव कर्माणि भवन्ति, न पार्वणस्थालीपाकादीनि नापि पचनदहनप्रकाशनादीनि । **भा.** १२।२।१।१-७. * **आह्वनीयादिविधिः** अपूर्वविधिः । **बाल.** पृ. २२. * **आह्वनीयादिशब्दः** संस्कारप्रवृत्तिनिमित्तकः। अग्निशब्दस्तु न संस्कारनिमित्तकः, किंतु जातिवाची । **वि.** ७।३।१२, * **आह्वनीयादिशब्दानां** तदर्थानां च अलौकिकत्वेऽपि प्रसिद्धवदसनिभिव्याहारात् व्युत्पत्तिः संभवति । १।३।१० वर्णके १, * **आह्वनीयाद्यग्नयः** आधानेन पवमानेष्टिभिश्च संस्कृताः उत्तरक्रतुषु उपयुज्यन्ते । ३।६।४, * आहवनीयाद्यग्नयः 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिविधानात् मनुष्याणामेव संभवन्ति, नान्येषां गन्धर्वादीनाम् । ६।७।१३, * **आह्वनीयाद्यग्नेः** क्रतुप्रवेशे द्वारं होमः । स च क्व चित् प्रकृतावेव विहितः सन् विकृतावतिदिश्यते । तस्मात् सर्वार्थो वह्निः । ३।७।२०.

* **आह्वनीयाधानं** गुणकर्म । **वि.** २।१।४.

**आह्वनीयापवादः 'पदे जुहोति' 'वर्त्मनि जुहोति' इति ॥**

'पदे जुहोति' 'वर्त्मनि जुहोति' 'वल्मीकवपायां जुहोति' इत्यादिष्वपि पूर्वन्यायेन **देशमात्रविधानात्** तत्राहवनीयं उपनिधायैव होतव्यम् । **इति प्राप्ते,** 'उत्तरार्धेऽग्नये जुहोति, दक्षिणार्धे सोमाय' इत्यादाविव जुहोतिसंयोगेन होमाधिकरणत्वस्यैव विधानात् आहवनीयनिवृत्तिः। अत एव 'चतुष्पथे जुहोति' इति विधाय 'एष वा अग्नीनां पड्बीशो नाम, अग्निवत्येव जुहोति' इत्यनेन चतुष्पथस्यैव प्रकारान्तरेण अग्निमत्त्वोपपादनं संगच्छते। पड्बीशः पादबन्धनरज्जुः। **संकर्ष.** २।४।१४.

* **आह्वनीयैकदेशत्वमेव** आग्नीध्रीयाग्नेः । **संकर्ष.** ३।२।१४.

* **आहार्यपुरीषताऽऽदि** वेदेः पुरुषार्थमेव । **भा.** ४।१।२।२ वर्णके २.

* **आहिच्छत्रमथुरावासिब्राह्मणीनां** अद्यत्वेऽपि सुरापानं अनाचारः । **वा.** १।३।३।७ पृ. २०४.

* **'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च'** इत्याधानकर्तृसंस्कारः तच्छरीरप्रतिपत्तिरूपो विहितः । तस्य आत्महनने निषेधो भविष्योत्तरे । 'स्वेच्छया मरणं विप्रात्' इत्यादिना आत्मघात्यादीनुक्त्वा '**न तेषां स्नानसंस्कारौ**' इति संस्कारशब्देन निषिद्धः । **बाल.** पृ. ३७. * 'आहिताग्निमग्निभिर्दहन्ति **यज्ञपात्रैश्च**' पात्र-

प्रतिपत्तिरुक्ताऽत्र । **संकर्ष.** ३।२।९. ***आहिताग्नीनामेव** सारस्वतभिन्नसत्रेषु अधिकारः । **भा.** ६।६।५।२७–३२.

***आहिताग्निव्रतानि** 'न क्लिन्नं दारु अभ्यादध्यात्' इत्येवमादीनि आहितमात्रेष्वेवाग्निषु भवन्ति, न तत्र पवमानेष्टयः प्रतीक्षितव्याः । **भा.** ५।३।९।२१. ***आहिताग्निव्रतवत्** । आधाने निमित्ते पुरुषार्थतया यथा व्रतानि विहितानि, तथा अग्निचिद्व्रतानि । **भाट्ट.** ५।३।१०, * आहिताग्निव्रतवत् । 'आहिताग्निर्न क्लिन्नं दारु अभ्यादध्यात्' ( अभ्यादधीत इति वार्तिके ) इत्याद्याहिताग्निव्रतं आधानोत्तरमेव । ५।३।९.

***आहुतयः** त्रिंशत् वैश्वदेवपर्वणि । नव प्रयाजाः, नवानुयाजाः, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति इति । **भा.** १२।१।१।४, * चतुर्दश पौर्णमास्यां आहुतयो हूयन्ते, त्रयोदश अमावास्यायाम् । ( पञ्च प्रयाजाः, द्वावाज्यभागौ आग्नेयाग्नीषोमीयौ द्वौ, उपांशुयाजः एकः, स्विष्टकृत्, त्रयोऽनुयाजाः इति चतुर्दश पौर्णमास्यामाहुतयः । अमावास्यायां तु उपांशुयाजाभावात् त्रयोदश । ) १०।८।१४।४६.

**⌛ आहुतिगणे प्रत्याहुति सकृद् ग्रहणम्** ।।

यत्र बहवो दर्विहोमाः क्रमेण क्रियन्ते, तत्रापि गणारम्भे सकृद्गृहीतस्य सर्वोद्देश्यकतया पशुत्रयपूर्वनिष्पन्नयूपस्येव तन्त्रता । न च हविषोऽपरिपूर्तिः । ध्रौवस्येव पुनःपुनराप्यायनसंभवात् । **इति प्राप्ते,** प्रथमहोमाव्यवहितपूर्वकाले गृहीतस्य गृह्यमाणविशेषत्वात् तदर्थतैव । आप्यायनं तु न वचनमन्तरा उपपद्यते इति प्रत्याहुति सकृत् ग्रहणम् । **संकर्ष.** २।४।७.

***आहीनैबुकादयः** आचाराः न दाक्षिणात्यैरेव कर्तव्याः, किंतु कर्तृदेशनिरपेक्षेण, सर्वधर्मास्ते । दक्षिणदेशान्निर्गतः प्राक्षु वा उदक्षु वा अवस्थितः आहीनैबुकादीन् करोत्येव । ( आहीनैबुकं स्वकुलागतकरञ्जादिवृक्षपूजा । ) **भा.** १।३।७।१५–२३.

**⌛ आह्वानाधिकरणम्** । दर्शपूर्णमासयोः हविष्कृन्मन्त्रस्य मुख्येऽर्थे आह्वाने विनियोगः, न तु अवघाते॥

**तथाऽऽह्वानमपीति चेत्** । ३।२।३।५ ॥

**भाष्यं—** स्तो दर्शपूर्णमासौ । तत्रेदं समाम्नायते 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति' इति । तत्र संदेहः किं एष मन्त्रः हन्तिं प्रति उपदिश्यते, उत हन्तिः अस्य कालं लक्षयति इति । कथं हन्तिं प्रति उपदिश्यते, कथं वा कालं लक्षयेत् ? यदि एवं संबन्धः क्रियेत 'हविष्कृदेहि इत्यवघ्नन्' इति, ततो हन्तिं प्रति उपदिश्यते । अथ 'अवघ्नन् आह्वयति' इति, ततः अस्य कालं लक्षयति इति । किं तावत् प्राप्तं ? 'तथा आह्वानमपि' । यथा ऐन्द्री गार्हपत्यं प्रति उपदिश्यते, एवमेष मन्त्रो हन्तिं प्रति उपदिश्यते । एवं श्रुतिः अनुगृहीता भवति, इतरथा लक्षणा स्यात् । हन्तिकालस्य मन्त्रस्य च संबन्धो भवेत्, न हन्तेः मन्त्रस्य । एवं च सति आह्वयति इत्ययं अनुवादः । आह्वानं करोति । यो हि 'एहि' इति ब्रूते, स आह्वयति । तत्र केन चित् गुणेन मन्त्रो हन्तिं प्रत्याययिष्यति । तस्मात् नाह्वाने विनियोक्तव्यः ।

**वा—** एवं तवात् मुख्यं कार्यं मन्त्राणां इति सापवादमवस्थितम् । अतः परं एतत् विचार्यते क उत्सर्गस्य विषयः, कः अपवादस्येति । तत्र 'हविष्कृदेहि' इति या हविः करोति यजमानस्य पत्नी, तदाह्वानप्रकाशनसमर्थो मन्त्रः । स किं तत्रैव विनियुज्येत अवहन्तिसंयोगस्य कालार्थत्वेन अविरोधात्, अथवा वचनात् अयथाऽर्थं पूर्वतरप्रतीतावघाताङ्गमेवेति । यदि 'हविष्कृदेहि' इत्यनेन 'अवघ्नन् आह्वयति' इति विधीयते, ततः अवघाताङ्गत्वम् । अथ 'अवघ्नन्' इत्येतेन 'आह्वयति' इत्येवं संबध्य रूपादेव प्राप्तं आह्वानकाले मन्त्रं अनूद्य 'त्रिः' इति विधीयते, ततः 'अवघ्नन्' इत्यस्य स्वकाललक्षणाऽर्थत्वात् न अयथाऽर्थं वचनं इति यथाऽर्थः एव मन्त्रः । किं प्राप्तं ? अवहन्तिश्रुत्यनुग्रहात् आह्वयतेश्च मन्त्ररूपादेव प्राप्तत्वात् अवहन्तेरेव हविष्करणे कर्तृत्वं कथंचित् अस्ति इत्ययथाऽर्थत्वम् । गुणयोगात् प्रत्यायनं च ।

**न, कालविधिश्चोदितत्वात् । ६ ॥**

**भाष्यं**— नैतदस्ति हन्तिं प्रति उपदिश्यते इति । किं तर्हि ? काललक्षणा स्यात् । कुतः । 'त्रिराह्वयति' इति त्रित्वमत्र विधीयते । यदि अस्मिन्नेव वाक्ये मन्त्रो विधीयेत, अनेकगुणविधानात् वाक्यं भिद्येत । तस्मात् नैवं अभिसंबन्धः 'एवं अवघ्नन्' इति । कथं तर्हि ? 'अवघ्नन् आह्वयति' इति । **ननु** अस्मिन्नपि पक्षे मन्त्रो विधीयते कालश्च, तत्र स एव दोषो भवेत् । **नेति ब्रूमः** । अवहननकाले एव अर्थेन हविष्कृत् आह्वातव्या, तत्र अयमेव संबन्धः अनूद्यते । केवला तु त्रिरावृत्तिः विधीयते । यत्तु काललक्षणाऽर्थः शब्दः इति, नैष दोषः । लौकिकी हि लक्षणा । मन्त्रोऽपि च रूपादेव आह्वाने प्राप्तः, सोऽपि अनूद्यते एव । चोदितश्च वाक्यान्तरेण अवघातः शक्नोति कालं लक्षयितुम् । तस्मात् आह्वाने विनियोक्तव्यः इति ।

**वा**— '**त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते । लक्षणे च शतुर्वृत्तिः प्राप्तं चान्यदनूद्यते** ॥' 'अवघ्नन्' इत्यत्र हि धात्वर्थोपसर्जनः कर्ता लक्षणार्थयुक्तः प्रतीयते । 'लक्षणहेत्वोः क्रियायाः' (पा० ३।२।१२६) इति शतृप्रत्ययात् । तेन न क्वचित् श्रुतिपीडा । तस्मात् सर्वमेतत् अनूद्य 'त्रिः' इति विधीयते नान्यत्, वाक्यभेदप्रसङ्गात् । '**योग्यत्वेन च सिद्धत्वात् कालोऽपि न विधीयते । अभिधामात्रमेवास्य विधिरित्यभिधीयते ॥ सकृदुच्चारणाद् यो वा त्रिरभ्यासेन जायते । अभ्यासे विहितेऽर्थेन स कालोऽस्मिन् विधीयते** ॥' (त्रिरभ्यासे विहिते यः सकृदुच्चारणकालात् अधिकः कालः त्रिरभ्यासेन जायते, सः अस्मिन् वाक्ये अर्थापत्तिप्रमाणेन विधीयते इत्यर्थः) । तथा च 'यावज्जीविकोऽभ्यासः' (२।४।१।१) इत्यत्र कालाभ्यासयोः अन्योन्यविधिहेतुत्वं व्याख्यातम् ।

**गुणाभावात् । ७ ॥**

**भाष्यं**— इदं पदोत्तरं सूत्रम् । (शङ्कापदानि आह–) **अथ** कस्मात् न गुणात् अवहन्तिं ब्रूते ? हविः करोति हि अवहन्तिः, तस्मात् हविष्कृत् । किमेवं भविष्यति ? रूपादेव अवहन्तौ मन्त्रे प्राप्ते केवलं त्रिरावृत्तिमेव वक्ष्यति । न भविष्यति वाक्यभेदः इति । (उत्तरमाह–) **अत्रोच्यते** । गुणाभावात् गौणं अभिधानं अवहन्तौ न संभवतीति । नहि असौ 'आहूतः अस्मि' इत्यवगच्छति, तत्र अदृष्टार्थं आह्वानं स्यात् । यजमानस्य पत्न्यां हविष्कृति दृष्टार्थमाह्वानम् । तस्मान्न हन्तिमन्त्रः इति ।

**वा**— अथ यदुक्तं हन्तिरेव हविष्कृन् भविष्यति इति, तत्रोच्यते '**गुणाभावाद्धविष्कृत्त्वमन्त्राभावो यदोच्यते** ।' (अचेतने अवघाते आह्वानादिविषयन्त्रलक्षणगुणाभावात् हविष्कृत्त्वप्रकाशकमन्त्रस्याभावः) '**आमन्त्रणादिसामर्थ्यं लिङ्गमाश्रीयते तदा** ॥' अथवा पदोत्तरमेतत् सूत्रम् । '**त्रिरभ्यासपरत्वात्तु न मन्त्रोऽत्र विधीयते । रूपादेवावघाताङ्गं भवत्विति तदुच्यते ॥ यद्यप्यस्य हविष्कृत्त्वं कथंचित् कल्प्यते त्वया । तथाप्याह्वयतीत्येतद् व्यर्थं तस्मिन्नचेतने ॥ आमन्त्रणविभक्तिश्च प्रैषश्चैहीति मध्यमः । व्यर्थं मन्त्रे भवेत् सर्वमवघातपरे सति** ॥' चेतनवत्यां तु पत्न्यां अर्थवत् । तस्मान्न रूपादेव अवघाताङ्गत्वमिति ।

**लिङ्गाच्च । ८ ॥**

**भाष्यं**— लिङ्गं च भवति 'वाग् वै हविष्कृद् वाचमेवैतदाह्वयति' इति । न च वाचः अवहन्तिना सादृश्यमस्ति । अस्ति तु यजमानस्य पत्न्या । सा हि स्त्री, वाक् इति हि स्त्रीलिङ्गः । अवहन्तिस्तु न स्त्री, न पुमान्, न नपुंसकमिति । **ननु** अवहन्तेरपि स्त्रीलिङ्गः शब्दोऽस्ति क्रियेति । **अत्र ब्रूमः** । न नियोगतः अवहन्तेः स्त्रीलिङ्गः शब्दः, पुंलिङ्गोऽपि तस्यास्ति अवघातः इति, नपुंसकलिङ्गोऽपि कर्मेति । अपि च पत्न्याः स्वरूपेण सादृश्यं, अवहन्तेः पररूपेण शब्देन । तस्मात् पत्न्यां हविष्कृति लिङ्गं अनुरूपतरं भवति ।

**वा**—एवं च 'वाक्' इत्यर्थरूपेण ऐकान्तिकेनैव स्त्रीत्वेन संस्तवो भविष्यति । अन्यथा अनुपात्तस्त्रीलिङ्गक्रियाऽऽदिपदेन अनेकान्ताव्यक्तलिङ्गेन शब्दधर्मतया कथंचित् कल्प्यः स्यात् । तस्मात् आह्वानाङ्गत्वमिति ।

**विधिकोपश्चोपदेशे स्यात्। ९ ॥**

**भाष्यं--** अवहन्तिमन्त्रे सति, अस्मिन् मन्त्रे विध्यन्तरकोपः स्यात् 'अपहतं रक्ष इत्यवहन्ति' 'अपहता यातुधानाः इत्यवहन्ति' इति। तत्र पक्षे अभावात् नित्यवच्छ्रुतिः उपरुध्येत। तस्मात् अवघ्नन् इति काललक्षणार्थः इति।

**वा--** अवघातमन्त्रान्तरविरोधश्च अन्याय्यः स्यात्। आह्वाने तु अयमेव इत्यविरोधः।

**शा—** ' **पूर्वाधिकरणन्यायाद् विधौ युक्ता न लक्षणा। मन्त्रस्य त्वयथाऽर्थत्वं वचनान्नैव दुष्यति॥'** तस्मादवघाताङ्गं मन्त्रः। इति प्राप्ते, अभिधीयते, ' **त्रिरभ्यासो न पाठेन नित्यप्राप्तो यतः क्वचित्। द्विः पठ्यते सकृच्चापि तस्मान्नायमनूद्यते॥ न पाक्षिकानुवादत्वं नित्यान्वयविरोधतः। तस्मादत्र त्रिरभ्यासो विधातव्यस्तथा सति॥ मन्त्रस्य न विधिः शक्यो वाक्यभेदप्रसङ्गतः। आह्वानेन तु मन्त्रस्य योगो हन्तेस्तु लक्षणा॥'** तस्मात् त्रिरावृत्तिमात्रविधानात् आह्वानाङ्गं मन्त्रः, नायथाऽर्थोऽवघाते।

**सोम—ननु** आह्वानस्यापि विधेयत्वावश्यंभावेन विशिष्टविधित्वात् कथं वाक्यभेदः। **न च** 'पत्न्येव हविष्कृत् उपोत्तिष्ठति, सा अभिद्रुत्यावहन्ति' इति अवघातस्य पत्नीकर्तृकत्वावगत्या अवघातार्थं तदाह्वानस्य अर्थप्राप्तत्वात् न विधेयत्वमिति **वाच्यम्**। अनाहूतायाः **स्वयमागताया** अपि अवहन्तृत्वसंभवेन आह्वानस्य नित्यप्राप्त्यभावेन विधिसंभवात्। **इति चेत् मैवम्**। 'एहि' इति मन्त्रवर्णादेव आह्वानस्य नित्यप्राप्तिसंभवात्।

**यत्तूक्तं** न्यायसुधायां मन्त्रवर्णतः प्राप्त्यभ्युपगमे आह्वानप्राप्तौ तत्र मन्त्रविनियोगः, मन्त्रवर्णाच्च आह्वानप्राप्तिः इत्यन्योन्याश्रयः स्यात्। किंच नित्यप्राप्तस्यापि आह्वानस्य 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इति पुरोडाशत्वान्यथाऽनुपपत्त्या प्राप्तस्यापि प्रथनस्य आध्वर्यवसमाख्याबलेन अध्वर्युकर्तृकत्वसिद्ध्यर्थं 'यजमानमेव तत् प्रथयति' इत्यर्थवादोपपत्त्यर्थं च विधेयत्ववत् इहापि अध्वर्युकर्तृकत्वप्राप्त्यर्थं 'वाचमेव तदाह्वयति' इत्यर्थवादोपपत्त्यर्थं च विधेयत्वमावश्यकम्। तस्मात् त्रिरभ्यासविशिष्टाह्वानविधिरेवायं इति। (न कालविधिः० ६ इति सूत्रस्थन्यायसुधायाः अर्थतोऽनुवादोयम्) **तन्न**। 'एहि' इतिपदयुक्तस्य मन्त्रस्य नित्यवदाम्नातस्य नित्यं क्रतूपकारकत्वस्य वक्तव्यतया तस्य च मन्त्रस्य दृष्टार्थत्वलाभाय मन्त्रसामर्थ्यपर्यालोचनालभ्याह्वानस्यैव द्वारत्वौचित्येन च दृष्टद्वारा क्रतौ मन्त्रविनियोगबलादेव द्वारभूताह्वानस्य तत्र मन्त्रान्वयस्य च सिद्ध्या अन्योन्याश्रयानवकाशः, मन्त्रस्य आध्वर्यवकाण्डे समाम्नानबलादेव आह्वानस्य अध्वर्युकर्तृकत्वसिद्धौ तदर्थं आह्वानविधिवैयर्थ्याच्च। 'उरु प्रथस्व' इति मन्त्रस्य तु आध्वर्यवकाण्डे समाम्नानमात्रात् प्रथनस्य नाध्वर्युकर्तृकत्वसिद्धिः। अध्वर्यूच्चारितमन्त्रेण अन्यस्यापि तदर्थस्मृतौ सत्यां अन्येनापि प्रथनानुष्ठानसंभवात्। प्रकृते च 'एहि' इति शब्दप्रयोक्तुरेव आह्वातृतया एहीतिपदयुक्तमन्त्रस्य आध्वर्यवत्वे आह्वानस्यापि आध्वर्यवत्वमवर्जनीयं इति वैषम्यम्। अर्थवादश्च त्रिरभ्यासमात्रविधावपि कथंचिदुपपादयितुं शक्यते इति तदर्थमपि विशिष्टविधिगौरवदुष्टस्य आह्वानविधानस्य अनङ्गीकार्यत्वात् इति (पृ. २१३)। **न च** मुख्ये अवघ्नन् इति पदे सिद्धान्तिनो लक्षणा, पूर्वपक्षिणस्तु जघन्ये आह्वयतिपदे इति वैषम्यं **शङ्क्यम्**। अवघातस्य 'लक्षणहेत्वोः क्रियायाः' इति क्रियान्तरलक्षकक्रियाकर्तरिविहितशतृप्रत्ययेन क्रियाऽन्तरलक्षणाऽर्थत्वावगमेन अन्योपसर्जनतया स्वार्थसमर्पके अवघ्नन् इति पदे एव प्रथमश्रुतेऽपि लक्षणाया न्याय्यत्वात्। **सूत्रार्थस्तु**– आह्वानं आह्वानार्थमन्त्रोऽपि, तथा ऐन्द्रीवत् अयथार्थः स्यात् इति।

**वि--** ' हविष्कृदेहीत्यामन्त्र्य त्रिरवघ्नन् समाह्वयेत्। विनियोगोऽवघाते स्यादाह्वाने वाऽवघातके॥, ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्तिर्वृथाऽन्यथा। पाठेन प्रापितं त्रित्वं ह्वयतेरुपचारगीः॥, त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः। हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा॥ विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता। नैन्द्रीन्यायः श्रुत्यभावाद् बर्हिर्न्यायेन मुख्यगः॥' तस्मादाह्वानशेषोऽयं मन्त्रः।

**भाट्ट**— दर्शपूर्णमासयोः ' हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति ' इति श्रुतम्। तत्र नायं मन्त्रः आह्वानाङ्गं, तस्य ' पत्न्येव हविष्कृदुपोत्तिष्ठति, सा देवानभिद्रुत्यावहन्ति ' इति वचनानुसारेण अभावप्रतीतेः। अत इतिकरणेनावघाताङ्गमेव। अतश्च अस्मिन् वाक्ये त्रिरभ्यासपुंस्त्वमन्त्रविशिष्टावघातविधिरेव। पत्नीवाक्ये च गुणादेव कर्मान्तरविधिः। तयोश्चावघातयोः ' व्रीहीनवहन्ति ' इत्यनेन संस्कार्यसंबन्धेऽपि दृष्टार्थत्वात् विकल्पः। पत्नीकर्तृकावघाते च ' अवरक्षो दिवः ' इति मन्त्रः। अतश्च अनेन वाक्येन अवघाते गौणे एवायं मन्त्रो विनियुज्यते। गौणत्वोपपादनं कौस्तुभे द्रष्टव्यम्। ( " गौणीवृत्तिप्रकारश्चावघातेऽपि कथंचित् ' स्थाली पचति ' इतिवत् कर्तृत्वमुपचर्य अचेतनेऽपि चेतनत्वमारोप्य ' हे अवघात ! त्वमेहि, संपन्नो भव ' इत्यर्थाङ्गीकारेण द्रष्टव्यः " इति कौस्तुभे पूर्वपक्षान्ते उक्तम् ) आह्वयतिश्च ' तदाचष्टे ' इत्येवं शक्यार्थबोधकालीनाह्वानप्रकाशनानुवादः। **इति प्राप्ते,** मुख्ये एवाह्वाने विनियोगसंभवे मन्त्रस्य आह्वयतिपदस्य च गौणत्वकल्पनायां प्रमाणाभावात्। मान्त्रवर्णिकविनियोगविधिकल्पनया ' सध्यासम् ' इत्यादिना ग्रहणादेरिव आह्वानस्यापि नियमेन प्राप्तत्वात्। ' पत्न्येव ' इत्यस्य तु नायमर्थः यत् स्वयमेवोत्तिष्ठति, न तु आह्वयतीति, अपि तु पत्न्येव नान्येति। अतो नेदमपि तदभावबोधकम्। अतश्च आह्वाने मन्त्रस्य लिङ्गादेव प्राप्तत्वात् आह्वानस्य च सहायार्थत्वेन अवघातकाले एव प्राप्तेः ' अवघ्नन् ' इत्यस्यापि अनुवादत्वात् केवलं त्रिरभ्यासमात्रं विधीयते इति न गौणे अवघाते विनियोगः।

**मण्डन**— ' हविष्कृदेहीति न हन्तिमन्त्रः। '

**शंकर**— ' हविष्कृल्लक्षयेत् कालम्। '

---

## इ

**इकारस्तु** ( इञ् प्रत्ययस्तु ) यथैवापत्ये सिद्धः तथा क्रियायामपि कर्तरि। ( बबरः प्रावाहणिः इत्यत्र )। **भा.** १।१।८।३१.

* इकारादिवचनं धातुं अर्थेऽपि क्व चित् प्रयुङ्क्ते यजिः यजतिः इति च, तत्र शब्देऽभिहिते लक्षणया अर्थप्रतीतिः इत्यवगन्तव्यम्। **वा.** २।१।१।१ पृ. ३७०.

**इक्षुदण्डन्यायः**। यथा इक्ष्वग्रात् पर्वणिपर्वणि रसोत्कर्षस्तथा सज्जनमैत्र्यपि क्रमश उदर्कतां प्राप्नोतीति। उक्तं च ' इक्षोरग्रात् क्रमशः पर्वणिपर्वणि यथा रसविशेषः। तद्वत् सज्जनमैत्री, विपरीतानां तु विपरीता ॥ ' इति। **साहस्री.** ३३४.

**इक्षुरसन्यायः**। गुडशर्करादिषु भिन्नरसरूपादि दृश्यते इक्षुविकारत्वे समानेऽपि। तद्वदन्यत्र। **संग्रहः.** * इक्षुरसन्यायः। यथेक्षुरसो बहुरसोऽपि बहिर्मलिनो दृश्यते, तथा माया अन्तर्बहुरूपाऽपि बहिस्तमोरूपा दृश्यते, तस्याश्च यद्विमलतमं रूपं तदेवेक्षुरसस्येव सिता। यथा चेक्षुमाधुर्यं सितायां कृत्स्नमभिव्यज्यते अन्यत्र मलसंपर्कादल्पतरं च, एवं परैश्वर्यं सत्त्वे शुद्धे सर्वमभिव्यज्यते। **साहस्री.** ९७.

**इक्षुविकारन्यायः**। यथेक्षुविकारेष्वपि रसगुडशर्करासितासु मालिन्यापगमतारतम्यादेव विभिन्नरूपत्वं दृश्यते तथा सत्त्वादिष्वपि बोध्यमिति। **साहस्री.** ९८.

* **इच्छा**। अनुभूतपूर्वविषयो हि अभिलाष इच्छा। **बृहती.** पृ. १६४. * इच्छा स्वरसतः पुरुषार्थे एव स्वर्गपुत्रपश्वादौ भवति। **सु.** पृ. ३१. * उपलब्धपूर्वे हि अभिप्रेते भवति **इच्छा**। यथा मेरुमुत्तरेण यानि अस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रति अस्माकं इच्छा भवति। नो खलु अन्यपुरुषेण उपलब्धेऽपि विषये अन्यस्य उपलब्धुरिच्छा भवति। भवति च अन्येद्युरुपलब्धे अन्येद्युरिच्छा। **भा.** १।१।५।५ पृ. ६३. * **इच्छया** आत्मानमुपलभामहे। ( इच्छालिङ्गेन आत्मोपलब्धिरित्यर्थः। ) **वा.** १।१।५।५ पृ. ६३. * **इच्छायाः** तत्प्रकारकनिश्चयहेतुकत्वम्। **मणि.** पृ. २८. * ' भवेदेतत् ' इत्येवंरूपस्यैव आशयस्य **इच्छात्वम्**। **सु.** पृ. ५८३. * **इच्छादीनां** आत्मलिङ्गत्वं निराकृतम्। **भा.** १।१।५।५ पृ. ६३–६४.

**वि**—'आघारादेश्च मुख्यत्वं न वा, ऽऽग्नेयाद्रित्तु तत् ।, षण्मुख्या नामतः सिद्धाः शेषा अन्येऽङ्गसंस्तुतेः ॥ '

**भाट्ट**—प्रयाजादिसाधारण्येन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन राजसूयवत् यजिना न फलसंबन्धः । किंतु आग्नेयादीनां षण्णामेव, दर्शपूर्णमासनाम्ना आग्नेयादिषड्यागेष्वेव प्रसिद्धार्थकेन यजेरवच्छेदात् । यथा च दर्शपूर्णमासनाम्नः प्रसिद्धार्थकत्वं तथोपपादितं पौर्णमास्यधिकरणे (२।२।३) । तदधिकरणप्रयोजनकथनार्थं तु इदमधिकरणं प्रयुक्तिसिद्धयर्थं न विरुध्यते । राजसूयनाम्नश्च यथा प्रकृतसर्वयागपरत्वं, तथा तदधिकरणे स्पष्टमेव । अतश्च प्रयाजादीनामङ्गत्वात् विकृतौ अतिदेशः ।

**मण्डन**—'के चिदिहेष्टिगुणाः खलु यागाः ।'

**शंकर**—'दर्शे काल्युजां फलम् ।'

* **इज्याऽधिकरणम्** । ४।४।११।२९–३८ । प्रथमसूत्रे 'इज्या' इति प्रधानशब्दपाठात् 'इज्याऽधिकरणं' इति नामधेयम् । तस्य 'दर्शपूर्णमासयोरिज्याः' इत्यादिकं प्रथमं सूत्रम् । तन्न्यायस्वरूपं तु 'तद्–द्वित्वानुसारिणौ हि दर्शपूर्णमासशब्दौ तद्विषयौ भवतः' इति वार्तिके उक्तम् । अत्र **सुधा** 'पौर्णमास्यमावास्याशब्दोक्तसमुदायद्वित्वानुसारित्वात् दर्शपूर्णमासशब्दयोः समुदायविषयत्वम्' इति । **सु. पृ.** ७३२, * **पौर्णमास्यधिकरणं** विना (२।२।३।३–८) इज्याऽधिकरणपूर्वपक्ष एव स्यात् इति **इज्याऽधिकरणस्य** पौर्णमास्यधिकरणाधीनत्वात् पौर्णमास्यधिकरणप्रयोजनत्वेन आरम्भः । पृ. ७३२, * यच्चान्यत् स्वर्गादि साध्यं कल्प्येत, तस्य **इज्याऽधिकरणन्यायात्** दर्शपूर्णमासनामविशेषितयज्युक्तेन आग्नेयादिषट्केन सह संबन्ध्यनिराकाङ्क्षीभूतस्य न प्रयाजादौ संबन्धाकाङ्क्षा अस्ति । पृ. ११९५.

* **इज्याविकारः** फलचमसः इत्युक्तं फलचमसाधिकरणे । (३।५।१९।४०–५१) । **के.**

**इज्याशेषात् स्विष्टकृदिज्येत, प्रकृतिवत् । १०।७।३।१० ॥**

अग्नीषोमीये पशौ स्विष्टकृत् इज्याशेषात् यागं कृत्वा अवशिष्टात् अङ्गत्रयसमुदायात् इज्येत । प्रकृतिवत् प्रकृतौ यथा दर्शादियागावशिष्टात् पुरोडाशात् स्विष्टकृदिज्यते तद्वत् । विकृतौ प्रकृतिवद्भावात् । इति पूर्वः पक्षः ।

**त्र्यङ्गैर्वा, शरवद् विकारः स्यात् । ११ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । अनिज्याशेषैः दोः-पूर्वार्धं, गुदमध्यं, श्रोणिजघनार्धं इति त्र्यङ्गैः त्रिभिरङ्गैः प्राकृतेज्याशेषस्य विकारः बाधः स्यात् । शरवत् यथा श्येनादौ शरैः प्राकृताः कुशा बाध्यन्ते तद्वत् । इति सिद्धान्तः । **के.**

* **इडा** पराची 'यदिडोपहूता इति तत् पराची, यत् उपहूतेडा इति तत् प्रतीची' । (यदा इडोपाह्वाननिगदे इडाशब्दः आदौ उच्चार्यते, तदा सा इडा पराची नाम । यदा तु इडाशब्दः उपहूतशब्दात् पश्चादुच्चार्यते, तदा सा इडा प्रतीची नाम इत्यर्थः) । **संकर्ष.** ४।३।१७. * इडे द्वे दर्शपूर्णमासयोः । पत्नीसंयाजेभ्यः पुरस्तात् उपरिष्टाच्च विहिते । **वि.** १०।७।१३. * **इडां** 'शेषादिडामवद्यति' (अग्नौ हुतात् हविषः शेषात् इडाया अवदानं क्रियते) । **भा.** ३।४।१४।४१, * **इडां** यजमानपञ्चमा ऋत्विजः भक्षयन्ति दर्शपूर्णमासयोः । १२।१।१५।३१. * **इडायाः** उपस्तरणादिवत् इडापात्रे प्रासनं संस्कारविशेषः । **वि.** १०।७।५. * '**इडानां संक्षारः**' नाम साम अनृकम् । **बाल.** पृ. ७२.

* **इडाचमसादिभक्षाः** प्रतिपत्तिरूपत्वात् सत्रेष्वपि सन्त्येव । **वि.** १०।२।९.

**इडादिपदाभ्यासनिषेधपरं पराचीं प्रतीचीं इति ॥**

इडामेव प्रकृत्य 'यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयते' (यं कामयेत पशुमान् स्यादिति प्रतीचीं तस्येडामुपह्वयते) इति श्रुतौ प्रत्यक्शब्देन प्रत्यङ्मुखता कर्तुरुच्यते । एवं पराक्शब्दोऽपि 'मुखं प्रति उपह्वयते' इति वचनान्तरात् । इति प्राप्ते, अभ्यासानभ्यासवचनावेतौ शब्दौ । 'पराचीः सामिधेनीरन्वाह' 'पराग्बहि-

ष्पवमानेन स्तुवते ' इति प्रयोगात् । ' यदिडोपहूतेति तत् पराची, यदुपहूतेडेति तत् प्रतीची ' इत्याम्नानाच्च । अभ्यासस्तु ' इडोपहूतोपहूतेडेत्येके ' इत्यादिना अनेकविधो यः प्रतीयते तस्यायं प्रतिषेधः । मुखं प्रति इति तु मुखसंमितामवस्थापयेदित्यर्थकम् । इष्टकानां तु मुखासंभवात् अशब्दत्वाच्च कर्तुर्मुखवादः एवाश्रितः । **संकर्ष.** ४।३।१७.

* **इडाऽऽदिभक्षाः** ब्रह्मादिभिरेव कर्तव्याः, न तु तैः स्वगृहे नयनं इत्युक्तं ' भक्षार्थो वा द्रव्ये समत्वात् ' ( ३।४।१७।५० ) इति सूत्रे भाष्यवार्तिकयोः । **के.**

**इडाऽऽदिभक्षाः शेषप्रतिपत्त्यर्थाः ॥**

**शेषभक्षाश्च तद्वत् । १०।२।९।२९ ॥**

**भाष्यं**— सन्ति शेषभक्षाः ज्योतिष्टोमे, दर्शपूर्णमासयोश्च । यथा वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च । तथा, इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः । तेषु संशयः किं ते परिक्रयार्थाः, उत नेति । किं प्राप्तम् ? शेषभक्षाश्च तद्वत् भवितुमर्हन्ति, यद्वत् दक्षिणादानम् । प्रीतिं हि करोति भक्षणं, प्रीत्या च आनमन्ति । तस्मात् परिक्रयार्थाः शेषभक्षा इति ।

**संस्कारो वा, द्रव्यस्य परार्थत्वात् । ३० ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । न परिक्रयार्थं भक्षणं, द्रव्यसंस्कारार्थमिति । कुतः ? यज्ञार्थेन हि द्रव्यमुत्पन्नं प्रयोजनवत् । यदि तस्य संस्कारार्थं भक्षणं, ततः तदपि प्रयोजनम् । ' दक्षिणार्धात् मध्याच्च अवद्यति ' इत्येवमादि एकदेशवचनं प्रकृतशेषापेक्षं भवति, न द्रव्यस्य उत्पादकम् । तस्मात् द्रव्यस्य भक्षणमुच्यते, न भक्षणार्थं द्रव्यमुपादीयते । प्रकृतस्य च भक्षणम् । तस्मात् संस्कारार्थमिति गम्यते ।

**शेषे च समत्वात् । ३१ ॥**

**भाष्यं**—अपिच यच्छेषं द्रव्यं, तत् देवतायै संकल्पितं, यजमानेन न स्वयं उपयोक्तव्यमिति । तस्मात् न उपयोक्तुं ऋत्विजः ईशते, नो खल्वपि यजमानः । साम्यमत्र यजमानस्य ऋत्विग्भिः । परिक्रीणानश्च स्वीकुर्यात् द्रव्यम् । तत्र अस्य देवताऽर्थः संकल्प एव नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ।

**स्वामिनि च दर्शनात्, तत्सामान्यादितरेषां तथात्वम् । ३२ ॥**

**भाष्यं**— स्वामिनि च भक्षणं दृश्यते ' यजमानपञ्चमाः समुपहूता इडां भक्षयन्ति ' इति । यजमानस्य असंशयं अपरिक्रयः । तत्सामान्यादितरेषामपि न परिक्रयः । कथम् ? एवं सति नैव विज्ञायते, इडाभक्षणेन यजमानपञ्चमाः परिक्रीयन्ते इति । किं तत्सामान्यम् ? द्वितीया विभक्तिः । तस्मादपि न परिक्रयार्थं भक्षणमिति ।

**तथा चान्यार्थदर्शनम् । ३३ ॥**

**भाष्यं**— एवमन्यार्थदर्शनमिदं उपपन्नं भवति । कुण्डपायिनामयने, ' अत्सरुकैश्चमसैः सोमान् भक्षयन्ति' इति प्राप्ते भक्षे विशेषः श्रूयते ' अत्सरुकैः ' इति । एवं सत्रेषु भक्षणं दृश्यते । तत् परिक्रयार्थत्वे नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ।

**सोम**—यदि आनत्यर्थत्वात् दक्षिणादानस्य सत्रे बाधः, तर्हि तद्वदेव शेषभक्षाणामपि बाधः इत्युत्थितेः ( दृष्टान्तः- ) संगतिः । **सूत्रार्थस्तु**—तद्वत् दक्षिणादानवत् शेषभक्षा आनत्यर्थाः इति ।

**वि**—'क्रयाय प्रतिपत्त्यै वा चमसेडाऽऽदिभक्षणम् ।, क्रयाय पूर्ववत्, न्मैवं यागीये स्वत्ववर्जनात् ।। अक्रीतयजमानस्य भक्षसत्त्वाच्च तेन सा । प्रतिपत्तिः संस्कृतित्वात् सत्रेषु न निवर्तते ॥ '

**भाट्ट**— शेषभक्षास्तत्रतत्र द्वितीयासंयोगात् हविःप्रतिपत्त्यर्थाः प्रयाजशेषन्यायेन कर्तुः करिष्यमाणकर्मणि बलाधानार्थाश्च न तु आनत्यर्थाः, तस्याः प्रकृतौ आनुषङ्गिकत्वेऽपि प्रयोजकत्वाभावात् । अस्तु वा दृष्टप्रयोजनत्वाविशेषात् त्रयाणामपि प्रयोजकत्वं, न तु आनतिमात्रस्य । अतः सत्रे तदभावेऽपि प्रतिपत्त्याद्यर्थं कर्तव्या एव ।

**मण्डन** —' परिक्रयो न भक्षः स्यात् । ' (भक्षः परिक्रयो न स्यात् इति युक्तः पाठः ) ।

**शंकर**—' भक्षास्तु प्रतिपत्त्यर्थाः । '

* **इडाऽऽदिभक्षस्य** सर्वत्र द्रव्यसंस्कारार्थता वक्ष्यते ( १२।१।१५।३१-३२ ) । **सु. पृ. १५५५.**

* **इडाऽऽदिशेषभक्षाः** प्रतिपत्त्यर्थत्वात् यजमानस्यापि भवन्ति । दर्शपूर्णमासयोः सौमिकेष्टिषु च । **भा.** १२।१।१५।३१, * **इडानिगदः** 'इडोपहूतोपहूतेडो-पास्मां इडाऽऽह्वयतामिडोपहूता' इत्यादिः । ९।१।१४।४०. * इडानिगदः सर्वोऽपि न चतुर्वारमावर्तनीयः 'चतुरुपह्वयते' इत्युक्ता आवृत्तिस्तु 'इडा उपहूता' इतिपदविषयिणी । **संकर्ष.** ४।३।१९. * **इडानिगदे** दर्शपूर्णमासस्थे यज्ञपतिशब्दः बहुयजमानके नोहितव्यः, न स समवेताभिधायी । **भा.** ९।१।१४।४०.

* '**इडाऽन्ता** आतिथ्या संतिष्ठते' अन्तभूता चेयमिडा पूर्वैव, नोत्तरा । **वि.** १०।७।१२-१३.

* **इडापात्रे** हृदयादिप्रासनवाक्ये वनिष्ठुरपि पठितः । **वि.** १०।७।५.

* **इडाप्रचारस्यायं** मन्त्रः 'इडोपहूता' इत्यादिः 'ब्रह्मदेवकृतमुपहूतं' इत्येवमन्तः इडोपह्वानार्थः । 'दैव्या अध्वर्यवः' इत्यादिः ऋत्विगुपह्वानार्थः । अध्वर्युशब्दवाच्याः सर्वे ऋत्विजो लक्षणया । 'उपहूता मनुष्याः' इति ते एवोच्यन्ते । कीदृशाः ते इति ? उच्यते । ये यज्ञं ( अवान्- ) अवन्ति रक्षन्ति, ये च यज्ञपतिं ( वर्धान्- ) वर्धयितुं क्षमाः, तादृशा मनुष्याः उपहूताः । **टुप्.** ९।१।१४।४० पृ. १६८६.

* **इडा-प्राशित्र - चतुर्धाकरण - शंयुवाककालाः** भक्षाः प्रकृतौ सन्ति । **भा.** १०।२।३।१३. * इडा-प्राशित्रादिभक्षणार्थमेव 'एकधा ब्रह्मणे उपहरति' इति कृष्णलचरौ उपहारः उपदिष्टः । **वि.** १०।२।४.

* **इडाभक्षः** शेषकार्यम् । **वा.** ३।४।१४।३७. * **इडाभक्षे** पशौ मैत्रावरुणस्यापि भक्षोऽस्ति । **वि.** १०।७।६.

* **इडाभक्षविकारः** अध्यूध्नी होतुः, पशौ । **भा.** १०।७।४।१२-१६, * इडाभक्षविकारः वनिष्ठुः अग्नीधः, पशौ । १०।७।५।१७.

* **इडाभक्षोत्तरं** पशुपुरोडाशाङ्गेडाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ, न तु अनुयाजैः सहोत्कर्षः । **भाट्ट.** ५।१।१५.

* **इडाभक्षणं** एकदेवताके पशुगणे तन्त्रेण । **भाट्ट.** ५।२।६. * इडाभक्षणं गृहमेधीये अस्ति । तेन प्राशित्रादिभक्षणानां प्रतिषेधः । **भा.** १०।७।११।३७. * **इडाभक्षणार्थमवत्तस्य** नाशे इडाभक्षलोप एव । **वि.** ६।४।२.

* **इडोपाह्वानमन्त्रे** 'ये च यज्ञपतिं वर्धान्' इत्यत्र सत्रे 'ये च यज्ञपतीन् वर्धान्' इत्येवं ऊहो न कर्तव्यः । वाक्यस्य इडाप्रशंसाऽर्थत्वात् एकवचनेनापि प्रशंसायाः सिद्धत्वात् । **भा.** ९।१।१४।४०. * **आज्येडा** पत्नीसंयाजमात्राङ्गं, न तु सर्वयागाङ्गम् । **संकर्ष.** ४।३।१६, * **औषधेडा** आग्नेयादीनामेव अङ्गं, न तु सर्वयागाङ्गम् । ४।३।१६.

⌛ **इतरमन्यः इति न्यायेन** अध्वर्योः वरणादिकं प्रतिप्रस्थाता कुर्यात् । ( 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति न्यायः । यदा आध्वर्यवं करणमन्त्रं होता करोति, तदा हौत्रं होतुरन्यः होतृपुरुषः कुर्यात्, तेषां होतॄणां चतुर्णां मध्ये यतः यस्य विशेषः अन्यकर्तव्य-शून्यतारूपः अन्तरङ्गत्वं वा स्यात् । एवं अध्वर्योः वरण-कर्तृत्वासंभवे तस्य पुरुषः प्रतिप्रस्थाता कुर्यात् इति )। **भाट्ट.** ३।८।१. * उपास्तिपक्षे तावत् प्रधानाङ्गभूताया-मुपास्तौ अध्वर्युकर्तृकत्वस्य आवश्यकत्वात् अतिदेश-प्राप्तनिर्वापसमानकर्तृकत्वानुरोधाच्च प्रोक्षणादौ '**इतर-मन्यः**' इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वावगतेः । ( अत्रोपास्तिः होतुः समीपे स्थितिः ) । ५।१।१३, * चमसेष्वपि अध्वर्युरेव होमादिकर्ता । तस्यान्यत्र व्यापृतत्वे तु गौणसमाख्यया चमसाध्वर्यवः । तेषामप्य-संभवे 'इतरमन्यः' इत्येवं प्रतिप्रस्थात्रादयः । ३।७।२३, * **यदपि** वार्तिके अग्नीषोमीयाद्यङ्गभूतेषु प्रैषान्तानुवच-नेषु 'यज' इति शब्दस्य प्राकृतत्वात् तन्मात्रे अति-देशेन अध्वर्योः प्राप्तिः, 'प्रेष्य' इति प्रैषान्तसमाम्ना-नाद्वा 'इतरमन्यः' इति न्यायेन प्रतिप्रस्थातुः । इत्युक्तं **तदुपेक्षितम्** । ३।७।२२. * ( नानाबीजे क चित् ) 'सहावघ्नन्ति' 'सह पिंषन्ति' इति ( वचनात् सर्वा-वघातस्य ) एककालत्वात् 'इतरमन्यः' इति (कर्त्रन्तरं) प्राप्नोति । **टुप्.** ५।१।१३।२५. * **इतरमन्यस्तेषां**

**इतिन्यायेन** अध्वर्युगणस्थस्य अन्यतमस्य शमितृत्वेऽपि 'पराङावर्ततेऽध्वर्युः' इति समाख्योपपत्तेः। **संकर्ष.** १।१।१४. * सत्रे मृतस्य स्थाने अन्य आनीयते। तत्र मृतकर्तव्यपदार्थानुष्ठानार्थे आनयनं इति चेत्, तेषां कर्मान्तरेष्विव अध्वर्य्वादिसमाख्यया 'इतरमन्यस्तेषां' इति न्यायेन कर्त्रन्तरैरेव सिद्धेः (इति शङ्का)। **भाट्ट.** ६।३।१० * **इतरमन्यस्तेषां यतो विशेषः स्यात्** (३।८।१०।२२, २१ वा)। आध्वर्यवे हि कर्मणि प्रकृतावेव अध्वर्युपुरुषाः प्रतिप्रस्थात्रादयो विहिताः। यदा खलु अध्वर्युः असमर्थः कर्मान्तरव्यासङ्गित्वात्, स्वात्मनि क्रियाविरोधाद्वा, तदा तदीयं कर्म तत्पुरुषाः प्रतिप्रस्थात्रादयः कुर्वन्ति। (तेषां अध्वर्युपुरुषाणां मध्ये यतः यस्य –सार्वविभक्तिकस्तसिः– विशेषः अन्तरङ्गत्वलक्षणः स्यात्, स कुर्यात् इति सूत्राक्षरार्थः)। **कणिका.** पृ. ४२३. * 'चित्पतिस्त्वा पुनातु' इति मन्त्रं अनूहितमेव प्रयुज्य अध्वर्युकर्तृकत्वबाधावश्यंभावे 'इतरमन्यस्तेषां यतो विशेषः स्यात्' 'इतिन्यायेन अध्वर्युपुरुषाणामाद्यः प्रतिप्रस्थातैव अध्वर्युदीक्षायां प्राप्नोति। **भाट्ट.** ५।१।१. * ननु अध्वर्य्वादिषु व्याप्रियमाणेषु 'शमिता पशुं कण्ठे गृह्णाति' इति श्रवणात् भेदः स्यात्। नैष दोषः। य एव कश्चित् अव्यापृतः स एव ग्रहीष्यति। न च तदा सर्वाध्वर्युपुरुषाणां सर्वर्त्विजां वा व्यापारो विद्यते। तदेतत् वक्ष्यति 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति। **वा.** ३।७।१३।२९. * समकालौ उभौ पदार्थौ अध्वर्युकर्तृकौ, तत्र विरोधात् एकत्राध्वर्युर्नियतः उपासने (प्रातरनुवाकं प्रतिगृणता होतुः समीपे आसने स्थितौ)। प्रोक्षणादिषु (तु) 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति (न्यायात् अध्वर्युपुरुष एव) प्रतिप्रस्थाता स्यात्, (न तु ब्रह्मपुरुषः अग्नीत्)। **टुप्.** ५।१।१३।२५. * 'होता यक्षन्मित्रावरुणौ प्रशास्तर्यज' इतिप्रैषपाठस्य 'मैत्रावरुणः प्रेष्यति चानु चाह' इति वाक्येन मैत्रावरुणकर्तृकत्वे प्रसक्ते स्वात्मनि प्रैषासंभवात् लिङ्गेन अन्यकर्तृकत्वं, तत्रापि 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति न्यायेन अच्छावाके प्राप्ते सामान्यसमाख्यया होतुरेव लिङ्गेन प्रतिप्रसवः इति वार्तिकोदाहरणं लिङ्गवाक्यविरोधस्य। **कौ.** ३।३।१४ पृ. ३५९.

⌛ **इतरस्य प्रयुक्तत्वात्** (१२।१।५।१२)। **स एव न्यायः** 'इतरस्य प्रयुक्तत्वात्' इति 'गार्हपत्ये च हविषां श्रपणं श्रुतं स च प्रयुक्तो विद्यते' तस्मात्तत्र (पशुपुरोडाशस्य) श्रपणं कर्तव्यम्। 'अग्नीषोमीयपशुपुरोडाशस्य' इति बिन्दौ द्रष्टव्यम्)। **भा.** १२।१।५।१२.

⌛ **इतरेषु तु पित्र्याणि**। ६।८।६।२५॥

पित्र्यकर्मणां कालस्य बोधनार्थं सिद्धान्तसूत्रम्। पित्र्याणि पितृदेवताकानि कर्माणि पूर्वसूत्रद्वयोक्तकालेभ्यः इतरेषु कालेषु कुर्यात् अपरपक्षे अपराह्णे च, स्मृतिरूपात् वचनात् 'अपराह्णः पितॄणां' इति अन्यार्थस्य वाक्यशेषस्य च दर्शनात्। **के.**

* **इतरशब्दश्च** (समानमितरत् श्येनेन इत्यत्र) असंनिहिते अनुपपन्नः, संनिहिते एव भवति। यथा 'इतरः प्रावारो दीयतां, इतरः कम्बलो दीयतां' इति संनिहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा। **भा.** ७।१।२।१३। ननु इतरशब्दोऽयं संनिहिते भवति। उच्यते इतरदधिकार्थे (इति सूत्रांशः) समानमितरत् समानमधिकमित्यर्थः। ननु संनिहितवचनोऽयं नाधिकार्थवचन इति। उच्यते। न केवलमयं संनिहितवचन एव, पूर्वोक्तसदृशं असंनिहितमपि ब्रूते अवशिष्टं च। यदा हि वस्त्राण्यनुक्रम्य इतरशब्दः प्रयुज्यते 'देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमं, इतरत् चैत्राय' इति, तदा वस्त्रमेव प्रदीयते, न हिरण्यं रजतं वा। **भा.** ७।१।२।१६। इतरशब्दः नाधिक्ये लोके प्रसिद्धः। तर्हि ? उपयुक्तात् यदितरत् तत्र प्रसिद्धः। **टुप्.** ७।१।२।१६.

* **इतरेतरयोगे** चार्थे (द्वंद्व–) समासविधानात्। **भा.** ६।१।५।२२ पृ. १३६६.

* **इतरेतराश्रयाणि** च कार्याणि न प्रकल्पन्ते। **भा.** ४।३।५।१०.

* **इतस्ततः**। (अत्र बिन्दौ तानि वाक्यानि निवेशितानि, यानि नानाविधलौकिकव्यवहारप्रदर्शकानि

भाष्यादौ तत्तत्सिद्धान्तसाधनाय दृष्टान्तत्वादिना उदाहृतानि। एतानि च तस्मिंस्तस्मिन् विशेषप्रघट्टके निवेशयितुं न शक्यन्ते, अथ चोपयुक्तानि । तत्र च विषयानुसारेण प्रायो निवेशयितुमशक्यत्वात् वर्णक्रमेणैव सर्वाणि निवेशितान्यत्रेति ज्ञेयम् । एतादृशानि च वाक्यानि अन्यान्यपि अनवधानात् अनुद्धृतानि स्युः इति नास्ति गतिः । ) * अक्ष्यामये मुद्गौदनभोजनं निवातशय्या चेति, नित्यं शय्यासनं भोजनं च विकरोति । भा. १०।३।५।३२, * अक्ष्यामये मुद्गौदनो भोक्तव्यः । उदरामये पयः पातव्यं इति । सर्वत्र हि अक्ष्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः पीयते । ७।१। १।८, * अग्निना सिञ्चेत् उदकेन दीपयेत् इति ब्रुवन् विहन्येत । ३।२।२।४, * अग्निरुष्णः शीतमुदकं, स्वभाव एषः । १।३।१।३३ पृ. ३०४, * अग्निहोत्रवेलायामागन्तव्यमिति । यत्र अग्निहोत्रं नास्ति, तत्रापि अनपेता वेला । ११।३।१५।४८. * अग्न्यर्थो यागः । यथा उपाध्यायाय गां ददातीति । टुप्. * अग्न्यप्राये लिखितं दृष्ट्वा भवेदयं अग्न्यः इति मतिः । भा. २।२।४।१२. * 'अदुष्टेन हि चित्तेन सुलभा साधुमूलता। दुष्टमूलत्वलाभस्तु भवत्याशयदोषतः ॥' वा. १।३।२।३ पृ. १७१, * अद्यत्वेऽपि अन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषाः दृश्यन्ते । १।३।१।१ पृ. १६१. * 'अनुवाकस्त्रिः पठ्यताम्' इति । दण्डकलितवदसौ पठ्यते क्रमानुग्रहाय ( न तु स्वस्थानविवृद्ध्या ) । भा. १०।५।२५।८३, * अन्नं प्रीतेः साधनम् । १।२।२।२२. * अन्यत्राहितं अन्यत्रैव निपतितम् । बृहती पृ. १५३. * 'अन्यथैव हि शून्येषु दुर्बलैरपि चर्यते। अन्यथा बलवद्ग्रस्तैः सर्वशक्तिक्षये सति॥' वा. ३।३।७।१४पृ. ८३५. * अन्यदिच्छति अन्यत् करोति । भा. ६।१।१।३ पृ. १३५३, * अन्यस्य क्रियमाणं नान्यस्योपकरोति । १०। ६।१८।६५, * अन्यार्थमपि कृतं अन्यार्थमपि शक्नोति कर्तुम् । तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च । ३।१।६।१२ पृ. ६८९, * अन्यार्थमपि प्रकृतं अन्येन संबध्यते, यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च । ४।३।२।४ पृ. १२४८. * अन्योऽपि ( शब्दात् ) अक्षिनिकोचादेः प्रयोगोऽर्थेषु दृश्यते । वा. १।३।८।२४ पृ. २५५. * अपुंस्त्वं छादयन्तश्च अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः । तत एषा स्मृतिरित्यवगम्यते । ('अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं' इति स्मृतिः)। भा. १।३।२।३ पृ. १८६ स्मृतिस्तु पृ. १६८–६९, * अप्रसह्यकारी अपि हि कदा चिद् रोगेणोपहतः सिंह्याः पुत्रः सिंह एव । १।४।१२।२३–१ पृ. ३५६, * अभिनवं पटं दृष्ट्वा न च एनं क्रियमाणं उपलब्धवान् । अथ च अनित्यत्वमवगच्छति रूपमेव दृष्ट्वा, तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यतीत्यवगच्छति । १।१।६।२१, * 'अमात्येन मे ग्रामो दत्तः' 'सेनापतिना मे ग्रामो दत्तः' इति । न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति । राजैव प्रभवति । इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। एवं कर्मैव फलं ददाति, न देवता । गुणभूतदेवतायां तु स्तुत्या क्व चित् दातृत्ववादः । ८।१।१७।३४, * अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् । सिंहशब्दोऽत्र प्रतिकृतिवचनः । ८।३।६।२४. * 'अमी पिष्टपिण्डाः सिंहाः क्रियन्तां' इत्युक्ते प्रसिद्धसिंहसंनिधानात् पिष्टपिण्डेषु सिंहसादृश्यं कर्तव्यतया प्रतीयते । वि. ९।४।६. * अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते । एवंजातीयकं प्रमाणविरुद्धं वचनमप्रमाणम् । भा. १।१। ५।५ पृ. ४१, * अयं घटः त्रिषु नागदन्तकेषु स्थाप्यतां इत्युक्ते व्यासज्य स्थाप्यते न पर्यायेण ( एकैकस्मिन्– । नागदन्तकः नाम 'खुंटी' इति भाषा ) । ९।२।३।१४, * अयथार्थस्यापि उच्चारणं संभवत्येव । यथा 'दश दाडिमानि षडपूपाः' इति । भा., * अयोमुखं पिण्डच्छेदनं इत्युक्ते न सर्वायसं प्रतीयते । ८।३।२।५, * अर्थप्राप्ते यत्र प्रतिषेधो भवति, 'न विषं भक्षयितव्यं, न सर्पायाङ्गुलिर्देया, न कण्टकः पादेनाधिष्ठेयः' इति अक्रियैव तस्यार्थस्य भवति, न विकल्पः । १०।८।१।२. * अवश्यं च सर्वात्मकं वस्तु युगपद्ग्रहणासंभवात् तद्भागोपनिपातिपदविषयविवेकार्थं एकैकनिरूपणं आदरेण कर्तव्यम् । वा. १।३।१।२ पृ. १६८. * अविद्यमानेष्वपि

( गुणेषु ) स्तुत्या अस्य सामानाधिकरण्यवचनमुपपद्यते एव यथा इन्द्रो बृहस्पतिर्देवदत्तः इति। भा. ९।१।१५।४२, * अश्वमानयेत्युक्ते अश्वानयनं प्रतीयते, गामानयेति गवानयनम्। तत्र अश्वः अपैति, गौश्चोपजायते। तेन ज्ञायते अश्वशब्दस्य अश्वोऽर्थः, गोशब्दस्य गौरिति। ४।१।५।१५ * 'अस्य सूत्रस्य शाटकं वय' इत्युक्ते वानेन शाटकः क्रियते इति हि भाविनि संज्ञाविज्ञानात् अविरोधो विज्ञायते। वा. ३।७।१६।३३ पृ. १०९७.

* आकाङ्क्षायामसत्यां संनिधानमकारणं भवति यथा 'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति। भा. ६।४।६।२३ पृ. १४४३। यथा भार्यया संबध्यमानो राजा आनन्तर्येऽपि न पुरुषेण संबध्यते, निराकाङ्क्षत्वात्। टुप्. * आकाशगमनसुरकन्यालाभादयः अत्यन्तासन्तः। वा. १।२।१।१६. * आचार्यशेषं देवदत्तो भुञ्जानः यदि शेषं पूर्णकाय प्रयच्छति, ( तदा ) पूर्णको देवदत्तमुपलक्षयति, 'देवदत्तशेषं भुङ्क्ते इति, नाचार्यशेषम्'। भा. ३।२।१२।३१, * आज्यं क्रय्यं इति ( कस्मिंश्चित् देशे भवन्ति वक्तारः। तेन आज्यशब्दः असंस्कृतेऽपि उपचर्यते )। १।४।७।१०. * आपत्सु जातोद्वेगानां विवेक एवैकः शरणं परम्। बृहती. पृ. २४५. * आम्रे पुत्रवादः। अयमाम्रो यज्ञदत्तस्य पुत्रः इति निर्ज्ञातयज्ञदत्तसंबन्धस्य आम्रस्य पुत्रत्वमुच्यते। स एष भक्त्या प्रशंसावादः। भा. ७।३।४।१४, * आरामप्रोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च। आरामे सति तस्मै वेतनं दीयते, वेतनेन समर्थो भवति आरामं रक्षितुम्। ९।१।१।१ पृ. १६४१, * आश्रये प्रवर्तमाने तदाश्रितमपि प्रवर्तते यथा पटे आकृष्यमाणे तदाश्रितं चित्रमपि आकृष्यते। ८।१।१४।२३, * आह, शिष्टाः पुनः किमर्थं विगर्हन्ते ? उच्यते। विगर्हन्ते तावत्, किं नो विदितेन कारणेनेति। ६।२।३।१५.

* इतो ब्राह्मणाः भोज्यन्तां, इतः परिव्राजकाः इति। ( ब्राह्मणपरिव्राजकन्यायोऽयम् )। भा. २।१।१३।४३. * 'इदं दधि घृतं इमे शालयः देवदत्तो भोज्यतां, देवदत्तवत् यज्ञदत्तः इत्यादिषु सापेक्षेऽपि शब्दे अतिदेशदर्शनात्। तन्त्ररत्न. ६।१।१।१. * इदं दधि घृतं शाकं इमे शालयः देवदत्तो भोजयितव्यः। देवदत्तवत् यज्ञदत्तः तैलेन इति। भोजने यत् घृतेन शक्यते कर्तुं, तत् तैलेन क्रियते। तस्मात् यद्यपि न श्रूयते तैलेन स्नेहयितव्यमिति, तथापि समानकार्यत्वात् तैलं घृतस्य विनिवर्तकं भवति। भा. १०।२।२८।६७, * इदं दधि घृतं शाकं इमे शालयः देवदत्तो भोजयितव्यः। देवदत्तवत् यज्ञदत्तः तैलेन इति। भोजने तैलमुपकारकं श्रूयमाणं, यस्य प्राकृतस्य कार्यमभिनिर्वर्तयितुं शक्नोति, तस्य कार्ये विनियुज्यते घृतस्य। सामान्यं हि अस्य स्नेहनसामर्थ्यं घृतेनेति। १०।३।२।१६, * इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्व्यपत्या अनष्टप्रजा चेति। क्रेतव्या इत्यप्युक्ते प्रवर्तन्ते, गुणाभिधानात् प्रवर्तन्तेतरां क्रेतारः। बहुक्षीरेति च गुणाभिधानमवगम्यते। १।२।२।२०, * इष्टमर्थं प्रति अनुष्ठानं भवति। ६।१।१।३.

* उत्तराः कुरवः। दक्षिणान् कुरूनपेक्ष्य उत्तरा इत्युच्यते, न च ततोऽन्ये उत्तरा देशा न सन्ति। अथ च नियतापेक्षत्वात् उत्तरत्वं न जहति। भा. ११।१।८।३८. * 'उत्ताना वै देवगवा वहन्ति' भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलत्रैलोक्यभ्रमणादिना वा पुराणोक्तेन दृष्टिवशात्। यथैव वयमुपरि देवान् पश्यामः, एवमधो द्युपरिवर्तनात् अयमपि लोको देवैरुपरि दृश्यते इति उत्तानवहनदृष्टिः। वा. १।३।९।३० पृ. २९३. * उपानद्धारणादिका क्रिया कण्टकपरिहारार्था। टुप्. ६।३।१।२ पृ. १४०९. * उपेतमनुत्सृष्टं पुनरुपेतुमशक्यम्। उपेयमानं च पिष्टपेषणवत् अकिंचित्करं स्यात्। भा. १२।२।५।१६, * 'उभाभ्यां बाहुभ्यां इषूनस्यति' देवदत्तः इति गम्यते, न च यौगपद्येन। यदा दक्षिणेनास्यति, तदा सव्येन धनुःपृष्ठं नमयति न तेनास्यति, इति गम्यते तत्र व्यापृतत्वात्। ६।२।२।५. * 'उभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति'। इदमग्निप्रकरणे। 'दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति च। वा. ११३।४।९

पृ. २२१. * उभयमर्थलक्षणं प्रत्यक्षतो गम्यमानं गुणदोषकरं, तत्र विधिप्रतिषेधयोर्यतरो गुणवान्, सोऽनुष्ठीयते। भा. १०।८।१।३.

* 'एकं विनाऽप्यनुज्ञानात् क्रियते गत्यसंभवात्। क्रियतेऽनुज्ञया त्वन्यद्विशेषश्च तयोर्महान्॥ सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते। विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया॥' वा. १।३।२।४ पृ. १९१. * एकोऽपि बहून् पदार्थान् कर्तुं बहुभिर्नामधेयैरुच्यते (पाचकादिभिः)। भा. ३।७।९।२३. * 'एको रोगो हृतो यस्य यस्य वाऽपहृता दश। अरोगित्वे तयोर्भेदो न कश्चिदपि दृश्यते॥' वा. २।१।२।५ पृ. ३९६, * एकसंबन्धे च कृतार्थस्य आकाङ्क्षाऽभावात् पुनर्विनियोगान्तरानुपपत्तिः। ३।३।७।१४ पृ. ८२२. * एष दण्डः इष्टकाकूटे तिष्ठति प्रहरानेनेति। दण्डेन इति गम्यते, नेष्टकाकूटेनेति। भा. १०।२।३।१६.

* ओदनं पच इत्युक्त्वा तण्डुलानानय काष्ठान्याहर उदकं स्थाल्यादि चोपनय इत्युक्ते लोके तण्डुलोपनयनादीनां पाकाङ्गत्वप्रतीतिर्भवति। सु. पृ. ११९३. * 'ओदने दधि दत्वा अभ्यवहर्तव्यं' इति। ओदनस्य निर्देशमात्रं विवक्ष्यते, नाधिकरणत्वम्। भा. ९।४।९।३२.

* कः शुक्लो नाम, यत्र शुक्लत्वमस्ति। किं शुक्लत्वं नाम, यत्र शुक्लशब्दप्रवृत्तिः। क्व तस्य प्रवृत्तिः, यच्छुक्लशब्दे उच्चारिते प्रतीयते। भा. १।१।५।५ पृ. ७०, * कश्चित् आत्मीयां वेदनां परस्मै आचक्षीत दह्यमानस्येव मे भवति, यात्यमानस्येव मे भवति रुद्ध्यमानस्येव मे भवतीति। १।१।५।५ पृ. ७०. * कश्चिदुच्यते 'किं त्वयि भवति निमन्त्रिते, त्वयैवान्ये निमन्त्रणीयाः' इति। वा. ३।२।१५।३७. * कश्चित् चक्षुष्मान् स्वयं रूपं पश्यति, न च शक्नोति अन्यस्मै जात्यन्धाय तन्निदर्शयितुं, न च तन्न शक्यते निदर्शयितुं इत्येतावता नास्तीति अवगम्यते। भा. १।१।५।५ पृ. ६८, * कश्चित् जात्यन्धो वदेत् सराम्यहमस्य स्वरूपविशेषस्येति। कुतस्ते पूर्वविज्ञानमिति च पर्यनुयुक्तः जात्यन्धमेवापरं विनिर्दिशेत्। तस्य कुतः? जात्यन्धान्तरात्। एवं जात्यन्धपरंपरायामपि सत्यां नैव जातु चित् संप्रतीयुर्विद्वांसः सम्यग् दर्शनमेतत् इति। १।३।१।१ पृ. १६२. * कश्चित् बहुद्रव्यसमुदायेऽवस्थिते कं चिदभिधत्ते 'इतस्त्वं यावत्तृप्ति गृहाण' इति तत्र न तदवयवविशेषो गम्यते। अथ च न सर्वत्यागोऽध्यवसीयते। वा. ३।४।१४।४१ पृ. ९८०. * कश्चित् लोहं सुवर्णं वा अर्जयेत्, अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति। स तेन यथाकालं इष्टं दात्रादि करोति। भा. ११।३।२।२. * 'कस्य चिज्जायते तुष्टिरशुभेऽपि हि कर्मणि। शाक्यस्येव कुहेतूक्त्या वेदब्राह्मणदूषणे॥ पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः। तेभ्य एव हि यज्ञेभ्यः शाक्याः कुप्यन्ति पीडिताः॥ शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः। स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति॥ अन्ये तु सव्यलीकेन मनसा तन्न कुर्वते॥' वा. १।३।३।७ पृ २०४, * कस्य चित् पुरुषस्य एकः पादः पुरस्तात् गतः इति न तावता किंचित् वैलक्षण्यं भवति। तथाऽत्र द्व्यवदाने अधिकमपि प्रक्षेपांशे गते सति उत्पत्तिवाक्यशिष्टं यागसाधनत्वं समस्तेन अष्टाकपालेन प्रतिपन्नमेवेत्यविरोधः। ३।४।१४।४१ पृ. ९८२. * का नामेयं नदी, को नामायं पर्वतः किमिदं फलमिति, भवति च प्रश्नेनैवोपक्रमः। भा. ३।३।४।११, * कटं चिकीर्षन्तो वीरणानि उपाददते। १।१।६।१६, * कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्ते इति, अर्थात् कल्प्यते कटे आसीनः कांस्यपात्र्यां ओदनं निधाय भुङ्क्ते इति। १।४।१४।२५. * कर्मकाले च फलेन भवितव्यम्। यत्कालं हि मर्दनं तत्कालं मर्दनसुखम्। १।१।५।५ पृ. ४०, * कार्षापणे दीयमाने पादोऽपि दत्तो भवति। ६।७।९।२०, * काशिकेषु शालयो भुज्यन्ते गावः पीयन्ते इति। श्रुत्युपादाने अदृष्टं कल्पयितव्यमिति लक्षणाशब्दः परिकल्प्यते। (शालयः नाम शालितण्डुलाः। गावः नाम गोपयः)। ९।१।१२।३९ वर्णक २, * काष्ठं दह्यमानस्य तृणस्य नोपकारे वर्तते। तृणं तु काष्ठस्य उपकुर्यात्। ६।४।१४।४५, * काष्ठान्याहर्तुं प्रस्थित उच्यते 'भवता शाकमपि आहर्तव्यं' इति। काष्ठाहरणे शाकाहरणमुपाधिः क्रियते इति। किमिदं उपाधिः क्रियते इति? काष्ठाहरणाधिकारसमीपे द्वितीयं

कर्मोपधीयते । सति काष्ठाहरणे इदमपरं कर्तव्यमिति । ४।३।९।२०, * काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते । तेभ्यः स्वामी विभज्य निर्दिशति 'इदं तुभ्यं इदं तुभ्यं' इति । १०।३।१२।५१, * काष्ठवाहप्रभृतिभ्यो यद्दीयते तदसंकीर्तितेऽपि परिक्रये आनमनार्थमेव भवति । १०।२।८।२३. * ' किमौषधं ज्वरस्येति पृष्टो यदि वदेदिदम् । येनासौ नश्यतीत्येवं किं तेन कथितं भवेत् ॥ ' श्लोवा. संबन्धाक्षेपपरिहारे ३. * 'कुक्कुटावानय मिथुनं करिष्यामः ' इत्यत्र सामर्थ्यात् द्वितीया स्त्री आनीयते । टुप्. ६।१।५।२२ पृ. १३६५.

* गच्छन् कश्चित् पूर्वपादं अपरं करोति, अपरं च पूर्वम् । भा. १०।३।२।१५. * ' गर्दभेनापनीतं हि हरेत्राश्वश्चिराद् गतः । ' वा. १।३।२।३ पृ. १७८. * गायनाः गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति, तान्यपि तेनैव गीतिस्वरेणैव उच्चारयन्ति, मा भूत् स्वरसंतानस्य विच्छेद इति । भा. १२।३।८।२१, * गायनैः अङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकालगणनाऽर्थानि, नार्थसंबन्धाय उच्चार्यन्ते । सुखं हि अक्षरैः गीतिकालः परिच्छिद्यते । ९।२।१०।३५, * गावीशब्दात् सास्नादिमति (गो-)प्रत्ययस्य अनिवृत्तिः । १।१।६।१८, * गृहान्निर्गताः सर्वगृहजनमपश्यन्तः, पुनः प्रविश्य उपलभमाना अपि न प्राक् प्रवेशात् विनष्ट इति अवगच्छन्ति । १।१।६।२०, * गोमयान् कुरु इति संवाहे । ( संवाहः समाहरणम् ) । तथा शब्दं कुरु इति शब्दप्रयोगं कुरु इति भविष्यति । १।१।६।१४, * ' गौरयं वाहीकः ' इति तु संवाहे ( संवहनकर्तरि ) वाहीके गौणः शब्दः प्रवर्तते । १०।२।१७।४७, * ' गौर्न पदा स्प्रष्टव्यः ' इति गोत्वसंबन्धेन श्रूयमाणा धर्माः तत्रासंभवन्तः तत्संबद्धेषु पिण्डेषु विज्ञायन्ते । तस्य च गोत्वसंबन्धस्य अविशेषात् सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति । ७।१।१।२ पृ. १५२६. * ' गौर्वाहीकः ' इति गोशब्दो न वाहीके तिष्ठन्मूत्र-भक्षणादि ( तिष्ठता मूत्रकरणं, तिष्ठता अन्नभक्षणं इत्यादि ) यत्, तल्लक्षयति । टुप्. ११।३।१५।४८. * ग्रामेण उदपानः खेयः । ग्रामेण तडागः खेयः इति । ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैः खन्यते, न प्रतिपुरुषं कूपभेदः । भा. ११।१।१।१ पृ. २१००, नायमेकान्तः यत् समुदायशब्देन संयुज्य उच्यते, तत् समुदितानामेव भवति इति, भेदेनापि किंचित् भवति । यथा गणाय स्नानम् । गणायानुलेपनमिति । अनुलेपनादिशेषो गणशब्देन समुदायवचनेनापि संयोज्योक्तो न समुदायेन संबध्यते । केन तर्हि ? समुदायिभिः । प्रतिपुरुषं हि स्नानाद्यावर्तते । ११।१।१।२.

* घटौ आनीयेयातां इत्युक्तौ द्वितीयो घट एवानीयते, नाश्वादिः । टुप्. ६।१।५।२२ पृ. १३६४.

* जीविष्यति विना धनेनेति एतत् विप्रतिषिद्धम् । भा. ६।१।८।४०. * ज्वरहरतक्षकचूडारत्नालंकारोपदेशवत् अप्रामाणिकत्वम् । कणिका. पृ. ३३८.

* डित्थडपित्थयोर्माता डित्थमाता इत्युच्यते । न्यायरत्नाकरः १।१।८ श्लो. वा. ८.

* तदेव तु कदा चित् प्रमाणं कदा चिदप्रमाणं इति न कथंचिदपि विश्रम्भः स्यात् । वा. १।३।२।३ पृ. १७६. * तद्यथा चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवालकेशी नदी इति नद्याः स्तुतिः । तथा ' चत्वारि शृङ्गा०' इति यज्ञस्तुतिः । भा. १।२।४।३८, * तुण्डमात्रे ( तुण्डनामकस्य जनन्यै ) दीयतां इति, यद्यपि सा तुण्डवित्थयोर्माता, तथापि तस्यै दीयते कार्त्स्न्येन हि तस्य सा माता भवति । नहि व्यासज्यते मातृत्वम् । ६।६।१।१०. * ' तेन यद्यपि सामर्थ्ये प्रत्येकं सिद्धमन्यदा । तथापि युगपद्भावे जघन्यस्य निराक्रिया ॥ ' वा. ३।३।७।१४ पृ. ८३४. * त्रिषु कुलेषु देवदत्तो भोजयितव्यः इति । यदा त्रिसङ्ख्या कुलैः संबध्यते, तदा अभ्यासो लक्ष्यते । भा. ९।२।३।२०, * ' त्रिषु गृहेषु देवदत्तो भुङ्क्ते ' इत्युक्ते न यौगपद्यमवगम्यते। पर्यायेणापि भुञ्जाने भवत्येष वादः । अत्रोच्यते । न तत्र त्रिसंख्या भुजिं प्रति उपदिश्यते, येन एतदेवं भवति । तत्र गृहशब्देन संबध्यते । त्रिषु गृहेषु , न द्वयोरेकस्मिन् वेति । यदा भुजिः निर्वृत्तिं प्रति उपदिश्यते, तदा यौगपद्येनैव भोजयितव्यः । ९।२।३।१४.

* दण्डी इति पुरुषोपसर्जनीभूतो दण्ड एव विधीयते, पुरुषस्य प्राप्तत्वात् । टुप्. १०।४।२।३ पृ. १९१४. * दण्डी छत्री । ये नैमित्तिकाः शब्दाः, ते निमित्तमुपलभ्य प्रयुज्यन्ते यथा दण्डी छत्री इति । भा. ७।३।११।२९, * 'दण्डेन युध्यते' इति वचने न दण्डिरूपं शब्देनाभिहितम् । यदि तु तेन लक्षितेन प्रयोजनं स्यात्, शक्यते तेन लक्षयितुम् । १०।१।१।२ पृ. १८००, * 'दण्डो मनोहरो रमणीयश्च, प्रहर शीघ्रम्' इति रमणीयमनोहरसंबन्धेऽपि सति संनिहितत्वात् 'प्रहर शीघ्रम्' इत्येतैः पदैः संबध्यते । ९।३।३।९, * 'दधि-घृत–शालिभिर्देवदत्तो भोजयितव्यः, देवदत्तवत् यज्ञदत्तस्तैलेन' इत्युक्ते स्नेहनसामान्यात् तैलं स्नेहनकार्ये एव विनियुज्यते, न ओदनकार्ये इति । १०।६।७।२२, * दारुणि सूत्रे वा यदा दारुकारेण तन्तुवायेन वा कर्म कृतं भवति, तदा ( अनः वासः ) एतौ शब्दौ प्रवर्तेते न प्राक् । अतो विज्ञायते अनोवासःशब्दौ कर्मनिमित्तौ इति । ७।३।११।२८, * दुर्बलस्य बाधो न्याय्यो, न बलीयसः । १२।१।२।७. * दृश्यते चाद्यत्वेऽपि अर्थस्मरणं ग्रन्थनाशश्च । वा. १।३।१।२ पृ. १६५. * दृश्यन्ते तावत् अल्पस्य स्थिरभावस्य कारकाण्येव अभ्यस्यमानानि वीर्यवत्तमानि स्थिरशरीरतामुत्पादयिष्यन्ति (रसायनानि) । 'शतायुः पुरुषः' इति सत्यपि वचने अधिकं जीवनं दृश्यते एवेति । अत्रोच्यते । नायमेकान्तः । कदा चित् यां च यावतीं च शरीरस्थिरतामुत्पादयेयुः, न द्राघिष्ठकालम् । यथा प्रक्रामन्तः ( दिर्घो प्लुतिं–झम्पां कुर्वन्तः ) अभ्यासात् प्रक्रमाणां वृद्धेः यां च यावतीं च मात्रां प्राप्नुवन्ति, न तु अभ्यस्यन्तः पुरुषायुषेणापि योजनमात्रं प्रक्रमेयुः । भा. ६।७।१३।३४. * दृश्यन्ते हि अद्यत्वेऽपि श्रोत्रियाः लौकिकेऽप्यर्थे विवक्षिते तद्भाषासमानार्थान् सकलमन्त्रानपि उदाहरन्तः ( संन्यासिनः पूजने 'दीर्घतमा मामतेयो जुजुर्वान्' इति सर्वं मन्त्रं विनियुञ्जते, उत्तरार्धे 'यतीनां' इति पदस्य पाठात् । वस्तुतस्तु यतीनां इति अपां इत्यस्य विशेषणं, न तु संन्यासिनां इत्यर्थपरम् ), किमङ्ग पुनः पादान् पदानि वा । ( यथा वाईक्षेत्रे पावीरवीशब्दं कन्यावाचकं कुर्वन्ति 'पावीरवी कन्या' इति मन्त्रे पावीरवीशब्दोत्तरं कन्याशब्दपाठात् । 'समनातूर्णिरुपयासि' इति समनातूर्णिशब्दं 'रुपया' – [ सोळा आणे ] वाचकं कुर्वते । व्यक्तवाचां इति पदं 'चार आणे' इत्यर्थकं 'व्यक्तवाचां समुच्चारणे' ( चार आणे ) इति पाणिनिसूत्रगतपदसादृश्यात् । 'त्वं पुरा' नाम पाञ्चजन्यः, 'त्वं पुरा सागरोत्पन्नो' इति मन्त्रात्, पाञ्चजन्यश्च नाम शङ्खः 'पाञ्चजन्याय विद्महे' इति मन्त्रात्, शङ्खश्च फाल्गुनपूर्णिमायां क्रियमाणा 'बोंब' तथा च 'त्वंपुरा–पाञ्चजन्य–शङ्खशब्दानां' लक्षितलक्षणाऽदिना 'बोंब मारणें' इत्यर्थः, 'वाह' इत्युक्ते 'ऊठ = उत्तिष्ठ' इति प्रतीयते 'वाह ऊठ्' इति पाणिनिसूत्रात् । इत्याद्युदाहरणानि भूयिष्ठानि । के. ) वा. १।३।८।२४ पृ. २६१, * दृश्यन्ते हि अनागमिकान् अपि अर्थान् आगमिकत्वाध्यारोपेण के चिदद्यत्वेऽपि अभिदधानाः । १।३।१।१ पृ. १६०. * देवग्रामो देवक्षेत्रं इत्युपचारः । भा. ९।१।४।१० पृ. १६५६, * देवदत्तोऽत्र तिष्ठति इत्युक्ते न तिष्ठन्नेव तिष्ठतीत्युक्तः एतावता देवदत्तादन्योऽयमभिधीयते इति गम्यते । १०।७।९।३०. * 'देवदत्तः पचति' इत्यत्र न देवदत्तार्थः पाकः । टुप्. ६।१।१।१ पृ. १३४६. * देवदत्तः प्रातरपूपं भक्षयति, मध्यंदिने विविधमन्नमश्नाति, अपराह्णे मोदकान् भक्षयति इति एकस्मिन् अहनीति गम्यते । भा. ५।१।११।२०, * देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः माठरः कौण्डिन्यो भारद्वाज इति । उत्तरेष्वपि भोजयितव्यः इति प्रवृत्त्या अनुबध्यते । ८।१।३।३, * 'देवदत्तो मथुरायां ब्राह्मणः' इति प्रकर्षावगतिर्विज्ञायते । १२।४।१४।३५. * देवदत्तो यज्ञदत्तमनुगच्छति । किंचिदकुर्वतो देवदत्तस्य यज्ञदत्तकर्मकर्तृकानुगमनकर्मत्वायोगात् द्वितीयोक्तकर्मत्वान्यथाऽऽनुपपत्त्या कर्तृत्वमात्रोपादाने सति क्रियाऽन्तरानुपादानात् तुल्यक्रियाकल्पनं युक्तम् । सु. पृ. ९४८. * देवदत्तः शोभनो विद्वान् इति एवंगुणविशिष्टोऽपि

यज्ञदत्तमपेक्ष्य अविद्वान् अशोभनश्च । तत्र ये देवदत्तस्य निन्दास्तुती, न ते देवदत्तार्थे उच्चार्येते, किं तर्हि यज्ञदत्तार्थे । टुप्. १०।८।४।७. * देवदत्तः स्थानोपवेशनगमनशयनाद्यवस्थाभेदेऽपि देवदत्तत्वं नापैति, तथा ज्योतिष्टोमात्मनः संस्थान्तरोपजनापाये तत्त्वं नापैति । वा. ३।६।१६।४१. * 'देवदत्तस्य गौरानेयः' इत्यादौ वस्तुतो देवदत्तयज्ञदत्तादीनां गोसंबन्धस्तुल्यत्वेऽपि आनयनान्विते गवि देवदत्तस्य असाधारण्यात् विशेषणता । सु. पृ. ८९४. * देवदत्तस्य नप्तेति, पुत्रेण चासौ अन्तरितः, अथ च देवदत्तेन मुख्येनैव संबन्धेन संबद्धः । भा. ३।१।९।१८ पृ ७२९ * देवदत्तस्य प्रयोजनं साधयतः शुक्ले वाससी ज्ञाते यदन्यस्यापि प्रयोजनं साधयतः, ते एव प्राप्नुतः त्वदीयेन ( अनुमानेन । न च तद्युक्तम् ) । टुप्. ८।१।२।२. * देवदत्तस्य युद्धभोजनावस्थयोः स्थानैक्यनियमो नास्ति । सु. पृ. ८५८. * देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न वस्त्रालंकारः । यस्य न किं चित् परकीयं कार्यमापद्यते, तत्प्रतिषेधो न युक्तः । भा. १२।१।२।७. * देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तां इतिवत् आवृत्तेः न्यायलभ्यत्वेन शास्त्रानधीनत्वात् भिन्नपदोपादाने प्रत्येकं वाक्यसमाप्तिः । सु. पृ. १०१६. 'देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तां' इत्युक्त्वा पुनर्यदा श्रूयते 'पञ्चम्यां देवदत्तो भोजयितव्यः' इति, तत्र न भोजनं विधीयते प्राप्तत्वात् त्रयाणामपि भोजनस्य, किंतु पञ्चम्यां इतरयोर्निवृत्तिर्विधीयते । रत्न. १०।७।९।२८. * देवदत्तयज्ञदत्तविष्णुमित्रेभ्यः शुक्लनीलपीतवस्त्राणि देयानि इत्युक्ते शुक्लवस्त्रादीनां यथाक्रमं देवदत्ताद्यङ्गत्वप्रतीतिः । सु. पृ. ११९३. * देवदत्तयज्ञदत्ताभ्यां कर्तव्यं इति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं, न विभक्त्या अभिधास्यते । तथापि द्विवचनमेव भवति, न बहुवचनम् । भा. ९।३।४।१४, * देवदत्तयज्ञदत्तयोः पाकेन समस्तयोरपि संयोगे उच्यमाने एकः किंचित् करोति, अपरोऽपि किंचित्, न यदेकेन कृतं तदेवापरः करोति । तत्र व्यस्तयोरपि क्रियमाणयोः साहित्यं न विरुध्यते । १०।६।८।२५, * द्वौ आनयेत्युक्तः पुमांसौ आनयति । द्वे आनयेति स्त्रियौ । तेन स्त्रियो वाचकमेकारान्तं इति गम्यते । ओकारान्तमपि पुंसोर्वाचकमिति । ६।१।५।२२ पृ. १३६५.

* धनत्यागेन अत्यन्तोदारस्यापि गृहजनः पीड्यते । वा. १।२।१।१० पृ. १२४.

* न गन्तव्यं न भोक्तव्यं इति, सति गमनप्रसङ्गे भोजनप्रसङ्गे च भवति । भा. १२।४।१०।३०. * न च अचेतनस्य आभिमुख्यं संभवति । वा. १।२।४।३१-५. * न च अदृष्टोऽर्थः प्रमाणमन्तरेण शक्योऽभ्युपगन्तुम् । भा. ६।७।१३।३४, * न च अन्यथाऽनुपपत्तिरिति अन्यः अस्यानुपपद्यमानोऽर्थः शक्यते कल्पयितुम् । यथा 'अग्नौ तिष्ठति माणवकः' इत्युक्ते ज्वलने अनुपपद्यमाने नाश्वे गवि वा कल्प्यते । अग्निसमीपवचनः एव अध्यवसीयते । ३।१।६।१२ पृ. ६८७, * न च अन्यस्य उक्तोऽर्थः अन्यस्य भवति । नहि यत् देवदत्तस्य ग्रासाच्छादनादिकं, तत् यज्ञदत्तस्य भवति । ७।१।१।१ पृ. १५२५, * न च अश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः । तस्मात् तत्र न वर्तिष्यते । १।३।९।३३ पृ. ३०३. * न च एक एव प्रकारो मुखशोभायाः, संस्थानं रमणीयता लावण्यं चेति । स्त्रीविषयं हि एतत् । विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते । वा. १।२।१।१५ पृ. १२९. * न च कल्प्यमानस्य प्रमाणमस्ति । भा. ६।२।३।१४, * न च कश्चित् येन कर्मकरणेन सामर्थ्यमुपजन्यते, तदर्थं पुरुषान् क्रीणाति । ईप्सितेभ्यः पदार्थेभ्यः क्रीणाति । तेन यस्य सामर्थ्यं भवति, तत् तेनैव कर्तव्यम् । ३।८।२।४, * न च कृतस्य क्रमानुग्रहार्थं पुनःक्रिया न्याय्या । १२।१।७।१५, * न च गम्यमानं, विना कारणेन, अविवक्षितमिति शक्यं वदितुम् । भवन्ति च द्विष्ठानि वाक्यानि । यथा 'श्वेतो धावति' 'अलंबुसानां याता' इति । ( श्वेतः श्वेतगुणः इति एकपक्षे, श्वा इतः इति अपरपक्षे । एवं अलंबुसानां इति पदैक्यं पक्षे, अलं बुसानां इति पदद्वयं अपरपक्षे ) । ४।३।२।४ पृ. १२४८, * न च घृतस्य धारणकार्यमस्ति । १२।१।१०।१९, * न च निर्वर्तितः शक्यो निर्वर्तयितुम् । यथा कृतः कर्तुम् । १२।३।१।५.

* न च परस्परेण असंबद्धानां यौगपद्यं संभवति। न चैषां कश्चित् संबन्धे हेतुरस्ति। वा. २।१।२।५ पृ. ३९३. * न च प्रमाणेनावगतं प्रमाणान्तरेणानवगतं इत्येतावता अनवगतं भवति। भा. १।१।५।५ पृ. ५९, * न च यदपरेण सह क्रियते तत् केवलेन कृतं भवति। यदि हि केवलेन कृतं स्यात्, तेन कृते अपरः किं कुर्यात्? ६।५।१७।४९. * न च वर्तमानं साधकतमं वा उपदिशन् वेदः शक्यमर्थं विदध्यात्। वा. १।२।३।२९ पृ. १४१. * न च विगुणः कंचिदर्थं साधयेत्। भा. ३।५।१८।४६, * न च शक्यं परिपूर्णे वाक्ये अध्याहर्तुम्। यथा अक्षेमेऽपि पथि भवति विप्रलम्भकोपदेशः 'क्षेमोऽयं पन्थाः गच्छतु भवाननेन' इति। परिपूर्णमेवेदं वाक्यं नाध्याहारमर्हति विप्रलम्भकत्वेऽपि। ४।३।५।१०, * न च शक्यते परशब्देन परो वदितुम्। किमत्र वचनं करिष्यति। ३।२।२।४ पृ. ७५४. * न च सर्वप्रधाने वस्तुनि अनादरो युक्तः। वा. १।३।८।२४ पृ. २५६, * न च स्तोतुमपि परशब्दः परत्र वर्तते। १।४।१२।२३ पृ. ३५५. * न च स्निग्धस्य स्नेहनं क्रियते। तथा भवति लोके वादः 'यदस्माभिः कान्ताराग्निर्गतैः देवदत्तस्य गृहे स्निग्धमन्नं भुक्तं, तेन वयमरूक्षाः कृताः' इति सत्स्वपि अन्येषु स्निग्धेष्वेव भोजनेषु। भा. ४।१।१४।३८, * न चानधीत्य अश्वमेधेन यजते। १।२।१।४, * न चानिष्ट्वा अग्नीषोमीयेण सोमेन यजन्ते। १।२।१।४. * न चानुमानेन शक्यः शास्त्रार्थः अनुष्ठातुम्। टुप्. ६।१।११।४३. * न चान्यत्र संस्क्रियमाणा अन्यत्र संस्कृता भवन्ति। भा. १०।६।१८।७१. * न चार्थप्राप्तं विवक्षितमित्युच्यते। टुप्. ५।२।८।१६. * न चाशक्यमुपदेशार्हं भवति। भा. ६।५।१९।५४. * न जातु 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दो जघन्यवृत्तिः इति 'गङ्गायां मत्स्यः' इत्यत्रापि तथा। न च एकत्रानुपपत्त्या कथं चित् लक्षणया शब्दः प्रवृत्तः, इति अन्यत्रापि सति संभवे तत्रैव प्रवर्तनीयः। कणिका. पृ. ३९३, * न जातु 'देवदत्ताय देहि गां अथ देवाय स्वर्णं' इति देवशब्दादपि देवदत्तं स्वर्णभाजमवगच्छन्ति जनाः। संनिधावपि पूर्वासंबद्धार्थे संज्ञाऽन्तरं प्रतीयमानं पूर्वकर्मबुद्धिं व्यवच्छिनत्ति, अपूर्वबुद्धिं च प्रसूते इति लोकसिद्धम्। पृ. ३९३. * ननु कथं मृगीमानय इति न मृग आनीयते। नैवम्। अशाब्दं तु तत् पूर्वो धावतीति यथा। लिङ्गं विवक्षितम्। वाक्यार्थस्य श्रुत्या अप्रतिषिद्धत्वात्। भा. ४।१।६।१७, * 'न भवन्तः समाजं गच्छन्ति, न भवन्तः प्रेक्षका भवन्ति' इत्युक्ते नूनमन्ये गच्छन्तीति गम्यते। ९।३।१।२, * न यदन्येनापि बाध्यते तत् भङ्गुरं अन्यत्रापि इत्यवगन्तव्यम्। किं चित् तु प्रति कस्य चित् प्रभावः। ३।३।७।१४ पृ. ८५३, * न वा अदृष्टपूर्वे स्मृतिर्भवति। १।१।५।५ पृ. ६५, * न सर्पायाङ्गुलिं दद्यात्, तत्र दोषदर्शनात् नियोगतो न सर्पाय अङ्गुलिर्दीयते। कण्टको वा न पादेनाधिष्ठीयते। ६।२।५।२०. * 'न स्वामिनि स्थिते कश्चिद् दासात् प्रार्थयते फलम्'। वा. २।१।५।२९. * नहि अकुर्वति कारयतीति भवति। कर्तुर्हि प्रयोजको हेतुः। भा. १०।२।१७।४७. * नहि अग्न्यातपप्रभवो दाहः शैत्यसंबन्धीत्युच्यते। वा. २।१।२।५ पृ. ३९७. * नहि अनुपलम्भमात्रेण नास्ति इति अवगम्य, नष्टः इत्येव कल्पयन्ति। भा. १।१।६।२०. * नहि अन्यगुणः अन्यगामी भवति। वा. १।५।४।३१ पृ. १४५, * नहि अन्यत्र श्रुतं अन्यविषयस्य बाधने समर्थम्। ३।५।१९।४७. * नहि अन्यस्य वितथभावे अन्यस्य वैतथ्यं भवितुमर्हति अन्यत्वादेव। भा. १।१।२।२ पृ. १७. * नहि अन्यार्थेन संनिहितेनापि अन्यो विशेष्यते। यथा 'अश्वेन गच्छति श्वेतेन पटेन प्रावृतः' इति पटसंबन्धेन निराकाङ्क्षेण संनिहितेनापि श्वेतगुणेन अश्वो न विशेष्यते, तथेहापि। शा. ३।२।८ पृ. २२०. * नहि अप्राप्तस्य प्रतिषेधोऽवकल्पते। भा. ६।१।११।४३, * नहि अर्थः कृतः सन् कर्तुं शक्यते। १२।१।१।५. * नहि अर्थाध्यवसानात् अन्यादृशं नाम व्यवहाराङ्गं भवति। वा. १।४।१२।२३-१ पृ. ३५८. * नहि अस्मर्तारः, इच्छन्ति इति उपपद्यते। भा. १।१।५।५ पृ. ६५, * नहि उपेतं अनपवृक्तं सत् शक्यमुपेतुम्। अप्राप्तस्य हि

प्रापणं उपगमनम्। तत् प्राप्तस्य न शक्यम्। १२।१। ११।२०, * नहि उल्का ( चूड, पेटकें कोलीत ) प्रकाशनेन अप्रयुज्यमाना भस्मना न प्रयुज्यते। ९।३। ५।१८, * नहि एकोऽर्थः बहुभिः उच्यमानः पुनरुक्तो भवति। २।४।२।१६, * नहि कश्चित् जात्या अद्रव्य एव पुरुषः। अस्ति उपायो येन द्रव्यवान् भवति। ६।१।८।४०. * नहि कश्चित् 'अप्रसिद्धं वस्तु कुरुष्व' इत्युक्तोऽपि अध्यवस्यति। नापि तेन व्यापृतेनापि तन्निमित्ता निष्पत्तिरध्यवसीयते। **वा.** ३।७।१६।३३ पृ. १०९७. * नहि कश्चिदृते स्वार्थात् परार्थे परः प्रवर्तते। **भा.** १०।६।१५।५९, * नहि कस्य चित् का चित् संख्या न भवति। १०।४।४।७, * नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते। ४।३। १६।३९. * नहि केवलभोजी देवदत्तः अन्यैः सह पङ्क्त्यां भुञ्जानः अन्यत्वं प्रतिपद्यते। **वा.** २।३।११।२४ पृ. ६१३. * नहि गमनसाधनस्य रथस्य चक्राद्यङ्गेषु अन्यतमस्य वैकल्ये गमनसाधनत्वं दृष्टम्। **वि.** ६।३।२. * नहि चन्द्रमसमादित्यं वा उपलभ्य संबन्धान्वेषणा भवति कस्यायमिति। न कस्य चिदपि इति अवधार्यते। **भा.** १।१।५।५ पृ. ६२, * नहि दग्धुकामस्य उदकोपादानं असति दाहे अनर्थकमिति दहनशक्तिमस्य जनयेत्। ६।१।१।३ पृ. १३५३. * नहि दधिपिटकं दृष्ट्वा कुन्दपिटकं च, प्रकृतिविकारभावोऽवगम्यते। ( तेन ) सादृश्यमात्रं दृष्ट्वा न प्रकृतिर्विकृतिर्वा उच्यते। **भा.** * नहि देवदत्तः अत्यन्तमधुरमधुपयःप्रभृतिभिः प्रीयमाणो यज्ञदत्तसाहचर्यात् सौवीरप्रियो भवति। **टुप्.** ९।१।४।९. * नहि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति। **भा.** १।१।२।२ पृ. १७, * नहि द्वयोर्विधीयमानयोः परस्परेण संबन्धो भवति। ७।१।१।२ पृ. १५२७. * नहि निष्प्रतिष्ठप्रमाणात्मलाभो दृश्यते। **वा.** १।३।१।२ पृ. १६३, * 'नहि पूर्वमबाधित्वा परेषां जन्म लभ्यते।' ३।३।७।१४ पृ. ८२९. * नहि प्रत्यक्षदृष्टं मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तः विनष्टं परिकल्पयन्ति। परिकल्पयन्तः द्वितीयसंदर्शने मातरि जायायां च पितरि वा नाश्वस्युः। **भा.** १।१।६।२०, * नहि प्रमाणे प्रत्यक्षे सति, अप्रमाणता स्यात्। १।१।६।२०. * नहि यत् देवदत्तस्य युध्यमानस्य स्थानमवगतं तदेव भुञ्जानस्यापि भवति इति गम्यते। कार्यप्रयुक्ता हि स्थानविशेषादयः, न स्वरूपप्रयुक्ताः। स्वरूपस्य स्थानान्तरेऽपि अविभागात्। **वा.** २।२। १३।२९ पृ. ५६९, * नहि यावत् किंचिदावरणं, तस्य सर्वस्य मूलं इह प्रमाणीक्रियते धर्माजिज्ञासाऽधिकारात्। १।३।१।२ पृ. १६५. * नहि यो यत् कामयते, तस्य तत्कर्तव्यता उपदेष्टव्या, वेदैवासौ 'मयैतत् कर्तव्यं' इति। उपायं तु न वेद, तमाकाङ्क्षते। **भा.** ६।२।३।१४, * नहि यौगपद्येन विधातुं शक्यते लक्षणत्वेन चोच्चारयितुम्। ३।१।७।१४ पृ. ७१५. * नहि लोष्टं पश्यतः तद्दर्शनं नेष्टप्रयोजनं इति सुवर्णदर्शनता कल्प्यते। **वैद्यनाथी.** १।२।१।१ पृ. १०६. * नहि विज्ञानस्य कश्चिद्विशेष उपलभ्यते रूपं प्रति, अस्य भङ्गुरस्येव रूपं, अस्य दृढस्येवेति। **भा.** ३।३।७।१४ पृ. ८४२. * 'नहि शास्त्रशतेनापि प्रमादाशक्तिकारितात्। निवर्त्यन्ते प्रयोक्तारः प्रयोगादिति दृश्यते॥' **वा.** १।३।८।२४ पृ. २५५, * नहि शुक्तिकादृष्टासत्यरजतो यदि रजतान्तरं तद्देशे लभते, ततोऽभिसंधीयते शुक्तिकावत्तु किं चिदालम्बनम्। १।२।१।१० पृ. १२५. * नहि स एव अप्रमादपाठः, यो विधानार्थो मुख्यार्थश्च। अनुवदन् अपि अर्थे, लक्षणयाऽपि ब्रुवन्, वाक्ये समवायं गच्छति। न च प्रमादपाठो भवति। **भा.** १०।२।१७।४७. * नाटकादिनिबन्धवत्। **वा.** १।३।८।४ पृ. २७४. * नान्तरेण परिक्रियं, परार्थे परः प्रवर्तते। **भा.** १०।२।८।२५. * नान्यत्र श्रुतं अन्यत्र विनियोक्तव्यं इत्युक्तम्। ( २।३।७ इत्यत्र भाष्ये )। **वा.** ३।५।१।७. * नायमेकान्तो यत् प्रथमाऽन्तं गुणभूतं, प्रधानमपि भवति क्रियायां, यथा 'मलिनः स्नायात्' इति। **टुप्.** ६।१।१।१ पृ. १३४६. * नास्ति दृष्टेऽनुपपन्नं नाम। **भा.** १।१।५।५ पृ. ५८. * निःशेषसंस्कारच्छिदा मरणेन अन्तरितत्वात् कर्मफलसंबन्धानुसंधाना-

संभवः। वा. १।३।१।२ पृ. १६५, * ' नित्यं न भवनं यस्य यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ ' न कश्चित् खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते । २।१।१।१ पृ. ३७७, * नियमः प्रायेणापि हि क्रियते, यथा अग्न्यप्राये लिखितं दृष्ट्वा अग्न्योऽयं इति बुद्धिर्भवति । भा. ६।८।१०।४३, * ' नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः । नीलकौशेय-संवीताः प्रनृत्यन्तीव कादम्बाः ॥ ' (रामाः कौशेयसंवीताः कादम्बा इव शोभनाः । ' इत्युराधें न्यायरत्नमालायाम् । वैद्यनाथी. ) १।१।७।२४. * नेत्रमपि उद्धृत्य अयं ददाति इति लोकेऽपि त्यागिनं स्तुवन्ति । वा. १।२।१।१० पृ. १२५.

* पटो भवतीति पट उत्पद्यते इत्यर्थः । निराकाङ्क्षं च पदद्वयम् । यदा च तस्मिन्नेव ' रक्तः ' इत्यपरं श्रूयते तदा रागसंबन्धो भवतीत्यर्थः । भवति च रक्तं प्रति आकाङ्क्षा । भा. १।२।१।७ पृ. ११७, * पयसा षाष्टिकं भुञ्जीत, यदि शालिं भुञ्जीत तत्र दधि उपसिञ्चेत् इति। एवंजातीयकेन वाक्येन शालिभोजनं विहितं भवति। कथं पुनः शालिभोजनं तेन वाक्येन विहितं भवतीति ? उच्यते । व्यत्यासेन संबन्धः कल्प्येत, यदि दध्युपसेचन-मिच्छेत् शालिं भुञ्जीतेति । ननु न खलु इच्छतेः परां लिङ्विभक्तिमुपलभामहे, सिञ्चतेर्हि तां परां समा-मनन्तीति । सिञ्चतेः खलु सा परा समुच्चरन्ती कमेरर्थं गमयति । कामप्रवेदने हि तां मन्यामहे इति । यदि दधि उपसेचनमिच्छेत् शालिं भुञ्जीतेति दध्युपसेचन-संकीर्तनात् दध्युपसिक्तं शालिं भुञ्जीतेति तेनैक-वाक्यत्वात् गम्यते । २।३।१।१ पृ ५७३–७४, * परिधत्ते । ननु कौपीनाच्छादने परिधत्ते इति भवति, नान्यकार्यके । उच्यते । नैतदेवम् । उपरिवाससोऽपि कार्ये परिधत्ते इति भवति । तद्यथा कम्बलं परिधत्ते, रौरवं परिधत्ते इति सर्वतो धत्ते परिधत्ते इत्यवयवप्रसिद्ध्या भवति । १०।४।८।१४, * परिमाणं यत् प्राकृतं तस्य कार्ये वर्तमानं, तन्निवर्तयेत् । यथा इदं दधि, घृतं, शाकं, इमे शालयः देवदत्तो भोज्यतां, देवदत्तवत् यज्ञदत्तः तैलेनेति । तैलं हि भोजने स्नेहनेनोपकरोति । तत् स्नेहनार्थं प्राकृतं निवर्तयितुमर्हति घृतं, न शाकं दधि च ओदनं वा । १०।२।२।६, * पर्वणि विभज्यमाने द्वावपि उपायौ । यथा द्वौ पुरुषौ अन्तयोर्गृहीत्वा आ-कर्षतः । यद्वा तीक्ष्णेन शस्त्रेण छेदनम् । तत्र यत् शस्त्रस्य तीक्ष्णीकरणं द्रव्यं तत् छेदनाभ्युपाये संबध्यते नाकर्षणा-भ्युपाये तदर्थापन्नेऽपि । ९।२।१५।४७, * ' पशुमानय ' इत्येकवचने सति एकपशुविशिष्टमानयनं प्रतीयते । ' पशू आनय ' इति द्वित्वविशिष्टं गम्यते । तत्र हि एकत्वमपगच्छति द्वित्वमुपजायते । यस्य चागमे यदुप-जायते , स तस्यार्थ इति गम्यते । ४।१।५।१५. * ' पश्यतो मधु दुर्बुद्धेर्विनिपातस्ततो भवेत् । ' वा. ३।६।३।१०· पृ. १०३३ । यो हि मधुन्येव दत्तदृष्टिः दुर्बलां शाखामधिरोहति, तस्य विनिपात एव भवति । शा. ३।६।३ पृ. २९९. * पाकः । एक एवायमर्थः पाको नाम तस्यार्थान्तरे वैरूप्यं भवति । अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य । येन ओदनपाको गृहीतः, न असौ अशिक्षित्वा गुडं पक्तुं जानाति । भा. ७।२।१।२०, * पानीयस्य तैलस्य घृतस्य वा स्तोकाः नानादेशेषु भिन्नाः समानदेशे एकीभूता भवन्ति । ९। ३।१०।२८. * पिकमानय इत्युक्ते यो नामार्थं न प्रति-पद्यते तस्मै कोकिलशब्दमेव केवलं ( कोकिलं इति) प्रयु-ञ्जते, न कोकिलः पिकः इति । वा. २।१।१।१ पृ. ३७६. * पुनःशब्दश्च क्व चिदनर्थकः यथा किं पुनरिदं इति। भा. ८।४।५।१४, * पुरोडाशेन मे माता प्रहेलकं ददाति इति ( भवन्ति कस्मिंश्चिद्देशे वक्तारः । तेन पुरोडाशशब्दः असंस्कृतेऽपि पिष्टपिण्डे [ परंतु पक्वे ] उपचर्यते ) । १।४।७।१०. * पुष्करं खनन्तं दृष्ट्वा ग्रहेश्वरोऽपि ( गजेश्वरोऽपि ) खनन्निव लक्ष्यते एककार्यत्वात् । टुप्. १०।४।२१।४२. * पूर्णकोऽस्माकं बलीवर्दानामीष्टे इति भक्त्या स्वामित्वमुच्यते । तथा पत्नी पारिणय्यस्येष्टे इति । भा. ६।१।४।१९, * पूर्वं धूमं प्रतिपद्यते पश्चाद् अग्निं, यश्च धूमप्रत्ययेनैव कृतार्थो भवति, नासौ अग्निप्रत्यय-माद्रियते । ८।३।३।७, * ' पूर्वो धावति ' इति । स पूर्व इत्युच्यते, यस्यापरोऽस्ति । तेन पूर्व इत्युक्ते अपरो गम्यते , न तु ' अपरो धावति ' इति श्रवणात्

प्रतीयते । पूर्वं इत्युक्ते अपरो गम्यते एव केवलं, न तु स विधीयते कस्मिंश्चिदर्थे । ४।१।५।१४, * पृथक्त्वेनापि कुर्वाणानां बहुवचनं दृश्यते । देवश्चेत् वर्षेत् बहवः कृषिं कुर्युः । सस्यं चेत् संपद्यते, बहवो ब्राह्मणा यजेरन् इति । १०।६।१४।४५, * प्रकर्षेण रक्तं नितरां रक्तमित्युच्यते । निशब्दः प्रकर्षस्य वक्ता । २।१।१३।४२. * प्रचितमपि अपरिपक्वविच्छेदात् आमसस्यमिव लूनं निर्बीजं भवति । वा. ३।३।७।१४ पृ. ८३४ * प्रत्यक्षेण रूपं अवबुध्यमानं न शक्यते पर्यनुयोक्तुं, किमर्थमवबुध्यते इति । टुपू. १०।४।१२।२३ पृ. १९२५. * प्रत्यक्षविरुद्धं वचनं न प्रमाणं भवति यथा ' अम्बुनि मज्जन्त्यलाबूनि, शिलाः प्लवन्ते' 'पावकः शीतः' इति । भा. ४।३।२।१०, * प्रदर्शिते मार्गे रथेन यातुः सुखं भवति । ४।३।१५।३७, * प्रसन्नः अस्य पशुपतिः, पुत्रः अस्य जातः । प्रसन्नः अस्य वैश्रवणः, धनमनेन लब्धमिति उपचरन्ति । पशुपतिरनेनोपचरितः, पुत्रोऽनेन लब्ध इति । ९।१।४।८. * प्रायेण च मनुष्याणां अधर्मभूयिष्ठत्वात् तज्ज्ञानप्रतिबद्धाः प्रतिभाः तेषुतेषु कुमार्गेषु प्रवर्तन्ते । वा. १।३।१।२ पृ. १६७.

* बर्हिरादाय गावो गताः इति भवन्ति वक्तारः । बर्हिःशब्दोऽत्र असंस्कृतेऽपि कस्मिंश्चिद्देशे उपचर्यते । भा. १।४।७।१०, * बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते इति प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलाः, तानपेक्ष्य भवति । १।२।३।२९ । भूम्नि अतिशायने वा मतुप्प्रवृत्तिः, न च विशेष उपात्तः अमुष्मात् प्रकृष्टबलः इति । तत्र सर्वसत्त्वेभ्यः प्रकर्षे मुख्यः शब्दः, न च तथा संभवति, सिंहादीनां बलवत्तरत्वात् इति देवदत्तात् न्यूनतरबलानपेक्ष्य एवमभिधीयते । तथा अत्र विप्रकृष्टतरान्नसाधनलाङ्गलाद्यपेक्षया शूर्पं साधकतममित्युच्यते । वा. * बहुषु गुणसंपन्नेषु महत् फलं भवति । एकस्मिन् अल्पं फलम् । एष हि लोके दृष्टान्तः । लोके एकादशसु प्रदीपेषु तैलवर्तिसंपन्नेषु एकस्मिन् गृहे महान् प्रकाशो भवति, विपर्यये अल्पः । भा. * बहुषु राजप्रतिमेषु उपविष्टेषु यस्य श्वेतं छत्रं, वाल्व्यजनं च, स राजा इत्यवगम्यते अनाख्यातोऽपि राजलिङ्गेन । भा. ३।३।३।१०, * बहूनां एककाले कर्माणि भवन्ति 'एकधा गाः पाययति' इति । (पुष्कलानां गवां एकस्यां द्रोण्यां सह पायनं क्रियते ) । ९।३।११।३१, * ब्राह्मणः परिव्राट् वानप्रस्थः इति धर्मभेदात् संज्ञाव्यवस्था । ८।२।५।२४, * 'ब्राह्मणाः परिव्राजका ब्रह्मचारिणश्च निर्गच्छन्ति ' इत्युक्ते केवलब्राह्मणाः ब्राह्मणशब्देनोच्यन्ते । ४।१।१।१.

* भवति च अनादिष्टफले कर्मणि स्वर्गः फलमिति प्रत्ययो लोके । एवमुच्यते– ' आरामकृत् देवदत्तः नियतोऽस्य स्वर्गः ' ' तडागकृत् देवदत्तः नियतोऽस्य स्वर्गः ' इति । भा. ४।३।७।१६, * भवति हि भविष्यदपि निमित्तम् । यथा वर्षिष्यतीति कृषिगृहकर्मानुष्ठानम् । २।३।१।२ पृ. ५७७. * भवत्येव हि बह्वीनां परिचोदनानां मध्ये परिचोदनापरिहारकालेऽपि पूर्वपरिचोदनापरिहारः । वा. ३।३।७।१४ पृ. ८२७. * भवन्ति हि अनर्थकान्यपि वचनानि, ' दश दाडिमानि षडपूपाः ' इत्येवंजातीयकानि । भा. ४।३।५।१०, * भार्या राज्ञः पुरुषो देवदत्तस्य इति । भार्याविशेषणत्वेन उच्चार्यमाणः ' राज्ञः ' इति शब्दः, न पुनः पुरुषशब्देन संबध्यते । १०।४।८।१६, * ' भोजनकाले वर्तते स्थालानि संमृज्यन्तां ' इत्युक्ते यानियानि भोजने उपयोगमर्हन्ति, तानितानि सर्वाणि संमृज्यन्ते, स्थालग्रहणं लक्षणार्थं इति गम्यते । उच्यते । लोके अर्थलक्षणः संव्यवहारः । येनयेनार्थः संमृष्टेन उक्तोऽनुक्तो वा, स संमृज्येतैव । वेदे तु शब्दलक्षणः, शब्दश्च ग्रहस्य संमार्गमाह । ३।१।८।१६ पृ. ७२५.

* ' मण्डकैर्बहुशस्तृप्तिः कदा चित् खण्डमोदकैः । न चात्र मण्डका मुख्या गौणा वा खण्डमोदकाः ॥ ' वा. ३।२।१।१ पृ. ७४८. * ' मत्स्यान् न पयसा समश्नीयात् ' इति । यद्यपि सगुणा मत्स्या भवन्ति, तथापि पयसा सह न समश्यन्ते । भा. १०।७।१९।६६, * मलिनः स्नायात् । बुभुक्षितोऽश्नीयात् । ( मलिनाय स्नानमुपदिश्यते , बुभुक्षायै अशनम् ) । ११।१।१।१ पृ. २०९९. * ' महताऽपि प्रयत्नेन तमिस्रायां परामृशन् ।

कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति ॥ ' वा. १।३।१।२ पृ. १६३. * ' मासं घृततैलाभ्यां देवदत्तो भोजयितव्यः ' इत्युक्ते अर्धमासं घृतेन अर्धमासं तैलेन, एवमपि शब्दोऽवकल्पते । भा. १०।६।३।५. * मूर्खो जामाता–कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत् ।'यदेव भवतां गोत्रं तदस्माकमपीतिवत्' । वा. १।३।६।१२ पृ. २३६. * मृगतृष्णारूपमेतद्दर्शनम् । भा. ९।१। ८।३१.

* यः सकृत् गाः प्रापयति, स एकधा प्रापयतीत्युच्यते, योऽपि सह प्रापयति सोऽपि एकधा प्रापयतीति । भा. १०।२।४।१७, * यच्च येन आकाङ्क्ष्यते तत् तदर्थं भवति । १०।१।८।१८, * यच्च सप्रमाणकं तत् ग्राह्यम् । ५।४।४।१४, * यत् अघृतं अभोजनं तत् (इति सघृतभोजनस्य स्तुतिः) । १।४।१२।२३–४, * यत् किंचन लौकिकं वचनं ' नद्यास्तीरे पञ्च फलानि सन्ति ' इति तत्तथ्यमपि भवति, वितथमपि भवति । १।१।२।२ पृ.१३, * यत्तु लोके कारकसामस्त्येऽपि अभिहिते भेदेन व्यापारदर्शनमिति, अर्थासंभवादसौ । नहि उखायामधिश्रीयमाणायां भूयोऽधिश्रयणं शक्यते कर्तुं इति अर्थविरोधान्न करोति । १०।६।८।२५ पृ. १९९८. * यत्तु वियोजितमात्राणां हस्तादीनां स्फुरणं दृष्टं तदभिघातप्रेरितवायुनिमित्तं , इति न तावता जीवावयवानुगतिर्विज्ञायते । वा. २।१।२।५ पृ. ४०३. * यत्र उच्चनीचपण्यपणः क्रियते, स परिक्रयो भवति । भा. १०।२। ८।२२, * यत्र एकस्यामुखायां बहूनां ओदनः शृतो भवति, तत्रैकस्मिन् भुक्तवति, न तस्य शिष्टं भृत्येभ्यः प्रतिपादनीयं, उखायां अस्तीति गम्यते, प्रयोजनवत् हि तत् । ३।५।१।६. * यथा अधिगतपूर्ववचने श्रद्दधते, न एवमविदितवादे । न चोक्तिमात्रेणैते बहुक्षीरादयः प्ररोचयन्ते, किं तर्हि विदितत्वादेव । वा. १।२।२।२१ पृ. १३४. * यथा कश्चित् ओदनं निर्दिश्य ब्रूयात् ' य एनं भक्षयेत् कश्चित् श्वा वा मार्जारो वा स निवारयितव्यः ' इति, तत्र यदि भक्षणं निमित्तत्वेन विधीयते, न श्वमार्जारसंबन्धः, ततः काकोऽपि आगच्छन् निवार्यते । श्रूयमाणेऽपि शुनि मार्जारे वा श्वमार्जारसंबन्धस्य निमित्तत्वेन अविधीयमानत्वात् । भा. ३।१।७।१४ पृ. ७१३, * यथा किमृषिणा, देवदत्त एव भोजयितव्यः ( देवदत्तस्य स्तुतिरेषा ) । तथा वाङ्मनसयोर्निन्दावचनं स्तुत्यर्थेन । १।२।१।११, * यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ । शूकरश्च शूकरी च शूकरौ । एवं वसानश्च वसाना च वसानौ स्यातां इति । ६।१।५।२२ पृ. १३६५, * यथा चक्षुर्द्रष्टृ न बाह्येन प्रकाशेन विना प्रकाशयति इति अद्रष्टृ न भवति । १।१।५।५ पृ. ४४, * यथा त्वमेव माता पिता इति , तथा ' अदितिर्द्यौरदितिरन्तरिक्षं ' इति । ' एको रुद्रः, शतं रुद्राः ' इति च । १।२।४।३९. * यथा प्रकाशनार्थं प्रज्वलितोऽग्निः इन्धनं भस्मीकरोति ( एवं विभक्तिः ) कारकप्रतीतिपरा सती नान्तरीयकत्वात् संख्यां प्रतिपादयति । वा. ३।१।७।१४ पृ. ७२३. * यथा भोजनमेकस्मिन् ( ११।१।७।३३ ) । यथा भोजनं एकस्मिन् काले अभ्यस्यमानं एकमेव फलं तृप्तिं करोति इति नाभ्यस्यते । भा., * यथा यः ' कुरु ' इति ब्रूते, स कारयति, तथा यः ' प्रथस्व ' इति ब्रूते, स प्रथयति । भा. १।२।४।३५. * ' यथा रक्तोपधानेन निरुद्धे स्फटिके सति । कृष्णादिचोदनायुक्तं गम्यते स्फटिकान्तरम् ॥ ' वा. २।२।१।१ पृ. ४६५. * यथा राजा महाराजः, ब्राह्मणो महाब्राह्मणः । तथा इन्द्रः महेन्द्रः । भा. २।१।५।१५ पृ. ४१७, * यथा राजनि जयं वर्तमानं सैनिका अस्माकमिति व्यपदिशन्ति । ३।८।१३।२६ पृ. ११३१. * यथा लोके निमित्तभूतायां बुभुक्षायां सत्यां भोजनमवश्यं कर्तव्यम् । तथा जीवने सति कर्म अवश्यमनुष्ठेयम् । वि. ६।३।२. * यथा वसिष्ठस्य अरुन्धती , यथा शशाङ्कस्य रोहिणी , यथा नलस्य दमयन्ती तथा देवदत्तस्य यज्ञदत्ता । इति । वा. ३।४।१।९, * यथा वै किल मत्स्यः जले विचरन् अनवधारितगतिः प्रेक्षकजनमवधूनुते किमितो गतः किमगतः इति । ३।६।७।२०. * यथा शुष्के पतिष्यामीति कर्दमे पतति, सक्तुदुपस्प्रक्ष्यामीति द्विरुपस्पृशति, तथा अपराधात् प्रवृत्ता गाव्यादयः शब्दाः । भा. १।३।८।२५, * यथा स्तेनाः प्रच्छन्नरूपाः एवं च मनः । १।२।१।११.

* यथैव वलभ्यां पाटलिपुत्रे वा अग्निहोत्रादिशब्दः उच्चार्यमाणो नार्थान्तरं प्रतिपादयति, एवं प्रकरणान्तरेऽपि । नहि प्रकरणान्तरं तस्यार्थाभिधानशक्तिमभिव्यनक्ति । वा. २।३।११।२४ पृ. ६१३. * यदवगम्यते ( वेदात् ) तन्न्याय्यम् । भा. ६।२।२।४. * यद्यत् कृतकं तत्तत् अनित्यत्वेन व्याप्यते, यथा च यत्रयत्र धूमः तत्र अग्निना व्याप्यते । टुप्. ९।१।५।११. * यन्मलिनं अवासस्तत् (इति निर्मलवस्त्रस्तुतिः) । भा १।४।१२।२३–४, * 'यो देवदत्तस्य गौः, स विष्णुमित्रस्य कर्तव्यः ' इति देवदत्तादाच्छिद्य विष्णुमित्राय दीयते इति । अतः परद्रव्यस्योपदेशः इति । ४।२।१४।२९, गोः देवदत्तसंबन्धे प्रथममवगते तदुत्तरकालं उपदेशः । टुप्. * यो यस्य स्वरूपाश्रयो धर्मः प्राप्तः, स बलवता कारणान्तरेण विपर्ययं प्रतिपद्यते । वा. १।३।२।३ पृ. १७६. * यो यस्यांश आभजति स तस्मै अनिर्दिष्टो न शक्यते तेन संबन्धयितुम् ।... असति विभागे न शक्यः स्वेन भागेन संबन्धः कर्तुम् । भा. १०।३।१२।५०. * यो यदर्थप्रवृत्तः सन् निवार्यते, स तदर्थमेव प्रतिषिद्धो भवति इति अवधार्यते । वा. ३।४।४।१२ पृ. ९०१. * यश्च उभयोर्दोषो, नासौ एकस्य वाच्यः । भा. ८।३।६।१४. * यश्च कर्तव्यरूपः, तस्य लोके कर्तव्यतोत्तरकालं अभ्युदयो दृष्टः । टुप्. ६।१।१।१ पृ. १३५०. * यश्च नास्ति, स यदि शक्यते कर्तुं, कर्तव्यो भवति । यथा ' जुह्वा जुहोति ' इत्यविद्यमाना जुहूः क्रियते । भा. ३।७।१३।३३, * यश्च यस्य उपकारिणः उपकरोति, भवति स तस्य संबद्धो मुख्येनैव संबन्धेन । न च एकान्तरितं इति कृत्वा असंबद्धो भवति । ३।१।९।१८ पृ. ७२८, * यश्च यस्य कार्ये अधितिष्ठति, स तद्धर्मैः संबध्यते । यथा स्रुवधर्मैः स्वधितिरिति । ६।३।१०।२६. * यश्च यस्य सकाशात् आत्मानं लभते, स तं असमर्थो बाधितुम् । टुप्. ५।१।१०।१८. * यश्चिरेण भुङ्क्ते, तत्र वक्तारो भवन्ति ' नास्य भोजनं परिसमाप्यते ' इति । शा. ९।१।८. * यस्तु अविचारितसिद्धमेव प्रतिपद्यते, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । वा. १।२।१।२ पृ. १०९. * यो हि अन्येन सह संबन्धुमुच्चार्यते, न तत्समीपगतोऽपि अन्यः तेन सह संबन्धुमर्हति । यथा ' भार्या राज्ञः, पुरुषो देवदत्तस्य ' इति भार्याविशेषणार्थं उच्चार्यमाणो राजशब्दः न पुरुषेण संबध्यते । भा. ३।१।६।१२ पृ. ६८८, * यो हि आरब्धमेवंजातीयकं न समापयति, तं शिष्टा विगर्हन्ते ' प्राक्रमिकोऽयं असंव्यवहार्यः ' इति । शिष्टविगर्हणा च दोषः । तस्मादारभ्य समापयितव्यम् । आह, शिष्टाः पुनः किमर्थं विगर्हन्ते इति । उच्यते । विगर्हन्ते तावत्, किं नो विदितेन कारणेन इति । ६।२।३।१५, * यो हि उपलम्भनविषयो नोपलभ्यते, स नास्ति यथा शशस्य विषाणम् । १।१।५।५ पृ. ३९. * यो हि धूमादग्निमत्त्वं प्रतिपद्यते, तस्य तैक्ष्ण्येऽपि आकाङ्क्षा सिद्धा । वा. १।३।९।३३ पृ. ३०५. * यो हि पाषाणान् भक्षयति, ईषत्कारास्तस्य मुद्गशष्कुल्यः । भा. १०।३।१।८. * यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थिते उपकरोति । सु. पृ. ८५५. * यो हि बहून् ग्रहान् संमार्ष्टि, संमार्ष्टि असौ एकम् । वा. ३।१।७।१४ पृ. ७०९. * यो हि ब्रूयात् उदकेन दग्धव्यं, अग्निना क्लेदयितव्यमिति, किं स वचनप्रयोजनसामञ्जस्यं अनुवीत ? भा. १।३।६।१२ पृ. ६८१, * यो हि स्मरति इदं मया कर्तव्यमिति, स तत् करोति । १२।३।१६।३७, * यौ द्वौ कौरवौ, स एको वाहीकः । परिमाणसामान्यादिदम् । यत्कार्यं द्वयोः कौरवयोः, तावत् एको वाहीकः करोतीत्यर्थः । ८।३।६।२२ पृ. १६२२, * ये उदमेघं नाम कं चित् पुरुषं नावेदिषुः तस्य तु पुत्रं औदमेघिरित्येवं विदुः, शक्नुयुस्ते यस्तस्य पिता स उदमेघः इति कल्पयितुम् । उदमेघपुत्रस्य एवं समभिव्याहारो भवति इति । २।३।२।३ पृ. ५८०, * ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति । विरोधिनां च न सह प्रवृत्तिः । लोकवत् । यथा, मत्स्यान् न पयसा समश्नीयादिति । यद्यपि सगुणाः मत्स्या भवन्ति, तथापि पयसा सह न समश्यन्ते । १०।७।१९।६६, * येन यस्य सामर्थ्यं भवति, तत् तेनैव कर्तव्यम् । ३।८।२।४, * येन विंशतिरुपात्ताः, उपात्ताः तेन दश

भवन्ति । ८।३।६।१५, * येन सकृत् कृतेन नोपकृतं, स पुनः क्रियमाण उपकरिष्यति इति का आशा ? ११। १।७।३०, * यस्मै च येन सह दीयते उभाभ्यां तत् दीयते, एवं तत् सहदानं भवति । यथा 'देवदत्ताय यज्ञदत्तेन सह शतं दीयतां' इत्युक्ते, तत्र उभाभ्यामपि दीयते । ३।२।१४।३५, * यस्मात् बलवदुपध्मातोऽग्निः तेन मे गृहं दग्धमिति, नानग्निरपि बलवदुपध्मातो दहतीति गम्यते । १।२।३।३० । बलवदुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेत्, न तु शङ्खादयो बलवदुपध्माता दहन्ति। तस्मात् व्यवस्था। **वा.** * यस्योदमेघः प्रसिद्धः, स तस्य अनाख्यातमपि अपत्यं औदमेघिरिति ब्रूते। यस्य औदमेघिः, स तस्य पितरं अनाख्यातमपि उदमेघं प्रतिपद्यते। **भा.** ३।५।८।२६, * यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चिद्विरोधो भवति । सशर्करमपि तत् पय एवेति । १२।१।१४. * यस्य जीर्णे भोजनं भवति, न तस्य रोगा जायन्ते इत्यतः जीर्णे भोजनस्य (भोजनस्य जीर्णतायाः) रुजाऽभावबीजत्वमवगम्यते। **कणिका.** पृ. ४०५. * यस्य दण्डोऽस्ति, स दण्डीति । न च दण्डवचनो दण्डिशब्दः । **भा.** १।३।९।३० पृ. ३०१, * यस्य दश गावः, तस्य द्वौ पञ्चकौ गवाम् । ८।३।६। १५, * यस्य न किंचित् परकीयं कार्यमापद्यते, तत्प्रतिषेधो न युक्तः । यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न वस्त्रालंकारः । १२।१।२।७, * यस्य नास्ति पुत्रः, न तस्य पुत्रस्य क्रीडनकानि क्रियन्ते । १०।३।१।५, * यस्य भावे यस्य निवृत्तिः, तत् तस्य स्थानेऽवगम्यते । ९।२।१२।४०, * यस्य लोके नास्ति द्रव्यं, स याचते क्रीणाति च । ६।८।७।२६. * यस्य हि कार्यमदृष्टं भवति, तत्स्वरूपमपि अदृष्टं भवेत्। **वा.** ३।७।३३ पृ. १०९८, * 'येषां पदार्थधर्मत्वाद् दौर्बल्यं पूर्वनिश्चितम्। न तेषां श्रुत्यवष्टम्भात् तत् पश्चादपगच्छति ॥ पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम् । न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते ॥' १।३।३।७ पृ. १९९. * या डित्थस्य डवित्थस्य च माता, सा डवित्थस्य भवति। **भा.** ३।१।१५।२६ पृ. ७४३ । 'तथा डित्थस्य मातेति, माता डित्थडवित्थयोः।' **वा.** । यत्तु डित्थस्य मातेति, युक्तं तत्र, अव्यासङ्गि मातृत्वम्। ततो जातो डित्थः, एतावता संबन्धेन मातेत्युच्यते, नात्र किंचिदपेक्ष्यते । स च तावांस्तत्र संबन्धोऽस्तीति 'डित्थस्य माता' इति युक्तं वचनम्। **भा.** ३।१।१५।२७ पृ. ७४५, * या हि वन्ध्या स्मरेत् इदं मे दौहित्रकृतमिति, न मे दुहितास्तीति मत्वा न जातु चिदसौ प्रतीयात् सम्यगेतज्ज्ञानमिति । १।३।१।१, * यदा तावदसौ विद्यमाना (पशुकामेष्टिः) आसीत्, तदा फलं न दत्तवती । यदा फलमुत्पद्यते तदा असौ नास्ति। असती कथं दास्यति। १।१।५।५ पृ. ४०. * यदि अविदितं कश्चिद् वदेत्, तदा नैव श्रद्दधीरन्। **वा.** १।२।१।२१ पृ. १३४. * यदि क्षीरे लिप्सति तक्रं दीयते, तत्र यदि वा क्षीराभावो विज्ञायते, यदि वा भोक्तुरक्षीरभोजित्वम्। **भा.** १२।४।१५।४४, * यद्धि कर्तव्यं, तत् प्रयोजनवत्। १।२। ४।३२, * यादृशोऽस्य वेषः तादृशो नटानां, यादृशो देवदत्तस्य तादृशो ब्राह्मणानां, इति देवदत्तवेषप्रशंसार्थं इतरवेषसंकीर्तनम् । एवमिहापि उपव्यानस्तुत्यर्थेन निवीतसंकीर्तनम् । ३।४।१।९, * युगवरत्रोपदर्शिते ईषाचक्रादिसंनिधाने च 'अक्षमानय' इत्युक्ते यानाक्षमधिकृत्य ब्रूते इति गम्यते। न तु विदेवनाक्षमिति । ६।८।१०।३५.

* 'रजनी मे कण्डूयति, तिलको मे स्पन्दते' इति। रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तारः । **भा.** ८।४।५।२८, * राजा अमात्यो वा ब्राह्मणो वा परिचरितुं निमन्त्रितः आहूतः अपरिचर्यमाणः अवमानितमात्मानं मन्यमानः अपचरिष्यति इत्याशङ्क्यते एवं देवताऽपि। १०।१।१।१ वर्णकं ३ पृ. १८०२, * राजा पत्तिगणकः इति। पत्तिगणको राज्ञः कार्यं साधयति। स राजशब्दे उच्चरिते प्रतीयते। १।४।१२।२३-१ पृ. ३६०.

* लावकः पावकः इत्यनेन क्रिया समुच्चार्यते तथा अनः वासः इत्यादिषु न क्रिया समुच्चार्यते, आकृतिवचना एवैते । **टुप्.** ७।३।११।२९. * लोके कर्म

अर्थप्रधानम् । कार्यवशात् सकृदप्युक्तः असकृदाहरति, असकृदप्युक्तः सकृदाहरति नाहरति वा । भा. ११।१।४।२६. * लोके कृष्यादिफलानां प्रत्यक्षावगतत्वात् साधनानुरूपं जन्म । वा. १।२।१।१७ पृ. १३०, * लोके तावत् बुद्धिपूर्वकारिणः पुरुषाः मात्रामपि न निष्प्रयोजनां प्रयुञ्जते । १।२।१।२० पृ. १३४. * लोके तु कार्यं दृष्ट्वा चोदितमचोदितमपि अनुष्ठीयते एव । लोकतश्च एतत् परिच्छिन्नम् । भा. ३।२।१४।३६. * लोभवशेन संदेहेऽपि यत्किंचित्कर्मणि प्रवृत्तस्यापि कर्मकरस्य मध्ये निश्चायकलिखनादेः दृष्टार्थत्ववत् । भाट्ट. १२।१।१८.

* वज्री इति इन्द्रमनुमापयति । टुप्. ८।३।२।४. * वन्ध्यादौहित्रतुल्यता । वा. * वाक्ये एकस्मिन्नपि तदवयवभूतस्य अनपेक्षितस्य नैव भवति संबन्धः, यथा 'अश्वेन व्रजति श्वेतेन पटेनावृतः' इति, नानपेक्षितस्य अश्वस्य श्वैत्यं विशेषणं भवति । भा. ६।४।६।२३ पृ. १४४३ । यथा श्वैत्यं पटेन संबध्यमानं एकवाक्यत्वेऽपि नाश्वविशेषणं, तेनानपेक्षितत्वात् । टुप्. * वाससि रागः श्रूयते वासो रञ्जयति इति, वाससि च क्रियते । न चासौ तदर्थः । स्त्र्यर्थः पुरुषार्थो वा भवति । भा. ७।१।१।७, * वाहीकोऽतिथिरागतः यवान्नमस्मै प्रक्रियतां इत्युक्ते, योयो वाहीकः तस्यतस्य यवान्नं क्रियते । ७।१।१।८. * विक्रीय वक्तारो भवन्ति अस्माभिर्धान्यं दत्तमिति । क्रीत्वा वदन्ति अस्माभिर्धान्यं गृहीतमिति । (तस्मात् विक्रयेऽपि सकलो ददात्यर्थो विद्यते) । वा. ३।४।१०। २८ पृ. ९६१, * विदुषां पदवाक्यन्यायोद्गारि मुखं शोभते । १।२।१।१५ पृ. १२९, * विप्रलम्भभूयिष्ठत्वात् अश्रद्धेयवचनेषु पुरुषेषु अनध्यवसानम् । १।३।१।१ पृ. १६०. * विशेष्यं च बुद्धौ संनिहितं भवति, न विशेषणम् । तत् विशेष्यं विशेष्य निवर्तते । यथा 'राजपुरुषः पूज्यः' इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा । भा. ८।१।१७।३४, * 'विषं भक्षयितव्यं न कदा चित्' इति विषभक्षणस्य कर्तव्यता प्रतिषेधसंबन्धार्थं कीर्त्यते, न अनुष्ठानाय । १०।८।४।७. * 'वृक्षमानय' इत्युक्ते शिंशपामित्यविरोधात् पश्चादुच्यमानं न विरुध्यते, तथा 'यजेत' इत्युक्ते जुहोतित्वाविरोधोऽवगन्तव्यः । वा. ३।४।१४।४१ पृ. ९८२. * 'वृक्षं प्रति विद्योतते' इति न विद्योतनस्य वृक्षस्य च साध्यसाधनभावो गम्यते इति । अन्यतः प्रवृत्तस्य विद्योतनस्य, वृक्षः चिह्नभावायोपादीयते इति । भा. १०।६।२।३ पृ. १९८७. * 'वृक्षात् पर्णं पतति' इत्युक्ते कङ्कुररादिपत्रमपि प्रतीयते, वृक्षस्य अपादानमात्रोपक्षीणत्वात् । वा. ३।२।१३।३४.

* शकुनिग्राहकस्य शकुनिं जिघृक्षतः छद्मना गतिर्भवति । शनैः पदन्यासः, दृष्टिप्रणिधानं, अशब्दकरणं च । कथमनवबुद्धः शकुनिर्गृह्येतेति । यथा शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासः, न स तद्देशार्थः, अपि तु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते । भा. ९।१।६।२२, * शङ्खवेलायामागन्तव्यमिति । यस्मिन्नपि ग्रामे शङ्खो नाध्मायते, तस्मिन्नपि शङ्खाध्मानकालोऽस्ति इति नागमनं परिहास्यते । ६।४।१३।४२, * शतमाभ्यां दीयतां इति । एकजातीयानां शतम् । न भिन्नजातीयानाम् । १०।३।११।४४. * शतमाभ्यां दीयतां इत्युक्ते समर्पणवेलायां पञ्चाशत्संख्याऽवच्छिन्नं अर्पयति (एकैकस्मै) । टुप्. ४।१।१७।४८. * शब्दार्थश्च तथा लोके । लोकेऽपि तथैव शब्दार्थो भवति 'काष्ठान्याहर' इत्युक्तः सकृदाहरति, न पुनःपुनः । भा. ११।१।४।२३, * शाटकं कर्तुं सूत्राणि घयन्ति इति लक्षणया । (घयन्ति खलतिं पाययन्ति) । ११।२।१५।६४, * 'शिंशपामानय वृक्षम्' इति नान्योऽपि वृक्ष आनीयते । शिंशपैव वृक्षशब्देन गृहीता भवति । १०। ७।९।३२, * शिरसा धारितायाः स्रजः शिरसोऽवतारितायाः 'देवदत्तीया असौ' इति कृत्वा शुचिदेशनिधानादिः संस्कार एषितव्यो भवति । १०।१।७।११, * शुक्ला गौः आनीयतां इत्येवमभिहिते न कृष्णामानयन्ति । शुक्लशब्दः एनां गां कृष्णादिभ्यो निवर्तयति । उच्यते । न तत्र गवाकृत्या द्रव्यं लक्षयित्वा तस्य आनयनमुच्यते । तत्रापि चेत् एवमभविष्यत्, नैव एनां शुक्लशब्दो व्यशेक्ष्यत । उभयविशेषणविशिष्टं तु

तत्रानयनं प्रधानमुच्यते। ६।४।६।२३ पृ. १४४१. * 'शुक्लवासा भोजयितव्यः' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'दण्डी प्रैषानन्वाह' इति विशेषण-रहितानां अकर्माङ्गत्वम्। यदा तेऽपि उद्दिश्यन्ते, योऽयं शुक्लवासाः तमानय इत्यादौ, तदा विनाऽपि विशेषणेन आनीयते। वा. २।१।५।१७ पृ. ४२३. * शोभनमस्य चक्रस्य नेमितुम्बारम्। शोभनमस्याः सेनायाः हस्त्यश्वरथ-पादातम्। अवयवस्तुत्या अवयविस्तुतिरियम्। भा. १।४।११।२०.

* 'संध्यायां मृगा अपि न चरन्ति, किं पुनः विद्वांसो ब्राह्मणाः' इति। तथा वनस्पतयो नाम अचेतना इदं सत्रमुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणा इति स्तुतयो ह्येताः सत्रस्य। भा. १।१।८।३२. * संभवन्त्यां तु गतौ नातिगौरवं युक्तम्। वा. १।२।१।७ पृ. १२०. * संश्लेषाभावे विश्लेषो न शक्यः कर्तुम्। भा. ९।२।९।३३. * सोऽयमात्मीय एव बाणो भवन्तं प्रहरति। कणिका. पृ. ३३९. * सकृत्कृतेन कृतश्चोदनार्थः। न च कृते पुनः कर्तव्यमस्ति। भा. ११।१।४।२२. * सकृदुच्चारणेन स्वार्थवत् परार्थवत् च उच्चारणं विरुध्यते। टुप्. १०।४।२।३ पृ. १९१४. * सत्यपि सारूप्ये केन चित् निमित्तेन स्त्रीपुंस्कोकिलादिविभाग-ज्ञानम्। (यो वसन्ते 'कुहू' शब्दं करोति स पुमान् इतरा स्त्री इति)। वा. १।२।१।२ पृ. १०९. * सत्यां गतौ (अनेकेषामर्थानां) साधारणशब्दताऽप्ययुक्ता 'अन्याय-श्चानेकार्थत्वं' इति। टुप्. ५।४।४।१४. * सर्वश्च प्रीतिं प्रार्थयते। भा. ४।३।७।१५. * सर्वो हि प्रीत्यै यतते। टुप्. ६।१।१।२ पृ. १३५०. * सर्वो हि भावः केन चिदात्मना सिध्यन् व्यवहारं साधयति। सर्वात्मि-कायाः सिद्धेः क चिदप्यभावात्। वा. ३।७।१६।३३ पृ. १०९७, * सर्वोऽपि हि लब्धात्मकोऽन्यत्र व्याप्रियते। १।४।२।३ पृ. ३३१, * सर्वस्य अनादिव्यव-हारोपन्यासेन वेदवत् प्रसिद्ध्यभिमानो भवति। अतः अन्धपरंपरा निदर्शनम्। वेदे हि प्रामाण्यस्यानादित्वं, इहाप्रामाण्यस्य। १।३।१।१ पृ. १६२, * 'सर्वस्यैव हि कार्यार्थः स्वगुणग्रहणादरः। (स्वगुणभूतस्य) अन्यार्थे-गुणसिद्धे तु कार्येऽस्य स्वगुणेन किम्॥' ३।६।४।१० पृ. १०३६, * सर्वत्र च यत्र कालान्तरफलत्वादिदानीं अनुभवासंभवः, तत्र श्रुतिमूलता। सांदृष्टिकफले तु वृश्चिकविद्यादौ पुरुषान्तरे व्यवहारदर्शनादेव प्रामाण्यम्। १।३।१।२ पृ. १६८, * सर्वत्र हि स्वरूपप्रतिषेधासंभवात् कार्यं प्रतिषिध्यते। तद्यथा 'न ममैष पुत्रः' 'पुत्रकार्ये न प्रवर्तते' इत्यर्थः। ३।७।१३।३३, * सर्वलोकस्य भूतभ-विष्यदनादरेण वर्तमानोपकारानुरागात् वर्तमानालोचनेनैव च कालान्तरेऽपि तत्र प्रीतिः। १।२।३।२९ पृ. १४१. * सह प्रवृत्तौ एकया इतिकर्तव्यतया चेत् कर्म निरपेक्षं कृतं, द्वितीयस्याः प्रवृत्तिर्विप्रतिषिद्धा। भा. ७।४।२।६, * साक्षः पुरुषः परेण चेन्नीयते, स अक्षिभ्यां न पश्यतीति गम्यते। १।२।१२।३१-१ पृ. १४५. * साध्यसंपत्तये सर्वः प्रवर्तते, न तु कर्म रोत्स्यति इति। टुप्. ६।१।१।२ पृ. १३५०. * सिंहो देवदत्तः इति पुरुषस्य तद्भावेन प्रशंसा। भा. ८।२।१।६, * सिंहो देवदत्त इति प्रसह्यकारितया देवदत्तसंबद्धया लक्ष्यते सिंहः। ६।४।५।२१. * सिंहो देवदत्तः इति सिंहशब्दो-च्चारणे सिंहसादृश्यं देवदत्ते। टुप्. ६।१।६।२३ पृ. १३७४. * 'सिंहो माणवकः' इत्यत्र सिंहशब्दः स्वार्थमभिधाय तद्गतक्रौर्यादिकं गुणं लक्षयित्वा तन्मुखेन माणवके वर्तते। गौण्यां हि गुणोपस्थितिरपेक्षिता। सा च सिंहादिशब्देषु एकदेशलक्षणया न निर्वहति इति तत्र सिंहशब्दस्य गुणे लक्षणा। सोम. १।४।१६।२६. * सोपानत्के पादे द्वितीयामुपानहं अशक्यत्वात् नोपादत्ते। भा. १।२।४।३१-३ पृ. १४७. * सिद्धं हि प्रशस्तानां कर्तव्यत्वम्। वा. १।२।३।२७ पृ. १४०. * स्तुतश्चास्तुतश्च तावानेव सोऽर्थः। यथा स्तुताऽस्तुता वा देवता अङ्गभावं साधयति। भा. २।३।१४।२९, * 'स्थाल्यां पचेत्' इति क्रियासाधनत्वे निर्दिष्टे अर्थात् संवपने धारणे च स्थालीं व्यापारयति। ३।१।६।१२ पृ. ६९६, * स्नाता कन्या अनलंकृता मालागुणेनापि अलंकृता इति। एकदेशेनापि संस्काराणां संस्कृता इति। ७।३।१३।३४, * स्वस्या-भावे हि परकीयमुपजीव्यते। असंनिहिते हि स्वस्मिन्

याने देवदत्तो यज्ञदत्तयानमारोहति । संनिहिते तु स्वयानेनैव हि याति । तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखं, न तादृशं परयाने । १२।१।४।११. * स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते । वा. ३।३।७।१४ पृ. ८३२, * स्वात्मवपोत्कर्तनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि क्रियन्ते, किमुत बाह्यधनत्यागेन इति स्तुतिः । १।२।१।१० पृ. १२५. * स्वाम्याज्ञामन्तरेण स्वेच्छया यवानयनादौ कृतेऽपि न तत्फलं वेतनं लभ्यते । सु पृ. ३१.

* हस्तः करः पाणिरिति, अर्थाय हि एते उच्चार्यन्ते नादृष्टाय । नहि एषामुच्चारणे शास्त्रमस्ति । भा. १।३।८।२४. * हेतुव्यवहारकालात् प्रथमं प्रमाणान्तरेण संबन्धप्रसिद्धिरपेक्ष्यते । वा. १।२।३।२६ पृ. १३९.

( इति 'इतस्ततः' नाम प्रघट्टकं समाप्तम् । )

* **इतिकरणः** विनियोक्त्री श्रुतिः **भट्टसोमेश्वरमते** यथा 'इषेत्वेति शाखां छिनत्ति' इति। **शास्त्रदीपिकायां** तु 'तथाऽऽह्वानमपीति चेत्' ( ३।२।३ ) इत्यधिकरणे इतिकरणस्य श्रुतित्वं निरस्तम् । **बाल.** पृ. ४५, ४६.

* **इतिकर्तव्यता** अर्थभावनायाः शब्दभावनायाश्च अंशत्रयोपेतायाः एकोंऽशः । स च 'कथं कुर्यात्' इति कथंभावाकाङ्क्षया करणेन संबध्यते । **टुप्.** * इतिकर्तव्यता करणमनुगृह्णती भावनया संबध्यते इत्युक्तम् । **टुप्.** ११।१।१०।५४, * इतिकर्तव्यता करणानुग्राहिणी लोके दृष्टा । ७।१।१।२ पृ. १५२६. * इतिकर्तव्यता कर्तव्यताविशेषात्मिका । **वा.** १।४।२।३ पृ. ३२९. * इतिकर्तव्यता नित्येन संबध्यते, न काम्येन । काम्ये तु अतिदेशेन । **वा.** * इतिकर्तव्यता प्राकृती अग्नीषोमीये पशौ प्रयाजानुयाजेषु प्राप्यते । प्राप्तायां च एकदेशत्वगुणविधिः । एवं चातुर्मास्येषु प्रयाजानुयाजेषु नवत्वगुणविधिः । एवं वायव्यश्वेतपशौ आघारे मन्त्ररूपगुणविधिः । अवभृथे चाघारे अप्सु तृणप्रासनरूपगुणविधिः। **भा.** १०।३।१।४. * इतिकर्तव्यता भावनया आकाङ्क्षिता किं केन कथं इति । **वा.** ७।१।१।१ पृ. १५२५. * इतिकर्तव्यता भावनया संबध्यमानैव करणमनुगृह्णती संबध्यते । **टुप्.** ११।१।२।१०, * इतिकर्तव्यता यत्र समीपे नाम्नायते, तत्र कथंभावस्य साकाङ्क्षत्वात् कस्यापि संबन्धिन्या इतिकर्तव्यतया भवितव्यम् । यथा विश्वजिति किमंशसाकाङ्क्षत्वात् फलमनुषज्यते । ७।४।१।१ पृ. १५७०. * इतिकर्तव्यता । यदि नाम गुणः स्वातन्त्र्येण इतिकर्तव्यतां ग्रहीतुं शक्नुयात् तत एवं स्यात् । स च कथं शक्नुयात्, यदि करणैरेव इतिकर्तव्यता संबध्येत । ... न तावत् करणैः इतिकर्तव्यता संबध्यते इत्युक्तम् ( इन्द्रियकामाधिकरणे २।२।११ )...यस्यां भावनायामवस्थितो गुणः इतिकर्तव्यतां गृह्णाति, तस्यां प्रथमतरसंनिविष्टो धात्वर्थो दृश्यते । ...यदि हि इतिकर्तव्यताग्रहणयोग्यः स न भवेत् ततो न गृह्णीयात् । स तु फलवत्त्वात्, इतिकर्तव्यताद्वारभूतभावनाविशेषणत्वाच्च न कथंचिन्न गृह्णाति।...भावना तावत् न धात्वर्थविशेषाद्विना इतिकर्तव्यतां शक्नोति ग्रहीतुम् । गुणोऽपि च न धात्वर्थमनुपनीय स्वतन्त्रः शक्नोति ... ग्रहीतुं इति आश्रयति ( धात्वर्थम् ) । तथा इतिकर्तव्यता गुणाभिमुखं गच्छन्ती न धात्वर्थमुल्लङ्घ्य शक्नोति गन्तुम् । धात्वर्थोऽपि स्वयं इतिकर्तव्यताऽऽकाङ्क्षः सन् गुणार्थमपि प्रस्थितामेतां ग्रहणसमर्थः सन् किमिति परित्यजेत् । **वा.** ३।६।१६।४३ पृ. १०६९. * इतिकर्तव्यता यागादेः प्रत्यक्षादीनामनुग्राहकशक्त्यभावात् अत्यन्तशास्त्रगम्या, इति यथासंनिकर्षं तदसंभवाद्वा यथाकथंचिदुपस्थाप्यमाना, शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्याद्यतिदेशेन वा अत्यन्तादृष्टद्वारेणान्यथाऽनुपपत्त्या कल्प्यते। **रत्न** २।१।१।१ पृ. ३८५. * इतिकर्तव्यता लौकिकी पार्वणस्थालीपाके, अष्टकाचरौ, आग्रहायणे कर्मणि च इति । **भा.** ७।४।२।२, * इतिकर्तव्यता वैदिकी प्रकरणादिभिः कारणैर्दर्शपूर्णमासादिषु निबद्धा । ७।४। २।५, सौर्ये चरौ, ऐन्द्राबार्हस्पत्ये चरौ, महापितृयज्ञे उपसत्सु गृहमेधीये च अतिदिष्टा । ७।४।२।३–४, * इतिकर्तव्यता साधनस्य साध्यस्य वा इति संदिह्यमाना साध्यस्य भवितुमर्हति । नासौ साध्यस्य अभवन्ती साधनेन संबध्यते । एवं हि स इतिकर्तव्यताविशेषश्चोद्यते अनेन साधनं साधकं कुर्यादिति । न चास्ति स प्रकारः, येन असाध्यमानायां क्रियायां तेन

साधकः कुतो भवेत् । तस्मात् साधकस्यापि इतिकर्तव्यताविशेषं अभ्युपगच्छता साध्यस्यापि इत्येतदभ्युपगमनीयम् । ३।६।१६।४३ पृ. १०७०. * एकस्मिन् फले चोदितानां तन्त्रेण **इतिकर्तव्यता** भविष्यति । **टुप्.** ११।४।५।१७, * करणानुग्राहिणी इतिकर्तव्यता तेन चापेक्षिता । तस्मात् करणमुद्दिश्य तत्र इतिकर्तव्यता विधीयते । ९।१।१।१ पृ. १६३६, * भाव्यः स्वर्गः, भावको यागः, इतिकर्तव्यता यागस्यानुग्रहं करोति, न फलसाधिका । तस्याः फलं न श्रूयते, करणात् फलमिति । सत्यं, करणस्य फलं साधयतः अभ्यस्यमाना इतिकर्तव्यता महान्तमुपकारं करोति । ११।१।७।३५. * स्वयं भावनामनपेक्ष्य कर्तव्यताविशेषो हि इतिकर्तव्यता । सा च व्यापारविशेषः । द्रव्यदेवतादेरपि व्यापारविशेषापत्त्यैव इतिकर्तव्यतात्वं न स्वरूपेण । सामान्यस्य भेदको धर्मः प्रकारः । तथा च व्यापारसामान्यात्मकभावनाया एव व्यापारविशेषात्मकेतिकर्तव्यतालक्षणप्रकाराकाङ्क्षा, न तु यागस्य, 'कथं यागः' इत्यपेक्षाऽभावात् । **सोम.** ७।१।१ पृ. ५२६. * एकस्मिन् कर्मणि उभाभ्यां प्रकृतिभ्यां कस्मात् उभे **इतिकर्तव्यते न** प्रवर्तेते । 'मिथो विप्रतिषेधात्' (७।४।१।६) इति सूत्रेण निराकृतोऽयं पक्षः । एकया निराकाङ्क्षीकृते, द्वितीया न प्रवर्तते प्रमाणाभावात् । **टुप्.** ८।१।१।१ पृ. १५८३, * भावनया करणेतिकर्तव्यते आकाङ्क्षिते । तत्र करणं फले व्याप्रियते । इतिकर्तव्यता करणमनुगृह्णती आकाङ्क्षिता । ११।१।७।३५. * **इतिकर्तव्यतां** प्रति कर्माणि न विधीयन्ते (किन्तु) फलं प्रति तेषां विधिः । इतिकर्तव्यता तु कर्मणां विधीयते । **भा.** ३।२।६।१९ पृ. ७६६. * इतिकर्तव्यतां प्रति ग्रहैकत्ववत् प्रधानसाहित्यं अविवक्षितम् । विशिष्टभावनाविध्युत्तरकालं अवान्तरविधिषु कल्प्यमानेषु कर्मणः फलसाधनांशे पुरुषः प्रवर्त्यमानः कर्मसाहित्येऽपि पश्वेकत्ववत् प्रवर्तितः प्रधानेतिकर्तव्यतासंबन्धांशे प्रधानानि प्रति अप्रवर्त्यमानत्वात् तदीयसाहित्येऽपि प्रवर्तितः, अङ्गानि तु सहितानि प्रति नियुक्तः । **वा.** ३।२।६।१९ पृ. ७६७. * न **चेतिकर्तव्यतामन्तरेण** कर्मचोदना अर्थवती भवति । तस्मात् सेतिकर्तव्यताकस्य कर्मणः प्रयोगश्चोद्यते । **भा.** ११।१।२।८, * **इतिकर्तव्यतया** तत् अनुबध्यते, यत् फलवत् चोद्यते । ९।१।३।५, * इतिकर्तव्यतया नहि सापेक्षाणां संबन्धः । ३।२।६।१९ पृ. ७६६. * न च याग **इतिकर्तव्यतया** विना न सिध्यति, निर्ज्ञातोपायत्वात् यागस्य लोके । **टुप्.** ९।१।१।१ पृ. १६३६, * यः फले चोद्यते, स इतिकर्तव्यतया संबध्यमानः इतिकर्तव्यतां प्रति प्रधानम् । ७।१।१।२ पृ. १५२६. * **इतिकर्तव्यतायाः** करणव्यतिरिक्तत्वात् । **वा.** २।२।११।२६ पृ. ५५०. * अरुणाऽधिकरणन्यायेन करणेतिकर्तव्यतयोः संबन्धः । **टुप्.** ९।१।१।१ पृ. १६३७. * **कर्तव्यतायां** चोदितायां इतिकर्तव्यताऽऽकाङ्क्षा भवति कथं कुर्यादिति । प्रकरणेन धर्माः संबध्यन्ते इत्थं कुर्यादिति । **भा.** ७।१।१।२ पृ. १५२७.

* **'इतिकर्तव्यतांऽशस्थां येनोद्दिश्योपसत्क्रियाम् । द्वादशत्वविधिस्तेन कथंभावेन गृह्यते ॥'** वा. पृ. ८३६ । ( येन कथंभावेन इतिकर्तव्यतारूपे अंशे स्थितां उपसद्-रूपां क्रियामुद्दिश्य द्वादशत्वस्य विधिः, तेन द्वादशत्वं गृह्यते इत्यन्वयः ) । **बाल.** पृ. ९. * **इतिकर्तव्यताऽऽकाङ्क्षा** करणानुग्राहकव्यापाररूपा । **भाट्ट.** ७।४।१ पृ. ३६६.

* इतिकर्तव्यताऽऽकाङ्क्षा नाम केयं ? तदभिधीयते । प्रकाराकाङ्क्षेयम् । इतिशब्दः प्रकारवचनः । कर्तव्यताप्रकारः क्रियाप्रकारः इति यावत् । सामान्यस्य च भेदको विशेषः प्रकारः इति तद्विदः । किं पुनरिह सामान्यात्मना अवगतं विशेषरूपमपेक्षते ? क्रिया भावनेति यावत् । 'यागेन स्वर्गं कुर्यात्' इत्यस्यायमर्थः— यथा व्यापृते यागात् स्वर्गो भवति, तथा यागं प्रति व्याप्रियेतेति । तत्र न ज्ञायते कोऽसौ व्यापारविशेषः, येन यागात् स्वर्गो भवतीति । सेयं इतिकर्तव्यताऽऽकाङ्क्षा इत्युच्यते । **शा.** ३।३।४ पृ. २३६. * सामान्येन समीहितभाव्यकत्वावगतौ अपि भाव्यविशेषापरिज्ञाने इतिकर्तव्यताऽऽकाङ्क्षाऽभावात् । **नहि** इत्थमाकाङ्क्षाऽस्ति, 'किं चित् समीहितं कथं कर्तव्यं' इति, किंतु 'इदं समीहितं कथं कर्तव्यं' इति । सा च भाव्यविशेष-

ज्ञानानन्तरमेव, इति फलवाक्ये एवेतिकर्तव्यताऽऽकाङ्क्षा युक्ता । सोम. ७।४।२. * इतिकर्तव्यतारूपा धर्मा अपूर्वनिमित्ता अपूर्वप्रयुक्ताश्च । भा. ९।१।१।१. * भावनायाः संनिपत्योपकारीतिकर्तव्यताऽन्वयमात्रेण इतिकर्तव्यताऽऽकाङ्क्षानिवृत्तेः आरादुपकारीतिकर्तव्यताऽनाकाङ्क्षत्वात् संनिपत्योपकारिण्याश्च इतिकर्तव्यतायाः श्रुत्यादिगम्यत्वेन प्रकरणगम्यत्वाभावात् न इतिकर्तव्यताऽऽकाङ्क्षालक्षणं प्रकरणमस्ति । सु. पृ. ११९३.

* इतिकर्तव्यताऽऽकाङ्क्षस्य यागवचनस्य अन्तिकादुपनिपतिताः ( गुणाः ) शक्नुवन्ति तं निराकाङ्क्षीकर्तुम् । भा. ६।१।२।५, * इतिकर्तव्यताऽऽकाङ्क्षस्य संनिधौ श्रूयमाणं इतिकर्तव्यताविशेषणत्वेन परिपूरणसमर्थं भवितुमर्हति । ४।४।१२।३४, * इतिकर्तव्यताऽऽकाङ्क्षिणः संनिधौ पूरणसमर्थं यद् वचनं, तत् तेन सह एकवाक्यतां याति । ३।३।४।११.

* इतिकर्तव्यतात्वं क्रियाया एव, कथंभावाकाङ्क्षागृहीतस्य इतिकर्तव्यतात्वात् । मीन्या.

⌛ इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम् । ७।४।१।१ ॥

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति श्रूयते । सौर्ययागेन अपूर्वं कृत्वा ब्रह्मवर्चसं साधयेत् ब्रह्मवर्चसकामः इति तदर्थः । इति सौर्यादिषु विकृतियागेषु इतिकर्तव्यतायाः अविधेः विधानाभावात् तद्वतस्य यजतेः यागभावनायाः पूर्ववत्त्वं पूर्वं अन्यत्र क चित् या इतिकर्तव्यता, तद्वत्त्वं स्यात् । अन्यत्र क चित् ये धर्माः प्रसिद्धाः स्युः, ते सौर्यादौ ग्राह्याः । सर्वथाऽपि सौर्यादौ अस्ति इतिकर्तव्यता इति सिद्धान्तः । के.

* इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम् । अयं साप्तमिकन्यायः । 'मासं दर्शपूर्णमासाभ्यां' इत्यत्र साप्तमिकन्यायेन दर्शपदस्य पूर्णमासपदस्य च प्राकृतयागत्रिकद्रव्यदेवताद्यतिदेशकत्वात्, तेषां च एकपदोपादानेन समुच्चयावगतेः उत्पत्तिवाक्यगतसमुच्चितद्रव्यदेवताऽनुरोधेन संख्यावत् कर्मभेदावसायात् प्रकृतिवत् यागषट्कमेव विधेयम् ( कुण्डपायिनामयने ) । कौ. २।३।११।२४ पृ. ८७. * इतिकर्तव्यतासामान्यस्यापि इत्थं इति पदकल्पनया अन्वयस्वीकारात् उत्पत्तिवाक्ये इतिकर्तव्यतासामान्यान्वयाच्च । भाट्ट. ७।१।१ पृ. ३३९.

* इतिशब्दः प्रकारवाची । सु. पृ. १३७९. * इतिशब्दश्च ज्ञातनिर्देशप्रधानो लोके दृष्टः । ऋजु. पृ. ८५.

* 'इति ह स्म' इत्यादयः परकृतिपुराकल्पा अर्थवादाः । भा. ६।७।१२।२६–३०.

* 'इतिहासपुराणं च कृत्रिमत्वेन निश्चितम् । तथाप्यकृत्रिमे वेदे तद् विद्यात्वेन संमतम् ॥' वा. १।३।३।७ पृ. २०२. * इतिहासपुराणयोः अर्थवादबहुत्वम् । सु. पृ. ४०. * इतिहासपुराणयोः उपदेशवाक्यानां एषैव ( स्मृतिवत् ) गतिः । वा. १।३।१।२ पृ. १६६.

* इत्थंभावः यागगतो व्यापारः प्रकाराख्यः । सोम. ७।४।२.

⌛ इदं अग्नेः इदं अग्नीषोमयोः इति विभक्तयोरेव पिण्डयोर्देवतानिर्देशः ॥

'इदमग्नेः इदमग्नीषोमयोः' इति मन्त्रयोरपि पूर्वन्यायेन पिण्डविभागार्थत्वे प्राप्ते, 'तत्संयुज्य द्वैधं कृत्वाऽभिमृशेदिदमग्नेः' इत्याम्नानात् विभक्तयोरेष देवतानिर्देशः । 'अग्नये अग्नीषोमाभ्याम्' इतिमन्त्रयोस्तु चतुर्थीनिर्देशादसंदिग्धं देवताऽभिधायित्वम् । संकर्ष. १।३।१७.

* 'इदं ब्रह्मणः, इदं होतुः' इति चतुर्धाकरणं ऋत्विजां परिक्रयाय, उत भक्षणाय इति संदेहे भक्षणाय इति सिद्धान्तः दर्शपूर्णमासयोः । भा. ३।४।१७।४८–५१.

* 'इदं रजतम्' । मीमांसकाः ( प्राभाकराः ) ते द्वे एते विज्ञाने, 'इदं' इत्येकं ग्रहणात्मकं, 'रजतं' इत्यपरं स्मरणात्मकम् । इति । ऋजु. पृ. ४५.

* इध्मः अग्निसमिन्धनार्थः, स प्रतिपदि आहृतः अमावास्यायां निशि वर्तमानस्य निशियज्ञस्य अग्निसमिन्धनं न साधयेत् ( तस्मात् भेदेन कर्तव्यः ) । भा. १२।२।४।१८. * इध्मः । चातुर्मास्येषु वैश्वदेवपर्वणि 'त्रेधा संनद्ध इध्मः' इति आम्नातः । वि. ७।१।३,

* इध्मः दर्शपूर्णमासादौ 'त्रीन् परिधीन्' इत्यादिमन्त्रोपेताभिः क्रियाभिः सिध्यति। १०।१।१. * 'इध्मः प्रथमः आहुतीनां हूयते।' **संकर्ष.** २।४।३. * इध्मः राजसूये रत्निनां हविःषु मध्ये मैत्राबार्हस्पत्ये हविषि 'स्वयंकृत इध्मः' इति श्रुतम्। तेन स्वत एव च्छिन्नः शास्त्रीयच्छेदननिरपेक्षो ग्राह्यः। **वि.** १०।१।१.

* **इध्माबर्हिः** अमावास्यातन्त्रस्य प्रसङ्गेऽपि निशियज्ञे पृथक् कर्तव्यम्। ( इध्मश्च बर्हिश्च इध्माबर्हिः। 'जातिरप्राणिनां' ( पा० २।४।६ ) इत्येकवद्भावः, पूर्वपदस्य आनङ् ऋषिकृतप्रयोगप्रामाण्यात् )। **भा.** १२।२।५।१८.

**इन्दुक्ष्वेडन्यायः**। उक्तं च 'गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति॥' इति। क्ष्वेडस्तु गरलं विषम्। **साहस्री.** ३२२.

* **इन्द्रः** एव महेन्द्रः, न अन्यः इति सिद्धम्। ( इन्द्र एव गुणसंयुक्तो महेन्द्रो नार्थान्तरं, विस्तरस्तु इन्द्रमहेन्द्राधिकरणे ( २।१।५ ) द्रष्टव्यः )। **वा.** २।१।५।१७ पृ. ४२१. * शीतकर्मा हि **इन्द्रो** वाक्यशेषेभ्योऽवगम्यते। **भा.** ९।२।१०।३४. * '**इन्द्राय** पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामः' पुत्रकामेष्टौ द्वितीयं हविरिदम्। **दुमी.** पृ. ६४. * 'इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्' पशुकामेष्टौ सप्तयागतः ऐन्द्राग्नस्य विकृतिः। **वि.** १२।२।७ वर्णकं २. * 'इन्द्राय मरुत्वते नैवारमेकादशकपालं' इत्यत्र निर्वापमन्त्रे सदनकरणमन्त्रे च 'इन्द्राय मरुत्वते जुष्टं' इति 'नीवाराणां मेध सुमनस्यमानः' इति च ऊहः कार्यः। **भा.** ९।३।११-२. * 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत्' इत्यादौ वाचनिके पुरोडाशैकत्वे सहैवावदानं देवताभेदेऽपि। तैत्तिरीयके तु त्रयः पुरोडाशा उत्तरोत्तरे स्थूला आम्नाताः। तत्रापि सहैवावदानम्। **संकर्ष.** २।२।१४। प्रदानं तु भिन्नमेव। २।२।१५, * 'इन्द्राय राथंतरायानुब्रूहि इति रथंतरस्यर्चमनूच्य ( स्य ऋ ) बृहत ऋचा यजेत्, इन्द्राय बार्हतायानुब्रूहि इति बृहत ऋचमनूच्य रथंतरस्यार्चा ( स्य ऋ ) यजेत्' इदं सर्वपृष्ठायाम्। 'अभि त्वा शूर' इति रथंतरस्य ऋक्, 'त्वामिद्धि हवामहे' इति बृहतः ऋक्। ४।४।४. * 'इन्द्राय वज्रिणे वृषभमालभेत' इत्यस्य पशोः पुरोडाशस्य क्रमे संप्रतिपन्नदेवताकं याज्यानुवाक्यारूपं समाम्नातं 'इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं० स्तुहि शूरं वज्रिणं सुप्रतीतं०' इति। **भा.** १०।१।९।२१. * **इन्द्रस्यापि** गौतमभार्यागमनेन परदाराभिगमात् धर्मव्यतिक्रमः। **वा.** १।३।३।७ पृ. २०३, न समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सविता एव अहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यति अस्मादनेन एव उदितेन इति आदित्यः एव अहल्याजारः इत्युच्यते। न तु परस्त्रीव्यभिचारात्। पृ. २०८. * इन्द्रस्य पुराणेतिहासेषु प्राचीदिक्पालत्वस्मरणात् प्राच्यां दिशि ऐन्द्रीत्वव्यपदेशः। **सु.** पृ. १०८८.

**इन्द्रस्य मध्ये व्यवधानं देवताऽन्तरेणे इति पुनरावाहनं इति न्यायः**। साकंप्रस्थाय्ये आवाहने 'अग्निमग्न आवह, सोममावह, इन्द्रं महेन्द्रं वा आवह, अग्निमावह, इन्द्रं महेन्द्रं वा आवह' इत्यादिकं अविकृतम् ( प्रकृतिवत् )। 'इन्द्रस्य मध्ये०' इति न्यायः। **वैजयन्ती.** २।६।२३.

* इन्द्रस्य याज्यानुवाक्याद्वयं 'एन्द्रसानसिं रयिं० प्रससाहिषे पुरुहूत शत्रून्०' इति। **सु.** पृ. ६५५.

**इन्द्रजालन्यायः**। इन्द्रस्य योगविशेषेण जालमित्यर्थः। यथा मन्त्रौषधादिना यथास्थितस्य वस्तुनः अन्यथा प्रत्यायनं भवति, तथा सर्वं जगत् मायामयं मिथ्याभूतमित्यर्थः। उक्तं च वृद्धैः—'एतस्मात् किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाऽङ्कुरम्। पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथागच्छति॥' इति। **साहस्री.** ४५२.

**इन्द्रपीताधिकरणम्**। अनैन्द्राधिकरणम्। ऐन्द्राणामनैन्द्राणां चेति सर्वेषां ग्रहाणां समन्त्रकं भक्षणं, यथासमाम्नाताश्च मन्त्राः, नोहः॥

( इदमत्रावधेयम् । आनन्दाश्रमीयाङ्कानुसारेण २८–२९, ३९, ४४ इत्येतैरेव चतुर्भिः सूत्रैः एकादशं अधिकरणम् । ३०–३८ इति नवभिः सूत्रैः पञ्च अधिकरणानि अन्तर्गर्भिणीरूपाणि । पुनरपि ४०–४३ इति चतुर्भिः सूत्रैः अधिकरणद्वयं अन्तर्गर्भिणीरूपमेव कृत्वाचिन्तया । शास्त्रदीपिकायां विस्तरे भाट्टदीपिकायां चापि इत्थमेव अधिकरणविभागः । तत्तत्संपादकैस्तु किंचिदन्यथा कृतं , तत् अयुक्तम् ) ।

**लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणा-ममन्त्रत्वम् । ३।२।११।२८ ॥**

**भाष्यम्—** एष एव मन्त्रः ( मन्द्राभिभूतिः इत्यादिर्भक्षानुवाकः ) उदाहरणम् । इह च प्रदानानि ऐन्द्राणि अनैन्द्राणि च विद्यन्ते । तेषां भक्षणान्यपि सन्ति । तत्र संदेहः किं ऐन्द्रेषु अनैन्द्रेषु च मन्त्रः, उत ऐन्द्रेष्वेव मन्त्रः, अनैन्द्राणां अमन्त्रकं भक्षणमिति । किं तावत् प्राप्तं ? अनैन्द्राणां अमन्त्रकं भक्षणमिति । कुतः ? समानविधानानि एतानि प्रदानानि । तेषु ' इन्द्रपीतस्य ' इति मन्त्रः अनिन्द्रपीतं न शक्नोति वदितुम् । न च समानप्रकरणे ऊहः संभवति । असति वचने अन्यार्थानभिधानात् । तस्मात् अमन्त्रकं भक्षणं एवंजातीयकेषु इति ।

**वा—** इन्द्रपीतस्य इति सोमसामानाधिकरण्यात् अनैन्द्राणां विलिङ्गत्वात् प्रकृतौ च ऊहाभावात् अमन्त्रकं भक्षणमिति ।

**यथादेवतं वा, तत्प्रकृतित्वं हि दर्शयति । २९ ॥**

**भाष्यम्—** अथवा यथादेवतं ऊहेन लक्षयितव्यम् । कस्मात् ? ध्रुवचमसाः हि प्रकृतिभूताः । के पुनः ध्रुवचमसाः ? ये शुक्रामन्थिप्रचारे सवनमुखीयाः । ऐन्द्रास्ते भवन्ति । तेषां प्रकृतिभूतं प्रदानं, विकृतिभूतानि अन्यानि । कथमवगम्यते ? तत्प्रकृतित्वं हि दर्शयति । कथं ? ' अनुष्टुप्छन्दसः इति षोडशिनि अतिरात्रे भक्षमन्त्रं नमति ' इति । किमत्र दर्शनं ? ' नमति ' इति विपरिणामं दर्शयति । ननु वचनमेतत् स्यात् । नेत्युच्यते । नैतत् ' नमति ' इति श्रूयते । कथं तर्हि ? ' एवं नमति ' इति , ' अनुष्टुप्छन्दसः इति भक्षमन्त्रं नमति ' इति । स एष ऊहः विकारेषु उपपद्यते । तस्मात् एते विकाराः । अतः अनैन्द्रेष्वपि चोदकप्राप्तो मन्त्रः ऊहितव्यो भवति । उच्यते , विकारा एते इति लिङ्गमपदिष्टं , न्यायः अभिधीयतामिति । उच्यते । " ऐन्द्रः सोमो गृह्यते मीयते च । तेन ऐन्द्रेषु सोमः, अनैन्द्रेषु सोम एव नास्ति, इति सर्वे सोमधर्मा ऐन्द्रेष्वेव , अधर्मका इतरे साकाङ्क्षाः । कथं पुनर्ज्ञायते ' ऐन्द्रः सोमो गृह्यते मीयते च ' इति ? मन्त्रवर्णात् ' इन्द्राय त्वा वसुमते ' इत्येवमादिर्मन्त्रः ऐन्द्रं सोमं वदितुं शक्नोति, नान्यम् । तस्मात् ऐन्द्रः सोमः । तेन ऐन्द्रेषु सोमधर्माः । अन्यानि तु प्रदानानि साकाङ्क्षाणि , अतो धर्मान् ग्रहीष्यन्ति " इति न्यायः । तस्मात् यथादेवतं ऊहितव्यो मन्त्रः इति ।

**वा—** अनैन्द्रेष्वपि ऊहेन प्रयोगो विकृतत्वात् । समानेऽपि कर्मणि प्रदानभेदात् प्रकृतिविकारभावो भविष्यति । ध्रुवचमसाश्च ऐन्द्राः प्रकृतिभूताः । कथमवगम्यते ? ग्रहणमन्त्रेण सोमस्य इन्द्रप्रदानविषयत्वात् । भवति हि साधनवशेन साध्यस्य नियमः । तद्यथा आहवनीयादिवशेन अग्निहोत्रादेः । यत्र च सोमः, तत्र सर्वे तद्धर्माः । तेन ऐन्द्राणि प्रदानानि धर्मवन्ति, इतराणि तु अधर्मकत्वात् अतिदेशेन ग्रहीष्यन्ति । ततश्च सिद्धः ऊहः । तथा च सिद्धवत् ' नमति ' इत्यनूद्य ' अनुष्टुप्छन्दसः ' इति विशेषविधानं उपपत्स्यते । संस्थानां च विकारत्वं अद्यापि असिद्धं इति दर्शनं मन्यते । विकारत्वे तु अन्यथा अस्त्येव ऊहः इति अदर्शनमेव स्यात् । **ननु** संस्था विकारभूतैव , इति अलिङ्गं विपरिणामदर्शनम् । **नेति ब्रूमः** । अग्निष्टोमान्तानां हि प्रदानानां समानविधानत्वे संस्थानां विकारत्वेऽपि प्रकृतिवत् विकृतावपि अविकृतस्यैव उपकारकत्वसंभवात् कुतो विपरिणामदर्शनम् । ऐन्द्राणां तु प्रकृतित्वे तार्तीयसवनिकेषु अपि अग्निष्टोमादिषु विपरिणत एवेत्युपपन्नं विपरिणामदर्शनम् । विशिष्टपदापेक्षश्चैष विपरिणामव्यपदेशः । न विधित्सितानुष्टुप्छन्दःशब्दापेक्षः इति । ( अत्र **सुधा—** अनुष्टुप्छन्दसः इत्येवं ऊहविशेषरूपेण विशिष्टं अनुष्टुप्छन्दःपदं अपेक्ष्य अयं विपरिणामव्यपदेशो युज्येत , न

तु स्वरूपेण विधित्सितं अनुष्टुप्छन्दःशब्दं अपेक्ष्य । 'इष्टपद' इति पाठे तु ( विशिष्टपद इत्यस्य स्थाने ) अनुष्टुप्छन्दःशब्दस्य ऊहानुवादार्थे नमति इतिपदमपेक्ष्य ( इष्टं पदं नमतिपदं ) पश्चात् विधौ सति विपरिणामव्यपदेशो युज्येत. न तु विधित्सितं अनुष्टुप्छन्दःशब्दं अपेक्ष्य पश्चात् विपरिणामव्यपदेशः । इति । ( अत्र आनन्दाश्रमीये 'पदाक्षेप' 'शब्दाक्षेप' इति मुद्रितं, तत् 'पदापेक्ष' 'शब्दापेक्ष' इति पठनीयम् ) । तस्मात् यथादेवतमूहः इति ।

**छन्दःप्रतिषेधस्तु सर्वगामित्वात् । ३९ ॥**

**भाष्यम्**— स्थितादुत्तरमुच्यते । नैतदस्ति यदुक्तं ऊहेन मन्त्रवत् भक्षणं कर्तव्यं इति । अमन्त्रकं भक्षणं कर्तव्यम् । कस्मात् ? उच्यते । समानविधानत्वात् । नास्ति अत्र प्रकृतिविकृतिभावः । कथं ? प्रकरणस्य तुल्यत्वात् । यत् लिङ्गमुक्तं, छन्दःप्रतिषेधः सः इति, उच्यते । तृतीयसवनत्वात् 'जगतीछन्दसः' इति प्राप्ते 'अनुष्टुप्छन्दसः' इति 'षोडशिनि भक्षमन्त्रं नमति' इति समानविधानेऽपि अवकल्पते । यत्तु उक्तं 'ऐन्द्रः सोमो गृह्यते मीयते च' इति, नैते ऐन्द्रा अनैन्द्राश्च भिन्ना यागाः, एकस्यैव एते अभ्यासविशेषाः । न च अभ्यासविशेषाणां धर्माः, गुणत्वात् । सर्वे एते यागधर्माः । तेन कृत्स्नाः यागस्य चोद्यन्ते सोमधर्माः सोमश्चेति । यच्च 'ऐन्द्रो गृह्यते मीयते च' इति, इन्द्रस्य मन्त्राम्नानात् मन्त्रेण ग्रहणं प्रकाशयितव्यम् । इतरासां देवतानां ध्यानादिना इति । तस्मात् अनैन्द्राणां अमन्त्रकं भक्षणमिति ।

वा — स्थितादुत्तरम् । न यथादेवतमूहः । किं तर्हि ? अनैन्द्राणां अमन्त्रकमेवेति । कुतः ? '**तुल्यप्रकरणा ह्येषा ज्योतिष्टोमक्रियेष्यते । प्रकृतिर्विकृतिश्चेष्टा न ह्यात्मैवात्मनः क चित् ॥**' यदि हि अभ्यासाः पृथक्कर्माणि भवेयुः, ततः प्रकृतिविकारभावः स्यात् । न तु एवमस्ति । न च एषां सोमो धर्मा वा केन चित् विहिताः । येन तु प्रकारेण एको गृह्णाति, तेन सर्वे । यथा वक्ष्यति 'तद्वत् सवनान्तरे ग्रहाम्नानम्' इति ( ३।६।९।३० ) । न च मन्त्रवशेन ऐन्द्रविषयता सोमस्य, प्रत्यक्षया श्रुत्या सर्वविषयत्वबोधात् । न च यथा अनारभ्यवादेन आहवनीयः सर्वहोमार्थः इति तद्रहितकर्मान्तराभावात् आहिताग्नेः अधिकारः, एवमिह मन्त्रः सर्वसोमार्थः प्रकरणपठितः सामर्थ्यात् इन्द्रार्थं प्रकाशयिष्यति । अन्यस्तु तेन अप्रकाशित एव ग्रहीष्यते मास्यते वा । **अथवा** विवेकाभावात् सर्वस्मिन्नेव गृह्यमाणे संकल्पमात्रेण व्यवस्थाप्यते । ( एवं भाष्यं द्वेधाऽभिप्रायेण व्याख्याय स्वयं परिहारान्तरमाह— ) **अथवा** सुब्रह्मण्यावत् मुख्यतया इन्द्रप्रकाशनार्थो भवति, तत्प्रभृतये देवतासमुदायाय इत्यर्थः । ( अपरितोषात् अन्यथा परिहरति— ) **अथवा** विधिशब्दे वसुमत्त्वस्य अभावात् तद्गुणप्रकाशनं व्यर्थं, इति वसुमत्त्वेन इतरदेवतासहिताय इत्येतदभिधीयते । तस्मात् सर्वत्र समानविधानः सोमः, ततश्च विकारत्वाभावः । **यत्तु** अनुष्टुप्छन्दसः विनामविधानात् विकृतत्वमिति, **तत्** समानविधानत्वेऽपि तृतीयसवनत्वात् जगच्छन्दस्त्वे प्राप्ते विशिष्टविधानत्वेन उपपत्स्यते । **अथवा** संस्थानां विकारत्वात् उपपन्न एव अत्रोहः इति अदर्शनमेव । तस्मात् ऐन्द्रेष्वेव भक्षणमन्त्रः । मानग्रहणवच्च न तद्वशेन भक्षनियमः, इति अन्येषां अमन्त्रकं भक्षणम् ।

**सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि । ४४ ॥**

**भाष्यम्** —यदुक्तं अनैन्द्राणां अमन्त्रकं भक्षणमिति, तन्न, सर्वेषां समन्त्रकं भक्षणमिति । यथासमाम्नातश्च मन्त्रः स्यात् । न 'इन्द्रपीतः' इति सोम उच्यते, किं तर्हि ? सवनं, प्रातःसवनशब्देन सामानाधिकरण्यात् । ननु सोमेऽपि षष्ठी, सत्यमस्ति षष्ठी, न तु तेन सामानाधिकरण्यम् । नासौ इन्द्रेण सोमः पीतः, नापि इन्द्राय दत्तः । अन्य एव पीतो दत्तो वा, स गत एव । न च अतीतः समुदायो व्यपदिश्यते । प्रत्यक्षवचनो हि अयं शब्दः । सवने तु न दोषः । इन्द्रपीतं भवति सवनं, यत्र इन्द्रेण पीतम् । तस्मात् अनैन्द्रोऽपि इन्द्रपीतसवने अन्तर्भवति इति शक्यते मन्त्रेण वदितुम् । शंक्यते चेत्, समानविधाने कथमिव मन्त्रो न भविष्यति । भक्त्या हि अपीतः पीतः इत्युच्यते । एवमेव ऐतिशायन आचार्यो

मन्यते स्म। अस्माकमपि ( जैमिनेरपि ) एतदेव मतम् । आचार्यग्रहणं तस्मात् आगतं इति तस्य संकीर्त्यर्थम् ।

**वा**— स्थितादुत्तरम् । अनिन्द्रपीतेष्वपि अविकृत एव मन्त्रः प्रयोक्तव्यः, न अमन्त्रकं भक्षणम् । कुतः ? **' इन्द्रेण यस्मिन् सवने पीतः सोमो निरूप्यते । तस्य योऽन्योऽपि संबन्धी स एवं व्यपदिश्यते ॥'** नैवं अभिसंबन्धः ' इन्द्रपीतस्य सोमस्य ' इति । किं तर्हि ? ' इन्द्रपीतस्य प्रातःसवनस्य यः संबन्धी ' इति । न च प्रातःसवनशब्दः सोमसमानाधिकरणः क्रतुभागवचनत्वात् । तद्गतसोमवाचित्वे च प्रातःसवनीयस्य इति प्रसङ्गात् । अतः सवनस्य इन्द्रपीतस्य इति च समानाधिकरणे सोमसंबन्धव्यतिरेकजनिते षष्ठ्यौ । सोमस्य इति तु व्यधिकरणा सोमविषयावयवव्यतिरेकनिमित्ता षष्ठी । तेन पदान्तरसामर्थ्यात् संयोगप्रकरणाविशेषाच्च प्रयोक्तव्य एव एष मन्त्रः । कस्मादेवं गृह्यते ( इन्द्रपीतशब्दः सवनपरतया ) इति चेत्, सोमे ( इन्द्रपीतशब्देन अभिधीयमाने ) भाक्तत्वप्रसङ्गात् । पूर्वसंकल्पितो हि समुदायः इन्द्रपीतो मुख्यः, तस्य चार्थं अवयवः उपचारात् एवमभिधीयते, न चैतत् युक्तम् । तस्मात् सर्वसोमानां इन्द्रपीतसवनसंबन्धित्वात् मन्त्रवत् भक्षणं इति सिद्धमिति ।

**शा**— ज्योतिष्टोमे सन्ति ऐन्द्राणि अनैन्द्राणि च प्रदानानि । तत्र संशयः किं ऐन्द्रेष्वेवायं मन्त्रः, अनैन्द्राणाममन्त्रं भक्षणं, उत तेष्वपि ऊहेन मन्त्रः, अथवा सर्वत्र यथासमाम्नात एव मन्त्र इति । तदर्थं च किं ऐन्द्राणामनैन्द्राणां च प्रकृतिविकारभावोऽस्ति न वेति । तथा इदमपरमपि चिन्त्यं, ' इन्द्रपीतस्य ' इति तत्पुरुषः सोमविशेषणं ' इन्द्रेण पीतस्य सतः ' इति, किंवा बहुव्रीहिः सवनविशेषणं ' इन्द्रेण यस्मिन् पीतः सोमः, तस्य प्रातःसवनस्य ' इति । **' तत्र तत्पुरुषे स्वार्थलाभः स्यादुत्तरे पदे । बहुव्रीहौ द्वयोरन्यपरत्वाद् दुर्बलत्वधीः ॥ ऐन्द्रानैन्द्रप्रदानानि ह्यंशा एकस्य कर्मणः । प्रकृतिर्विकृतिश्चेष्टा न चात्मैवाऽऽत्मनः क चित् ॥ '**

**सोम**— ( ३।२।११ स्थः ) मन्त्राणां सामर्थ्यानुसारेण विनियोगे निरूपिते भक्षमन्त्रस्य किं ऐन्द्रप्रदानशेषभक्षणे एव सामर्थ्यं, उतानैन्द्रप्रदानशेषभक्षणेऽपि इत्येवं सामर्थ्यविषयविचारेण यथासामर्थ्यं विनियोगस्य स्थिरीकरणात् **संगतिः** । तत्र शुक्रग्रहप्रदानसवनमुखीयचमसप्रदानादीनि ऐन्द्राणि, आश्विनादीनि अनैन्द्राणि इति द्रष्टव्यम् । **सूत्रे** ( २७ ) समानविधानेषु इति प्रकृतिविकारभावनिराकरणार्थम् । ( छन्दःप्रतिषेधस्तु सर्वगामित्वात् ३८ इति ) **सूत्रार्थस्तु**– सोमस्य सर्वप्रदानगामित्वादनूहः । तत्र यदूहस्य लिङ्गमुक्तं ' षोडशिनि अनुष्टुप्छन्दस इति भक्षमन्त्रं नमति ' इति, तदपि न, यतः षोडशिनः तृतीयसवनत्वेन ' जगतीछन्दसः ' इति प्राप्तौ तत्प्रतिषेधोऽयं ' अनुष्टुप्छन्दसः ' इति, न तु इदमूहे लिङ्गमिति । ( सर्वेषां तु० इति ४० ) **सूत्रार्थस्तु**– सर्वेषां ऐन्द्रानैन्द्रप्रदानानां ऐकमन्त्र्यं अविकृतमन्त्रकत्वं इति यावत् । हि यस्मात् कारणात् पानस्य भाक्तत्वेन इन्द्रपीतशब्दस्य सोमविशेषणत्वासंभवात् सवनाधिकारः सवनविशेषणमिति । ऐतिशायनग्रहणं पूजार्थम् ।

**वि**— ( ३।२।११ ) ' इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके । केवलेऽन्यत्र वोहाच्च सर्वत्रोत यथाश्रुतम् ॥, ऐन्द्र एव समर्थत्वात् तूष्णीमेवात्र भक्षणम् । ( इत्येकः पूर्वपक्षः) ऊहो वाऽन्येषु कर्मैक्येऽप्यस्त्यूहो भक्षभेदतः ॥ ( इति द्वितीयः पूर्वपक्षः ) । , इन्द्रेण यस्मिन् सवने सोमः पीत इतीरणात् । सवनस्थेषु सर्वेषु मन्त्रोऽनूहेन पठ्यताम् ॥ ' ( इति सिद्धान्तपक्षः ) ।

**भाट्ट**— भक्षमन्त्रः किं इन्द्रदेवत्याभ्यासे एवाङ्गं तद्भिन्नाभ्यासेषु अमन्त्रकं भक्षणं, उत तेषु ऊहेन, उत अनूहेन इति चिन्तायां, प्रकरणात् भक्षमन्त्रस्य सर्वप्रदानार्थत्वावगमेऽपि ' इन्द्रपीतस्य ' इति लिङ्गेन इन्द्रदेवत्यप्रदानमात्राङ्गत्वम् । **न च** इन्द्रेण यस्मिन् सवने पीत इति बहुव्रीहिस्वीकारेण सर्वसोमसंबन्धिसवनविशेषणत्वाङ्गीकारात् लिङ्गाविरोधः इति **वाच्यम्** । पदद्वयलक्षणाऽऽपादकलक्षणाऽननुगतव्यधिकरणबहुव्रीह्यपेक्षया पूर्वपदे एव संबन्धिलक्षणाऽऽपादकस्य लक्षणाऽनुगतस्य

इन्द्रेण पीतः स्वीकृत इत्येवं तत्पुरुषस्यैव लघुभूतत्वात्। विद्यते च देवतायाः प्रतिग्रहाभावेऽपि 'देवस्वं न गृह्णीयात्' इत्यादिवचनबलेन संबन्धविशेषरूपः स्वीकारः। न च स्थूलपृषतीपदवत् स्वरादेव बहुव्रीहित्वनिर्णयः, तद्वदिह समासस्य लक्षणानुगतत्वाभावेन स्वरस्यैव बाध्यत्वात्। यथा च तत्पुरुषपक्षेऽपि स्वराविरोधः, तथा कौस्तुभे एव उपपादितम्। [कौ—वस्तुतस्तु तत्पुरुषेऽपि पठ्यमानः स्वरो नैवानुपपन्नः 'तृतीया कर्मणि' (पा० ६।२।४८) इत्यनेन कर्मणि क्तान्ते उपपदे परे तृतीयाऽन्तं पूर्वपदप्रकृतिस्वरं इत्यभिधानात् तृतीयासमासेऽपि विवक्षितस्वरोपपत्तेः। यद्यपि चात्र पीतपदे तत्कर्तृलक्षणया चतुर्थीसमासः अङ्गीक्रियेत, तथापि 'चतुर्थी तदर्थे' (पा. ६।२।४३) इत्यनेन तदुपपत्तिः। यदि तु देवताऽर्थत्वस्य नवमे निराकरणात् नैतत्प्रवृत्तिः इत्याशङ्क्येत, तदा 'क्ते च' (पा० ६।२।४५) क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या इति सूत्रात् पूर्वपदप्रकृतिस्वरसिद्धिर्द्रष्टव्या इति]। अतश्च लिङ्गादिन्द्रदेवत्यप्रदाने एव मन्त्रस्याङ्गत्वावगमात् अनैन्द्राणां च कर्मणः एकत्वेन प्रकृतिविकारभावासंभवात् ऊहानुपपत्तेः 'व्रीहीणां मेध' इतिवत् अनैन्द्राणाममन्त्रकं भक्षणमिति **आद्यः पक्षः**। **द्वितीयस्तु**—सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः। 'इन्द्राय त्वा वसुमते' इत्यादिमानग्रहणमन्त्राणां च लिङ्गात् ऐन्द्रमात्रविषयत्वात्, तदनुरोधेन च तत्प्रकाश्ययोर्मानग्रहणयोः तत्संस्कार्यस्य सोमस्य तत्संस्काराणां च अभिषवादीनां तन्मिश्राणां च अङ्गान्तराणां ऐन्द्रमात्रविषयत्वप्रतीतेः, इतरेषां अधर्मकाणां युक्तः अतिदेशः। भवति च अङ्गवशेनापि प्रधानसंकोचः अग्न्याद्यनुरोधेन क्रतूनां आहिताग्निविषयत्वात्। अतश्च प्रकृतौ अपूर्वीयदेवताप्रकाशकस्य भक्षमन्त्रस्य कार्यमुखेन विकृतौ आगतस्य भवत्येव यथादेवतमूहः इति। (एवं ११ अधिकरणस्थः प्रथमद्वितीयपूर्वपक्षप्रतिपादको ग्रन्थः। अथ १७ अधिकरणस्थो निवेश्यते। तत्र च पूर्वोक्तप्रथमपूर्वपक्ष एव द्वितीयपूर्वपक्षनिरासद्वारा निवेशितः)।

एवमूहं विचार्य अधुना आद्यपूर्वपक्षवादी पुनस्तं दूषयति। नहि ऊहः कर्मण एकत्वात्, अभ्यासानामपि फलचमसवत् असमानविधानत्वे प्रमाणाभावाच्च। नहि मानग्रहणमन्त्रानुरोधेन तदुद्देशानां संकोचो युक्तः। अग्निविद्ययोस्तु स्वस्वविधिप्रयुक्तत्वेन क्रतुविधिप्रयुक्तत्वाभावात् युक्तः परप्रयुक्ताग्निविद्योपजीवकतया क्रत्वधिकारसंकोचः। अतो मानग्रहणमन्त्रावेव काममैन्द्रमात्रप्रदानविषयौ भवेतां, न तु मानाद्यपि। वस्तुतस्तु—'वसुमते' इत्यनेन देवताऽन्तरस्यापि अभिधानात् तयोरपि सर्वार्थत्वमेव। अतो भक्षमन्त्रस्यैव ऐन्द्रप्रदानमात्रविषयत्वात् अनैन्द्राणाममन्त्रकं भक्षणम्।

(इतः परं २० अधिकरणस्थः एकादशाधिकरणसिद्धान्तप्रतिपादको ग्रन्थो निवेश्यते।)

(स्थितादुत्तरम्)। न इन्द्रपीतपदे तत्पुरुषः, अपि तु बहुव्रीहिरेव। तत्पुरुषेऽपि पूर्वपदे संबन्धिलक्षणा, पीतपदे च स्वीकृतावयवलक्षणा। यद्यपि चेयं सिद्धान्तिनोऽपि तुल्या, तथापि अवयवस्वीकारस्य अवयविस्वीकारसापेक्षत्वेन विलम्बोपस्थितिकत्वान्न तुल्यत्वम्। अतश्च पीतपदे अर्शआद्यच्प्रत्ययं मत्वर्थीयं कृत्वा पाधातुना च अवयवगतमेव तत्संबन्धिस्वीकारं लक्षयित्वा इन्द्रः पीतः स्वीकारकर्ता (पानकर्ता) यस्मिन् सवने इति व्युत्पत्त्या समानाधिकरणबहुव्रीहिरङ्गीक्रियते। प्रकरणविशेषाच्च निर्णयः। अतः सर्वस्यैव सोमस्य उक्तविधप्रातःसवनादिसंबन्धित्वात् अनैन्द्राणामपि समन्त्रकमेव अविकारेण भक्षणम्। यदि तु पीतपदस्य पूर्वनिपातापत्तिमाशङ्केत, तदा अस्तु इन्द्रे पीतं पानमस्मिन्निति सप्तमीबहुव्रीहिः। यदि तु निष्ठाऽन्तत्वेन पूर्वनिपातापत्तिरविशिष्टेति विभाव्यते, तदा पीतपदस्य आकृतिगणत्वेन आहिताग्न्यादिगणान्तःपातमङ्गीकृत्य 'वाऽऽहिताग्न्यादिषु' (पा० २।२।३७) इति सूत्रेणेन्द्रशब्दस्य पूर्वनिपातः। **अथवा** अस्तु अयं तत्पुरुष एव, तदाऽपि तु लक्षणया सोमसंबन्धिसवनपरत्वम्। न च तस्यां प्रमाणाभावः, तैत्तिरीयशाखायां प्रातःसवनादिभेदेन इन्द्रपीतनराशंसपीतपितृपीतपदानां त्रिवारं पाठस्यैव प्रमाणत्वात्। सोममात्रपरत्वे हि तत्तत्प्रदानेषु लिङ्गादेव

इन्द्रपीतादिपदानां सकृत्पठितानामेव पाठोपपत्तौ तत्र योग्यतयैव प्रातःसवनादिपदानां विभागेन विशेषणान्वयोपपत्तिः। अतस्तेषां प्रातःसवनादिभेदेन त्रिवारं पाठ एव वैयर्थ्यभिया सवनपरत्वलक्षणातात्पर्यग्राहकः। अतश्च इन्द्रपीतादिविशेषणत्रययुक्तस्य तत्तत्सवनस्य संबन्धिनं सोममन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वत्रैकमन्त्र्यम्। विभागोऽपि च तैत्तिरीयशाखाऽऽम्नातक्रमेणैव बोध्यः। कल्पसूत्रकारास्तु ऊहमेव आमनन्ति। (वस्तुतस्तु ११, १७, २० एतानि अधिकरणानि न भिन्नानि। एकमेवैतदधिकरणं एकादशम्।)

**मण्डन**— 'ऐन्द्रेषु सोमेषु तु भक्षमन्त्रः।' ११। 'नेन्द्रादिपीतो भवतीन्द्रपीतः।' १७। 'स्यादिन्द्रपीतं सवनं, न सोमः।' १९।

**शंकर**— 'नानाछन्दस्त्वं मन्त्रः।' १८। 'नैन्द्रे, नोहो, न नास्तिता।' १९।

* 'इन्द्रपीतस्योपहूतो भक्षयामि' इत्यादौ स्वरेणैव बहुव्रीहिनिर्णये **इन्द्रपीताधिकरणं** अवैयाकरणान् प्रति सार्थकम्। क्त्वाचिन्तान्यायेन वा नेयम्। **शब्दकौस्तुभे** प्रयोजनविचारे १. * **इन्द्रपीताधिकरणे** तत्पुरुषात् बहुव्रीहौ लाघवम्। तत्पुरुषे पूर्वपदस्य लक्षणा बहुव्रीहौ तु शक्तिरेव इति। इत्याचार्यादयः। परे तु इन्द्रपीतपदे तत्पुरुषेऽपि पूर्वपदलक्षणया, पीतपदे हुताहुतशेषलक्षणया चेति लक्षणाद्वयापत्त्या लाक्षणिकबहुव्रीह्यपेक्षया तत्पुरुषस्य दुर्बलत्वात् सिद्धान्तसिद्धिः इत्याहुः। **मणि.** पृ. १४९. * इन्द्रपीताधिकरणे निराकाङ्क्षस्य विधेः मन्त्रलिङ्गानुसारेण संकोचः निराकृतः। **के.** * इन्द्रपीताधिकरणे बहुव्रीहेः अन्यपदार्थशक्तेः व्यवस्थापयिष्यमाणत्वात्। **कु.** ३।१।६।१२ पृ. २५४. * इन्द्रपीताधिकरणे सिद्धान्तसूत्रे (३।२।१७।४१) इन्द्रपीतसमासस्थेन इन्द्रशब्देन सापेक्षेन्द्रदेवत्यस्य ऐन्द्राग्नादेः सोमस्य अग्रहणं वक्ष्यति। **सु.** पृ. ६४७. * **इन्द्रपीताधिकरणसिद्धान्ते** 'गायत्रच्छन्दसः' इत्यादेः सवनविशेषणत्वं स्थितम्। **कौ.** ३।२।१९।४२ पृ. ३०३, * इन्द्रपीताधिकरणसिद्धान्तरीत्या तद्विनियोगस्तु (भक्षमन्त्रविनियोगः) नैवानिष्टः। अत एव इन्द्रपीताधिकरणप्रयोजनस्य अनुवषट्कारयागोऽपि विषयः। ३।२।१६।३८ पृ. २९७.

* **इन्द्रमहेन्द्रन्यायः** (स्तुतशस्त्राधिकरणान्तर्गतः) २।१।५।१३-२९। **न च** वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषां देवतात्वं किंतु वाजित्वेन। ततश्च स्तुतशस्त्राधिकरणगत—**इन्द्रमहेन्द्रन्यायेन** देवताभेदात् नास्ति पूर्वकर्मसमवायः इति **वाच्यम्। कु.** २।२।९।२३ पृ. १८७. * वेदे समिदादिपदानां अग्निपदसामानाधिकरण्ये सत्यपि इन्द्रमहेन्द्रन्यायेन समिदादिपदैः तत्तत्प्रकाशनानुपपत्तिः, शब्दस्य देवतात्वेन तद्भेदे पदान्तरप्रयोगानुपपत्तेः। **भाट्ट.** ९।२।१९. * वाजिशब्दोपस्थितविश्वदेवदेवतामुखेन वाजिनद्रव्यं विहितं भवति। इति नात्र **इन्द्रमहेन्द्रन्यायावतारः। कु.** २।२।९।२३ पृ. १८७. * **इन्द्रमहेन्द्राधिकरणे** विधिमात्रप्रमाणिका देवता इत्युक्तम्। **बाल.** पृ. १२२.

* **इन्द्ररोचनं** नाम साम अनृकम्। **बाल.** पृ. ७२.

* **इन्द्रशब्दः** यज्ञसाधनत्वरूपात् सादृश्यात् ऐश्वर्याद्वा गार्हपत्ये गौणः। **भा.** ३।२।२।४, * **इन्द्रशब्दस्य** ऐश्वर्यवचनत्वात्। १०।३।२।१५.

* **इन्द्रायुधमिव** धातुत्रयानुरक्तं एकं कर्म। (यजति, ददाति, जुहोति। इदं पूर्वपक्षे)। **वा.** २।२।१।१ पृ. ४६३। इन्द्रायुधं यथा लोहितशुक्लकृष्णैस्त्रिभिर्धातुभिः संहत्यानुरज्यते तद्वत्। **सु.** पृ. ७०२.

* **इन्द्रासोमीयस्य** ऐन्द्राग्नविकृतित्वं इन्द्रमुखत्वात्। **बाल.** पृ. १२०.

* **इन्द्रियं** गमकं, यत् सत्तामात्रेण स्वसंनिकृष्टमर्थं गमयति। **के.** * इन्द्रियं चक्षुरादि प्रत्यधिष्ठानं नानैव। तच्च प्रमाणान्तरवशात् तैजसादि। **भाट्ट.** ९।३।१०. * इन्द्रियं संनिहिते एव विषये ज्ञानं जनयति। **ऋजु.** पृ. २०४, * **इन्द्रियाणि** स्वानुभवासमर्थानि। पृ. २३०.

‘ **इन्द्रियाभ्यामजय्याभ्यां द्वाभ्यामेव हृतं जगत्। अहो उपस्थजिह्वाभ्यां ब्रह्मादिमशकावधि॥**’ **इति न्यायः**। यथा— अनाद्यविद्यया विषयभोगलाम्पट्य-मेवानुगमितमिदं जगत् जङ्गमप्रणिजातं सर्वं चेति भावः। **साहस्री.** ५३८.

* **इन्द्रियस्य** सर्वत्र प्रत्यक्षे कारणत्वात्। **मणि.** पृ. १९. * **इन्द्रियकामस्य** अग्निहोत्रं दध्ना जुहुयात्। **भा.** २।२।११।२५, दध्ना इन्द्रियकामस्य जुहुयात्, ... य इन्द्रियकामः स्यात्, स दध्ना होमं कुर्यात्... इन्द्रिय-कामस्य होमसंबद्धं प्रयत्नं दधिसंबद्धं कुर्यात्। २६. * **इन्द्रियकामवाक्ये** अन्यत एव दध्नो होमान्वयलाभात् न कर्मान्तरता। **सु.** पृ.८५५, * **इन्द्रियकामहोमः**, आश्रयमन्तरेण गुणस्य फलसाधनत्वायोगात् विधिमन्तरेण च प्रकरणावगतस्यापि होमस्य आश्रयत्वे प्रमाणाभावात् प्रकरणावगतं स्वरूपमनूद्य गुणफलसंबन्धविध्यन्यथाऽ-नुपपत्तिप्रसूतेन विधिना आश्रयत्वेन विधीयते। पृ. ४७.

**इन्द्रियकामाधिकरणम्**। गुणकामाधिकरणम्। अग्निहोत्रप्रकरणे श्रुते दध्नेन्द्रियकामस्य जुहुयादिति वाक्ये गुणात् फलमुक्तम्॥

**फलश्रुतेस्तु कर्म स्यात्, फलस्य कर्मयोगि-त्वात्।** २।२।११।२५॥

**भाष्यम्**— अग्निहोत्रं प्रकृत्य समामनन्ति ‘दध्ने-न्द्रियकामस्य जुहुयात्’ इत्येवमादि। तत्र संशयः किं अग्निहोत्रहोमात् होमान्तरं दध्यादिहोमः, उत दध्यादे-र्गुणात् फलं इति। किं प्राप्तं? होमान्तरमिति। कुतः? फलश्रुतेः। फलमिह श्रूयते, तच्च कर्मणो न्याय्यम्। किं दृष्टं हि कर्मणः फलं कृष्यादितो व्रीह्यादि? नेति ब्रूमः। नहि एतत् दृष्टेनानेन सिध्यति। यदि दर्शनं हेतुः फलज्ञाने कृष्यादौ पदार्थे तद्दर्शनं, न होमे। अथ कृषौ दृष्टं, अन्यत्रापि भवति द्रव्यादपि (द्रव्यादावपि) प्रसज्यते। अथ कृषिसदृशात् भवति इत्युच्यते कृषि-सदृशो होमः क्रियात्वात्, न द्रव्यं, असदृशं हि तदिति। होमोऽपि असदृशः मन्त्रदेवतादिसाधनत्वाद्धोमस्य, लाङ्गलादिसाधनत्वाच्च कृषेः। त्यागात्मकत्वात् होमस्य, पाटनात्मकत्वाच्च कृषेः। अथ किंचित् सादृश्यं गृह्यते, द्रव्यस्यापि सत् अनित्यं इत्येवमादि किंचित् सादृश्य-मस्ति। अथ द्रव्यादन्यत् सदृशतरमस्ति इति कृत्वा न द्रव्यं सदृशं इत्युच्यते, होमादपि अन्यत् कृषेः सदृशतर-मस्ति दृष्टार्थं, इति कृत्वा होमोऽपि असदृशः स्यात्। न चैतत् सिद्धं, ‘यत् क्व चित् दृश्यते तदन्यस्मिन् सदृशमात्रे अदृष्टमपि भवितुमर्हति’ इति। यद्धि यस्य कारणभूतं दृष्टं, सिद्धे तच्चेत्, साध्येऽपि कारणभूतमित्यवगम्यते, भवति तत्तस्य साधकम्। यन्न ज्ञायते कारणभूतमिति, न तत् सदृशमपि साधकम्। तस्मात् सदृशमपि साधक-मसाधकं वा इति परीक्षितव्यमिति। अथ यत् कर्म फलवत् दृष्टं, होमोऽपि कर्म तेनापि फलवता भवितव्य-मिति। उपरते कर्मणि द्रव्याणां तत्संयोगानां च द्रव्यान्तरं फलं दृष्टं, इति द्रव्यमपि फलवत् स्यात्। अपि च कृषेर्नादृष्टं इति तत्सादृश्यात् होमादपि नादृष्टं भवेत्। कृषिसादृश्याद्वा व्रीहिरेव भवेत्, नेन्द्रियम्। तस्मात् नैवंजातीयकेषु एतद्भवति दृष्टाददृष्टसिद्धि-रिति। कथं तर्हि होमात् न्याय्यं फलमिति? उच्यते। शब्देनावगम्यते तत् फलम्। यतः फलमिति शब्द आह, ततो न्याय्यम्। होमाच्च फलं इति श्रुत्या शब्देन गम्यते, दध्नः फलमिति वाक्येन। श्रुतिश्च वाक्यात् बलीयसी। तस्मात् होमात् फलमिति न्याय्यम्। दध्नः फलं इति चान्याय्यम्। अपि च दधि उभय-मसमर्थं कर्तुं फलं साधयितुं होमं च। ननु कम्बलनिर्णे-जनवत् एतद्भविष्यति। निर्णेजनं हि उभयं करोति, कम्बलशुद्धिं पादयोश्च निर्मलताम्। न ब्रूमः एकस्योभयं प्रयोजनं अभिनिष्पादयितुं सामर्थ्यं नास्तीति, किं तर्हि? फले गुणभूतं दधि होमे च, इत्येकं वाक्यं वदितुमसमर्थ-मिति। यदि फलं दध्ना कुर्यात् इति ब्रूयात्, न दध्ना होममिति। अथ दध्ना होमं साधयेत् इति ब्रूयात्, न फलमिति। उभयवचने भिद्येत वाक्यम्। अभिन्नं चेदमुपलभ्यते। तस्मात् न गुणात् फलं इत्यतः अग्नि-होत्रहोमात् दधिहोमः कर्मान्तरमिति।

**वा**— ‘अग्निहोत्रं जुहोति’ इति प्रकृत्य ‘दध्ने-न्द्रियकामस्य’ इति श्रूयते। तत्र संदेहः किं पूर्वस्मात्

इदं कर्मान्तरं, उत तस्यैव गुणात् फलमिति । द्वयमेव पुरस्तादवस्थितं, अगुणोत्पत्तौ कर्मणि तत्रैव गुणः। सगुणोत्पत्तौ तु प्रकारान्तरेण च अविधीयमानानेकगुण-संगतौ सत्यां कर्मान्तरत्वमिति । तदिह अगुणश्च कर्मशब्दः, अनेकार्थोपादानं च वाक्ये श्रूयते । तेन संभवासंभवयोः संदेहः । तत एतत्सिद्ध्यर्थं इदं विचार-यितव्यं किमिह होमात् फलं, उत गुणात् । किमर्थं पुनः 'गोदोहनेन पशुकामस्य' इत्येतत् वृत्त्यन्तरोदाहृतमति-क्रम्यते? भेदाभेदयोरनुपयोगात्। क्रत्वर्थपुरुषार्थविचारे हि तस्य एतस्य वा उदाहरणत्वे न कश्चित् विशेषः स्यात्। इह तु भेदाभेदलक्षणे तदनुगुणमुदाहर्तव्यम् । न च प्रणयनस्य देशान्तरप्राप्तिसंस्कारात्मकत्वात् भेदाभेदयो-र्विशेषः । यदि च गोदोहनात् फलं यदि च तद्वतः प्रणयनात्, उभयथाऽपि तादृगेवानुष्ठानम् । इह पुनः यदि गुणात् फलं, ततः सायंप्रातराहुत्योरेव दधि प्रयो-क्तव्यम् । अथ होमात्, ततः नैयमिकहोमव्यतिरिक्तं अनियतकालं दधिसाधनकं होमान्तरं सकृदेव दर्विहोमत्वात् अपूर्वं क्रियते, इत्यस्ति भेदज्ञाने विशेषः । **ननु** च होमादपि फले 'संनिधौ त्वविभागात्' (२।३।१३।२६) इत्यनेन न्यायेन स्वर्गयावज्जीवयोरिव तदेव कर्म विधीयते । **नैतदेवम्** । '**यदि नामाविभागः स्यात् कर्मणः प्रत्यभिज्ञया । ततस्तदेव कर्म स्यादन्यथा भेदनिश्चयः** ॥' फलनिमित्तादौ हि विधीयमानं कर्म अनुत्पन्नं तैः संबन्धुं न शक्नोति, इत्यर्थात् उत्पत्ति-विधित्वमपि अनुभवितुमुपक्रमते । तत्र यदि बलीयस्या विपरिवृत्त्या तादूप्यादप्रच्युतया पूर्वकर्म उत्पत्तिरूपं स्थाप्यते, तत्र उत्पादकशक्तिविरोधात् प्रत्यभिज्ञानबलेन तदेव कर्म अध्यवसीयते इति न भिद्यते । यदा तु पूर्व-कर्मरूपात् किंचिदपि आधिक्यं विज्ञायते, तदा नैव अविभागज्ञानमस्ति, इत्यर्थात् उत्पत्तिविधिर्भवन् अन्येन तद्रूपोत्पत्तिसमर्थेन विध्यन्तरेण अनिवारितशक्तिः सत्यपि अन्यपरत्वे अनुपादेयं प्रति उपादानात् कर्म भिनत्ति । न च 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र इन्द्रियं प्रति उपादानात् दधिविशिष्टहोमान्तरबुद्धिः भवन्ती केन चित् तद्रूपोत्पत्तिं उपस्थापयता वार्यते ।



कुतः? '**होमो हि प्रकृतः शुद्धः स्ववाक्यादव-धारितः । सोऽस्मिन् दधिविशिष्टत्वाद् विभागे-नैव गम्यते** ॥' 'अग्निहोत्रं जुहोति' इति होमः शुद्धः उत्पन्नः । इह च दधिविशिष्टः श्रूयते । तेन अविभागात् इत्यस्य अभेदहेतोः असिद्धत्वात् भिद्यते । ननु 'दध्ना जुहोति' इति अस्त्येव दधिविशिष्टो होमः । न । तस्य अनुत्पत्तिवाक्यत्वात् । येन ताव-दसौ उत्पादितः न तत्र दधिविशिष्टः, यत्र दधिसंबद्धः तत्र नोत्पादितः, 'तत्संनिधेर्गुणार्थेन पुनःश्रुतिः' (२।२।५।१६) इति साधितत्वात् । उत्पत्तिवाक्येनैव च फलवाक्यस्य उत्पादकत्वं प्रतिबध्नता कर्मान्तरत्वं निरा-क्रियते न गुणवाक्येन, अनुत्पादकत्वात् । उत्पत्तिवाक्ये-नैव च सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि संबध्यन्ते न परस्परेण । कुतः? '**तान्युत्पत्तिमपे-क्षन्ते सा चाव्यवहिता यतः । गुणादीनां त्वसं-बन्धाद् व्यवधिः स्यात् परस्परम्** ॥' अनुत्पन्नस्य गुणादिभिरसंबन्धात् उत्पत्तिः सर्वैरपेक्ष्यते । न तु पर-स्परापेक्षायां किंचित् कारणमस्ति । सैव च सर्वत्र अनु-स्यूतत्वात् असंबन्धिना अव्यवधीयमाना संबध्यते । गुणानां च परार्थत्वादसंबन्धे सति एकेनापि व्यवहितानां अननुषङ्गात् न केन चिदेकवाक्यत्वमस्ति, इति न 'दध्नेन्द्रियकामस्य' इत्यत्र 'दध्ना जुहोति' इत्येत-दुपतिष्ठते । वक्ष्यति चैतत् 'एकस्य तूभयत्वे संयोग-पृथक्त्वं' (४।३।३।५) इत्यत्राधिकरणे । **तत्रैतत् स्यात्**, सैवोत्पत्तिः वाक्यान्तरेण दधिमती कल्पिता अनुषज्यमाना अत्र भेदबुद्धिं निराकरिष्यति । **तदनुप-पन्नम्** । एवं हि सति '**वाक्यान्तरेण तत् कर्म यथा दध्ना विशेषितम् । तण्डुलादिभिरप्येवमिति नैका-त्मकं भवेत्** ॥' उत्पत्तिवाक्ये तावत् केवले निरीक्ष्य-माणे शुद्धहोमावगमात् अप्रत्यभिज्ञानम् । अथ प्राकर-णिकगुणवाक्यानुरक्तमालोच्यते, तथापि तण्डुलादिद्रव्य-विशिष्टत्वात् नैव केवलदधियुक्ते वाक्ये अस्ति प्रत्यभि-ज्ञानम् । **अथ** दधिसद्भावमात्रापेक्षिणि इन्द्रियकामवाक्ये सत्यपि तण्डुलादीनि अनपेक्षितत्वात् असत्तुल्यानि अना-श्रित्य केवलं दधि ग्रहीष्यते इति, तथा सति तदेव

आपतितं भवति 'दध्ना जुहोति' इत्येतदेव वाक्यं केवलं गृह्यते इति। निवारितं चैतत्। अपि च '**दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम्। नित्यं चेन्द्रियकामस्य तेनापि न निरूप्यते ॥**' ( दश द्रव्याणि तु **सुधायां**– 'पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः। सोमो मांसं तथा तैलमापस्तानि दशैव तु ॥' इति ) यद्यपि तावत् दध्यादीनि नित्यं होमे समुच्चीयेरन्, तथा सति विचित्रमपि कर्म एकदेशग्रहणेन चोदितं इति कथं चित् कल्प्येत। दध्यादीनां तु वैकल्पिकत्वात् एकैकस्यैव दशमे पक्षे होमाङ्गत्वम्। अतश्च दधिवाक्येऽपि आलोच्यमाने पाक्षिकं दधि दृश्यते। नित्यवच्च तत् इन्द्रियकामहोमे श्रूयते। तस्मादपि न प्रत्यभिज्ञायते। न च यदा दध्ना जुहुयात् इत्येवं अनुवदितुं शक्यते, फलस्याविधेयत्वात्। एषा हि अत्र वचनव्यक्तिः, 'यदि इन्द्रियकामः, तदा नित्यं केवलदधिविशिष्टं होमं कुर्यात्' इति। न चासौ तादृक् अन्यतः प्राप्तः इति भिद्यते। **ननु** होमरूपमात्रं तावत् प्रतिज्ञातं तत्प्रत्यभिज्ञानाच्च अभेदसिद्धिः। यत्तु द्रव्यं न प्रत्यभिज्ञायते, न तत् कर्मभेदकारणम्। तस्मात् तदेव कर्म गुणमात्राभ्यधिकं फले विधीयते। **नैतदेवम्**। कुतः? '**प्राप्ते कर्मण्यनेकार्थविधिः पूर्वं निराकृतः। त्वत्पक्षेऽनेकसंबन्धविधिश्चात्र प्रसज्यते ॥**' दधिहोमसंबन्धं होमफलसंबन्धं च विदधत् वाक्यं भिद्यते। तेन अवश्यं विशिष्टविधिरभ्युपगन्तव्यः। ततश्च सिद्धं कर्मान्तरत्वम्। यथैव चार्थात् अनियतानेकद्रव्यकत्वे प्राप्ते केवलदधिनियमात् एकार्थविधानं, तथैव परस्परानपेक्षैः तण्डुलादिविधिवाक्यैः वैकल्पिकदशद्रव्यकत्वे कल्पिते, तण्डुलादिव्युदासेन केवलदधिनियमकरणात्। नहि असौ एतस्मात् वाक्यादृते कथं चिदपि प्राप्तः। तेन होमात् फले भवति कर्मान्तरत्वम्। अतः पूर्वपक्षः परिगृह्यते।

'**कर्मशब्देऽगुणेऽप्यत्र कर्म भूयो विधीयते। फलं हि श्रुतमेतस्मिन् कर्मतस्तच्च युज्यते ॥**' समस्तमेव भावार्थाधिकरणं पूर्वपक्षः। तत्र हि एतदवस्थितं, आख्यातशब्दाः फलपदेन संबध्यन्ते, न द्रव्यगुणशब्दाः इति। तस्मात् फलस्य कर्मयोगित्वात् फलश्रुतौ सत्यां कर्म विधीयते, न कर्मणि गुणः। कथं? '**प्राप्तस्तावद् गुणो नैव विधानं पुनरर्हति। अप्राप्तविधिपक्षेऽपि भवेद् व्यर्था फलश्रुतिः ॥**' तत्र नाम अगुणे कर्मशब्दे सति गुणो विधीयते, यत्र स गुणो न भवति, यत्र अर्थान्तरं न श्रूयते। न चेह द्वयमपि तदस्ति, दध्नो वाक्यान्तरेणैव प्राप्तत्वात्, फलस्य च अभ्यधिकस्य उपादानात्। अत आह **फलमिह श्रूयते, तच्च कर्मणो न्याय्यं** इति। तत्र **किं दृष्टं हि कर्मणः फलं** इति प्रश्नस्य द्विधा प्रतिभासः ( वाक्यभेदेन, एकवाक्यतया चेति। तत्र वाक्यभेदपक्षमुपन्यस्यति– ) एकस्तावत् **नेति ब्रूमः, नहि एतत् दृष्टेनानेन सिध्यति** इत्यादेः निराकरणपरत्वेन सिद्धान्तच्छायाऽनुसारात् '**किं**' इत्येतावानेव प्रश्नः, '**किं**' इति एतत् न्याय्यं? इत्यर्थः। इतर आह **दृष्टं हि कर्मणः फलं** ( कृष्यादितो व्रीह्यादि ) इति। तस्योत्तरं **नेति ब्रूमः** इति। '**यदि**' इत्यादि तावत् स्वयमेव आशङ्क्य निराकरोति यावत् **तस्मात् नैवंजातीयकेषु एतत् भवति** इति ( इत्यन्तं भाष्यम्। इमं वाक्यभेदपक्षं दूषयित्वा एकवाक्यतापक्षं उपन्यस्यति– ) तत्र तु ( उत्तरत्र ) **कथं तर्हि होमात् न्याय्यं फलं** इत्ययं ऐकान्तिकः सिद्धान्तवादिनः प्रश्नः। स च आत्मीयवचनोपसंहारादनन्तरं दुःश्लिष्टः प्रतिभाति इति एषैव ग्रन्थयोजना युक्ततरा। ( अत्र पक्षे भाष्यं योजयति– ) **तच्च कर्मणो न्याय्यं** इति पूर्वपक्षवादिना अभिहिते सिद्धान्तवादी दधिपदानर्थक्यभयेन भावार्थाधिकरणन्यायासंभवात् शब्दस्य असामर्थ्यं मन्यमानः पृच्छति **किं दृष्टं हि कर्मणः फलं कृष्यादितः** इति, अनेन न्यायेन सामान्यतोदृष्टेन होमात् फलं मन्यसे इति। यद्यपि च चोदनालक्षणधर्माभ्युपगमात् अनुमानादीनां ईदृशेष्वर्थेषु असामर्थ्यं स्थापितं, तथापि वेदार्थनिर्णये तेषां कारणत्वानिषेधात् तदर्थनिर्णयार्थं अनुमानोपन्यासः। परः पुनः भावार्थाधिकरणवासितान्तःकरणः आक्षिपन्नाह, मा मे अध्यारोपमेवं दाः, शब्दे सति न हि अनुमानं ब्रवीमि। न च एतेन सामान्यतोदृष्टेन असदभिमतं सिध्यति, असिद्ध–अनैकान्तिक-

–विरुद्धादिदोषदुष्टत्वादनुमानस्य । कथं ? यदि तावत् 'होमः फलवान् फलवत्तया दृश्यमानत्वात्' इत्युच्यते ततः प्रतिज्ञातार्थैकदेशत्वात् असिद्धत्वम् । अथ 'कृष्यादीनां फलवत्तया दृश्यमानत्वात्' इति, ततोऽपि अपक्षधर्मत्वम् । अथ विनैव पक्षधर्मत्वात् यदृच्छामात्रेण कल्प्येत, ततः तत् द्रव्येषु अविशिष्टम् । अथ सादृश्यद्वारेण उपमया कल्प्येत तच्च सादृश्यं फलवद्भिः कृष्यादिभिः सह होमस्य क्रियात्मना विद्यते, न द्रव्यस्य अक्रियात्मकत्वात् इति । तत्र द्रव्यस्यापि अस्त्येव किंचित् सादृश्यं इति मनसि कृत्वा यदि प्रत्यासन्नावान्तरसादृश्यापेक्षया तन्निराक्रियते, ततः शक्यं प्रत्यासन्नतरापेक्षया होमस्यापि निराकर्तुं इति मन्यमान आह **होमोऽपि असदृशः**, साधनस्वरूपफलभेदात् कृषेः । **अथ किंचित् सादृश्यं गृह्यते**, तत् द्रव्यस्यापि सत् अनित्यं द्रव्यवत् कार्यं इत्यादिधर्माभेदात् अस्ति इति पूर्वाभिप्रायविवरणम् । **अथ द्रव्यादन्यत् सदृशतरमस्ति** इति आपेक्षिकत्वात् सादृश्यस्य सुसदृशे अपेक्षिते विप्रकृष्टं विसदृशमेव भवति । तेन क्रियात्वे कृषिहोमवर्तिनि अपेक्षिते विप्रकृष्टत्वात् सदनित्यादियुक्तं द्रव्यं असदृशमेव इत्युच्यते । तथा सति क्रियान्तरमपि दृष्टार्थभोजनगमनाद्यवान्तरसादृश्यापेक्षया कृषिहोमयोः विप्रकृष्टत्वात् असादृश्यमेव इति अकारणं स्यात् । आह च '**नास्मिन् परमसादृश्यं दृश्यते कृषिहोमयोः । किंचित्सादृश्यदृष्टिस्तु द्रव्येऽप्यस्तीत्यनिश्चयः** ॥' **न चैतत् सिद्धं** इति उपमानेन साधर्म्यमात्रानुमानेन वा सर्वधर्मप्राप्तिः अनुमानोक्तव्याप्यव्यापकभावनिरपेक्षा अयुक्ता, सर्वपदार्थानामेकत्वप्रसङ्गात् । तथा चोक्तं (१।१।२।२ पृ. १७ भा.) 'न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्य श्यामत्वं भवितुमर्हति' (इति) तथाहि '**न सास्नाऽनुगतिर्दृष्टा गवये सदृशे गवा । प्रकृतेश्च फलादीनि न यान्ति विकृतिं क चित्** ॥' **यद्धि यस्य कारणभूतं दृष्टं सिद्धे** दृष्टान्तधर्मिणि **तच्चेत् साध्येऽपि पक्षे, कारणभूतमिति अवगम्यते भवति तत् तस्य साधकं** इति । अतो वचनात् कार्यकारणयोरेव गम्यगमकभावो भाष्यकाराभिप्रेतः इति **के** चिन्मन्यन्ते । तत्तु अयुक्तम् । अकार्यकारणभूतानामपि अनित्यत्वकृतकत्वादीनां गम्यगमकभावप्रसिद्धेः । कार्यकारणयोरपि च न तथा कारणं गमकं व्यभिचारबहुत्वात्, यथा कार्यम् । तस्मात् लिङ्गमेव व्याप्यत्वेन दृष्टं सपक्षे व्यापकस्य अन्यत्र साध्यभूतस्य गमकत्वसंभावनया गृह्यमाणं कारणमित्युक्तं इति द्रष्टव्यम् । एवं च हेत्वधिकरणे व्याख्यातम् । तथा च विवृणोति **तस्मात् सदृशमपि साधकमसाधकं वेति परीक्षितव्यं** इति । यदि तर्हि परीक्षितेन च कारणेनाभिहितेन कार्यमिदमभिधीयते । 'दध्नेन्द्रियकामस्य' इत्यत्र वाक्ये 'यत् कर्म तत् फलवत्, कर्मत्वात्, कृष्यादिवत्' 'कर्मसाध्यं वा इदं फलं, फलत्वात्, व्रीह्यादिवत्' इत्येतदनुमाय **अथ यत् कर्म तत् फलवत्** इति प्रतिसाधनाभिधानेन अनैकान्तिकीकरोति । **उपरते कर्मणि द्रव्याणां** तन्त्वादीनां **तत्संयोगादीनां च द्रव्यान्तरं** पटादि **फलं दृष्टं** इति । उपरतग्रहणं च कर्मव्यतिरेकप्रदर्शनार्थम् । एवं हि शङ्क्यते, कदा चिदिहापि कर्मनिमित्तमेव फलं वदेत् । तेन ब्रवीति इन्द्रियकामवाक्ये 'दधि फलवत् द्रव्यत्वात् तन्तुवत्, इन्द्रियं वा द्रव्यजन्यं फलत्वात् पटादिवत् ।' **अपि च कृषेर्नादृष्टं** इति हेतोः विरुद्धत्वं वदति । तथैव हि अयं हेतुः कर्मणः फलवत्त्वं, फलस्य वा कर्मजन्यत्वं साधयति, एवं दृष्टार्थफलत्वं अशब्दगम्यफलत्वं वा साधयति । तस्मात् नैवंजातीयके कार्यकारणभावे समस्तहेतुदोषप्रसङ्गात् एतद्भवति क चित् दृष्टादन्यत्र अदृष्टस्यापि सिद्धिरिति । यदि एतदनुमानं त्वयैव निराकृतं **कथं तर्हि होमात् न्याय्यं फलमिति उच्यते** । यद्वा इतिकरणान्त एव प्रश्नः । **उच्यते । शब्देनावगम्यते तत् फलं** इति भावार्थाधिकरणोपन्यासेन उत्तरम् । **तस्मात् होमात् फलमिति न्याय्यम् । दध्नः फलमिति चान्याय्यं** इत्यर्थसिद्धं सत् यदुच्यते, तत् तुल्यबलवत्त्वनिराकरणार्थम् । कदाचिद्धि द्वयमपि न्याय्यं भवेत् । **अपि च दधि उभयमसमर्थं कर्तुं** इति । न तावत् कर्मानपेक्षस्य दध्नः करणत्वमस्ति, येन केवलं फलसंबन्ध्येव स्यात् । अत उभयत्र विधातव्यं, न च तत् शक्यमिति । **ननु कम्बलनिर्णेजनवत्** इति प्रासङ्गिककर्मसंबन्धाभिप्रायेण वस्त्वसामर्थ्यनिराकरणार्थं

वा, तथाहि **दधि उभयमसमर्थं** इति यथाश्रुतगृहीतेन परवचनेन वस्त्वसामर्थ्यमेवोक्तमिति दृश्यते। **न ब्रूम एकस्योभयं प्रयोजनं** न युक्तमिति। न वयं वस्तुसामर्थ्यं अपह्नुमहे, किं तर्हि समर्थेऽपि वस्तुनि अविहितादनुष्ठानात् अवश्यं दधि उभयार्थत्वेन विधातव्यम्। न चैतदस्ति, अनेकसंबन्धकरणे वाक्यभेदप्रसङ्गात्। संनिकृष्टासंभवेन विप्रकृष्टोऽर्थो विधीयते। तदिह दधिहोमसंबन्धे संनिकृष्टे दधिफलसंबन्धे च विप्रकृष्टे युगपत् विधीयमाने युगपदेव संभवासंभवौ अभ्युपेतव्यौ स्याताम्। तस्मादन्यतरपरित्यागे सति त्वत्पक्षसिद्धिर्भवति इति संनिकृष्टवशेन दध्यपि होमेन संबध्यते, सोऽपि फलेन इति कर्मयुक्ते सति फले, सिद्धं कर्मान्तरत्वं इति।

**अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत। २६॥**

**भाष्यम्**— तुशब्दात् पक्षो विपरिवर्तते। न कर्मान्तरं, किंतु गुणात् फलमिति। कथं? अतुल्ये ह्येते वाक्ये। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र कर्मसमभिव्याहृतं फलं स्वर्गकामो होमेन कुर्यादिति। 'दध्नेन्द्रियकामस्य जुहुयात्' इति गुणसमभिव्याहृतम्। नहि अत्र होमः इन्द्रियाय कर्तव्यः इति प्रतीयते। किं तर्हि, दध्ना होमः इन्द्रियकामस्येति। होमस्य दधिसंबन्ध इन्द्रियाय, न होमस्योत्पत्तिः। य इन्द्रियकामः स्यात्, स दध्ना होमं कुर्यात् इति। कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्तेति? 'जुहुयात्' इति ब्रूमः। **ननु** श्रुत्या होमसंबद्धं एष पुरुषप्रयत्नं वदति, वाक्येन दधिसंबन्धम्। न च वाक्यं श्रुतिं अपबाधितुमर्हति। न च युगपदुभयसंबन्धो न विरुध्यते वाक्यं हि तथा भिद्येतेति। **अत्रोच्यते**। ये भवदीयं पक्षमाश्रयेरन्, ते श्रुतिं अपबाधेरंस्तराम्। अस्मदीये तु पुनः पक्षे जुहुयात् इति धात्वर्थः केवलः अपबाधितो भवति। युष्मदीये तु कृत्स्न एव दध्ना इति शब्दः। तं च अप्रमाद्यन्तः समामनन्ति इति गम्यते। न चैतत् प्रमत्तगीतमित्युक्तं 'तुल्यं हि सांप्रदायिकं' (१।२।१।८ तुल्यं च इति तत्र पाठः) तस्मान्न कर्मसमभिव्याहृतं फलम्। गुणसमभिव्याहृते तु न कश्चित् प्रमादपाठः। अवश्यं हि जुहुयादिति दधीन्द्रियकामयोः संबन्धविधानार्थं वक्तव्यं भवति। ननु उच्यमानेऽपि न केवलः करोत्यर्थोऽवगम्यते केवले न वचःप्रयोजनम्। स च होमसंबद्धः, तस्मादसमञ्जसं इति। **नेति ब्रूमः**। होमसंबद्धोऽप्यसौ करोत्यर्थ एव, केवलं तु अस्य होमसंबन्धे विशेषः, न तु करोत्यर्थतां बाधते, इन्द्रियकामस्य होमसंबद्धं प्रयत्नं दधिसंबद्धं कुर्यादिति। **ननु** एवं सति स एव दोषः होमसमभिव्याहृतं फलमिति। **उच्यते**। जुहुयात् इति शब्दस्य एतत् सामर्थ्यं, यत् होमविशिष्टं प्रयत्नमाह। न तु अत्र होमः साधनत्वेन विधीयते। साध्यत्वेन विशिष्टस्तु प्रयत्नो वाक्येन दध्याश्रितः अवगम्यते। अत एव च **वृत्तिकारेणोक्तं** 'होममाश्रितो गुणः फलं साधयिष्यति, यथा राजपुरुषो राजानमाश्रितो राजकर्म करोति' इति। तस्मात् दध्नः फलं, य इन्द्रियकामः स दध्ना कुर्यात् इन्द्रियमिति। **कथमिति**, अनया अग्निहोत्रेतिकर्तव्यतयेति। कुत एतत्? फलसाधनस्य दध्नः इतिकर्तव्यताऽऽकाङ्क्षत्वात्। अस्याश्च इतिकर्तव्यतायाः संनिधानात्, चोदनालिङ्गस्य च जुहोत्यर्थस्य दर्शनात्। यस्मादेव चायं जुहोत्यर्थः अनुवादः, तस्मादविधायकः। न चान्यत् होमस्य विधायकं नास्तीति। तस्मान्न कर्मान्तरम्। तस्मात् दध्नः फलमिति। **अथवा** दधिशब्दस्य विवक्षितार्थत्वात् दधिहोमसंबन्धोऽयं वाक्येन विधीयते। तेन दध्नो होमेन संबध्यमानात् फलं भविष्यति इति।

**वा**— यादृशेषु वाक्येषु धात्वर्थात् फलं इति भावार्थाधिकरणे साधितं, तैः अननुगम्यमेतत्। कथम्? **'यावद्धि विधिसामर्थ्यं धात्वर्थादनपोद्धृतम्। तावद्यः फलसंबन्धः स धात्वर्थस्य गम्यते॥ भवेत् फलश्रुतिर्या तु गुणसंवरिते विधौ। सा तद्गतविधिस्पृष्टा तेन यात्येकवाक्यताम्॥'** भावनास्थमेव विधित्वं तादर्थ्यभेदेन तत्रतत्र संक्रामति। तद्यदा धात्वर्थसंक्रान्त्यवस्थां फलवतीं भावनां आसादयति, तदा धात्वर्थमेव करणीकरोति, अन्यच्च तदर्थं भवति। तच्च 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिषु नाम्नो विधिशक्त्यपहारासमर्थत्वात् अविहतम्।

इह तु दधिपदं अशेषनामधेयलक्षणासंस्पर्शात् अवश्यं विधातव्यं सत् उत्तारयति। धात्वर्थोपनिपतितं विधित्वम्। अतश्च आकाङ्क्षितधात्वर्थानुवादायां दध्यनुरक्तायां भावनायां फलमुपलभ्यमानं दधिसाधनकमेव अवधार्यते, न होमसाधनकम्। नहि अविधीयमानानामर्थानां साधनत्वं संभवति। न च विधेयान्तरोपादाने सति अतिक्रान्तार्थविधानमवकल्पते इत्युक्तम् (२।२।५।१६)। यथा च दध्ना विध्याक्षेपात् न होमविधानं, तथा फलपदप्रत्यवेक्षणात् न होमे दधिविधानं, किं तर्हि? फलभावनायाम्। तस्मात् दध्नः फलमिति। **कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्ता** इति दधिफलपदयोः भावनाऽनमिधायकत्वेन साक्षात् विधिविषयत्वानुपपत्तेः आख्यातप्रत्ययापेक्षणे च आश्रितत्वात् प्रयोगस्य (२।१।१।४) इत्येवं धात्वर्थत्यागाशक्तेः तत एव फलेन भवितव्यं इति मन्वानस्य प्रश्नः। सिद्धान्तवादी तु प्रत्ययार्थविधित्वं (विधेयता) धात्वर्थानुवादत्वं च विभक्तं पश्यन्नाह **जुहुयात्** इति। **ननु श्रुत्या होमसंबद्धं एषः** इति परस्य स्वाभिप्रायविवरणम्। पुरुषप्रयत्नश्च विध्युपेता भावना उच्यते। सत्यं भावार्थाधिकरणन्यायेन श्रुतिबलीयस्त्वात् एवमन्यत्राश्रितम्। इह च ये भवदीयं पक्षं आश्रयेरन् ते श्रुतिं अपबाधेरंस्तराम्। कथं? '**स्याद् बह्वर्थविधानं ते स्तोकार्थविधिसंभवे। मत्वर्थश्चोपलक्ष्येत पदत्यागोऽन्यथा भवेत्**॥' स्तोकार्थविधिसंभवे तावत् विधायकः बहुतरार्थविधानमुपेक्षते। होमस्य च फलभावनाकरणत्वात् 'भावयेदिन्द्रियं होमेन' इत्येवमवस्थितस्य करणभूतेनैव दध्ना समत्वात् संबन्धे अनुपपद्यमाने अवश्यं मत्वर्थलक्षणा परिग्रहीतव्या 'दधिमता होमेन' इति। न च तस्यां किं चित् प्रमाणमस्ति। न च दधिशब्दस्य असति प्रवृत्तिनिमित्ते कर्मनामधेयत्वं घटते। सोऽयं उभयस्मात् भ्रष्टो दधिशब्दः अनर्थक एव प्राप्नोति। ततश्च शब्दधर्मसंनिकर्षानुग्रहेण धर्म्येव शब्दः परित्यागात् बाधितः इति बाध्यतेतरां श्रुतिः। गुणसमभिव्याहारपक्षे तु न कस्य चिद्बाधः। तत्रैतदुच्यते जुहोतीति शब्दो बाधित इति। तत्परिहारार्थमाह 'अवश्यं जुहुयात् इति वक्तव्यम्।' कथं? '**न दधीन्द्रियसंबन्धो भावनाप्रत्ययाद् विना। न चास्योच्चारणं शक्यं केन चिद्धातुना विना**॥' प्रत्ययस्तावत् अवश्यमेव दधीन्द्रियविशिष्टां भावनां विधातुमुच्चारयितव्यः। स च केवलप्रयोगासंभवात् धातुव्यतिरिक्तप्रकृत्यनुपपत्तेश्च यतःकुतश्चित् धातोः पर उच्चारयितव्यः। ततश्च यत्रक्वचन धातौ उपादातव्ये प्राप्ते प्रकरणप्राप्तहोमोपादानं अङ्गीकृतम्। दधिसंबन्धोऽपि चास्य प्रकरणादेव आश्रयाश्रयिरूपः प्राप्तः अनुवदिष्यते। यथा च न विभक्तेर्वचनमेव एकं प्रयोजनं, इति ग्रहादिषु कारकमात्रप्रतिपत्त्यर्थं उच्चार्यमाणनान्तरीयकत्वात् अविवक्षितामपि संख्यां प्रत्याययति इति वक्ष्यते (३।१।७।१४), तथा अत्र प्रत्ययानुग्रहार्थमपि धातुरुच्चार्यमाणः संबन्धबलात् अविवक्षितमपि स्वार्थं प्रत्याययति। नहि तस्य अर्थप्रत्यायनमात्रमेव एकं प्रयोजनं इति वक्तव्यम्। **ननु उच्यमानेऽपि** इति, प्रत्ययानुग्रहार्थं धातुरुच्चार्यमाणः स्वार्थं प्रत्याययति इति। न चास्य ग्रहैकत्ववत् अविवक्षाकारणं किंचिदस्ति। तस्मात् यथाऽभिलषितकेवलकरोत्यर्थासंभवात् असमर्थमेतदिति। **नैष दोषः**। सत्यपि होमसंबन्धे करोत्यर्थानपायात् तावन्मात्रेण प्रयोजनसिद्धिः। यस्तु होमसंबन्धकृतो विशेषः, नासौ किंचित् विरुणद्धि, प्रकारान्तरेण वा भावनां विशेक्ष्यति। **ननु एवं सति स एव दोषः** इति, अपरित्यज्यमानोऽपि होमो बलात् करणीभवति इति मन्यते। सिद्धान्तवादी त्वाह—वाक्यान्तराभ्यस्तस्य **जुहुयादिति शब्दस्य एतत् सामर्थ्यं येन तवेयं भ्रान्तिर्भवति होम एव करणमिति**। निपुणतस्तु पश्यतां यथैव प्रत्यासत्तेः साध्यांशमुपधावन् अयोग्यत्वात् प्रच्याव्यते, तथा अत्र दधिपदानुरोधेन साधनांशात्। यथा च तत्र प्रतीयमानं भावनाविशेषणत्वं अंशान्तरे अवस्थितं, एवमिहापि गुणाश्रयत्वेन अवस्थास्यते। यथोक्तं **वृत्तिकारेण** (उपवर्षेण) **होमाश्रितो गुणः फलं साधयिष्यति** इति। कः पुनः आश्रयाश्रयिसंबन्धो नाम, किं-केन-कथं-भावव्यतिरिक्तः, उत अव्यतिरिक्त इति। **के चित्** तावदाहुः व्यतिरिक्त एवायमिति। कथं? '**यथैवांशत्रयापेक्षा भावनाऽन्यत्र गम्यते। तथा**

**गुणविशिष्टायां चतुर्थोऽशोऽप्यपेक्षते ॥** ' यत्र धात्वर्थकरणिका भावना चोद्यते तत्र अंशत्रयेणैव समाप्यते । यत्र गुणः करणत्वेन चोद्यते, तेन च करणभूतेन फलमुत्पादयितव्यं, नोदासीनेन, तत्र अस्य कं चित् धात्वर्थमकुर्वतः करणत्वानुपपत्तेः कं धात्वर्थं साधयता तेन फलं भावयितव्यं इति चतुर्थं अपेक्षाऽन्तरं जायते । यश्च धात्वर्थः साध्यः, स एव गुणस्य करणत्वोपजननात् आश्रय इत्युच्यते । तत्र वाक्ये अन्यसंबन्धपरे वाक्यभेदप्रसङ्गात् स्वयमाश्रयं दर्शयितुं अशक्नुवति प्रकरणात् अग्निहोत्रहोमः आश्रयो लभ्यते । तथालब्धश्च प्रत्ययानुग्रहार्थप्रवृत्तेन आलम्भादिवच्च चोदनालिङ्गभूतेन धातुना अनूद्यते । ' यदा एकस्मादपूर्वं तदा इतरत्तदर्थं ' इति च न्यायेन धात्वर्थो नामपदार्थानुग्रहार्थः अध्यवसीयते । शक्यते तु अत्र न चतुर्थी अपेक्षाऽस्तीति वक्तुम् । करणापेक्षैव हि एषा प्रवितततरा जाता । धात्वर्थेन हि सा शीघ्रं निवर्त्यते, गुणस्य तु क्रियासंबन्धोत्तरकालं करणत्वं निष्पद्यते इति चिरतरेण । तस्मात् तिस्र एवापेक्षाः । तेन होमोपजनितकरणत्वे फलवति गुणे अवधारिते कथंभावापेक्षायां सत्यां अग्निहोत्रेतिकर्तव्यतैव पूरणी भवति इत्यादिः संस्थाधिकरणविषयः पर्यवसिते अधिकरणार्थे प्रसङ्गादभिधीयते । तत्र **अनया अग्निहोत्रेतिकर्तव्यतया** इति । **के चित्**तावदाहुः, अग्निहोत्रमेव इतिकर्तव्यता इति । **तत्तु** अयुक्तम् । करणव्यतिरिक्तत्वात् इतिकर्तव्यतायाः । होमस्य च प्रागुक्तेन न्यायेन करणांशाव्यतिरेकात् । अतः अग्निप्रणयनादिकैव, अग्निहोत्रेतिकर्तव्यता इत्युच्यते । **कुत एतत्** इति, कथं अधात्वर्थस्य इतिकर्तव्यतया संबन्धः इत्यभिमानात् । **फलसाधनस्य दध्नः** इति, यथैव होमस्य करणत्वात् इतिकर्तव्यताऽनुग्राह्यत्वं भवति, एवं तत एव कारणात् दध्नोऽपीति । **अस्याश्च इतिकर्तव्यतायाः संनिधानात्** इति संस्थाधिकरणविप्रतिषिद्धसमानविधानत्वाभ्युपगमापत्तेः **चोदनालिङ्गस्य च** इति पुनः अतिदेशन्यायोपन्यासात् असंबद्धत्वम् । यदि तावत् संनिधानात् संबध्यते, किं चोदनालिङ्गसद्भावेन ? अथ चोदनालिङ्गसद्भावः प्रमाणं, स दूरस्थस्यापि अविशिष्टः इति व्यर्था संनिधानवाचोयुक्तिः । अत एवं वक्तव्यं, आश्रयतया उपस्थितेन होमेन उपकारप्रदानक्रमेण इतिकर्तव्यतायाः संनिधानात् अतिदेशनिमित्तस्य च **चोदनालिङ्गस्य जुहोत्यर्थस्य दर्शनात्**, यस्मादेव चायं चोदनालिङ्गत्वेन जुहोत्यर्थः प्रकरणात् प्राप्तोऽनुवदिष्यते, तस्मात् अस्योत्पत्तेः फलं वा प्रति प्रत्ययो न विधायकः । केन प्राप्तस्यानुवादः इति चेत्, अत आह **न चान्यत् होमस्य** उत्पत्ति**वाक्यं विधायकं नास्ति** इति ।

**के चित्तु** अन्यथा अस्य वचनस्यार्थं वर्णयन्ति । न चान्यत् दधिफलात् इन्द्रियात् अग्निहोत्रहोमस्य स्वर्गादिफलं नास्ति, स्ववाक्येन प्राप्तत्वादिति । **तत्तु** अनाशङ्किताप्रस्तुतोपन्यासात् असंबद्धं इति पूर्वोक्तमेव ज्यायः । **तस्मान्न कर्मान्तरम्** । किं तर्हि ? कर्मणि **दध्नः फलं** होमश्चानुग्राहकः । **अथवा** तेनैव कारणेन ( दधिशब्दस्य अप्रमादपाठेन ) दधिशब्दस्य अप्रमादपाठात्, केवलाच्च दध्नः फलसिद्ध्यसंभवात् उभयतिरस्कारेण संबन्धादेव फलं उभयोश्च दधिहोमयोः तादर्थ्यम् । अत्र तु पूर्वोक्तेन न्यायेन दधिहोमसंबन्धकृतो वाक्यस्यास्य च एकवाक्यत्वाभावात्, दधिफलसंबन्धे च अनिर्वृत्ते होमसंबन्धः प्राकरणिको नास्ति, इति अनेनैव वाक्येन होमसंबन्धं कृत्वा फलं प्रति विधौ आश्रीयमाणे अनेकार्थविधानात् वाक्यभेदः स्यात् । अतः दध्न एव फलं इत्येषैव व्याख्या युज्यते । तथा च समासौ उपसंहृतं **तेन दध्नो होमेन संबध्यमानात् फलं** इति । तेन अथवेति विकल्पमात्रप्रदर्शनार्थं ( युक्तिशून्योत्प्रेक्षाविकल्पप्रदर्शनार्थं ) द्रष्टव्यम् । **अन्ये तु** वदन्ति ' एक एवायं पक्षः सोपपत्तिकः आदित आरभ्य उपसंह्रियते, तस्माद्दध्नः फलं दधिशब्दस्य विवक्षितत्वात् इति च पाठः, अथवा इति तु प्रमादलिखितं ' इति । **शक्यपरिहारं** तु इदम् । कथं ? यदैव दध्ना इन्द्रियकामस्य भावयेत् इति संबध्यते, तदैव करणभूतात् दध्नः फलं इत्यवगमात् करणत्वान्यथाऽनुपपत्तिकारितः क्रियामात्रसंबन्धः अवगम्यते । शक्तिरूप एव च क्रियाकारकयोः संबन्धः इति करणविभक्त्यन्तर्गतत्वात्, प्रत्ययार्थस्य च

प्राधान्यात्, प्रातिपदिकार्थोपसर्जनः संबन्ध एव फलाय विधीयते। तस्मिंस्तु विहिते पूर्ववदेव प्रकरणात् क्रियाविशेषो होमो लभ्यते। तत्र तु द्रव्यदेवतासंबन्धन्यायेन ( यथा वैश्वदेवीशब्देनैव संनिहितस्य द्रव्यविशेषस्य देवताऽन्वये अभिहितेऽपि आमिक्षाशब्दो विशेष्यान्वयार्थः तद्वत् २।२।९।२३ ) क्रियाकारकसंबन्धस्य फलसंबन्धे वृत्ते, 'कोऽसौ क्रियाविशेषः' इत्यपेक्षायां विशेषणविशेष्यसंबन्धं कर्तुं प्रकरणेन होम उपनीयते। तेनोच्यते दधिहोमसंबन्धः फलाय विधीयते इति। ततश्च **अथवा** इति सम्यक् पाठ एव। समाप्त्युपसंहारस्तु आद्यपक्षस्य द्रष्टव्यः। अथवा अस्यैव संबध्यमानग्रहणेन दध्युपसर्जनसंबन्धनिर्देश इत्यदोषः।

**ननु** दध्ना इति च, इन्द्रियकामस्य इति च पदद्वयव्यापारात् वाक्यं भिद्येत। **नैष दोषः। कुतः?** **'नैव ह्यनेकसंबन्धाद् वाक्यभेदः प्रसज्यते। अनेकविधिशक्त्या हि भेदो, नास्ति च सोऽत्र नः॥'** बहवोऽपि हि अर्थाः युगपदेकेन संबध्यन्ते, न च तावता वाक्यं भिद्यते। अनेकविधितो हि वाक्यभेद उक्तः स चात्र नास्त्येव, फलस्याविधेयत्वात्। एषा हि अत्र वचनव्यक्तिः 'यदिन्द्रियं भावयेत्' इत्यनूद्य 'तद्दध्ना' इति विधीयते। यो हि यदिच्छति स तत्करोति इति हि इन्द्रियं भावयितुं स्वरसत एव पुरुषः प्रवर्तते। ततश्च तदंशयुक्तां भावनां प्रत्ययः अनूद्य करणांशमात्रयुक्तां विधत्ते इत्येकार्थविधानात् न वाक्यभेदः। तस्मात् दधिपदस्य अर्थवत्त्वाय गुणात् फलं अकर्मान्तरत्वं चेति सिद्धम्।

**शा**— सत्यपि पक्षद्वये भावनाभेदे धात्वर्थभेदाभेदविचारात् लक्षणसंबन्धः। तत्र पूर्वः पक्षः **'धात्वर्थात् फलमित्युक्तं भावनासंनिकर्षतः। विप्रकृष्टस्तु नामार्थस्तदर्थो न फलान्वयी॥ दध्नश्च फलसंबन्धे जुहोतिः स्यादनर्थकः। यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते॥'** इति प्राप्ते ब्रूमः **'धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रं विधीयते। विधेयं यच्च तेनैव फलं नान्येन युज्यते॥'**

**सोम**— भावनाभेदहेतुत्वेन धात्वर्थभेदस्यापि विचार्यत्वात् तत्प्रसङ्गात् अध्यायसंगतिः। पूर्वापवादेन प्रत्यवस्थानात् **अवान्तरसंगतिः। प्रयोजनं** पूर्वपक्षे फलार्थहोमे सायंप्रातःकालनियमाभावात् अनियतकालत्वम्। सिद्धान्ते तु नियतकाले एव नित्यहोमे दधिप्रयोग इति। **सूत्रार्थस्तु**— भावार्थाधिकरणन्यायेन फलस्य कर्मसंबन्धित्वात् प्रकृतेऽपि फलश्रुतेः कर्मान्तरं स्यादिति।

**वि**— 'यद्दध्नेन्द्रियकामस्य जुहुयादिति तत् पृथक्। गुणो वा, भिद्यते कर्म धात्वर्थस्य फलित्वतः॥, मत्वर्थगौरवादिभ्यो नान्यत् कर्म फलाय तु। गुणे विधेये धात्वर्थो विहितत्वादनूद्यते॥'

**भाट्ट**— अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयात्' इति। तत्र स एव होमः दधिविशिष्टः फलोद्देशेन विधीयते। न च प्राप्तकर्मानुवादेन गुणसंबन्धः फलसंबन्धश्चेति वाक्यभेदः। प्राप्तानामपि कर्मणां राजकर्तृत्वविशिष्टानां फलोद्देशेन राजसूयवाक्ये विधानवत् इहापि तदुपपत्तेः इति प्रथमः पक्षः। द्वितीयस्तु नात्र राजसूयन्यायः। कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वात् उत्पन्नस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तेः। प्रकृते तु दध्नः उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधिः फलविशिष्टविनियोगविधिश्च इति वैशिष्ट्याभावात् वाक्यभेदः। अतो गुणात् कर्मभेदः। दधिविशिष्टं च तत्फलोद्देशेन विधीयते न दधि, भावार्थाधिकरणविरोधापत्तेः। सत्यपि दर्विहोमत्वे दधिद्रव्यकहोमत्वसादृश्याच्च अग्निहोत्रहोमातिदेशेन रूपलाभः। **सिद्धान्तस्तु** यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः संभवत्प्राप्तिः प्राप्तिरेव वा, धात्वर्थस्यैव वा अप्राप्तिः, यथा 'सोमेन यजेत' 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति' 'अग्निहोत्रं जुहोति' इत्यादौ तत्र भावार्थाधिकरणन्यायः। यत्र तु गुणस्यैव अप्राप्तत्वात् विधेयत्वं, तत्र तस्यैव फलसंबन्धः। न च दध्नोऽपि नियता प्राप्तिः, अपि तु विकल्पेन। अतः पाक्षिकानुवादत्वपरिहाराय तस्यैव विधेयत्वात्

फलसंबन्धः । कारणीभूतगुणसत्त्वेन वचनं विनाऽपि फलोत्पत्तिसंभवात् वचनवैयर्थ्यप्रसङ्गेन स्वकृतिसाध्य-धात्वर्थस्य इष्टविधया गुणसंबन्धिनः आश्रयस्य अपेक्षायां, प्रकरणात् होमस्य आश्रयत्वलाभात् जुहोतिः साधुत्वार्थ-मनुवादः । दधिकरणकभावनाऽन्तरमेव तु फलोद्देशेन विधीयते । भावनाऽनुवादेन उभयकरणे वाक्यभेदात् । **केचित्तु** करणत्वविशिष्टं दधि, दधिकरणत्वं वा तृती-योपात्तं फलकरणत्वेन विधीयते । तृतीयाऽर्थकरणत्वस्य निरूपकापेक्षैव आश्रयापेक्षा इत्याहुः । **तन्न** । याग-वैषम्ये प्रमाणाभावात् । सर्वथा सिद्धो गुणफलसंबन्धः । **प्रयोजनं** दध्नो न प्रतिनिधिः उल्लेखविशेषो वा इति सिद्धान्ते द्रष्टव्यम् ।

**मण्डन**— 'कर्मान्तरे न समवैति दधीन्द्रियार्थम् ।'

**शंकर**— 'इन्द्रियार्थं दधीष्टं नः ।'

* यथा गुणात् फलं भवति, तत् **इन्द्रियकामाधिकरणेन** उपसंहर्तव्यम् । **वा.** २।६।१६।४३ पृ. १०६७. * **इन्द्रियकामाधिकरणे** आश्रयातिदेशो निरूपितः । **बाल.** पृ. ११७–११९. * इन्द्रियकामाधिकरणे गुणादपि फलं साधितम् । **कु.** २।३।४।११. * इन्द्रियकामाधिकरणे गुणफलसंबन्धविधौ भावनाऽन्तरविधिरभ्युपगतः । **बाल.** पृ. १६९. * इन्द्रियकामाधिकरण–रेवत्यधिकरणयोः अपवादः सौभराधिकरणम् । ( रेवती० २।२।१२।२७, सौभर० २।२।१३।२८–२९ ) **कौ.** २।२।१३।२७ पृ. २९४. * न तावत् करणैः इतिकर्तव्यता संबध्यते इत्युक्तं ( इन्द्रियकामाधिकरणे ) । **वा.** ३।६।१६।४३ पृ. १०६९. * **इन्द्रियकामाधिकरणसिद्धस्यैव** गुणफलसंबन्धस्य आक्षेपसमाधानं दाक्षायणयज्ञाधिकरणे ( २।३।४।५–११ ) । **कौ.** २।३।४।६ पृ. ३६, * निष्कासस्य करणत्वेन श्रुतस्यापि प्रयाजशेषवत् संस्कार्यत्वं यद्यपि कल्प्येत, तथापि प्राप्तकर्मानुवादेन तुषाख्यद्रव्यसंबन्धः संस्कार्यद्रव्यसंबन्धश्च इति **इन्द्रिय-कामाधिकरणोक्तरीत्या** वाक्यभेदप्रसङ्गात् कर्मान्तरम् । २।३।११।२४ पृ. ८४. * 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति श्रुतं फलं **इन्द्रियकामाधिकरणन्यायेन** गुणजन्यमेव इति प्राप्ते । **भाट्ट.** १०।५।१८. * न च रेवत्यधिकरण-( २।२।१३।२८–२९ ) न्यायापेक्षया लघुभूतेन्द्रियकामाधिकरणन्यायेन गुणफलसंबन्धविध्युपपत्तौ । **कौ.** २।२।१३। २७ पृ. २९५, * 'संक्रमयज्ञेन यजेतान्नाद्यकामः' अत्र द्वयोः (क्रिया–फलयोः) स्वरूपेण प्राप्तिवत् अन्नाद्यफलेऽपि क्रियायाः सार्वकाम्यवाक्येन प्राप्तत्वात् अप्राप्तगुणविनि-योगे एव विधिसंक्रमणात् युक्तः इन्द्रियकामाधिकरण-न्यायेन गुणफलसंबन्धः । २।३।४।१० पृ. ४४, * 'हीषु इति वृष्टिकामाय निधनं कुर्यात्' दध्यादिवत् गुणसंक्रान्त-शक्तिना विधिना इन्द्रियकामाधिकरणन्यायेन हीषादिक-मेव तत्तत्फलोद्देशेन विधीयते ( पूर्वपक्षे ) । २।२।१३। २७ पृ. २९५. * 'उत्पत्तिवाक्येन सर्वाणि प्राकरणि-कानि गुणफलनिमित्तवाक्यानि संबध्यन्ते, न परस्परेण' इति **इन्द्रियकामाधिकरणवक्ष्यमाणन्यायेन** प्रयोग-वाक्ये भावनोत्पत्त्यभावात् नान्येषां तच्छेषत्वं संभवति इत्याशङ्क्य । **सु.** पृ. ७०८.

* **इन्द्रियत्वं** संबद्धार्थविशदावभासकत्वं, अपरोक्ष-ज्ञानजनकद्रव्यत्वं वा, ज्ञानानाश्रयत्वे सति ज्ञानकारण-मनःसंयोगाश्रयत्वं वा । इन्द्रियं षड्विधं घ्राणरसनचक्षु-स्त्वक्श्रोत्रमनोभेदात् । तत्र आद्यानि चत्वारि गन्ध-रसरूपस्पर्शमात्राभिव्यञ्जकतया गन्धादिमत्त्वानुमानेन पृथिव्यप्तेजोवायुप्रकृतीनि । श्रोत्रमपि शब्दमात्रग्राहकतया शब्दवत्त्वानुमानेन आकाशात्मकं इत्यक्षपादीयाः । अभि-गुप्रैषान्तर्गतदिशःश्रोत्रमितिलिङ्गात् दिगात्मकत्वं युक्तम् । **मणि.** पृ. १९.

* **इन्द्रियवाक्यस्य** । 'गुणादीनां त्वसंबन्धात्' इति वार्तिकोक्तन्यायेन इन्द्रियवाक्यस्य दधिहोमान्वयकारि-वाक्यैकवाक्यत्वाभावात् न इन्द्रियवाक्ये तत्कारिहोमान्वय-ग्रहणम् । ( 'गुणादीनां त्वसंबन्धात् व्यवधिः स्यात् परस्परम्' वा. २।२।११।२५ पृ. ५४१ । तदर्थस्तु विस्तरेण तन्न्याये एव द्रष्टव्यः । संक्षेपतस्तु इदानी-मेवोक्तः सुधया ) । **सु.** पृ. ८५०.

* **'इमामगृभ्णन्'** अयं मन्त्रः अभिधान्यङ्गं द्वितीया-श्रुत्या । वाक्यीयोऽयं विनियोग इति केचित्, तन्न । **मीन्या.** * 'इमामगृभ्णन्' इत्यादिमन्त्रान्ते कर्मारम्भः ।

वि. १२।३।१०. * 'इमामगृभ्णन्०' इयं शेषिपरिसंख्या। बाल. पृ. २४.

* '**इमामगृभ्णन्** रशनामृतस्य' अयं अप्राप्तपरिसंख्याविधिः। **बाल.** पृ. २५. * 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति प्रत्यक्षवचनेन अश्वाभिधान्यादाने मन्त्रस्य विनियोगे सति न लिङ्गात् गर्दभरशनाऽऽदाने विनियोगः। एवं च लिङ्गात् अव्यवस्थया विनियोगस्य प्रथमप्रसक्तेः न व्यवस्थाऽर्थं वचनप्रवृत्तिः, किंतु झटिति वचने प्रवृत्ते सति अर्थादेव व्यवस्थासिद्धिः। **सोम.** १२।२।१.

* '**इयं गौः**, तया ते क्रीणामि, तस्यै शृतं, तस्यै शरः' इत्यस्य स्थाने साद्यस्के 'अयं गौः, तेन ते क्रीणामि, तस्मै शृतं, तस्मै शरः' इत्याद्येव पठितव्यं नोहः (शृतशरादिशब्देषु)। **भा.** ९।१।१५।४२–४४ वर्णकं २.

* '**इयत्ताक्रमकालाश्च** श्रौतत्वाद् बलवत्तराः। पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः॥' **वा.** १।३।३।७ पृ. १९९.

* **इरापदं** गिरापदस्थाने गातव्यं ज्योतिष्टोमे यज्ञायज्ञीये साम्नि। **भा.** ९।१।१८।५४–५८, * इरापदं प्रगीतमेव प्रयोक्तव्यं नाप्रगीतम्। ९।१।१८।५४–५८, * **इरापदेन** गिरापदस्य विकारो युक्तः कारणाग्रहणात्। न इरापदस्यानुपदेशे किं चित् कारणं गृह्यते। तस्मात् तस्योपदेशः (ऐरं कृत्वोद्गेयं इति), स कर्मकाले विधानात् समाम्नायेन प्राप्तं गिरापदं बाधते। तस्मात् तत्र विकारः। १२।३।८।२२. * **इरापदस्य** न लोकवेदयोर्गीतिः प्रसिद्धा। **टुप्.** ९।१।१८।५५. * **इरापदे** गिरापदधर्मा भवेयुः ज्योतिष्टोमे यज्ञायज्ञीये। **भा.** ६।२।१२।४० पृ. १७३२.

* **इलान्दं** नाम साम अनृक्कम्। **बाल.** पृ. ७२.

* **इवार्थः**। 'मत्वर्थो वाक्यवेलायां एकवाक्यवशाद् भवेत्। इवार्थः पदवेलायां गृह्यमाणोऽतिदुर्बलः॥' **वा.** १।४।४।५.

* **इषुः नाम एकाहः**, अपरः श्येनः, तौ द्वावपि आभिचारिकौ। **भा.** ७।१।२।१३.

* '**इषुं विष्टुतिं करोति**' इषौ यागे विष्टुतौ कुशानिधानं इष्वाकारं कुर्यात् (इषुं बाणम्)। **रत्न.** ७।१।२।१६। इषुभिरेव कर्तव्यं इत्यन्ये। **सोम.** * **इषौ** श्येनीयवैशेषिकधर्मातिदेशः 'समानमितरत् श्येनेन' इति। **भा.** ७।१।२।१३–१६.

**इषुवेगक्षयन्यायः**। यथा धनुषः सकाशात् मुक्तस्य इषोः बाणस्य कर्मणः प्रारब्धवेगक्षयादेव क्षयः इति प्रसिद्धं, तथा प्रकृतेऽपि। अज्ञाने नष्टेऽपि जीवन्मुक्तिः सिध्यति। **साहस्री.** २७४.

* '**इषे त्वा**' इत्यनेन एकोऽर्थः क्रियते, 'ऊर्जे त्वा' इत्यनेनापरः। 'इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति। (तस्मात् भिन्ने एते वाक्ये)। **भा.** २।१।१५।४७. * 'इषे त्वेति शाखां छिनत्ति' इयं इतिकरणरूपा विनियोक्त्री श्रुतिः सोमेश्वरमतेन। **बाल.** पृ. ४५.

* **इष्ट–( यज् )शिष्टस्य** हि प्रतिपत्तिरूपः संस्कारः। **वि.** ३।८।१९.

* **इष्टसाधनत्वं** प्रवर्तनारूपो विधिः विषयमाक्षिपति। **भाट्ट.** ४।१।१. * **इष्टसाधनत्वभाव्यत्वयोः** समानप्रकारकत्वनियमः। यदि वा उपवापकर्मत्वेन तुषाणामन्वये तादृशनियमस्य व्यभिचारः इति विभाव्यते, तदा आकीर्णकरप्रतिपत्तिकर्मत्वातिरिक्तकर्मत्वान्वये नियमः। **मणि.** पृ. ६.

* **इष्टकाः** अग्निचयने मृन्मय्य एव, न तु धातुमय्यः। **संकर्ष.** २।१।१, ताश्च साश्रिकाः कार्याः न तु अनियतसंस्थानाः। २।१।२, तत्रापि समचतुरश्राः। २।१।३, ताश्च सर्वा अग्निपक्का एव, नैर्ऋत्यस्तु तुषपक्काः। २।१।६, पाकश्च तासां लौकिकाग्निना निर्मन्थ्येन। २।१।७.

**इष्टका एव प्राणशब्दघटितमन्त्रोपधेयाः 'प्राणभृत उपदधाति' इत्यत्र॥**

'प्राणभृत उपदधाति' इत्यत्रापि जानुदघ्नत्वाद्यविरोधेन क्षुद्रजीवानामुपधानसंभवः। **इति प्राप्ते**, 'तद्धानासामुपधानो मन्त्रः' इति स्मृत्या (पा० ४।४।१२५)

प्राणभृत्पदघटितमन्त्रकरणत्वेनोपपत्तौ न प्राणिहिंसानिषेधसंकोचो युक्त इति । **संकर्ष.** २।१।२३.

* इष्टकाः चित्रिण्यः वज्रिण्यः भूतेष्टकाः, एता मध्यमायां चितौ लोकंपृणातः पूर्वमुपधेया अग्निचयने । **वि.** ५।३।७–८. * इष्टकाः न पशुशीर्षादिस्थले निधेयाः अन्तरालपूरणार्थम् । **संकर्ष.** २।१।४. * **इष्टकायाः** स्वयमातृण्णाया उपधाने उपाधानकर्त्रे वरदानं अध्वर्युकर्तृकं, वचनबलात् । **वि.** ३।८।२, * **इष्टकानां** अग्निचयनसाधनभूतानां अखण्डत्वादयो धर्माः, न तु प्रथमचितिधर्माः । तस्मात् चित्रिण्यादिष्वपि ते सन्ति अग्न्यपूर्वसंबन्धित्वेनैव तासामपि वाक्येन विनियुक्तत्वात् । ३।६।१२. * इष्टकानां अनारभ्याधीतानां अग्निशेषता, न तु चितिशेषता । तेन ताः सकृदुपधातव्याः, न तु प्रतिचिति । **भा.** ५।३।६।१५–१६. * इष्टकानां निर्माणं न याथाकाम्येन किंतु दीक्षोत्तरकालमेव । उखाऽग्निभस्मनो मृदश्च संसर्गविधानात् । **संकर्ष.** २।१।२८, दीक्षातः पूर्वमपि प्राजापत्यपशोः परतः इष्टकाकरणकालः । २।१।२९. * इष्टकानां ब्राह्मणविहितानां मध्यमायां चितौ उपधानम् । **वि.** ५।३।७. * **इष्टकासु** उख्यभस्म स्पृश्यते तेन सर्वा अग्नयो भवन्ति । **संकर्ष.** २।१।२८. * इष्टकासु सकृत् विकर्षणप्रोक्षणानुष्ठानम् । **वि.** ९।१।८.

* **इष्टकाधर्माः** के चित् अमृन्मयीषु दूर्वादिषु अपि भवन्ति चयने । **संकर्ष.** २।१।८. * **इष्टकापाकार्थं** अग्निचयने यो निर्मन्थ्योऽग्निः, स मन्थनसाध्यो लौकिकः शास्त्रीयसंस्काररहितः । **वि.** ७।३।७, * **इष्टकापाकार्थे** निर्मन्थ्याग्नौ अग्नीषोमीयपशुगतनिर्मन्थ्याग्निधर्माणां नातिदेशः । ७।३।७.

* **इष्टकापादः** नाम संकर्षकाण्डे तृतीयाध्यायस्य द्वितीयः पादः । **के.** * **इष्टकाशब्दस्य** मूले ( भाष्ये ) जातिवचनत्वं निराकृत्य आकृतिवचनत्वं अर्थसंशयानन्तरं साधितं, तज्जातीवोपयुक्तं अयुक्तं चेत्युपेक्षितम् । **संकर्ष.** २।१।१. * **इष्टकोपधानं** ' ब्रह्मासृज्यत, भूतान्यसृज्यन्त ' इत्यादीन् सृजधातुघटितान् मन्त्राननूद्य ' सृष्टीरुपदधाति ' इत्यनेन विधीयते । **वि.** ३।४।१७, * **इष्टकोपधानविधिः** ' अयं पुरोभुवस्तस्य प्राणो भौवायनः ' इत्यादिलिङ्गप्रकरणप्राप्तमन्त्रानुवादेन ' प्राणभृत उपदधाति ' इति । प्राणभृच्छब्देन मन्त्रद्वारा इष्टका लक्ष्यन्ते । १।४।१८.

* **इष्टिः** आधानपूर्विका । **वि.** ६।६।५.

**⌛ इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात्** । १०।१।२४ ॥

इष्टिः आरम्भणीया सोमस्य अङ्गभूतात् दीक्षणीयादिकात् निवर्तेत । दीक्षणीयाद्यर्थं आरम्भणीया न कर्तव्या । आरम्भसंयोगात् । ' दर्शपूर्णमासावारप्स्यमानः ' इति आरम्भद्वारा दर्शपूर्णमासाङ्गं इष्टिरवगता । न च सोमप्रयोगमध्यवर्तिनां दीक्षणीयादीनां आरम्भोऽस्ति । आरम्भो नाम प्रधानोद्देश्यिका प्रथमा कृतिः । कृतौ प्राथम्यं च स्वसजातीयकृतिध्वंसानधिकरणकालवृत्तित्वम् । साजात्यं च साक्षात् परंपरया वा तत्प्रधानोद्देश्यकत्वेन । अत ईदृश आरम्भो न दीक्षणीयायामस्ति । तस्या ज्योतिष्टोमाङ्गत्वात् यतः इष्टिः आरम्भाङ्गं, स चारम्भः प्रधानेन संयुक्तः आरम्भस्य प्रधानसंयोगात् । तादृशारम्भस्य अङ्गभूतदीक्षणीयायामभावात् द्वारलोपेन अङ्गभूतदीक्षणीयायाः आरम्भणीया निवर्तते । तस्मात् दीक्षणीयाऽऽदिषु आरम्भणीयाया बाध इति सिद्धान्तः । **के.**

* इष्टिः यागः । स एव च आसेचनाधिको होमः । **भा.** ६।८।१।७, * **इष्टयः** अध्वरकल्पा , सर्वपृष्ठा , मृगारा, सुमनाः इत्यादयः । ११।२।४।२३, * इष्टयः अनाहिताग्नेर्न विद्यन्ते । ६।८।१।२, * इष्टयः ' ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्येवमाद्याः । तत्र दार्शपौर्णमासिक एव विध्यन्तः, न सौमिकः, न वा विकल्पः उभयोः । ८।१।४।११. * इष्टयः काम्या विकृतिभूता एकाहकालाः । प्रकृतिस्तु ( दर्शरूपा ) द्व्यहकाला । **वि.** १२।२।१३. * इष्टयः पशवः सोमाः काम्याः न पाठक्रमेण कर्तव्याः, यथाकामं ते कर्तव्याः । **भा.** ५।३।१२।३२–३६. * इष्टयः पशवश्च अग्निष्टोमानुष्ठानात् प्रागप्यनुष्ठातुं शक्यन्ते । **वि.** ५।३।१४. * इष्टयः वैकृत्यः दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यः न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति । न च तुल्यकालत्वे प्रसङ्गो भवति । **भा.** १२।२।५।१५, * **इष्टेः**

दीक्षणीयायाः लोपः अस्थियज्ञस्य मृतकर्तृकत्वपक्षे । १०।२।१८।४९. ॐ **इष्टीनां** काम्यानां नित्यानां वा प्रकृतिविकृतिभूतानां पर्वण्येवानुष्ठानम् । 'य इष्ट्या पशुना सोमेन वा यजते सोऽमावास्यायां पौर्णमास्यां वा' इत्युक्तत्वात् । **वि.** १२।२।१३, ॐ इष्टीनां काम्यानां नैमित्तिकानां च अनुष्ठाने पाठक्रमो न नियामकः । किंतु कामो वा निमित्तं वा नियामकम् । ५।३।१२. ॐ **इष्टिषु** अतिदेशकानि प्रकृतिलिङ्गानि १ तद्धितेन देवतानिर्देशः, २ एकदेवतत्वं, ३ द्विदेवतत्वं, ४औषधद्रव्यकत्वं, ५ आज्यद्रव्यकत्वं, ६ पयोद्रव्यकत्वं, ७ दधिद्रव्यकत्वं, ८ उज्ज्वलविशदद्रव्यकत्वं, ९ पशुप्रभवगतिमद्द्रव्यकत्वं, १० निर्वपतिमत्त्वं इति अष्टमाध्याये उक्तानि । **बाल.** पृ. ११९. ॐ इष्टिषु अलिङ्गास्वपि ( दर्शपूर्णमासलिङ्गशून्यास्वपि ) स्थालीपुलाकवत् दर्शपूर्णमासविध्यन्तस्य सिद्धिः । 'विध्यन्तोऽपि न्यायपूर्वः, स च न्यायस्तुल्यः सर्वेषां कर्मणां वैकृतानां लिङ्गवतामलिङ्गवतां च ।' **भा.** ७।४।१।१२, ॐ इष्टिषु ऐन्द्राग्नादिषु दर्शपूर्णमासरूपप्रकृतिलिङ्गसंयोगो भवति। किं पुनस्तत् प्रकृतिलिङ्गं ? तद्धितेन देवतोपदेशः, कपालवत्ता, निर्वपतिशब्दश्च । 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इति 'ऐन्द्राग्नो द्वादशकपालः' इति । ८।१।४।११.

⌛ **'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः'** (८।१।४।११) **इत्यनेन न्यायेन** दार्शपौर्णमासिकानां फल-नियम-कर्तृ-समुदायानां सौर्यादिषु प्रवृत्तिरस्ति इति पूर्वः पक्षः । **भा.** ८।१।१३।२०.

⌛ **इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् । ८।१।४।११ ॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्येवमाद्यासु इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् । चोदनायां प्रकृतिलिङ्गसंयोगस्तु तद्धितेन देवतोपदेशः, कपालवत्ता, निर्वपतिशब्दश्च । 'आग्नेयोऽष्टाकपालः' 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति प्रकृतौ । 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इति तु अत्र । सौर्ये तु 'सौर्यं चरुं निर्वपेत्' इति 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति च लिङ्गम् । अलिङ्गास्वपि स्थालीपुलाकवत् सिद्धिः । **के.**

ॐ इष्टिषु दीक्षणीयाऽऽदिषु सौमिकीषु दार्शिकाग्न्यन्वाधानस्याभावः । **भा.** १२।१।१०।१९, अत्रैव आक्षेपस्य समाधानं च । १२।१।१२।२४-२८, ॐ इष्टिषु प्रायणीयादिषु सौमिकपत्नीसंनहनेन प्रसङ्गसिद्धिः। १२।१।१३।२९, ॐ इष्टिषु वैकृतीषु प्राकृतं द्रव्यदेवतं निवर्तते। १०।७।१७। ५८-६०, ॐ इष्टिषु सर्वासु नारिष्ठहोमाः प्रवर्तमाना दृष्टाः । तेषु स्वाहाकारश्च । ८।४।५।१८, ॐ इष्टिषु सोमाङ्गभूतासु शेषभक्षाणां सोमाङ्गदक्षिणया प्रसङ्गसिद्धिर्नास्ति । १२।१।१७।३३-३४, ॐ इष्टिषु सोमाङ्गभूतासु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गसिद्धिः । १२।१।३।८-९.

ॐ **इष्टिचातुर्मास्येषु** कार्तिक्यां पौर्णमास्यां काश्चिदिष्टयो विहिताः । तास्तु वक्ष्यमाणेन न्यायेन 'य इष्ट्या' इति वाक्यवशेन अन्येष्टिवत् सद्यस्काला एवेति अविवादम् । **भाट्ट.** ५।१।११. ॐ **इष्टिधर्मातिदेशः** सोमे नास्ति । **भा.** ८।१।३।३-१०, ॐ **इष्टिपश्वादिषु** सौमिकेषु दार्शिकहोतृवरणं कर्तव्यम् । १२।१।१८।३५, ४०-४१. ॐ **इष्टिपूर्वकत्वमेव** सोमविकाराणाम् । **भाट्ट.** ५।४।९.

⌛ **इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् । ६।८।१।१॥**

'प्रजाकामं चतुर्होत्रा याजयेत्, चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत । पूर्वेण ग्रहेणार्धं जुहुयात्, तदुत्तरेणार्धं' इति। यद्यपि अयं होमः अक्रतुशेषः क्रतुशेषो न भवति अत एव अपूर्वोऽपि, तथापि सर्वहोमानां इष्टिपूर्वत्वात् इष्टिपूर्वकत्वात् पवमानेष्टिभिः संस्कृतेष्वेव अग्निषु स्यात् । आधानस्य सर्वशेषत्वात् सर्ववैदिककर्मशेषत्वात् पवमानेष्टीनां च आधानाङ्गत्वात् । तस्मात् आधानेन इष्टिभिश्च संस्कृतेषु अग्निषु चतुर्होतृहोमः इति पूर्वः पक्षः ।

**इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति । २ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तयति । न चतुर्होतृहोमः संस्कृतेष्वग्निषु भवति, यतः 'एषा वा अनाहिताग्नेरिष्टिः यच्चतुर्होतारः' इति चतुर्होतॄन् मन्त्रान्, चतुर्होतृसंज्ञकमन्त्रकरणकहोमान् असंस्कृतेषु अग्निषु

दर्शयति । ननु तर्हि 'एषा वा इष्टिः' इति इष्टित्वमुक्तं कथं संगच्छते तत्राह– इष्टित्वेन तु संस्तवः अस्य होमस्य स्तुतिमात्रम् । नहि अनाहिताग्नेः वास्तवी इष्टिरस्ति । तस्मात् अनाहिताग्नेः लौकिकाग्नौ चतुर्होतृहोमः ।

**उपदेशस्त्वपूर्वत्वात् । ३ ॥**

सिद्धान्ते लिङ्गमिदमुक्तं, प्राप्तिर्वक्तव्या इति चेत् तत्राह । नेदं लिङ्गमात्रं इति तुशब्दार्थः । अपूर्वत्वात् प्रमाणान्तरेण अप्राप्तत्वात् उपदेशः विधिरेवायम् । तस्मात् असंस्कृतेष्वेवाग्निषु होमः ।

**स सर्वेषामविशेषात् । ४ ॥**

पूर्वपक्षी आह । स विधिः सर्वेषां अक्रतुशेषाणां क्रतुशेषाणां च चतुर्होतृहोमानां स्यात् । अविशेषात्, चतुर्होतॄणामयं धर्मः, नात्र अक्रतुशेषाणामेवेति विशेष उक्तः । तस्मात् सर्वेषाम् ।

**अपिवा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः । ५ ॥**

पूर्वपक्षोक्तं अपिवाशब्देन निरस्यन् सिद्धान्ती आह । अनाहिताग्नेः क्रत्वभावात् क्रतोः अभावादेव अशेषभूतनिर्देश एवायं, न तु क्रतुशेषभूतस्य निर्देशः । न शेषभूतः अशेषभूतः, तस्य निर्देशः । अशेषभूतस्य अक्रतुशेषभूतस्य निर्देशोऽयम् । तस्मादक्रतुशेषाणामयं धर्मः ।

**जपो वाऽनग्निसंयोगात् । ६ ॥**

'एषा वा अनाहिताग्नेरिष्टिः यच्चतुर्होतारः' इत्युक्तः चतुर्होतृहोमो न अग्नौ होमः, किंतु एष चतुर्होतृमन्त्राणां जपः स्यात् जपयज्ञोऽयं स्यात् । 'अनाहिताग्नेः' इत्युक्त्या अनग्निसंयोगात् अग्निसंयोगाभावात् ।

**इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् । ७ ॥**

चतुर्होतृहोमः जपयज्ञरूपः स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तपक्षं विशदयति । चतुर्होतृहोमरूपे कर्मणि 'एषा वा इष्टिः' इति इष्टित्वेन यागत्वेन संस्तुते सति, होम एव स्यादयं न जपयज्ञः । परंतु न संस्कृते आहवनीयेऽग्नौ । कुतः ? चतुर्होतॄन् अनारभ्य अनधिकृत्य अग्निसंयोगात् 'आहवनीये जुहोति' इति अग्निसंबन्धस्य उक्तत्वात् । चतुर्होतारस्तु अनाहिताग्नीनां, इति इतरेषां अनाहिताग्नीनां आहवनीयस्य अवाच्यत्वात् वक्तुमशक्यत्वात् । 'संस्तुतो होमः' इति सुबोधिनीपाठः । 'इष्टित्वेन तु न संस्कृते होमः' इति कुतूहलपाठः । इष्टित्वेन इष्टिपदवाच्यत्वेन संस्तुतः, अतः होम एव स्यात् । ननु आहवनीयः स्यात् तत्राह– अनारभ्येति । अनारभ्याधीतत्वात् आहवनीयप्रापकवचनस्य उक्तरीत्या दर्विहोमे अवाच्यत्वात् प्रवेशासंभवात् । इतरेषां श्रौतकर्मणामेव आहवनीयः । इति **सुबोधिनीग्रन्थः** । होमे तु सादृश्यात् इष्टित्वेन उपचारो युक्तः, न तु जपे । तस्मादनाहिताग्नेरेव होमः इति न संस्कृते होमः स्यात् । **न च** अनाहिताग्नेः होमाङ्गभूताहवनीयाभावात् कथं होम इति **वाच्यम्** । आहवनीयस्य तदतिरिक्तहोमान् प्रत्येव अङ्गत्वात् । **न च** एवं आहवनीये चतुर्होत्रतिरिक्तान् जुहोति इति वाच्यं स्यात् इति **वाच्यम्** । अनारभ्याग्निसंयोगात् । 'आहवनीये जुहोति' इति अग्निसंयोगस्य अनारभ्यविधानात् । पदहोममिव विशेषविधिविहितं अन्यमपि होमं न स्पृशति इति इतरेषां अवाच्यत्वात् इति **कुतूहलम्** ।

**उभयोः पितृयज्ञवत् । ८ ॥**

'एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः' 'चतुर्होतॄन् याजयेत्' इत्युक्तः चतुर्होतृहोमः सः उभयोः आहिताग्नेः अनाहिताग्नेश्च स्यात्, न अनाहिताग्नेरेव । पितृयज्ञवत् । यथा पिण्डपितृयज्ञः आहिताग्नेरनाहिताग्नेश्च एवं चतुर्होतारोऽपि । इति पुनः पूर्वपक्षः ।

**निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् । ९॥**

पूर्वपक्षं वाशब्देन निरस्यन्नाह सिद्धान्ती । 'एषा वा अनाहिताग्नेरिष्टिः' इति वचनेन स्पष्टमेव अनाहिताग्नेर्निर्देशः कृतः । निर्देशसामर्थ्याच्च अनाहिताग्निरेवात्राधिकृतः, न आहिताग्निः । 'यदाहवनीये जुहोति' इति वचनं तु चतुर्होतॄन् अनारभ्य अनधिकृत्य अग्नेः संयोगमाह इति इतरहोमार्थः स्यात् आहवनीयः । चतुर्होतृहोमेषु तु नास्ति सः ।

**पितृयज्ञे संयुक्तस्य पुनर्वचनम् । १० ॥**

चतुर्होतृहोमः आहिताग्नेरनाहिताग्नेश्च स्यात् इति पूर्वपक्षे पिण्डपितृयज्ञो दृष्टान्तः उक्तः । तं विघटयति सिद्धान्ती । युक्तः पितृयज्ञे उभयोरधिकारः । यस्मात् आहिताग्निना संयुक्तस्य पितृयज्ञस्य अनग्निना संयोगार्थं पुनर्वचनं विद्यते । ' अप्यनाहिताग्निना कार्यः ' इति । तस्मात्तत्र उभयोरधिकारः । चतुर्होतृषु तु ' अनाहिताग्नेः' इत्येवोक्तत्वात् नोभयोरधिकारः इति विशेषः । तस्मात् चतुर्होतृहोमेषु अनाहिताग्नेरधिकारः इति सिद्धान्तः । के.

* इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः आधाने । भा. ५।४।३।५-९, ब्राह्मणस्याप्ययं विकल्पः । ५।४।४। १०-१४.

**इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् । ११।२।३।१३ ॥**

दर्शपूर्णमासयोः एकफलकत्वेन ऐककर्म्यात् पौर्णमासेष्टेः दर्शेष्टेश्च अङ्गानां तन्त्रभावः स्यात् । तन्त्रेणानुष्ठानं स्यात् । एवं राजसूये अनुमत्यादीनामिष्टीनां पवित्रादीनां सोमानां च यान्यङ्गानि तेषां सर्वेषां तन्त्रं स्यात् । एवं चातुर्मास्येषु चतुर्णां पर्वणां यान्यङ्गानि तेषामपि तन्त्रभावः स्यात् । दर्शपूर्णमासयोरैककर्म्यात्, राजसूयस्य ऐककर्म्यात्, चातुर्मास्यगतपर्वचतुष्टयस्य च ऐककर्म्यात् । एकं च तत् कर्म च एककर्म, तस्य भावः ऐककर्म्यं तस्मात् । इष्टी च राजसूयाश्च चातुर्मास्यानि च इष्टिराजसूयचातुर्मास्यानि । तेषु ऐककर्म्यात् तयोः तेषां च एककर्मत्वादित्यर्थः । राजसूयान्तर्गतानां इष्टिपशुसोमदर्विहोमाणां प्रत्येकं राजसूयत्वं गृहीत्वा विग्रहे राजसूयशब्दस्य बहुवचनं कर्तव्यं, समुदायवाचकत्वं राजसूयशब्दस्य स्वीकृत्य एकवचनं वा कर्तव्यम् । इति पूर्वः पक्षः ।

**कालभेदान्नेति चेत् । १४ ॥**

पूर्वपक्षे कश्चित् शङ्कते । दर्शपूर्णमासयोः कालभेदः । राजसूये इष्टिषु देशभेदः कालभेदश्च, सोमेष्वपि कालभेदः । चातुर्मास्यपर्वसु कालभेदः । एवं कालभेदात् नाङ्गानां तन्त्रम् । इति चेत् ।

**नैकदेशत्वात् पशुवत् । १५ ॥**

न भेदः, एकदेशत्वात् । दिश्यते उपदिश्यते अनेन इति देशः विधिवाक्यम् । एको देशो येषां तादृशत्वात् । ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' ' राजसूयेन स्वाराज्यकामो यजेत ' ' चातुर्मास्यैः स्वर्गकामो यजेत ' इति एकेनैव विधिना उपदिष्टत्वात् । तस्मात् तन्त्रमङ्गानाम् । पशुवत् । ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने ' इति भिन्नकालत्वेऽपि ' अग्नीषोमीयं पशुमालभेत ' इति एकविधिकत्वात् नाङ्गानामावृत्तिर्भवति तद्वत् ।

**अपिवा कर्मपृथक्त्वात्, तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात् । १६ ॥**

अपिवा इति पूर्वपक्षव्यावृत्तिः । दर्शस्य पौर्णमासस्य च कर्मणोः कालभेदेन पृथक्त्वात् तयोरङ्गानां न तन्त्रम् । तेषां च आग्नेयः पुरोडाशः, ऐन्द्रं दधि, ऐन्द्रं पयश्च इति यागत्रयं दर्शशब्देन अनूद्य तदङ्गानां तन्त्रेण विधानम् । एवं आग्नेयः पुरोडाशः, उपांशुयाजाज्यं, अग्नीषोमीयः पुरोडाशश्च इति यागत्रयं पूर्णमासशब्देन अनूद्य तदङ्गानां तन्त्रेण विधानम् । एवं तेषां त्रयाणांत्रयाणां तन्त्रेण अङ्गानां विधानात् साङ्गानां तेषां उपदेशः स्यात् । तस्मात् त्रिकद्वयस्य अङ्गानां न तन्त्रं, एकस्मिन् त्रिके तु अङ्गानां भवत्येव तन्त्रम् । एवमपरस्मिन् त्रिकेऽपि । इति सिद्धान्तः ।

**तथा चान्यार्थदर्शनम् । १७ ॥**

' चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश अमावास्यायां ' इति अन्यार्थदर्शनं अङ्गानां भेदं दर्शयति ।

**तदाऽवयवेषु स्यात् । १८ ॥**

यदा च एष न्यायः षोडशसूत्रोक्तः, तदा अवयवेषु इष्ट्यादिरूपावयवेषु देशकालभेदात् तन्त्रभेदः स्यात् । तदवयवेषु इति पाठे तु तच्छब्देन इष्ट्यादेः परामर्शात् यदेत्याद्यध्याहारं विनैव सरलोऽर्थः ।

**पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात् । १९ ॥**

यदुक्तं पशुवत् इति ( सू. १५ ) तत्राह । पशौ युक्तमङ्गतन्त्रम् । ' आग्नेयं सवनीयं पशुमुपाकरोति ' इति

चोदनैकत्वात् पशौ एकमेव तन्त्रम्। केवलं वचनात् प्रचारस्य विप्रकर्षः स्यात्। दर्शपूर्णमासादौ तु अवान्तरचोदनाभेदात् कर्मभेदः। तथा च विषमो दृष्टान्तः। तस्मात् इष्टिराजसूयचातुर्मास्येषु प्रयोगानुरोधेन अङ्गानामावृत्तिः इति सिद्धान्तः। के.

**इष्टिराजसूयाधिकरणम्।** दर्शपूर्णमासचातुर्मास्यादिषु तत्तद्व्याप्यप्रयोगानुरोधेन अङ्गानामावृत्तिः॥

**इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात्। ११।२।३।१३॥**

**भाष्यम्**— दर्शपूर्णमासेष्ट्यां द्वौ समुदायौ दर्शः पूर्णमासश्च। तथा राजसूये अनुमत्यादय इष्टयः, पवित्रादयः सोमाः। चातुर्मास्येष्वपि पर्वाणि वैश्वदेवादीनि। तत्र विचार्यते किं दर्शस्य पूर्णमासस्य च तन्त्रेण अङ्गानां प्रयोगः, तथा राजसूये इष्टीनां सोमानां च चातुर्मास्येषु च पर्वणां, उत भेदेनेति। किं प्राप्तम्? तत्रतत्र तन्त्रेण प्रयोगः। कुतः? ऐककर्म्यात्। एकफलत्वादित्यर्थः। एकं फलमिह तत्रतत्र श्रूयते, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'राजसूयेन स्वाराज्यकामो यजेत' 'चातुर्मास्यैः स्वर्गकामो यजेत' इति। एकत्वात् फलस्य एकः प्रयोगः। तत्र न गृह्यते विशेषः। तस्मात् तन्त्रम्।

**कालभेदान्नेति चेत्। १४॥**

**भाष्यम्**— नैतदेवं, तन्त्रमङ्गानीति। किं तर्हि? भेदेन। कुतः? कालभेदात्। क्वचित्कालभेदः, क्वचिद्देशभेदः। दर्शपूर्णमासयोः कालभेदः, 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति। तथा, चातुर्मास्येषु पर्वणां, 'वसन्ते वैश्वदेवेन यजेत' 'वर्षासु वरुणप्रघासैर्यजेत' 'हेमन्ते साकमेधैर्यजेत' इति। राजसूये देशभेदः, बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे, ऐन्द्र एकादशकपालो राज्ञो गृहे, आदित्यश्चरुर्महिष्या गृहे इति। कालभेदाद्देशभेदाच्च गृह्यते विशेषः। पौर्णमासी येषामङ्गानां कालः, तानि पौर्णमास्या उपकुर्वन्ति, नामावास्यायाः। वैगुण्यात्। तस्माद्भेदः।

**नैकदेशत्वात्, पशुवत्। १५॥**

**भाष्यम्**— नैतदेवं भेदः इति। कुतः? एकदेशत्वात्। यत्र फलसंबन्धः, तत्र अङ्गानां चोदना। यत् कारणं, फलं साधयतां प्रधानानां अङ्गान्युपकारे वर्तन्ते। समुदायचोदनायाः फलसंबन्धः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, 'राजसूयेन स्वाराज्यकामो यजेत' इति, 'चातुर्मास्यैः स्वर्गकामो यजेत' इति। नैकदेशचोदनायां 'पौर्णमास्यां पौर्णमास्या यजेत' 'वसन्ते वैश्वदेवेन यजेत' 'बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे' इति। न चेत् तत्र अङ्गानां प्राप्तिः, कुतो भेदेन प्रसङ्गः। समुदायस्य तु फलैकत्वात् एकः प्रयोगः। तस्मात् यस्मिन्कस्मिंश्चित् अवयवे क्रियमाणानि अङ्गानि समुदायेन संभन्त्स्यन्ते, समुदायस्य अवयवैः अव्यतिरेकात्। पशुवत्। यथा पशौ भिन्नकालेष्वपि एकदेशेषु 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति नाङ्गानामावृत्तिर्भवति, तद्वत्।

**अपिवा कर्मपृथक्त्वात्, तेषां तन्त्रविधानात्, साङ्गानामुपदेशः स्यात्। १६॥**

**भाष्यम्**— अपिवा न तन्त्रमङ्गानि स्युः, कुतः? कर्मपृथक्त्वात्। तेषां च तन्त्रविधानात्। कर्माणि तावत् एतानि भिन्नानि। अन्यः पौर्णमासः समुदायः, अन्य आमावास्यः, एवं सर्वत्र। तेषां च देशकालभेदः 'पौर्णमास्यां पौर्णमास्या यजेत' इत्येवमादिः। साङ्गानां चैषां तत्रतत्र देशकालविधिः। ननु नैवाङ्गानि प्राप्यन्ते इत्युक्तं, कुतस्तेषां देशकालविधिः? उक्तमेतत्, प्रयोगे पुनःश्रुत्या समादयो विधीयन्ते इति। तत्र 'समे दर्शपूर्णमासाभ्यां यजेत' इति समुदायप्रयोगे पुनःश्रुतिः। 'पौर्णमास्यां पौर्णमास्या यजेत' इत्येकदेशे पुनःश्रुतिः। एवं सति पौर्णमासप्रयोगे कालो विहितः। अविभक्तश्च अङ्गानां प्रधानेन प्रयोगः। तस्मात् पौर्णमास्यङ्गानां पौर्णमासीकालः, अमावास्याऽङ्गानां अमावास्याकालः। तत्र गृह्यते विशेषः। विशेषग्रहणात् भेदः।

तथा चान्यार्थदर्शनम् । १७ ॥

भाष्यम्— 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायां' इति, तन्त्रभावे न पौर्णमास्यां चतुर्दश आहुतयः स्युः, नामावास्यायां त्रयोदश । भेदे तु उभयत्रोभयं भवति । तस्माद्भेदः ।

तदाऽवयवेषु स्यात् । १८ ॥

भाष्यम्— यदा च एष न्यायः, तदा अवयवेषु इष्ट्याद्यवयवेषु देशकालभेदात् तन्त्रभेदः । तत्र चातुर्मास्यावयवयोः अनीकवत्–सांतपनीययोः बर्हिषः साधारण्यवचनं अर्थवत् भवति 'यदनीकवतो बर्हिः, तत् सांतपनीयस्य' इति । इतरथा सिद्धत्वात् तत् अनर्थकं स्यात् । तस्मादपि भेदः ।

पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात् । १९ ॥

भाष्यम्— यत्तूक्तं पशुवत् इति, तत्र ब्रूमः । पशौ युक्ता सकृत् अङ्गानां क्रिया । तत्र हि एकमेव तन्त्रम् । केवलं प्रचारस्य वचनात् विप्रकर्षः । तदैक्यं तु चोदनैकत्वात् । एका तत्र चोदना 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति । कर्मचोदनायां हि अङ्गानां ग्रहणं, न प्रचारचोदनायाम् । तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन निर्वर्त्यते । तदर्थानि च कृतान्यङ्गानि । तेषां पुनःक्रियायां हेतुर्नास्ति । तस्मात् विषम उपन्यासः ।

शा— ( सिद्धान्त उच्यते– ) 'त्रिकद्वयस्य साङ्गस्य चोदना कालयोर्द्वयोः । तेनाङ्गानामिहावृत्तिर्वपाऽऽदीनां पशौ पुनः ॥' वपाप्रचारादिमात्रस्य भिन्नकालस्य चोदना, न पशुयागस्य । एवं चातुर्मास्येषु राजसूये च द्रष्टव्यम् । ११।२।२.

सोम— आपवादिकी संगतिः । सूत्रे ऐककर्म्यात् एकफलत्वादित्यर्थः ।

वि— 'संघभेदे तन्त्रमङ्गं न वा, कर्मैक्यतोऽग्रिमः ।, न मुख्यकालभेदोक्त्या प्रयोगस्य पृथक्त्वतः ॥'

भाट्ट— इह व्यापकप्रयोगविधिसत्त्वे व्याप्यप्रयोगविधिराक्षिप्य समाधीयते । देशादिवाक्ये षण्णामपि यागानामेकप्रयोगावगतेः, तदनुवादेन पौर्णमास्यादिवाक्येषु तत्तत्प्रधानमात्रे कालमात्रविधानान्न तेषु व्याप्यप्रयोगविधिः । अतश्च यथैव 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इत्यनेनैव सवनीयस्योत्पत्तिवत् प्रयोगस्यापि आश्विनोत्तरकालश्रवणेन प्राप्तत्वात् व्यापकप्रयोगसत्त्वेन 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इत्यनेन न व्याप्यप्रयोगविधानं, तथात्वे तत्रापि प्रयाजाद्यङ्गावृत्तिप्रसङ्गात् । अपितु तत्तत्प्रचारमात्रे कालविधानेन पूर्वाङ्गानि प्रयाजादीनि वपाप्रचारात् पूर्वं सकृदेव, उत्तराङ्गानि चानूयाजादीनि हृदयादियागोत्तरं सकृदेवेति नाङ्गावृत्तिः । तथा व्यापकप्रयोगविधिसत्त्वे व्याप्यप्रयोगस्य अविधानात् पौर्णमास्यादिवाक्येषु प्रचारविप्रकर्षमात्रम् । तेन आज्यभागान्तं पौर्णमास्यां प्रधानत्रयं कार्यं, ततोऽमावास्यायां प्रधानत्रयं कृत्वा अनूयाजादिप्रयोगसमाप्तिः, इति नोभयत्राङ्गावृत्तिः । इति प्राप्ते, विनिगमनाविरहात् पौर्णमास्यादिवाक्ययोः सायंकालादिवाक्ययोश्च अवान्तरप्रयोगविधिः । अतश्च तत्तद्यागाङ्गानां अग्निहोत्रहोमाङ्गानां च तत्तत्प्रयोगविधिना विधानात् आवृत्तिरवश्यंभाविन्येव । वपाऽऽदिवाक्ये तु सत्यपि कालश्रवणात् व्याप्यप्रयोगविधौ यावदङ्गानां वपाऽभ्यासापूर्वप्रयुक्तत्वं तावदङ्गानां तद्विधिविधेयत्वं, यावदङ्गानां च हृदयाद्यभ्यासापूर्वप्रयुक्तत्वं तावतां तदभ्यासप्रयोगविधिप्रयुक्तत्वमिष्टमेव । प्रयाजादीनां तु सवनीयपरमापूर्वप्रयुक्तानां उत्पत्त्यपूर्वोपयोगिनां च साधारणानां वपाप्रचारादिवाक्यैः अपरिगृहीतानां सवनीयमहाप्रयोगविधिपरिग्रहात् नावृत्तिरिति वैषम्यम् । पौर्णमास्यादिभेदेन आवृत्तप्रयाजाद्यङ्गानां च समुदायापूर्वे उपयोगान्न वैयर्थ्यम् ।११।२।२.

मण्डन– 'त्रिकेत्रिकेऽङ्गमभ्यस्येत् ।'

शंकर– 'प्रतित्रिकं त्वङ्गभेदः ।'

* इष्टिशब्दस्य यागगतपशुसोमातिरिक्तहविष्कत्वं उपाधिः । सु. पृ. ७१७.

* 'इष्टिश्राद्धे क्रतुर्दक्षः, सत्यो नान्दीमुखे वसुः । नैमित्तिके कामकालौ, काम्ये तु धुरिलोचनौ ॥ पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ॥' ( बृहस्पतिः )। अयं कर्मतः वाचनिकव्यवस्थाविधिः स्मार्तः । बाल. पृ. १९.

* **इष्टिसंस्कृते** ( पवमानेष्टिसंस्कृते ) अग्निहोत्राद्यनुष्ठानम् । **वि.** ५।३।९.

* **इष्टिसोमयोः** पौर्वापर्यं न नियतम् । ( इष्टिरत्र दर्शपूर्णमासेष्टिः ) । **वि.** ५।४।३.

* **इष्ट्यन्ते** ( दीक्षणीयाऽन्ते ) एव दीक्षितत्वं, तस्य च अभिव्यञ्जनमात्रार्था दण्डादयः इति इष्ट्यन्ते एव दीक्षितधर्माः प्रवर्तेरन् । भा. ५।३।११।२९-३१.

**इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता ॥**

**वि—** ' इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता नहि । अस्ति वा, नालौकिकत्वादियत्ताऽनवधारणात् ॥, लोकवत् संनिपत्यारादुपकारिद्वयश्रुतेः । इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥ ' अलौकिकत्वेन ' एतावद्भिरङ्गैः संपूर्ण उपकारः ' इति निश्चेतुमशक्यत्वात् इष्ट्यादौ नास्ति मूलप्रकृतित्वम् । इति चेन्मैवम् । लौकिकसदृशत्वात् । यथा लौकिकभुजिक्रियायां ओदनः करणं, तस्याः संनिपत्योपकारिणः शाकसूपादयः, आरादुपकारिणः पीठदीपादयः । तथा भावनायां यागः करणं, अवघातादयः संनिपातिनः, प्रयाजादय आरादुपकारिणः । अतो नात्यन्तमलौकिकत्वम् । इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते , तथा श्रौते श्रुत्या निश्चीयताम् । तस्मात् इष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति । **वि.** ८।१।३ वर्णकं २.

**इष्ट्यर्थमग्न्याधेयं, प्रकरणात् । ३।६।४।११॥**

अग्न्याधेयं पवमानेष्ट्यर्थं वा न वेति विचारे पूर्वपक्षमाह । अग्न्याधेयं आधानं इष्ट्यर्थं पवमानेष्ट्यर्थं स्यात् । प्रकरणात् इष्टिप्रकरणे तस्य पाठात् । यत् यस्य प्रकरणे पठ्यते तत्तदर्थं भवति ।

**न वा, तासां तदर्थत्वात् । १२ ॥**

वाशब्दः पूर्वपक्षनिवृत्त्यर्थः । न आधानं पवमानेष्ट्यर्थम् । तासां - पवमानेष्टीनामेव तावत् तदर्थत्वात् अग्न्यर्थत्वात् । आधानमपि अग्निसंस्कारार्थं पवमानेष्ट्योऽपि अग्निसंस्कारार्थाः इति न परस्पराङ्गत्वम् । तस्मात् पवमानेष्ट्यो नाधानार्थाः ।

**लिङ्गदर्शनाच्च । १३ ॥**

पवमानेष्ट्यो नाधानाङ्गं इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । ' जीर्यति ह वै एष आहितः पशुः यदग्निः । तदेतान्येव अग्न्याधेयस्य हवींषि ( पवमानहवींषि ) संवत्सरे निर्वपेत् । तेन वै एष न जीर्यति । तेनैनं पुनर्नवं करोति ' इति लिङ्गं पवमानेष्टीनां अग्न्यर्थत्वे लिङ्गम् । एताभिरिष्टिभिर्हि अग्निः पुनः नवो भवति इत्युक्तमत्र । तेन तासां अग्न्यर्थत्वं ज्ञायते । अग्न्यर्थत्वाच्च नाधानार्थत्वम् । चकारो हेत्वन्तरसमुच्चयार्थः । **के.**

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया । ९।१।११।३४ ॥**

दर्शपूर्णमासारम्भे आरम्भणीया इष्टिः समाम्नाता ' आग्नावैष्णवमेकादशपालं निर्वपेत्, सरस्वत्यै चरुं, सरस्वते द्वादशकपालं, अग्नये भगिनेऽष्टाकपालं निर्वपेत् यः कामयेतान्नादः स्यामिति । नित्यवदेके भगिनमामनन्ति ' इति । दर्शपूर्णमासयोश्च ' यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति आवृत्तिः श्रुता । तयोरावृत्तयोः किं आरम्भणीयाऽपि आवर्तते, उत नेति विचारे पूर्वपक्षमाह । इष्ट्यावृत्तौ दर्शपूर्णमासेष्ट्योः आवृत्तौ सत्यां आरम्भणीया आवर्तेत । प्रयाजवत् । यथा दर्शाद्यावृत्तौ प्रयाजा आवर्तन्ते तद्वत् ।

**सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् । ३५ ॥**

पूर्वपक्षं वाशब्देन निरस्य सिद्धान्तमाह । सकृदेव आरम्भणीया प्रथमं कर्तव्या । आरम्भसंयोगात् दर्शपूर्णमासारम्भेण आरम्भणीयायाः संयोगात् । आरम्भः पुनः आरम्भस्तु यावज्जीवप्रयोगात् यावज्जीवप्रयोगमुद्दिश्य एक एव । ल्यब्लोपे पञ्चमी । यावज्जीवप्रयोगारम्भो न नाना भवति । तस्मात् आरम्भणीया दर्शपूर्णमासार्था सकृदेव भवति । **के.**

* **इष्यमाणस्य** साध्यत्वावगतिः । ( यदिष्यते तत्साध्यते इति ) । **सु.** पृ. ८९०.

---

## ई

* **ईप्सितं कर्म** चतुर्विधम् । ' द्वितीया ' इति बिन्दौ मणौ द्रष्टव्यम् । * **ईप्सिततमं** हि यत् साधनं , तत् द्वितीयाऽन्तेनोच्यते । **भा.** २।२।५।१४.

* **ईप्सितोद्देश्यविशेषणस्यैव** निमित्तरूपोद्देश्यविशेषणस्यापि विवक्षाऽयोगात् । **भाट्ट.** ६।४।६.

**ईर्ष्या हि विवेकपरिपन्थिनीति न्यायः।** ' परोत्कर्षाऽक्षमेर्ष्या स्याद्दौर्जन्यान्मन्युतोऽपि च ' । सा विवेकस्य ' इदं हेयमिदमुपादेयं इति ' विवेचनायाः परिपन्थिनी शत्रुरूपेत्यर्थः । ईर्ष्यायां सत्यां विवेको न भवतीत्यर्थः । **साहस्री.** ९४४.

* **'ईशानाय परस्वत आलभते**, तान् पर्यग्निकृतानुत्सृजति ' इति ईशानयागे गृहमेधीयाज्यभागन्यायेन ( १०।७।९।२४ ) चोदकपरिलोपात् आर्थिकः अङ्गान्तरप्रतिषेधः । **सोम.** ११।२।११.

* **ईश्वरः** । उपनिषदादिप्रमाणगम्यमीश्वरमङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थः तात्पर्यरूपा च । ( इति केचित् ) । **रहस्य.** पृ. १५. * **'ईश्वरो वा एष** दिशोऽनून्मदितोः यद्दिशोऽनु व्यवस्थापयन्ति दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय ' इति दिग्व्यवस्थापननिमित्तोन्मादपरिहारार्थतया श्रूयमाणा राजसूयान्तर्गता अवेष्टिः इति । **शा.** ११।४।३.

* **ईश्वरस्य जगत्कारणताया निरासः** । ' जगत् अनादि । न च तस्य कश्चित् स्रष्टा ' इति बिन्दौ द्रष्टव्यः श्लोकवार्तिकस्थः । **ऋजु**— ( पृ. १४३ ) अत्र केचित् अर्थवादगतसृष्टिप्रलयश्रुत्युपनिपातमात्रोपजातश्रद्धातिशयविप्रलब्धबुद्धयः कणभक्षाक्षचरणमतप्रवणचेतसः सर्वस्य तनुभुवनादेः ईश्वरं कारणं आचक्षाणाः प्रचक्षते । सर्वं सावयवं अवयवसंयोगसमासादितात्मलाभं अधुनातनं उदीक्षामहे । सावयवं च तनुभुवनादिकम् । अवयवसंयोगश्च द्व्यणुकपर्यन्तः । द्व्यणुकोऽपि अवयवी परमाणुद्वयसंयोगारम्भणीयः । परमाण्वोश्च परस्परं कर्मजः संयोगः । कर्म च अदृष्टवदात्मसंयोगादेव परमाणुषु प्रतिज्ञायते । तदुक्तं ' अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानि ' ( वै. सू. ५।२।२३ ) इति । अदृष्टं चाचेतनम् । न चाचेतनं चेतनानधिष्ठितं क्वचिदपि कार्ये पर्याप्नोति वास्यादिकमिव । न चेदमुचितं य एव ते क्षेत्रज्ञाः, त एव तेषामदृष्टानामधिष्ठातारो भवेयुरिति । अज्ञत्वात् । ज्ञाता हि पदार्थस्य पदार्थसामर्थ्यस्य च अधिष्ठाता उपलभ्यते, यथा तक्षा वास्याः । न च क्षेत्रज्ञाः स्वसमवायिनी अपि धर्माधर्मलक्षणे अदृष्टे स्वरूपतः शक्तितो वा वेदितुमलं इति तदतिरेकी चेतनः कल्प्यते । तेन चेतनातिशयाधिष्ठितादृष्टवशोपजातकर्मनिमित्तसंयोगस्वपरमाण्वारब्धद्व्यणुकादिकार्यपरंपरासंभूतं तनुभुवनादिकं आदिमत् अवगम्यते । तथा उत्पत्तिमत् सकलं विनाशयोगि इति साधितम् । इति कथमिदानीं अनादिवृद्धव्यवहारपरंपरा इति । तदिदं प्रतिपक्षकक्षामपि नारोढुं क्रमते इत्युपेक्षितं भगवता **भाष्यनिबन्धनकारेण** । तथाहि । यद्यपि सिध्येदयं मनोरथः, तथापि कथमेकदैव सर्वे अवयविनो विलीयन्ते इति समधिगमनीयम् । अधुनेव किमिति कस्यचिदुदयः कस्यचिद्विलय इति नाङ्गीक्रियते दृष्टानुगमात् इति मन्यामहे । एवं च वृद्धव्यवहारपरंपरां कोऽपहरति । अपि च यदि क्षेत्रज्ञाः नाधिष्ठातारः ज्ञानाभावात् अन्यस्तर्हि कथमधिष्ठाता, तस्यापि ज्ञानानुपपत्तेः । आत्ममनःसंयोगात् अदृष्टापेक्षात् विज्ञानानामुत्पत्तेः तत्तदिन्द्रियार्थसंयोगसचिवात् । न चादृष्टेषु सामग्रीत्वमुपपद्यते । अथ तस्य कारणान्तरमस्तीति, तन्न । दृष्टकारणपरिहारेण वा अदृष्टकारणान्तरानुमानानुपपत्तेः । दृष्टानुसारि सर्वत्रानुमानम् । सामान्यतोदृष्टमपि न दृष्टोपमर्देन क्वचित् वर्तते । ननु एतदपि दृष्टं ' चेतनानधिष्ठितं अचेतनं न प्रवर्तते ' इति ; एतत्तर्हि परिहीणं भवति । सत्यं उभयत्र परिहाणे किं परिहीयतामिति, तत्र विशेषविषयत्वात् अस्मदीयमेव ज्ञानोदयकारणान्तरानुमानं आदरणीयं, न पुनः ईश्वरवादिनां अत्यन्तसामान्यविषयं अचेतनं चेतनाधिष्ठितं इति । विशेषानुमानस्य बलीयस्त्वात् । तदुक्तं भगवता वार्तिककारेण— **' प्रसिद्धावयवं यस्मादविशेषे प्रतिष्ठितम् । तत्साध्यांशकसामान्यदृष्टाच्च बलवत्तरम् ॥ बाधः सामान्यशास्त्रस्य विशेषे श्रुतितो यथा । अनुमानान्तरैरेवमनुमानस्य बाधनम् ॥** ' इति । एतेन इदमपि पराकृतं भवति ' नित्यैव ईश्वरस्य बुद्धिः ' इति । यतो याया बुद्धिः सासा उत्पत्तिमती विनाशिनी च । तेन ईश्वरस्यापि धिया तथाविधयैव भवितव्यम् । **किंच** अधिष्ठानार्थोऽपि

वक्तव्यः। यादृशं हि वास्यादिषु करसंयोगादिकं अधिष्ठानं दृष्टं, तादृशमेव अदृष्टेष्वपि अनुमातव्यम्। न च तत् संभवति इति। तथा प्रवृत्तिरपि काऽन्या स्वरूपलाभाद-दृष्टस्य। यथा वास्या क्रियाकाष्ठादिसंयोगश्च, आत्मलाभश्च अदृष्टस्य यागाद्यनुष्ठानसिद्ध एवेति। तस्मात् ईश्वरवादः अस्माभिरपि न निराकृतः। **ऋजु.** पृ. १४३.

* **ईश्वरे** आत्मत्वाङ्गीकारे मानाभावः। **रहस्य.** पृ. १५.

* **ईश्वरज्ञानं** नाव्याप्यवृत्ति। **मणि.** पृ. १७०.

* **ईश्वरनिरासः** कृतः (वार्तिककारैः श्लोकवार्तिके संबन्धाक्षेपपरिहारपरिच्छेदे) पदपदार्थसंबन्धस्य ईश्वरकृतसंकेतात्मकत्वे वेदाप्रामाण्यापत्तेः। **बाल.** पृ. ७.

* **ईश्वरवादः**। त्रयो हि खलु जगति भावा भवन्ति। प्रसिद्धचेतनकर्तृकाश्च यथा प्रासादाट्टालगोपुरतोरणादयः। प्रसिद्धतद्विपर्ययाश्च यथा परमाण्वाकाशादयः। संदिग्धतत्कर्तृकाश्च यथा तनुतरुमहीमहीधरादयः। ते च विवादाध्यासिता उपलब्धिमत्कर्तृकाः कार्यत्वादचेतनोपादानत्वाद्वा, यत्कार्यमचेतनोपादानं वा तत्सर्वमुपलब्धिमत्कर्तृकं यथा प्रासादादि, तथा च तनुभुवनादयः, तस्मात्तेऽपि उपलब्धिमत्पूर्वकाः इति। उक्तहेतुद्वयोपलक्षणार्थं संनिवेशादिमत्त्वग्रहणम्। इतरथा गुणकर्मणोः अणोः अव्यापनेन हेतोरेकदेशासिद्धत्वप्रसङ्गात्। न च पृथिव्यादीनां कार्यत्वमसिद्धं, महत्त्वे सति क्रियावत्त्वेन वा सावयवत्वेन वा वस्त्रादिवत् तत्सिद्धेः। **यदि मन्येत** अबुद्धिमत्पूर्वकत्वमात्रे साध्ये सिद्धसाधनम्। अभिमतं हि परेषामपि कर्मजत्वात् कार्यजातस्य कर्मणश्चेतनहेतुत्वात् तत्कारणत्वं जगतः। सर्वज्ञपूर्वकत्वे तु न तेन हेतोः व्याप्तिर्दृष्टचरी। दृष्टान्तश्च साध्यहीनः। कुलालादीनामसर्वज्ञत्वात्। विरुद्धता च हेतोः असर्वज्ञपूर्वकत्वेनैव कुम्भादौ उत्पत्तिमत्त्वस्य वा चेतनोपादानत्वस्य वा व्याप्तेरुपलब्धेः। न च उपलब्धिमत्पूर्वकत्वमात्रं साधनविषयः, तद्विशेषस्य तु सर्वज्ञपूर्वकत्वस्यातद्विषयस्यापि ततः सिद्धिरिति साम्प्रतम्। तथाहि, यद्यसौ विशेषो न साधनव्याप्तः कथमतस्तत्सिद्धिः, सिद्धत्वात् कथमविषयः, विषयश्चेत् कथं न स्वाश्रयात् तद्दोषगतिं स्पृशेत्? इति। **तदयुक्तम्**। सामान्यमात्रव्याप्तौ अपि अन्तर्भावितशेषस्यैव सामान्यस्य पक्षधर्मतावशेन साध्यधर्मिण्यनुमानात्। इतरथा सर्वानुमानोच्छेदप्रसङ्गात्। तथाहि, वह्न्यनुमानमपि न वह्निसामान्यमात्रविषयं, तस्य प्रागेव सिद्धत्वात्। नापि तद्विशिष्टगिरिगोचरो, वह्नित्वसामान्यस्य तत्संबन्धाभावेन तद्विशेषणत्वाऽनुपपत्तेः। इतरथा गोत्वसमवायादिव गावः शाबलेयादयः पर्वतोऽपि वह्नित्वसमवायात् वह्निः प्रसज्येत। अस्ति च वह्नित्वेन गिरेः संयुक्तसमवायः संबन्ध इति चेत्, तर्हि नाऽप्रतिपद्य पर्वतसंयुक्तं वह्निविशेषं असौ शक्यप्रतिपत्तिरिति वह्निविशेषस्यापि अनुमानम्। तथा च पूर्वोक्तदोषप्रसङ्गः।

एवमिन्द्रियाऽनुमानेऽपि स एव दर्शनीयः। तथाहि। तत्रापि नेन्द्रियकरणिका का चित् क्रिया उपलब्धा। न खलु छिदादयः क्रियाः इन्द्रियसाधनाः, व्रश्चनादीनामनिन्द्रियत्वात्। न च व्रश्चनादिसाधनाः संभवन्ति रूपादिपरिच्छिन्नलक्षणाः क्रियाः। तस्माद्यथैव क्रियात्वसामान्यस्य सत्यपि करणमात्राधीनत्वाव्याप्तत्वे पक्षधर्मतावशाद् इन्द्रियलक्षणकरणविशेषसिद्धिः, तथेहापि सत्यपि उत्पत्तिमत्त्वस्य अचेतनोपादानत्वस्य च उपादानोपकरणसंप्रदानप्रयोजनज्ञकर्तृमात्रव्याप्तत्वे विवादाध्यासितेषु पक्षधर्मताबलाद् विशिष्टस्य तस्य सिद्धिः। अन्यथा सामान्यस्यापि व्यापकाभिमतस्य असिद्धिः स्यात्, निर्विशेषस्य असंभवात्, विशेषस्य चान्यस्य अनुपपत्तेः। असर्वज्ञस्य च अदृष्टादिभेदविज्ञानरहितस्य अधिष्ठातृभावासंभवात् तेन यद्यपि उपलब्धिमत्कर्तृकत्वं व्याप्तिविषयः, तथापि तद्विशेषस्य पक्षधर्मताबलात् प्रतिलम्भः इति विशेषविषयमनुमानम्। न चोक्तदोषप्रसङ्गः। तस्य साध्यदृष्टान्तयोर्धर्मविकल्पात् उत्कर्षापकर्षानुयोगस्य सर्वानुमानसाधारण्येन अनुमानमात्रप्रामाण्यप्रतिक्षेपहेतुत्वात्। तत् सिद्धं विवादाध्यासिता उपलब्धिमत्कर्तृका इति।

अत्र ईप्सितप्रसिद्ध्यायत्तसाधनं शब्दोक्तं, तदायत्तोपादानादिविषयत्वात्, यस्य यदायत्तमुपादानादिविषयत्वं तत् तत्प्रसिद्ध्यायत्तसाधनं, यथा धूमो वह्न्यादेर्देशविशेषसिद्ध्यधीनोपादानादिविषयत्वः तदधीनसिद्धिरिति।

न चास्य सकलक्षेत्रज्ञसमवायिधर्माधर्मज्ञानकारणाभावेन तदज्ञानं, तत्समवेतानां ज्ञानचिकीर्षाप्रयत्नानां नित्यत्वात्। न च बुद्धितन्नित्यत्वयोः कश्चिद्विरोधः। बुद्धेरनित्यायाः तत्रतत्र उपलब्धेर्विरोध इति चेत्? तर्हि तोयादिपरमाणवोऽपि न रूपादिमन्तः प्रसज्येरन्। पार्थिवानां रूपादीनां कार्याणामुपलब्धेः, इह च तेषामकार्यत्वात्। हिमकरकाऽऽदौ रूपादिदर्शनात् कार्यद्रव्यगतानां च तेषां कारणगुणप्रक्रमेण भावात् पाथसीयानामपि रूपादिमत्ता। सदा कारणतया च तद्गतानि रूपादीनि नित्यानीति चेत्, इहापि कार्यत्वेन अचेतनोपादानत्वेन वा समस्तविषयज्ञानानुमानात्, तस्य च सदा कारणतया नित्यत्वसिद्धेः समानत्वात्, परपुरुषसमवेतावपि धर्माधर्मौ अधिष्ठातुं शक्नोति संबन्धात्। नहि साक्षात् संयोगसमवायौ एव संबन्धौ, संयुक्तसंयोगिसमवायस्यापि तद्भावात्। प्रयुक्ताः खलु ईश्वरेण परमाणवः, नैव क्षेत्रज्ञाः तत्समवेतौ धर्माधर्मौ इति संयुक्तसमवायो वा, क्षेत्रज्ञैरीश्वरस्य संयोगात्। अनुमानात् संयोगसिद्धेः। ईश्वरः क्षेत्रज्ञसंयुक्तो मूर्तद्रव्यसंयोगित्वात्, यो मूर्तद्रव्यसंयोगी स क्षेत्रज्ञसंयुक्तो यथा घटादिः। स चास्य संयोगः अन्यतरोभयकर्मसंयोगानां तत्कारणानामभावादजन्यः। कार्यारम्भाभिमुख्यमेव धर्माधर्मयोः प्रवृत्तिः। सा च देशकालादिवत् ईश्वरप्रयत्नमप्यपेक्षते। न चैवं वाच्यं धर्माधर्मौ परमाणून् वा स्वधर्मागृहीतान् कथमीश्वरः प्रयत्नेन प्रेरयतीति। विषवैद्याविदा तदीयधर्माधर्मानुपगृहीतस्य विषशकलस्य प्रेरणदर्शनात्। ज्ञानेच्छाप्रयत्नानां च तद्वर्तिनां नित्यत्वसिद्धौ कृतमस्य शरीरग्रहणेन। तन्मात्रादेव परमाणूनामदृष्टादीनां च प्रवृत्तौ शरीरपृथिव्यादिलक्षणस्य कार्यस्य उत्पत्तेरुपपत्तेः। न चैतद्वाच्यं नेश्वरः कर्ता पृथिव्यादीनां, प्रयोजनाभावात्। अनित्यं चेश्वरविज्ञानं विज्ञानत्वादिति। ईश्वरस्य तज्ज्ञानस्य च धर्मिणः अप्रसिद्धौ हेतोराश्रयासिद्धत्वात्। तत्सिद्धौ वा कर्तुर्नित्यज्ञानस्येश्वरस्य अनुमानादेव धर्मिग्राहिणः सिद्धेः, तद्विरोधान्न तदाश्रयमनुमानं आत्मानमापादयितुमर्हति। तत्किं ईश्वरज्ञानानित्यत्वग्राहिणः अनुमानस्य विशेषविषयतया बलीयस्त्वप्रसाधनप्रयत्नेन? मूले एवास्य विहितः कुठारः। **न च** अज्ञातरूपाणां इन्द्रियमनसां विज्ञानोत्पत्तिं प्रति साधनभावस्य च वत्सविवृद्धिनिमित्तस्याचेतनस्य क्षीरस्य स्वातन्त्र्येण प्रवृत्तेश्च। वनविटपिनां च विना प्रयत्नमुत्पादस्य च दर्शनाद् व्यभिचार इति **सांप्रतम्**। सर्वेषामेव तेषां विवादास्पदत्वेन पक्षपक्षे निक्षेपात्। न च शशशृङ्गास्तिता, तदनुपलब्धिविरोधात्। अपरोक्षदर्शनार्हतया भगवतस्तद्विरोधानुपपत्तेः। अन्यथा सर्वानुमानोच्छेदप्रसङ्गात्। शृङ्गस्य तु शशशिरोवर्तिनो गवादिगतस्येव दर्शनार्हस्य अनुपलब्धिनिराकृतस्य साधनार्हत्वात्। न च पक्षेण व्यभिचारः। सर्वत्र तस्य सुलभतया सर्वानुमानोच्छेदप्रसङ्गात्। व्यतिरेकी वा हेतुः कार्यमात्रं पक्षीकृत्य प्रयोक्तव्यः। स चैवं प्रयोगमारोहति। 'नित्येतरत् समस्तं सर्वज्ञपूर्वकं उत्पत्तिमत्त्वादचेतनोपादानत्वाद्वा, यत् पुनर्न सर्वज्ञपूर्वकं न तदुत्पत्तिमत् अचेतनोपादानं वा यथा परमाण्वादि, न चेदं तथा, तस्मात् सर्वज्ञपूर्वकं' इति। सर्वज्ञपूर्वकत्वेन च परं प्रति असिद्धेन कार्यमात्रमेव पठ्यते इति भवति पक्षः। यदि पुनः चेतनानधिष्ठितानि स्वं कार्यं कुर्युः, ततो यत्र क्व चनावच्छिन्नानि कार्यं जनयेयुरिति न देशकालप्रतिनियतप्रसवं कार्यमुपलभ्येत। हेतुसमवधानजननतया कार्यं न प्रत्येकं कारणैर्जन्यते इति चेत् सत्यं, समवधानमेव तु कारणानामन्योन्यम्। कुतः? कादाचित्कपरिपाकाददृष्टविशेषादिति चेत्। न खल्वयमपि अचेतनः कथं यथावत् कारणानि संनिधापयेत्। नो खलु यत्र क्व चनावस्थितानि दण्डादीनि विना कुम्भकारप्रयत्नं अदृष्टविशेषादेव परस्परं संनिधीयन्ते, संनिहितानि वा कार्यस्येशते। तस्मात् कारणसमवधानव्याप्तत्वात् कार्योत्पादनस्य, तस्य चोपलब्धिमत्पूर्वकत्वाभावे अनुपपत्तेः, व्यापकनिवृत्त्या विपक्षात् कार्योत्पादे निवर्तमाने उपलब्धिमत्त्वेन व्याप्यते इति प्रतिबन्धसिद्धिः। **न च** ईश्वरज्ञानमप्रत्यक्षं इन्द्रियार्थसंनिकर्षानुत्पादादिति **सांप्रतम्**। लौकिकस्य हि प्रत्यक्षस्य तल्लक्षणम्। अस्य हि निखिलार्थसाक्षात्कारित्वं लक्षणं वेदितव्यम्। अत्र च आम्नायो भवति 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' 'द्यावाभूमी जनयन् देव

एकः ' इति । स्मृतिश्च भवति । ' अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ ' न चेश्वरज्ञानस्य शरीरेन्द्रियापेक्षयोत्पादः । अस्ति हि श्रुतिः ' अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं नहि तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ' इत्यादिका । तदनुमानागमाभ्यां सिद्धमीश्वरस्य कर्तृत्वं सर्वज्ञत्वं चेति ।

( दूषयति- ) न तावत्पक्षधर्मतावशात् तदधिष्ठानविशेषो युगपत् । असंख्येयस्थावरादिलक्षणकार्यदर्शनात् अखिलविषयनित्यविज्ञानमात्रशाली षड्गुण ईश्वरः सेद्धुमर्हति । न ह्येतावता विश्वं कार्यमुपजायते । न जातु उपादानादिज्ञोऽपि कुम्भकारः कुम्भमचिकीर्षुः चिकीर्षुर्वा तदुपादानादिषु अलसतया अप्रयतमानः कुम्भारम्भाय कल्पते । तस्मात् ज्ञानचिकीर्षाप्रयत्नसमुदायजन्मा कार्योत्पादो न ज्ञानमात्रात् भवितुमर्हति । मा भूदार्द्रेन्धनदहनजन्मा धूमः केवलार्द्रेन्धनात् वह्नेर्वा । पृथग्जनज्ञानविलक्षणमीश्वरज्ञानं असहायमेव विश्वस्मिन् कार्ये पर्याप्तमिति चेत् ? हन्त भोः किमस्य ज्ञानेनापि स्वरूपातिशयः एवास्याः सहायः तत्रतत्र कार्ये वर्त्स्यतीति । न किंचित् कार्यमसहायादेकस्मादिति चेत् । ननु तस्यैव स्त एव क्षेत्रज्ञगतौ धर्माधर्मौ, सन्ति च परमाणवः सहायाः इति किमस्य ज्ञानेन ? । अविज्ञातास्ते न प्रवर्तन्ते इति ज्ञानमेषितव्यमिति चेत् । अथ अविज्ञातास्ते कस्मान्न प्रवर्तन्ते ? तथा अनुपलम्भात् कुम्भाद्युपायेष्विति चेत् । तर्हि ज्ञानवत् चिकीर्षाप्रयत्नौ अपि आस्थेयौ । तत्रापि च ज्ञानं चिकीर्षाविशेषे उपयुज्येत । स च प्रयत्नभेदे इति प्रयत्नहेतुभेद एव साक्षात्कारोदये हेतुरिति कथं तमन्तरेण तत्संभवः ? नहि वह्निमन्तरेण तुषप्रक्षेपफूत्कारमात्रादेव ओदनं सिध्यति । यदि मन्यते स्तः एव चिकीर्षाप्रयत्नौ अपि भगवतीश्वरे इति ? अथ किमेतौ नित्यौ अनित्यौ वा ? नित्यौ चेत् कृतमीश्वरस्य ज्ञानेन चिकीर्षाप्रयत्नोत्पादाऽनुपयोगिना, तयोर्नित्यतया स्वोत्पादोपयोगानपेक्षणात् । न च प्रयत्नवत् ज्ञानमपि साक्षात् कार्योत्पादनाङ्गम् । प्रयत्नभेदेन खलु अयमधितिष्ठत्युपादानादि , न तु समये ज्ञानस्य कश्चिदुपयोगश्चिकीर्षाया वा, निष्पादितक्रिये कर्मणि अविशेषाधायिनः साधनस्य साधनन्यायातिपातात् इति दत्तजलाञ्जलिरीश्वरस्य सर्वज्ञता । अथानित्यौ , ततस्तयोरुत्पत्तिकारणं वक्तव्यम् । ननु नित्यज्ञानमेवोत्पत्तिमूलकारणमस्ति । ततः किमपरेण कारणेन ? अहो बत प्रमादो यदयं ' आत्मनः संयोगविशेषासमवायिकारणौ इच्छाप्रयत्नौ तमन्तरेण ज्ञानमात्रादेव भवतः ' इत्यपि वक्तुमध्यवसितः । तथा सति अयमतण्डुलमपि मण्डं साधयेदेव । ' सन्त्येवाऽस्य मुक्तात्ममनोभिः संयोगाः, तेन तत्सहायः तत्र चिकीर्षाप्रयत्नप्रचयं युगपत् प्रसूते तत्कार्योपजननाय ' इति चेत् ? ननु मनांसि तत्संयोगाश्च किमनधिष्ठितानि चिकीर्षाप्रयत्नौ प्रसुवते अधिष्ठितानि वा ? यद्यनधिष्ठितानि, ततस्तैरेव व्यभिचारः । अधिष्ठानं तु प्रयत्नमन्तरेणायुक्तमेव । 'प्रयत्नान्तरेण चिकीर्षान्तरजन्मना तदधिष्ठानं, न चानवस्थानं, अनादित्वात् चिकीर्षाप्रयत्नप्रवाहस्य ' इति चेत् ? यथा अयमुत्पन्नसंजिहीर्षः ईश्वरः क्षेत्रज्ञेषु प्रतिबन्धवृत्ते धर्माधर्मनिचयेषु जगति च परमाण्ववस्थामापन्ने निर्व्यापारः कियन्तमपि कालं स्थित्वा यदा चिकीर्षति प्रयतते वा, तदा तस्य चिकीर्षाप्रयत्नयोर्जनयितव्ययोर्न स्थितं चिकीर्षाऽन्तरं वा प्रयत्नान्तरं वा समस्तीति कुतो मनसां तत्संयोगानां वा अधिष्ठानं ? इत्यनधिष्ठितेभ्यो मनस्तत्संयोगेभ्यो न प्रयत्नचिकीर्षे उत्पद्येयाताम् । उत्पद्यमाने वा कथं कार्यत्वं अचेतनोपादानत्वं वा न हेतुं व्यभिचारयतः । न च सवितृप्रकाशवदीश्वरस्य ज्ञानमात्रमिच्छामात्रं प्रयत्नमात्रं तत्तद्भावभेदोपधानात् तद्विषयं भवतीत्यपि सांप्रतम् । परस्पराश्रयदोषप्रसङ्गात् । तत्तद्भावोपधाने तत्तद्विषयत्वे च तत्तदुपधानम् । उपधीयमानानधिष्ठाने तदुपधानस्य कार्यस्य अनुत्पादात् , तस्य च अधिष्ठानादुत्पत्तेरिति । ज्ञानानित्यत्वपक्षे च दूषणमुपरिष्टात् प्रवेदयिष्यते । सोऽयमीदृशो विशेषो विचारासहः कथं पक्षधर्मताबलादपि साध्यधर्मिणि उपसंह्रियते ? नहि स्वयमनुपपद्यमानं अन्यस्योपपादनायालम् । का तर्हि सामान्यस्य आनुमानिकस्य असति विशेषे गतिः ? किमवश्यभवितव्यमस्य गत्या ? ननु प्रमाणसिद्धमुपपादनीयं, यस्य अनुमा उपपद्यते । यन्नाम अनुपपद्यमानं, अस्तु

तस्य परमनुपपत्तिरेव। ननु प्रमाणसिद्धमनुपपन्नमिति विप्रतिषिद्धम्। एवं तर्हि प्रमाणसिद्धिप्रतिघातः एवास्तु अविप्रतिषेधाय, न पुनरनुपपन्नस्योपपत्तिः। कतमत् तर्हि साधनस्येदं दूषणम्। न दूषणं साधनस्य। तस्य नाम बादिनः यः ससहायनिःसहायनित्यानित्यत्वादिविशेषपरिहाराय गगनकुसुमायमाने क्षित्यादिवर्तिनि बुद्धिमत्पूर्वकत्वसामान्ये साधनानर्हे साधनं प्रयोजयति। न च संभवति तादृशो विशेषो, यमास्थाय क्षित्यादौ बुद्धिमत्पूर्वकत्वसामान्यं व्यवतिष्ठेत। न चैवं सर्वानुमानोच्छेदप्रसङ्गः, संभवद्विशेषविषयत्वात् इतरेषामनुमानानाम्। नहि न संभवति पर्वतनितम्बवर्तिवह्निविशेषः अनुद्भूतरूपस्पर्शो वा तैजसश्चक्षुरवयवो रूपोपलब्धिसाधनम्। कारणानां च चित्ररूपसंस्थानसामर्थ्यानां तत्रतत्रोपलब्धेः। तस्मात् यथा कश्चिन्निशातमसिं अच्छेद्यमाकाशं प्रति व्यापारयन् पुरुषो निगृह्यते, न पुनरसिराकाशं वा, तद्वत् कार्यत्वमचेतनोपादानत्वं वा तर्कसहायं लब्धपरिपाकादृष्टवत्क्षेत्रज्ञपरमाण्वादिसंयोगकारणमात्रविषयमीश्वरे सर्वज्ञे इति। **कणिका. पृ. २१२-२१९.**

* ईश्वरवादः। 'सर्वज्ञतावादार्थः' इति बिन्दौ विधिविवेकग्रन्थे २१ कारिकायां द्रष्टव्यः। तत्र नैयायिकाभिमतेश्वरस्य निरासः सर्वज्ञतानिरासद्वारा साधितः। **के.**

* **ईश्वरसिद्धौ** अनुमानं प्रमाणं इति **नैयायिकाः**। वेद एवेश्वरसिद्धौ प्रमाणं नान्यत् इति **मणिः**। **मणि. पृ. ४२-४३.**

* **ईश्वरानुमानिकतानिरासः**। इदानीं ईश्वरस्य आनुमानिकत्वं निराक्रियते। केचिदेवमनुमानं वदन्ति, विवादाध्यासितं सकर्तृकं कार्यत्वात्, यत्कार्यं तत् सकर्तृकं यथा घटः, तथेदं तस्मात्तथा। अत्र संदिग्धकर्तृकं भूधराङ्कुरादिकं पक्षः, प्रसिद्धकर्तृको घटादिः सपक्षः, असिद्धकर्तृकमाकाशादि विपक्षः। न च कार्यत्वमसिद्धमिति वाच्यं, सावयवत्वेन कार्यत्वस्य सिद्धत्वात्। **ननु** विरुद्धो हेतुः, यत्कार्यं तच्छरीरिकर्तृकं दृष्टं, यथा घटादिकं विग्रहवत्कुलालादिकर्तृकं, एवं च कार्यत्वं शरीरिकर्तृकत्वमेव साधयति, भवतां चाशरीरिकर्तृकत्वं सिषाधयिषितम्। अशरीरिकर्तृकत्वविपरीतं शरीरिकर्तृकं घटादिकं विपक्षः, तत्र कार्यत्वस्य पक्षविपक्षयोरेव वर्तमानत्वात् विरुद्धत्वम्। **नैवं,** यदि अशरीरिकर्तृकत्वमेव साध्यं, तदा विरुद्धत्वम्। अस्माकं तु सशरीरकर्तृकत्वाशरीरकर्तृकत्वविशेषं परित्यज्य सकर्तृकत्वमात्रमेव साध्यं, इतरथा अग्निमत्त्वे साध्ये किं प्रत्यक्षाग्निमत्त्वं, उत अप्रत्यक्षाग्निमत्त्वमिति विकल्पे, प्रत्यक्षाग्निमत्त्वे साध्यविकलतैवेति सकलानुमानोच्छेदप्रसङ्गः। अतः प्रत्यक्षाप्रत्यक्षविशेषपरिहारेण अग्निसत्तामात्रमेव साध्यमिति वक्तव्यं, तथाऽत्रापि। **अथास्माकमपि** धर्माधर्मद्वारेण क्षेत्रज्ञस्यैव कर्तृत्वात् सकर्तृकत्वमस्त्येवेति सिद्धसाधनता। **नैवं,** क्षेत्रज्ञस्य धर्माधर्माद्यधिष्ठेयज्ञानासंभवात् कर्तृत्वमेव **न** संभवतीति तद्विलक्षणो धर्मादिसाक्षात्करणनिपुणः (कर्ता अधिकरणसिद्धान्तन्यायापरपर्यायतया) पक्षधर्मतया विचित्रजगन्निर्माणचतुरः कर्ता सिद्धो भवति। **ननु** विलक्षणस्यापि कर्तृत्वं नोपपद्यते, तस्यापि धर्माधर्मसाक्षात्करणाशक्तेः। तदशक्तिश्च चेतनत्वात् क्षेत्रज्ञवत्। न च तस्य प्रत्यक्षस्य धर्माधर्मविषयत्वं, प्रत्यक्षत्वात् संप्रतिपन्नप्रत्यक्षवत्। न च तस्य बाह्येन्द्रियाणि धर्माधर्मगोचराणि इन्द्रियत्वात्, अस्मदादीन्द्रियवत्। आन्तरमपि मनः करणं बहिरर्थे स्वतन्त्रं न भवति अन्तःकरणत्वात्, अस्मदाद्यन्तःकरणवत्। न च तस्येच्छाज्ञानयोरपि नित्यत्वं इच्छाज्ञानत्वात् अस्मदादीच्छाज्ञानवत्। न च तस्य विग्रहस्यापि नित्यत्वं भौतिकत्वात्, अस्मदादिविग्रहवत्। न तस्य अभौतिको दिव्यो विग्रहः संभवति विग्रहत्वात्, अस्मदादिविग्रहवत्। प्रयोजनरहितत्वात् न च तस्य कर्तृत्वम्। जगत्सृष्ट्यादिकमपि न तस्य संभवति चेतनत्वात्, क्षेत्रज्ञवत्। इत्यादिभिर्हेतुशतैः विलक्षणाङ्गीकारो निष्प्रमाणकः, अङ्गीकारेऽपि न तस्य जगन्निर्माणसामर्थ्यं इति। **ननु** तदेतदश्रुतन्यायशास्त्राणां छान्दसानां वेदापौरुषेयत्वश्रद्धाविजृम्भितम्। तथाहि, तदेतत् सर्वं अनुमानजातं विलक्षणमेव परमङ्गीकृत्य उच्येत, अनङ्गीकृत्य वा? अङ्गीकृत्य चेत् धर्मिग्राहकप्रमाणविरोधः सर्वेषाम्। अनङ्गीकृत्य चेत्, आश्रयासिद्धिः। अथ प्रसङ्गापादनमुखेनोक्तानां हेतूनामवकाशः,

नैवं, प्रसङ्गापादनमपि अनुमानमेव, किंतु अनुमानस्यैव उक्तिप्रकारभेदमात्रम्। अतस्तदङ्गीकारे तद्ग्राहकप्रमाणविरोधः, अनङ्गीकारे चाश्रयासिद्धिरिति तदवस्थमेव पूर्वोक्तं दूषणम्। किंच अन्त्यावयविप्रभृति आद्यणुकं अचेतनं कार्यं चेतनाधिष्ठितमेवोत्पद्यते इति निर्विवादम्। द्व्यणुकोत्पत्तिस्तु परमाणुक्रियातः। सा च अदृष्टवदात्मसंयोगात् भवति, अदृष्टं च चेतनाधिष्ठितमेव सत् कार्यकरम्। तथाहि, विमतिपतितमेवं चेतनाधिष्ठितं सत् कार्यकरं अचेतनत्वात्, यद्यदचेतनं तत्तत् चेतनाधिष्ठितं कार्यकरं दृष्टं यथा वास्यादि, तथा चेदं तस्मात्तथा। अधिष्ठेयस्वरूपशक्तिकार्यवान् अधिष्ठाता भवतीति क्षेत्रज्ञादन्यो नित्येच्छाज्ञानादिमान् अधिष्ठाता पक्षधर्मताबलात् सिद्धो भवति, पर्वतगताज्ञाताग्निविशेषवत्। अतो न ज्ञानोत्पत्त्यर्थं शरीरेन्द्रियाद्यपेक्षा। न च ज्ञानस्य क्षेत्रज्ञज्ञानवत् अनित्यत्वप्रसङ्गः, पार्थिवाणुरूपादिकमनित्यं दृष्टमिति आ परमाणुषु न रूपाद्यनित्यत्वप्रसङ्गः। न च क्षेत्रज्ञगतादृष्टेन विलक्षणस्य संबन्धाभावः, विलक्षणसंयुक्तपरमाणुसंयुक्तक्षेत्रज्ञसमवेतत्वात्। अदृष्टस्य संयुक्तसंयोगिसमवायः संबन्धः संभवत्येव। अतः क्षेत्रज्ञविलक्षणोऽधिष्ठाता सिद्धः। एवं वा अनुमानं, विवादाध्यासितं उपादानोपकरणसंप्रदानप्रयोजनाभिज्ञबुद्धिमत्कर्तृकं, कार्यत्वात् घटादिवदिति। अतः सिद्धः अनुमानेनैव क्षेत्रज्ञविलक्षणो भगवानीश्वरः इति चेत्। **अत्रोच्यते**। नानुमानिकत्वमीश्वरस्य संभवति, अनुमानस्य कर्तृमात्रगोचरत्वात्। तेन न विलक्षणसिद्धिः। यदुक्तं क्षित्यादिकं सकर्तृकं, कार्यत्वात् घटादिवदिति, तत् सिद्धसाधनं क्षेत्रज्ञस्यापि धर्माधर्मद्वारेण कर्तृत्वाभ्युपगमात्। तदुक्तं, 'कर्मभिः सर्वसिद्धानां तत्सिद्धेः सिद्धसाधनम्' इति। अथ बुद्धिमत्कर्तृमात्रत्वं साध्यमिति चेन्न, बुद्धिमत्त्वमपि क्षेत्रज्ञस्य विद्यते इति पुनरपि सिद्धसाधनमेव। अथ न बुद्धिमत्कर्तृकतामात्रं साध्यं, किंतु उपादानोपकरणादिस्वरूपशक्तिकार्यबुद्धिमत्कर्तृत्वं, तर्हि साध्यविकलो दृष्टान्तः, सर्वोत्पत्तिमतां अदृष्टस्यापि उपकरणत्वात्। घटस्यापि तत् उपकरणं, परमाण्वादिकमुपादानम्। न च कुलालस्य तद्विषयं ज्ञानमस्तीति साध्यविकलत्वमेव। **किंच** किमत्र साध्यत्वेनेप्सितं किं अस्मदादिकर्तृकत्वं, उत विलक्षणकर्तृकत्वं? यदि अस्मदादिकर्तृकत्वं, तर्हि सिद्धसाधनमपसिद्धान्तश्च। अथ विलक्षणकर्तृकत्वं, तर्हि साध्यविकलो दृष्टान्तः। अथोभयानुगतकर्तृत्वमात्रं साध्यमिति चेन्न, उभयाभावात्। **अथ** कर्तृत्वसामान्येऽपि पक्षधर्मतया विलक्षणसिद्धिः, **नैवं**, इतरेतराश्रयप्रसङ्गात्, उभयानुगतसामान्यवत् असिद्धिरिति। **ननु** सर्वत्रादृष्टस्वलक्षणानुमानोच्छेदप्रसङ्गः। तथाहि कादाचित्कं कारणवदिति कर्मसाधने द्रव्यगुणादिव्यतिरिक्तमेव कर्म सिषाधयिषितम्। तत्रापि किं द्रव्यादि कारणं विलक्षणं वा इति विकल्पे, द्रव्यादौ सिद्धसाधनं, विलक्षणे साध्यविकलता, उभयानुगतकारणमात्रे साध्ये अन्योन्याश्रयत्वमिति समानत्वात्। **नैवं**, तत्र विलक्षणधर्माक्षेपः पक्षधर्मतया युक्तः, कारणजातीयस्वभावानतिक्रमेण विलक्षणधर्मिमात्राक्षेपात्। अत्र तु कर्तृजातीयस्वभावातिलङ्घनेन विशेषाक्षेपो भवताम्। तथाहि, संप्रतिपन्नः कर्ता कुलालादिः सशरीरः पुण्यपापाधीनः अनित्येच्छाज्ञानादियुक्तः भवदभिलषितस्तु अशरीरः पुण्यपापादिरहितो नित्येच्छाज्ञानादियुक्तश्चेति। न विलक्षणस्य क्रियाशक्त्यादिसाम्यं पक्षधर्मतया सर्वज्ञत्वसर्वशक्तित्वसर्वेश्वरत्वादिकर्तृजातीयविलक्षणगुणानामाक्षेप इति घटते। **किंच** कार्यत्वात् इत्ययमसिद्धो हेतुः, क्षित्यादीनामुत्पत्त्यसिद्धेः। तदुक्तं 'इदानीमिव सर्वत्र दृष्टान्ताधिक्यमिष्यते।' इति। अथ सावयवत्वात् कार्यत्वं साध्यते इति, तन्न, नहि सावयवत्वं प्रयोजकं कार्यत्वस्य। सावयवत्वाभावेऽपि बुद्ध्यादौ कार्यत्वदर्शनात्। अतः प्रागभाववत्त्वमेव प्रयोजकं कार्यत्वस्य। अथ तदेव हेतुर्भवतु, तर्हि असिद्धो हेतुः, क्षित्यादीनां प्रागभाववत्त्वासिद्धेः। **ननु** सावयवत्वं प्रागभाववत्त्वं च उभयं प्रयोजकं भवतु, अतः सावयवत्वेन कार्यत्वं प्रसाध्यते, सपक्षैकदेशवृत्तेरपि साधकत्वाभ्युपगमात्। **नैवं**, शक्यक्रिये हि सावयवत्वेन कार्यत्वं दृष्टं घटादौ, अशक्यक्रिये हि सावयवत्वेन विशेषहेतुना कार्यत्वे प्रतिषिद्धे सावयवत्वसामान्यहेतुना कार्यत्वं न शक्यते साधयितुं, बाधितविषयत्वात्। यथा मूर्तत्वं अनित्यत्वेन घटादौ व्याप्तमपि अशक्यनाशेषु परमाणुष्वनित्यत्वं न साधयितुं

शक्नोति । **किंच** विरुद्धश्चायं हेतुः । तथाहि, यत्र कार्यत्वं सकर्तृकत्वेन विशेषहेतुना व्याप्तं दृष्टं घटादौ, तत्र सर्वत्र विग्रहवत्कर्तृकत्वेन व्याप्तं दृष्टं कुलालादौ, अतः सकर्तृकत्वं साधयत् कार्यत्वं, विग्रहवत्त्वविशिष्टमेव साधयति । **ननु** अशरीरिणोऽपि कर्तृत्वं दृष्टं स्वशरीरप्रेरणायाम् । **नैवं**, तत्रापि सशरीरस्यैव प्रेरणायां कर्तृत्वं, प्रेर्यमपि स्वशरीरमेव । प्रयत्ननिमित्तं हि प्रेरणं, तत्तु अशरीरिणो न संभवति, मुक्तान्यात्मनि असंभवात् । **अथ** पूर्वशरीरपरित्यागेनैव शरीरान्तरग्रहात् अशरीरस्य शरीरपरिग्रहे कर्तृत्वं दृष्टं, नहि युगपच्छरीरद्वयपरिग्रहः संभवति । **नैवं**, तत्रापि सूक्ष्मशरीरस्य संभवात्, पूर्वशरीरपरित्यागे सर्वत्र शरीरिणः एव कर्तृत्वम् । न च एतावता सकलानुमानोच्छेदप्रसङ्गः, सपक्षदृष्टस्य अव्यभिचारिण एव धर्मस्य परिग्रहात्, यथा धूमस्याग्निव्याप्तौ उष्णत्वदाहकत्वप्रकाशकत्वाव्यभिचारिधर्मविशिष्टस्य अग्नेर्गम्यत्वं अङ्गीक्रियते । अपर्वतस्थत्वमपि व्याप्तमिति चेन्न पर्वतेऽपि क्व चित् प्रत्यक्षदर्शनात् । अनुमित्सितदेशव्यतिरिक्तदेशस्थत्वमपि अव्यभिचारात् उपाधिरिति चेन्न, व्याप्तिग्रहणदशायां अकस्मादेव अननुमित्सितदेशस्य स्मरणाभावात् । अतः सकर्तृकत्वं साध्यमानं सशरीरकर्तृकत्वमेव, सशरीरकर्तृकत्वे अपसिद्धान्तः । अशरीरकर्तृकत्वे सशरीरकर्तृकं सर्वं विपक्षः, अतः पक्षविपक्षयोरेव कार्यत्वस्य हेतोर्वर्तमानत्वात् विरुद्धार्थसाधकत्वाद्वा विरुद्धो हेतुः । **किंच** । अशरीरकर्तृकत्वं साध्यधर्मत्वेन ईप्सितं, तत्र कार्यत्वं सशरीरकर्तृकत्वव्याप्तमिति तदेव साधयतीति धर्मविशेषविपरीतसाधनो हेतुः, तथा धर्मिविशेषविपरीतसाधनश्च । अशक्यक्रियस्य हि भूभूधरादेर्धर्मित्वं, कार्यत्वं च शक्यक्रियेण घटादिना व्याप्तमिति तदपि साधयति । तथा कार्यत्वं क्षेत्रज्ञकर्तृकत्वेन व्याप्तमिति तदपि साधयति । तथा कार्यत्वं अदृष्टवत्कर्तृत्वेन व्याप्तमिति तदपि साधयति । तथा अनित्येच्छाज्ञानादिमत्कर्तृकत्वेन व्याप्तमिति तदपि साधयति । अथ अशेषविशेषपरिहारेण सकर्तृकत्वसामान्यं साध्यं, तर्हि सामान्यमात्रकर्तृकत्वाभावात् साध्यविकलतैव । पक्षधर्मतया विशेषाक्षेपो कर्तृजातीयस्वभावानुगुणमेव क्षेत्रज्ञत्वादिविशेषमेव आक्षिपति, न विपरीतस्वभावं, यथा अग्निमत्त्वे साध्ये पक्षधर्मतया उष्णत्वदाहकत्वादिधर्मयुक्तस्य अग्निविशेषस्यैव आक्षेपः, न विपरीतस्य अनुष्णत्वादियुक्तस्य । **किंच** अनैकान्तिकश्चायं हेतुः । चेतनकर्तृकत्वं हि साध्यत्वेनाभिमतं, तत्र भूभूधरादिकं पक्षः, चेतनकर्तृको घटादिः सपक्षः, चेतनकर्तृकव्यतिरिक्तः सर्वो विपक्षः, तत्र कार्यत्वं पक्षत्रयेऽपि वर्तते, भूभूधरादौ शाखाभङ्गादौ च, अतः अनैकान्तिकत्वमपरिहार्यम् । **किंच** अनध्यवसितश्चायं हेतुः । तथाहि, किमिदं कार्यत्वमभिप्रेतं भूभूधरादेः, किं भूभूधराद्यवयविन एव अभूत्वाभवनलक्षणकार्यत्वं, आहोस्वित् अविनाशिन्येव अवयविनि क्रमेण कतिपयावयवोत्पत्तिलक्षणम् । अभूत्वाभवनलक्षणस्य कार्यत्वस्य अस्माभिरनभ्युपगमात् असिद्धो हेतुः । क्रमेण कतिपयावयवोत्पत्तिलक्षणे कार्यत्वे अनध्यवसितत्वं, एवंविधस्य कार्यत्वस्य भूभूधरादिषु असंभवात् अन्यत्राभावाच्च, पक्षे एव वर्तमानत्वात्, सपक्षसद्भावेन केवलव्यतिरेकित्वाभावाच्च । **किंच** कालात्ययापदिष्टो हेतुः । तथाहि, अनुपलब्ध्या तावत् क्षित्यादीनां अकर्तृकत्वमेव निश्चीयते, अतः अनुपलब्धिबाधितं इदमनुमानम् । यथा शशमस्तकं विषाणवत् चतुष्पान्मस्तकत्वात्, गोमस्तकवत् इत्यनुमानमनुपलब्ध्या बाध्यते । **अथ** च जगत्कर्तुरनुमानसिद्धत्वात् अशरीरत्वाच्च अस्मदाद्युपलम्भयोग्यता नास्तीति योग्यानुपलम्भाभावान्नानुमानबाधः । **एवं तर्हि** शशविषाणस्यापि अनुमानसिद्धत्वात् परमाणुवत् अयोग्यानुपलम्भः इति न तत्रापि अनुमानबाधः । यदि विषाणजातीयस्य रूपवत्त्वमहत्त्वादिदर्शनात् तत्र प्रत्यक्षयोग्यता, अत्रापि तर्हि कर्तृजातीयस्य विग्रहवत्त्वेन प्रत्यक्षयोग्यत्वेन अस्मदाद्युपलम्भयोग्यत्वात् उपलभ्येत, न चोपलभ्यते । अतः अनुपलब्धिविरोधो दुर्विरहः । **किंच** अनुमानविरुद्धमिदं अनुमानम् । तथाहि, क्षित्यादिकं अकर्तृकं शरीरजन्यत्वात्, आकाशवत् । अकार्यत्वप्रयुक्तेयं व्याप्तिरिति चेन्न, उभयोरपि प्रयोजकत्वे विरोधाभावात् । तथा विवादाध्यासितं क्षेत्रज्ञकर्तृकं, चेतनकर्तृकत्वात् घटादिवत् । तथा क्षित्यादिकं अशरीरकर्तृकं न भवति,

कार्यत्वात् घटादिवत् । तथा क्षित्यादिकं नित्यप्रयत्नेच्छाज्ञानवत्कर्तृकं न भवति, कार्यत्वात् घटादिवत् । एवं प्रमेयत्वात् आकाशादिवदिति वा । तदुक्तम्, 'प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च । सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥' इति एतेषामनुमानानां दृष्टस्वलक्षणात्, अदृष्टस्वलक्षणात् भवदीयानुमानात् बलीयस्त्वम् । **किंच** प्रकरणसमश्चायं हेतुः । तथाहि, स्वपक्षसिद्धौ अपि एक एव हेतुः विरुद्धः प्रकरणसमः । विवादाध्यासितं सकर्तृकमिति वदतः अशरीरकर्तृकत्वमेव विवक्षितं, तत्र कार्यत्वात् इत्ययमेव हेतुः सशरीरकर्तृकत्वमपि साधयति । तथाहि, विवादाध्यासितं शरीरिकर्तृकं कार्यत्वात्, घटादिवत् इति । अतः असिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमाख्यानि न्यायशास्त्रसिद्धानि सर्वाणि दूषणानि भवदीयानुमानस्योत्पादितानि । **यत्तूक्तं,** अदृष्टादिकं चेतनाधिष्ठितं, अचेतनत्वात् वास्यादिवदिति, तदयुक्तं, अधिष्ठेयस्वरूपशक्तिकार्यज्ञः एवाधिष्ठाता । नहि अदृष्टादिविषयज्ञानं संभवति, शक्यज्ञानं च 'अचेतनं वास्यादि चेतनाधिष्ठितं दृष्टं' इति हि व्याप्तिः अशक्यज्ञानं चादृष्टं, अतो विशेषव्याप्तिबाधितत्वात् न अचेतनत्वसामान्यव्याप्तिः उन्मिषति । नापि पक्षधर्मतया अदृष्टज्ञानादिसंभवः, तन्मूलभूतस्य अधिष्ठातृत्वस्य वारितत्वात् । पूर्वोक्तान्यपि दूषणानि यथासंभवमत्रापि उद्भाव्यानि । **यत्पुनरेतदभिहितं,** किं विलक्षणमङ्गीकृत्य ज्ञानानित्यत्वादि साध्यते, अनङ्गीकृत्य वा ? अङ्गीकृत्य, ग्राहकप्रमाणबाधः । अनङ्गीकृत्य चेत् आश्रयासिद्धिरिति । **तदतिस्थवीयः,** पूर्वोक्तदूषणजातैः तद्ग्राहकप्रमाणस्य दूषितत्वात् केन चित् ज्ञानानित्यत्वादिबाधः । अतो नानुमानेन विलक्षणसिद्धिः । एवं चानुमानिकत्वमेव ईश्वरस्य निराकृतं, नेश्वरोऽपि निराकृतः । अत एव न प्रभाकरगुरुभिः ईश्वरनिरासः कृतः । तत्समर्थनं च वेदान्तमीमांसायां क्रियते इत्यभिप्रेतम् । अत एवाहुः आत्मवादान्ते 'मृदितकषायाणामेव एतत् कथनीयं, न कर्मसङ्गिनाम्' इति सर्वमुपपन्नम् । **प्रवि.** पृ. ७६-८३.

* **ईषाऽधिकरणम्** । २।३।५।१२-१५ । 'आलम्भनिर्वापन्यायः' इति बिन्दौ द्रष्टव्यम् । 'ईषामालभेत' इत्युक्तायामीषायां 'वायव्यं श्वेतमालभेत' इत्यनेन आलम्भानुवादेन वायुदेवताकत्वं श्वेतगुणश्च विधीयते, इति पूर्वः पक्षः । 'वायव्यं श्वेतमालभेत' इत्यनेन स्वतन्त्र एव पशुयागो विधीयते इति सिद्धान्तः । **के.** * **ईषाऽऽलम्भाधिकरणम्** । इदं दाक्षायणयज्ञाधिकरणस्य (२।३।४।५-११) अपवादः । **कौ.** २।३।१२ । ईषाऽऽलम्भाधिकरणस्यापवादः वत्सालम्भाधिकरणम् ( २।३।६।१६-१७ ) । आलम्भनिर्वापन्यायोऽयम् । **के.**

**ईहाऽर्थाश्चाभावात् सूक्तवाकवत् । १०।२। २१।५३ ॥**

दर्शपूर्णमासयोः सूक्तवाके 'अयं यजमान आयुराशास्ते सुप्रजास्त्वमाशास्ते, विश्वं प्रियमाशास्ते' इति ईहाऽर्थाः ईहिता अर्था कामाः श्रूयन्ते । अस्थियज्ञे प्रायणीयाऽऽदिषु सूक्तवाकवत् सूक्तवाके इत्यर्थः, ईहाऽर्थाः न कर्तव्याः, कामयितुः अभावात् । सूक्तवाके इति सूत्रयितव्ये सूक्तवाकवत् इति सूत्रितम् । अर्हे वतिर्द्रष्टव्यः । सूक्तवाकवत् सूक्तवाकार्हाः सूक्तवाके पठनयोग्या ईहार्थाः इति । ईहार्थाः, ईहा इच्छा, ईहाविषयाः अर्थाः ईहाऽर्थाः इति शाकपार्थिवादिसमासः । किंवा ईह्यन्ते इति ईहाः । कर्मणि घञ् । ते च ते अर्थाश्चेति कर्मधारयः ।

**स्युर्वाऽर्थवादत्वात् । ५४ ॥**

प्रायणीयाऽऽदिषु सूक्तवाके 'आयुराशास्ते सुप्रजास्त्वमाशास्ते विश्वं प्रियमाशास्ते' इति ये ईहाऽर्थाः चोदकेन प्राप्ताः, ते अस्थियज्ञेऽपि स्युः कर्तव्याः । अर्थवादत्वात्, अर्थवादरूपा एते ईहाऽर्थाः न विधयः । तस्मात् तेषां क्रियां चोदकः प्रापयति । ततश्च अस्थियज्ञे सूक्तवाके ईहाऽर्थाः कामाः कर्तव्याः इति पूर्वः पक्षः ।

**नेच्छाऽभिधानात् तदभावादितरस्मिन् । ५५ ॥**

ईहाऽर्थाः कामाः अस्थियज्ञे न कर्तव्याः इच्छाभिधानात् यजमानेच्छायाः अभिधानात् । अस्थियज्ञे च तदभावात् । तस्मात् ते ईहाऽर्थाः इतरस्मिन् जीवति यजमाने भविष्यन्ति नास्थिषु । तस्मात् अस्थियज्ञे

ईहाऽर्थाः कामा न कर्तव्या इति सिद्धान्तः । न चैते ईहाऽर्था अर्थवादाः किंतु विधय एव । **के.**

* ईहाऽर्थाश्चाभावात् सूक्तवाकवत् । अस्थियज्ञे कृत्वाचिन्तया उक्तेन **अनेन न्यायेन** सर्वस्वारेऽपि सर्वेषामेव सूक्तवाकोक्तफलानां अकाम्यमानत्वेन अवचने प्राप्ते ' जीवत्यवचनमायुराशिषस्तदर्थत्वात् ' ( १०।२। २५।६१ ) इति आयुर्मात्रे अपवादोक्तेः इतरसूक्तवाकफलस्य काम्यमानस्यैव फलत्वमिष्टं इति गम्यते । **बाल. पृ. १७५.** अयं न्यायः ' अस्थियज्ञस्य मृताधिकारित्वपक्षे ' इति प्रघट्टके द्रष्टव्यः ।

---

## उ

**उक्तं क्रियाऽभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् । ७।३।१।१ ॥**

सप्तमाध्यायस्य तृतीये पादे नाम्ना अतिदेशश्चिन्त्यते । ' मासमग्निहोत्रं जुहोति ' इति कुण्डपायिनामयने श्रूयते । अग्निहोत्रशब्दः क्रियाऽभिधानं क्रियाया अभिधानं कर्मनामधेयं इति उक्तं ' तत्प्रख्यं चान्यशास्त्रम् ' ( १।४।३।४ ) इत्यत्र । अथ अन्यत्र कुण्डपायिनामयने तच्छ्रुतौ अग्निहोत्रशब्दस्य श्रवणे सति स विधिप्रदेशः स्यात् । विधीयन्ते इति विधयो धर्माः । तेषां प्रदेशः अतिदेशः स्यात् । नित्याग्निहोत्रधर्माः कुण्डपायिनामयनगते अग्निहोत्रहोमे अग्निहोत्रनाम्ना अतिदिष्टाः स्युः । एतद्वत् तत् कर्तव्यमिति । इति सिद्धान्तः ।

**अपूर्वे वाऽपि भागित्वात् । २ ॥**

' वा अपि ' इति विपर्यासेन प्रयुङ्क्ते, अपिवा इत्यर्थः इति भाष्यम् ।

सिद्धान्तपक्षव्यावृत्तये अपिवाशब्दः । एवं नातिदिशति । किंतु अपूर्वे एते द्वे अपि कर्मणी नित्याग्निहोत्रं मासाग्निहोत्रं च । तत्र न कस्य चित् क्व चिदतिदेशः, भागित्वात् । भजतीति भागि । एतदपि कर्म अग्निहोत्रशब्दं भजति, तदपि भजति । द्वे अपि कर्मणी अग्निहोत्रशब्दभजनशीले । ततश्च नास्ति धर्मातिदेशः ।

**नाम्नस्त्वौत्पत्तिकत्वात् । ३ ॥**

पूर्वपक्षं तुशब्देन निरस्यन् तत्र हेतुमाह सिद्धान्ती । नाम्नः औत्पत्तिकत्वात् । नामिनाम्नोः संबन्धः औत्पत्तिकः अनादिः । तस्मान्नोभयार्थः अग्निहोत्रशब्दः । स नित्यं तावदाह । तस्माद्द्वयविधानार्थे च इतरत्रापि प्रयोग उपपद्यते । तस्मात् मासाग्निहोत्रहोमे धर्मातिदेशः स्यात् ।

**प्रत्यक्षाद् गुणसंयोगात् क्रियाऽभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात् । ४ ॥**

नित्याग्निहोत्रकर्मवाची अग्निहोत्रशब्दः, मासाग्निहोत्रवाची अग्निहोत्रशब्दस्तु अतिदेशार्थः इत्येव कुतो नियम्यते, वैपरीत्यं कुतो न स्यात् इति चेत् तत्राह सिद्धान्ती । नित्याग्निहोत्रवाची अग्निहोत्रशब्दः क्रियाऽभिधानं स्यात् । प्रत्यक्षात् गुणसंयोगात् । अत्र हि प्रत्यक्षविहिताः धर्माः सन्ति । इत्थं गां दोग्धि, इत्थं श्रपयति, चतुरुन्नयति स्रुवेण अग्निहोत्रहवण्यां, खादिरी अग्निहोत्रसमित् भवति, इत्थं जुहोति, एतस्मिन् काले जुहोति, इत्येवं प्रत्यक्षात् गुणसंयोगात् नित्यस्य कर्मणः तत् नामधेयम् । प्रत्यक्षात् गुणसंयोगात् क्रियाभिधानं स्यात् । दोहनादिक्रियायाः अभिधानं स्यात् धर्मातिदेशकम् । मासाग्निहोत्रे तु न के चिद्धर्मा उक्ताः । तदभावे तेषां धर्माणामभावे अप्रसिद्धं स्यात्, न प्रज्ञायेत कोऽर्थोऽस्य अग्निहोत्रशब्दस्येति । तस्मान्नित्याग्निहोत्रशब्दः एव अतिदेशकः, मासाग्निहोत्रशब्दस्तु धर्मप्रदेशः ।

अथवा । प्रत्यक्षो गुणसंयोगः नित्याग्निहोत्रस्य द्रव्यदेवतासंयोगः । तत्र ' दध्ना जुहोति ' ' पयसा जुहोति ' इति द्रव्यसंयोगः । ' यदग्नये च प्रजापतये च सायं जुहोति ' ' सूर्याय च प्रजापतये च प्रातः ' इति देवतासंयोगः । एतस्मात् प्रत्यक्षात् गुणसंयोगात् नित्याग्निहोत्रशब्दः क्रियाऽभिधानं कर्माभिधानं स्यात् । मासाग्निहोत्रे तु रूपं नास्ति, तदभावे अप्रसिद्धं स्यात्, न ज्ञायते कीदृशं तदग्निहोत्रं इति । तस्मात् कुण्डपायिनामयनगतः

अग्निहोत्रशब्दः धर्मप्रदेशः नित्याग्निहोत्राच्च धर्मातिदेशः इति सिद्धान्तः । **के.**

**उक्तं क्रियाभिधानं इति न्यायः** (७।१।१) । यथा षडहात् पृष्ठानामतिदेशः एवं सौमिकादवभृथात् इह ( वारुणप्राघासिकेऽवभृथे ) धर्मातिदेशः । कुतः ? अभिहितो न्यायः '**उक्तं . . . स्यात्**' इति । **भा.** ७।३।४।१२.

'**उक्तं तु शब्दपूर्वत्वम्**' ( १।१।८।२९ ) ( **इति न्यायः** ) । अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरंपरा अनादिः कल्प्येत, तथापि 'उक्तं तु शब्दपूर्वत्वं' इत्यस्य न्यायस्य स्थितत्वात् अनेकपुरुषकृतमपि सत् व्याकरणं वेदालम्बनत्वं न प्रतिपद्यते ( पूर्वपक्षे इदम् ) । **वा.** १।३।८।२४ पृ. २५७, * 'उक्तं तु शब्दपूर्वत्वम्' । न तु वेदवाक्येषु अभिप्रायान्तरं प्रमादो वा कस्य चिदस्ति । न च वक्ता, योऽन्यथात्वं कथयेत् सर्वपुरुषाणाम् । 'उक्तं तु' इति केवलश्रोतृत्वाश्रयणात् । ३।१।७।१३ पृ. ६९९.

**उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात्** । १।४।१।१ ॥

'उद्भिदा यजेत' 'बलभिदा यजेत' 'विश्वजिता यजेत' इत्यादि समाम्नायते । तत्र संदेहः किं उद्भिदादयो गुणविधयः आहोस्वित् कर्मनामधेयानि इति । अत्र **प्राभाकरेण** संगतिलोभात् इत्थमधिकरणमुपवर्णितम् । 'उद्भिदा यजेत' इत्यादिषु न तावत् मत्वर्थलक्षणया विशिष्टविधानं विधिगौरवप्रसङ्गात्, लक्षणादोषाच्च । नापि पृथगेव उभयविधानं वाक्यभेदापत्तेः । तत्र अन्यतरविधाने यदि यागो विधीयते तदा उपपदवैयर्थ्यम् । नापि अन्यत्र विहितं यागमनूद्य वेदे गुणविधिः संभवति, सर्वत्रैव उपपदश्रवणेन कर्मविधानासंभवात् ( कर्मविध्यसंभवात् ) । तेन अकामेनापि लौकिके एव मातृयागे ( गणयागे इति बहिर्लिखितम् । ) गुणविधिः इति वक्तव्यम् । तथा च सति प्रमाणान्तरसापेक्षत्वेन वेदस्यापि अप्रामाण्यं इति पूर्वः पक्षः । सिद्धान्तस्तु सामानाधिकरण्यबलात् यथाभाष्यं नामधेयत्वमेव इति । **तदयुक्तम्** । एकार्थविधिमपेक्ष्य अनेकार्थविधाने हि गौरवं दोषमावहति । एवं मुख्यार्थमपेक्ष्य लाक्षणिकत्वं, न तु अप्रामाण्यमपेक्ष्य । तदेतत् विधिगौरव– मत्वर्थलक्षणाभिया वेदाप्रामाण्याश्रयणे भोजनायासभयेन मरणपक्षाश्रयणमिव भाति । न च लौकिकगणयागाश्रयणे लक्षणातो विमोकः, वेदविहितदेवतायाः अलाभेन गणयागस्य मुख्ययागत्वाभावात् । भवतु वा यथाकथंचित् लौकिककर्माश्रयो गुणविधिः, तथापि नाप्रामाण्यम् । 'आयुष्यं प्राङ्मुखो भुङ्क्ते' इतिवत् लौकिककर्माश्रयणेऽपि प्रामाण्योपपत्तेः इति यत्किंचिदेतत् । इति यथावार्तिकमेव अधिकरणं प्रस्तूयते ।

प्रथमपादे हि समस्तस्यैव वेदस्य सकलेतरशङ्कानिरासेन धर्मं प्रति चोदनात्वेन प्रामाण्यं व्युत्पादितम् । तस्य अर्थवादमन्त्रात्मकस्य चोदनाऽनन्तर्गतत्वेन धर्मं प्रति उपयोगाभावात् अप्रामाण्यमाशङ्क्य द्वितीयपादे चोदनाऽन्तर्गतिप्रदर्शनेन प्रत्येकं उपयोगप्रतिपादनात् प्रामाण्यं व्यवस्थापितम् । तृतीयपादे तु स्मृत्याचारमूलभूतः तथाभूत एव वादोऽस्ति इति निरूपितम् । इदानीं विध्युद्देशगतत्वेन नामधेयानां सामान्येन निरूपितोऽपि धर्मं प्रति उपयोगविशेषः पूर्वं न प्रतिपादितः इति तदर्थं पुनः प्रस्तावना । अत्र यद्यपि भाष्ये पूर्वोत्तरसूत्राभ्यां एकमेवेदमधिकरणं प्रतिभाति, तथापि पूर्वसूत्रस्य पूर्वपक्ष्यभिमतार्थाप्रतिभानात् विचारद्वयोपयोगाच्च वार्तिककारपादैः अनुमितपूर्वपक्षं विचारद्वयमेव एतदाचरितम् । तत्र प्रथमं पूर्वपक्षिणोऽयमभिसंधिः । विध्युद्देशगतत्वेऽपि उद्भिदादिपदानां साध्यसाधनेतिकर्तव्यताऽनुपनायकत्वात् न तावत् विध्यन्तर्भावः । विधेयस्तुत्यभावाच्च नार्थवादत्वम् । विहितस्मारकत्वानुपलब्धेश्च न मन्त्रत्वम् । अतः त्रिविधवेदबहिर्भावेन अक्रियाऽर्थत्वात् आनर्थक्यमेव उद्भिदादिपदानां इति । तदुक्तं, 'त्र्यंशवेदप्रमाणत्वादुद्भिदादि ततोऽधिकम् । धर्मायानुपयुक्तार्थमानर्थक्यं ( 'युक्तं सदानर्थक्यं' इति तु मूले पाठः । वा. पृ. ३२१ ) प्रपद्यते ॥' **इत्येवं प्राप्ते, अभिधीयते** । भवेदेवं यद्येषां साधनांशनिवेशेन

क्रियाऽर्थत्वं न भवेत् । तथाहि अध्ययनविधिपरिगृहीतत्वात् वेदत्वं तावत् उद्भिदादिपदानां व्यवस्थितम् । वेदस्य च क्रियाऽर्थत्वं 'आम्नायस्य क्रियाऽर्थत्वात्' (१।२।१।१) इत्यत्रोक्तम् । तच्च क्रियाऽर्थत्वं यद्यपि उक्तप्रकारेण अर्थवादत्वेन मन्त्रत्वेन वा न संभवति, तथापि विध्युद्देशान्तर्गतत्वात् विध्यन्तर्भावः एवास्य प्रतीयते । स च यद्यपि अपुरुषार्थतया साध्यत्वेन न संभवति, अक्रियारूपत्वेन च नेतिकर्तव्यतात्वेन, तथापि पारिशेष्यात् साधनांशत्वादेव अस्य (साधनांशनिवेशेन अस्य इति बहिर्लिखितम्) क्रियाऽर्थत्वेन अर्थवत्त्वमिति । तदुक्तं 'सर्वस्य विधिभागत्वाद् वेदस्योक्तेन हेतुना । उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिध्यति ॥' (वा. पृ. ३२१) इति । **सूत्रं तु–** उक्तं समाम्नायैदमर्थ्यं, समाम्नायो वेदः, तस्य ऐदमर्थ्यं क्रियाऽर्थत्वमुक्तं, तस्मात् सर्वं उद्भिदादि, तदर्थं स्यात् क्रियाऽर्थं स्यादित्यर्थः । अत्र च एकस्यैवाधिकरणस्य उभयविचारात्मकत्वात् नात्र पृथक् प्रयोजनमिति । **तौता.**

**⌛ उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् । १।४।१।१ ॥**

'उद्भिदा यजेत' 'बलभिदा यजेत' इति समामनन्ति । तत्र उद्भिदादिशब्दाः किं गुणविधयः, किंवा कर्मनामधेयानि इति विचारे पूर्वपक्षमाह । समाम्नायस्य सर्वस्य वेदस्य ऐदमर्थ्यं उक्तं प्राक् । अयं अर्थः यस्य, सः इदमर्थः, तस्य भावः ऐदमर्थ्यम् । कश्चित् भागो विधिः, कश्चिदर्थवादः, कश्चिन्मन्त्रः इत्युक्तम् । तस्मात् एवंरूपत्वात् समाम्नायस्य सर्वं उद्भिदादिशब्दजातमपि तदर्थं विध्यर्थवादमन्त्रार्थं तदात्मकं तच्छेषो वा स्यात् । न का चित् चतुर्थी विधा इति पूर्वः पक्षः ।

एतौ उद्भिद् बलभिच्च यागौ दर्शपूर्णमासवत् एकेनैव यजमानेन कर्तव्यौ । तौ च कियता चित् कालेन व्यवहितौ कर्तव्यौ । तयोर्मध्यकाले च इषुः नाम का चित् इष्टिरपि विहिता । तदेतत् ताण्ड्ये लाट्यायनश्रौतसूत्रे च स्पष्टम् ।

**अपिवा नामधेयं स्याद्, यदुत्पत्तावपूर्वमविधायकत्वात् । २ ॥**

पूर्वपक्षं निरसितुं अपिवाशब्दः । नायं उद्भिदादिशब्दः विध्याद्यन्यतमरूपः, न वा गुणविधिः किंतु नामधेयं स्यात् । कस्य नामधेयं ? उच्यते । यदुत्पत्तौ यस्य उत्पत्तौ अपूर्वं भवति तस्य नामधेयं स्यात् । यागस्य अपूर्वं निष्पद्यते इति यागविशेषस्य इदं नामधेयं स्यात् 'उद्भिद्' इत्यादि पदम् । नानेन गुणो विधीयते अविधायकत्वात् नामधेयेन अनुष्ठेयार्थपरिच्छेदसंभवे गुणविधायकत्वासंभवात् । विध्यर्थवादमन्त्ररूपता तु नैव संभवति । तस्मान्नामधेयम् । **के.**

※ 'उक्तं समाम्नायैदमर्थ्यं' (१।४।१) नामधेयप्रामाण्यविचारसिद्धान्ताभिधानार्थमपि एतत् सूत्रं गुणविधिनामधेयविचारपूर्वपक्षेऽपि अध्याहारेण शक्यं योजयितुं इति प्रदर्शनाय भाष्यकृता द्वितीयविचारोपक्रमः कृतः । वार्तिककृता तु अध्याहाररहितस्य सूत्रस्य पूर्वपक्षाभिधानासामर्थ्यमुक्तम् । **सु.** पृ. ३९४.

※ **उक्तश्चानित्यसंयोगः** । १।२।४।४२ । यस्तु अनित्यसंयोगः (अनित्यैः पदार्थैः वेदस्य संयोगः) शङ्कितः सः 'परं तु श्रुतिसामान्यमात्रं' इत्यत्र सूत्रे प्रत्युक्तः । **सु.** पृ. ११२. ※ **उक्तस्य** पुनर्वचनमन्याय्यम् । उच्यते । साधोर्वचनं बहुशोऽप्युच्यमानं न्याय्यमेव । असाधोस्तु सकृदप्यन्याय्यम् । **भा.** ५।१।१।१ पृ. १२८८.

**⌛ उक्तार्थानामप्रयोगः इति न्यायः ।**

(धवखदिरौ इत्यादौ–) सैषा युगपदधिकरणवचनता दुःखा (बुद्धौ अनारोहात्) दुरुपपादा च । कथम् । एकैकशब्दस्य द्वे द्वे अभिधेये (धवत्वखदिरत्वरूपे) स्याताम् । यदि च स्यातां 'उक्तार्थानामप्रयोगः' इति (न्यायात्) धवस्याप्रयोगः स्यात् । (यस्य पदस्यार्थः एकेन पदेनोक्तः, तादृशानां पदानां तस्मिन्नेव वाक्ये पुनः प्रयोगो न भवति इति न्यायार्थः) । **टुप्.** ६।१।६।२२ पृ. १३७३. ※ उक्तार्थानामप्रयोगः इति अनित्योऽयं न्यायः । 'उक्तार्थानामपि प्रयोगो दृश्यते' तद्यथा– अपूपौ द्वावानय, ब्राह्मणौ द्वावानयेति 'प्रत्य-

मिवादेऽशूद्रे' ( ८।२।८३ ) इति सूत्रभाष्यात् । **साहस्री.** ४८३.

* न चैवं 'विक्लित्तिं पचति' इति प्रयोगापत्तिः, तस्या धातुनैवोक्ततया **उक्तार्थानामप्रयोगात्। रहस्य.** पृ. ८८.

* '**उक्थशा यज सोमस्य**' इति मन्त्रः यत्र केवलग्रहकरणकहोमस्तत्र । **संकर्ष.** २।३।१२.

* **उक्थ्यः** ( सोमयागविशेषः ) काम्यः अग्निष्टोमस्य संस्थाविशेषः । अयं अग्निष्टोमात् प्राक् नानुष्ठातुं शक्यते । **भा.** ५।३।१४।३९-४२. * उक्थ्यः द्वितीया संस्था । तत्र अग्निष्टोमस्तोत्रोत्तरं त्रीणि उक्थ्यस्तोत्राणि अधिकानि । एवं पञ्चदश स्तोत्राणि । **भाट्ट.** ३।६।१६. * 'उक्थ्यो वैरूपसामा' इति उक्थ्ये वैरूपस्य साम्नः पृष्ठस्तोत्रे निवेशः । **वि.** १०।६।६. * '**उक्थ्यानि** ऐन्द्राग्नानि' ( उक्थ्ययागः देवतया ऐन्द्राग्नः ) । **भा.** ३।६।७।१८, * **उक्थ्यानां** सौभरं ब्राह्मणाच्छंसि साम । तत्र हीष् ऊर्क् ऊ इति निधनानां वृष्टि-अन्नाद्य-स्वर्गफलार्थं क्रमेण व्यवस्था, न तु सौभरात् निधनानां पृथक् फलम् । २।२।१३।२८-२९. * **उक्थ्ये** आग्नेयश्च ऐन्द्राग्नश्चेति सवनीयं पशुद्वयम् । **वि.** ९।३।८. * उक्थ्ये यः अतिग्राह्यनिषेधः स विकृत्युक्थ्ये एव, न तु प्रकृत्युक्थ्ये । **संकर्ष.** ३।३।३. * उक्थ्ये राजन्यस्य स्तुतशस्त्रसहितः षोडशी उक्तः 'अप्युक्थ्ये' इति । तत्र च उक्थ्यसंस्थोपमर्दः एव संपद्यते । तथापि उक्थ्यस्तुतशस्त्राणां न लोपः । **भाट्ट.** १०।५।१२. * उक्थ्ये सवनीयपशुद्वयस्य अग्निगुप्रैषे 'प्रास्मा अग्निं भरत' इत्यत्र अस्मै इति पदस्य स्थाने आभ्यां इति नास्ति ऊहः । ( कृत्वाचिन्ता । वस्तुतस्तु सवनीयपशूनां अग्नीषोमीयविकृतित्वात् अस्त्येवोहः ) । **वि.** ९।३।८. * **उक्थ्यगतानां** स्तोत्राणां पञ्चोक्थ्यादिषु अतिदेशः । **भा.** ८।३।५। १०-११.

* **उक्थ्यग्रहाः** त्रयः ज्योतिष्टोमे सूर्यास्तात् प्रागेव गृह्यन्ते । यदि दैवात् उक्थ्यग्रहा अस्तमयादूर्ध्वमुत्कृष्येरन्, तदा तदुत्तरभावी षोडशिग्रहोऽपि उत्कृष्टव्यः । **वि.** ५।१।१८.

* **उक्थ्यपरभावस्य** ( षोडशिग्रहस्य ) केवलग्रहणाङ्गत्वेऽपि ग्रहणस्य संनिपातित्वेन आरादुपकारकस्तोत्रापेक्षया अन्तरङ्गत्वात् अन्तरङ्गधर्मत्वेन क्रमस्य बहिरङ्गस्तोत्रापेक्षया प्रबलत्वात् तदनुग्रहाय षोडश्युत्कर्ष आवश्यकः ज्योतिष्टोमे । **सोम.** ५।१।१८.

* **उक्थ्ययागाभ्यासोत्तरकालं** षोडशियागाभ्यासस्य कालः । अतस्तस्य कालेन अङ्गस्य कालो बाध्यते । ( षोडशियागाभ्यासकालेन अङ्गस्य स्तोत्रस्य कालो बाध्यते, अत उत्कृष्टव्यः षोडशी ) । **टुप्.** ५।१। १८।३५.

* **उक्थ्यरूपो** गुणो नित्याग्निष्टोमस्य संस्थां विकृत्य संस्थाऽन्तरत्वं गमयति । **वि.** ३।६।१६.

* **उक्थ्यस्तोत्रेण** प्रत्यहं समाप्यमानः द्वादशाहीयदशरात्रः दशकृत्वोऽभ्यस्यमानः शतोक्थ्यतामापद्यते । एवं पञ्चोक्थ्यः । **वि.** ८।३।४.

⌛ **उक्थ्यस्तोत्राणामुत्कर्षे षोडशिस्तोत्रस्यापि उत्कर्षः ॥**

**षोडशी चोक्थ्यसंयोगात्** । ५।१।१८।३५ ॥

**भाष्यम्**— ज्योतिष्टोमे श्रूयते षोडशिनं प्रकृत्य 'तं पराञ्चमुक्थ्येभ्यो गृह्णाति' इति । यदा दैवात् मानुषाद्वा प्रतिबन्धात् उक्थ्यानि उत्कृष्यन्ते, किं तदा षोडशी उत्कृष्टव्यो, नेति भवति संशयः । किं प्राप्तम् ? नोत्कृष्टव्यः । कुतः ? एवं स्तोत्रं स्वस्मिन् काले षोडशिनः कृतं भविष्यतीति 'समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति' इति । तस्मादनुत्कर्ष इति । **एवं प्राप्ते, ब्रूमः** । षोडशी च उत्कृष्टव्यः । कस्मात् ? उक्थ्यसंयोगात् । उक्थ्यसंयोगो हि षोडशिनो भवति 'तं पराञ्चमुक्थ्येभ्यो गृह्णाति' इति । तस्मात् उत्कृष्टव्यः षोडशी । यदुक्तं षोडशिनः स्वकाले न अवर्जनं भविष्यतीति, उच्यते । स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्येत । तस्मान्न स्तोत्रक्रमः अनुरोद्धव्यः । उभयं न शक्यमनुग्रहीतुम् । 'ग्रहं वा गृहीत्वा

चमसं वोन्नीय स्तोत्रमुपाकरोति ' इति श्रूयते । तस्मात् उत्क्रष्टव्यः षोडशी इति ।

**टुप्** — ( अधिकरणारम्भमाक्षिपति– ) **ननु** 'समयाध्युषिते स्तोत्रं ' इत्यनेन विशेषवचनेन षोडशिनो यः उक्थ्यपरभावः ( 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति ' इति सामान्यवचनेन प्राप्तः, ) स बाध्यते । **उच्यते** । उक्थ्यपरभावश्च समयाध्युषितत्वं च उभयमपि अनुग्रहीतुं शक्यते तस्मात् ( अविरोधात् ) सामान्यविशेषबाधो नास्ति । न च ' दैवान्मानुषाद्वा प्रतिबलात् ' इत्यस्मिन् ( पक्षे–पक्षाश्रयणे ) सामान्यविशेषबाधोऽस्ति । ( कथम् ? ) शास्त्रं हि दैवं मानुषं वा प्रतिबलमपेक्ष्य सामान्यविशेषबाधं नैव करोति ( ततश्च स्तोत्राङ्गस्य समयाध्युषितत्वस्य ग्रहग्रहणाङ्गस्य च उक्थ्यपरभावस्य संपादयितुमशक्यत्वात् अवश्यावहेये अन्यतरस्मिन् , कस्य बाधनं युक्तं इति युक्तो विचारः ) । ग्रहो यागस्य साक्षादुपकुर्वन् अन्तरङ्गः , संनिपत्योपकारित्वात् । स्तोत्रं पुनः यागस्य न साक्षादुपकरोति ( आरादुपकारित्वात् ) । अतः अनयोः ( कालयोः ) अन्तरङ्गस्य कालः अनुग्राह्यः ( क्रम एव कालशब्देनोक्तः ) । तस्मादाह ( भाष्यकारः– ) ' स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्यते ' इति । अथवा उक्थ्यैरुत्कृष्यमाणैः ( षोडशि– ) यागः एव अनेन प्रकारेण उत्कृष्यते , षोडशियागस्यापि उक्थ्यपरत्वात् । ग्रहेण ( च ) गृह्यमाणेन यागः प्रक्रान्तो भवति यथा अवदानेन । उक्थ्ययागाभ्यासोत्तरकालं षोडशियागाभ्यासकालः । अतः तत्कालेन ( ग्रहयागाभ्यासकालेन ) अङ्गकालः ( स्तोत्रस्य कालः ) बाध्यते । ( तस्मात् उत्क्रष्टव्यः षोडशी इति ) ।

**शा**— ( उक्थ्यग्रहाणामुत्कर्षे षोडशी उत्कृष्यते, न वेति संशये ) **' तत्र नोत्कर्षणं युक्तं स्तोत्रकालोपसंग्रहात् । उत्कर्षपक्षे हीयेत स्वकालात् स्तोत्रमस्य हि ॥ ' ' क्रमोऽपि तु प्रधानाङ्गभूतत्वाद् बलवानसौ । कालः स्तोत्राङ्गभूतत्वाद् दुर्बलो बाधमर्हति ॥ '**

**सोम**— कालतः पदार्थबाधे क्रमबाधः कैमुत्यात् सिद्धः इति प्रत्यवस्थानात् **संगतिः** । उक्थ्यपरभावस्य केवलग्रहणाङ्गत्वेऽपि ग्रहणस्य संनिपातित्वेन आरादुपकारकस्तोत्रापेक्षया अन्तरङ्गत्वात् अन्तरङ्गधर्मत्वेन क्रमस्य बहिरङ्गस्तोत्रकालापेक्षया प्रबलत्वात् तदनुग्रहाय उत्कर्षः आवश्यकः ।

**वि** — ' उक्थ्योत्कर्षे षोडशी नोत्कृष्येतोत्कृष्यतेऽथवा ।, स्तोत्रकालाय नोत्कर्षः पूर्ववत् षोडशिग्रहे ॥, ग्रहं पराञ्चमुक्थेभ्य इत्यङ्गाङ्गित्वभासनात् । सस्तोत्रे ग्रह उत्कृष्टे स्तोत्रकालः प्रबाध्यताम् ॥ '

**भाट्ट**— दैवान्मानुषाद्वाऽपराधादेव उक्थ्येषूत्कृष्टेषु षोडशिस्तोत्रमुत्कृष्यते, न वेति चिन्तायां, ' समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति ' इति वचनविहितसमयाध्युषितकालबाधे प्रमाणाभावादनुत्कर्षः । न च ' तं पराञ्चमुक्थ्येभ्यो गृह्णाति षोडशिनम् ' इति वचनेन उक्थ्यपरभावस्य विहितत्वात् स्तोत्रस्य च ' ग्रहं वा गृहीत्वा ' इति वचनेन ग्रहणोत्तरकालत्वात् तदनुरोधेन समयाध्युषितकालबाधः, ' तं पराञ्चं ' इत्यनेन षोडशियागाभ्यासस्यैव उक्थ्यपरभावविधानेन ग्रहणस्य स्तोत्रपूर्वकालत्वेऽपि बाधकाभावात् । अत एव तत्र गृह्णातिनिर्वपतिवत् यागपर एव । अस्तु वा ग्रहणपरः, तथापि तैत्तिरीयशाखायां षोडशिनः सवनत्रयेऽपि आम्नानात् सवनान्तरविषयं ' तं पराञ्चं ' इति वाक्यम् । अस्तु वा एतदपि सर्वविषयं, तथापि ' ग्रहं वा ' इत्यस्य सामान्यविषयत्वात् उक्थ्योत्तरकालग्रहणेऽपि समयाध्युषिते स्तोत्रकरणे न कश्चिद्विरोधः । **यदि** तु सामान्यविशेषरूपबाधस्य यथाऽवस्थितशास्त्रार्थविषयत्वेन दैवाद्यपराधे अप्रवृत्तेः सर्वपदार्थानां तुल्यबलत्वमुच्येत, **तथापि** उक्थ्यपरभावस्य क्रमत्वेन उपादेयत्वात् पूर्वाधिकरणन्यायेन बाधोपपत्तेः समयाध्युषितकालानुग्रहो न्याय्य एव । न च कालस्य अङ्गाङ्गत्वेन प्रधानाङ्गक्रमापेक्षया दौर्बल्यं, उभयोरपि अङ्गाङ्गत्वात् । न च ग्रहणस्यात्र अवदानवत् प्रदानोपक्रमता , तद्वदिह एकपदार्थत्वाभावात् । **इति प्राप्ते,** ग्रहणस्य षोडशियागाभ्यासकल्पकत्वेन अन्तरङ्गत्वात् तत्क्रमस्य प्राबल्यम् । वस्तुतस्तु ' तं पराञ्चं '

इत्यस्यापि कालपरत्वमेव इत्यन्तरङ्गतद्बाधः अन्याय्य एव। न च ग्रहणस्य उत्तरकालं करणेऽपि स्तोत्रस्यैव कालानुग्रहः शङ्क्यः, तथात्वे स्तोत्रे ग्रहणोत्तरकालत्वस्य प्रधानप्रत्यासत्तेश्च बाधप्रसङ्गेन एकस्यैवास्य समयाध्युषितकालबाधस्य न्याय्यत्वात्। अतस्तस्याप्युत्कर्षः इति सिद्धम्।

**मण्डन**— 'षोडश्युत्कर्ष इष्यते।' २०.

**शंकर**— 'षोडश्युत्कर्षकं चोक्थ्यम्।' २२.

⌛ **उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्, सति हि संस्थान्यत्वम्। १०।५।१३।४९ ॥**

षोडशी ग्रहः प्रकृतौ गृह्यमाणः अस्तुतशस्त्रः स्यात् स्तोत्रशस्त्ररहितः। उक्थ्याग्निष्टोमसंयोगात् 'अग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युक्थ्ये ग्राह्यः' इति अग्निष्टोमसंस्थे उक्थ्यसंस्थे च क्रतौ षोडशी ग्रहीतव्य इत्युच्यते। सति हि स्तुतशस्त्रे षोडशिना शस्त्रेण क्रतुः संतिष्ठेत, तथा च संस्थाऽन्यत्वं स्यात्, न उक्थ्यसंस्थत्वं अग्निष्टोमसंस्थत्वं वा। येन स्तोत्रशस्त्रेण क्रतुः समाप्यते तत्संस्थः स क्रतुर्भवति। तस्मात् उक्थ्यादौ गृह्यमाणः षोडशी अस्तुतशस्त्रः स्यात् इति पूर्वः पक्षः।

**सस्तुतशस्त्रो वा, तदङ्गत्वात्। ५० ॥**

षोडशी ग्रहः अस्तुतशस्त्रः इति पूर्वपक्षं वाशब्दो व्यावर्तयति। षोडशी सस्तुतशस्त्रः स्तोत्रशस्त्राभ्यां विशिष्टः एव स्यात्। तदङ्गत्वात् स्तोत्रशस्त्राङ्गकत्वात् यागस्य। 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति ग्रहग्रहणनिमित्ते स्तोत्रशस्त्रे। तस्मात् सस्तुतशस्त्रः षोडशी स्यात्। इति सिद्धान्तः।

**लिङ्गदर्शनाच्च। ५१ ॥**

षोडशी ग्रहः सस्तुतशस्त्रः इत्यत्र लिङ्गस्य दर्शनं भवति 'ऊर्ध्वा वा अन्ये यज्ञक्रतवः संतिष्ठन्ते तिर्यञ्चोऽन्ये, ये होतारमभिसंतिष्ठन्ते त ऊर्ध्वाः, ये वाऽच्छावाकं ते तिर्यञ्चः'। इति। केचित् क्रतवः होतृशस्त्रकयजिना समाप्यन्ते अग्निष्टोमसंस्थाः। अन्ये तु अच्छावाकशस्त्रकयजिना समाप्यन्ते उक्थ्यादयः। यदि तु षोडशी अस्तुतशस्त्रः स्यात् तदा अनेन समाप्यमानः क्रतुः अध्वर्युमभिसंतिष्ठेत। द्विविधा एव तु यज्ञक्रतवः। अस्मात् लिङ्गदर्शनात् षोडशी सस्तुतशस्त्रः स्यात्।

**वचनात् संस्थाऽन्यत्वम्। ५२ ॥**

'अग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युक्थ्ये ग्राह्यः' इति वचनात् सस्तुतशस्त्रषोडशिग्रहवतः क्रतोः अग्निष्टोमात् उक्थ्याच्च संस्थाऽन्यत्वं स्यात् नाम, तदिष्टमेव। तस्मात् सस्तुतशस्त्रः षोडशी। इति सिद्धान्तः। **के.**

* **उक्थ्यादयः** सोमविकृतयो दीर्घसोमाः ग्रहाधिक्यात्। दीर्घसोमे च अधिषवणफलकयोः संतर्दनं कर्तव्यम्। वि. ३।३।१६. * **उक्थ्यादीनां** फले विधीयमानानां ज्योतिष्टोममाश्रयतां वाक्यान्तरवशेन अन्ते निवेशः। सु. पृ. ८५८. * **उक्थ्यादौ** अग्निचयनस्य अतिग्राह्याख्यग्रहाणां चातिदेशोऽस्ति। वि. १०।८।११, * उक्थ्यादौ पञ्चोक्थ्यादौ एकाहज्योतिष्टोमादेव स्तोत्राणि अतिदेष्टव्यानि, न द्वादशाहात्। ८।३।५.

⌛ **उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां वैरूपादिसाम्नां होतुः पृष्ठे एव निवेशः, न तु कृत्स्ने क्रतौ ॥**

**वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात्। १०।६।६।१५ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः, तत्रोक्थ्यः षोडशी च संस्थाविशेषः। तत्र श्रूयते। 'उक्थ्यो वैरूपसामा' 'एकविंशः षोडशी वैराजसामा' इति। तत्रायमर्थः सांशयिकः किं वैरूपं वैराजं च कृत्स्ने क्रतौ निविशेते, उत पृष्ठकार्ये इति। किं प्राप्तम्? कृत्स्ने क्रतौ वैरूपमेकं साम स्यात्, षोडशिनि वैराजम्। कुतः? कृत्स्नक्रतुसंयोगात्। अविशेषेण कृत्स्ने क्रतौ वैरूपसाम विधीयते, वैराजं च। तन्न विशेषे अवस्थातुमर्हति पृष्ठकार्ये। त्रिवृद्वत्। यथा त्रिवृदग्निष्टोमः। त्रिवृत्स्तोमः कृत्स्ने क्रतौ भवति, एवमिमे अपि सामनी कृत्स्नयोः क्रत्वोर्भवेताम्। यथा वा धेनुः, 'अथैष भूवैश्वदेवः, त्रिवृदेव सर्वः। तस्य विश्ववत्यः स्तोत्रियाः, धेनुर्दक्षिणा' इति कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये धेनुः, संयोगात्। एवमिमे अपि सामनी भवितुमर्हतः।

**पृष्ठार्थे वा, प्रकृतिलिङ्गसंयोगात्। १६ ॥**

**भाष्यम्**—पृष्ठकार्ये वा, सामनी विधीयेते। कथम्? वैरूपसामा वैराजसामेति सामशब्देन प्रकृतिलिङ्गेन

बहुव्रीहिरवगम्यते । न वैरूपं साम विधीयते वैराजं च । किं तर्हि ? वैरूपसामता वैराजसामता च क्रतोः । क्रतुसंयोगो हि भवति, न स्तोत्रसंयोगः । एकस्मिन्नपि च स्तोत्रे वैरूपे वैराजे च, भवति वैरूपसामता वैराजसामता च क्रतोः । कुतः ? यदि हि स्तोत्रे साम विधीयते, स्तोत्राविशेषात् सर्वस्तोत्रेषु भवेत् । न त्वेतदेवम् । तस्मादेकस्मिन् स्तोत्रे वैरूपे वैराजे च, भवति वैरूपसामता वैराजसामता चेति । यदा एकस्मिन्, तदा पृष्ठकार्ये स्याताम् । वैरूपसामता हि गुणो विधीयमानो वैराजसामता च एवंजातीयकस्य गुणस्य कार्ये भवितुमर्हति । प्रकृतौ च बृहत्सामता रथंतरसामता चैवंजातीयका । तदिह प्रकृतिलिङ्गसंयोगेन वैरूपसामतया वैराजसामतया च पृष्ठकार्ये वृत्तिरवगम्यते, 'यस्य लिङ्गमर्थसंयोगादभिधानवत्' इत्यनेन न्यायेन (८।१।२।२)। तस्मादिमे सामनी पृष्ठकार्ये निविशेयातामिति ।

**त्रिवृद्वदिति चेत् । १७ ॥**

**भाष्यम्**— इति चेत्, इति यदुक्तं यथा 'त्रिवृदग्निष्टोमः' इति त्रिवृत्त्वं कृत्स्ने क्रतौ निविशते, एवमिहापीति । तत् परिहरणीयम् ।

**न, प्रकृतावकृत्स्नसंयोगात् । १८ ॥**

**भाष्यम्**— नैतदेवम् । इह वैरूपवैराजयोः प्रकृतिलिङ्गेन अकृत्स्नसंयोगो गम्यते । नैवं त्रिवृति कश्चित् प्रकृतिलिङ्गेन संयोगोऽस्ति, येन अकृत्स्नता अवगम्येत । ततो विशेषस्त्रिवृतः सामभ्याम् ।

**विधित्वान्नेति चेत् । १९ ॥**

**भाष्यम्**— इति चेत्, इति यदुक्तं, यथा धेनुविधिर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये भवति, एवं सामनी अपीति ।

**स्याद्विशये तन्न्यायत्वात् कर्माविभागात् । २० ॥**

**भाष्यम्**— स्यात् धेनुर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तयित्री । सा हि कृत्स्नं क्रतुदाक्षिण्यं निवर्तयेत्, किंवा नेत्येतस्मिन् संशये, एवं न्याय्यं, कृत्स्नं निवर्तयेत् । कुतः ? कर्माविभागात् । अविभक्तं हि दक्षिणाकार्यं कार्त्स्न्येन वा दाक्षिण्येन क्रियेत, धेन्वा वेति । दक्षिणाकार्ये हि धेनुः श्रूयते, 'धेनुर्दक्षिणा' इति । अतस्तत्र युक्तम् । इह प्रकृतिलिङ्गसंयोगः इत्यनदिष्टो हेतुः । तस्मादेतदपि विषमम् ।

**प्रकृतेश्चाविकारात् । २१ ॥**

**भाष्यम्**— इतश्च न कृत्स्नक्रतुसंयोगः । कुतः ? प्रकृतेरविकारात् । एवं बहु प्राकृतमविकृतं भविष्यति । तत्र चोदकोऽनुग्रहीष्यते । अतोऽपि न कृत्स्नक्रतुसंयोगः साम्नोरिति ।

**सोम**— पूर्वत्र (विश्वजिति) यथा पृष्ठस्तोत्रातिरिक्तेष्वपि स्तोत्रेषु चोदकप्राप्तसामबाधः तथेहापि इत्युत्थितेः (दृष्टान्त-) **संगतिः** । इह स्तोत्रसंबन्धो न श्रूयते किंतु साममात्रं क्रत्वङ्गतया श्रूयते । तस्य च द्वारजिज्ञासायां यावदविशेषात् सर्वस्तोत्राणि द्वारतया कल्प्यन्ते, ततः प्रागेव स्ववाक्यगतेन सामान्तबहुव्रीहिलक्षणप्रकृतिलिङ्गेनोपस्थितायाः पृष्ठस्तुतेरेव द्वारत्वकल्पनात् न सर्वान्वयः ।

**वि**— 'कार्त्स्न्याद् वैरूपवैराजे उक्थ्यषोडशिनोरुत । पृष्ठे स्यात्, क्रतुसंयोगादाद्यो, ऽन्त्यः पृष्ठलिङ्गतः ॥'

**भाट्ट**— विकृतिविशेषे 'उक्थ्यो वैरूपसामा' 'एकविंशः षोडशी वैराजसामा' इत्यादिना विहितानां वैरूपवैराजादिसाम्नां कस्मिन् स्तोत्रे निवेश इति चिन्तायां, वैरूपादीनामन्यपदार्थेन क्रतुना संबन्धावगमेऽपि साक्षात्क्रतोः सामसाध्यत्वायोगात् अवश्यं स्तोत्रद्वारकत्वावगतेर्विनिगमनाविरहात् प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वाच्च सर्वस्तोत्रे एव निवेशः । यथा 'आग्नेया ग्रहा भवन्ति' इत्यत्र सर्वप्राकृतग्रहेष्वग्निः, यथा वा अत्रैव एकविंशस्तोमकता सर्वस्तोत्रेषु । **न च** प्रकृतौ 'यदि रथंतरसामा' 'यदि बृहत्सामा' इत्यादौ बृहद्रथंतरयोरेव बहुव्रीह्यन्तत्वनिर्देशात् अत्रापि वैरूपादीनां बहुव्रीह्यन्तत्वनिर्देशसादृश्येन बृहद्रथंतरकार्यमाहेन्द्रस्तोत्रसाधनत्वावगतिरिति **वाच्यम्** । अविशेषप्रवृत्तवचनेन सर्वस्तोत्रसाधनत्वावगतौ सादृश्यमात्रेण तत्संकोचे प्रमाणाभावात् । इतरथा 'धेनुर्दक्षिणा' इत्यत्रापि गोत्वसादृश्येन तन्मात्रकार्यापत्तिप्रसङ्गः । अस्तु वा कौत्सादिवत् समसंख्यप्राकृतसामबाधेन 'अत्र ह्येवावपन्ति' इति वचनेन पवमानस्तोत्रयोरेव निवेशः । सर्वथा न माहेन्द्रस्तोत्रे

एव निवेशः। इति प्राप्ते, 'कौत्सं भवति' इत्यादिवत् 'वैरूपं भवति' 'उक्थ्यो वैरूपवान्' इत्येवंविधनिर्देशमकृत्वा बहुव्रीहिनिर्देशः स्ववैयर्थ्यपरिहारार्थं वैरूपादेर्बहुव्रीहिपदनिर्दिष्टबृहद्रथंतरकार्यार्थत्वं गमयति। शक्यते चाऽत्रापि कौत्सादिन्यायेनैव (१०।४।९) समसंख्यप्राकृतसामबाधकतया यत्किञ्चित्स्तोत्रे तन्निवेशप्रसक्तौ सादृश्यविशेषेण तन्नियमः। 'अत्र ह्येवावपन्ति' इत्यस्य सामान्यवाक्यत्वात्। नहि अत्र प्राकृतस्तोत्रानुवादेन वैरूपादिविधानं, येन 'आग्नेया ग्रहाः' इतिवत् सर्वस्तोत्रेषु निवेशः स्यात्। अपितु क्रतुसंबन्धित्वेन श्रुतस्य आनर्थक्यतदङ्गन्यायेन (३।१।९) स्तोत्रसंबन्धः। न च आनर्थक्यतदङ्गन्यायेन अवतीर्णस्य सर्वविषयत्वं, तथात्वे याज्यादावपि चातुःस्वर्यबाधेन वैरू(प्या)पत्तेः। अतो यत्रकुत्रचिन्निवेशे प्राप्ते सादृश्येन तन्नियमः। अस्तु वा त्रिवृदादिस्तोमवत् तत्रापि सर्वविषयत्वं, तथापि बहुव्रीहिनिर्देशवैयर्थ्यपरिहारार्थमेव माहेन्द्रस्तोत्रविषयत्वोपपत्तिः। अत एव प्रकृतौ 'पृष्ठैः स्तुवते' इति वाक्येन पृष्ठबहुत्वविधिपक्षेऽपि कण्वरथंतरस्य न सर्वपृष्ठेषु निवेशः। किंतु 'बृहत्पृष्ठं भवति' 'रथंतरं पृष्ठं भवति' इति वाक्यद्वये द्वयोरेव साम्नोः, पृष्ठपदसामानाधिकरण्यस्य अन्यथा-वैयर्थ्यापत्तेः तत्परिहारार्थं पृष्ठपदसामानाधिकरण्यनिर्दिष्टानां कण्वरथंतरादीनामपि तत्कार्यापन्नत्वप्रतीतेर्माहेन्द्रस्तोत्रे एव निवेशः। नहि 'बृहत्पृष्ठं भवति' इत्यादौ स्तोत्रानुवादेन सामविधिः सामविशिष्टस्तोत्रविधिर्वा संभवति, वामदेव्यादिसाम्नामिव बृहद्रथंतरयोरपि पाठादेव प्राप्तेः। स्तोत्रस्य तत्साध्यस्तोत्राणामिव प्रमाणान्तरेणैव प्राप्तेश्च। अतोऽस्य वैयर्थ्यपरिहारार्थं कण्वरथंतरादीनां स्वकार्यकारित्वमित्युक्तं चित्राऽधिकरणकौस्तुभे। एवमत्रापि वैरूपादीनां बहुव्रीहिनिर्देशवैयर्थ्यपरिहारार्थमेव माहेन्द्रस्तोत्रे निवेशः।

**मण्डन**— 'वैरूपं पृष्ठसाधनम्।'

**शंकर**— 'वैरूपं पृष्ठ एव च।'

* **उक्थ्यादिसंस्थासु** अग्निष्टोमसंस्थैव एका प्रवर्तते। यत्र च उक्थ्यादिविशेषचोदना तत्रैव केवलं तद्धर्मप्राप्तिः। **वा.** ३।७।१६।४७, * **उक्थ्यादिसंस्थानिमित्तं** उक्थ्यग्रहस्तोत्रशस्त्रादि अप्राकृतं, तत्र यत् इतरग्रहस्तोत्रशस्त्रधर्मातिदेशेन किं चित् गुणकामगतं प्राप्नोति, तन्न भवति। ३।६।१६।४७.

* **उक्षवाक्ये** कर्मशेषप्रतिषेधविधानेन प्रतिसंवत्सरं भिन्नानामेवोक्ष्णां आनयनं अहीने पञ्चशारदीये। **भा.** ११।२।१३।५६.

* **उक्षादिशब्दानां** वयोवचनत्वम्। **वा.** ३।१।६।१२ पृ. ६७९.

* **उखा** पिठरः। तामुखां 'युञ्जानः प्रथमं मनः' इत्यादिप्रपाठकाम्नातैर्मन्त्रैः संपाद्य तस्यामग्निं निधाय षडुद्यामे द्वादशोद्यामे वा शिक्ये तामुखामवस्थाप्य तच्छिक्यं (सुवर्णरुक्मान्तरिते) स्वकण्ठे बद्ध्वा तमुख्यमग्निं संवत्सरं भृत्वा पश्चादिष्टकाभिरग्निश्चेतव्यः। **वि.** ४।४।६. * उखा सांनाय्यस्य पात्रम्। (अग्निहोत्रपयःश्रपणार्थं च साग्निचित्ये क्रतौ च उख्याग्निधारणार्थं उखा भवति)। **भा.** ८।२।२।१४. * **उखां** निष्पाद्य तस्यामग्निर्ध्रियते। स नित्योऽग्निः अग्निचयने। **वि.** १०।४।७.

**उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात्। १२।४।७।१७॥**

अग्निचयने संवत्सरं उख्योऽग्निर्धार्यते। उखायां मृन्मय्यां चतुरस्रायां महत्यां अङ्गारधानिकायां भवः अग्निः उख्यः। तत्रैव भ्राष्ट्रोत्पन्नादिरपि अग्निः अन्नाद्यादिफलार्थमुक्तः। तयोः काम्यनित्ययोः अग्न्योः समुच्चयः उखायां स्यात्। ननु काम्यो नित्यस्य बाधकः स्यात्। न। नियोगे नियोजने अवधाने अयं कामः श्रूयते 'आहृत्य अवदध्यात् ब्रह्मवर्चसकामस्य' इति। तथा च अवधानमात्रेण कामसिद्धिः, न तु होमेन। होमस्तु उख्ये नित्ये एव। तथा च कार्यभेदात् न बाध्यबाधकता। उखायां संनिधानाच्च अग्न्योः समुच्चयः। इति पूर्वः पक्षः।

**असति चासंस्कृतेषु कर्म स्यात् । १८ ॥**

पूर्वपक्षी एवाह । यदि च काम्येन नित्यस्याग्नेर्बाधः स्यात्, काम्ये अवस्थापिते नित्यो नैव स्यात् । असति च नित्ये असंस्कृतेषु आधानादिसंस्काररहितेषु भ्राष्ट्रादिष्वेव कर्म होमः स्यात् । तथा च आधानस्य सर्वार्थता बाध्येत । तस्मात् काम्यनित्ययोः समुच्चयः, न बाधः ।

**तस्य च देवताऽर्थत्वात् । १९ ॥**

तस्य बुद्धिसंनिहितस्य अग्न्यन्वाधानस्य देवताऽर्थत्वात् देवतापरिग्रहार्थत्वात् नित्याभावे देवतापरिग्रहो न स्यात् । तस्मात् काम्यनित्ययोः समुच्चयः, न काम्येन नित्यस्य बाधः । इति पूर्वः पक्षः ।

**विकारो वा, तदुक्तहेतु । २० ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । विकारो बाधः स्यात् काम्येन भ्राष्ट्रादिना नित्यस्याग्नेः । तत् एतत् उक्तहेतु । उक्तो हेतुर्यस्य तत् उक्तहेतु 'नैमित्तिकं तु प्रकृतौ तद्विकारः' (३।६।३।१०) इति हेतुरुक्तः । नैमित्तिकं नित्यस्य बाधकं इति तत्रोक्तम् । तस्मात् भ्राष्ट्रादिना काम्येन नित्यस्य उख्यस्य बाधः, न समुच्चयः इति सिद्धान्तः ।

**वचनादसंस्कृतेषु कर्म स्यात् । २१ ॥**

यदुक्तं पूर्वपक्षिणा 'असति चासंस्कृतेषु कर्म स्यात्' (सू. १८) इति तत्राह । वचनात् वचनबलात् असंस्कृतेष्वपि संस्काररहितेष्वपि भ्राष्ट्रादिषु अग्निषु कर्म होमः स्यात् ।

**संसर्गे चापि दोषः स्यात् । २२ ॥**

यदुक्तं 'उखायां काम्यनित्यसमुच्चयः' (सू. १७) इति तत्राह । वृक्षाग्राज्ज्वलतः आहृतेन काम्येनाग्निना समुच्चये सति प्रादान्येन अग्निना वैहारिकस्य अग्नेः संसर्गः स्यात् । अपि च संसर्गे दोषः स्यात् । तत्र च अग्नये शुचये अष्टाकपालः कर्तव्यः स्यात् । तस्मात् काम्येन नित्यस्याग्नेः न समुच्चयः किंतु बाधः ।

**वचनादिति चेत् । २३ ॥**

एकस्यामेव उखायां नित्यकाम्ययोर्धारणविधायकात् वचनात् अग्निसंसर्गो न दोषाय इति चेत् पूर्वपक्षी ब्रूयात् ।

**तथेतरस्मिन् । २४ ॥**

तत्र ब्रूते सिद्धान्ती । वचनबलात् अग्निसंसर्गो न दोषाय, तथा वचनबलादेव इतरस्मिन्नपि पक्षे असंस्कृतेषु भ्राष्ट्रादिष्वग्निषु होमोऽपि स्यात् । तस्मात् काम्येनाग्निना नित्यस्य उख्यस्य बाध एव, न समुच्चयः ।

**उत्सर्गेऽपि कर्मणः कृतत्वात् । २५ ॥**

यदुक्तं 'तस्य च देवताऽर्थत्वात्' इति (सू. १९)। तत्रोच्यते काम्येन बाधात् नित्यस्याग्नेः उत्सर्गेऽपि अग्निग्रहणरूपस्य कर्मणः कृतत्वात् तावता देवतापरिग्रहः सिद्धो भवति । वचनाच्च अग्न्यन्तरे यजते इति न दोषः । तस्मात् काम्येनाग्निना नित्यस्योख्याग्नेर्बाधः इति सिद्धान्तः । **के.**

* **उख्योऽग्निः** आहवनीयस्थानापन्नः । **भा.** १२।४।१०।३१, * उख्योऽग्निर्नित्यः अग्निचयने । **वि.** १२।४।७. * **उख्यस्याग्नेः** नित्यं धारणं न भवति । **भा.** १२।४।१०।३०–३१, * उख्यस्याग्नेः नित्यस्य चयने काम्येन भ्राष्ट्राद्यग्निना बाधः । १२।४।७।१७–२५.

⌛ उख्यस्याग्नेः **प्रत्यक्षमेव नयनात् न समारोपः ॥**

अग्नेः प्रत्यक्षनयनस्य समारोपविधिनैव परिसंख्यातत्वात् उख्याग्नेरपि समारोपे **प्राप्ते**, उखासंयोगस्यैव उख्यपदप्रवृत्तिनिमित्तत्वेन समाख्याविरोधात् शकटे पात्रस्थापनादिविधानाच्च न तत्समारोपः । **संकर्ष.** ३।२।३३.

* उख्यस्याग्नेः संवत्सरं भरणाभावे वैश्वानरेष्टिर्नैमित्तिकी, न नित्या । **भा.** ४।४।६।१२–१३. * **उख्याग्निभस्मनः** मृदश्च संसर्गेण चयनेष्टकानां निर्माणं दीक्षोत्तरकालमेव, न याथाकाम्येन दीक्षातः पूर्वं प्राजापत्यपशोः परतोऽपि निर्माणकालः । **संकर्ष.** २।१।२८–२९.

* **उच्चरतिः** 'समुच्चरितधूमं हर्म्यतलं' इतिवत् निश्चयापरपर्यायाभिव्यक्तिवाची । **सु.** पृ. ८२२.

* **उच्चरितशब्दस्य** पदिचर्योर्गमिसमानार्थत्वेन ज्ञानार्थत्वात् उच्छब्दस्य चोत्कर्षार्थत्वेन निश्चयरूपज्ञानोत्कर्षवाचित्वात् उत्पन्नोच्चरितशब्दयोः अवधारितार्थत्वाविशेषः । **सु.** पृ. ८२२.

* **उच्चारणं** त्यागादौ विधिगतस्यैव देवताशब्दस्य। भा. १०।४।१२।२३-२४.

* **उच्चावचध्वनिः** दीक्षणीयादौ अवान्तरापूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः। वि. ९।१।२ वर्णकं २.

* **उच्चैः स्वरः**। यत् ऋग्वेदसामवेदाभ्यां किं चित् काम्यं नैमित्तिकं वा चोद्यते, तत् सर्वमुच्चैः कर्तव्यम्। तथा 'तं ( प्रवर्ग्याङ्गं महावीरं ) भिन्नमभिमृशेत् यद्दते चिदभिश्रिषः' इत्यादि। तथा अवभृथसामादीनामपि उच्चैस्त्वसिद्धिः। प्रवर्ग्यसाम्नां 'उच्चैः प्रवर्ग्येण' इत्येवमुच्चैस्त्वम्। वा. ३।३।२।९ पृ. ८१३.

* '**उच्चैर्ऋचा**' इत्याद्युपसंहारस्थमृगादिपदं वेदोपक्रमेण बाध्यते। बाल. पृ. १४०, * 'उच्चैर्ऋचा क्रियते' इत्यत्र वाक्यपादाद्ये वेदोपक्रमाधिकरणे ( ३।३।१ ) व्यवधारणकल्पना उक्ता। पृ. २६. * 'उच्चैर्ऋचा क्रियते'। स्वरविधिरत्र। संकर्ष. ४।१।२.

* **उच्चैष्ट्वं** उपांशुत्वेन बाध्यते आधाने साम्नाम्। बाल. पृ. १४०, * **उच्चैष्ट्वेन** उपांशुत्वं बाध्यते निगदेषु। पृ. १३२. * **उच्चैष्ट्वादयो** वेदधर्माः। 'उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना' इति। वि. ३।३।१.

* **उच्चैस्त्वं** गुणः पुरुषान्तरसंबोधनार्थम्। ( ततश्च ) उच्चैस्त्वेन गुणेन तान्येव यजूंषि व्यपदिश्यन्ते निगदा इति ( परसंबोधनार्थत्वात् )। भा. २।१।१३।४२-४३. * **उच्चैस्त्वस्य** उपांशुत्वात् बलीयस्त्वं परसंवेदनार्थत्वात् निगदस्य 'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः। यत्र स्यात्, तत्र विज्ञेयं गुणधर्मस्य बाधनम्॥' इति न्यायात् (वा. ३।३।२।९ पृ. ८१०)। सु. पृ. ६७९-८०.

* '**उच्छिष्टं** न भक्षयेत्' अयं द्रव्यप्रतिषेधः पुरुषार्थः। बाल. पृ. ३१. * **उच्छिष्टस्य** मित्रस्वजनानां भोजनं अनाचारः उदीच्यानां दाक्षिणात्यानां च। वा. १।३।३।७ पृ. २०४.

* **उच्छिष्टपत्रावल्ल्यादिकं** गर्ते त्यजते, तच्च न पुनः क्वाप्युपयुज्यते। वि. ५।३।१३.

* **उच्छ्रयणं** इत्यादयः यूपस्य ( औदुम्बर्याश्च ) संस्काराः। भा. ११।३।४।५.

* **उज्जितिमन्त्रवाचनं** वाजपेये ज्ञस्य एव यजमानस्य, न अज्ञस्य। भा. ३।८।८।१८.

* **उज्ज्वलविशदद्रव्यकत्वं** इष्टिप्रकृतिलिङ्गम्। बाल. पृ. ११९.

* **उत्करेण** प्राकृतवाजिनासादनानुवादेन विहितेन प्राकृतवेदेर्बाधः सौमिकचातुर्मास्येषु। भा. १०।३।३।१८-२२, * **उत्करे** वाजिनासादनं गुणविधिः न कर्मान्तरम्। तस्य होमनिर्वृत्तिर्दृष्टप्रयोजनम्। पृथग्वं उत्करं करिष्यामः। सौमिकेषु चातुर्मास्येषु। १०।३।३।२०-२१.

* **उत्कर्षः** अग्निहोत्रादीनां, दीक्षाकालोत्कर्षे। ( उत्कर्षः नाम यत् यत्र देशे काले वा पठितं, तस्य ततोऽन्यत्र नयनम्। के. ) भा. ६।५।१०।३८-३९. * उत्कर्षः अग्नीषोमीयस्य पुरोडाशस्य तद्विकाराणां च सोमोत्तरम्। वि. ५।४।४. * उत्कर्षः अनुयाजानां सर्वसोमानां उपरिष्टात् वाजपेये। भा. ११।३।१५।४८ ( ५० ), * उत्कर्षः अनुयाजाद्यङ्गकाण्डस्य आग्निमारुतादूर्ध्वं ज्योतिष्टोमे। ५।१।१२।२३-२४, * उत्कर्षः दानहोमपाकानां, दीक्षाकालोत्कर्षे सति। ६।५।१०।३८-३९. * उत्कर्षः दीक्षितधर्माणां सौमिकावभृथोत्कर्षे। वि. ६।५।११, * उत्कर्षः द्वादशोपसत्तायाः ज्योतिष्टोमप्रकरणात् अहीने। ३।३।१३. * उत्कर्षः पूषादिपदानां ( दर्शपूर्णमासप्रकरणपठितानां पूषानुमन्त्रणादीनां ) गुणत्वाभावात्, तद्व्यतिरेकेण इतरपदानां प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावाच्च। भाट्ट. ९।३।५, * उत्कर्षः पूषाद्यनुमन्त्रणमन्त्राणां दर्शपूर्णमासप्रकरणात् तत्तद्देवताके कर्मणि। ३।२।१. * उत्कर्षः पौष्णपेषणस्य दर्शपूर्णमासयोः श्रुतस्य पौष्णविकृतौ। वि. ३।३।१८. * उत्कर्षः प्रचरणीहोमादीनां सौमिकानां प्रातरनुवाककाले पौरोडाशिकेभ्यः परस्तात्। ज्योतिष्टोमे। भा. ५।१।१३।२५-२६, * उत्कर्षः प्रतिपदोः 'युवं हि स्थः०' 'एते असृग्रं०' इत्यनयोः द्विबहुयजमानकयोः ज्योतिष्टोमात् कुलाययागादौ। ३।३।९। १७-१९, * उत्कर्षः प्राजापत्यपशवालम्भस्य ब्राह्मणाच्छंसिसामकाले वाजपेये। ११।२।१२।५१-५३. * उत्कर्षः ब्राह्मणावगोरणादिनिषेधस्य दर्शपूर्णमासप्रकरणात्। वि. ३।४।१०. * उत्कर्षः मलवद्वाससा ( रजस्वलया ) संवादस्य

दर्शपूर्णमासप्रकरणात् । भा. ३।४।७।१८-१९, * उत्कर्षः षोडशिग्रहस्य उक्थ्यग्रहोत्कर्षे । ५।१।१८।३५, * उत्कर्षः संतर्दनस्य अग्निष्टोमे श्रुतस्य उक्थ्यादौ दीर्घसोमे । ३।३।११।२४-३१, * उत्कर्षः सवनीयपुरोडाशदेवतानां अपि आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण उत्कृष्यमाणे सूक्तवाके। ११।३।१६।५३-५४, * उत्कर्षः सांनाय्यस्य तद्विकाराणां च सोमोत्तरम् । ५।४।८।२५, * उत्कर्षः सूक्तवाकस्य अनुयाजोत्तरं वाजपेये । ११।३।१६।५३. * उत्कर्षः स्रुग्दण्डोपरि समिद्धारणस्य प्रेताग्निहोत्रात् । वि. ३।४।५. * **उत्कर्षः न** उपांशुयाजस्य, अग्नीषोमीयस्तु न कार्यः । प्राजापत्यो वा वैष्णवो वा तु कार्य एव । **भा.** ५।४।६।१९-२१, * उत्कर्षः न पत्नीसंयाजीय-जाघन्याः दर्शपूर्णमासप्रकरणात् । ३।३।१०।२०-२३, * उत्कर्षः न पिष्टलेपफलीकरणहोमयोः ज्योतिष्टोमे आग्नि-मारुतादूर्ध्वमनुयाजोत्कर्षेऽपि । ५।१।१५।२८, * उत्कर्षः न बहुवचनान्तपाशशब्दघटितमन्त्रस्य अग्नीषोमीयपशु-प्रकरणात् । ९।३।५।१५-२०, * उत्कर्षः न सायमग्नि-होत्रस्य साकमेधीयसांतपनीयोत्कर्षेऽपि । ५।१।१७। ३०-३४.

**उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् । ५।४। ४।१० ॥**

आधानस्य इष्टिपूर्वत्वं सोमपूर्वत्वं वा इति पूर्वा-धिकरणादवगतम् । तत्र विचारार्थं पूर्वपक्षमाह । ब्राह्मणस्य आधानादनन्तरं सोम एव स्यात् । उत्कर्षात् 'आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नी-षोमीयो भवति, यदेवादः पौर्णमासं हविः, तत् तर्हि अनुनिर्वपेत्, तर्हि उभयदेवत्यो भवति' इति वाक्येन ब्राह्मणस्य सोमानुष्ठानोत्तरं दर्शपूर्णमासयोः उत्कर्षः उक्तः । तस्मात् ब्राह्मणस्य इष्टिपूर्वत्वं नास्त्येव, किंतु सोमपूर्वत्व-मेव आधानस्य इति **प्रथमः** पूर्वपक्षः ।

**पौर्णमासी वा, श्रुतिसंयोगात् । ११ ॥**

**द्वितीयं** पूर्वपक्षमाह । दर्शपूर्णमासयोरुभयोर्नोत्कर्ष उक्तो वचनेन, किंतु श्रुतिसंयोगात् 'यदेवादः पौर्ण-मासं हविः' इति पौर्णमासशब्देन संयोगात् पौर्णमासी इष्टिरेव एका उत्कृष्यते । तस्मात् ब्राह्मणेन पौर्णमासेष्टि-रेव सोमात् प्राक् न कर्तव्या । दर्शेष्टिस्तु सोमात् प्रागपि आधानोत्तरं स्यात् । तस्मात् सोमपूर्वत्वमिव इष्टिपूर्वत्व-मपि ब्राह्मणस्य संभवति इति । वाशब्दः प्रथमपक्ष-निरासार्थः ।

**सर्वस्य वैककर्म्यात् । १२ ॥**

पुनः प्रथमपूर्वपक्षी आह । न केवलं एकस्याः पौर्ण-मासेष्टेरेव उत्कर्षः संभवति, किंतु सर्वस्य दर्शपूर्णमासा-त्मकस्य कर्मण एव उत्कर्षः । दर्शपूर्णमासयोरुभयोः ऐककर्म्यात् एककर्मत्वात् । अमावास्यापौर्णमासीरूप-कालभेदेन इष्ट्योरनुष्ठानेऽपि 'दर्शपूर्णमासाभ्यां स्वर्ग-कामो यजेत' इति श्रुत्या एकफलकत्वेन कर्मैक्यस्य स्पष्टत्वात् । ततश्च पौर्णमासीरूपे एकदेशे सोमादूर्ध्वं उत्कृष्टे उभयात्मकं सर्वमेव कर्म उत्क्रष्टव्यं भवति । तस्मात् ब्राह्मणस्य सोमपूर्वत्वमेव, नेष्टिपूर्वत्वं इति पुनः प्रथमः पूर्वपक्षः प्राप्तो भवति । वाशब्दः द्वितीय-पूर्वपक्षनिरासार्थः । **कुतूहले** तु क्रियते इति कर्म फलं, ऐककर्म्यात् एकफलकत्वात् इति व्याख्यातम् ।

**स्याद्वा, विधिस्तदर्थेन । १३ ॥**

ब्राह्मणस्य आधानं इष्टिपूर्वमपि स्यात् न सोमपूर्व-मेवेति नियमः । 'यदेवादः पौर्णमासं हविः तत्तर्हि अनुनिर्वपेत्' इति विधिस्तु तदर्थेन प्रसिद्धदर्शपूर्णमास-समुदायार्थेन प्रसिद्धपौर्णमास्यर्थेन वा स्यात् । दर्शपूर्णमास-समुदायस्थाने प्रसिद्धपौर्णमासेष्टिस्थाने वा पौर्णमाससंज्ञकं कर्मान्तरमेवेदं सोमादूर्ध्वं विधीयते । प्रसिद्धौ दर्शपूर्ण-मासौ, तदेकदेशभूता पौर्णमासी वा सोमादूर्ध्वं नैवोत्कृ-ष्यते । सा सोमात् पूर्वमेव भविष्यति । इति ब्राह्मणस्य इष्टिपूर्वत्वं विद्यते एव । इति **तृतीयः** पूर्वपक्षः । तद-र्थेन ब्राह्मणार्थेन ब्राह्मणोद्देशेन इति **कुतूहलम्** । तदर्थेन ज्योतिष्टोमार्थेन ज्योतिष्टोमाङ्गत्वेन इति **सुबोधिनी** । वाशब्दः प्रथमद्वितीयपक्षयोर्निरासार्थः ।

**प्रकरणात्तु कालः स्यात् । १४ ॥**

'यदेवादः पौर्णमासं हविः, तत् तर्हि अनुनिर्वपेत्' इति वाक्येन अपूर्वमेव पौर्णमासनामकं कर्मान्तरं ब्राह्मणस्य सोमोत्तरं विधीयते आधानं तु इष्टिपूर्वमेव ब्राह्मणस्य इति यत् तृतीये पूर्वपक्षे उक्तं तन्न । प्रमाणा-

भावात्, पौर्णमासशब्दस्य अनेकार्थत्वप्रसङ्गाच्च । किंतु प्रकरणात् पौर्णमासशब्देन एकदेशवाचकेन कृत्स्नस्य दर्शपूर्णमाससमुदायस्य तेन वाक्येन सोमोत्तरत्वं नाम कालो विहितः स्यात् । तस्मात् ब्राह्मणस्य सोमपूर्वत्वमेव । तुशब्दः द्वितीयतृतीयपूर्वपक्षनिरासार्थः ।

**पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात् । १७॥**

ब्राह्मणकृताधानस्य सोमपूर्वत्वमेव दर्शपूर्णमाससमुदायस्तु सोमादूर्ध्वं वचनेन एकदेशोत्कर्षद्वारा उत्कृष्यते इति यदुक्तं तन्निराचष्टे सोमपूर्वत्वमात्रवादी । ब्राह्मणस्य सोमादूर्ध्वं पौर्णमासी एव केवलं स्यात् 'यदेवादः पौर्णमासं हविः, तत् तर्हि अनुनिर्वपेत्' इति वचनात् । तस्मात् पौर्णमासीमात्रमुत्कृष्यते ।

**एकं वा शब्दसामर्थ्यात्, प्राक् कृत्स्नविधानात् । १८ ॥**

'यदेवादः पौर्णमासं हविः, तत् तर्हि अनुनिर्वपेत्' इति वचनेन दर्शपूर्णमाससमुदायस्य सोमादूर्ध्वं नोत्कर्षः, नापि पौर्णमाससंज्ञककर्मान्तरविधिः, नापि सर्वस्याः पौर्णमास्या उत्कर्षः इति वाशब्दार्थः । किं तर्हि तेन वाक्येन क्रियते ? तदाह । एकमेव अग्नीषोमीयपुरोडाशरूपं हविः सोमादूर्ध्वमुत्कृष्यते ; शब्दसामर्थ्यात् 'आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः, तत्तर्हि अनुनिर्वपेत्, तर्हि उभयदेवत्यो भवति' इति अदःशब्दसमानाधिकरणपौर्णमासशब्दस्य एकमात्रहविरुत्कर्षे सामर्थ्यात् । अदःशब्दः अग्नीषोमीयदेवताकमेव हविः परामृशति । तत्समानाधिकरणश्च पौर्णमासशब्दः तदेवानुवदति, न सर्वां पौर्णमासीं, नापि दर्शपूर्णमाससमुदायम् । अग्नीषोमीयपुरोडाशात् इतरस्य कृत्स्नस्य हविषः सोमात् प्राक् विधानात् च एकमेव हविरुत्कृष्यते । ततो यत् वचनेन उत्कृष्यते तदूर्ध्वं सोमात्, यन्नोत्कृष्यते तत्प्राग्भवितुमर्हति । तस्मात् एकं हविरुत्क्रष्टव्यम् । ब्राह्मणस्य इष्टिपूर्वत्वं सोमपूर्वत्वं वेत्युभौ कल्पौ इति सिद्धान्तः । **के.**

* **उत्कर्षस्य** अपवादः । द्वित्वबहुत्वाधिकरणस्य अपवादः जाघन्यधिकरणम् । **भा.** ३।३।९।१०, * **उत्कर्षे** उदवसानीयस्य प्रतिहोमाननुष्ठानम् । ६।५।१२।४२, * उत्कर्षे ज्योतिष्टोमस्य प्रतिहोमाननुष्ठानम् । ( उत्कर्षोऽत्र समाप्तिविलम्बः ) । ६।५।११।४०-४१, * उत्कर्षे ( कर्तव्ये ) तदादि उत्कृष्येत । अनुयाजादेरुत्कर्षः, ननु अनुयाजमात्रस्य आग्निमारुतादूर्ध्वम् । ५।१।१२।२३-२४.

⌛ **उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः पश्वनङ्गत्वाद्, यथा निष्कर्षेऽनन्वयः । ११।३।१६।५५ ॥**

ज्योतिष्टोमे आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण सूक्तवाकस्य उत्कर्षे सति सोमदेवतानां सवनीयपुरोडाशदेवतानां नोत्कर्षः । पश्वनङ्गत्वात् पशोः अङ्गं पश्वङ्गं, न पश्वङ्गं पश्वनङ्गं, सोमदेवतानां पश्वनङ्गत्वात् अनुयाजाद्युत्कर्षेऽपि नोत्कर्षः । यथा पौर्णमास्यां सूक्तवाकस्य प्रयोगे दर्शदेवतानां निष्कर्षे निवृत्तौ अनन्वयः न अन्वयो भवति पौर्णमासीसूक्तवाके, तद्वत् । इति पूर्वः पक्षः ।

**वाक्यसंयोगाद् वोत्कर्षः, समानतन्त्रत्वादर्थलोपादनन्वयः । ५६ ॥**

सिद्धान्तमाह । सौमिकदेवतासंकीर्तनानां सूक्तवाकवाक्येन संयोगात् सूक्तवाकवाक्यस्य एकदेशत्वात् । 'भृज्जन्निन्द्राय, हरिवते धानाः, पूषण्वते करम्भं, सरस्वतीवते परिवापं, अयं यजमानः०' इति । न च सवनीयानां पृथक् सूक्तवाकोऽस्ति । पाशुक एव सूक्तवाकस्तेषां प्रसङ्गसिद्धः । अतस्तत्र तासां देवतानां संकीर्तनं युक्तम् । पाशुकः सूक्तवाकश्च उत्कृष्यते । तस्मात् सोमदेवतानामपि उत्कर्षः । यत्तु 'यथा निष्कर्षे अनन्वयः' इत्युक्तं तत्र समानतन्त्रत्वात् दर्शपूर्णमासयोः, पौर्णमास्यां च अर्थलोपात् दर्शदेवतानां लोपात् पौर्णमासीसूक्तवाके अनन्वयः नान्वयः इति युक्तम् । ततश्च विषमो दृष्टान्तः । तस्मात् आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण उत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतापदानामपि उत्कर्षः इति सिद्धान्तः । **के.**

* **उत्कर्षविधिः** क्रत्वर्थः पुरुषार्थश्च इति द्विविधः । दृष्टार्थः अदृष्टार्थश्चेति च द्विविधः यथासंभवम् । **बाल.** पृ. १५,२१, * उत्कर्षविधिः क्रिया–गुण–जाति–द्रव्यविषयकत्वेन चतुर्विधः सन् प्रत्येकं उद्देश्यांशे

विधेयांशे उद्देश्यविधेयोभयांशे वेति त्रिविधः इति संहत्य द्वादशविधः । विधिबिन्दौ द्रष्टव्यम् । पृ. २१.

**उत्कर्षाधिकरणम् ।** आधाने इष्टिपूर्वत्वं सोमपूर्वत्वं वेत्युभौ पक्षौ ब्राह्मणस्यापि । अग्नीषोमीयहविर्मात्रं तु सोमात् परस्तादुत्कष्टव्यम् ॥

**उत्कर्षाद् ब्राह्मणस्य सोमः स्यात् । ५।४।४।१०॥**

**भाष्यम्--** अस्याधानं तत्रैषोऽर्थः समधिगतः, इष्टिपूर्वत्वं सोमपूर्वत्वं चेति ( वेति ) । इदानीं संदेहः किं त्रयाणां वर्णानां इष्टिपूर्वत्वं सोमपूर्वत्वं वा, उत ब्राह्मणस्य सोमपूर्वत्वमेव, उत केवला पौर्णमासी उत्कृष्यते, ब्राह्मणस्य उभौ कल्पौ इति, अथवा कर्मान्तरमिदं यदूर्ध्वं सोमात्, अथवा एकं हविरुत्कृष्यते ब्राह्मणस्य उभौ कल्पौ इति । किं प्राप्तम् ? त्रयाणां वर्णानां इष्टिपूर्वत्वं सोमपूर्वत्वं वा । कुतः ? अविशेषात् । न कं चित् विशेषमवगच्छामः । **एवं प्राप्ते, ब्रूमः** । ब्राह्मणस्य सोमपूर्वत्वं स्यात् । कस्मात् ? उत्कर्षात् । उत्कर्षो हि श्रूयते ‘ आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति । यदेवादः पौर्णमासं हविः, तत् तर्हि अनुनिर्वपेत्, तर्हि उभयदेवतो भवति’ इति । किमिव हि वचनं न कुर्यात् ? तस्मात् ब्राह्मणस्य सोमपूर्वत्वमेवेति ।

**पौर्णमासी वा, श्रुतिसंयोगात् । ११ ॥**

**भाष्यम्--** यदुक्तं ब्राह्मणस्य सोमपूर्वत्वमेवेति, तन्न । तस्यापि उभौ कल्पौ । कुतः ? अविशेषात् । नहि कल्पयोः ब्राह्मणस्य कश्चित् विशेष आम्नायते । ननु इदानीमेवोक्तं ब्राह्मणस्य उत्कर्षः इति । नेति ब्रूमः । पौर्णमासीमात्रस्य तत्रोत्कर्षः । श्रुतिसंयोगः पौर्णमास्यास्तत्र ‘ यदेवादः पौर्णमासं हविः ’ इति । यावद्वचनं वाचनिकं, तत्र न न्यायः क्रमते ‘ तुल्ययोः एकदेशे उत्कृष्टे नूनं अपरोऽपि एकदेशः उत्कृष्यते ’ इति ।

**सर्वस्य वैककर्म्यात् । १२ ॥**

**भाष्यम्--** यदुच्यते केवला पौर्णमासी उत्कृष्यते इति, तन्न । कृत्स्नस्य दर्शपूर्णमासकर्मणः उत्कर्षः । एवं फलेन संबन्धः । इतरथा न स्यात् फलं, एकदेशत्वात् पौर्णमास्याः । केवलायामुत्कृष्यमाणायां अवशिष्टस्य पूर्वत्र क्रियमाणस्य न फलं स्यात् । एकदेशत्वात् अफलत्वाच्च उक्तमपि न क्रियेत । समुदाये चोत्कृष्यमाणे भवति फलम् । तस्मात् अर्थात् समुदायस्योत्कर्षः । एवं कृत्स्नोपदेशः अर्थवान् भविष्यतीति । तस्मात् सर्वस्योत्कर्षः । सोमपूर्वत्वमेव ब्राह्मणस्येति ।

**स्याद्वा विधिस्तदर्थेन । १३ ॥**

**भाष्यम्**— नैतदस्ति कृत्स्नस्योत्कर्ष इति यदेवं समुदायस्य असति वचने उत्कर्षः परिकल्प्येत । तस्मादन्यदेव एवंनामकं कर्म ऊर्ध्वं सोमात् स्यात् । एवं एकदेशस्य अश्रुतं फलं न कल्पयितव्यं भविष्यति । नामधेयं तु द्वयोः कर्मणोरेकं, अक्षाः पादाः माषाः इति यथा । पौर्णमासधर्मकं वा कर्मान्तरं चोद्यते इति । कर्मविधानं श्रुतेः एतत् भवति, तत् वाक्यस्य बाधकम् । तस्मात् कर्मान्तरमिति ।

**टुप्**— यदि केवला पौर्णमासी उत्कृष्येत फलं न स्यात् । अथ दर्शोऽपि उत्कृष्येत, अश्रुतः तस्योत्कर्षः । तस्मात् सोमोत्तरकालं कर्म विधीयते अन्यदेतत् । एवं कर्मविधानात् श्रुतिः । इतरथा पौर्णमासीकर्मणः सोमोत्तरकालता विधीयेत । तत्र वाक्यं स्यात्, यागस्याविधानात् । तस्मात् यागविधानात् पौर्णमासीसंज्ञकं कर्मान्तरम् । अथवा उभयोः कर्मणोः साधारणी संज्ञा । ब्राह्मणस्य उभौ कल्पौ ।

**प्रकरणात्तु कालः स्यात् । १४ ॥**

**भाष्यम्--** कर्मान्तरस्यैतद्वाचकं इति प्रमाणाभावः । प्रकृतस्य कर्मणो वाचकमिति प्रत्यक्षम् । यच्च सप्रमाणकं तद् ग्राह्यम् । अन्यायश्चानेकार्थत्वम् । धर्मग्रहणे लक्षणाशब्दः श्रुतिसंभवे कल्प्यः स्यात् । अपिच अस्य रूपं न गम्यते । रूपावचनान्न कर्मान्तरम् । तस्मात् प्रसिद्धेन नाम्ना प्रकृतस्य कर्मणो ग्रहणं कालविधानार्थं स्यात् । फलवत्त्वाच्च कृत्स्नस्योत्कर्षः । ब्राह्मणस्य च तथैव । यत्तु श्रुतिर्वाक्याद्बलीयसीति, अत्रोच्यते । यत्र फलं न श्रूयते, वाक्यार्थोऽपि तावत्तत्र गृह्यते । न चेह फलस्य श्रवणमस्ति । कल्प्यं फलं इति यदुच्यते, न तत् फलं वचनमन्तरेण, तत्र फलवचनः शब्दः कल्प्येत, तेन च सहैकवाक्यता । कालवचनेन तु सह प्रत्यक्षेण एकवाक्यतेति । तस्मान्न कर्मान्तरम् ।

**टुप्**— पौर्णमासप्रकरणे श्रुतं नालं कर्मान्तरं कल्पयितुम्। अतो निर्ज्ञातस्य यागस्य कालमुपदिश्य कृतार्थं वाक्यं अशक्तं कर्मान्तरविधौ। बहुदृष्टप्रसङ्गाच्च धर्मातिदेशोऽप्ययुक्तः। सत्यां गतौ साधारणशब्दताऽपि अयुक्ता, अन्यायश्चानेकार्थत्वमिति। तस्मात् पौर्णमास्युत्कर्षः। अतः तत्संबन्धेन फलस्य चोदितत्वात् दर्शोऽपि उत्कृष्येतेति।

**पौर्णमास्यूर्ध्वं सोमात् ब्राह्मणस्य वचनात्।१७॥**

**भाष्यम्**— स्थितं तावत् अपर्यवसितमधिकरणम्। अन्तरा चिन्तान्तरं वक्ष्यते (१५-१६ सूत्राभ्याम्।) ...स्थितादुत्तरम्। न चैतदस्ति कृत्स्नौ दर्शपूर्णमासौ उत्कृष्येते (इति)। ऊर्ध्वं सोमात् केवला पौर्णमासी उत्कृष्यते। कुतः? वचनात्। वचनमिदं 'यदेवादः पौर्णमासं हविः, तत् तर्हि अनुनिर्वपेत्' इति। नास्ति वचनस्य अतिभारः। तस्मात् पौर्णमासीमात्रमुत्कृष्येत। यत्तु फलं नास्तीति, समुदायादेव फलं भविष्यतीति, वचनात् एवंविज्ञानात्। तस्माददोषः।

**एकं वा शब्दसामर्थ्यात्, प्राक् कृत्स्नविधानात्। १८॥**

**भाष्यम्**— एकं वा हविः उत्कृष्येत, न कृत्स्ना पौर्णमासी। कुतः? शब्दसामर्थ्यात्। एकं हविः उत्क्रष्टुं शब्दः समर्थः। 'यदेवादः पौर्णमासं हविः' इति श्रूयते। यावद्वचनं वाचनिकं, तत् वचनेन उत्क्रष्टुं शक्यते, नान्यदपि। प्राक् सोमात् कृत्स्नं विधीयते, ततो यत् वचनेन उत्कृष्यते, तत् ऊर्ध्वं सोमात्, यन्नोत्कृष्यते, तत् प्राक् भवितुमर्हति। तस्मादेकं हविः उत्कृष्टव्यम्। ब्राह्मणस्य उभौ कल्पौ इति।

**शा**— '**इष्टेरुत्कर्षणं यस्माद् ब्राह्मणस्य विधीयते। तेनास्य सोमपूर्वत्वमुभयं क्षत्रवैश्ययोः॥**' न सकलपौर्णमास्युत्कर्षः किंतु '**अदःशब्दपरामृष्टमग्नीषोमीयमेव हि। हविरुत्कृष्यतेऽन्यत्तु यथा प्राप्तमवस्थितम्॥ तन्मात्ररहितत्वेन विप्रस्यापि पुरा भवेत्। तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत्॥**'

**सोम**— पूर्वत्र (आधानस्येष्टिपूर्वत्वादिविषये) विशेषचिन्तनात् एकविषयत्वं **संगतिः**। न प्राभाकरवत् ब्राह्मणस्यैव कल्पद्वयं किंतु अविशेषात् त्रयाणामपि। **सूत्रार्थस्तु**— ब्राह्मणस्य प्रथमं सोमः स्यात् कृत्स्नदर्शपूर्णमासोत्कर्षात् इति।

**वि**— 'विप्रस्य सोमपूर्वत्वं नियतं वा न वा, ऽग्रिमः। उत्कर्षतो, मैवमग्नीषोमीयस्यैव तच्छ्रुतेः॥'

**भाट्ट**— एवं स्थिते कल्पद्वये, 'आग्नेयो वै ब्राह्मणो० तत्तर्ह्यनुनिर्वपेत्' इति **वचनेन** ब्राह्मणकर्तृकत्वे निमित्ते एकदेशोत्कर्षेण समस्तदर्शपूर्णमासोत्कर्षप्रतीतेः ब्राह्मणस्य सोमपूर्वत्वमेव। नहि समस्तयागसाध्यत्वेन श्रुतं फलं एकदेशाद्भवितुमर्हति। न च सोमोत्तरं तन्त्रेण सकृत्-क्रियमाणोत्कृष्टहविर्मात्रसहकृतपूर्वयागेभ्यः फलसिद्धिः। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन' इत्यनेन दर्शपूर्णमासपदवाच्यसर्वयागोत्तरत्वस्यैव सोमे विहितत्वेन तथा कल्पनाऽनुपपत्तेः। दर्शपूर्णमासाभ्यां इति तृतीयाबलेन परमापूर्वोत्पत्तेरपि अवगतत्वाच्च। अतः इतरयोः क्षत्रियवैश्ययोः कल्पद्वयं इष्टिपूर्वत्वमेव वा। इति **प्रथमः पक्षः**। **द्वितीयस्तु** नैकदेशोत्कर्षेण सर्वदर्शपूर्णमासोत्कर्षः प्रमाणाभावात्, सांनाय्यानधिकारिणः ऐन्द्राग्नविध्यनुपपत्त्या फलवाक्ये सर्वसाहित्यस्य अविवक्षितत्वाच्च। अतो यस्य यावत्सु अधिकारः, तस्य तावद्भ्य एव फलसिद्धिः। अतश्च ब्राह्मणस्यापि उत्कृष्टहविर्भिन्नदर्शपूर्णमासयागकरणोपपत्तेः कल्पद्वयम्। उत्कर्षः परं पौर्णमासीस्थहविर्मात्रस्य। विधौ अविशेषश्रुतस्य उद्देश्यपरस्य पौर्णमासपदस्य अर्थवादेन संकोचानुपपत्तेः, 'यदेव' इत्यनेन साकल्यप्रतीतेश्च। **इति प्राप्ते**, पौर्णमासीमात्रस्थत्वेन अत्र पौर्णमासपदव्यपदेशात् आग्नेयस्य उभयत्र विद्यमानत्वेन विशिष्य तात्पर्यग्राहकाभावे व्यपदेशानुपपत्तेः। प्रत्युत उपक्रमस्थार्थवादस्यैव अग्नीषोमीयहविर्मात्रतात्पर्यग्राहकस्य सत्त्वेन तस्यैवोत्कर्षः। 'यदेव' इत्यनेकापेक्षं तु वचनं उपांशुयाजस्य अग्नीषोमदेवताकत्वात् तदभिप्रायेण न विरुध्यते। अत्र च सोमोत्तरकालत्वविधौ उद्देश्यसमर्पकं पदं समभिव्याहृतसर्ववाचितच्छब्द एव, न तु अदःपदं अग्नीषोमपदं हविःपदं वा, तस्यार्थवादस्थत्वेन पौर्णमासपदवत्

तच्छब्दार्थतात्पर्यग्राहकत्वात्, विशिष्टोद्देशे वाक्यभेद-प्रसङ्गाच्च । उद्देश्यताऽवच्छेदकमपि च नाग्नीषोमदेवताक-हविष्ट्वं, तथात्वे यागे उत्तरकालताया अङ्गताऽनापत्तेः । नापि तद्देवताकयागत्वं तद्देवताकप्रकृतयागत्वं वा, तद्देवता-कत्वस्य विशेषणत्वे तद्विकृतौ देवताऽन्तरयुक्तायां सोमो-त्तरत्वस्य अतिदेशानापत्तेः । उपलक्षणत्वे च विष्णुप्रजा-पतिदेवत्वस्यापि उपांशुयाजस्य सोमोत्तरत्वापत्तेः । किंतु अग्नीषोमदेवतानिष्ठकारणतानिरूपितकार्यताऽवच्छेदकी – भूतो यः तदपूर्वसाधनताऽवच्छेदकव्याप्यो धर्मः, तद्व-त्त्वम् । अस्ति हि व्रीहियवादिवैकल्पिकसाधनस्थले व्यभिचारपरिहाराय आग्नेयत्वोपांशुयाजत्वादिव्याप्यो धर्म इत्युक्तं तेषामर्थाधिकरणे ( ३।१।४।७–१० ) कौस्तुभे । तस्य यद्यपि नान्यत्र अवघातादिसंस्कारविधौ उद्देश्यताऽ-वच्छेदककोटिप्रविष्टत्वं गौरवात्, तथापि अत्र अर्थ-वादवशात् तस्य उद्देश्यत्वाविघातः । अतश्च विष्णुप्रजा-पतिजन्यताऽवच्छेदकव्याप्यधर्मयोः व्यापकधर्मोपांशुयाज-त्वस्य च स्वव्याप्यस्यापि अग्नीषोमजन्यताऽवच्छेदकत्वा-भावात् नोद्देश्यताऽवच्छेदकत्वम् । अग्नीषोमीयपुरोडाशे तु अपूर्वसाधनताऽवच्छेदकीभूतस्य अग्नीषोमीययागत्व-स्यैव अग्नीषोमजन्यताऽवच्छेदकत्वात् स्वव्याप्यत्वाच्च नोद्देश्यताऽवच्छेदकत्वव्याघातः । तत्तद्विकृतौ देवताऽन्तर-युक्तायां तु तत्तद्विकृतित्वस्यैव तत्तद्देवताजन्यताऽवच्छेद-कस्य तत्तद्व्याप्यधर्मस्थानापन्नतया उक्तविधव्याप्यत्व-सत्त्वात् नोद्देश्यताऽवच्छेदकत्वव्याघातः इति ध्येयम् । अत्र च अनुपादेयगुणयोगेऽपि न कर्मान्तरत्वाशङ्का, दर्शपूर्ण-मासप्रकरणपठितत्वात् ।

**मण्डन**— ‘ एतौ पक्षौ क्षत्रविड्ब्राह्मणानाम् । ’

**शंकर**-- ‘ सोऽपि वर्णत्रयस्य च । ’ सः विकल्पः ।

* **उत्कर्षाधिकरणे** कालानादरस्य सोमाङ्गत्वं प्रति-पाद्यते । **भाट्ट.** ५।४।२.

⌛ **उत्कृष्टदृष्टिर्निकृष्टे अध्यसितव्या इति न्यायः** । तथा च लौकिको न्यायोऽनुगतो भवति उत्कृष्ट० इति लौकिको न्यायः यथा राजदृष्टिः क्षत्तरि । ( एवं निकृष्टे आदित्यादौ उत्कृष्टस्य ब्रह्मणः दृष्टिः कर्तव्या अयमादित्यो ब्रह्म इति , न वैपरीत्यम् ) । **शांभा.** ४।१।४।५ ब्रसू.

* **उत्कृष्टदृष्टिर्निकृष्टे फलवती इति न्यायः । न्यायनि.** ३।३।२३।३७ ब्रसू., * ‘ **उत्कृष्टदृष्ट्या निकृष्ट-मुपास्यम्** ’ **इति** न्यायानुगृहीताभ्यां द्वितीया–इतिशब्द-श्रुतिभ्यां उत्कृष्टनिकृष्टयोरुत्कृष्टमेवोपास्यं फलविशेषपर-त्वात् राजादिवत् इत्यनुमानभङ्गात् । ४।१।४।५ **ब्रसू.** * ब्रह्मणः प्रधानत्वेऽप्रधानत्वे वा ब्रह्मैव फलप्रदं इति श्रुतेरुपपत्तौ सत्यां **निकृष्टे उत्कृष्टदृष्टिः कर्तव्या इति लौकिकन्यायो** न बाधनीयः । **आभरणं**.४।१।४।५ ब्रसू.

⌛ **उत्खातदंष्ट्रोरगन्यायः** । जीवन्मुक्तस्य संसार-स्तथा । **संग्रहः** । उरगस्य विषदंष्ट्राः उत्खाताश्चेत् स उरगो यथा कमपि न बाधते , तथा मूलाविद्यानाशोत्तरं जीवन्मुक्तस्य दृश्यमानोऽपि संसारो न बाधितुमलं इत्यर्थः । **के.**

* **उत्तमः** प्रयाजः संस्कारकर्म । **भा.** १०।१।७। १४–१५. * **उत्तमया** वाचा ( उच्चैः ) अनुयाजादि दर्शपूर्णमासयोः । **वा.** ३।३।२।९ पृ. ८११.

* **उत्तमपुरुषेण** विधिशक्तिप्रतिबन्धः ‘ बर्हिर्देव-सदनं दामि ’ ‘ शुक्रं त्वा शुक्रायां ... यजुषे गृह्णामि ’ इत्यादौ । **वा.** २।१।६।३१, * उत्तमपुरुष–यच्छब्द–आम-न्त्रणाद्युपहतविधिशक्तयो मन्त्राः न कर्मान्तरं कल्पयन्ति । ३।१।१।१ पृ. ६४९.

* **उत्तमप्रयाजे** ( दर्शपूर्णमासयोः ) मान्त्रवर्णिको देवताविधिः । प्रकरणात् क्रमसहितात् करणभावोऽव-गम्यते । **टुप्.** १०।१।७।१४. * उत्तमप्रयाजनिगदः चातुर्मास्येषु संप्रतिपन्नदेवताको दृश्यते । **भा.** १०।१। ७।१५.

* **उत्तमाहवर्जं** द्वादशाहे पत्नीसंयाजान्तत्वं विधीयते । **भा.** ९।१।९।२९–३२.

* ‘ **उत्तरेऽहन्** द्विरात्रस्य गृह्यते ’ इतिवाक्यार्थ-विचारः । **मुरारिः** । मीमांसाकोषः पृ. १७०।१।३४– १७१।१।७.

* ‘ **उत्तरा** दोहयति ’ इत्यत्र सर्वासां गवां दोहनं विधीयते । **वि.** ११।१।९. * **उत्तरायाश्च** योनेश्च त्वामिद्धि० स त्वं नश्चित्र० इत्यनयोः प्रग्रथनेन संपादित-ककुभोरेव बृहद्रथंतरयोर्गानं ज्योतिष्टोमे । **भा.** ९।२।६।

२५-२८, * **उत्तरयोरपि** स्वयोन्युत्तरयोरेव कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य गानं, न रथंतराद्युत्तरयोः। १०।४।२३।४८-४९, * उत्तरयोः ऋचोः उत्तरावर्णवशेन योनिसाम्नो गानम्।९।२।९।३१-३२, * उत्तरयोः ऋचोः योनिस्थस्तोभानामतिदेशः। ९।२।१०।३३-३७.

**' उत्तरयोर्गायति ' इत्युत्तराशब्देन उत्तराग्रन्थस्थयोः योनेरुत्तरयोः द्वयोर्ऋचोर्ग्रहणम् ॥**

**नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत। ९।२।५।२३ वर्णकं १ ॥**

**भाष्यम्**— ज्योतिष्टोमे समामनन्ति ' रथंतरमुत्तरयोर्गायति ' ' बृहदुत्तरयोर्गायति ' ' कवतीषु रथंतरं गायति ' ' यद्योन्यां गायति, तदुत्तरयोर्गायति ' इति। तत्रैतत् समधिगतं समासु गेयमिति। अथेदानीमिदं संदिह्यते किं योन्युत्तरयोर्वा, उत्तराग्रन्थसमधीतयोर्वा गेयं, उतोत्तराग्रन्थसमधीते एव उपादातव्ये इति। किं प्राप्तम्? नियमकारिणः शास्त्रस्य अभावादनियमः इति। **एवं प्राप्ते ब्रूमः**। नैमित्तिकं तूत्तरात्वं उत्तराग्रन्थसमधीतासु उपपद्यते इति। कुतः? समाख्यानात् प्रकृतत्वाच्च उत्तराग्रन्थाधीतानाम्। **आह**, द्वाभ्यामपि समाख्याप्रकरणाभ्यां वाक्यं बलीयः। तस्मादनियमः एव प्राप्नोति। **अत्रोच्यते**। सर्वे हि संबन्धिशब्दाः पदान्तरमनपेक्षमाणा न कं चिदपि अर्थमाहुः। तस्मादपेक्षितं पदान्तरं, तत् प्रकृतं संनिहितं वा। इतरथा अपरिपूर्णार्थं वाक्यं अनभिधायकमेव कस्य चिदर्थस्य स्यात्। संज्ञाग्रहणे पुनर्न पदान्तरमपेक्षते। श्रुत्यैव परिपूर्णार्थो गृह्यते। तस्मान्न संबन्धिशब्दः अध्यवसानीयः। उत्तरासंज्ञैव उपादातव्येति। नहि संज्ञासु गृह्यमाणासु पदान्तरानन्तर्यमपेक्षितव्यं भवति।

**टुप्**— ' रथंतरमुत्तरयोर्गायति ' इत्यत्र पूर्वपक्षवादी उत्तराशब्दं संख्याशब्दं मन्यते, (तेन) ' यद् योन्यां तदुत्तरयोर्गायति ' इति वाक्यात् योन्युत्तरे (योनिश्च उत्तरा च ते द्वे इति ज्ञेयम्। के.) गम्येते। प्रकरणात् उत्तराग्रन्थसमाम्नाते (ऋचौ गम्येते)। प्रकरणाच्च वाक्यं बलीयः। (एतदतिशयार्थमुक्तम्। परमार्थमाह-) अथवा ' यद् योन्यां तदुत्तरयोः ' इति योन्युत्तरे वाक्यात्, उत्तराग्रन्थपठिते अपि वाक्यादेव। तस्मात् (उत्तराशब्दस्य संख्याशब्दत्वात्) अनियमः। सिद्धान्तस्तु उत्तराशब्दो रूढ्या ग्रन्थे प्रसिद्धः, ' उत्तरा- वर्तन्ते, उत्तरा अध्यापयामः ' इति (प्रयोगात्)। (ननु संख्यायामपि रूढ एव, तत्र को विशेषः? तमाह-) अस्मिन् (उत्तराग्रन्थस्थे) गृह्यमाणे न पदान्तरसंनिधानमपेक्षितव्यम्। योन्युत्तरासु (तु) गृह्यमाणासु (संबन्धिशब्दत्वात्) प्रकृतत्वमपेक्षितव्यम्। तत्र विलम्बितः प्रत्ययः, इतरत्र तु अविलम्बितः।

**ऐकार्थ्याच्च तदभ्यासः। २४ ॥**

**भाष्यम्**— तास्वेव च उत्तराग्रन्थसमधीतासु साम अभ्यसितव्यम्। एवमेकार्थता तृचशब्दस्य भविष्यति। एकं कं चित् सामान्यविशेषमाश्रित्य तृचशब्दमुपचरन्ति। एतदेवमुक्तं यद्विशेषे कस्मिंश्चित् संख्या भवति, इतरथा हि सर्वत्र सर्वसंख्या भवेयुः, तथाहि संव्यवहाराभावः स्यात्। तस्मात् समानच्छन्दस्कासु समानदेवताकासु च तृचशब्दोपचारात् उत्तराग्रन्थसमधीता एव ग्रहीतव्याः इति।

**सोम**— अस्तु पूर्वत्र संशरविलेशदोषप्रसङ्गलक्षणविशेषनियामकसद्भावात् समास्वेव (समानच्छन्दस्कास्वेव सामगानं) इति नियमः। इह तु विशेषनियामकाभावात् अनियमः इत्युत्थितेः प्रत्युदाहरण**संगतिः**। **ननु** रूढत्वे उत्तराग्रन्थे यत्रक्वापि पठितयोरपि ऋचोर्ग्रहणं स्यात्, तत्तद्योन्युत्तरपठितयोरेव ग्रहणं इत्यत्र नियामकाभावात् इति चेत् **मैवं**, उत्तराग्रन्थे योनिपाठो न योनिस्वरूपज्ञानार्थः, छन्दोनामकग्रन्थपाठादेव तत्स्वरूपावगतेः। किंतु योन्युत्तरयोरेव उत्तराग्रन्थपठितयोर्ग्रहणं यथा स्यात् इत्येवमर्थमेव ऋगन्तरसंवलिततया योनिपाठः, इति तस्यैव नियामकत्वात्। **सूत्रार्थस्तु**— नैमित्तिकं संज्ञानिमित्तकमेव उत्तरात्वं आनन्तर्यात् प्रतिसंबन्ध्यपेक्षाकृतव्यवधानाभावात् प्रतीयते इति।

**वि**— ' छन्दस्थयोरुत्तरास्थयोर्वा गीतेरिहोहनम्।, अविशेषाद् विकल्पः स्या, दन्त्यः संज्ञाबलित्वतः ॥ '

( छन्दोग्रन्थस्थयोः उत्तरानामकग्रन्थस्थयोर्वा ऋचोः गीतेः सामगानस्य ऊहनं इति संशयः ) ।

**भाट्ट**—– ' यद्योन्यां गायति तदुत्तरयोः ' इत्यत्र उत्तराशब्देन योन्युत्तरयोरुत्तराग्रन्थपठितयोश्च उत्तरयोर्ग्रहणं, उत उत्तराग्रन्थपठितयोरेवेति संदेहः । उत्तराशब्दस्य ' प्रस्तरमुत्तरं बर्हिषः सादयति, तूष्णीमुत्तरा दोहयति ' इत्यादौ संबन्धिशब्दत्वदर्शनात्, यैव योनेः परतः पठिता, सैवोत्तरा । ततश्च योनिग्रन्थे रथंतरयोनेः परतो बृहद्योनेः पाठात् तस्यां रथंतरस्य गानम् । उत्तराग्रन्थे च रथंतरयोनेः परतो ' न त्वावाँ अन्यो दिव्यो न पार्थिवः ' इत्यस्याः पाठात् तस्यामपि विकल्पेन । **इति प्राप्ते**, बृहद्योनेः रथंतरयोन्युत्तरत्वेऽपि तस्यामुत्तराशब्दस्य वैदिकैरप्रयुज्यमानत्वात् उत्तराशब्दोऽयं उत्तराग्रन्थपठितोत्तरासु वैदिकप्रयोगादसंबन्धिकतयैव रूढः । ततश्च संबन्धिशब्दस्य प्रतिसंबन्धिप्रतिसंधानसापेक्षत्वेन विलम्बेन अर्थोपस्थापकत्वात् अन्यत्र संबन्धिशब्दत्वेऽपि प्रकृते असंबन्धिशब्दः एवायम् । ततश्चोत्तराग्रन्थपठितोत्तराणामेव झटित्युपस्थापकः, इति तासामेव ग्रहणम् । प्रकरणक्रमाभ्यां वा उत्तराग्रन्थपठितानामुत्तराणां तत्तत्स्तोत्राङ्गत्वप्रतीतेः इदमेव युक्तम् ।

**मण्डन**—– ' उत्तरा ग्रन्थगोचरा । ' ६.

**शंकर**—– ' रूढः स्यादुत्तराशब्दः । '

**⌛ उत्तरासु न यावत्स्वमपूर्वत्वात् । ११।१। ९।४७ ॥**

सांनाय्ये दोहने ' वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य उत्तरा दोहयति ' इति श्रुतम् । तत्र उत्तरासु त्रिभ्योऽधिकासु गोषु दोग्धव्यासु न यावत्स्वं दोग्धव्याः । यावत्यः स्वाः गावः, तावत्यः सर्वाः न दोग्धव्याः । यावत्यः स्वाः यावत्स्वं इत्यव्ययीभावे नपुंसकत्वम् । किंतु तिस्र एव दोग्धव्याः बहुवचनस्य त्रित्वे पर्यवसानात् । उत्तरादोहश्च नानुवादः, किंतु विधिः अपूर्वत्वात् अप्राप्तत्वात् । इति पूर्वः पक्षः ।

**यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ।४८॥**

सिद्धान्तमाह । यावत्स्वं यावत्यः स्वीया गावः, तावतीः सर्वा एव दोहयति न तिस्र एव । ' विसृष्टवागनन्वारभ्य ' इत्यत्र अन्यस्य दोहनादन्यस्य आलम्भाभावस्य स्पर्शाभावस्य विधानेन विधानात् ' उत्तरा दोहयति ' इति अनुवादः स्यात् ।

**साकल्यविधानात् । ४९ ॥**

' उत्तरा दोहयति ' इत्यस्य अनुवादत्वसिद्ध्यर्थं प्राप्तिमाह । ' नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्, कुमाराश्च न पयो लभेरन् ' इत्यत्र पयःप्रतिषेधेन लक्षणया गवां साकल्यस्य विधानात् यावत्स्वं उत्तरादोहनस्य प्राप्तिः ।

**बह्वर्थत्वाच्च । ५० ॥**

' बहु दुग्धीन्द्राय देवेभ्यो हविः ' इति मन्त्रलिङ्गस्य बह्वर्थत्वात् बहुदोहबोधकत्वात् यावत्स्वं सर्वा गावो दोग्धव्या इति ज्ञायते ।

**अग्निहोत्रे चाशेषवद् यवागूनियमः । ५१ ॥**

अग्निहोत्रे अग्निहोत्रप्रकरणे अशेषवत् निःशेषमिव दोहनं सूचयति ' नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्' ' यवाग्वा जुहुयात् ' इति वाक्यम् । यस्मादत्र यवागूनियमः होमार्थं यवाग्वाः नियम उक्तः, तेन अशेषं पयः सांनाय्यार्थं ग्राह्यं इति गमयति । तस्मात् ' उत्तरा दोहयति ' इति विधिरेव ।

**तथा पयःप्रतिषेधः कुमाराणाम् । ५२ ॥**

तथा यवागूनियमवत् ' कुमाराश्च न पयो लभेरन् ' इत्युक्तः कुमाराणां पयसः प्रतिषेधः अशेषगोदोहं सूचयति ।

**सर्वप्रापिणाऽपि लिङ्गेन संयुज्य देवताऽभिसंयोगात् । ५३ ॥**

' वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुरा आप्याययन्ते । अथैतर्हि देवेभ्य एव एता आप्याययन्ति ' इत्यत्र वत्सेभ्यो मनुष्येभ्यश्च संयुज्य पश्चात् सांनाय्यार्थं देवताभिः अभिसंयोगस्य संबन्धस्य उक्तत्वात् इदं सर्वप्रापि लिङ्गम् । सर्वा गाः दोहनार्थं प्रापयति इति सर्वप्रापि । अनेन सर्वप्रापिणा लिङ्गेन यावत्स्वं उत्तरासु गोषु दोहनं ज्ञायते । इति सिद्धान्तः । **के.**

*** उत्तरज्ञानं** चोत्पद्यमानं स्वविरुद्धस्य **पूर्वज्ञानस्य** बाधेनैवोत्पद्यते । **वि.** ६।५।१९. *** उत्तरदक्षिण-**

विहारयोः अध्वर्युभिन्नानां कर्तॄणां तन्त्रं वरुणप्रघासेषु । भा. ११।२।९।३५-४३, * उत्तरदक्षिणविहारयोः आपराग्निकानां पत्नीसंयाजानामावृत्तिः वरुणप्रघासेषु । ११।२।११।४९-५०, * **उत्तरनिमित्तः** पूर्वशब्दः, पूर्वनिमित्तश्च उत्तरशब्दः । १०।३।४।२७. * **उत्तरपदार्थप्रवृत्त्या** पूर्वपदार्थक्रमोपपत्तिः । चित्रायागे 'सारस्वतौ भवतः' इत्यत्र याज्याऽनुवाक्याऽऽदिरूपोत्तरपदार्थप्रवृत्त्या आदौ सरस्वती ततः सरस्वान् इति तन्निर्वापक्रमोपपत्तिः । भाट्ट. ५।१।७, * उत्तरपदार्थप्रवृत्तिक्रमेण पूर्वपदार्थक्रमनियमो वक्ष्यते । ५।१।५. * **उत्तरवेदिः** मध्यमायामुपसदि विहिता अग्निष्टोमे । संकर्ष. २।१।२६. * उत्तरवेदिः साद्यस्केषु शास्त्रीयसंस्कारनिरपेक्षैव गृह्यते उर्वरा भूमिः । उर्वरा सर्वसस्याढ्या । वि. १०।१।५. * उत्तरवेदिः सौमिके प्रणयने, न दार्शपौर्णमासिके । भा. ७।३।८।२०, * **उत्तरवेदिं** नोपवपन्ति वैश्वदेवपर्वणि शुनासीरीये च । ७।३।८।२०. * **उत्तरवेद्यां** अग्नीषोमीयपशुः क्रियते । के.

**उत्तरागोदोहाधिकरणम्** । उत्तरागोदोहन्यायः । उत्तरादोहाधिकरणम् । उत्तराऽधिकरणम् । उत्तराऽधिकरणन्यायः । उत्तरान्यायः । दर्शे सांनाय्यदोहे 'उत्तरा दोहयति' इति उत्तराशब्देन विद्यमानाः स्वीयास्तिसृभ्योऽन्याः सर्वा गावो ज्ञेयाः ॥

**उत्तरासु न यावत्स्वमपूर्वत्वात्** । ११।१।८।४७॥

**भाष्यम्**— सांनाय्ये दोहनं प्रकृत्य श्रूयते 'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवाग् अनन्वारभ्य उत्तरा दोहयति' इति । किमयं विधिरनुवाद इति (संशयः)। किं प्राप्तम्? अपूर्वार्थत्वात् विधिरिति । अनुवादो हि अनर्थकः स्यात् । **इति प्राप्ते, उच्यते** । (अत्र पाठान्तरम्– "दोहयति इति । तत्र विचार्यते किं तिस्रो दोहयितव्याः, उत यावत्स्वं इति । कथं संदेहः? उत्तरासां विध्यनुवादशङ्कायाम् । किं प्राप्तम्? तिस्रो दोहयितव्या इति, बहुवचनश्रुतेः । तिसृषु बहुत्वलाभात्, तदुक्तं 'प्रथमं वा नियम्येत' इति । यो हि चतस्रो दोहयति, दोहयत्यसौ तिस्रः, तदनुगमात् । तिसृषु बहुत्वयोगात् । कृते च श्रुत्यर्थे चतुरादिषु कारणं नास्ति । न च फलभूयस्त्वं कारणं युक्तम् । अपिच उत्तरा दोहयति इति श्रुतिः, विसृष्टवाक् इति वाक्यं स्यात् । तस्मात् तिस्रो दोहयितव्याः इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः ।" इति )

**यावत्स्वं वा, ऽन्यविधानेनानुवादः स्यात्** । ४८ ॥

**भाष्यम्**— अनुवादः स्यात् नायं विधिः 'उत्तरा दोहयति' इति । अन्योऽत्र विधिः 'विसृष्टवागनन्वारभ्य' इति । यदि एषोऽपि विधिः स्यात् वाक्यं भिद्येत 'उत्तरा दोहयति, ताश्च अनन्वारभ्य' इति ।

**साकल्यविधानात्** । ४९ ॥

**भाष्यम्**— अथ कुतः प्राप्ते अनुवादः? साकल्यविधानात् । साकल्यमत्र विधीयते गवां दोग्धव्यानां 'नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्, कुमाराश्च न पयो लभेरन्' इति । ननु कुमाराणां पयोदानप्रतिषेधोऽयम् । नहि पयःप्रतिषेधे किंचित् दृष्टमस्ति, अदृष्टं कल्पयितव्यम् । ननु इतरत्रापि लक्षणा आश्रयणीया । बाढम् । अदृष्टार्थात् शब्दवृत्तिर्लघीयसी इति । तस्मात् साकल्यविधिर्गवां पयःप्रतिषेधेन अयं लक्षणया । ततः प्राप्ते अनुवादः ।

**बह्वर्थत्वाच्च** । ५० ॥

**भाष्यम्**— 'बहुदुग्धीन्द्राय देवेभ्यो हविः' इति च मन्त्रस्य सर्वासु दुह्यमानासु अपाक्षिकत्वं भविष्यति । बहुत्वं च शक्त्यपेक्षम् ।

**अग्निहोत्रे चाशेषवद् यवागूनियमः** । ५१ ॥

**भाष्यम्**— अग्निहोत्रे च श्रूयते, 'नास्यैतां रात्रिं पयसाऽग्निहोत्रं जुहुयात्' 'यथाऽन्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात् तादृक् तत् स्यात्, यवाग्वा जुहुयात्' इति सर्वस्य पयसः सांनाय्यार्थतां दर्शयति ।

**तथा पयःप्रतिषेधः कुमाराणाम्** । ५२ ॥

**भाष्यम्**— इति व्याख्यातम् ।

**सर्वप्रापिणाऽपि लिङ्गेन संयुज्य देवताऽभिसंयोगात्** । ५३ ॥

**भाष्यम्**— ' वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुराऽऽप्याययन्ते । अथैतर्हि देवेभ्य एवैता आप्याययन्ति ' इति, सर्वप्राप्तेरेतल्लिङ्गम् । कथम् ? या वत्सेभ्यो मनुष्येभ्यश्च पुरा आप्याययन्ते, ता एतर्हि देवेभ्य आप्याययन्तीत्याह । सर्वाश्च ता वत्सेभ्यश्च मनुष्येभ्यश्च आप्याययन्ते । तस्मात् सर्वप्राप्तेरेतल्लिङ्गम् । अतो यावत्स्वं उत्तरासु दोहनं स्यात् ।

**सोम** — ' तूष्णीमुत्तरा दोहयति ' इत्यस्य अनुवादत्वात् तिसृणां दोहे वाग्यमे विहिते सति उत्तरासु वाग्विसर्गस्य अर्थप्राप्तत्वेन ' विसृष्टवाक् ' इत्यस्यापि अनुवादत्वात् अनन्वारम्भमात्रपरं तत् वाक्यमित्याहुः । **सूत्रार्थस्तु**- उत्तरासु यावत्स्वं दोहनं अपूर्वत्वात् अप्राप्तस्यैव विध्यर्हत्वात् इति । ११।१।७.

**के**- पूर्ववैषम्यात् प्रत्युदाहरणसंगतिः ।

**वि**--'उत्तरास्तिस्र एव स्युर्यावत्स्वं वा, ऽत्र पूर्ववत् । तिस्र एव, हविःकात्स्न्यापूर्वयोर्विधितोऽन्तिमः ॥ ' ९.

**भाट्ट**— सांनाय्यदोहाधिकारे ' वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति ' इति श्रुतम् । तत्रापि पूर्ववत्तिस्र एवोत्तरा दोहयितव्याः । **न च** ' नास्यैतां रात्रिं कुमारा अपि पयो लभेरन्, नाग्निहोत्रं जुहोति ' इति वचनेन साकल्यप्रतीतेर्नात्र त्रित्वनियमः इति **वाच्यम्** । आद्यवाक्यस्य पयःप्रतिषेधपरत्वेन द्वितीयस्य तत्पर्युदासपरत्वेन च सार्थक्येन तयोः साकल्यपरत्वाभावात् । **इति प्राप्ते**, नानयोः पयःप्रतिषेधपर्युदासौ, अदृष्टार्थत्वप्रसङ्गात् अपिशब्दवैयर्थ्यप्रसङ्गाच्च । अत एव तद्बलेन साकल्येन दोहनप्रतीतेः ' उत्तरा दोहयति ' इत्ययमनुवादः अनन्वारम्भमात्रविधानार्थः । तूष्णींभावस्य मन्त्रविधानाभावादेव प्राप्तत्वात्, **भाष्यकारेण** तूष्णींपदस्यापाठाच्च, ' बहुदुग्धीन्द्राय इति वाचं विसृजते ' इत्यनेन वाग्विसर्गे मन्त्रस्य विनियुक्तत्वेन तदुत्तरकालीने उत्तरादोहने वाग्विसर्गस्य प्राप्तेश्च । अतोऽत्र यावत्स्वं दोहनमिति **प्राञ्चः** । **वस्तुतस्तु**, न तावत् ' नास्यैतां ' इत्यादिना यावत्स्वं दोहनं विधीयते शब्दात् तस्याप्रतीतेः, लक्षणायां प्रमाणाभावाच्च । **न च** ' गा दोहयति ' इति सामान्यविधिना गो-त्रित्वे प्राप्ते ' नास्यैताम् ' इत्यनेन तदर्थवादेन तात्पर्यग्रहात् यावत्स्वं दोहनसिद्धेः ' उत्तरा दोहयति ' इत्यनुवादः इति **वाच्यम्** । सामान्यविधेर्मूलकारैरपि अलिखनात् । सत्त्वेऽपि वा यावत्स्वं दोहनस्य वाग्विसर्गात् पूर्वमेव प्राप्त्यापत्तौ ' उत्तरा दोहयति ' इत्यनेन वाग्विसर्गस्यापि विधौ वाक्यभेदापत्तेश्च । सामान्यविधिना हि यावत्स्वं दोहने विहिते वाग्यमदशायामेव सर्वासां दोहनापत्तिः । सर्वदोहने मन्त्रप्राप्तिप्रसङ्गश्च । यद्यपि च क्वापि दोहने मन्त्राभावः । तथापि ' हुतः स्तोकः' इति दुह्यमानाऽनुमन्त्रणस्य सर्वत्र प्राप्तिः केन वार्येत । यद्यपि च ' सा विश्वायुः, सा विश्वव्यचाः, सा विश्वकर्मा ' इत्याहवनीयानुमन्त्रणमन्त्राणां त्रयाणामेव समाम्नानात् गो-त्रयदुग्धस्य समन्त्रकं समानयनं, अन्यासां तु अमन्त्रकमित्येव विशेषः उपलभ्येत । तथापि दुह्यमानाऽनुमन्त्रणस्य सर्वत्र प्रसक्तौ पुनस्तूष्णींभावविधाने वाक्यभेदस्तदवस्थ: एव । अतोऽत्र गोत्रयदोहनोत्तरकालतावाग्विसर्गानन्वारम्भतूष्णींभावविशिष्टोत्तरादोहनमेव विधीयते । तत्र च पूर्वाधिकरणवत् त्रित्वे प्राप्ते एतदर्थवादेनैव ' नास्यैताम् ' इत्यनेन तात्पर्यग्रहात् न त्रित्वनियमः । अत एव ' गा दोहयति ' इति विधिसत्त्वे तेन गोमात्रनियमात् न महिष्यादिप्रसक्तिः ; अत एव च ' उत्तरा दोहयति ' इत्यनेन बहुत्वनियमात् नैकद्विगोदोहनेऽपि शास्त्रार्थसिद्धिः । तत्सिद्धं नात्र त्रित्वनियमः । ११।१।७.

**मण्डन**-- ' न तूत्तरादोहविधौ त्रिसंख्या । '

**शंकर**-- ' उत्तरादोहने न तत् । ' तत् त्रित्वम् ।

* **उत्तराग्रन्थः** सामगानाम् । सामगानां ऋक्पाठाय द्वौ ग्रन्थौ विद्येते छन्दः उत्तरा चेति । तत्र छन्दोनामके ग्रन्थे नानाविधानां साम्नां योनिभूता एव ऋचः पठिताः । उत्तराग्रन्थे तृचात्मकानि सूक्तानि पठितानि । एकस्मिंस्तृचे छन्दोगता योनिः ऋक् प्रथमा, इतरे द्वे उत्तरे । तत्र छन्दोग्रन्थस्य योनिग्रन्थः इति अध्यापकसमाख्या । इतरस्य तु उत्तराग्रन्थः इति समाख्या । वि. ९।२।५.

* **उत्तराग्रन्थपठितयोः** बृहत्योरेव त्रैशोकसाम्नो गानम् । **भा.** ९।२।५।२१-२४ वर्णकं २.

* **उत्तराङ्गप्रतिषेधः** पर्यग्निकरणान्ताङ्गरीतिविधानेन । अश्वमेधे परस्वद्यागे । **भा.** ९।४।१३।५१–५५.

* **उत्तराऽऽदौ** एकारे एव आईभावः । **भाट्ट.** ९।२।८.

* **उत्तराऽधिकरणन्यायेन** ( ११।१।९।४७–५३ ) यावत् प्रथमाऽन्तं ( आयुर्यज्ञेन कल्पतां इत्यादौ ) क्लृप्तिभेदः इति न कपिञ्जलाधिकरणन्यायेन त्रित्वमात्रपर्यवसानाशङ्का । **कौ.** २।१।१६।४८ पृ. १२८.

* इष्यते च **उत्तरान्यायेन** प्रमाणान्तरसत्त्वे अन्यत्रापि कपिञ्जलाधिकरणन्यायबाधः । यथा 'आग्नेयैः सूक्तैरिष्टका उपदधाति' इत्यत्र यावदिष्टकं आग्नेयसूक्तग्रहणं, न तु तत्र कपिञ्जलाधिकरणन्यायप्रवृत्तिः । **भाट्ट.** १०।६।१८, * दीक्षाहुतीर्जुहोति । अत्र बहुवचनात् संख्यया कर्मभेदः । मन्त्रषट्कामनानाच्च उत्तरान्यायेन कर्मषट्कावगतेः न कपिञ्जलाधिकरणन्यायः । १०।३।४.

* **उत्तरार्धं** ( पुरोडाशादेः ) त्यागं प्रति गुणः, प्रक्षेपांशं प्रति प्रधानम् । **भाट्ट.** ४।१।१३. * **उत्तरार्धात्** स्विष्टकृदवदातव्यम् । **भा.** ३।५।४।१७. * **उत्तरार्धस्य** अवयविनो वा हविषः स्विष्टकृत्प्रक्षेपः न प्रयोजकः, आज्यप्रक्षेपस्य तु प्रयोजकः । दर्शपूर्णमासयोः । **भाट्ट.** ४।१।१३.

**उत्तरार्धन्यायः** । दर्शपूर्णमासयोः पुरोडाशः न स्विष्टकृत्प्रयुक्तः ॥

**एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् । ४।१।१३।२८ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'उत्तरार्धात् स्विष्टकृते समवद्यति' इति । तत्र संदेहः किं पुरोडाशस्य आग्नेययागः प्रयोजकः स्विष्टकृत् अप्रयोजकः, उत उभयमिति । किं प्राप्तम् ? 'एकनिष्पत्तेः सर्वं समं स्यात्' इति । **एवं प्राप्ते, ब्रूमः** । एकदेशद्रव्यश्च एवंजातीयकः अप्रयोजको भवेत् । कुतः ? विद्यमानसंयोगात् । न एकदेशकर्म अवयविनं प्रयुङ्क्ते । विद्यमानस्य अवयविनः एकदेश उपादातव्यः इति तत्रार्थो भवति, न अवयविनमुपाददीत इति । यथा 'इक्षुखण्डमस्मै प्रयच्छ' 'मोदकशकलमस्मै प्रयच्छ' इति न इक्षुमुपाददीत इति गम्यते । सतः इक्षोः खण्डमुपाददीत, सतो मोदकात् शकलमुपाददीत इति ( तु गम्यते ) । तस्मात् अन्यार्थं द्रव्यं, तस्य उत्तरार्धादवदेयम् । अस्ति च अग्न्यर्थः पुरोडाशः । तस्मात् स्विष्टकृत् अप्रयोजक इति ।

**निर्देशात् तस्यान्यदर्थादिति चेत् । २९ ॥**

**भाष्यम्**— इति चेत् पश्यसि । अप्रयोजकः पुरोडाशस्य स्विष्टकृत् इति, नैतदेवम् । अग्निं प्रति निर्देशात् तस्य पुरोडाशस्य । स्विष्टकृदर्थं अन्यः पुरोडाश उत्पादयितव्यः, यस्योत्तरार्धात् स्विष्टकृदिज्यते । तस्य अग्नये संकल्पितस्य नेष्टे यजमानः, कथमसौ तत् अन्यस्यै देवतायै दद्यात् । कथं अग्निं प्रति निर्देश इति ? इदं श्रूयते 'अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन्, ते यज्ञवास्तु अभ्यायन्, ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्, तमब्रुवन् इन्द्राय ध्रियस्व, बृहस्पतये ध्रियस्व, आदित्याय ध्रियस्व, स नाध्रियत । तमब्रुवन् अग्नये ध्रियस्वेति, सोऽध्रियत । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । तस्मात् तेन स्विष्टकृतो न संबन्धः । एवं चेत् तस्मादन्यत् द्रव्यं अर्थादुत्पादयितव्यम् । नहि अनुत्पन्नस्य द्रव्यस्य उत्तरार्धो भवतीति ।

**टुप्**— अग्नये सकलस्य निर्देशात् तस्योत्तरार्धः कथमन्येन युज्यते । तस्मात् अर्थात् अन्यत् द्रव्यं उत्पाद्यम् । तस्योत्तरार्धात् स्विष्टकृदिज्या ।

**न, शेषसंनिधानात् । ३० ॥**

**भाष्यम्**— नैतदेवम् । संनिहितो हि शेषः । यस्मिन् अनुत्पाद्यमाने अर्थो न सिध्यति, सः अर्थादुत्पाद्यते । संनिहिते च शेषे सति सिध्यति उत्तरार्धात् ग्रहणम् । तस्मात् न अर्थात् द्रव्यमुत्पादयितव्यम् । यदेव अन्यार्थं द्रव्यं संनिहितं, तस्यैव उत्तरार्धात् ग्रहीतव्यम् । उत्तरार्धमात्रं हि स्विष्टकृते श्रूयते, न अमुष्य द्रव्यस्येति, न चैतावता व्यवहारो भवति । सर्वो हि कस्य चित् उत्तरार्धः । स एष संनिहितमपेक्षते, संनिहितं च परार्थम् । तस्मात् परार्थात् द्रव्यात् स्विष्टकृदिज्या । अतश्च अप्रयोजिकेति । **यदुक्तं** अनीशानेन न शक्यं दातुमिति, **तदुच्यते** ।

वाचनिक एपः शेषप्रतिपादनार्थं उत्सर्गः । स शक्यः कर्तुम् । दानं हि उत्सर्गपूर्वकः परस्य स्वत्वसंबन्धः । न च शक्यः अनीशानेन ।

**टुप्—** उत्तरार्धात् इति शेषश्रुत्यन्यथाऽनुपपत्त्या शेषिणं प्रयुङ्क्ते । स च अग्निप्रयुक्तः शेषी अस्ति । न च एवं श्रूयते पुरोडाशस्य उत्तरार्धात् इति । तस्मात् परप्रयुक्तद्रव्यनिष्पाद्यत्वात् पुरोडाशोत्तरार्धयोः अप्रयोजकः ।

**कर्मकार्यात् । ३१ ॥**

**भाष्यम्—** कर्मनिमित्तश्च स्विष्टकृतो भाग इति श्रूयते । कथम्? 'देवा वै स्विष्टकृतमब्रुवन्, हव्यं नो वहेति । सोऽब्रवीत् वरं वृणै भागो मेऽस्त्विति । वृणीष्वेत्यब्रुवन् । सोऽब्रबीत् उत्तरार्धादेव मह्यं सकृत्स-कृत् अवद्यात्' इति । कर्म कुर्वतो भागोऽयं उत्तरा-र्धात् इति स्तुतिर्भवति । यदि आग्नेयस्य उत्तरार्धात् इत्युच्यते, ततोऽस्ति कर्मार्थेन भागेन सादृश्यमिदं, तत् आग्नेयं हव्यं, यत् किल वहसीति । तत्र सति सादृश्ये स्तुतिरुपपद्यते । प्रयोजकत्वे च असति सादृश्ये स्तुति-सामञ्जस्यं न स्यात् । तस्मात् अप्रयोजकः पुरोडाशस्य स्विष्टकृद्याग इति ।

**लिङ्गदर्शनाच्च । ३२ ॥**

**भाष्यम्—** लिङ्गमपि भवति 'तद् यत् सर्वेभ्यो हविर्भ्यः समवद्यति, तस्मात् इदमुदरे विश्वरूपमन्नं समवधीयते' इति । यदि परार्थात् द्रव्यात् संनिहिता-दिज्यते, तदा तत्संनिधानाविशेषात् सर्वेभ्योऽवदीयते इत्युपपद्यते । प्रयोजकत्वे तु एकस्मादेव अवदीयेत । तस्मादपि अप्रयोजकः । तथा इदमपरं लिङ्गं 'शेषा-दिडामवद्यति' 'शेषात् स्विष्टकृतं यजति' इति । ननु अयं विधिः स्यात् । नेति ब्रूमः । नात्र विधिविभक्तिः । वर्तमानापदेशो हि अयमिति ।

**शा—** '**नाग्न्याद्यर्थस्य हविषो देवताऽन्तर-संगतिः । कृत्वा ह्यन्यद्धविस्तस्मादवद्येतोत्तरा-र्धतः ॥**' ( स्विष्टकृतं अवद्येत् इति प्राप्ते, ) उच्यते । '**उत्तरार्धादिशब्दानां साकाङ्क्षार्थाभिधायिनाम् । नापेक्षणीयसंबन्धात् प्रागर्थोऽध्यवसीयते ॥**' अन्यार्थस्याप्यन्यसंबन्धो वचनात् प्रतिपत्तित्वाच्च अवि-रुद्धः ( तस्मात् अग्न्याद्यर्थादेव हविषः उत्तरार्धात् स्विष्टकृत् ) ।

**सोम—** पूर्वत्र हृदयाद्यर्थस्य पशोः शकृल्लोहित-ग्रहणसंभवात् तस्याप्रयोजकत्वेऽपि इह प्रकृतपुरोडाशो-त्तरार्धग्रहणासंभवात् स्विष्टकृतः प्रयोजकत्वं इति प्रत्यवस्थानात् **संगतिः** । सर्वप्रदानाधिकरणोक्त-रीत्या ( ३।४।१४ ) कृत्स्नस्य पुरोडाशस्य आग्नेयता-करणात् यजमानस्य तत्र स्वामित्वाभावेन तस्य देवताऽ-न्तरोद्देशेन त्यागायोगात् तदर्थं ( स्विष्टकृदर्थं ) पुरोडा-शान्तरं संपाद्य तस्योत्तरार्धात् स्विष्टकृत् यष्टव्यः । इडाऽऽदौ तु देवन्ताऽन्तरसंगत्यभावात् प्रकृतग्रहणं न दुष्यति । **न च** पुरोडाशान्तरग्रहणे 'शेषात् स्विष्टकृतोऽ-वद्यति' इति शेषशब्दविरोधः । ( इति **वाच्यम्** ) 'आज्येन शेषं संस्थापयति' इत्यत्र कर्मान्तरे इव शेष-शब्दस्य पुरोडाशान्तरेऽपि उपपत्तेः इति **पूर्वः पक्षः** । यदि प्रकृतसंबन्धमनपेक्ष्यैव 'उत्तरार्धात्' इति वाक्यं स्वार्थ-बोधनक्षमं स्यात्, तदा द्रव्यान्तरप्रयोजकत्वं स्यात् । न त्वेतदस्ति । उत्तरार्धशब्दस्य सापेक्षतया अस्योत्तरार्धात् इति संबध्य ज्ञाने वाक्यार्थबोधापर्यवसानात् । एवं च 'कस्य' इत्यपेक्षायां संनिहिताग्नेयस्य इत्येवं उत्तरार्धवाक्यं प्रकृत-संबन्ध्युत्तरार्धमेव अवलम्बते इति न पुरोडाशान्तरप्रयुक्तेः अवकाशः इति **सिद्धान्तः** । **सूत्रार्थस्तु—** एकदेशद्रव्यकं स्विष्टकृदादि कर्म अप्रयोजकं कर्मोत्पत्तिदशायामेव विद्य-मानेन आग्नेयादिपुरोडाशादिना संबन्धात् इति ।

**वि—** 'प्रयोजकः स्विष्टकृत् किं पुरोडाशोत्तरार्धयोः । यद्वा प्रयुक्तोपजीवी स्या, दाद्यः स्वस्य सिद्धये ॥, उत्तरार्धेतिशब्दस्य प्रकृताकाङ्क्षणे सति । अग्न्याद्यर्थं पुरोडाशमुपजीव्यैव वर्तताम् ॥'

**भाट्ट—** यत्र 'उत्तरार्धात् स्विष्टकृते समवद्यति' इत्यादौ न द्वितीयानिर्देशः तत्र प्रतिपत्तित्वे प्रमाणाभावाद-पादानत्वेन श्रुतस्योत्तरार्धस्य यागं प्रति गुणत्वादुत्तरार्धस्य तावद्यागः प्रयोजको भवत्येव । तस्य च ससंबन्धिकत्वेन स्वप्रतिसंबन्धियत्किंचिदवयव्याक्षेपकत्वं सुलभमेव । न च प्रकृतपुरोडाशरूपावयविसत्त्वे न स्वतन्त्राक्षेपकत्वं, प्रकृतस्य

स्वकार्ये सर्वस्य विनियुक्तत्वेन अन्यत्र विनियोगायोगात् । **न च** तस्य प्रतिपत्तिसापेक्षत्वात् प्रक्षेपांशेनास्य प्रतिपत्तिकर्मत्वं **शङ्क्यम्** । प्रक्षेपांशस्यापि आग्नेयादि-प्रक्षेपवत् स्वयागाङ्गत्वेनैव प्रयोजनानपेक्षत्वात्, उत्तरार्धस्य अंशभेदेनापि गुणत्वप्रधानत्वयोरङ्गीकारे वैरूप्यप्रसङ्गाच्च । प्रधानमात्रत्वस्वीकारेऽपि लक्षणायास्तावत् अनिवारणाच्च । अतः सिद्धं स्विष्टकृद्यागः अर्थकर्मैव प्रयाजादिवत् सन् उत्तरार्धतदवयविनोः प्रयोजकः । **इति प्राप्ते**, यद्यपि तावदर्थकर्मैव स्यात्, तथापि ससंबन्धिकत्वात् प्रतिसंबन्ध्यपेक्षायां, यावत्प्रकृतप्रतिसंबन्धिलाभः, तावन्नान्याक्षेपकत्वं, **गौरवात्** । अस्ति च प्रकृते प्रतिपत्त्यपेक्षः शेषः । अतस्तदुपजीवकत्वमेव । अत एव 'शेषात्स्विष्टकृते' इत्यपि लिङ्गमुपपद्यते । एवं चोत्तरार्धस्य त्यागं प्रति गुणत्वेन विनियुक्तस्यापि प्रधानगतप्रतिपत्त्यपेक्षाऽनुरोधेन वाक्यान्तरकल्पनया प्रक्षेपांशं प्रति प्राधान्येऽपि न क्षतिः । श्रुतयागविधिनाऽपि धारणप्रयोजकत्वकल्पनागौरवभिया तदनुमितेश्च । अत एव अनुमितप्रतिपत्तेरेव धारणप्रयोजकत्वादिकल्पनादोषो 'नानुमिते ह्यसौ' इति न्यायात्, अनुमानस्य फलमुखत्वाच्च । अत एव 'सर्वाणि हवींषि समवद्यति' इति लिङ्गमपि प्राधान्यादुपपन्नम् । अत एव स्विष्टकृत्प्रक्षेपोऽपि प्रधानाङ्गभूतस्तत्प्रयुक्तः एव सन् स्विष्टकृद्यागस्याप्यङ्गं तत्प्रयुक्तश्च, प्रतिपाद्यत्वाविशेषात् । अतः स नावयविनो नोत्तरार्धस्य वा प्रयोजकः । आज्यप्रक्षेपस्य तु प्रयोजको भवत्येवेति सिद्धम् ।

**मण्डन**— 'प्रयोक्ता स्विष्टकृन्नेष्टः ।'

**शंकर**— 'आग्नेयादेः स्विष्टकृच्च ।' अप्रयोजकः ।

* **उत्तरार्धन्यायोऽपि** अवघाते न प्रवर्तते व्रीहिशब्दस्य ससंबन्धिकत्वाभावात् । **कौ.** २।१।४।९ पृ. ६९.

* **उत्तरावर्णवशेन** रथंतरं गातव्यं, न योनिवर्णवशेन । **भा.** ९।२।९।३२-३३. * **उत्तराशब्दो** रूढ्या ग्रन्थे प्रसिद्धः, उत्तरा वर्तते, उत्तराः अध्यापयामः इति । **टुप्.** ९।२।५।२३.

**उत्तरोत्तरं मुनीनां प्रामाण्यं इति न्यायेन** वाग्योगवित् इत्यादीनां पुरुषार्थपरत्वेऽपि कात्यायनोक्तत्वेन पतञ्जल्युक्तानियमस्मृतेरेव प्रमाणत्वावगमात् वाग्योगवित् इत्यादीनामेव अपस्मृतित्वापत्तिः (इति केचित्पक्षे दोषः) । **कौ.** १।३।८।२७ पृ. १३१.

* '**उत्तिष्ठन्नन्वाह** अग्नीदग्नीन् विहर' इति । तत्र उत्तिष्ठन् इति मन्त्रे कालार्थः संयोगः, न तु उत्थाने मन्त्रविधिः । ज्योतिष्टोमे । (उत्थानवाग्विसर्गाधिकरणे द्रष्टव्यम्) । **भा.** ३।२।४।१०. * 'उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर' 'व्रतं कृणुतेति वाचं विसृजते' इति च । तत्र ज्योतिष्टोमे अग्निविहरणप्रैषे 'अग्नीदग्नीन् विहर' इति मन्त्रोऽन्वितः । पयःपानरूपव्रतसंपादनप्रैषे च 'व्रतं कृणुत' इति मन्त्रोऽन्वितः । न तु उत्थाने वाग्विमोके च । अतः असमर्थयोर्विनियोगासंभवात् अगत्या लक्षणामपि अङ्गीकृत्य कालो विधीयते । **वि.** ३।२।४.

**उत्थानवाग्विसर्गाधिकरणम्** । उत्थानाधिकरणम् । वाग्विसर्गाधिकरणम् । उत्थानवाग्विसर्गयोः कालार्थः संयोगः । अग्निविहरणादिमन्त्रविनियोगाधिकरणम् ॥

**तथोत्थानविसर्जने** । ३।२।४।१०॥

**भाष्यम्**—ज्योतिष्टोमे श्रूयते 'उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर' इति । तथा 'व्रतं कृणुतेति वाचं विसृजति' इति । तत्र संदेहः किमुत्थानं वाग्विसर्जनं च प्रति मन्त्रयोरुपदेशः, उत कालार्थः संयोगः इति । अत्र पूर्वाधिकरणन्यायोऽतिदिश्यते । यस्तत्र पूर्वः पक्षः, स इह पूर्वः पक्षः । यस्तत्र सिद्धान्तः, स इह सिद्धान्तः । अग्नीदग्नीन् इत्येवं उत्तिष्ठन् अन्वाह इति, व्रतं कृणुत इत्येवं वाचं विसृजति इति पूर्वः पक्षः । लक्षणाभावात् उत्तिष्ठन् अन्वाह इति सिद्धान्ते संबन्धः । व्रतं कृणुत इत्युच्यमाने वाचं विसृजति इति वाक्येन पूर्वः पक्षः, लिङ्गेन सिद्धान्तः । यद्यपि च शक्यते उत्थानक्रिया अग्नीदग्नीन् विहर इति वक्तुम् । उत्थानेन अग्निरिध्यते, वह्निश्च विह्रियते इति । व्रतं कृणुत इति च वागभिधानम् । तथापि अदृष्टार्थं वचनं भवति, इति न मन्त्रयोः उत्थानविसर्जनार्थता कल्प्येत । कल्प्यमानायां च मन्त्रान्तरं विहितं बाध्येत 'याः पशूनामृषभो वाचः' इति । अपिच उत्थानवाग्विसर्गौ प्रति मन्त्रौ विधीयमानौ

अदृष्टार्थौ स्याताम्। प्रेषणे तु दृष्टार्थौ। तस्मात् लक्षणैवात्र न्याय्या।

**वा**— अतिदेशसूत्रत्वात् सर्वे पूर्वसूत्रार्था योजयितव्याः। पूर्वत्र अनुवादे कालार्थत्वमुक्तम्। इदानीं विधानार्थेऽपि इति विशेषः। त्रिरभ्यासपरत्वाच्च तत्र मन्त्रोपदेशो न जातः, न त्विह तथा इति पूर्वपक्षे बीजम्। **उत्थानेनाग्निरिध्यते** इत्यनेन ( भाष्येण ) उत्थानं प्रकाश्यते इति प्रतिपाद्यते। यदा अयं ( मन्त्रः ) उत्थानाङ्गं भवति, तदा प्रैषाभावात् पराधिकारो नास्ति ( प्रैषाधिकरणेन ३।८।११ ) इति प्राप्तकालतायां लोटं कल्पयित्वा अध्वर्युकर्तृकाण्येव अग्निविहरणादीनि भवेयुः। अतश्च तदीयमुत्थानं तेषां कर्तृत्वेन विवक्ष्यमाणं 'अग्नीत्' इत्यादिभिः शक्यं प्रकाशयितुम्। एवं 'व्रतं कृणुत' इति वागभिधानं 'वाक् तृप्यतु' इतिवत् आस्याधारत्वाद्वाचो यत् आस्यस्य व्रतकरणे कर्तृत्वं तत् शक्यं वाच्येव उपचरितुं, तत्र व्रतं कर्तुं प्राप्तः कालः इति। ताल्वाद्यधिष्ठानभेदाच्च बहुवचनम्। 'गुणाभावात्' ( ३।२।३।७ ) मन्त्रगुणाभावात् इत्येतदेव अदृष्टार्थत्वप्रसङ्गमुखेनोत्तरम्। नहि मध्यमपुरुषः परप्रेषणमन्तरेणोपपद्यते इति वक्ष्यामः। ( " न चेदं युगपद्विवक्षितुं शक्यते 'पदार्थस्य प्राप्तः कालः तव च' इति, भिद्येत हि तथा वाक्यं " इति प्रैषाधिकरणभाष्ये [ ३।८।१०।२१ पृ. ११२६ ] प्रैषं विना मध्यमपुरुषायोगस्य वक्ष्यमाणत्वात् न प्राप्तकालार्थता युक्ता। सु. पृ. १०९८ ) लिङ्गमपि किंचिदन्वेष्टव्यम् ( **सु**— लिङ्गान्तराभावेऽपि गुणाभावसूत्रं अग्नीद्व्रतमन्त्रयोः मुख्यवृत्त्या उत्थानवाग्विसर्गप्रकाशनासामर्थ्येऽपि गौणसामर्थ्यसद्भावात् श्रौतविनियोगोपपत्त्यां शङ्कानिरासार्थत्वेन 'लोड्व्यतिरिक्तस्य मन्त्रभागस्य सामर्थ्यसंभवेऽपि लोडुक्तस्य प्रैषविषयत्वलक्षणस्य गुणस्य उत्थानवाग्विसर्गयोरभावात्' इत्येवं व्याख्याय "आमन्त्रणादिसामर्थ्ये लिङ्गमाश्रीयते तदा" इत्यनेन न्यायेन [ वा. ३।२।३।६ पृ. ७५७ ] 'अग्नीत्' इत्यामन्त्रणसामर्थ्यं च लिङ्गसूत्रार्थत्वेन व्याख्येयं इत्याशयः। इति )। विधिकोपश्च वाग्विसर्जने 'वाः पशूनामृषभो वाचः' इति मन्त्रान्तराम्नानात्।

**सोम**—किमनयोर्मन्त्रयोः गौणे उत्थाने वाग्विसर्जने च विनियोगः, किंवा मुख्ये अग्निविहरणबर्हिःस्तरणपुरोडाशाभिघारणप्रेषणे व्रतकरणप्रेषणे च विनियोगः, उत्थानवाग्विसर्गाभ्यां तु मन्त्रयोः कालार्थः संयोगः इति। तत्रोत्थाने वाग्विसर्जने च मन्त्रयोर्वचनेन विनियोगात् 'वचनात् त्वयथार्थे' ( ३।२।२।३ ) इति पूर्वतराधिकरणन्यायेन गौणेऽर्थे विनियोगः। एवं च बहिष्पवमानदेशगतेनाध्वर्युणा उत्थानं विना अग्नीन्धनस्य अग्निविहरणादेश्च कर्तुमशक्यतया अग्नीन्धनादिसाधनत्वेन गौण्या वृत्त्या उत्थानमेव अग्नीच्छब्देन 'अग्नीन् विहर' इत्यादिना चाभिधीयते। तथा 'कृवि हिंसायाम्' इति धातोः कृणुतशब्दं निष्पाद्य भक्षणस्यापि हिंसारूपत्वाश्रयणेन 'व्रतं पयोयवाग्वादिकं कृणुत भक्षयत' इत्येवं विसर्जनकर्मभूतवागेव अनेन मन्त्रेण कर्तृत्वोपचारादभिधीयते, ताल्वाद्यधिष्ठानभेदाच्च तत्र बहुवचनोपपत्तेः, इति पूर्वः पक्षः। ऐन्द्रीवत् इह गौणेऽर्थे मन्त्रविनियोजकश्रुत्यभावात् समभिव्याहारावगतसंबन्धस्य कालार्थसंयोगत्वेनापि उपपत्तेः, लिङ्गेन मुख्ये एव विनियोगः इति सिद्धान्तः। **सूत्रार्थस्तु**— उत्थानविसर्जने अपि आह्वानवत् न मन्त्रप्रकाश्ये इति।

**वि**— 'उत्तिष्ठन् प्रवदेदग्नीदग्नीनित्यादिकं तथा। कृणुत व्रतमित्येवं पठन् वाचं विमुञ्चति ॥ मन्त्रौ विधेयौ कालो वा, मन्त्रावुत्थानमोकयोः। विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ ॥, मन्त्रार्थानन्वयात् तत्र तद्विधिर्नैव शक्यते। अगत्या लक्षणाऽप्यस्तु तेन कालो विधीयते ॥'

**भाट्ट**—सोमे 'उत्तिष्ठन् अन्वाह अग्नीदग्नीन् विहर' तथा 'व्रतं कृणुत इति वाचं विसृजति' दर्शपूर्णमासयोः 'प्रणीताः प्रणेष्यन् वाचं यच्छति, तां सहविष्कृता विसृजति' इति श्रुतम्। तत्रापि पूर्ववदेव मन्त्राणां मुख्येऽर्थे बिनियोगः, न तु गौणयोः उत्थानवाग्विसर्गयोः। प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनापि उपपत्तौ गौणत्वतात्पर्यग्राहकत्वाभावात्। न च

लक्षणा, शतृप्रत्ययस्य कालिकसंबन्धेन उपलक्षणार्थत्वमङ्गीकृत्य श्रुत्यैव अन्वयोपपत्तेः । अतश्च उत्थानकाले विहरणमन्त्रः पठनीयः इति कालविधिरेवायम् । व्रतं कृणुत इत्यत्र इतिकरणस्यापि मन्त्रस्वरूपमात्रपरत्वात् कालिकसंबन्धस्यैव संसर्गविधया भानोपपत्तेः न लक्षणा । हविष्कृद्वाक्ये तृतीयायास्तु वाग्यमापेक्षितावधिसमर्पकत्वेन तदेकवाक्यतोपपत्तौ वाक्यभेदे प्रमाणाभावात् इत्थंभूतलक्षणार्थतामङ्गीकृत्य कालविधिपरत्वम् । अतश्च तद्वाक्ययोः पाठक्रमावगततत्तन्मन्त्रपाठकाले वाग्विसर्गः कर्तव्यः इति सोऽपि तत्र कालविधिरेव ।

**मण्डन**— ' नोत्थातुमग्नीन् विहरेति मन्त्रः । '

**शंकर**—' वाग्विसर्गे तथैव च । ' कालं लक्षयेत् ।५.

**उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुमिति न्यायः ।** अस्यार्थः, उत्पतितोऽपि भर्जनसमये भृष्टः सन्नुत्पतितोऽपीत्यर्थः । भ्राष्ट्रकं भर्जनकारिणं भङ्क्तुं नाशयितुं शक्तः समर्थः किं ? अपि तु नेत्यर्थः । यो हि जनोऽपकर्तुमसमर्थः सन् कुप्यति, स निर्लज्ज एवेत्यर्थविवक्षायामयं प्रचरतीति । **साहस्री**.७९६.

* **उत्पत्तिः** अन्यत्र, विनियोगोऽन्यत्र, एवं सति कतरवेदसंयोगो भवतु इति चिन्ता । उत्पत्तिसंयोगे विकल्पे वा प्राप्ते, विनियोगवेदसंयोगः प्राधान्यात् इत्युत्तरम् । **वा**. ३।३।२।९ पृ. ८१४, * **उत्पत्तिः** कर्मणः सर्वत्र उपदेशेन गम्यते, नातिदेशेन । नहि अनुत्पन्ने कर्मणि कथंभावो भवति, न च तस्मिन्नसति अतिदेशः प्रवर्तते । २।२।७।२१ पृ. ५२५. * **उत्पत्तिं** विधिविपरिवृत्तिरेव प्रतिबध्नाति, न स्वरूपविपरिवृत्तिः । स्वरूपप्राप्तावपि दध्यादिवत् विधेयत्वोपपत्तेः । साक्षात् विधिविपरिवृत्तिः प्रतिषेधिका, नान्यद्वारा । **सु**. पृ. ९५५. * **उत्पत्तौ** एव प्रकरणाभिव्यक्तिः । पृ. ८५५.

**उत्पत्तौ तु बहुश्रुतेः** । ३।७।११।२६ ॥

चमसाध्वर्यूणां संख्या किं अनियमेन का चित् ग्राह्या, नियता वा का चित् इति विचारे सिद्धान्तमाह । तुशब्देन चशब्दस्थानीयेन चमसाध्वर्यवः इति पदं पूर्वसूत्रादनुकृष्यते ; बहुपदं च बुद्ध्या पृथक् कृत्वा आवर्त्य प्रथमाबहुवचनान्तेन विपरिणमय्य योजनीयम् । तथा च चमसाध्वर्यवः बहवः एव स्युः, न तु अनियमः । कुतः ? उत्पत्तौ ' चमसाध्वर्यून् वृणीते ' इति उत्पत्तिविधौ बहुश्रुतेः बहुत्वश्रुतेः । यद्यपि उद्देश्यगतं बहुत्वमविवक्षितं भवति, तथापि ऋत्वङ्गतया उपादेयत्वात् विवक्षितमेव बहुत्वम् । वरणाङ्गतया तु उद्देश्यत्वम् । तथाच चमसाध्वर्यवो बहवः स्युः ! **के**.

**उत्पत्तौ नित्यसंयोगात्** । ६।१।१०।४२ ॥

यस्य अङ्गवैकल्यं प्रतिसमाधातुं नैव शक्यं, तस्य अप्रतिसमाधेयाङ्गवैकल्यस्य पुरुषस्य आधानादिकर्माधिकारो नास्त्येव इति सिद्धान्तमाह । उत्पत्तौ उत्पत्तिवेलायामेव योऽन्धादिः तस्य अन्धत्वादेः नित्यसंयोगात् अपरिहार्यत्वात् नास्त्यधिकारः इति सुबोधिनी । अङ्गहीन इत्यनुवर्तते । यस्तावदुत्पत्तौ एव अङ्गविकलः जात्यन्धादिः स नाधिक्रियते, नित्यसंयोगात् आज्यावेक्षणादिभिरङ्गैः क्रतोः नित्यसंबन्धावगमात् । अन्धस्तु आज्यावेक्षणं, पङ्गुः विष्णुक्रमान्, बधिरः प्रैषादिश्रवणं, कर्तुं नैव शक्नुयात् । तस्मात् अप्रतिसमाधेयाङ्गवैकल्यस्य नाधिकारः कर्मसु इति सिद्धान्तः । **याज्ञिकास्तु** तस्यापि आधानं नित्यं मन्यन्ते । **के**.

**उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्, तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात्** । ४।२।७।१९ ॥

अत्र प्रतिपत्तिकर्मणो लक्षणमुच्यते, तेन च कृष्णविषाणायाः चात्वाले प्रासनस्य प्रतिपत्तित्वमुच्यते । उत्पत्तौ उत्पत्तिविधौ ' कृष्णविषाणया कण्डूयति ' इत्यादौ यत् कृष्णविषाणादिरूपं द्रव्यं येन कण्डूयनादिना संयुक्तं, तत् विषाणादि तदर्थं तच्छेषभूतं कण्डूयनशेषभूतमेव ज्ञेयम् । श्रुतिहेतुत्वात् शेषशेषिभावस्य श्रुतिहेतुकत्वात् विषाणया इति तृतीयाश्रुत्या शेषत्वस्य बोधितत्वात् । अथ तस्य विषाणादिरूपस्य द्रव्यस्य अर्थान्तरगमने अन्येनार्थेन दक्षिणादानोत्तरं चात्वाले प्रासनरूपया क्रियया गमने संबन्धे विहिते सति शेषत्वात् विषाणायाः प्रासनरूपे क्रियाऽन्तरे गुणभूतत्वात् प्रतिपत्तिः स्यात् विषाणाप्रासनं प्रतिपत्तिः स्यात् । एवं अनेन सूत्रेण साक्षात् प्रतिपत्ति-

लक्षणमुक्तम् । अधिकरणार्थस्तु कण्डूयनं प्रासनं चेति उभयं विषाणायाः प्रयोजकं इति पूर्वः पक्षः । कण्डूयनं प्रयोजकं, प्रासनं तु प्रतिपत्तिः इति सिद्धान्तः । 'कृष्णविषाणया कण्डूयति' इति कण्डूयने तृतीयानिर्देशात् विषाणायाः गुणभावः । 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति प्रासने द्वितीयानिर्देशात् अन्यत्र कृतार्थत्वात् प्राधान्यमिति । तथा च चात्वाले कृष्णविषाणाप्रासनं प्रतिपत्तिः । **के.**

* उत्पत्तौ येन संयुक्तं इति चतुर्थे वक्ष्यमाणस्य प्रतिपत्तिकर्मत्वकारणस्य कृतकार्यकत्वस्य सर्वेष्वपि हविःशेषेषु अविशेषात् । **कु.** ३।४।१९।५०, * उत्पत्तौ येन संयुक्तं इत्यधिकरणे स्विष्टकृदादीनां प्रतिपत्तिरूपसंस्कारकर्मत्वं व्यवस्थापयिष्यते । ३।४।१९।४८. * ('उत्पत्तौ येन संयुक्तं तत्र तदर्थं तच्छ्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात्' इति पाठोऽत्र) 'शृते चरुं' 'दधश्चरुं' इत्यत्रापि प्रतिपत्तिः स्यात् । कुतः पूर्ववत्त्वात् । अन्यपूर्वकं शृतं दधि च इन्द्रायोत्पन्नं, तस्यार्थान्तरगमनं विष्णुं शिपिविष्टं प्रति । तस्मात् तस्यापि 'उत्पत्तौ येन०' इत्यनेन न्यायेन प्रतिपत्तिः प्राप्नोति । **भा.** -१२।४।६।१५.

**⌛ उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् । १।१।७।२४ ॥**

पदार्थमूलतया वाक्यार्थप्रामाण्यं इति प्रतिपादनार्थे अस्मिन् वाक्याधिकरणे तद्भूताधिकरणापरपर्याये पूर्वपक्षसूत्रमिदम् । **के.**

( सूत्राक्षरार्थज्ञानार्थं तु अनेके ग्रन्था एव संक्षेपतः उदाह्रियन्ते ) । पदपदार्थसंबन्धस्य उत्पत्तौ वा औत्पत्तिकत्वेऽपि चोदनाः अवचनाः अप्रमाणभूताः स्युः । अर्थस्य वाक्यार्थज्ञानस्य अतन्निमित्तत्वात् तादृशसंबन्धस्य शक्तिरूपत्वे तात्पर्यरूपत्वे वा पुरुषसंबन्धापेक्षायाः दुर्निवारत्वात् । इति **कस्तूरिरङ्गाचार्याः** ।

अवचनाः इत्यस्य स्थाने रचनाः इति पाठः । उत्पत्तौ पदार्थज्ञानोत्पत्तौ सत्यां वाक्यवाक्यार्थयोः संबन्धाः रचनाः पुरुषकल्पिताः स्युः । अर्थस्य वाक्यार्थज्ञानस्य अतत् पदार्थज्ञानमिन्नं निमित्तं कारणं यस्य तत्त्वात् । नहि पदार्थ एव वाक्यार्थः । इति **सुबोधिनी** ।

वाशब्दः प्रत्यवस्थाने । उत्पद्यते अवगम्यते इति उत्पत्तिः वाक्यार्थो धर्मः अलौकिकश्रेयःसाधनताकयागादिभावनाऽऽत्मकः । तत्र विषये चोदनाः अवचनाः । करणे ल्युट् । अप्रमाणानि । अर्थस्य धर्मावबोधलक्षणकार्यस्य अतन्निमित्तत्वात् चोदनाहेतुकत्वाभावात् । चोदनावाक्यस्य धर्मावबोधे असामर्थ्यात् । **कु.**

उत्पत्तौ चेति चकारः अप्यर्थे । शब्दार्थतत्संबन्धानां उत्पत्तौ औत्पत्तिकत्वे अपि न चोदनायाः प्रामाण्यम् । यतः अवाचकाः शब्दाः वाक्यार्थस्य । ते हि सामान्यमभिदधति, वाक्यार्थश्च विशेषरूपः । ननु पदाभिहिताः पदार्था एव वाक्यार्थं बोधयन्तु, तत्राह । अर्थस्य पदार्थस्य अतन्निमित्तत्वात् वाक्यार्थबोधनिमित्तत्वाभावात् । अथवा शब्दार्थसंबन्धानां औत्पत्तिकत्वेऽपि वेदवाक्यार्थस्य धर्मस्य अवचनाः अप्रतिपादकाः स्युः । अप्रमाणं इति यावत् । न च पदार्थानां तन्निमित्तभावः असंबन्धात् इति सूत्रार्थः । इति **सिद्धान्तचन्द्रिका** ।

उत्पत्तिः इति औत्पत्तिकं ब्रूमः शब्दलक्षणया । चकारः अप्यर्थे । प्रकृतानां शब्दार्थसंबन्धानां औत्पत्तिकत्वेऽपि वेदवाक्यार्थस्य धर्मस्य अवचनाः अप्रतिपादकाः अप्रमाणमिति यावत् । वर्णपदादीनां प्रत्येकसमुदायविकल्पितानां वाक्यार्थप्रत्ययं प्रति हेतुभावानुपपत्तेः । न च पदार्थानां तन्निमित्तभावः असंबन्धात् । तदिदमुक्तं अर्थस्य अतन्निमित्तत्वात् इति । तन्त्रेण चेदं अर्थपदं वाक्यार्थपदार्थयोः पूर्वापराभ्यां संबन्ध्य व्याख्येयम् । इति **न्यायरत्नाकरः** पृ. ८४५–८४६.

औत्पत्तिक इति उत्पत्तिपदविवरणम् । वाशब्दविवरणं यद्यपि इति । अवचनाः इत्यस्य विवरणं 'न चोदनालक्षणः' इति । इति भाष्यविवरणकाले **वैद्यनाथी** ।

**तद्भूतानां क्रियाऽर्थेन समाम्नायोऽर्थस्य निमित्तत्वात् । २५ ॥**

वाक्यस्य वाक्यार्थे संगतिग्रहणार्थं लोकसापेक्षत्वात् वेदो धर्मे न प्रमाणं इति पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्तमाह । **के.**

तद्भूतानां तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां क्रियाऽर्थेन समाम्नायः समुच्चारणं कार्यम् । नानपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यं अर्थान्तरप्रसिद्धम् । **ननु** अर्थापत्तिरस्ति, यत् पदार्थव्यतिरिक्तमर्थमवगच्छामः । न च शक्तिमन्तरेण तदवकल्पते इति । **तन्न** । अर्थस्य तन्निमित्तत्वात् । भवेदर्थापत्तिः यदि असत्यामपि शक्तौ नान्यन्निमित्तमवकल्पेत । अवगम्यते तु निमित्तम् । किं ? पदार्थाः । पदानि हि स्वंस्वं पदार्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति । **भा.**

तद्भूतानां तेषु पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन क्रियावाचकेन पदेन सह समाम्नायः सम्यक् परस्परान्वितस्वार्थबोधकत्वेन उच्चारणं भवति । अर्थस्य वाक्यार्थप्रतिपत्तेः तन्निमित्तत्वात् पदार्थप्रतिपत्तिनिमित्तकत्वात् । इति **कस्तूरिरङ्गाचार्याः ।**

तद्भूतानां सिद्धपदार्थेषु विद्यमानानां पदानां भावनाऽर्थकेन पदेन सह समाम्नायः पाठो दृश्यते । अतो वाक्यार्थबोधः संभवति । अर्थस्य वाक्यार्थबोधस्य तन्निमित्तत्वात् पदार्थोपस्थितिद्वारा पदनिमित्तकत्वात् । पदैरभिहिताः पदार्था एव वाक्यार्थं बोधयन्ति । **कु.**

**लोके संनियमात् प्रयोगसंनिकर्षः स्यात् । २६॥**

पदेभ्य एव पदार्थप्रत्ययः, पदार्थेभ्यो वाक्यार्थः इति सिद्धान्ते लौकिकवाक्यात् वैदिकवाक्यस्य वैषम्यप्रदर्शनार्थं सूत्रम् । सूत्रे लोके इत्यस्य संनिकर्षपदेन साकं संबन्धं, संनियमात् इति पदे पञ्चम्याः प्रथमात्वेन विपरिणामं, प्रयोगपदे प्रथमान्ततया पृथक्पदत्वं, संनिकर्षपदे प्रथमायाः पञ्चमीत्वेन विपरिणामं च अपेक्ष्य सूत्रं व्याख्यातं **भाष्ये** । लोके गवादिरूपस्य अर्थस्य चक्षुरादिसंनिकर्षसंभवात् चक्षुरादिना तमर्थमुपलभ्य तदर्थप्रतिपादकशब्दप्रयोगः संनियमः संनिबन्धनरूपः उपपद्यते । **वैद्यनाथी.**

लोके लौकिकशब्दे पदार्थं दृष्ट्वा पदार्थज्ञानपूर्वकं संनियमात् प्रयोगात् वेदेऽपि गुरुपरंपरया प्रयोगस्य संनिकर्षः उपपत्तिः स्यात् । **सुबोधिनी.**

लोके सन्नियमात् सतः वर्तमानात् 'प्रसिद्धपदसमवधानं अप्रसिद्धपदार्थे अपूर्वं बोधयति' इति नियमात् वेदेऽपि प्रयोगसंनिकर्षः अप्रसिद्धस्वर्गहेतुभावनावाचिपदघटितस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादेः वाक्यस्य प्रयोगात् आधुनिकानामपि अर्थावबोधसंबन्धः स्यात् । **कस्तूरि.**

लोके सन्नियमात् सति मानान्तरेण गृहीते अर्थे नियमात् प्रयोगस्य पुरुषसंबन्धः स्यात् । वेदार्थे तु नैव मानान्तरयोग्यत्वमिति भावः । **कु.**

**⌛ उत्पत्तिकालविशये कालः स्यात् वाक्यस्य तत्प्रधानत्वात् । ४।३।१५।३७ ॥**

'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' अत्र किं दर्शपूर्णमासयोरङ्गत्वेन सोमस्य विधानं, उत दर्शपूर्णमासोत्तरं स्वकाले सोमः इति केवलं सोमकालस्य विधानं इति संशये सिद्धान्तमाह । उत्पत्तिकालविशये । उत्पत्तिशब्देनात्र अङ्गत्वविधानमुच्यते । उत्पत्तेः अङ्गत्वविधानस्य सोमकालविधानस्य च विशये संशये कालः ग्रहीतव्यः स्यात् । वाक्यस्य उक्तस्य तत्प्रधानत्वात् कालप्रधानत्वात् । देवताया अश्रुतत्वात् न यागविधानपरत्वं वाक्यस्य । **के.**

*** उत्पत्तिगायत्रीणां** दाशतयीस्थानां समानयनं बृहस्पतिसवे 'गायत्रमेतदहर्भवति' इत्युक्तत्वात् । **भा.** ८।३।६।१२-३६.

**⌛ उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् । १०।८।१२।२९ ॥**

दर्शपूर्णमासयोः 'चतुरवत्तं जुहोति' इति श्रूयते । तत्र के चित् जुह्वां आज्यस्योपस्तीर्य वेद्यामासादितात् हविर्द्रव्यात् अङ्गुष्ठपर्वमात्रं द्विरवदाय पुनरुपरि आज्येनाभिघारयन्ति । तदेतत् चतुरवत्तं इति मन्यन्ते । तन्न युक्तम् । किंतु तत् चतुरवत्तं प्रधानस्यैव स्यात् । प्रधानद्रव्यादेव चतुर्वारं अवदातव्यम् । उत्पत्तितादर्थ्यात् पुरोडाशोत्पत्तेः तादर्थ्यात् होमार्थत्वात् । चतुरवदानसंस्कृतस्य प्रधानस्य होमसंयोगात् होमेन संबन्धात् होतव्यत्वात् । आज्यं उपस्तरणाभिघारणार्थं तु पुरोडाशेन अतुल्यत्वात् अधिकं स्यात् । उत्पत्तेः उपस्तरणाभिघारणोत्पत्तेः गुणभूतत्वात् पुरोडाशः प्रधानं उपस्तरणाभिघारणाज्यं तु गुणभूतम् । लोकवत् 'प्रस्थभुक् देवदत्तः' इत्युक्ते प्रस्थमिततण्डुलानामोदन एव ज्ञायते, शाकादिकं तु

अधिकं भवति तद्वत् । तस्मात् हविषश्चतुर्वारमवदानं उपस्तरणाभिघारणे तु अधिके इति पूर्वः पक्षः ।

**तत्संस्कारश्रुतेश्च । ३० ॥**

प्रधानात् अवत्तस्य तस्य हविषः उपस्तरणाभिघारणाभ्यां संस्कारस्य श्रवणाच्च प्रधानादेव चतुर्वारमवदेयमिति निश्चीयते । 'यदुपस्तृणाति (जुह्वां) अभिघारयति अमृताहुतिमेवैनां करोति' इति श्रुतिः अवत्तस्य अमृताहुतित्वनिष्पादनोक्त्या संस्कारमाह । इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**ताभ्यां वा सह, स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् । ३१ ॥**

न प्रधानात् चतुर्वारमवदानं इति वाशब्दार्थः । किंतु ताभ्यां उपस्तरणाभिघारणाभ्यां सह प्रधानात् द्विरवदाय चतुरवत्तं कर्तव्यम् । यत् कारणं, स्विष्टकृतः सकृत्त्वे सकृदवदाने विहिते सति द्विरभिघारणेन तदाप्तिवचनात् तस्य चतुरवत्तत्वस्य आप्तेः प्राप्तेः सिद्धेः वचनात् । 'सकृदुपस्तृणाति, सकृदवद्यति, द्विरभिघारयति, चतुरवत्तस्याप्त्यै' इति वचनं द्विरभिघारणेन चतुरवत्तासिद्धिमाह । तेन होमार्थे चतुरवत्ते उपस्तरणाभिघारणयोरन्तर्भावः सिध्यति । तस्मात् प्रधानात् द्विरवदेयं, आज्याभ्यां चतुरवत्तत्वं इति सिद्धान्तः ।

**तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् । ३२ ॥**

'चत्वारि वा एतानि देवदधानि अवदानानि । यदुपस्तृणाति तदनुवाक्यायै, यत् पूर्वमवदानं तद् याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्काराय' इत्यर्थवादे चत्वार्यपि अवदानानि तुल्यवत् अभिधाय उक्त्वा सर्वेषु तेषु अनुवाक्यादिभिः भक्त्या भक्तिवादेन अनुक्रमणं दृश्यते । तस्मात् उपस्तरणाभिघारणाभ्यां सह चतुरवत्तं इति सिद्धान्तः । दधशब्दो भागवचनः । देवदधानि देवभागाः इति यथा । **के.**

* **उत्पत्तिरूपं** वैदिकं कर्म यथा 'प्रणीताभिः संयौति' । संयवनं पुरोडाशपिण्डोत्पत्त्यर्थम् । यागादि च स्वर्गोत्पत्त्यर्थम् । **बाल.** पृ. ८४.

* **उत्पत्तिवाक्येनैव** फलवाक्यस्य उत्पादकत्वं प्रतिबध्नता कर्मान्तरत्वं निराक्रियते न गुणवाक्येन, अनुत्पादकत्वात् । उत्पत्तिवाक्येनैव च सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि संबध्यन्ते, न परस्परेण । **वा.** २।२।११।२५ पृ. ५४०–४१. * **उत्पत्तिवाक्यैः** प्रदेयत्वेन प्रकृतस्य रसहृदयादेः ( सोमरसस्य पशुहृदयस्य ) प्रकृतित्वलक्षणगुणार्थेन पशुसोमयोः संस्कारवाक्यैः ( सिद्धतया इत्युत्तरत्रान्वयः ) **'सोमं क्रीणाति सोममभिषुणोति, सोमं पावयति इत्यादिभिः प्राकरणिकैः गुणवाक्यैः सोमरसे कल्पिते गृह्णातिचोदनाः** [ 'ऐन्द्रवायवं गृह्णाति' इत्यादयश्चोदनाः ] **प्रवृत्ताः'** इत्यादिवार्तिकोक्तन्यायेन सिद्धतया विध्ययोगात् प्रकृते रसहृदयादौ प्रकृतित्वेन पशुसोमद्रव्यसंयोगोऽनर्थकः । **सु.** पृ. ७९६. ( न्यायोक्तिवार्तिकं तु २।२।६।१७ पृ. ५१० ). * **उत्पत्तिवाक्यस्य** इतिकर्तव्यतासामान्यान्वयात् । **भाट्ट.** ७।१।१. * **उत्पत्तिवाक्येऽपि**, निर्विशेषसामान्याभावात् अनिर्धारितफलादिविशेषप्रतीतेः अनिर्धारितफलविशेषान्वयोत्तरकालं कथंभावोपपत्तिः । **सु.** पृ. ७७७. * उत्पत्तिवाक्ये करणत्वेन प्रतीत्यभावे फलवाक्ये तस्यान्वयो न स्यात् । **सोम.** १।४।४ पृ. ६५. * उत्पत्तिवाक्ये द्रव्यादिगुणानुक्तौ न कर्मभेदः । 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादौ । **वि.** २।२।१०. * उत्पत्तिवाक्ये श्रुतेन गुणान्तरसहितप्राकृतवैकल्पिकद्रव्येण वैकल्पिकद्रव्यान्तरबाधः । **बिन्दु.** १०।७।१९. * नहि **उत्पत्तिवाक्ये** ( आघारस्य ) अस्ति कर्मणां प्रकरणं फलसंबन्धोत्तरकालत्वेन कथंभावात्मकस्य प्रकरणस्य प्रयोगवाक्याधीनप्रसूतत्वात् । **वा.** २।२।५।१५. * **उत्पत्तिवाक्येषु** आकाङ्क्षाबलेन इष्टसामान्यस्य भाव्यत्वकल्पनम् । **भाट्ट.** ७।१।१.

* **'उत्पत्तिवाक्यविज्ञातं कर्म सर्वं ह्यनूद्यते'** ( वा. पृ. ३३० ) इत्यनेन अङ्गविधीनां उत्पत्तिविधिभिरेव सह प्रकरणात् एकवाक्यता कल्प्यते इत्युक्तम् । **बाल.** पृ. १२५.

* **उत्पत्तिवाक्यशिष्टेन** एककपालेन सोमलिप्तं अवभृथे बाध्यते यदि अवभृथसाधनत्वेन सोमलिप्तं विधीयते इति मतम् । **वा.** ४।२।८।२२, * उत्पत्तिवाक्यशिष्टेन वाक्यान्तरशिष्टं बाध्यते । पदं च उत्पत्तिवाक्यशिष्टम् । ( ननु ' पदे जुहोति ' इत्यत्र तुल्यत्वात् नाहवनीयबाधः इति शङ्कायां इदमुत्तरम् ) । ६।४।४।१३, * **उत्पत्तिवाक्यशिष्टे** गुणान्तरविरोधात् । १।४।२।३ पृ. ३२९, * उत्पत्तिवाक्यशिष्टवरीतव्यानां ( ऋत्विजां ) बाधविकल्पासंभवः । ३।७।९।२४.

* **उत्पत्तिविधिः** कर्मस्वरूपबोधको विधिः । यथा ' अग्निहोत्रं जुहोति ' इति । **मणि.** पृ. ९९. * उत्पत्तिविधिः द्विविधः । क्रत्वर्थः पुरुषार्थश्चेति । क्रत्वर्थः 'समिधो यजति ' इति । पुरुषार्थः ' अग्निहोत्रं जुहोति ' इति । **बाल.** पृ. १३. * उत्पत्तिविधिः धर्मिस्वरूपज्ञापकः । **भाट्ट.** ११।२।१ पृ. १५१. * **उत्पत्तिविधौ** कर्मणः करणत्वेनैवान्वयः । **मीन्या.** * उत्पत्तिविधौ दक्षिणानां विशिष्टकालसंबन्धः श्रूयते । ' तस्मात् त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्ते ' इति । **भा.** १०।६।१८।७१.

⌛ ' **उत्पत्तिविनियोगयोर्विनियोगो बलवान्** ' **इतिन्यायमूलकं** गुणमुख्यव्यतिक्रमाधिकरणम् । ( ३।३। २।९ ) । **के.** * ' भिन्ने हि विधिसामर्थ्ये **उत्पत्तिविनियोगयोः** । तत्र सत्यां गतावेकमसत्यां तद्द्वयं भवेत् ॥ ' अगत्या हि तेनैवोत्पत्तिः तेनैव च विनियोगः क्रियते । सत्यां तु गतौ विनियोजकस्य उत्पत्तिविध्यर्थापत्त्यनुत्पादात् अन्येनैवोत्पादितानां विपरिवर्तमानानां विनियोगसामर्थ्यमात्रमेव ज्ञायते । ( अवेष्टौ ) । **वा.** २।३।१३।२६ पृ. ६१९.

* **उत्पत्तिवेदधर्मः** कर्तव्यः, उत विनियोगवेदधर्मः इति चिन्तायां, विनियोगविधिरेव कर्तव्य इति निर्णयः । तेन आधानसाम्नामुपांशुत्वं भवति । **वा.** ३।३।२।९.

* **उत्पत्तिशिष्टं** उत्पन्नशिष्टात् बलवत् । यथा अवभृथे ' वारुणैककपालेनावभृथमवयन्ति ' इत्युत्पत्तिः । ' यत् किंचित् सोमलिप्तं द्रव्यं तेनावभृथं यन्ति' इत्युत्पन्नशिष्टम् । **वि.** ४।२।८. * **उत्पत्तिशिष्टेन** उत्पन्नशिष्टं बाध्यते यथा आमिक्षया वाजिनम् । **बाल.** पृ. १४३. * उत्पत्तिशिष्टेन दक्षिणाभेदेन प्रयोगभेदावगमात् दिशामवेष्टिषु अङ्गानां भेदः । **वि.** ११।४।३. ***उत्पत्तिशिष्टस्य** यथा बलीयस्त्वं, न च क्रियामात्रं निष्कृष्य गुणान्तरं विधातुं शक्यते , तथोक्तं चित्राऽधिकरणे ( १।४।२ ) वैश्वदेवाधिकरणे च ( १।४।१० ) । **वा.** २।२।९।२३ पृ. ५३७.

* **उत्पत्तिशिष्टगुणावरुद्धे** तद्विरोधिगुणान्तरविध्यसंभवः वैश्वदेवाधिकरणे ( १।४।१० ) व्युत्पादयिष्यते । **सु.** पृ. ४१९.

⌛ **उत्पत्तिशिष्टगुणावरोधन्यायः** । ( गुणाधिकरणं द्रष्टव्यम् ) । दृष्टं च पर्यवसितस्यापि ' अग्निहोत्रं जुहोति ' इति विधेः अनियतद्रव्यदेवताऽऽक्षेपं विना ' पयसा जुहोति ' ' यदग्नये च प्रजापतये च सायं जुहोति ' इत्यादिवाक्यान्तरविधेयद्रव्यदेवताग्राहकत्वम् । अन्यथा तत्रापि आक्षेपेण अनियतद्रव्यविशेषादिकल्पनयैव पर्यवसानात् उत्पत्तिशिष्टगुणावरोधन्यायेन वाक्यान्तरस्थद्रव्यविशेषान्वयो न स्यात् । **पराक्रमः** ४२।१.

* **उत्पत्तिशिष्टदेवताऽन्तरावरोधात्** आग्नेयादिकर्मानुवादेन अशक्यं देवताविधानम् । ( वैश्वदेवे पर्वणि ) । **वा.** १।४।१०।१३. * **उत्पत्तिशिष्टदेवताऽवरोधे** देवताऽन्तरस्य निवेशानुपपत्तिः । (यथा विश्वदेवावरुद्धायामामिक्षायां वाजिदेवताया न निवेशः इति) । **भाट्ट.** २।२।९ पृ. १२८. * **उत्पत्तिशिष्टपुंस्त्वावरुद्धे** अग्नीषोमीये स्त्रीत्वं विधातुमशक्यम् । **सु.** पृ. ४१९.

* **उत्पत्तिशिष्टबलीयस्त्वं** विशिष्टविधिव्युत्पादनस्य प्रयोजनम् । **सु.** पृ. ४७१, * उत्पत्तिशिष्टबलीयस्त्वं वैश्वदेवाधिकरणे व्युत्पादितम् । पृ. ४७०, ८२६.

* **उत्पत्तिशिष्टबलीयस्त्वन्यायस्य स्वरूपं** ( २।२। ९।२३ ) ' उत्पत्तिवाक्यशिष्टामिक्षाऽवरुद्धे यागे वाक्यान्तरेण वाजिनं निवेशनं न लभते ' इति । गुणाधिकरणं द्रष्टव्यम् । **परिमलः** ३।३।१।१ ब्रसू.

* **उत्पत्तिसंयोगे** पूर्वासंबन्धे च संज्ञा भेत्त्री भवति । **वा.** १।३।४।१०.

* **उत्पत्त्यपूर्वं नाम** । दर्शे पूर्णमासे च एकैकस्मिन् समुदाये यागत्रयजन्यानि त्रीणित्रीणि उत्पत्त्यपूर्वाणि इति षट् उत्पत्त्यपूर्वाणि दर्शपूर्णमासयोः । इदमेव अवान्तरापूर्वमित्युच्यते । ( तात्पर्यम् ) **वि.** २।१।२.

**उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद् विभागः स्यात् । ४।२।५।१४ ॥**

दर्शपूर्णमासयोः ' प्रणीताभिर्हवींषि संयौति ' इति ' अन्तर्वेदि प्रणीता निनयति ' इति च प्रणीतानामपां संवयनं निनयनं च श्रूयते । तत्र किमर्थाः प्रणीताः, किं प्रणीतानां संवयनं प्रयोजकं निनयनं चेति, उत संयवनं प्रयोजकं, निनयनं प्रतिपत्तिः इति विचारे पूर्वपक्षं सूत्रयति । प्रणीतानां अपां उत्पत्त्यसंयोगात् ' अपः प्रणयति' इति उत्पत्त्या उत्पत्तिविधिना संयवनेन निनयनेन वा केनापि संयोगो नास्ति, तस्मात् तासां विभागः स्यात् अर्धं संयवनार्थं अर्धं च निनयनार्थं इति । आज्यवत् । यथा ध्रौवमाज्यं अंशतः तत्तत्कर्मणि विभज्यते तथा । तस्मादुभयार्थाः प्रणीताः, उभयमासां प्रयोजकं इति मन्तव्यम् ।

**संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् । १५ ॥**

सिद्धान्तयति, प्रणीतानां संयवनार्थानां निनयनं प्रतिपत्तिः इति । तृतीयानिर्देशात् संयवनार्थता । इतरासां संयवनावशिष्टानामपां द्वितीयाश्रुत्या तत्प्रधानत्वात् तस्मिन् निनयने प्रधानत्वात् प्रतिपत्तिः । तस्मात् प्रणीतानां हविःसंयवनं प्रयोजकं, अन्तर्वेदि निनयनं च प्रतिपत्तिः । प्रतिपत्तिरितरा तत्प्रधानत्वात् इति पाठः यपुस्तके कुतूहले च । इतरा निनयनक्रिया प्रतिपत्तिः इति कुतूहले व्याख्यातम् । के.

* **उत्पद्यमानम्** । ' **सर्वमुत्पद्यमानं हि यद्यन्येन विरोधिना । न रुध्यते, ततस्तस्य सिद्धिः कालेन लभ्यते ॥ यस्य तूत्पद्यमानस्य मूलमेव निकृत्यते । मुखं वा रुध्यते, तस्य नात्मलाभः कदाचन ॥** ' **वा.** १।३।२।३ पृ. १७३, * उत्पद्यमानमेव कर्म आकाङ्क्षात्रितयसंबद्धमुत्पद्यते (भाव्य–करण– इतिकर्तव्यतानां या आङ्काक्षाः तासां त्रितयेन संबद्धम् ) । ७।४।२।१५.

* **उत्पन्नगायत्रीणां** दाशतयीभ्यः समानयनं बृहस्पतिसवे । **भा.** ८।३।६।१२–३६, * **उत्पन्नशिष्टस्य** उत्पत्तिशिष्टेन बाधः वैश्वदेवाधिकरणोक्तः । **सु.** पृ ४९२, * उत्पन्नशिष्टस्यापि काम्यस्य उत्पत्तिशिष्टबाधकत्वम् । पृ. ४८८.

* **उत्पन्नोच्चरितशब्दयोः** अवधारितार्थत्वाविशेषः, पदित्वर्योः गमिसमानार्थत्वेन ज्ञानार्थत्वात् उच्छब्दस्य चोत्कर्षार्थत्वेन निश्चयरूपज्ञानोत्कर्षवाचित्वात् । **सु.** पृ. ८२२.

* **उत्पवनम्** । प्रकृतौ ( आज्यस्य ) उत्पवनावेक्षणयोः प्रयोजनमेतत्, यत् आज्यस्य अपरेण द्रव्येणासंसर्गः । **भा.** ६।२।८।१६, * उत्पवन–विलापन–ग्रहण–आसादनादयः आज्यधर्माः । ३।१।४।७.

* **उत्पवनादीनां** प्रोक्षणाद्यङ्गानां तज्जन्यव्रीह्यादिसमवेतापूर्वप्रयुक्तत्वम् । **शा.** ९।१।२. * **उत्पवनावघातादेः** आज्यौषधयोः न्यायगम्यव्यवस्थाविधिः । **बाल.** पृ. १८. * **उत्पवनावेक्षणादयः** आज्यधर्माः । **वि.** ३।१।४, उत्पवनचतुर्गृहीतत्वादयः आज्यधर्माः । ५।१।८.

* **उत्पादकवेदस्वरात्** विनियोजकवेदस्वरः प्रबलः । **वि.** ३।३।२.

* **उत्पादनस्य** करोत्यर्थत्वेन नित्यं सकर्मकत्वात् । **सु.** पृ. ७५०.

* **उत्पाद्यं** ईप्सितं कर्म । उत्पत्तिर्नाम येन आकारेण कारकमभिधानोपात्तं, तस्य असत एव उत्पादनम् । यथा यूपं छिनत्ति, घटं कुरुते इति । **मणि.** पृ. १२९.

* **उत्प्रेक्षा अलङ्कारः** । ' **अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा । अन्यथोत्प्रेक्षते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥** ' सु. पृ. ६१८.

* ' उत्सर्गश्चापवादश्च सर्वत्रैवोपलभ्यते । **तत्र नोत्सर्गमात्रेण सर्वमेवावरुध्यते ॥ अपवादेन वा, यस्मात् उत्सर्गो बाधितः क चित् । तस्मात् सर्वत्र बाध्योऽसावित्येतदपि नेष्यते ॥ विषयाविषयौ**

ज्ञात्वा तेनोत्सर्गापवादयोः । बाधाबाधौ विवेक्तव्यौ, न तु सामान्यदर्शनात् ॥ ' वा. १।३।२।३ पृ. १७३. * उत्सर्गं यः करोति तेन सर्वं कृतं भवति। कथम् ? परिक्रय उत्सर्गः। तेन आनताः ऋत्विजः सर्वं कुर्वन्ति। भा. ३।७।८।१९, उत्सर्गं तु स्वयं कुर्वता सर्वं स्वयंकृतं भवति। २०. * उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात्। ९।३।१२।३७॥ पशोर्देवतायै प्रतिश्रुतत्वेन उत्सृष्टप्रायत्वात् यजमानस्य औपचारिकमेधपतित्वापत्तेः न तत्परो मेधपतिशब्दः इति हेत्वन्तरोक्त्यर्थं सूत्रम्। सु. पृ. १५३४.

⌛ उत्सर्गादपवादो बलीयान् इति न्यायः प्रसिद्धो भूतहिंसाप्रतिषेध-अग्नीषोमीयपश्वालम्भविध्यादौ। उत्सर्गापवादन्यायमाश्रित्य विरोधं परिहरति । संक्षेपशारीरके रामतीर्थः २।११४. * विशेषविधिविहितस्यार्थस्य सामान्यविधिनाऽपि विषयीकारे हि उत्सर्गापवादन्यायः। यथा 'आहवनीये जुहोति' 'पदे जुहोति' इति होममात्रस्य आहवनीयान्वयविधिना पदहोमस्यापि विषयीकारे पदहोमान्वयविशेषविधिना बाधात् तदितरपरत्वं सामान्यशास्त्रस्य । कल्पतरुः ३।१।६।२५ ब्रसू. * ननु यथा हि 'न हिंस्यात् सर्वा भूतानि' इति श्रुतिः अविशेषप्रवृत्ताऽपि हिंसात्वसामान्यस्य प्रत्यक्षादिप्राप्तत्वात् निषेध्योपस्थितौ न अग्नीषोमीयवाक्यमपि निषेध्यसमर्पणायापेक्षितुमर्हति उत्सर्गापवादन्यायात्। अद्वै. पृ. ४३२. * नन्वेवं प्रकरणाम्नातानृतवदननिषेधवाक्यार्थकथने अनारभ्याधीतहिंसानिषेधवाक्यस्यानया प्रक्रियया इत्थमर्थो भवति 'हिंसया पुरुषस्योपकुर्यात् इति यत्, तन्न' इति। तथा च पुरुषार्थहिंसानिषेधः एव वाक्यार्थः इति क्रत्वर्थहिंसायास्तदविषयत्वात् तत्र नोत्सर्गापवादन्यायप्रवृत्तिः। इति चेन्न। परिमलः ३।१।६।२५ ब्रसू.

* उत्सर्गपूर्वकः परस्वत्वेन संबन्धः ददातिः । भा. ४।२।१३।२८.

* उत्सर्गमात्रं यजमानेन कर्तव्यं शेषं तु ऋत्विजः एव कुर्युः अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्मसु । भा. ३।७।८।१८-२०.

⌛ उत्सर्गसमानदेशा अपवादाः इति न्यायेन मपर्यन्तस्यैव आदेशे सिद्धे तदनुवृत्तिः (त्वमावेकवचने इत्यत्र) व्यर्था सती ...। भूतिः पृ. २०१-२०२। अयं न्यायः असिद्धवत्सूत्रस्थभाष्यसंमतः। पृ. २०६। अनेन न्यायेन यस्मिन् विधिस्तदादावल्ग्रहणे इत्यस्याः समानाधिकरणविशेषणे एव प्रवृत्तिः । पृ. १३९। अजादेर्द्वितीयस्य इत्यत्र द्वितीयग्रहणेन अस्य न्यायस्य बाध एव वाच्यः । यद्वा अपवादशास्त्रीयोद्देश्यतापर्याप्त्यधिकरणवृत्त्युद्देश्यताकत्वं यत्रोत्सर्गशास्त्रस्य, तत्रायं न्यायः प्रवर्तते। तत्त्वप्रकाशिका. पृ. २०३.

* उत्सवः। अनध्यायाधिकारे 'ऊर्ध्वं भोजनादुत्सवः' इति देशनगरोत्सवप्रामाण्याश्रयणम्। वेदेऽपि 'यदा वै प्रजा मह आविशन्ति' इति महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता। वा. १।३।३।७ पृ. २०५.

* उदकस्य (चित्रेष्टौ) आज्यविकारत्वं अष्टमे वक्ष्यते। सु. पृ. ८१२. * उदके उपांशुयाजस्य विध्यन्तः चित्रेष्टौ। भा. ८।१।१९।४३.

⌛ उदकनिमज्जनन्यायः। साहस्री. १२१।

लिखितभुक्तिसाक्षिरूपप्रमाणाभावे दिव्यं प्रमाणं क्रियते। तत्र उदकनिमज्जनं एकं दिव्यम्। तत्करणेन अभिशप्तः शुद्धश्चेत् निर्मुच्यते, अन्यथा बध्यते । उदकनिमज्जनदिव्यस्वरूपं तु-दिव्यस्थाने जलाशये बहिष्ठः धानुष्कः जवेन बाणं दूरं क्षिपति, एकश्च वेगवान् पुरुषः बाणक्षेपस्थाने सज्जस्तिष्ठति, अपरश्च वेगवान् पुरुषः बाणपातस्थाने सज्जस्तिष्ठति। एवंकृते जलाशये नाभिदघ्नोदकस्थस्य अपरस्य पुरुषस्य ऊरू धृत्वा अभिशप्तो जले निमज्जति, तत्क्षणे एव च बाणक्षेपस्थलस्थो वेगवान् पुरुषो जवेन बाणपातस्थलपर्यन्तं धावति। स यदा तत्र प्राप्नोति तदैव बाणपातस्थलस्थः अपरो वेगवान् पुरुषः जलाशयपर्यन्तं धावति। अस्यागमनपर्यन्तं जले निमग्नः अभिशप्तः यदि निमग्न एव स्यात्, तदा असौ शुद्धो भवति। अभिशापात् मुक्तः सुखं लभते, अन्यथा अपराधसिद्ध्या दुःखं लभते इति। के.

उदक्त्वं चापूर्वत्वात् । ३।४ षट्सूत्र्यां ४ । वि. १३ ॥

मृताग्निहोत्रे 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयात्' इति श्रूयते । तत्र 'ये पुरोदञ्चो दर्भाः' इति वाक्यांशे किं विधिरयं अनुवादो वेति विचारे अस्मिन् वाक्ये उदक्त्वं विधिः स्यात् । चशब्देन पूर्वसूत्रस्थं विधिरितिपदं अनुकृष्यते । विधीयते इति विधिः । उदक्त्वं विधीयमानं स्यात् । दर्भाः पुरा जीवद्दशायां उदञ्चः उदगग्राः भवन्ति इति उदगग्रत्वं विधीयते । कुतः ? अपूर्वत्वात्, श्रुत्या दैवे कर्मणि दर्भाणां उदगग्रत्वस्य अप्राप्तत्वात् । ततश्च उदगग्रत्वस्य विधिः इति पूर्वः पक्षः ।

सतो वा लिङ्गदर्शनम् । ५ । वि. १४ ॥

वाशब्देन पूर्वपक्षं निरस्यन् सिद्धान्ती आह । नायं उदक्त्वस्य विधिः, किन्तु अनुवादः । प्राप्तस्यानुवादो भवति । प्राप्तत्वे च लिङ्गदर्शनं, लिङ्गयोः दर्शनं भवति । तत्र विधिशक्तिप्रतिबन्धकेन यच्छब्देन योगः एकं लिङ्गम् । 'ये पुरोदञ्चो दर्भाः' इति वाक्ये विधायकस्य आख्यातस्याभावो द्वितीयं लिङ्गम् । इदं च लिङ्गदर्शनं सतः प्राप्तस्यैव उदगग्रत्वस्य युज्यते । 'अग्रवन्ति प्रागग्राणि उदगग्राणि वा, अपवर्गवन्ति प्रागपवर्गाणि उदगपवर्गाणि वा' इति स्मृत्या यज्ञाङ्गानां उदगग्रत्वस्य प्राप्तिर्ज्ञातव्या । तस्मात् 'ये पुरोदञ्चो दर्भाः' इति अनुवाद एव न विधिः इति सिद्धान्तः ।

अथवा 'विधिर्वा स्यादपूर्वत्वात्' इति प्राचीनं सूत्रं वर्णकान्तरेण पूर्वपक्षः, ततः 'उदक्त्वं० सतो वा०' इति सूत्रद्वयेन अन्तरागार्भिण्यधिकरणम् । तच्च व्याख्यातमेव । पूर्ववर्णकान्तरस्थपूर्वपक्षस्य उत्तरं तु 'सतो वा लिङ्गदर्शनं' इत्येवं सूत्रं ज्ञेयम् । तत्र पूर्वपक्षस्तु 'प्राचीनावीती दोहयेत्, यज्ञोपवीती हि देवेभ्यो दोहयति' इति मृताग्निहोत्रे श्रुते वाक्ये देवार्थे गोदोहने यज्ञोपवीतस्य विधिरिति । तत्रोत्तरं 'सतो वा लिङ्गदर्शनं' इति । सतः 'यज्ञोपवीती दैवानि कर्माणि' इतिस्मृत्या 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' इति श्रुत्या च प्राप्तस्य प्राचीनावीतविधिशेषत्वेन अनुवादत्वे लिङ्गदर्शनं भवति । विधित्वप्रतिबन्धको हि-शब्दोऽत्र श्रूयते । तस्मात् यज्ञोपवीतस्यानुवाद एव न विधिः इति सिद्धान्तः ।

एवं 'सतो वा लिङ्गदर्शनं' इति सूत्रं द्वेधा ज्ञेयम् । **के.**

उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् । ६।८।५।२३ ॥

दैवानि कर्माणि तावत् उपनयनचूडाकरणादीनि उदगयने कर्तव्यानि, न दक्षिणायने । उदगयनेऽपि पूर्वपक्षे शुक्लपक्षे, न कृष्णपक्षे । शुक्लपक्षेऽपि अहनि, न रात्रौ । तादृशे अहन्यपि पुण्याहकाले । पुण्याहशब्देन नवधाविभक्तस्याह्नः प्रथमतृतीयपञ्चमसप्तमनवमभागा ग्राह्याः, नेतरे । तादृशे काले उपनयनादीनि कर्माणि कर्तव्यानि । 'उदगयने आपूर्यमाणपक्षे पुण्ये नक्षत्रे' ( कृत्तिकादिविशाखाऽन्ते ) इत्यादिस्मृतेः, 'एतद्वै देवानां रूपं यदुदगयनं पूर्वपक्षोऽहरिति' इति रूपात् देवरूपस्यार्थवादात्, 'पूर्वाह्णो वै देवानां' इत्यादेरन्यार्थदर्शनाच्च लिङ्गात् । इति सिद्धान्तः । स्मृतिश्च रूपं च अन्यार्थदर्शनं च एषां समाहारः इति समासे एकवचनम् । **के.**

अहनि च कर्मसाकल्यम् । २४ ॥

किंच अहनि कर्मसाकल्यं, कर्मणां सकलता अहनि यथा संपादयितुं शक्यते न तथा रात्रौ । तस्मात् उक्ते काले दैवानि कर्माणि कर्तव्यानि । इदं सूत्रं भाष्यकारैर्न व्याख्यातं इति वार्तिककाराः । पूर्वसूत्रे अह्नोऽप्युक्तत्वात् इदं सूत्रं व्यर्थं इति तदभिप्रायः । **के.**

उदगयनादिकाले उपनयनादिकर्माणि कर्तव्यानि ॥

उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् । ६।८।५।२३ ॥

**भाष्यम्**— दैवानि कर्माणि उदाहरणं उपनयनप्रभृतीनि । तत्र संदेहः किमनियते काले दैवानि कर्तव्यानि, उत उदगयनपूर्वपक्षाहःपुण्याहेष्विति । अनियते इति प्राप्ते, उदगयनादिषु इत्युच्यते । कुतः ? एवं स्मरन्ति, तेषु कालेषु दैवानीति । रूपार्थवादश्च । 'एतद्वै

देवानां रूपं, यदुदगयनं, पूर्वपक्षोऽहः' इति । न च वयं देवादीनां रूपं विद्मः । अथ तु एषु कालेषु दैवानि क्रियन्ते, तत एतेन संबन्धेन रूपवचनमवकल्पते । अन्यार्थं च वाक्यमेतद्दर्शयति 'पूर्वाह्णो वै देवानां, मध्यंदिनो मनुष्याणां, अपराह्णः पितॄणाम्' इति । तस्मादेतेषु कालेषु दैवानि स्युरिति ।

टुप्— 'य इष्टया पशुना वा' इति पौर्णमास्याममावास्यायां वा नियतं ग्रहणं, अग्निहोत्रादेः पक्षेऽनिष्टत्वात् (नहि शुक्लपक्षे पुण्याहादौ चाग्निहोत्रानुष्ठानमिष्टं अहरहरनुष्ठातव्यत्वात्-रत्न. अतो भाष्ये—) उपनयनचूडाकरणादीनि तु उदाहरणं (उक्तम्) । अत्र सूत्रोपात्तेषु सर्वेषु कालेषु । अन्यानि यथासंभवं (समुच्चिते असमुच्चिते वा काले) ।

**अहनि च कर्मसाकल्यम् । २४ ॥**

**भाष्यम्—** अहनि च विशेषः । सकलं कर्म अहन्येव शक्यते कर्तुमिति, न रात्रौ करिष्यते ।

**टुप्—** उत्तरसूत्रद्वयं न व्याख्यातं, निष्प्रयोजनत्वात् । अहनि रात्रौ वा कर्मसाकल्यं भवत्येव ।

**सोम—** ब्रह्मचर्यप्रसङ्गात् उपनयनादिकालनिरूपणं इति **संगतिः । सूत्रार्थस्तु—** उदगयने पूर्वपक्षे अहनि पुण्याहे, 'यत् पुण्यं तेजस्व्यहः' इत्युक्तेः, 'तेषु कुर्वीत । यत्कारी स्यात् । पुण्याह एव कुरुते' इत्युक्तेर्वा दैवानि कार्याणि, तत्कालस्मरणात् । 'एतद्वै देवानां रूपं यदुदगयनं पूर्वपक्षोऽहरितरथा पितॄणां' इति स्मृतिरूपदर्शनात्, 'पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणां' इत्यन्यार्थदर्शनाच्चेति । (अत्र स्मृतिश्च रूपं च अन्यार्थश्च स्मृतिरूपान्यार्थाः, तेषां दर्शनात् इति विग्रहो हेतुपदस्य) ।

**वि—** 'चौलादि सर्वदा पुण्याहादौ वा, ऽत्राविशेषतः । आद्यो, ऽन्यः पूर्वपक्षादौ दैवानां स्मृतितो विधेः ॥'

**भाट्ट—** श्रुतौ स्मृतौ वा यस्मिन् कर्मणि दैवे पित्र्ये वा उदगयनशुक्लकृष्णपक्षादिः यः कालः प्रत्यक्षवचनेन अन्यार्थदर्शनकल्प्यविधिना वा विहितः सोऽविरोधे समुच्चयेन, विरोधे विकल्पेन ग्राह्यः इत्येवं सुहृद् भूत्वा सूत्रकारः शिष्येभ्य उपदिष्टवान् ।

**मण्डन—** 'पूर्वाह्णादौ देवकार्याणि कुर्यात् ।' ६.

**शंकर—** 'दैवं शुक्ले ह्युदगये ।' ६. अये गमने अयने ।

* **उदयनीयं** द्वादशाहस्य उत्तममहः । **वि.** १०।५।४. * **उदयनीये** अतिरात्रे प्रायणीये च ऐकादशिनानां पशूनां विभज्य (प्रायणीये ५ उदयनीये ६) अनुष्ठानम् । **भा.** १०।६।४।६-१२. * उदयनीये अप्रयाजे अपि स्विष्टकृन्निगदे अयाड्देवानामाज्यपानां इत्यस्य न लोपः । **संकर्ष.** ४।३।१३.

**⌛ उदयनीये च तद्वत् । ११।२।१६।६७ ॥**

ज्योतिष्टोमे श्रूयते 'प्रायणीयस्य निष्कासे उदयनीयमनु निर्वपति' इति । ज्योतिष्टोमे प्रायणीयेष्टौ अदितिदेवताकश्चरुर्भवति, अन्तिमायां उदयनीयेष्टावपि स भवत्येव । तत्र प्रायणीयेष्टिगतस्य चरोः निष्कासः संरक्षणीयः । तमनु च- तदुपरि इत्यर्थः- उदयनीयं हविः निर्वप्तव्यं इति वाक्यस्य अक्षरार्थः । अत्र निष्कासद्रव्यकं उदयनीयाख्यं कर्मान्तरं विधीयते, किंवा उदयनीये निष्कासस्य प्रतिपत्तिः, अथवा निष्कासे निर्वापः उदयनीयस्य संस्कारः इति विचारे प्रथमं पूर्वपक्षमाह । उदयनीये उदयनीयवाक्ये योऽयं निष्कासे निर्वाप उक्तः, तत् कर्मान्तरं स्यात् । तद्वत् पूर्वाधिकरणोक्तावभृथवत् । वारुण्यामिक्षानिष्कासादिधर्मकं अवभृथाख्यं यथा कर्मान्तरं तद्वत् । चशब्देन दृष्टान्तसंगतिः सूचिता ।

**प्रतिपत्तिर्वाऽकर्मसंयोगात् । ६८ ॥**

वाशब्देन प्रथमं पूर्वपक्षं निरस्यन् द्वितीयं पूर्वपक्षमाह । न कर्मान्तरं विधीयते अकर्मसंयोगात् कर्मसंयोगाभावात्, उदयनीयकर्मणां निष्कासस्य संयोगाभावात् । निर्वापेण हि निष्कासस्य संयोगो न कर्मणा । किंतु सा प्रतिपत्तिः । उदयनीये प्रायणीयनिष्कासस्य प्रतिपत्तिरियमुक्ता ।

**अर्थकर्म वा शेषत्वाच्छ्रयणवत् तदर्थेन विधानात् । ६९ ॥**

वाशब्देन प्रतिपत्तिपक्षमपि निरस्यन् सिद्धान्तमाह । प्रायणीयनिष्कासे उदयनीयनिर्वापः अर्थकर्म स्यात् । न प्रतिपत्तिकर्म । निर्वापं प्रति निष्कासस्य शेषत्वात् गुणत्वात् । तदर्थेन गुणत्वार्थकेन शब्देन निष्कासे इति सप्तम्या विभक्त्या विधानात् । सप्तमी हि आधारे भवति, आधारश्च क्रियायाः तत्कारकाणां च धारणे वर्तते । तस्मात् निष्कासो निर्वापे गुणभूतः । श्रयणवत् यथा ' पयसा मैत्रावरुणं श्रीणाति ' इति श्रयणैः सोमस्य अदृष्ट उपकारः क्रियते, तद्वत् उदयनीयहविषः प्रायणीयनिष्काससंसर्गेण अदृष्ट उपकारः करिष्यते । तस्मात् प्रायणीयनिष्कासस्य उदयनीयनिर्वापार्थत्वं इति सिद्धान्तः । **के.**

* **उदयनीयहविष्याणां** ( व्रीहीणां ) प्रायणीयानिष्काससंसर्गेण अदृष्ट उपकारः क्रियते । **भा.** ११।२।१६।६९.

**उदयनीयानिर्वापाधिकरणम्** । प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वम् ॥

**उदयनीये च तद्वत्** । ११।२।१६।६७ ॥

**भाष्यम्**— ज्योतिष्टोमे श्रूयते, ' प्रायणीयस्य निष्कासे, उदयनीयमनुनिर्वपति ' इति । तत्रापि अवभृथवत् निष्कासो गुणतः स्यात् । तत्रापि हि उदयनीयशब्दकेन प्रधानकर्मणा संयोगो भवति, ' प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपति ' इति । न च शक्यते उदयनीयो निर्वप्तुम् । अतस्तथा इहापि संबन्धोऽभिधीयते, निष्कासेन उदयनीयं कर्तुं हविष्यं निर्वपतीति, लक्षणया वा पूर्ववत् । अपिच द्वितीयासंयोगात् कर्मणः प्राधान्यं विज्ञायते । निष्कासस्य सप्तमीयोगात् गुणभावः । प्रतिपत्तौ तु कर्म गुणतः स्यात्, निष्कासः प्रधानतः । तत्र कर्म तृतीयासंबद्धं भवेत्, निष्कासो द्वितीयासंबद्धः । ननु प्रधानभूतेऽपि सप्तमी भवति । यथा आगारे गावो वास्यन्तां, प्राकारे कुसुमानीति । भवति, यत्र प्रमाणान्तरेण द्रव्यं प्रधानं विदितम् । यत्र तु शब्दगम्यः एवार्थः, तत्र गुणभावो युक्तः । यत् कारणं कारकविभक्तिरियम् । कारकं च क्रियार्थं, भूतत्वात् । भूतभव्यसमुच्चारणे हि भूतं भव्यार्थं भवति, दृष्टार्थत्वात् । भव्यस्य तु भूतार्थत्वे अदृष्टार्थता कल्प्या स्यात् । न च दृष्टे सति अदृष्टकल्पना संभवति ।

**प्रतिपत्तिर्वाऽकर्मसंयोगात्** । ६८ ॥

**भाष्यम्** — प्रतिपत्तिर्वा उदयनीये स्यान्निष्कासस्य, न गुणभावः । कुतः ? अकर्मसंयोगात् । नात्र निष्कासस्य उदयनीयकर्मणा संयोगः । केन तर्हि ? निष्कासे निर्वपतीति । ननु मुख्यत्वादुदयनीयस्य एतेन संबन्धो न्याय्यः । नहि । मुख्यसंबन्धे साकाङ्क्षमेतद्भवति, निष्कासे उदयनीयं किं करोति । तत्रावश्यं निर्वपतीत्यनेन परिसमापयितव्यं, उदयनीयं निर्वपतीति । न च उदयनीयस्य निर्वापेण सह संबन्धोऽस्तीत्युक्तम् । तदेतदवश्यं तथैव आपद्यते, उदयनीयं कर्तुं प्रायणीयस्य निष्कासे हविष्यं निर्वपतीति । निष्कासश्च प्रायणीयशेषः । निष्कासशब्दश्च शेषवचनः एव, यदुख्यायां लग्नं तदनेनोच्यते । शेषस्य च अर्थान्तरगमनं प्रतिपत्तिः । तच्च सामवायिकमङ्गं भवति । तच्च प्रधानेन दृष्टसंबन्धम् । आरादुपकारकत्वे अनुमेयसंबन्धम् । सप्तमी च विभक्तिः प्राधान्ये दृष्टा । तस्मात् प्रतिपत्तिः । नन्वेवमपि कर्मान्तरचोदना अवभृथवत् प्राप्नोति । भवेत्, यदि न चोदितं कर्म भवेत् । चोदितस्तु उदयनीयः, ' आदित्यः प्रायणीयश्चरुर्भवति, आदित्य उदयनीयो दिशां प्रज्ञात्यै ' इति । तं कर्तुं प्रायणीयनिष्कासे निर्वपेदिति तत्रैव प्रज्ञायते । तस्मान्न कर्मान्तरचोदनेयम् ।

**अर्थकर्म वा, शेषत्वाच्छ्रयणवत्, तदर्थेन विधानात्** । ६९ ॥

**भाष्यम्** — अर्थकर्म वा निष्कासे निर्वापो न प्रतिपत्तिः । कुतः ? शेषत्वात् । निर्वापं प्रति शेषभूतो निष्कासः । गुणभूतः इत्यर्थः । कथं ज्ञायते ? तदर्थेन विधानात् । तदर्थेन शब्देन सप्तम्या विभक्त्या विधानात् । सप्तमी हि विभक्तिः आधारे भवति । आधारश्च क्रियायास्तत्कारकाणां च विशिष्टानां धारणे वर्तते । तस्मात् गुणभूतः । ननु निष्कासो धारणे असमर्थः, स्थाल्येव तत्र धारणं करोति । पात्रीवदेतत् द्रष्टव्यम् । तद्यथा

पात्री ओदनं धारयति, पात्रीं भूमिः । न च पात्री नाधारः । तत्रैतत् स्यात्, न दृष्टमुपकारं करोतीति । पात्री अपि तथा । अपिच हविष्याः उदयनीयनिर्वृत्त्या प्रयोजनवन्तः । ते यदि निष्कासेन संस्क्रियन्ते, निष्कासोऽपि प्रयोजनवान् भवति । अथ तु निष्कासः संस्क्रियते, न च तेन कश्चिदर्थः । नहि तेन किंचित् करिष्यते । ननु तेनापि प्रायणीयो निर्वर्तितः, तदर्थस्यापि संस्कारः अर्थवान् भविष्यति । नैवम् । उपयुज्यमानसंस्कारो हि गरीयान् उपयुक्तसंस्कारात् । अपिच निष्काससंस्कारोऽयं भवन् प्रायणीयस्य अङ्गं भवेत् । तत्र उदयनीयसंनिधिः बाध्येत । तस्मादुदयनीयहविष्याणामयं निष्कासससंसर्गेण अदृष्टः उपकारः क्रियते श्रयणवत् । तद्यथा, 'पयसा मैत्रावरुणं श्रीणाति, धानाभिर्हारियोजनं' इति श्रयणैः सोमस्य ।

**सोम**— अवभृथवत् निष्कासे निर्वापोऽपि कर्मान्तरं इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**- अवभृथे इव उदयनीयेऽपि निष्कासो गुणभूतः इति ।

**वि**— 'प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म तत् । निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥ उत, ऽऽद्यः पूर्ववन्मैवं मुख्यस्य प्रकृतत्वतः । मध्योऽस्तु, नोपयोक्ष्यसंस्कारस्य गुरुत्वतः ॥'

**भाट्ट**— ज्योतिष्टोमे प्रायणीयेष्टिरुदयनीयेष्टिश्च दर्शपूर्णमासविकारौ द्वितीयान्त्यदिनयोः आम्नातौ । तत्रोदयनीयप्रकरणे 'प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपति' इति श्रुतम् । तत्र पूर्ववदेव उदयनीयधर्मकं कर्मान्तरमेव प्रायणीयनिष्कासद्रव्यकं तत्संस्कारकतया आश्रयिकर्म विधीयते, सप्तमी च द्वितीयाद्यर्थे । ततश्चोदयनीयधर्माणां द्विवारमावृत्तिरिति संगतिलोभेनाशङ्क्य निराक्रियते । नात्र कर्मान्तरं संनिधिसत्त्वेन प्रकरणान्तरन्यायाभावात् । अतः प्रायणीयनिष्कासस्य कृतार्थस्य इयमौपदेशिकी प्रतिपत्तिः उदयनीयनिर्वापः । **इति प्राप्ते,** निर्वापस्यापि प्रकृतौ निरुप्यमाणद्रव्यसंस्कारार्थत्वेन अवगतस्य निष्कासार्थत्वे अप्राकृतकार्यकारिताऽऽपत्तिः । निर्वापेण निष्कासस्य दृष्टप्रतिपत्तिरूपसंस्काराजनने च प्राचीनप्रयाजशेषन्यायाभावात् उभयथाऽपि अदृष्टार्थत्वावश्यकत्वे निषादस्थपत्यधिकरणन्यायेन सप्तमीश्रुत्या प्रकरणाच्च तदीयनिर्वापानुवादेन पुरोडाशकपालवत् प्रायणीयनिष्कासो विधीयते । अर्थाच्च प्राकृतप्रतिपत्तिबाधः ।

**मण्डन**— 'चरुशेषोऽङ्गमुत्तरे ।'

**शंकर**— 'निष्कासे तु न निर्वपिः ।' निर्वपिः निर्वापः न अर्थकर्म ।

* **उदवसानीयं** कर्म 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेत' इति । तत्र दक्षिणादानं परिक्रयार्थम् । उदवसानीयं न सत्राङ्गम् । **भा.** १०।२।१२।३९-४०.

**उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात् तत्र दानं धर्ममात्रं स्यात्** । १०।२।१२।४० ॥

'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेत' इति उदवसानीयः सोम उक्तः । स सत्रधर्मा सत्रस्य धर्मा एव धर्मा यस्यासौ सत्रधर्मा स्यात् तदङ्गत्वात् सत्राङ्गत्वात् । तस्मात् तत्र उदवसानीये सत्राङ्गे यत् दानं सहस्रदक्षिणायाः, तत् धर्ममात्रं स्यात् न परिक्रयार्थम् । तस्मात् उदवसानीयः सत्रधर्मा तत्र दानं धर्ममात्रं अदृष्टार्थं इति पूर्वः पक्षः ।

**न त्वतत्प्रकृतित्वाद् विभक्तचोदितत्वाच्च** । ४१ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । उदवसानीयो ज्योतिष्टोमो न सत्रधर्मा, न च तत्र दानं धर्ममात्रम् । अतत्प्रकृतित्वात् उदवसानीयस्य सत्रप्रकृतिकत्वाभावात् । विभक्तचोदितत्वाच्च, सत्रात् विभक्तत्वेन उदवसानीयस्य चोदितत्वात् । सत्रमुत्सृज्य उदवसानीयः कर्तव्यः । सत्रात् उदवसाय उत्थाय इत्यर्थः । उत्पूर्वस्य अवपूर्वस्य स्यतेः प्रहाणं इत्यर्थः तत् कृत्वा । तस्मात् विभक्तचोदितत्वात् उदवसानीयो न सत्राङ्गं, न च तत् तत्प्रकृतिकं सत्रप्रकृतिकं तस्मादत्र दानं परिक्रयार्थम् । इति सिद्धान्तः । **के.**

* उदवसानीयः सत्रिभिरैकैकश्येन कार्यः । **भाट्ट.** १०।२।१२. * **उदवसानीयस्य** ऋत्विजां सत्रिभ्यो भिन्नता । **वि.** १०।२।१३. * उदवसानीयस्य सत्रानङ्गत्वात् दक्षिणादानस्य ऋत्विक्परिक्रयार्थत्वम् । **भा.** १०।२।१२।३९-४०.

उदवसानीयन्यायः । उदवसानीयस्य सत्रानङ्गत्वात् दक्षिणादानं ऋत्विक्परिक्रयार्थम् ॥

**उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्, तत्र दानं धर्ममात्रं स्यात् । १०।२।१२।४० ॥**

**भाष्यम्**— अस्ति उदवसानीयः 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति । तत्र एषोऽर्थः सांशयिकः दक्षिणादानं धर्ममात्रं, उत परिक्रयार्थमिति । तथा इदमपरं द्वैतं किं सत्राङ्गमुदवसानीयः, नेति । यदि सत्राङ्गं धर्ममात्रं दानम् । अथ न सत्राङ्गं, परिक्रयार्थमिति । किं प्राप्तम् ? सत्राङ्गमिति । कुतः ? सत्रप्रकरणात् । सत्रं परिसमाप्य कर्तव्यमिति श्रूयते । सत्रप्रकरणात् सत्रं लक्षयित्वा इति गम्यते । उदवसानीयश्च सत्रस्य विधीयते इति । सत्रस्य च फलार्थत्वात् नोदवसानीयार्थता गम्यते । न च सत्रोदवसानकाले उदवसानीयः । लक्षणा हि तथा स्यात् । अनङ्गत्वे च फलं कल्पयितव्यम् । तस्मात् आनन्तर्यात् एकवाक्यतासंबन्धाच्च सत्राङ्गमुदवसानीयः । सत्रं यथोक्तं परिसमाप्य न संतोष्टव्यम् । न तावत् कृत्वा कृतिता मन्तव्या । इदमपरं तस्याङ्गं कर्तव्यमुदवसानीयः, इत्येवं अभिसंबन्धः क्रियते । यथा 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । तस्मात् सत्राङ्गम् । एवं चेत् साङ्गस्य सत्रस्य स्वयंकर्तृकत्वात् धर्ममात्रं तत्र दानम् । सत्रधर्मा उदवसानीयः इति ।

**टुप्**— 'न च सत्रोदवसानकाले उदवसानीयः, लक्षणा हि तथा स्यात्' इति (भाष्यस्य) कोऽभिप्रायः । उत्तरं–) न (तावत्) सत्रं अस्मिन् वाक्ये विधीयते (विहितत्वात्) । न सत्रं क्व चित् (अन्यत्र अङ्गत्वेन विधीयते), न सत्रे (अपि) किंचित् (विधीयते) इति सत्रं (परिशेषात्) परार्थे (उदवसानीयकाललक्षणाऽर्थं) उच्चार्येत (सिद्धान्ते)। तत एषा लक्षणा स्यात् इत्यभिप्रायः (तथाच लक्षणापरिहाराय सत्राङ्गत्वेन उदवसानीयो विधीयते)। 'वाजपेयेनेष्ट्वा' (इति) 'सत्रादुदवसाय' इति च तुल्यं मत्वा पूर्वपक्षं करोति । **उत्तरः पक्षः** (अभिधीयते) नैतयोस्तुल्यता क्रिययोः (वाजपेयसत्रक्रिययोः) । वाजपेयेनेष्ट्वा इति निर्वर्त्य (अनुष्ठाय) पूर्वक्रियां अन्यत् क्रियाऽन्तरम् विधीयते तदङ्गतया । लक्षणया तु त्यागो गम्यते, न तु शब्देन । एतत् इष्ट्वाशब्देन उच्यते (समापनम्) । क्रियाविशेषा हि (क्रियायाः अवस्थाविशेषाः) आरम्भानुष्ठानपरिसमाप्तयः (न तु तथा त्यागः) । तस्मात् न त्यागः शब्देनोच्यते । (इह तु) उत्पूर्वः अवस्यतिः श्रुत्यैव त्यागं ब्रवीति (सत्र–) कर्मणः । यदन्यत् विधीयते (पृष्ठशमनीयं), तस्याङ्गता नास्ति, पूर्वं कर्मणः परिसमाप्तत्वात् । यदि उदवसायशब्दः अनुगृह्येत (तत्) कथमङ्गं (स्यात्) । अथ अङ्गं, उदवसायशब्दो बाध्येत ।

**न त्वतत्प्रकृतित्वाद् विभक्तचोदितत्वाच्च । ४१॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । नैतदेवं, धर्ममात्रमत्र दानमिति । किं तर्हि ? परिक्रयार्थमिति । कुतः ? नैतत् सत्राङ्गं, विभक्तचोदितत्वात् । नैतत् बृहस्पतिसवेन सौत्रामण्या च तुल्यम् । तत्रैवं श्रूयते यथोक्ताङ्गं कृत्वा नैव संतोष्टव्यं, इदमपरं तस्य कर्तव्यमिति । इह पुनः सत्रमुत्सृज्य, उदवसानीयः कर्तव्य इति । सत्रादुदवसाय उत्थायेत्यर्थः । तत्र अन्योऽर्थः क्त्वाशब्दस्य । यथोदितं निर्वर्त्य न प्रहातव्यम् । उत्पूर्वस्य अवपूर्वस्य स्यतेः प्रहायेत्यर्थः । प्रहाणे इह क्त्वाशब्दः, तत्र पुनरनुष्ठानानन्तर्ये । तस्माद्विभक्तचोदितत्वान्न सत्राङ्गं, न च सत्रप्रकृतिकम् । तस्मादत्र दानं परिक्रयार्थमिति ।

**सोम**— यदि सत्रे न परिक्रयः, तर्हि तदङ्गे पृष्ठशमनीयेऽपि परिक्रयाभावात् दानमदृष्टार्थं इत्युत्थितेः (दृष्टान्त–) **संगतिः** । **सूत्रे** सत्रधर्मा सत्रवत् यजमानकर्तृकः इति ।

**वि**— 'सत्राङ्गं स्यान्न वा पृष्ठशमनीयो, ल्यपाऽङ्गता । सौत्रामण्यादिव, न्मैवं त्यागादूर्ध्वं विधानतः ॥
श्रूयमाणा दक्षिणेयं पूर्वपक्षेऽत्र धर्मकृत् । परिक्रयार्था सिद्धान्ते निमित्तं स्यात् समापनम् ॥'

**भाट्ट**— अनारभ्य 'सत्रादुदवसाय पृष्ठशमनीयेन सहस्रदक्षिणेन यजेरन्' इति श्रुतम् । सोऽयं पृष्ठशमनीयः प्रकृतिविकृतिसाधारणसत्रमात्राङ्गं, उत सत्रोदवसाने निमित्ते

नैमित्तिकोऽयं स्वतन्त्रः इति चिन्तायां, सत्राणां फलवत्त्वात् अफलोऽयं बृहस्पतिसवन्यायेन ( ४।३।१२।२८ ) सत्राङ्गम्। यद्यपि वा सत्रोदवसानं निमित्तं, तथापि अश्वप्रतिग्रहेष्टिन्यायेन ( ३।४।११ ) सत्राङ्गम्। न च उत्पूर्वकस्य अवस्यतेः तद्विषयकव्यापारोपरमवाचित्वात्, अङ्गत्वे च अस्यापि तद्विषयकव्यापारत्वावश्यंभावात् उदवसानोत्तरत्वानुरोधेन स्वतन्त्रफलकल्पनायामपि न दोषः इति वाच्यम्। एकसत्रोत्तरमपि सत्रान्तरस्य तस्यैव वा कामनावशतः करणसंभवेन सत्रत्वावच्छिन्नविषयकव्यापारसामान्योपरमस्य कदाऽपि निश्चेतुमशक्यत्वात्। अतस्त्वयाऽपि तद्व्यक्तिप्रयोगोपरमः एव उदवसानपदार्थो वाच्यः। स च ममापि संभवतीति युक्तमङ्गत्वं बृहस्पतिसवादिवत्। न च एवमङ्गप्रधानयोरेककर्तृत्वात् यजमानैरेव करणापत्तौ दक्षिणाऽऽम्नानानुपपत्तिः, तस्याः अदृष्टार्थत्वाङ्गीकारेण अकर्मकरेभ्योऽपि ब्राह्मणेभ्यो दानोपपत्तेः। वस्तुतस्तु अङ्गत्वेऽपि प्रयोगबहिर्भूतत्वेन पृष्ठशमनीयस्य ऋत्विक्कर्तृकत्वोपपत्तेः बृहस्पतिसवे इव दक्षिणाऽऽम्नानं न विरुध्यते। 'ये यजमानास्ते ऋत्विजः' इत्यनेन हि सत्रप्रयोगमध्यवर्त्यार्त्विज्योद्देशेनैव वाजपेयप्रयोगमध्यवर्तियूपोपसदीक्षोद्देशेन सप्तदशारत्नित्वादिविधिवत् यजमानविधानात् बृहस्पतिसवयूपादौ आतिदेशिकधर्मप्राप्तिवत्, इहापि ऋत्विगन्तरस्यैव प्राप्त्युपपत्तिः। अतश्च दक्षिणाऽऽम्नानस्यापि उपपत्तेः अङ्गमेव पृष्ठशमनीयः। इति प्राप्ते, 'सत्रादुदवसाय' इत्यत्र उत्पूर्वकस्य अवस्यतेः ( षो अन्तकर्मणि। सो स्यति ) सत्रत्वावच्छिन्नोपधेयफलव्यक्त्युद्देश्यकव्यापारसामान्योपरमवाचित्वात्, सत्यपि सत्रान्तरस्य अग्रे कर्तव्यत्वे एतत्सत्रोपधेयफलव्यक्तेः व्यापारान्तराभावेन उदवसानोपपत्तेः, अङ्गत्वे च तदसंभवादनङ्गत्वम्। 'वाजपेयेनेष्ट्वा' 'संस्थाप्य पौर्णमासीम्' इत्यादौ तु प्रयोगसमाप्तिमात्रस्यैव उक्तेर्नाङ्गत्वविघातः। अतः सत्रोदवसाने निमित्ते नैमित्तिकोऽयं पुरुषार्थतया विधीयते। अतश्च तदकरणे प्रत्यवायः करणाच्च पापध्वंसः। प्रयोजनं, अङ्गत्वे सत्राधिकारिभिः संहत्य ऋत्विगन्तरसंपादनेन करणं, अनङ्गत्वे तु वक्ष्यते। अत एव आतिदेशिकस्य कर्त्रैकत्वस्य सात्तद्दश्यादिना बाधकल्पकत्वात् अध्यायसंगतिः।

**मण्डन**—'सत्राङ्गं नोत्तरो यजिः।'

**शंकर**—'उदवसाने यजेः फलम्।'

* 'यावतोऽश्वान्' इत्यनेनैव विधेयसंख्योपलक्षणीभूतनिमित्तयत्ताप्रतिपादकेन अश्वसंख्यावच्छिन्नं नैमित्तिकं इति **उद्वसानीयन्यायेन** श्रूयमाणमपि वारुणबहुत्वमविवक्षितम्। **रत्न.** ५।१।२।३. * 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र क्त्वाप्रत्ययबलादेव उदवसानसमानकर्तृबहुत्वलाभात् क्रियाविशेषणमात्रविधायिनि आख्याते कर्तृगतबहुत्व-साहित्याद्यविवक्षा दशमे वक्ष्यते। **कौ.** ३।१।७।१३ पृ. १७५.

* **उद्वसानीयया** ज्योतिष्टोमसमाप्तिः। **सु.** पृ. १५३९. * **उद्वसानीयायां** सवनविभागतुल्यं साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्यमोत्तमोच्चारणं संपादनीयम्। ज्योतिष्टोमे। **वा.** ३।३।९ पृ. ८१२. * **उदयनीयानिर्वापार्थः** प्रायणीयानिष्कासः, (उदयनीया उदवसानीया च एकमेव कर्म)। **भा.** ११।२।१६।६७-६९, * प्रायणीयोदयनीययोः एकादशिन्याः समस्तैः संबन्धः कर्तव्यः इत्युक्तम्। विधेस्त्वेकश्रुतित्वात् ( ११।१।१६ ) इत्यत्र। ११।१।१०।५४. * **उद्वसानीयेष्टिः** अवभृथोत्तरम्। **वि.** ६।५।१३.

* **उद्वसानीयोत्कर्षः** अवभृथोत्कर्षात् संभवति। **के.**

## उद्वसानीयोत्कर्षेऽपि प्रतिहोमानां नानुष्ठानम्॥

**प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः। ६।५।१२।४२॥**

**भाष्यम्**—ऊर्ध्वमवभृथात्, आ उदवसानीयायाः इष्टेर्ये होमाः, तेषु अतिपन्नेषु दैवेन मानुषेण वा प्रतिबलेन, भवति संशयः किं प्रतिहोमः कर्तव्यः, उत नेति। किं प्राप्तम्? कर्तव्य इति। उन्मुक्तदीक्षो हि स तदा भवति। दीक्षाणामुन्मोचनार्थो हि अवभृथः। तस्मात् कर्तव्यास्ते न कृता इति। **एवं प्राप्ते, ब्रूमः।** ऊर्ध्वमवभृथात्, आ उदवसानीयायाः इष्टेः, अतिपन्नानां न प्रतिहोमः स्यात्। कुतः? प्रतिषेधात्। प्रतिषेधो हि भवति, 'एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं होतव्यं' इति

प्रागुदवसानीयाया होमस्य प्रतिषेधः । यावदुदवसानीया उत्कृष्यते, तावत् प्रतिषेधः । एवं श्रुतिः, इतरथा लक्षणा स्यात् । तस्मादकर्तव्याः । ते न कृता इति न स्यात् प्रतिहोम इति ।

**सोम**--पूर्ववैषम्येण **संगतिः** । **सूत्रार्थस्तु**-अवभृथादूर्ध्वं इष्टेः प्राक् न होमः इष्ट्यनन्तरं अधिकारप्रतिपादनवचनेन अर्थात् पूर्वं प्रतिषेधात् इति ।

**वि**—' दैवादुदवसानीयोत्कर्षे होमे कृतिर्न वा ।, कृतिर्दीक्षोन्मोचना, न्नो पुनराधेयसंमितेः ॥ ' ' पुनराधेयसंमितया ' इत्यादिवचनात् उदवसानीयायां कृतायां पश्चादग्निहोत्राधिकारप्रतिपादनात् । १३.

**भाट्ट**— कृतेऽवभृथे यदि उदवसानीयोत्कर्षो दैवादिना भवेत्, तदा काले प्राप्ते अग्निहोत्रहोमः एव कर्तव्यः, तदकरणे वा प्रतिहोमः कार्यः, दीक्षायाः अवभृथेन उन्मोचितत्वात् । यत्तु ' एतया पुनराधेयसंमितया इष्ट्या इष्ट्वाऽग्निहोत्रं जुहोति ' इति वचनं, तत् प्रकरणान्तरन्यायात् सोमाङ्गतया उदवसानीयेष्ट्यङ्गतयैव वा कर्मान्तरविधायकम् । **इति प्राप्ते,** निषेधप्रतियोगित्वेन अग्निहोत्रादेरुपस्थितत्वात् तदपेक्षितावधिसमर्पकत्वेनापि उपपत्तौ यागान्तरविधायकत्वानुपपत्तेः दीक्षोन्मोकेऽपि उदवसानीयेष्टिप्रतीक्षाया आवश्यकत्वात् पूर्ववदेव अनधिकारात् न प्रतिहोमादिकरणम् । यदा तु दीक्षा संजाता यस्य इति दीक्षित इति व्युत्पत्त्या वृत्तदीक्षोत्पत्तिकत्वमेव निषेधप्रयोजकं रूपमाश्रीयते, तदा दीक्षाऽभावेऽपि सर्वदा निषेधप्रसक्तौ उदवसानीयायाः अवधित्वमव्याहतमेवेति न तदुत्कर्षे प्रतिहोमादि । १३.

**मण्डन**-- ' प्रतिहोमो न चोत्कर्षे । ' १३.

**शंकर**-- ' प्रतिहोमश्च नो तत्र । ' १४.

* **उदवसानीयोत्तरमेव** पुनरग्निहोत्रारम्भः । तत्र दैवात् उदवसानीयोत्कर्षे होमो वा प्रतिहोमो वा न कार्यः अनधिकारात् । **वि.** ६।५।१३.

* **उदात्तादयः** पटुमृदुत्वादयश्च धर्माः ध्वनिगता एव, न वर्णगताः । **वि.** १।१।६.

* **उदासीनं** अनीप्सितं कर्म यथा ' तृणं स्पृशति ' । **मणि.** पृ. १३०.

* **उदाहरणं** साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति द्विविधम् । हेतुमदुद्देशेन साध्यवदुपादानं आद्यं यथा ' यो धूमवान् स वह्निमान् यथा महानसः' इति । साध्याभाववदुद्देशेन हेत्वभाववदुपादानं द्वितीयं, यथा ' यो न वह्निमान् न स धूमवान् यथा ह्रदः ' इति । तत्र एकेनैव गतार्थत्वात् न द्वयोरावश्यकता इति । **मणि.** पृ. ४०. * सदृष्टान्तव्याप्तिप्रतिपादकवाक्यत्वं **उदाहरणत्वं,** यथा, ' यो धूमवान् सोऽग्निमान् यथा महानसः ' इति । पृ. ३९.

* **उदितं** अनुवदितुं उच्यमाने प्रवृत्तिविशेषक्रिया नास्ति । **भा.** १०।५।२३।७७, * **उदिते** होष्यामीति प्रक्रान्ते अन्यथा क्रियमाणे भवति दोषः । २।४।२।२३.

⌛ ' **उदितसूर्योर्घ्यनिन्दा अनुदितसूर्यार्घ्यश्लाघामेव करोति** ' **इति न्यायानुसारेण** वृषलीत्वबोधकवचनं रजोदर्शनात् पूर्वकालीनदानस्य श्लाघामेव करोति । **ब्राह्मणमहासंमेलने.** पृ. ३५.

* **उदितानुदितहोमौ**--'न चानुदितहोमोक्तावुदितोक्तिरनर्थिका । क्लेशक्षयव्ययादीनां नातिरेकोऽत्र कश्चन ॥ ' **वा.** १।३।२।४ पृ. १८९. ***उदितानुदितहोमयोः** शाखाऽन्तरीययोः समविकल्पः सर्वान् प्रति इति शाखाऽन्तराधिकरणे वार्तिकं न स्वमतं किंतु परमतम् । **बाल.** पृ. ९१.

* **उदीच्याश्च** देशान्तरे (गताः अपि) उद्वृषभयज्ञादीन् ( कुर्वन्त्येव तथापि न असौ देशधर्मः, किन्तु सर्वधर्मः ) । **भा.** १।३।७।१९. * **उदीच्यैः** उद्वृषभयज्ञादयः ( क्रियन्ते ) । ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति, सोऽयं उद्वृषभयज्ञः । (क्वचित्तु आषाढ्यां पूर्वापरदिने वा समायाते मूलनक्षत्रे कुर्वन्ति । ) **वि.** १।३।८. * **उदीच्यानां** केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारः भार्यापत्यमित्रसहभोजनादिश्च अनाचारः । **वा.** १।३।३।७ पृ. २०४.

* **उदीच्यादिदेशव्यवस्था** विन्ध्यापेक्षया । **सु.** पृ. २५५.

* उद्गाता उद्गानं करोति । तस्य पुरुषास्त्रयः, प्रस्तोता प्रतिहर्ता सुब्रह्मण्यश्चेति । तत्र प्रथमो दक्षिणां संपूर्णां ( १२ गाः ) प्राप्नोति, द्वितीयस्तदर्धं ( ६ गाः ), तृतीयः तृतीयांशं ( ४ गाः ), चतुर्थश्चतुर्थमंशं ( ३ गाः ) । वि. ३।७।१७. * औद्गात्रस्य कर्ता अध्येता वा **उद्गाता** इत्युच्यते । कथं ? उद्गातुः कर्म औद्गात्रमिति प्रसिद्धम् । एवं चेत् व्यक्तं औद्गात्रस्य कर्ता उद्गातेति गम्यते । **भा. ३।५।८।२६.** * **उद्गातारः** वरणनिमित्ता उद्गाननिमित्ता वा बहवो न संभवन्ति इति वेदसंयोगनिमित्ताः कल्प्यन्ते । **वा. ३।५।८।२६.** * **उद्गातारं** अध्वर्युर्दीक्षयति द्वादशाहादिसत्रे । **वि. ३।७।१७.** * **उद्गात्रा** औद्गात्रं कर्तव्यम् । **भा. ३।७। १९।४०,** * **उद्गात्रे** सामभिर्युक्तं रथं ददाति वाजपेये । नान्यत्, न चान्यस्मै । १०।३।२१।७५.

⌛ **उद्गातृचमसभक्षाधिकरणम्** । उद्गातृचमसः सर्वैरुद्गातृभिर्भक्षणीयः ॥

**उद्गातृचमसमेकः, श्रुतिसंयोगात् । ३।५।८।२३ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति । तत्रास्ति ' प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम् ' इति । तत्रास्ति समाख्यानात् भक्ष इत्युक्तम् । तत्र संदेहः किमेक एव एनं चमसं उद्गाता भक्षयेत्, उत सर्वे भक्षयेयुः, अथ सुब्रह्मण्यवर्जिताश्छन्दोगाः भक्षयेयुः, अथवा सह सुब्रह्मण्येनेति । किं तावत् प्राप्तम् ? एको भक्षयेत् उद्गातैव । कुतः ? श्रुतिसंयोगात् । उद्गाता एकः श्रुत्या संयुज्यते चमसेन ' प्रोद्गातॄणाम् ' इति । ननु बहुवचनं श्रूयते, तेन बहवो भक्षयेयुः, उच्यते । श्रूयते बहुवचनं, तत् उद्गातृप्रातिपदिकगतं, तत् विवक्षितं सत् उद्गातृबहुत्वं ब्रूयात् । एकश्च उद्गाता । तत्र बहुत्वं श्रूयमाणमपि न शक्नुयात् उद्गातृभेदं कर्तुम् । तस्मात् अविवक्षितं बहुवचनम् । अनुमानं हि एतत् बहूनां चमस इति । कथम् ? ' यत् बहुषु प्रातिपदिकं वर्तते, ततो बहुवचनं भवति, बहुवचनं तु ततो दृश्यते प्रोद्गातॄणां इति, तस्मात् नूनं बहूनां चमसः ' इत्यनुमानम् । प्रत्यक्षं तु एक उद्गाता, न द्वितीयो न तृतीयः । अनुमानाच्च प्रत्यक्षं कारणं बलवत् भवेत् । तस्मात् एकस्य चमसः, स च उद्गातुरिति ।

**वा**— इदानीं वषट्कारहोमाभिषवभक्षान् अनुक्त्वैव प्रसङ्गात् समाख्याभक्षविशेषानुसरणमेव तावत् करोति । तस्मिन्नेव प्रैषे ( ' प्रैतु होतुः ' इत्यादौ पूर्वाधिकरणोक्ते ) ' प्रोद्गातॄणां ' इति श्रूयते । तत्र चतुर्धा संदेहः किमेक एवोद्गाता भक्षयेत्, उत सर्वर्त्विजः, उत स्तोत्रकारिणः, आहोस्वित् चत्वारोऽपि छन्दोगा इति । के चित्तु द्वितीयचतुर्थयोः पक्षयोः एकत्वमिच्छन्ति, सूत्रद्वयेऽपि सर्वशब्दप्रयोगात्, लक्षणायाश्च प्रत्यासत्तेः केवलच्छन्दोगविषयत्वात् । कुतः संदेहः ? ' **विसंवादः स्फुटो ह्यत्र प्रकृतिप्रत्ययार्थयोः । तत्र कस्यानुरोधेन कस्य वृत्तिर्भवेदिति ॥** ' तत्र पाशाधिकरणन्यायेन ' गुणे त्वन्याय्यकल्पनैकदेशत्वात् ' ( ९।३।५।१५ ) इति प्रातिपदिकार्थप्राधान्यात् । ' उद्गातारं वृणीते ' इति च उत्पत्तौ एकत्वात् एकस्मै एव उद्गात्रे चमसो दातव्यः श्रूयते । तस्मात् एको भक्षयेत् । प्रातिपदिकार्थासंभविनो बहुवचनस्य अविवक्षितत्वात् । इति पूर्वः पक्षः ।

**सर्वे वा, सर्वसंयोगात् । २४ ॥**

**भाष्यम्**—सर्वे वा भक्षयेयुः । एकस्मिन् उद्गातरि भक्षयति बहुवचनं प्रमादादधीतं इति गम्यते, न हि तदनूद्यते, न विधीयते इति । ननु सर्वेष्वपि भक्षयत्सु उद्गातृशब्दः प्रमादो गम्यते । उच्यते । लक्षणार्थोऽपि तावत् संभविष्यति उद्गातृप्रभृतयः इति ।

**वा**—न युक्तः अत्यन्तं बहुत्वत्यागः । पाशमन्त्रस्य प्रकरणे बहुत्वं न कथं चित् प्रकारेणास्ति इत्यविवक्षा युक्ता । अत्र पुनः लक्षणायां उपपद्यमानायां नाविवक्षा उपपद्यते । तस्मात् सर्वर्त्विजामेष चमसः । अथवा अवान्तरसंबन्धात् सर्वच्छन्दोगग्रहणं इति व्याख्येयम् ।

**स्तोत्रकारिणो वा, तत्संयोगाद् बहुत्वश्रुतेः । २५ ॥**

**भाष्यम्**—उच्यते । नैतदस्ति बहूनां चमस इति । कुतः ? उद्गातृशब्दस्य चमसेन संबन्धः प्रत्यक्षेण वाक्येन । बहुवचनस्य पुनः उद्गातृशब्देन श्रुत्या संबन्धः ।

अन्येन ऋत्विजा तु बहुवचनस्य नैव कश्चिदस्ति संबन्धः। तस्मात् बहूनां चमस इत्यनुपपन्नमिति। **अत्रोच्यते**। शक्नोति अयमुद्गातृशब्दो बहुत्वं वदितुं क्रियायोगेन। उद्गायन्ति इति उद्गातारः। के ते ? प्रस्तोता उद्गाता प्रतिहर्ता इति। तत् एतेन बहुवचननिर्देशेन आनुमानिकक्रियायोगनिमित्तः उद्गातृशब्दो विवक्षित इति अवगमिष्यामः। बहुवचनं हि एवमवक्लृप्तं भविष्यति उद्गातृशब्दस्य। तस्मात् स्तोत्रकारिणां चमस इति।

**वा**-- यस्मात् बहुवचनस्य उद्गातृव्यतिरिक्तैः सह प्रातिपदिकेन अनुपात्तत्वात् संबन्धो नावकल्पते, न च निर्निमित्ता लक्षणा अवकल्पते, न च लक्षणया विना आनर्थक्यं, अवयवप्रसिद्ध्या स्तोत्रकारिषु उपपद्यमानत्वात्। तस्मात् गीतिसंयोगात् त्रयः स्तोत्रकारिणो भक्षयेयुः।

**सर्वे तु वेदसंयोगात्, कारणादेकदेशे स्यात्। २६॥**

**भाष्यम्**-- सर्वे छन्दोगाः सहसुब्रह्मण्याः भक्षयेयुः। किमिति ? गानसंयोगादिति नायं पक्ष उपपद्यते। कथम् ? एकस्तत्र उद्गानेन संबद्धः, इतरो गानेन। अन्यत् हि गानं, अन्यत् उद्गानम्। गीतिमात्रं गानं लौकिकं वैदिकं च। द्वितीयं साम्नः पर्व उत्पूर्वस्य गायतेः अभिधेयं प्रसिद्धम्। तत्र एक एव उद्गीथं करोति इति एक एवोद्गाता, न बहवः। तस्मात् गानसंयोगात् बहवो भविष्यन्ति इति एतदपि नोपपद्यते। कथं तर्हि ? वेदसंयोगात्। औद्गात्रं नाम प्रवचनं, तथा औद्गात्राणि कर्माणि। औद्गात्रस्य कर्ता, अध्येता वा 'उद्गाता' इति उच्यते। कथम् ? उद्गातुः कर्म औद्गात्रमिति प्रसिद्धम्। एवं चेत् व्यक्तं औद्गात्रस्य कर्ता उद्गाता इति गम्यते। यस्य उद्गाता प्रसिद्धः, तद्विशिष्टं कर्म अनाख्यातमपि औद्गात्रमिति वदति। शब्दश्च यस्य औद्गात्रं प्रसिद्धं, स तस्य कर्तारं 'उद्गातेति वदति अनाख्यातमपि। यथा यस्य उदमेघः प्रसिद्धः, स तस्य अनाख्यातमपि अपत्यं औदमेघिः इति ब्रूते। यस्य औदमेघिः (प्रसिद्धः), स तस्य पितरं अनाख्यातमपि उदमेघं प्रतिपद्यते। एवं औद्गात्रसंबन्धात् उपपद्यते उद्गातृशब्दः प्रस्तोताऽपि, उद्गाताऽपि, प्रतिहर्ताऽपि, सुब्रह्मण्योऽपि। एवं बहुवचनं उद्गातृशब्दश्च उभयमपि उपपन्नं भविष्यति। न चान्यः कश्चिद्दोषः। तस्मात् औद्गात्रेण संबद्धाश्चत्वारः उद्गातृचमसं भक्षयेयुरिति। यत्र कारणमस्ति, तत्र अपसुब्रह्मण्या उद्गातारः। यथा उद्गातृशब्दः 'विनिषद्य उद्गातारः साम्ना स्तुवते' इति स्तोत्रकारिषु। यथा इदमपि वचनं 'उद्गातारो नापव्याहरेयुः, उत्तमायामेषोत्तमा (इति ब्रूयुः)' इति अपसुब्रह्मण्यानामेव।

**वा**-- न तावत् समुदायप्रसिद्धौ संभवन्त्यां अवयवप्रसिद्धिः प्रातिपदिकस्य युक्ता। न च अवयवप्रसिद्धिरपि अत्र स्तोत्रकारिषु विद्यते। गातारौ हि प्रस्तोतृप्रतिहर्तारौ नोद्गातारौ। तेन बहुवचनमनुपपन्नमेव। 'द्वितीयं साम्नः पर्व उत्पूर्वस्य गायतेः अभिधेयम्' इति (भाष्यं) भक्तिः इति वक्तव्ये प्रमादात् पर्वशब्दः प्रयुक्तः। (नायं भाष्यकारस्य प्रमादः, पञ्चानां सप्तानां वा भक्तीनामेव पर्वशब्दबोध्यत्वसंभवात्। भक्तयः विभागाः पर्वाणि इत्यनर्थान्तरम्। अत एव ३।३।१।१ पृ. ८०४- 'समूहास्त्वेकवाक्यानां ये पादपदपर्वणाम्। ऋग्यजुःसामजातानि प्रत्येकं तेषु सन्ति नः॥' इति श्लोके वार्तिककारेण स्वयमेव पर्वशब्दः भक्तिपर्याय एव प्रयुक्तः। तथा च भाष्यदूषणमयुक्तम्। के.)। तस्मान्न वरणनिमित्ताः उद्गाननिमित्ता वा बहव उद्गातारः संभवन्ति इति वेदसंयोगनिमित्ताः कल्प्यन्ते। छन्दोगप्रवचनं हि औद्गात्रशब्देनाभिधीयते तत्प्रवचनस्थं कर्म, तत्संबन्धाच्च पुरुषाः प्रवक्तृत्वेन अनुष्ठातृत्वेन च औदमेघिन्यायेन (भाष्योक्तेन) उद्गातारः इत्यनुमातुं शक्यते। **ननु च** एष न्यायः अवेष्ट्यधिकरणे (२।३।२) निराकृतः। तथाहि, '**उद्गातृपदमौद्गात्रं प्रसूते तद्धिते कृते! न त्वौद्गात्रपदादस्य व्युत्पत्तिरुपपद्यते**॥' स्मरन्ति हि उद्गातुरिदं इति अण् प्रत्ययं, न तु तस्य कर्ता इति प्रत्ययलोपम्। तस्मात् न औद्गात्रशब्दात् एषः (उद्गातृशब्दः राज्यशब्दात् राजशब्द इव) अनुगन्तव्यः। तथा च वरणनिमित्तं इति वक्ष्यति (३।७।९) तेन अयुक्तमिदं व्याख्यानमिति। **उच्यते**। '**उद्गाता गौण**

**एवात्र मुख्योद्गातुरसंभवात्। कल्पितोऽयं परावृत्त्या ब्राह्मणादिषु राजवत्॥**' यथैव तत्र ( अवेष्ट्यधिकरणे ) 'योगात् लोकः प्रयुङ्क्ते' इत्यारभ्य एवं व्याख्यातं, 'प्रथमं जातिनिमित्तो राजा, ततः तत्संबन्धात् पालनं राज्यं, तत्संबन्धादपि ब्राह्मणादिषु स्थानापत्त्या वा अनुमानेन वा राजशब्दः' (अत्र 'योगात् लोकः प्रयुङ्क्ते' इति शब्दशोऽनुवादः, उत्तरश्च तात्पर्यतः भाष्यानुवादः ) तथैव अत्रापि वरणात् एक एवोद्गाता, ततः तत्संयोगात् कर्मप्रवचनयोः औद्गात्रशब्दः, तद्योगादपि स्तोत्रकारिषु उद्गातृशब्दः। स च शब्दस्य अनेकार्थत्वासंभवात् गौणः। मुख्यासंभवाच्च इह गौणत्वाश्रयणं पूर्वमेवोक्तम्। केवलं तु निमित्तं नोक्तम्। भवेदिदानीं प्रवचनं संबन्धात्मकं कथितम्। तस्मात् अविरोधात् सर्वच्छन्दोगानां अयं भक्ष इति।

( एवं ससुब्रह्मण्यानां भक्ष इति भाष्यपक्षो व्याख्यातः। अथ स्वमतेन अपसुब्रह्मण्यानां छन्दोगानां भक्षः इत्याह– ) न तु एतत् युक्तम्। भक्षणवेलायां हि ये व्याप्रियन्ते तत्संनिहिताश्च प्रैषकाले, ते भक्षणेन संबध्यन्ते। न च सुब्रह्मण्यस्य तस्मिन् काले कश्चित् व्यापारः अतो नास्य सदसि अन्तर्वेद्यां वा संनिधानमस्ति, येन भक्षे अधिकृतः स्यात्। तत्र यथैव प्रवचनसंयोगे सत्यपि अन्येषां अकर्मसंयुक्तानां छन्दोगानां भक्षो न भवति, एवं सुब्रह्मण्यस्यापि इति मन्यामहे। कपिञ्जलवच्च त्रिष्वेव बहुत्वश्रुतिः अवस्थास्यते। न च भक्षः कर्तृसंस्कारः, येन यद्वर्जनभयात् सर्वत्रावधार्यते। द्रव्यसंस्कारोऽयं इति तत्रतत्र स्थापयिष्यामः। तस्मात् उपपत्त्यन्तरं तुशब्देन व्यावर्त्य स्तोत्रकारिपक्षपरिग्रहः एवायं इति समर्थनीयम्। एतदुक्तं भवति, सर्वे तु अनेन शब्देन अभिधीयन्ते, न स्तोत्रकारिण एव केवलाः, तथापि तु यथोक्तात् कारणात् एकदेशे सुब्रह्मण्यवर्जे प्रवर्तते यथा 'विनिषद्य उद्गातारः साम्ना स्तुवन्ति' इत्यत्र। अथवा 'सर्वे तु' इति अवान्तरपूर्वपक्षं परिगृह्य 'कारणादेकदेशे स्यात्' इति सूत्रान्तरं स्तोत्रकारिपक्षे नियोक्तव्यम्।

**सोम**— समाख्यानात् इति सूत्रेण ( ३।५।७।२२ ) समाख्यानिमित्तभक्षे कथिते तत्प्रसङ्गादनन्तरा चिन्ता। **सूत्रार्थस्तु**– एकस्योद्गातुः उद्गातृश्रुत्या चमससंयोगावगमात् स एकः एवोद्गातृचमसं भक्षयेत् इति।

**वि**— 'प्रोद्गातॄणामिति ह्येक उद्गाता भक्षयेदुत। सर्वेऽपि किंवा सुब्रह्मण्येनोक्ताः सामगायिनः॥ सहितास्तेन ते वा, ऽऽद्य उद्गातृश्रुतितोऽखिलाः। बहुत्वाद् गानयोगेन तृतीयो, रूढिबाधिते॥ योगे समाख्यया दण्डिन्यायादन्त्योऽत्र भाष्यगः। सदसि स्थित्यभावेन तृतीयो वार्तिकोदितः॥' ( उद्गातृश्रुतितः आद्यः पक्षः। बहुत्वात् बहुवचनात् अखिलाः सर्वे ऋत्विजः इति द्वितीयः। गानयोगात् त्रयश्छन्दोगा एवेति तृतीयः। योगे रूढिबाधिते सति समाख्यया अन्त्यः चतुर्थः। चत्वारोऽपि छन्दोगाः इति भाष्यपक्षः इत्यर्थः। **के.** )

**भाट्ट**—तत्रैव 'प्रैतु होतुः' इत्यादिमन्त्रे 'प्रोद्गातॄणां' इति श्रुतम्। तेन किं उद्गातैव एकः तच्चमसभक्षणे विनियुज्यते, उत उद्गातृप्रस्तोतृप्रतिहर्तारः त्रयः इति चिन्तायां, प्रातिपदिकश्रुत्या उद्गातैव। **न च** बहुवचनानुरोधेन अस्य सर्वतोमुखादौ उत्कर्षः, प्रातिपदिकस्य वा लिङ्गसमवायेन त्रितयपरत्वं, योगेन वा उत्कृष्टगानकारित्वेन तत्त्रितयपरत्वं कल्प्यतां इति **वाच्यम्**। उद्गातृशब्दस्य प्रचुरप्रयोगेण उद्गीथापरपर्यायसामतृतीयभागरूपोद्गानकर्तरि रूढत्वात् गुणभूतबहुवचनानुरोधेन त्वदुक्तायाः त्रिविधाया अपि अन्याय्यकल्पनायाः पाशाधिकरणन्यायेन अनुपपत्तेः। नहि उत्कर्षायोगः एव तदधिकरणविषयः प्रकरणबाधापादकतया उत्कर्षायोगे श्रुतिबाधापादकलक्षणाद्ययोगस्य सुतरां तदधिकरणविषयत्वात्। अतो बहुवचनमेव व्यत्ययानुशासनादिरीत्या एकत्वलक्षणार्थं व्याख्येयम्। **न च** एकत्वलक्षणायां जहत्स्वार्थताऽऽपत्तेः प्रातिपादिके एव अजहत्स्वार्थता युक्ता इति केषांचिदुक्तं **युक्तम्**। मुख्यत्वप्राधान्याभ्यां प्रातिपादिके जघन्यवृत्त्यङ्गीकारे निरस्ते जहत्स्वार्थतायाः फलमुखत्वेन अदोषत्वात्। **न च** प्रतिहर्त्रादिकर्मण्यपि तत्प्रतिपादकवाक्येषु च औद्गात्रं कर्म, औद्गात्रं काण्डं वा, इति समाख्यानात् तत्कर्तर्यपि प्रतिहर्त्रादौ उद्गातृ-

शब्दस्य शक्त्यैव प्रयोगोपपत्तेः अनेकार्थकस्य उद्गातृशब्दस्य बहुवचनानुरोधेन 'निषद्य उद्गातारः स्तुवते' इत्यादिवत् त्रितयपरत्वं, अविशेषाद्वा ससुब्रह्मण्यचतुष्टयपरत्वं किं न स्यात् इति वाच्यम्। अनेकशक्तिकल्पनाभिया उद्गानकर्तृवाचकस्यैव उद्गातृपदस्य लक्षणादिनाऽपि क्वाचित्कसर्वविषयप्रयोगोपपत्तेः। अत एव मुख्योद्गातुरेव कर्म मुख्यमौद्गात्रम्। तद्वेदसंयोगाच्च अन्यत्रापि औद्गात्रशब्दः उद्गातृशब्दश्च गौणः, इति द्रष्टव्यम्। अतः पाशाधिकरणन्यायेन उद्गातैव एकः पिबेत्। इति प्राप्ते, न उद्गातृशब्दस्य ऋत्विग्विशेषे शक्तिः। क्लृप्तावयवयोगेनैव उत्कृष्टगानकर्तृमात्रवाचित्वेन उपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात्। प्रचुरप्रयोगस्य आहवनीये अग्निपदवत् निरूढलक्षणयाऽपि उपपत्तेः। न च अत्र रथकारादिशब्दवत् अवयवार्थं विहाय ऋत्विग्विशेषे प्रयोगः, येन अतिरिक्ताऽपि शक्तिः कल्प्येत। न च उद्गायतिरपि उद्गीथवाची एव इति नियमः 'उद्गायतीनामरविन्दलोचनम्' इत्यादौ अन्यत्रापि प्रयोगात्। अत एव पङ्कजादिशब्दस्य मण्डूकादौ प्रयोगाभावेन योगरूढकल्पनायामपि प्रकृते न तत्कल्पना, अपि तु अग्निशब्दवत् निरूढलक्षणैव। अतश्च तात्पर्यग्राहकसत्त्वे लाक्षणिकार्थग्रहणेऽपि प्रकृते 'अग्निमुपनिधाय स्तुवीत' इतिवत् मुख्यार्थसंभवे लाक्षणिकार्थग्रहणायोगात् बहुवचनानुरोधाच्च 'निषद्य उद्गातारः' इतिवत् प्रकृतानुपूर्वीयगानकर्तॄणां त्रयाणामेव ग्रहणम्। न सुब्रह्मण्यस्य भाष्यकारोक्तस्यापि गानकर्तृत्वाभावात्। मूलग्रन्थान्यथाकरणं तु युक्त्यनुरोधेन न दोषः, सिद्धान्ते अन्यथात्वाभावात् इति ध्येयम्। ६.

**मण्डन**—'सुब्रह्मण्यो न भक्षयेत्।' उद्गातृचमसम्।

**शंकर**—'उद्गातृभक्षः स्तोतॄणाम्।'

**उद्गातृचमसमेकः, श्रुतिसंयोगात्। ३।५।८।२३॥**

प्रथमपूर्वपक्षसूत्रमेतत्। अस्ति ज्योतिष्टोमे उद्गातृचमसः कश्चित्। सोमशेषभक्षः चमसिनां विद्यते इति पूर्वाधिकरणे साधितम्। उद्गातृचमसं च एकः उद्गाता एव ऋत्विक् भक्षयेत्, नान्योऽपि। कुतः? श्रुतिसंयोगात्। उद्गातृचमसः इति श्रुत्या उद्गातृसंबन्धेन चमसस्य वाचकेन पदेन, उद्गातुरेव केवलस्य संयोगात् संयोगस्य बोधनात्। अन्येनापि भक्षणे तु उद्गातृचमस इति श्रुतिर्नोपपद्येत। तस्मात् उद्गातृचमसं उद्गाता एक एव भक्षयेत् इति प्रथमः पूर्वपक्षः।

**सर्वे वा, सर्वसंयोगात्। २४॥**

प्रथमपूर्वपक्षनिरासार्थो वा-शब्दः। सर्वे एव दश एकादश वा चमसिनः अन्येऽपि वा सर्वे अवशिष्टा ऋत्विजः उद्गातृचमसं भक्षयेयुः। ननु तथा सति उद्गातृचमस इति श्रुतिर्बाधिता स्यात्। मैवम्। 'प्रोद्गातॄणां' (उद्गातॄणां चमसः प्र एतु गच्छतु) इति उद्गातृचमसपरे वचने उद्गातॄणां इति बहुवचनेन उद्गातृभिन्नानामपि अर्थात् सर्वेषामेव चमसेन सह संयोगस्य संबन्धस्य उक्तत्वात्। सर्वाभावे तु बहुवचनं बाधितं भवेत्। तस्मात् उद्गातृशब्दः लाक्षणिकः प्रत्येतव्यः। स लक्षणया सर्वान् सोमपातॄन् बोधयिष्यति। तस्मात् सर्वैः उद्गातृचमसो भक्षणीयः इति द्वितीयः पूर्वपक्षः।

**स्तोत्रकारिणो वा, तत्संयोगाद् बहुत्वश्रुतेः। २५॥**

वा-शब्दः प्रथमद्वितीयपूर्वपक्षव्यावृत्त्यर्थः। न सर्वे उद्गातृचमसं भक्षयेयुः, किंतु स्तोत्रकारिणः, स्तोत्रं ये कुर्वन्ति गायन्ति ते, उद्गाता च प्रस्तोता च प्रतिहर्ता चेति त्रय एव भक्षयेयुः। तत्संयोगात् गानसंयोगात्। सुब्रह्मण्यस्य तु नास्ति गानसंयोगः। इतरेषां तु ऋत्विजां सुतरां नास्ति गानसंयोगः। ननु 'प्रोद्गातॄणां' इति वचने उद्गातृशब्दः पठ्यते। उद्गाता च उद्गीथभक्तेः गायकः, स च एक एव इति चेत्, सत्यम्। तथापि उद्गातॄणां इति बहुत्वश्रुतेः बहुवचनश्रुतेः लक्षणया त्रयो गानकर्तारो गृह्यन्ते।

अस्मिन् सूत्रे यद्यपि स्तोत्रकारिणां इति पाठः अनेकेषु आदर्शपुस्तकेषु दृश्यते। 'तस्मात् स्तोत्रकारिणां चमस इति' इति भाष्याच्च तथैव पाठः सिध्यति, तथापि अधिकरणस्य प्रथमसूत्रे 'एकः' इति, द्वितीये चतुर्थे च सूत्रे 'सर्वे' इति प्रथमान्तानामेव पदानां दर्शनात् प्रकृतसूत्रेऽपि स्तोत्रकारिणः

इति प्रथमाबहुवचनान्तः एव पाठो युक्तः । वृत्तौ कुतूहले च प्रथमान्तः एव पाठः स्पष्टः । वार्तिके च 'त्रयः स्तोत्रकारिणो भक्षयेयुः' इति सुस्पष्ट एव प्रथमान्तः पाठः । तस्मादस्माभिरपि स एव स्वीकृतः ।

**सर्वे तु वेदसंयोगात्, कारणादेकदेशे स्यात् । २६ ॥**

इदं सिद्धान्तसूत्रम् । तु–शब्दः स्तोत्रकारिमात्रपक्षं व्यावर्तयति । न त्रय एव स्तोत्रकारिणः भक्षयेयुः किंतु उद्गातृगणस्थिताः सर्वे चत्वारोऽपि उद्गातृचमसं भक्षयेयुः । वेदसंयोगात् गानवेदसंयोगात् । सामवेदो गानवेदः । सुब्रह्मण्योऽपि सामवेदोक्तमेव कर्म करोति । तस्मात् सुब्रह्मण्यसहिताश्चत्वारो भक्षयेयुः । कारणादेकदेशे स्यात्, यत्र तु 'विनिषद्य उद्गातारः साम्ना स्तुवते' इति वचने औदुम्बरीशाखासमीपे, बहिष्पवमाने च सदसो बहिरपि विनिषद्य उपविश्य साम्ना स्तुवते इत्यत्र गानरूपकारणात् उद्गातृशब्देन सुब्रह्मण्यो ग्रहीतुं न शक्यते, तत्र उद्गातृशब्दः एकदेशे चतुष्टयैकदेशे त्रितये स्यात् । विशिष्टात् कारणात् सुब्रह्मण्यो न ग्राह्यः । तथा कारणाभावे तु सुब्रह्मण्यसहिता एव ग्राह्याः । तस्मात् ससुब्रह्मण्यसहिताश्चत्वार उद्गातृगणीया उद्गातृचमसं भक्षयेयुः । तदिदं **भाष्यकारमतम्** । **वार्तिककारस्तु** अपसुब्रह्मण्यानामेव त्रयाणां भक्षं सिद्धान्तयति । तन्मते इत्थं सूत्रार्थः– वेदसंयोगात् सामवेदसंयोगात् यद्यपि 'प्रोद्गातॄणां' इति उद्गातृशब्देन सर्वे चत्वारोऽपि अभिधीयन्ते, तथापि कारणात् भक्षणकाले सदसि अन्तर्वेद्यां वा सुब्रह्मण्यस्य व्यापाराभावेन अनुपस्थितिरूपात्, एकदेशे चतुष्टयैकदेशे उद्गातृत्रितये एव उद्गातृशब्दः स्यात् । तस्मात् त्रयाणामेव भक्षः इति । किंच वार्तिककारैः 'अथवा सर्वे तु वेदसंयोगात् इति पृथक् सूत्रम् । तेन ससुब्रह्मण्यपक्षः उक्तः । तस्य पक्षस्य निराकरणं 'कारणादेकदेशे स्यात्' इति पृथक् कृतेन सूत्रेण कृतम्' इत्युक्तम् ।

**कुतूहले** तु वार्तिककारपक्षं निराकृत्य पुनः भाष्यकारपक्ष एव साधितः ।

कारणादेकदेशः स्यात् इति कुतूहले पाठः । तत्र एकस्य सुब्रह्मण्यस्य देशः अतिसर्जनं त्यागः स्यात् इति व्याख्यातम् ।

* **उद्गातृप्रतिहर्त्रोः** ज्योतिष्टोमे बहिष्पवमाने युगपदपच्छेदेऽपि अस्ति पृथक् प्रायश्चित्तम् । **भा.** ६।५।१७। ४९–५० । परंतु विरुद्धत्वेन एकत्र उभयानुष्ठानासंभवात् विकल्पेन एकं किंचिदनुष्ठेयम् । ६।७।१८।५१–५३.

* **उद्गातृप्रातिपदिकं** उद्गीथशब्दाभिधेयायाः सामभक्तेः उद्गातरि रूढम् । **वि.** ३।५।८.

**⌛ उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानम् ॥**

**यद्युद्गाता जघन्यः स्यात्, पुनर्यज्ञे सर्ववेदसं दद्याद्, यथेतरस्मिन्** । ६।५।२०।५५ ॥

**भाष्यम्**— यदा प्रतिहर्तुः पूर्वमपच्छेदः तत उद्गातुः, तत्र अदाक्षिण्येन इष्ट्वा पुनर्यष्टव्यम् । तत्र संदेहः पुनर्यागे किं द्वादशशतं दातव्यं, उत सर्वस्वमिति । किं प्राप्तम् ? द्वादशशतम् । कुतः ? एवं हि आम्नायते 'तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यं स्यात्' इति । पूर्वस्मिंश्च प्रयोगे ज्योतिष्टोमदक्षिणैव प्राप्ता । तस्मात् द्वादशशतं इति । **एवं प्राप्ते, ब्रूमः** । तत्र पुनर्यज्ञे सर्वस्वं दद्यात् यथेतरस्मिन् पूर्वस्मिन्नहनि सर्वस्वम् । कथं तत्र सर्वस्वमिति चेन्न, प्रतिहर्तुरपच्छेदात् । प्रतिहर्तरि अपच्छिन्ने द्वादशशतं बाधित्वा सर्वस्वं दास्यं भवति । ननु पूर्वस्मिन्नहनि द्वादशशतमपि असौ दास्यन् आसीत् । सत्यं, सर्वस्वदानेन तु उभयं प्रदत्तं भवति, तस्मात् तत् देयम् । ननु अर्वागपि द्वादशशतात् सर्वस्वम् । नैतदेवम् । अङ्गीकृते द्वादशशते सर्वस्वमभ्यधिकं भवति । अपिच पूर्वस्मिन्नहनि नैव द्वादशशतं दास्यं भवति । एतावद्धि दास्यं इत्युच्यते, यस्य उत्तरकाले तावत् दास्यं भवति । न च पूर्वस्मिन्नहनि द्वादशशतं दीयते । तस्मात् न तत् दास्यमित्यवगम्यते । मिथ्याबुद्धिः सा, तत्त्वेन व्यवहारः । **ननु** च सर्वस्वमपि प्रतिषिद्धं भवति तदप्यसौ न दास्यन् इति साऽपि अस्य मिथ्याबुद्धिः । **नेत्याह** । साभ्यासस्य ज्योतिष्टोमस्य प्रयोगः । तत्र प्रथमप्रयोगे अदाक्षिण्यविरोधात् सर्वस्वं

बाध्यते। द्वितीयप्रयोगे तद्दानं चोद्यते। तत्र विरोधो नास्ति। तस्यैव यज्ञस्य स एव प्रयोगः। प्रतिहर्ता च तस्मिन्नपच्छिन्नः इति द्वादशशतं बाधित्वा सर्वस्वमेव दास्यं भवति। तस्मात् सर्वस्वं तत्र देयमिति।

**टुप्**— द्वादशशतं सर्ववेदसेन बाधितं न तत् दास्यन् भवति। सर्ववेदसमपि अदाक्षिण्येन (पाश्चात्येन) प्रतिषिद्धं, तदपि न दास्यन् भवति। इति साम्ये परिचोदिते परिह्रियते। बाधो हि परिमाणान्तरोपदेशेन वा प्रतिषेधेन वा संभवति। न च परिमाणान्तरं चोद्यते। न च सर्ववेदसं प्रतिषिध्यते। ननु अदक्षिणः संस्थाप्यः इति दक्षिणाप्रतिषेधः। न। यथा न गृह्णाति षोडशिनमिति। अदक्षिणस्य संस्थापनं निर्वृत्तिः कथ्यमाना अन्यथा न संभवति इति दक्षिणानिवृत्तिः कल्प्यते, न शब्दात्। साभ्यासत्वात् क्रतोः उभयं संभवति। तस्मात् नार्थात् सर्ववेदसनिवृत्तिरिति। अनिवृत्तौ तु प्रतिहर्त्रपच्छेदात् सर्ववेदसं दास्यन् भवति। तस्य प्रयोगान्तरे निक्षेपः क्रियते।

**सोम**— परनिमित्तप्रायश्चित्तस्य कर्तव्यत्वं विना एतद्विचारासंभवेन पूर्वापेक्षत्वात् **संगतिः**। **सूत्रार्थस्तु**— यद्युद्गाता पश्चादपच्छिन्नः, तदा पुनःप्रयोगे सर्ववेदसं दद्यात् यथेतरस्मिन् प्रतिहर्त्रपच्छेदवति प्रयोगे इति।

**वि**— 'उद्गातुः पश्चिमच्छेदे पुनर्यागस्य दक्षिणा। शतं द्वादशयुक्तं स्याद्यदि वा सर्ववेदसम्॥, तद्द्यात् यत् पुरा दित्सुरित्युक्तेः शतदक्षिणा। प्रतिहर्तुः पुरा छेदात् सर्ववेदसबाधितम्॥ शतदानं, पूर्वयागे सर्ववेदसदित्सुता। प्राप्तेत्यूर्ध्वे प्रयोगे तद्दातव्यं सर्ववेदसम्॥'

**भाट्ट**— क्रमेऽपि यदि उद्गात्रपच्छेदो जघन्यः, तदा तन्निमित्तपुनःप्रयोगे सर्वस्वमेव देयं, न तु द्वादशशतं परिनिमित्तापातात्, पूर्वं तस्यैव पूर्वप्रयोगे देयत्वेन प्रसक्तत्वात्, 'तत्र तद्दद्यात्' इत्यनेन यत् पूर्वप्रयोगे परनिमित्तापातात् पूर्वं देयत्वेन प्रसक्तं तस्यैव दक्षिणात्वेन विधानात्, द्वादशशतस्य पूर्वनिमित्तेनैव बाधितत्वेन देयतया अप्रसक्तेः। अतश्च यद्यपि सर्वस्वमपि अदाक्षिण्येन दक्षिणोत्कर्षेण वा पूर्वप्रयोगे वस्तुतो बाधितमेव, तथापि परनिमित्तापातात् पूर्वं बाधज्ञानाभावात् देयत्वेन प्रसक्तौ न काचित् क्षतिः।

यदा तु प्रतिहर्त्रपच्छेदो जघन्यः, तदा तस्मिन्नेव प्रयोगे सर्वस्वं देयं, न तु पूर्वापच्छेदनिमित्तकः पुनःप्रयोगः कार्यः। न च सर्वस्वदाने अदाक्षिण्यस्यैव विरोधात् तद्बाधेऽपि पुनःप्रयोगबाधे प्रमाणाभावः, अदाक्षिण्यपुनःप्रयोगयोः समुच्चितयोरेव नैमित्तिकत्वेन एकाभावे इतरस्यानुपपत्तेः। अतश्च यथा पत्न्याः श्मश्रूणामभावात् केशानामपि न वपनं, साहित्यस्य विवक्षितत्वात्, तथैव अदाक्षिण्यस्याभावे पुनःप्रयोगस्याप्यभावः। **यद्यपि** च दक्षिणोत्कर्षस्य पुनःप्रयोगाङ्गतया विधानस्य आवश्यकत्वादेव पूर्वप्रयोगे अदाक्षिण्यस्य अर्थप्राप्तत्वात् 'अदक्षिणं तं' इत्यस्य अनुवादत्वमुच्यते, **तथापि** पाक्षिकानुवादमियैव अदाक्षिण्यलोपे पुनःप्रयोगलोपः इति द्रष्टव्यम्। वस्तुतस्तु 'सोममपभज्य' इतिवत् पाक्षिकानुवादत्वेऽपि पुनःप्रयोगलोपे प्रमाणाभावः। **न च** तस्य संसृष्टद्रव्यमात्रोपलक्षणत्वात् न पाक्षिकानुवादत्वमिति **वाच्यम्**। संसृष्टद्रव्यनाशेऽपि पूर्वप्रयोगाङ्गभूतकर्त्रानत्यर्थं विश्वजितः आवश्यकत्वेन पाक्षिकानुवादत्वानिवारणात्। वस्तुतस्तु नायमनुवादः, 'तत्र तद्दद्यात्' इत्यनेन पूर्वप्रयोगे दातव्यदक्षिणायाः पुनःप्रयोगाङ्गतया विधानेऽपि पूर्वप्रयोगाङ्गभूतकर्त्रानत्यर्थं तस्मिन्नपि तस्या आवश्यकत्वेन अदाक्षिण्यप्राप्त्यभावात्। **न च** एवं पुनःप्रयोगस्य ज्योतिष्टोमत्वादेव द्वादशशतादिरूपदक्षिणाप्राप्त्युपपत्तेः 'तत्र तद्दद्यात्' इत्यस्य वैयर्थ्यमिति **वाच्यम्**। तस्य पूर्वप्रयोगे एकविंशत्यादिपक्षकरणेन पुनःप्रयोगे द्वादशशतादेरपि प्राप्त्यापत्तौ तन्निवृत्त्यर्थत्वेन सार्थक्यात्, उद्गातुर्जघन्यत्वे सर्ववेदसप्राप्त्यर्थत्वाच्च। न चैवं केशश्मश्रुन्यायेन पुनःप्रयोगबाधः, तत्र द्वंद्वेन साहित्यस्य उपादेयकेशश्मश्रुगतत्वेन उक्तत्वात् साहित्यावच्छिन्नस्यैव क्रियाङ्गत्वेन प्रत्येकं तदङ्गत्वाभावात्। प्रकृते तु अरुणैकहायन्योरिव अपनयदेवताऽन्तरसंयोगयोरिव च (चन्द्राभ्युदितेष्टौ) प्रत्येकमेव क्रियाऽन्वयात् एकवाक्योपादानादिना पश्चात् साहित्यावगमेऽपि नैकलोपे

अपरस्य लोपः। नहि आरुण्यासंभवे एकहायनीलोपः, उपांशुयाजे देवताऽन्तरसंयोगाभावे वा अपनयलोपः इष्टः। अतः प्रतिहर्तुः परत्वे पूर्वप्रयोगे सर्वस्वं दत्त्वा पुनःप्रयोगेऽपि तद्देयं इति सिद्धम्।

यदा तु आद्यप्रयोगे उद्गातृमात्रापच्छेदः, तन्निमित्तकद्वितीयप्रयोगे च प्रतिहर्त्रपच्छेदः, तदा तत्रैव सर्वस्वमेव देयं, नैमित्तिकत्वेन नित्यदक्षिणाबाधकत्वात्। **न च** पुनःप्रयोगस्य प्रायश्चित्ततया पूर्वप्रयोगाङ्गत्वात् 'तत्र तद्दद्यात्' इत्यनेन च पूर्वप्रयोगाङ्गभूतदक्षिणाया एव उत्तरप्रयोगवृत्तित्वमात्रविधानात् अङ्गगुणविरोधन्यायेन (१२।२।९) अङ्गभूतपुनःप्रयोगाङ्गसर्वस्वदक्षिणाबाधेन प्रधानभूतपूर्वप्रयोगाङ्गदक्षिणायाः एव देयत्वमुचितं इति **वाच्यम्**। अपूर्वविधित्वाद्दृष्टार्थत्वादिदोषप्रसङ्गेन उत्तरप्रयोगवृत्तिदक्षिणायाः पूर्वप्रयोगाङ्गत्वानुपपत्तेः। अतः तस्यापि पुनःप्रयोगाङ्गत्वात् परेण नैमित्तिकेन पूर्वस्य बाधात् सर्वस्वमेव देयम्।

**मण्डन**— 'सर्वं दद्यात् पुनर्यज्ञे।' २१.

**शंकर**— 'परौद्गात्रे सर्वधनम्।' देयमिति शेषः। २२.

* **उद्गात्रपच्छेदे** उत्तरकालीनेऽपि पुनःप्रयोगे पूर्वकालीनप्रतिहर्त्रपच्छेदप्रयुक्तं सर्वस्वमेव दातव्यम्। **वि.** ६।५।२, * उद्गात्रपच्छेदे ज्योतिष्टोमे बहिष्पवमाने 'अदक्षिणो यज्ञः संस्थाप्यः, अथान्य आहृत्यः, तत्र तत् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्' इत्युक्तम्। ६।५।१७.

**उद्गात्रपच्छेदविशिष्टस्यैव अह्नः अहर्गणे आवृत्तिः न तु सर्वस्य अहर्गणस्य ॥**

**अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत, कर्मपृथक्त्वात्।** ६।५।२१।५६ ॥

**भाष्यम्**— अहर्गणे यदा भवति कस्मिंश्चिदहनि उद्गातुरपच्छेदः तदा संदेहः किं कृत्स्नः अहर्गणः आवर्तेत, उत तदेव अहः इति। किं प्राप्तं? कृत्स्नः अहर्गणः। कुतः? अपरैरहोभिर्विना असौ विगुणो भवति। तस्मात् अहर्गण एव आवर्तेत इति। **एवं प्राप्ते, ब्रूमः।** यस्मिन् अपच्छेदः तदेव आवर्तेत। कुतः? कर्मपृथक्त्वात्। पृथगेतानि कर्माणि, नान्यदहरन्यस्य गुणभूतम्। 'इष्ट्वा' इति च यागं परिसमाप्य इति गम्यते, न साङ्गमिति। यानि अहरन्तराणि साहाय्येन उपकरिष्यन्ति, विद्यन्ते एव तानि। अतः साहाय्यं करिष्यन्तीति। तस्मात् तदेवावर्तेत।

**शा**— '**अशाब्दत्वात् समूहस्य न फलं प्रति चोदना। यागस्य चोदना तत्र यागाः प्रत्येकमेव ते ॥ अतो मिथोऽनपेक्षास्ते यागाः स्वाङ्गसमन्विताः। फलं संहत्य कुर्वन्ति स्वापूर्वद्वारमाश्रिताः ॥ तेन यस्मिन्नपच्छेदस्तदावृत्तिगुणान्वितम्। अनावृत्तिगुणैरन्यैः संहत्य कुरुते फलम् ॥**'

**सोम**— पूर्वस्मिन् प्रयोगाभिधानेऽपि इह प्रयोगावृत्तिः स्यात् अतः प्रयोगाभिधानमनुपपन्नं इति पूर्वपक्षे पर्यवसानात् **संगतिः**। अत्र पूर्वप्रयोगे दक्षिणादानाभावात् द्वितीयप्रयोगेऽपि न किंचिद्देयं इति **केचित्**। द्वादशाहे दीयमानाया दक्षिणायाः सर्वाहःसाधारण्यात् एकस्याप्यह्नः कृत्स्ना द्वादशाहदक्षिणा देया **इत्यन्ये**।

**वि**— 'अहर्गणे चेदुद्गातृच्छेद आवर्त्यतां गणः। किंवा यत्र दिने छेदस्तदेवावर्त्यतां दिनम् ॥, गणावृत्तिः प्रयोगैक्यात्, प्रयोगोऽवान्तरः पृथक्। तेनाहरेकमावर्त्यमनङ्गत्वान्न हीतरत् ॥'

**भाट्ट**— द्वादशाहाद्यहर्गणे यदि एकस्मिन् कस्मिंश्चिदहनि उद्गातुरपच्छेदो भवति, तदा कृत्स्नस्य अहर्गणस्य आवृत्तिः। सुत्याहर्गणस्यैव द्वादशाहपदवाच्यत्वेन फलसाधनत्वात् तस्यैव प्रायश्चित्तादिरूपाङ्गग्राहित्वात्। अस्तु वा उत्पत्तिवाक्ये प्रत्येकं कारणत्वावगमात् द्वादशाहपदेनापि च समुदायिनामेव प्रत्येकमेव फलं प्रति करणत्वं, एकपदोपादानाच्च करणानां समुच्चयः। अतश्च अङ्गग्राहित्वमपि प्रत्येकमेव। तथापि यत्क्रतुसंबन्ध्युद्गाता अपच्छिन्द्यात् तेन क्रतुना यजेत इत्यर्थावगमात् उद्गातुश्च एकस्यैव सर्वसाधारणत्वेन सर्वावृत्तिः। **इति प्राप्ते**, नोद्गातुः क्रतुसंबन्धो विवक्ष्यते, अपितु आवश्यकत्वात् यत्क्रतुसंबन्धिबहिष्पवमानार्थं प्रसर्पन् उद्गाता अपच्छिन्द्यात्, तेन क्रतुना यजेत इत्यर्थावगतेः, तस्य च प्रतिसुत्यं भेदेन, तत्सुत्याया एव

आवृत्तिः । तत्सुत्याया अपि च तत्सुत्याऽव्यवहितोत्तरमेव आवृत्तिः, साङ्गपूर्वसुत्याकरणव्यतिरेकेण उत्तरसुत्यायामनधिकारात् । अत एव पूर्वाङ्गानामपि अत्र नावृत्तिः इति ध्येयम् ।

**मण्डन**— 'पुनरेकमहर्भवेत् ।' २२ आवर्तनीयम् ।

**शंकर**— 'अकृत्स्नाऽऽवृत्तिरहर्गणे ।' २३.

* **उद्गानं** गानात् अन्यत् । उद्गानं द्वितीयं साम्नः पर्व उत्पूर्वस्य गायतेः अभिधेयं प्रसिद्धम् । तच्च उद्गाता एव गायति । **भा.** ३।५।८।२६.

* '**उद्गीथ** उद्गातॄणां' इति लिङ्गात् कर्म ज्ञायते । **भा.** ३।७।२०।४२. * उद्गीथः नाम पाञ्चभक्तिके साम्नि तृतीया भक्तिः, साप्तभक्तिके तु चतुर्थी । **के.**

* **उद्दिश्यमानं** तावद्विवक्षितमित्युक्तम् । **वा.** ३।१।१५।२७ पृ. ७४३, * उद्दिश्यमानं हि सर्वत्र फलं भवति । १।४।५।८. * **उद्दिश्यमानस्य** च प्रधानस्य विशेषणमविवक्षितम् । **टुप्.** ७।१।१।२ पृ. १५२६. * **उद्दिश्यमाने** हि प्रातिपदिकार्थसंबन्धिमात्रापेक्षित्वान्न संख्याऽऽकाङ्क्षा । प्रमाणान्तरादेव विज्ञातसंख्यत्वात् । **वा.** ३।१।७।१४ पृ. ७२३. * **उद्दिश्यमानत्वात्** करणविभक्तिरविवक्षितैव । **टुप्.** ९।१।१।१ पृ. १६३९, * उद्दिश्यमानत्वात् यागस्य स्वपदगतं पदान्तरगतं च विशेषणं अविवक्षितम् । ७।१।१।२ पृ. १५२५.

§ **उद्दीप्ते भवने च कूपखनने प्रत्युद्यमः कीदृश इति न्यायः ।** ( भवनोद्दीपनोत्तरं कूपखननोद्योगः व्यर्थः इति ) । **साहस्री.** ९८४.

* **उद्देशपरित्यागात्मको** यागः । **के.**

* **उद्देश्यम्** । 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।' **श्लो. वा.** अनुमानं १०९. * **उद्देश्यानां** उद्देश्यैः संबन्धो नावकल्पते । **वा.** २।३।१३।२६. * **उद्देश्यताऽवच्छेदकं** विधेयव्याप्यं इति नियमः । **संकर्ष.** ३।३।११. * **उद्देश्यताऽवच्छेदकस्य** द्रव्यविषयस्य निरूपणं कृतमत्राधिकरणे । **के.** ३।१।५।११. * **उद्देश्यताऽवच्छेदकावच्छेदेन** विधेयान्वयः शब्दस्वभावसिद्धः । **भाट्ट.** १०।८।९.

§ **उद्देश्यत्वं** कृतिसमवायाघटितसंबन्धेन प्रकृतभावनाऽन्वयित्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वम् । तदभावश्च उपादेयत्वम् । अस्ति चेदं उद्देश्यत्वं स्वर्गादिरूपे फले, प्रातरादिरूपे काले, सरस्वतीदक्षिणतीरादिरूपे देशे, राहूपरागादिरूपे निमित्ते । तेषां यथोक्तकर्मताऽऽदिसंबन्धेन भावनासंबन्धिनां कृतिविषयत्वाभावेन प्रकृतविध्यप्रयुक्तत्वात् । अस्ति चेदं समादावपि, तस्य वस्तुतः कृतिव्याप्यत्वेऽपि लोकसिद्धसमोपजीवनेन प्रकृतविध्युपपत्तेः, व्रीह्यादिवच्च निष्पत्त्युत्तरकालं विहारदेशप्रापणादिरूपक्रियाऽन्तरव्याप्यत्वाभावेन प्रकृतविधिप्रयुक्तिविषयत्वाभावात् । अत एव पश्वादिद्रव्यस्य तन्निष्ठगुणादेश्च वस्तुतो लोकसिद्धत्वेऽपि विहारदेशप्रापणादिक्रियाविषयत्वेन प्रकृतविधिप्रयुक्तिविषयत्वात् नातिव्याप्तिः । एवं आहवनीयादेः आधानविधिप्रयुक्ताधाननिष्पन्नत्वेन 'यदाहवनीये जुहोति' इत्यादिप्रकृतविधेः उत्पत्त्यप्रयोजकत्वेऽपि प्रणयनप्रादुष्करणादिरूपक्रियाऽन्तरव्याप्यत्वेन रूपेण प्रयुक्तिविषयत्वसत्त्वात् नातिव्याप्तिः । एवं पुरोडाशकपालस्यापि विहारदेशव्यवस्थितस्य हस्तग्रहणादिरूपक्रियाविषयत्वं द्रष्टव्यम् । संस्कार्यस्य च 'व्रीहिभिर्यजेत' इति वाक्ये प्रयुक्तिविषयत्वेऽपि 'व्रीहीन् प्रोक्षति' इत्यादिसंस्कारबोधकप्रकृतविधौ प्रयुक्तिविषयत्वाभावात् उद्देश्यत्वाविघातः । **कौ.** १।४।६।८ पृ. २२४–२५. * उद्देश्यत्वं देवतायाः 'अस्यै इदं' इति द्रव्यत्यागसंकल्पविषयत्वम् । **सु.** पृ. ७५३. * उद्देश्यत्वं ( फलस्य ) नाम मानसापेक्षाविषयत्वाकारविशेषः । (विषयताविशेषः इत्यर्थः) । **वि.** १।४।६. * **उद्देश्यत्वविधेयत्वे** च स्वरूपसंबन्धरूपविषयताविशेषात्मके ( क्व चित्, क्व चित्तु साध्यत्वानुष्ठेयत्वात्मके ) । **भाट्ट.** ४।१।२.

§ **उद्देश्यविशेषणं अविवक्षितं इति न्यायः ।** ( ३।१।७।१३–१५ ) **संस्कारमयूखे** पृ. २८. * **उद्देश्यविशेषणस्य** अविवक्षा उक्ता नोद्देश्यस्यापि । **टुप्.** १०।७।२०।७२. * ईप्सितोद्देश्यविशेषणस्यैव

निमित्तोद्देश्यविशेषणस्यापि ग्रहैकत्वाधिकरणन्यायेन अविवक्षा । भाट्ट. ६।४।६.

* **उद्देश्योपादेयत्वे** एकस्य युगपत् विरुद्धे । **वा.** २।१।१२।२२ पृ. ७३७.

* **उद्धरणं** ( अग्नेः ) यदा दर्शपूर्णमासार्थेन क्रियते तत्रैव च अग्निहोत्रं प्रवर्तते, तदा अग्निहोत्रोद्धरणमन्त्रः न कर्तव्यः । **भा.** ९।४।८।३१, * **उद्धरणस्य** ( उत्खेदनस्य ) कृत्स्नस्य प्रकाशकत्वं अग्निगुप्रैषगतश्येनशलाकश्यपकवषस्त्रेकपर्णाशब्दानाम् । ९।४।५।२५–२७. * **उद्धरणपक्षः** सिद्धान्तः अजस्रपक्षः पूर्वपक्षः । **संकर्ष.** ३।२।५.

* **उद्भित्**— ' अथैष उद्भित् सप्तदशो भवति बृहत्सामा निषेधब्रह्मसामा ' इति तलवकारीयताण्डके वाक्यम् । निषेधनामकं माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रार्थं साम यस्मिन् स तादृशः । **कु.** १।४।६।१७. * उद्भित्— उच्छब्दस्य ऊर्ध्वत्वे भिदेश्च विदारणे लोकव्याकरणयोः प्रसिद्धत्वात् उद्भिच्छब्दस्य खनित्रे अवयवप्रसिद्धिर्लोके । **सु.** पृ. ३९८. * उद्भित्– उच्छब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः । उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इति उद्भित् यागः । **भा.** १।४।१।२ पृ. ३२५. * उद्भिच्चित्रादिशब्दानां फलपदान्वयनिरासेन यज्यन्वयः अभिहितो भावार्थाधिकरणे ( २।१।१।२ ) । **सु.** पृ. ३९२. * उद्भित्सौर्यादीनां काम्यानां अनुष्ठाने पाठक्रमो न नियामकः । **भाट्ट.** ५।३।१२.

**उद्भिदधिकरणम्** । उद्भिन्न्यायः ॥

( अत्र भाष्यमते सूत्रद्वयेन एकमेवाधिकरणम् । भवदेव–शा–वि–भाट्ट–कौ–कु–मतेन तु प्रथमसूत्रेण प्रथममधिकरणम् । तत्र उद्भिदादिनामधेयं धर्मे प्रमाणं इति शीर्षकम् । द्वितीयसूत्रेण तु द्वितीयमधिकरणम् । तस्य उद्भिदादिपदं यागनामधेयं इति शीर्षकम् । भाष्यादेरेव तु अत्र संग्रहः क्रियते ) ।

**उक्तं समाम्नायैदमर्थ्यं, तस्मात् सर्वं तदर्थं स्यात् ।** १।४।१।१ ॥

**भाष्यम्**— ' उद्भिदा यजेत ' ' बलभिदा यजेत ' ' अभिजिता यजेत ' ' विश्वजिता यजेत ' इति समामनन्ति । तत्र संदेहः किमुद्भिदादयो गुणविधय आहोस्वित् कर्मनामधेयानीति । कुतः संशयः ? उभयथाऽपि प्रतिभातो वाक्यात् । उद्भिदेत्येष शब्दो यजेतेत्यनेन संबध्यते । स किं वैयधिकरण्येन संबन्धमुपैति, उद्भिदा द्रव्येण यागमभिनिर्वर्तयेदिति, उत सामानाधिकरण्येन उद्भिदा यागेन यजेतेति । द्वेधाऽपि एतस्मिन् प्रतिभाति वाक्ये, संभवति संशयः । किं तावत् प्राप्तम् ? उक्तमस्माभिः समाम्नायस्य ऐदमर्थ्यम् । कश्चिदस्य भागो विधिः, यः अविदितमर्थं वेदयति यथा 'सोमेन यजेत' इति । कश्चिदर्थवादः, यः प्ररोचयन् विधिं स्तौति यथा ' वायुर्वै क्षेपिष्ठा देवता ' इति । कश्चिन्मन्त्रो यो विहितमर्थं प्रयोगकाले प्रकाशयति यथा ' बर्हिर्देवसदनं दामि ' इत्येवमादिः । तस्मादुद्भिदादयः अमीषां प्रयोजनानामन्यतमाय प्रयोजनाय भवेयुः । तत्र तावन्नार्थवादः, वाक्यशेषो हि स भवति विधातव्यस्य । न च मन्त्रः । एवंजातीयकस्य प्रकाशयितव्यस्य अभावात् । पारिशेष्यात् गुणविधिः । उद्भिद्गुणता यागस्य विधीयते । कुतः ? प्रसिद्धेरनुग्रहाद् गुणविधेरर्थवत्त्वात् प्रवृत्तिविशेषकरत्वाच्च । न चैषां यागार्थता लोके अवगम्यते । न च वेदेन परिभाष्यते । अतो गुणविधयः । यदि गुणविधिः, न तर्हि कर्म विधीयते । अविहिते च कर्मणि तत्र गुणविधानमनर्थकम् । नेति ब्रूमः । प्रकृतौ ज्योतिष्टोमे गुणविधानं अर्थवद्भविष्यति । यदि नामधेयं स्यात्, यावदेव यजेतेति, तावदेव उद्भिदा यजेतेति, न प्रवृत्तौ कश्चित् गुणविशेषः स्यात् । गुणविधौ च गुणसंयोगात् अभ्यधिकमर्थं विदधतः उद्भिदादयः शब्दाः अर्थवन्तो भविष्यन्ति । तस्मात् गुणविधय इत्येवं प्राप्तम् ।

**वा.**— एवं स्मृतिसहितस्य वेदस्य प्रामाण्ये सिद्धे अधुना वाक्यार्थव्याख्यानावसरे सति अपरिसमाप्यैव प्रमाणलक्षणं, केन संबन्धेन नामधेयचिन्तायाः प्रस्तावः क्रियते ? **के चित्** तावदाहुः, किमुद्भिदादयो गुणस्य प्रमाणं, उत क्रियाणामेव नामधेयत्वेन इति । **तदयुक्तम्** । एवं सति हि समस्तमेव शास्त्रं प्रमाणलक्षणादभिन्नं

स्यात्। सर्वत्र हि एतत् विचार्यते किमिदं वाक्यं अस्यार्थस्य प्रमाणं, उतान्यस्येति। **येऽपि** (विचारकाः) च एते द्वे अपि सूत्रे **पूर्वोत्तरपक्षौ** परिकल्प्य एकाधिकरणत्वेन व्याचक्षते, **तैरपि** 'उक्तं समाम्नायैदमर्थ्यं' इत्यनेन सूत्रेण कः सिद्धान्तानभिप्रेतः पूर्वपक्षानुगुणोऽर्थो विधीयते, इति वक्तव्यम्। नहि उक्तैदमर्थ्यान्तर्भाववचनं उद्भिदादीनामनिष्टम्। तस्मात् द्वयोरपि अधिकरणयोः अनुमितपूर्वपक्षयोः उत्तरपक्षसूत्रद्वयमेतत् इति व्याख्येयम्।

तत्र प्रथमं तावत् उद्भिदादीन् उदाहृत्य संदेहः क्रियते किमेते कं चित् धर्मं प्रति उपयोगं गच्छन्ति, उत नेति। किं तावत् प्राप्तं? 'आम्नायस्य क्रियाऽर्थत्वात्' इत्यानर्थक्यम्। आह च 'व्यंशवेदप्रमाणत्वादुद्भिदादि ततोऽधिकम्। धर्मायानुपयुक्तार्थादानर्थक्यं प्रपद्यते॥' (धर्मानुपयुक्तार्थाभिधायित्वात् आनर्थक्यं प्रपद्यते इत्यर्थः। 'धर्मायानुपयुक्तं सत्' इति पाठे नामधेयत्वेन व्यंशात् वेदात् अधिकं सत् आनर्थक्यं प्रपद्यते इत्यर्थः। इति सुधा. पृ. ३९३.)। नहि एते विध्यादिषु अन्तर्भवन्ति, साध्यसाधनेतिकर्तव्यताऽनभिधायित्वात् तावत् चोदनाबाह्यत्वं, स्तुतिबुद्ध्यभावात् अर्थवादातिरेकः, कर्माङ्गभूतैवंसंज्ञकप्रकाशयितव्यार्थाभावात् मन्त्रकार्यनिवृत्तिः, न चान्यत् वेदप्रयोजनमस्ति, इत्यप्रमाणं एवंजातीयकाः इति। **अत्राभिधीयते**। '**सर्वस्य त्रिविभागत्वाद् वेदस्योक्तेन हेतुना। उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिध्यति॥**' यदा तदर्थत्रयान्यतमार्थमिति स्थितं, तदा विचारः किमर्थमिति। न तावत् अर्थवादत्वं, वाक्यशेषत्वाभावात्। कथं पुनरयं न वाक्यशेषः, यावता 'वायुर्वै क्षेपिष्ठा' इत्यादिवत् एकवाक्यता अवगम्यते। नैतदस्ति। विधातव्यस्य हि यः शेषः, सोऽर्थवादः। अयं तु विध्युद्देशादेव नातिरिच्यते, इत्यवाक्यशेषः। तत्संभविनश्च स्तुत्युपयोगित्वं न युज्येत इत्युक्तं औदुम्बराधिकरणे (१।२।२)। न चैकपदेन स्तुतिर्दृष्टा। न चेह तां प्रतिपद्यामहे। **यदपि** उद्भेदनं पशूनामनेन क्रियते, इत्येवं प्राशस्त्यं कल्प्येत, **तदपि** तृतीयाऽन्तसमुदायाश्रयबलवत्तरकरणत्वप्रसिद्ध्या बाध्यते। अन्यथा हि प्रातिपदिकप्राधान्याद्वा 'वायुर्वै क्षेपिष्ठा' इतिवत् प्रथमैव प्रायोक्ष्यत। न चास्य मन्त्रत्वं, ताद्रूप्येणाप्रतीतेः, अध्येतृस्मरणाभावाच्च। न चैकपदत्वात् साकाङ्क्षत्वं करणप्रतीत्या वा स्मारकत्वम्। न च एतदभिधेयः कश्चित् प्रयोगसमवायी अर्थो दृश्यते। न च असमवेतप्रकाशने कर्माङ्गत्वम्। मान्त्रवर्णिकद्रव्यकल्पनायामपि गौरवम्। न चास्य सूक्तवाकवत् विनियोजिका श्रुतिरस्ति, येन मान्त्रवर्णिकद्रव्यकल्पना स्यात्। न चास्य रूपं प्रयोगार्हम्। अतश्च अविनियुक्तत्वात् इषेत्वाऽऽदिवदपि नाध्याहारेण निराकाङ्क्षीकृत्य प्रयोगः। स्फुटं च ब्राह्मणेन एकवाक्यत्वं इत्यमन्त्रत्वम्। तस्मात् विध्युद्देशान्तर्गतस्यैव उत्तराधिकरणेन विचार्यते गुणविधिः, नामधेयं इति। तत्र तावत् '**प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च। अधिकत्वात् प्रवृत्तेश्च गुणरूपं विधीयते॥**' प्रातिपदिकं तावत् उद्भेदनसमर्थे द्रव्ये खनित्रादौ अवयवप्रसिद्ध्या प्रवर्तते। न च समुदायः अर्थान्तरवाची लोके प्रसिद्धः। न च लोकात् अवगतोऽर्थः वेदादवगम्यते, संबन्धस्य शास्त्राहेतुत्वात्। तृतीयाऽपि च करणवाचिनी। क्रियायाश्च शक्तिमत् द्रव्यं तदाधारा वा शक्तिः करणं, तेन उद्भित्साधनको यागः अवगम्यते। न च यागस्य उद्भित्त्वं करणत्वं वा क्व चित् प्रसिद्धम्। अर्थवत्त्वात् प्रवृत्तिविशेषकरत्वम्। विधायक-उद्भित्पद–पुरुषाणां प्रवृत्तौ विशेषः। अन्यथा हि अनुच्चारितसमैव प्रवृत्तिरेषां स्यात्। अथवा प्रसिद्धत्वात् गुणविधिः अर्थवत्त्वं अभिधेयवत्त्वं, नामधेयत्वे तु अर्थो न विज्ञायते इति योज्यते। अथवा भेदेनार्थवत्त्वं हेतुः, उद्भित्पदस्य यजितः फलान्तरत्वात्। ततश्च विधिपुरुषयोः प्रवृत्तिविशेषः इति वाच्यम्। **ननु** नामधेयमपि क्रतुं विशिंषत् अर्थवत् प्रवृत्तिविशेषकरं च स्यात्। **नैतदस्ति**। कुतः? '**आकृतेरभिधेयत्वाद् धातुना व्यक्तिराश्रिता। सा च नाम्नाऽभिधीयेत, जातिश्चेन्नैव नामता॥**' यदा तावत् धातुनैव लक्षणया विधिविषयत्वयोग्यत्वात् यागविशेषः प्रतिपाद्यते, तदा किमपरं तत्र नाम करिष्यति? अथ सामान्यमात्रमभिधीयते, ततः तस्य

अनिष्टमेवैतत् नाम, इत्यसंबद्धम्। सिद्धत्वादेव च विशेषस्य न नामधेयं विधायिष्यते इति वक्ष्यति।

**यदा** च केनापि प्रकारेण उद्भिदादीनां विशेषवचनत्वं, **तदा** तदत्यन्ताविनाभूतसामान्यवचनत्वेन यजेरनर्थकत्वम्। लाघवं च विधेर्गुणविधौ भविष्यति, यागानुवादात्। **यदि** एवं गुणाक्षिप्तत्वात् विधिशक्तेः, न तर्हि कर्म विधीयते, तथा च अविहिते कर्मणि कस्य गुणो विधीयते ? इत्यानर्थक्यं, अतः आह— (भाष्यं) 'प्रकृतौ ज्योतिष्टोमे' इति। ननु गुणविधिपक्षे 'ज्योतिष्टोमेन' इत्यस्यापि तत्परत्वात् अविहितमेव कर्म। गत्यभावात् इदमेकं कर्मविधानं भविष्यति। तद्व्यावृत्ते च विधायके च गुणस्य विधातुमशक्यत्वात् ज्योतिष्टोमपदमेवैकं नामधेयम्। अथवा तदेकं गुणविशिष्टं कर्मविधानं, इतराणि कर्मानुवादेन गुणविधानानि। ननु एवं सति सर्वाः एकाहाहीनसत्रचोदनाः ज्योतिष्टोमस्यैव गुणविधिद्वारेण प्रकरणात् अनतिरिक्ताः, इति कर्मान्तराभावात् न ज्योतिष्टोमः कस्य चित् प्रकृतिः, इति तच्छब्देन नाभिधातव्यः। सिद्धान्ताभिप्रायेण 'आह' इति के चित्। अथवा प्रक्रियते इति प्रकृतिः, प्रकृतज्योतिष्टोमः इत्यर्थः। अथवा 'अथैष ज्योतिः' इत्येवमादीनां करणविभक्त्याख्यातसंस्पर्शाभावात् गुणविधित्वानुपपत्तेः एकान्तेन भेदकतया कर्मनामत्वं, तदपेक्षया च ज्योतिष्टोमः प्रकृतिः। **ननु** उत्पत्तिवाक्यशिष्टेन सोमेन, ज्योतिष्टोमेन वा अवरोधात् ज्योतिष्टोमे गुणान्तरविधानमयुक्तम्। **काम्यत्वात्** उद्भिदादयो बाधका भविष्यन्ति। नित्ये प्रयोगे च पूर्वगुणस्यार्थवत्ता। अथवा विशिष्टविहितमपि कर्म स्वरूपमात्रं निष्कृष्य गुणान्तरे विहितं न औत्पत्तिकात् विशिष्यते, अन्यथा गत्यसंभवात् विकल्पः इति मन्यते।

**अपिवा नामधेयं स्याद्, यदुत्पत्तावपूर्वमविधायकत्वात्। २॥**

**भाष्यम्— एवं प्राप्ते ब्रूमः।** अपिवेति पक्षो विपरिवर्तते। नामधेयं स्यादिति प्रतिजानीमहे। एवं अविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरम्। श्रुतिश्चैवं यागमभिधास्यति। इतरथा श्रुतिः उद्भिदादीन् वक्ष्यन्ती उद्भिदादिमतो लक्षयेत् उद्भिद्वता यागेन कुर्यादिति। यागेन कुर्यादिति यजेतेत्यस्यार्थः। करणं हि यागः, उद्भिदाद्यपि तृतीयानिर्देशात् करणं, तत्र उद्भिद्यागेन इति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यम्। द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी। तस्मात् कर्मनामधेयम्।

**ननु** प्रसिद्धं द्रव्यवचनत्वं अपह्नूयेत, अप्रसिद्धं कर्मवचनत्वं प्रतिज्ञायेत। **उच्यते**। तृतीयानिर्देशात् कर्मवचनता। कुतः ? करणवाचिनो हि प्रातिपदिकात् तृतीया भवति, करणं च यागः। तेन यागवचनं इममनुमास्यामहे। नैतद्युक्तम्। यदि तृतीयानिर्देशे सति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवम्। नहि नो बुद्धिरुत्पद्यते, तस्मादयुक्तम्। तृतीयावचनमन्यथा नोपपद्यते इति चेत्, कामं मोपपादि। न जातु चिदनवगम्यमानेऽपि यागवचनो भविष्यति। तस्माद् गुणविधयः। लक्षणेति चेत्। वरं लक्षणा कल्पिता, न यागाभिधानम्। लौकिकी हि लक्षणा, हठोऽप्रसिद्धकल्पनेति। अपिच यदि नामधेयं विधीयते न यागः। अथ यागो न नामधेयं, उभयविधाने वाक्यभेदः इति। उच्यते। न नामधेयं विधायिष्यते। अनुवादा हि उद्भिदादयः। कुतः प्राप्तिरिति चेत्। ततोऽभिधीयते, उच्छब्दसामर्थ्याद् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः। उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भिद् यागः। एवमाभिमुख्येन जयात् अभिजित्, विश्वजयात् विश्वजित्। एवं सर्वत्र। अतः कर्मनामधेयम्। यत्तु अप्रवृत्तिविशेषकरः अनर्थक इति, नामधेयमपि गुणफलोपबन्धेन अर्थवत्। तस्मात् कर्मनामधेयान्येवंजातीयकानीति सिद्धम्।

**वा**—यत् उत्पत्तौ प्रथमज्ञाने अर्थान्तरपूर्वकत्वेन एकान्ततो न प्रसिद्धमुद्भिदादि, तत् वैदिकव्यवहारे प्रथमोपनिपातात् सामानाधिकरण्येन नामधेयं स्यात्। अथवा एवमपूर्वं कर्म विदधत् अर्थवत् भविष्यति। अथवा कस्य नामधेयमिति संदेहे अभिधीयते। यस्योत्पत्तौ अपूर्वं निष्पद्यते, यागस्येत्यर्थः। किं कारणं ?

**'गुणो विधीयमानो हि फले कर्मणि वा भवेत् । विशिष्टविधिबुद्ध्या वा, सर्वथा च न युज्यते ॥'** फलं प्रति तावत् विधीयमाने परपदसंबन्धविधानं, व्यवहितकल्पना, धातोः पारार्थ्ये, औत्पत्तिकसोमबाधः, अनदनीयेन च खनित्रादिना अत्यन्ताप्रसिद्धेन यागः इति दोषाः । तथा यागं प्रति गुणविधौ फलपदानर्थक्यम् । सार्वकाम्यप्राप्तज्योतिष्टोमविशेषणत्वे वाक्यभेदः, प्रत्ययव्यापारविप्रकृष्टता, धातुपारार्थ्यानदनीययागसोमबाधविकल्पाश्च अत्यन्तायुक्ताः । तथा विशिष्टविधौ सर्वपारार्थ्ये, अनेकविधिशक्तिकल्पना, मत्वर्थलक्षणा, गम्यमानसामानाधिकरण्यत्यागः, अनदनीययागश्च इति दोषाः । तस्मान्न गुणविधिः । तत् दर्शयति ( भाष्यं- ) इतरथा श्रुतिः उद्भिदादीन् ( खनित्रादीन् ) वक्ष्यति ( इति भाष्ये पाठः । यजिसामानाधिकरण्यार्थे च- ) तद्वतो ( यागात् ) लक्षयेत् । ( शत्रन्तं पाठान्तरं दर्शयति- ) वक्ष्यन्ती लक्षयेत् इति वा ( भाष्य- ) ग्रन्थः । प्रातिपदिकसामर्थ्यमुक्त्वा विभक्तिसंबन्धादपि एतदेव अवगम्यते इति दर्शयति-'यागेन कुर्यात्' इत्यादिना । किंच **'विधाने चानुवादे च यागः करणमिष्यते । तत्समीपे तृतीयाऽन्तस्तद्वाचित्वं न मुञ्चति ॥'** 'यत् करणाभिधायिन्या तृतीयया' ( भा. ३।१।६।१२ पृ. ६७९ ) इत्येवमादिषु कारकाणां विभक्त्यर्थत्वाभ्युपगमात् कथं 'करणवाचिनो हि प्रातिपदिकात्' इत्युच्यते ? नैष दोषः । करणाश्रयवाचिनो हि इत्यभिप्रायः । अथवा करणशब्दो यादृशमर्थं ब्रवीति, तादृशस्य प्रातिपदिकं वाचकमेव । कृदन्तेन हि कारकविशिष्टं द्रव्यमेवोच्यते, न विभक्तिवत् निष्कृष्टा शक्तिः । तथा च 'करणं करणेन करणाय' इति च कारकान्तरयोगो दृश्यते । अन्यथा हि विभक्त्यभिहितेनैव एकेन कारकेण वशीकारात् न द्रव्यं कारकान्तरयोगं प्रतिपद्येत । शक्तेस्तु शक्त्यन्तरं नास्त्येव । तस्मात् शक्त्युपसर्जनद्रव्यवचनत्वात् कृदन्तानां उपपन्नं करणशब्दार्थवाचित्वं प्रातिपदिकस्य । तेन एतदुक्तं भवति, यत् अस्मिन् वाक्ये करणं, तद्वाचिनः प्रातिपदिकात् तृतीयया उत्पत्तव्यम् । यागश्चात्र फलभावनायाः करणं, न द्रव्यं इति वक्ष्यति (२।१।१।१) ।

ततश्च यत् उद्भित्पदं यागवचनं, एवं तृतीयाऽन्तं सत् एकवाक्यतां यास्यति, अर्थान्तरवचनत्वे तु असंबद्धं स्यात् । ननु च **'प्रत्यक्षं द्रव्यवाचित्वमुपन्यस्तं, कथं पुनः । करणत्वानुमानेन बाध्यते व्रीहिसोमवत् ॥'** यथैव 'व्रीहिभिर्यजेत' 'सोमेन यजेत' इत्यादीनां करणभूतयागैकवाक्यत्वे सति तृतीयाऽन्तत्वं वैयधिकरण्येऽपि अविरुद्धं, एवमिहापीति । 'हठः' इति चिरंतनतडागोदकाच्छादकं हरितद्रव्यमुच्यते । यथा तत् उत्सार्यमाणमपि स्वच्छन्दतः पुनःपुनरुदकं छादयति । एवं योऽन्योऽपि स्वच्छन्दव्यवहारः, स हठ इति प्रसिद्धः । तदुच्यते । **'पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक्श्रुति । ( सामानाधिकरण्येन निर्दिष्टं ) । निर्णीयते निरूढं तु, न स्वार्थादपनीयते ॥'** व्रीह्यादयो हि अत्यन्तरूढाः, ते स्वार्थमपरित्यजन्तः सामानाधिकरण्यमप्रतिपद्यमानाः गत्यन्तराभावात् गुणविधयो विज्ञायन्ते । ये पुनः उद्भिदादयो यौगिकाः, तेषां येनैव प्रकारेण यत्नेन द्रव्यवचनत्वं, तेनैव कर्मवचनत्वमपि उपपद्यते, इति प्रत्यक्षप्रसिद्धौ उदासीनायां, अनुमानेनापि अज्ञानसंशयव्युदासकरणं न दुष्यति । सर्वशब्दार्थावधारणे हि अयमभ्युपायः, यत् प्रसिद्धसामानाधिकरण्यं नाम । प्रधानं च करणत्वं यागे लब्धात्मकं शक्नोति प्रातिपदिकं आत्मविषयमापादयितुम् । किंच **'विभक्त्यर्थानुवादाच्च विधेः स्यान्नाम्नि लाघवम् । गुणपक्षे विधेयत्वं संख्याकारकयोरपि ॥'** त्वत्पक्षे हि अवश्यं का चित् विभक्त्यर्थेऽपि प्रत्ययस्य विधिशक्तिः कल्प्या स्यात् । तस्मात् अवयवद्वारेण अस्ति कर्मण्यपि प्रसिद्धिः । ज्योतिष्टोमादेरपि स्वफलोद्भेदनकारित्वात् एतन्नामप्रसङ्ग इति चेत् । न, सामानाधिकरण्यावधारितविषयविशेषस्य अवयवान्वाख्यानात् । न चास्य ज्योतिष्टोमादिभिः समभिव्याहारोऽस्ति । अथवा अर्थापत्तिवशेन एतद्विशेषविषयमेव उद्भेदनं निमित्तं, न चान्यत्र तदस्तीति व्यवस्था यथा सास्नादिमद्गतगमनविशेषनिमित्तत्वं गोशब्दस्य । 'अविधायकत्वात्' इत्यस्य व्याख्या 'न नामधेयं विधायिष्यते'. इति । संज्ञासंज्ञिसंबन्धरूपेण 'वृद्धिरा-

दैच्' ( पा० १।१।१ ) इत्यादिवत् अविधानं सामानाधिकरण्यावयवप्रसिद्धिभ्यां तत्सिद्धेः । न तु नामधेयार्थो न विधीयते, तदधीनत्वात् यागविशेषसिद्धेः । इह हि यद्यपि संज्ञासंज्ञिसामानाधिकरण्यं नास्ति, तथापि आत्मरूपव्यवच्छिन्नमेवार्थं संज्ञा गमयति इति विशेषणविशेष्यभावान्न भिद्यते । ननु एवं शब्दस्वरूपाभिधानं प्रसज्येत । प्रत्यक्षावगतस्वरूपविशिष्टार्थाभिधानात् अप्रसङ्गः । सर्वत्र हि 'अगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न तु अनभिहितविशेषणा' । न च एतावता शब्दस्वरूपारोपप्रसङ्गः, तदनुरोधेन विद्यमानार्थांशविशेषोद्धरणात् इत्युक्तं प्राक् । नाम्नैव च एवमादीनां प्रकृतितः भेदः, अन्यथा हि तदनवच्छिन्नो यजिः गुणफलाद्यर्थं पुनःश्रुतिः प्रकृतिगामित्वात् नैव कर्म भिन्द्यात् । अथवा सर्वनामधेयेषु किंचित् अर्थगतमपि विशेषणमस्ति, इति अरुणैकहायन्यादिवदेव विशेषणविशेष्यता । न च यज्युच्चारणमन्तरेण अस्य यागविशेषनामत्वं इति न सामान्यस्य अनर्थकत्वम् । परस्परसंनिधानेन हि नामापि यागविषयं, यागोऽपि एतदवच्छिन्नो न सामान्यमात्रं प्रकृतो वा इति लभ्यते । तस्मात् उभयोरर्थवत्ता, विशिष्टभावनाविधानाच्च उभयोरपि विधानं इति नानुवादत्वम् । एवं च सति न नामत्वं विधित्वमात्रप्रतियोगि इति, ये पूर्वपक्षे विध्यन्तर्भावं, सिद्धान्ते तु विध्यर्थवादमन्त्रातिरेकं नाम्नां वर्णयन्ति, तेषामयुक्तमेव । अशेषव्यवहाराङ्गभावाच्च नाप्रवृत्तिविशेषकरता । नहि ऋत्विग्वरणादिषु 'अनेनाहं यक्ष्ये' इति लघुः आख्यानोपायः स्यात् । 'दर्शपूर्णमासावारप्स्यमानः' 'समे दर्शपूर्णमासाभ्याम्' इति गुणोपबन्धः, 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इति च फलोपबन्धः अन्यथा न स्यात् । तस्मात् नामधेयानि एवंजातीयकानि इति सिद्धम् ।

**शा**— उद्भिदादिशब्दानुदाहृत्य गुणविधिर्नामधेयं इति भाष्ये विचार्योक्तम् । 'समाम्नायैदमर्थ्यं' इत्यनेन सूत्रेण पूर्वपक्षमभिधाय 'अपिवा नामधेयं स्यात्' इत्यनेन सिद्धान्तितम् । तत्तु प्रमाणलक्षणासंगतं, इति वार्तिककारेण अधिकरणभेदमाश्रित्य प्रथमं उद्भिदादिशब्दानां धर्मे प्रामाण्यमस्ति न वेति विचार्य पश्चात् गुणविधिनामधेयविचारो दर्शितः ।

संभवदाख्यातसामानाधिकरण्यात् उद्भिद्–अभिजित्–चित्रा–आज्य–पृष्ठ–बहिष्पवमान–अग्निहोत्र–आघार–श्येनादिशब्दान् उदाहृत्य चिन्त्यते किमेते धर्मं प्रति प्रमाणं न वेति । तत्र '**विध्यर्थवादमन्त्रांशैर्वेदाद्धर्मः प्रतीयते । न चोद्भिदादिशब्दानां तेष्वन्तर्भावसंभवः ॥ न तावदर्थवादत्वं स्तुतिबुद्धेरभावतः । उत्तमामन्त्रणाऽस्यन्तत्वान्तरूपाद्यभावतः ॥** ( 'पूष्णो हस्ताभ्यामाददे' इत्यादौ उत्तमपुरुषः । 'अग्ने हव्यं रक्षस्व' इत्यादौ आमन्त्रणम् । 'वरूयसि रुद्राऽसि' इत्यादौ अस्यन्तता । 'अर्चिषे त्वा' इत्यादौ त्वाऽन्तत्वम् । आदिशब्देन स्तुत्याशीरभिधानादिकं विवक्षितम्–**सोम.**) ॥ **मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते । न च विध्यन्तपातित्वं साध्याद्यनभिधानतः ॥**' तस्मादप्रमाणमेवंजातीयकं इति पूर्वः पक्षः । सिद्धान्तस्तु, '**सकलस्यैव वेदस्य स्वाध्यायाध्यायवाक्यतः । विज्ञातं पुरुषार्थत्वमुद्भिदादेरपि ध्रुवम् ॥**' तस्मात् भाव्यं प्रामाण्येनेति ।

**सोम**— विचारितप्रामाण्यप्रतिष्ठाऽर्थत्वात् गुणविधिनामधेयचिन्तायाः **संगतिः** । **सूत्रार्थस्तु**– समाम्नायस्य सर्वस्य धर्मप्रमित्यर्थत्वं अध्ययनविधिबलात् अर्थवादाधिकरणे एव उक्तम् । तस्मात् उद्भिदादिपदमपि तदर्थं स्यादिति ।

**वि**— 'उद्भिदादिपदं धर्मे किममानमुत प्रमा ।, विध्यर्थवादमन्त्रांशेष्वनन्तर्भावतो न मा ॥, अन्तर्भावो विधावुद्भिदा यजेतेति दृश्यते । नामत्वेनान्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत् ॥'

**भाट्ट**— इह गुणविधित्वेन नामधेयत्वेन वा संमतानां सर्वेषामेव फलपदातिरिक्तसुबन्तानां उद्भित्सोमादिपदानां प्रामाण्यमप्रामाण्यं वेति संशये, प्रकारासंभवात् अप्रामाण्यम् । तथाहि, 'उद्भिदा यजेत पशुकामः' 'सोमेन यजेत' इत्यादौ उद्भिदादिपदेभ्यः स्तुतिबुद्धेरनुत्पत्तेर्न तावदर्थवादत्वम् । मन्त्रत्वप्रसिद्ध्यभावाच्च न तत् । एतेषां प्रयोगकाले उच्चारणे च एतत्प्रतिपाद्यार्थस्य यागाङ्गता-

बोधकप्रमाणाभावेन, एतेषां प्रयोगसमवेतार्थस्मारकत्वानुपपत्तेश्च । न च विध्यन्तर्भावः, कामशब्दाद्यभावेन साध्याद्यनभिधायकत्वात् । एकपदगतयजिनैव करणप्रतिपादने सति एतेषां तत्प्रतिपादकत्वायोगात् । सिद्धरूपाणां सोमादीनां व्यापारमन्तरेण भावनेतिकर्तव्यतात्वानुपपत्तेश्च । नामधेयत्वे तु अभिन्नत्वादेव करणानुग्राहकत्वाभावात् इतिकर्तव्यतात्वानुपपत्तेः । **न च** कथमपि भावनाऽन्वयासंभवेऽपि यागे एव करणत्वेनान्वयो भवत्विति **वाच्यम्** । कारकाणां परस्परसंबन्धाभावात् । अतः कथमपि भावनाऽन्वयासंभवात् अनाख्यातत्वेन विधिभावनयोरनभिधानात् अन्यस्य च प्रकारस्य वक्तुमशक्यत्वात् अप्रामाण्यम् । **इति प्राप्ते,** अध्ययनविध्यध्यापितस्य अप्रामाण्यासंभवात् प्रकारान्तरासंभवेऽपि विध्यन्तर्भावस्य स्पष्टत्वेन तत्रैव गुणविधित्वेन नामधेयत्वेन वा वक्ष्यमाणरीत्या सर्वानुपपत्तिपरिहारेण प्रामाण्यमिति सिद्धम् ।

**मण्डन**— 'उद्भिन्नाम, गुणो नैव ।'

**शंकर** — 'नामधेयप्रमाणता ।'

भाष्यमतेन यत् द्वितीयं सिद्धान्तसूत्रं तदेव शा-वि-भाट्टादिमतेन द्वितीयमधिकरणम् । तदिदानीं निवेश्यते ।

**शा**—'**तत्रावयवयोगेन खनित्रादौ प्रसिद्धितः । प्रवृत्त्यौपयिकत्वाच्च गुणो यागे विधीयते ॥**' इति प्राप्ते, अभिधीयते । '**धातोरत्यन्तपारार्थ्याद् विप्रकृष्टविधेस्तथा । फले कर्मणि वा नेह गुणो वाक्ये विधीयते ॥ दध्यादौ गत्यभावेन सर्वमेतत् समञ्जसम् । उद्भिदादिषु तन्नैवं नामधेयत्वसंभवात् ॥ विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा । सोमादौ गत्यभावात् सा न त्वत्र गतिसंभवात् ॥**' प्रयोजनं च नाम्नां सर्वत्र व्यवहारः एव । नहि अन्तरेण नामधेयं ऋत्विग्वरणादिषु 'अनेनाहं यक्ष्ये' इति लघुः आख्यानोपायः स्यात् । क्व चित्तु गुणफलेनार्थवत्ता । 'दर्शपूर्णमासावारप्स्यमानः अन्वारम्भणीयामिष्टिं निर्वपेत्' इति गुणोपबन्धः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति फलोपबन्धः । क्व चिच्च भेदकतया अर्थवत्त्वं यथा 'अथैष ज्योतिः' इत्यादिषु वक्ष्यते । यथा चात्रैव 'उद्भिदा यजेत पशुकामः' इति ।

**सोम**— **सूत्रार्थस्तु**–अपिवेति पूर्वपक्षव्यावृत्त्यर्थम् । ततश्च नायं गुणविधिः, किंतु कर्मणः उद्भिदादिकं नामधेयं स्यात् गुणविधायकत्वासंभवात् इति ।

**कौ**—सूत्रं तु यत् उत्पत्तौ प्रथमतः एव पदार्थान्तरवाचकत्वेन निरूढं न भवति, तत् नामधेयं स्यात् गुणविधायकत्वस्य पूर्वोक्तदोषैरसंभवात् इति व्याख्येयम् ।

**वि** — 'गुणोऽयं नामधेयं वा, खनित्रेऽस्य निरुक्तितः । ज्योतिष्टोमं समाश्रित्य पश्वर्थे गुणचोदना ॥, फलोद्भेदात् समानैषा निरुक्तिर्यागनाम्न्यपि । नामत्वमुचितं यागसामानाधिकरण्यतः ॥'

**गुरुमतमाह**— 'लौकिके गणयागेऽस्य विधेः सापेक्षतेति चेत् । निरुक्त्या श्रौतयागस्य नामत्वान्निरपेक्षता ॥' इति ।

**भाट्ट**— अतः परं क्व गुणविधित्वं क्व नामधेयत्वमिति कोष्ठशोधनिकाऽर्थमारम्भः । तदिह गुणे कर्मणि च तुल्यवद्वृत्तिकानामुद्भिदादिपदानां विधेयगुणसमर्पकत्वं कर्मनामधेयत्वं वेति चिन्तायां 'भिदिर् विदारणे' इति स्मृत्या विदारणसमर्थखनित्रादिवचनत्वप्रसिद्धेः नामधेयत्वे वैयर्थ्यप्रसङ्गाच्च गुणविधित्वमेव युक्तम् । तत्र गुणविशिष्टं कर्मैव फलोद्देशेन विधीयते इत्येकः **पक्षः** । अथवा प्रकृतसोमयागानुवादेन गुणमात्रविधानमित्य**परः** । न च विनिगमनाविरहः, इतिकर्तव्यतासंनिधिविशेषस्यैव कर्मविधिनियामकत्वात् । न चैवं फलपदानर्थक्यं, 'सर्वेभ्यो ज्योतिष्टोमः' इति वचनेन तस्य सर्वफलार्थत्वावगतेः, यजिपदस्य पशुफलोपधायकयागलक्षणायां तात्पर्यग्राहकत्वात् । अत एव न विशिष्टोद्देशे वाक्यभेदः । न चोत्पत्तिशिष्टसोमप्राबल्यं, पशुकामप्रयोगपुरस्कारेण विहितस्य च खनित्रादेः सामान्यविहितसोमादिबाधकत्वात् । वस्तुतस्तु— प्रकृतसोमयागाश्रितः खनित्रादिगुणः एव फलोद्देशेन विधीयते इति **तृतीयः पक्षः** । काम्यत्वादेव च नित्यसोमबाधः । **इति प्राप्ते,** नायं गुणविधिः **गौरवात्** । तथाहि, सर्वत्रैव तावत् शुद्धधात्वर्थकरणकभावनाविधानात् **आद्यो** विधिप्रकारः । यथा— 'अग्निहोत्रं जुहोति' इति । अन्योद्देशेन तद्विधिः **अपरः** । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति ।

—

एतस्य चोद्देश्यत्वाचकपदान्तरसापेक्षत्वात् दौर्बल्यम् । धात्वर्थोद्देशेन अन्यकरणकभावनाविधिः **तृतीयः** । यथा 'दध्ना जुहोति' इति । अत्र विधेयताया धात्वर्थवृत्तित्वाभावात् पदार्थान्तरवृत्तित्वाच्च ततोऽपि दौर्बल्यम् । धातोः साधुत्वार्थकत्वमङ्गीकृत्य अन्योद्देशेन अन्यकरणकभावनाविधिः **चतुर्थः** । यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति । अत्र धात्वर्थस्योद्देश्यत्वेनापि असंबन्धात् ततोऽपि दौर्बल्यम् । गुणविशिष्टधात्वर्थकरणकभावनाविधानं **पञ्चमः** । यथा 'सोमेन यजेत' इति । अत्र विशेषणविधिकल्पनाऽऽधिक्यात् ततोऽपि दौर्बल्यम् । अन्योद्देशेन पूर्वोक्तः **षष्ठः** । यथा 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति । अयं तु सर्वदुर्बलः । तदेवमुद्भिद्गुणविशिष्टस्य यागस्य फलोद्देशेन विधाने षष्ठविधिप्रकाराश्रयणात् अतिगौरवम् । गुणस्य यागे अनन्वयात् मत्वर्थलक्षणा च । नहि भावनायां समानपदोपात्तधात्वर्थकरणत्वावरुद्धायां गुणस्य करणत्वं संभवति । अतस्तस्य यागान्वयावश्यकत्वेन यागस्य कारकत्वात्, कारकाणां च परस्परसंबन्धानुपपत्तेः 'सोमेन यजेत' इतिवत् उद्भिद्वता यागेनेति मत्वर्थलक्षणा आवश्यकीति **प्राञ्चः** । वस्तुतस्तु दृष्टान्तेऽपि सोमस्य करणत्वेनैव भावनायामन्वयः तत्रतत्र वक्ष्यते, युक्तश्च । एककरणत्वावरुद्धेऽपि करणत्वान्तरस्य भिन्ननिरूपितस्य प्रकारतया भावनाऽन्वयोपपत्तेः । नहि यागकरणत्वं भावनानिरूपितं, अपि तु स्वर्गनिरूपितम् । अतश्च यथैव अन्यनिरूपितमपि तत्करणत्वं प्रकारतया भावनायामन्वेति, तथैव सोमकरणत्वमपि यागनिरूपितम् । उभयत्र तत्तन्निरूपकस्य पार्ष्ठिकबोधलभ्यत्वाच्च न कोऽपि विरोध इति । नास्मिन् पक्षे यद्यपि मत्वर्थलक्षणा, तथापि विशेषणविधिकल्पनाऽऽदिकृतं गुणयागोभयविशिष्टभावनाविधेः गौरवमापाद्यमानं नापह्नोतुं शक्यम् । यथा च प्राथमिकभावनासंबन्धाङ्गीकारेऽपि द्वितीयबोधवेलायां मत्वर्थलक्षणा तथोक्तं **कौस्तुभे** । एवं द्वितीयतृतीयपूर्वपक्षयोरपि जघन्यविधिप्रकाराङ्गीकरणं दोषाय । अगत्या च दधिसोमादावेव तदङ्गीकृतम् । तेषां तत्र अर्थान्तरे रूढत्वेन नामत्वासंभवात् । प्रकृते तु येनैव योगेन खनित्रे प्रवृत्तिः, तेनैव योगेन उद्भिद्यते उत्पाद्यते फलमिति व्युत्पत्त्या कर्मण्यपीति नामत्वसंभवेन द्वितीयविधिप्रकाराङ्गीकरणात् लाघवम् । न च भिदो विदारणे एव स्मृतेः शक्तिः, 'भिदिर्' इत्येव धातुपाठात् । 'विदारणे' इत्यस्य शक्यार्थमात्रोपलक्षणत्वस्य वैयाकरणसिद्धान्तसिद्धत्वात् । अतो विदारणे इवोत्पादनेऽपि प्रयोगात् तुल्यवद्वृत्तिकता । न च नामधेयानर्थक्यं संकल्पादौ सार्थकत्वात् । क्व चित्फलोपबन्धश्च यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । क्व चिद्गुणोपबन्धश्च यथा 'संस्थाप्य पौर्णमासीं वैमृधमनु निर्वपति' इति । प्रकृते च संज्ञया भेदसिद्धिरेव प्रयोजनम् । इतरथा हि प्रकृते एव कर्मणि गुणफलोपबन्धापत्तेर्न कर्मान्तरत्वं, न च योगस्य फलोद्भेदनकारित्वस्य अतिप्रसक्तत्वात् अपूर्वे कर्मणि रूढिकल्पने सोमादिपदानामपि तदापत्तिः, सर्वत्र योगरूढिस्थले प्राचीनप्रयोगस्यैव कारणतायाः क्लृप्तत्वेन प्रकृते तदकल्पनात् । प्रयोजनं स्पष्टम् ।

**शंकर**— 'उद्भिदादेश्च नामता ।' २.

* **उद्भिदधिकरणे** मत्वर्थलक्षणापरिहाराय नामधेयत्वाश्रयणम् । **सोम.** १।४।६ पृ. ७०. * उद्भिदधिकरणे गुणे कर्मणि च ये अवयवयोगेनैव संभवद्वृत्तयः, अथ च तत्प्रख्यशास्त्रान्तररहिता उद्भिदादयः शब्दाः, तानुदाहृत्य गुणविधयः कर्मनामधेयं (वा) इति विचारः । **कौ.** १।४।२।२ पृ. १५८. * उद्भिदधिकरणे हि सामानाधिकरण्येनान्वये मत्वर्थलक्षणा दोषः । वैयधिकरण्येनान्वये तु 'यागाश्रितेन गुणेन फलं कुर्यात्' इति फलाय गुणविधौ, 'गुणेन यागं कुर्यात्' इति कर्मणि गुणविधौ च यजेः उद्देश्यविधेयसमर्पकत्वाभावात्, समानपदोपात्तधात्वर्थं परित्यज्य भिन्नपदोपात्तगुणस्य विधानाच्च धातोः पारार्थ्यं, विधिविधेययोर्विप्रकर्षश्च दोषः । कर्मणि गुणविधौ तु कर्मपदानन्वयश्च इति स्थितम् । **कु.** १।४।६।६ पृ. ९९. * कृष्णजयन्ती फलसंबन्धावगमात् काम्या इति नव्याः, तन्न । चित्रोद्भिद्वत् निरपेक्षफलसंबन्धात् प्रयोगभेदापत्तेः । नामधेयत्वस्य **उद्भिदधिकरणे** गुणविधित्वशङ्काऽनुपपत्तेः । **समयमयूख.** * गुणकरणिकायां भावनायां धात्वर्थस्य कर्मत्वेनैवान्वयः,

न तु करणत्वेन, मत्वर्थलक्षणाऽऽपत्तेः । उपपादितं चैतत् उद्भिदधिकरणे । कौ. २।२।५।१६ पृ. १९८, * न ( अग्निहोत्रेति ) नाम्नः विजातीयहोमत्वप्रकारक-बोधजनकताऽपि, तथात्वे जुहोतिपर्यायत्वेन ( अग्निहोत्रं जुहोति इति ) समप्रयोगानापत्तेः । अपि तु अग्निदेवताक-होमत्वेनैव ( बोधजनकता ) । अतिप्रसङ्गस्य प्राचीन-प्रयोगाभावेनैव उद्भिदधिकरणे स्थापितत्वेन योगरूढे-रप्यनङ्गीकाराच्च । २।३।११।२४ पृ. ८०, * नामधेयत्वे भावनासंबन्धस्तु उद्भिदधिकरणे व्युत्पादयिष्यते । १।४।१।१ पृ. १५८, * ' पञ्चदशान्याज्यानि ' इत्यादावपि स्तोत्रभावनाऽनुवादेन संख्याविशिष्टद्रव्यविधाने विशिष्ट-विधेः प्राथमिकभावनासंबन्धोत्तरकालीनत्वेन द्वितीयत्वस्य उद्भिदधिकरणे स्थापितत्वात् । १।४।३।३ पृ. १८५, * सर्वत्र प्रातीतिके विशिष्टभावनाविधाने सत्यपि फल-विषयभेदादेव षड्विधिप्रकारा उद्भिदधिकरणे अस्माभि-रुपपादिताः । दौर्बल्यं चोत्तरोत्तरं तेषामुक्तम् । २।२।५।१६ पृ. १९८.

* **उद्भिदभिजिदादिषु** अव्यक्तयागेषु सौमिक-धर्माणामतिदेशः । **भा.** ८।१।९।१६.

* **उद्भिदादयः** अतिरात्रप्रथमाहारोत्तरमपि अग्नि-ष्टोमसंस्थां कृत्वैव कार्याः । **भाट्ट.** ५।३।१३. * उद्भि-दादयो ये पुनर्यौगिकाः ( शब्दाः ) तेषां येनैव प्रकारेण यत्नेन द्रव्यवचनत्वं, तेनैव कर्मवचनत्वमपि उपपद्यते, इति प्रत्यक्षप्रसिद्धौ उदासीनायां अनुमानेनापि अज्ञान-संशयव्युदासकरणं न दुष्यति । **वा.** १।४।१।२ पृ. ३२५. * **उद्भिदादौ** नाम्ना श्रुत्या मत्वर्थलक्षणा बाध्यते । **बाल.** पृ. १४१.

* **उद्भिदादिनामधेयानामपि** अर्थवादाधिकरणे सामान्यतः प्रामाण्यस्य साधितत्वात् । **सोम.** १।३।१ पृ. १७. * **उद्भिदादिपदानां** यौगिकानां मत्वर्थलक्षणादोषात् गुणविधायकत्वं निराकृत्य कर्मणि योगेन संभवद्वृत्तिकत्वात् कर्मनामधेयत्वं साधितम् ( १।४।१।१-२ ) । **कु.** १।४।४ पृ. ९१. * **उद्भि-दादिशब्दानां** यागनामतया प्रामाण्यम् । **वि.** १।४।१. * उद्भिदादिशब्दानां याज्ञिकप्रसिद्ध्यवधारितेन नाम-धेयत्वेन धर्मप्रमोपयोगः साधितः । **सु.** पृ. ३९७.

* **उद्भिन्न्यायः** । ' अथैष ज्योतिः ' इत्यादौ तव मते ( सिद्धान्तिमते ) संज्ञात्वसिद्धौ एव प्रमाणाभावः । न तावत् उद्भिन्न्यायः ( उद्भिदधिकरणम् ) रूढत्वेन तुल्यवद्वृत्तिकत्वाभावात् ( तथा च यत्र रूढत्वेन तुल्यवद्वृत्तिकत्वं तत्र उद्भिन्न्यायः ) । **कौ.** २।२।८।२१ पृ. २५०. * ' श्येनेनाभिचरन् यजेत ' इत्यत्र ज्योति-ष्टोमसाधनेन श्येनेन शत्रुवधं कुर्यात् इति वैयधिकरण्या-न्वयेन मत्वर्थलक्षणाऽभावात्, पक्षिविशेषे एव अत्यन्त-निरूढत्वाच्च श्येनशब्दस्य कर्मणि कथंचिदपि अप्रसिद्ध-त्वात् नोद्भिन्न्यायः । **कु.** १।४।५।५ पृ. ९७, * ' वाज-पेयेन स्वाराज्यकामो यजेत ' इत्यत्र वाजपेयपदस्य यौगि-कस्य **उद्भिन्न्यायेन** सिद्धमपि नामधेयत्वं आक्षिप्य समा-धातुमिदमारभ्यते । १।४।६।६ पृ. ९८. * आग्नेयादौ ( आग्नेयोऽष्टाकपालः इति ) तत्प्रख्यशास्त्रान्तराभावात्, कर्मणि चाग्निदेवताकत्वस्य चाप्रसिद्धत्वेन उभयत्र तुल्य-वद्वृत्तिकत्वरूपोद्भिन्न्यायविषयत्वासंभवः । **कौ.** १।४।७।९ पृ. २३१, * ' श्येनेनाभिचरन् ' इत्यत्र नास्ति **उद्भिन्न्यायावतारः** तस्य सोमदध्यादिवत् रूढेष्वप्रवृत्तेः । १।४।५।५ पृ. २१४, * समित्पदस्यापि नामधेयत्वं **नोद्भिन्न्यायसिद्धं** उभयत्र तुल्यवद्वृत्तिकत्वाभावात् । २।२।२।२ पृ. १४५.

* **उद्यती** नाम विष्टुतिः । बहिष्पवमाने ' उपास्मै० दविद्युतत्या० पवमानस्य ते० ' इति सूक्तत्रयपठितानां नवानामृचां गानं त्रिभिः पर्यायैः कर्तव्यम् । तत्र प्रथमे पर्याये त्रिषु सूक्तेषु आद्यास्तिस्रः ऋचः, द्वितीये पर्याये मध्यमाः, तृतीये पर्याये च उत्तमाः । सेयं विष्टुतिः उद्यती नाम । **वि.** १।४।३ पृ. ४३०.

* **उद्यापनेन** व्रतसमाप्तिः । **सु.** पृ. १५३९.

* **उद्वापः** आवापो वा साम्नां माध्यंदिनार्भवपव-मानयोरेव अविवृद्धस्तोमकक्रतुषु । **भा.** १०।४।११।२१–२२.

* **उद्वाहे** उपदेशः अग्निप्रकरणे उत्पन्नानां राष्ट्रभृतां ' एतेषां राष्ट्रभृतो जुहोति, अभ्यातानान्

जुहोति ' इति । **भा.** ७।१।१।१२, ※ **उद्वाहकर्मसु** राष्ट्रभृतां ( नाम होमानां ) वचनादतिदेशः । ८।४। ५।२८. ※ **उद्वाहकाले** एव अनयोः ( दंपत्योः ) वचनेन द्रव्यसाधारण्यं प्रतिपादितम् । ' धर्मे च अर्थे च कामे च नातिचरितव्या ' इति प्रतिपादितत्वात् । **टुप्.** ६।१।४।१७.

※ **उद्वृषभयज्ञादयः** उदीच्यैः क्रियन्ते । ज्येष्ठमासस्य पौर्णमास्यां बलीवर्दानभ्यर्च्य धावयन्ति, सोऽयं उद्वृषभयज्ञः ( आषाढीसमीपस्थिते मूलनक्षत्रे इति क्वचित् । पोळा, बेन्दूर इति भाषा ) । **वि.** १।३।८. ※ उद्वृषभयज्ञादयः उदीच्यैरेव कर्तव्या इति न नियमः । किंतु कर्तृदेशनैरपेक्ष्येण सर्वधर्मा एव ते । **भा.** १।३।७।१५-२३। उदीच्याश्च देशान्तरे उद्वृषभयज्ञादीन् कुर्वन्त्येव । १।३।७।१९.

※ **उन्नेता** अध्वर्योः पुरुषः । चतुर्थवर्गस्थोऽयम् । असौ पादी चतुर्थांशभाक् तिस्रो गाः लभते । **वि.** ३।७।१७. ※ ' उन्नेता चमसानुन्नयति ' । **भा.** ३।७। ९।२२.

※ **उपकारपृष्ठ**भावेनैव पदार्थप्राप्तिः । **भाट्ट.** १०। १।९ पृ. २०५.

※ **उपकाररूपेण** कर्मापि कर्मसाध्यं भवति । **वा.** ३।१।१०।२०.

※ **उपकारलक्षणं** हि तत् ( शेषत्वम् ) । यत् यस्योपकरोति, तत् तस्य शेषभूतम् । **भा.** ३।७।१।२.

※ **साक्षादुपकारसंभवे** पारंपर्योपकारकल्पनाऽयोगः । **सु.** पृ. १३८६.

※ **उपकारातिदेशे** सति ऊहोऽवकल्प्यते, यथा प्रकृतौ अग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि गृहीत्वा कथमेतानि उपकरिष्यन्ति इति । **भा.**

※ **उपकारकम्** । नह्यनुपकुर्वत् किंचिदप्यङ्गं कस्य चिद्भवेत् । तथाचोपरिष्टादपि तत्रतत्र प्रदेशे भाष्यकारो वक्ष्यति ' यो यस्योपकरोति स तस्य शेषः ' ' यो यस्योपकारे वर्तते स शेषः इत्युच्यते ' ( पृ. ६५८ ), ' उपकारलक्षणं शेषत्वं ' ( ३।७।१।२ ) इत्येवमादि । **वा.** ३।१।२।२ पृ. ६५६.

※ यो हि प्रधानो**पकारित्वेन** श्रूयते, स तदङ्गेऽपि स्थिते उपकरोति । **वा.** १।२।२।२२ पृ. १३६.

※ **उपकुर्वतां** च उपकर्तव्यं इति सदाचारः । **भा.** १०।३।११।४७.

※ **उपक्रमः** उपसंहारात् प्रबलः । असंजातविरोधित्वात् । **के.** ※ भवति च प्रश्नेनै**वोपक्रमः** । यथा ' का नामेयं नदी, को नामायं पर्वतः, किमिदं फलम् ' इति । **भा.** ३।३।४।११. ※ वाक्यस्य यः सामान्यवचनेन उपक्रमः, स निगमनवशेन श्रुते एव विशेषे व्यवस्थाप्यते, तस्य उपक्रमापेक्षितविशेषसमर्पणेन तदानुकूल्यात् । **सु.** पृ. ५२९. ※ सामान्यवचनेन विशेषापेक्षिणा उपक्रमो वाक्यस्य विशेषे निगमनवशेन । **भा.** १।४।१३।२४. ※ **उपक्रमं** अनुपसंजातविरोधित्वेन प्रबलमनुसृत्य तद्वशेन उपसंहारस्य नेतव्यत्वात् । **वि.** ३।३।१. ※ **उपक्रमात्** उपसंहारो बलीयान् तद्व्याख्यानरूपत्वात् इति के चित् । व्याख्यानस्य पाश्चात्यत्वनियमात् । **पराक्रमः.** ७।१, ※ परत्वादपि अपच्छेदन्यायेन **उपक्रमादु**पसंहारो बलीयान् इति के चित् । ७।१, ※ **उपक्रमस्य** निराकाङ्क्षस्य वाक्यशेषानुसरणं ' संयुक्तस्त्वर्थशब्देन ' ( २।३।७।१८ ) इत्यधिकरणेन नास्ति । ४।२, ※ उपक्रमस्य प्राबल्यं अनुपसंजातविरोधित्वात् इति तु न सर्वत्र आपातजप्रत्ययस्यैव प्राबल्यप्रसङ्गात् इति के चित् । ७।२, ※ उपक्रमस्य यत्र नाकाङ्क्षा, तत्र तद्विरुद्धार्थोपस्थापकोपसंहारप्रसङ्गानुसरणं न क्रियते । ४४।२. ※ उपक्रमस्य वेदविषयत्वेन निश्चितत्वात् उपसंहारगतानां ऋगादिशब्दानां तदनुरोधवृत्तिता युक्ता । **सु.** पृ. ५२३. ※ उपक्रमस्य संदेहजनकत्वे उपसंहारो निर्णयहेतुः ' अक्ताः शर्करा उपदधाति तेजो वै घृतम् ' इत्यादौ । **के.** १।४।१९।२९.

⌛ **उपक्रमगतमप्यर्थवादमनुसृत्यैव प्रधानस्यापि विधेर्नयनं इति** उपक्रमाधिकरणन्यायः । यदि पुनः अन्योन्यसापेक्षाणां अर्थवादविधीनां परस्परविरुद्धानां उपक्रमोपसंहारगतानां सतां ' किमनुरुध्य कस्य नयनं '

इति शङ्कायां उपक्रमगतन्यायशरीरम् । भ्रमबाधज्ञानयोस्तु उत्पत्तौ प्रवृत्तौ वा परस्परनिरपेक्षत्वात् नोपक्रमगतेनापि भ्रमेण बाधकज्ञानबाधः इति युक्तम् । विधिमन्त्रयोस्तु परस्परसापेक्षतयैव प्रवृत्तेः उपक्रमगतविधिप्राबल्यबाधो युक्तः एवेत्युच्यते । **सनातनधर्मप्रदीपे** विवाहः पृ. २९२.

⌛ **उपक्रमतन्त्रेणोपसंहारेणैकस्मिन् वाक्ये भवितव्यं इति न्यायेन । न्यायनि.** ३।३।२९।५२ ब्रसू.

* **उपक्रमन्यायस्य** अङ्गगुणविरोधन्यायः अपवादकः यथा 'य इष्ट्या' इत्यादौ । वस्तुतस्तु न तत्रोपक्रमन्यायोऽपि 'यजेत' इतिप्रत्ययाभिहितसर्वभावनोद्देशेन शब्दार्थविशिष्टकालविधेः प्रकरणान्तराधिकरणे व्युत्पादितत्वेन इष्ट्यादिपदानां अनुवादमात्रतया तदभावात् । **कौ.** ३।३।१।२ पृ. ३१३. * बाधकज्ञानापेक्षणीयत्वाभावेन भ्रमस्येव प्रत्यक्षस्यापि श्रुत्यपेक्षणीयत्वाभावेन एकवाक्यत्वाभावात् न **उपक्रमन्यायस्य** प्रकृते अवतारः । **अद्वैत.** पृ. ३५५.

* सत्यपि अङ्गगुणविरोधन्यायस्य **उपक्रमन्यायापवादकत्वे** प्राधान्यापह्नवेनैव प्रकृतसिद्धान्तोपपादनं द्रष्टव्यम् । **कौ.** ३।३।१।२ पृ. ३१६.

* कैश्चित् ( शंकरभट्टैः ) एतस्य (इष्ट्यादिवाक्यस्य) अङ्गगुणविरोधन्यायोदाहरणत्वसिद्ध्यर्थं इष्ट्यादिवाक्ये वाक्यत्रयमेवाङ्गीकृत्य **उपक्रमन्यायाभावः** इत्युक्तं, तदपास्तम् । अस्मदुक्तरीत्या एकवाक्यत्वोपपत्तौ तदङ्गीकारे प्रमाणाभावात् । यदपि च तद्ग्रन्थात् एकवाक्यत्वे सति उपक्रमन्यायस्यैव प्राबल्यं, तदभावे एव तु अङ्गगुणविरोधन्यायस्य, इति प्रतीयते, तत् 'चतुरो मुष्टीन् निर्वपति' इत्यादौ एकवाक्यत्वेऽपि मुष्टीनां प्राधान्यात् सप्तदशशरावे चरौ अनुग्रहः इत्येवं पूर्वपक्षकरणं, सिद्धान्ते च उभयोः क्रियाऽन्वयित्वात् प्राधान्याभावोपपादनं दुर्घटं स्यात् इत्येवमुपेक्षितम् । तस्मात् सत्यपि अङ्गगुणविरोधन्यायस्य उपक्रमन्यायापवादकत्वे प्राधान्यापह्नवेनैव प्रकृतसिद्धान्तोपपादनं द्रष्टव्यम् । **कौ.** ३।३।१।२ पृ. ३१६.

* **उपक्रमप्राबल्यं** वैश्वानरवाक्येऽपि सुवचनम् । **पराक्रमः.** ४७।१-२.

* **उपक्रमप्राबल्यन्यायमे**वमाहुः— 'सर्वस्यापि शब्दस्य स्वार्थलङ्घने विरोधः कारणं, स च प्रतियोगिनि दृष्टे ज्ञायते, न चोपक्रमदशायां उपसंहारो विरोधी ज्ञायते, इति उपक्रमो मुख्यवृत्तिरेव युक्तः' इति । **पराक्रमः.** १, * **उपक्रमप्राबल्यन्यायेनैव** अश्वप्रतिग्रहेष्ट्यधिकरणेऽपि सिद्धान्तः । ५।१. * स्वादयं **उपक्रमप्राबल्यादिन्यायः,** यदि उत्पत्तिविनियोगकालयोः स्वरापेक्षा भवेत् ( उच्चैर्ऋचा क्रियते ) तस्य तु कालादिवत् प्रयोगविधिविशेषणत्वेन अपेक्षितत्वात् तन्निबन्धनस्यैव स्वरस्य प्राबल्यम् । **कौ.** ३।३।२।९ पृ. ३२०.

* **उपक्रमबलीयस्त्वं** 'वेदो वा प्रायदर्शनात्' ( ३।३।२ ) इत्यत्र वक्ष्यते । **सु.** पृ. ५२६.

* **उपक्रमवशेन** उपसंहारशब्दार्थकल्पनायां लक्षणापरिग्रहेण शब्दार्थविज्ञानस्य धर्मस्य ( श्रुत्यर्थपरत्वस्य ) बाधः । ( यथा वेदोपक्रमवशात् ऋगादिशब्दस्य ) । **टुप्.** ६।५।१९।५४.

⌛ **'उपक्रमसंकीर्तिता वेदाः उपसंहारगतैर्ऋगादिशब्दैरनुवदितुं शक्यन्ते वेदैकदेशत्वादृगादीनाम् ।' इति न्यायः** वेदोपक्रमाधिकरणस्य । **पराक्रमः.** ४।२.

* **उपक्रमस्थेन** उपसंहारस्थं बाध्यते । अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०.

⌛ **उपक्रमाधिकरणम्** । उपक्रमाधिकरणन्यायः । उपक्रमन्यायः । उपक्रमप्राबल्यन्यायः । उपक्रमानुरोधन्यायः । वेदोपक्रमाधिकरणम् । उपक्रमोपसंहारयोरेकवाक्यता ॥

**श्रुतेर्जाताधिकारः स्यात् ।** ३।३।१।१॥

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा' इति । तत्र संदेहः किमृगादिजातिं अधिकृत्यैते शब्दाः प्रवृत्ताः, उत वेदमधिकृत्येति । किं तावत् प्राप्तम् ? जाताधिकारः स्यात् । कुतः ? श्रुतेः । एषां शब्दानां श्रवणादेव जातिं प्रतिपद्यामहे ।

तेनोपांशुत्वं जात्या अधिकृततया संबध्यते, वेदानामधिकारकः शब्दो नास्तीति। अपिच, ऋग्वेदव्यतिक्रान्तानामृचां यजुर्वेदे उच्चैः प्रयोगो भविष्यति। इतरथा तस्या एव ऋचः उभौ धर्मौ वैकल्पिकौ स्यातां, तत्र पक्षे बाधः स्यात्। प्रकरणं चैवमनुगृहीतं भवति। इतरथा वेदसंयोगे सर्वस्मिन्नपि क्रतौ उपांशुत्वं स्यात्। तस्मात् जाताधिकारा एते शब्दा इति।

**वा**— एवं लिङ्गविनियोगं उपवर्ण्य संप्रति वाक्यविनियोगः प्रस्तूयते। तत्रोदाहरणं 'उच्चैर्ऋचा क्रियते' इत्यादि वाक्यम्। 'तद्यदि ऋक्त उल्बणं क्रियते गार्हपत्यं परेत्य भूः स्वाहेति जुहुयात्' 'यदि यजुष्टो यदि सामतः' इत्यादि च। तत्र किं ऋग्यजुःसामशब्दैरुच्चैस्त्वोपांशुत्वधर्मविधौ महाव्याहृत्यग्नित्रयसंबद्धहोमविधौ च पूर्वोत्तरपदसंबन्धनिरपेक्षाभिधानश्रुतिवशेन 'तेषामृग् यत्रार्थवशेन पादव्यवस्था' (२।१।१०।३५) इत्येवंलक्षणानां ऋगादिजातानां ग्रहणं, उत समस्तमन्त्रब्राह्मणात्मकानां वेदानामिति। कुतः संशयः? एकवाक्योपक्रमोपसंहारश्रुत्योर्विप्रतिपत्तेः। उपक्रमे हि वेदाः श्रूयन्ते। उपसंहारे तु ऋगादिजातानि। तत्र यदि वा उपक्रमस्थवेदपदं अवयवभूतजातलक्षणार्थं, अथवा उपसंहारस्थमृगादिजातं सब्राह्मणकसमुदायलक्षणार्थमिति समञ्जसासमञ्जसयोः संदेहः। स च 'अक्ताः शर्कराः' इतिवत् आक्षेपपरिहाराभ्यां समर्थनीयः। एवं तर्हि तेनैव (अक्ताधिकरणेनैव १।४।१३) गतत्वात् नैतदारब्धव्यम्। नायमुपालम्भः। संदिग्धेषु हि वाक्यशेषस्य तत्र प्रामाण्यमुक्तम्। इह पुनः विध्युद्देशवर्तिनामृगादिशब्दानां निःसंदिग्धमन्त्रभेदजातवचनत्वात् असंदिग्धः एव विध्युद्देशः। तेन व्यवधारणकल्पनया अन्यतरपक्षावधारणं कार्यमित्यारभ्यते। किं प्राप्तम्? तदीयपूर्वपक्षन्यायेनैव विध्युद्देशश्रुतिबलीयस्त्वात् जाताधिकार इति। **किंच।**
**'यथा च द्रव्यसामान्यं क्रिया वा न विरुध्यते।**
**विशेषैर्वाक्यशेषस्थैर्नैवं वेदैर्ऋगादयः॥'** न कथंचित् ऋगादिब्देन ब्राह्मणं वक्तुं शक्यम्। शक्नोति तु वेदशब्दः एकदेशेऽपि वर्तितुं, समुदायशब्दानां एकदेशेष्वपि उपलब्धेः, यथा 'ग्राम आयातः' इति। तथा चाध्येतारस्तत्रैव सुतरां प्रयुञ्जते 'वेदमधीमहे, वेदो वर्तते' इति। न च ब्राह्मणमधीयानाः तथा वदन्ति।
**किंच 'जातस्य हि व्यवस्थानाच्छक्यं धर्मावधारणम्। संकीर्णत्वात्तु वेदानां भवेत् तद्धर्मसंकरः॥'** ऋचो हि ता एव काश्चित् त्रिष्वपि वेदेषु पठ्यन्ते, तथा यजूंषि। तत्र यदि वेदत्वं धर्मसंबन्धहेतुतः, तादृशेषु न ज्ञायते को धर्मः क्रियतामिति अन्याय्यो वा विकल्प आश्रीयते, वेदान्तरव्यपदेशस्य तुल्यबलत्वात्। जातिपक्षे तु नैष दोषः। नहि एकस्मिन् वर्णसमूहे जातिद्वयं समवेतम्। ज्योतिष्टोमप्रकरणं चैवमनुग्रहीष्यते। अन्यथा वेदस्य समस्तेष्टिपश्वेकाहाहीनसत्रविषयत्वात् यावद्वेदानुसारी धर्मः प्रकरणमुल्लङ्घ्य सार्वत्रिकः स्यात्। **ननु** जाताधिकारेऽपि वेदवत् जातस्य प्रकरणान्तरेष्वपि भावात्तुल्यमेतत्। अथ प्रकृतजातातिक्रमकारणाभावादिह व्यवस्था, सा वेदपक्षेऽपि अविशिष्टा। यावान् प्रकरणे वेद इत्यवधारणात्। **नैतत्तुल्यम्।** कुतः?
**'प्रतिसंघातवर्तित्वाज्जातं प्रकरणेऽस्ति नः। वेदो महासमूहत्वात् प्रकृतौ न समाप्यते॥ सर्वर्गादिसमूहेषु जातं व्यासङ्गि चेद्भवेत्। प्रकृतौ न समाप्येत ततस्तदपि वेदवत्॥ मन्त्रब्राह्मणतर्काणां समूहे काठकादिके। वेदत्वं वर्तते नित्यमनेकक्रतुगामिनि॥ समूहास्त्वेकवाक्यानां ये पादपदपर्वणाम्।** (पादबद्धा ऋचः, पदसंघा यजूंषि, पर्वबद्धानि सामानि। अत्रेदं वक्तव्यं— 'साम्नः पर्व' इति भक्तिपदार्थे पर्वशब्दं प्रयुञ्जानो भाष्यकारो वार्तिककारैर्दूषितः 'प्रमादपाठः' इति वदद्भिः। अत्र तु स्वयमेव भक्तिशब्दार्थे पर्वशब्दः प्रयुक्तो वार्तिककारचरणैः इति। 'अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः'।)
**'ऋग्यजुःसामजातानि प्रत्येकं तेषु सन्ति नः।**
**यथा वनादिसंघाताः प्राक् सामान्यसमन्विताः॥**
**तथर्गादिसमूहानां सामान्यं जातमुच्यते।**
**जातिरेव तु यज्जातं भाष्यकारेण वर्णितम्।**
**व्याख्यातृभिश्च तत्रैवमृगादौ जात्यसंभवात्॥**
**द्विवर्णे च पदे जातिर्गोशब्दत्वं न कल्पितम्।**
**वाक्यत्ववत् कथं नु स्युर्ऋग्यजुःसामजातयः॥'**

यथैव हि वाक्यत्वं नाम जातिः भिन्नस्थानकरणप्रयत्नाभिव्यङ्ग्यक्रमवद्वर्णात्मकपदसमूहे अन्त्यवर्णे वा विलक्षणावयवपदार्थसंबन्धप्रत्ययाकाङ्क्षाव्यवधानात् भ्रमणत्वादिन्यायेन कल्पयितुं तद्भूताधिकरणे नाध्यवसितम्, तथैव ऋक्त्वयजुष्ट्वसामत्वानि क्रमवद्वर्णस्वराश्रयाणि न शक्यानि कल्पयितुम्। ( सु–भिन्नैः कण्ठादिभिः स्थानैः, उच्चारणप्रकाराख्यैश्च करणैः, तद्धेतुभूतैश्च प्रयत्नैः व्यङ्ग्यत्वेन क्रमवत्त्वात् अयुगपद्भाविनां वर्णानां वर्णसमुदायात्मकानां वा अक्षराणां अक्षरसमुदायात्मकानां वा पदानां समूहे, वाक्यान्त्ये वा वर्णे जातिरूपं वाक्यत्वं भ्रमणत्वादिवत् कल्पयितुमारभ्यमाणं नान्त्यवर्णवेलायां तेष्वालोचनसंभवः, पदतद्वाक्यसंबद्धबुद्धिव्यवधिबाधनात् इति तद्भूताधिकरणोक्तात् तद्विलक्षणानां पदरूपाणां वाक्यावयवानां ग्रहणरूपैः पदार्थानां पदपदार्थसंबन्धानां च स्मरणानुरूपैः प्रत्ययैः पदार्थानां चान्योन्याकाङ्क्षाभिः व्यवधानात् जात्याश्रयाननुसंधानेन जातिग्रहणायोगात् यथा नाध्यवसितं, तथा ऋगादीनि जातिरूपाणि कल्पयितुं न शक्यानि इत्यर्थः। पृ. ११७० ) '**किंत्वेकार्थसमूहस्थमृग्यजुःसामसंज्ञितम्। जातं समूहसामान्यं न जातिर्नाम का चन॥ यौगिकानां यथा जातेरन्यत् सामान्यमिष्यते। तथा समूहसामान्यं जातं जातिविलक्षणम्॥**' लोकेऽपि चैषैव जातिजातशब्दार्थप्रसिद्धिः इति एवमेव व्याख्येयम्।

**वेदो वा, प्रायदर्शनात्। २॥**

**भाष्यम्—** वेदं वा अधिकृत्य इदमुच्यते। कुतः? प्रायदर्शनात्। किमिदं प्रायदर्शनादिति। वेदप्राये वाक्ये वेदोपक्रमे निगम्यमाना इमे शब्दाः श्रूयन्ते 'प्रजापतिर्वा इदमेक आसीत्। स तपोऽतप्यत। तस्मात्तपस्तेपानात् त्रयो देवा असृज्यन्त। अग्निर्वायुरादित्यः। ते तपोऽतप्यन्त। तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्त। अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात् सामवेदः' इत्येवमुपक्रम्य निगमने इदं श्रूयते 'उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा' इति। एतस्मात् कारणात् एभिः प्रकृतैः उपांश्वादि कर्तव्यं, न जात्या ऋगादिभिरित्युच्यते। कुत एतदवगम्यते? वाक्योपसंहारे श्रुतत्वात्। यस्मादितः एते वेदा जाताः, तस्मादेतैः उपांश्वादि कर्तव्यमिति। ऋगादिभिरपि वेदवचनैरेव उपसंहारेण भवितव्यम्। इतरथा वाक्यमेव नावकल्पेत। तत्रानर्थका एव भवेयुः। तस्माद्वेदाधिकारा इति।

**वा—** 'किमिदं प्रायदर्शनादिति' ( भाष्यम् ) नेदमन्यैः प्रायदर्शनैस्तुल्यं इति पश्यन् पृच्छति। ( अतुल्यत्वमेव प्रदर्शयति-- ) 'प्रायवचनाच्च' इत्यत्र हि प्रधानप्राये यत्र अन्यानि प्रधानानि, तत्र वचनात् इत्युक्तम्। तथा 'विशये प्रायदर्शनात्' इति संस्कारप्राये यत्र अन्ये संस्कारा गोदोहनादयः, तत्र अस्य दर्शनमिति। न तु इह यत्र अन्ये वेदाः, तत्र एषां ऋगादीनां दर्शनं इत्यपि वक्तुं शक्यम्। नहि एतद्व्यतिरिक्ता वेदाः सन्ति, येषां मध्यपाते संकीर्त्येरन्। अतो नेह प्रायदर्शनमस्ति इति। तत्रोत्तरमाह ( भाष्यं– ) वेदप्राये वेदोपक्रमे वेदबुद्धिजनितसंस्कारव्याप्ते मनसि 'इमे शब्दाः श्रूयन्ते'। तद्दर्शयति– 'प्रजापतिर्वा इदमेक आसीत्' ( इत्यादिना )। यत्तु विध्युद्देशबलीयस्त्वात् अर्थवादपदस्थो वेदशब्दः अवयवविषयो भविष्यतीति, तत्र ब्रूमः। '**विध्यर्थवादसंबद्धमन्यदेव बलाबलम्। मुख्यपश्चात्तनत्वेन ज्ञानानामन्यदेव तत्॥**' ये हि विध्युद्देशात् परस्तात् अर्थवादाः श्रूयन्ते, तेषामस्ति दौर्बल्यम्। ये पुरस्तात् श्रूयन्ते, ते मुख्यत्वात् बलीयांसो भवन्ति। सर्वस्यैव हि शब्दस्य स्वार्थातिलङ्घने विरोधः कारणम्। स च प्रतियोगिनि दृष्टे विरोधो विज्ञायते। तदिह यदा 'त्रयो वेदा अजायन्त, अग्नेर्ऋग्वेदः' इत्यादि श्रूयते, न तदा जातवचनानां ऋगादीनां उच्चारणमस्ति। यद्दर्शनेन वेदशब्दः अवयवलक्षणार्थो भवेत्। अतः तेन तावत् श्रुतिवृत्तेनैव व्याप्ता बुद्धिः। अथेदानीं ऋगादिशब्दाः स्वार्थपराः सन्तः न संबध्यन्ते, इति बलात् लक्षणां प्रतिपद्यन्ते इति, तेन सत्यपि विध्युद्देशगतत्वे दौर्बल्यं, 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इत्येवं इतरबलीयस्त्वात्। ननु 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यनेन उत्पन्नमपि अर्थवादात् मुख्यवेदज्ञानं बाधित्वा विध्युद्देशज्ञान-

मेव गृह्येत । नैतदेवम् । '**पौर्वापर्यबलीयस्त्वं यत्र नाम प्रतीयते । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्** ॥' ये हि भिन्नवाक्यगताः परस्परनिरपेक्षाः विरोधिनोऽर्थाः श्रूयन्ते, तेषां पूर्वस्य उत्तरानुपमर्देनैव लब्धात्मकत्वात् उत्तरस्य पूर्वोपमर्देन विना आत्मलाभानुपपत्तेः पौर्वापर्यबलीयस्त्वन्यायो भवति । यत्र तु एकवाक्यतया परस्परापेक्षाणां श्रवणं, न तत्र एतत् भवति । तत्र आकाङ्क्षावशेन एकवाक्यता भवति । पूर्वप्रतीते च उत्तरं आत्मानुगुणमधिकं वा आकाङ्क्षति । अतश्च यत् अनधिकमनुगुणं वा, तत् अनपेक्षितत्वात् नैव तस्मिन् वाक्येऽस्ति । न च अविद्यमानेन पूर्वबाधः शक्यते इति पूर्वबलीयस्त्वं भवति । तदिह विध्यर्थवादयोः समानविषयत्वात् यावदेव अर्थवादे वेदाः संकीर्तिताः, तावदेव किमपि एषां विधास्यते इत्येतत् अवधृतम् । ततश्च किमेषां विधेयं इत्येतावन्मात्रं अपेक्षते, न तु कस्य किं विधास्यते इति । तेन उत्तरस्मादवयवात् अपेक्षितमात्रं गृह्यते । विधेयं चापेक्षितं, न विधिविषयः, इति उच्चैस्त्वादिमात्रं संबध्यते, न तु ऋगादयः । ततश्च अविवक्षितत्वात् अहेतुलक्षणयुक्तः ( व्याप्यत्वरूपहेतुलक्षणशून्यः, न हेतुलक्षणयुक्तः ) सन् न शक्नोत्येव अवयवं लक्षयितुम् । ऋगादयस्तु नियम्यत्वात् समुदायं लक्षयन्ति । यथा चान्यत्र अर्थवादानामनुवादत्वात् लक्षणावृत्तिरदोषः, तथा अत्र अर्थवादावगतविषये विधौ ऋगादिशब्दानां अनुवादकत्वात् लक्षणायामपि अदोषः । तेन एषा वचनव्यक्तिः 'यस्मात् एवमेते वेदाः जाताः, तस्मात् एषामुच्चैस्त्वादि कर्तव्यम्' इति वक्तव्ये तमेव अर्थसिद्धं अङ्गीकृत्य ऋगादय उच्चार्यन्ते । अन्यथा हि असंबद्धमेव स्यात्, विध्यर्थवादयोः नानाविषयत्वात् । तस्मात् वेदाधिकारः इति ।

**लिङ्गाच्च** । ३ ॥

**भाष्यम्**— लिङ्गमपि अस्मिन्नर्थे भवति, यथा ऋगादयः शब्दाः शक्नुवन्ति वेदमभिवदितुमिति । '**ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः** ॥' इति द्वौ वेदौ संकीर्त्य ऋक्शब्दं च त्रिषु पादेषु, चतुर्थे पादे उपसंहरति बहुवचनेन 'वेदैरशून्यस्त्रिभिरेति सूर्यः' इति ऋक्शब्दं वेदवचनं दर्शयति । तस्मादपि पश्यामो वेदाधिकारा एते शब्दा इति ।

**वा**— लक्षणाऽपि च या दृष्टपूर्वा, तस्यामेव शीघ्रतरबुद्धिर्भवति । ऋगादयश्च वेदे दृष्टपूर्वाः । तत् दर्शयति ( भाष्यम्– ) 'ऋग्भिः प्रातः' इति । त्रिष्वेव तावत् पादेषु वेदशब्दसाहचर्यात् ऋक्शब्दस्य वेदविषयत्वं ज्ञातम् । चतुर्थे तु 'वेदैरशून्यः' इति अवश्यं ऋक्शब्दः सब्राह्मणके वेदे प्रयुक्तः इति गृह्यते । यस्तु अध्येतॄणां वेदशब्दप्रयोगो मन्त्रेषु दृष्ट इति, सत्यमस्ति अत्रापि लक्षणा, तथापि तु 'शास्त्रस्था वा तन्निमित्तत्वात्' इति इतरैव ( ऋक्शब्दस्य वेदे लक्षणा पूर्वोक्तैव ) ज्यायसी ।

**धर्मोपदेशाच्च, नहि द्रव्येण संबन्धः** । ४ ॥

**भाष्यम्**— धर्मोपदेशश्च भवति साम्नः, 'उच्चैः साम्ना' इति । स वेदाधिकारपक्षे युज्यते । जाताधिकारे तु ऋचः उच्चैस्त्वेन साम्नः उच्चैस्त्वं सिद्धम् । नास्य सामद्रव्येण सह संबन्धो वेदितव्यः । तस्मादपि वेदाधिकारा इति ।

( इदं चतुर्थं सूत्रं नवमत्वेन गृहीत्वा व्याख्यातं वार्तिककारैः इति तत्रैव अधिकरणान्ते एतत्सूत्रवार्तिकं द्रष्टव्यम् । **अत्र सुधा**– "ऋग्धर्मत्वेनोपदिष्टस्य उच्चैस्त्वस्य पुनः सामधर्मत्वेनोपदेशाच्च ऋगादिशब्दैर्वेदोऽधिक्रियते इत्येवं सिद्धान्तसूत्रोक्तप्रतिज्ञाऽनुषङ्गेण सूत्रपूरणार्थं 'लिङ्गाच्च' इति सूत्रानन्तरं एतत् सूत्रं कृतमपि पूर्वपक्षनिरासार्थत्वेन स्वस्थानादुत्कृष्य इदानीं व्याख्येयं इति सूचयितुं जाताधिकारपक्षं ऋग्धर्मत्वोपदेशेनैव उच्चैस्त्वस्य सामधर्मत्वसिद्धेः सामान्वयो न वक्तव्यः इत्येवं पूर्वपक्षनिरासार्थमेव सूत्रशेषं [ नहि द्रव्येण संबन्धः इति ] व्याचष्टे" इति ।

**त्रयीविद्याख्या च तद्विदि** । ५ ॥

**भाष्यम्**— त्रयी यस्य विद्या स त्रयीविद्यः । यस्त्रीन् वेदानधीते, स एवं प्रख्यायते । त्रयीति चैष शब्द ऋक्सामयजुःषु प्रसिद्धः । यदि ऋक्सामयजूंषीति

त्रयो वेदा उच्यन्ते, एवं तद्विदि त्रयीविद्याख्या युज्यते भवति च। तस्माद्वेदाधिकारा एते।

**वा—** यदि च लौकिकेनापि प्रयोगेण कार्यं, सोऽप्यस्ति वेदे ऋगादीनाम्। कथम्? ऋग्यजुःसामानि तावत् त्रयीत्येव प्रसिद्धानि। ततश्च त्रयी विद्या अस्येत्येवं त्रयीविद्यशब्दव्युत्पत्तिः। स च वेदत्रयाध्यायिनि प्रयुज्यते, न जातत्रयविदि। छन्दोगेषु जातत्रयज्ञेष्वपि अप्रयोगात्। अतस्त्रयीविद्यशब्दे त्रयीशब्दो वेदेषु प्रयुक्तः इति तत्समानाधिकरणानां ऋगादिशब्दानामपि तद्विषयत्वं विज्ञायते। तस्मादपि वेदेषु ऋगादिप्रसिद्धिः।

**व्यतिक्रमे यथाश्रुतीति चेत्। ६॥**

**भाष्यम्—** अथ यदुक्तं, ऋग्वेदमतिक्रान्तानामृचां यजुर्वेदेऽपि उच्चैस्त्वं भविष्यतीति। तत्र मत्पक्षे यथाश्रुतः प्रयोगो भविष्यतीति यदुक्तं, तत्परिहर्तव्यमिति। आभाषाऽन्तं सूत्रम्।

**वा—** अनुभाषणमेतत्।

**न, सर्वस्मिन्निवेशात्। ७॥**

**भाष्यम्—** नैष दोषः। सर्वस्मिन् ऋग्वेदे उच्चैस्त्वं, सर्वस्मिंश्च यजुर्वेदे उपांशुत्वम्। तत्र यदि ऋग्वेदव्यतिक्रान्ताया ऋचो यजुर्वेदे उपांशुत्वं भवतीति नैतत् दुष्यति। वेदधर्मः सः, न ऋग्धर्म इति। वेदस्य च न धर्मद्वयेन संबन्धः।

**वा—** न पाठमात्रेण वेदान्तरव्यपदेशो भवति। यत् येन वेदेन विधीयते, तत्तेनैव प्रमाणेन क्रियते इत्युच्यते। ततश्च यस्यैव मन्त्रस्य यत्र विधानं, स एव तेन व्यपदेक्ष्यते। यदि तूभयत्र विधास्यते, तत्रोभयत्र 'भूयस्त्वेनोभयश्रुति' इत्यादि नास्ति, तत्रागत्या विकल्पो ग्रहीष्यते।

**वेदसंयोगान्न प्रकरणेन बाध्येत। ८॥**

**भाष्यम्—** यदुक्तं प्रकरणमेवमनुगृहीतं भवतीति। वेदसंयोगात् वाक्येन प्रकरणे बाध्यमाने, न दोषो भविष्यति।

**वा—** बाधेतेति वा पाठः।

**(धर्मोपदेशाच्च, नहि द्रव्येण संबन्धः। ४॥)**

**वा—** (इदं चतुर्थं सूत्रं वार्तिककारैर्नवमत्वेन व्याख्यायते) जातधर्मपक्षे 'ऋचि अध्यूढं साम गायति' इति ऋक्सामयोः अवियोगात् ऋग्धर्मेणैव सामधर्मसिद्धेः वृथा पुनरुपदेशः। नहि कश्चित् सामाधारभूतां ऋचं उच्चैरुच्चारयन् सामानि अन्यथा उच्चारयितुं समर्थः। वेदाधिकारे तु अन्यत् ऋग्वेदेन विधीयते अन्यच्च सामवेदेन, इति अर्थवत् उपदेशद्वयम्। अनृक्प्रजापतिहृदयाद्यर्थं इतरत्रापि भविष्यतीति चेत्, न। तस्य ज्योतिष्टोमानङ्गत्वात्। प्रकरणे हि अयं स्तोत्रसाम्नामुपदेशः। न च तेषां अनृक्काणां (ऋग्–रहितानां) प्रयोगः। अल्पविषयत्वाच्च मन्दपरिहृतमेव आनर्थक्यम्। तस्मादपि वेदाधिकारः इति सिद्धम्।

**शा—** '**गुणत्वादनुवादत्वादर्थवादस्य लक्षणा। मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः॥ विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति। मुख्याऽपि दीक्षणीया हि लभते न स्वधर्मताम्॥ जघन्यस्यापि सोमस्य प्रधानत्वात् स्वधर्मता। वक्ष्यते, तद्वदत्रापि विध्युद्देशस्य सा भवेत्॥**' इति प्राप्ते ब्रूमः। '**लब्धात्मनः प्रधानस्य बलीयस्त्वं गुणाद्भवेत्। विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं न बाधते॥**' ऋगादिकार्योद्देशेनैव ऋगादिवृत्तितया उच्चैष्ट्वादिविधिः।

**सोम—** **प्रयोजनं** पूर्वपक्षे यजुर्वेदविहिते कर्माङ्गे ऋङ्मन्त्रे उच्चैस्त्वं, सिद्धान्ते तु उपांशुत्वं इत्यादि। **सूत्रार्थस्तु—** ऋगादिशब्दश्रुतेः उच्चैस्त्वादिजाताधिकारः ऋक्त्वादिसामान्यविषयः स्यादिति।

**वि—** 'कर्तव्यमुच्चैः सामग्भ्यामुपांशु यजुषेत्यमी। मन्त्राणां वाऽथ वेदानां धर्मा, मन्त्रगता यतः॥ विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः।, ऋग्वेदोऽग्नेः समुत्पन्न इत्युपक्रमवेदगीः॥ असंजातविरोधा ऽतस्तद्वशादुपसंहृतेः। नयने सति वाक्येन धर्माणां वेदगामिता॥'

**कौ—** लिङ्गकल्पकप्रमाणगम्यविनियोगोपयोगिचिन्तनं पादार्थः। तानि च वाक्यप्रकरणस्थानसमाख्यारूपाणि,

न तु श्रुतिलिङ्गे अपि। लिङ्गगम्यविनियोगोपयोग्युद्देश्यताऽवच्छेदकविचारणात् ( उपक्रमाधिकरणस्य- ) पादाध्यायसंगतिः। अनन्तरा तु श्रुतिमात्रकल्पकप्रमाणगम्यविनियोगे विचारिते अधुना उभयकल्पकप्रमाणगम्यविनियोगविचारावसरात् स्पष्टा। तदिह उपक्रमोपसंहारैकवाक्यतया वेदधर्मत्वमवधारितं इति वाक्यविनियोगः।

**भाट्ट**— एवं लिङ्गविनियोगे निरूपिते इह वाक्यादिविनियोगो निरूप्यते। तदिह ज्योतिष्टोमे श्रुतेन 'उच्चैर् ऋचा क्रियते' इत्यादिना वाक्येन विधीयमानस्य उच्चैस्त्वादेः उद्देश्यसमर्पकेण ऋगादिपदेन किं ऋगादीनां मन्त्राणामेव उद्देश्यत्वं प्रतिपाद्यते, उत 'त्रयो वेदा अजायन्त' इत्याद्युपक्रमस्थार्थवादवशेन लक्षणया ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रमात्रस्येति चिन्तायां, उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपरार्थवादस्थत्वेन प्रधानभूतविध्युद्देशस्थऋगादिपदे निःसंदिग्धे अङ्गगुणविरोधन्यायेन लक्षणातात्पर्यग्राहकत्वात् वेदपदे एव तदेकदेशऋगादिलक्षणा। वस्तुतस्तु वेदशब्दस्य अवयवेऽपि न लक्षणा, वेदत्वस्य प्रत्येकवृत्तित्वात्। इतरथा शूद्रस्यैकवाक्यश्रवणे दोषानापत्तेः। **इति प्राप्ते**, उपक्रमे वेदपदश्रवणेन एतावदवगम्यते, नूनमत्र वेदस्य, स्तूयमानत्वादुद्देश्यत्वं विधेयत्वं वा तस्यावश्यं वाक्ये विवक्षितमिति। तत्र च विधेयस्य उच्चैस्त्वादेर्लाभात् परिशेषादेव तस्योद्देश्यत्वावगतेः। वस्तुतस्तु ऋगादिपदमनुवादः एव सदुद्देश्यपरम्। अतश्च असंजातविरोधिनः उपक्रमस्थस्य वेदपदस्यैव तात्पर्यग्राहकस्य सत्त्वात् ऋगादिपदे तत्प्रचुरत्वेन ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा। न चोपक्रमावगतस्यापि अपच्छेदाधिकरणन्यायेन परेण बाधः, तस्य हि विधेयस्तुतिसापेक्षत्वेन अर्थवादैकवाक्यताया आवश्यकत्वात् पूर्वविरोधे परस्यानुत्पन्नत्वादेव अप्रवृत्तेः। न च वेदत्वस्य ऋगादिष्वपि पर्याप्तत्वात् उपक्रमाविरोधः, वेदत्वस्य मन्त्रब्राह्मणसमुदायात्मके ग्रन्थविशेषे एव पर्याप्तत्वेन अवयवपर्याप्तत्वाभावात्। इतरथा एकवाक्याध्ययनेनापि अध्ययनविध्यर्थसंपत्त्यापत्तेः। शूद्रस्यैकपदश्रवणनिषेधस्तु वृन्ताकावयवादिनिषेधवत् नानुपपन्नः। तथा च एतादृशविषये निषेधस्य विध्यपेक्षया वैलक्षण्यं, तथा **कौस्तुभे** द्रष्टव्यम्। तस्मादुपक्रमानुसारेण ऋग्वेदविहितकर्माङ्गभूतमन्त्राङ्गत्वमेव उच्चैस्त्वादीनाम्। एवं च वेदत्वस्य प्रकरणस्थवाक्यमात्रेषु अपर्याप्तत्वात् प्रकरणेन वाक्यस्य स्वविषये उपसंहारानुपपत्तेः वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेन वाक्येन स्वरविधानावगतेः प्रकरणबाधेऽपि न क्षतिः।

**मण्डन**— 'ऋग्वेदचोदितान्युच्चैः।'

**शंकर**—'वेदधर्मस्तूच्चताऽऽदिः।'

* **उपक्रमाधिकरणे** उपक्रमप्राबल्यमनपेक्ष्य न्यायान्तरेण स्वराणां वेदधर्मत्वनिर्णयः इत्युक्तम्। **पराक्रमः.** १५।१. * असंजातविरोधित्वेन उपक्रमगतार्थवादस्य यथाश्रुततयैव व्याख्यातव्यतायाः अङ्गगुणविरोधन्यायस्य विध्युद्देशतद्वाक्यशेषान्यविषयतायाश्च **उपक्रमाधिकरणे** व्यवस्थापितत्वात्। **कु.** ३।४।१५।३७ पृ. ३७६, * **उमक्रमाधिकरणन्यायेन** अश्वप्रतिग्रहेष्ट्यधिकरणस्य गतार्थत्वं निरस्तं अधिकशङ्कापरिहारार्थत्वात्। ३।४। १५।३७ पृ. ३७७, * उपक्रमाधिकरणन्यायेन विध्युद्देशस्य दातृपरत्वमेवास्थेयम्। ( अश्वप्रतिग्रहेष्टिवाक्ये )। ३।४।१५।३७ पृ. ३७७. * न च **उपक्रमाधिकरणन्यायेन** अनुपजातविरोधित्वात्...सगुणवाक्यस्य प्राबल्यं इति वाच्यम्। उपक्रमाधिकरणन्यायस्य अन्यथासिद्धोपसंहारविषयत्वात् प्रकृते च तदभावात्। **अद्वैत.** २।४।३६५. * प्रयोगविधेः विनियोगोत्पत्तिसापेक्षत्वात्, तयोः पूर्वभावित्वेन तन्निबन्धनस्वरस्य शीघ्रोपस्थितिकत्वेन असंजातविरोधित्वात् बलवत्त्वं पूर्वाधिकरणन्यायेनैव। ( उपक्रमाधिकरणन्यायेनैव )। **कौ.** ३।३।२।९ पृ. ३२०. * **उपक्रमाधिकरणन्यायस्य** स्वरूपं तु 'उपक्रमानुसारेण उपसंहारो नेयः' इति। **के.**

* उपसंहारस्य **उपक्रमाननुगुणार्थ**कत्वे तदेकवाक्यत्वानिर्वाहात् उपक्रमपर्यालोचनयैव उपसंहारस्य आत्मलाभात् उपक्रमप्राबल्यम्। **सोम.** ६।५।१९.

* **उपक्रमानुरोधेन** उपसंहारव्याख्यानस्य तृतीये वक्ष्यमाणत्वात्। नोपसंहारस्थेनार्थवादेन उपक्रमस्थविध्यर्थनिर्णयो युक्तः इत्याशङ्क्य। **सु.** पृ. ५२३.

* **उपक्रमानुरोधन्यायस्य** असंदिग्धोपक्रमविषयत्वात् । **न्यायनि.** ३।३।८।१७-१८ वर्णकं २ ब्रसू.

* **उपक्रमानुसारेण** उपसंहारः वेदोपक्रमाधिकरणे अश्वप्रतिग्रहेष्ट्यधिकरणे च नीतः । **पराक्रमः १.** * 'यदि यजुष्टो यज्ञ आर्तिमियात् भुवः इति दक्षिणाग्नौ' इत्यस्यापि प्रायश्चित्तस्य **उपक्रमानुसारेण** वेदधर्मत्वस्य तृतीये व्यवस्थापयिष्यमाणत्वात् । **कौ.** १।२।४।४४ पृ. ८४.

* **उपक्रमावगत**पुत्रजननिमित्तत्वापरित्यागेनैव रात्रिसत्रन्यायेन वाक्यशेषगतफलस्यापि स्वीकारात् । **पराक्रमः.** ४७।१.

* **उपक्रमोपसंहारयोः** अविरोधेन एकवाक्यतया भाव्यम् । **पराक्रमः.** ४।२.

* **उपक्रमोपसंहारभावः** एकवाक्यतया पूर्वापरभावेनाम्नातयोः । **पराक्रमः.** ४३।२.

* **उपक्रमोपसंहारैकरूप्या**वगतवेदान्तप्रतिपाद्याद्वैतविरोधिनां बहूनामपि तत्तत्पदसमर्पितप्रवृत्तिनिमित्तभूतधर्माणां बाधाभ्युपगमः । 'आत्मार्थे पृथिवीं त्यजेत्' इति न्यायात् । **पराक्रमः.** ५६।१.

* **उपक्रम्य** अपरिसमापयतः तदनन्तरमेव एनं शिष्टा विगर्हेयुः 'प्राक्रमिकोऽयं कापुरुषः' इति वदन्तः । ये हि देवेभ्यः संकल्प्य हविः न यागमभिनिर्वर्तयन्ति, तान् शिष्टाः विगर्हन्ते । तस्मादवश्यं समापयितव्यम् । **भा.** ४।३।९।२४, * उपक्रम्य अपरिसमाप्यमाने शास्त्रकृते देवताव्यापारे शिष्टविगर्हणम् । ६।२।४।१६.

* **उपगमनं नाम** । 'अप्राप्तस्य हि प्रापणमुपगमनम् । तत् प्राप्तस्य न शक्यम् ।' **भा.** १२।१।११।२०.

* **उपगाः** इति यौगिकः संज्ञाभेदः । ( उद्गातृप्रस्तोतृप्रतिहर्तॄणां उप आनुकूल्येन गायन्ति होशब्देन स्थिरं स्वरं उच्चारयन्ति इति उपगाः इति । **के.** ) । **वि.** ३।७।१४. * उपगाः ऋत्विजामेवान्यतमाः ( यजमानोऽपि ) ज्योतिष्टोमे । **भा.** । ३।७।१४।३०.

**उपगाश्च लिङ्गदर्शनात्** । ३।७।१४।३० ॥

उद्गात्रादयः मुख्या गातारः अन्ये च के चित् उपगातारः । उप मुख्यानां समीपे स्थित्वा 'हो' इति एकश्रुत्या गातारः मुख्यानां गातॄणां विरामकालस्य आच्छादकाः, गायकस्य वीणावच्च स्थिरस्वरेणाखण्डेन साहाय्यकर्तारश्च उपगातारो नाम । ते ऋत्विग्यजमानेभ्यो भिन्ना अभिन्ना वेति विचारे, भिन्नाः शब्दभेदात् इति उत्सूत्रे पूर्वपक्षे सति सिद्धान्तसूत्रमिदम् । चकारः उत्पत्त्यसंयोगात् इत्यस्य हेत्वन्तरस्य अनुकर्षणार्थः । उपगाः उपगातारः ऋत्विग्यजमानेभ्यो न भिन्नाः । उत्पत्त्यसंयोगात् वरणोत्पत्तिवाक्ये उपगानां संयोगाभावात् संबन्धाभावात् वरणविधानाभावात् । लिङ्गदर्शनाच्च । 'नाध्वर्युरुपगायेत्' इति अध्वर्योः उपगानस्य निषेधो लिङ्गं ऋत्विजामुपगानस्य, निषेधस्य प्राप्तिपूर्वकत्वात् । तस्मात् उपगातारो नान्ये । तत्र ऋत्विजः 'हो' इत्युपगायन्ति, यजमानस्तु ओकारेणेति विशेषश्छन्दोगसूत्रे उक्तः । अत्र **सुधा**– शमितृवत् उपगा अपि वरणोत्पत्त्यसंयोगात् यौगिकत्वेन च उपगशब्दस्यापि प्रकृतेषु उपपत्तेः न भिन्नाः इति सूत्रार्थः इति ।

अत्र **कुतूहलं**— के चित्तु याज्ञिकाः ऋत्विग्भ्योऽन्ये उपगातार इति मन्यन्ते । युक्तं चैतत् । काठके विश्वसृजामयनाख्यसत्रप्रकरणे 'तप आसीत् गृहपतिः' इत्यादिना अनुक्रम्य ऋत्विगन्यत्वेनैव उपगातॄन् निर्दिशति । अत उपगातारो न ऋत्विक्षु अन्तर्भवन्तीति मन्यामहे । 'नाध्वर्युरुपगायेत्' इति निषेधस्तु 'ये प्रसृताः स्युस्ते सर्वेऽग्निष्टोममुपगायेयुः' इति अग्निष्टोमस्तोत्रे प्राप्तस्य भविष्यतीति न दोषः इति । **के.**

**उपगेषु शरवत् स्यात्, प्रकृतिलिङ्गसंयोगात्** । १०।४।५।८॥

महाव्रते श्रूयते 'पत्न्य उपगायन्ति' इति । प्रकृतौ 'ऋत्विजः उपगायन्ति' इति श्रुतम् । अत्र उपगेषु उपगानकर्तृषु शरवत् स्यात् अभिचारकर्मणि यथा शराः प्राकृतान् कुशान् बाधन्ते, तद्वत् महाव्रते पत्न्यः ऋत्विजः प्रति बाधन्ते । उपगायन्ति इति प्रकृतिलिङ्गसंयोगात् प्रकृतिलिङ्गेन संबन्धात् । प्रकृतौ अग्निष्टोमे हि गानस्य

उपगानं भवति । तदत्र महाव्रते पत्नीनामुक्तमिति । इति पूर्वः पक्षः ।

**आनर्थक्यात् त्वधिकं स्यात् । ९ ॥**

सिद्धान्तमाह । तुशब्दः पूर्वपक्षं व्यावर्तयति । पत्न्युपगानेन प्राकृतस्य उपगानस्य न निवृत्तिः किंतु चोदकप्राप्ते उपगाने सत्येव पत्न्युपगानं अधिकं स्यात् । उभयोः समुच्चयः स्यादित्यर्थः । चोदकस्य आनर्थक्यप्रसङ्गात् समुच्चयः इति । पत्नय उपगायन्ति, काण्डवीणाभिः पिच्छोलाभिः उपगायन्ति इत्युक्तम् । तेन वादित्रमिदमुपगानं वादित्रस्य वा उपगानम् । उभयथा प्राकृतादर्थान्तरे भवति उपगानम् । तस्मात् प्रकृतिलिङ्गसंयोगो नास्ति । तस्मात् समुच्चयः । इति सिद्धान्तः । **के.**

* उपगेषु शरवत्० ( १०।४।५।८–९ ) इत्यत्र गवामयने महाव्रते ' दिक्षु दुन्दुभयो नदन्ति ' इति प्रकृत्य ' पत्नयः उपगायन्ति ' इत्युपदिष्टानां पत्नीनां अतिदिष्टैरुपगातृभिर्ऋत्विग्भिः समुच्चयः उक्तः । **बाल.** पृ. १७८.

**⌛ उपगातारः ऋत्विग्यजमानेभ्यो न भिन्नाः ॥**

**उपगाश्च लिङ्गदर्शनात् । ३।७।१४।३० ॥**

**भाष्यम्**— ज्योतिष्टोमे सन्ति उपगाः नाम, ते शब्दभेदात् संख्याविवृद्धिं प्रत्याययन्ति, इति अध्वर्य्वादिभ्यः अन्ये । **इति प्राप्ते, ब्रूमः** । तेषामेव के चित् स्युरिति । कस्मात् ? उत्पत्तौ परिगणनात्, यौगिकत्वाच्च शब्दस्य । लिङ्गमिदं भवति ' नाध्वर्युरुपगायेत् ' इति । यदि एभ्योऽन्ये भवेयुः, नाध्वर्युं प्रतिषेधेत् अप्राप्तत्वात् । यतस्तु प्रतिषेधति, अतोऽवगच्छामः । उत्पत्तौ संकीर्तितानामेव अन्यतमे इति ।

**सोम**— पूर्वातिदेशात् **संगतिः** । **सूत्रार्थस्तु**— उपगाश्च नान्ये, ' नाध्वर्युरुपगायेत् ' इति लिङ्गात् । अन्यत्वे अध्वर्योरुपगानाप्रसक्त्या निषेधायोगात्, नित्यानुवादत्वकल्पनस्य अगतिकगतित्वात् इति ।

**वि**— ' अन्ये स्युरुपगातार उदितेभ्यो न वा, यथा । लोकेऽत्रापि तथा, मैवं नाध्वर्युरिति लिङ्गतः ॥ '

**भाट्ट**— एवं सोमे समाम्नाता उपगातारोऽपि वृतेष्वेव । **न** चोपगातॄणां गातृगुणत्वेन लोकप्रसिद्धेर्वृतानां च तुल्यकक्षत्वेन तदभावादन्ये, इति **वाच्यम्** । तुल्यानामपि प्रैषप्रैषार्थकारित्वात् परस्परोपकारित्वस्य उचितत्वात् । स्वामिपरिक्रीतानामपि शिल्पकारिणां तथा दर्शनाच्च । तत्रापि उपगानस्य सामवेदिकत्वात् उद्गात्रादीनां त्रयाणां गानव्यापृतत्वेऽपि सुब्रह्मण्यो नियतः । अन्ये तु ' त्र्यवरा उपगायन्ति ' ' चत्वार उपगायन्ति ' इति वचनान्तरानुसारादनियताः । अत एव ' नाध्वर्युरुपगायेत् ' इति वचनान्नासौ ।

**मण्डन**— ' उपगाः प्रकृता मताः । '

**शंकर**— ' उपगाश्च तथा मताः । ' तथा शमितृवत् ।

* **उपगातृत्वं** अध्वर्योः निषिद्धं ' नाध्वर्युरुपगायेत् ' इति । **वि.** ३।७।१४.

* **उपगानं** ऋत्विज एव के चित् कुर्वन्ति । यजमानोऽपि, क्व चित् पत्नी अपि । अध्वर्युणा तु न कर्तव्यम् । **के.** * उपगानम् । महाव्रते ' पत्नयः उपगायन्ति ' पिच्छोलाभिः, काण्डवीणादिभिः, आपाटलिकाभिः । **भा.** १०।४।५।८.

**⌛ उपगानकर्त्रीभिः पत्नीभिः आतिदेशिकोपगानकर्तॄणामृत्विजां गवामयनगते महाव्रते समुच्चयः ॥**

**उपगेषु शरवत् स्यात् प्रकृतिलिङ्गसंयोगात् । १०।४।५।८ ॥**

**भाष्यम्**— महाव्रते श्रूयते, ' पत्न्य उपगायन्ति, पिच्छोलाभिरुपगायन्ति, काण्डवीणादिभिरुपगायन्ति, आपाटलिकाभिरुपगायन्ति ' इति । अस्ति तु प्रकृतौ ' ऋत्विज उपगायन्ति ' इति । तदिह चोदकेन प्राप्यते । तत्रायमर्थः सांशयिको भवति, किं पत्नीभिः उपगायन्तीति ऋत्विज उपगायन्तो निवर्त्यन्ते, उत न निवर्त्यन्ते इति । तत्रैतत्तावत् चिन्त्यते, किं गानोपगानमेतत्, उत वादित्रोपगानमिति । तत्रापि द्वैतं किं गानस्योपगानं गानोपगानं, उत गानमेवोपगानं गानोपगानमिति । किं तावत् प्राप्तम् ?

प्राकृतं निवर्त्यते इति । तत इदं वर्ण्यते । गानस्योपगानमिति । पत्न्यो गायतां गानमुपचिन्वन्तीति ; गानं प्राप्तमेव प्राकृतं, उपचयः उपसर्गार्थो विधीयते । तस्मात् गानस्योपगानमिति । अथवा गानमेवोपगानम् । गानशब्दो हि शारीर्यां गीतौ प्रसिद्धः । तस्मात् गानमेतदुपगानम् । गानस्य वोपगानमिति । यदा एतयोरन्यतरत्, तदा ऋत्विक्कार्ये पत्न्यो वर्तन्ते । अतः प्रकृतिलिङ्गसंयोगात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्यते, शरवत् । यथा, 'शरमयं बर्हिर्भवति' इति शराः प्रत्यक्षश्रुताः चोदकप्राप्तान् दर्भान् निवर्तयन्ति, एवमिहापीति ।

**आनर्थक्यात् त्वधिकं स्यात् । ९ ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति, न निवृत्तिरिति । समुच्चयः स्यात् । तत एतच्चिन्त्यते । वादित्रस्यैतदुपगानम् । अस्ति हि अत्र वादित्रं 'दिक्षु दुन्दुभयो नदन्ति' इत्येवमादि । तस्योपगानं वादित्रस्योपगानम् । कथम् ? प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्तोच्यते । विप्रकृष्टा उपसर्गार्थस्य सत्ता अर्थविप्रकर्षात् दुर्बला भवति । तस्मादुपसर्गार्थसत्ताविधानं धात्वर्थसत्ताविधानेन बाध्यते । अथवा वादित्रमिदमुपगानम् । एवं ह्याह 'पत्न्य उपगायन्ति, काण्डवीणादिभिरुपगायन्ति' इति । काण्डवीणादिभिर्वादित्रमुपगानं भवति । भवति च तन्त्रीगाने गानशब्दः । तस्मात् वादित्रमुपगानम् । तत्र यद्येवं वादित्रस्योपगानं, यदि वा वादित्रमुपगानं, उभयथा प्राकृतादर्थान्तरे भवति । तस्मात् समुच्चयः । कुतः? आनर्थक्यात् । एवं चोदकानर्थक्यं न भविष्यति । चोदकोऽनुग्रहीष्यतीत्यर्थः । तस्मात् समुच्चय इति ।

**सोम** — पूर्वत्र अनुयाजकार्ये आमनहोमानां विधानाभावात् तदनिवृत्तावपि इह उपगायन्तीत्यनेन प्राकृतोपगानमनूद्य तत्र पत्नीनां विधानात् प्राकृतानामुपगातॄणां ऋत्विजां निवृत्तिः इत्युत्थितेः (प्रत्युदाहरण–) **संगतिः । सूत्रार्थस्तु**– उपगेषु उपगानसंयोगात् शरैः कुशानामिव प्राकृतनिवृत्तिः स्यादिति ।

**वि**— 'पत्न्य उपगायन्तीत्यृत्विजां विनिवर्तिकाः । न वा, ऽऽद्यः सामगानोपचयः काण्डादिजस्ततः ॥, नदनं दुन्दुभीनां हि चित्ते विपरिवर्तते । उपगानं भवेत्तेन योग्यं वीणादिजं ततः ॥' (तैसं ७।५।८ इत्यन्ते मीमांसाभागे अन्यावेव श्लोकौ, तौ निवेश्येतेऽत्र अधिकतया उपयुक्तत्वात् । तौ चेत्थौ– ) 'पत्नीनामुपगानं किमृत्विजां तन्निवर्तयेत् । समुच्चितं वा, गानस्य शारीरत्वान्निवर्तनम् ॥, स्वराभिव्यञ्जकं गानं ग्रहवत् तद् विधीयते । वादित्रोपचयः साम्यात् सांनिध्याच्च समुच्चयः ॥' (इति) ।

**भाट्ट**— गवामयनान्तर्गते महाव्रते 'दिक्षु दुन्दुभयो नदन्ति' इति प्रकृत्य 'पत्नय उपगायन्ति' इति श्रुतम् । अत्र पत्नय इति पत्न्य इत्यर्थे छान्दसम् । प्रकृतौ चोद्गात्रादिभिर्गाने क्रियमाणे 'ऋत्विज उपगायन्ति' इत्यनेन ऋत्विक्कर्तृकमुपचयात्मकं गानं विहितम् । तदिह किं पत्न्यः प्राकृतोपगानानुवादेन विधीयमाना ऋत्विजां निवर्तिका उत अप्राकृतोपगानसंबन्धित्वात् अनिवर्तिका इति चिन्तायां, प्रकृतौ उपगानस्य विहितत्वात् इहातिदेशेन प्राप्तेः तदनुवादेन विधीयमानाः पत्न्यो ऋत्विजां निवर्तिकाः । न च गानस्योद्देश्यत्वे तद्विशेषणस्य उपचयस्य अविवक्षाशङ्का, उपसर्गाणां परस्परान्वयव्युत्पत्त्या विशिष्टोद्देशोपपत्तेः । **न च** तथापि 'दिक्षु दुन्दुभयो नदन्ति' इति प्रत्यक्षोपदिष्टगानस्यैव अनन्तरविपरिवर्तमानस्य पत्नीकर्तृकोपचयविध्युपपत्तेः, तादृशोपचये च 'काण्डवीणादिभिरुपगायन्ति' इत्यनेन साधनविधानात् अप्राकृतकार्यत्वप्रतीतेर्न ऋत्विजां बाध इति **वाच्यम्** । गानशब्दस्य शारीर्यामेव गीतौ प्रसिद्धत्वेन दुन्दुभिनादपरामर्शकत्वानुपपत्तेः प्राप्तगानानुवादेन उपसर्गार्थस्योपचयस्य पत्नीनां च परस्परवैशिष्ट्यासंभवेन अनेकविधाने वाक्यभेदाच्च । अतश्च प्राकृतोपगानक्रियायां कर्तृत्वेन विधीयमानाः पत्न्यो ऋत्विजां निवर्तिकाः । **न च** प्रकृतौ शारीरगीत्यात्मकगानस्योपचयः शारीरगीत्यात्मक एवेति कथं तत्र काण्डवीणादिविधानमिति **वाच्यम्** । शारीरगीतेः शारीरे एवोपचयः इत्यत्र प्रमाणाभावात् । अत एव प्रकृतौ साधनान्तरविधानाभावात् उपचयस्य शारीरत्वेऽपि इह काण्डवीणादिविधानात् अशारीरत्वेऽपि न क्षतिः । अस्तु वा इहापि तस्य शारीरत्वं, काण्डवीणा-

दीनां तु साहित्यमात्रमधिकं विधीयते। तच्च योग्यताबलेन वादनद्वारैवेति काण्डवीणादिवादनं कुर्वतीभिर्मुखेन प्राकृतमुपगानं कार्यम्। **इति प्राप्ते,** प्रकृतौ तावत् 'ऋत्विज उपगायन्ति' इत्यत्र नोद्गात्रादिकर्तृकसामगानानुवादेन ऋत्विक्कर्तृकोपचयमात्रं विधीयते। उपसर्गार्थः उपचयः ऋत्विजां वैशिष्ट्याव्युत्पत्तेः। अतः उपचयात्मकगानभावनैव ऋत्विक्कर्तृका विधीयते। उपचयश्च कस्येत्यपेक्षायां प्रकृतत्वात् सामगानस्येति संबध्यते। उपचयात्मके च गाने साधनान्तरस्याविधानात् तस्य च प्रकृतसामगानरूपतैवेति निश्चीयते। अतश्च ध्वनिविशेषानुकूलताल्वादिव्यापारस्य तादृशसामगानस्य सामगानरूपमेवोपगानमित्यविवादम्। न च तत्र काण्डवीणादीनां निवेशः संभवति, सामगानरूपत्वानुपपत्तेः। अतोऽत्र गुणादुपगानान्तरमेव काण्डवीणादिसाधनकं विधीयते। संभवति च तन्त्रीगानेऽपि गानशब्दप्रयोगात् काण्डवीणादिसाधनकमपि उपगानम्। तदपि न प्राकृतस्य सामगानस्योपचयः, अपि तु प्रकृतोपदिष्टदुन्दुभिनादस्यैव। यद्यपि च दुन्दुभिनादो न गानात्मकः दुन्दुभेर्वाद्यरूपतया तन्नादस्य तालाभिव्यञ्जकस्य षड्जादिस्वरसमाहारात्मकगानरूपत्वाभावात्। तथापि अगानरूपस्यैव तस्य काण्डवीणागानात्मकः उपचयः पुष्टिसाधनत्वान्न विरुध्यते। अत एवेदं अप्राकृतमुपगानान्तरं आरादुपकारकतया क्रत्वङ्गं दुन्दुभिनादाङ्गमेव वेत्यपि बोध्यम्। अतश्च तादृशोपदिष्टोपगानान्तरानुवादेन विधीयमानाः पत्न्यः न प्राकृतोपगाने ऋत्विङ्निवर्तिकाः। अत एव अप्राकृतोपगानान्तरविधिः काण्डवीणावाक्ये एव, तस्यैव भेदकत्वात्। पत्नीवाक्ये तु तदनुवादेन पत्नीमात्रविधानमित्यवधेयम्। ६.

**मण्डन**— 'उपगानं समुच्चेयम्।' ७.

**शंकर**— 'पत्नीभिर्गानकर्तर्वित्क्।' ७. ऋत्विक् न बाध्यः इति अनुकर्षः।

* **उपग्रहः** आत्मनेपदम्। ( आत्मनेपदं परस्मैपदं वा तथा च महाभाष्ये 'सुप्तिङुपग्रहलिङ्गनराणां' इति)। **रहस्य.** पृ. ४४. * **उपग्रहविशेषः** परस्मैपदात्मनेपदरूपः। **सु.** पृ. ४७. * **उपग्रहविशेषात्** मन्त्रकरणे उपतिष्ठतेरात्मनेपदं भवति। मन्त्रस्तु अभिधानस्य करणं, नोपस्थानस्य। उपस्थानं शरीरेण क्रियते मनसा वा। **भा.** ७।३।१४।३६.

* **उपचयः** चिन्तितः (८।३।५।१०-११) अपचयः इदानीं चिन्त्यते। **भा.** ८।३।६।१२-३६, * उपचयः शतातिरात्रे द्वादशाहिकान्यहानि प्रवर्तन्ते। तानि प्रायेण उक्थ्यसंस्थानि द्वावग्निष्टोमौ शतातिरात्रमित्युक्ते सर्वत्रैव रात्रिपर्यायोपचयः प्राप्तः। स च ज्योतिष्टोमातिरात्रात् कर्तव्यः। ८।३।५।१०-११, * शतोक्थ्ये च **स्तोत्रोपचयः** ज्योतिष्टोमादुक्थ्यात् कर्तव्यः न द्वादशाहिकात्। ८।३।५।१०-११.

* **उपचारो** हि शब्दप्रयोगमात्रं, न बुद्धौ तादात्म्यसंवित्तिः। **ऋजु.** पृ. ४२.

⌛ **'उपजनिष्यमाणनिमित्तोऽपि अपवादः, संजातनिमित्तमपि उत्सर्गं बाधते' इति न्यायः। संग्रहः.**

⌛ **उपजीवकेन दुर्बलेन उपजीव्यं सबलं न बाधमर्हति** (उपजीव्यविरोधस्यायुक्तत्वम्) **इति न्यायः।** निर्गुणवाक्यं तावत् अत्यन्तं बलिष्ठमेव अन्योपजीवित्वाभावात्। सगुणवाक्यं तु तदपेक्षया दुर्बलं निर्गुणवाक्यशेषभूतसृष्ट्यादिवाक्यसिद्धसर्वात्मकब्रह्मरूपानुवादेन तद्विषयोपासनाविधिपरत्वात्। अतः उपजीवकेन० ...। **रामतीर्थ सं. शारी.** ३।२८९.

⌛ **उपजीवन्ति शक्त्या हि जलजा जलदानिव इति न्यायः।** अस्यार्थस्त्वेवम्– हि यतो जलजा जलजीविनः व्रीहिप्रभृतय इत्यर्थः। जलदानिव मेघानिव। सर्वे इत्यध्याहार्यम्। शक्तान् उपजीवनक्षमान् जनानुपजीवन्ति उपजीव्य तिष्ठन्तीत्यर्थविवक्षायामयं प्रवर्तते। **साहस्री.** ७९७.

⌛ **उपजीव्योपजीवकयोरुपजीवकस्य प्राबल्यं इति न्यायः।** प्रत्यक्षविरोधेन तदितरसर्वबाध्यत्वे विवक्षितेऽयं प्रवर्तते। अयमन्यत्राऽपि सत्युपजीवकभावे प्रवर्तते। तद्यथा–उपजीव्यते आश्रीयते कार्याय यदिति व्युत्पत्त्योपजीव्यशब्दः कारणपरः, उपजीव्यते उत्पद्यते यदिति व्युत्पत्त्योपजीवकशब्दः कार्यपरः। एवं च कार्यस्य

कारणविरोधो नोचित इति भावः । एवं चैतन्न्यायमूला 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषेत्युक्तं परिभाषेन्दुशेखरे । **साहस्री.** ६८. * उपजीव्योप० **इति न्यायस्य** बाधकः 'उपदेशानुपदेशकत्वे विपरीतं बलाबलम्' इति न्यायः । **के.**

* **उपदिष्टं** अतिदिष्टस्य पाक्षिकस्यापि बाधकम् । यथा सौमारौद्रे चरौ उपदिष्टैः शुक्लैर्व्रीहिभिः अतिदिष्टानां पाक्षिकाणां यवानां बाधः । **वि.** १०।८।१९, * उपदिष्टं अतिदिष्टस्य बाधकम् । यथा पुनराधानदक्षिणया अग्न्याधानदक्षिणायाः बाधः । १०।३।५. * **उपदिष्टेन** अभावेन अतिदिष्टस्य अभावस्य वैकल्पिको बाधो न संभवति । **बाल.** पृ. १३३, * उपदिष्टेन अभावेन अतिदिष्टस्य भावस्य वैकल्पिकः प्राप्तबाधो यथा पशौ आज्यभागौ अतिदेशतः प्राप्तौ 'न तौ पशौ करोति' इति निषेधात् बाध्येते । पृ. १३३, * उपदिष्टेन भावेन अतिदिष्टस्य अभावस्य वैकल्पिकः प्राप्तबाधो यथा यत् प्रकृतौ किंचित् निबद्धं, विकृतौ तदेव वैकल्पिकतया विधीयते । उदाहरणं मृग्यम् । पृ. १३३. * सौमापौष्णे पशौ **उपदिष्टेन** औदुम्बरत्वेन अतिदिष्टस्य खादिरत्वस्य बाधः । **वि.** १०।७।१८. * **उपदिष्टानामेव** अन्योन्यं अङ्गतन्त्रं यथा दर्शाङ्गानां प्रयाजानाम् । **बाल.** पृ. १४८.

* **उपदिष्टातिदिष्टयोः** अन्योन्यं अङ्गतन्त्रं यथा 'दीक्षासु यूपं छिनत्ति' इति अपकृष्यमाणस्य अग्नीषोमीये उपदिष्टस्य सवनीये चातिदिष्टस्य यूपस्य तत्संस्काराणां चान्योन्यम् । **बाल.** पृ. १४८.

* **उपदिष्टापूर्वकर्म**गतारादुपकारकक्रियाप्रतिषेधो यथा दाशमिकः अग्न्याधेये वारवन्तीयादिसामगानं 'न ब्रह्मा सामानि गायति' इति प्रतिषिद्धम् । **बाल.** पृ. ३६.

* **उपदिष्टोपदेशो** हि न न्याय्यः एवंजातीयकस्य । कथंजातीयकस्य ? यः कस्मिंश्चित् विशेषेणोपदिष्टः, नासौ सामान्येन लिङ्गेन अन्यत्रोपदेशमर्हति । **भा.** ३।२।८।२१.

* **उपदेशः** अतिदेशात् बलवान् । यदा यागः फले चोदितो भवति, तदा धर्मानाकाङ्क्षति । अस्यामवस्थायां किं चोदकेन धर्माः, उत नामधेयेनेति चिन्तायां नामधेयेन धर्मप्राप्तिः । तच्च ( नामधेयं ) लक्षणया धर्मप्राप्तिं करोति । श्यनीकां तु गृह्णन् न लक्षणया धर्मप्राप्तिं करोति, उपदेशेनैव गृह्णाति । **टुप्.** १०।५।२५।८५ पृ. १९८१. * उपदेशः ( शब्दः ) अनित्यो नित्यो वा, अनित्यत्वेन न धर्मे प्रमाणम् । इति संशये उपदेशो नित्यः तेन स धर्मे प्रमाणं इति सिद्धान्तः । **भा.** १।१।६।६–२३, * उपदेशः इति विशिष्टस्य शब्दस्य उच्चारणम् । १।१।५ पृ. २४, विशिष्टस्य शब्दस्येति श्रेयःसाधनत्वाद्यर्थप्रतिपादकत्वेनाभ्यर्हितस्येत्यर्थः । अत्रोपदेश इत्यत्र तस्य ज्ञानमित्यपि विशेषणीयम् । ज्ञानशब्दश्च करणार्थे व्युत्पन्न उपदेशपदसमानाधिकरणो भवितुमर्हति । तथा च अयमर्थः, तस्याग्निहोत्रादिरूपस्य श्रेयःसाधनस्य ज्ञानं ज्ञापकीभूतं उपदेशः 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिविधिवाक्यरूपं यस्मात् विद्यते । अतस्तत्प्रमाणं भवितुमर्हतीति । **वा.** १।१।५ पृ. २४.

* **उपदेशः उपदेशमुपोद्बलयति इति न्यायेन** 'उत्तरवेद्यामग्निं निदधाति' इत्युपदेशोपोद्बलकतया स्वविषयपर्वद्वये एव 'द्वयोः प्रणयन्ति' इत्यस्य उत्तरवेदिव्यवस्थापकत्वं इति प्राभाकराः । **सोम.** ७।३।९ पृ. ५३९.

* उपदेशः चोदकात् अर्थापत्तेश्च प्रबलः । तेन प्राजापत्यपशुधर्माणां पदार्थानुसमयः, न तु काण्डानुसमयः । **के.** ५।२।१।१–३. * उपदेशः चोदकात् बलीयान् । तेन अनीकवतीसांतपनीगृहमेधीया इष्टयः एकाहकालीनाः, न तु द्व्यहकालीनाः । **वि.** ५।१।११. * उपदेशः द्विविधः प्रत्यक्षः, आनुमानिकवचनोपदिष्टश्च । सप्तदश प्राजापत्यान् इत्येवमादिषु प्रत्यक्षः । सर्वपृष्ठादिषु द्वितीयः । **के.** * उपदेशः ( वैदिकशब्दप्रमाणं ) द्विविधः– विधिः निषेधश्च । उपदेशः पुनरपि अनेकविधः । कर्मभेदकानि षट् द्वैतीयकानि, विनियोजकानि तार्तीयानि षट्, क्रमप्रमाणानि पाञ्चमिकानि षट्, कर्मापत्तिप्रमाणानि पञ्च इति । **बाल.** पृ. ८. * उपदेशः नियोज्यार्थकर्मगोचरं अप्रवृत्तप्रवर्तनं उपदेश-

माचक्षते धीराः। **विवि.** पृ. २३९, समानासमानजातीयव्यवच्छेदकं अस्य वाच्यम्। **कणिका.** पृ. २४०. * उपदेशः विधिः चोदना इत्येकोऽर्थः। **बाल.** पृ. ४. * उपदेशः षड्भिरध्यायैः ( १-६ ) विचारितः। **वि.** ७।१।१ प्रस्तावे. * कर्तव्योप**देश**श्च शक्यादिषु अर्थेषु भवति। **भा.** ६।२।३।१४, * मन्दधियां अपि च **उपदेशः** क्रियमाणः फलवान् भवति। अपि च कं चिदपेक्ष्य सर्वे मन्दधियः। १०।४।२४।४९. * यत्रापेक्षितस्यार्थजातस्य प्रतिपादको ग्रन्थसंदर्भः पठ्यते स उपदेशः। **वि.** ७।१।१ प्रस्तावे. * **उपदेशाः** हि व्यामोहादपि भवन्ति। असति व्यामोहे वेदादपि भवन्ति। **भा.** १।१।२।२ पृ. १६. * षड्विधोपदेशप्रत्यस्तमये अतिदेशः कल्प्यते ( श्रुतिलिङ्गादयः षट् **उपदेशाः** )। **वा.** ३।६।७।१९, * **उपदेशेन** कर्मणः उत्पत्तिर्गम्यते नातिदेशेन। २।२।७।२१ पृ. ५२५. * **उपदेशात्** अतिदेशो दुर्बलः। तेन वारुणप्राघासिकेऽवभृथे तुषनिष्कासाभ्यां वारुणः पुरोडाशो बाध्यते। **वि.** ७।३।५. * परसंवित्प्रतिषेधमुखेन च **उपदेशानामुपदेशता**। **बृहती.** पृ. १८०. * **उपदेशपूर्वका**तिदेशविषयत्वात् सप्तमादिषट्कस्तावत् उपदेशविचारार्थप्रथमषट्कसमाप्तिं प्रतीक्षते। **वा.** ३।१।१।१ पृ. ६५१, * 'एषैव ( स्मृतीनामिव ) इतिहासपुराणयोरपि **उपदेशवाक्यानां** गतिः ( प्रामाण्यम् )। १।३।१।२ पृ. १६६. * **उपदेशविषयाः** श्रुत्यर्थपाठक्रमाः। **टुप्.** ५।१।१।१ पृ. १२८७.

* **उपदेशानवगते** च अतिदेशोऽपि न प्रवर्तते। **वा.** २।१।२।५ पृ. ३९० पं. २६.

**उपदेशानुपदेशत्वे विपरीतं बलाबलं इति न्यायः** उपजीव्योपजीवकयोरुपजीव्यस्य प्राबल्यं इत्यस्य बाधकः। **संग्रहः**। * उपदेशानुपदेशत्वे विपरीतं बलाबलमिति। यथा दृश्यते हि चन्द्रादौ अतिविपुलपरिमाणोपदेशेन प्रादेशपरिमाणग्राहिणः प्रत्यक्षस्य बाधः। दृश्यते च व्योम्नि शब्दैकविशेषगुणतोपदेशसहकृतेन नीलत्वाद्यभावानुमानादिना उपजीव्यस्यापि नीलादिरूपप्रतियोगिप्रत्यक्षस्य बाध इति। **साहस्री.** ४०४.

* **उपदेशानुसारेण** समाख्याऽनुसारेण लिङ्गानुसारेण च ऋत्विग्भिः स्वंस्वं कर्म कर्तव्यम्। **भा.** ३।७।२०।४१-४२.

* **उपदेशासंभवे** च अतिदेशो भवति। **वा.** ३।६।१६।४१ पृ. १०६१.

* अनुबन्ध्यायास्तु सर्वो**पदेशा**भावात् ( श्रुत्याद्यभावात् ) अतिदेशेनैव प्राप्तिर्भविष्यति। **वा.** ३।६।७।१९. * न चाशक्य**मुपदेशार्हं** भवति। **भा.** ६।५।१९।५४.

* **उपदेशिवद्भावः**। उपदेशः प्रत्ययोपदेशः, सोऽस्यास्तीति उपदेशी, उपदेशिना तुल्यं वर्तते इति उपदेशिवत्। तस्य भावः। **सोम.** ३।३।८.

**उपधानं च तादर्थ्यात्**। १०।१।१६।५७॥

उपधानं कपालानां सौर्यचर्वर्थं अक्रिया न कर्तव्यम्। तादर्थ्यात् कपालोपधानस्य पुरोडाशाधःपाकार्थत्वात् चरौ च तदभावात्। चशब्दात् अक्रिया इत्यनुवर्तते। तादर्थ्यादितितच्छब्देन पूर्वसूत्रस्थं अधःश्रपणं परामृश्यते। सः अर्थः प्रयोजनं यस्य तत् तदर्थम्। तदर्थस्य भावस्तादर्थ्यम्। **के.**

* **उपधानस्य** अष्टकपालादिसमुदायेन अनुसमयः। **भा.** ५।२।३।४-५.

* **उपधानमात्रं** नैवारचरोः अग्निचयने विधीयते 'नैवारश्चरुर्भवति' 'चरुमुपदधाति' इत्यनेन। **भा.** २।३।७।१८.

* **उपधानवत्**। यथा 'एतत् खलु साक्षादन्नं, य एष चरुः, य एनं चरुमुपदधाति' इति उपधानार्थमेव चरोरुपादानम्। ( चयने नैवारचरोः उपधानं यथा तद्वत् )। **भा.** ९।४।१३।५१.

* **उपनयो** नाम उदाहरणोपदर्शितसाध्यनियतस्य हेतोः साध्यधर्मिणि उपसंहारः। **रत्नाकर.** पृ. २२३. * उपनयः— व्याप्तिविशिष्टवैशिष्ट्यावगाहिपक्षप्रतिपादकवाक्यत्वं उपनयत्वं, यथा 'तथा चायं' ( साध्यव्याप्यहेतुमांश्चायं पक्षः ) इति। **मणि.** पृ. ३९.

* **उपनयनं** फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वात् अध्ययनाङ्गम्। **शा. तर्क. पृ. ६.** * उपनयनं वसन्तादिकालविशिष्टं ब्राह्मणादिकर्तृत्वविशिष्टं 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिना विधीयते। **वि. २।३।३.** * उपनयनम्। 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्।' **भा.** ६।१।७।३३. * उपनयनं विनियुक्तं आचार्यकरणविधौ आत्मनेपदश्रुत्या। तद्विषयश्च अध्ययनविधिः उपनीतकर्तृकाध्ययनविषयत्वादुपनयनस्य। विषयानुप्रवेशात् उपनयनं अध्ययनविधिविषय इत्युक्तम्। एवं सति अङ्गद्वारेण आचार्यकरणविधेः प्रयुक्तिः, उपकारमात्रेण तु कर्मविधीनाम्। **ऋजु. पृ. ८-९.** * **उपनयनात्** प्रागपि सुरा न पेया, ब्राह्मणो न हन्तव्यः। 'उपनयनोत्तरकालं अभिवादनप्रत्युत्थानादीनि उपदिश्यन्ते। प्रागुपनयनात् कामचारवादभक्षाः।' **वा.** ६।२।६।२२. * **उपनयनस्य** शुक्लपक्षोत्तरायणपुण्यादिः कालः स्मृतिषु विहितः। **वि.** ६।८।५. * उपनयनस्य संस्कारस्य विद्याऽर्थत्वात्। विद्याऽर्थे उपाध्यायस्य समीपं आनीयते नादृष्टार्थे, न कटं कुड्यं वा कर्तुम्। **भा.** ६।१।७।३५.

***उपनयनकाले** एव च अस्योपदेष्टारो भवन्ति (नानृतं वदेत् इति)। **भा.** ३।४।४।१२.

**उपनयनहोमाधिकरणम्**। उपनयनहोमः लौकिकेऽग्नौ कर्तव्यो न श्रौतेषु॥

**उपनयन्नादधीत, होमसंयोगात्। ६।८।२।११॥**

**भाष्यम्**— इदमामनन्ति 'उपनयंस्तिसृभिर्जुहुयात्' इति। तत्र संदेहः किमयं होम आधानसंस्कृतेषु अग्निषु, उत असंस्कृतेषु इति। किं प्राप्तम्? उपनयन् आदधीत इति संस्कृतेषु इति। कुतः? होमसंयोगात् आहवनीयस्य 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इति। तस्मात् आधानोत्तरकाला एते होमाः इति।

**स्थपतीष्टिवल्लौकिके वा, विद्याकर्मानुपूर्वत्वात्। १२॥**

**भाष्यम्**— न चैतदस्ति आधाय एवंजातीयकं होतव्यमिति। किं तर्हि? लौकिके एव प्रवर्तेत इति। कुतः? विद्याकर्मानुपूर्वत्वात्। विद्याग्रहणार्था इमे होमाः। विद्यावतश्च आधानाधिकारः सामर्थ्यात्। अत आधानोत्तरकालता नैषां अवकल्पते, यथा स्थपतीष्ट्याम्।

**आधानं च भार्यासंयुक्तम्। १३॥**

**भाष्यम्**— आधानं च भार्यासंयुक्तं श्रूयते। विद्याग्रहणोत्तरकालश्च दारसंग्रहः। तस्मादपि नावकल्पते पूर्वकालता आधानस्य।

**अकर्म चोर्ध्वमाधानात्, तत्समवायो हि कर्मभिः। १४॥**

**भाष्यम्**— अत्राह। या पूर्वमाधानाद्दारक्रिया, सा कर्मार्था भविष्यति। वचनाच्च ऊर्ध्वमाधानादपत्यार्था। द्वयोरपि कालयोः पिण्डपितृयज्ञवत् नैष दोषो भविष्यतीति। अत्रोच्यते। अकर्म च दारक्रियाया आधानोत्तरकाले। कुतः? आहवनीयादिसमवायो हि कर्मभिर्भवति। स्वार्थे चाग्नयः आधातव्या इति नियमः। तस्मात् उभयस्मिन्नपि काले दारसंग्रहः इत्येतन्नास्ति।

**श्राद्धवदिति चेत्। १५॥**

**भाष्यम्**— अत्राऽऽह। यथा पिण्डपितृयज्ञः आहिताग्नेरनाहिताग्नेश्च भवति, एवं दारसंग्रहोऽपीति यदुक्तं, तत्परिहर्तव्यम्।

**न, श्रुतिविप्रतिषेधात्। १६॥**

**भाष्यम्**—नैतदेवम्। श्रुतिविप्रतिषेधो हि भवति। एवं क्रियमाणे दारकर्मणि विद्याग्रहणोत्तरकालं श्रूयमाणं पूर्वं क्रियते इति विप्रतिषिद्धम्। अर्थादन्यदेवेदं इति चेत्। न। अर्थप्राप्तस्यैव कालनियमः एषः। उपनयनं च कर्मार्थम्। तत् द्वितीयस्यां विप्रतिषिध्येत।

**सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत्। १७॥**

**भाष्यम्**— अथोच्येत, प्रागाधानाच्च कर्मार्थैव, ऊर्ध्वं च अपत्यार्थैव अस्य भविष्यति। तेनैवं सति, अस्य न किंचिद्विरोत्स्यते इति। उच्यते। नैतदेवम्। सर्वार्था हि सा न केवलं अपत्यार्थतामेष्यति। तदुक्तं, फलोत्साहाविशेषात् इति। तस्मादपि न द्विर्दारसंग्रहः। अपि च एवं स्मर्यते, 'धर्मे चार्थे च कामे च नातिचरितव्या' इति। एवं सति अतिचरिता स्यात्। अतोऽपि न द्विर्दारसंग्रहः। एकैव भार्या कर्मार्था अपत्यार्था

च। तस्याश्च विद्याग्रहणोत्तरकालता। अतो नाधानसंस्कृतेष्वेते होमा इति।

**सोमपानात्तु प्रापणं द्वितीयस्य, तस्मादुपयच्छेत। १८॥**

**भाष्यम्**— गृह्यते एतत्, प्रागुपनयनात् नास्ति पत्नीति। यदुक्तमेकैव पत्नीति। तन्न मृष्यते। यथैव स्मृतिः 'धर्मे चार्थे च कामे च नातिचरितव्या' इति 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत' इति च, एवं इदमपि स्मर्यते एव 'अन्यतरापाये अन्यां कुर्वीत' इति। तस्माद्यस्य न धर्मसंपन्ना, न प्रजासंपन्ना वा पत्नी, सोऽन्यां कुर्वीतेति। सोमपानादिति चार्थवादं व्यपदिशति स्म। 'सोमपो न द्वितीयां जायामभ्यषूयत' इति द्वितीयामपि जायां दर्शयति।

**पितृयज्ञे तु दर्शनात् प्रागाधानात् प्रतीयेत।१९॥**

**भाष्यम्**— अथ कथं पितृयज्ञस्य द्वौ कालाविति। उच्यते। वचनं हि तत्र दृश्यते। 'अप्यनाहिताग्निना कार्यः' इति। तस्मात् प्रागाधानात् पितृयज्ञः इति।

**वि**— 'यस्तूपनयने होमो वैदिके वा स लौकिके। वह्नौ, पूर्ववदत्रोक्तेरभावाद् वैदिकेऽस्तु सः॥, आधानं विदुषो विद्याऽनुपनीतस्य नास्त्यतः। असंभवो वैदिकाग्नेर्होमोऽग्नौ लौकिके ततः॥'

**भाट्ट**— उपनयनाङ्गभूता होमा आचार्यकर्तृका माणवककर्तृकाश्चोभयेऽप्युपनयनद्वारा माणवकसंस्कारार्था इत्यविवादम्। तत्र ये तावदाचार्यकर्तृकास्तेषां सत्यपि आचार्यस्याहिताग्नित्वे आधानगतात्मनेपदविरोधात् नाचार्याग्निषु कार्याः। अपि तु लौकिके एवाग्नौ। ये तु माणवककर्तृकास्ते तु सुतराम्। क्रतुविधीनामिव उपनयनाङ्गभूतहोमानामपि आधानाप्रयोजकत्वात्। प्रयोजकत्वेऽपि वा आधानस्येतरकर्मवत् ज्ञानाक्षेपकत्वाभावेन उपनयनात् पूर्वं कर्तुमशक्यत्वाच्च। आक्षेपकत्वेऽपि च उभयाधिकारकस्याधानस्य भार्याभावेन अनुपपत्तेश्च। भार्यायाश्च 'स्नात्वा भार्यामधिगच्छेत्' इति समावर्तनोत्तरकालं विवाहविधानेन पूर्वमसंभवात्। न च प्रयोजनानुरोधेन कालबाधः। एतद्वाक्यस्य निर्विषयत्वापत्तेः। न चापत्यार्थे दारान्तरकरणे कालविधिः। 'धर्मे चार्थे च' इत्यादिपर्यालोचनया धर्मार्थमपत्यार्थे च दारान्तरानुपपत्तेः, दारक्रियायामपि स्वतन्त्रकालाम्नानेन क्रतुविधीनामाधानाध्ययनवदेव दारक्रियाप्रयोजकत्वाभावाच्च। अत एव न विरक्तस्य कर्मार्थे दारक्रिया, किन्तु आश्रमान्तरमेव। किंच उपनयनात् पूर्वमाधानकरणे जातपुत्रत्वाद्याधानकाललोपः अष्टवर्षाद्युपनयनकाललोपो वा प्रसज्येत। अतस्तेऽपि लौकिकाग्नावेव।

**मण्डन**— 'होमं कुर्यान्नोपयन् श्रौतवह्नौ।' ३.

**शंकर**— 'लौकिके चोपनीतिगाः।' ३.

* **उपनयनहोमः** लौकिकेऽग्नौ कर्तव्यः, न तु आहवनीये। **वि.** ६।८।२.

* **उपनयनाध्ययनयोः**, कर्मणां नित्यतया फलतो नित्यत्वम्। यद्वा 'अत ऊर्ध्वं पतन्त्येते' इति वाक्येन 'अनधीयाना व्रात्या भवन्ति' इति निषेधेन च नित्यत्वसिद्धिः। **मणि.** पृ. ४–५.

* **उपनयनोत्तरकालमेव** स्मार्तानि कर्माणि कर्तव्यानि। **भा.** ६।२।६।२१–२२, * उपनयनोत्तरकाले वैदिकाः पदार्थाः समाम्नाताः। स्मार्ताश्च वैदिका एव। ६।२।६।२२.

**उपनयन्नादधीत होमसंयोगात्। ११॥**

उपनयनहोमाः आधानसंस्कृते अग्नौ स्युः। तदर्थं च उपनयन् माणवकः आदधीत अग्नीनादधीत। होमसंयोगात् 'यदाहवनीये जुहोति' इति आहवनीयस्य होममात्रेण संयोगस्य उक्तत्वात्। तस्मात् आधानोत्तरं उपनयनहोमः इति पूर्वः पक्षः।

**स्थपतीष्टिवल्लौकिके वा, विद्याकर्मानुपूर्वत्वात्। १२॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह। उपनयनहोमः लौकिके अग्नौ स्यात्। विद्याकर्मानुपूर्वत्वात्। विद्या वेदाध्ययनं, कर्म आधानादिकर्म, अनयोः अनुपूर्वत्वं क्रमवर्तित्वं प्रसिद्धम्। ततः प्राक् उपनयनं तत्र उपनयनहोमः। ततो वेदाध्ययनं, ततः समावर्तनं, ततो विवाहः, तत आधानम्। तस्मात् उपनयनहोमः लौकिके अग्नौ। स्थपतीष्टिवत्। यथा निषादस्थपतीष्टिः लौकिकेऽग्नौ तद्वत्।

**आधानं च भार्यासंयुक्तम् । १३ ॥**

यस्मात् अग्नीनामाधानं भार्यासंयुक्तं भार्यया संयुक्तं भार्यासंयोगोत्तरकालम् । तस्मादपि उपनयनहोमः लौकिकेऽग्नौ । चकारो हेत्वन्तरसमुच्चयार्थः ।

**अकर्म चोर्ध्वमाधानात्, तत्समवायो हि कर्मभिः । १४ ॥**

आधानस्य भार्यासंयोगोत्तरकालत्वात् उपनयनहोमः लौकिकेऽग्नौ इति सिद्धान्त उक्तः । तत्रेयमाशङ्का— आधानात् पूर्वं एका दारक्रिया, सा कर्मार्था भविष्यति, अधानोत्तरकालं च द्वितीया दारक्रिया, सा चापत्यार्था । एवं सति प्रथमं भार्यासंयोगः, तत आधानं, तेन संस्कृतेऽग्नौ उपनयनहोमः, ततो वेदाध्ययनमित्यादि इति । अत्राह सिद्धान्ती । आधानात् ऊर्ध्वं दारक्रियायाः अकर्म अकरणम् । किंतु आधानात् प्रागेव । हि यस्मात् कर्मभिः अग्निहोत्रादिकर्मभिः सह तत्समवायः आधानसंबन्धः आधानसाध्याग्नीनां संबन्धो भवति । अथवा तत्समवायः भार्यायाः संबन्धः कर्मभिर्भवति । भार्यासंयुक्तस्य हि कर्माणि भवन्ति । तथा च भार्यासंयोगोत्तरं आधाने सति कर्माधिकारात् उपनयनकाले च तस्य सर्वस्यासंभवात् उपनयनहोमो लौकिकेऽग्नौ एव ।

अस्मिन् सूत्रे या पूर्वपक्षिणः शङ्का उक्ता, तदर्थत्वेनैव इदं सूत्रं सुबोधिनीवृत्तौ व्याख्यातम् । तद्यथा–'उपनयनात् प्राक् आधानार्थमेका भार्या अस्तु, आधानोत्तरं दारसंग्रहः प्रजार्थोऽस्तु इत्याह– अकर्मेति । आधानादूर्ध्वं परिणीतायां अकर्म कर्मसंबन्धाभावः । तस्मिन् उपनयनकाले समवायः भार्यासंबन्धः कर्मभिः संबद्ध इति शेषः ' इति । इदं शङ्कासूत्रम् । ततः परं ' अकर्म च दारक्रियाऽऽधानोत्तरकाले ' इति सिद्धान्तसूत्रम् । तद्व्याख्या चेत्थं–'इमं पक्षं दूषयति । अकर्मेति । आधानोत्तरकाले दारक्रिया अकर्म अननुष्ठेया । अशास्त्रात् इति पूरणीयं ' इति । एतद्द्वितीयसूत्ररूपा पङ्क्तिर्यद्यपि भाष्येऽपि दृश्यते तथापि सा पूर्वसूत्रव्याख्यानमध्ये पतिता सती व्याख्यानरूपैव न स्वतन्त्रसूत्रात्मिका इति स्पष्टम् । न चेदं सूत्रं अन्यत्र क्वापि दृश्यते ।

**श्राद्धवदिति चेत् । १५ ॥**

श्राद्धं पिण्डपितृयज्ञः यथा आहिताग्नेः अनाहिताग्नेश्च भवति तद्वत् दारसंग्रहः आहिताग्नेः अनाहिताग्नेश्च, अर्थात् आधानोत्तरं आधानात् प्राक् च स्यात् इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, श्रुतिविप्रतिषेधात् । १६ ॥**

अनाहिताग्नेरपि दारकर्म इति पूर्वपक्षोक्तं निषेधति सिद्धान्ती । न अनाहिताग्नेः दारकर्म संभवति ' अधीत्य स्नायात् ' 'स्नात्वा उद्वहेत् ' ' जातपुत्रः आदधीत ' इति श्रुतिभिः विप्रतिषेधात् । तस्मात् आधानात् प्राक् दारकर्म नैव संभवति ।

**सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् । १७ ॥**

आधानात् प्राक् दारसंग्रहः कर्मार्थः, आधानोत्तरं च पुत्रार्थं इति पूर्वपक्षिणा यदुक्तं तन्न । दारसंग्रहस्य कर्मार्थत्वं अपत्यार्थत्वं चेति सर्वार्थत्वात् पुत्रार्थो दारसंग्रहः आधानं न प्रयोजयेत् । यदेव कर्मार्थमाधानं, तदेव अपत्यार्थमपि । तस्मात् एकैव भार्या कर्मार्था अपत्यार्था च । तस्याश्च विद्याग्रहणोत्तरकालता । अतो नाधानसंस्कृते अग्नौ उपनयनहोमः ।

**सोमपानात्तु प्रापणं द्वितीयस्य, तस्मादुपयच्छेत । १८ ॥**

यद्यपि वस्तुतः एकैव पत्नी कर्मार्था अपत्यार्था च, तथापि ' अन्यतरापाये अन्यां कुर्वीत ' इति स्मर्यते । तस्माद्यस्य न धर्मसंपन्ना, न प्रजासंपन्ना वा पत्नी सोऽन्यां कुर्वीत इति स्मृत्यर्थः । सूत्रे तुशब्दः उक्तवैलक्षण्यद्योतनार्थः । सोमपानात् इति शब्दः ' सोमपो न द्वितीयां जायामभ्यषूयत ' इत्यर्थवादं व्यपदिशति । ' सोमपाने न द्वितीयां जायां अभ्यश्नुते ' इति च । निषेधश्च प्राप्तिपूर्वकः । अस्मात् सोमपानात् सोमपानविषयकादर्थवादात् द्वितीयस्य दारपरिग्रहस्य प्रापणं प्राप्तिः भवति । तस्मात् धर्मप्रजाऽन्यतरापायरूपे कारणे सति उपयच्छेत द्वितीयं दारसंग्रहं कुर्यात् । एवं यद्यपि भार्याद्वयं सिध्यति, तथापि न उपनयनहोमात् प्राक् भार्योपसंग्रहः सिध्यति, न चाधानम् । तस्मात् उपनयनहोमः लौकिकेऽग्नौ एव, न संस्कृतेऽग्नौ इति निश्चीयते ।

**पितृयज्ञे तु दर्शनात् प्रागाधानात् प्रतीयेत । १९ ॥**

आधानात् प्रागूर्ध्वं चेति पत्नीद्वयपरिग्रहः कर्तव्य इति पूर्वपक्षे पितृयज्ञदृष्टान्त उक्तः, तद्वैषम्यमाह सिद्धान्ती । वैषम्यसूचनार्थमेव तुशब्दः । पिण्डपितृयज्ञे तु 'अप्यनाहिताग्निना कार्यः' इति दर्शनात् आधानात् प्राक् पिण्डपितृयज्ञः प्रतीयेत । अकृतेऽपि आधाने पिण्डपितृयज्ञो भवति । आधानोत्तरमपि च भवत्येव । उपनयनात् तु प्राक् दारपरिग्रहे नास्ति वचनं, न युक्तिः । तस्मात् उपनयनहोमः लौकिकेऽग्नौ एव, न संस्कृतेऽग्नौ इति सिद्धान्तः । **के.**

* **उपनिधानं** गर्गत्रिरात्रे आज्यदोहसामगानकाले लौकिकाग्नेः । **भा.** ७।३।१२।३०–३२.

* **उपनिषदाम् ।** 'एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेण उपनिषदां नैराकाङ्क्ष्यं व्याख्यातं' इति **वार्तिकम्** (१।२।१।७ पृ. ११४) । अत्र **सुधा** (पृ. २४–२५) उपनिषदामपि आधानादिवाक्यन्यायेन दूरस्थेनैव क्रतुफलेन नैराकाङ्क्ष्यं इत्यर्थः । कथमित्यपेक्षिते क्रत्वर्थकर्तृप्रतिपादनद्वारेण इत्युक्तम् । परलोकफलेषु कर्मसु विनाशिदेहादिव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मज्ञानं विना प्रवृत्त्यनुपपत्तेः अहंप्रत्ययेन च देहेऽपि दृष्टेन स्फुटतया तद्व्यतिरेकस्य ज्ञातुमशक्यत्वात् शास्त्रीयमात्मज्ञानं क्रतुविधिभिः अपेक्षितं, तस्य च अनारभ्यविहितस्यापि सामर्थ्येन पूर्वोदाहृतेन वाक्येन उपनिषदां अमन्त्रत्वेन स्वरूपप्रयोज्यत्वाभावात् उपनिषज्जनितस्य आत्मज्ञानस्य फलातिशयलक्षणवीर्यवत्तरत्वहेतुत्वाभिधानपरेण क्रत्वङ्गत्वावधारणात् तद्द्वारेण पुरुषार्थानुबन्धित्वम् । ज्ञानस्य च अव्यापाररूपत्वेन स्वरूपेण अविधेयत्वेऽपि उपासनाऽपरनामधेयं ध्यानमेव 'आत्मा ज्ञातव्यः' इत्यादिभिर्विधीयते । अप्रतिपन्नरूपस्य च ध्यातुमशक्तेः आत्मस्वरूपप्रतिपादनं 'अविनाशी वा अरे ऽयमात्मा' इत्यादिभिः क्रियमाणं विध्यपेक्षितत्वात् न अर्थवादेषु इव अनादरमर्हति इति तद्द्वारेण उपनिषदां पुरुषार्थपर्यवसानं इति भावः । एतच्च संसारिरूपात्मप्रतिपादनाभिप्रायम् । असंसारिरूपनिर्गुणात्मज्ञानस्य अभ्युदयनिःश्रेयसार्थतया साधुशब्दाधिकरणे (१।३।८।२७) वक्ष्यमाणत्वात् । सिद्धार्थप्रतिपादनपराणामपि उपनिषदां उपासनाविधिशेषतया चोदनाशब्देन उपादानसंभवात् चोदनासूत्रप्रतिज्ञातप्रामाण्यसाधनं संगतम् । पुरुषार्थौपयिकत्वेन च आत्मस्वरूपप्रतिपादने नैराकाङ्क्ष्यसंभवात् पदैकवाक्यत्वाभावेन अर्थवादवैलक्षण्यं इति सर्वमनवद्यम् । इति । * उपनिषदां पारलौकिकफलककर्मप्रवृत्तिजनकशरीरव्यतिरिक्तजीवात्मज्ञानं प्रयोजनम् । **मणि.** पृ. ५.

* **उपनिषज्जन्यात्मज्ञानस्य** अविद्यानिवृत्तिद्वारा मोक्षजनकस्य प्रमाणान्तरप्राप्तत्वात् नालौकिकत्वं, इति न तत्र धर्मत्वम् । अस्तु वा तत्र धर्मत्वम् । **मणि.** पृ. ९.

* **उपनिषत्प्रामाण्यात्** अनारब्धावयविकेष्वपि ऋग्वेदादिशब्दवाच्येषु मन्त्रब्राह्मणसमूहेषु क्षेत्रज्ञानां अधिष्ठातृता । **सु.** पृ. १००८, * **उपनिषद्वाक्यानां** सिद्धार्थप्रतिपादकानामपि पुरुषार्थौपयिकस्य प्रयोजनस्य लाभात् स्वार्थपर्यवसानं युक्तम् । पृ. ५२५.

* **उपनीतस्यैव** गुर्वनुगमनादिषु स्मार्तादिकर्मसु अधिकारः । **भा.** ६।२।६।२२–२३, * **उपनीतानामेव** स्मार्ताः पदार्थाः प्रत्युपस्थितनियमाश्चाचाराः 'गुरुरनुगन्तव्यः अभिवादयितव्यश्च' 'वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्च' इति । ६।२।६।२२–२३.

* **उपनीतभानेऽपि** ज्ञातस्यैव विषयता । अज्ञातसंबन्धस्य उपनीतभानासंबन्धाच्च । **मणि.** पृ. ६३.

* **उपपदविभक्तिः** यत्र विभक्त्यर्थस्य भावनाभिन्नपदार्थे अन्वयः सा । **मणि.** पृ. १३३.

* **उपपदविभक्तेः कारकविभक्तिर्बलीयसी** इति (पृ. ३०७, परि. १०३) । कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वम् । तच्च प्रथमाया अपि । इयं च वाचनिकी एव । अत एव, यस्य च भावेनेति सप्तम्यपेक्षया अधिकरणसप्तम्या बलवत्त्वं अनेन न्यायेन 'तत्र च दीयते' इति सूत्रे भाष्ये ध्वनितं कैयटेन च स्पष्टमुक्तम् । (**शेखरः** ३०७–३०८) । * उपपदविभक्तेः कारकविभक्तिर्बलीयसी । तथाहि । क्रियाया भावनात्मिकायाः वाक्यार्थत्वेन प्राधान्यात् सर्वपदार्थानां तयैव अन्वय-

प्रतीतेः कारकत्वे च साक्षात् क्रियाऽन्वयसंभवेन उपपदार्थान्वयद्वारा क्रियाऽन्वयापादकस्य इत्थंभूतलक्षणस्य अनभ्युपगमनीयत्वात् कारकवाचित्वस्य च स्वाभाविकत्वेन पदान्तरान्वयानपेक्षतया उपपदान्वयापेक्षेत्थंभूतलक्षणार्थत्वरूपात् उपपदविभक्तित्वात् कारकार्थरूपस्य कारकविभक्तित्वस्य बलीयस्त्वावगतेः । **सु.** पृ. १०९९–११००. * **उपपदविभक्तिषु** तादर्थ्यचतुर्थी विनियोक्त्री-श्रुतिः । **बाल.** पृ. ४१. * **उपपदविभक्त्यर्थानां** कल्पितधात्वर्थान्तरे अन्वयात् श्रुतभावनाऽनन्वयित्वेन न कारकत्वम् । अत एव कारकविभक्त्यपेक्षया दुर्बलत्वं इति संप्रदायः । **मणि.** पृ. १२८–१२९.

* **उपपदश्रवणे** उपपदार्थसंक्रान्तो विधिः धात्वर्थानुवादमपेक्षते । **तौता.** आधानेऽसर्व इत्यधिकरणे.

* **उपपदसर्वनामतद्धितानां** ऐकार्थ्ये वृद्धसंमतिमाह– ‘ **श्रुत्यैवोपपदस्यार्थः सर्वनाम्नाऽभिधीयते । तदर्थस्तद्धितेनैवं त्रयाणामेकवाच्यता ॥**’ इति वैश्वदेवी आमिक्षा इत्यत्र । ( **वा.** पृ. ५३४ ) । **सु.** पृ. ८३०.

* **उपपदार्थद्वयस्य** परस्परान्वयव्युत्पत्तेरभावः । **भाट्ट.** ७।३।४.

* **उपपातकत्वेन** अनाहिताग्निता स्मर्यते । **सु.** पृ. ९१५.

* ‘ **उपप्रेष्य** होतर्हव्या देवेभ्यः ’ इति प्रैषः एव नोपप्रैषः । **संकर्ष.** २।३।८.

* **उपभृत्** उपधारणे गुणभूता । ( जुह्वां हविर्ग्रहणादौ जुह्वाः अधस्तात् उपभृदुपधार्यते ) । **भा.** ४।३।१।१, * उपभृत् पाणिमात्रपुष्करा एकपुष्करा च । ५।२।८।१६. * **उपभृतः** प्रयाजानुयाजार्थाज्याधारत्वेऽपि प्रधानहविराधारत्वाभावात् प्रधानविप्रकर्षः । **सु.** पृ. ६२६. * उपभृतः फलश्रुतिः ‘ यस्याश्वत्थी उपभृद्भवति ब्रह्मणैवास्यान्नमवरुन्धे ’ इति अर्थवादः, न तु फलविधिः । **भा.** ४।३।१।१–३. * **उपभृति** अष्टगृहीतस्य प्रकृतौ एकपात्रत्वेऽपि पशौ अर्थवशेन पात्रविभागः । **संकर्ष.** १।४।१७. * उपभृति आज्यग्रहणं चतुःसंख्याद्वयविशिष्टग्रहणद्वयात्मकं , न तु अष्टत्वविशिष्टमेकम् । **भा.** ४।१।१७।४६–४८. * उपभृति गृहीतमाज्यं चतुर्थपञ्चमप्रयाजद्वयार्थमनुयाजार्थं च । तथा च औपभृताज्यस्य अनुयाजा यथा प्रयोजकाः, तथैव चतुर्थपञ्चमप्रयाजनिष्पादकमानयनमपि प्रयोजकमेव । **वि.** ४।१।१५. * उपभृति चतुर्गृहीतमेवाज्यग्रहणं , यत्र अनुयाजा न सन्ति आतिथ्यायाम् । **भा.** ४।१।१७।४८.

**⌛ उपभृति चतुर्गृहीतयोर्द्वयं विधेयं न तु अष्टगृहीतमेकम् ॥**

**तदष्टसंख्यं , श्रवणात्** । ४।१।१७।४६ ॥

**भाष्यम्**— ‘ अष्टावुपभृति गृह्णाति ’ इति श्रूयते । तत्र संदेहः किं तत् औपभृतमाज्यं अष्टसंख्येन ग्रहणेन संस्क्रियते , उत चतुःसंख्या गुणभूता द्वयोर्ग्रहणयोरिति । किं तावत् प्राप्तम् ? अष्टसंख्या गुणभूता , न चतुःसंख्ये द्वे इति । कुतः ? श्रवणात् । अष्टसंख्या श्रूयते । चतुःसंख्ये द्वे अष्टसंख्यया लक्ष्येते । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या , तस्मादष्टसंख्यं ग्रहणमेतदिति ।

**टुप्**— ( इदमपि प्रासङ्गिकमेवाधिकरणम् । पूर्वपक्षमाह– ) अष्टसंख्याविशिष्टं ग्रहणमुत्पद्यते ( ‘ अष्टावुपभृति गृह्णाति ’ इति एकमेव अष्टसंख्याकं ग्रहणं, न तु चतुःसंख्याकग्रहणद्वयम् ) । तत्र यथा न चत्वारि चतुर्गृहीतानि सन्ति, ( अश्रुतत्वात् ) एवं द्वे चतुर्गृहीते न स्तः ( अश्रवणाविशेषात् ) । लक्षणया तु गम्येते , श्रुतिसंभवे तु अयुक्ता सा ( लक्षणा ) । तस्मात् ( एकमेवेदं ) अष्टगृहीतं प्रयाजानुयाजार्थमिति । एवं चेत् अनुयाजाभावेऽपि ( आतिथ्याऽऽदौ ) अष्टसंख्यापरिच्छेद्यमेव ( प्रयाज– ) साधनम् । ( चोदयति– ) प्रयाजानुयाजेभ्यः चतुर्गृहीतयोः उपभृत् आधार इति चेत् । ( परिहरति– ) तन्न , ( कुतः ? ) संख्याधारविशिष्टमेवात्र ग्रहणमुत्पद्यते । अतः अष्टसंख्या विधीयमानत्वात् नानूद्यते , अनुवादाभावाच्च न शक्येते द्वे चतुर्गृहीते लक्षयितुम् ।

**अनुग्रहाच्च जौहवस्य** । ४७ ॥

**भाष्यम्**— अनुग्रहवादश्च भवति । ‘ चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य त्रीनितः प्राचीनान् प्रयाजान् यजति , समानयते चतुर्गृहीतत्वाय ’ इति

चतुर्गृहीतानुग्रहः कथं स्यादिति। किं चतुर्गृहीतं भवति समानयनेन ? नेति ब्रूमः। चतुर्गृहीतं प्रथममेव तत्। आघारेऽपि आघारिते, यदवशिष्टं चतु:संख्यमेव तस्य ग्रहणमासीत्। किं तर्हि चतुर्गृहीतत्वायेति ? चतुर्गृहीतस्यानुग्रहार्थम्। अल्पं हि चतुर्गृहीतं होमायापर्याप्तं, तत्पर्याप्तं कथं स्यादिति। एवं चतुर्गृहीतशब्देन अल्पमिति लक्ष्यते। अल्पत्वं च बहुत्वं कस्य चिदपेक्ष्य भवति। यदि हि औपभृतमष्टसंख्यं, एवं चतुर्गृहीतमल्पं भवति। तत्र चतुर्गृहीतशब्देन अल्पता शक्यते लक्षयितुम्। तस्मादपि पश्यामः औपभृते अष्टसंख्या गुणभूतेति।

**टुप्**— न तावत् समानयनेन चतुर्गृहीतत्वं भवति पूर्वमेव ( समानयनात् ) तस्य ( जौहवस्य ) चतु:संख्यापरिच्छिन्नत्वात्। इतरस्य च ( औपभृतस्य ) चतु:संख्यत्वे ( सति ) कीदृशे अल्पत्वमहत्त्वे ? यदि तु अष्टसंख्यापरिच्छिन्नमौपभृतं, ततः इतरस्य ( जौहवस्य ) अल्पत्वात् महता अनुग्रहः क्रियते समानयनेन। तस्मात् ( अनुग्रहदर्शनात् ) अष्टगृहीतं चतुर्गृहीतापेक्षया महत्। तेन अष्टगृहीतत्वं ज्ञापयति।

**द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने। ४८॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति। द्वे एते चतुर्गृहीते, एवं हेतुः समर्थितो भवति। आतिथ्यायां 'चतुर्गृहीतानि आज्यानि भवन्ति, न हि अत्रानुयाजान् यक्ष्यन् भवति' इति असत्स्वपि अनुयाजेषु एतत् अष्टगृहीतमेव औपभृतं भवेत्। यदा अष्टसंख्या गुणभूता, न तदा द्वयोश्चतुर्गृहीतयोः सतोः 'चतुर्गृहीतानि आज्यानि' इति बहुवचनं आज्येषु उपपद्यते। तस्मात् चतुर्गृहीते द्वे इति। आह, लिङ्गमेतत्, प्राप्तिरुच्यतामिति। तदभिधीयते। अनारभ्य उच्यते 'चतुर्गृहीतं जुहोति' इति सर्वहोमेषु। तेन प्रयाजानुयाजेष्वपि न तत् अष्टगृहीतेन शक्यते बाधितुं, नानाविषयत्वात्। अष्टगृहीतं हि ग्रहणे, चतुर्गृहीतं हि होमे। अस्ति हि संभवो यत् अष्टगृहीतं गृह्येत, चतुर्गृहीतं हूयेत। तदेतत् इह अष्टत्वं ग्रहणे भवति। कथं द्वे चतुर्गृहीते होमे स्याताम् ? तस्मात् द्वे एते चतुर्गृहीते अष्टगृहीते गृह्यमाणे गृह्येते। नहि द्वे चतुर्गृहीते अगृहीत्वा अष्टगृहीतं कश्चित् संपादयेत्। तस्मात् द्वे एते चतुर्गृहीते इति। अथ यदुक्तं अष्टगृहीतं श्रूयते, श्रुतिश्च लक्षणाया गरीयसी इति, उच्यते। उक्तमस्माभिः अष्टसंख्यायाः प्रयोजनं 'कथं द्वे चतुर्गृहीते स्याताम्' इति। अपिच 'अष्टावुपभृति गृह्णाति' इति उपभृति समानीते द्वे चतुर्गृहीते कथं स्यातामिति। इतरथा असति अष्टशब्दे नानापात्रयोर्गृह्येयाताम्। तस्मात् अष्टशब्दश्रवणं अदोषः। साधु एतत् द्वे चतुर्गृहीते उपभृति इति। **प्रयोजनं** द्वयोश्चतुर्गृहीतयोः सतोः समानयने अर्धं समानेतव्यं भवति, अष्टगृहीते सति न नियोगतः अर्धम्। तथा यत्र अनुयाजार्थं न ग्रहणं, तत्रापि अष्टगृहीतं यथा पूर्वः पक्षः। यथा च सिद्धान्तः, तथा चातुर्मास्येषु चतुर्गृहीतं उपभृति भवति इति।

**टुप्**— द्वे एव चतुर्गृहीते ( होमाङ्गे )। कुतः ? अनारभ्यविधानात् होममात्रे चतुर्गृहीतं ( प्राप्तम् )। तत्र ( होमः ) चतु:संख्यापरिच्छिन्नं किमपि ( आज्यादि ) साधनमाकाङ्क्षति, न संख्याम्। 'अष्टावुपभृति गृह्णाति' इत्यस्य ( आज्यस्यापि प्रयोजनं प्रति ) साकाङ्क्षत्वम्। प्रयाजानुयाजाश्च प्रयोजनं दीयते ( नीयते इति पाठान्तरम् )। तस्मात् यद्यपि औपभृते ( अष्ट- ) संख्याऽस्ति, तथापि चतुर्गृहीतसंख्याया अस्तित्वात् ( तामनादृत्य ) द्रव्यं ( एव ) गृह्यते। अष्टसंख्या श्रुतिवृत्ताऽपि न संबध्यते होमेन। ( कुतः ? ) संख्याऽन्तरेण ( चतुष्ट्वेन होमस्य ) अवरुद्धत्वात्। तस्मादष्टसंख्या द्वे चतु:संख्ये लक्षयति। न तु चतु:संख्या अष्टसंख्यां लक्षयितुं समर्था, व्याप्त्यभावात्। **अथवा** किमत्रानारभ्यविधिना, न्यायादेवात्र अयमर्थो लभ्यते अष्टसंख्याग्रहणे। ( ग्रहणगता अष्टसंख्या ) यदा प्रयाजानुयाजेभ्यो वाक्येन दीयते, तदा ( समं स्यादश्रुतत्वात् इति ) न्यायादेव तावदेव इतरत्, तावदेव इतरत् इति ( एकत्रार्धं इतरत्रार्धं इति मुद्रितयोः पाठः )। यथा ( लोके ) शतमाभ्यां दीयतां इत्युक्ते समर्पणवेलायां पञ्चाशत्संख्यापरिच्छिन्नमर्पयति। न तावत्परिच्छिन्नं ( अष्टत्वपरिच्छिन्नं ) होमसाधनम्। अनारभ्यवादेनापि योऽर्थो न्यायादेव प्राप्यमाणः, स एव

प्राप्यते। ननु एवं अनारभ्यविधिः (प्रयाजानुयाजविषये) अनुवादः स्यात्। उच्यते। विवक्षाभेदे अनुवादो दोषो भवति, न तु इह विवक्षाभेदः। य एवार्थो विधौ, सोऽनुवादेऽपि। **अथवा** 'यत् प्रयाजानुयाजयोश्चतुर्गृहीतं गृह्णाति, तत् अष्टौ उपभृति' इति नैव ग्रहणं विधीयते। ग्रहणे तु अर्थप्राप्ते एकपात्रता (तन्त्रेण) विधीयते, अष्टसंख्याश्रवणात् भिन्नकालता नानापात्रता चोभयं निवर्त्यते। अत आह (भाष्यकारः) 'उपभृति समानीते द्वे चतुर्गृहीते कथं स्यातां इति। इतरथा असत्यष्टशब्दे नानापात्रयोर्गृह्येयाताम्'। **अथवा** उपभृदष्टसंख्याग्रहणानि सर्वाणि अत्र विधीयन्ते। तस्यार्धे होमे विधीयते। तस्मात् चतुःसंख्या होमे, अष्टसंख्या ग्रहणे। द्वयोरपि भिन्नविषयत्वात् न विरोधः, इति नाष्टत्वेन चतुष्ट्वं बाधितुं शक्यते। न च होमार्थत्वात् (ग्रहणस्य, अर्थात्) तुल्यार्थतां प्राप्य बाधः, अङ्गगुणेन प्रधानगुणबाधस्य अन्याय्यत्वात्। तेन ग्रहणगता अष्टसंख्या चतुष्ट्वद्वयनिष्पादकत्वेन होमाङ्गं भवति (न स्वरूपेण)। तस्मात् चतुःसंख्याकं ग्रहणद्वयमेतत् इति। 'न नियोगतः अर्धे' (समानेतव्यं पूर्वपक्षे इति यत् भाष्ये प्रयोजनमुक्तं–) इत्ययुक्तम्। न्यायात् अर्धमेव प्राप्नोति। एवमपरितुष्टे द्वितीयं प्रयोजनमाह, अनुयाजाभावेऽपि अष्टगृहीतमेव पूर्वपक्षे, सिद्धान्ते चतुर्गृहीतं इति।

**शा**— 'अष्टावुपभृति गृह्णाति' इति किं अष्टसंख्यैकग्रहणविधिः, उत चतुःसंख्यग्रहणद्वयविधिः इति विचारः। '**विधीयतेऽष्टसंख्याकं ग्रहणं श्रूयते हि तत्। लक्ष्यते तु चतुःसंख्याद्वयमत्राष्टसंख्यया॥**' उच्यते। '**चतुर्गृहीतं होमाङ्गमष्टसंख्याश्रुतिः पुनः। ग्रहणे, तेन होमाङ्गं चतुष्ट्वं बाधते न सा॥ प्रधानाङ्गं चतुःसंख्या, ग्रहाङ्गमितरा पुनः। प्रधानाङ्गं च नाङ्गाङ्गमलं भवति बाधितुम्॥**'

**सोम**— औपभृताज्यप्रसङ्गात् **संगतिः**। **प्रयोजनं** पूर्वपक्षे वरुणप्रघासेषु 'अग्नीषोमौ स्विष्टकृदर्थे यजति, नोत्तरं क्रियते' इति अनूयाजाभावेऽपि अष्टगृहीतम्। सिद्धान्ते तु अनूयाजाभावे चतुर्गृहीतं इति। **सूत्रे** तच्छब्दः औपभृताज्यपरः इति।

**वि**— 'अष्टावुपभृतीत्यत्र किमष्टैकग्रहे विधिः। चतुर्ग्रहद्वये वा, ऽऽद्यः स्यादष्टश्रुतिमुख्यतः॥, चतुर्गृहीतं होमाङ्गं फलवत्त्वान्न बाध्यते। चतुर्द्वित्वं लक्ष्यतेऽतः सहानीत्यर्थमष्टता॥' (सह आनीतये इति सहानीत्यर्थम्)।

**भाट्ट**— 'अष्टावुपभृति' इत्यनेनाष्टसंख्याकं एकं ग्रहणं विधीयते, उत चतुःसंख्याकग्रहणद्वयमिति चिन्तायां, श्रुतत्वात् अष्टत्वसंख्यैव विवक्षिता, न चतुःसंख्याद्वयं, लक्षणाऽऽपत्तेः। **न चा**नारभ्याधीतेन 'चतुर्गृहीतं जुहोति' इत्यनेन अनिर्दिष्टद्रव्यकसर्वहोमानुवादेन चतुर्गृहीतविधानात् प्रयाजादिष्वपि तत्प्राप्तेः प्रयाजानूयाजार्थचतुर्गृहीतद्वयोद्देशेन उपभृत्पात्रमात्रस्यात्र विधिप्रतीतेरष्टपदं चतुष्कद्वयलक्षणार्थमिति **वाच्यं, अनारभ्य**विधिना जुहोतिचोदनाचोदितप्रधानभूतहोमोद्देशेन चतुर्गृहीतविधानेऽपि प्रयाजादिषु यजतिचोदनाचोदितेषु प्रक्षेपाख्यहोमस्य तदीयद्रव्यसंस्कारकत्वेन तमुद्दिश्य चतुर्गृहीतविधानानुपपत्तेः। अत एव उपांशुयाजादौ 'चतुर आज्यस्य गृह्णन् आह' इत्यादिविध्यन्तरादेव ध्रुवादितचतुर्गृहीतविधानम्। अस्तु वा एतादृशविषयेऽपि तत्प्राप्तिः, तथापि वाचनिकेन प्रामाणिकेन चाष्टत्वेन बाधात् तस्य प्रयाजाद्यतिरिक्तविषयत्वमेवावश्यकम्। न च होमाङ्गभूतचतुःसंख्यायाः प्रधानाश्रितत्वादङ्गाश्रितया ग्रहणाङ्गभूतया अष्टसंख्यया बाधासंभवः, उभयोरपि ग्रहणाङ्गत्वात्। अस्तु वा चतुःसंख्याया होमाङ्गत्वं, तथापि होमस्यापि अत्र अङ्गत्वादेव न तदङ्गचतुःसंख्याया बलवत्त्वम्। किंच होमोद्देशेन चतुर्गृहीतविधाने प्रतिहोमव्यक्ति तद्भेदापत्तेर्यावत्प्रयाजानूयाजव्यक्तिभेदेन चतुर्गृहीतभेदात् तावच्चतुर्गृहीतोद्देशेन एकपात्रविधौ अष्टत्वानुपपत्तिः। नहि तत्राज्यभागयोरिव अवयवशो होमे किंचिन्नियामकमस्ति। अस्तु वा तत्, तथापि यथैवावयवशो होमेऽपि चतुर्गृहीतद्वयस्य प्रयाजानूयाजसाधनत्वाविघातः, तथैव अष्टसंख्याग्रहणे अनुष्ठितेऽपि तदन्तर्गतत्वेन

चतुष्कद्वयस्यापि सत्त्वात् उभयोरपि संख्ययोः साधनत्वाविघातः। किंचैवं तव प्रयाजद्वयानूयाजत्रयेऽपि मिलित्वा एकं चतुर्गृहीतमवयवशः प्राप्येत इत्यष्टत्वानुवादानुपपत्तिः। अतस्तत्संख्याकग्रहणसंस्कृताज्यान्येव एतैर्वाक्यैः तत्कार्योद्देशेन विधीयन्ते। न चास्मिन् मतेऽपि प्रतिप्रधानं भेदप्रसङ्गः, विनियोगवाक्यानुसारेण तथा प्राप्तावपि पृथगुत्पत्तिवाक्यवैयर्थ्यापत्त्या तथोत्पन्नस्य एकैकस्यैव अवयवशो विनियोगाङ्गीकारात्। अतोऽष्टत्वं विवक्षितमेव। **इति प्राप्ते,** ' चतुर्गृहीतान्याज्यानि भवन्ति ' ' न ह्यत्रानूयाजान् यक्ष्यन् भवति ' इत्यातिथ्यायामिडाऽन्तायां श्रुतस्य चतुर्गृहीतबहुत्वे अनूयाजसामान्याभावरूपस्य हेतोरेव लक्षणातात्पर्यग्राहकतया अष्टत्वमविवक्षितम्। अयं हि न ' तेन ह्यन्नं क्रियते ' इतिवदर्थवादः, अपि तु लक्षणाऽऽद्यभावात् हेतुविशिष्टचतुर्गृहीतबहुत्वविधिरेव चतुर्थचतुर्गृहीतनिवृत्तिफलकः। अतश्च तद्बलेन व्याप्तिकल्पनायां यत्रयत्र अनूयाजसामान्याभावोऽन्यत्रापि, तत्र चतुर्थचतुर्गृहीतनिवृत्तिरूपसाध्यसिद्धिः। अतश्च व्यतिरेकमुखेन चतुर्थं चतुर्गृहीतमनूयाजार्थं इतरच्च प्रयाजार्थमिति सिद्धं भवति। तच्चाष्टत्वस्य चतुष्कद्वयलक्षणाऽर्थत्वे उपपद्यते इति तत्सिद्धिः। इतरथा अनूयाजाभावेऽपि अष्टगृहीतस्यानिवृत्तत्वेन जौहवध्रौवरूपचतुष्कद्वयस्यैव प्राप्तेर्बहुत्वानुवादानुपपत्तिः। कथंचित्प्राप्तावपि वा समस्तवाक्यवैयर्थ्यम्। न च वाचनिकबहुत्वविधेरेवायमर्थवादः, हेतुपरत्वे संभवति स्तुतिलक्षणायां प्रमाणाभावात्। वस्तुतस्तु, नाष्टपदेऽपि लक्षणा, हेतुबलेनैव अर्धस्य अनूयाजार्थत्वे अर्धस्य प्रयाजार्थत्वे चावगते आतिथ्याऽऽदौ अनूयाजाभावेनैव अष्टत्वस्य बाधोपपत्तेः। अस्तु वा सा।

**प्रयोजनं,** पूर्वपक्षे प्रयाजद्वयार्थे अर्धन्यूनसमानयनं, अष्टगृहीतस्य ' समं स्यादश्रुतत्वात् ' इति न्यायेन पञ्चस्वपि विभागात्। सिद्धान्ते तु अर्धं समानेयम्।

**मण्डन—** ' चतुःसंख्याद्वयं ग्राह्यम्। ' १९.

**शंकर—** ' अष्टत्वे च चतुष्ट्वे द्वे। '

* उपभृद्द्रव्यं प्रयाजानुयाजाज्यपृषदाज्यधारणार्थं ग्राह्यं, एककाले च क्रमेण आज्यपृषदाज्ययोर्ग्रहणं, न तु एकस्यामेव उपभृति उभयोर्ग्रहणं, ज्योतिष्टोमे अग्नीषोमीये पशौ। **के.** ५।२।८।१६.

* **उपमा**— उपमानताऽवच्छेदकसंबन्धेन उपमेयवृत्तित्वे एव उपमानियमात्। **भाट्ट.** ७।१।२ पृ. ३४२.

* **उपमानं** अदृष्टे दृष्टसदृशे चार्थे न प्रसर्तुमीष्टे। **कु.** १।३।१।१. * उपमानं अपि नैयायिकोक्तमभिदधता स्वलक्षणाभिधानविरुद्धमुक्तम्। **बृहती.** पृ. १६९। ' यादृशं भवान् स्वयमात्मानं पश्यति अनेनोपमानेन अवगच्छ अहमपि तादृशमेव पश्यामि ' इत्यनेन ग्रन्थेन वाक्यजमेव ज्ञानं उपमानमुक्तं भाष्ये। तच्च नैयायिकानां संमतं न भाष्यकारस्य। **ऋजु.**

* उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति। यथा गवयदर्शनं गोस्मरणस्य। **भा.** १।१।५।५ पृ. ३७.

अस्य च सादृश्यविशिष्टगोज्ञानस्य गोविषये स्मरणरूपत्वे सादृश्यविषये प्रत्यक्षरूपत्वेऽपि सादृश्यविशिष्टस्य गवादेः अन्यतः असिद्धेः उपमानप्रमेयत्वं वह्निविशिष्टपर्वतस्य अनुमानप्रमेयत्ववत् विज्ञेयम्। **वैद्यनाथः।** तदयं भाष्यार्थः। यत् सादृश्यं दृश्यमानं असंनिकृष्टेऽर्थे बुद्धिमुत्पादयति तदुपमानं, प्रमेयबुद्धिजनकमेव सादृश्यं इन्द्रियप्रत्यक्षं उपमानम्। यथा गवयदर्शनं इति सादृश्यविशिष्टगवयदर्शनं गोस्मरणस्य जनकमिति। यद्वा सादृश्यं असंनिकृष्टेऽर्थे यां बुद्धिमुत्पादयति सा उपमानम्। यथा गवयदर्शनं यस्य गोस्मरणस्य जनकं तत् इति। **के चित्तु** गोस्मरणस्य इति पुरुषपरं व्याचक्षते, **के चित्तु** बहुव्रीहिमिच्छन्ति। तदुभयं न युक्तम्। **रत्नाकरः.** पृ. ४४५–४४६.

**श्लो. वा.— ' कीदृग्गवय इत्येवं पृष्टो नागरिकैर्यदि। ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा। १॥ एतस्मिन्नुपमानत्वं प्रसिद्धं, शाबरे पुनः। तस्यागमाबहिर्भावादन्यथैवोपवर्णितम्। २॥**

**रत्नाकरः**— ' प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ' इति अक्षपादेनोक्तम्। (१।१।६) ' कीदृशो गवयः ' इत्येवं नागरिकेण पृष्टो वन्यः प्रसिद्धेन गवा

साधर्म्यात् अप्रसिद्धं गवयं येन वाक्येन बोधयति, यथा 'गौरिव गवयः' इति तद् वाक्यं उपमानमिति (नैतादृशं लक्षणं नैयायिकसंमतं इति केवलः)। यद्यप्येवं नैयायिकानां प्रसिद्धं, तथापि तस्य शब्दज्ञानात् अर्थे ज्ञानं इतीदृशात् शब्दभेदात् अन्यादृशं लक्षणं भाष्ये वर्णितमिति। '**श्रुतातिदेशवाक्यानामारण्ये गवये मतिः। या सोपमानं केषां चिद् गोसादृश्यानुरञ्जिता। ६॥** (नैयायिकानामेव) **तस्मात् यत् स्मर्यते तत्स्यात् सादृश्येन विशेषितम्। प्रमेयमुपमानस्य, सादृश्यं वा तदन्वितम्। ३७॥ प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते। विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता। ३८॥ प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके। विशिष्टविषयत्वेन नानुमानाप्रमाणता। ३९॥ भिन्नाऽनुमानादुपमेयमुक्ता** (इयं उपमा अनुमानात् भिन्ना उक्ता) **सौर्यादिवाक्यैरसहापि दृष्टम्। सादृश्यतोऽग्न्यादियुतं कथं नु प्रत्याययेदित्युपयुज्यते नः। ५२॥ प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद् भवति तदपचारे यत्र नीवारजातौ। तदपि फलमभीष्टं लक्षणस्योपमायाः, 'प्रकृतिरपि च गौणैर्बाध्यते यत्र चान्यैः। ५३॥ यदि सुसदृशमन्यल्लभ्यते, तत्र मिथ्या भवति विसदृशत्वान्मन्दसादृश्ययुक्तम्। मतिरपि च तथैव द्रागिवोत्पद्यतेऽस्मिन्नितरविषयबोधेऽसत्यपीत्थं च बाधः' । ५४॥** (न केवलं बह्वयवलाभः, किंतु मतिरपि सदृशे शीघ्रमुत्पद्यते, तावतैव च नैराकाङ्क्ष्ये जाते पश्चादुपजातोऽपि मन्दसदृशबोधोऽनुष्ठानानौपयिकत्वात् बाध्यते।)

**बृहती**--सादृश्यमिति किं? सादृश्यम्। गोस्मरणस्य। ननु च ज्ञातसंबन्धिता तुल्या। सा चात्र (अनुमानेऽपि) लक्षणम्। तत्र वा अन्यत्र वेति केदमुपयुज्यते? बाढमुपयुज्यते। एकदेशदर्शनादिति हि तत्र लक्षणम्। ज्ञातसंबन्धस्य इति विशेषणम्। अतो गवयस्थं सादृश्यं न सदृशावगतेरेकदेशः। किंच असकृद्दृष्टसंबन्धो हि अनुमानस्य हेतुः, असजातीयव्यावृत्तिसव्यपेक्षश्च। द्वयमत्र नास्ति, (अतः) प्रमाणान्तरम्। किं पुनरत्र व्यभिचारदर्शनं, यन्निवृत्त्यर्थमिदं लक्षणम्? (उत्तरं-) किमन्यदतः सदृशाभासात्। अत्र सामान्यमेव **केश्चित्** सादृश्यमुक्तम्। न तत् सादृश्यम्। किं तर्हि? अन्यदेव हि तत्। गोत्वादेरेकत्वात्। ननु चात्र प्रमेयमेव नास्ति इति केचिन्मन्यन्ते। तदयुक्तम्। अनुभूतमपि कारणान्तरावगम्यं प्रमेयमेवेति उक्तम्। पृ. ८३-८४.

**ऋजु-- अत्र वदन्ति**। सादृश्यं नाम न किंचिदस्ति, द्रव्यगुणकर्मसामान्यविशेषातिरिक्तं तदन्तर्भूतं वा। तेषां संग्रहे अपठितत्वात् इति पदार्थविदः। **अत्रोच्यते**। 'सादृश्यमिति किं? सादृश्यम्' (इति बृहती)। अस्यार्थः- सादृश्यमिति यत्र ज्ञानं तत् सादृश्यम्। अस्ति चेदं ज्ञानम्। तन्निबन्धना च विषयव्यवस्था। तेन ज्ञानबलेन गुणादिव्यतिरिक्तं तदन्तर्निवेशि वा सादृश्यं अभ्युपगमनीयम्। **गोस्मरणस्य** इति भाष्यमयुक्तम्। नहि स्मरणस्य बुद्धिरुत्पद्यते। तत्राह **गोस्मरणस्य** इति (बृहती)। अनुभूतगोः पुरुषस्य इत्यर्थः। **गोस्मरणस्येति** गवि स्मरणं यस्य इति बहुव्रीहिर्वा, गाः स्मरतीति वा कर्तरि नन्द्यादिभ्यो ल्युः इति ल्युस्मरणात्। गोः स्मरणः गोस्मरणः इति षष्ठीसमासः। किं पुनरत्र अनुमानाद्विशिष्यते, अत्रापि हि सादृश्यं ज्ञातसंबन्धमेव गवये दृष्टं गवि ज्ञानमुत्पादयति। गोसादृश्यं हि गवयवर्ति गोवर्तिना गवयसादृश्येन ज्ञातसाहचर्यसंबन्धः। (उच्यते) अयमेव विशेषो धूमादिभिः, यत् भिन्नधर्मिधर्मभूतो गम्यगमकः। अनुमानं हि धूमादिः यत्र दृष्टः, तत्र ज्ञानमुत्पादयति। सादृश्यं तु अन्यत्र। किंच निरुपाधिकत्वेन संबन्धिनि गृहीते हेतुता। निरुपाधिकत्वं च अनेकदर्शनगम्यं इत्युक्तम्। सादृश्यं तु न ज्ञातसंबन्धं, प्रथमदर्शनेऽपि विज्ञानोत्पत्तेः। तथा असकृद्दर्शनाकाङ्क्षाऽपि नास्ति, सकृद्दर्शनेऽपि गमकत्वात्। (अनुमाने धूमश्च-) असजातीयेभ्यः अनग्निभ्यः या धूमस्य व्यावृत्तिः, तदपेक्षः। अत्र तु असजातीयव्यावृत्तिः नापेक्ष्यते। इति इदं प्रमाणान्तरमुपमानम्। पृ. ८२-८४.

* उपमानं अर्थवादः 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं' इत्यादिः। **बाल.** पृ. ५८.

* उपमानं '**असंनिकृष्टसादृश्यज्ञानं सदृशदर्शनात्। उपमानं यदेतच्चाव्यभिचारीति कथ्यते॥**' (सदृशस्य गवयस्य दर्शनात् असंनिकृष्टे गवि सादृश्यस्य ज्ञानं यत्तदुपमानम्। तच्च अव्यभिचारि प्रमाणम्)। **मण्डन.** ३।१ श्लो. १०. * 'उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते। नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम्॥' **वा.** १।३।१।१ पृ. १६१, * उपमानम्। न चादृष्टपूर्वस्य अदृष्टसदृशस्य च उपमानविषयत्वम्। २।१।२।५ पृ. ३९०. * उपमानं पूर्वदृष्टे अर्थे स्मर्यमाणे दृश्यमानार्थसादृश्यज्ञानम्। दृश्यमानगवयनिरूपितसादृश्यप्रकारकगोविशेष्यकप्रमा उपमितिः। तत्करणं गवयपिण्डदर्शनम्। एवं च आरण्यकवाक्यार्थज्ञानवतः अरण्ये गवयदर्शनं तत्करणं, तत्सादृश्यविशिष्टो गौः इति ज्ञानं प्रमा, वाक्यार्थस्मरणं अवान्तरव्यापारः इति। न चेदं सादृश्यप्रत्यक्षं, अर्थान्तरयोगिभिर्धर्मैः अर्थान्तरस्य तादृशयोगरूपसादृश्यस्य व्यासज्यवृत्तितया यावदाश्रयप्रत्यक्षाभावेन तदयोगात्। नानुमानं 'उपमिनोमि' इत्यनुव्यवसायेन अनुमितिवैलक्षण्यप्रतीतेः। नापि शाब्दम्। पदज्ञानाद्यभावादिति। अत इदं मानान्तरम्। एवं च प्रत्यक्षसौर्यविधिसादृश्यस्य आग्नेयविधौ उपमित्या उपस्थिताग्नेयविधिविहितेतिकर्तव्यतया अपेक्षितायाः सौर्याङ्गत्वबोधः फलं इति **जीर्णाः**। **नव्यास्तु** नैतन्नियतम्। उपमानस्य शक्तिग्राहकत्वानापत्तेः। एतादृशसादृश्यज्ञानस्य अतिदेशवाक्यार्थज्ञानाजन्यत्वाच्च। अतो गोसादृश्यविशिष्टपिण्डदर्शनं करणं, अतिदेशवाक्यार्थस्मरणं अवान्तरव्यापारः, 'अयं गवयपदवाच्यः' 'गवयो गवयपदवाच्यः' इति वा संज्ञासंज्ञिसंबन्धज्ञानं प्रमा इत्याहुः। **मणि.** पृ. ६०, * उपमानं लौकिकं प्रमाणम्। पृ. १३. * उपमानं—'**सादृश्याद् दृश्यमानाद् यत् प्रतियोगिनि जायते। सादृश्यविषयं ज्ञानमुपमानं तदुच्यते॥**' **ऋजु.** पृ. ८४, * उपमानं सादृश्यमात्रविषयकम्। पृ. ७३. * **उपमानेन** उपमानाभासो बाध्यते। **बाल.** पृ. १३१. * उपमानेन धर्मप्राप्तिः (प्रकृतेर्विकृतौ)। अनुमानेन इतिकर्तव्यतायां बहु असमञ्जसम्। **टुप्.** ८।१।२।२, * उपमानेन धर्मप्राप्तिः। 'यजेत' इत्युक्ते 'किं, केन, कथं' इत्याकाङ्क्षात्रयं भवति। तत्र 'किं, केन' इति फलकरणाभ्यां निराकाङ्क्षीकृते 'कथं' इति अव्यावृत्तायामाकाङ्क्षायां, संनिधाने अनाम्नानात् इतिकर्तव्यतायाः, तुल्यं वाक्यं बुद्धौ संनिधीयते। तत् संनिधापितं आत्मीयमर्थं संनिधापयति। अनेन द्वारेण अग्न्यन्वाधानादिका इतिकर्तव्यता अनुषज्यते। एवं चेत् यत्र सादृश्यं, तत्र धर्माः प्राप्यन्ते। असति सादृश्ये नास्ति धर्मप्राप्तिः। ८।१।२।२, * उपमानेन धर्मप्राप्तिः सर्वासु एव विकृतिषु। १०।४।१।१ पृ. १९०७.

* **उपमानपरिच्छेदः**। 'उपमानमपि सादृश्यं असंनिकृष्टेऽर्थे बुद्धिमुत्पादयति, यथा गवयदर्शनं गोस्मरणस्य' (भाष्यं १।१।५।५ पृ. ३७) [अयं च 'गोस्मरणस्य' इत्यन्तो भाष्यग्रन्थः उपवर्षसंमतः एव भाष्यकारेण लिखितत्वात् टीकाकारादिभिर्भाष्यत्वेनैवोच्यते। अत्र 'गोसदृशो गवयः' इति वाक्यमुपमानं इति **कश्चित्**। तन्न। तस्य शब्दानतिरेकात्। प्रत्यक्षदृष्टगोत्वानां, 'गोसदृशो गवयः' इति श्रुतातिदेशवाक्यानां च वने गवयदर्शनात् 'अयं स गवयः' इति गोसादृश्यविशिष्टगवयज्ञानं, तदुपमानं इति **गौतमीयाः**। तदप्यसत्, तस्यागमाबहिर्भावात्। तत्र हि आप्तोपदेशेनैव गवयरूपार्थप्रतीतेः अतिदेशवाक्यार्थस्मरणसहकृतेन्द्रियजन्यत्वाच्च सविकल्पकप्रत्यक्षमेव तत्। अतो 'यथा गवयदर्शनं गोस्मरणस्य' इत्युदाहरणान्तरमाह भाष्यकारः। तदेतल्लक्षणं व्याचष्टे— पूर्वेति। सि० चन्द्रिका] पूर्वदृष्टे स्मर्यमाणेऽर्थे दृश्यमानार्थसादृश्यज्ञानमुपमानम्। या असौ अस्माभिः नगरे दृष्टा गौः, सा अनेन गवयेन सदृशी इति। किं पुनः सादृश्यम्? अर्थान्तरयोगिभिः संबन्धिसामान्यैः अर्थान्तरस्य तादृशयोगः सादृश्यम्। यथा गोजातियोगिभिः कर्णाद्यवयवसामान्यैः गवयजातेः योगो गवयस्य गोसादृश्यं गवयसंयोगिभिश्च गोर्योगः तत्सादृश्यम्। अत एव च सामान्यभूयस्त्वाल्पत्ववशेन सादृश्यप्रकर्षाप्रकर्षौ सुसदृशं ईषत् सदृशं इति। ये तु सामान्ययोगातिरिक्तं अन्यत् एव तत्त्वं सादृश्यं मन्यन्ते, तेषां प्रकर्षाप्रकर्षभेदः

किंनिमित्त इति चिन्तनीयम्। न च तत्त्वान्तरत्वे प्रमाणमपि किंचित् अस्ति इति आस्तां तावत्। न च इदं उपमानं प्रत्यक्षान्तर्गतम्। अनिन्द्रियसंनिकृष्टत्वात् नगरस्थस्य गोः। न च अनुमानं अगृहीतसंबन्धस्यापि उपजायमानत्वात्। एवं किल अनुमीयेत गौः गवयसदृशः गवयसादृश्यप्रतियोगित्वात्, यत् यत्सादृश्यप्रतियोगि तत् तत्सदृशं दृष्टं यथा अयं अनयोः अन्यतरस्य अन्यतरेणापि। न च इदं युक्तम्। यौ हि द्वौ अर्थौ मिथः सदृशौ युगपन्न दृष्टवान्, एकमेव तु गां उपलभ्य नगरे, वने गवयं पश्यति, सोऽपि गां गवयसादृश्यविशिष्टां उपमिनोत्येव। तस्मात् नानुमानम्। शाब्दत्वं तु न शङ्कयमेव। अतः प्रमाणान्तरं, प्रसिद्धत्वाच्च न परीक्षितव्यम्। इति उपमानवादः। **शा.** १।१।५ **पृ.** ७४.

* **उपमानपरिच्छेदः**। सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयकमुपमानम्। दृष्टगोः पुरुषस्य गवयं तत्सदृशं पश्यतो यद्गोविषयकं गवयसदृशज्ञानं तदुपमानम्। किं पुनरिदं सादृश्यम्? नेदं द्रव्यगुणकर्मसामान्यसमवायविशेषाणामन्यतमम्। एष्वपाठात्। उच्यते। विषयोऽस्य वित्तिसिद्धोऽन्यो द्रव्यादिभावेभ्यः। सर्ववस्तूनि संविदेकशरणानि। अस्ति चेयं 'सदृशः' इति संवित्। सा च सर्वत्र विषयाव्यभिचारिणीति दर्शितं नयवीथ्याम्। अतः संवित्स्वभावसिद्धं सादृश्यं न पाठाभावादपह्नवमर्हति। तच्च न द्रव्यं गुणकर्मणोरपि आश्रितत्वात्। गन्धादयोऽपि हि सदृशबोधगोचरीभवन्ति, भवन्ति च कर्माण्यपि कर्मान्तरसदृशबुद्धिबोध्यानि। अत एव न गुणत्वं, नापि कर्मत्वम्; अनुवृत्तप्रत्ययनिमित्तत्वाभावाच्च न सामान्यम्। समवायस्तु संबन्धरूपः इति न तत्र सादृश्यान्तर्भावः। विशेषाख्यं तु पदार्थं प्रमाणवादिनो नानुमन्यन्ते। स हि पृथक्त्वादतिरिक्तो नानुमातुं शक्यते। पृथक्त्वं हि परमाणूनां द्रव्यारम्भणलक्षणकार्योन्नेयम्। तदतिरेकिणि तु विशेषे न किंचिदनुमानम्। न च परमाणुपृथक्त्वमेव लिङ्गं, नित्यत्वात्। कार्यं हि स्यात् कारणस्य लिङ्गम्। न च परमाण्वाश्रितं पृथक्त्वं कार्यमिति प्रमेयपारायणे निर्णीतम्। अतः पदार्थान्तरमेवेदं शक्तिवत् संख्यावच्चेति प्रमेयपारायणे एवोक्तम्।

तच्च सादृश्यं प्रत्यक्षद्रव्यवर्ति प्रत्यक्षग्रहणावयवगुणकर्मसामान्यग्रहणनिबन्धनं प्रत्यक्षं, अन्यत्र सामान्यान्तबाहुल्यानुमेयम्। तदिदमुपमानं न प्रत्यक्षं, तिरोहिते गवि चक्षुःसंनिकर्षातिवर्तिनि जायमानत्वात्। न च स्मृतिः। गोदर्शनसमये अप्रतीतगवयस्य तत्सादृश्यानुभवाभावात्। नानुमानं, लिङ्गाभावात्। एकदेशो हि लिङ्गम्। न च गोर्गवयस्तद्गतं वा गोसादृश्यमेकदेशः। ज्ञानसंबन्धनियमश्च हेतुः। न गोगतेन सादृश्येन सह कश्चिदपि गवयवर्तिनः सादृश्यस्य संबन्धोऽस्तीति कुतस्तरां तस्य नियमावगमः। न चापि परस्परसदृशवस्त्वन्तरदर्शनसापेक्षेयं प्रतीतिः, यतः संबन्धनियमज्ञानबलभाविनीत्युच्यते; प्रथममप्येकं वस्तु ईदृशमीक्षमाणस्य परस्मिन् वस्तुनि सादृश्यमतिराविर्भवति। **ननु** अवयवसामान्यबाहुल्याच्चानुमानं संभवत्येव। गवयं हि गवावयवसामान्यबाहुल्यभाजं प्रतीत्यैव अवधारणा जायते। यो यदवयवसामान्यबाहुल्यवान् स तत्सदृश इति। तेन गां गवयावयवसामान्यबाहुल्ययोगिनं स्मरतो गवयसादृश्यविषयमनुमानं उपपन्नमेव। तथाहि, गवयवर्तिना गोसादृश्येन सहावयववर्तिनां सामान्यानां एकार्थसमवेतसमवायलक्षणः संबन्धोऽस्ति। गवये हि सादृश्यं समवेतं, तस्मिन्नेव अवयवास्तदीयाः समवेताः, तेषु तत्सामान्यानि समवेतानीत्युपपन्नः एकार्थसमवेतसमवायलक्षणः संबन्धः। तन्नियमोऽपि चास्त्येव सामान्यबाहुल्यस्य। गोधर्मताऽपि तस्योपपन्ना, समवेतसमवायलक्षणयोगित्वात्। अतो घटते एव अनुमानसामग्री इत्युपमानमनुमानान्न भिद्यते। **उच्यते**। संबन्धनियमस्मरणं अनुमानोदयकारणम्। न पुनः संबन्धनियमावधारणमेव। अत्र च अवयवसामान्यभाजो गवयस्य सदृशता प्रतीयमानस्यैव उपमानहेतुत्वमिति कारणभेदात् उपमानमनुमानात् भिन्नं प्रत्यक्षवत्। अत्र च सादृश्यदर्शनोत्थं इत्यनेन ऐन्द्रियकस्य सदृशज्ञानस्योपमानता निराकृता। सादृश्यविषयकं ज्ञानमिति किं निराकृतम्? उच्यते। 'गोसदृशो गवयः' इति पुरुषवचनात् गोसादृश्यं गवयस्य प्रतीत्य यत् तदवयवसामान्यबाहुल्यज्ञानं गवये जायते, तन्नोपमानमित्युक्तम्। यत्तु सदृशदर्शनमात्रेण कस्मिंश्चिदर्थे

तत्सदृशस्वरूपमात्रे स्मरणं, तस्योपमानत्वमेव न प्रसक्तं, प्रमाणलक्षणाधिकारात्। स्वरूपस्मरणं हि न प्रमाणम्। प्रमाणविषयस्य चेदं लक्षणमाख्यायते। तेन तन्निवृत्त्यर्थं सादृश्यविषयग्रहणमयुक्तम्। एतेनैव असदृशात् यत् सदृशभ्रान्तिविषयात् तत्सदृशविषयज्ञानं, तदप्यनुमानं नाशङ्कनीयमेव अप्रमाणत्वादित्युक्तम्। **यत्तु** प्रसिद्धार्थस्य साधर्म्यात् अप्रसिद्धार्थसाधर्म्यमुपमानमित्युक्तं, **तद-युक्तम्**। तथाहि, 'यादृशो गौस्तादृशो गवयः' इति श्रुतातिदेशवाक्यस्य वने गवयमुपलभमानस्य अयं गवयः इति प्रतीतिरुपमानफलमुच्यते। तत्र तावद् 'गोसदृशो गवयः' इति प्रथमाऽवगतिः पुरुषवाक्यमात्रप्रभवा नोपमानं भवति। यदपि वनगतस्य गवये तद्गते च गोसादृश्ये ज्ञानं, तदपि प्रत्यभिज्ञाप्रत्यक्षम्। या त्वेतस्य गवय-शब्दवाच्यताऽवगतिः, साऽपि गवयशब्दप्रयोगादानु-मानिकी। यस्य शब्दस्य यत्र प्रयोगः, तस्य तद्वाच्यतया संबन्धनियमोऽवगतः। वने च संज्ञिनमुपलभ्य एतस्यैव सा मया संज्ञाऽवगता इति तज्ज्ञानं स्मरणमेवेति नोपमानस्यावकाशः। तस्माद्यथोक्तलक्षणमेवोपमानमिति स्थितम्। इति प्रमाणपारायणे उपमानं नाम चतुर्थः परिच्छेदः। **पञ्जिका.** पृ. ११०–११२.

* **उपमानोपमेयभावः** गम्येनापि साधारणधर्मेण भवति। **पराक्रमः.** ४५।२.

* **उपमितिः** ज्ञानकरणिका। ( उपमानशब्देऽपि किंचित् द्रष्टव्यम्। **के.** )। **मणि.** पृ. १९, * **उपमितौ** ज्ञानस्य सादृश्यज्ञानत्वेन हेतुत्वम्। पृ. ३०.

* **उपयन्ति** उपेयुः आसीरन् इति चोदनावत्त्वं सत्रत्वम्। **भा.** १०।६।१६।६०.

**उपयन्नपनयन् धर्मो विकरोति हि धर्मिण-मिति न्यायः।** यथा पूर्वरूपरसादिधर्मस्य परिवृत्तौ रूप-रसाद्युत्तरोत्पत्तौ च तण्डुलादेर्धर्मिणो विकृतिर्दृश्यते, तथा प्रकृतेऽपि यस्य धर्मिणः पूर्वधर्मस्यापगमे अन्यधर्मस्यो-त्पत्तिः, तत्रायं न्यायोऽवतरतीति। **साहस्री.** ९३.

* **उपयजनम्।** अग्नीषोमीये पशौ गुदेनोपयजन-माम्नातं 'गुदेनोपयजति, प्राणो वै गुदः' इति। उपयजनं उपयाजः, उपयट्–होमः इत्येकोऽर्थः। ( **के.** ) **भा.** १२।४।४।८.

* **उपयट्–होमाः।** ( सवनीय– ) पशोः इडायां प्राशितायां मार्जयित्वा 'अग्नीत् औपयजानङ्गारानाहर' इति संप्रेष्यति। शामित्रियात् आग्नीध्रः अङ्गारानाहृत्य उत्तरस्यां वेदिश्रोण्यां बर्हिर्व्युह्य न्युप्य उपसमादधाति। 'प्रतिप्रस्थातरेतत् गुदकाण्डं तिर्यक् असंभिन्दन् एकादशधा संछिद्य वसाहोमहवन्या हस्तेन वा उपयज इति संप्रेष्यति। 'समुद्रं गच्छ स्वाहा' एत्येतैः ( एकादशभिर्मन्त्रैः ) प्रतिप्रस्थाता अनूयाजानां हुतंहुतं उपयजति। **सत्या.** ४।५।३३–४०.

**उपयाजगुदसमुच्चयन्यायः।** उपयाजसाध-नानां गुदानां समुच्चयः ऐकादशिनेषु पशुषु॥

**संस्कारे च, तत्प्रधानत्वात्।** १२।४।४।८॥

**भाष्यम्**—अग्नीषोमीये पशौ गुदेनोपयजनमाम्नातं, 'गुदेनोपयजति प्राणो वै गुदः' इति। ऐकादशिनेषु पशुषु अनेकगुदसंनिपाते विचारः प्रभवति, किमुपयजन-गुदानां समुच्चयो, विकल्पो वा। यदि अर्थकर्म उपयजनं, ततो विकल्पः। अथ प्रतिपत्तिः, ततः समुच्चयः। किं पुनरत्र युक्तम्? अर्थकर्मेति। कुतः? भूतभव्यसमु-च्चारणे भूतं भव्याय दृष्टार्थत्वात् भवति। यदा अर्थकर्म, तदा एकेनापि तत् सिध्यतीति बहूनामेकत्र प्राप्तानां विकल्पो भवति। **एवं प्राप्ते, उच्यते।** संस्कारे च तत्प्रधानत्वात्। संस्कारोऽयं प्रतिपत्तिरित्यर्थः। कुतः? उपयुक्तशेषत्वात्। अग्नीषोमीययागार्थः पशुरुत्पन्नः। तस्मिन्निर्वृत्ते तच्छेषाः प्रतिपादनार्हाः। तस्मात् गुदस्य प्रतिपत्तिनियमोऽयं दृष्टार्थः। ननु अर्थकर्मपक्षेऽपि दृष्टार्थतैव हेतुरुक्तः, तुल्योऽसौ प्रतिपत्तावपि। तत्रापि हि प्रतिपाद्यमानः कर्म साधयति। तस्मात् वैशेषिकोऽसौ। यदा प्रतिपत्तिस्तदा समुच्चयः। तत्प्रधानत्वाद् द्रव्यसंस्का-रार्थं कर्म। यस्यैव पशोर्गुदो न संस्क्रियते, तस्यैव तेन संस्कारेण हानिः स्यात्। तस्मात् समुच्चयः।

**शा**— सत्यपि तृतीयायोगे प्रयाजशेषवत् 'उत्पत्तौ येन संयुक्तं' इत्येवं सिद्धस्य प्रतिपत्तित्वस्य प्रयोजन-कथनमेतत्।

सोम— सोमसंस्कारक्रयेषु समुच्चयेऽपि प्रकृते संस्कारकर्मत्वाभावात् न समुच्चयः इत्युत्थितेः ( प्रत्युदाहरण- ) **संगतिः** । **सूत्रार्थस्तु-** संस्कारे उपयजने समुच्चयः स्यात् संस्कारस्य द्रव्यप्रधानत्वात् इति ।

**वि--** ' गुदोपयजने किं स्याद् विकल्पोऽथ समुच्चयः ।, आद्यः स्यादर्थकर्मत्वात्, न शेषप्रतिपत्तितः ॥ '

**भाट्ट—** दैक्षे पशौ ' गुदेनोपयजति ' इति श्रुतानामुपयाजानां पशुगणे प्राप्तानां किं वैकल्पिकगुदसाधनता, उत समुच्चिता इति चिन्तायां, तृतीयया गुदस्य करणत्वावगमात् निषादस्थपत्यधिकरणन्यायेन ( ६।८।३ ) लक्षणाऽनुपपत्तेः उपयाजानां अर्थकर्मत्वावसायात् उपादानलाघवानुरोधेन प्रकृतगुदग्रहणेऽपि विवक्षितसंख्यात्वात् एकस्यैव ग्रहणेन गुदानां विकल्पः । **इति प्राप्ते,** असदुक्तप्रयाजशेषाभिघारणन्यायेन उपयुक्तस्य गुदस्य प्रतिपत्त्यपेक्षत्वात्, उपयाजप्रक्षेपांशेन वाक्यान्तरकल्पनया प्रतिपत्तित्वोपपत्तेः, श्रूयमाणकरणत्वाविघातात्, तत्र च संख्याया अविवक्षितत्वात् सर्वेषामेव गुदानां समुच्चयः ।

**मण्डन--** ' गुदानां स्यात् समुच्चयः । '

**शंकर—** ' पशुसंघगुदेषु च । ' समुच्चयः इत्यनुवर्तते ।

* **उपयुक्तानां** कुशदर्वीमन्त्रब्राह्मणानां पुनरुपयोगे शिष्टाचारविरोधाभावः । **भाट्ट. ११।३।१२.** * **उपयुक्तशेषा** भक्षाः । **भा. १२।१।१५।३१,** * **उपयुक्तशेषत्वात्** उपयजनं प्रतिपत्तिः । नार्थकर्म । १२।४।४।८.

* **उपयुक्तसंस्कारः** कृष्णविषाणायाः दक्षिणादानोत्तरं चात्वाले प्रासनम् । **भा. ४।२।७।१९,** * **उपयुक्तसंस्कारात्** उपयुज्यमानसंस्कारो हि गरीयान् । ११।२।१६।६९. * उपयुक्तसंस्कारात् प्रतिपत्तिकर्मरूपात् अर्थकर्मरूपः उपयोक्ष्यमाणसंस्कारः प्रशस्तः । तस्मात् मैत्रावरुणसंस्काराय दीक्षितदण्डदानं अर्थकर्म निरूढपशौ असत्यपि दीक्षिते प्रयोजकम् । **वि. ४।२।६,** * **उपयुक्तहविःसंस्कारः** स्विष्टकृत् । तस्मात् सर्वेभ्यो हविःशेषेभ्यः स्विष्टकृदनुष्ठेयः । ३।४।१९.

* **उपयुक्तापेक्षया** उपयोक्ष्यमाणे अत्यादरात् ' प्रायणीयनिष्कासे उदयनीयमनु निर्वपति ' इत्यत्र निष्कासस्य निर्वापार्थत्वं, तस्य उपयुक्तत्वात् । **मीन्या.**

* **उपयुक्तोपयोक्ष्यमाणो**भयसंस्कारः प्रयाजशेषेण हविरभिघारणं प्रतिपत्तित्वात् हविःसंस्कारत्वाच्च । **शा. ४।१।१४.**

* **उपयोगसमकालं** द्रव्यसंस्कारकं अदृष्टार्थं संनिपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म यथा ' एककपालं अपर्यावर्तयन् जुहोति ' इति । प्रकृतौ तु पर्यावर्तनविधिः अदृष्टार्थः एव । **बाल. पृ. ८३.**

* **उपयोगिता** एव शेषस्वीकारसामर्थ्यात् प्राधान्याक्षेपिका । **सु. पृ. ३२१.**

* **उपरं** वर्जयित्वैव यूपे खातादूर्ध्वं पञ्चारत्नित्वादि परिमाणं ग्राह्यम् । ( उपरः नाम यूपस्य भूमौ प्रवेशनीयो भागः तक्षणरहितः । **के.** ) । **संकर्ष. १।४।८,** * **उपरस्य** दैर्घ्यं यूपपरिमाणचतुर्थांशेन ग्राह्यम् । १।४।२४, * **उपराणां** दैर्घ्येण साम्यं यूपानां दैर्घ्ये न्यूनाधिकत्वेऽपि । १।४।२४.

* **उपरवाः** नाम ज्योतिष्टोमे हविर्धानमण्डपे (दक्षिणस्य हविर्धानशकटस्याधस्तात् ) सोमाभिषवाधारफलकयोरधस्तात् चतसृषु आग्नेयादिविदिक्षु चत्वारो गर्ताः अरत्निमात्रखाता अधोभागे परस्परं मिलिताः ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिताः खन्यन्ते । **वि. ३।८।१६.**

⌛ **उपरवेषु ' किमत्र तन्त्रौ सह ' इत्यत्रोक्तं फलं ऋत्विग्यजमानोभयगामि ॥** ( इदमधिकरणं यद्यपि भाष्ये वार्तिके च न पृथक् किंतु पूर्वाधिकरणान्तर्गतमेव । तथापि शास्त्रदीपिकादौ अस्याधिकरणस्य पृथङ् निवेशात् अस्माभिः एतत्सूत्रभाष्यादि पृथक् कृत्वा गृहीतमिति ज्ञेयम् । )

**व्यपदेशाच्च । ३।८।१४।३० ॥**

**भाष्यम्—**यत्र च व्यपदेशो भवति, तत्रार्त्विजं (फलम् । ) दक्षिणस्य हविर्धानस्याधस्तात् चत्वार उपरवाः प्रादेशमुखाः प्रादेशान्तरालाः । तत्र हस्तौ प्रवेश्य अध्वर्युः

यजमानमाह 'किमत्र' इति । स आह 'भद्रम्' इति । 'तन्नौ सह' इत्यध्वर्युः प्रत्याह इति व्यपदेशो भवति अध्वर्योर्यजमानस्य च । 'तन्नौ सह' इत्युभयोर्वचनं अध्वर्युयजमानयोः । तस्मादध्वर्युफलं ( अपि ) आशासितव्यमत्रेति ।

**वा**—'व्यपदेशादितरेषाम्' इत्यत्र ब्राह्मणगतमुदाहृतम् । इह तु प्रस्तावकवशेन मन्त्रगतम् । तद्धि क्लेशेन कल्प्यमानं कदा चिदुभयोर्न शक्यते कल्पयितुं इत्याशङ्का स्यात् । कल्पनाहेतुस्तु युगपत्प्रवृत्तेरविशिष्टः इति न किं चिद्गौरवम् । अथ कस्मात् नोभावेव प्रयुञ्जाते ? यदा एकेनापि प्रयुज्यमानः शक्नोत्येव उभयगामि फलं प्रकाशयितुं, तदा सिद्धेऽर्थे न किं चिदुभयकर्तृकत्वेन प्रयोजनमस्ति इत्यध्वर्युनियमः । ( वस्तुतस्तु 'तन्नौ सह' इतिमन्त्रं अध्वर्युयजमानौ द्वावपि प्रयुञ्जाते इति याज्ञिकाचारः ) ।

**शा**— यत्र व्यपदेशो भवति 'तन्नौ सह' इति तत्रापि द्विवचनस्यात्यन्तानुपपत्तेः ऋत्विग्गामित्वं ( अपि ) ।

**वि**—'भद्रं तन्नौ सहेत्येतत् कस्मिन् ?, स्वामिनि युज्यते ।, द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः ॥' ( न यजमानस्यैवैकस्य ) ।

**भाट्ट**—एवं यत्रापि 'तन्नौ सह' इत्यादौ द्विवचनाद्यनुपपत्तिः तत्रापि ऋत्विग्गामित्वम् ( अपि ) ।

**मण्डन**—'द्वयोः फलं भद्रपदाभिधेयम् ।' १६.

**शंकर**— 'व्यपदेशेऽपि तद्भवेत् ।' १८.

**उपरवन्यायः** । उपरवमन्त्रस्य प्रत्युपरवखननं आवृत्तिर्ज्योतिष्टोमे ॥

**उपरवमन्त्रस्तन्त्रं स्याल्लोकवद् बहुवचनात् । ११।४।१९।५५ ॥**

**भाष्यम्**— ज्योतिष्टोमे उपरवमन्त्रः, 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति । तत्र संदेहः किं सर्वोपरवेषु सकृदेव मन्त्रः प्रयोक्तव्यः, उत प्रत्युपरवमिति । किं प्राप्तम् ? उपरवमन्त्रस्तन्त्रं स्यात् । सकृदेव प्रयोक्तव्यः । कुतः ? बहुवचनात् । बहुवचनान्तोऽयं, वैष्णवान् खनामीति । यदि प्रत्युपरवं प्रयुज्येत, एकस्मिन् बहुवचनान्ताभिधानं न साधयेत् । लोकवत् । यथा लोके एकस्मिन्नर्थे बहुवचनं न प्रयुज्यते । अपि च सकृदुक्त एव शक्नोति सर्वोपरवानभिधातुम् । शक्नोति चेत्, आवृत्तिरनर्थिका । तस्मात् सकृदेव प्रयोक्तव्यः ।

**न, संनिपातित्वादसंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनम् । ५६ ॥**

**भाष्यम्**— नैव तन्त्रं स्यात् । कुतः ? संनिपातित्वात् । संनिपाति खननकर्म, येनोपरवेण संनिपतितं तदर्थमेव विज्ञायते । मन्त्रोऽपि चायं संनिपाती । मन्त्रान्तेन कर्मादिसंनिपातात् । अतो यस्योपरवस्य अयं मन्त्रः संनिपतितः, तस्यैव मन्त्रकारितः संस्कारो न सर्वेषाम् । अतो न सकृत् प्रयोक्तव्यः । असंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनम् । ये तु असंनिपातिकर्मणां मन्त्राः, यथा सुब्रह्मण्याऽऽह्वाने 'देवा ब्रह्माणः' इत्यौपवसथ्येऽहनि, तेषामेककालत्वात् अगृह्यमाणविशेषाणां सकृद्वचनं स्यात् । यत्तु न बहुवचनान्त एकस्याभिधायकः इति, प्रातिपदिकार्थोऽभिहितः, विभक्त्यर्थश्च कर्मत्वम् । वचनार्थः केवलो नाभिहितः । स च नैवाभिधानमर्हति । अभिधायकस्य शब्दस्याभावात् । एकस्यैव वा पूजार्थे बहुवचनम् । तस्मादविरोधः ।

**हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात् । ५७ ॥**

**भाष्यम्**— इदं सूत्रं पूर्वसूत्रप्रत्युदाहरणार्थम् । कालैकत्वात् इति किमर्थं ? हविष्कृदध्रिगु० स्यात् इति ।

**सोम**— पूर्ववत् इहापि तन्त्रता इत्युत्थानात् ( दृष्टान्त- ) **संगतिः** । **सूत्रार्थस्तु**- उपरवमन्त्रः तन्त्रं स्यात् बहुवचनात् । लोके यथा एकस्मिन् बहुवचनमसमर्थं तद्वदिहापि इति ।

**वि**— 'तन्त्रेणोपरवे मन्त्रो भिद्यते वा, बहूक्तितः । तन्त्रं, बहूक्तिः पूजार्था भिन्नौऽसौ खेयभेदतः ॥' खेयानामुपरवाणां भेदात् मन्त्रावृत्तिरिति ।

**भाट्ट**— तत्रैव उपरवा नाम गर्तविशेषाश्चत्वारः, तेषां खनने 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति मन्त्रः प्रत्युपरवखननमावर्तते न वेति चिन्तायां,

बहुवचनान्तो मन्त्रः सकृदेव सर्वोपरवखननं प्रकाशयति। अतश्च प्रतिप्रधानं गुणावृत्त्या यथैव मन्त्रावृत्तिपूर्वकपात्रप्रोक्षणावृत्तौ प्राप्तायां 'शुन्धध्वम्' इति बहुवचनानुरोधात् प्रोक्षणतन्त्रत्वापादनेन मन्त्रतन्त्रत्वं, तथेहापि सत्यपि करणमन्त्रत्वे बहुवचनानुरोधात् मन्त्रतन्त्रत्वम्। एतावांस्तु विशेषः, यदत्र सामर्थ्यात् प्रत्युपरवं खननस्यावृत्तिः, न त्वेतावता मन्त्रस्यावृत्तिः, सकृत्पठितमन्त्रजन्यस्मृत्यैव सर्वोपरवखननप्रकाशनोपपत्तेः। नहि अत्र प्रत्युपरवं खनने वैजात्यं, येन 'मन्त्रान्ते कर्मादिः संनिपात्यः' इतिवचनविहितमन्त्रान्तकालभेदेनापि कथंचिद्भेदो भवेत्। 'उपरवान् खनति' इति विधिना एकजातीयस्यैव खननस्य प्रत्युपरवमर्थादावृत्तिबोधनात्। **इति प्राप्ते,** विधेयताऽवच्छेदकीभूतविजातीयखननत्वस्य अत्रैकत्वेऽपि एकैकोपरवखनने तस्य प्रत्येकवृत्तित्वं, संस्कार्यखेयभेदात् प्रतिग्रहं संमार्गवत् प्रतिसंवत्सरं क्रियमाणज्योतिष्टोमादिवच्च। अतश्च विधेयताऽवच्छेदकीभूतविजातीयखननत्वपर्याप्त्यधिकरणस्य कर्मपदार्थत्वात् तस्य च मन्त्रान्तकालकत्वविधानात् मन्त्रावृत्तेरावश्यकत्वम्। वेदिप्रोक्षणे तु नैकैकावृत्तौ विजातीयप्रोक्षणत्वरूपविधेयताऽवच्छेदकं प्रत्येकवृत्ति। अपि तु त्रिरावृत्तिविशिष्टप्रोक्षणविधानात् सर्वाभ्यासेषु ज्योतिष्टोमत्ववत् व्यासज्यवृत्त्येव। अतश्च तत्र विधेयताऽवच्छेदकधर्मपर्याप्त्यधिकरणस्य अभेदान्न मन्त्रावृत्तिरिति वैषम्यम्। अतश्च पाशाधिकरणन्यायेन बहुवचनातिरिक्तसकलमन्त्रस्य प्रत्येकावृत्तिप्रतीतेः, बहुवचनस्यापि तदनुरोधेनावृत्तिमङ्गीकृत्य पूजाद्यर्थत्वेन व्याख्यानं द्रष्टव्यम्।

**मण्डन**— 'मन्त्रस्तूपरवे पृथक्।' २०.

**शंकर**— 'तन्त्रं नोपरवेषु सः।' २०. स मन्त्रः।

**उपरवमन्त्रस्तन्त्रं स्याल्लोकवद् बहुवचनात्। ११।४।१९।५५॥**

ज्योतिष्टोमे 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति उपरवाणां खनने मन्त्रः। स किं सर्वोपरवेषु सकृत् आदौ प्रयोक्तव्यः प्रत्युपरवं वेति विचारे पूर्वपक्षमाह ? उपरवमन्त्रः तन्त्रं स्यात्। 'वैष्णवान्' इति बहुवचनात्। बहुवचनान्तो मन्त्रः। तस्मात् तन्त्रम्। लोकवत्, यथा लोके बहुवचनं एकस्मिन्नर्थे असमर्थं एवमत्रापि। तस्मात् तन्त्रम्।

**न संनिपातित्वादसंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनम्। ५६॥**

सिद्धान्ती आह। न उपरवमन्त्रस्य तन्त्रता, किंतु प्रत्युपरवं मन्त्रावृत्तिः कर्तव्या, संनिपातित्वात् खननकर्मणः। मन्त्रस्य च संनिपत्योपकारकत्वात् अनुष्ठेयार्थस्मरणद्वारा अदृष्टजनकत्वात्। ये तु असंनिपातिनां संनिपातिभिन्नानां संनिपत्योपकारिभिन्नानां आरादुपकारकाणां कर्मणां साक्षाददृष्टजनकानां मन्त्राः, यथा सुब्रह्मण्याह्वाने 'देवा ब्रह्माणः' इति औपवसथ्येऽहनि, तेषां एककालत्वात् 'अस्य मन्त्रस्य अनेनैव कर्मणा संबन्धः' इति विशेषाग्रहणे विशेषज्ञानाभावे सकृत् वचनं स्यात्। प्रकृते तु उपरवखननकर्मणां भिन्नकालत्वात् विशेषसंबन्धो गृह्यते। तस्मात् उपरवमन्त्रस्य प्रत्युपरवखननं आवृत्तिः। **के.**

* **उपरवमन्त्रस्य** प्रत्युपरवखननं आवृत्तिर्ज्योतिष्टोमे। **भा.** ११।४।१९।५५–५६.

* **उपरिधारणं** स्रुग्दण्डोपरि समिद्धारणं अपूर्वत्वाद्विधीयते। तस्य च प्रेताग्निहोत्रादुत्कर्षः। **वि.** ३।४।५.

**उपरिधारणन्यायः**। प्रेताग्निहोत्रे श्रुतस्य उपरिसमिद्धारणस्य दैवे कर्मणि विधिः, न तु अधस्तात्समिद्धारणशेषार्थवादत्वम्॥

**विधिस्तु धारणेऽपूर्वत्वात्। ३।४। षट्सूत्र्याम्। ६, वि. १५॥**

**वा**— इदानीं एवंविध– (यत्–हि–इत्यादि–) शब्दाभावे अनुवादत्वस्यातिप्रसक्तस्यापवाद आरभ्यते। तत्रैव दिष्टगताग्निहोत्रे महापितृयज्ञे वा श्रूयते 'अधस्तात् समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति। तत्र 'उपरि हि देवेभ्यः' इत्यत्र पूर्ववदेव विध्यनुवादत्वसंदेहे हिशब्दयोगात्, वर्तमानापदेशात्, विध्यन्तरेण चैकवाक्यत्वात्, आचारतश्च प्राप्तेः, अनुवादः इति प्राप्नोति। कथमाचारतः प्राप्तिरिति चेत्, उच्यते। '**सर्वमभ्यर्हितं द्रव्यं प्रच्छादनमपेक्षते। यत्र क चन च प्राप्ते समित् तत्र नियम्यते॥**'

देवार्थस्य स्रुचि प्रक्षितस्य हविषः आहवनीयदेशं नीयमानस्य अवश्यमेव हस्तो वा अन्यद्वा किं चित् द्रव्यं आचारादुपरि दातव्यम्। तत्र प्रत्यासत्तेः समिन्नियम्यते 'स्रुग्दण्डे समिधमुपगृह्य अनुद्रवति' इति चास्यापि विधेः आचारापेक्षितार्थविधानात् एतदेव फलं विज्ञायते। तस्मात् 'उपरि धारयति' इति प्राप्तस्य उपवीतादेरिवानुवादः 'सतो वा लिङ्गदर्शनं' (इति पूर्वन्यायात्)। इति प्राप्तेऽभिधीयते। '**धारणे विधिरेव स्यान्न हि प्राप्तिः कुतश्चन। समित्प्रच्छादनाशक्तेर्नाचारादुपरिस्थता**॥' सत्यं आचारात् प्रच्छादनं कर्तव्यं, न तु तत्र समित् पक्षेऽपि प्राप्नोति, या संनिधेर्नियम्येत। हस्तादेव हि तत्र योग्यत्वात् प्राप्नुयात् न समित्। ननु च सोमचमसादीनां वचनसामर्थ्यात् या का चित् आनत्यर्थता भवति, एवमत्रापि या का चित् प्रच्छित्तिर्भविष्यतीति। भवेदेवं यदि तदीयदक्षिणासंयोगवत् इहापि प्रच्छादनसंयोगः श्रूयेत, न तु श्रूयते, उपसंग्रहमात्रविधानात्। यदि सोमचमसेऽपि दक्षिणासंयोगरहितं दानमात्रमश्रोष्यत, ततो नैव आनत्यर्थत्वमाश्रयिष्यत। 'स्रुग्दण्डे' इति च देशनियमात् सुतरां हविषः प्रागसौ धारयितव्या। तेन उपरिधारणमप्राप्तम्। न चाप्राप्तं हेतुवन्निगदेन वर्तमानापदेशेन वा अनुवदितुं शक्यम्। अतोऽस्य व्यवधारणकल्पनया अनुवादसरूपत्वं भङ्क्त्वा वाक्यं भित्त्वा विधित्वमाश्रीयते। पित्र्ये होमे अधस्तात् स्रुग्दण्डस्य समित् धारयितव्या, दैवे च पुनः उपरिष्टात् इति। विधित्वे च एवमादीनां उक्तः कल्पनाप्रकारः। तस्माद्विधिरिति। पृ. ८९७-८९९.

**सोम**— **न च** यथा 'औदुम्बरः सोमचमसो दक्षिणा' 'अश्वः श्यावो दक्षिणा' इत्यादौ साकल्येन ऋत्विगानत्यसमर्थस्यापि चमसादेः वचनबलात् दक्षिणात्वं, एवमिहापि समिधः एव वचनबलात् आच्छादनार्थत्वमस्तु इति **वाच्यम्**। युक्तं तत्र दक्षिणाशब्दश्रवणात् असमर्थस्यापि दक्षिणात्वं, प्रकृते च आच्छादनशब्दाश्रवणात् अपेक्षितस्यापि असमर्थस्य अन्वयायोग्यतया अपेक्षितविधित्वार्थमपि आच्छादने समिन्नियमविध्यसंभवात् न वचनात् समिधः आच्छादनार्थत्वं इति वैषम्यम्। **प्रयोजनं** पूर्वपक्षे आचारप्राप्तप्रच्छादनार्थतया दृष्टार्थत्वात् समिद्धारणस्य, समिदलाभे अन्येन तत्कार्यं संपादनीयम्। सिद्धान्ते तु उपरि धारणस्यापूर्वत्वेन अदृष्टार्थविध्यङ्गीकारात् अन्यस्य तददृष्टजनकत्वे मानाभावात् नान्योपादानमित्याहुः।

**वि**— 'धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः। विधिर्वा, ऽऽद्यो धृतेः पित्र्ये प्रोक्तायाः पूर्ववत् स्तुतिः॥, ऊर्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः। अतो हिशब्दसंत्यागादपूर्वोऽर्थो विधीयते॥' ५.

**भाट्ट**— मृताग्निहोत्रे एव 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इति श्रुतेन किं उपरिधारणं दैवाग्निहोत्रे विधीयते, उतायमप्यनुवादः (उपवीतवत्) इति चिन्तायां, हिशब्दश्रवणात् विध्यन्तरैकवाक्यत्वाच्च 'उपरि हि' इत्यनुवादः पूर्वस्तुत्यर्थः। न च प्राप्त्यभावः 'स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवति' इति वचनेन स्रुग्दण्डस्य अधिकरणत्वप्रतीतेः उपरिधारणाभावे पतनप्रतिबन्धकत्वरूपतदयोगात् उपरिभावस्य प्राप्तेः। **न च** समित्स्रुग्दण्डयोरुभयोरपि कृतार्थत्वात् 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः' इतिवत् देशार्थत्वावधारणात् सप्तम्या सामीप्यमात्रलक्षणा इति केषां चिदुक्तं (प्रकाशकाराणां) **युक्तम्**। कृतार्थयोरङ्गाङ्गिभावाभावेऽपि अधिकरणत्वेनैव दृष्टान्ते इव स्रुग्दण्डस्य देशत्वोपपत्तेः। अतोऽत्राप्यनुवादः। **इति प्राप्ते**, स्रुग्दण्डस्य न तावत् ग्रहणे अधिकरणत्वं, हस्तादेरेव तदधिकरणत्वात् उपशब्दवैयर्थ्याच्च। नापि उपशब्दार्थे सामीप्ये, स्रुग्दण्डस्य सामीप्यप्रतियोगित्वेन अधिकरणत्वानुपपत्तेः। अतः सप्तमी सामीप्यप्रतियोगित्वलक्षणार्था। कथं चित् सामीप्याधिकरणत्वसंभवेऽपि वा समिदधिकरणत्वस्य अप्राप्तत्वात् नोपरिभावानुवादः। अतो हिशब्दपरित्यागेन एकवाक्यतामपि भङ्क्त्वा दैवाग्निहोत्रे उपरिभावनियमविधिः। वस्तुतस्तु अनियतप्राप्त्याऽपि एकवाक्यत्वसंभवे हविरुभयत्वादिवत् वाक्यभेदाङ्गीकारस्य अयुक्तत्वात् अस्यार्थवादत्वमेव अङ्गीकृत्य सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विध्यन्तरस्यैव अप्राप्तनियमफलकस्य कल्पना इति युक्तम्। वस्तुतस्तु 'स्रुग्दण्डे

निधाय समिधमनुद्रवति' इति न्यायसुधाकृल्लिखितवचनेन उपरिभावस्यापि लक्षणातात्पर्यग्राहकप्रमाणाभावेन प्राप्तत्वात् एतद्वचनाभावं कृत्वा चिन्तया इदमधिकरणं इति ध्येयम् । ३।४।५.

**शंकर**— 'विधेया तूपरि धृतिः।' ७.

* '**उपरि हि देवेभ्यो धारयति**' अयं विध्यन्तरशेषार्थवादकल्प्यः विधिः । **बाल.** पृ. १२.

**उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः । ११।३। १५।४८ ॥**

वाजपेये 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति श्रूयते । अयं प्राजापत्यप्रचारः सर्वेषां सोमानामुपरिष्टात् कर्तव्यः । अविशेषात् 'सोमानां' इत्युक्ते विशेषो न प्रतीयते । प्रकृतिकालः प्रकृतौ ज्योतिष्टोमे आर्भवकालः पशुप्रचारकालः । स प्रकृतिकालः चोदकेन प्राप्तत्वात् हि यस्मात् अवाच्यः न वक्तव्यः । तथा च 'सोमानामुपरिष्टात्' इति वचनात् सर्वेषां सोमानामुपरिष्टात् इति निश्चीयते । इति सिद्धान्तः ।

**अङ्गविपर्यासो विना वचनादिति चेत् । ४९ ॥**

पूर्वपक्षी शङ्कते । चोदकेन आर्भवपवमानकाले पशुप्रचारः, सर्वसोमानामुपरिष्टात् कृते तु अङ्गविपर्यासः अङ्गानां विपर्यासेन अनुष्ठानं विनैव वचनात् कृतं स्यात् तच्चायुक्तम् । इति चेत् ।

**नोत्कर्षः संयोगात्, कालमात्रमितरत्र । ५० ॥**

सिद्धान्ती आह । न अङ्गविपर्यासो दोषः 'सोमानामुपरिष्टात्' इति वचनात् पशुप्रचारे उत्कृष्यमाणे अनुयाजानां परिधिप्रहरणस्य चापि उत्कर्षः स्यात्, संयोगात् पशुप्रचारेण तेषां क्रमतः संयोगात् । अनुयाजाः परिधिप्रहरणं च पशोरङ्गम् । इतरत्र आग्निमारुते शस्त्रे हारियोजने च सोमे कालमात्रं 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' 'प्रहृत्य परिधीन् जुहोति हारियोजनं' इत्यत्र उक्तम् । नाङ्गाङ्गिभावः । तस्मात् सर्वसोमोत्तरं प्राजापत्यप्रचारः ।

**प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ।५१॥**

अन्यं पूर्वपक्षमाह । शस्त्रवतां सोमानामुपरिष्टात् तृतीयसवनगतवैश्वदेवादूर्ध्वं प्राजापत्यप्रचारः कर्तव्यः। एवं सति प्रकृतिगतस्य पशुकालस्य मुख्यस्यालाभेऽपि तत्संनिकर्षो लभ्यते । अङ्गविपर्ययश्च न स्यात्। प्रकृतेः पशोर्यः कालः, तस्य आसत्तिः संनिकर्षः, तस्मात् हेतोः इति शब्दार्थः । इति चेत् कश्चित् ब्रूयात् ।

**न, श्रुतिविप्रतिषेधात् । ५२ ॥**

इमं पूर्वपक्षं अन्यपूर्वपक्षवादी दूषयति । न आसत्त्या संनिकर्षेण प्राकृतः कालो लभ्यते । किंच 'उपरिष्टात् सोमानां' इति अविशेषश्रुत्या विप्रतिषेधो भवति । न सर्वे सोमाः शस्त्रवन्तः । तथा च केषां चित् सोमानां अधस्तादयं प्रचारः स्यात् इति विप्रतिषेधः विरोधः ।

**विकारस्थान इति चेत् । ५३ ॥**

अपरः पूर्वपक्षवादी आह । विकारस्थाने अग्निष्टोमविकारस्य उक्थ्यादेः यत् स्थानं अग्निष्टोमप्रचारादूर्ध्वं, तत्र प्राजापत्यपशुप्रचारो भवतु । इति चेत् ।

**न, चोदनापृथक्त्वात् । ५४ ॥**

सिद्धान्ती आह । न विकारस्थाने प्रचारः । चोदनापृथक्त्वात् कर्मपृथक्त्वात् । सौमिकं पाशुकं च भिन्ने कर्मणी । विकारस्थानं तु सौमिकानां, न पाशुकानाम् । तस्मात् वाजपेये सर्वसोमोत्तरमेव प्राजापत्याङ्गप्रचारः इति सिद्धान्तः । **के.**

* **उपरिष्टाद्बृहती** बृहती । पादेषु अक्षराणि ८।८। ८।१२ उदा० ये पातयन्ते० । (ऋसं. ८।४६।१८) **के.**

* **उपलक्षणं** कार्ययोगि न भवति । **वा.** ३।१।१५। २७ पृ. ७४५. * उपलक्षणं 'विशिष्टप्रतीतावपि' इत्यत्र द्रष्टव्यम्। **के.** * **उपलक्षणानि** । न चोपलक्षणानि यथाश्रुतान्येव उपांशुयाजान्तरालकाललक्षणार्थपुरोडाशद्वयवत् कार्येषु आश्रीयन्ते । उपलक्षणकार्ययोर्मिथः संबन्धाभावात् साधारणत्वम् । **वा.** ३।१।१५।२६. * **उपलक्षणानां** विशेषणविशेष्यत्वायोगः 'अविशिष्टं हि लक्षणं' इति न्यायेन (३।१।७।१४) । **सु.** पृ. ११२२.

* **उपलक्षणापायेऽपि** उपलक्ष्यं गृह्यते । यथा वक्ष्यति 'अनपायश्च कालस्य, लक्षणं हि पुरोडाशौ' इति । **वा.** २।२।४।१२.

**उपलक्षणापायेऽपि उपलक्ष्यानपायः इति न्यायः** प्रतिदिनं शङ्खवेलायामागन्तव्यं इत्यादौ प्रसिद्धः। नहि कालविशेषोपलक्षणतया उपात्ते शङ्खध्वनौ क्वचित् दिवसे दैवादकृते सति तदुपलक्षितः कालो नास्तीति अवगम्यते। **रसायन.** पृ. २१-२२। अयमेव उपलक्ष्यानपायन्यायः। लक्ष्यानपायन्यायश्च। 'उपांशुयाजः एकपुरोडाशायामपि पौर्णमास्याम्' इति बिन्दौ अस्याधिकरणम्।

**उपलक्षणीयानपायन्यायः** (१०।८।१८।६९)। अयमेव लक्ष्यानपायन्यायः। 'वस्तुतः उक्थ्यानन्तरस्य पश्चात् संपत्तावपि पूर्वमपि उपलक्षणीयानपायन्यायेन संभवमात्रेण पूर्वपक्षप्रवृत्त्युपपत्तेः। यदि च वस्तुतः कालविधेः उपलक्षणानपायन्यायेन अनुत्कर्षस्थलीयसमयविशेषे एव तात्पर्यात् उत्कर्षे कालबाधस्तदा नायं कालविधिः 'तं पराञ्चमुक्थ्येभ्यः' इति। **सोम.** ५।१।१८.

* **उपलक्षणोपन्यासे** विशेषणस्य दृष्टान्तता न युक्ता इति यत्तु, तत् उपलक्षणस्यापि विशेषकत्वान्न चोद्यम्। यद्वा केन चित् सामान्येन दृष्टान्तता भविष्यति अनभिधेयत्वेन विशेषकत्वेन वेत्यदुष्टम्। **वा.** १।३।९।२३ पृ. २१८.

**उपलक्ष्यानपायन्यायः**। 'उपलक्षणापायेऽपि उपलक्ष्यानपायः' इति न्याये द्रष्टव्यम्।

* **उपलब्धं** हि अनुपलभ्यमानं नास्तीत्यस्य ज्ञानस्य गोचरतामापद्यते। नहि अत्यन्तानुपलभ्यमानं नास्तीति ग्रहमास्कन्दति। **बृहती.** पृ. २४८.

* **उपला**। दृषदुपलयोः प्रोक्षणं अपूर्वप्रयुक्तमेव न हन्तिपिषिप्रयुक्तम्। **भा.** ९।१।२।२-३.

* **'उपवतीं** रथंतरपृष्ठस्य प्रतिपदं कुर्यात्।' उपवती उपशब्दयुक्ता ऋक्। 'उपास्मै गायता नरः'। इति। **वि.** १०।५।१६.

**उपवत्यग्रवत्योर्नैमित्तिकयोः प्राकृतयोः पृष्ठप्रतिपदोः संसवादिविकृतौ नानुष्ठानम्॥**

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात्।** १०।५।१६।५९॥

**भाष्यम्**— सन्त्युभयसामानः क्रतवः, 'संसवे उभे कुर्यात्'। अपचितावप्येकाहे श्रूयते 'उभे बृहद्रथंतरे कुर्यात्' इति। तत्रास्ति रथंतरनिमित्तकं बृहन्निमित्तकं च, 'उपवतीं रथंतरपृष्ठस्य प्रतिपदं कुर्यादग्रियवतीं बृहत्पृष्ठस्य' इति। तत्रैषोऽर्थः सांशयिकः किं रथंतरनिमित्तकं बृहन्निमित्तकं वा कार्यं, विकल्पः, अथवा रथंतरनिमित्तकं कर्तव्यं, अथवा अन्यनिमित्तकमेव कर्तव्यम्। किं प्राप्तम्? अन्यतरनिमित्तकं कर्तव्यं, विकल्पः इति। कुतः? समा प्राप्तिः। विरुद्धश्च समुच्चयः। नहि विनिगमनायां हेतुरस्ति, एवंनिमित्तकं कर्तव्यं, नैवंनिमित्तकमिति। न च द्वे प्रतिपदौ शक्येते कर्तुम्। तस्माद्विकल्पः।

**मुख्येन वा नियम्येत। ६०॥**

**भाष्यम्**— यदुक्तं, समा प्राप्तिः, नास्ति विनिगमनायां हेतुरिति। अस्तीति ब्रूमः। मुख्यत्वं नाम रथंतरस्य प्रथमाधीतत्वम्। तदुक्तं, मुख्यं वा पूर्वचोदनाल्लोकवदिति (१२।२।८।२३)।

**निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात्। ६१॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति। द्वयोरपि निमित्तयोर्विघातः स्यात्। क्रतुनिमित्तमेवाश्रीयते। तथा सति नैतद्रथंतरपृष्ठं, न बृहत्पृष्ठम्। बृहद्रथंतराभ्यामुभाभ्यां तत्र पृष्ठनिर्वृत्तिः। तस्मान्नोपवती प्रतिपत्, नाग्रियवती। अन्यैव क्रतुनिमित्ता भवितुमर्हतीति।

**सोम**— कावस्य (नाम साम्नः) पृष्ठसंबन्धाभावात् अग्रतानिमित्तत्वासंभवेऽपि संसवादिगतयोः बृहद्रथंतरयोः पृष्ठसंबन्धात् प्रतिपन्निमित्तत्वसंभवः इत्युत्थितेः प्रत्युदाहरणसंगतिः।

**वि**— 'उपवत्यग्रवत्यौ स्तो गोसवे यदि वा नहि। आद्ये विकल्प आहोस्विदुपवत्येव केवला॥, विकल्पो द्विनिमित्तत्वाद् व्याघातः स्यात् समुच्चये। रथंतरस्य मुख्यत्वादुपवत्येव युज्यते॥, एकैकस्य निमित्तत्वं प्रकृतावत्र तु द्वये। मिलिते पृष्ठता तस्मान्निर्निमित्ते उभे नहि॥' प्राकृतस्य निमित्तस्यात्राभावेन नैमित्तिके प्रतिपदावपि न

स्तः । ( ‘ उपास्मै गायता नरः ’ इति उपवती ऋक्, ‘ प्रयुजो वाचो अग्रियः ’ इति अग्रियवती ऋक् । के. )

**भाट्ट** — संसवादिवैकृतक्रतौ प्रकृतिप्राप्तयोर्बृहद्रथंतरसाम्नोः समुच्चयः श्रूयते ‘ संसव उभे बृहद्रथंतरे कुर्यात् ’ इति । तत्र यन्मते तावत् द्वयोर्विकल्पेन एकपृष्ठस्तोत्रसाधनत्वं, तन्मते द्वयोरेकस्मिन्नेव स्तोत्रे समुच्चयात्, सप्तदशस्तोमके एकस्मिन्नेव स्तोत्रे विभागेन साम्नोस्तदाश्रयर्चोश्च पाठः अभ्यासेनेत्यविवादमेव । स च विभागः केषु चित्पर्यायेषु रथंतरं, केषु चित् बृहदिति कल्पसूत्रकारवचनादवगन्तव्यः । यन्मते तु सामद्वयसाध्यपृष्ठस्तोत्रभेदः, तन्मतेऽपि न स्तोत्रयोः समुच्चयः, येन सप्तदशस्तोमकस्तोत्रद्वयानुष्ठानं शङ्क्येत । अपि तु विकल्पेन प्राप्तयोरेव स्तोत्रयोरेकस्मिन् कस्मिंश्चित् स्तोत्रे सामद्वयस्य तदाश्रयर्चोश्च समुच्चयविशिष्टयोर्विधिः । अतस्तन्मतेऽपि नानुष्ठाने भेदः इति ध्येयम् । अत एव ये सामधर्माः संमीलनादयस्ते तत्तत्काले कार्या इति तेषामपि समुच्चयः एव । ये तु केचिद्विरुद्धाः, तेषां विकल्पः इत्यप्यविवादमेव । ये तु बृहत्सामकत्वे रथंतरसामकत्वे वा निमित्ते अन्याङ्गत्वेन विहिताः, यथा ऐन्द्रवायवाग्रत्वशुक्राग्रत्वादयः, यथा वा ‘ अग्रवतीं बृहत्पृष्ठस्य प्रतिपदं कुर्यात्, उपवतीं रथंतरपृष्ठस्य ’ इति । अत्र हि बृहत्साध्यं पृष्ठं यस्येति बहुव्रीहिणा ज्योतिष्टोमगतबृहत्पृष्ठत्वे निमित्ते बहिष्पवमानावान्तरप्रकरणात् तद्गतप्रतिपदुद्देशेनाग्रवती विधीयते । षष्ठ्या चोद्देश्यत्वासंभवात् निमित्तत्वप्रतीतिः । ते इह संसवादौ कार्या न वेति सन्देहे निमित्तद्वयसत्त्वात् नैमित्तिकद्वयमपि प्राप्तम् । समुच्चयासंभवाद्विकल्पः । **इति प्राप्ते**, यदिशब्दाद्युपात्तस्य निमित्तत्वस्य कादाचित्कत्वव्याप्तत्वात् कादाचित्कत्वस्य च बृहद्रथंतरयोरन्योन्यविरोधप्रयुक्तत्वात् बृहद्विरोधिनो रथंतरस्य रथंतरविरोधिनो वा बृहतो निमित्तता प्रकृतौ अवगम्यते । अत एव अन्योन्यविरोधस्य निमित्तस्वभावबललभ्यत्वात् न तद्विवक्षाकृतो वाक्यभेदोऽपि । विरोधिता च क्व चिद्वैकल्पिकत्वात् क्व चिद्बाधकत्वाच्च । अत एव उभयत्रैव निमित्तता यथा प्रकृतौ, वैकल्पिकत्वात् विकृतावपि । यत्रैकतरनियमः, तत्र बाधकत्वाद्विरोधिता । यत्र तु द्विविधविरोधिताऽभावः, तत्र सत्यपि रथंतरत्वादौ न तस्य निमित्तता । अत एव विश्वजिदादौ ‘ पवमाने रथंतरं, आर्भवे बृहत् ’ इत्यादिना स्तोत्रान्तरे तत्सत्त्वेऽपि नैन्द्रवायवाग्रत्वादिनियमः । अतश्च तद्वदेव संसवादौ विरोधाभावेन निमित्ताभावान्न नैमित्तिका धर्माः । निरूपितं चैतत् **कौस्तुभे** रथंतरचरणे । अतश्च तत्रानियता अग्राग्रता, अनियता च या का चित्प्रतिपदिति द्रष्टव्यम् ।

**मण्डन** — ‘ क्रत्वाश्रयस्तूभयसामके स्यात् । ’ १७.

**शंकर** — ‘ द्व्यसामा स्वधर्मयुक् । ’ १८.

* **उपवर्षेण** देवतोद्देश–द्रव्यत्यागप्रक्षेपाख्यधात्वर्थत्रयसमुदायरूपं जुहोत्यर्थं प्रति देवताया द्रव्यस्य वा कर्मत्वायोगात् जुहोतियोगे कर्मणि द्वितीयाऽनुपपत्तेः तृतीयाऽर्थवाचिता उक्ता । सु. पृ. ६३२, * उपवर्षेण धात्वर्थानपेक्षस्य गुणस्य भावनाऽवच्छेदकत्वायोगात् होमद्वारा फलसाधनता उक्ता । पृ. ८४६.

**⌛ उपवादश्च तद्वत् । १०।८।६।९ ॥**

आधाने वारवन्तीययज्ञायज्ञीयवामदेव्यानि सामानि विधाय ‘ उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति ’ इति सामगानस्य उपवादः निन्दा कृता । उपवीताः अचिरान्नष्टाः । ब्रह्मा ब्राह्मणः उद्गाता इत्यर्थः । अयमुपवादः तद्वत् ‘ शिष्ट्वा तु प्रतिषेधः स्यात् ’ ( १०।८।३।६ ) इत्यधिकरणोक्तषोडशिग्रहणनिषेधवत् विकल्पार्थः स्यात् । तस्मात् आधाने सामगानविकल्पः इति सिद्धान्तः ।

**प्रतिषेधादकर्मेति चेत् । १० ॥**

शङ्कते । आधाने साम्नां गानस्य न विकल्पः, किंतु अकर्म अकरणमेव । आधाने साम नैव गातव्यम् । ‘ उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति ’ इति सामगानस्य प्रतिषेधात् । इति चेत् ।

**न, शब्दपूर्वत्वात् । ११ ॥**

सिद्धान्ती आह । न आधाने सामगानस्य सर्वथा निषेधः । शब्दपूर्वत्वात् विधिपूर्वकत्वात् प्रतिषेधस्य । तथा च विधानात् प्रतिषेधाच्च विकल्प एव । **के.**

▩ **उपवादाधिकरणम्** । आधाने सामगानं वैकल्पिकम् ॥

**उपवादश्च तद्वत्** । १०।८।६।९ ॥

**भाष्यम्**— अस्त्याधानम् । तत्रेदमामनन्ति 'य एवं विद्वान् वारवन्तीयं गायति' 'य एवं विद्वान् यज्ञायज्ञीयं गायति' 'य एवं विद्वान् वामदेव्यं गायति' इति । तत्रेदमाम्नायते 'उपवीताः (अचिरान्नष्टाः) वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति । तत्रायमर्थः सांशयिकः, किं अयमुपवादः प्रतिषेधार्थः, उत पर्युदासार्थः, उत अर्थवादार्थः इति । किं प्राप्तम् ? न पर्युदासः, ब्रह्मणः अप्राप्तत्वात् । असतो वचनं अर्थवादार्थं भवति । यथा 'प्रजापतिर्वा एक आसीत्, स आत्मनो वपामुदक्खिदत्' इति । **एवं प्राप्ते, ब्रूमः** । न ब्रह्मणः उपवादः कस्य चिदर्थवादः संभवति । न च वाक्यान्तरस्थेनार्थवादेन किं चिदपि प्रयोजनमस्ति । तस्मात् उपवादस्तद्वत् । किंवत् ? यथा 'अतिरात्रे गृह्णाति षोडशिनं' इति विधाय प्रतिषेधार्थं स्यात् । कथं ? ब्रह्मणो गानं नैव प्राप्तं इति ब्रह्मगानप्रतिषेधार्थं वचनं नावकल्पते । तस्मात् ब्रह्मग्रहणमविवक्षितम् । सामगानप्रतिषेध एवैष स्यात् । ब्रह्मशब्दः प्रमादपाठ इति चेत्, नैतदेवम् । ब्राह्मणवाचित्वात् उद्गात्रभिधानं भविष्यति ।

**प्रतिषेधादकर्मेति चेत्** । १० ॥

**भाष्यम्** — इति चेत् दृश्यते सामगानस्यैव निन्देति । अकर्म सामगानस्य । नहि निन्दितं कर्तव्यं भवतीति ।

**न, शब्दपूर्वत्वात्** । ११ ॥

**भाष्यम्**— नैतदेवम् । यथैव हि निन्दया न कर्तव्यमिति गम्यते, एवं उपदेशात् कर्तव्यं इति गम्यते । न च अन्यत् कर्तव्यं इति कश्चित् विधिः प्रकल्पते, यस्य प्रशंसार्थं निन्द्येत । तस्मादनुष्ठातुं विधिः, वर्जयितुमुपवादः इति ।

**सोम**— पूर्ववदुत्थानात् (दृष्टान्त–) **संगतिः** । **यद्यपि** 'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति भाष्योदाहृते वाक्ये उपशब्दः सामीप्यमाह । वीताः गताः । कालविलम्बमन्तरेण गता भवन्तीत्यर्थः । तथा च तत्र निन्दैव श्रूयते, न प्रतिषेधः । अत एव सूत्रेऽपि निन्दाऽर्थकः उपवादशब्द एव प्रयुक्तः, **तथापि** निन्दया प्रतिषेधो गम्यते इत्याशयेनोदाहृतमिति ध्येयम् । 'न ब्रह्मा सामानि' इति ब्रह्मशब्दः ब्राह्मणपरः सन् उद्गातुरनुवादकः । तथा च 'न गायेत्' इति स्वरूपेण गानमेव निषिध्यते । प्रतिषेध्यस्य च गानस्य वस्तुतो ब्राह्मण उद्गाता कर्ता इति ब्रह्मशब्दोऽनुवादः । **सूत्रे** तद्वत् ग्रहणाग्रहणवत् इत्यर्थः ।

**वि**— 'उन्नेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः । विकल्पितो वा, शून्योऽपि वपोत्खेदे इव स्तुतिः ॥, विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति । विषयैक्याद् विकल्पोऽत्र षोडशिग्रहवन्मतः ॥ '. विधिनिषेधाभ्यां एकविषयाभ्यां उद्गातुर्गानं विकल्प्यते ।

**भाट्ट**— आधाने 'वारवन्तीयं गायति' 'वामदेव्यं गायति' 'यज्ञायज्ञीयं गायति' इति सामानि विहितानि । ततो 'न ब्रह्मा सामानि गायति' इति श्रुतम् । तत्रायं न तावत् ब्रह्मकर्तृकत्वप्रतिषेधः पर्युदासो वा, ब्रह्मणो विध्यभावेन प्राप्त्यभावात् तदुभयानुपपत्तेः । आधानसामसु हि **यद्यपि** यजुर्वेदविहितत्वात् विनियोगविधिवेदनिबन्धनः अध्वर्युरेव कर्ता न्यायेन स्वरवत् प्राप्नोति, **तथापि** वाचनिकोद्गातृकर्तृकत्वान्न ब्रह्मकर्तृकत्वम् । अतोऽयं ब्रह्मा ब्राह्मणः इति व्युत्पत्त्या उद्गातारमेव ब्रह्मशब्देन अनूद्य गाननिषेधः एव इति गानस्यैव विकल्पः । **यदाऽपि** कल्पसूत्राद्यनुसारात् ब्रह्माऽपि उद्गात्रा सह वैकल्पिको विहितः, **तदाऽपि** तेनैव ब्रह्मणो विकल्पसिद्धेः नानेन ब्रह्मणो निषेधः, वैयर्थ्यात् । अतः तदाऽपि अयं गाननिषेध एव तद्विकल्पसिद्ध्यर्थः इति ध्येयम् ।

**मण्डन**— 'साम्नां विकल्प आधाने ।' ७.

**शंकर**— 'अग्न्याधेये च साम यत् ।' तत्र नित्यम् ।

※ **उपवापस्य** तुषोपवापस्य पुरोडाशकपालप्रयोजकत्वं नास्ति दर्शपूर्णमासयोः । **भा.** ४।१।११।२६.

* **उपवासः** । ज्योतिष्टोमे ' सर्वर्त्विज उपवसन्ति ' इति ऋत्विजामुपवासो विधीयते । **भा.** १०।६।१५।५३.

**उपवासाद्वरं भिक्षेति न्यायः** । अत्र वरमिति सामान्ये नपुंसकम् । यथोपवासाद्भिक्षा श्रेष्ठाऽस्ति भिक्षायाः क्लेशजनकत्वेऽपि हि उपवासस्य अधिकदुःखप्रदस्यापेक्षया इष्टत्वेन यथा वरत्वं, तथा क्लेशदायकतारतम्येन बहुदुःखदायकाऽपेक्षया स्वल्पदुःखदायकस्य वरत्वं यत्रोपदिश्यते तत्रायं प्रवर्तते । तथा च येषां पामराणां तत्त्वमस्यादिमहावाक्यजन्याभेदज्ञानं कुतश्चित्प्रतिबन्धवशात् भूयोभूयः श्रूयमाणमपि न बुद्धिमारोहति, तैः प्रकृतन्यायेन पामरव्यवहृतेर्वरं कर्माद्यनुष्ठानं, ततोऽपि सगुणोपासनं कार्यमेव । ततः शुद्धान्तःकरणे जाते भवत्येव ज्ञानमित्याद्युक्तं पञ्चदशीग्रन्थे ' उपवासाद्यथा भिक्षा वरं ध्यानं तथाऽन्यतः ' इत्यादि । **साहस्री.** १४३.

* **उपवासरूपं** तपो याजमानं, नार्त्विजम् । तपोऽधिकरणम् । **भा.** ३।८।३।९-११.

* **उपवीतं** अदृष्टार्थम् । **भा.** १०।४।१।१ वर्णकं १, * उपवीतम् । कर्तुश्च वासोविन्यासमात्रं गुणो भवति उपवीतं नाम । ३।१।११।२१, * उपवीतं कृत्स्ने दर्शपूर्णमासप्रकरणे निविशते, न सामिधेनीष्वेव । ३।१।११।२१. * उपवीतं दर्शपूर्णमासाङ्गम् । **वि.** ३।४।२, * उपवीतं दैविके कर्मणि । ३।४।१, * उपवीतं ' नित्योदकी नित्ययज्ञोपवीती ' इति स्मृतिविहितं पुरुषार्थम् । ३।४।३. * उपवीतं- यज्ञोपवीतम् । अन्यथा उपवीतं, अन्यथा यज्ञोपवीतम् । उपवीतं हि कर्तुर्वासोविन्यासः, यज्ञोपवीतं तु सूत्रस्य विन्यासविशेषः, तत् समाचारतः सर्वकर्मार्थं प्राप्तं, उपवीतं तु प्रकरणात् दर्शपूर्णमासयोरेव, यज्ञोपवीतेन चास्याविरोधात् समुच्चयः इति टुप्टीकायां वार्तिककृतोक्तत्वात्, ' संदिग्धे व्यवायाद्वाक्यभेदः स्यात् ' इत्यत्र च ( ३।१।११।२१ ) ' कर्तुश्च वासोविन्यासमात्रं गुणो भवति उपवीतं नाम ' ( पृ. ७३३. ) इति भाष्यकृतोक्तत्वात् नानेन ( उपव्ययते इत्यनेन ) ब्रह्मसूत्रं विधीयते । ' शिष्टाकोपाधिकरणे तु ' ( १।३।३।५ ) ' यज्ञोपवीत्येवाधीयीत अध्यापयेद्यजेत याजयेद्वा ' इत्यनेनैव च ब्रह्मसूत्रस्य श्रौतत्वसिद्धिः । **सु.** पृ. १३५६. * उपवीतम् । ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इति स्तुतिरेषा ' प्राचीनावीती दोहयेत् ' इत्यस्य प्रेताग्निहोत्रगतविधेः । **वि.** ३।४।२.

**उपवीतं लिङ्गदर्शनात् सर्वधर्मः स्यात् ।** ३।४।२।१, **वि.** १० ॥

इदं सूत्रमारभ्य षट्सूत्री भाष्यकारैर्न व्याख्याता । वार्तिककारैस्तु व्याख्याता । विस्तरादौ च एतदादिसूत्रद्वयात्मकं द्वितीयमधिकरणम् । दर्शपूर्णमासप्रकरणे ' उपव्ययते ' इति उपवीतं श्रुतम् । तत् किं सर्वकर्माङ्गं दर्शपूर्णमासाङ्गमेवेति चिन्तायां पूर्वपक्षमाह । श्रुतमुपवीतं सर्वधर्मः स्यात् सर्वेषां कर्मणां धर्मः अङ्गं स्यात् । कुतः लिङ्गदर्शनात्, प्रेताग्निहोत्रप्रकरणे ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इति प्राचीनावीतस्तुत्यर्थतया उपवीतानुवादस्य लिङ्गस्य दर्शनात् । उपवीतस्य दर्शपूर्णमासार्थत्वे तु नायमनुवादः संगच्छेत, जीवदग्निहोत्रदोहविषयत्वात्तस्य । सर्वकर्मार्थत्वे तु अग्निहोत्रस्यापि कर्मत्वात् अनुवादोपपत्तिः । तस्मात् उपवीतं सर्वधर्मः स्यात् ।

**न वा, प्रकरणात् तस्य दर्शनम् । २। वि. ११ ॥**

उपवीतं सर्वकर्मार्थं इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयति । उपवीतं न सर्वधर्मः, न सर्वकर्माङ्गमिति विधीयते । किंतु दर्शपूर्णमासाङ्गमेव । प्रकरणात् दर्शपूर्णमासयोः प्रकरणे पठितत्वात् । यत्तु मृताग्निहोत्रे ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इति लिङ्गमुक्तं, तत्तु तस्य दर्शपूर्णमासगतस्यैव दोहसंबन्धिनः उपवीतस्यानुवादात् दर्शनम् । सर्वकर्मार्थत्वे न तत् लिङ्गम् । कुतूहले तु अप्रकरणात् इत्यपि पदच्छेदः स्वीकृतः । तस्मात् उपवीतं दर्शपूर्णमासाङ्गमेव न सर्वधर्म इति सिद्धान्तः । **के.**

* **उपवीतस्य** अतिदिष्टस्य उपदिष्टेन निवीतेन समुच्चयः श्येने । **भा.** १०।४।१।१-२ वर्णकं १. * उपवीतस्य कण्ठबन्धः प्रायेणाप्राप्त एव, इत्यस्ति नियमविधेरवकाशः । **वा.** ३।४।१।३. * उपवीतस्य काम्यसामिधेनीसंनिधिना काम्यसामिधेन्यङ्गतायाः प्रकरणावगतेन दर्श-

पूर्णमासाङ्गत्वेन बाधः । सु. पृ. १०५९. * उपवीतस्य ( तद्वाक्यस्य ) न सामिधेनीभिः ( तद्वाक्येन ) एकवाक्यता । भा. ३।१।११।२१ पृ. ७३५. * उपवीतस्य पुरुषार्थस्य स्मृत्या प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात् ' उपव्ययते ' इति पञ्चमलकारेण विधिः । वि. ३।४।३.

* **उपवीतविधेः** निवीतश्रुतिः अर्थवादः । शा. ३।४।१.

* **उपवीतशब्दस्य** सव्योत्तरदक्षिणाधरवासोविन्यासवाचिता । सु. पृ. १३५३.

* **उपवीतनिवीतयोः** समुच्चयः श्येने । न च निवीतोपवीतयोर्विरोधः शङ्कनीयः, वासोभ्यां तदुभयोपपत्तेः । वि. १०।४।१.

**उपवीताधिकरणम्** । उपवीतं दर्शपूर्णमासाङ्गम् ।। ( षट्सूत्रीगतमिदम् । )

**उपवीतं लिङ्गदर्शनात् सर्वधर्मः स्यात् । १। वि. ३।४।२।१० ॥**

**वा**— अतः परं षट् सूत्राणि भाष्यकारेण न लिखितानि । तत्र व्याख्यातारो विवदन्ते । के चिदाहुः विस्मृतानि । लिखितो ग्रन्थः प्रलीन इत्यपरे । फल्गुत्वात् उपेक्षितानि इत्यन्ये । अनार्षेयत्वात् इत्यपरे । तथा च ' दिग्विभागश्च तद्वत् ' इति निवीताधिकरणातिदेशः तदानन्तर्यादुपपद्यते इति । वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यातानि । सन्ति च जैमिनेः एवंप्रकाराण्यपि अनत्यन्तसारभूतानि सूत्राणि । व्यवहितातिदेशाश्च ' पानव्यापच्च तद्वत् ' ( ३।४।१२।३२ ) इत्यादिषु आश्रिताः । तस्मात् सूत्रमात्रं व्याख्येयम् ।

तत्र कैश्चित् त्रीण्यधिकरणानि कल्पितानि , अपरैश्चत्वारि ।

प्रथमं तावदिदं चिन्त्यते । यदेतत् पूर्वाधिकरणे दर्शपूर्णमासयोः विधीयमानत्वेन उपवीतमुदाहृतं , तत्र संदेहः किं तत् दर्शपूर्णमासयोरेव अवतिष्ठते , अथवा सर्वकर्मार्थमिति । ये तु अधिकरणत्रयं समर्थयन्ते, तेषामेवं संदेहः किं दर्शपूर्णमासयोरवस्थानं विधिश्च, अथ सर्वकर्मार्थत्वं अनुवादश्चेति । किं प्राप्तम् ? सर्वधर्मः स्यात् । कुतः ? । ' **कर्मान्तरेऽनुवादोऽस्य सिद्धवद् यः प्रतीयते । सोऽन्यथानुपपत्त्यैतां लिङ्गत्वात् प्रक्रियां जयेत् ।।** ' मृताग्निहोत्रे हि पितृदेवत्ये श्रूयते ' प्राचीनावीती दोहयेत् । यज्ञोपवीती हि देवेभ्यो दोहयति ' इति । तद्यदि सर्वार्थमुपवीतं, ततोऽयं पित्र्ये अग्निहोत्रसंबन्धी नित्यवद्यज्ञोपवीतानुवादोऽवकल्पते । न चायं दर्शपूर्णमासस्थस्यैवानुवादः, विप्रकृष्टत्वात् हेतुवन्निगदार्थवादानर्थक्याच्च । यदि हि तस्मिन्नेव कर्मणि अन्यावस्थायां धर्मो भवति , ततश्च तदवस्थापरिजिहीर्षया हेतुवन्निगदोऽवकल्पते । न तु क्रत्वन्तरस्थं परिहर्तव्यं अत्यन्तविप्रकर्षेणैव अप्रसक्तत्वात् । न च देवेभ्य इति बहुवचनं दर्शपूर्णमासयोरवकल्पते , वैकल्पिकेन्द्रमहेन्द्रैकदेवत्यत्वात् सांनाय्यस्य । अग्निहोत्रे तु सायंप्रातर्देवतालोचनेन उपपन्नं बहुत्वम् । तस्मादग्निहोत्रस्थोपवीतानुवादान्यथाऽनुपपत्तेः सर्वधर्मत्वमिति ।

**न वा , प्रकरणात्तस्य दर्शनम् । २ ॥**

**वा**— न वा सर्वधर्मः । कुतः ? प्रकरणात् दर्शपौर्णमासार्थत्वप्रतीतेः । अथ यदुक्तं लिङ्गदर्शनादिति । परिहृतं तत् । तस्यैव एतद्दर्शनं दर्शपूर्णमासस्थस्येति । संनिकृष्टानुवादासंभवे च विप्रकृष्टानुवादोऽपि आश्रीयते । यथाप्राप्त्यपेक्षो हि स भवति । बहुवचनं च अविवक्षितम् । अथवा प्रकृतिविकृतिदेवताऽऽलोचनेनोपपत्स्यते । ततश्चायमर्थो भवति , यस्मात् देवयुक्तकर्मान्तरधर्मोऽयं , अतः पित्र्येऽग्निहोत्रे न कर्तव्य इति ।

**शा**— सोऽयं लिङ्गप्रकरणविरोधाविरोधविचारः ।

**सोम**— प्रकरणादुपव्यानस्तुत्यर्थत्वं निवीतस्य इत्युक्तं, उपव्यानस्यैव प्रकरणे निवेशाभावात् इति प्रत्यवस्थानात् आक्षेपसंगतिः । ' यज्ञोपवीती हि देवेभ्यो दोहयति ' इत्यत्रापि यज्ञोपवीतशब्देन वासोविन्यासविशेष एवाभिधीयते, इत्याश्रित्य अयं विचारः प्रवर्तितः । नवतन्तुकत्रिसूत्रकत्रिवृद्ब्रह्मग्रन्थिकब्रह्मसूत्राभिधाने अस्य विचारस्यानुपपत्तेः इति ध्येयम् ।

**वि**—' सर्वार्थमुत दर्शार्थमुपव्ययत इत्यदः । , सर्वार्थमग्निहोत्रे स्यादुपवीतीतिलिङ्गतः ॥ , दर्शाद्यर्थं

प्रकरणाल्लिङ्गे स्यात् सिद्धिरन्यथा । दोहं मृताग्निहोत्रस्य स्तोतुमेतदनूदितम् ॥' तस्मात् दर्शपूर्णमासाङ्गमुपवीतम् ।

**भाट्ट**— तदिदमुपवीतं सर्वकर्माङ्गं, मृताग्निहोत्रे 'प्राचीनावीती दोहयेत्, यज्ञोपवीती हि देवेभ्यो दोहयति' इति जीवदवस्थायां यज्ञोपवीतानुवादलिङ्गस्य प्राप्त्यभावेन सर्वार्थतागमकत्वात्, विप्रकृष्टत्वेन दर्शपूर्णमासस्थस्यानुवादानुपपत्तेश्च, वैकल्पिकेन्द्रमहेन्द्रदेवत्यदार्शिकदोहने देवताबहुत्वाभावेन तदनुवादानुपपत्तेश्च । सर्वार्थत्वे तु कर्तृसंस्कारकस्योपवीतस्य बहुदेवत्याग्निहोत्रप्रयोगाङ्गत्वेन तद्दोहनेऽपि प्राप्तेः अनुवादोपपत्तिः । **इति प्राप्ते**, संनिकृष्टासंभवे विप्रकृष्टानुवादस्यापि न्याय्यत्वात् प्रकृतिविकृत्यभिप्रायेण च सांनाय्येऽपि देवताबहुत्वसत्त्वात् अनुवादोपपत्तेः प्रकरणात् दर्शपूर्णमासाङ्गमेवोपवीतम् । वस्तुतस्तु, वक्ष्यमाणवचनानुसारात् अग्निहोत्रेऽपि यज्ञोपवीतसत्त्वेन तत्रत्यस्यैवायमनुवादः ।

**शंकर**— 'उपवीतं तु दर्शाङ्गम् ।' ३.

**उपवीताधिकरणम्** । निविदधिकरणम् । उपवीतं दर्शपूर्णमासाङ्गम् ॥

**संदिग्धे तु व्यवायाद् वाक्यभेदः स्यात् । ३।१।११।२१ ॥**

**भाष्यम्**— ( तैत्तिरीयके २।५ ) दर्शपूर्णमासयोः सप्तमाष्टमयोर्ब्राह्मणानुवाकयोः सामिधेन्यः उक्ताः । नवमे निविदः । दशमे काम्याः सामिधेनीकल्पा इदंकामस्य एतावतीरनुब्रूयात् इदंकामस्य एतावतीः इति । एकादशे च यज्ञोपवीतमाम्नातम् । 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति । तत्र संदेहः किं सामिधेनीरेव अनुब्रुवाणः उपव्ययेत, उत प्रकरणे सर्वानेव पदार्थान् अनुतिष्ठता उपव्यातव्यमिति । कुतः संशयः ? उपवीतं सामिधेनीनां प्रकरणे समाम्नातं, अथ निवृत्ते वा तासां प्रकरणे इति न ज्ञायते । ननु दर्शपूर्णमासयोरेव प्रकरणमिदम् । परप्रकरणे सामिधेन्यः श्रूयन्ते । सत्यं परप्रकरणे श्रूयन्ते, तथापि तासामवान्तरप्रकरणमपरम् । भवति हि 'सामिधेनीरनुब्रूयात्' इति विशेषाकाङ्क्षं वचनम् । येन तत्संनिधौ अभिधीयमानं तस्येति ज्ञायते । कथं पुनर्निवृत्तं तासां प्रकरणमित्याशङ्क्यते । निवित्पदानि तासां प्रकरणं व्यवदधतीति । यद्येवं, कथमनुवर्तते प्रकरणमित्याशङ्का । परस्तात् निविदां सामिधेनीगुणा एव काम्या विधीयमानाः श्रूयन्ते, यदनन्तरं यज्ञोपवीतमाम्नातं, तेन अनिवृत्तं सामिधेनीनां प्रकरणमिति भवति मतिः । अतः प्रकरणे निविदः समुपनिपतिता न व्यवदधति, यथा द्वादशोपसत्ता अहीनधर्मो ज्योतिष्टोमप्रकरणे इति । तेन भवति संदेहः । अस्मिन् संदेहे किं तावत्प्राप्तम् ? सामिधेनीप्रकरणमनिवृत्तं, तत्रोपवीतं समाम्नातमिति । कुतः ? काम्यानां सामिधेनीकल्पानां आनन्तर्यवचनात् । हृदयमनुविपरिवर्तमानासु सामिधेनीषु उपवीतमामनन्ति । कर्तुश्च वासोविन्यासमात्रं गुणो भवति उपवीतं नाम । किं कुर्वता तत् कर्तव्यमिति भवति तत्र पदार्थाकाङ्क्षा । तत्र बुद्धौ संनिहितेन अविप्रकृष्टेन, सामिधेनीवाक्येन एकवाक्यतामुपगम्य सामिधेनीषु उपवीतं उपव्ययते इत्येष शब्दो विदधातीति गम्यते । **एवं प्राप्ते, ब्रूमः** । तस्मिन् संदेहे यस्त्वयोक्तः, स निर्णयः । अस्मिन् संदेहे वाक्यभेदः इति निर्णय इति । कुतः ? व्यवायात् । इह समाप्तस्य सानुबन्धस्य सामिधेनीवाक्यस्य, अस्य च 'उपव्ययते' इति वचनस्य निविदां विधायकेन सामिधेनीभिः असंबद्धेन ग्रन्थेन व्यवधानं भवति । यस्य च पर्यवसितेऽपि वचने तत्संबद्धमेव अर्थान्तरं प्रक्रमन्ते, न तत्राननुवृत्तं प्रकरणम् । आगच्छति हि तत्संबद्धाभिधाने हृदयम् । यत्र तु पर्यवसिते वचने तदसंबद्धमेव अर्थान्तरं प्रक्रमन्ते, न तत्र बुद्धौ पूर्वः पदार्थः संनिधीयते । न च बुद्धौ असंनिहितेन एकवाक्यता भवति । द्वाभ्यां पदार्थाभ्यां वाक्यार्थः संजन्यते, नान्यतरेण । संनिधौ समाम्नानस्य एतदेव प्रयोजनं कथमुभाभ्यां पदार्थाभ्यां विशिष्टां बुद्धिमुत्पादयेयुरिति । अनन्तरावबुद्धेन सह वाक्यार्थः शक्यते कर्तुम् । असंबद्धपदोच्चारणे च न अनन्तरावबुद्धो भवति । तस्मात् व्यवहितेन सह नैकवाक्यता भवतीति । अथान्येन प्रकारेण ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं संजनयेत्, अवैदिकः स पुरुषबुद्धिपूर्वको वाक्यार्थो भवेत्– यथा अन्यस्मादनुवाकात् आख्यातपदं गृहीत्वा, अन्यस्माच्च नामपदं यो वाक्यार्थः संजन्यते । तादृशं

तत् भवेत्, यत्रान्येन ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं संजनयेत्। तस्मान्नासंबद्धार्थव्यवधानैकवाक्यता भवतीति निश्चीयते। तस्मात् न सामिधेनीभिरेकवाक्यता उपवीतस्येति। **ननु** सामिधेनीकल्पानां अनन्तरबुद्धानां संनिधौ उपवीतमाम्नायते, तेन सामिधेनीभिः संभन्त्स्यते इति। **नेति ब्रूमः**। अतिवृत्तमेव हि सामिधेनीनां प्रकरणं, निवित्पदैर्व्यवधानात्। वाक्येन हि सामिधेनीकल्पाः काम्याः संबन्धमुपगच्छन्ति, न प्रकरणमनुवर्तते। न च पुनः कल्पवचनेन सामिधेन्यः प्रकृता भवन्ति। नहि तत्र तासां वचनं कर्तव्या इति। किं तर्हि? संख्याभिः संबन्धयितव्या इति। तदपि वाक्येन, न प्रकरणेन। तत्र अप्रकृतासु सामिधेनीषु यस्यैकवाक्यता गुणस्य सामिधेनीभिर्नास्ति, न तस्य ताभिः संबन्धः। तस्मात् कृत्स्ने प्रकरणे यदनुष्ठेयं, तत् यज्ञोपवीतिनेति सिद्धम्।

**वा—** सिद्धे कर्मणां कर्मसमवाये अधुना अवान्तरप्रकरणमहाप्रकरणयोः कतरत् विनियोजकं इति उपवीतमुदाहृतम्। तत्र सामिधेन्यनुवाकविभागप्रदर्शनं सामिधेनीप्रकरणसदसद्भावविवेकार्थम्। 'ननु दर्शपूर्णमासयोरेव प्रकरणं' इति (भाष्यं) महाप्रकरणग्रस्तत्वात् नैव अवान्तरप्रकरणानि आविर्भवन्ति। अथवा अग्निसमिन्धनप्रकाशनद्वारेण दृष्टसंस्कारार्थत्वात् न तासां प्रकरणमिति मन्यते। नैतदेवम् '**कथंभावो हि भावानां यावदाख्यातमिष्यते। न तस्य प्रतिबन्धोऽस्ति महाप्रकरणादिभिः। नान्यप्रकरणापत्तिः संस्कारो वा विहन्ति तम्॥**' यथैव अङ्गवाक्यानि परिपूर्णस्वार्थानि सन्ति दर्शपूर्णमासवाक्येन एकवाक्यतां यान्ति, न च आत्मरूपं जहति, एवं अङ्गभावनाः स्वाङ्गपरिपूर्णाः परमभावनायां संबध्यन्ते, न तदधीनत्वेन तासां स्वधर्मनिवृत्तिः। संस्कारोऽपि च अपूर्वार्थत्वात् तत्सिद्ध्युपायं अपेक्षमाणः प्रकरणीभवति। दृष्टार्थेष्वपि नियमादृष्टसिद्ध्यर्थं कथंभावापेक्षोत्पत्तेः प्रकरणसद्भावः। '**दृष्टेऽपि च फले नैव साऽपेक्षा न प्रवर्तते। दृष्टेनैव तु केनापि सोपायेन निवर्त्यते॥**' तस्मात् एवंविधानामपि अङ्गानां अवान्तरप्रकरणेन भवितव्यम्। अतश्च **यद्यपि** दृष्टार्था आकाङ्क्षा दृष्टेनैव पूर्यते, 'अग्निसमिन्धनप्रकाशनं भावयेत्' केन? सामिधेन्यनुवचनेन, कथम्? विवक्षाप्रयत्नाभिघातादिक्रमोपजनितवर्णग्रहणसामर्थ्यकरणश्रोत्रसंस्कारानुगृहीतेन इति, (विवक्षाप्रयत्नादिक्रमेण उपजनितो यो वर्णग्रहणसामर्थ्यकरणरूपः श्रोत्रसंस्कारः, तदनुगृहीतेनेत्यर्थः) **तथापि** 'नियमादृष्टं कथं सेत्स्यति' इति अनुवर्तते एवाकाङ्क्षा। सा च शास्त्रचोदितेन अदृष्टार्थेनैव उपायेन पूर्यते। तस्मात् अस्ति सामिधेन्यनुवचनस्य उपवीतादिग्रहणसमर्थं अवान्तरप्रकरणम्। **एवं तर्हि** तस्य संनिकर्षेण बलीयस्त्वात् तदङ्गत्वेनैव भवितव्यं, इति कुतो महाप्रकरणविनियोगाशङ्का? **उच्यते**। सत्यं एतदेवं स्यात्, यदि तस्य निवित्पदव्यवधानेन प्रकरणविच्छेदाशङ्का न स्यात्। एवं तर्हि विच्छिन्ने तस्मिन् जितं महाप्रकरणेनेति। नैतदेवम्। कुतः? काम्यसामिधेनीकल्पसंकीर्तनेन अविच्छेदसंदेहात् अविस्पष्टं महाप्रकरणम्।

(एतावता संदेहभाष्यं व्याख्यातम्। अथ 'किं तावत्प्राप्तं इत्यादिभाष्यं' व्याचष्टे—) किं तावत् प्राप्तम्? '**अभितः सामिधेनीनां कीर्तनात् प्रक्रिया स्थिता। परप्रकरणे पाठो निविदामथवाऽङ्गता॥**' यथा दर्शपूर्णमासप्रकरणे पूषाद्यनुमन्त्रणानि असंबद्धान्यपि न पुरस्तात् प्रकरणं विच्छिन्दन्ति, तथा निवित्पदान्यपि न विच्छिन्द्युः प्रकरणम्। अथवा अवान्तरप्रकरणेन निविदामपि सामिधेन्यनुवचनाङ्गत्वात् नैव असंबद्धपदव्यवायः इत्युपपन्नं उपवीतमपि तदङ्गमेव इति। **एवं प्राप्ते**, ब्रूमः। '**विच्छिन्ना सामिधेनीनां निविद्भिः प्रक्रिया यतः। नहि काम्यैः पुनः कल्पैः संधातुं सा हि शक्यते॥**' तावत् हि प्रकरणमनुवर्तते, यावत् विनियोगार्हं पश्यति। असंयुक्तं च प्रकरणेन विनियुज्यते। तदिह निवित्पदानि तावत् लिङ्गेन सामिधेनीभिस्तुल्यानि अग्निसमिन्धने विनियुज्यन्ते 'देवेद्धो मन्विद्धः' इति। तत्र यदि अग्निः सामिधेन्यङ्गं भवेत्, ततः तद्द्वारेण तान्यपि अङ्गं भवेयुः। अथ अनङ्गे सत्यपि अङ्गता कल्प्यते, ततः सामिधेनीनामपि निवित्पदाङ्गत्वं कश्चित् कल्पयेत्। तेन निवित्सु तावत् प्रकरणं नानुवृत्तम्। काम्यास्तु कल्पाः श्रुत्यैव पुरुषार्थत्वेन

अवगताः, इति नैव सामिधेन्यनुवचनेन गृह्यन्ते । यदि पुनः निविदः अङ्गं भवेयुः, ततः गोदोहनन्यायेन आश्रयग्रहणादपि तावत् काम्येषु प्रकरणानुवृत्तिः स्यात्, अथापि काम्यानामङ्गत्वं भवेत्, तथापि पूषाद्यनुमन्त्रणवत् प्रकरणाबाधं निविदां कथंचित् अनुसंधानेन अध्यवस्येम, न तु अन्यतरदस्ति इति असति अवान्तरप्रकरणे महाप्रकरणेन सर्वार्थता । **ननु** च यदि विच्छिन्ने प्रकरणे काम्याः कल्पाः श्रूयन्ते, ततः एकविंशत्या प्रतिष्ठां भावयेत्, किमाश्रितया ? इति प्रकरणेन आश्रये अनुपनीयमाने साकाङ्क्षत्वात् अपरिपूर्णता प्राप्नोति । अथ वाक्येन आश्रय उपनीयेत, ततः प्राप्ते कर्मणि संबन्धद्वयकरणात् वाक्यं भिद्येत । तत्र यदि वाक्यभेदोऽभ्युपगम्येत, कथंचित् वा परिह्रियेत, ततो रेवतीवारवन्तीयसौभरादिष्वपि एवमेव वाक्येन प्रकृताश्रयदानात् सिद्धान्तहानिः । अथ आश्रयलाभार्थं कथंचित् अनुवर्तेत प्रकरणं, ततः उपवीतमपि तथैव प्राप्नोति इति सर्वथा संकटमेतत् । **उच्यते । 'गुणात् कामो न युक्तोऽत्र विच्छिन्नप्रक्रियाऽऽश्रयात् । अनेकार्थविधिः शक्यो नापूर्वात् कर्मणो विना ॥'** नैवात्र एकविंशत्यादेर्गुणात् फलम् । किं तर्हि ? रेवतीवारवन्तीयादिवाक्यवदेव अनेनापि विशिष्टं कर्म विधीयते । ततश्च भावार्थाधिकरणन्यायेन धात्वर्थात् फलम् । अतः 'एकविंशत्यादिविशिष्टेन अनुवचनेन प्रतिष्ठादि साधयेत्'। कथमिति ? अनुब्रूयात् इति शब्दसामान्यात्, संख्याप्रत्यासत्तेश्च 'सामिधेन्यनुवचनवत्' इति गम्यते । ततश्च संख्येयानां ऋचां अन्येषां च धर्माणां प्राप्तिः । यद्यपि चात्र कर्मान्तरत्वाकर्मान्तरत्वयोः फलं नास्ति, तथापि वाक्यं एवमवकल्पते इति इत्थं वर्णितम् । न तु एवं सति एतान्यनुवचनान्तराणि दर्शपूर्णमासाभ्यामगृहीतत्वात् पृथगेव प्रयोक्तव्यानि । न तावत् एतेन असत्पक्षो निवर्त्यते, सर्वथा उपवीतस्य सर्वार्थत्वसिद्धेः । न च स्वतन्त्रः प्रयोगः स्यात् । कुतः ? **'पश्चाद् यस्योच्यमानोऽयमनुशब्दः प्रयुज्यते । न तस्यान्यप्रयुक्तत्वात् स्वातन्त्र्ये सति लभ्यते ॥'** यो हि निगदः प्राक् सामिधेनीभ्यः प्रयुज्यते, स निवित्पदवदेव न सामिधेन्यङ्गम् । तदनन्तरत्वेन च उच्यमानासु अनुब्रूयात् इति विधिः, न स्वतन्त्राणाम् । तत् यदि पृथक् प्रयोगः स्यात्, ततः सामिधेन्यङ्गमात्रग्रहणात् इतरेण निगदेन विना अनुवचनत्वं विहन्येत । किंच **'सामिधेनीत्वमप्यासां न स्यादग्निसमिन्धनात् । न चाप्रयोगमध्यस्थः शक्यो वह्निः समिन्धितुम् ॥'** एकविंशत्यादिभिस्तावत् अवश्यं सामिधेन्यः संख्यातव्याः । ताश्च अग्निसमिन्धनं प्रकाशयन्त्यः सामिधेन्य इत्युच्यन्ते । स चाग्निः परप्रयुक्तः ताभिः प्रकाशयितव्यः । तेन 'अर्थाभिधानकर्म च' इत्यस्य प्रकृतिवदनुप्रवेशात् प्राकृतस्य सामिधेनीकार्यस्य अग्निसमिन्धनप्रकाशनस्य एतेनैव प्रसङ्गतः प्राप्तेः अर्थात् प्रयोगमध्यपातिसमिन्धनाधीनत्वम् । **ननु** एवमपि एषामेव काम्यानां कल्पानां सर्वेषां अन्त्यस्य वा उपवीतमङ्गं स्यात् । **नैतदेवम्** । कुतः ? **'प्राकृतेन कथंभावे तदीये पूरिते सति । पश्चात् संनिधिनाऽङ्गं स्यात् स च प्रकरणावरः ॥'** सर्वास्वेव विकृतिषु यत् प्राकृताङ्गमध्ये न पठितं, तत् अक्लृप्तोपकारत्वात् प्राकृतैर्निराकाङ्क्षीकृते प्रकरणे पश्चादागच्छत् संनिधिविषयो भवति । स च अविरोधे विनियुङ्क्ते, विरोधे तु विदेवनादिवत् प्रकरणेन बाध्यते । तस्मात् कृत्स्नदर्शपूर्णमासार्थं उपवीतं इति सिद्धम् ।

शा — **'अनुवृत्तौ तदङ्गत्वं विछिन्ने दर्शशेषता । किं प्राप्तमुभयत्रापि कीर्तनादनुवर्तते ॥ पुरस्तादुपवीतस्य परस्ताच्चापि कीर्तनम् । विद्यते सामिधेनीनामतः प्रकरणास्तिता ॥'** अथवा **'निविदामपि तादर्थ्यं तत्कथंभावसंगतेः । न चाङ्गैर्व्यवधीयन्ते प्रधानानि कथं चन ॥ काम्येष्वप्याश्रयत्वेन तासामस्त्यनुवर्तनम् । उपवीतमतस्तासामङ्गं प्रकरणाद् भवेत् ॥ एवं प्राप्ते, वदामोऽत्र निविद्भिर्व्यवधानतः । विच्छिन्ना सामिधेनीनां प्रक्रिया नानुवर्तते ॥'** तस्मात् दर्शपूर्णमासाङ्गमुपवीतम् ।

( प्राभाकरोक्तमनूद्य निरस्यति— ) **एकदेशिनां** तु अवान्तरप्रकरणाभावात्, संनिधेश्च प्रकरणात् दुर्बलत्वात् असत्यपि विच्छेदे सामिधेनीनां, दर्शपूर्णमासाङ्गत्वमुप-

वीतस्य सिध्यति, इति व्यर्थमिदमधिकरणं स्यात् । **कश्चित्तु** आह ' उपव्ययते ' इत्येकं पदमन्विताभिधानाय कर्तारमपेक्षमाणं संनिहितेन कर्त्रा अन्वीयते इति । **तदयुक्तम्** । प्रत्ययार्थेनापूर्वेण धातोरन्विताभिधानसिद्धेः । अवश्यं चानेन प्रत्ययेन सत्यपि सामिधेनीनां संनिधाने अधिकारापूर्वमेवाभिधातव्यं, सामिधेनीनां संनिपातित्वेनापूर्वशून्यत्वात् । अतः पदश्रुत्यैव तदङ्गमुपवीतं भवति, इति किमर्थमिदमधिकरणम् । **अपि च** एवं पूर्वाधिकरणपूर्वपक्षेऽपि विच्छिन्नमपि अभिक्रमणं एकपदत्वात् संनिहितेनैव प्रयाजकर्त्रा अन्वीयते, इति तदधिकरणवैयर्थ्यं स्यात् । **ननु** ' अभिक्रामं ' इत्यस्यानाख्यातत्वात् सिद्धवत् प्रतीतेर्न कर्त्राकाङ्क्षा, किंतु शेषिभूतस्तत्र कर्ता अपेक्षितः । न च शेषिणा अन्विताभिधानमिति । **नैवम्** । अवघातादिषु शेषिणाऽपि अन्विताभिधानाभ्युपगमात् । अपि च सर्वाण्येव कार्यार्थानि पदानि कार्येण शेषिणा अन्वितमर्थमभिदधति, इति यत्किंचिदेतत् । अपिच यदि न शेषिणा अन्विताभिधानं, केन तर्हि अन्वितमभिक्रमणमभिधातव्यं ? नहि अनन्वितस्याभिधानं संभवति । गुणभूतस्तु कर्ता अनपेक्षितत्वात् न तेन ( **सोम**– गुणभूतस्य कर्तुः इति षष्ठ्यन्तः पाठो युक्तः । गुणभूतस्तु कर्ता इति प्रथमान्तपाठे तु ' यो गुणभूतः कर्ता तेन ' इति यच्छब्दाध्याहारेण योज्यम् ) अन्विताभिधानं संभवति इति त्वयोक्तम् । संभवे वा संनिहितेनैव प्रयाजकर्त्रा अन्विताभिधानात् व्यर्थमेकवाक्यत्वप्रतिपादनम् । प्रधानविधिना अभिक्रमणमन्वितमभिधीयते इति चेन्न, तस्यापि शेषित्वात् उपवीतस्यापि तत्संभवात्, न संनिहितेनापि सामिधेनीकर्त्रा अन्वयः स्यात् । अथ अनभिहितमभिक्रमणं ग्राहको गृह्णीयात्, उपवीतमपि गृह्णीयात् । यदि शेषिभूतः कर्ता अपेक्षितो नानुष्ठानभूतः इति, तदपि विपरीतं, अनभिहितस्य शेष्यपेक्षाऽभावात् । कर्त्रपेक्षा तु क्रियास्वाभाव्यादेव स्यात् । इत्यास्तां तावत् ।

**सोम — सूत्रार्थस्तु**— अवान्तरप्रकरणानुवृत्तिसंदेहे निविद्भिर्व्यवधानात् उपव्ययते इत्यस्य सामिधेनीवाक्येन एकवाक्यत्वाभावः स्यात् इति ।

**वि** — ' उपव्ययत इत्यस्य सामिधेन्यङ्गताऽथवा । दर्शाङ्गता, प्रक्रियैषाऽवान्तराऽतोऽस्त्विहाग्रिमः ॥, लिङ्गादग्नेरङ्गभूतैर्निवित्संज्ञकमन्त्रकैः । विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः ॥ '

**भाट्ट**— दर्शपूर्णमासयोः ' पञ्चदश सामिधेनीरनुब्रूयात् ' इत्यनेन सामिधेनीर्विधाय तासां वाचनिका गुणा विहिताः । ततो निविदो नाम मन्त्राः 'देवेद्धो मन्विद्धः' इत्यादयः । ततः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य ' इत्यादयः काम्याः सामिधेनीकल्पाः । ततः उपवीतं ' उपव्ययते देवलक्ष्ममेव तत्कुरुते ' इति । ततः पुनरपि सामिधेनीगुणाः ' अन्तराऽनूच्यं सदेवत्वाय ' इत्यादयः । तत्रोपवीतं सामिधेन्यङ्गं तदवान्तरप्रकरणात् । न च तदवान्तरप्रकरणस्य काम्यकल्पैर्निविन्मन्त्रैर्वा विच्छेदः, गोदोहनादीनां दर्शपूर्णमासप्रकरणाविच्छेदकत्ववत् काम्यानामपि तद्विच्छेदकत्वानुपपत्तेः । पूषानुमन्त्रणमन्त्रवत् निविन्मन्त्रस्यापि तदनुपपत्तेश्च । वस्तुतस्तु लिङ्गादग्निसमिद्धत्वरूपसामिधेनीफलप्रकाशकानामपि अवान्तरप्रकरणात् सामिधेन्यङ्गत्वोपपत्तेर्न विच्छेदकत्वशङ्का । इष्यते एव हि ' अगन्म ' इति मन्त्रस्य यागजन्यफलप्रकाशकत्वेन यागाङ्गत्वम् । **इति प्राप्ते,** निविद्भिर्व्यवधानान्नोपवीतस्य सामिधेन्यङ्गता । न च पूषानुमन्त्रणमन्त्रन्यायः । यत्र हि उत्तरकालं बहूनि वाचनिकाङ्गानि तत्रैकस्य पूषानुमन्त्रणमन्त्रादेः परप्रकरणस्थत्वकल्पना । यत्र तु विच्छेदकानि बहूनि, उत्तरकालं च वाचनिकाङ्गं स्वल्पं, तत्र वाचनिकाङ्गस्यैव अनारभ्याधीतन्यायेन अङ्गत्वोपपत्तेर्न प्रकरणानुवृत्तिकल्पना । अन्यथा विश्वजिदादेरपि दर्शाङ्गत्वापत्तेः । प्रकृते च निविन्मन्त्राणां बहुत्वात् वाचनिकोत्तराङ्गानां स्वल्पत्वेन न प्रकरणानुवृत्तिकल्पना । वस्तुतस्तु न ' अन्तराऽनूच्यम् ' इत्यादीनां सामिधेनीमात्रोद्देशेन विधानं, प्रमाणाभावात् । अपि तु अनुवचनसामान्योद्देशेन । अतश्च सामिधेनीनां विशिष्योपस्थित्यभावात् न प्रकरणानुवृत्तिः । यत्तु अन्ते 'देवा वै सामिधेनीरनूच्य' इत्यादि संकीर्तनं तदाधारार्थवादत्वात् असाधकम् । अत एव अन्ते वाचनिकाङ्गाभावादेव न निविदां सामिधेन्यङ्गत्वशङ्का । संनिधिमात्रेण तदङ्गत्वशङ्का

तु परस्पराङ्गत्वापत्तेः प्रकरणेन बाधाच्चायुक्ता। न चैवं आश्रयाभावात् काम्येषु गुणफलसंबन्धानुपपत्तिः, तत्रानुवचनान्तरस्यैव फलोद्देशेन विहितत्वात् तस्य च संख्यायुक्तानुवचनत्वसामान्यात् पञ्चदशसंख्याकनित्यानुवचनप्रकृतिकत्वावगतेः तदीयधर्माणां त्रिरभ्यासादीनां तदीयऋचां प्राप्तेर्नाधर्मकत्वम्। न च ऋचामनुवचनं प्रति प्राधान्यात् कथमतिदेशः। प्रकृते त्रिरभ्यासयुक्तपाठादेव तावत्संख्याकऋचां, अर्थाच्च अनुवचनस्य प्राप्त्युपपत्तेः। 'पञ्चदश सामिधेनीरनुब्रूयात्' इति वचनवैयर्थ्यापत्तेरगत्या सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य मन्त्रविशिष्टानुवचनस्यैव विधेयत्वेन तदङ्गभूतानामृचां प्राप्त्युपपत्तेः। गुणत्वमपि च ऋचां नानुवचनफलप्रकाशकतयैव अपि तु अनुवचनजनकतया, लाघवात्। अतश्च न द्वारलोपात् बाधः ऊहो वा। अनुशब्देन च दर्शपूर्णमासाङ्गभूतपूर्वपदार्थानन्तर्यस्य उक्तत्वात् तस्य च परप्रयुक्तत्वेन बहिःक्रतुप्रयोगे अनुष्ठातुमशक्तेः क्रतुमध्यप्रयोगसिद्धिः। वैकृतानुवचनेनैव च प्रसङ्गात् प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम्। अतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः। न च तर्हि तदङ्गत्वमेव उपवीतस्य किं न स्यात्? तेषां विकृतित्वेन प्राकृताङ्गनिराकाङ्क्षाणां प्रकरणाभावात् वाचनिकाङ्गसंदंशाभावाच्च। अतो महाप्रकरणात् दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारकतया तत्कर्तृभिः सर्वप्रयोगारम्भे कार्यमिति सिद्धम्।

**मण्डन**—'इष्ट्यङ्गमुपवीतिता।' १०.

**शंकर**—'दर्शाङ्गमुपवीतं स्यात्।'

* उपवीताधिकरणशेषत्वेन 'गुणानां च परार्थत्वात्०' इति सूत्रं (३।१।१२।२२) व्याख्यातं वार्तिके। भाष्ये तु अधिकरणान्तरपरतया तत् व्याख्यातम्। कु. ३।१।१२।२२.

**उपवीतोदगग्रत्वयोः प्रेताग्निहोत्रे श्रुतयोः प्राचीनावीतदक्षिणाग्रत्वस्तुत्यर्थता॥**

**उदक्त्वं चापूर्वत्वात्। ३।४।२।४॥**

**वा**—तस्मिन्नेव मृताग्निहोत्रे श्रूयते, 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्' इति। के चित्तु महापितृयज्ञे श्रूयते इत्युदाहरन्ति। तत्र 'ये पुरोदञ्चः' इत्यत्र संदेहः किं विधिः, अनुवाद इति। किं प्राप्तम्? ततः चशब्देनान्वादिश्यते अयमपि विधिरपूर्वत्वादिति। प्राप्तिपूर्वको ह्यनुवादो भवति। न चास्य पुरुषार्थतयाऽपि प्राप्तिरस्ति। न चास्य स्तुत्यर्थताऽपि युज्यते। हिशब्दाप्रयोगात्। तस्मात् सिद्धवदुक्तान्यथाऽनुपपत्त्यैव अस्यापि विधित्वमिति।

**सतो वा लिङ्गदर्शनम्। ५॥**

**वा**—आचारप्राप्तस्य उदगग्रत्वस्य द्योतकमात्रं लिङ्गदर्शनमेतत्, न विधिः। कुतः? '**लिङादिरहिते वाक्ये तदा विधिरुपेयते। न कथं चिद् यदा युक्त्या प्राप्तिलेशोऽपि गम्यते॥**' यच्छब्दयोगात् आख्याततद्विशेषरहितत्वाच्च स्फुटमिह अनुवादत्वमनवधारितम्। तत् यथाकथंचिदपि प्राप्तौ सत्यां नातिक्रमितव्यम्। अस्ति चात्र प्राप्तिः 'अग्रवन्ति प्रागग्राण्युदगग्राणि वा, अपवर्गवन्ति प्रागपवर्गाण्युदगपवर्गाणि वा' इति स्मृतेः। तस्मात् तत्समानार्थः एवायं सिद्धवदनुवादः। तथैव च स्तुत्यर्थः। पुरा हि एतदुक्तं, न तु सांप्रतं मृतावस्थायामिति।

**सोम**—**प्रयोजनं** पूर्वपक्षे 'ये पुरोदञ्चः' इति विधेर्याजुर्वैदिकत्वात् तद्भ्रेषे 'यदि यजुष्टो भुवः स्वाहेति दक्षिणेऽग्नौ जुहुयात्' इत्येतत् प्रायश्चित्तम्। सिद्धान्ते तु अविज्ञातप्रायश्चित्तं इति।

**वि**—'उपवीती हि देवेभ्यः पुरोदञ्चो द्वयं विधिः। वादो वा, ऽस्यान्यतोऽप्राप्तेरपूर्वार्थो विधीयते॥, हियच्छब्दद्वयाद् वादः स्मृत्युपख्यानतो द्वयम्। संप्राप्तं दक्षिणाग्रत्वप्राचीनावीतयोः स्तुतिः।' तस्मादनुवादः।

**भाट्ट**—तत्रैव 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्' इति श्रुतेऽपि ये पुरा दर्भास्ते उदञ्चः कार्याः इत्येवं विधिवाचकपदाध्याहारेणापि पूर्ववद्विधिः। न च पुराशब्दस्य विशेषणत्वे विशिष्टोद्देशः। दक्षिणाग्रत्वस्य मृताग्निहोत्रे विधौ अर्थादेवोदक्त्वस्य जीवदवस्थायामेव प्राप्तत्वेन अविशेषणत्वात्। निपातत्वेन पुराशब्दान्वयस्य व्युत्पन्नत्वाच्च। **न च** 'अग्रवन्ति प्रागग्राण्युदगग्राणि वा' इति सामान्यस्मृत्यैव उदगग्रत्वप्राप्तेर्विध्यानर्थक्यमिति **वाच्यम्**। यजुर्भ्रेषप्रायश्चित्त-

सिद्ध्यर्थं तद्विधानोपपत्तेः । अन्यथा स्मृतिमूलभूतश्रुतेरविज्ञातवेदत्वात् ' यद्यविज्ञाते भूर्भुवःसुवरित्याहवनीये जुहुयात् ' इत्येतत् प्राप्येत । **इति प्राप्ते**, यच्छब्दश्रवणात् प्रत्यक्षविध्यभावात् विध्यन्तरैकवाक्यत्वाच्च नायं विधिः, अपि तु प्राप्तत्वात् तच्छब्दापेक्षितोद्देश्यविशेषसमर्पकः एवेत्यनुवादः ।

**शंकर**— ' पुरोदक्त्वे विधिर्न तु । ' ६.

* **उपवेषः** दर्शादौ पलाशशाखायाः प्रादेशपरिमितं मूलभागं छित्त्वा कर्तव्यः । तस्य विनियोगः ' उपवेषेण कपालान्युपदधाति ' इत्याम्नातः । **वि.** ४।२।३, * उपवेषः न शाखाच्छेदप्रयोजकः, किंतु अनुनिष्पादी । अतः पौर्णमास्यां उपवेषार्थं शाखाछेदो न कार्यः । उपवेषस्थाने किंचित् काष्ठं ग्राह्यम् । ४।२।३. * उपवेषः । पौर्णमास्यां विनाऽपि शाखापरिवासनेन यदेव अङ्गारापोहनक्षमं द्रव्यं, स एव उपवेषः । **वा.** ३।७।१६।३२ पृ. १०९८–९९. * उपवेषः । ' मूलतः शाखां परिवास्योपवेषं करोति ' इति वाक्यात् शाखाछेदनकार्यत्वेनापि अवगतस्य उपवेषस्य पौर्णमास्यां अमावास्यायामपि वा सांनाय्यरहितायां शाखाछेदनाभावेऽपि सिद्धिः चतुर्थे ( ४।२।३।८–९ ) साधयिष्यते । **सु.** ३।७. पृ. ३६. * **उपवेषेण** अङ्गारमपोहति । इदं सांनाय्यपक्षे एव । **संकर्ष.** ३।२।३६. * ' उपवेषेण कपालान्युपदधाति ' इत्यस्य संनयद्विषयतया संकोचः । असंनयता शाखाऽनुनिष्पन्नस्योपवेषस्य संपादयितुमशक्यत्वात् । **सोम.** ११।२।१३. * **उपवेषनामकेन** काष्ठविशेषेण प्रथमं अङ्गारविशेषं सम्यगवस्थाप्य ' ध्रुवमसि०' इति मन्त्रेण तस्मिन्नङ्गारे पुरोडाशकपालमुपदधाति । **वि.** १०।५।१.

* **उपवेषवत्** । **यथा**– 'उपवेषेण कपालान्युपदधाति' इति यदा उपवेषस्तदा तेनेति गम्यते, यदा उपवेषो नास्ति तदाऽपि उपधानमस्त्येवेति । **एवं** यदा द्विपुरोडाशायां पौर्णमास्यां अन्तरालं, तदा उपांशुयाजोऽन्तराले स्यात्, यदा एकपुरोडाशायां नान्तरालं, तदाऽपि उपांशुयाजः स्यादेवेति । **भा.** १०।८।१८।६८.

**उपवेषाधिकरणम्** । शाखा छेदनादेः प्रयोजिका नोपवेषोऽपि । वत्सापाकरणमेव शाखाछेदनादेः प्रयोजकं न कपालोपधानम् । अग्रमेव शाखाछेदनादेः प्रयोजकं न मूलम् ॥

**शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद् वैषम्यं तत् । ४।२।३।८ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः समाम्नायते, ' मूलतः शाखां परिवास्योपवेषं करोति ' इति । तत्रायमर्थः सांशयिकः किं शाखाच्छेदनस्य उभयं प्रयोजकं शाखा उपवेषश्च, उत शाखा प्रयोजिका, उपवेषोऽनुनिष्पादीति । किं प्राप्तम् ? उभयं छेदनान्निष्पद्यते शाखा शाखामूलं च, उभयं च प्रयोजनवत् । अग्रेण वत्सापाकरणादि करिष्यते, मूलतः उपवेषः । तेन विशेषाभावात् उभयं प्रयोजकम् । **इति प्राप्ते, उच्यते** । शाखायां ब्रूमः । तत्प्रधानत्वात् शाखाप्रधानत्वादुपवेषेण विभागो भवेत् । शाखामनु निष्पन्नो गृह्येत । कथं तत्प्राधान्यम् ? ' शाखां परिवास्य ' इति द्वितीयानिर्देशात् । ननु, ' उपवेषं करोति ' इत्यपि द्वितीया । उच्यते । नासौ परिवासयतेः कर्म । कस्य तर्हि ? करोतेः । **आह** । कस्मादेवमभिसंबन्धो न भवति, शाखां परिवास्य मूलत उपवेषं करोतीति । शाखाशब्दश्च यथैवाग्रे तथा मूलेऽपि । तत्रायमर्थः– छेदनेन अग्रमूले विभजेत् । किं प्रयोजनम् ? विभज्य मूलमुपवेषं करोति–इति । **उच्यते** । नैवम् । व्यवहितकल्पना ह्येवं भवेत् । अव्यवधानेन शाखाऽर्थे परिवासनम् । वृत्ते तस्मिन् उपवेषकरणम् । ननु प्रकृतत्वात् मूलमुपवेषशब्देन संबध्यते । उच्यते । उभयसंबन्धे विरोधः । विरोधे च प्रकरणात् वाक्यं बलीयः । अथ संनिहितेन संबध्यते, तथापि शाखाप्रयुक्तेन इत्यापतति । अतः सिद्धः एवोपवेषः, न प्रयोजयति छेदनमिति । एतदत्र वैषम्यम् ।

**टुप्**— उभयमपि न प्रयोजकम् । कथं, ' मूलतः शाखां परिवास्योपवेषं करोति ' इति परिवासयतेः प्रधानभूता शाखा, द्वितीयासंयोगात् । अतो मूलाधिकरणं छेदनं शाखाऽर्थम् । उपवेषमिति या द्वितीया, सा करोतेः, न परिवासयतेः । तस्मान्नोपवेषार्थं छेदनम् ।

आह । उपवेषे करोतेः कर्मतया प्रतीयमाने, इतरत् ( मूलं ) उपवेषं निर्वर्तयति । कथमिति ? छेदनादिकेतिकर्तव्यता गृह्यते । यथा 'स्वरुं करोति' इति पूर्वपक्षे जोषणादीनां प्रकृतानां ग्रहणमुक्तम् । तत्र कारणान्तरेण ( यूपशब्दस्य लक्षणाप्रसङ्गेन ) स्वरोर्भावनां निषिध्योपादानार्थः करोतिरित्युक्तम् । इह तन्नास्ति ( येनोपवेषभावना निषिध्येत । ) तस्मादुभयं प्रयोजकम् । **उच्यते** । स्ववाक्योच्चारितेन यूपशब्देन या इतिकर्तव्यता लक्ष्यते, सा वाक्येनैव स्वरूपसंबन्धिनीत्येवं पूर्वपक्षस्तत्र ( शङ्कितः ) । इह स्ववाक्ये नास्ति यूपस्थानीयं पदं, यत् इतिकर्तव्यतां लक्षयेत् । 'मूलतः शाखां परिवास्य' इति समाप्तमिदं वाक्यम् । 'उपवेषं करोति' इत्यपि समाप्तम् । ( कथम् ? ) मूलाधिकरणेन छेदनेन शाखां निष्पाद्य अन्यदपि ( क्रियाऽन्तरं ) करोतीत्येतद्गम्यते । अतो भिन्ने एते वाक्ये । मूलाधिकरणकं छेदनं वाक्येन शाखाऽर्थम् । उपवेषस्य स्ववाक्ये छेदनादिकाया इतिकर्तव्यताया अश्रवणात् प्रकृता स्यात् । तत्र शाखाया वाक्येन, उपवेषस्य प्रकरणेन । प्रकरणं च दुर्बलं वाक्यात् । अत आह- **उभयसंबन्धे विरोधः । विरोधे च वाक्यं प्रकरणाद्बलीयः** । अथान्येन प्रयुक्तं मूलं ग्रहीष्यते, तथा सति परकीयत्वादप्रयोजकम् । शाखां परिवास्य मूलादुपवेषः, अग्रं वत्सापाकरणार्थम् । **एतदपि** न घटते, व्यवहितकल्पनया अश्रुतवाक्यकरणमवैदिकम् । अतो वाक्यसामर्थ्याच्छाखाऽर्थमेव ( अग्रार्थमेव ) छेदनम् । शाखाशब्दश्च यावदच्छिन्ना तावत् समूलायां वर्तते । छिन्ना चेदग्रे वर्तते, मूलादपैति । तस्मात् शाखाप्रयुक्तं छेदनम् ।

**श्रुत्यपायाच्च । ९ ॥**

**भाष्यम्**— 'शाखया वत्सानपाकरोति' 'शाखया गाः प्रापयति' 'शाखया दोहयति' इत्येवमादिषु शाखाग्रहणेषु नोपवेषस्य व्यापारः, ततः शाखाशब्दोऽपैति । नहि तन्मूलं शाखेत्याचक्षते । किमतो यद्येवं ? यत्र शाखाशब्दः तदर्थं छेदनं, द्वितीयानिर्देशात् । अथापि मूले शाखाशब्दो भवेत् , एवमपि शाखाशब्दोपदिष्टेषु न मूलं, अमूलपरिवासितत्वात् । यच्चैवं संस्कृतया शाखया क्रियते, तदर्थं छेदनम् । न चोपधानं मूलपरिवासितया क्रियते । तस्मान्न तदर्थं छेदनम् । किं भवति प्रयोजनम् ? पौर्णमास्यामपि शाखा उत्पाद्या, यथा पूर्वः पक्षः । यथा सिद्धान्तः, तथा नोत्पादयितव्येति ।

**टुप्**— यद्यपि मूलं शाखाशब्देनोच्यते, तथापि मूलपरिवासनेन संस्कृता शाखा कार्ययोग्या । न तन्मूलं शाखा भवति । 'अमूलपरिवासितत्वात्' मूले अच्छिन्नत्वादित्यर्थः । अत आह- 'श्रुत्यपायाच्च' शाखाश्रुतिर्मूलादपैतीत्यर्थः । तस्माच्छाखाऽर्थेषु न मूलं परिग्रहीतव्यमिति ।

**शा**— **'शाखाशब्दः समूलस्य नाग्रमात्रस्य वाचकः । छेदनादि च शाखाऽर्थं द्वयं तस्मात् प्रयोजकम् ॥'** उच्यते । **'मूलापादानकं ह्यत्र परिवासनमुच्यते । तच्चाग्रस्य न मूलस्येत्यग्रार्थं परिवासनम् ॥ तद्विशेषणभूतत्वान्मूलस्यापि तदर्थता । अन्यार्थेन तु मूलेन कपालमुपधीयते ॥'** तस्मादग्रार्थत्वात् सर्वस्य तदेव प्रयोजकम् ।

**सोम**— प्राच्या दिशः केवलशाखाप्रयोज्यत्वेऽपि छेदनादीनां न केवलप्रयोज्यत्वं, किंतु मूलाग्रोभयप्रयोज्यत्वं इति प्रत्यवस्थानात् प्रत्युदाहरण**संगतिः** । यद्यपि मूलाग्रगोचरो विचारः प्रवर्तनीयः, तथापि मूलाग्रप्रयुक्तेः तत्कार्यकपालोपधानादिप्रयुक्तिपर्यवसानात् तद्गोचर एव स प्रवर्तितः । **प्रयोजनं** पूर्वपक्षे उपवेषनाशे पुनः शाखा आहर्तव्या, पौर्णमास्यामपि च शाखा आहर्तव्या । सिद्धान्ते तु उभयत्रापि न शाखा आहर्तव्या । ततश्च तत्रोपवेषाभावात् येनकेनचित् काष्ठेन कपालोपधानम् । **सूत्रार्थस्तु**— शाखायां शाखाप्रधाने 'मूलतः शाखां परिवास्य' इति वाक्ये उपवेषेण परिवासनस्य विभागः असंबन्धः स्यात् । द्वितीयया शाखायाः करोतिक्रियाऽपेक्षत्वेन शाखावैषम्यादुपवेषस्य इति ।

**वि**—'शाखां छित्त्वोपवेषं च मूले कुर्वीत शाखया । नुदेद् वत्सान् कपालानि स्थापयेदुपवेषतः ॥ द्वयं प्रयोजकं छित्तेर्वत्सापाकृतिरेव वा ।, आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः ॥ , उपवेषं करोतीति साकाङ्क्षो-

ऽन्यार्थमूलतः। पूर्यतेऽतोऽनुनिष्पादी स तस्माद् युज्यते-ऽन्तिमः ॥'

**भाट्ट**— तत्रैव 'शाखामाच्छिनत्ति' 'शाखामाहरति' 'मूलतः शाखां परिवास्योपवेषं करोति' इति श्रुतम्। तत्र शाखाशब्दस्तावत् आद्यवाक्ययोः समूलस्यैव वाचको न त्वग्रमात्रस्य, अतस्तृतीयवाक्येऽपि तत्पर एव। तदर्थं च परिवासनं अग्रमूलविभागार्थम्। अतस्तृतीयवाक्ये 'मूलतः' इति पदं द्वितीयाऽर्थे तृतीयाऽर्थे वा तसिं व्याख्याय 'उपवेषं करोति' इत्यत्रान्वेति। न त्वपादानार्थकं सत् परिवासने। तथात्वे अग्रस्यापि उपवेषत्वप्रसङ्गेन 'मूलतः' इत्यस्य उत्तरत्रान्वयावश्यकत्वात्। अतः परिवासनेनाग्रं मूलं च शाखापदाभिधेयं विभज्य मूलमुपवेषसंज्ञमुपादत्ते इति तृतीयवाक्यार्थः। तस्य च विनियोगापेक्षायां अग्रस्य वत्सापाकरणादौ, मूलस्य कपालोपधानादौ वचनात् विनियोगः। अत एवोभयमपि छेदनाहरणपरिवासनादीनां प्रयोजकम्। अस्तु वा शाखाशब्दः अग्रमात्रवाची, तथापि 'मूलतः' इति द्वितीयाऽर्थे परिवासनस्य कर्मेति परिवासनमुभयप्रयुक्तम्। ल्यपा वा मूलापादानकपरिवासनं उपवेषकरणार्थं विधीयते, इति सोऽपि तत्प्रयोजकः। **इति प्राप्ते**, 'मूलतः' इति तसिः पञ्चम्यर्थकः एव। सर्वविभक्त्यर्थकानुशासनं तु लाक्षणिकम्। अन्यथा विशिष्य पञ्चम्यर्थकत्वानुशासनवैयर्थ्यप्रसङ्गात्। अतो मूलापादानकपरिवासनं द्वितीयाश्रुत्या शाखासंस्कारकमेव। न तु वाक्यादुपवेषकरणाङ्गं, न वा उभयसंस्कारकं, उद्देश्यानेकत्वप्रसङ्गाच्च। अतः शाखाशब्दोऽपि मूलापादानकपरिवासनसंस्कार्यतया श्रुताग्रमात्रवाची, छेदनादिवाक्येऽपि तद्वाच्येव। समूलच्छेदनादिकं तु मूलापादानकपरिवासनसिद्ध्यर्थं न विरुध्यते। अत एव वत्सापाकरणादौ शाखापदेनैव अग्रविनियोगः। अतो मूलं परिवासनाङ्गमेव। एवं च व्यवहितकल्पनाऽपि न प्रसज्यते। अत एव परिवासनानुनिष्पन्नमूलस्यैवोपवेषरूपसंज्ञाऽन्तरकरणम्। अग्रस्य शाखापदेनैव सर्वत्र विनियोगेन संज्ञाऽन्तरवैयर्थ्यापत्तेः। अत एव न व्यवहितकल्पनाया आवश्यकत्वम्। अतः संज्ञाकरणमात्रफलकः 'उपवेषं करोति' इत्ययमनुवादो ल्यबन्तापेक्षितक्रियाऽन्तरप्रदर्शनार्थः। अतो न मूलं छेदनादीनां प्रयोजकम्। **प्रयोजनं**—पौर्णमास्यां शाखाऽभावे येनकेनचित् काष्ठेन कपालोपधानं, न तूपवेषकरणम्।

**मण्डन**— 'छेदप्रयोक्ता न खलूपवेषः।'

**शंकर**— 'मूलवाक्येऽग्रमेव सा।' सा शाखा।

अत्राधिकरणे **भाष्ये** किं छेदनस्य शाखा उपवेषश्चोभयं प्रयोजकं शाखैव वा इति विचार्य, शाखैव प्रयोजिका नोपवेषः इति सिद्धान्तितम्। नवमसूत्रे च वत्सापाकरणमेव शाखाछेदनस्य प्रयोजकं, न कपालोपधानं इत्युक्तम्। **शास्त्रदीपिकायां** तु वत्सापाकरणं कपालोपधानं चोभयमपि शाखाच्छेदनादीनां प्रयोजकं, उत वत्सापाकरणमेवेति, मूलमपि छेदनादिकस्य प्रयोजकं उताग्रमेवेति च विचार्य अग्रमेवेति अर्थाच्च वत्सापाकरणमेव प्रयोजकं इति सिद्धान्तितम्। **विस्तरे** वत्सापाकरणमेव छेदनादेः प्रयोजकं न कपालोपधानं इति सिद्धान्तितम्। **भाट्टे** तु छेदनादीनां अग्रमेव प्रयोजकं न मूलं इत्येव सिद्धान्तितम्। **के.**

॥ **'उपव्ययते' इति दर्शपूर्णमासयोः उपवीतस्य विधिर्नानुवादः**। द्वितीयवर्णके तु **'यज्ञोपवीतस्य प्राचीनावीतस्तुल्यर्थमनुवादः'** इति ॥

**विधिर्वा स्यादपूर्वत्वात्**। ३।४।३।१२ वि.।

**वा**— तदेवोदाहरणं 'उपव्ययते देवलक्ष्ममेव तत् कुरुते' इति। तत्र विधिः, अनुवादः इति संदेहः। कथं पुनः अनवधारिते विधित्वे सर्वार्थत्वदर्शपूर्णमासार्थत्वविचारो वृत्तः? सिद्धेन व्यवहारात् इदमर्थतः अधिकरणं पूर्वं द्रष्टव्यम्। किं प्राप्तम्? अनुवाद इति। कुतः? **'स्मृतिभिः पुरुषो नित्यं कृतो यज्ञोपवीतवान्। वर्तमानापदेशश्च न विधावुपपद्यते ॥'** 'नित्योदकी नित्ययज्ञोपवीती' इति हि सर्वदा यज्ञोपवीतं प्राप्तं क्रतावपि अस्ति। न चैष विधिसरूपः शब्दः। तस्मात् अनुवाद इति। एवं च निवीतप्राचीनावीताभ्यां अवैलक्षण्यं भविष्यतीति। **एवं प्राप्ते, ब्रूमः।** **'विधिरेष भवेदेवमपूर्वोऽर्थो विधास्यते। सर्वानुवादो व्यर्थो हि स्तुतेश्च विधिकल्पना ॥'** नहि

समस्तानुवादवाक्यस्य किंचित् फलमस्ति। निवीतप्राचीनावीतसंकीर्तनमपि च विधीयमानोपवीतस्तुत्यर्थत्वेनैव अर्थवद्भविष्यति। वर्तमानापदेशानामपि च तदाभासत्वात् प्रयोगवचनार्थवादपञ्चमलकारेभ्यो विधिशक्तिर्व्याख्याता। तस्माद्विधिः। यत्तु स्मृतेरेव प्राप्तमिति, तत्रापि अपूर्वत्वादिदमेवोत्तरम्। अन्य एव हि असौ पुरुषधर्मः प्राप्तः, अन्यश्चायं अपूर्वः क्रतुधर्मो विधीयते। तस्मान्नानुवादः। अस्य च प्रयोजनं कर्त्रधिकरणे वक्ष्यामः।

**एवं वा**। यत्तु मृताग्निहोत्रे श्रूयते 'प्राचीनावीती दोहयेत्। यज्ञोपवीती हि देवेभ्यो दोहयति' इति। तत्रैवं विचार्यते किमिदं अहीनस्थितमिव द्वादशत्वं दर्शपूर्णमासगतमेव स्तुत्यर्थमुक्तं, उत जीवदग्निहोत्रे विधानार्थमिति। किं प्राप्तं? ततः पूर्ववदेव सूत्रं व्याख्यातव्यम्। एवं च सति प्रकरणबहुवचनयोरनुग्रहो भविष्यति। तस्मात् सत्यपि अनुवादसरूपत्वे अर्थवत्त्वाय प्रयोगवचनादिभ्यो विधित्वं कल्पनीयम्। एतस्मिंश्च व्याख्याने स्थितं तावदपर्यवसितमित्येवं उत्तरमधिकरणमारब्धव्यम्।

**स्थितादप्येतदेवोत्तरम्** ('सतो वा लिङ्गदर्शनम्' इति)। हिशब्दवदाख्यातेन यतःकुतश्चित् प्राप्तेरपेक्षितत्वात्, प्रकरणे च तदभावात् किमनवगम्यमानमेव विधित्वं कल्पितं, उत यत्रतत्रस्था प्राप्तिराश्रीयतामिति। तत्र प्राप्त्याश्रयणमपेक्षितं, न तु विधित्वमिति। तदेव ज्यायः। प्रकरणबहुवचनयोश्चोक्तम्। अस्त्येव चान्योऽत्र विधिः, इति नानर्थक्यम्। तस्मादनुवादः इति नित्येऽग्निहोत्रे दोहे विनाऽप्युपवीतेन अवैगुण्यम्।

**शा**— 'उपव्ययते' इत्येतदुदाहरणम्। किमसौ विधिः, उतानुवादः इति। 'नित्योदकी नित्ययज्ञोपवीती' इति स्मृतिप्राप्तत्वात् अनुवादः। **इति प्राप्ते**, विधिः अपूर्वत्वात् इत्याह। पुरुषार्थतया हि स्मृतितः प्राप्तिः। अयं तु क्रत्वर्थतया विधिः अप्राप्तत्वात्।

**सोम**— उपव्यानस्य विधिरेव नास्ति, तत् कथं तस्य दर्शाङ्गत्वं इति प्रत्यवस्थानात् **आक्षेपसंगतिः**। **प्रयोजनं** पूर्वपक्षे कर्ममध्ये यज्ञोपवीतभ्रेषे तस्य कर्मार्थत्वाभावेन कर्मणो न वैगुण्यं, स्मार्तं च प्रायश्चित्तम्। सिद्धान्ते तु कर्मणो वैगुण्यं श्रौतं प्रायश्चित्तं चेति। (वर्णकान्तरे) प्रयोजनं पूर्वपक्षे जीवदग्निहोत्रदोहे वासोविन्यासात्मकोपवीताभावे वैगुण्यं, सिद्धान्ते तु नेति।

**वि**— 'उपव्यानेऽनुवादो वा विधिर्वा, ऽऽद्यो यतः स्मृतौ। प्राप्तं, मैवमपूर्वत्वात् क्रतौ लेटा विधीयते॥' दर्शपूर्णमासाङ्गतया पञ्चमलकारेण विधीयते। पुरुषार्थस्य प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात्।

**भाट्ट**— 'उपव्ययते' इति विधिरनुवादो वेति चिन्तायां, 'नित्योदकी नित्ययज्ञोपवीती' इति गौतमस्मृत्या प्राप्तत्वादनुवादः। यदि तु अनेन पुरुषार्थतया प्राप्तिराशङ्क्येत, तथापि 'यज्ञोपवीतिना कर्तव्यं' इतिस्मृत्यनुसारात् क्रत्वर्थत्वेनापि प्राप्तिरुद्भावनीया। यदि तु उक्तवचनेनाङ्गत्वे तद्भ्रेषे स्मार्तप्रायश्चित्तापत्तेः यजुर्भ्रेषप्रायश्चित्तप्राप्त्यर्थं दर्शपूर्णमासयोस्तद्विधानं इत्याशङ्क्येत, ततो 'यज्ञोपवीत्येवाधीयीत याजयेत् यजेत वा' इत्यादितैत्तिरीयकश्रुत्या सर्वयज्ञार्थत्वेन यज्ञोपवीतविधानात् तत्प्रायश्चित्तस्यापि प्राप्त्युपपत्तेः विधानानर्थक्यम्। यदि तु एतेषां सर्वेषां वचनानां नवतन्तुकत्रिसूत्ररूपमुख्ययज्ञोपवीतविषयत्वात् वासोविन्यासरूपगौणोपवीतस्यैव अप्राप्तस्य दर्शपूर्णमासाङ्गत्वेन विधिराशङ्क्येत, ततो 'यज्ञस्य प्रसृत्यै अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरते अवधत्ते सव्यमिति यज्ञोपवीतं, एतदेव विपरीतं, प्राचीनावीतं, निवीतं मानुषम्' इति वचनेन तस्यापि सर्वयज्ञार्थत्वेन प्राप्तत्वात् अनुवाद एवायं दर्शपूर्णमासस्तुत्यर्थः। **इति प्राप्ते,** 'यज्ञस्य प्रसृत्यै' इत्यनेन फलाधिक्यजनकगुणाधिक्यद्वारकत्वेन अस्य जयादिहोमवत् सर्वयागाङ्गत्वावगत्या अनावश्यकत्वप्रतीतेः आवश्यकत्वार्थं दर्शपूर्णमासयोः वासोविन्यासविध्युपपत्तिः। अत एव शिष्टा अपि वासोविन्यासं विनाऽपि कर्मान्तराण्याचरन्ति। **यद्यपि** च 'यज्ञस्य' इति वाक्यं 'यज्ञोपवीत्येव' इत्यस्य वाक्यस्य शेषः संनिधानादिष्येत, **तथापि** समस्तेन तेन वासोविन्यासः एव फलाधिक्यार्थं विधीयते इति न दोषः। मुख्यब्रह्मसूत्ररूपयज्ञोपवीतं तु सदा स्मृत्यैव सर्वयज्ञार्थत्वेन विधीयते। एवं च "श्रौत-

प्रायश्चित्तसिद्धयर्थं इदमपि दर्शपूर्णमासाङ्गत्वेन ' उपव्ययते ' इत्यनेन विधीयते " इत्यपि के चित् ( शास्त्रदीपिकाप्रकाशकारादयः ) । निवीतादिसमभिव्याहारस्य उभयत्र प्रत्यभिज्ञापकस्य तुल्यत्वात्तु वासोविन्यासः एवात्र नियम्यते इति युक्तमुत्पश्यामः । सर्वथा ' उपव्ययते ' इति विधिः दर्शपूर्णमासविधिव्यवहितत्वात् तत्स्तावकत्वानुपपत्तेः इति सिद्धम् ।

**एवं वा**–। (**विधिर्वा स्यादपूर्वत्वात्**) । यावज्जीववाक्येन अग्निहोत्रे जीवनस्य निमित्तत्वावगमेऽपि वचनेनैव दाहावधि सायंप्रातःकाले मरणोत्तरं नित्यत्वेन विहिताग्निहोत्रप्रयोगो मृताग्निहोत्रम् । ( सायंहोमोत्तरं यजमानमरणे शरीरदाहात् प्राक् तदीयः प्रातर्होमः अध्वर्युणा कर्तव्यो भवति । तदिदं मृताग्निहोत्रं नाम इति तु केवलः ) । तस्मिन् मृताग्निहोत्रे ' प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयति' इत्यनेन श्रुतेन दैवाग्निहोत्रे किं यज्ञोपवीतस्य विधिरनुवादो वा इति चिन्तायाम् । स्वरूपेण प्राप्तस्यापि ब्रह्मसूत्रस्य श्रौतप्रायश्चित्तप्राप्तिफलकतया विधिः, वासोविन्यासरूपस्य वा नियमार्थं विधिः । **इति प्राप्ते, स्थितं** तावदपर्यवसितं, मध्ये चिन्ताऽन्तरारम्भः– **स्थितादुत्तरम्** = ( ' सतो वा लिङ्गदर्शनम् ' ) हिशब्दोपबन्धात् विध्यन्तरैकवाक्यत्वाच्च अयमपि निवीतादिवत् प्राचीनावीतस्तुत्यर्थः । अत एव ' उपव्ययते ' इतिवत् आनर्थक्याभावादपि विधिकल्पनं निरस्तम् । यज्ञोपवीतपदवाच्यब्रह्मसूत्रस्य च स्मृत्यैव जीवदग्निहोत्रे प्राप्तत्वात् औचित्यादिना स्तुत्युपपत्तिः । वासोविन्यासरूपस्यापि वा अनियमेन उक्तविधया जीवदग्निहोत्रे प्राप्तत्वात् स्तुत्युपपत्तिः । यदि तु नियमेन तत्प्राप्तिः स्तुतौ आवश्यकी अपेक्ष्येत, ततः संनिकृष्टासंभवात् विप्रकृष्टदर्शपूर्णमासादिस्थस्यैव अयमनुवादः स्तुत्यर्थं नानुपपन्नः । बहुवचनं तु ( देवेभ्यः इति ) प्रकृतिविकृत्यभिप्रायमित्युक्तमेव ।

**शंकर**–– ' उपवीतं तु दर्शाङ्गम् । ' ३ । ' उपवीते विधिर्मतः' । ४ । 'यज्ञोपवीतिनो नासौ । ' ५.

* **उपशब्दाः** उपसर्गरूपाः निपातरूपाश्च । **मणि.** पृ. १५९.

* **उप-शब्दस्य** ' उपोधिके च ' इति चकारेण लक्षणार्थस्यापि कर्मप्रवचनीयसंज्ञाव्याख्यानम् । **सु.** पृ. ४७८.

* **उपशयः** नाम यूपविशेषः यूपैकादशिन्यां एकादशः । तत्र परिव्याणादिसंस्काराभावेऽपि अमन्त्रकाः छेदनादयः के चिद्धर्माः वाचनिका विद्यन्ते । तावता सादृश्येन गौणी तत्र यूपत्वोक्तिः । ( नास्योच्छ्रायः किंतु दक्षिणतो भूमावेव उपशेते । नाप्यत्र पशुर्बध्यते ) । **वि.** ७।३।१३. * **उपशये** असंस्कृते यूपशब्दः उपचर्यते । **भा.** ११४।७।१०, * उपशये यूपशब्दः यूपसंस्कारान् नातिदिशति । ७।३।१३।३३–३४.

* **उपश्लेषः** ( औपश्लेषिकं अधिकरणत्वं ) सावच्छिन्नवृत्तित्वम् । यथा ' कटे आस्ते ' इति । **रहस्य.** पृ. १५२.

* **उपश्लेषलक्षणा** सुबन्ततिङन्ताद्येकपदरूपा विनियोक्त्री श्रुतिः । तत्र सुबन्तात्मकैकपदरूपा एकप्रत्ययरूपा च विनियोक्त्री क्रमेण बाध्यबाधकभावेन उक्ते यथा ' तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाऽङ्गता ॥ ' इति । ( वा. ३।३। ७।१४ पृ. ८४० ) **बाल.** पृ. ४१, ४२.

**उपसंजनिष्यमाणनिमित्तोऽप्यपवादः उपसंजातनिमित्तमपि उत्सर्गं बाधते** । पृ. २४९, परि. ६५. ' प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ' इत्येतन्मूलकमिदं नवीनाः पठन्ति । **शेखर.** पृ. २४९ । अनेन न्यायेन तवाद्यादेशत्राधकत्वसिद्धेः । (त्वपुत्र इत्यादौ त्वमौ तवममयोर्बाधकौ ) । **तत्त्वप्रकाशिका.** पृ. २०२ । अनेन न्यायेन ' अतोऽम् ' इत्यस्य विषये लुकः अप्रवृत्तिः । **भूतिः.** पृ. २०१.

* **उपसंहारः** असंजातविरोधित्वेन प्रबलमुपक्रममनुसृत्य नेतव्यः । **वि.** ३।३।१. * उपसंहारः उपक्रमानुरोधेन बलात् लक्षणाऽऽदिकं प्रतिपद्यते । **पराक्रमः.** पत्रं १. * उपसंहारः । काम्येषु कर्मसु सर्वाङ्गोपसंहारसमर्थस्यैव अधिकारः । **भा.**६।३।२।८–१०. * उपसंहारः । तन्नाम विशेषवचनेन उपसंह्रियते , यत् क्रतुसंयोगायासमर्थं कथंचित् परोक्षवृत्त्या संयुज्यते यथा साम-

दृश्यम् । **वा.** ३।३।१२।३३ पृ. ८७९. * उपसंहारः तन्मात्रसंकोचनार्थः । **सु.** पृ. ८. * उपसंहारः न क्व चित् दर्विहोमे ‘ पृथिव्यै स्वाहा ’ इत्यादौ स्वाहाकारपुनःश्रवणस्य ‘वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नाद्यं प्रदीयते’ इत्यनारभ्याधीतस्वाहाकारेण । **भा.** १०।८।१०।२०–२२, * उपसंहारः षोडशिग्रहणस्य अङ्गिरसां द्विरात्रे । १०।५।१३।५३–५४, * उपसंहारः । ‘ सप्तदश सामिधेनीरनुब्रूयात् ’ इति अनारभ्यविधेः वैमृधादिषु सामिधेनीविधिना उपसंहारः ‘ यत् साप्तदश्यं तत् वैमृधादिषु ’ इति । १०।८।९।१७–१९. * उपसंहारः सामान्यप्राप्तस्य विशेषे नियमनम् । ‘ सामान्यविधिरस्पष्टः संह्रियेत विशेषतः । ’ ( वा. पृ. ९७७. ) अनारभ्यविधिः सामान्यविधिः, मित्रविन्दाऽऽदिप्रकरणस्थस्तु विशेषविधिः । **मीन्या.** * **उपसंहारात्** अभ्यासः प्रबलः बहुबाधस्य अन्याय्यत्वात् । **पराक्रमः.** ८।१. * **उपसंहारे** हि सामान्ये प्राप्तस्य विशेषे संकोचो भवति । यथा ‘ पुरोडाशं चतुर्धा करोति ’ इति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणं ‘ आग्नेयं चतुर्धा करोति ’ इत्याग्नेये संकोच्यते इति चेत् ( न्यायसुधाकारोक्तं परिहारमाह– ) तन्मात्रसंकोचार्थत्वात् उपसंहारस्य । ( तद्दूषणाय संप्रदायमतमाह– ) अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो व्यापाररूपो विधेः । तन्मात्रसंकोचः इति कोऽर्थः ? आग्नेयमात्रे संकोचो वा, सामान्यप्राप्तस्य विशेषमात्रे संकोचो वा ? । आद्ये अनारभ्याधीतसाप्तदश्यस्य मित्रविन्दाऽऽदिप्रकरणस्थेन वाक्येन उपसंहारो न स्यात्, आग्नेये संकोचाभावात् । द्वितीये चतुर्धाकरणस्य पुरोडाशमात्रे प्राप्तस्य आग्नेये संकोचवत् अनुयाजाननुयाजसाधारण्येन प्राप्तस्य अननुयाजेषु संकोचात् उपसंहारः स्यादेव ( तस्मान्न तत् ) । **मीन्या.** पृ. ४५५–५७.

* **उपसंहारप्राबल्येन** दहराकाशो ब्रह्म इति न निर्णयः, किंतु बहुनुग्रहन्यायेन । **पराक्रमः.** ५७।१, * उपसंहारप्राबल्येन निराकाङ्क्षस्य विधेः संयोगो न युक्तः । ४३।२.

* **उपसंहाररूपः** प्रतिषेधः अनेकविधः । उपसंहारविधिश्च नानाविधः । इदं सर्वं सोदाहरणं ‘ विधिर्द्विविधः ’ इति महति प्रबन्धके **बाल**–ग्रन्थे द्रष्टव्यम् ।

* **उपसंहारस्थं** उपक्रमस्थेन बाध्यते यथा ‘ उच्चैर्ऋचा ’ इति ऋगादिपदं वेदोपक्रमेण । **बाल.** पृ. १४०.

* **उपसंहारार्थम्** । वैमृधादिषु सामिधेनीसाप्तदश्यपुनःश्रवणं अनारभ्याधीतसाप्तदश्यस्योपसंहारार्थम् । **भा.** १०।८।९।१७–१९.

**उपसंहारन्यायः** । आग्नेयचतुर्धाऽधिकरणम् । आग्नेयचतुर्धाऽधिकरणन्यायः । चतुर्धाकरणम् । चतुर्धाऽधिकरणम् । आग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणं, नाग्नीषोमीयादेः ॥

**शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत, मिथस्तेषामसंबन्धात् । ३।१।१५।२६ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः समाम्नायते ‘ आग्नेयं चतुर्धा करोति ’ इति । तत्र संदेहः किं आग्नेये अग्नीषोमीये च ऐन्द्राग्ने च ( इति ) सर्वत्र चतुर्धाकरणं, किंवा आग्नेये एवेति । किं प्राप्तम् ? शेषः चतुर्धाकरणं, आग्नेयमिति देवतागुणसंयुक्तः साधारणः प्रतीयते । अग्नीषोमीयेऽपि स्यात्, ऐन्द्राग्नेऽपि । कुतः ? तावपि आग्नेयौ । यस्य अग्निर्देवता अन्या च भवति, असौ आग्नेयः । तद्यथा या डित्थस्य डवित्थस्य च माता, सा डवित्थस्य भवति, एवमिहापि । यदि आग्नेयस्य अग्नीषोमीयस्य च पुरोडाशस्य मिथः संबन्धो न भवेत्, ततः आग्नेये एव चतुर्धाकरणं व्यवतिष्ठेत । भवति तु संबन्धः । तस्मादव्यवस्था । यथा ‘ आग्नेयस्य मस्तकं विभज्य प्राशित्रमवद्यति ’ इति सर्वेभ्यः प्राशित्रावदानं, एवं चतुर्धाकरणमपि ।

**वा** — यथासंयोगं अर्थव्यवस्था उक्ता । स तु संयोगः किं एकदेशेनापि भवति, उत समस्तेनैव इति विचारः । किं चतुर्धाकरणविधौ आग्नेयशब्देन द्विदेवत्यो गृह्यते, न वेति । गृह्यते इति ब्रूमः । कुतः ? ‘ **शक्यते हि द्विदेवत्यः संलक्षयितुमेकया । अग्नीषोमहविर्योगो मनोतायामिवाग्निना** ॥ ’ यद्यपि अग्निः अदेवता, न तु असमवेतः । समवेतत्वं च उपलक्षणकारणं, न देवतात्वम् । न चात्र अग्निः कार्ययोगी, येन

अत्यन्तमाद्रियेत। किं तर्हि ? उपलक्षणार्थः। न च उपलक्षणानि यथाश्रुतान्येव उपांशुयाजान्तरालकाललक्षणार्थपुरोडाशद्वयवत् कार्येषु आश्रीयन्ते। '**तथा पात्नीवतेऽप्युक्ता तेन त्वष्टुरतन्त्रता। तथा डित्थस्य मातेति माता डित्थडवित्थयोः॥**' (पात्नीवतशब्दस्य पशूपलक्षणार्थत्वात् तेनैव उपलक्षणत्वेन हेतुना त्वष्टुरनादरः)। उपलक्षणकार्ययोः मिथः संबन्धाभावात् साधारणत्वम्। भाष्यकारेण तु एतदेव (आनन्तर्यमचोदना ३।१।२४ इति सूत्रस्थं अचोदनापदम्) अनुषज्योक्तम् 'मिथस्तेषामसंबन्धादचोदना स्यात्' इति। भवति च एवंविधानां साधारणत्वं तथा च प्राशित्रे दृश्यते इति (प्राशित्रावदानरूपः शेषः अग्निगुणसंयुक्तोऽपि साधारणः)।

**व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः। २७॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति। व्यवतिष्ठेत वा चतुर्धाकरणमाग्नेये एव, न साधारणं भवितुमर्हति। कुतः ? अर्थसंयोगात्। अग्निना देवतया अर्थेन एकदेवत्यस्य संयोगः, न द्विदेवत्यस्य अग्नीषोमीयस्य ऐन्द्राग्नस्य चेति। कुतः ? यस्य हि अग्नीषोमौ देवता, उभयविशेषणविशिष्टः संकल्पः क्रियते। तस्य अग्निः सोममपेक्षमाणो देवता, न निरपेक्षः। यस्य चाग्निः सोममपेक्षमाणो देवता, न तस्मात् तद्धित उत्पद्यते। समर्थानां हि स उच्यते। सापेक्षं चासमर्थम्। तस्मान्न तद्धितान्तेन निरपेक्षाग्निदेवत्येन द्विदेवत्यस्य अभिधानम्। अतो यत्र निरपेक्षोऽग्निर्देवता, तत्रैव चतुर्धाकरणमिति। देवतालिङ्गस्य हि सामर्थ्येन संयोगो भवति तद्धितार्थस्य, नासति सामर्थ्ये। अथ यदुक्तं यथा प्राशित्रावदानं सर्वेभ्यः क्रियते एवं चतुर्धाकरणमपीति। युक्तं प्राशित्रावदाने। न तत्रैवं संबन्धः क्रियते, आग्नेयस्य प्राशित्रमवद्यतीति। कथं तर्हि ? आग्नेयस्य मस्तकं विभज्येति। एकं ह्येतद्वाक्यं 'प्राशित्रमवद्यति' इति द्वितीयं 'आग्नेयस्य मस्तकं विभज्य' इति। तत्र आग्नेयस्य मस्तकादवद्यतीति गम्यते। अन्यस्य मस्तकात् अन्यस्माद्वेत्यनियमः। यदि तु तत्र केवलाग्निदेवत्यो नाभविष्यत्, तदा आनर्थक्यपरिहाराय द्विदेवत्योऽप्यग्रहीष्यत। यत्तु डित्थस्य मातेति, युक्तं तत्र। अव्यासङ्गि मातृत्वम्। ततो जातो डित्थः, एतावता संबन्धेन मातेत्युच्यते। नात्र किंचिदपेक्ष्यते। स च तावांस्तत्र संबन्धोऽस्तीति डित्थस्य मातेति युक्तं वचनम्।

वा— '**यथैव हि ग्रहत्वेन चमसा नोपलक्षिताः। आग्नेयत्वं तथा न स्याद् द्विदेवत्योपलक्षणम्॥**' उद्दिश्यमानं तावत् विवक्षितमित्युक्तम्। न च अग्नीषोमीयैन्द्राग्नयोः आग्नेयत्वमस्ति। नहि अत्र अग्निसत्तामात्रमुपलक्षणम्। किं तर्हि ? तद्धितोपात्तं देवतात्वम्। अग्निः पुनः तद्विशेषणम्। यां चोद्दिश्य द्रव्यं त्यज्यते सा देवता। न च द्विदेवत्यः अग्निमुद्दिश्य त्यज्यते। '**नहि व्यासङ्गि विज्ञानमेकेन व्यपदिश्यते। नाग्नीषोमीय आग्नेय ऐन्द्राग्नो वा तदुच्यते॥ तद्धितार्थोऽत्र लिङ्गं हि समर्थानां च तद्धितः। असमर्थात् समासस्थान्न चाग्नेरस्ति तद्धितः॥**' आग्नेयः इति यो निरपेक्षाग्निदेवत्यः सोऽभिधीयते। न च द्विदेवत्ये निरपेक्षोऽग्निर्देवता। तेनायं तद्धितः नाग्नीषोमीयादिगताग्निशब्दात् उत्पद्यते इति न तदर्थस्य देवतात्वमाह। यत्र तु असौ निरपेक्षो देवता, स शक्य आग्नेय इति वक्तुम्। यत्तु प्राशित्रवदिति, तत्रोच्यते। देशविशेषलक्षणार्था अस्मिन् आग्नेयगुणश्रुतिः। सामान्यवाक्येन सर्वत्र प्राशित्रावदाने प्राप्ते मस्तकविरोगविशेषविधानार्थं एतद्वचनं इति वैषम्यम्।

'**स्थितेऽधिकरणे त्वेवं प्रत्यवस्थीयते पुनः। अविशेषादुभौ वेति कातीयवचनश्रुतेः। उक्तं कात्यायनेनेह दृष्ट्वा शातपथीं श्रुतिम्॥**' 'तं चतुर्धा कृत्वा पुरोडाशं बर्हिषदं करोति' इति। अत्रोच्यते। '**सत्यमस्ति श्रुतिर्येयमविशेषेण दृश्यते। विशेषे स्थाप्यते सा तु नित्यं शाखान्तरीयया॥**' प्राशित्रेऽपि तथेति चेन्न, गुणार्थत्वात्। 'मस्तकं विरुज्य' इति गुणपरत्वात् अशक्यः सामान्यविधिरुपसंहर्तुम्। इदं तु निर्गुणं पुनर्वचनं शक्नोति सामान्यं स्वविषये स्थापयितुम्। दूरस्थत्वात् अशक्यः अस्योपसंहार इति चेन्न, 'यस्य येनार्थसंबन्धः' (दूरस्थेनापि तस्य सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥' इति

श्लोकशेषः ) इति न्यायात् । तेन '**अवश्यमेव सामान्यं विशेषं प्रति गच्छति । गतमात्रं च तत् तेन विशेषे स्थाप्यते ध्रुवम्** ॥ ' अथवा विशेषेण प्राप्तत्वात् सामान्यमनूद्यते बर्हिषत्त्वकरणविधानार्थम् । अथ तदपि प्राप्तं, ततः क्रमार्थं श्रवणमिति वक्तव्यम् । अतश्च आग्नेयस्यैव चतुर्धाकरणं इति सिद्धम् । ' यदि तु तत्र केवलाग्निदेवत्यो नाभविष्यत् ' इति (भाष्यं) 'लक्षणार्था गुणश्रुतिः ' इत्येतस्यैव ( सूत्रावयवस्य ३।३।१५।२७ ) व्याख्या । केवलदेवत्याभावे हि मनोतायामिव अग्निशब्दः उभौ लक्षयेत् । तदर्था वा गुणश्रुतिर्भवेत् । अस्ति तु एकदेवत्यः, तस्मात् तस्यैव चतुर्धाकरणम् । यद्यपि च उपलक्षणं कार्ययोगि न भवति, तथापि तेनानुपलक्षितं न शक्यं ग्रहीतुं इति एकदेवत्यस्यैव ग्रहणं इति सिद्धम् ।

शा-- ' **अग्निः संबन्धमात्रेण भवेद् द्रव्योपलक्षणम् । संबन्धश्चाविशिष्टोऽतः सर्वेषामुपलक्षणम्** ॥ ' इति प्राप्ते, ब्रूमः ' **केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन् । नान्ययुक्ताग्निदेवत्यं प्रतिपादयितुं क्षमः** ॥ '

**सोम**-- व्यवस्थासंयोगं व्यवस्थाप्रसङ्गागतं समाप्य इदानीं संयोग एव किमेकदेशेन, उत समस्तेन इति विचार्यते इति **संगतिः** । **यद्यपि** विशेषवचनत्वमात्रेण न सामान्यवचनप्राप्तोपसंहारकत्वं, तथात्वे ' न ब्राह्मणं हन्यात् ' इतिसामान्यवचनस्यापि ' नात्रेयं हन्यात् ' इतिविशेषवचनेन उपसंहारप्रसङ्गात् । किंतु यत्र सामान्यवचनानुष्ठानाय विशेषापेक्षा, तत्रैव विशेषे उपसंहारः । प्रकृते च चतुर्धाकरणस्य प्रतिपत्तिरूपतया सर्वापेक्षितत्वेन सामान्यवचनस्य पुरोडाशमात्रे चतुर्धाकरणानुष्ठापकत्वोपपत्त्या अनुष्ठानाय विशेषापेक्षाविरहात् नोपसंहारकत्वं विशेषवचनस्य संभवति, **तथापीह** सामान्यवचनं न चतुर्धाकरणविधायकं, किंतु लाघवात् बर्हिषदत्वमात्रस्य क्रमस्य वा विधायकम् । ततः चतुर्धाकरणांशे अनुवादकत्वात् तस्य प्रापकाग्नेयवचनानुसारेण विशेषविषयत्वं पर्यवस्यति । **सूत्रार्थस्तु**- अन्योपलक्षकतया गुणभूताग्निसंयुक्तः शेषः अग्नीषोमीयादिसाधारणः प्रतीयते, उपलक्षणानां विशेषणानां च परस्परमसंबन्धादिति ।

**वि**--' चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम् । चतुर्धाकरणं सर्वशेषो वाऽऽग्नेयमात्रगम् ॥, उपलक्षणताऽऽग्नेये युक्ताऽतः सर्वशेषता । अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता ततः ॥, नाऽऽग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात् । तेनैकस्मिन् पुरोडाशे चतुर्धाकरणस्थितिः ॥ '

**भाट्ट**— दर्शपूर्णमासयोः ' आग्नेयं चतुर्धा करोति ' इत्यत्र नाग्निदेवताकहविष्ट्वं उद्देश्यताऽवच्छेदकं, विशिष्टोद्देशे वाक्यभेदापत्तेः । अपि तु तद्धितोपात्तं हविष्ट्वमेव । कथंचिद्वा अग्निसंबन्धिहविष्ट्वं तथा । अस्ति च अग्निसंबन्धः अग्नीषोमीयादावपि । अथवा ' पुरोडाशं चतुर्धा करोति ' इत्यनेन उपसंहारात् अग्निसंबन्धिपुरोडाशस्यैव तत्, न तु आज्यस्यापीति । अस्तु वा देवतात्वस्यापि कथंचिद्विवक्षा, तथापि द्विदेवत्येऽपि अग्नेः अस्त्येव देवतात्वम् । द्वंद्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसंबन्धात् । अतः सर्वेषां चतुर्धाकरणम् । **इति प्राप्ते**, प्रचुरप्रयोगात् तद्धितस्य देवतात्वे एव शक्तस्य संबन्धमात्रलक्षकत्वानुपपत्तेः । न तावत् अग्निसंबन्धित्वस्य विवक्षा । न च देवतात्वं द्विदेवत्ये प्रत्येकवृत्ति, इतरेतरयोगरूपचार्थविहितद्वंद्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव व्यासज्यवृत्त्यखण्डोपाधिरूपदेवतात्वाङ्गीकारात् । अत एव द्वंद्वान्ते इत्यादिप्रवादस्तु यत्र उद्देश्यत्वेन साहित्याविवक्षा, तत्र इति ध्येयम् । अतः केवलादग्निपदात् उत्पन्नस्तद्धितः नान्यसापेक्षस्य देवतात्वं अभिवदितुं क्षमः, सामर्थ्यविघातापत्तेः । यत्तु अग्निदेवताकत्वमविवक्षितमिति, तन्न । तथात्वे न तावत् प्रकृतद्रव्यत्वमात्रं अपूर्वसाधनत्वलक्षकं, तस्य देवतातद्धितेन अनुक्तेः । नापि हविष्ट्वं, तत्परत्वस्य देवतावाचित्वप्रतीतिं विना अनुपपत्तेः । नहि ' हविषि वाच्ये देवतातद्धित एव ' इति स्मृत्या नियम्यते, तद्वाचित्वेऽपि संबन्धसामान्ये तद्धितस्य सत्त्वात् । अतः प्रथमावगतस्य देवतात्वस्यैव उद्देश्यताऽवच्छेदकत्वम् । तस्य तु अनुयोगिप्रतियोगिसापेक्षत्वात् हविरार्तिन्यायेन ' अर्धमन्तर्वेदि' इतिवत् अग्निदेवताकहविष्ट्वस्यैव लक्षणया

उद्देश्यताऽवच्छेदकत्वसिद्धिः । तेन च ' पुरोडाशं चतुर्धा करोति ' इति सामान्यवचनस्य उपसंहारः । तस्मात् आग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम् ।

**मण्डन**— ' चतुर्धाऽऽग्नेय एव हि । ' १४.

**शंकर**— ' चतुर्धाऽऽग्नेय एव स्यात् । ' १५.

* उपसंहारन्यायः । सामान्यविधेः विशेषसंकीर्तने सति सासदश्यवत् तदुपसंहारो न्याय्यः । अनारभ्याधीतस्य सासदश्यस्य विशेषोपसंहारः न विशेषसंकीर्तनमात्रात्, किंतु अस्पष्टत्वात् । तथाहि, सामिधेनीनां सासदश्यं अनारभ्यवादेनोक्तम् । तद्यावत् सामिधेनीद्वारा सर्वविकृत्यर्थत्वं कल्पयितुमुपक्रम्यते, तावदेव मित्रविन्दाऽऽदिषु प्राकरणिकेन वाक्येन क्रतुविशेषसंबन्धकृते क्षीणा अर्थापत्तिः न क्रत्वन्तरसंबन्धं कल्पयति, इति अस्पष्टक्रतुसंबन्धात् सासदश्योपसंहारः । ( अनेन ग्रन्थेन ' सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ' इति उपसंहारन्यायस्वरूपं विवृतम् ) ; **पराक्रमः**. ३७।१–२.

* **उपसंहारन्यायस्य स्वरूपं** ' सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ' इति । ( **वा.** ३।४।१४।२१ पृ. ९७७ ) । अस्यापवादस्तु, '**स्पष्टस्य तु विधेर्नान्यैरुपसंहारकल्पना**' इति ( उत्तरार्धोक्तः ) न्यायः । **कौ.** १।३।६।१४ पृ. ९६०.

* **उपसत्** । ' तिस्र एव साह्नस्योपसदः ' इत्यादिवाक्यपर्यालोचनया पूर्वाह्णापराह्णोपसत्प्रयोगैक्यावसायः । **सु.** पृ. ७८७. * उपसत् पूर्वाह्णापराह्णयोः अभ्यस्यमानं आग्नेयसौम्यवैष्णवयागत्रयमेका उपसत् । तथाविधानां तिसृणां उपसदां ज्योतिष्टोमे विहितानां अवयवभूता प्रत्येकं आदौ आग्नेयी उपसत् ' अग्निमनीकं ' इति वाक्येन विहिता । ततश्चाग्नेय्यस्तिस्रो भवन्ति । एवं सौम्यः एवं वैष्णव्यः । **के.** * **उपसदः** द्वादश अहीने द्वादशाहे च, तिस्रो ज्योतिष्टोमादौ एकाहे, षट् अग्निचयने । **के.** * उपसदः ' द्वाभ्यां लोमावद्यति ' इत्यारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति । **भा.** ८।१।१०।१७. * उपसदः नाम इष्टयः आतिथ्याया ऊर्ध्वं त्रिषु दिनेषु अनुष्ठीयन्ते । **वि.** ४।२।१३, * उपसदः नाम ज्योतिष्टोमादौ दीक्षादिवसादूर्ध्वं सोमाभिषवदिवसात् पूर्वं कर्तव्या होमाः । ३।३।१३. * उपसदः साग्निचित्ये क्रतौ षट् । तत्र चोदकप्राप्तानां तिसृणामुपसदां स्वस्थानविवृद्ध्या षट्त्वं संपादनीयम् । तथा च प्रथमा + प्रथमा, द्वितीया + द्वितीया, तृतीया + तृतीया इति षट्त्वम् । न तु प्रथमा + द्वितीया + तृतीया, पुनः प्रथमा + द्वितीया + तृतीया, इति षट्त्वम् । **के.** ५।३।२।३. * **उपसदां** अहस्त्रयावच्छेदेन त्रित्वम् । **सु.** पृ. ६९०. * उपसदां दीक्षाणां च स्वस्थानविवृद्ध्या प्रयोगो द्वादशाहे । **टुप्.** ११।४।५।१८. * उपसदां द्वादशाहे तन्त्रेणानुष्ठानं द्वादशानामह्नां सहप्रयोगविधानात् । **वि.** ९।१।९. * उपसदां पुरस्तात् सौम्यः, अन्तरा त्वाष्ट्रः, उपरिष्टाद्वैष्णवः पशुः कर्तव्यः परंतु न ते उपसदङ्गम् । कालार्थः संयोगः । राजसूये । **भा.** ४।४।३।५–६, * उपसदां षट्संख्या सर्वसंपाद्या न तु प्रत्येकं, चयने । ५।३।१।१–२. * **उपसत्सु** अग्नीषोमीये पशौ आतिथ्यायां च एकमेव बर्हिः । तत्र आतिथ्यायां बर्हिः संस्क्रियते । तेनैव संस्कारेण उपसत्सु अग्नीषोमीये च प्रसङ्गसिद्धिः । **वि.** १२।१।१९. * उपसत्सु आतिथ्यायां अग्नीषोमीये च बर्हिषः स्तरणमन्त्रः अभ्यावर्तते देशपृथक्त्वात् । **भा.** १२।१।२०।४४. * उपसत्सु आतिथ्याऽन्ते च ( पञ्चदशरात्रे ) या सुब्रह्मण्या क्रियते, तस्यां यथादेवतमेव तन्त्रभेदः, नास्ति तन्त्रेणोच्चारणम् । तस्मात् द्वे अपि सुब्रह्मण्ये आह्वातव्ये । **टुप्.** १२।२।७।२२. * उपसत्सु उपांशु अनुब्रूयात् । अयं स्वरः उपसदपूर्वप्रयुक्तः, न परमापूर्वप्रयुक्तः । ज्योतिष्टोमे । **भा.** ९।१।२।२–३ वर्णकं २, * उपसत्सु गृहमेधीये च वैदिकी एवेतिकर्तव्यता । ७।४।२।२–१२, * उपसत्सु बर्हिःप्रोक्षणस्य आतिथ्याबर्हिःप्रोक्षणेन प्रसङ्गसिद्धिः । १२।१।१९।४३–४४.

**उपसत्सु यावदुक्तमकर्म स्यात्** । १०।७।४।४३ ॥

ज्योतिष्टोमे उपसदः नाम इष्टयः । तासु उपसत्सु उपसत्प्रकरणे यावत् उक्तं तावदेव कर्तव्यम् । इतरत्तु प्राकृतं चोदकप्राप्तं अकर्म स्यात् । क्रियते इति कर्म,

कर्तुं योग्यमित्यर्थः । न कर्म अकर्म । इतरत् सर्वं न कर्तव्यम् । इति सिद्धान्त एवोक्तः ।

**स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् । ४४॥**

उक्तपक्षनिरासार्थो वाशब्दः । कथं तर्हि निर्णयस्तदुच्यते । 'स्रुवेणाघारमाघारयति' इति स्रौवः आघारः श्रुतः । स्रुवेण कृतः स्रौवः प्रथमाघारः । स च अगुण एव श्रुतः । अविद्यमानः अपूर्वो गुणो यस्यासौ अगुणः । असौ हि प्राकृत एव अपूर्वगुणशून्यः श्रुतः । तथा च स्रुवेण कर्तव्यस्याघारस्य अगुणत्वात् प्राकृतस्यैव श्रुतत्वात् तेन स्रौवेण आघारेण प्राकृतस्य शेषस्य प्रथमाघारभिन्नस्य सर्वस्याङ्गजातस्य प्रतिषेधः स्यात् । चोदकप्राप्तस्यापि पुनर्विधानात् परिसंख्येयम् । इतरत् सर्वं परिसंख्यातम् । तस्मात् प्रथमाघारभिन्नं किं चिन्न कर्तव्यं इति पक्षान्तरम् ।

**अप्रतिषिद्धं वा, प्रतिषिध्य प्रतिप्रसवात् ।४५॥**

पक्षान्तरप्रतिषेधार्थो वाशब्दः । 'स्रुवेणाघारयति' इति नेयं परिसंख्या । कुतः ? प्रतिषिध्य प्रतिप्रसवात् । 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इति उपसत्प्रधानहोमात् प्राक् होमसामान्यं प्रतिषिध्य 'स्रुवेणाघारयति' इति स्रौवस्याघारस्य प्रतिप्रसूतत्वात् । तस्मात् प्रतिप्रसवोऽयं, न परिसंख्या । ततश्च अप्रतिषिद्धं प्रतिषिद्धं प्रयाजादि वर्जयित्वा अन्यत् सर्वं प्राकृतं कर्तव्यम् । इति अन्यः पक्षः ।

**अनिज्या वा शेषस्य, मुख्यदेवताऽनभीज्यत्वात् । ४६ ॥**

वाशब्दः प्रतिप्रसवपक्षस्य निरासार्थः । 'नान्यामाहुतिं जुहुयात्, स्रुवेणाघारयति' इति नायं प्रतिषिध्य प्रतिप्रसवः । किंतु 'नान्यां' इत्यनेन मुख्यदेवताऽनभीज्यत्वमुक्तम् । मुख्याया एव सोमस्य विष्णोश्च देवतायाः अग्नेः प्राक् अभीज्यत्वाभावो हि अनेनोक्तः । 'नान्यामाहुतिं पुरस्तात्' आग्नेय्या आहुतेः प्राक् 'जुहुयात् अग्निर्हि मुखं' इत्यभिधानात् । ततश्च नायं प्रतिप्रसवः । तस्मात् शेषस्य स्रौवाघारभिन्नस्य प्राकृतस्य अनिज्या न इज्या यागत्वाभावः । शेषो न कर्तव्यः इत्यर्थः । तस्मात् उपसदः अपूर्वं कर्म, यावदुक्तं कर्तव्यं इत्येव सिद्धान्तः । **के.**

* **उपसत्सु** होममन्त्राः 'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत् ( धीं ) त्वेषं वचो अपावधीत् ( धीं ) स्वाहा' 'या ते अग्ने रजाशया ( तनू० )' 'या ते अग्ने हराशया ( तनू० )' इत्याम्नाताः । तत्र प्रथममन्त्रस्थः 'तनूर्वर्षिष्ठाः' इत्यादिः अन्तिमो भागः द्वितीये तृतीये चापि मन्त्रे अनुषञ्जनीयः । **वि.** २।१।१६.

* **उपसत्कालीनं** सुब्रह्मण्याऽऽह्वानं अहर्गणे तन्त्रम् । **भा.** ११।३।१०।२३, * **उपसत्कालीने** सुब्रह्मण्याऽऽह्वाने 'चतुरहे सुत्यामागच्छ' इत्यत्र चतुर्दशाहे आगच्छ, त्रयोदशाहे आगच्छ, इत्यादिरूपेण सुत्याहानि नोपलक्षयितव्यानि, अविकारेण प्रयोगः । द्वादशाहे । ११।४।७।२७–२९.

* **उपसदादीनि** ऐकान्तिकसोमयागचिह्नानि । **वा.** २।३।१०।२१.

* **उपसद्दिने** मध्यमोपसद्दिने उत्तरवेदिः कर्तव्यतया विहिता । **संकर्ष.** २।१।२६, * **उपसद्दिनेष्वेव** अग्निश्चेतव्यः, न तु पूर्वम् । २।१।२७.

* **उपसद्धर्माः** उपसदपूर्वप्रयुक्ता एव, न ज्योतिष्टोमीयपरमापूर्वप्रयुक्ताः । **वि.** ९।१।२ वर्णकं २.

* **उपसद्विवृद्धौ** स्वस्थानविवृद्ध्या अधिकसंख्यापूरणम् । **भा.** ५।३।२।३.

⌛ **उपसत्स्वस्थानविवृद्धिन्यायेन** ( ५।३।२।३ ) प्रयाजानामेकादशत्वसिद्धये स्वस्थानविवृद्धौ उत्तमः प्रयाजस्त्रिरभ्यसनीयः । **वि.** ५।३।२.

⌛ **उपसन्न्यायः** । उपसदः अपूर्वाः ॥

**उपसत्सु यावदुक्तमकर्म स्यात् । १०।७।१४।४३ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः । तत्रेदमाम्नायते 'षडुपसद उपसाद्यन्ते' इति । ताः प्रकृत्य आमनन्ति 'अप्रयाजास्ता अननुयाजाः' इति । तत्र संशयः किं यावत् प्रतिषिद्धं तावन्न कर्तव्यं अन्यत् सर्वं कर्तव्यं, अथ किं यावदुपदिष्टं तावत् कर्तव्यं अन्यत् सर्वं न कर्तव्यं, अथवा अपूर्वा उपसदः इति । किं प्राप्तम् ? उपसत्सु

यावदुक्तं न कर्तव्यम् । 'अप्रयाजास्ता अननुयाजाः' इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दः अवशिष्टान् चोदकप्राप्तान् न वारयति । तस्मादविशिष्टं सर्वं कर्तव्यमिति ।

**स्रौवेण वाऽगुणत्वाच्छेषप्रतिषेधः स्यात् । ४४ ॥**

**भाष्यम्**— न चैतदस्ति, प्रतिषिद्धं वर्जयित्वा सर्वं कर्तव्यमिति । यावदुपदिष्टं कर्तव्यम् । स्रौवेण आघारेण सर्वमन्यत् परिसंख्यायते । अविशिष्टो हि असौ स्रौव आघारः पुनराम्नायते । न तत्र कश्चिद् गुणो विशिष्टः श्रूयते । तस्मात्तेन तत् परिसंख्यायते ।

**अप्रतिषिद्धं वा, प्रतिषिध्य प्रतिप्रसवात् । ४५ ॥**

**भाष्यम्**— न चैतदस्ति यावदुक्तं कर्तव्यं अवशिष्टं नेति । किं तर्हि ? सर्वं कर्तव्यं प्रतिषिद्धं वर्जयित्वेति । एवं हि श्रूयते 'अप्रयाजास्ता अननुयाजास्ताः' इति । एवं प्रतिषेधं कृत्वा कृतार्थः शब्दो नान्यस्य बाधको भवितुमर्हति । यदुक्तं, निर्गुणं स्रौवाघारश्रवणमिति । प्रतिप्रसवोऽयं, न परिसंख्या । एवं श्रूयते, 'नान्यामाहुतिं पुरस्ताज्जुहुयात् । यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् । स्रुवेणाघारमाघारयति' इति । नान्यामाहुतिं पुरस्ताज्जुहुयात् प्राकृतीभ्यः । एता हि आघारादिका आहुतयः सर्वेष्टीनां मुखम् । यत् अन्यामाहुतिं औपसदीं अग्न्यादिकां जुहुयात्, अन्यत् मुखं कुर्यात् । तस्मात् स्रुवेण आघारमाघारयति इति आघारादिका आहुतीः जुहोति इति आघारादीनामभावमाशङ्क्य पुनः प्रतिप्रसवोऽयं आघारमाघारयतीति । नान्यत् न करोति, किं तर्हि ? आघारमाघारयति, न नाघारयतीति । तस्मान्न परिसंख्या । प्रतिषिद्धं वर्जयित्वा सर्वं कर्तव्यं इति ।

**अनिज्या वा शेषस्य, मुख्यदेवताऽनभीज्यत्वात् । ४६ ॥**

**भाष्यम्**— अथवा, अपूर्वा उपसदः । अनिज्या प्राकृतस्य शेषस्य । नित्यानुवादोऽयं, 'अप्रयाजास्ता अननुयाजाः' इति । मुख्यदेवतां अनभीज्यां उपदिश्य प्रधानदेवता विधीयन्ते । नान्यामाहुतिं पुरस्ताज्जुहुयात् आग्नेय्याः अग्निर्हि मुखमित्यभिधाय, यदन्यामाहुतिं पुरस्ताज्जुहुयात् वैकृतीं, अन्यन्मुखं कुर्यादाग्नेय्याः । अग्निर्हि मुखम् । स्रुवेणाऽऽघारमाघारयति, नान्यं यजते अग्निमनीकं, सोमं शल्यं, विष्णुं तेजनमिति । तदेतदाघारेण निराकाङ्क्षीकृतं नान्येन प्राकृताङ्गेन सह एकवाक्यतामेति । अतः प्राप्ता मुख्यदेवता अनभीज्याः अत्रोपदिश्यन्ते । नान्यं यजति, तस्मादग्निः प्रथमः इज्यते इति ।

**सोम**— 'न पत्नीः संयाजयन्ति' इत्यस्य अनुवादत्वेऽपि 'अप्रयाजाः' इत्यादेः नानुवादत्वं इत्युत्थानात् प्रत्युदाहरणसंगतिः । **सूत्रार्थस्तु**— उपसत्सु यावदुक्तं कर्म स्यात् प्रतिषिद्धवर्जं यावत् कर्तव्यं स्यात् इति ।

**वि**— 'उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं किमाचरेत् । यावदुक्तमुता, ऽऽद्योऽस्तु चोदकस्यानिवारणात् ॥, स्रौवाघारे पुनःश्रुत्या शिष्टस्य परिसंख्यया । अपूर्वार्थत्वतो वाऽन्योऽनुवादोऽत्र निषेधगीः ॥' परिसंख्यार्थं एव आघारस्य पुनर्विधिः । आहुत्यन्तरनिन्दा तु तच्छेषभूतोऽर्थवादः । यदि परिसंख्या त्रिदोषा इत्युच्येत, तर्हि गृहमेधीयवत् अपूर्वं कर्मास्तु । प्रयाजादिनिषेधो नित्यानुवादः । सर्वथा यावदुक्तमनुष्ठेयम् ।

**भाट्ट**— ज्योतिष्टोमे उपसदो नाम 'अग्निमनीकं, सोमं शल्यं, विष्णुं तेजनं' इति प्रधानत्रयं विधाय 'अग्निर्हि मुखं' इत्यनेन स्तुत्वा 'नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्तात् ( जुहुयात् ) अन्यन्मुखं कुर्यात् स्रुवेणाऽऽघारमाघारयति' इति श्रुतम् । तथा 'अप्रयाजास्ता अननुयाजास्ताः' इति च । तत्रोपसदां किं गृहमेधीयवदपूर्वत्वं न वेति चिन्तायां, 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यनेन प्रधानपूर्वभाव्याहुतिमात्रपर्युदासात् आघारस्यापि पर्युदासे प्राप्ते, 'स्रुवेणाघारमाघारयति' इत्यस्य प्रतिप्रसवत्वेन सार्थक्यात् नास्याज्यभागश्रवणवत् अपूर्वतापरत्वम् । अत एव अप्रयाजाः इत्याद्यवयुत्यानुवादो नञ्पर्युदासप्रशंसाऽर्थः । ततश्चोत्तराघारप्रयाजाज्यभागानूयाजवर्जं सर्वं प्राकृतमङ्गजातं कार्यमित्येकः पक्षः । यद्वा नान्यामित्यादिः स्रुवेणाघारमाघारयति इत्यन्तः सर्वोऽपि प्रधानविधेरेवार्थवादः । अन्यां आग्नेयीतोऽन्यां प्रधानाहुतिम् । तत्र हेतुः अग्निर्मुखमिति । अङ्गत्वात्तु स्रौवाघारादिकरणेऽपि न दोष इति च स्तुतिः । अतश्च सर्वाङ्गकरणे अतिदेशेन प्राप्ते,

'अप्रयाजाः' इत्ययं प्रयाजानुयाजमात्रपर्युदासः इति **द्वितीयः**। वस्तुतस्तु– 'स्रुवेणाघारमाघारयति' इत्यस्यानुवादत्वेनोपलक्षणत्वे प्रमाणाभावात् स्वतन्त्रविधित्वे अपि नापूर्वतापरत्वं, अपितु आघारत्वावच्छेदकावच्छेदेन स्रुवमात्रविधानं, तत्र च पूर्वाघारे स्रुवप्राप्तावपि उत्तराघारे तत्प्राप्तिः फलम्। हिरण्यगर्भमन्त्रवद्वा तन्मात्रे स्रुवविधानं, ततश्चास्य आघारविधायित्वाभावात् नापूर्वतापरत्वमिति **तृतीयः**। सिद्धान्तस्तु, 'नान्यामाहुतिं पुरस्ताज्जुहुयात्' इत्यस्य पृथङ्निषेधविधित्वकल्पने वाक्यभेदापत्तेः अस्यार्थवादत्वावसायात् न तावदाद्यः पक्षः। पाठक्रमादेव आग्नेय्याः प्रधानप्राथम्यसिद्धेः, ततः पूर्वमन्यस्या आहुतेः प्रधानभूताया अप्रसक्तत्वादेव तन्निषेधानुवादानुपपत्तेः 'आघारमाघारयति' इत्यस्य उपलक्षणत्वेन अनुवादत्वाङ्गीकारे वैयर्थ्यप्रसङ्गाच्च न द्वितीयोऽपि। अत एव अग्निर्मुखमित्येव प्रधानस्तुतिः। नान्यामित्यादिस्तु स्रुवेणेत्यस्य विधेः शेषः। प्रधानस्य पुरस्तात् पूर्वं स्रौवाघारादन्यामाहुतिं उत्तराघारप्रयाजाज्यभागादिरूपां न जुहुयात्। अतो लाघवात् स्रौवाघार एव कार्यः इति तत्स्तुतिः। अत एव नोत्तराघारे स्रौवविधिरिति तृतीयोऽपि, अर्थवादानुसारेण अस्य धात्वर्थविधिमात्रपरत्वनिश्चयात्। स्रुवमात्रविधौ प्रधानात् पूर्वमाहुत्यन्तरस्यापि प्रसक्तत्वेन तन्निषेधानुवादानुपपत्तेः। अतोऽत्र स्रौवाघारस्यैव विधेयत्वात् आज्यभागश्रवणवत् अपूर्वतापरत्वमेव। अप्रयाजा इति च तस्यैव औचित्येन स्तुतिरिति सिद्धम्। ११।७।१२.

**मण्डन**— 'न चोदकेनाङ्गविधोपसत्सु।'

**शंकर**— 'स्युस्त्वपूर्वा उपसदः।'

* **उपसर्गः** अर्थद्योतकः तस्य अर्थाभिधाने व्यापारो नैव विद्यते ( श्लोको गद्यतां नीतः )। **वा.** १।३।९।३३ पृ. ३०६. * उपसर्गः वाचकः इत्येकः पक्षः, द्योतकः इत्यपरः पक्षः। द्योतकत्वेऽपि विनियोजकश्रुतित्वाविघातः। **बाल.** पृ. ४१, * उपसर्गः विनियोजिका श्रुतिः वाचकत्व-द्योतकत्व-पक्षद्वयेऽपि। पृ. ४१.
* **उपसर्गस्य** पारतन्त्र्यनियमः। **सोम.** १०।४।५.
* **उपसर्गाणां** परस्परान्वयव्युत्पत्तिः। **भाट्ट.** १०।४।६.
* उपसर्गाणां स्वतन्त्रार्थाभिधायकत्वं नास्ति। **के.**

⌛ **उपसर्गन्यायः**। यत्रैकवस्तुनः उपाधिभेदेन नानात्वविवक्षा, तत्रायं प्रवर्तते। ( भिन्ना उपसर्गाः एकमेव धातुं नानाऽर्थकं कुर्वन्ति 'प्रहाराहारसंहारविहारपरिहारवत्' तद्वदन्यत्रेति )। **साहस्री.** ७८२.

* **उपसर्गरूपा** निपातरूपाश्च उपशब्दाः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप इत्युपसर्गा द्वाविंशतिः। एतद्भिन्ना नञादयो निपाताः। प्रादीनां च धातुसमभिव्याहारे एव उपसर्गत्वं निपातत्वं च। तत्रापि कश्चित् धात्वर्थमतिक्रम्य वर्तते। कश्चित्तमेव विशिनष्टि। यथा प्रस्थानं, पराजयः, प्रवेशः, विजयः इति। अत्र गमनजयाभावौ उपसर्गार्थौ। प्रविशति इत्यादौ तन्निष्ठः प्रकर्षः, विजयते इत्यादौ जयत्यर्थे विशेषः। चादिनिपातानां केषां चित् केवलप्रयोज्यत्वेऽपि सहप्रयुज्यमानपदार्थान्वयित्वं तदर्थानाम्। यथा 'तटस्थः स्वानर्थान् घटयति च मौनं च भजते' 'विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते' इत्यादौ लोके, 'मैत्रावरुणः प्रेष्यति चानु चाह' इत्यादौ वेदे समुच्चयः। चार्थो भावनाऽन्वयी। 'घटं च पटं चानय' इत्यादौ लोके, 'यदग्नये च प्रजापतये च' इत्यादि वेदे च उपपदार्थान्वयित्वम्। तेन अग्निनिरूपितसमुच्चयस्य प्रजापतौ विशेषणत्वेन, समुच्चयस्य भावनाऽन्वयाभावेन न विधिः, किंतु समुच्चयविशिष्टप्रजापतिविधिः। न चैवं 'गौश्चाश्वश्च' इत्यत्र दक्षिणोद्देशेन समुच्चयविधिर्न स्यात्, इष्टापत्तेः। विशिष्टदक्षिणाविध्यङ्गीकारात्। तस्याश्च 'ऋत्विग्भ्यो ददाति' इति विनियोगः चमसाध्वर्युव्यावृत्त्यर्थः। एतच्च दशमे स्फुटम्। तत्र उपसर्गा द्योतकाः, न वाचकाः। प्रजयति इत्यादौ प्रकृष्टजयादौ जिधात्वादेः लक्षणयैवोपपत्तेः, तत्र शक्तिकल्पने गौरवात्, प्रतिष्ठते इत्यत्र गमने प्रशब्दार्थे विभक्त्यर्थान्वयप्रसङ्गात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात्। **न चैवं** नञोऽपि अभावे शक्तिर्न स्यात् इति **वाच्यम्**। 'भूतले न घटः' इत्यत्र घटपदलक्षितभेदस्य नामार्थयोः भेदान्वयाव्युत्पत्त्या भूतले अनन्वयापत्तेः। भेदस्य नञर्थत्वे तु

निपातार्थातिरिक्ते तन्नियमात् न भेदान्वयानुपपत्तिः। **न च** घटपदस्य घटभिन्ने लक्षणया भूतलेन अन्वयोऽस्तु इति **वाच्यम्**। भेदप्रकारकबोधस्य आनुभविकत्वात् इति **केचित्**। **अन्ये तु** धातौ शक्तिलक्षणयोः उपसर्गसमभिव्याहारतदभावहेतुकत्वस्य, उपसर्गाणां द्योतकत्वशक्तेश्च कल्पनायां गौरवात् वाचकतैव युक्ता। एवं च एवकारादौ अन्ययोगव्यवच्छेदायोगव्यवच्छेदयोः, इवकारादौ सादृश्यादीनां च शक्तिप्रदर्शनमुपपन्नम्। अत एव 'अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति वैदिकप्रयोगस्य 'तत्रैवायाति' 'इत एवाभिवर्तते' इति लौकिकप्रयोगस्य चोपपत्तिः। अतो वाचकत्वं इत्याहुः। **मणि.** पृ. १५९–१६०.

* **उपसर्गार्थसत्ता** धात्वर्थसत्तायाः प्रत्ययार्थेन अर्थविप्रकर्षात् दुर्बला। तस्मात् उपसर्गार्थसत्ताविधानं धात्वर्थसत्ताविधानेन बाध्यते। 'पत्नयः उपगायन्ति'। **भा.** १०।४।५।९.

* **उपसर्जनम्**। कदा चित् उपसर्जनीभूतोऽर्थो विधित्सितः, प्रधानीभूतोऽनुवादः। तद्यथा 'दण्डी' इत्युपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दोऽवगम्यते। कदा चित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति। यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति। एवमिहापि (अरुणया इत्यत्र) यदि उपसर्जनभूतः अरुणो गुणः, प्रधानभूतं कारकं, तथापि अनूदिते कारणे अरुणगुणविधानार्थं वचनं युज्यते। **भा.** ३।१।६।१२ पृ. ६८७.

* उपसर्जनम्। 'प्रथमानिर्दिष्टं समास उपसर्जनं' इति येयं एकदेशस्य उपसर्जनसंज्ञा, सा पूर्वनिपातमात्रसिद्ध्यर्था 'उपसर्जनं पूर्वं' इति, न पुनः उपसर्जनत्वेन पदान्तरासंबन्धार्था। **ऋजु.** पृ. ७१. * उपसर्जनं यद्यपि कर्मादयः, तथापि विशेषणेन संबध्यन्ते। समासस्थं हि उपसर्जनं विशेषणैर्न संबध्यते। वाक्यस्थं तु 'ऋद्धस्य राज्ञः पुरुषः' इतिवत् संबध्यमानं दृष्टम्। **वा.** ३।४।४।१३ पृ. ९३८. * उपसर्जनं वृत्तिस्थं न पदान्तरेण संबध्यते। **रत्नाकर.** पृ. ३४६. * न उपसर्जनं अभिभूतस्वार्थवृत्ति विशेषणान्तरैः संयुज्यते। 'तद्धितार्थे च वृत्तस्य (इन्द्रशब्दस्य) वृद्धिः स्यादुत्तरे पदे (महेन्द्रपदे)। महत्त्वं द्रव्यसंबन्धि नोपसर्जनसंगति॥' महैन्द्र इति स्यात्, न चेन्द्रविशेषणं महत्त्वं (स्यात्)। **वा.** २।१।५।१६ पृ. ४१९. * नहि उपसर्जनं पदं पदान्तरेण संबध्यते राजपुरुषवत्। **बृहती.** पृ. ७०. **उपसर्जनस्य**। नह्युपसर्जनस्य विशेषणसंबन्धो युज्यते। **वा.** ३।४।४।१३ पृ. ९३७.

* **उपसर्जनत्वं** अङ्गत्वानपेक्षोपकारित्वलक्षणं इत्यपि। एकोपकारकत्वलक्षणं च तत्। **सु.** पृ. १३७८. * उपसर्जनत्वं अर्थोऽपि प्रथमावगतमन्त्रावरुद्धो नेतरं गृह्णाति स्वप्राधान्ये च संभवति न परोपसर्जनत्वं प्रतिपद्यते। **वा.** ३।३।७।१४ पृ. ८३२. * **उपसर्जनत्वस्य** व्याकरणे गुणत्वप्रसिद्धिः। **सु.** पृ. १४२२, * उपसर्जनत्वस्य संबन्धं विना असिद्धिः। पृ. ८२८.

* **उपसादनं** वेदिस्तरणयोग्यस्य बर्हिषः लवने प्रयोजनम्। **भा.** ११।४।१४।४७.

* **उपस्तरणं अभिघारणं च** कृष्णलेषु न कर्तव्यम्। **भा.** १०।२।३।३–१२. * उपस्तरणं इडापात्रे क्रियमाणं इडायाः संस्कार एव। **वि.** १०।७।५.

⌛ **उपस्तरणादिविधिन्यायः**। उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तसंपत्तिः॥

**उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात्। १०।८।१२।२९॥**

**भाष्यम्**— दर्शपूर्णमासयोराम्नायते 'चतुरवत्तं जुहोति' इति। तत्रायमर्थः सांशयिकः किं सहोपस्तरणाभिघारणाभ्यां चतुरवत्तं, उत प्रधानद्रव्यादेव चतुरवदातव्यम्। अधिकमुपस्तरणमभिघारणं चेति। किं प्राप्तम्? प्रधानद्रव्यादेव चतुरवदातव्यम्। कुतः? उत्पत्तितादर्थ्यात्। पुरोडाशोत्पत्तेर्होमार्थता भवति। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। यज्जुहोति तच्चतुरवत्तं कर्तव्यम्। पुरोडाशश्च होमार्थो नोपस्तरणाभिघारणे। तस्मात् पुरोडाशस्य चतुरवदातव्यमिति। अधिकमाज्यं स्यात्। अतुल्यं हि तत् पुरोडाशेन। पुरोडाशे होमार्थे तद्गुणभूतमाज्यम्। तेन

यद्यपि सहाज्येन षडवत्तं भवति, तथापि होमे चतुरवत्तमेव कृतम्। यथा लोके 'प्रस्थभुग्देवदत्तः' इत्युच्यते। यद्यपि सूपशाकादिभिरधिकः प्रस्थो भवति, तथापि भुजौ प्रस्थो निर्दिश्यते, व्यञ्जनानि ओदनार्थानि।

**तत्संस्कारश्रुतेश्च । ३० ॥**

**भाष्यम्**—प्रधानावदानसंस्कारार्थेन च उपस्तरणाभिघारणे श्रूयेते 'यदुपस्तृणाति, अभिघारयति, अमृताहुतिमेवैनां करोति' इति। तेन उपस्तरणाभिघारणसंयुक्तं प्रधानद्रव्यात् चतुरवत्तं होतव्यमिति गम्यते।

**ताभ्यां वा सह, स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात्। ३१ ॥**

**भाष्यम्**— ताभ्यां वा सह द्विर्हविषोऽवदाय चतुरवत्तं कर्तव्यम्। कुतः? स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनं भवति। 'सकृदुपस्तृणाति सकृदवद्यति, द्विरभिघारयति, चतुरवत्तस्याप्त्यै' इति द्विरभिघारणेन चतुरवत्तं पूर्णं दर्शयति। इतरथा षडवत्तं तेन पूर्येत। आह, दर्शनमेतत्। प्राप्तिरुच्यतामिति। अत्रोच्यते। चतुरवत्तं होमे श्रूयते, 'चतुरवत्तं जुहोति' इति, न होमार्थे पुरोडाशे सांनाय्ये वा। नैवं श्रूयते, यद्धोमार्थं द्रव्यं तच्चतुरवत्तं कुर्यादिति। चतुरवत्तं श्रूयमाणं होमेन असंबध्यमानमनर्थकं स्यात्। अथोच्यते। प्रयोगवचनग्रहणात् अर्थवद्भविष्यति। तन्न। साक्षात् होमसंबन्धे वचने सति चतुरवत्तं जुहोतीति, नान्यत् प्रयोगवचनं कल्प्यते। अस्मिंश्च साक्षाद्वचने तदर्थादवत्तं, नातदर्थादिति न विशेषः श्रूयते। तदर्थात् अतदर्थाद्वा चतुरवखण्डनसंयुक्तं द्रव्यं होतव्यम्। एवं च श्रुतिः परिगृह्यते। इतरस्मिन् पक्षे वाक्यं परिगृह्येत। 'द्विर्हविषोऽवद्यति' इति च विकल्पः स्यात्, यदि हविश्चतुरवत्तं दीयेत। तथेदमपरं श्रवणं असदनुवादभूतं स्यात्, चतुरवत्तं वा विकल्पयेत्। अभावाच्च पक्षे विकल्पो न न्याय्यः स्यात्। तस्मात् सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति।

**टुप्**— 'यत् जुहोति' इति यदि जुहोतिरनूद्येत, तथा सति हविः लक्षणार्थमुच्चार्येत। अयं दोषः स्यात्। तस्मात् इयं वचनव्यक्तिः 'यत् चतुरवत्तं, तत् जुहोति' इति। तत् चतुरवत्तं विद्यते (हविषो द्विरवदानविधानात् उपस्तरणाभिघारणविधानाच्च)। विद्यमानत्वात् तत् शक्यते अनुवदितुम्। अनूद्य च तस्य होमसंबन्धः क्रियते। तत्र होमो वा चतुरवत्तार्थः, चतुरवत्तं वा होमार्थं, इति (प्रसङ्गात् चिन्त्यते)। यदि होमः चतुरवत्तार्थः, तदा अदृष्टं कल्पनीयम्। अथ चतुरवत्तं होमार्थं, ततः दृष्ट एवार्थो होमनिर्वृत्तिः। तस्मात् चतुरवत्तं होमार्थमिति।

**तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात्। ३२ ॥**

**भाष्यम्**—'चत्वारि वा एतानि देवदधान्यवदानानि, यदुपस्तृणाति तदनुवाक्यायै, यत् पूर्वमवदानं तद्याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्काराय' इति चतुरवत्तस्य चत्वार्यवदानानि संकीर्त्य अनुवाक्यादिभिः भक्तिवादेन अवयवशः संकीर्तयन् उपस्तरणादीनि दर्शयति। तस्मात् सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति। दधशब्दो भागधेयवचनः। तद्यथा, 'कङ्कटकाय दधं, नापिताय दधं' इति। देवदधानि देवभागा इत्यर्थः।

**शा**— '**तत्र द्वितीयासंयोगाच्चतुःखण्डनसंस्कृतम्। होतव्यं हविषस्तस्माद्धोतव्यात् खण्डनं चतुः॥**' तस्मात् हविष एव चतुरवदानं उपस्तरणाभिघारणं तु अधिकम्। इति प्राप्ते ब्रूमः। (वार्तिककारीयं सिद्धान्तमाह—) '**चतुःसंख्याऽवदानस्था होमाङ्गं चोद्यते यदि। तत एवं भवेत्, सा तु यथाप्राप्ताऽनुकीर्त्यते॥**' (भाष्योक्तसिद्धान्तप्रकारमाह—) यद्यपि संख्या होमाङ्गतया विधीयते, तथापि साधनमात्रपरिच्छेदेन अङ्गत्वोपपत्तेः आज्यस्यापि च संस्कारद्वारेण होमसाधनत्वात् उपस्तरणाभिघारणाभ्यां चतुरवत्तमित्याश्रीयते। एवं च द्व्यवदानस्य पाक्षिको बाधो न कल्पितो भवति।

**सोम**— उत्तरवेद्यग्न्योर्यदि विकल्पः, तदा द्व्यवदानचतुरवदानयोरपि विकल्पः इत्युत्थितेः दृष्टान्तसंगतिः। 'द्विर्हविषः' इत्यनेन संख्याविशिष्टावदानविधिः चतुरवत्तवाक्ये होममात्रविधिः इतिपक्षे, चतुरवत्तवाक्ये

तद्विशिष्टहोमविधिः द्विर्हविषः इत्यत्र संख्यामात्रविधिः इति पक्षे च लाघवगौरवकृतविशेषाभावात् द्विर्हविषः इत्यस्य संख्याविशिष्टावदानविधायकत्वेऽपि स्वातन्त्र्येण अवदानविधौ अदृष्टार्थत्वापत्त्या दृष्टार्थत्वाय प्रदानोपक्रमतयैव अवदानस्य विधेयतया पञ्चमोक्तप्रदानान्तानुसमयस्य उपपन्नत्वात्, चतुरवत्तवाक्यस्य अवत्तविशिष्टहोमविधायकत्वे चतुःसंख्यायाः विध्यनङ्गीकारेण हविषः चतुरवदानाप्रसक्ततया एतदधिकरणप्रतिपाद्यस्य हविषो नित्यं द्विरवदानस्य सिद्धेश्च पक्षद्वयमपि वार्तिककारस्य संमतम्। **सूत्रार्थस्तु**– पुरोडाशोत्पत्तेर्होमार्थत्वात् प्रधानस्य पुरोडाशस्यैव चतुरवदानं, होमसंयोगेन होतव्यस्यैव चतुरवदानप्रतीतेः। आज्यं तु पुरोडाशेन अतुल्यत्वादधिकं इति नोपस्तरणाभिघारणाभ्यां संख्यापूरणं, तदुत्पत्तेः संस्कारार्थतया गुणभूतत्वात्। न चैवं संख्याधिक्यं लोके प्रस्थभुक् देवदत्तः इत्यादौ गुणेन सूपादिना आधिक्यदर्शनात् इति। ( गुणाधिक्येऽपि न प्रधानाधिक्यं इति पूर्वपक्षन्यायोऽत्र )।

**वि**— 'चतुर्द्विर्वा पुरोडाशेऽवदानं, होमतोक्तितः। चतुर्, मैवं सहाज्येन सिद्धस्यात्रानुवादतः॥ '

**भाट्ट**— दर्शपूर्णमासयोः 'चतुरवत्तं जुहोति' इत्यनेन हविषः एव चतुरवदाय होमः, उत हविषो द्विरवदानं, उपस्तरणाभिघारणाभ्यां चतुरवत्तसंपत्तिः **इति संशये**, द्वितीयाश्रुत्या चतुरवत्तोद्देशेन प्रक्षेपविधिना चतुरवदानसंस्कृतद्रव्यत्वमेव अत्रोद्देश्यताऽवच्छेदकं, न तु अवदानसंस्कृतद्रव्यत्वमात्रं, चतुःपदस्य सुच्प्रत्ययान्तस्य जुहोत्यन्वये होमावृत्तिकल्पनाऽऽपत्तेर्विशिष्टविधौ गौरवापत्त्या षष्ठविधिप्रकारापत्तेश्च, निष्ठाप्रत्ययान्तावत्तपदलक्ष्यक्रियायामेव अन्वयस्य व्युत्पन्नतया विशिष्टोद्देशे वाक्यभेदाभावात्। अतश्च उद्देश्यप्रसिद्ध्यर्थं यागीयद्रव्यस्य चतुःसंख्याकावदानविधिकल्पनात् हविषः एव चतुरवत्तं गृहीत्वा तस्य प्रक्षेपाख्या प्रतिपत्तिः, उपस्तरणाभिघारणे तु अधिकः संस्कारः, इति मन्वानस्योत्तरम्– नात्र चतुःसंख्याकावदानविधिकल्पना, 'द्विर्हविषोऽवद्यति' इत्यनेन द्वित्वविशिष्टावदानस्य हविःसंस्कारार्थत्वात्। अत एव अत्रत्यचतुःपदं नोद्देश्यताऽवच्छेदककोटिप्रविष्टं गौरवात्। अतश्च **यथैव** हि पूर्वाधिकरणे 'अथातोऽग्निमग्निष्टोमेन' इत्यत्राग्निष्टोमपदेन अग्निष्टोमसंस्थाकज्योतिष्टोमत्वोक्तावपि नाग्निष्टोमसंस्थाकत्वस्य उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वं गौरवात् प्रयोजनाभावाच्च, किंतु ज्योतिष्टोमत्वस्यैव उद्देश्यताऽवच्छेदकत्वं, **तथा** प्रकृतेऽपि अवदानसंस्कृतद्रव्यत्वमेव उद्देश्यताऽवच्छेदकं, न तु चतुःसंख्याऽपि तत्कोटिप्रविष्टा। अत एव चतुःपदमुपस्तरणाभिघारणाभिप्रायेण अनुवादमात्रम्। अत एव स्विष्टकृति 'सकृदुपस्तृणाति सकृदवद्यति द्विरभिघारयति चतुरवत्तस्याप्त्यै' इत्यभिघारणद्वित्वेन चतुःसंख्यासंपत्तिं दर्शयति। तथा 'यदुपस्तृणाति तदनुवाक्यायै, यत् पूर्वमवदानं तद्याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्काराय' इति चत्वार्यवदानानि संकीर्तयन् उपस्तरणाभिघारणे दर्शयति। अतः सिद्धं चतुःपदं प्रचयशिष्टसंख्याऽनुवादः। एवं जामदग्न्यादीनां त्र्यवदाने विहिते तेषां पञ्चावदाने पञ्चत्वमपि प्रचयशिष्टानुवादः एव। एवं प्रकृतौ चतुःपञ्चपदयोः अनुवादत्वेऽपि पशौ 'यद्यपि चतुरवत्ती यजमानः' इत्यत्र पञ्चत्वस्य पञ्चत्वविशिष्टावदानस्य वा विधिरेव। तत्राङ्गेषु द्व्यवदानस्य, वपायां च सकृदवदानस्य विहितत्वेन पञ्चत्वस्य प्रचयशिष्टानुवादत्वानुपपत्तेः। अत एव यत्र नेदृशं वचनं, तत्रैककपालस्य सर्वहोमार्थे सकृदवदाने उपस्तरणाभिघारणाभ्यां त्र्यवदानमेव। अत एव पूर्वपक्षे चतुःसंख्यायास्तत्र बाधः। सिद्धान्ते तु तस्याः प्रकृतौ अनङ्गत्वादेव न बाधः, द्व्यवदानमात्रस्यैव तु बाधः इति बाधोपयोगिताऽपि अस्याधिकरणस्य।

**मण्डन**— 'न हविश्चतुरादेयम्।'

**शंकर**— 'हविश्चतुरवद्येन्नो।'

* 'द्विर्हविषोऽवद्यति' इति द्वित्वविशिष्टावदानविधिस्वीकारेऽपि **उपस्तरणादिविधिन्यायेन** दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्यापि अङ्गीकारः। **भाट्ट.** ५।२।४.

* **उपस्तरणाभिघारणे** प्रकृतौ सूक्ष्माणां पुरोडाशावयवानां स्रुचि संसक्तिं निवारयितुं क्रियेते। कृष्णलानां तु संसक्तिप्रसङ्ग एव नास्ति इति कृष्णलचरौ तयोर्लोपः।

**वि. १०।२।२.** ＊ **उपस्तरणाभिघारणाभ्यां** सह चतुरवत्तसंपत्तिः। (जुह्वां आज्येनोपस्तरणं ततो हविषो द्विरवदानं, ततः आज्येनाभिघारणं, इति चतुरवत्तत्वसंपत्तिः)। **भा.** १०।८।१२।२९-३२, ＊ **उपस्तरणाभिघारणयोः** अमृतार्थत्वं प्रशंसार्थम्। 'अमृतं वा आज्यं मर्त्यं हविः, यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोति' इति। १०।८।१८।७१. ＊ उपस्तरणाभिघारणयोः कृष्णलचरौ अर्थलोपेन बाधः। अर्थस्तु हविषः स्रुचि असंसर्गः। **सु.** पृ. ४५८. ＊ उपस्तरणाभिघारणयोः पृथक्त्वसद्भावेऽपि न पृथक् पदार्थत्वं 'चतुरवत्तं जुहोति' इत्येतदवयवत्वेन एव विधानात्। **सोम.** ५।२।३. ＊ उपस्तरणाभिघारणयोः लोपेऽपि उपांशुयाजे हविष एव चतुरवत्तसंपत्तिर्दर्शपूर्णमासयोः। **भा.** १०।८।१३।३३-३४. ＊ उपस्तरणाभिघारणयोः हविषः स्रुचि असंसर्गलक्षणसंस्कारार्थत्वम्। **सु.** पृ. ४५८.

**उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात्। १०।२।२।३॥**

'यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोति' इति प्रकृतौ उपस्तरणाभिघारणे विहिते। शतकृष्णले चरौ तयोः अकर्म स्यात्। क्रियते इति कर्म, तदभावः अकर्म। ते न कर्तव्ये। तयोः अमृतार्थत्वात्। 'यदुपस्तृणाति अभिघारयति, अमृताहुतिमेवैनां करोति' इति तयोः अमृतार्थत्वोक्तेः। अमृतार्थत्वं च स्वादूकरणम्। स्वादूकरणार्थे ते। कृष्णलेषु च स्वादूकरणं न संभवति इति ते न कर्तव्ये इति सिद्धान्तः।

**क्रियेत वाऽर्थवादत्वात् तयोः संसर्गहेतुत्वात्। ४॥**

शतकृष्णले चरौ आज्येन उपस्तरणं अभिघारणं च क्रियेत—कर्तव्यम्। वाशब्दः अकर्मपक्षव्यावृत्त्यर्थः। यत्तु अमृतार्थत्वं स्वादूकरणं कृष्णलेषु न संभवतीति, न संभवतु नाम अर्थवादत्वात् तस्य। स किलार्थवादो न विधिः। तयोः उपस्तरणाभिघारणयोः आज्यस्य हविषश्च संसर्गहेतुत्वात्। संसर्गो हेतुर्ययोः ते संसर्गहेतुनी उपस्तरणाभिघारणे। ताभ्यां तयोः संसर्गो भवतु इति ते विहिते। तस्य च कृष्णलेष्वपि संभवः। तस्मात्ते कर्तव्ये इति पूर्वः पक्षः।

**अकर्म वा चतुर्भिराप्तिवचनात्, सह पूर्णं पुनश्चतुरवत्तम्। ५॥**

शतकृष्णले चरौ आज्येन उपस्तरणाभिघारणयोः अकर्म, ते न कर्तव्ये। वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। चतुर्भिराप्तिवचनात्। आप्तिः प्राप्तिः सिद्धिः। आप्तेः वचनं आप्तिवचनं, तस्मात्। 'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति वचनं चतुर्भिः कृष्णलैरेव चतुरवत्तस्य सिद्धिर्भवति इति दर्शयति। पुरोडाशादौ तु मध्यात् पूर्वार्धात् पुरोडाशांशयोर्द्वयोः अवदानं, आदौ आज्येनोपस्तरणं, अन्ते च आज्येनाभिघारणं इति चतुरवत्तता सिद्धा भवति। कृष्णलेषु पुनः सह एकदैव कृष्णलानां चतुर्णामवदानेनैव चतुरवत्तं पूर्णं भवति। तस्मात् शतकृष्णले आज्येन उपस्तरणाभिघारणे न कर्तव्ये।

**क्रिया वा मुख्यावदानपरिमाणात्, सामान्यात् तद्गुणत्वम्। ६॥**

शतकृष्णले चरौ अवदानेषु आज्येन उपस्तरणाभिघारणयोः क्रिया स्यात्। ते कर्तव्ये। 'चत्वारि कृष्णलानि अवद्यति' इति तु मुख्यस्य हविषो यदवदानं तस्य परिमाणमुक्तम्। यथा पुरोडाशादेः मध्यात् पूर्वार्धाच्च यत् द्विरवदानं तदेव मुख्यम्। तत्स्थाने चात्र चत्वारि कृष्णलानि मुख्यमवदानम्। एवं सति यथा पुरोडाशादौ उपस्तरणाभिघारणे मुख्यादतिरिक्ते, तादृशात् सामान्यात् कृष्णलेष्वपि तद्गुणत्वं, तौ गुणौ यस्य कृष्णलचरोः उपस्तरणाभिघारणगुणकत्वं स्यात्। तस्मात् शतकृष्णले उपस्तरणाभिघारणे कर्तव्ये। इति पुनः पूर्वः पक्षः।

**तेषां चैकावदानत्वात्। ७॥**

पूर्वपक्षी हेत्वन्तरमाह। शतकृष्णले चरौ 'चत्वारि कृष्णलान्यवद्यति' इत्युक्तम्। तत्र तेषां चतुर्णां कृष्णलानां कृष्णमुखगुञ्जापरिमितसुवर्णशकलानां एकावदानत्वं दर्शयति। तावच्च मुख्यमवदानम्। ततोऽन्यच्च उपस्तरणमभिघारणं चेति ते कर्तव्ये।

**आप्तिः संख्यासमानत्वात् । ८ ॥**

शतकृष्णलचरौ आज्येन उपस्तरणाभिघारणे न कर्तव्ये इति सिद्धान्ते 'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इत्याप्तिवचनं साधकतया उपन्यस्तम् । चतुरवत्तं चतुर्भिः कृष्णलैः सिध्यति इति तदर्थः । पुनश्च उपस्तरणाभिघारणे कर्तव्ये इति पूर्वपक्षमुपन्यस्य आप्तिवचनस्य गतिमाह पूर्वपक्षी । आप्तिः प्राप्तिः सिद्धिः । आप्तिवचनं संख्यासमानत्वात् संख्यया समानत्वात् तुल्यत्वात् उपपद्यते । अवदाने चतुःसंख्या कृष्णलेष्वपि चतुःसंख्या इति उभयत्र संख्यया समानत्वम् । चतुःसंख्यासंस्तुतिरेषा । तेन नोपस्तरणाभिघारणयोर्निवृत्तिः ।

**सतोस्त्वाप्तिवचनं व्यर्थम् । ९ ॥**

तुशब्दः पूर्वपक्षिणा आप्तिवचनस्य चतुःसंख्यास्तुतिपरत्वं यदुक्तं तत् व्यावर्तयति सिद्धान्ती । सतोः विद्यमानयोः उपस्तरणाभिघारणयोः स्तुत्यर्थमाप्तिवचनं व्यर्थं स्यात् । नहि विद्यमानस्य कश्चित् संस्तवोऽस्ति । यदि अविद्यमानमापयति इति आप्तिः इत्युच्येत ततो गुणवान् इति स्तुतिर्भवेत् । तस्मात् सतोः उपस्तरणाभिघारणयोः आप्तिवचनं व्यर्थम् । तस्मान्न कर्तव्ये ।

**विकल्पस्त्वेकावदानत्वात् । १० ॥**

शतकृष्णले चरौ 'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति आप्तिवचनात् लिङ्गात् उपस्तरणाभिघारणयोर्निवृत्तिः यथा गम्यते, तथा एकावदानत्वात् 'चत्वारि कृष्णलानि एकमवदानं' इति एकावदानवचनात् लिङ्गात् उपस्तरणाभिघारणयोः अनिवृत्तिर्गम्यते । चतुर्भिः कृष्णलैः एकं मुख्यमवदानं चतुरवत्तार्थं तु उपस्तरणाभिघारणयोः कर्तव्यता इति । एवं च सति लिङ्गद्वयविरोधः प्राप्तः, तस्मात् उपस्तरणाभिघारणयोः विकल्पः स्यात् न तु एकान्तेन निवृत्तिः । इत्याह पूर्वपक्षी । तुशब्दः वैलक्षण्यार्थः विकल्पस्तु कदा चित् स्यात् इति ।

**सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यात् । ११ ॥**

पूर्वसूत्रे विकल्पं दोषमभिधाय पुनः पूर्वपक्षी स्वपक्षं साधयति । तुशब्दः विकल्पनिरासार्थः । 'चत्वारि कृष्णलान्येकमवदानं' इत्युक्ते सकृदेकावदाने सर्वविकारे सर्वस्य चतुरवत्तस्य विकारे सति, चतुरवत्तस्य स्थाने चतुर्भिः कृष्णलैः सकृदेकावदाने सति, हि यस्मात् इतरस्य हविषः पुनश्चतुर्भिः कृष्णलैः द्वितीयावदानस्य योऽभ्यासः 'चत्वारिचत्वारि कृष्णलान्यवद्यति समृद्ध्यै' इति, तस्यानर्थक्यं स्यात् । सर्वविकारे द्वितीयावदानस्यैव अभावात् । तस्मात् न सर्वविकारः । एवं च अभ्यासात् चतुर्भिश्चतुर्भिः कृष्णलैः द्विरवदानं उपस्तरणं चाभिघारणं चेति चतुरवत्तसिद्धिः ।

**अपिवा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् । १२ ॥**

शतकृष्णलचरौ उपस्तरणाभिघारणे कर्तव्ये न वा इति विचारे प्रवर्तमाने 'चत्वारिचत्वारि कृष्णलान्यवद्यति' इति अभ्यासः द्वितीयमवदानमपेक्ष्य भविष्यति इति उक्तमतनिरासार्थः अपिवाशब्दः । अभ्यासस्तु स्विष्टकृतः स्विष्टकृदर्थः स्यात् । इतरस्य द्वितीयावदानार्थत्वस्य अन्याय्यत्वात् । अभ्यासं विनाऽपि अवदानधर्मेण द्वितीयावदानस्यापि सिद्धत्वात् । तस्मात् उपस्तरणाभिघारणे कर्तव्ये इति पूर्वपक्ष एव ।

अथवा अस्तु उभयोरपि एकसूत्रत्वम् । तत्र चायमर्थः— तुशब्देन विकल्पं निरस्य पूर्वपक्षी स्वपक्षं साधयति । सर्वविकारे सर्वस्य प्राकृतस्य द्विरवदानस्य कृष्णलचतुष्टयावदाने विकारे सति 'चत्वारिचत्वारि कृष्णलान्यवद्यति' इति अभ्यासस्य आनर्थक्यं स्यात् सर्वविकारपक्षे द्वितीयावदानाभावात् । आनर्थक्यमेव साधयति, हि यस्मात् सर्वविकारपक्षे अभ्यासः इतरस्य द्वितीयावदानरूपस्य हविषः कृते स्यात्, अपिवा किंवा स्विष्टकृतः कृते स्यात् । परंतु तदुभयमप्ययुक्तम् । इतरस्य अस्य पक्षद्वयस्य अन्याय्यत्वात् । सर्वविकारपक्षे तावत् द्वितीयावदानाभावात् स्विष्टकृतश्च प्रकरणाभावात् । तस्मात् सर्वविकारपक्षः अयुक्त एव । ततश्च अभ्यासः कृष्णलचतुष्टयस्य द्वितीयावदानत्वार्थ एव । कृष्णलाष्टकेन अवदानद्वयं उपस्तरणाभिघारणाभ्यां च द्वयं इति चतुरवत्तसंपत्तिः । 'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै'

त्यातिवचनं तु संख्यासमानत्वार्थं स्वीकार्यम् । तस्मात् उपस्तरणाभिघारणे कर्तव्ये ।

**अकर्म वा संसर्गार्थनिवृत्तत्वात् तस्मादाप्तिसमर्थत्वम् । १३ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । शतकृष्णले चरौ प्रचरणकाले उपस्तरणाभिघारणयोः अकर्म न कर्म । ते न कर्तव्ये । संसर्गार्थनिवृत्तत्वात् । स्रुचि पुरोडाशाद्यवयवानां संसर्गः श्लिष्टता मा भूत् इति उपस्तरणाभिघारणे क्रियेते । कृष्णलानां तु तादृशः संगर्ग एव न संभवति । इति संसर्गरूपस्य अर्थस्य निवृत्तत्वात् अभावात् उपस्तरणादि न कर्तव्यम् । एवं च 'चत्वारिचत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति आप्तेः– आप्तिवचनस्य समर्थत्वं सम्यगर्थत्वं सिध्यति । तदपि उपपन्नमित्यर्थः । कृष्णलचतुष्टयस्य द्विवारमवदाने तन्मात्रेणैव उपस्तरणाभिघारणे विनैव चतुरवदानस्य सिद्धिर्भवति इति । तस्मात् शतकृष्णले चरौ उपस्तरणाभिघारणे न कर्तव्ये इति सिद्धान्तः । **के.**

* **उपस्थानं** आहवनीयस्य गार्हपत्यादुद्धृत्य स्वायतने स्थापितस्यैव, न तु गार्हपत्यस्थस्यैव सतः । **संकर्ष.** ३।२।८. * उपस्थानं आहवनीयस्य विकृतिविशेषे (द्वादशाहे दशमेऽहनि मानसस्तोत्रात् प्राक्) प्रगीतयैव ऋचा 'अयं सहस्रमानवः' इत्यनया । **भा.** ९।२।८।२९–३० वर्णकं २. * उपस्थानं नित्यं उपस्थापकापेक्षम् । **सु. पृ.** १२०२. * उपस्थानं यस्य क्रियते, तस्य समीपे एव स्थित्वा तत् क्रियते नान्यथा । **टुप्.** ७।३।१४।३६. * उपस्थानं सदोहविर्धानमण्डपयोः प्रकृतया ऐन्द्या वैष्णव्या च क्रमेण कर्तव्यम् । **वि.** ३।२।८.

* **उपस्थाने** आग्नीध्रस्य प्राकृतमन्त्रविनियोगः ज्योतिष्टोमे । **वि.** ३।२।८, * उपस्थाने गार्हपत्यस्य कदाचनेति मन्त्रः श्रुतिप्राबल्यात् । ३।३।७.

**उपस्थानादि आहवनीयं गार्हपत्यादुद्धृत्यैव कार्यम् ॥**

'आहवनीयं जुहोति' इत्यादिविधिषु गार्हपत्याग्नौ अप्रक्षेपसिद्ध्यर्थं तत आहवनीयस्य आयतनभेदेन पृथक्करणस्यावश्यकत्वेऽपि 'आहवनीयमुपतिष्ठते' इत्यादिविहितोपस्थानादिकार्याणां गार्हपत्यान्तर्निलीनाहवनीयस्यापि तत्त्वानपायात् अनुद्धृतेऽपि संभवः । इति **प्राप्ते**, आहवनीयादिशब्दानां तत्तदायतनस्थितसंस्कृताग्निवाचित्वेन होमे इव तदितरकार्येष्वपि तादृशस्यैव आवश्यकत्वात् तत उद्धृत्यैवोपस्थानम् । **संकर्ष.** ३।२।८.

* **उपस्थानाद्यधिकारः** पुंसः एव, न स्त्रियाः । **वि.** ६।१।६.

* **उपस्थापनं** नित्यं उपस्थापकापेक्षम् । **सु. पृ.** १२०२.

* **उपस्थितपरित्यागे** मानाभावेन सवनीयस्य प्राथम्यं साद्यस्क्रे आश्विनग्रहोत्तरं पशुत्रयस्य सहोपालम्भे । **के.** ५।१।६।१३.

* **उपहव्ये** क्रतौ औपदेशिकाश्वदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणायाः बाधः । **भा.** १०।३।१८।६५–६७, * उपहव्ये नाम एकाहे अश्व एव दक्षिणा । सा च ब्रह्मणे एव देया इतरेषामानतिस्तु लौकिकेन दानेन कर्तव्या । १०।३।१८।६५–६७.

* **'उपहूतः उपह्वयस्व'** इति मन्त्रस्य लिङ्गेन विभज्य विनियोगः कर्तव्यः । तत्र सोमभक्षे प्रश्ने 'उपह्वयस्व' इति, उत्तरे च 'उपहूतः' इति । **भा.** ३।५।१५–१६।४१–४२.

* **उपहोमाः** नक्षत्रेष्ट्यादौ 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्यादयः । **वि.** ५।२।९, * उपहोमाः पश्चात्, नारिष्ठहोमाः प्राक् इत्येव क्रमेण नक्षत्रसत्रादौ प्रधानोत्तरमनुष्ठानं कर्तव्यम् । ( याज्ञिकास्तु नारिष्ठहोमान् कृत्वा उपहोमान् कुर्वन्ति । **के.** ) । ५।२।९. * उपहोमाः प्रयाजानुयाजमध्ये श्रुताः तत्संबद्धपदव्यवायेऽपि कथंभावनियन्त्रिता एव गृह्यन्ते इति वर्णयन्ति । **टुप्.** ८।१।३।५. * **उपहोमैः** उपदिष्टैः आतिदेशिकानां नारिष्ठहोमानां समुच्चयः । **भा.** १०।४।१।१–२ वर्णकं १.

**उपहोमन्यायः । नारिष्ठन्यायः ।** नक्षत्रेष्टिन्यायः । नक्षत्रेष्ट्युपहोमन्यायः । अन्तेनिवेशन्यायः । नक्षत्रेष्ट्यादौ नारिष्ठहोमाः पूर्वं, उपहोमाः पश्चात् कार्याः ॥

**प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्नह्यचोदितस्य शेषाम्नानम् । ५।२।९।१७ ॥**

**भाष्यम्**— नक्षत्रेष्टिः श्रूयते 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इति। 'सोऽत्र जुहोति अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा' इत्येवमादिहोमाः समाम्नाताः। सन्ति तु प्रकृतौ नारिष्ठहोमाः। तत्र संदेहः किं नारिष्ठहोमाः पूर्वे, उत उपहोमाः। इति संशये उच्यते, प्राकृतं पूर्वं वैकृतमन्ते स्यात् इति। कुतः? चोदितस्य परिपूर्णस्य शेषः आम्नायते। यथा जातस्य पुत्रस्य क्रीडनकम्।

**टुप्**— कथमित्याकाङ्क्षायां (विकृतेरुत्पन्नायां सत्यां) क्लृप्तोपकारत्वात् पूर्वं प्राकृतैरुपकारैः (उपकारकैः इत्यर्थः) निराकाङ्क्षीकृता। उत्तरकालं अपूर्वेणाङ्गेन संबध्यते (विकृतिः), अक्लृप्तोपकारत्वात् तस्य (अपूर्वस्याङ्गस्य)। तस्मात् येनैव क्रमेण प्राकृतं विज्ञातं, तेनैव तत् (पूर्वं) कृत्वा (पश्चात्) वैकृतं (अङ्गं) कर्तव्यम्।

**मुख्यानतर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात् व्यवायः स्यात्। १८॥**

**भाष्यम्**— आत्रेयो मन्यते स्म, मुख्यानन्तर्यं वैकृतस्य, पश्चात्तु प्राकृतं प्रयुज्येत। प्रधानानन्तरं वैकृतस्य पाठः प्रत्यक्षः। तस्मात् पूर्वमुपहोमाः ततो नारिष्ठहोमाः इति। प्राकृतानां व्यवायः स्यात्। यतस्ते न श्रूयन्ते।

**टुप्**— प्रधानोत्तरकालं पठितत्वात् (उपहोमाः) तदनन्तरमेव प्राप्नुवन्ति। प्रधानानन्तरं (उपहोमानां) प्रत्यक्ष आम्नायः, आनुमानिकः (तु) चोदकः। (अतः प्रत्यक्षप्राबल्यात् उपहोमाः पूर्वमनुष्ठेयाः। याज्ञिकास्तु पूर्वमेव अनुतिष्ठन्ति)।

**अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात्। १९॥**

**भाष्यम्**— बादरायणस्तु आचार्यो मन्यते स्म। अन्ते वैकृतानां प्रयोग इति। कुतः? प्रधानशब्दगृहीतत्वात् प्राकृतानामङ्गानाम्। प्रधानशब्दगृहीतानि हि प्राकृतान्यङ्गानि। तस्माच्च प्रधानशब्दात् परमेतत् 'सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्येवमादि। तस्मात् प्रत्यक्षादेव क्रमात् नारिष्ठहोमेभ्यः पराञ्चः उपहोमाः इति।

**टुप्**— 'अग्नये कृत्तिकाभ्योऽष्टाकपालम्' इत्युत्पद्यमानः एव (भावः) किं, केन, कथं इति (आकाङ्क्षिते) त्रितयपरिपूर्णः कर्तव्यतया चोद्यते। तस्यां चाकाङ्क्षायां प्राकृतेन (क्लृप्तोपकारेण) पूर्वं संबध्यते। इति (हेतोः) एतदर्थत्वेन तस्य (वाक्यस्य) व्यवधानमेव नास्ति।

**तथा चान्यार्थदर्शनम्। २०॥**

**भाष्यम्**— अन्यार्थोऽपि चैतमर्थं दर्शयति 'अध्वरस्य पूर्वमथाग्नेरुपप्रैत्येतत् कर्म, यदग्निकर्म' इति। पश्चात् समाम्नातस्य पश्चात् प्रयोगं दर्शयति।

**शा**— '**तत्र प्रत्यक्षपाठेन प्रधानानन्तरश्रुतान्। उपहोमाननुष्ठाय नारिष्ठानामनुष्ठितिः॥**' उच्यते। '**क्लृप्तोपकारसाकाङ्क्षा विकृतिः प्राकृतं पुरः। गृह्णाति वैकृतं पश्चात् तदाकाङ्क्षावशीकृता॥**' तेन यत्र प्राकृतवैकृतयोः एकस्थानपतितयोः क्रमापेक्षा, तत्र अवगतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्तव्यम्। तस्मात् नारिष्ठान् कृत्वा पश्चादुपहोमाः कार्याः।

**सोम**— पूर्वत्र प्राकृतक्रमादरेऽपि नेह तदादरः इति प्रत्यवस्थानात् **प्रत्युदाहरणसंगतिः**। **सूत्रार्थस्तु**— अनुत्पन्नस्य कर्मणः शेषाम्नानासंभवेन वैकृतशेषाम्नानस्य उत्पत्त्यनन्तरभावित्वे प्रकृतेः प्राकृतस्य पूर्वोक्तत्वात् उत्पत्तिदशायामेवान्वयात् अपूर्वं वैकृतं अन्ते स्यादिति।

**वि**— 'नक्षत्रेष्ट्युपहोमाः किं नारिष्ठेभ्यः पुरा न वा।, प्रत्यक्षपाठान्मुख्यस्य सामीप्यायास्तु पूर्वता॥, प्राकृते प्रथमो बोधो वैकृते चरमस्ततः। नारिष्ठहोमाः पूर्वं स्युरुपहोमास्तु पृष्ठतः॥'

**भाट्ट**— 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्' इति नक्षत्रेष्टिं विधाय 'सोऽत्र जुहोति' इत्युपहोमा विहिताः। प्रकृतौ च प्रधानस्विष्टकृतोर्मध्ये वाचनिका नारिष्ठहोमाः समाम्नाताः। तदत्र उपहोमानां नारिष्ठेभ्यः पूर्वमनुष्ठानं औपदेशिकप्रधानपाठक्रमेण प्रधानानन्तर्यस्य विहितत्वात् उपहोमानामौपदेशिकत्वेन नारिष्ठेभ्यः प्रथममन्वितत्वाच्च। **इति प्राप्ते,** उपकारकसाकाङ्क्षया विकृतिभावनया क्लृप्तोपकारकाणां आतिदेशिकानामङ्गानां प्रथमं गृहीतत्वेन उपहोमानां

अन्यतराकाङ्क्षया पश्चादन्वयात्, अतिदेशस्य च प्रधानवाक्यशेषत्वस्यैव लाघवादभ्युपगमेन उपहोमानां आतिदेशिकाङ्गयुक्तप्रधानोत्तरमेव पाठेन क्रमावगतेः पश्चादेव करणम्। तत्रापि ब्राह्मणतर्पणान्ते कर्तव्यत्वे प्राप्ते 'मध्ये जुहोति' इति वचनेन उपहोमसमाख्यया च अत्रेति स्थाननिर्देशाच्च नारिष्टेभ्योऽनन्तरं कार्याः।

**मण्डन**— 'अन्ते भवेद्वैकृतमङ्गजातम्।'

**शंकर**— 'आगन्त्वन्तनिवेशनम्।'

* **उपहोमन्यायेन** कौत्सादिविधिवैयर्थ्यान्यथाऽनुपपत्त्या अन्यतराकाङ्क्षयैव कौत्सादिविधानम्। **भाट्ट.** १०।४।१०, * तस्य च (श्लोकसाम्नः) **उपहोमन्यायेन** अदृष्टार्थत्वात् समुच्चयः स्तोत्रान्तरैः स्वतन्त्रे महाव्रते। १०।४।९, * तेषां (कौत्सकाण्वादीनां साम्नां) उपहोमन्यायेन संनिधानात् क्रत्वङ्गत्वं अवगतम्। १०।४।१०, * दैक्षे पशौ औपवसथ्ये अहनि अनुष्ठाने अवगते अनुष्ठानसादेश्यात् उपहोमन्यायेन यूपादिग्रहणेऽपि नातिदेशकल्पनाप्रतिबन्धः। ८।१।३, * यदि प्रकृतौ अभ्यञ्जनस्य दीक्षाङ्गत्वात्, दीक्षायाश्च फलाधानयोग्यतासंपत्त्यनुकूलादृष्टजनकत्वेन अभ्यञ्जनस्यापि अदृष्टार्थत्वं, तदा उपहोमन्यायेन एतदभ्यञ्जनस्य तत्कार्यापन्नत्वे नैव किं चित् प्रमाणम्। १०।४।७. * दीक्षणीयायाः सावित्रहोमात् प्रागनुष्ठानं नक्षत्रेष्टयु**पहोमन्यायात्** इति पूर्वपक्षः। **बृ.** ५।२।१।२२.

* **उपहोमाधिकरणप्रतिपाद्यो** न्यायः 'आगन्तुकानामन्ते निवेशः' इति। **के.** ५।२।९।१७-२०.

* '**उपांशु** यजुषा' इति सर्वेषु दर्विहोमेषु अर्थवत्। **वा.** ३।३।२।९ पृ. ८१३. * यजुर्वेदेन यत् किंचित् काम्यं नैमित्तिकं वा चोद्यते तत् **उपांशु** कर्तव्यम्। 'एवं याजुर्वेदिकमपि उदाहर्तव्यम्'। **वा.** ३।३।२।९ पृ. ८१३, * 'यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु यष्टव्याः' इति हि प्रधानैरेव काम्यशब्दोपात्तैः संबध्यमानं अङ्गस्याचोदितं इति वक्ष्यते (३।८।१९।३५-३६)। **वा.** २।१।४।१२ पृ. ४१४.

* **उपांशुः** स्वरः उपसत्सु, स च उपसदपूर्वप्रयुक्तः, न ज्योतिष्टोमपरमापूर्वप्रयुक्तः। **भा.** ९।१।२।२-३ वर्णकं २.

* **उपांशुग्रहः** प्रथमः ज्योतिष्टोमे मन्त्रकाण्डविधिकाण्डयोः। **वि.** १०।५।१७.

* **उपांशुत्वं** अग्नीषोमीयपशुप्राग्भागवर्तिपदार्थधर्मः तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम्। देशबद्धमुपांशुत्वं० ९।१।६।२०। 'त्सरा वा एषा यज्ञस्य, तस्मात् यत् किं चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इत्युदाहृत्य उपांशुता अग्नीषोमीयप्राग्भाविपदार्थधर्मः यज्ञभागधर्मो वा इति संदिग्धे यज्ञशब्दस्य प्रयोजनवत्तरत्वात् अर्थवादस्थत्सराशब्दत्यागेन विध्युद्देशस्थप्राचीनशब्दान्वयप्रतीतेः यज्ञभागधर्मत्वं पूर्वपक्षयित्वा तस्मादित्यादिपदव्यवधानेन 'यज्ञस्य प्राचीनं' इत्यन्वयायोगात्, प्राचीनस्य च उद्देश्यत्वेन विशेषणानपेक्षत्वात्, यज्ञभागस्य च एकत्वात् यत्किंचिदिति बहुविषयवीप्सार्थप्रतीत्ययोगापत्तेः 'यज्ञस्य त्सरा' इत्यन्वयेऽपि स्तुत्यर्थत्वेन अर्थवत्त्वोपपत्तेः पदार्थधर्मत्वं सिद्धान्तयिष्यते। **सु.** पृ. ११८२. * उपांशुत्वं आधानसाम्नां याजुर्वेदिकप्रधानविधिविहितत्वात्। **वा.** ३।३।२।९ पृ. ८१३. * उपांशुत्वं उच्चैष्ट्वेन बाध्यते निगदेषु। **बाल.** पृ. १३२. * उपांशुत्वं उपांशुयाजस्य धर्मः तन्नामकत्वात्। **भा.** १०।८।१७।५१, * उपांशुत्वं काम्येष्टिषु प्रधानार्थमेव न अङ्गप्रधानोभयार्थम्। ३।८।१९।३५-३६, * उपांशुत्वं दीक्षणीयायां प्रधानवर्जितेषु अङ्गेषु निवेक्ष्यते सामान्योपदेशात्। ९।१।६।२५. * उपांशुत्वं दीक्षणीयादिपरिसाम्नां अग्नीषोमीयप्राचीनत्वाविशेषात्। **सु.** पृ. ११८३. * उपांशुत्वं प्रजापतेर्धर्मः। 'तस्मात् यत्किंचित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते' इति। **भा.** १०।८।१७।५१, * उपांशुत्वं यजुर्वेदस्य स्वरः। 'सर्वस्मिंश्च यजुर्वेदे उपांशुत्वम्'। ३।३।१।७. * उपांशुत्वं यत् पत्नीसंयाजेषु उपांशुयाजे च विहितं, तत् आश्रुतप्रत्याश्रुतादिभिन्नमन्त्रेष्वेव। **संकर्ष.** ४।३।१६. * उपांशुत्वं सावकाशं दीक्षणीयादिमात्रार्थेन **स्वरेण** निरवकाशेन बाध्यते। **बाल.** पृ. १३२, * **उपांशुत्वेन** उच्चैष्ट्वं बाध्यते

आधाने साम्नाम् । पृ. १४०. * **उपांशुत्वात्** उच्चैस्त्वं बलीयः 'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः । यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥ ' ( वा. पृ. ८१० ) इतिन्यायेन । **सु.** ३।१।१४।४२, * **उपांशुत्वरूपो** धर्मः प्रधानद्वारैव अङ्गानि प्राप्नुवन् अङ्गधर्मः इत्येवं कथ्यते, न तु अङ्गस्य स्वरूपेण उपांशुत्वापादिका यजुर्वेदे साक्षात् चोदना अस्ति । पृ. ११७७. * **उपांशुत्वन्यायः** द्विविधः, ३।८।१९।३५–३६ एकः, ९।१।२।२–३ वर्णकं २ इति चापरः । तत्र अपरः दीक्षणीयावाङ्नियमन्याय एव । प्रथमविषये तु इदमुच्यते ' तस्मात् यत्किंचित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इतिवाक्यविहितस्य उपांशुस्वरस्य 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्' इति दीक्षणीयामात्रोद्देशेन विशेषविहितेन कामस्वरेण बाधः । **कौ.** २।३।२।३ पृ. २३, * न च वाजिनोपांशुत्वादिन्यायः, तत्र वाजिनोपांशुत्वादेः गुणभूतत्वात् आमिक्षायागदीक्षणीयाऽऽदौ उत्पत्तिशिष्टनिरवकाशगुणावरुद्धे आकाङ्क्षोत्थापनासंभवात् युक्तो बाधः । २।३।२।३ पृ. २३.

**उपांशुत्वाधिकरणम्** । उपांशुत्वं काम्येष्टिषु प्रधानमात्रार्थम् । यज्ञाथर्वणाधिकरणम् ॥

**विकृतौ सर्वार्थः शेषः, प्रकृतिवत्। ३।८।१९।३४॥**

**भाष्यम्**— इदमामनन्ति ' यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इति । अत्र संशयः किमङ्गप्रधानार्थमुपांशुत्वं, उत प्रधानार्थमिति । किं प्राप्तम् ? विकृतौ सर्वार्थः शेषः स्यात् , अविशेषादङ्गानां प्रधानानां च । प्रकृतिवत् । यथा प्रकृतौ वेदिधर्मा आज्यधर्माश्च अङ्गप्रधानार्थाः, एवमत्रापि ।

**वा**— ( ' तां उपांशु कर्तव्याः ' इति तच्छब्दस्य वाक्यशेषस्थकाम्यशब्दोक्तफलान्वयिवाचित्वावगतेः अङ्गानामपि प्रधानानुग्राहकत्वेन फलान्वयित्वात् अनारभ्याधीताऽपि उपांशुता प्रकरणाधीतैः मन्द्रमध्यमोत्तमस्वरैः बाधात् विकृतीर्गता अङ्गप्रधानार्था इति पूर्वपक्षमाह–) यत्रयत्र स्थितमुपांशुत्वं काम्यानामिष्टीनामुपकर्तुं शक्नोति, तत्रतत्र कर्तव्यम् ।

**मुख्यार्थो वाऽङ्गस्याचोदितत्वात्** । ३५ ॥

**भाष्यम्**— प्रधानार्थो वा एष विकृतिषु स्यात् । एवमिदं सर्वार्थमुच्येत, प्रकरणं बाधित्वा वाक्येन अङ्गप्रधानार्थमिति । तदेवेदानीं वाक्यं विशेषितं ' काम्या इष्टयः' इति । काम्याश्च प्रधानयागाः, अङ्गयागाः प्रधानार्थाः । तस्मादङ्गमचोदितम् । यत् कामेन फलवच्चोद्यते, तदेव अनया उपांशुत्वेतिकर्तव्यतया अनुबध्यते । तस्मात् प्रधानार्थमुपांशुत्वम् ।

**वा**— ( विकृतौ उपांशुत्वोपदेशकाले प्राकृतस्याङ्गस्य अचोदितत्वात् इति वृत्त्यन्तरकृतव्याख्यां उपन्यस्य दूषयति– ) **केचिदाहुः** । ' अस्य प्रत्यक्षत्वेन प्रथमतरं प्राप्तेः, चोदकग्राह्याणि अङ्गानि न तावत् प्राप्नुवन्ति इति अचोदितत्वम् ' । **न तु एतत् संभवति** । सर्वत्र चोदकस्य प्रथमतरं प्रवृत्तेः । तस्मादयमर्थः— प्रकृतौ हि प्रकरणात् प्रधानार्थत्वे प्राप्ते वाक्यात् सर्वार्थत्वम् । इह तु वाक्यमेव विशेषनिष्ठं ' काम्याः ' इति वचनात् । नहि अङ्गानि कामसंबद्धानि । तस्मान्न तेषामेव धर्मश्चोदितः इति ।

**शा**— काम्येष्टिषु श्रुतमुपांशुत्वं किमङ्गप्रधानार्थं, उत प्रधानार्थमिति संशये ' **मन्त्रोच्चारणसद्भावाद् द्वयोरङ्गप्रधानयोः । तद्विशेष उपांशुत्वं बर्हिस्तद्धर्मवद् भवेत् ॥ उच्यते बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः । उपांशुता च वाक्येन काम्यानामेव चोद्यते ॥** '

**सोम**— यथा पूर्वत्र द्वितीयाश्रुतिबलात् शकलसंस्कारकत्वं एवमुपांशुत्वस्य मन्त्रोच्चारणद्वारकत्वसामर्थ्यबलात् अङ्गप्रधानार्थत्वं इति प्रत्यवस्थानात् दृष्टान्तसंगतिः ।

**वि**— 'काम्या उपांशु यष्टव्याः किं तदङ्गप्रधानयोः । प्रधान एव वा, नात्र विशेषोक्तिरतो द्वयोः ॥ , मुख्यानामेव काम्यत्वात् तेष्वेव परिचोदना । अङ्गानामतथाभावादुपांशुत्वं प्रधानगम् ॥ ' नहि अङ्गानां काम्यत्वमस्ति, करणपौष्कल्यसंपादकानां तेषां फले साक्षात्संबन्धाभावात् ।

**भाट्ट**— अनारभ्य 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इति श्रुतमुपांशुत्वं प्रधानवदङ्गेष्वपि मन्त्रोच्चारणसत्त्वात्, काम्यशब्दस्य च कामप्रयोजकत्वेन अङ्गेष्वपि प्रयोगोपपत्तेः, जनकत्वमात्रपरत्वेऽपि चोद्देश्येष्टिविशेषणत्वेन अविवक्षितत्वात् इष्टीनामेवाविवक्षितत्वे सोमेऽपि तदापत्तेः साङ्गेष्ट्यङ्गम्। इति **प्राप्ते**, अङ्गेषु क्व चिदपि काम्यशब्दप्रयोगाभावात् जनकत्वसंबन्धेन प्रधानमात्रपरत्वावगतेः, काम्यत्वेष्टित्वोभयपरामर्शकतच्छब्दस्य च उद्देश्यपरत्वेन उभयविवक्षोपपत्तेः, प्रकृतौ प्राकरणिकत्रैस्वर्याविरोधे निवेशासंभवेऽपि काम्यविकृतीष्टिप्रधानमात्रे निवेशः। नहि अत्र 'उच्चैः प्रवर्ग्येण' 'अप्स्ववभृथेन' इत्यादिवत् करणविभक्तिनिर्देशः, येन साङ्गस्य भवेत्। तव्यप्रत्ययेन कर्मत्वाभिधानात्तु प्रधानमात्रे एव निवेशः।

**मण्डन**—'काम्येष्टिषूपांशु भवेत् प्रधानम्।' २१.

**शंकर**— 'काम्यं प्रधानं तूपांशु।' २३.

* **उपांशुधर्माणौ** हि विष्णुप्रजापती। **भा.** २।२।४।१०.

* **उपांशुपात्रेण** आग्रयणात् पात्नीवतं गृह्णाति। **भा.** ३।२।१३।२३.

* **उपांशुयाजः** अमावास्यायां अस्ति इति केचित्, नास्ति इति सिद्धान्तः। **भा.** १०।८।१७।५३,५८–६१, * उपांशुयाजः अमावास्याविकारे साकंप्रस्थायीये न श्रूयते। १०।८।१७।६१. * उपांशुयाजः असोमयाजिनः अपि अस्ति। **सोम.** ५।४।५. * उपांशुयाजः इति कर्मनामधेयम्। **वि.** २।२।४.

**⌛ उपांशुयाजः एकपुरोडाशायामपि पौर्णमास्याम्॥**

**द्विपुरोडाशायां स्यादन्तराऽर्थत्वात्।** १०।८।१८। **६२॥**

**भाष्यम्**— दर्शपूर्णमासयोरिदमामनन्ति, 'उपांशुयाजमन्तरा यजति' इति। तत्रायमर्थः समधिगतः पौर्णमास्यामुपांशुयाजः। तत्र च विष्ण्वाद्या देवता इति। अस्ति चोर्ध्वं सोमात् द्विपुरोडाशा पौर्णमासी। प्राक् सोमात् एकपुरोडाशा। तत्रायमर्थः सांशयिकः किं द्विपुरोडाशायामेवोपांशुयाजः, उत द्विपुरोडाशायामेकपुरोडाशायां चेति। किं प्राप्तम्? द्विपुरोडाशायां स्यात्। कुतः? अन्तराऽर्थत्वात्। अन्तरासंयोगेन हि श्रूयते 'उपांशुयाजमन्तरा यजति' इति। प्राक् पुरोडाशसंकीर्तनात् पुरोडाशौ अन्तरेति गम्यते। द्विपुरोडाशायामन्तरा शक्यं कर्तुं, नैकपुरोडाशायाम्। तत्र क्रियमाणमयथाश्रुतं स्यात्। तस्मात् द्विपुरोडाशायामेवेति।

**अजामिकरणार्थत्वाच्च। ६३॥**

**भाष्यम्**— इतश्च द्विपुरोडाशायामेवेति। कुतः? अजामिकरणार्थत्वमत्र श्रूयते। 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति। जामि सादृश्यमिति। पुरोडाशयोश्च सादृश्यदोष उच्यते। 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ' पुरोडाशं कृत्वा पुनरनूचीनः पुरोडाशः एवेति। यत्र दोषः, तत्र दोषविघातार्थेन भवितव्यम्। तस्मात् द्विपुरोडाशायामेवेति।

**तदर्थमिति चेत्। ६४॥**

**भाष्यम्**— इति चेत् पश्यसि, तदर्थत्वात् अन्तराऽर्थत्वात् द्विपुरोडाशायामेव भविष्यतीति।

**न, तत्प्रधानत्वात्। ६५॥**

**भाष्यम्**— तन्न, तत्प्रधानत्वात्। पौर्णमासी प्रधानतः, अन्तराऽर्थो गुणतः। उपांशुयाजः पौर्णमास्या अवयवो विधीयते। उपांशुयाजस्यापि अन्तरालं गुणः। एकपुरोडाशाऽपि भवत्येव पौर्णमासी। तस्यामुपांशुयाजः केन न स्यात्। अन्तरालं तु गुणः असंभवान्न भविष्यतीति। तस्मादसति अन्तराले, एकपुरोडाशायामुपांशुयाजः कर्तव्य इति।

**अशिष्टेन च संबन्धात्। ६६॥**

**भाष्यम्**— अशिष्टेन च अश्रुतेन अन्तरालार्थेन उपांशुयाजस्य संबन्धः कर्तव्यः स्यात्। अन्तरालगुणक उपांशुयाजः इति। नहि अन्तरालं गुणत्वेन विधीयमानं पश्यामः। तस्मादेकपुरोडाशायामपि उपांशुयाजः कर्तव्यः इति।

**उत्पत्तेस्तु निवेशः स्याद्, गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्, विधानादन्तराऽर्थस्य नैमित्तिकत्वात्, तदभावेऽश्रुतौ स्यात् । ६७ ॥**

**भाष्यम्**—तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति । गुणत्वेन अन्तरालं न श्रूयते इति । उत्पत्तिवाक्येनैव उपांशुयाजः अन्तराले निविशते । अन्तरालमस्य गुणः उत्पत्तिवाक्येन श्रूयते, 'उपांशुयाजमन्तरा यजति' इति । तस्मादस्य गुणस्यानुपरोधेन गुणी निविशेत, नैकपुरोडाशायां स्यात् । नैकपुरोडाशायामक्रियमाणः अनर्थको भवति । अन्तरालार्थो हि द्विपुरोडाशायां विद्यते । तदभावे अन्तरालार्थस्याभावे, अश्रुतौ यदि द्विपुरोडाशो न श्रूयेत, ततः स्यादेकपुरोडाशायामुपांशुयाजः । अस्ति तु अवकाशो द्विपुरोडाशा पौर्णमासी । तस्मादेकपुरोडाशायां न स्यादिति ।

**उभयोस्तु विधानात् । ६७ ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । उभयोः पौर्णमास्योरुपांशुयाजः । एकपुरोडाशायामपि स्यादित्यर्थः । कुतः ? विधानात् । विधीयते हि स एकपुरोडाशायामपि । साऽपि हि पौर्णमासी । 'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति पौर्णमासीशब्दः एकपुरोडाशां वर्जयन् उपरुध्येत । तस्मादेकपुरोडाशायामपि स्यात् ।

**गुणानां च परार्थत्वादुपवेषवद् यदेति स्यात् । ६९ ॥**

**भाष्यम्**— गुणश्च अन्तरालं प्रधानार्थं श्रूयते उपांशुयाजार्थेन, अन्तरालेनोपांशुयाजस्योपकर्तव्यमिति । नासौ एकपुरोडाशायामुपांशुयाजं निवर्तयितुमर्हति । पौर्णमास्यां श्रूयमाण उपांशुयाजः एकपुरोडाशायाः अपि पौर्णमासीत्वात्तत्र प्राप्नोति । अन्तराले च श्रुतत्वादन्तरालेऽपि प्राप्नोति । एकपुरोडाशायां अन्तरालाभावात् नान्तराले स्यात् । तस्मादन्तरालस्य गुणस्य शास्त्रं यदा पौर्णमासी तदेति स्यात् । उपवेषवत् । यथा 'उपवेषेण कपालान्युपदधाति' इति यदोपवेषः, तदा तेनेति गम्यते । एवमिहापि यदा अन्तरालं, तदा अन्तराले भविष्यति । तस्मादेकपुरोडाशायामपि स्यादिति ।

**अनपायश्च कालस्य, लक्षणं हि पुरोडाशौ । ७०॥**

**भाष्यम्**— उच्यते । ननु अन्तरालगुणक उपांशुयाजः श्रूयमाणः अन्तरालाभावादुच्यमानोऽपि, पौर्णमास्यामेकपुरोडाशायां वैगुण्यात् फलस्य असाधकः इति न क्रियेत । नहि पौर्णमासीविशेषे यत्रान्तरालं इत्यन्तरालगुणता विधीयते । अविशेषेण हि द्विपुरोडाशायामेकपुरोडाशायां च तद्विधानम् । तस्मादेकपुरोडाशायां प्रयोजनाभावान्न करिष्यते इति । आह । एवं सति उपांशुयाजाभावादेकपुरोडाशा नैव कर्तव्या । अत्रोच्यते । नैष दोषः । फलवती हि सा भविष्यति, यदा द्विपुरोडाशा संभविष्यतीति । अत्रोच्यते । यदि एकपुरोडाशायां वैगुण्यमुपांशुयाजस्य स्यात्, ततो न क्रियेत, न तु वैगुण्यमस्ति । नहि अन्तरालं गुणतः श्रूयते । किं तर्हि ? कालं लक्षयितुं, यौ पुरोडाशौ तयोर्मध्ये, इति । कथम् ? अनूद्य हि तौ पुरोडाशौ एतद्विधीयते, 'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति' इति । यौ तावनूदितौ यथा व्यवहितौ भवतः, तथोपांशुयाजः कर्तव्यः । तस्मिन् काले इति गम्यते । अनपायश्च तस्य कालस्य एकपुरोडाशायामपि । कथम् ? यो हि द्वयोः पुरोडाशयोर्मध्यः इति कालोऽवगम्यते, स एव पूर्वस्मादुत्तर इति । एवं चेत्, यद्यपि एकपुरोडाशायां द्वौ पुरोडाशौ न स्तः, तथापि स पूर्व आग्नेयोऽस्ति । तस्मादुत्तरः स एव कालः, योऽसौ अन्तरालेन लक्षितः । यथा नागवेलायामागन्तव्यं, शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति । यस्मिन् ग्रामे न नागाः, न शङ्खाः, न पटहः तस्मिन्नपि स एव कालः । तत्र हि आगमनं क्रियते । एवमिहापि द्रष्टव्यम् । तस्मादेकपुरोडाशायामुपांशुयाजः कर्तव्य इति ।

**प्रशंसार्थमजामित्वं, यथाऽमृतार्थत्वम् । ७१ ॥**

**भाष्यम्**— अथ यदुक्तम्, अजामिकरणार्थत्वादिति । तत् परिहर्तव्यम् । अत्रोच्यते । प्रशंसैषा उपांशुयाजस्य वैचित्र्येण, न तु एतदेवात्र फलं विधीयते, यदजामित्वमिति । कुतः ? विहितस्य हि प्रयोजनं विधीयते । न चैवं सति उपांशुयाजो विहितः स्यात् ।

विधाने चार्थद्वयविधानं दोषः। न च अजामिकरणं नाम किंचिदिष्टं फलम्। तस्मात् प्रशंसैषा। यथा उपस्तरणाभिघारणयोरमृतार्थत्वम्। 'अमृतं वा आज्यं मर्त्यं हविर्यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोति' इति। तस्मादेकपुरोडाशायामपि उपांशुयाजः कर्तव्य एवेति।

शा— (सिद्धान्तमाह-) '**स्यादेवमन्तरालस्य गुणत्वेन विधिर्यदि। कालो विधीयते त्वत्र पुरोडाशोपलक्षितः॥**' कर्माङ्गभूतस्य कालस्य एकपुरोडाशायामपि लाभात् तत्रापि उपांशुयाजो न बाधितव्यः। १९॥

**सोम**—पूर्वसिद्धेऽर्थे विशेषविचारात् एकविषयत्वं **संगतिः**।

**वि**— 'पुरोडाशैक्ययुक्तायां पौर्णमास्यामयं नहि। स्याद्वा, नास्त्यन्त- (नास्ति, अन्त-) रेत्युक्तलक्ष्ये कालेऽस्ति शङ्खवत्॥'

**भाट्ट**—पौर्णमास्यमावास्ययोः क्रियमाणः उपांशुयाजः किं द्विपुरोडाशायामेवेष्टौ स्यात्, उत सोमयागात् पूर्वमग्नीषोमीयाभावादूर्ध्वं चैन्द्राग्नाभावादाग्नेयमात्रसत्त्वे नैकपुरोडाशायामपि स्यादिति चिन्तायां, अन्तरालकालस्य पूर्वोत्तरभाविपुरोडाशद्वयनिरूपकत्वात् निरूपकविशिष्टस्यैव अङ्गत्वेन तदभावे तस्याङ्गत्वाभावात् अन्तरालस्य च सत्यपि पौर्णमास्यादिकाले 'अमावास्यायामपराह्णे' इतिवत् पौर्णमास्याद्यवच्छेदकत्वेन अन्तरालकालावच्छिन्नस्यैव तस्याङ्गतया इतरस्यानङ्गत्वात् द्विपुरोडाशायामेव उपांशुयाजकरणम्। **इति प्राप्ते**, पुरोडाशद्वयस्य क्लृप्तप्रयोजनत्वेन स्वतः उपांशुयाजानङ्गत्वात् कालविशेषणत्वे च विशिष्टविधिगौरवापत्तेः कालोपलक्षणमात्रतया प्रतीतेः, कालस्य च 'शङ्खवेलायामागन्तव्यं' इत्यादौ लोके श्रुतोपलक्षणाभावेऽपि उपलक्षकान्तरोपलक्षितस्य आगमनादिक्रियाऽन्वयदर्शने सुतरामाद्यपुरोडाशोपलक्षणेनैव अन्त्यपुरोडाशरूपोपलक्षणाभावेऽपि क्रियोपलक्षणत्वोपपत्तेः एकपुरोडाशायामपि आग्नेयसत्त्वेन उपांशुयाजोपपत्तिः। अतश्च नात्र पौर्णमास्यादिकालस्य अन्तरालकालेन संकोचाख्यो बाधः। यदा तु अन्तरापदेन आग्नेयोत्तरत्वरूपः क्रमः एव विधीयते, मन्त्रपाठक्रमप्राप्तत्वात् अनूद्यते वेति विभाव्यते, तदा उत्तरपदार्थलोपे पूर्वपदार्थलोपः इत्यप्रसक्तमेवेति स्यादेवोपांशुयाजः। तदेवं निरूपितस्त्रिविधो बाधः। १७.

**मण्डन**— 'उपांश्वेकपुरोडाशे।' १९.

**शंकर**— 'आग्नेयमात्रेऽपि स च।' २०. सः उपांशुयाजः।

* अस्याधिकरणस्य बीजभूतो न्यायः 'उपलक्षणापायेऽपि उपलक्ष्यानपायः' इति। **के.**

* उपांशुयाजः पौर्णमास्यामेव। तत्र च प्रजापतिः विष्णुः अग्नीषोमौ च विकल्पेन देवता। **भा.** १०।८। १७।५१-६१. * उपांशुयाजः पौर्णमास्यामेव, नामावास्यायामिति वक्ष्यति। न चेयं क्त्वाचिन्तेति वृत्तिकारोऽभिलषति। अधिकरणारम्भो न युज्यते। युक्तो वा बह्वृचब्राह्मणे (कौषीतके) स्पष्टेन वाक्येन (अथ यत् संनयत्सांनाय्यस्य अन्तरेणोपांश्वाज्यस्य यजति, तस्योक्तं ब्राह्मणं इत्यनेन। कौब्रा. ३।६) विहितत्वादुपांशुयाजस्य। **टुप्.** ६।५।२।११. * **उपांशुयाजस्य** आज्यं द्रव्यम्। (तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् इत्यर्थवादात्) **वि.** ५।१।८, १०।८।१५. * उपांशुयाजस्य उत्पत्तिवाक्ये देवताऽभावात् अव्यक्तता (इति चेत्), उच्यते। मन्त्रवर्णात् तत्र देवतायास्तादर्थ्यात् व्यक्तचोदनः। **टुप्.** ८।१।३।५. * उपांशुयाजस्य क्रमे 'दब्धिर्नामासि इति (मन्त्रः) समाम्नातः। तस्याकाङ्क्षामुत्पाद्य तेनैकवाक्यतां यात्वा तत्रैव विनियोगमर्हति। **भा.** ३।३।५।१२. * उपांशुयाजस्य 'दब्धिरस्यदब्धो भूयासममुं दभेयं' इति मन्त्रः यथासंख्यक्रमात् सिध्यति। **वि.** ३।३।५.

## ⌛ उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवताऽन्यतमदेवतानियमः॥

**तद्वच्च देवतायां स्यात्। १०।८।१६।४९॥**

**भाष्यम्**— देवतां प्रति उपांशुयाजस्य संशयः किमनियमः, नियम इति। किं प्राप्तम्? यद्वत् द्रव्यं प्रति अनियमः पूर्वाधिकरणपूर्वपक्षे, तद्वत् देवतायां अनियमः। ननु अग्नीषोमौ विधीयेते। उच्यते। पुराकल्पस्वरूपोऽयं, न विधिस्वरूपः। इमास्तर्हि 'विष्णुरुपांशु यष्टव्यः'

इत्येवमादिना देवताः विधीयन्ते। उच्यते। उक्तमजामिकरणवचनार्था एते अर्थवादा इति। तस्मादनियमः।

**तान्त्रीणां प्रकरणात्।५०॥**

**भाष्यम्**— नहि देवतामन्तरेण यागो भवति। न च वचनमन्तरेण देवता। न चान्यस्य विहिता देवता अन्यस्यावकल्पते। तस्मात् प्रकृतानां तन्त्रभवानां अन्यतमया देवतया प्रकृतत्वादेकवाक्यतां कृत्वा देवतां अवगमिष्यामः। एकया च कृतार्थत्वाद् यांकांचित् देवतामिति।

**सोम**—पूर्ववदिह नियामकाभावात् अर्थप्राप्तदेवताऽन्तरस्य न बाधः इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**— पूर्वाधिकरणपूर्वपक्षे द्रव्ये यथा अनियमः, तद्वत् देवताया अपि अनियमः स्यादिति।

**वि**— 'तत्र यः कोऽपि देवः स्यात् तान्त्रिको वा, ऽग्रिमो भवेत्। अविशेषात्, प्रकरणात् तान्त्रिकोऽत्र नियम्यते॥' तान्त्रिकः दर्शपूर्णमासतन्त्रमध्यपठितः।

**भाट्ट**— ( अत्र ४९–६१ सूत्रैः एकमेवाधिकरणं स्वीकृतं षोडशम्। भाष्ये तु द्वे ) उपांशुयाजे यद्यपि अन्यद्देवताग्राहकं प्रमाणं न भवेत्, तथापि तस्य देवताऽऽकाङ्क्षायां प्राकरणिकानामेव अग्न्यादिदेवतानां अनुषङ्गेण अन्वयाङ्गीकारात् देवतात्वोपपत्तिः। विरुद्धविभक्तिकस्य निराकाङ्क्षस्य च असंबन्धिपदव्यवधाने अनुषङ्गानुपपत्तावपि वा एकप्रयोगविधिपरिग्रहेण आग्नेयादिभिः उपांशुयाजस्य साहित्यावगतौ विभिन्नदेवताकत्वाभावेन तन्त्रत्वावगतेः आग्नेयादिदेवतानां प्रसङ्गेन उपकारकत्वोपपत्तिः। तत्रापि प्रथमोपस्थितत्वादग्नेरेव। वस्तुतस्तु, स्वतन्त्रदेवताग्राहकप्रमाणमस्त्येव। तथाहि, प्रजापतेस्तावत् **यद्यपि** 'यत्किंचित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते' इति प्रापकं प्रमाणं नोद्भावयितुं शक्यम्, अस्य आधारार्थवादत्वेन स्वतन्त्रविधित्वाभावात्। तत्त्वेऽपि वा, यत्र प्रजापतिर्देवता प्रमाणान्तरेण क्लृप्तः तत्रोपांशुत्वमनेन विधीयेत, न तु यत्रोपांशुत्वं तत्र प्रजापतिः। **तथापि** आग्नेयाग्नीषोमीययाज्यानुवाक्यामध्ये तैत्तिरीयाणां प्रजापतिदेवत्ययाज्याऽनुवाक्याम्नानात् मन्त्रवर्णात् प्राप्तिः। तुल्यन्यायतया तन्मध्ये अग्नीषोमीययाज्याऽनुवाक्याऽऽम्नानाच्च अग्नीषोमयोरपि। आग्नेयैन्द्राग्नयाज्याऽनुवाक्यायुगलयोर्मध्ये वैष्णवयाज्याऽनुवाक्याऽऽम्नानात् तस्यापि। **न च** 'तावब्रूतामग्नीषोमौ' इत्यनेन अग्नीषोमयोरेव विहितत्वात् विष्णुप्रजापत्योर्न विधानमिति **शङ्क्यम्**। तस्य कालविधायकत्वेन देवताविधायकत्वाभावात्। अस्य हि भिन्नवाक्यत्वे उपांशुयाजविध्येकवाक्यत्वेऽपि वा फलसंबन्धसिद्ध्यर्थं अमावास्याव्यावृत्त्यर्थं वा कालमात्रविधायकत्वमेव, न तु देवताविधायकत्वं, तस्या आज्यस्येव प्रमाणान्तरेण संभवत्प्राप्तिकाया विधिवैयर्थ्यादित्युक्तं उपांशुयाजाधिकरणे। अत एव विष्णुदेवत्योपांशुयाजस्य अमावास्यायामेव करणं, तद्याज्याऽनुवाक्यायुगलस्य आग्नेयैन्द्राग्नयाज्याऽनुवाक्यामध्ये पाठात् प्रजापत्यग्नीषोमदेवत्यस्य च आग्नेयाग्नीषोमीययोर्मध्ये समाम्नानात् पौर्णमास्यामेव इत्यपास्तम्। उपांशुयाजस्य पौर्णमास्यामेव विहितत्वेन अमावास्यायामसत्त्वात्। इदं च शाङ्खायनानां ( परिगृहीतशाङ्खायनसूत्राणां कौषीतकिनामित्यर्थः— के. ) 'अथ यत् संनयत्सांनाय्यस्य अन्तरेणोपांश्वाज्यस्य यजति' इति वचनाभावं कृत्वाचिन्तयोक्तम्। वस्तुतस्तु उक्तवचनादमावास्यायामपि उपांशुयाजः। न चैवं 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायां' 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्' साकंप्रस्थायीये 'आग्नेयेन प्रचर्याग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामेत्' इत्याद्युपांशुयाजाभावज्ञापकलिङ्गानुपपत्तिः, एतल्लिङ्गबलेन उपांशुयाजस्य अमावास्यायां वैकल्पिकत्वाङ्गीकारात्। न चैवमुपांशुयाजस्योभयत्र सत्त्वेऽपि मन्त्रपाठस्य व्यवस्थितत्वात् तत्तन्मन्त्रयोस्तत्कल्प्यदेवतयोश्च तत्तत्कालिकोपांशुयाजे व्यवस्थाविकल्पानापत्तिः। प्रधानानुरोधेन गुणावृत्तेर्न्याय्यतया तत्तद्यागीयमन्त्रमध्यपाठस्य भिन्नप्रयोगविधिपरिगृहीततया अनियामकत्वात्। अतः कालद्वयवर्तिन्यपि उपांशुयाजे अव्यवस्थितविकल्प एव देवतानाम्। बाधोपयोगः पूर्ववत्।

**मण्डन**— 'तस्यां तु देवता तान्त्री।' १७. तस्यां उपांशुयाजक्रियायाम्।

**शंकर**— 'देवता नियता तत्र ( तान्त्री )।' १८.

* उपांशुयाजस्य द्रव्यादाज्यात् स्विष्टकृदिडं न कर्तव्यम् । भा. ३।५।१।११-१२. * उपांशुयाजस्य ध्रौवाज्यं द्रव्यम् । भाट्ट. १०।८।१५. * उपांशुयाजस्य विकृतिः सारस्वतमाज्यं अध्वरकल्पेष्टिस्थं द्वितीयं हविः । वि. ५।१।१०. * उपांशुयाजस्य विष्णवादिर्देवता, पौर्णमासी च कालः । भाट्ट. १०।८।१६.

**⌛ उपांशुयाजस्य सोमोत्तरं नोत्कर्षः, विष्णुप्रजापतिदेवत्यस्य प्रागपि संभवात् ॥**

**पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् । ५।४।६।१९ ॥**

**भाष्यम्**—इदं श्रूयते ' आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाऽग्नीषोमीयो भवति । यदेवादः पौर्णमासं हविः तत्तर्हि अनुनिर्वपेत् । तर्ह्युभयदेवत्यो भवति' इति । यस्मात्तस्मिन् काले सोऽग्नीषोमीयो भवति, न प्राचीने काले, तस्माददो हविरनुनिर्वपेदिति अग्नीषोमीयत्वं विधाय द्विदेवताकत्वं हेतुत्वेन निर्दिश्यते। तस्मादग्नीषोमीयं हविर्हेतुमत् स्यात्, नान्यदेवताकम् । तदा असौ अग्नीषोमौ यष्टुमर्हति, न प्राक् । 'साऽस्य देवता' इति भवति पुरुषस्यापि यष्टुर्देवताऽभिसंबन्धः । तस्मात् पुरोडाशः अग्नीषोमीयः, नान्यद्धविरिति सिद्धम् ।

**आज्यमपीति चेत् । २० ॥**

**भाष्यम्**—इति चेत् पश्यसि, अग्नीषोमीयत्वात् पुरोडाशः इति, आज्यमपि हि अग्नीषोमीयम् । तस्मात् तदपि उत्कृष्येत ।

**न, मिश्रदेवतत्वादैन्द्राग्नवत् । २१ ॥**

**भाष्यम्**— मिश्रदेवतं हि आज्यं अग्नीषोमीयं प्राजापत्यं वैष्णवमिति च । पुरोडाशस्तु अग्नीषोमीय एव । न तु अत्र मिश्रदेवतस्य वादः । मिश्रदेवतस्य हि प्रागपि भावः अवकल्पते । यद्यपि तदानीं यजमानो नाग्नीषोमीयः तद्देवताऽर्हः, तथापि आज्यं हविः करिष्यत्येव । प्रजापतिं यक्ष्यति विष्णुं वा । तस्मात् तस्योर्ध्वभावे न एष हेतुः अग्नीषोमीयत्वं नाम । यथा चतुर्धाकरणं मिश्रदेवतत्वात् ऐन्द्राग्ने न भवति, तद्वत् । तत्र आग्नेय इति ऐन्द्राग्नो न शक्यते वदितुं, तद्धितः साकाङ्क्षात् नोत्पद्यते इति । एवमिह अग्नीषोमीयशब्देन न शक्यमाज्यं वदितुम् । अनग्नीषोमीयोऽपि असौ । तस्मात् शक्यं प्राक् यजमानेन कर्तुमिति । तस्मान्न तस्योत्कर्षे अग्नीषोमीयता यजमानस्य हेतुरिति । मिश्रदेवतस्य अग्रहणसामान्यात् ऐन्द्राग्नवत् इत्युक्तम् ।

शा — **' अग्नीषोमाभिसंबन्धादाज्यस्यापीति मन्यते । विष्णुप्रजापतिभ्यां तु सोमात् प्रागपि तद् भवेत् ॥ '**

**सोम**— एकहविरुत्कर्षः इत्ययुक्तं इति प्रत्यवस्थानात् (आक्षेप-) **संगतिः। सूत्रार्थस्तु**– विशिष्यानिर्देशे पुरोडाशः एव स्यात् । तद्युक्ते हविर्युक्ते देवतोद्देशेन हविस्त्यागार्हे पुरुषे अग्नीषोमयोर्देवतात्वात् इति ।

वि — ' आज्यं चोत्कृष्यते नो वा, तस्याग्नीषोमयोगतः । आद्यः, प्रजापतिं विष्णुं वा यष्टुं शक्तितोऽन्तिमः ॥ '

**भाट्टे** इदमधिकरणं स्वातन्त्र्येण न व्याख्यातम् ।

**मण्डन**— ' उत्कष्टव्यः स्यात् पुरोडाश एव ।' ७.

**शंकर**— ' नाज्योत्कर्षश्च सोमतः । '

**⌛ उपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि हविषः एव चतुरवत्तसंपत्तिः ॥**

**साप्तदश्यवन्नियम्येत । १०।८।१३।३३ ॥**

**भाष्यम्**— दर्शपूर्णमासयोरुपांशुयाजोऽस्ति । तत्र, ' चतुरवत्तं जुहोति ' इति । तत्र संशयः किमुपांशुयाजे चतुरवत्तं कर्तव्यं, उत नेति । किं प्राप्तम् ? साप्तदश्यवन्नियम्येत । यथा, साप्तदश्यमनारभ्याधीतं परिगणितासु विकृतिषु पुनः श्रूयमाणं वाक्यशेषात् तास्वेव नियम्यते, एवमिदमपि चतुरवत्तं उपस्तरणाभिघारणाश्रयत्वात् यत्र ते, तत्रैव नियम्येत औषधसांनाय्ययोः, उपांशुयाजे न स्यादिति ।

**हविषो वा गुणभूतत्वात्, तथाभूतविवक्षा स्यात् । ३४ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, नोपांशुयाजे चतुरवत्तमिति । होमे चतुरवत्तं गुणो विधीयते । स उपांशुयाजहोमेऽपि स्यात् अत्रापि चतुरवदातव्यम् । अथ यदुक्तम् ' औषधसांनाय्ययोरेव चतुरवत्तं

उपस्तरणाभिघारणाश्रयत्वात् ' इति, नोपस्तरणाभिघारणवचनं चतुरवत्तस्य वाक्यशेषभूतं, यथा ' सप्तदश सामिधेनीरनुब्रूयात् ' इति मित्रविन्दाऽऽदिषु सप्तदश अनुब्रूयात् इति, नैवमिह चतुरवद्येत् । कथम् ? उपस्तृणीयात् अभिघारयेच्चेति । कथं तर्हि ? चतुरवदानसंयुक्तं द्रव्यं जुहुयात् हविश्च उपस्तृणीयात्, अभिघारयेच्चेति । यत्र हविषि उपस्तीर्यमाणे अभिघार्यमाणे च चतुरवत्तयुक्तं प्रदानं भवति, तत्र न प्रधानद्रव्यात् चतुरवदातव्यम् । यत्र पुनः प्रधानद्रव्यात् चतुरवखण्डनमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्यात् चतुरवदातव्यम् । चतुरवत्तभूतमिह होतव्यं विवक्ष्यते नेतस्ततो वा चतुरवदातव्यमिति । तस्मात् उपांशुयाजेऽपि चतुरवत्तं कर्तव्यमिति ।

**सोम**— पूर्वाधिकरणोक्तद्वयवदाननियमोपजीवनेन प्रकारविधिः इत्युत्थानात् **संगतिः** ।

**वि**— ' उपांशुयाजे किं न स्यादवदानचतुष्टयम् । स्याद्वा, नास्त्युपसंहारात्, नानूक्तिर्वाक्यतोऽस्ति तत् ॥ ' ' चतुरवत्तं जुहोति ' इति वाक्यात् अस्त्युपांशुयाजे चतुरवत्तम् ।

**भाट्ट**— यदा चतुःसंख्याया अपि उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वेन चतुःसंख्याकावदानविधिकल्पना, तदा किमुपांशुयाजे चतुरवत्तं भवति न इति कृत्वाचिन्तया चिन्त्यते । इदं च उपांशुयाजे चतुर्गृहीतविधिर्नास्तीति कृत्वाचिन्ताऽन्तरं बोध्यम् । तत्रावदानाङ्गभूतचतुःसंख्यायाः औषधसांनाय्ययोः पशुवदुपस्तरणाभिघारणाभ्यां संपादितत्वात् उपस्तरणाभिघारणयोश्च स्रुचि असंसर्गार्थतया उपांशुयाजे अर्थलोपान्निवृत्तेः चतुरवत्तस्यापि लोपः । **इति प्राप्ते**, विहितचतुःसंख्यायाः ' द्विर्हविषोऽवद्यति ' इत्यनेन हविषो द्विरवदाने विहिते औषधसांनाय्यस्थले उपस्तरणाभिघारणाभ्यां पशुवत् संपादनेऽपि संकोचे प्रमाणाभावेन उपांशुयाजेऽपि प्रवृत्तायास्तस्या हविषैव संपादनोपपत्तेर्लोपे प्रमाणाभावात् कर्तव्यमेव चतुरवत्तम् । वस्तुतस्तु पूर्वोक्तविधया अवत्तोद्देशेनैव प्रक्षेपविधानात् चतुःसंख्याया उद्देश्यताऽवच्छेदककोटिप्रवेशाभावेन अविधेयत्वादुपांशुयाजे उपस्तरणाभिघारणयोः प्रयोजनाभावेन लोपेऽपि ' द्विर्हविषोऽवद्यति ' इत्यनेन हि अवदानस्यैव प्राप्तौ ' चतुर आज्यस्य गृह्णाति ' इत्युपांशुयाजावान्तरप्रकरणपठितवाक्येन उपांशुयाजोद्देशेन ध्रौवापादानकचतुर्गृहीतविधानात् तेनैवोपांशुयाजः, तस्यैव च प्रक्षेपः प्रतिपत्तिः । यत्त्वनारभ्याधीतं ' चतुर्गृहीतं जुहोति ' इति वचनं, तेन अविहितद्रव्यकभेदनहोमाद्यनुवादेन चतुर्गृहीतविधानं, न तूपांशुयाजे, जुहोतिना यागलक्षणायां प्रमाणाभावात्, प्राकरणिकध्रौवविधिना तस्यैव द्व्यवदानप्रसक्तौ अनारभ्याधीतचतुर्गृहीतबाधप्रसङ्गाच्च । अतः ' आज्याच्च सर्वसंयोगात् ' इत्यधिकरणभाष्यलिखितोपांशुयाजप्रकरणपठितवाक्यादेव तत्र चतुर्गृहीतविधिः । तस्यैव च तदीयप्रक्षेपः प्रतिपत्तिरिति सिद्धम् ।

**मण्डन**— ' उपांशौ च चतुर्ग्रहः । ' १४.

**शंकर**— ' उपांशुयाजोऽपि तद्वद्वेत् । ' ( उपांशुयाजे तु तद्भवेत् इति पाठ आवश्यकः । तत् चतुरवत्तम् ) ।